तत्सद्ब्रह्मणे नमः ।

महामुनिश्रीमद्व्यासप्रणीतं

# पद्मपुराणम् ।

( तत्राऽऽदिममादिखण्डं द्वितीयं भूमिखण्डं चेत्येतद्द्वयरूपः प्रथमो भागः )

एतत्पुस्तकं कै० श्री० रावसाहेब मण्डलीकेत्युपनामधारिभि
विश्वनाथ नारायण इत्येतैः
महता परिश्रमेण बहुतराणि पुस्तकानि मेलयित्वा
सपाठान्तरनिर्देशं संशोधितम् ।

तच्च

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८१५

खिस्ताब्दाः १८९४

( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः )

मूल्यं प्रथमभागस्य ... रूप्यकाः ।

ॐ तत्सद्ब्रह्मणे नमः ।

## महामुनिश्रीव्यासप्रणीतं

# पद्मपुराणम् ।

## तत्राऽऽदिममादिखण्डम् ।

अथ प्रथमोऽध्यायः ।

नमामि गोविन्दपदारविन्दं सदेन्दिरानन्दनमुत्तमाढ्यम् ।
जगज्जनानां हृदि संनिविष्टं महाजनैकायनमुत्तमोत्तमम् ॥

एकदा मुनयः सर्वे ज्वलज्ज्वलनसंनिभाः । हिमवद्वासिनः सर्वे मुनयो वेदपारगाः ॥ २
त्रैकालज्ञा महात्मानो नानापुण्याश्रमाश्रयाः । महेन्द्राद्रिरता ये च ये च विन्ध्यनिवासिनः ॥ ३
अर्बुदारण्यनिरताः पुष्करारण्यवासिनः । जाम्बुमार्गरता ये च [ *ये च सत्यनिवासिनः ॥ ४
धर्मारण्यरता ये च दण्डकारण्यवासिनः । श्रीशैलनिरता ये च ] कुरुक्षेत्रनिवासिनः ॥ ५
ते चान्ये च बहवः सशिष्या मुनयोऽमलाः । नैमिषं समुपायाताः शौनकं द्रष्टुमुत्सुकाः ॥ ६
पूजयित्वा विधिवत्तेन ते च सुपूजिताः । आसनेषु विचित्रेषु वृष्यादिषु यथाक्रमम् ॥ ७
शौनकेन प्रदत्तेषु आसीनास्ते तपोधनाः । कृष्णाश्रिताः कथाः पुण्याः परस्परमथाब्रुवन् ॥ ८
कथान्तेषु ततस्तेषां मुनीनां भावितात्मनाम् । आजगाम महातेजाः सूतस्तत्र महाद्युतिः ॥ ९
व्यासशिष्यः पुराणज्ञो रोमहर्षणसंज्ञकः । तान्प्रणम्य यथान्यायं स तैश्चैवाभिपूजितः ॥ १०
उपविष्टं यथायोगं शौनकाद्या महर्षयः । व्यासशिष्यं सुखासीनं सूतं वै रोमहर्षणम् ॥
पप्रच्छुर्महाभागाः शौनकाद्यास्तपोधनाः ॥ ११

ऋषय ऊचुः—

पौराणिक महाबुद्धे रोमहर्षण सुव्रत । त्वत्तः श्रुता महापुण्याः पुरा पौराणिकीः कथाः ॥ १२
इमितं च प्रवृत्ताः स्म कथायां सक्षणा हरेः । स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ॥ १३
नः पुराणमाचक्ष्व हरिवार्तासमन्वितम् । हरेरन्यकथा सूत श्मशानसदृशी स्मृता ॥ १४
हरिस्तीर्थस्वरूपेण स्वयं तिष्ठति तच्छ्रुतम्[2] । तीर्थानां पुण्यदातॄणां नामानि किल कीर्तय ॥ १५
त एतत्समुत्पन्नं केन वा परिपाल्यते । कस्मिँल्लयं समभ्येति जगदेतच्चराचरम् ॥ १६
क्षेत्राणि कानि पुण्यानि के च पूज्याः शिलोच्चयाः । नद्यश्च काः पराः पुण्या नृणां पापहराः
शुभाः ॥ एतत्सर्वं महाभाग कथयस्व यथाक्रमम् ॥ १७

सूत उवाच—

साधु साधु महाभागाः साधु पृष्टं तपोधनाः । तं प्रणम्य प्रवक्ष्यामि पुराणं[3] पद्मसंज्ञकम् ॥ १८

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. ञ. ढ. इत्येतेष्वेव पुस्तकेषु दृश्यते ।

१ ख. ञ. °माख्यम् । ढ. °माद्यम् । २ ङ. ढ. °स्मिन्निलयम° । ३ ख. ञ. °णं [illegible]° ।

पाराशर्यं परमपुरुषं विश्ववेदैकयोनिं विद्याधारं विपुलमतिदं वेदवेदान्तवेद्यम् ।
शश्वच्छान्तं स्वमतिविषयं शुद्धितेजोविशालं वेदव्यासं विततयशसं सर्वदाऽहं नमामि ।
नमो भगवते तस्मै व्यासायामिततेजसे । यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् ॥
प्रवक्ष्यामि महापुण्यं पुराणं पद्मसंज्ञितम् । सहस्रं पञ्चपञ्चाशत्षड्भिः खण्डैः समन्वितम् ॥
तत्राऽऽदावादिखण्डं स्याद्भूमिखण्डं ततः परम् । ब्रह्मखण्डं च तत्पश्चात्ततः पातालखण्डकम् ॥
क्रियाखण्डं ततः ख्यातमुत्तरं खण्डमन्तिमम् । एतदेव महापद्ममुद्भूतं यन्मयं जगत् ॥
तद्वृत्तान्ताश्रयं तस्मात्पद्ममित्युच्यते बुधैः । एतत्पुराणममलं विष्णुमाहात्म्यनिर्मलम् ॥
देवदेवो हरिर्यद्वै ब्रह्मणे प्रोक्तवान्पुरा । ब्रह्मा तु नारदायाऽऽह नारदोऽस्मद्गुरोः पुरः ॥
व्यासः सर्वपुराणानि सेतिहासानि संहिताः । अध्यापयामास गुरुर्मामतिप्रियमात्मनः ॥
ततोऽहं संप्रवक्ष्यामि पुराणमतिदुर्लभम् । यच्छ्रुत्वा ब्रह्महत्यादिपापेभ्यो मुच्यते नरः ॥
सर्वतीर्थाभिषेकं च लभते शृणुते हि यः । श्रद्धया परया भक्त्या श्रुतमात्रेण मुक्तिदम् ॥
अश्रद्धयाऽपि शृणुते लभते पुण्यसंचयम् । तस्मात्सर्वप्रयत्नेन पद्मं श्रोत्रातिथी कुरु ॥
तत्राऽऽदिखण्डं वक्ष्यामि पुण्यं पापप्रणाशनम् । शृण्वन्तु मुनयः सर्वे सशिष्यास्त्वत्र ये स्थिताः ॥

इति श्रीमहापुराणे पाद्म आदिखण्डे प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ।

---

सूत उवाच—

आदिसर्गमहं तावत्कथयामि द्विजोत्तमाः । ज्ञायते येन भगवान्परमात्मा सनातनः ॥
सृष्टेषु प्रलयादूर्ध्वं नाऽऽसीत्किंचिद्द्विजोत्तमाः । ब्रह्मसंज्ञमभूदेकं ज्योतिर्वै सर्वकारकम् ॥
नित्यं निरञ्जनं शान्तं निर्गुणं नित्यनिर्मलम् । आनन्दस्य पुरं स्वच्छं यत्काङ्क्षन्ति मुमुक्षवः ।
सर्वज्ञं ज्ञानरूपत्वादनन्तमजमव्ययम् । अविनाशि सदास्वच्छमच्युतं व्यापकं महत् ॥
सर्गकाले तु संप्राप्ते ज्ञात्वा तं ज्ञानरूपकम् । आत्मलीनं विकारं च तत्स्रष्टुमुपचक्रमे ॥
तस्मात्प्रधानमुद्भूतं ततश्चापि महानभूत् । सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ॥
प्रधानतत्त्वेन समं त्वचा बीजमिवाऽऽवृतम् । वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥
त्रिविधोऽयमहंकारो महत्तत्त्वादजायत । यथा प्रधानेन महान्महता स तथाऽऽवृतः ॥
भूतादिस्तु विकुर्वाणः शब्दं तन्मात्रकं ततः । ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ॥
शब्दमात्रं तथाऽऽकाशं भूतादिः स समावृणोत् । शब्दमात्रं तथाऽऽकाशं स्पर्शमात्रं ससर्ज ह
बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः । आकाशं शब्दमात्रं तु स्पर्शमात्रं समावृणोत् ॥
ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह । ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते ॥

र्शमात्रस्तु वै वायू रूपमात्रं समावृणोत् । ज्योतिश्चापि विकुर्वाणं रसमात्रं संसर्ज ह ॥ १३
भवन्ति ततोऽम्भांसि रसमात्राणि तानि तु । रसमात्राणि चाम्भांसि रूपमात्रं समावृणोत् ॥ १४
कुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे । तस्माज्जाता मही चेयं सर्वभूतगुणाधिका ॥ १५
ाघ्रातो यतस्तस्मात्तस्य गन्धो गुणो मतः । तस्मिंस्तस्मिंस्तु तन्मात्रात्तेन तन्मात्रता स्मृता १६
मात्राण्यविशेषाणि विशेषाः क्रमशोऽपराः । भूततन्मात्रसर्गोऽयमहंकारात्तु तामसात् ॥ १७
तितस्तु समासेन मुनिवर्यास्तपोधनाः । तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ॥ १८
ादशं मनश्चात्र कीर्तितं तत्त्वचिन्तकैः । ज्ञानेन्द्रियाणि पञ्चात्र पञ्च कर्मेन्द्रियाणि च ॥ १९
नि वक्ष्यामि तेषां च कर्माणि कुलपावनाः । श्रवणं त्वक्चक्षुर्जिह्वा नासिका चैव पञ्चमी ॥ २०
दादिज्ञानसिद्ध्यर्थं बुद्धियुक्तानि पञ्च वै । पायूपस्थं हस्तपादौ कीर्तिता वाक्च पञ्चमी ॥ २१
सर्गानन्दसिद्धिश्च गत्युक्ती कर्म तत्स्मृतम् । आकाशवायुतेजांसि सलिलं पृथिवी तथा ॥ २२
दादिभिर्गुणैर्विमाः संयुक्ता उत्तरोत्तरैः । नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥ २३
शक्नुवन्प्रजाः स्रष्टुमसमागत्य कृत्स्नशः । समेत्यान्योन्यसंयोगं परस्परमथाऽऽश्रयात् ॥ २४
संघाः सलक्षाश्च संप्राप्यैक्यमशेषतः । पुरुषाधिष्ठितत्वाच्च प्रधानानुग्रहेण च ॥ २५
दादयो विशेषान्तादण्डमुत्पादयन्ति ते । तत्क्रमेण विवृद्धं तु जलबुद्बुदवत्समम् ॥ २६
भ्योऽण्डं महाप्राज्ञा वृद्धं तदुदकेशयम् । प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम् ॥ २७
ाव्यक्तस्वरूपोऽसौ विष्णुर्विश्वेश्वरः प्रभुः । ब्रह्मरूपं समास्थाय स्वयमेव व्यवस्थितः ॥ २८
दजाण्डमभूत्तस्य जरायुश्च महीधराः । गर्भोदकं समुद्राश्च तस्याभून्महदात्मनः ॥ २९
द्रिद्वीपसमुद्राश्च सज्योतिर्लोकसंग्रहः । तस्मिन्नण्डेऽभवत्सर्वं सदेवासुरमानुषम् ॥ ३०
ादिनिधनस्यैव विष्णोर्नाभेः समुत्थितम् । यत्पद्मं तद्धैममण्डमभूच्छ्रीकेशवेच्छया ॥ ३१
ोगुणधरो देवः स्वयमेव हरिः परः ॥ ब्रह्मरूपं समास्थाय जगत्स्रष्टुं प्रवर्तते ॥ ३२
ष्टं च यात्यनुयुगं यावत्कल्पविकल्पना । नारसिंहादिरूपेण रुद्ररूपेण संहरेत् ॥ ३३
ब्रह्मरूपं विसृजन्महात्मा जगत्समस्तं परिपातुमिच्छन् ।
ादिरूपं स तु गृह्य पाति बभूव रुद्रो जगदेतदत्तुम् ॥ ३४

इति श्रीमहापुराणे पाद्म आदिखण्डे द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६४

---

अथ तृतीयोऽध्यायः ।

---

ऋषय ऊचुः—

दीनां पर्वतानां च नामधेयानि सर्वशः । तथा जनपदानां च ये चान्ये भूमिमाश्रिताः ॥ १
माणं च प्रमाणञ्च पृथिव्याः किल सर्वतः । निखिलेन समाचक्ष्व काननानि च सत्तम ॥ २

सूत उवाच—

ेमानि महाप्राज्ञा महाभूतानि संग्रहात् । जगतीस्थानि सर्वाणि समान्याहुर्मनीषिणः ॥ ३

१ समावृणोत् । २ क. 'सर्ज वै । त' । ३ ङ. ढ. 'मी ॥ २० ॥ सर्वादि' । ४ क. 'सिध्यं च बु' । ५ क. [illegible]
ादि' । ६ क. तत्कर्मेण । ७ क. 'त्कन्धविकन्धना ।

भूमिरापस्तथा वायुरग्निराकाशमेव च । गुणोत्तराणि सर्वाणि तेषां भूमिः प्रधानतः ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः । भूमेरेते गुणाः प्रोक्ता ऋषिभिस्तत्त्ववेदिभिः[1] ॥
चत्वारोऽप्सु गुणा विप्रा गन्धस्तत्र न विद्यते । शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः
शब्दः स्पर्शश्च वायोस्तु आकाशे शब्द एव च । एते पञ्च गुणा विप्रा महाभूतेषु पञ्चसु ॥
वर्तन्ते सर्वलोकेषु येषु भूताः प्रतिष्ठिताः । अन्योन्ये नातिवर्तन्ते साम्यं भवति वै तदा ॥
यदा तु विषमीभावमाविशन्ति परस्परम् । तदा देहैर्देहवन्तो व्यतिरोहन्ति नान्यथा ॥
आनुपूर्व्या विनश्यन्ति जायन्ते चानुपूर्वशः । सर्वाण्यपरिमेयानि तदेषां रूपमैश्वरम् ॥
यत्र यत्र हि दृश्यन्ते धावन्ति पञ्चभौतिकाः । तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ॥
अचिन्त्याः खलु ये भावास्तांस्[2] तर्केण साधयेत् । सुदर्शनं प्रवक्ष्यामि द्वीपं तु मुनिपुङ्गवाः ॥
परिमण्डलो महाभागा द्वीपोऽसौ चक्रसंस्थितः । नदीजलपरिच्छन्नः पर्वतैश्चाब्धिसंनिभैः ॥
पुरैश्च विविधाकारै रम्यैर्जनपदैस्तथा । वृक्षैः पुष्पफलोपेतैः संपन्नो धनधान्यवान् ॥
लवणेन समुद्रेण समन्तात्परिवारितः । यथा हि पुरुषः पश्येदादर्शे मुखमात्मनः ॥
एवं सुदर्शनो द्वीपो दृश्यते चक्रमण्डलः । द्विरंशे पिप्पलस्तस्य द्विरंशे च शशो महान् ॥
सर्वौषधिं समादाय सर्वतः परिवारितः । आपस्ततोऽन्या विज्ञेयाः शेषः संक्षेप उच्यते ॥

ऋषय ऊचुः—

उक्तो यस्य च संक्षेपो बुद्धिमन्विधिवत्त्वया । तत्त्वज्ञश्चासि सर्वस्य विस्तरं सूत नो वद ॥
यावान्भूम्यवकाशोऽयं दृश्यते शशलक्षणे । तस्य प्रमाणं प्रब्रूहि ततो वक्ष्यसि पिप्पलम् ॥
एवं तैः किल पृष्टः स सूतो वाक्यमथाब्रवीत् ॥

सूत उवाच—

प्रागायता महाप्राज्ञाः षडेते रत्नपर्वताः । अवगाढा ह्युभयतः समुद्रौ पूर्वपश्चिमौ ॥
हिमवान्हेमकूटश्च निषधश्च नगोत्तमः । नीलश्च वैडूर्यमयः श्वेतश्च शशिसंनिभः ॥
सर्वधातुपिनद्धश्च शृङ्गवान्नाम पर्वतः । [*एते वै पर्वता विप्राः सिद्धचारणसेविताः ॥
तेषामन्तरविष्कम्भो योजनानि सहस्रशः । तत्र पुण्या जनपदास्तानि वर्षाणि सत्तमाः ॥
वसन्ति तेषु सत्त्वानि नानाजातीनि सर्वशः । इदं तु भारतं वर्षं ततो हैमवतं परम् ॥
हेमकूटात्परं चैव हरिवर्षं प्रचक्षते । दक्षिणेन तु नीलस्य निषधस्योत्तरेण च ॥
प्रागायतो महाभागा माल्यवान्नाम पर्वतः । ] ततः परं माल्यवतः पर्वतो गन्धमादनः ॥
परिमण्डलस्तयोर्मध्ये मेरुः कनकपर्वतः । आदित्यतरुणाभासो विधूम इव पावकः ॥
योजनानां सहस्राणि चतुरशीतिरुच्छ्रितः । अधस्ताच्चतुरशीतिर्[3]योजनानां द्विजोत्तमाः ॥
ऊर्ध्वमधश्च तिर्यक्च लोकानावृत्य तिष्ठति । तस्य पार्श्वे त्वमी द्वीपाश्चत्वारः संस्थिता द्विजाः ॥
भद्राश्वः केतुमालश्च जम्बूद्वीपश्च सत्तमाः । उत्तराश्चैव कुरवः कृतपुण्यप्रतिश्रयाः ॥
विहगः सुमुखो यस्तु सुपार्श्वस्याऽऽत्मजः किल । स वै विचिन्तयामास सौवर्णान्प्रेक्ष्य वायसान्
मेरुरुत्तममध्यानामधमानां च पक्षिणाम् । अविशेषकरो यस्मात्तस्मादेनं त्यजाम्यहम् ॥

*एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. झ. ञ. ट. ढ. पुस्तकेभ्यो गृहीतः ।

१ झ. °त्त्वदर्शिभिः । २ झ. ट. °स्तान्वित° । ३ क. °शीतेर्यो° ।

ादित्योऽनुपर्येति सततं ज्योतिषां वरः । चन्द्रमाश्च सनक्षत्रो वायुश्चैव प्रदक्षिणः ॥ ३३
पर्वतो महाप्राज्ञा दिव्यपुष्पसमन्वितः । भवनैरावृतः सर्वैर्जाम्बूनदमयैः शुभैः ॥ ३४
देवगणा विप्रा गन्धर्वासुरराक्षसाः । अप्सरोगणसंयुक्ताः शैले क्रीडन्ति सर्वदा ॥ ३५
ब्रह्मा च रुद्रश्च शक्रश्चापि सुरेश्वरः । समेत्य विविधैर्यज्ञैर्यजन्तेऽनेकदक्षिणैः ॥ ३६
बुरुर्नारदश्चैव विश्वावसुर्हाहाहूहूः । अभिगम्यामरश्रेष्ठं स्तुवन्ति विविधैः स्तवैः ॥ ३७
र्षयो महात्मानः कश्यपश्च प्रजापतिः । तत्र गच्छन्ति भद्रं वः सदा पर्वणि पर्वणि ॥ ३८
यैव मूर्धन्युशना काव्यो दैत्यैर्महीयते । तस्य हैमानि रत्नानि तस्यैते रत्नपर्वताः ॥ ३९
मात्कुबेरो भगवांश्चतुर्थं भागमश्नुते । ततः कलांशं वित्तस्य मनुष्येभ्यः प्रयच्छति ॥ ४०
पेत्तस्यान्तरे दिव्यं सर्वर्तुकुसुमैश्चितम् । कर्णिकारवनं रम्यं शिलाजालसमुच्छ्रितम् ॥ ४१
साक्षात्पशुपतिर्दिव्यभूतैः समावृतः । उमासहायो भगवान्रमते भूतभावनः ॥ ४२
ंकारमयीं मालां बिभ्रदापादलम्बिनीम् । त्रिभिर्नेत्रैः कृतोद्योतस्त्रिभिः सूर्यैरिवोदितैः ॥ ४३
ग्रतपसः सिद्धाः सुव्रताः सत्यवादिनः । पश्यन्ति न हि दुर्वृत्तैः शक्यो द्रष्टुं महेश्वरः ॥ ४४
य शैलस्य शिखरात्क्षीरधारा द्विजोत्तमाः । विश्वरूपात्परिमिता भीमनिर्घातनिःस्वना ॥ ४५
ापुण्यतमैर्जुष्टा गङ्गा भागीरथी शुभा । प्लवन्तीव प्रवेगेण ह्रदे चन्द्रमसः शुभे ॥ ४६
ह्युत्पादितः पुण्यः स ह्रदः सागरोपमः । तां धारयामास तदा दुर्धरां पर्वतैरपि ॥ ४७
वर्षसहस्राणि शिरसैव पिनाकधृक् । मेरोस्तु पश्चिमे पार्श्वे केतुमालो द्विजोत्तमाः ॥ ४८
बूखण्डे तु तत्रैव महाजनपदो द्विजाः । आयुर्दशसहस्राणि वर्षाणां तत्र सत्तमाः ॥ ४९
र्णवर्णाश्च नराः स्त्रियश्चाप्सरसां समाः । अनामया वीतशोका नित्यं मुदितमानसाः ॥ ५०
यन्ते मानवास्तत्र निस्तप्तकनकप्रभाः । गन्धमादनशृङ्गेषु कुबेरः सह राक्षसैः ॥ ५१
तोऽप्सरसां संघैर्मोदते गुह्यकाधिपः । गन्धमादनपार्श्वे तु पुरे दिव्योपपादुकाः ॥ ५२
ादशसहस्राणि वर्षाणां परमायुषः । तत्र कृष्णा नरा विप्रास्तेजोयुक्ता महाबलाः ॥ ५३
यश्चोत्पलपत्राभाः सर्वाः सुप्रियदर्शनाः । नीलोत्पलधरं श्वेतं श्वेताद्धैरण्यकं वरम् ॥ ५४
ैरावतं विप्रा नानाजनपदावृतम् । धनुषी ते महाभागौ देवर्षेर्दक्षिणोत्तरे ॥ ५५
ावृत्तं मध्यगं तु पञ्च वर्षाणि चैव हि । उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः ॥ ५६
ुष्प्रमाणमारोग्यं धर्मतः कामतोऽर्थतः । समन्वितानि भूतानि तेषु सर्वेषु सत्तमाः ॥ ५७
मेषा महाभागाः पर्वतैः पृथिवी चिता । हेमकूटस्तु सुमहान्कैलासो नाम पर्वतः ॥ ५८
वैश्रवणो देवो गुह्यकैः सह मोदते । अस्त्युत्तरेण कैलासं मैनाकं पर्वतं प्रति ॥ ५९
ण्यशृङ्गः सुमहान्दिव्यो मणिमयो गिरिः । तस्य पार्श्वे महद्दिव्यं शुभ्रं काञ्चनवालुकम् ॥ ६०
ं विष्णुसरो नाम यत्र राजा भगीरथः । दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः ॥ ६१
मणिमयास्तत्र क्षेत्राश्चापि हिरण्मयाः । तत्रेष्ट्वा तु गतः सिद्धिं सहस्राक्षो महायशाः ॥ ६२
भूतिपतिर्यत्र सर्वलोकैः सनातनः । उपास्यते तिग्मतेजा यत्र भूतैः समन्ततः ॥ ६३
ारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः । तत्र दिव्या त्रिपथगा प्रथमं तु प्रतिष्ठिता ॥ ६४
लोकादपाक्रान्ता सप्तधा प्रतिपद्यते । वटोदका सा नलिनी पावनी च सरस्वती ॥ ६५

१ च. ट. चयः । २ क. कृतायोतित्रि° । ३ ख. ञ. °गाद्देव° । ४ ख. ञ. तत्र । ट. यत्र । ५ ट. °ते। [illegible]

स प्रभुः सर्वभूतानां विभुश्च द्विजसत्तमाः । संक्षेपो विस्तरश्चैव कर्ता कारयिता तथा ॥ १६
पृथिव्यापस्तथाऽऽकाशं वायुस्तेजश्च सत्तमाः । स यज्ञः सर्वभूतानामास्यं तस्य हुताशनः ॥ १७

इति श्रीमहापुराणे पाद्म आदिखण्डे पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८१

अथ षष्ठोऽध्यायः ।

ऋषय ऊचुः—

यदिदं भारतं वर्षं पुण्यं पुण्यविधायकम् । तत्सर्वं नः समाचक्ष्व त्वं हि नो बुद्धिमान्मतः ॥ १

सूत उवाच—

अत्र ते कीर्तयिष्यामि वर्षं भारतमुत्तमम् । प्रियमित्रस्य देवस्य मनोर्वैवस्वतस्य च ॥ २
पृथोश्च प्राज्ञ वैण्यस्य तथेक्ष्वाकोर्महात्मनः । ययातेरम्बरीषस्य मान्धातुर्नहुषस्य च ॥ ३
तथैव मुचुकुन्दस्य कुबेरोशीनरस्य च । ऋषभस्य तथैलस्य नृगस्य नृपतेस्तथा ॥ ४
कुशिकस्यैव राजर्षेर्गाधेश्चैव महात्मनः । सोमस्य चैव राजर्षेर्दिलीपस्य तथैव च ॥ ५
अन्येषां च महाभागाः क्षत्रियाणां बलीयसाम् । सर्वेषामेव भूतानां प्रियं भारतमुत्तमम् ॥ ६
ततो वर्षं प्रवक्ष्यामि यथाश्रुतमहो द्विजाः । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ॥ ७
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः । तेषां सहस्रशो विप्राः पर्वतास्ते समीपतः ॥ ८
अविज्ञाताः सारवन्तो विपुलाश्चित्रसानवः । अन्ये तु ये परिज्ञाता ह्रस्वाह्रस्वोपजीविनः ॥ ९
आर्यम्लेच्छाश्च धर्मज्ञास्ते मिश्राः पुरुषा द्विजाः । नदीं पिबन्ति विपुलां गङ्गां सिन्धुं सरस्वतीम् १०
गोदावरीं नर्मदां च वैहुदां च महानदीम् । शतद्रुं चन्द्रभागां च यमुनां च महानदीम् ॥ ११
दृषद्वतीं विपाशां च विपाशां स्वच्छवालुकाम् । नदीं वेत्रवतीं चैव कृष्णां वेणीं च निम्नगाम् ॥ १२
इरावतीं वितस्तां च पयोष्णीं देविकामपि । वेदस्मृतिं वेदशिरां त्रिदिवां सिन्धुलाकृमिम् ॥ १३
करीषिणीं चित्रवहां त्रिसेनां चैव निम्नगाम् । गोमतीं धूतपापां च चन्दनां च महानदीम् ॥ १४
कौशिकीं त्रिदिवां हृद्यां नाचितां रोहितारणीम् । रहस्यां शतकुम्भां च शरयूं च द्विजोत्तमाः १५
चर्मण्वतीं वेत्रवतीं हस्तिसोमां दिशं तथा । शरावतीं पयोष्णीं च भीमां भीमरथीमपि ॥ १६
कावेरीं वालुकां चापि वापीं शतमलीमपि । नीवारां महितां चापि सुप्रयोगां तथा नदीम् ॥ १७
पवित्रां कुण्डलां सिन्धुं वाजिनीं पुरुमालिनीम् । पूर्वाभिरामां वीरां च भीमां मालावतीं तथा १८
पलाशिनीं पापहरां महेन्द्रां पाटलावतीम् । करीषिणीमसिक्नीं च कुशवीरां महानदीम् ॥ १९
मरुत्वां प्रवरां मेनां होरां घृतवतीं तथा । अनाकतीमनुष्णीं च सेव्यां कापीं च सत्तमाः ॥ २०
सदावीरामधृष्यां च कुशचीरां महानदीम् । रथचित्रां ज्योतिरथां विश्वामित्रां कपिञ्जलाम् ॥ २१
उपेन्द्रां बहुलां चैव कुवीरामम्बुवाहिनीम् । वैनन्दीं पिञ्जलां वेणां तुङ्गवेगां महानदीम् ॥ २२
विदिशां कृष्णवेगां च ताम्रां च कपिलामपि । धेनुं सकामां वेदस्वां हविःस्रावां महापथाम् ॥ २३
शिप्रां च पिच्छलां चैव भारद्वाजीं च निम्नगाम् । कौणिकीं निम्नगां शोणां बाहुदामथ चन्द्रमाम् २४

१ क. नृपस्य । २ ख. अ. °म् । नवव° । ३ ङ. झ. ट. °ता दुःखादुःखोप° । ४ ङ. च. ढ. बाहुदां । ट. बहूदां । ५ ... वालुकां । ट. भालुकां । ख. ढ. चुलुकां । ६ अ. तापीं । ७ ख. ङ. च. झ. ढ. । हेमां ।

दृश वर्ः शिलां चैव ब्रह्ममेध्यां दृषद्वतीम् । परोक्षामथ रोहीं च तथा जम्बूनदीमपि ॥ २५
दक्षिणां तपसां दासीं सामान्यां वरुणामसीम् । नीलां धृतिकरीं चैव पर्णशां च महानदीम् ॥ २६
सर्वनघा वृषभां भाषां ब्रह्ममेध्यां दृषद्वतीम् । एताश्चान्याश्च बहवो महानद्यो द्विजर्षभाः ॥ २७
योजनिरामयां कृष्णां मन्दगां मन्दवाहिनीम् । ब्राह्मणीं च महागौरीं दुर्गामपि च सत्तमाः ॥ २८
योत्पलां चित्ररथां मञ्जुलां रोहिणीं तथा । मन्दाकिनीं वैतरणीं कोकां चापि महानदीम् ॥ २९
शुक्तिमतीमनङ्गां च तथैव वृषसौत्वयाम् । लौहित्यां करतोयां च तथैव वृषकौत्वयाम् ॥ ३०
कुमारीमृषिकुल्यां च मारिषां च सरस्वतीम् । मन्दाकिनीं सुपुण्यां च सर्वां गङ्गां च सत्तमाः ३१
विश्वस्य मातरः सर्वाः सर्वाश्चैव महाफलाः । तथा नद्यः स्वप्रकाशाः शतशोऽथ सहस्रशः ॥ ३२
इत्येताः सरितो विप्राः समाख्याता यथास्मृति । अत ऊर्ध्वं जनपदान्निबोध गदतो मम ॥ ३३
तत्रेमे कुरुपाञ्चालाः शाल्वमात्रेयजाङ्गलाः । शूरसेनाः पुलिन्दाश्च बौधा मालास्तथैव च ॥ ३४
मत्स्याः कुशट्टाः सौगन्ध्याः कुन्तयः काशिकोशलाः । चेदिमत्स्यकरूषाश्च भोजाः सिन्धुपुलिन्दकाः ३५
उत्तमाश्च दशार्णाश्च मेकलाश्चोत्कलैः सह । पञ्चालाः कोशलाश्चैव नैकपृष्ठयुगंधराः ॥ ३६
बोधा मद्राः कलिङ्गाश्च काशयोऽपरकाशयः । जठराः कुकुराश्चैव सदशार्णाः सुसत्तमाः ॥ ३७
कुन्तयोऽवन्तयश्चैव तथैवापरकुन्तयः । गोमन्ता मल्लकाः पुण्ड्रा विदर्भा नृपवाहिकाः ॥ ३८
अश्मकाः सोत्तराश्चैव गोपराष्ट्राः कनीयसः । अधिराज्यकुशट्टाश्च मल्लराष्ट्राश्च केरलाः ॥ ३९
मालवाश्चोपवास्याश्च वक्रावक्रातपाः शकाः । विदेहा मागधाः सह्मा मलजा विजयास्तथा ॥४०
अङ्गा वङ्गाः कलिङ्गाश्च यकृल्लोमान एव च । मल्लाः सुदेष्णाः प्रह्लादा महिषाः शशकास्तथा ॥४१
बाह्लिका वाटधानाश्च आभीराः कालतोयकाः । अपरान्ताः परान्ताश्च पङ्कलाश्चर्मचण्डकाः ॥४२
अटवीशेखराश्चैव मेरुभूताश्च सत्तमाः । उपावृत्तानुपावृत्ताः सुराष्ट्राः केकयास्तथा ॥ ४३
कुट्टापरान्ता माहेयाः कक्षाः सामुद्रनिष्कुटाः । अन्धाश्च बहवो विप्रा अन्तर्गिर्यस्तथैव च ॥ ४४
बहिर्गिर्योऽङ्गमलदा मगधा मालवार्यटीः । सत्त्वतराः प्रावृषेया भार्गवाश्च द्विजर्षभाः ॥ ४५
पुण्ड्रा भार्गाः किराताश्च सुदेष्णा भासुरास्तथा । शका निषादा निषधास्तथैवाऽऽनर्तनैर्ऋताः ४६
पूर्णलाः पूतिमत्स्याश्च कुन्तलाः कुशकास्तथा । तीरग्रहाः शूरसेना ईजिकाः कल्पकारणाः ॥४७
तिलभागा मसाराश्च मधुमत्ताः ककुन्दकाः । काश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा ४८
अभीसाराः कुद्रुताश्च सौरिला बाह्लिकास्तथा । दर्वी च मालवादर्वावातजामरथोरगाः ॥ ४९
बलरट्टास्तथा विप्राः सुदामानः सुमल्लिकाः । बन्धाकरीकषाश्चैव कुलिन्दा गन्धिकास्तथा ॥५०
वानायवो देशाः पार्श्वरोमाणः कुशबिन्दवः । काच्छा गोपालकच्छाश्च जाङ्गलाः कुरुवर्णकाः ॥५१
किराता बर्बराः सिद्धा वैदेहास्ताम्रलिप्तिकाः । औड्रम्लेच्छाः ससैरिन्ध्राः पार्वतीयाश्च सत्तमाः ५२
अथापरे जनपदा दक्षिणा मुनिपुङ्गवाः । द्रविडाः केरलाः प्राच्या मूषिका बालमूषिकाः ॥ ५३
कर्णाटका माहिषका विकन्धा मूषिकास्तथा । झल्लिकाः कुन्तलाश्चैव सौहृदा नलकाननाः ॥५४
कोकुट्टकास्तथा चोलाः कोकणा मणिवालवाः । समङ्गाः कनकाश्चैव कुकुराङ्गारमारिषाः ॥ ५५

---

१ ट. °न्यां वारणा° । २ ख. ञ. °म् ॥२९॥ मुक्ति° । ३ ख. ञ. °साह्वया° । ४ ञ. °काह्वया° । ५ ख. ञ. °च स्वर्गंग° । ६ क. गोगन्ता । ७ ख. ञ. मालवार्घटाः । ८ ट. सत्त्वोत्तराः । ९ क. °ष्णा मासु° । १० ङ. झ. °गाः ॥ ४९ ॥ चत्वरठास्त° । ११ ढ. बल्वर° । १२ ट. दराः । १३ ञ. किष्किन्धा । ट. विकत्था । १४ ख. ञ. °बालकाः । स° । ङ. झ. ढ. °वालुकाः । स° ।

ध्वजिन्युत्सवसङ्केतास्त्रिगर्भा माल्यसेनयः । व्यूढकाः कोरकाः प्रोष्ठाः सङ्गवेगधरास्तथा ॥ ५६
तथैव विन्ध्यरुलिकाः पुलिन्दा वेल्बलैः सह । मालवा मलराश्चैव तथैवापरवर्तकाः ॥ ५७
कुलिन्दाः कालदाश्चैव चण्डकाः कुरटास्तथा । मुशलास्तनवालाश्च सतीर्थापूतिसृञ्जयाः ॥ ५८
अनिदायाः शिवाटाश्च तपानाः सूतपास्तथा । ऋषिकाश्च विदर्भाश्च स्तङ्गनाः परतङ्गकाः ॥५९
उत्तराश्चापरे म्लेच्छा जना हि मुनिपुङ्गवाः । जवनाश्च सकाम्बोजा दारुणा म्लेच्छजातयः॥६०
सैकृघृहाः कुलव्याश्च हूणाः पारसिकैः सह । तथैव रमणाश्चान्यास्तथा च दशमानिकाः ॥६१
क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च । शूराभीराश्च दरदाः काश्मीराः पशुभिः सह ॥ ६२
खाण्डीकाश्च तुषाराश्च पह्नावा गिरिगह्वराः । आत्रेयाः सभरद्वाजास्तथैव स्तनपोषकाः ॥६३
द्रोषकाश्च कलिङ्गाश्च किरातानां च जातयः । तोमरा हन्यमानाश्च तथैव करभञ्जकाः ॥ ६४
एते चान्ये जनपदाः प्राच्योदीच्यास्तथैव च । उद्देशमात्रेण मया देशाः संकीर्तिता द्विजाः ॥
यथागुणबलं वाऽपि त्रिवर्गस्य महाफलम् ॥ ६५

इति श्रीमहापुराणे पाद्म आदिखण्डे षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४६

---

अथ सप्तमोऽध्यायः ।

---

ऋषय ऊचुः—

भारतस्यास्य वर्षस्य तथा हैमवतस्य च । प्रमाणमायुषः सूत बलं चापि शुभाशुभम् ॥ १
अनागतमतिक्रान्तं वर्तमानं च सत्तम । आचक्ष्व नो विस्तरेण हरिवर्षं तथैव च ॥ २

सूत उवाच—

चत्वारि भारते वर्षे युगानि मुनिपुङ्गवाः । कृतं त्रेता द्वापरं च कलिश्च द्विजसत्तमाः ॥ ३
पूर्वं कृतयुगं नाम ततस्त्रेतायुगं द्विजाः । तत्पश्चाद्द्वापरं चाथ ततस्तिष्यः प्रवर्तते ॥ ४
चत्वारि तु सहस्राणि वर्षाणां मुनिपुङ्गवाः । आयुःसंख्या कृतयुगे संख्याता हि तपोधनाः ॥ ५
तथा त्रीणि सहस्राणि त्रेतायामायुषो विदुः । द्वे सहस्रे द्वापरे तु भुवि तिष्ठन्ति सांप्रतम् ॥ ६
न प्रमाणस्थितिर्ह्यस्ति तिष्ये तु मुनिपुङ्गवाः । गर्भस्थाश्च म्रियन्तेऽत्र तथा जाता म्रियन्ति च ॥७
महाबला महासत्त्वाः प्रज्ञागुणसमन्विताः । प्रजायन्ते च जाताश्च शतशोऽथ सहस्रशः ॥ ८
द्विजाः कृतयुगे विप्रा बलिनः प्रियदर्शनाः । प्रजायन्ते च जाताश्च मुनयो वै तपोधनाः ॥ ९
महोत्साहा महात्मानो धार्मिकाः सत्यवादिनः । प्रियदर्शा वपुष्मन्तो महावीर्या धनुर्धराः ॥ १०
वीरा हि युधि जायन्ते क्षत्रियाश्चारुसंमताः । त्रेतायां क्षत्रियास्तावत्सर्वे वै चक्रवर्तिनः ॥ ११
सर्ववर्णाश्च जायन्ते सदैव द्वापरे युगे । महोत्साहा वीर्यवन्तः परस्परवधैषिणः ॥ १२
तेजसांऽन्धेन संयुक्ताः क्रोधनाः पुरुषाः किल । लुब्धाश्चानृतिकाश्चैव तिष्ये जायन्ति भो द्विजाः १३
ईर्ष्या मानस्तथा क्रोधो मायाऽसूया तथैव च । तिष्ये भवन्ति भूतानां रागो लोभश्च सत्तमाः १४

---

१ ख. म. विन्ध्यपौलायाः । २ ङ. च. ट. ढ. वल्मलैः । ख. ञ. दण्डकैः । ३ ट. स्तङ्गणाः परतङ्गणाः । ४ सहु-
५ क. आत्रेयाः सभिर° । ६ क. °जाः । संक्षेपाद्द्वा° । ७ क. तत्र स्निग्धः प्र° । ८ क. °च्येषु मु° । ९ क. °शः
[illegible]° । १० ट. °सांऽशेन । ११ क. °रुषाङ्कितः । लु° ।

संक्षेपो वर्तते विप्रा द्वापरे युगमध्यके । गुणोत्तरं हैमवतं हरिवर्षं ततः परम् ॥ १५

इति श्रीमहापुराणे पाद्म आदिखण्डे सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६१

---

अथाष्टमोऽध्यायः ।

---

ऋषय ऊचुः—

जम्बूखण्डस्त्वया प्रोक्तो यथावदिह सत्तम । विष्कम्भस्य च प्रब्रूहि परिमाणं तु तत्त्वतः ॥ १

समुद्रस्य प्रमाणं च सम्यगच्छिद्रदर्शनः । शाकद्वीपं च नो ब्रूहि कुशद्वीपं च धार्मिक ॥

शाल्मलं चैव तत्त्वेन क्रौञ्चद्वीपं तथैव च ॥ २

सूत उवाच—

राः सुबहवो द्वीपा यैरिदं संततं जगत् । सप्त द्वीपान्प्रवक्ष्यामि शृणुत द्विजपुङ्गवाः ॥ ३

द्वादश सहस्राणि योजनानि द्विजोत्तमाः । षट्शतानि च पूर्णानि विष्कम्भो जम्बुपर्वतः ॥ ४

वणस्य समुद्रस्य विष्कम्भो द्विगुणः स्मृतः । नानाजनपदाकीर्णो मणिविद्रुमचित्रितः ॥ ५

कधातुविचित्रैश्च पर्वतैरुपशोभितः । सिद्धचारणसंकीर्णः सागरः परिमण्डलः ॥ ६

ाकद्वीपं च वक्ष्यामि यथावदिह सत्तमाः । शृणुताद्य यथान्यायं ब्रुवतो मम धार्मिकाः ॥ ७

म्बूद्वीपप्रमाणेन द्विगुणः स द्विजर्षभाः । विष्कम्भेन महाभागाः सागरोऽपि विभागशः ॥ ८

ीरोदो मुनिशार्दूला येन संपरिवारितः । तत्र पुण्या जनपदास्तत्र न म्रियते जनः ॥

ुत एव हि दुर्भिक्षं क्षमातेजोयुता हि ते । ९

ाकद्वीपस्य संक्षेपो यथावन्मुनिसत्तमाः । उक्त एष महाभागाः किमन्यत्कथयामि वः ॥ १०

ऋषय ऊचुः—

ाकद्वीपस्य संक्षेपो यथावदिह धार्मिक । उक्तस्त्वया महाप्राज्ञ विस्तरं ब्रूहि तत्त्वतः ॥ ११

सूत उवाच—

थैव पर्वता विप्राः सप्तात्र मणिपर्वताः । रत्नाकरास्तथा नद्यस्तेषां नामानि वर्णये ॥ १२

ातीव गुणवत्सर्वं तत्त्वं पृच्छथ धार्मिकाः । देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते ॥ १३

ागायतो महाभागा मैलयो नाम पर्वतः । ततो मेघाः प्रवर्तन्ते प्रवर्षन्ति च सर्वशः ॥ १४

तः परेण मुनयो जलधारो महागिरिः । ततो नित्यमुपादत्ते वासवः परमं जलम् ॥ १५

तो वर्षं प्रभवति वर्षाकाले द्विजोत्तमाः । उच्चैर्गिरी रैवतको यत्र नित्यं प्रतिष्ठितम् ॥ १६

वती दिवि नक्षत्रं पितामहकृतावधिः । उत्तरेण तु विप्रेन्द्राः श्यामो नाम महागिरिः ॥ १७

वमेघप्रभः प्रांशुः श्रीमानुज्ज्वलविग्रहः । यत्र श्यामत्वमापन्नाः प्रजा मुदितमानसाः ॥ १८

ऋषय ऊचुः—

महान्संशयोऽस्माकं प्राप्तोऽयं सूत यस्तथा(?) । प्रजाः कथं सूत सम्यक्संप्राप्ताः श्यामतामिह १९

सूत उवाच—

र्वेष्वेव महाप्राज्ञा द्वीपेषु मुनिपुङ्गवाः । गौरः कृष्णश्च पतगो त(गस्त)योर्वर्णान्तरे द्विजाः ॥ २

---

१ ङ. ढ. °ध्यगे । गु° । २ ढ. °म्बूद्वीपस्त्व° । ३ ख. ञ. जलदो । ४ क. प्रभवन्ति । ५ क. [illegible]

श्यामो यस्मात्प्रवृत्तो वै तस्माच्छ्यामगिरिः स्मृतः । ततः परं मुनिश्रेष्ठा दुर्गशैलो महोदयः २१
केशरी केशरयुतो यतो वातः प्रवर्तते । तेषां योजनविष्कम्भो द्विगुणः प्रविभागशः ॥ २२
वर्षाणि तेषु विप्रेन्द्राः संप्रोक्तानि मनीषिभिः । महामेरुर्महाकाशो जलदः कुमुदोत्तरः ॥ २३
जलधारो महाप्राज्ञाः सुकुमार इति स्मृतः । रैवतस्य तु कौमारः श्यामस्य मणिकाञ्चनः ॥ २४
केशरस्याथ मौदाकी परेण तु महान्सुमान् । परिवार्य तु विप्रेन्द्रा दैर्घ्यं ह्रस्वत्वमेव च ॥ २५
जम्बूद्वीपेन संख्यातस्तस्य मध्ये महाद्रुमः । शाको नाम महाप्राज्ञाः प्रजास्तस्य सहानुगाः २६
तत्र पुण्या जनपदाः पूज्यते तत्र शंकरः । तत्र गच्छन्ति सिद्धाश्च चारणा दैवतानि च ॥ २७
धार्मिकाश्च प्रजाः सर्वाश्चत्वारस्तत्र सत्तमाः । वर्णाः स्वकर्मनिरता न च स्तेनोऽत्र दृश्यते २८
दीर्घायुषो महाप्राज्ञा जरामृत्युविवर्जिताः । प्रजास्तत्र विवर्धन्ते वर्षास्विव समुद्रगाः ॥ २९
नद्यः पुण्यजलास्तत्र गङ्गा च बहुधा गता । सुकुमारी कुमारी च सीता शिवोदका तथा ॥ ३०
महानदी च भो विप्रास्तथा मणिजला नदी । इक्षुवर्धनिका चैव नदी मुनिवराः स्मृता ॥ ३१
ततः प्रवृत्ताः पुण्योदा नद्यः परमशोभनाः । सहस्राणां शतान्येव यतो वर्षति वासवः ॥ ३२
न तासां नामधेयानि परिमाणं तथैव च । शक्यते परिसंख्यातुं पुण्यास्ता हि सरिद्वराः ॥ ३३
ततः पुण्या जनपदाश्चत्वारो लोकविश्रुताः । मृगाश्च मशकाश्चैव मानसा मल्लकास्तथा ॥ ३४
मृगाश्च ब्रह्मभूयिष्ठाः स्वकर्मनिरता द्विजाः । मशकेषु तु राजन्या धार्मिकाः सर्वकामदाः ॥ ३५
मानसाश्च महाभागा वैश्यधर्मोपजीविनः । सर्वकामसमायुक्ताः शूरा धर्मार्थनिश्चिताः ॥ ३६
शूद्रास्तु मल्लका नित्यं पुरुषा धर्मशीलिनः । न तत्र राजा विप्रेन्द्रा न दण्डो न च दण्डिकाः ॥
स्वधर्मेणैव धर्मज्ञास्ते रक्षन्ति परस्परम् ॥ ३७
एतावदेव शक्यं तु तत्र द्वीपे प्रभाषितुम् । एतदेव च श्रोतव्यं शाकद्वीपे महौजसि ॥ ३८

इति श्रीमहापुराणे पाद्म आदिखण्डेऽष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९९

---

अथ नवमोऽध्यायः ।

---

सूत उवाच—

उत्तरेषु च भो विप्रा द्वीपेषु श्रूयते कथा । एवं तत्र महाभागा ब्रुवतस्तन्निबोधत ॥ १
घृततोयः समुद्रोऽत्र दधिमण्डोदकोऽपरः । सुरोदः सागरश्चैव तथाऽन्यो दुग्धसागरः ॥ २
परस्परेण द्विगुणाः सर्वे द्वीपा द्विजर्षभाः । पर्वताश्च महाप्राज्ञाः समुद्रैः परिवारिताः ॥ ३
गौरस्तु मध्यमे द्वीपे गिरिर्मनःशिलो महान् । पर्वतः पश्चिमे कृष्णो नारायणसखो द्विजाः ॥ ४
तत्र रत्नानि दिव्यानि स्वयं रक्षति केशवः । प्रसन्नश्चाभवत्तत्र प्रजानां व्यदधात्सुखम् ॥ ५
शरद्वीपे कुशस्तम्भो मध्ये जनपदस्य ह । संपूज्यते शाल्मलिश्च द्वीपे शाल्मलिके द्विजाः ॥ ६
क्रौञ्चद्वीपे महाक्रौञ्चो गिरी रत्नचयाकरः । संपूज्यते भो विप्रेन्द्राश्चातुर्वर्ण्येन नित्यदा ॥ ७
गोमन्तः पर्वतो विप्राः सुमहान्सर्वधातुकः । यत्र नित्यं निवसति श्रीमान्कमललोचनः ॥ ८

---

१ ख. म. कुसुमार । २ ट. °हाप्पुमा° । ३ ट. °स्तत्र स° । ४ क. शिवोलत्रा । म. शिवालुका । ५ ख. म. °ता [illegible] ॥ प्रतोयान्याश्च पु° ।

मोक्षिभिः संगतो नित्यं प्रभुर्नारायणो हरिः । शरद्वीपे तु विप्रेन्द्राः पर्वतो विद्रुमैश्चितः ॥ ९
सुनामा च सुदुर्धर्षो द्वितीयो हेमपर्वतः । द्युतिमान्नाम विप्रेन्द्रास्तृतीयः कुमुदो गिरिः ॥ १०
चतुर्थः पुष्पवान्नाम पञ्चमस्तु कुशेशयः । षष्ठो हरिगिरिर्नाम षडेते पर्वतोत्तमाः ॥ ११
तेषामन्तरविष्कम्भो द्विगुणः पर्वभागशः । औद्भिदं प्रथमं वर्षं द्वितीयं रेणुमण्डलम् ॥ १२
तृतीयं सुरथं नाम चतुर्थं लम्बनं स्मृतम् । धृतिमत्पञ्चमं वर्षं षष्ठं वर्षं प्रभाकरम् ॥ १३
सप्तमं कापिलं वर्षं सप्तैते वर्षलम्बकाः । एतेषु देवगन्धर्वाः प्रजाश्च मुदिता द्विजाः ॥
विहरन्ति रमन्ते च न तेषु म्रियते जनः ॥ १४
न तेषु दस्यवः सन्ति म्लेच्छजात्योऽपि वा द्विजाः । गौरः प्रायो जनः सर्वः सुकुमारश्च सत्तमाः १५
अविशिष्टेषु सर्वेषु वक्ष्यामि द्विजपुङ्गवाः । यथाश्रुतं महाप्राज्ञा वर्ण्यते शृणुत द्विजाः ॥ १६
क्रौञ्चद्वीपे महाभागाः क्रौञ्चो नाम महागिरिः । क्रौञ्चात्परो वामनको वामनादन्धकारकः १७
अन्धकारात्परो विप्रा मैनाकः पर्वतोत्तमः । मैनाकात्परतो विप्रा गोविन्दो गिरिरुत्तमः ॥ १८
[*गोविन्दात्परतश्चैव पुण्डरीको महागिरिः । पुण्डरीकात्परश्चापि प्रोच्यते दुन्दुभिस्वनः] ॥ १९
पुरस्ताद्द्विगुणस्तेषां विष्कम्भो मुनिपुङ्गवाः । देशांस्तत्र प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ २०
क्रौञ्चस्य कुशलो देशो वामनस्य मनोनुगः । मनोनुगात्परो देश उष्णो नाम तपोधनाः ॥ २१
उष्णात्परः प्रावरकः प्रावरादन्धकारकः । अन्धकारकदेशात्तु मुनिदेशः परः स्मृतः ॥ २२
मुनिदेशात्परश्चैव प्रोच्यते दुन्दुभिस्वनः । सिद्धचारणसंकीर्णो गौरः प्रायो जनः स्मृतः ॥ २३
एते देशाः समाख्याता देवगन्धर्वसेविताः । पुष्करे पुष्करो नाम पर्वतो मणिरत्नवान् ॥ २४
तत्र नित्यं प्रसरति स्वयं देवः प्रजापतिः । पर्युपासन्ति ते नित्यं देवाः सर्वे महर्षयः ॥ २५
वाग्भिर्मनोनुकूलाभिः पूजयन्तो द्विजोत्तमाः । जम्बूद्वीपात्प्रवर्तन्ते रत्नानि विविधानि च २६
द्वीपेषु तेषु सर्वेषु प्रजानां मुनिसत्तमाः । विप्राणां ब्रह्मचर्येण सत्येन च दमेन च ॥ २७
आरोग्यायुष्प्रमाणाभ्यां द्विगुणं द्विगुणं ततः । एते जनपदा विप्रा द्वीपेषु तेषु सत्तमाः ॥
उक्ता जनपदा येषु धर्मश्चैकः प्रवर्तते ॥ २८
ईश्वरो दण्डमुद्यम्य स्वयमेव प्रजापतिः । द्वीपानेतान्मुनिवरान्रक्षंस्तिष्ठति सर्वदा ॥ २९
स राजा स शिवो विप्राः स पिता स पितामहः । गोपायति द्विजश्रेष्ठाः प्रजाः सद्विजपण्डिताः ॥ ३०
भोजनमत्र विप्रेन्द्राः प्रजाः स्वयमुपस्थितम् । सिद्धमेव महाभागा भुञ्जते तद्धि नित्यदा ॥ ३१
ततः परं महाशैलो दृश्यते लोकसंस्थितिः । चतुरस्रो महाप्राज्ञाः सर्वतःपरिमण्डलः ॥ ३२
तत्र तिष्ठन्ति विप्रेन्द्राश्चत्वारो लोकसंमताः । दिग्गजा हि मुनिश्रेष्ठा वामनैरावतादयः ॥ ३३
सुप्रतीकस्तथा विप्राः प्रभिन्नकरटामुखाः । तस्याहं परिमाणं तु न संख्यातुमिहोत्सहे ॥ ३४
असंख्यातः स नित्यं हि तिर्यगूर्ध्वमधस्तथा । तत्र वै वायवो वान्ति दिग्भ्यः सर्वाभ्य एव च ॥ ३५
असंबन्धा मुनिश्रेष्ठास्तान्निगृह्णन्ति ते गजाः । पुष्करैः पद्मसंकाशैर्विकर्षन्ति महाप्रभैः ॥ ३६
शतधा पुनरेवाऽऽशु ते तान्मुञ्चन्ति नित्यशः । श्वसद्भिर्मुखनासाभ्यां दिग्गजैरिव मारुताः ॥ ३७

---

* एतच्चिह्नान्तर्गतः पाठः ख ञ पुस्तकयोरेव दृश्यते ।

---

१ ख. ञ °शेरुकः । ष° । २ ख. ञ. °यं वेणु° । ३ ख. ङ. झ. ञ. ढ. लवनं । ४ ख. ञ. °र्षभावकाः° । ५ ख. ङ. °मि नामतस्तन्निबोधत । क्रौ° । ६ क. °रं समा नाम दृ° ।

आगच्छन्ति द्विजश्रेष्ठास्तत्र तिष्ठन्ति वै प्रजाः। यथोद्दिष्टं मया प्रोक्तं सनिर्माणमिदं जगत्
श्रुत्वेदं पृथिवीमानं पुण्यदं च मनोनुगम्। श्रीमांस्तरति विप्रेन्द्राः सिद्धार्थः साधुसंमतः।
आयुर्बलं च कीर्तिश्च तस्य तेजश्च वर्धते॥
यः शृणोति समाख्यानं पर्वणीदं धृतव्रतः। प्रीयन्ते पितरस्तस्य तथैव च पितामहाः॥

इति श्रीमहापुराणे पाद्म आदिखण्डे नवमोऽध्यायः॥ ९॥

आदितः श्लोकानां समष्ट्यङ्काः—३३९

---

अथ दशमोऽध्यायः।

---

ऋषय ऊचुः—

पृथिव्या हि परिमाणं संस्थानं[1] सरितस्तथा। त्वत्तः श्रुत्वा महाभाग अमृतं पीतमेव च।
तत्र भूमौ च तीर्थानि पावनानीति नः श्रुतम्॥ आचक्ष्व तानि सर्वाणि यथाफलकराणि
सविशेषं महाप्राज्ञ श्रोतुमिच्छामहे तव॥

सूत उवाच—

धन्यं पुण्यं महाख्यानं पृष्टमेव तपोधनाः। यथामति प्रवक्ष्यामि यथायोगं यथाश्रुतम्॥
पुरातनं प्रवक्ष्यामि देवर्षेर्नारदस्य हि। युधिष्ठिरेण संवादं शृणुत द्विजसत्तमाः॥
हृतराज्याः पाण्डुपुत्रा वने तस्मिन्महारथाः। निवसन्ति महाभागा द्रौपद्या सह पाण्डवाः
अथापश्यन्महात्मानं देवर्षिं तत्र नारदम्। दीप्यमानं श्रिया ब्राह्म्या दीप्ताग्निसमतेजसम्
स तैः परिवृतः श्रीमान्भ्रातृभिः कुरुनन्दनः। दिवि भाति हि दीप्तौजा देवैरिव शतक्रतुः
यथा च देवान्सावित्री याज्ञसेनी तथा पतीन्। न जहौ धर्मतः पार्थान्मेरुमर्कप्रभा यथा।
प्रतिगृह्य ततः पूजां नारदो भगवानृषिः। आश्वासयद्धर्मपुत्रं युक्तरूपप्रियेण च॥
उवाच च महात्मानं धर्मराजं युधिष्ठिरम्। ब्रूहि धर्मभृतां श्रेष्ठ किं प्रार्थ्यं[2] किं ददामि[3] ते
अथ धर्मसुतो राजा प्रणम्य भ्रातृभिः सह। उवाच प्राञ्जलिर्वाक्यं[4] नारदं देवसंमितम्॥
त्वयि तुष्टे महाभाग सर्वलोकाभिपूजिते। कृतमित्येवमन्ये हि प्रसादात्तव सुव्रत॥
यदि त्वयाऽनुग्राह्योऽस्मि भ्रातृभिः सहितोऽनघ। संदेहं मे मुनिश्रेष्ठ हृदिस्थं छेत्तुमर्हसि
प्रदक्षिणां यः कुरुते पृथिवीं तीर्थतत्परः। किं फलं तस्य कार्त्स्न्येन तद्ब्रह्मन्वक्तुमर्हसि॥

नारद उवाच—

शृणु राजन्नवहितो दिलीपेन यथा पुरा। वसिष्ठस्य सकाशाद्वै सर्वमेतदुपश्रुतम्॥
पुरा भागीरथीतीरे दिलीपो राजसत्तमः। धर्म्यं व्रतं समास्थाय न्यवसन्मुनिवत्तदा॥
शुभे देशे महाराज पुण्ये देवर्षिपूजिते। गङ्गाद्वारे महातेजा देवगन्धर्वसेविते॥
स पितॄंस्तर्पयामास देवांश्च परमद्युतिः। ऋषींश्च तर्पयामास विधिदृष्टेन कर्मणा॥
कस्यचित्त्वथ कालस्य जपन्नेव महामनाः। ददर्श भूतसंकाशं वसिष्ठमृषिमुत्तमम्॥
पुरोहितं स तं दृष्ट्वा दीप्यमानमिव श्रिया। प्रहर्षमतुलं लेभे विस्मयं परमं ययौ॥

---

१ ख. म. 'नं परि'। २ म. 'र्थ्यं प्र'। ३ ङ. वदामि। ४ क. प्राज्ञं निर्वा'।

उपस्थितं महाराज पूजयामास भारत । स हि धर्मभृतां श्रेष्ठो विधिदृष्टेन कर्मणा ॥ २१
शिरसा चार्घ्यमादाय शुचिः प्रयतमानसः । नाम संकीर्तयामास तस्मिन्ब्रह्मर्षिसत्तमे ॥ २२
दिलीपोऽहं तु भद्रं ते दासोऽस्मि तव सुव्रत । तव संदर्शनादेव मुक्तोऽहं सर्वकिल्बिषैः ॥ २३
एवमुक्त्वा महाराज दिलीपो द्विपदां वरः । वाग्यतः प्राञ्जलिर्भूत्वा तूष्णीमासीद्युधिष्ठिर ॥ २४
तं दृष्ट्वा नियमेनाथ स्वाध्यायेन च कर्षितम् । दिलीपं नृपतिश्रेष्ठं मुनिः प्रीतमनाँऽभवत् ॥ २५

इति श्रीमहापुराणे पाद्म आदिखण्डे दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६४

---

अथैकादशोऽध्यायः ।

---

वसिष्ठ उवाच—

अनेन तव धर्मज्ञ प्रश्रयेण दमेन च । सत्येन च महाभाग तुष्टोऽस्मि तव सर्वशः ॥ १
यस्येदृशस्ते धर्मोऽयं पितरस्तारितास्त्वया । तेन पश्यसि मां पुत्र याज्यश्चासि ममानघ ॥ २
प्रीतिर्मे वर्धते तेऽद्य ब्रूहि किं करवाणि ते । यद्वक्ष्यसि नरश्रेष्ठ तस्य दाताऽस्मि तेऽनघ ॥ ३

दिलीप उवाच—

प्रीते त्वयि वसिष्ठाद्य सर्वलोकाभिपूजिते । कृतमित्येव मन्ये हि यदहं पृष्टवान्प्रभुम् ॥ ४
यदि त्वहमनुग्राह्यस्तव धर्मभृतां वर । प्रक्ष्यामि हृत्स्थं संदेहं तन्मे त्वं वक्तुमर्हसि ॥ ५
अस्ति मे भगवन्कश्चित्तीर्थेभ्यो धर्मसंशयः । तदहं श्रोतुमिच्छामि पृथक्संकीर्तनं त्वया ॥ ६
प्रदक्षिणां यः पृथिवीं करोति द्विजसत्तम । किं फलं तस्य विप्रर्षे तन्मे ब्रूहि तपोधन ॥ ७

वसिष्ठ उवाच—

कथयिष्यामि तदहमृषीणां यत्परायणम् । तदेकाग्रमनास्तात शृणु तीर्थेषु यत्फलम् ॥ ८
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ ९
प्रतिग्रहादुपावृत्तः संतुष्टो नियतः शुचिः । अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥ १०
अकल्किको निराहारोऽलब्धाहारो जितेन्द्रियः । विमुक्तः सर्वदोषैर्यः स तीर्थफलमश्नुते ॥ ११
अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः । आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ १२
ऋषिभिः क्रतवः प्रोक्ता वेदेष्वपि यथाक्रमम् । फलं चैव यथातत्त्वं प्रेत्य चेह च सर्वशः ॥ १३
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते । बहूपकरणा यज्ञा नानासंभारविस्तराः ॥ १४
प्राप्यन्ते पार्थिवैरेते समृद्धैर्वा नरैः क्वचित् । न निर्धनैर्नरगणैरेकात्मभिरसाधनैः ॥ १५
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं जनेश्वर । तुल्यो यज्ञफलैः पुण्यैस्तं निबोध महीपते ॥ १६
ऋषीणां परमं गुह्यमिदं धर्मभृतां वर । तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥ १७
अनुपोष्यातिरात्राणि तीर्थाभिगमनेन च । अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ १८
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः । न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥ १९

---

* संधिरार्षः ।

---

१ ङ. ढ. 'च—वेदवेदाङ्गतत्त्वज्ञ स' । २ ङ. 'रो जिताहा' । ३ क. यज्ञं । ४ ख. ङ. 'पोष्य त्रिस' ।

नृलोके देवलोकस्य तीर्थं त्रैलोक्यविश्रुतम् । पुष्करं तीर्थमासाद्य देवदेवसमो भवेत् ॥ २०
दश कोटिसहस्राणि तीर्थानां वै महीपते । सांनिध्यं पुष्करे येषां त्रिसंध्यं सूर्यवंशज ॥ २१
आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः । गन्धर्वाप्सरसश्चैव तत्र संनिहिताः प्रभो ॥ २२
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा । दिव्ययोगा महाराज पुण्येन महता द्विजाः ॥ २३
मनसाऽप्यभिकामस्य पुष्कराणि मनीषिणः । पुनन्ति सर्वपापानि नाकपृष्ठे स पूज्यते ॥ २४
अस्मिंस्तीर्थे महाभाग नित्यमेव पितामहः । उवास परमप्रीतो देवदानवसंमतः ॥ २५
पुष्करेषु महाभाग देवाः सर्षिपुरोगमाः । सिद्धिं परमिकां प्राप्ताः पुण्येन महताऽन्विताः ॥ २६
तत्राभिषेकं यः कुर्यात्पितृदेवार्चने रतः । अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥ २७
अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः । तेनाऽऽप्नोत्यजिताँल्लोकान्ब्रह्मणः सदने स्थितान् २८
सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः । उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु पार्थिव ॥ २९
जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषस्य वा । पुष्करे गतमात्रस्य सर्वमेव प्रणश्यति ॥ ३०
यथा सुराणां सर्वेषामादिस्तु मधुसूदनः । तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते ॥ ३१
उष्ट्वा द्वादश वर्षाणि पुष्करे नियतः शुचिः । क्रतून्सर्वानवाप्नोति ब्रह्मलोकं च गच्छति ॥ ३२
यस्तु वर्षशतं पूर्णमग्निहोत्रमुपाचरेत् । कार्तिकीं वा वसेदेकां पुष्करे सममेव तत् ॥ ३३
दुष्करं पुष्करे गन्तुं दुष्करं पुष्करे तपः । दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ३४
त्रीणि शृङ्गाणि शुभ्राणि त्रीणि प्रस्रवणानि च । पुष्कराण्यादितीर्थानि न विद्मस्तत्र कारणम् ॥ ३५
उष्ट्वा द्वादश वर्षाणि नियतो नियताशनः । स मुक्तः सर्वपापेभ्यः सर्वक्रतुफलं लभेत् ॥ ३६

इति श्रीमहापुराणे पाद्म आदिखण्डे पुष्करतीर्थमाहात्म्यवर्णनं नामैकादशोऽध्यायः ॥ ११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४००

---

अथ द्वादशोऽध्यायः ।

---

वसिष्ठ उवाच—

प्रदक्षिणमुपावृत्तो जम्बूमार्गं समाविशेत् । जम्बूमार्गं समाविश्य पितृदेवर्षिपूजितम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ १
तत्रोष्य रजनीः पञ्च षष्ठे कालेऽश्नुवन्नरः[1] । न दुर्गतिमवाप्नोति सिद्धिं चाऽऽप्नोत्यनुत्तमाम् ॥ २
जम्बूमार्गादुपावृत्तो गच्छेत्तुण्डूलिकाश्रमम्[2] । न दुर्गतिमवाप्नोति स्वर्गलोके च पूज्यते ॥ ३
अगस्त्याश्रममासाद्य पितृदेवार्चने रतः । त्रिरात्रोपोषितो राजन्नग्निष्टोमफलं लभेत् ॥ ४
शाकवृत्तिः फलैर्वाऽपि कौमारं विन्दते परम् । कन्याश्रमं समासाद्य श्रीपुष्टं[3] लोकपूजितम् ॥ ५
धर्मारण्यं हि तत्पुण्यमाद्यं च पार्थिवर्षभ । यत्र प्रविष्टमात्रो वै पापेभ्यो विप्रमुच्यते ॥ ६
अर्चयित्वा पितॄन्देवान्नियतो नियताशनः । सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ ७
प्रदक्षिणं ततः कृत्वा ययातिपतनं व्रजेत् । हयमेधस्य यज्ञस्य फलं प्राप्नोति तत्र वै ॥ ८
महाकालं ततो गच्छेन्नियतो नियताशनः । कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ॥ ९

---

१ ङ. षष्ठकालक्षिमवाप्न । ट. षष्ठिकालं क्षमी नरः । २ ङ. 'च्छेत्तन्दुलि' । ट. 'च्छेदुद्दालका' । ख. प्र. 'च्छेत्तुण्डलिका' । ३ ख. प्र. श्रीजुष्टं ।

ततो गच्छेत धर्मज्ञः स्थानं तीर्थमुमापतेः । नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतम् ॥ १०
तत्राभिगम्य चेशानं गोसहस्रफलं लभेत् । महादेवप्रसादाच्च गाणपत्यमवाप्नुयात् ॥ ११
समृद्धमसपत्नं तु श्रिया युक्तं नरोत्तम । नर्मदां तु समासाद्य नदीं त्रैलोक्यविश्रुताम् ॥
तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत् ॥ १२

इति श्रीमहापुराणे पाद्म आदिखण्डे द्वादशोऽध्यायः ॥ १२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४१२

अथ त्रयोदशोऽध्यायः ।

युधिष्ठिर उवाच—

वसिष्ठेन दिलीपाय कथितं तीर्थमुत्तमम् । नर्मदेति च विख्यातं पापपर्वतदारणम् ॥ १
भूयश्च श्रोतुमिच्छामि तन्मे कथय नारद । नर्मदायाश्च माहात्म्यं वसिष्ठोक्तं द्विजोत्तम ॥ २
कथमेषा महापुण्या नदी सर्वत्र विश्रुता । नर्मदा नाम विख्याता तन्मम ब्रूहि नारद ॥ ३

नारद उवाच—

नर्मदा सरितां श्रेष्ठा सर्वपापप्रणाशिनी । तारयेत्सर्वभूतानि स्थावराणि चराणि च ॥ ४
नर्मदायास्तु माहात्म्यं वसिष्ठोक्तं मया श्रुतम् । तदेतद्धि महाराज सर्वं हि कथयामि ते ॥ ५
पुण्या कनखले गङ्गा कुरुक्षेत्रे सरस्वती । ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा ॥ ६
त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् । सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम् ॥ ७
कलिङ्गदेशे पश्चार्धे पर्वतेऽमरकण्टके । पुण्या च त्रिषु लोकेषु रमणीया मनोरमा ॥ ८
सदेवासुरगन्धर्वा ऋषयश्च तपोधनाः । तपस्तप्त्वा महाराज सिद्धिं च परमां गताः ॥ ९
तत्र स्नात्वा महाराज नियमस्थो जितेन्द्रियः । उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥ १०
जनेश्वरे नरः स्नात्वा पिण्डं दत्त्वा यथाविधि । पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम् ॥ ११
पर्वतस्य समन्तात्तु रुद्रकोटिः प्रतिष्ठिता । स्नानं यः कुरुते तत्र गन्धमाल्यानुलेपनम् ॥ १२
प्रीतस्तस्य भवेत्सर्वो रुद्रकोटिर्न संशयः । पर्वते पश्चिमस्यान्ते स्वयं देवो महेश्वरः ॥ १३
तत्र स्नात्वा शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः । पितृकार्यं तु कुर्वीत विधिदृष्टेन कर्मणा ॥ १४
तिलोदकेन तत्रैव तर्पयेत्पितृदेवताः । आसप्तमं कुलं तस्य स्वर्गे तिष्ठति पाण्डव ॥ १५
षष्टिवर्षसहस्राणि स्वर्गलोके महीयते । अप्सरोगणसंकीर्णो दिव्यस्त्रीपरिवारितः ॥ १६
दिव्यगन्धानुलिप्तश्च दिव्यालङ्कारभूषितः । ततः स्वर्गात्परिभ्रष्टो जायते विपुले कुले ।
धनवान्दानशीलश्च धार्मिकश्चैव जायते ॥ १७
पुनः स्मरति तत्तीर्थं गमनं तत्र कुर्वते । तारयित्वा कुलान्सप्त रुद्रलोकं स गच्छति ॥ १८
योजनानां शतं साग्रं श्रूयते सरितोत्तमा । विस्तारेण तु राजेन्द्र योजनद्वयमन्तरम् ॥ १९
षष्टिस्तीर्थसहस्राणि षष्टिः कोट्यस्तथैव च । पर्वतस्य समन्तात्तु तिष्ठन्त्यमरकण्टके ॥ २०
ब्रह्मचारी शुचिर्भूत्वा जितक्रोधो जितेन्द्रियः । सर्वहिंसानिवृत्तश्च सर्वभूतहिते रतः ॥ २१
एवं सर्वसमाचारः क्षेत्रपालान्परिव्रजेत् । तस्य पुण्यफलं राजञ्शृणुष्वावहितो हि मे ॥ २२

१ ख. ञ. 'द्धकामः सफलं श्रि'। २ ख. ञ. कुलशतं र' ।

शतं वर्षसहस्राणां स्वर्गे मोदेत पाण्डव । अप्सरोगणसंकीर्णे दिव्यस्त्रीपरिवारिते ॥ २३
दिव्यगन्धानुलिप्तश्च दिव्यालंकारभूषितः । क्रीडते देवलोके तु दैवतैः सह मोदते ॥ २४
ततः स्वर्गात्परिभ्रष्टो राजा भवति वीर्यवान् । गृहं च लभतेऽसौ वै नानारत्नविभूषितम् ॥ २५
स्तम्भैर्मणिमयैर्दिव्यैर्वज्रवैडूर्यभूषितैः । आलेख्यसहितं दिव्यं दासीदाससमन्वितम् ॥ २६
मत्तमातङ्गशब्दैश्च हयानां हेषितेन च । क्षुभ्यते तस्य तद्द्वारमिन्द्रस्य भवनं यथा ॥ २७
राजराजेश्वरः श्रीमान्सर्वस्त्रीजनवल्लभः ॥ तस्मिन्गृह उषित्वा तु क्रीडाभोगसमन्वितः ॥
जीवेद्वर्षशतं साग्रं सर्वरोगविवर्जितः ॥ २८
एवं भोगो भवे[1]त्तस्य यो मृतोऽमरकण्टके । अग्निप्रवेशे[2]ऽथ जले तथा चैव अनाशने ॥ २९
अनिवर्तिका गतिस्तस्य पवनस्याम्बरे यथा । पतनं पतते यस्तु मान (वो) मानवाधिप ॥ ३०
कन्यास्त्रीणि सहस्राणि एकैकस्यापि चापरे । तिष्ठन्ति भवने तस्य प्रेषणं प्रार्थयन्ति च ॥ ३१
दिव्यभोगसमुत्पन्नः क्रीडते कालमक्षयम् । पृथिव्यामासमुद्रायामीदृशो नैव जायते[3] ॥ ३२
ईदृशोऽयं नरश्रेष्ठ पर्वते सुरकण्टके । कोटितीर्थं तु विज्ञेयं पर्वतस्य तु पश्चिमे ॥ ३३
रुद्रो जालेश्वरो नाम त्रिषु लोकेषु विश्रुतः । तस्य पिण्डप्रदानेन संध्योपासनकर्मणा ॥ ३४
पितरो दश वर्षाणि तर्पितास्तु भवन्ति ते । दक्षिणे नर्मदायास्तु कपिलाख्या महानदी ॥ ३५
सरलार्जुनसंछन्ना नातिदूरे व्यवस्थिता । अस्ति पुण्या महाभागा त्रिषु लोकेषु विश्रुता ॥ ३६
तत्र कोटिशतं साग्रं तीर्थानां तु युधिष्ठिर । पुराणे श्रूयते राजन्सर्वं कोटिगुणं भवेत् ॥ ३७
तस्यास्तीरे तु ये वृक्षाः पतिताः कालपर्ययात् । नर्मदातोयसंयुक्तास्तेऽपि यान्ति परां गतिम् ॥ ३८
द्वितीया तु महाभागा विशल्यकरणा शुभा । तत्र तीरे नरः स्नात्वा विशल्यो भवति क्षणात् ॥ ३९
तत्र देवगणाः सर्वे सकिंनरमहोरगाः । यक्षराक्षसगन्धर्वा ऋषयश्च तपोधनाः ॥ ४०
सर्वे समागतास्तत्र पर्वतेऽमरकण्टके । तैश्च सर्वैः समागम्य मुनिभिश्च तपोधनैः ॥ ४१
नर्मदासंश्रिता पुण्या विशल्या नाम नामतः । उत्पादिता महाभागा सर्वपापप्रणाशिनी ॥ ४२
तत्र स्नात्वा नरो राजन्ब्रह्मचारी जितेन्द्रियः । उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥ ४३
कपिला च विशल्या च श्रूयते राजसत्तम । ईश्वरेण पुरा प्रोक्ते लोकानां हितकाम्यया ॥ ४४
तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् । अनशनं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ ४५
सर्वपापविशुद्धात्मा इन्द्रलोकं स गच्छति । नर्मदायां तु राजेन्द्र पुराणे यच्छ्रुतं मया ॥ ४६
तत्र तत्र नरः स्नात्वा अश्वमेधफलं लभेत् । ये वसन्त्युत्तरे कूले इन्द्रलोके वसन्ति ते ॥ ४७
सरस्वत्यां च गङ्गायां नर्मदायां युधिष्ठिर । समं स्नानं च दानं च यथा मे शंकरोऽब्रवीत् ॥ ४८
परित्यजति यः प्राणान्पर्वतेऽमरकण्टके । वर्षकोटिशतं साग्रमिन्द्रलोके महीयते ॥ ४९
नर्मदाया जलं पुण्यं फेनोर्मिसमलंकृतम् । पवित्रं शिरसा वन्द्यं सर्वपापैः प्रमुच्यते ॥ ५०
नर्मदा सर्वपुण्या च ब्रह्महत्यापहारिणी । अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ॥ ५१
एवं पुण्या च रम्या च नर्मदा पाण्डुनन्दन । त्रयाणामपि लोकानां पुनात्येषा महानदी ॥ ५२
वटेश्वरे महापुण्ये गङ्गाद्वारे तपोवने । एतेषु सर्वस्थानेषु ये[5]ऽर्दिताः संशितव्रताः ॥ ५३

---

१ क. °वेत्तेषां ये मृताऽम° । २ क. °वेशोऽथ । ३ ख. ञ. °ते °उद्देशो° । ४ ख. ञ. पुण्या त्वेषा । ट. पुण्यतोया °म° । ५ ट. ये द्विजाः सं° । ६ ख. ञ. ताः । ततो दशगुणं पुण्यं नर्मदायास्तु सं° ।

श्रूयते दशगुणं पुण्यं नर्मदोद्वाससंगमे ॥ ५४

इति श्रीमहापुराणे पाद्म आदिखण्डे त्रयोदशोऽध्यायः ॥ १३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६६

अथ चतुर्दशोऽध्यायः ।

नारद उवाच—

नर्मदा तु नदी श्रेष्ठा पुण्या पुण्यतमा त्रिषु । मुनिभिस्तु महाभागैर्विभक्ता धर्मकाङ्क्षिभिः ॥ १
यज्ञोपवीतमात्राणि प्रविभक्तानि पाण्डव । तेषु स्नात्वा तु राजेन्द्र सर्वपापैः प्रमुच्यते ॥ २
जलेश्वरं परं तीर्थं त्रिषु लोकेषु विश्रुतम् । तस्योत्पत्तिं कथयतः शृणु पाण्डवनन्दन ॥ ३
पुरा मुनिगणाः सर्वे सेन्द्राश्चैव मरुद्गणाः । स्तुवन्ति ते महात्मानं देवदेवं महेश्वरम् ॥ ४
स्तवमानास्तु संप्राप्ता यत्र देवो महेश्वरः । विज्ञापयन्ति देवेशं सेन्द्रास्ते तु मरुद्गणाः ॥
भयोद्विग्नान्विरूपाक्ष परित्रायस्व नः प्रभो ॥ ५

ईश्वर उवाच—

स्वागतं तु मुनिश्रेष्ठाः किमर्थमिह चाऽऽगताः । किं दुःखं को नु संतापः कुतो वा भयमागतम् ६
कथयध्वं महाभागा एतदिच्छामि वेदितुम् । एवमुक्तास्तु रुद्रेणाकथयन्नमितव्रताः ॥ ७

ऋषय ऊचुः—

अपि घोरो महावीर्यो दानवो बलदर्पितः । बाणो नामेति विख्यातो यस्य वै त्रिपुरं पुरम् ८
गगने तु वसं[1]दिव्यं भ्रमते तस्य तेजसा । तस्माद्भीता विरूपाक्ष त्वामेव शरणं गताः ॥ ९
त्रायस्व महतो दुःखादेव त्वं हि परा गतिः । एवं प्रसादं देवेश सर्वेषां कर्तुमर्हसि ॥ १०
येन देवाः सुप्रसन्नाः सु[2]खमेधन्ति शंकर । परां निर्वृतिमायान्ति तत्प्रभो कर्तुमर्हसि ॥ ११

देव उवाच—

एतत्सर्वं करिष्यामि मा विषादं करिष्यथ । अचिरेणैव कालेन कुर्यां युष्मत्सुखावहम् ॥ १२
आश्वासयित्वा तान्सर्वान्नर्मदातटमास्थितः । चिन्तयामास सर्वेशस्तद्वधं प्रति पाण्डव ॥ १३
कथं केन प्रकारेण हन्तव्यस्त्रिपुरो मया । एवं संचिन्त्य भगवान्नारदं स्मरते तदा ॥
स्मरणादेव संप्राप्तो नारदः समुपस्थितः ॥ १४

नारद उवाच—

आज्ञापय महादेव किमर्थं संस्मृतो ह्यहम् । किं कार्यं तु मया देव कर्तव्यं कथयस्व मे ॥ १५

ईश्वर उवाच—

गच्छ नारद तत्रैव यत्र तत्त्रिपुरं पुरम् । बाणस्य दानवेन्द्रस्य शीघ्रं गच्छाथ तत्कुरु ॥ १६
भर्तारो देवताभाश्च स्त्रियश्चाप्सरसोपमाः । तासां वै तेजसा विप्र भ्रमते त्रिपुरं दिवि ॥ १७
तत्र गत्वा तु विप्रेन्द्र म[3]त्रमन्यं प्रचोदय । देवस्य वचनं श्रुत्वा मुनिस्त्वरितविक्रमः ॥
स्त्रीणां हृदयनाशाय प्रविष्टस्तं पुरं प्रति ॥ १८
शोभते तत्पुरं दिव्यं नानारत्नोपशोभितम् । शतयोजनविस्तीर्णं ततो द्विगुणमायतम् ॥ १९
ततः पश्यति तत्रैव बाणं तु बलदर्पितम्[4] । मालाकुण्डलकेयूरैर्मुकुटेन विराजितम् ॥ २०

१ क. 'सन्दिव्यं । २ ख. अ. सुखं नन्दान्ति । ३ ट. सांप्रतं । ४ ट. 'म् । रत्नकु' ।

हाररत्नैश्च संछन्नं चन्द्रकान्तिविभूषितम् । रसना तस्य रत्नाढ्या कराः कनकमण्डिताः ॥
उत्थितो नारदं दृष्ट्वा दानवेन्द्रो महाबलः ॥ २१

वाण उवाच—

स देवर्षिः स्वयं प्राप्तो मद्गृहं प्रति संप्रति । अर्घ्यं पाद्यं यथान्यायं क्रियतां द्विजसत्तम ॥ २२
चिरात्समागतो विप्र स्थीयतामिदमासनम् । एवं संभावयित्वा तु नारदं समुपस्थितम् ॥
तस्य भार्या महादेवी अनौपम्या तु नामतः ॥ २३

अनौपम्योवाच—

भगवन्मानुषे लोके देवास्तुष्यन्ति केन वै । व्रतेन नियमेनापि दानेन तपसाऽथवा ॥ २४

नारद उवाच—

तिलधेनुं च यो दद्याद्ब्राह्मणे वेदपारगे । ससागरा नवद्वीपा दत्ता भवति मेदिनी ॥ २५
सूर्यकोटिप्रतीकाशैर्विमानैः सार्वकामिकैः । मोदते चाक्षयं कालं सुचिरं कृतशासनः ॥ २६
आम्रातककपित्थानि कदलीवनमेव च । कदम्बचम्पकाशोका अनेकविविधद्रुमाः ॥ २७
अष्टमी च चतुर्थी च द्वादशी च तथा उभे । संक्रान्तिर्विषुवं चैव दिनच्छिद्रमुखं तथा ॥ २८
पुण्यान्येतानि सर्वाणि उपवासन्ति याः स्त्रियः । तासां तु धर्मयुक्तानां स्वर्गे वासो न संशयः२९
कलिकालात्तु निर्मुक्ताः सर्वपापविवर्जिताः । उपवासरता नार्यो नोपसर्पन्ति तापसाः ॥ ३०
एवं श्रुत्वा तु सुश्रोणि यथेष्टं कर्तुमर्हसि । नारदस्य वचः श्रुत्वा राज्ञी वचनमब्रवीत् ॥ ३१
प्रसादं कुरु विप्रेन्द्र दानं गृह्ण यथेप्सितम् । सुवर्णमणिरत्नानि वस्त्राण्याभरणानि च ॥ ३२
तत्ते दास्याम्यहं विप्र यच्चान्यदपि दुर्लभम् । प्रतिगृण्ह द्विजश्रेष्ठ प्रीयेतां हरिशंकरौ ॥ ३३

नारद उवाच—

अन्यस्मै दीयतां भद्रे क्षीणवृत्तिश्च यो द्विजः । वयं तु शीलसंपन्ना भक्तिस्तु क्रियते मम ॥ ३४
एवं तासां मनो हृत्वा सर्वासामुपदिश्य वा । जगाम भरतश्रेष्ठ स्वकीयं स्थानकं पुनः ॥ ३५
अत्राऽऽकृष्टान्तरास्तास्तु अत्र त्वागतमानसाः । पुरि च्छिद्रं समुत्पन्नं बाणस्य तु महात्मनः ॥ ३६

इति श्रीमहापुराणे पाद्म आदिखण्डे चतुर्दशोऽध्यायः ॥ १४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५०२


VIDHUSHEKHARA BHATTA...

अथ पञ्चदशोऽध्यायः ।

नारद उवाच—

यन्मां पृच्छसि कौन्तेय तन्निबोधं च तच्छृणु ॥ १
एतस्मिन्नन्तरे रुद्रो नर्मदातटमास्थितः । नाम्ना महेश्वरं स्थानं त्रिषु लोकेषु विश्रुतम् ॥ २
तस्मिन्स्थाने महादेवश्चिन्तयंस्त्रिपुरं वधम् । गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा तु वासुकिम् ॥ ३
स्थानं कृत्वा तु वैशाखं विष्णुं कृत्वा शरोत्तमम् । अग्रे चाग्निं प्रतिष्ठाप्य मुखे वायुः समर्पितः॥ ४
हयाश्च चतुरो वेदाः सर्वदेवमयं रथम् । चक्रगौ चाश्विनौ देवौ अक्षे चक्रधरः स्वयम् ॥ ५
स्वयमिन्द्रश्च चापान्ते बाणे वैश्रवणः स्थितः । यमस्तु दक्षिणे हस्ते वामे कालस्तु दारुणः ॥ ६

१ ख. म. कङ्कणम्°। २ ख. न. °ध कृतक्षणः । एं° ।

चक्रयोस्त्वारके न्यस्ता गन्धर्वा लोकविश्रुताः । प्रजापती रथश्रेष्ठे ब्रह्मा चैव तु सारथिः ॥ ७
एवं कृत्वा तु देवेशः सर्वदेवमयं रथम् । सोऽतिष्ठत्स्थाणुभूतो हि सहस्रं परिवत्सरान् ॥ ८
यदा त्रीणि समेतानि अन्तरिक्षचराणि वै । त्रिपुराणि त्रिशल्येन तदा तानि बिभेद सः ॥ ९
शरः प्रचोदितस्तत्र रुद्रेण त्रिपुरं प्रति । भ्रष्टतेजाः स्त्रियो जाता बलं तेषां व्यशीर्यत ॥ १०
उत्पाताश्च पुरे तस्मिन्प्रादुर्भूताः सहस्रशः । त्रिपुरस्य विनाशाय कालरूपोऽभवत्तदा ॥ ११
अट्टहासं प्रमुञ्चन्ति भीताः काष्ठमयास्तथा । निमेषोन्मेषणं चैव कुर्वन्ति चित्रकर्मणा ॥ १२
स्वप्ने पश्यन्ति चाऽऽत्मानं रक्ताम्बरविभूषितम् । स्वप्ने पश्यन्ति ते चैवं विपरीतानि यानि तु ॥ १३
एतान्पश्यन्ति उत्पातांस्तत्र स्थाने तु ये जनाः । तेषां बलं च बुद्धिं च हरः क्रोधादनाशयत् ॥ १४
संवर्तको नाम वायुर्युगान्तप्रतिमो महान् । समीरितोऽनलश्रेष्ठ उत्तमाङ्गेषु बाधति ॥ १५
ज्वलन्ति पादपास्तत्र पतन्ति शिखराणि च । संवर्तव्याकुलीभूतं हाहाकारमचेतनम् ॥ १६
भग्नोद्यानानि सर्वाणि क्षिप्रं तु प्रज्वलन्ति च । तेनैव दीपितं सर्वं ज्वलते विशिखैः शिखैः ॥ १७
द्रुमा आरामगण्डानि गृहाणि विविधानि च । दशदिक्षु प्रवृत्तोऽयं समिद्धो हव्यवाहनः ॥ १८
मनःशिलाः प्रभायन्ते दिशो दश विभागतः । शिखासहस्रैरत्युग्रैः प्रज्वलन्ति हुताशनैः ॥ १९
सर्वं किंशुकसंप्रख्यं ज्वलितं दृश्यते पुरम् । गृहाद्गृहान्तरं नैव गन्तुं धूमैर्न शक्यते ॥ २०
हरकोपानलादग्धं क्रन्दमानं सुदुःखितम् । प्रदीप्तं सर्वतो दिक्षु दह्यते त्रिपुरं पुरम् ॥ २१
प्रासादशिखराग्राणि विशीर्यन्ति सहस्रशः । नानामाल्यविचित्राणि विमानान्यप्यनेकधा ॥ २२
गृहाणि चैव रम्याणि दह्यन्ते दीप्तवह्निना । बाह्यतो द्रुमखण्डेषु जनस्थाने तथैव च ॥ २३
देवागारेषु सर्वेषु प्रज्वलन्ते ज्वलन्त्यपि । रुदन्ति चानलस्पृष्टाः क्रन्दन्ति विविधैः सुरैः ॥ २४
गिरिकूटनिभास्तत्र दृश्यन्तेऽङ्गारराशयः । स्तुवन्ति देवदेवेशं परित्रायस्व मां प्रभो ॥ २५
अन्योन्यं च परिष्वज्य हुताशनप्रपीडिताः । दह्यन्ते दानवास्तत्र शतशोऽथ सहस्रशः ॥ २६
हंसकारण्डवाकीर्णा नलिनी सहपङ्कजा । दह्यन्तेऽनलदग्धानि पुरोद्यानानि दीर्घिकाः ॥ २७
अम्लानैः पङ्कजैश्छन्ना विस्तीर्णा योजनैः शतैः । गिरिकूटनिभास्तत्र प्रासादा रत्नभूषिताः २८
पतन्त्यनलनिर्दग्धा निस्तोया जलदा इव । स ह स्त्रीबालवृद्धेषु गोषु पक्षिषु वाजिषु ॥ २९
निर्दयो दहते वह्निर्हरकोपेन प्रेरितः । सपत्नाश्चैव सुप्ताश्च संसुप्ता बहवो जनाः ॥ ३०
पुत्रमालिङ्ग्य ते गाढं दह्यन्ते त्रिपुरारिणा । अथ तस्मिन्पुरे दीप्ते स्त्रियश्चाप्सरसोपमाः ॥ ३१
अग्निज्वालाहतास्तत्र पतन्ति धरणीतले । काचिच्छ्यामा विशालाक्षी मुक्तावलिविभूषिता ॥ ३२
धूमेनाऽऽकुलिता सा तु [*प्रतिबुद्धा शिखार्दिता । सुतं संचिन्त्यमाना सा पतिता धरणीतले ॥ ३३
काचित्सुवर्णवर्णाभा नीलरत्नैर्विभूषिता । धूमेनाऽऽकुलिता सा] तु पतिता धरणीतले ॥ ३४
अन्या गृहीतहस्ता तु सखी दहति बालके । अनेकदिव्यरूपाण्यादृष्ट्वा मदविमोहिता ॥ ३५
शिरसा प्राञ्जलिं कृत्वा विज्ञापयति पावकम् । यदि त्वमिच्छसे वैरं पुरुषेष्वपकारिषु ॥ ३६
स्त्रियः किमपराध्यन्ते गृहपञ्जरकोकिलाः । पाप निर्दय निर्लज्ज कस्ते कोपः स्त्रियोपरि ॥ ३७
न दाक्षिण्यं न ते लज्जा न सत्यं शौचवर्तिता । अनेकरूपवर्णाढ्या उपालब्धो वदस्व ह ॥ ३८

* एतच्चिह्नान्तरगतः पाठः ख ञ पुस्तकयोरेव दृश्यते ।

१ ख. ञ. समारुतो । २ ख. झ. ञ. °तारलवि° । ३ ख. ञ. सीदन्ति । ४ क. उपलभ्या ।

THE RAMAKRISHNA MISSION

किं त्वया न श्रुतं लोके अवध्याः सन्ति योषितः । किं तु तुभ्यं गुणा ह्येते दहन स्व्यर्दनं प्रति ॥ ३९
न कारुण्यं दया वाऽपि दाक्षिण्यं वा स्त्रियोपरि । दयां कुर्वन्ति म्लेच्छाश्च देहन प्रेक्ष्य योषितः ॥ ४०
म्लेच्छानामपि कष्टोऽसि दुर्निवार्यो ह्यचेतनः । एते चैव गुणास्तुभ्यं दहनोत्सादनं प्रति ॥ ४१
आसामपि दुराचारः स्त्रीणां किंच निपातने । दुष्ट निर्घृण निर्लज्ज हुताश मन्दभाग्यक ॥ ४२
निराश त्वं दुराचार बालान्दहसि निर्दय । एवं विलपमानां तां जल्पमानां बहुस्वरम् ॥ ४३
अन्याः(न्ये) क्रोशन्ति संक्रुद्धा बालशोकेन मोहिताः । दहते निर्दयो वह्निः संक्रुद्धः सर्वशत्रुवत् ॥ ४४
पुष्करिण्या जले ज्वाला कूपेष्वपि तथैव च । अस्मान्संदह्य म्लेच्छ त्वं कां गतिं प्रापयिष्यसि ॥
एवं प्रलपतां तासां (तेषां ) वह्निर्वचनमब्रवीत् । ४५

वैश्वानर उवाच—

स्ववशो नैव युष्माकं विनाशं तु करोम्यहम् । अहमादेशकर्ता वै नाहं कर्ताऽस्म्यनुग्रहम् ॥ ४६
अत्र क्रोधसमाविष्टो विचरामि यथेच्छया । ततो बाणो महातेजास्त्रिपुरं वीक्ष्य दीपितम् ॥ ४७
आसनस्थोऽब्रवीदेवमहं देवैर्विनाशितः । अल्पसारैर्दुराचारैरीश्वरस्य निवेदितः ॥ ४८
अपरीक्ष्य ह्यहं दग्धः शंकरेण महात्मना । नान्यः शक्तस्तु मां हन्तुं वर्जयित्वा महेश्वरम् ॥ ४९
उत्थितः शिरसा कृत्वा लिङ्गं त्रिभुवनेश्वरम् । निर्गतः स पुरद्वारात्परित्यज्य सुहृत्स्वयम् ॥ ५०
रत्नानि तु विचित्राणि स्त्रियो नानाविधास्तथा । गृहीत्वा शिरसा लिङ्गं न्यस्य नगरमण्डले ५१
स्तुवते देवदेवेशं त्रैलोक्याधिपतिं शिवम् । हर त्वयाऽहं निर्दग्धो यदि वध्योऽस्मि शंकर ॥ ५२
त्वत्प्रसादान्महादेव मा मे लिङ्गं विनश्यतु । अर्चितं हि महादेव भक्त्या परमया सदा ॥ ५३
त्वया यद्यपि वध्योऽहं मा मे लिङ्गं विनश्यतु । प्राप्यमेतन्महादेव त्वत्पादग्रहणं मम ॥ ५४
जन्म जन्म महादेव त्वत्पादनिरतो ह्यहम् । तोटकच्छन्दसा देवं स्तुत्वा तु परमेश्वरम् ॥ ५५

शिव शंकर सर्वकराय नमो भव भीम महेश्वर भीम नमः ॥
कुसुमायुध देहविनाशकर त्रिपुरान्तकरान्धकचूर्णकर ॥ ५६
प्रमदाप्रिय कामविभक्त नमो हि नमः सुरसिद्धगणैर्नमितः ॥
हयवानरसिंहगजेन्द्रमुखैरतिह्रस्वसुदीर्घमुखैश्च गणैः ॥ ५७
उपलब्धुमशक्यतरैरसुरैर्व्यथितो न शरीरशतैर्बहुभिः ।
प्रणतो भगवन्बहुभक्तिमताऽचलचन्द्रकलाधर देव नमः ॥ ५८
सह पुत्रकलत्रकलापधनैः सततं जय देव अनुस्मरणम् ।
व्यथितोऽस्मि शरीरशतैर्बहुभिर्गमितोऽद्य महानरकस्य गतिः ॥ ५९
न निवर्तति यन्मम पापगतिः शुचिकर्मविशुद्धमपि त्यजति ।
अनुकम्पति दिग्भ्रमति भ्रमति भ्रम एष कुबुद्धि(द्धिं) निवारयति ॥ ६०

यः पठेत्तोटकं दिव्यं प्रयतः शुचिमानसः । बाणस्यैव यथा रुद्रस्तस्यैव वरदो भवेत् ॥ ६१
इमं स्तवं महादिव्यं श्रुत्वा देवो महेश्वरः । प्रसन्नस्तु तदा तस्य स्वयं देवो महेश्वरः ॥ ६२

ईश्वर उवाच—

न भेतव्यं त्वया वत्स सौवर्णे तिष्ठ दानव । पुत्रपौत्रैः सपत्नीकैर्भार्याभिः स्वजनैः सह ॥ ६३

---

१ क. 'च्छाऽपि द' । २ क. दहनं । ३ क. प्रेष्य । ४ क. योषिताम् । ५ क. स्तुवतो । ६ ट. 'मो रिपुभी' । ७ क. 'लास्तवदे' । ८ ट. 'त्रगवादिध' । ९ ख. म. जहि देहि अ' । १० ख. ञ. 'मितोऽद्य महानरकस्य गतिम् । न ।

अद्यप्रभृति बाण त्वमवध्यस्त्रिदशैरपि । भूयस्तस्य वरो दत्तो देवदेवेन पाण्डव ॥ ६४
अक्षयश्चाव्ययो लोके विचचार ह निर्भयः । ततो निवारयामास रुद्रः सप्तशिखं तथा ॥ ६५
तृतीयं रक्षितं तस्य शंकरेण महात्मना । भ्रमते गगने नित्यं रुद्रतेजःप्रभावतः ॥ ६६
एवं तु त्रिपुरं दग्धं शंकरेण महात्मना । ज्वालामालाप्रदीप्तं तु पतितं धरणीतले ॥ ६७
एकं निपातितं तस्य श्रीशैले त्रिपुरान्तके । द्वितीयं पातितं तत्र पर्वतेऽमरकण्ठके ॥ ६८
दग्धे तु त्रिपुरे राजन्रुद्रकोटिः प्रतिष्ठिता । ज्वलन्तं पातितं तत्र तेन ज्वालेश्वरः स्मृतः ॥ ६९
ऊर्ध्वं तु प्रस्थिता तस्य दिव्या ज्वाला दिवं गता । हाहाकारस्तदा जातो देवासुरसकिंनरान् ॥ ७०
तं शरं स्तम्भयेद्रुद्रो माहेश्वरे पुरोत्तमे । एवं व्रजेत यस्तस्मिन्पर्वतेऽमरकण्टके ॥ ७१
चतुर्दश भुवनानि स भुक्त्वा पाण्डुनन्दन । वर्षकोटिसहस्रं तु त्रिंशत्कोट्यस्तथाऽपराः ॥ ७२
ततो महीतलं प्राप्य राजा भवति धार्मिकः । पृथिवीमेकच्छत्रेण भुङ्क्ते नास्त्यत्र संशयः ॥ ७३
एष पुण्यो महाराज सर्वतोऽमरकण्टकः । चन्द्रसूर्योपरागेषु गच्छेद्योऽमरकण्टकम् ॥ ७४
अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः । स्वर्गलोकमवाप्नोति दृष्ट्वा तत्र महेश्वरम् ॥ ७५
संनिहत्याऽऽगमिष्यन्ति राहुग्रस्ते दिवाकरे । तदेव निखिलं पुण्यं पर्वतेऽमरकण्टके ॥ ७६
पुण्डरीकस्य यज्ञस्य फलं प्राप्नोति मानवः । तत्र ज्वालेश्वरो नाम पर्वतेऽमरकण्टके ॥
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ ७७
ज्वालेश्वरे महाराज यस्तु प्राणान्परित्यजेत् । चन्द्रसूर्योपरागे तु भक्त्याऽपि शृणु तत्फलम् ॥ ७८
अमरा नाम देवास्ते पर्वतेऽमरकण्टके । रुद्रलोकमवाप्नोति यावदाभूतसंप्लवम् ॥ ७९
अमरेश्वरस्य देवस्य पर्वतस्य तटे जले । कोटिश ऋषिमुख्यास्ते तपस्तप्यन्ति सुव्रताः ॥
समन्ताद्योजनं राजन्क्षेत्रं चामरकण्टकम् ॥ ८०
अकामो वा सकामो वा नर्मदायाः शुभे जले । स्नात्वा मुच्येत पापेभ्यो रुद्रलोकं स गच्छति ॥ ८१

इति श्रीमहापुराणे पाद्म आदिखण्डे पञ्चदशोऽध्यायः ॥ १५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५८३

---

अथ षोडशोऽध्यायः ।

---

सूत उवाच—

पृच्छन्ति ते महात्मानो नारदं हि महाजनाः । युधिष्ठिरपराः सर्व ऋषयश्च तपोधनाः ॥ १
आख्याहि भगवंस्तथ्यं कावेरीसंगमं महत् । लोकानां च हितार्थाय अस्माकं च विवृद्धये ॥ २
सदा पापरता ये तु नरा दुष्कृतिकारिणः । मुच्यन्ते सर्वपापेभ्यो गच्छन्ति परमं पदम् ॥
एतदिच्छाम विज्ञातुं भगवन्वक्तुमर्हसि ॥ ३

नारद उवाच—

शृणुध्वं सहिताः सर्वे युधिष्ठिरपुरोगमाः । अत्र कृत्वा महायज्ञं कुबेरः सत्यविक्रमः ॥ ४
इदं तीर्थमनुप्राप्य साम्राज्यादधिकोऽभवत् । सिद्धिं प्राप्तो महाराज तन्मे निगदतः शृणु ॥ ५
कावेरी नर्मदा यत्र संगता लोकविश्रुता । तत्र स्नात्वा शुचिर्भूत्वा कुबेरः सत्यविक्रमः ॥ ६

---

१ क. 'थिव्यामे' । २ क. भुक्तं । ३ ट. 'ज पर्व' । ४ क. 'गमिष्यामि ।

तपस्तप्यति यक्षेन्द्रो दिव्यं वर्षशतं महत् । तस्य तुष्टो महादेवः प्रदद्याद्वरमुत्तमम् ॥ ७
भो भो यक्ष महासत्त्व वरं ब्रूहि यथेप्सितम् । ब्रूहि कार्यं यथेष्टं तु यद्वा मनसि वर्तते ॥ ८

कुबेर उवाच—

यदि तुष्टोऽसि देवेश यदि देयो वरो मम । आदिकृच्चैव सर्वेषां यक्षाणामधिपो भवेत् ॥ ९
कुबेरस्य वचः श्रुत्वा तुष्टो देवो महेश्वरः । एवमस्तु ततश्चोक्त्वा तत्रैवान्तरधीयत ॥ १०
सोऽपि लब्धवरो यक्षः शीघ्रं यक्षकुलं गतः । पूजितः सर्वयक्षेन्द्रैरभिषिक्तस्तु पार्थिवः ॥
कावेरीसंगमं तत्र सर्वपापप्रणाशनम् ॥ ११
ये नरा नाभिजानन्ति वञ्चितास्ते न संशयः । तस्मात्सर्वप्रयत्नेन तत्र स्नायीत मानवः ॥ १२
कावेरी च महापुण्या नर्मदा च महानदी । तत्र स्नात्वा तु राजेन्द्र अर्चयेद्वृषभध्वजम् ॥ १३
अश्वमेधफलं प्राप्य रुद्रलोके महीयते । अग्निप्रवेशं यः कुर्याद्यश्च कुर्यादनाशनम् ॥ १४
अनिवर्तिका गतिस्तस्य यथा मे शंकरोऽब्रवीत् । सेव्यमानो वरस्त्रीभिर्मोदते दिवि रुद्रवत् ॥१५
षष्टिवर्षसहस्राणि षष्टिकोट्यस्तथाऽपरे । मोदते रुद्रलोकस्थो यत्र यत्रैव गच्छति ॥ १६
पुण्यक्षयात्परिभ्रष्टो राजा भवति धार्मिकः । भोगवान्धर्मशीलश्च महांश्चैव कुलोद्भवः ॥ १७
तत्र पीत्वा जलं सम्यक्चान्द्रायणफलं लभेत् । स्वर्गं गच्छन्ति ते मर्त्या ये पिबन्ति जलं शुभम् १८
गङ्गायमुनयोर्मध्ये यत्फलं याति मानवः । कावेरीसङ्गमे स्नात्वा तत्फलं तस्य जायते ॥ १९
एवं तु तस्य राजेन्द्र कावेरीसंगमं महत् । पुण्यं महत्फलं तत्र सर्वपापप्रणाशनम् ॥ २०

इति श्रीमहापुराणे पाद्म आदिखण्डे षोडशोऽध्यायः ॥ १६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६०३

---

अथ सप्तदशोऽध्यायः ।

---

नारद उवाच—

उत्तरे नर्मदाकूले तीर्थं योजनविस्तृतम् । पत्रेश्वरेति[1] विख्यातं सर्वपापहरं परम् ॥ १
तत्र स्नात्वा नरो राजन्दैवतैः सह मोदते । पञ्च वर्षसहस्राणि क्रीडते कामरूपधृक् ॥ २
गर्जनं तु ततो गच्छेद्यत्र मेघ उपस्थितः । इन्द्रजिन्नाम संप्राप्तं तस्य तीर्थप्रभावतः ॥ ३
मेघरावं ततो गच्छेद्यत्र मेघाभिगर्जितम् । मेघनादो गणस्तत्र वरसंपन्नतां गतः ॥ ४
ततो गच्छेत राजेन्द्र ब्रह्मावर्तमिति स्मृतम् । तत्र संनिहितो ब्रह्मा नित्यमेव युधिष्ठिर ॥
तत्र स्नानात्तु राजेन्द्र ब्रह्मलोके महीयते ॥ ५
ततोऽङ्गारेश्वरे तीर्थे नियतो नियताशनः । सर्वपापविशुद्धात्मा रुद्रलोकं स गच्छति ॥ ६
ततो गच्छेत राजेन्द्र कपिलातीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्गोप्रदानफलं लभेत् ॥ ७
काञ्चीतीर्थं ततो गच्छेद्देवर्षिगणसेवितम् । तत्र स्नात्वा नरो राजन्गोलोकं समवाप्नुयात् ॥ ८
ततो गच्छेत्तु राजेन्द्र कुण्डलेश्वरमुत्तमम् । तत्र संनिहितो रुद्रस्तिष्ठते उमया सह ॥
तत्र स्नात्वा तु राजेन्द्र अवध्यस्त्रिदशैरपि ॥ ९
पिप्पलेश्वरं ततो गच्छेत्सर्वपापप्रणाशनम् । तत्र गत्वा तु राजेन्द्र रुद्रलोके महीयते ॥ १०

---

१ ट. सप्तेश्वरेति ।

ततो गच्छेत राजेन्द्र विमलं विमलेश्वरम् । तत्र देवशिखा रम्या ईश्वरेण निपातिता ॥
तत्र प्राणान्परित्यज्य रुद्रलोकमवाप्नुयात् ॥ ११
ततः पुष्करिणीं गच्छेत्तत्र स्नानं समाचरेत् । स्नानमात्रे नरस्तत्र इन्द्रस्यार्धासनं लभेत् ॥ १२
नर्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता । तारयेत्सर्वभूतानि स्थावराणि चराणि च ॥ १३
सर्वदेवातिदेवेन ईश्वरेण महात्मना । कथिता ऋषिसंघेभ्यो अस्माकं च विशेषतः ॥ १४
मुनिभिः संस्तुता ह्येषा नर्मदा प्रवरा नदी । रुद्रदेहाद्विनिष्क्रान्ता लोकानां हितकाम्यया ॥ १५
सर्वपापहरा नित्यं सर्वलोकनमस्कृता । संस्तुता देवगन्धर्वैरप्सरोभिस्तथैव च ॥ १६
नमः पुण्यजले आद्ये नमः सागरगामिनि । नमोऽस्तु ते ऋषिगणैः शंकरदेहनिःसृते ॥ १७
नमोऽस्तु ते धर्मभृते वरानने नमोऽस्तु ते देवगणैकवन्दिते ।
नमोऽस्तु ते सर्वपवित्रपावने नमोऽस्तु ते सर्वजगत्सुपूजिते ॥ १८
यश्चेदं पठते स्तोत्रं नित्यं शुद्धेन मानवः । ब्राह्मणो वेदमाप्नोति क्षत्रियो विजयी भवेत् ॥ १९
वैश्यस्तु लभते लाभं शूद्रश्चैव शुभां गतिम् । अन्नार्थी लभते ह्यन्नं स्मरणादेव नित्यशः ॥ २०
नर्मदां सेवते नित्यं स्वयं देवो महेश्वरः । तेन पुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी ॥ २१

इति श्रीमहापुराणे पाद्म आदिखण्डे सप्तदशोऽध्यायः ॥ १७ ॥

आदितः श्लोकानां समष्ट्यङ्काः--६२४

---

अथाष्टादशोऽध्यायः ।

---

नारद उवाच—

तदाप्रभृति ब्रह्माद्या ऋषयश्च तपोधनाः । सेवन्ते नर्मदां राजन्कामक्रोधविवर्जिताः ॥* १
तस्मिन्निपतितं दृष्ट्वा शूलं देवस्य भूतले । तस्य पुण्यं समाख्यातं शंकरेण महात्मना ॥† २
शूलभेदेति विख्यातं तीर्थं पुण्यतमं महत् । तत्र स्नात्वाऽर्चयेद्देवं गोसहस्रफलं लभेत् ॥ ३
त्रिरात्रं कारयेद्यस्तु तस्मिंस्तीर्थे नराधिप । अर्चयित्वा महादेवं पुनर्जन्म न विद्यते ॥ ४
भीमेश्वरं ततो गच्छेन्नर्मदेश्वरमुत्तमम् । आदित्येश्वरं महापुण्यं तथाऽऽज्यमधुना समम् ॥ ५
मल्लिकेश्वरं परित्यज्य पर्याप्तं जन्मतः फलम् । वरुणेश्वरं ततः पश्येन्नीराजेश्वरमुत्तमम् ॥ ६
सर्वतीर्थफलं तस्य पञ्चायतनदर्शनात् । ततो गच्छेत राजेन्द्र युद्धं वै यत्र साधितम् ॥ ७
कोटितीर्थं तु विख्यातमसुरा यत्र योधिताः । यत्र ते निहता राजन्दानवा बलदर्पिताः ॥ ८
तेषां शिरांसि गृह्यन्ते निहतास्ते समागताः । तैस्तु संस्थापितो देवः शूलपाणिर्महेश्वरः ॥ ९
कोटिर्विनिहता तत्र तेन कोटीश्वरः स्मृतः । दर्शनात्तस्य तीर्थस्य सदेहः स्वर्गमावहेत् ॥ १०
तदा इन्द्रेण क्षुद्रत्वाद्वज्रकीलेन यन्त्रितः । तदाप्रभृति लोकानां स्वर्गमत्वं निवारितम् ॥ ११
सघृतं श्रीफलं दत्त्वा गत्वा चान्ते प्रदक्षिणम् । सर्वतः सह देवेन शिरसाऽऽदाय धारयेत् ॥ १२

* एतस्मादग्रे 'युधिष्ठिर उवाच' इति ख. ञ. पुस्तकातिरिक्तेषु सर्वेषु पुस्तकेषु दृश्यते।
† एतस्मादग्रे ख. ञ. पुस्तकातिरिक्तसर्वपुस्तकेषु 'नारद उवाच' इत्यधिकं दृश्यते ।

१ ट. 'च्छेद्रुद्रवेश'।

सर्वकामेन संपूर्णो राजा भवति पाण्डव । मृतो रुद्रत्वमाप्नोति न चेह जायते पुनः ॥ १३
स्वर्गं गत्वा ततो राज्यं कृत्वाऽऽगत्य ततो दिवम् । महादेवं ततोपास्य त्रयोदश्यां हि मानवः ॥ १४
स्नातमात्रो नरस्तत्र सर्वयज्ञफलं लभेत् । ततो गच्छेत राजेन्द्र तीर्थं परमशोभनम् ॥ १५
नराणां पापनाशाय अगस्त्येश्वरमुत्तमम् । तत्र स्नात्वा नरो राजन्मुच्यते ब्रह्महत्यया ॥ १६
कार्तिकस्य तु मासस्य कृष्णपक्षचतुर्दशीम् । घृतेन स्नापयेद्देवं समाधिस्थो जितेन्द्रियः ॥ १७
एकविंशकुलोपेतो न मुच्येदैश्वरात्पदात् । यानं चोपानहौ छत्रं दद्याच्च घृतकाञ्चनम् ॥
भोजनं चैव विप्राणां सर्वं कोटिगुणं भवेत् ॥ १८
ततो गच्छेत राजेन्द्र रविस्तवमनुत्तमम् । तत्र स्नात्वा नरो राजन्सिंहासनगतिर्भवेत् ॥ १९
नर्मदादक्षिणे कूले तीर्थं शक्रस्य विश्रुतम् । उपोष्य रजनीमेकां स्नानं तत्र समाचरेत् ॥ २०
स्नानं कृत्वा यथान्यायमर्चयेत्तु जनार्दनम् । गोसहस्रफलं तस्य विष्णुलोकं स गच्छति ॥ २१
ऋषितीर्थं ततो गच्छेत्सर्वपापहरं नृणाम् । स्नातमात्रो नरस्तत्र शिवलोके महीयते ॥ २२
नारदस्य च तत्रैव तीर्थं परमशोभनम् । स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥ २३
देवतीर्थं ततो गच्छेद्ब्रह्मणा निर्मितं पुरा । तत्र स्नात्वा नरो राजन्ब्रह्मलोके महीयते ॥ २४
अमरकण्टकं ततो गच्छेदमरस्थापितं पुरा । स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥ २५
ततो गच्छेत राजेन्द्र वामनेश्वरमुत्तमम् । तत्र चाऽऽयतनं दृष्ट्वा मुच्यते ब्रह्महत्यया ॥ २६
ऋषितीर्थं ततो गच्छेत्त्वीशानेशं पुमान्ध्रुवम् । वटेश्वरं ततो दृष्ट्वा पर्याप्तं जन्मनः फलम् ॥ २७
भीमेश्वरं ततो गच्छेत्सर्वव्याधिविनाशनम् । स्नातमात्रो नरो राजन्सर्वदुःखात्प्रमुच्यते ॥ २८
ततो गच्छेत राजेन्द्र वारणेश्वरमुत्तमम् । तत्र स्नात्वा नरो राजन्सर्वदुःखात्प्रमुच्यते ॥ २९
सोमतीर्थं ततो गच्छेत्पश्येत चन्द्रमुत्तमम् । तत्र स्नात्वा नरो राजन्भक्त्या परमया युतः ॥ ३०
तत्क्षणाद्दिव्यदेहस्थः शिववन्मोदते चिरम् । षष्टिवर्षसहस्राणि शिवलोके महीयते ॥ ३१
ततो गच्छेत राजेन्द्र पिङ्गलेश्वरमुत्तमम् । अहोरात्रोपवासेन त्रिरात्रफलमाप्नुयात् ॥ ३२
तस्मिंस्तीर्थे तु राजेन्द्र कपिलां यः प्रयच्छति । यावन्ति तस्य रोमाणि तत्प्रसूतकुलस्य च ॥
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ३३
यस्तु प्राणपरित्यागं तत्र कुर्यान्नराधिप । अक्षयं मोदते कालं यावच्चन्द्रदिवाकरौ ॥ ३४
नर्मदातटमाश्रित्य तिष्ठन्ति ये तु मानवाः । ते मृताः स्वर्गमायान्ति तथा सुकृतिनो यथा ॥ ३५
सुरभिकेश्वरं गच्छेन्नारकं कोटिकेश्वरम् । गङ्गावतरणे तत्र दिने पुण्यो न संशयः ॥ ३६
नन्दितीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् । तुष्यते तस्य नन्दीशः सोमलोके महीयते ॥ ३७
ततो द्वीपेश्वरं गच्छेद्व्यासतीर्थं तपोवनम् । निवर्तिता पुरा तत्र व्यासभीता महानदी ॥
हुङ्कारिता तु व्यासेन दक्षिणेन ततो गता ॥ ३८
प्रदक्षिणं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप । व्यासस्तत्र भवेत्प्रीतो वाञ्छितं लभते फलम् ॥ ३९
सूत्रेण वेष्टयेद्यस्तु दीप्तं देवं सवेदिकम् । क्रीडते अक्षयं कालं यथा रुद्रस्तथैव सः ॥ ४०
ततो गच्छेत राजेन्द्र एरण्डीतीर्थमुत्तमम् । संगमे तु नरः स्नात्वा मुच्यते सर्वपातकैः ॥ ४१
एरण्डी त्रिषु लोकेषु विख्याता पापनाशिनी । अथवाऽऽश्वयुजे मासि शुक्लपक्षस्य चाष्टमी ॥ ४२
शुचिर्भूत्वा नरः स्नात्वा सोपवासपरायणः । ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिता ॥ ४३

एरण्डीसंगमे स्नात्वा भक्तिभावानुरञ्जितः । मृत्तिकां शिरसि स्थाप्य अवगाह्य च वै जलम् ॥
नर्मदोदकसंमिश्रं मुच्यते सर्वकिल्बिषैः ॥ ४४
प्रदक्षिणं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥ ४५
ततः सुवर्णतिलके स्नात्वा दत्त्वा च काञ्चनम् । काञ्चनेन विमानेन रुद्रलोके महीयते ॥ ४६
ततः स्वर्गच्युतः कालाद्राजा भवति वीर्यवान् । ततो गच्छेत राजेन्द्र इक्षुनद्यास्तु संगमम् ॥ ४७
त्रैलोक्ये विश्रुतं दिव्यं तत्र संनिहितः शिवः । तत्र स्नात्वा नरो राजन्गाणपत्यमवाप्नुयात् ॥४८
स्कन्दतीर्थं ततो गच्छेत्सर्वपापप्रणाशनम् । आ जन्मनः कृतं पापं स्नानमात्राद्व्यपोहति ॥ ४९
आङ्गिरसं ततो गच्छेत्स्नानं तत्र समाचरेत् । गोसहस्रफलं तस्य रुद्रलोके महीयते ॥ ५०
लाङ्गलतीर्थं ततो गच्छेत्सर्वपापप्रणाशनम् । तत्र गत्वा तु राजेन्द्र स्नानं तत्र समाचरेत् ॥
सप्तजन्मकृतैः पापैर्मुच्यते नात्र संशयः ॥ ५१
वैटेश्वरं ततो गच्छेत्सर्वतीर्थमनुत्तमम् । तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ५२
संगमेश्वरं ततो गच्छेत्सर्वपापहरं परम् । तत्र स्नात्वा नरो राजल्लँभते नात्र संशयः ॥ ५३
भद्रतीर्थं समासाद्य दानं दद्यात्तु यो नरः । तस्य तीर्थप्रभावेण सर्वं कोटिगुणं भवेत् ॥ ५४
अथ नारी भवेत्काली तत्र स्नानं समाचरेत् । गौरीतुल्या भवेत्सा तु रुद्रपत्नी न संशयः ॥५५
अङ्गारेश्वरं ततो गच्छेत्स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र रुद्रलोके महीयते ॥ ५६
अङ्गारकचतुर्थ्यां तु स्नानं तत्र समाचरेत् । अक्षयं मोदते कालं मुरारिकृतशासनः ॥ ५७
अयोनिसंगमे स्नात्वा न पश्येद्योनिमन्दिरम् । पाण्डवेश्वरकं गत्वा स्नानं तत्र समाचरेत् ॥
अक्षयं मोदते कालमवध्यस्तु सुरासुरैः ॥ ५८
विष्णुलोकं ततो गत्वा क्रीडाभोगसमन्वितः । तत्र भुक्त्वा महाभोगान्मर्त्ये राजाऽभिजायते ॥ ५९
कम्बोतिकेश्वरं गच्छेत्स्नानं तत्र समाचरेत् । उत्तरायणे संप्राप्ते यदिच्छेत्तस्य तद्भवेत् ॥ ६०
चन्द्रभागां ततो गच्छेत्स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र सोमलोके महीयते ॥ ६१
ततो गच्छेत्तु राजेन्द्र तीर्थं शक्रस्य विश्रुतम् । पूजितं देवराजेन देवैरपि नमस्कृतम् ॥ ६२
तत्र स्नात्वा नरो राजन्दानं दत्त्वा च काञ्चनम् । अथवा नीलवर्णाभं वृषभं यः समुत्सृजेत् ॥६३
वृषभस्य तु रोमाणि तत्प्रसूतिकुलेषु च । तावद्वर्षसहस्राणि नरो हरपुरे वसेत् ॥ ६४
ततः स्वर्गात्परिभ्रष्टो राजा भवति वीर्यवान् । अश्वानां श्वेतवर्णानां सहस्रेषु नराधिप ॥
स्वामी भवति मर्त्येषु तस्य तीर्थप्रभावतः ॥ ६५
ततो गच्छेत राजेन्द्र ब्रह्मावर्तमनुत्तमम् । तत्र स्नात्वा नरो राजंस्तर्पयेत्पितृदेवताः ॥ ६६
उपोष्य रजनीमेकां पिण्डं दत्त्वा यथाविधि । कन्यागते यथाऽऽदित्ये अक्षयं संचितं भवेत् ॥६७
ततो गच्छेत राजेन्द्र कपिलातीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्कपिलां यः प्रयच्छति ॥ ६८
संपूर्णां पृथिवीं दत्त्वा यत्फलं तदवाप्नुयात् । नर्मदेश्वरं परं तीर्थं न भूतं न भविष्यति ॥ ६९
तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् । तत्र सर्वगतो राजा पृथिव्यामभिजायते ॥ ७०
सर्वलक्षणसंपूर्णः सर्वव्याधिविवर्जितः । नार्मदीयोत्तरे कूले तीर्थं परमशोभनम् ॥ ७१
आदित्यायतनं रम्यमीश्वरेण तु भावितम् । तत्र स्नात्वा तु राजेन्द्र दानं दत्त्वा च शक्तितः ॥ ७२

---

१ ख. म. शुक्तिकां । २ ट. वाटेश्वरं । ३ ट. 'लं सुचिरं कृ' । ४ ट. कम्बोजिकेश्वरं ।

तस्य तीर्थप्रभावेण दत्तं भवति चाक्षयम् । दरिद्रा व्याधिता ये तु ये च दुष्कृतकर्मणः ॥
मुच्यन्ते सर्वपापेभ्यः सूर्यलोकं प्रयान्ति च ॥ ७३
माघमासे तु संप्राप्ते शुक्लपक्षस्य सप्तमीम् । वसेदायतने यस्तु निरात्मा यो जितेन्द्रियः ॥ ७४
न जायते व्याधितश्च कालेऽन्धो बधिरस्तथा । सुभगो रूपसंपन्नः स्त्रीणां भवति वल्लभः ॥ ७५
इदं तीर्थं महापुण्यं मार्कण्डेयेन भाषितम् । ये न यान्ति च राजेन्द्र वञ्चितास्ते न संशयः ॥ ७६
मासेश्वरं ततो गच्छेत्स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र स्वर्गलोकमवाप्नुयात् ॥ ७७
मोदते स्वर्गलोकस्थो यावदिन्द्राश्चतुर्दश । ततः समीपतः स्थित्वा नागेश्वरं तपोवनम् ॥ ७८
तत्र स्नात्वा तु राजेन्द्र शुचिर्भूत्वा समाहितः । बहुभिर्नागकन्याभिः क्रीडते कालमक्षयम् ॥ ७९
कुबेरभवनं गच्छेत्कुबेरो यत्र संस्थितः । कालेश्वरं परं तीर्थं कुबेरो यत्र तोषितः ॥
यत्र स्नात्वा तु राजेन्द्र सर्वसंपदमाप्नुयात् ॥ ८०
ततः पश्चिमतो गच्छेन्मरुतालयमुत्तमम् । तत्र स्नात्वा तु राजेन्द्र शुचिर्भूत्वा समाहितः ॥ ८१
काञ्चनं तु ततो दद्यादन्नं शक्त्या तु बुद्धिमान् । पुष्पकेण विमानेन वायुलोकं स गच्छति ॥ ८२
मम[1] तीर्थं ततो गच्छेन्माघमासे युधिष्ठिर । कृष्णपक्षे चतुर्दश्यां स्नानं तत्र समाचरेत् ॥ ८३
नक्तं भोज्यं ततः कुर्यान्न गच्छेद्योनिसंकटम् । अहल्यातीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ ८४
स्नातमात्रो नरस्तत्र अप्सरैः[2] सह मोदते । पारमेश्वरे तपस्तप्त्वा अहल्या मुक्तिमागमत् ॥ ८५
चैत्रमासे तु संप्राप्ते शुक्लपक्षे त्रयोदशी । कामदेवदिने तस्मिन्नहल्यां तु प्रपूजयेत् ॥ ८६
यत्र तत्र समुत्पन्नो नरस्तत्र प्रियो भवेत् । स्त्रीवल्लभो भवेच्छ्रीमान्कामदेव इवापरः ॥ ८७
अयोध्यां तु समासाद्य तीर्थं शक्रस्य विश्रुतम् । स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥ ८८
सोमतीर्थं ततो गच्छेत्स्नानमात्रं समाचरेत् । स्नातमात्रो नरस्तत्र सर्वपापैः प्रमुच्यते ॥ ८९
सोमग्रहे तु राजेन्द्र पापक्षयकरं भवेत् । त्रैलोक्यविश्रुतं राजन्सोमतीर्थं महाफलम् ॥ ९०
यस्तु चान्द्रायणं कुर्यात्तस्मिंस्तीर्थे नराधिप । सर्वपापविशुद्धात्मा सोमलोकं स गच्छति ॥ ९१
अग्निप्रवेशे तु जलेऽप्यथवाऽपि अनाशने । सोमतीर्थे मृतो यस्तु नासौ मर्त्येऽभिजायते ॥ ९२
स्तम्भतीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र सोमलोके महीयते ॥ ९३
ततो गच्छेत राजेन्द्र विष्णुतीर्थमनुत्तमम् । योधनीपुरविख्यातं विष्णुतीर्थमनुत्तमम् ॥ ९४
असुरा योधितास्तत्र वासुदेवेन कोटिशः । तत्र तीर्थं समुत्पन्नं विष्णुः प्रीतो भवेदिह ॥ ९५
अहोरात्रोपवासेन ब्रह्महत्यां व्यपोहति । ततो गच्छेत राजेन्द्र तापसेश्वरमुत्तमम् ॥ ९६
अमोहकमिति ख्यातं पितॄंस्तत्र तु तर्पयेत् । पौर्णमास्याममावास्यां श्राद्धं कुर्याद्यथाविधि ॥ ९७
तत्र स्नात्वा नरो राजन्पितृपिण्डं तु दापयेत् । गजरूपाः शिलास्तत्र तोयमध्ये प्रतिष्ठिताः ९८
तस्मिंस्तु दापयेत्पिण्डं वैशाखे तु विशेषतः । तृप्यन्ति पितरस्तावद्यावत्तिष्ठति मेदिनी ॥ ९९
ततो गच्छेत राजेन्द्र सिद्धेश्वरमनुत्तमम् । तत्र स्नात्वा तु राजेन्द्र गणपत्यन्तिकं व्रजेत् ॥ १००
ततो गच्छेत राजेन्द्र लिङ्गो यत्र जनार्दनः । तत्र स्नात्वा तु राजेन्द्र विष्णुलोके महीयते ॥ १०१
नर्मदादक्षिणे कूले तीर्थं परमशोभनम् । कामदेवः स्वयं तत्र तपस्तप्यत्यसौ महान् ॥ १०२
दिव्यं वर्षसहस्रं तु शंकरं पर्युपासते । समाधिपर्वदग्धस्तु शंकरेण महात्मना ॥ १०३
श्वेतपर्वोपमश्चैव हुताशः शुक्लपर्वणि । एते दग्धास्तु ते सर्वे कुसुमेश्वरसंस्थिताः ॥ १०४

---

१ ख. 'ममतीर्थं' । २ ख. ग. 'ते । तत्र तीर्थे तु' । ३ क. 'तास्तेन वा' ।

दिव्यवर्षसहस्रेण तुष्टस्तेषां महेश्वरः । उमया सहितो रुद्रस्तेषां तुष्टो वरप्रदः ॥ १०५
विमोक्षयित्वा तान्सर्वान्नर्मदातटमाश्रितान् । तस्य तीर्थप्रभावेण पुनर्देवत्वमागतः ॥ १०६
त्वत्प्रसादान्महादेव तीर्थं च भवतूत्तमम् । अर्धयोजनविस्तीर्णं तीर्थं दिक्षु समन्ततः ॥ १०७
तस्मिंस्तीर्थे नरः स्नात्वा उपवासपरायणः । कुसुमायुधरूपेण रुद्रलोके महीयते ॥ १०८
वैश्वानरे यमेनैव कामदेवेन वायवे । तपस्तप्तं तु राजेन्द्र तत्रैव च पुरागतैः ॥ १०९
अन्धोनस्य समीपे तु नातिदूरे तु तस्य वै । स्नानं दानं च तत्रैव भोजनं पिण्डपातनम् ॥ ११०
अग्निवेशे जले वाऽपि अथवाऽपि अनाशने । अनिवर्तिका गतिस्तस्य मृतस्याप्यर्धयोजने ॥ १११
त्रैयम्बकेण तोयेन स्नापयेन्नरपुङ्गवः । अन्धोनमूले दत्त्वा तु पिण्डं चैव यथाविधि ॥
पितरस्तस्य तृप्यन्ति यावच्चन्द्रदिवाकरौ ॥ ११२
उत्तरायणे तु संप्राप्ते तत्र स्नानं करोति यः । पुरुषो वाऽङ्गना वाऽपि वसेदायतने शुचिः ॥ ११३
सिद्धेश्वरस्य देवस्य प्रभाते पूजयेन्नरः । सतां गतिमवाप्नोति न तां सर्वैर्महामखैः ॥ ११४
यदा च तीर्थकालेन रूपवान्सुभगो भवेत् । मर्त्ये भवति राजाऽसावासमुद्रान्तगोचरे ॥ ११५
क्षेत्रपालं न पश्येच्च दण्डपालं महाबलम् । वृथा तस्य भवेद्यात्रा अदृष्ट्वा कर्णकुण्डलम् ॥ ११६
एतत्तीर्थफलं ज्ञात्वा सर्वे देवाः समागताः । मुञ्चन्ति पुष्पवृष्टिं तु स्तुवन्ति कुसुमेश्वरम् ॥ ११७

इति श्रीमहापुराणे पाद्म आदिखण्डेऽष्टादशोऽध्यायः १८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७४१

---

अथैकोनविंशोऽध्यायः ।

---

नारद उवाच—

भार्गवेशं ततो गच्छेद्भक्त्या यत्र च विष्णुना । हुङ्कारितास्तु देवेन दानवाः प्रलयं गताः ॥ १
तत्र स्नात्वा तु राजेन्द्र सर्वपापैः प्रमुच्यते । शुक्लतीर्थस्य चोत्पत्तिं शृणु त्वं पाण्डुनन्दन ॥ २
हिमवच्छिखरे रम्ये नानाधातुविचित्रिते । तरुणादित्यसंकाशे तप्तकाञ्चनसंनिभे ॥ ३
वज्रस्फटिकसोपाने चित्रपट्टशिलातले । जाम्बूनदमये दिव्ये नानापुष्पोपशोभिते ॥ ४
तत्राऽऽसीनं महादेवं सर्वज्ञं प्रभुमव्ययम् । लोकानुग्राहकं शान्तं गणवृन्दैः समावृतम् ॥ ५
स्कन्दनन्दिमहाकालैर्वीरभद्रगणादिभिः । उमया सहितं देवं मार्कण्डः परिपृच्छति ॥ ६
देवदेव महादेव ब्रह्मविष्ण्विन्द्रसंस्तुत । संसारभयभीतोऽहं सुखोपायं ब्रवीहि मे ॥ ७
भगवन्भूतभव्येश सर्वपापप्रणाशनम् । तीर्थानां परमं तीर्थं तद्वदस्व महेश्वर ॥ ८

ईश्वर उवाच—

शृणु विप्र महाप्राज्ञ सर्वशास्त्रविशारद । स्नानादि कुरु गच्छ त्वमृषिसंघैः समावृतः ॥ ९
मन्वत्रियाज्ञवल्क्याश्च काश्यपश्चैव अङ्गिराः । यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
नारदो गौतमश्चैव पृच्छन्ते धर्मकाङ्क्षिणः ॥ १०
गङ्गा कनखले पुण्या प्रयागं पुष्करं गया । कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे ॥ ११
दिवा वा यदि वा रात्रौ शुक्लतीर्थं महाफलम् । दर्शनात्स्पर्शनाच्चैव स्नानाद्ध्यानात्तपोर्जनात् ॥ १२

---

१ ट. 'राः । भृगवाप' ।

होमाच्चैवोपवासाच्च शुक्लतीर्थफलं महत् । शुक्लतीर्थं महापुण्यं नद्यां तु संव्यवस्थितम् ॥ १३
चाणिक्यो नाम राजर्षिः सिद्धिं तत्र समागतः । एतत्क्षेत्रं समुत्पन्नं योजनाद्वित्रिसंस्थितम् ॥ १४
शुक्लतीर्थं महापुण्यं सर्वपापप्रणाशनम् । पादपाग्रेण दृष्टेन ब्रह्महत्यां व्यपोहति ॥ १५
अहमत्र ऋषिश्रेष्ठ तिष्ठामीत्युमया सह । वैशाखे विमले मासि कृष्णपक्षे चतुर्दशी ॥ १६
कैलासाच्चापि निर्गम्य तत्र संनिहितो ह्यहम् । देवकिंनरगन्धर्वाः सिद्धविद्याधरास्तथा ॥ १७
गणाश्चाप्सरसो नागाः सर्वदेवाः समागताः । गगनस्थास्तु तिष्ठन्ति विमानैः सर्वकामकैः ॥ १८
शुक्लतीर्थेषु राजेन्द्र आगता धर्मकाङ्क्षिणः । रजकेन यथा वस्त्रं शुक्लं भवति वारिणा ॥ १९
आजन्मसंचितं पापं शुक्लतीर्थं व्यपोहति । स्नानं दानं महापुण्यं मार्कण्ड ऋषिसत्तम ॥ २०
शुक्लतीर्थात्परं तीर्थं न भूतं न भविष्यति । पूर्वे वयसि कर्माणि कृत्वा पापानि मानवः ॥ २१
अहोरात्रोपवासेन शुक्लतीर्थे व्यपोहति । तपसा ब्रह्मचर्येण यज्ञैर्दानेन वा पुनः ॥ २२
देवदानेन या पुष्टिर्न सा क्रतुशतैरपि । कार्तिकस्य च मासस्य कृष्णपक्षे चतुर्दशी ॥ २३
घृतेन स्नापयेद्देवमुपोष्य परमेश्वरम् । एकविंशकुलोपेतो न च्यवेच्चैश्वरात्पदात् ॥ २४
शुक्लतीर्थं परं तीर्थमृषिसिद्धनिषेवितम् । तत्र स्नात्वा ततो राजन्पुनर्जन्म न विद्यते ॥ २५
स्नात्वा वै शुक्लतीर्थेऽपि अर्चयेद्वृषभध्वजम् । जागरं कारयेत्तत्र नृत्यगीतादिमङ्गलैः ॥ २६
प्रभाते शुक्लतीर्थे तु स्नानं वै देवतार्चनम् । आचार्यं भोजयेत्पश्चाच्छिवव्रतपरः शुचिः ॥ २७
भोजनं च यथाशक्त्या वित्तशाठ्यं न कारयेत् । प्रदक्षिणं ततः कृत्वा शनैर्देवान्तिकं व्रजेत् ॥ २८
एवं वै कुरुते यस्तु तस्य पुण्यफलं शृणु । दिव्ययानसमारूढः स्तूयमानोऽप्सरोगणैः ॥ २९
शिवतुल्यबलोपेतस्तिष्ठत्याभूतसंप्लवम् । शुक्लतीर्थे तु या नारी ददाति कनकं शुभम् ॥ ३०
घृतेन स्नापयेद्देवं कुमारं चाभिपूजयेत् । एवं या कुरुते भक्त्या तस्याः पुण्यफलं शृणु ॥ ३१
मोदते देवलोकस्था यावदिन्द्राश्चतुर्दश । अयने वा चतुर्दश्यां संक्रान्तौ विषुवे तथा ॥ ३२
स्नात्वा तु सोपवासः स निर्जितात्मा समाहितः । दानं दद्याद्यथाशक्त्या प्रीयेतां हरिशंकरौ ॥ ३३
शुक्लतीर्थप्रभावेण सर्वं भवति चाक्षयम् । अनाथं दुर्गतं विप्रं नाथवन्तमथापि वा ॥
उद्वाहयति यस्तीर्थे तस्य पुण्यफलं शृणु ॥ ३४
यावत्तद्रोमसंख्या तु तत्प्रसूतिकुलेषु च । तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ३५

इति श्रीमहापुराणे पाद्म आदिखण्ड ऊनविंशोऽध्यायः ॥ १९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७७६ 47499

---

अथ विंशोऽध्यायः ।

---

नारद उवाच—

ततस्तु नरकं गच्छेत्स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र नरकं न च पश्यति ॥ १
अस्य तीर्थस्य माहात्म्यं शृणु त्वं पाण्डुनन्दन । तस्मिंस्तीर्थे तु राजेन्द्र यान्यस्थीनि विनिक्षिपेत् ॥ २
विलयं यान्ति सर्वाणि रूपवाञ्जायते नरः । गोतीर्थं तु ततो गच्छेद्दृष्ट्वा पापात्प्रमुच्यते ॥ ३
ततो गच्छेत राजेन्द्र कपिलातीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ४
ज्येष्ठमासे तु संप्राप्ते चतुर्दश्यां विशेषतः । तत्रोपोष्य नरो भक्त्या कपिलां यः प्रयच्छति ॥ ५

घृतेन दीपं प्रज्वाल्य घृतेन स्नापयेच्छिवम् । सघृतं श्रीफलं दत्त्वा कृत्वा चान्ते प्रदक्षिणम् ॥ ६
घण्टाभरणसंयुक्तां कपिलां यः प्रयच्छति । शिवतुल्यो नरो भूत्वा न चेह जायते पुनः ॥ ७
अङ्गारकदिने प्राप्ते चतुर्थ्यां तु विशेषतः । स्नापयित्वा शिवं भक्त्या ब्राह्मणेभ्यस्तु भोजनम् ॥ ८
अङ्गारकनवम्यां तु अमावास्यां तथैव च । स्नापयेत्तत्र यत्नेन रूपवान्सुभगो भवेत् ॥ ९
घृतेन स्नापयेल्लिङ्गं पूजयेद्भक्तितो द्विजान् । पुष्पकेण विमानेन सहस्रैः परिवारितः ॥ १०
शैवं पदमवाप्नोति नात्र वाऽभिगतं भवेत् । अक्षयं मोदते कालं यथा रुद्रस्तथैव च ॥ ११
यदा तु कर्मसंयोगान्मर्त्यलोकमुपागतः । राजा भवति धर्मिष्ठो रूपवाञ्जायते बली ॥ १२
ततो गच्छेत राजेन्द्र ऋषितीर्थमनुत्तमम् । घृणबिन्दुऋषिर्नाम शापदग्धो व्यवस्थितः ॥ १३
तस्य तीर्थप्रभावेण पापमुक्तो भवेद्द्विजः । ततो गच्छेत राजेन्द्र गणेश्वरमनुत्तमम् ॥ १४
श्रावणे मासि संप्राप्ते कृष्णपक्षे चतुर्दशीम् । स्नातमात्रो नरस्तत्र रुद्रलोके महीयते ॥ १५
पितॄणां तर्पणं कृत्वा मुच्यते च ऋणत्रयात् । गणेश्वरसमीपे तु गङ्गावदनमुत्तमम् ॥ १६
अकामो वा सकामो वा तत्र स्नात्वा तु मानवः । आजन्मजनितैः पापैर्मुच्यते नात्र संशयः ॥ १७
सर्वदा पर्वदिवसे स्नानं तत्र समाचरेत् । पितॄणां तर्पणं कृत्वा मुच्यते च ऋणत्रयात् ॥ १८
प्रयागे यत्फलं दृष्टं शंकरेण महात्मना । तदेव निखिलं पुण्यं गङ्गाराह्वर्कसंगमे ॥ १९
तस्यैव पश्चिमे स्थानं समीपे नातिदूरतः । दशाश्वमेधिकं नाम त्रिषु लोकेषु विश्रुतम् ॥ २०
उपोष्य रजनीमेकां मासि भाद्रपदे तथा । अमावास्यां नरः स्नात्वा व्रजते यत्र शंकरः ॥ २१
सर्वदा पूर्वदिवसे स्नानं तत्र समाचरेत् । पितॄणां तर्पणं कृत्वा अश्वमेधफलं लभेत् ॥ २२
दशाश्वमेधात्पश्चिमतो भृगुर्ब्राह्मणसत्तमः । दिव्यं वर्षसहस्रं तु ईश्वरं पर्युपासते ॥ २३
वल्मीकावस्थितश्चासौ दक्षिणं च निकेतनम् । आश्चर्यं तु महज्जातमुमायाः शंकरस्य च ॥ २४
गौरी तु पृच्छते देवं कोऽयमेव तु संस्थितः । देवो वा दानवश्चाथ कथयस्व महेश्वर ॥ २५

ईश्वर उवाच—

भृगुर्नाम द्विजश्रेष्ठ ऋषीणां प्रवरो मुनिः । ध्यायते मां समाधिस्थो वरं प्रार्थयते प्रिये ॥
तत्र प्रहसिता देवी ईश्वरं प्रत्यभाषत ॥ २६
धूमवत्तु शिखा जाता ततोऽद्यापि न तुष्यसि । दुराराध्योऽसि तेन त्वं नात्र कार्या विचारणा ॥ २७

देव उवाच—

न ज्ञायसे महादेवि अयं क्रोधेन चेष्टितः । दर्शयामि यथा तथ्यं प्रियं ते च करोम्यहम् ॥ २८
स्मारितो देवदेवेन धर्मरूपो वृषस्तदा । स्मरणाद्देवदेवस्य वृषः शीघ्रमुपस्थितः ॥ २९
वदते मानुषीं वाचमादेशो दीयतां प्रभो । वल्मीकैश्छादितो विप्र एनं भूमौ निपातय ॥ ३०
योगस्थस्तु ततो ध्यायंस्ततस्तेन निपातितः । तत्क्षणात्क्रोधसंतप्तो हस्तमुत्क्षिप्तवान्वृषम् ॥ ३१
एवं संभाषमाणस्तु कुत्र गच्छसि भो वृष । अद्य त्वामथ पाप्मानं प्रत्यक्षं हन्म्यहं वृष ॥ ३२
धर्षितस्तु तदा विप्रो अन्तरिक्षगतं वृषम् । आकाशे प्रेक्षते विप्र एतदद्भुतमुत्तमम् ॥ ३३
ततः प्रहसिते रुद्र ऋषिरग्रे व्यवस्थितः । तृतीयं लोचनं दृष्ट्वा वैलक्ष्यात्पतितो भुवि ॥
प्रणम्य दण्डवद्भूमौ स्तुवते परमेश्वरं ॥ ३४

---

१ ख. ग. च । दाप॰ । २ ट. ॰मृ । तृण॰ । ३ क. धार्मिकस्तु ।

प्रणिपत्य जगन्नाथं भवोद्भवं त्वामहं दिव्यरूपम् । भवभीतो भुवनपते प्रभूतं विज्ञापये किंचित् ३५
त्वद्गुणनिकरान्वक्तुं कः शक्तो भवति मानुषो नाथ । वासुकिरेयं हि कदाचिद्वदनसहस्रं भवेद्यस्य ३६
भक्त्या तथाऽपि शंकर भुवनपते त्वत्स्तुतौ तु मुखरस्य । वन्द्य क्षमस्व भगवन्प्रसीद मे तव चरणपतितस्य
सत्त्वं रजस्तमस्त्वं स्थित्युत्पत्तौ विनाशने देव । त्वां मुक्त्वा भुवनपते भुवनेश्वर नैव दैवतं किंचित् ३८
यमनियमयज्ञदानैर्वेदाभ्यासावधारणोद्योगात् । त्वद्भक्तेः सर्वमिदं नार्हति कलासहस्रांशेन ॥ ३९
उत्कृष्टरससरसायनैर्खड्गाञ्जनपादुकादिसिद्धिर्वा । चिह्नानि भवत्प्रणतानां दृश्यन्त इह जन्मनि प्रकटम् ।
शाठ्येन नमति यद्यपि ददासि त्वं धर्ममिच्छतां देव । भक्तिर्भवच्छेदकरी मोक्षाय विनिर्मिता नाथ ।
परदारपरस्वरतं परिभवपरिदुःखशोकसंतप्तम् । परवदनवीक्षणपरं परमेश्वर मां परित्राहि ॥ ४२
अलीकाभिमानदग्धं क्षणभङ्गुरविभवविलसितं देव । क्रूरं कुपथाभिमुखं पतितं मां त्राहि देवेश ४३
दीनेन्द्रियगणसार्थैर्बन्धुजनैरेव पूरिता आशा । तुच्छा तथाऽपि शंकर किं मूढं मां विडम्बयसि ४४
तृष्णां हरस्व शीघ्रं लक्ष्मीं मां देहि हृदयवासिनीं नित्याम् । छिन्धि मदमोहपाशानुत्तारय मां महादेव ॥
करुणाभ्युदयं नाम स्तोत्रमिदं सिद्धिदं दिव्यम् । यः पठति भक्तियुक्तस्तस्य तु तुष्येद्भृगोर्यथा हि शिवः ।

ईश्वर उवाच—

अहं तुष्टोऽस्मि ते विप्र प्रार्थयस्वेप्सितं वरम् । उमया सहितो देवो वरं तस्य हि दापयेत्(?)॥४७
भृगुरुवाच—यदि तुष्टोऽसि देवेश यदि देयो वरो मम । रुद्रवेदी भवेदेवमेतत्संपादयस्व मे ॥ ४८

ईश्वर उवाच—

एवं भवतु विप्रेन्द्र क्रोधस्थानं भविष्यति । न पितापुत्रयोश्चैव एकवाक्यं भविष्यति ॥ ४९
तदाप्रभृति ब्रह्माद्याः सर्वे देवाः सकिंनराः । उपासते भृगोस्तीर्थं तुष्टो यत्र महेश्वरः ॥ ५०
दर्शनात्तस्य तीर्थस्य सद्यः पापात्प्रमुच्यते । अवशाः स्ववशाश्चापि म्रियन्ते तत्र जन्तवः ॥ ५१
गुह्यातिगुह्यस्य गतिस्तेषां निःसंशया भवेत् । एतत्क्षेत्रं सुविपुलं सर्वपापप्रणाशनम् ॥ ५२
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः । औपानहं तदा युग्मं देयमन्नं च काञ्चनम् ॥५३
भोजनं च यथाशक्त्या अक्षयं तस्य तद्भवेत् । सूर्योपरागे यो दद्याद्दानं चैव यथेच्छया ॥ ५४
तीर्थस्नानं तु यद्दानमक्षयं तस्य तद्भवेत् । चन्द्रसूर्योपरागेषु वृषोत्सर्गमनुत्तमम् ॥ ५५
न जानन्ति नरा मूढा विष्णुमायाविमोहिताः । नर्मदायां स्थितं दिव्यं वृषतीर्थं नराधिप ॥५६
भृगुतीर्थस्य माहात्म्यं यः शृणोति नरः सकृत् । विमुक्तः सर्वपापेभ्यो रुद्रलोकं स गच्छति ५७
ततो गच्छेत राजेन्द्र गौतमेश्वरमुत्तमम् । तत्र स्नात्वा नरो राजन्नुपवासपरायणः ॥ ५८
काञ्चनेन विमानेन ब्रह्मलोके महीयते । धौतपापं ततो गच्छेद्धौतं यत्र वृषेण तु ॥ ५९
नर्मदायां स्थितं राजन्सर्वपातकनाशनम् । तत्र तीर्थे नरः स्नात्वा ब्रह्महत्यां व्यपोहति ॥ ६०
तस्मिंस्तीर्थे तु राजेन्द्र प्राणत्यागं करोति यः । चतुर्भुजस्त्रिनेत्रस्तु रुद्रतुल्यबलो भवेत् ॥ ६१
वसेत्कल्पायुतं साग्रं रुद्रतुल्यपराक्रमः । कालेन महता प्राप्तः पृथिव्यामेकराड्भवेत् ॥ ६२
ततो गच्छेत राजेन्द्र एरण्डीतीर्थमुत्तमम् । प्रयागे यत्फलं दृष्टं मार्कण्डेयेन भाषितम् ॥ ६३
तत्फलं लभते राजन्स्नातमात्रस्तु मानवः । मासि भाद्रपदे चैव शुक्लपक्षस्य चाष्टमीम् ॥ ६४

---

१ ख अ. भूतनाथं २ ख. ज. 'रपि हि । ३ ट. 'नसिद्धाश्र' । ४ ञ. 'काविवरसि' । ख. 'काचिवरसि' । ५ क. 'श्यन्तेते हि ज' ६ ट. 'श ॥ ४३ ॥ हीने' । ७ क. 'वंद्देव' । ८ ट. भारत ।

उपोष्य रजनीमेकां तत्र स्नानं समाचरेत् । यमदूतैर्न बाध्येत इन्द्रलोकं स गच्छति ॥ ६५
ततो गच्छेत राजेन्द्र सिद्धो यत्र जनार्दनः । हिरण्यद्वीपविख्यातं सर्वपापप्रणाशनम् ॥
तत्र स्नात्वा नरो राजन्धनवान्रूपवान्भवेत् ॥ ६६
ततो गच्छेत राजेन्द्र तीर्थं कनखलं महत् । गरुडेन तपस्तप्तं तस्मिंस्तीर्थे नराधिप ॥ ६७
विख्यातं सर्वलोकेषु योगिनी तत्र तिष्ठति । क्रीडते योगिभिः सार्धं शिवेन सह नृत्यति ॥ ६८
तत्र स्नात्वा नरो राजन्रुद्रलोके महीयते । ततो गच्छेत राजेन्द्र ईशतीर्थमनुत्तमम् ॥ ६९
ईशस्तत्र विनिर्मुक्तो गत ऊर्ध्वं न संशयः । ततो गच्छेत राजेन्द्र सिद्धो यत्र जनार्दनः ॥ ७०
वाराहं रूपमास्थाय अर्चितः परमेश्वरः । वाराहतीर्थे नरः स्नात्वा द्वादश्यां तु विशेषतः ॥ ७१
विष्णुलोकमवाप्नोति नरकं तु न गच्छति । ततो गच्छेत राजेन्द्र सोमतीर्थमनुत्तमम् ॥ ७२
पौर्णमास्यां विशेषेण तत्र स्नानं समाचरेत् । प्रणिपत्य च ईशानं बलिस्तस्य प्रसीदति ॥ ७३
हरिश्चन्द्रपुरं दिव्यमन्तरिक्षे तु दृश्यते । चक्रध्वजे समावृत्ते सुप्ते नागारिकेतने ॥ ७४
नर्मदातोयवेगेन रुरुकच्छोपसेविते ( ? ) । तस्मिंस्तीर्थे निवासं च विष्णुः शंकरमब्रवीत् ॥ ७५
द्वीपेश्वरे नरः स्नात्वा लभेद्बहुसुवर्णकम् । ततो गच्छेत राजेन्द्र रुद्रकन्यासुसंगमम् ॥ ७६
स्नातमात्रो नरस्तत्र देव्याः स्थानमवाप्नुयात् । देवतीर्थं ततो गच्छेत्सर्वदेवनमस्कृतम् ॥ ७७
तत्र स्नात्वा तु राजेन्द्र दैवतैः सह मोदते । ततो गच्छेत राजेन्द्र शिखितीर्थमनुत्तमम् ॥ ७८
तत्र वै दीयते दानं सर्वं कोटिगुणं भवेत् । अपरपक्षेऽमावास्यां स्नानं तत्र समाचरेत् ॥ ७९
ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिता । भृगुतीर्थे तु राजेन्द्र तीर्थकोटिर्व्यवस्थिता ॥ ८०
अकामो वा सकामो वा तत्र स्नायीत मानवः । अश्वमेधमवाप्नोति दैवतैः सह मोदते ॥ ८१
तत्र सिद्धिमवाप्नोति भृगुस्तु मुनिपुङ्गवः । अवतारः कृतस्तेन शंकरेण महात्मना ॥ ८२

इति श्रीमहापुराणे पाद्म आदिखण्डे विंशतितमोऽध्यायः ॥ २० ॥

आदितः श्लोकानां समष्ट्यङ्काः–८५८

---

अथैकविंशोऽध्यायः ।

---

नारद उवाच—

ततो गच्छेत राजेन्द्र विहङ्गेश्वरमुत्तमम् । दर्शनात्तस्य राजेन्द्र मुच्यते सर्वपातकैः ॥ १
ततो गच्छेत राजेन्द्र नर्मदेश्वरमुत्तमम् । तत्र स्नात्वा नरो राजन्स्वर्गलोके महीयते ॥ २
अश्वतीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् । सुभगो दर्शनीयश्च भोगवाञ्जायते नरः ॥ ३
पितामहं ततो गच्छेद्ब्रह्मणा निर्मितं पुरा । तत्र स्नात्वा नरो भक्त्या पितृपिण्डं तु दापयेत् ॥ ४
तिलदर्भविमिश्रं तु उदकं तु प्रदापयेत् । तस्य तीर्थप्रभावेण सर्वं भवति चाक्षयम् ॥ ५
सावित्रीतीर्थमासाद्य यस्तु स्नानं समाचरेत् । विधूय सर्वपापानि ब्रह्मलोके महीयते ॥ ६
मनोहरं च तत्रैव तीर्थं परमशोभनम् । तत्र स्नात्वा नरो राजन्पितृलोके महीयते ॥ ७
ततो गच्छेत राजेन्द्र मानसं तीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्रुद्रलोके महीयते ॥ ८

---

१ क. गच्छ तेन । ट. राक्षकेन । झ. गमनेन । २ ख. अ. °न्द्र हंसती° । ३ ख अ. °मू । हमाऽन्तत्र विनिर्मुक्ता गता ऊ° । ४ ख. अ. शक्रध्वजे । ५ ख. अ. °न तरून्संप्लावयिष्याति । त° ।

ततो गच्छेत राजेन्द्र क्रतुतीर्थमनुत्तमम् । विख्यातं त्रिषु लोकेषु सर्वपापप्रणाशनम् ॥ ९
यान्यान्प्रार्थयते कामान्पशुपुत्रधनानि च । प्राप्नुयात्तानि सर्वाणि तत्र स्नात्वा नराधिप॥ १०
ततो गच्छेत राजेन्द्र त्रिदशज्योति विश्रुतम् । तत्र ता ऋषिकन्यास्तु तपोऽतप्यन्त सुव्रताः ॥ ११
भर्ता भवतु सर्वासामीश्वरः प्रभुरव्ययः । प्रीतस्तासां महादेवो दण्डिरूपधरो हरः ॥ १२
विकृताननबीभत्सस्तच्च तीर्थमुपागतः । तत्र कन्या महाराज वराय परमेश्वरः ॥ १३
कन्यासंघं वरयतः (?) कन्यादानं प्रयच्छति । तीर्थं तत्र महाराज दशकन्येति विश्रुतम् ॥
तत्र स्नात्वाऽर्चयेद्देवं सर्वपापैः प्रमुच्यते ॥ १४
ततो गच्छेत राजेन्द्र स्वर्गबिन्दुरिति श्रुतम् ॥ तत्र स्नात्वा नरो राजन्दुर्गतिं च न पश्यति ॥ १५
अप्सरेशं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ क्रीडते नागलोकस्थः अप्सरैः सह मोदते ॥ १६
ततो गच्छेत राजेन्द्र नरकं तीर्थमुत्तमम् । तत्र स्नात्वाऽर्चयेद्देवं नरकं च न गच्छति ॥ १७
भारभूतं ततो गच्छेदुपवासपरायणः । एतत्तीर्थं समासाद्य अवतारं तु शांभवम् ॥
अर्चयित्वा विरूपाक्षं रुद्रलोके महीयते ॥ १८
तस्मिंस्तीर्थे नरः स्नात्वा भारभूते महात्मनः । यत्र तत्र मृतस्यापि ध्रुवं गाणेश्वरी गतिः ॥ १९
कार्तिकस्य तु मासस्य अर्चयित्वा महेश्वरम् । अश्वमेधाच्छतगुणं प्रवदन्ति मनीषिणः ॥ २०
दीपकानां शतं कृत्वा घृतपूर्णं तु दापयेत् । विमानैः सूर्यसंकाशैर्व्रजते यत्र शंकरः ॥ २१
वृषभं यः प्रयच्छेत शङ्खकुन्देन्दुसंनिभम् । वृषयुक्तेन यानेन रुद्रलोकं स गच्छति ॥ २२
चरुमेकं तु यो दद्यात्तस्मिंस्तीर्थे नराधिप । पायसं मधुसंयुक्तं भक्ष्याणि विविधानि च ॥ २३
यथाशक्त्या तु राजेन्द्र भोजयेत्सहदक्षिणम् । तस्य तीर्थप्रभावेण सर्वं कोटिगुणं भवेत् ॥ २४
नर्मदाया जलं सिक्त्वा अर्चयित्वा वृषध्वजम् । दुर्गतिं च न पश्यन्ति तस्य तीर्थप्रभावतः ॥ २५
एतत्तीर्थं समासाद्य यस्तु प्राणान्परित्यजेत् । सर्वपापविशुद्धात्मा व्रजते यत्र शंकरः ॥ २६
जलप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप । हंसयुक्तेन यानेन रुद्रलोकं स गच्छति ॥ २७
यावच्चन्द्रश्च सूर्यश्च हिमवांश्च महोदधिः । गङ्गाद्याः सरितो यावत्तावत्स्वर्गे महीयते ॥ २८
अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप । गर्भवासे तु राजेन्द्र न पुनर्जायते नरः ॥ २९
ततो गच्छेत राजेन्द्र अटवीतीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्निन्द्रस्यार्धासनं लभेत् ॥ ३०
शृङ्गतीर्थं ततो गच्छेत्सर्वपापप्रणाशनम् । तत्रापि स्नातमात्रस्य ध्रुवं गाणेश्वरी गतिः ॥ ३१
एरण्डीनर्मदायाश्च संगमं लोकविश्रुतम् । तत्र तीर्थं महापुण्यं सर्वपापप्रणाशनम् ॥ ३२
उपवासपरो भूत्वा नित्यं ब्रह्मपरायणः । तत्र स्नात्वा तु राजेन्द्र मुच्यते ब्रह्महत्यया ॥ ३३
ततो गच्छेत राजेन्द्र नर्मदोदधिसंगमम् । जमदग्निरिति ख्यातं सिद्धो यत्र जनार्दनः ॥ ३४
यत्रेष्ट्वा बहुभिर्यज्ञैरिन्द्रो देवाधिपोऽभवत् । तत्र स्नात्वा नरो राजन्नर्मदोदधिसंगमे ॥ ३५
त्रिगुणस्याश्वमेधस्य फलं प्राप्नोति मानवः । पश्चिमोदधिसायुज्यं मुक्तिद्वारविघाटनम् ॥ ३६
तत्र देवाः सगन्धर्वा ऋषयः सिद्धचारणाः । आराधयन्ति देवेशं त्रिसंध्यं विमलेश्वरम् ॥ ३७
सर्वपापविशुद्धात्मा रुद्रलोके महीयते । विमलेश्वरपरं तीर्थं न भूतं न भविष्यति ॥ ३८
तत्रोपवासं कृत्वा ये पश्यन्ति विमलेश्वरम् । सर्वपापविशुद्धात्मा (?) रुद्रलोकं व्रजन्ति ते ॥ ३९

---

१ ठ. देवक्षण्क । २ ख. ग. परमेश्वरम् । ३ क. 'न्या ऋद्धि च योसेवेत्कन्या' । ४ ख. ग. अमरैः । ५ क. एकं तीर्थं । ६ ट. स्पृष्ट्वा । ७ ख. ग. तच्च ।

ततो गच्छेत राजेन्द्र केशिनीतीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्नुपवासपरायणः ॥ ४०
उपोष्य रजनीमेकां नियतो नियताशनः । तत्र तीर्थप्रभावेण मुच्यते ब्रह्महत्यया ॥ ४१
सर्वतीर्थाभिषेकं च यः पश्येत्सागरेश्वरम् । योजनाभ्यन्तरे तिष्ठेदावर्तसंस्थितः शिवः ॥ ४२
तं दृष्ट्वा सर्वतीर्थानि दृष्टानि स्युर्न संशयः । सर्वपापविनिर्मुक्तो यत्र रुद्रः स गच्छति ॥ ४३
नर्मदासंगमं यावद्यावच्चामरकण्टकम् । तत्रान्तरे महाराज तीर्थकोट्यो दश स्थिताः ॥ ४४
तीर्थात्तीर्थाटनचर्या ऋषिकोटिनिषेविताः । साग्निहोत्रैश्च दिव्यज्ञैः सर्वैर्ज्ञानपरायणैः ॥ ४५
सेवितास्तेन राजेन्द्र ईप्सितार्थप्रदायिकाः । यश्चेदं वै पठेन्नित्यं शृणुयाद्वाऽपि भक्तितः ॥
तं तु तीर्थानि सर्वाणि अभिषिञ्चन्ति पाण्डव ॥ ४६
नर्मदा च सदा प्रीता भवेद्वै नात्र संशयः । प्रीतस्तस्य भवेद्रुद्रो मार्कण्डेयो महामुनिः ॥ ४७
वन्ध्या च लभते पुत्रान्दुर्भगा सुभगा भवेत् । कुमारी लभते भर्ता यच्च यो वाञ्छते फलम् ॥ ४८
तदेव लभते सर्वं नात्र कार्या विचारणा । ब्राह्मणो वेदमाप्नोति क्षत्रियो विजयी भवेत् ॥ ४९
वैश्यस्तु लभते धान्यं शूद्रः प्राप्नोति सद्गतिम् ॥ ५०
मूर्खस्तु लभते विद्यां त्रिसंध्यं यः पठेन्नरः । नरकं च न पश्येत वियोनिं च न गच्छति ॥ ५१

इति श्रीमहापुराणे पाद्म आदिखण्डे एकविंशोऽध्यायः ॥ २१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९०९

---

अथ द्वाविंशोऽध्यायः ।

---

नारद उवाच—

एवं ते कथितं राजन्नर्मदातीर्थमुत्तमम् । पुरा गन्धर्वकन्यानां शापजं भयमुल्बणम् ॥ १
नाशितं तन्महाराज रेवाजलकणाग्निना । रेवाजलकणस्पर्शान्मुक्तो भवति मानवः ॥ २

युधिष्ठिर उवाच—

भगवन्ब्रूहि कन्याभिः शापोऽलम्भि कथं कुतः । कस्यापत्यानि तास्तासां नाम किं कीदृशं वयः ॥ ३
कथं रेवाजलस्पर्शाद्विपाकाच्छापसंभवात् । विमुक्ताः कुत्र ताः सन्तुः सर्वं मे कथय प्रभो ॥ ४
नर्मदातीर्थमाहात्म्यं चमत्कारकरं भवेत् । श्रवणादपि पापानां मलनाशनमुच्यते ॥ ५
नर्मदानर्मदाशब्दो येन केनचिदुच्यते । तस्य स्याच्छाश्वती मुक्तिर्यावदाचन्द्रतारकम् ॥ ६
व्याहृतं भवता पूर्वं रेवामाहात्म्यमुत्तमम् । तथाऽपि चरितं साधो यदेतत्तन्निगद्यताम् ॥ ७
अर्थं चोत्तमवाता या सेवितव्या मनीषिभिः । अतः पृच्छामि विप्रेन्द्र रेवामाहात्म्यमुत्तमम् ॥
इतिहासं वद विभो कन्यानां चरितोज्ज्वलम् ॥ ८

नारद उवाच—

श्रूयतां राजशार्दूल धर्मगर्भा परा कथा । यथाऽरणिर्वह्निगर्भा धर्मस्तु ब्रह्मसूरिव ॥ ९
गन्धर्वः शुकसंगीतिस्तस्य कन्या प्रमोहिनी । सुशीलस्य सुशीला च सुस्वरा स्वरवेदिनः ॥ १०
सुतारा चन्द्रकान्तस्य चन्द्रिका सुप्रभस्य च । इमानि वरनामानि तासामप्सरसां नृप ॥ ११

---

१ क. दकस्थि° । २ ख. अ. °त्तीर्थं निरन्तर्यै ऋषिकोटिनिषेवितम् । सा° । ३ क. °ता मानवान्नात्र । ४ ख. अ. °द्विकाराच्छा° । ५ ख. अ. °थ देवैः सेविता । ६ ख. अ. °र्मस्त्वं ब्रह्मचिन्तक । ग° । ट. °र्मः सर्वगतः स हि । ग°

कुमार्यः पञ्च सर्वास्ता वयसा सुभगाः पुनः । भाषन्ते च मिथस्तास्तु भगिन्य इव सर्वदा ॥ १२
चन्द्रादिव विनिष्क्रान्ताश्चन्द्रिका इव सोज्ज्वलाः । चन्द्राननाः सुकेश्यश्च चन्द्रकान्ता इवोज्ज्वलाः ।
देवेष्वेता विलासिन्यः कौमुद्यः कैरवेष्विव । लावण्यपिण्डसंभूता बहुरूपा मनोहराः ॥ १४
उद्भिन्नकुचपद्मिन्यः केतक्य इव माधवे । उन्मीलद्यौवनैः कान्ता वल्लीव नवपल्लवैः ॥ १५
हेमगौराश्च हेमाभा हेमाभरणभूषिताः । हेमचम्पकमालिन्यो हेमच्छविसुवाससः ॥ १६
स्वरग्रामवलीहासु(?) विविधामूर्छनासु च । तालवाद्यविनोदेषु वेणुवीणाप्रवादने ॥ १७
मृदङ्गनादसंभिन्नलास्यमध्यलयेषु च । चित्रादिषु विनोदेषु कलासु च विशारदाः ॥ १८
एवंभूताश्च ताः कन्या मुमुदुः क्रीडनैर्वरैः । पितृभिर्लालिताः सर्वाश्चेरुश्च धनदालये ॥ १९
कौतुकादेकदा पञ्च मिलित्वा मासि माधवे । कन्या मन्दारपुष्पाणि विचिन्वत्यो वनाद्वनम् ॥ २०
गौरीं समाराधयितुं सुराङ्गनाः कदाचिदच्छोदसरोवरं ययुः ।
हेमाम्बुजानि प्रवराणि ताः पुनस्तस्मादुपादाय वरोत्पलैः सह ॥ २१
वैडूर्यशुद्धस्फटिकप्रकुट्टिमे स्नात्वा तु पट्टे परिधाय चाम्बरम् ।
मौनेन च स्थाण्डिलपिण्डिकामयीं सुवर्णमुक्ताभरणां विनिर्ममुः ॥ २२
समर्चितां चन्दनगन्धकुङ्कुमैरभ्यर्च्य गौरीं वरपङ्कजादिभिः ।
नानोपहारैश्च सुभक्तिभाविता लास्यप्रयोगैर्ननृतुः कुमारिकाः ॥ २३
गान्धर्वमाश्रित्य परं स्वरं ततो गेयं सभावध्वनिभिः समूर्छनम् ।
एणीदृशस्ताः प्रजगुः कलाक्षरं तारप्रवृद्धं गतिभिश्च सुस्वरम् ॥ २४
तस्मिन्सुभावे रसवर्षहर्षे कन्यास्वलंनिर्भरचित्तवृत्तिषु ।
अच्छोदतीर्थे प्रवरे तदाऽऽगतः स्नातुं मुनेर्वेदनिधेः सुतोऽग्रजः ॥ २५
रूपेण निःसीमतरो वराननः प्रफुल्लपद्मायतलोचनो युवा ।
विस्तीर्णवक्षाः सुभुजोऽतिसुन्दरः श्यामच्छविः काम इवापरो हि सः ॥ २६
स ब्रह्मचारी सुशिखो हि शोभते दण्डेन युक्तो धनुषेव मन्मथः ।
एणाजिनप्रावरणः समुद्वहद्धेमाभमौञ्जीकटिमेखलः परः ॥ २७
तं दृष्ट्वा ब्राह्मणं बालास्तास्तत्र सरसस्तटे । जहृषुः कौतुकाविष्टा अयं नो भविताऽतिथिः ॥ २८
संमुक्तगीतनृत्यास्तास्तस्याऽऽलोकनलालसाः । हरिण्यो लुब्धकेनेव विद्धाः कामेन सायकैः ॥ २९
पश्य पश्येति जल्पन्त्यो मुग्धाः पञ्च ससंभ्रमम् । तस्मिन्विप्रवरे यूनि कामदेवभ्रमं ययुः ॥ ३०
पुनः पुनस्तमभ्यर्च्य नयनैः पङ्कजैरिव । पश्चाद्विचार(?)मारब्धमप्सरोभिः परस्परम् ॥ ३१
यद्ययं कामदेवो हि रतिहीनः कथं भवेत् । अन्यथा ह्यश्विनौ देवौ तावुभौ युगचारिणौ ॥ ३२
गन्धर्वः किंनरो वाऽथ सिद्धो वा कामरूपधृक् । ऋषिपुत्रोऽथ वा कश्चित्कश्चिद्वा मनुजोत्तमः ॥ ३३
अस्ति वा कश्चिदेवायं धात्रा सृष्टो हि नः कृते । यथा भाग्यवतामर्थे निधानं पूर्वकर्मभिः ॥ ३४
तथाऽस्माकं कुमारीणां गौर्याऽऽनीतो वरोत्तमः । करुणाजलकल्लोललब्धार्द्रीकृतचित्तया ॥ ३५
मया वृतस्त्वया चायं त्वया वृतस्तथाऽनया । एवं पञ्चसु कन्यासु वदन्तीषु नृपोत्तम ॥ ३६
श्रुत्वा तद्वचनं तत्र कृतमाध्याह्निकक्रियः । आलोच्य हृदये सोऽपि विप्रमेतद्विचिन्तितम् ॥ ३७

---

१ ट. सुसमा गुणैः । भा । २ ख. ञ. °यः । चिन्तयामास मेधावी किं कृत्वा सुकृतं भवेत् । गाधिसंभवपराशरादयः कण्वदेवलमुखाश्च ये द्विजाः ॥ ते° ।

ब्रह्मविष्णुगिरिशादयः सुरा येऽपि सिद्धमुनयः पुरातनाः ।
तेऽपि योगबलिनो विमोहिता लीलया तदबलाभिरद्भुतम् ॥ ३८
योषितां नयनतीक्ष्णसायकैर्भ्रूलतासुदृढचापनिर्गतैः ।
धन्विना मकरकेतुना हतः कस्य नो पतति वा मनोमृगः ॥ ३९
तावदेव नयधीर्विराजते तावदेव जनता भयं भवेत् ।
तावदेव धृतचित्तता भृशं तावदेव गणना कुलस्य च ॥ ४०
तावदेव तपसः प्रगल्भता तावदेव समवेतता नृणाम् ।
यावदेव ललितेक्षणासवैर्माद्यतेऽद्भुतमदैर्न पूरुषः ॥ ४१
मोहयन्ति मदयन्ति रागिणं योषितः स्वललितैर्मनोहरैः ।
मोहयन्ति मदयन्ति मामिमा धर्मरक्षणपरं हि स्वैर्गुणैः ॥ ४२
मांसरक्तमलमूत्रनिर्मिते योषितां वपुषि निर्गुणेऽशुचौ ।
कामिनस्तु परिकल्प्य चारुतामाविशन्ति सुविमूढचेतसः ॥ ४३
दारुणा हि परिकीर्तिताऽङ्गना साधुभिर्विमलबुद्धिभिर्बुधैः ।
यावदेव न समीपगास्त्विमास्तावदेव हि गृहं व्रजाम्यहम् ॥ ४४
समीपं तस्य यावन्न आगच्छन्ति वरस्त्रियः । वैष्णवेन प्रभावेण तावदन्तर्दधे द्विजः ॥ ४५
तस्य योगबलाद्भूप गतस्यादर्शनं तदा । दृष्ट्वा तदद्भुतं कर्म वैष्णवब्रह्मचारिणः ॥ ४६
वित्रस्तनयना बालाः कुरङ्ग्य इव कातराः । संक्रान्तनयनाः शून्या ददृशुस्ता दिशो दश ॥ ४७

कन्या ऊचुः—

इन्द्रजालं स्फुटं वेत्ति मायां जानाति वा पुनः । दृष्टोऽप्यदृष्टरूपोऽभूदित्यूचुस्ताः परस्परम् ॥ ४८
व्याप्तं च हृदयं तासां तदैव विरहाग्निना । ज्वलद्दावानलेनेव सुस्निग्धं सर्वकाननम् ॥ ४९
त्यजेन्द्रजालिकां विद्यां कान्त दर्शय सत्वरम् । आत्मानं न हि ते युक्तं प्राग्ग्रासे मक्षिकोपमम् ॥ ५०
हा कष्टं दर्शितः कस्माद्धात्रा त्वं घटितः कुतः । ज्ञातं महानुसंतापहेतुर्नस्त्वं विनिर्मितः ॥ ५१
कच्चित्ते निर्दयं चेतः कच्चिदस्मासु नो मतिः । कच्चित्क्रूरोऽसि हे कान्त कच्चिन्मुष्णासि नो मनः ॥ ५२
कच्चिन्न प्रत्ययोऽस्मासु कच्चिदस्मान्परीक्षसे । कच्चिन्निर्ममताशीलः कच्चिन्मायाविशारदः ॥ ५३
कच्चिच्चित्ते प्रवेष्टुं च वेत्सि विज्ञानलाघवम् । कच्चिन्निष्क्रमणोपायं न जानासि कुतः पुनः ॥ ५४
कच्चिद्विनाऽपराधं तु किमस्मासु प्रकुप्यसे । कच्चिद्दुःखं न जानासि परेषां विप्रलम्भनम् ॥ ५५
त्वद्दर्शनं विना नष्टा हृदयेश्वर सांप्रतम् । न जीवामोऽथ जीवामः पुनस्त्वद्दर्शनाशया ॥ ५६
वयं च नीयन्तां तत्र शीघ्रं यत्र गतो भवान् । त्वद्दर्शनहरो धाता व्यधान्मोदाङ्कुरच्छिदाम् ॥ ५७
सर्वथा दर्शनं देहि करुणो भव सर्वथा[३] । पर्यन्तं न प्रपश्यन्ति कस्यचित्सज्जना जनाः ॥ ५८
इत्थं विलप्य ताः कन्याः प्रतीक्ष्य च बहुक्षणम् । पितुर्भयाद्गृहं गन्तुं शीघ्रमारेभिरे ततः ॥ ५९
तत्प्रेमनिगडैर्बद्धा भृशं विरहविक्लवाः । कथंचिद्धैर्यमालम्ब्य ताः स्वं स्वं गृहमागताः ॥ ६०
आगत्य पतिताः सर्वा मातॄणां तु समीपतः । किमेतन्मातृभिः पृष्टाः कुतः कालात्ययोऽभवत् ॥ ६१

[*कन्या ऊचुः]—

* एतच्चिह्नान्तर्गतं ट. पुस्तके ।

१ ट. सर्जका॰ । २ ख. ञ. कुतो । ३ क. ॰वैदा । प॰ । ४ ख. ञ. ॰था । दुःखदत्वं न प्रयान्ति ।

क्रीडन्त्यः किंनरीभिस्तु सार्धं संगतकं[1] यदा। संस्थितास्तेन न ज्ञातो दिवसोऽच्छोदसरोवरे॥६२
पथि भ्रान्ता वयं मातः संतापस्तेन नस्तनौ। मोहेन महता वक्तुं न केनाप्युत्सहामहे ॥ ६३

[ * नारद उवाच ]—

इत्युक्त्वा[2] लुठितास्तत्र मणिभूमौ कुमारिकाः। आकारं गोपयन्त्यस्ता मुग्धा जल्पन्ति मातृभिः॥६४
काचिन्नर्तयति क्रीडामयूरं न मुदा तदा। न पाठयति तं कीरं पञ्जरेऽन्या कुतूहलात् ॥ ६५
लालयेन्नकुलं नान्या नोल्लापयति सारिकाम्। अपराऽतीव संमुग्धा नैव खेलति सारसैः ॥ ६६
भेजिरे न विनोदं ता रेमिरे नैव मन्दिरे। ऊचिरे बान्धवैर्नालं वीणावाद्यं न चक्रिरे ॥ ६७
कल्पद्रुमप्रसूनं यत्सर्वं तद्ध्यानलोपमम्। मन्दारकुसुमामोदि न पपुर्मधुरं मधु ॥ ६८
योगिन्य इव ताः कन्या नासाग्रन्यस्तलोचनाः। अलक्ष्यध्यानसंतानाः पुरुषोत्तममानसाः॥६९
चन्द्रकान्तमणिच्छन्ने[3] स्रवद्वारिणि कन्दरे। क्षणं वातायने स्थित्वा जलयन्त्रगृहे क्षणम् ॥ ७०
रचयन्ति क्षणं शय्यां दीर्घिकाम्भोजिनीदलैः। वीज्यमानाः सखीभिस्ताः शीतलैर्नलिनीदलैः॥७१
इत्थं युगसमां रात्रिमनयंस्ता वरस्त्रियः। कथंचिद्धारणं कृत्वा विह्वलाः सज्वरा इव ॥ ७२
प्रातर्व्योममणिं दृष्ट्वा मन्यमानाः स्वजीवितम्। विज्ञाप्य मातरं स्वां स्वां गौरीं पूजयितुं गताः ॥७३
स्नात्वा तेन विधानेन पुष्पैर्धूपैस्तथा पुनः। विधाय पूजनं देव्या गायन्त्यस्तत्र ताः स्थिताः॥७४
एतस्मिन्नन्तरे विप्रः स्नातुं सोऽपि समागतः। पितुराश्रमतस्तस्मादच्छोदेऽत्र सरोवरे ॥ ७५
मित्रं दृष्ट्वैव रात्र्यन्ते पद्मिन्य इव कन्यकाः। उत्फुल्लनयना जातास्तं दृष्ट्वा ब्रह्मचारिणम् ॥ ७६
गत्वा तत्रैव ताः कन्याः समीपं ब्रह्मचारिणः। सव्यापसव्यबन्धेन भुजपाशं च चक्रिरे ॥ ७७
गतोऽसि प्रिय पूर्वेद्युर्गन्तुमद्य न लभ्यते। वृतस्त्वं नूनमस्माभिर्नात्र तेऽस्ति विचारणा ॥ ७८
इत्युक्तो ब्राह्मणः प्राह महसन्बाहुपाशगः। युष्माभिरुच्यते भद्रमनुकूलं प्रियं वचः ॥ ७९
प्रथमाश्रमनिष्ठस्य किं तु नश्येत मे व्रतम्। विद्याभ्यसनशीलस्य तिष्ठतश्च गुरोः कुले ॥ ८०
आश्रमे यत्र यो धर्मो रक्षणीयः स पण्डितैः। विवाहोऽयमतो मन्ये न धर्म इति कन्यकाः॥८१
आकर्ण्य विप्रवाक्यानि विप्रमूचुर्वरस्त्रियः। सकलध्वनि सोत्कण्ठाः कोकिला इव माधवे ॥ ८२
धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः। इत्येवं निश्चयज्ञास्ते वर्णयन्ति विपश्चितः ॥ ८३
स कामो धर्मबाहुल्यात्पुरतस्ते समुत्थितः। सेव्यतां विविधैर्भोगैः स्वच्छा भूमिरियं यतः॥८४
श्रुत्वा तद्वचनं तासां प्राह गंभीरया गिरा। तथ्यं वो वचनं किं तु ममाप्यावश्यकं व्रतम् ॥८५
प्राप्यानुज्ञां गुरोः कुर्वे विवाहकर्म नान्यथा। इत्युक्ताः पुनरूचुस्ताः स्फुटं मूढोऽसि सुन्दर ॥८६

सिद्धौषधं ब्रह्मधिया रसायनं सिद्धिर्निधिः साधुकुला वराङ्गनाः।
मन्त्रस्तथा सिद्धरसश्च धर्मतो मुने निषेव्याः सुधिया समागताः ॥ ८७
कार्यं तु दैवाद्यदि सिद्धिमागतं तस्मिन्नुपेक्षां न च यान्ति नीतिगाः ॥
यस्मादुपेक्षा न पुनः फलप्रदा तस्मान्न दीर्घीकरणं प्रशस्यते ॥ ८८

विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्। नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ ८९

* ट. पुस्तक एवायं पाठः।

१ ख. म. सङ्गतिके। २ ख. म. 'चित्तर्पय°'। ३ ङ. च. ट. ढ. '°न्ने तव°'। ख म. '°न्ने सत्र°'। ४ क. तु नाद्यापि मे°। ५ क. '°स्य नाभूत्पारं गु°'।

सान्द्रानुरागाः कुलजन्मनिर्मलाः स्नेहार्द्रचित्ताः सुगिरः स्वयंवराः ।
कन्याः सुरूपाः खलु चारुयौवना धन्या लभन्तेऽत्र नरास्तु नेतरे ॥ ९०
क्व वयं सुरसुन्दर्यः क्व भवांस्तापसो बटुः । दुर्घटस्य विधानेन मन्ये धातैव पण्डितः ॥ ९१
तस्मादस्मादि(नि)दानीं तु स्वीकुर्यान्मङ्गलं भवान् । गान्धर्वेण विवाहेन अन्यथा नोपजीवनम् ॥ ९२
श्रुत्वा वाक्यं ततः प्राह ब्राह्मणो धर्मवित्तमः । भो मृगाक्ष्यः कथं त्याज्यो धर्मो धर्मधनैर्नरैः ॥ ९३
धर्मश्चार्थश्च कामश्च मोक्षश्चैतच्चतुष्टयम् । यथोक्तं फलदं ज्ञेयं विपरीतं तु निष्फलम् ॥ ९४
नाकालेऽहं व्रती कुर्यामतो दारपरिग्रहम् । न क्रिया फलमाप्नोति क्रियाकालं न वेत्ति यः ॥ ९५
यतो धर्मविचारेऽस्मिन्प्रसक्तं मम मानसम् । तस्माच्छृणुत हे कन्या न समीहे स्वयंवरम् ॥ ९६
एवं ज्ञात्वाऽऽशयं तस्य समीक्ष्यैव परस्परम् । करात्करं विमुच्याथ जग्राहाङ्घ्रिं प्रमोहिनी ॥ ९७
भुजौ जगृहतुस्तस्य सुशीला सुस्वरा तथा । आलिलिङ्ग सुतारा च वक्त्रं चुम्बति चन्द्रिका ॥ ९८
तथाऽपि निर्विकारोऽसौ प्रलयानलसंनिभः । शशाप ब्रह्मचारी ताः क्रोधेनात्यन्तमूर्छितः ॥ ९९
पिशाच्य इव मां लग्नास्तत्पिशाच्यो भविष्यथ । एवं तेनाऽऽशु शप्तास्तास्तं त्यक्त्वा पुरतः स्थिताः ॥
किमेतच्चेष्टितं पापं ह्यनागसि विचेष्टया । प्रियंकृतोऽप्रियं कृत्वा धिक्त्वां धर्मकृतान्तकः ॥ १०१
अनुरक्तेषु भक्तेषु मित्रेषु द्रोहकारिणः । पुंसो लोकोभयोः सौख्यं नाशमेतीति नः श्रुतम् ॥ १०२
तस्मात्त्वमपि नः शापात्पिशाचो भव सत्वरम् । इत्युक्त्वाऽपि च ता बाला निःश्वसत्यः क्षुधाकुलाः ॥
तदैवान्योन्यसंरम्भास्तस्मिन्सरसि पार्थिव । ताः कन्या ब्रह्मचारी च सर्वे पैशाच्यमागताः ॥ १०४
स पिशाचः पिशाच्यस्ताः क्रन्दमानाः सुदारुणम् । क्षपयन्ति विपाकांस्तान्पूर्वोपात्तस्य कर्मणः १०५
स्वकाले प्रभवत्येव पूर्वोपात्तं शुभाशुभम् । स्वच्छायामिव(?) दुर्वारं देवानामपि पार्थिव ॥ १०६
क्रन्दन्ति पितरस्तासां मातरस्तत्र तत्र च । भ्रातरश्चैव बालानां दैवं हि दुरतिक्रमम् ॥ १०७
अत ऊर्ध्वं पिशाचास्त आहारार्थं सुदुःखिताः । इतस्ततश्च धावन्तो वसन्ति सरसस्तटे ॥ १०८

इति श्रीमहापुराणे पाद्म आदिखण्डे द्वाविंशोऽध्यायः ॥ २२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१११७

---

अथ त्रयोविंशोऽध्यायः ।

---

नारद उवाच—

एवं बहुतिथे काले लोमशो मुनिसत्तमः । आगतश्च महाभागस्तत्र यादृच्छिको मुनिः ॥ १
तं दृष्ट्वा ब्राह्मणं सर्वे पिशाचाः क्षुत्समाकुलाः । धावन्तो हन्तुकामास्ते मिलित्वा यूथवर्तिनः ॥ २
दह्यमानाः सुतीव्रेण तेजसा लोमशस्य तु । असमर्थाः पुनः स्थातुं ते सर्वे दूरतः स्थिताः ॥ ३
तत्र पूर्वकर्मबलात्पिशाचः स ह वै द्विजः । समीक्ष्य लोमशं राजन्साष्टाङ्गं प्रणिपत्य च ॥ ४
उवाच सूनृतां वाचं बद्ध्वा शिरसि चाञ्जलिम् । महाभाग्योदये विप्र साधूनां संगतिर्भवेत् ॥ ५
गङ्गादिपुण्यतीर्थेषु यो नरः स्नाति सर्वदा । यः करोति सतां सङ्गं तयोः सत्सङ्गमो वरः ॥ ६
गुरूणां सङ्गमो विप्र दृष्टादृष्टफलो भुवि । स्वर्गदो रोगहारी च किं तमोपहरो मतः ॥ ७

---

१ क. 'कृत्योऽसि यं कृत्वा धिक्त्वां धर्मकृतां तव । अ' । २ ख. अ. 'त्यः क्षुधा' । ३ क. च । आप्रसादं च बा' । ४ ख. अ. 'न्तो वक्तुका' । ५ ख. अ. 'त्वा पथि व' ।

इत्युक्त्वा कथयामास पूर्ववृत्तान्तमद्भुतम् । इमा गन्धर्वकन्यास्ता मुने सोऽहं द्विजात्मजः ॥ ८
सर्वे पिशाचरूपेण मिथःशापविमोहिताः । दीनाननाः सुतिष्ठामस्तवाग्रे मुनिसत्तम ॥ ९
त्वद्दर्शनेन बालानां निस्तारो नो भविष्यति । सूर्योदये तमःस्तोमः किं न नश्येत पुष्कलः॥ १०
श्रुत्वैतल्लोमशो वाक्यं कृपार्द्रीकृतमानसः । प्रत्युवाच महातेजा दुःखितं तं मुनेः सुतम् ॥ ११
मत्प्रसादाच्च सर्वेषां स्मृतिः सपदि जायताम् । धर्मे च वर्ततां येन मिथः शापो लयं व्रजेत्॥ १२

पिशाच उवाच—

महर्षे कथ्यतां धर्मो मुच्येम येन किल्बिषात् । नायं कालो विलम्बस्य शापाग्निर्दारुणो यतः ॥ १३

लोमश उवाच—

मया सार्धं प्रकुर्वन्तु रेवास्नानं विधानतः । शापान्मोक्ष्यति वो रेवा नान्यथा निष्कृतिर्भवेत् ॥ १४
शृणुष्वावहितो विप्र पापनाशो ध्रुवो नृणाम् । रेवास्नानेन जायेत इति मे निश्चिता मतिः ॥ १५
सप्तजन्मकृतं पापं वर्तमानं च पातकम् । रेवास्नानं दहेत्सर्वं तूलराशिमिवानलः ॥ १६
प्रायश्चित्तं न पश्यन्ति यस्मिन्पापे पिशाचक । तत्सर्वं नर्मदातोये स्नानमात्रेण नश्यति ॥ १७
ज्ञानकृन्नर्मदास्नानमतो मोक्षफला हि सा । हिमवत्पुण्यतीर्थानि सर्वपापहराणि वै ॥ १८
इन्द्रलोकप्रदं हीदं निर्मितं ब्रह्मवादिभिः । सर्वकामफला रेवा मोक्षदा परिकीर्तिता ॥ १९
पापघ्नी पापहरणी सर्वकामफलप्रदा । विष्णुलोकद आप्लावो नार्मदः पापनाशनः ॥ २०
यामुनः सूर्यलोकाय भवेदाप्लाव उत्तमः । सारस्वतोऽघविध्वंसी ब्रह्मलोकफलप्रदः ॥ २१
विशालफलदा प्रोक्ता विशाला हि पिशाचक । पापेन्धनदवाग्निस्तु गर्भहेतुक्रियापहः ॥ २२
विष्णुलोकाय मोक्षाय नार्मदः परिकीर्तितः । शरयूर्गण्डकी सिन्धुश्चन्द्रभागा च कौशिकी ॥ २३
तापी गोदावरी भीमा पयोष्णी कृष्णवेणिका । कावेरी तुङ्गभद्रा च अन्याश्चापि समुद्रगाः ॥२४
तासु रेवा परा प्रोक्ता विष्णुलोकप्रदायिनी । रेवा तु प्राप्यते पुण्यैः पूर्वजन्मकृतैर्द्विज ॥
अपुनर्भवदं तत्र मज्जनं मुनिपुत्रक ॥ २५

गायन्ति देवाः सततं निविष्टा रेवा कदा मज्जनदा हि नो भवेत् ।
स्नाता नरा यत्र न गर्भवेदनां पश्यन्ति तिष्ठन्ति च विष्णुसंनिधौ ॥ २६
मज्जन्ति ये प्रत्यहमत्र मानवा रेवासुतोये बहुपापकञ्चुकाः ।
मज्जन्ति ते नो निरयेषु धर्मतः स्वर्गे तु ते चारु चरन्ति देववत् ॥ २७
तीर्थैर्व्रतैर्दानतपोभिरध्वरैः सार्धं विधात्रा तुलया धृता पुरा ।
रेवा पिशाचाऽऽशु तयोर्द्वयोरभूद्रेवा वरा तत्र च मोक्षसाधिका ॥ २८

नारद उवाच—

एतच्छ्रुत्वा वचस्तस्य लोमशस्य पिशाचकाः । तेन सार्धं ययुः शीघ्रं रेवामज्जनहेतवे ॥ २९
ततो दैवात्समुत्पन्नो रेवारोधसि मारुतः । तेषां प्रवाहस्पृष्टानां गात्रे जलकणप्रदः ॥ ३०
रेवाजलकणस्पर्शात्पैशाच्यात्ते विमोचिताः । तत्क्षणाद्दिव्यवपुषः प्रशशंसुश्च नर्मदाम् ॥ ३१
ततो लोमशवाक्येन ताश्च गन्धर्वकन्यकाः । परिणीताः सुखं तेन विप्रेण नर्मदातटे ॥ ३२
उवास सुचिरं कालं स्नानपानावगाहनैः । अर्चित्वा नर्मदामत्र विष्णुलोकं गताश्च ते ॥ ३३

---

१ क. किंनु लीयेत पुष्करे । श्रु॰ । २ ट. धर्मश्चावर्जितो ये नामि॰ । ३ ड. ढ. 'तैर्ते ये॰' । ४ ख. म. 'दा हंग्गिता हि ।

एवं ते कथितो राजन्नर्मदागुणसंश्रयः । इतिहासो महापुण्यः श्रवणात्पापनाशनः ॥ ३४

इति श्रीमहापुराणे पाद्म आदिखण्डे त्रयोविंशोऽध्यायः ॥ २३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११५१

---

अथ चतुर्विंशोऽध्यायः ।

---

युधिष्ठिर उवाच—

अथान्यानि तु तीर्थानि वसिष्ठोक्तानि मे वद । श्रुत्वा यानि च पापानि विलयं यान्ति नारद ॥ १

नारद उवाच—

शृणुष्वात्र हि तीर्थानि वसिष्ठोक्तानि पार्थिव । दक्षिणं सिन्धुमासाद्य ब्रह्मचारी जितेन्द्रियः ॥
अग्निष्टोममवाप्नोति विमानं चाधिरोहति ॥ २
चर्मण्वतीं समासाद्य नियतो नियताशनः । रन्तिदेवाभ्यनुज्ञातो अग्निष्टोमफलं लभेत् ॥ ३
ततो गच्छेत धर्मज्ञ हिमवत्सुतमर्बुदम् । पृथिव्या यत्र वै च्छिद्रं पूर्वमासीद्युधिष्ठिर ॥ ४
तत्राऽऽश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः । तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ५
पिङ्गातीर्थमुपस्पृश्य ब्रह्मचारी नराधिप । कपिलानां नरव्याघ्र शतस्य फलमाप्नुयात् ॥ ६
ततो गच्छेत धर्मज्ञ प्रभासं लोकविश्रुतम् । यत्र संनिहितो नित्यं स्वयमेव हुताशनः ॥ ७
देवतानां मुखं वीर अनलोऽनिलसारथिः । तस्मिंस्तीर्थवरे स्नात्वा शुचिः प्रयतमानसः ॥
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥ ८
ततो गत्वा सरस्वत्याः सागरस्य च संगमम् । गोसहस्रफलं प्राप्य स्वर्गलोके महीयते ॥ ९
दीप्यमानोऽग्निवन्नित्यं प्रभया भरतर्षभ । तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः ॥ १०
त्रिरात्रमुषितस्तत्र तर्पयेत्पितृदेवताः । विराजति यथा सोमो वाजिमेधं च विन्दति ॥ ११
वरदानं ततो गच्छेत्तीर्थं भरतसत्तम । विष्णोर्दुर्वाससा यत्र वरो दत्तो युधिष्ठिर ॥ १२
वरदाने नरः स्नात्वा गोसहस्रफलं लभेत् । ततो द्वारवतीं गच्छेन्नियतो नियताशनः ॥ १३
पिण्डारके नरः स्नात्वा लभेद्बहुसुवर्णकम् । तस्मिंस्तीर्थे महाराज पद्मलक्षणलक्षिताः ॥ १४
अन्या(द्या)ऽपि मुद्रा दृश्यन्ते तदद्भुतमरिंदम । त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन ॥ १५
महादेवस्य सांनिध्यं तत्रैव भरतर्षभ । सागरस्य च सिन्धोश्च संगमं प्राप्य भारत ॥ १६
तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः । तर्पयित्वा पितॄन्देवानृषींश्च भरतर्षभ ॥
प्राप्नोति वारुणं लोकं दीप्यमानः स्वतेजसा ॥ १७
शङ्कुकर्णेश्वरं देवमर्चयित्वा युधिष्ठिर । अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ १८
प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ । तीर्थं कुरुवरश्रेष्ठ त्रिषु लोकेषु विश्रुतम् ॥ १९
तिमीति नाम्ना विख्यातं सर्वपापप्रमोचनम् । यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् ॥ २०
तत्र स्नात्वाऽर्चयित्वा च रुद्रं देवगणैर्वृतम् । जन्मप्रभृति पापानि कृतानि नुदते नरः ॥ २१
तिमिरत्र नरश्रेष्ठ सर्वदेवैरभिष्टुतः । तत्र स्नात्वा नरश्रेष्ठ हयमेधमवाप्नुयात् ॥ २२
जित्वा तत्र महाप्राज्ञ विष्णुना दितिनन्दनम् । पुरा शौचं कृतं राजन्हत्वा दैवतकण्टकम् ॥ २३
ततो गच्छेत धर्मज्ञ वसुधारामभिष्टुताम् । गमनादेव तस्यां हि हयमेधमवाप्नुयात् ॥ २४

स्नात्वा कुरुवरश्रेष्ठ प्रयतात्मा तु मानवः । तर्पयित्वा पितॄन्देवान्विष्णुलोके महीयते ॥ २५
तीर्थं चाप्यपरं तत्र वसूनां भरतर्षभ । तत्र स्नात्वा च पीत्वा च वसूनां संमतो भवेत् ॥ २६
सिन्धुतममिति ख्यातं सर्वपापप्रणाशनम् । तत्र स्नात्वा नरश्रेष्ठ लभेद्बहुसुवर्णकम् ॥ २७
ब्रह्मतुङ्गं समासाद्य शुचिः प्रयतमानसः । ब्रह्मलोकमवाप्नोति सुकृती विरजा नरः ॥ २८
कुमारिकाणां शक्रस्य तीर्थं सिद्धनिषेवितम् । तत्र स्नात्वा नरश्रेष्ठ शक्रलोकमवाप्नुयात् ॥ २९
रेणुकायाश्च तत्रैव तीर्थं देवनिषेवितम् । स्नात्वा तत्र भवेद्विप्रो विमलश्चन्द्रमा इव ॥ ३०
अथ पञ्चनदं गत्वा नियतो नियताशनः । पञ्चयज्ञानवाप्नोति क्रमशो ये तु कीर्तिताः ॥ ३१
ततो गच्छेत धर्मज्ञ भीमायाः स्थानमुत्तमम् । तत्र स्नात्वा न योन्यां वै नरो भरतसत्तम ॥ ३२
देव्याः पुत्रो भवेद्राजंस्तत्र कुण्डलविग्रहः । गवां शतसहस्रस्य फलं चैवाऽऽप्नुयान्महत् ॥ ३३
गिरिकुञ्जं समासाद्य त्रिषु लोकेषु विश्रुतम् । पितामहं नमस्कृत्य गोसहस्रफलं लभेत् ॥ ३४
ततो गच्छेत धर्मज्ञ विमलं तीर्थमुत्तमम् । अद्यापि यत्र दृश्यन्ते मत्स्याः सौवर्णराजताः ॥ ३५
तत्र स्नात्वा नरश्रेष्ठ वाजपेयमवाप्नुयात् । सर्वपापविशुद्धात्मा गच्छेत्परमिकां गतिम् ॥ ३६

इति श्रीमहापुराणे पाद्म आदिखण्डे चतुर्विंशोऽध्यायः ॥ २४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११८७

---

अथ पञ्चविंशोऽध्यायः ।

---

नारद उवाच—

वितस्तां च समासाद्य संतर्प्य पितृदेवताः । नरः फलमवाप्नोति वाजपेयस्य भारत ॥ १
काश्मीरेष्वेव नागस्य भवनं तक्षकस्य च । वितस्ताख्यमिति ख्यातं सर्वपापप्रमोचनम् ॥ २
तत्र स्नात्वा नरो नूनं वाजपेयमवाप्नुयात् । सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् ॥ ३
ततो गच्छेत मलदं त्रिषु लोकेषु विश्रुतम् । पश्चिमायां तु संध्यायामुपस्पृश्य यथाविधि ॥ ४
चरुं सप्तार्चिषे राजन्यथाशक्ति निवेदयेत् । पितॄणामक्षयं दानं प्रवदन्ति मनीषिणः ॥ ५
गवां शतसहस्रेण राजसूयशतेन च । अश्वमेधसहस्रेण श्रेयान्सप्तार्चिषश्चरुः ॥ ६
ततो निवृत्तो राजेन्द्र रुद्रास्पदमथाऽऽविशेत् । अभिगम्य महादेवमश्वमेधफलं लभेत् ॥ ७
मणिमन्तं समासाद्य ब्रह्मचारी समाहितः । एकरात्रोषितो राजन्नग्निष्टोमफलं लभेत् ॥ ८
अथ गच्छेत राजेन्द्र देविकां लोकविश्रुताम् । प्रसूतिर्यत्र विप्राणां श्रूयते भरतर्षभ ॥ ९
त्रिशूलपाणेः स्थानं च यत्र लोकेषु विश्रुतम् । देविकायां नरः स्नात्वा अभ्यर्च्य च महेश्वरम् ॥ १०
यथाशक्ति नरस्तत्र निवेद्य भरतर्षभ । सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥ ११
कामाख्यं तत्र रुद्रस्य तीर्थं देवर्षिसंमतम् । तत्र स्नात्वा नरः क्षिप्रं सिद्धिमाप्नोति भारत ॥ १२
यजनं याजनं गत्वा तथैव ब्रह्मवालकम् । पुष्पन्यास उपस्पृश्य न शोचेन्मरणं ततः ॥ १३
अर्धयोजनविस्तारां पञ्चयोजनमायताम् । एतावद्देविकामाहुः पुण्यां देवर्षिसंमताम् ॥ १४
ततो गच्छेत धर्मज्ञ दीर्घसत्रं यथाक्रमम् । यत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः ॥ १५
दीर्घसत्रमुपासन्ते दीक्षिता नियतव्रताः । गमनादेव राजेन्द्र दीर्घसत्रमरिंदम ॥ १६

राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः । ततो विनाशनं गच्छेन्नियतो नियताशनः ॥ १७
गच्छत्यन्तर्हिता यत्र मेरुपृष्ठे सरस्वती । चमसे च शिवोद्भेदे नागोद्भेदे च दृश्यते ॥ १८
स्नात्वा तु चमसोद्भेदे अग्निष्टोमफलं लभेत् । शिवोद्भेदे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ १९
नागोद्भेदे नरः स्नात्वा नागलोकमवाप्नुयात् । शशयानं च राजेन्द्र तीर्थमासाद्य दुर्लभम् ॥ २०
शशरूपप्रतिच्छन्नाः पुष्करा यत्र भारत । सरस्वत्यां महाभाग अनुसंवत्सरं हि ते ॥ २१
स्नायन्ते भरतश्रेष्ठ वृत्तां वै कार्तिकीं सदा । तत्र स्नात्वा नरव्याघ्र द्योतते शिववत्सदा ॥ २२
गोसहस्रफलं चैव प्राप्नुयाद्भरतर्षभ । कुमारकोटिमासाद्य नियतः कुरुनन्दन ॥ २३
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः । गवामयुतमाप्नोति कुलं चैव समुद्धरेत् ॥ २४
ततो गच्छेत धर्मज्ञ रुद्रकोटिं समाहितः । पुरा यत्र महाराज ऋषिकोटिः समाहिता ॥ २५
हर्षेण च समाविष्टा देवदर्शनकाङ्क्षया । अहं पूर्वमहं पूर्वं द्रक्ष्यामि वृषभध्वजम् ॥ २६
एवं संप्रस्थिता राजन्नृषयः किल भारत । ततो योगीश्वरेणापि योगामस्थाय भूपते ॥ २७
तेषां मन्युप्रशान्त्यर्थमृषीणां भावितात्मनाम् ॥ सृष्टा तु कोटी रुद्राणामृषीणामग्रतः स्थिता ॥२८
मया पूर्वं हरो दृष्ट इति ते मेनिरे पृथक् । तेषां तुष्टो महादेव ऋषीणामुग्रतेजसाम् ॥
भक्त्या परमया राजन्वरं तेषां प्रदत्तवान् ॥ २९
अद्यप्रभृति युष्माकं धर्मवृद्धिर्भविष्यति । तत्र स्नात्वा नरव्याघ्र रुद्रकोट्यां नरः शुचिः ॥ ३०
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ततो गच्छेत राजेन्द्र संगमं लोकविश्रुतम् ॥ ३१
सरस्वत्यां महापुण्यमुपासीत जनार्दनम् । यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥ ३२
अभिगच्छन्ति राजेन्द्र चैत्रे शुक्लचतुर्दशीम् ॥ तत्र स्नात्वा नरव्याघ्र विन्देद्बहुसुवर्णकम् ॥ ३३
सर्वपापविशुद्धात्मा शिवलोकं च गच्छति । ऋषीणां यत्र सत्राणि समाप्तानि नराधिप ॥
तत्रावसानमासाद्य गोसहस्रफलं लभेत् ॥ ३४

इति श्रीमहापुराणे पाद्म आदिखण्डे पञ्चविंशोऽध्यायः ॥ २५ ॥

श्लोकानामादितः समष्ट्यङ्काः—१२२१

---

अथ षड्विंशोऽध्यायः ।

---

नारद उवाच—

ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् । पापेभ्यो विप्रमुच्यन्ते तद्गतः सर्वजन्तवः ॥ १
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ॥ य एवं सततं ब्रूयात्सर्वपापैः प्रमुच्यते ॥ २
तत्र मासं वसेद्धीरः सरस्वत्यां नराधिप । यत्र ब्रह्मादयो देवा यत्र ब्रह्मर्षिचारणाः ॥ ३
गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते । ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ॥ ४
मनसाऽप्यभिकामस्य कुरुक्षेत्रे युधिष्ठिर । पापानि विप्रणश्यन्ति ब्रह्मलोकं च गच्छति ॥ ५
गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह । राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥ ६
ततो मचक्रुकं राजन्द्वारपालं महाबलम् । यं वै समभिवाद्यैव गोसहस्रफलं लभेत् ॥ ७

---

१ ख. ग. 'ती । रममाणः शिवस्तत्र शिवोद्भेदे च दृश्यते । स्नात्वा तत्र शिवोद्भेदे अ' । २ ख. ञ. शपानं । ३ ख. वृता वै कार्तिके स' । ४ क. पूर्वतरं द्र' ।

ततो गच्छेत धर्मज्ञ विष्णोः स्थानमनुत्तमम् । सततं नाम राजेन्द्र यत्र संनिहितो हरिः ॥ ८
तत्र स्नात्वा च दृष्ट्वा च त्रिलोकप्रभवं हरिम् । अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ९
ततः पारिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् । अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥ १०
पृथिव्यास्तीर्थमासाद्य गोसहस्रफलं लभेत् । ततः शाल्विकिनिं गत्वा तीर्थसेवी नराधिप ॥ ११
दशाश्वमेधिके स्नात्वा तदेव लभते फलम् । सर्पिर्नदीं समासाद्य नागानां तीर्थमुत्तमम् ॥ १२
अग्निष्टोममवाप्नोति नागलोकं च गच्छति । ततो गच्छेत धर्मज्ञ द्वारपालमतर्णकम् ॥
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ १३
ततः पञ्चनदं गत्वा नियतो नियताशनः । कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ॥ १४
अश्विनोस्तीर्थमागम्य रूपवानभिजायते । ततो गच्छेत धर्मज्ञ वाराहं तीर्थमुत्तमम् ॥ १५
विष्णुर्वराहरूपेण पुरा यत्र स्थितोऽभवत् । तत्र स्थित्वा नरव्याघ्र अग्निष्टोमफलं लभेत् ॥ १६
ततो जयिन्यां राजेन्द्र सोमतीर्थं समाविशेत् । स्नात्वा फलमवाप्नोति राजसूयस्य मानवः ॥१७
एकत्वंसे नरः स्नात्वा गोसहस्रफलं लभेत् । कृतशौचं समासाद्य तीर्थसेवी कुरूद्वह ॥
पुण्डरीकमवाप्नोति कृतशौचो भवेच्च सः ॥ १८
ततो मुञ्जविटं नाम महादेवस्य धीमतः । तत्रोष्य रजनीमेकां गाणपत्यमवाप्नुयात् ॥ १९
तत्रैव च महाराज यक्षीं लोकपरिश्रुताम् । स्नात्वाऽभिगम्य राजेन्द्र सर्वकामानवाप्नुयात् ॥ २०
कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ । प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः ॥ २१
संस्पृ(स्तु)ते पुष्कराणां तु स्नात्वाऽर्च्य पितृदेवताः । जामदग्न्येन रामेण आहूते वै महात्मना ॥
कृतकृत्यो भवेद्राजन्नश्वमेधं च विन्दति ॥ २२
ततो रामह्रदं गच्छेत्तीर्थसेवी नराधिप । यत्र रामेण राजेन्द्र तरसा दीप्ततेजसा ॥ २३
क्षत्रमुत्सार्य वीर्येण ह्रदाः पञ्च निवेशिताः । पूरयित्वा नरव्याघ्र रुधिरेणेति नः श्रुतम् ॥ २४
पितरस्तर्पिताः सर्वे तथैव प्रपितामहाः । ततस्ते पितरः प्रीता राममूचुर्महीपते ॥ २५
राम राम महाभाग प्रीताः स्म तव भार्गव । अनया पितृभक्त्या च विक्रमेण च तेऽनघ ॥ २६
वरं वृणीष्व भद्रं ते किमिच्छसि महामते । एवमुक्तः स राजेन्द्र रामः प्रवदतां वरः ॥ २७
अब्रवीत्प्राञ्जलिर्वाक्यं पितॄन्स गगने स्थितान् । भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि ॥ २८
पितृप्रसादादिच्छेयं तपसाऽऽप्यायनं पुनः । यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ॥ २९
ततश्च पापान्मुच्येयं युष्माकं तेजसा ह्यहम् । ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ ३०
एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा । प्रत्यूचुः परमप्रीता रामं तोषसमन्विताः ॥ ३१
तपस्ते वर्धतां भूयः पितृभक्त्या विशेषतः । यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया ॥ ३२
ततश्च पापान्मुक्तस्त्वं निहतास्ते स्वकर्मणा । ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ॥ ३३
ह्रदेष्वेतेषु यः स्नात्वा पितॄन्संतर्पयिष्यति । पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभम् ॥ ३४
ईप्सितं मनसः कामं स्वर्गलोकं च शाश्वतम् । एवं दत्त्वा वरं राजन्रामस्य पितरस्तदा ॥ ३५
आमन्त्र्य भार्गवं प्रीतास्तत्रैवान्तर्दधुस्ततः । एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः ॥ ३६
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः । राममभ्यर्च्य राजेन्द्र लभेद्बहुसुवर्णकम् ॥ ३७

१ क. सपिर्नदीं । ख. सर्पिर्नदीं । २ ट. एकदिवसे । ३ अ. ट. मुञ्जाव° । ४ ख. जपां अ. जयां ट. जायां । ५ ख. °स्मृत्य पुष्कराणां तु स्नात्वाऽप्सु पि° ।

वंशमूलं समासाद्य तीर्थसेवी कुरूद्वह । स्ववंशमुद्धरेद्राजन्स्नात्वा वै वंशमूलके ॥ ३८
कायशोधनमासाद्य तीर्थं भरतसत्तम । शरीरशुद्धिमाप्नोति स्नातस्तस्मिन्न संशयः ॥ ३९
शुद्धदेहस्तु संयाति शुभाँल्लोकाननुत्तमान् । ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यदुर्लभम् ॥ ४०
लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना । लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यविश्रुतम् ॥ ४१
स्नात्वा तीर्थवरे राजँल्लोकानुद्धरते स्वकान् । श्रीतीर्थं च समासाद्य विन्दते श्रियमुत्तमाम् ॥ ४२
कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः । तत्र स्नात्वाऽर्चयित्वा च देवानिह पितॄंस्तथा ॥ ४३
कपिलानां सहस्रस्य फलं विन्दति मानवः । सूर्यतीर्थं समासाद्य स्नात्वा नियतमानसः ॥ ४४
अर्चयित्वा पितॄन्देवानुपवासपरायणः । अग्निष्टोममवाप्नोति सूर्यलोकं च गच्छति ॥ ४५
गवां भवनमासाद्य तीर्थसेवी यथाक्रमम् । तत्राभिषेकं कुर्वाणो गोसहस्रफलं लभेत् ॥ ४६
गङ्गातीर्थं समासाद्य तीर्थसेवी नराधिप(?) । केऽर्यां(?)स्तीर्थे नरः स्नात्वा लभते वीर्यमुत्तमम् ४७
ततो गच्छेत राजेन्द्र द्वारपालं लवर्णकम् । तस्य तीर्थं सरस्वत्यां यथेन्द्रस्य महात्मनः ॥ ४८
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ॥ ४९
ततो गच्छेत धर्मज्ञ ब्रह्मावर्तं नराधिप । ब्रह्मावर्ते नरः स्नात्वा ब्रह्मलोकमवाप्नुयात् ॥ ५०
ततो गच्छेत धर्मज्ञ सुतीर्थकमनुत्तमम् । यत्र संनिहिता नित्यं पितरो दैवतैः सह ॥ ५१
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः । अश्वमेधमवाप्नोति पितृलोकं च गच्छति ॥ ५२
ततोऽन्यतीर्थं धर्मज्ञ समासाद्य यथाक्रमम् । काशीश्वरस्य तीर्थेषु स्नात्वा भरतसत्तम ।
सर्वव्याधिविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ५३
मातृतीर्थं च तत्रैव यत्र स्नातस्य पार्थिव । प्रजा विवर्धते राजन्स्वर्गतिं समवाप्नुयात् ॥ ५४
ततः शीतवनं गच्छेन्नियतो नियताशनः । तीर्थं तत्र महाराज महदन्यत्र दुर्लभम् ॥
पुनाति दर्शनादेव दण्डेनैकं नराधिप ॥ ५५
केशानभ्यर्च्य वै तस्मिन्पूतो भवति भारत । तत्र तीर्थवरं चान्यत्स्नातलोकार्तिहं स्मृतम् ॥ ५६
तत्र विप्रा नरव्याघ्र विद्वांसस्तत्त्वतत्पराः । गतिं गच्छन्ति परमां स्नात्वा भरतसत्तम ॥ ५७
स्वर्णलोमापनयने तीर्थे भरतसत्तम । प्राणायामैर्निर्हरन्ति स्वलोमानि द्विजोत्तमाः ॥ ५८
पूतात्मानश्च राजेन्द्र प्रयान्ति परमां गतिम् । दशाश्वमेधिके चैव तस्मिंस्तीर्थे महीपते ॥ ५९
तत्र स्नात्वा नरव्याघ्र गच्छन्ति परमां गतिम् । ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतम् ॥ ६०
तत्र कृष्णा मृगा राजन्व्याधेन शरपीडिताः । विगाह्य तस्मिन्सरसि मानुषत्वमुपागताः ॥ ६१
तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मचारी समाहितः । सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥ ६२
मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते । आपगा नाम विख्याता नदी सिद्धनिषेविता ॥ ६३
श्यामाकभोजनं तत्र यः प्रयच्छति मानवः । देवान्पितॄन्समुद्दिश्य तस्य धर्मफलं महत् ॥ ६४
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता । तत्र स्नात्वाऽर्चयित्वा च दैवतानि पितॄंस्तथा ६५
उषित्वा रजनीमेकामग्निष्टोमफलं लभेत् । ततो गच्छेत धर्मज्ञ ब्रह्मणः स्थानमुत्तमम् ॥ ६६
ब्रह्मानुस्वरमित्येवं प्रकाशं भुवि भारत । तत्र सप्तर्षिकुण्डेषु स्नातस्य भरतर्षभ ॥ ६७

---

१ अ. कोन्यास्तीर्थे । ट. कन्यास्तीर्थे । २ ट. °जन्दुर्गतिं न च गच्छति । त° । ३ ख. ञ. दण्डैकं च न° । ४ ञ. °शानावप्य वै । ५ तीर्थे नरः स्नात्वा विष्णुलोकं च गच्छति । त° । ६ ट. °म । नखलो° । ७ ख. ञ. °ह्मा °तिष्ठति नित्यं च प्र° ।

केदारे चैव राजेन्द्र कपिलस्य महात्मनः । ब्रह्माणमभिगम्याथ शुचिः प्रयतमानसः ॥ ६८
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते । कपिष्ठलस्य केदारं समासाद्य सुदुर्लभम् ॥ ६९
अन्तर्धानमवाप्नोति तपसा दग्धकिल्बिषः । ततो गच्छेत राजेन्द्र सेवकं लोकविश्रुतम् ॥ ७०
कृष्णपक्षे चतुर्दश्यामभिगम्य वृषध्वजम् । लभते सर्वकामान्हि स्वर्गलोकं च गच्छति ॥ ७१
तिस्रः कोट्यश्च तीर्थानां सेवरे(?)कुरुनन्दन । रुद्रकोट्यां तथा कूपे ह्रदेषु च समन्तकः ॥ ७२
इलास्पदं च तत्रैव तीर्थं भरतसत्तम । तत्र स्नात्वाऽर्चयित्वा च दैवतानि पितॄनपि ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ ७३
किंदाने च नरः स्नात्वा किंयज्ञे च महीपते । अप्रमेयमवाप्नोति दानं यज्ञं तथैव च ॥ ७४
कैलस्यां वार्युपस्पृश्य श्रद्दधानो जितेन्द्रियः । अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ७५
सरकस्य तु पूर्वेण नारदस्य महात्मनः । कुरुश्रेष्ठ शुभं तीर्थं रामजन्मेति विश्रुतम् ॥ ७६
तत्र तीर्थे नरः स्नात्वा प्राणांश्चोत्सृज्य भारत । नारदेनाभ्यनुज्ञातो लोकानाप्नोति दुर्लभान् ॥ ७७
शुक्लपक्षे दशम्यां तु पुण्डरीकं समाविशेत् । तत्र स्नात्वा नरो राजन्पुण्डरीकफलं लभेत् ॥ ७८
ततस्त्रिविष्टपं गच्छेत्त्रिषु लोकेषु विश्रुतम् । तत्र वैतरणी पुण्या नदी पापप्रमोचनी ॥ ७९
तत्र स्नात्वाऽर्चयित्वा च शूलपाणिं वृषध्वजम् । सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् ॥ ८०
ततो गच्छेत राजेन्द्र फलकीवनमुत्तमम् । तत्र देवाः सदा राजन्फलकीवनमाश्रिताः ॥ ८१
तपश्चरन्ति विपुलं बहुवर्षसहस्रकम् । दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः ॥ ८२
तीर्थे च सर्वदेवानां स्नात्वा भरतसत्तम । गोसहस्रस्य राजेन्द्र फलमाप्नोति मानवः ॥ ८३
पाणिख्याते नरः स्नात्वा तर्पयित्वा च देवताः । अवाप्नुते राजसूयमृषिलोकं च गच्छति ॥ ८४
ततो गच्छेत धर्मज्ञ मिश्रकं लोकविश्रुतम् । तत्र तीर्थानि राजेन्द्र मिश्रितानि महात्मना ॥ ८५
व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतम् । सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ॥ ८६
ततो व्यासवनं गच्छेन्नियतो नियताशनः । मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ८७
गत्वा मधुवटीं चापि देव्याः स्थानं नरः शुचिः । तत्र स्नात्वाऽर्चयेद्देवान्पितॄंश्च नियतः शुचिः ॥
स देव्या समनुज्ञातो गोसहस्रफलं लभेत् ॥ ८८
कौशिक्याः संगमे यस्तु दृषद्वत्याश्च भारत । स्नातो वै नियताहारः सर्वपापैः प्रमुच्यते ॥ ८९
ततो व्यासस्थली नाम यत्र व्यासेन धीमता । पुत्रशोकाभितप्तेन देहत्यागाय निश्चयः ॥ ९०
कृतो देवैश्च राजेन्द्र पुनरुत्थापितस्तथा । अभिगम्य स्थलीं तस्य गोसहस्रफलं लभेत् ॥ ९१
ऋणान्तं कूपमासाद्य तिलप्रस्थं प्रदाय च । गच्छेत परमां सिद्धिमृणैर्मुक्तो नरेश्वर ॥
वेदीतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ९२
अहश्च सुदिनश्चैव द्वे तीर्थे तु सुदुर्लभे । तयोः स्नात्वा नरश्रेष्ठ सूर्यलोकमवाप्नुयात् ॥ ९३
मृगधूमं ततो गच्छेत्त्रिषु लोकेषु विश्रुतम् । तत्र रुद्रपदे स्नात्वा समभ्यर्च्य च मानवः ॥ ९४
शूलपाणिं महात्मानमश्वमेधफलं लभेत् । कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ९५

१ ख. म. °न्द्र शिवं त्रैलोक्यवि° । २ ङ. च. ढ. सवकं । झ. ट. सर्वकं । ३ ट. °नां सार्धं च कु° । ४ ख. म. सर्वाहि.कु° । ङ. ढ. सवरं । ५ क. °कोटीत° । ६ ख. म. °दे पञ्चसमन्तके । इ° । ७ ट. कूपस्थं । ८ ख. म. शंकरस्य । ९ क. °लक्षीव° । १० क. °लक्षीव° । ११ ख. म. °णिखाते । १२ म. देवीतीर्थे ।

अथ वामनकं गत्वा त्रिषु लोकेषु विश्रुतम् । तत्र विष्णुपदे स्नात्वा समभ्यर्च्य च वामनम् ॥९६
सर्वपापविशुद्धात्मा विष्णुलोकमवाप्नुयात् । कुलंपुने नरः स्नात्वा पुनाति स्वकुलं नरः ॥ ९७
पवनस्य ह्रदं गत्वा मरुतां तीर्थमुत्तमम् । तत्र स्नात्वा नरव्याघ्र वायुलोके महीयते ॥ ९८
अमराणां ह्रदे स्नात्वा समभ्यर्च्यामराधिपम् । अमराणां प्रभावेन स्वर्गलोके महीयते ॥ ९९
शालिहोत्रस्य राजेन्द्र शालिसूर्ये यथाविधि । स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत् ॥ १००
श्रीकुञ्जं च सरस्वत्यां तीर्थं भरतसत्तम । तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ॥ १०१
ततो नैमिषिकुञ्जं च समासाद्य सुदुर्लभम । ऋषयः किल राजेन्द्र नैमिषेयास्तपोधनाः ॥ १०२
तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रे गताः पुरा । ततः कुञ्जः सरस्वत्यां कृतो भरतसत्तम ॥ १०३
ऋषीणामवकाशः स्याद्यथा तुष्टिकरो महान् । तस्मिन्कुञ्जे नरः स्नात्वा गोसहस्रफलं लभेत् ॥

इति श्रीमहापुराणे पाद्म आदिखण्डे षड्विंशोऽध्यायः ॥ २६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३२५

---

अथ सप्तविंशोऽध्यायः ।

---

नारद उवाच—

ततो गच्छेत धर्मज्ञ कन्यातीर्थमनुत्तमम् । कन्यातीर्थे नरः स्नात्वा अग्निष्टोमफलं लभेत् ॥ १
ततो गच्छेन्नरव्याघ्र ब्रह्मणः स्थानमुत्तमम् । तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः ॥
ब्राह्मणस्तु विशुद्धात्मा गच्छेत परमां गतिम् ॥ २
ततो गच्छेन्नरव्याघ्र सोमतीर्थमनुत्तमम् । तत्र स्नात्वा नरो राजन्सोमलोकमवाप्नुयात् ॥ ३
सप्तसारस्वतं तीर्थं ततो गच्छेन्नराधिप । यत्र मङ्कणकः सिद्धो ब्रह्मर्षिर्लोकविश्रुतः ॥ ४
पुरा मङ्कणको राजन्कुशाग्रेणेति विश्रुतम् । क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत् ॥ ५
स वै शाकरसं दृष्ट्वा हर्षाविष्टो महातपाः । प्रनृत्तः किल विप्रर्षिर्विस्मयोत्फुल्ललोचनः ॥ ६
ततस्तस्मिन्प्रनृत्ते वै स्थावरं जङ्गमं च यत् । प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ॥ ७
ब्रह्मादिभिस्ततो देवैर्ऋषिभिश्च तपोधनैः । विज्ञप्तो वै ऋषेरर्थे महादेवो नराधिप ॥
नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि ॥ ८
ततो देवो मुनिं दृष्ट्वा हर्षाविष्टेन चेतसा । नृत्यन्तमब्रवीच्चैनं सुराणां हितकाम्यया ॥ ९
अहो महर्षे धर्मज्ञ किमर्थं नृत्यते भवान् । हर्षस्थानं किमर्थं वा तवाद्य मुनिपुङ्गव ॥ १०

ऋषिरुवाच—

तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम । किं मे नान्यः समो ब्रह्मन्क्षताच्छाकरसोऽस्रवत् ॥ ११
यं दृष्ट्वा संप्रनृत्तोऽहं हर्षेण महताऽन्वितः । तं प्रहस्याब्रवीद्देव ऋषिं रागेण मोहितम् ॥ १२
अहं तु विस्मयं विप्र न गच्छामीह पश्य माम् । एवमुक्त्वा नरश्रेष्ठ महादेवेन वै तदा ॥ १३
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽनघ । ततो भस्म क्षताद्राजन्निःसृतं हि(हे)मसंनिभम् ॥ १४
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः । नान्यं देवमहं मन्ये रुद्रात्परतरं महत् ॥ १५
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् । त्वया सृष्टमिदं विश्वं त्रैलोक्यं सचराचरम् ॥ १६

---

१ ख. म. ट. °म । कुशाग्रेण स मे ब्रह्मन्कराच्छा° ।

त्वामेव भगवन् सर्वे प्रविशन्ति युगक्षये । देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ॥ १७
त्वयि सर्वेश दृश्यन्ते सुरा ब्रह्मादयोऽनघ । सर्वस्त्वमसि लोकानां कर्ता कारयिताऽन्वहम् ॥ १८
त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः । एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽब्रवीत् ॥ १९
त्वत्प्रसादान्महादेव तपो मे न क्षरेत वै । ततो देवः प्रहृष्टात्मा ब्रह्मर्षिमिदमब्रवीत् ॥ २०
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा । आश्रमे चेह वत्स्यामि त्वया सार्धं महामुने ॥ २१
सप्तसारस्वते स्नात्वा अर्चयिष्यन्ति ये तु माम् । न तेषां दुर्लभं किंचिदिह लोके परत्र वा ॥ २२
गच्छेत्सारस्वतं चापि लोकं नास्त्यत्र संशयः । एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ॥ २३
ततस्त्वौशनसं गच्छेत्रिषु लोकेषु विश्रुतम् । यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ २४
कार्तिकेयश्च भगवांस्त्रिसंध्यं किल भारत । सांनिध्यमकरोत्तत्र भार्गवप्रियकाम्यया ॥ २५
कपालमोचनं तीर्थं सर्वपापप्रणाशनम् । तत्र स्नात्वा नरव्याघ्र सर्वपापैः प्रमुच्यते ॥ २६
अग्नितीर्थं ततो गच्छेत्स्नात्वा च भरतर्षभ । अग्निलोकमवाप्नोति कुलं चैव समुद्धरेत् ॥ २७
विश्वामित्रस्य तत्रैव तीर्थं भरतसत्तम । तत्र स्नात्वा महाराज ब्राह्मण्यमभिजायते ॥ २८
ब्रह्मयोनिं समासाद्य शुचिः प्रयतमानसः । तत्र स्नात्वा नरव्याघ्र ब्रह्मलोकं प्रपद्यते ॥ २९
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः । ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ॥ ३०
पृथूदकमिति ख्यातं कार्तिकेयस्य वै नृप । तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ ३१
अज्ञानाज्ज्ञानतो वाऽपि स्त्रिया वा पुरुषेण वा । यत्किंचिदशुभं कर्म कृतं मानुषबुद्धिना ॥
तत्सर्वं नश्यते तत्र स्नातमात्रस्य भारत ॥ ३२
अश्वमेधफलं चापि लभते स्वर्गमेव च । पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात्सरस्वतीम् ॥ ३३
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् । उत्तमे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ॥ ३४
पृथूदके जप्यपरो नैव संसरणं लभेत् । गीतं सनत्कुमारेण व्यासेन च महात्मना ॥ ३५
वेदे च नियतं राजन्नभिगच्छेत्पृथूदकम् । पृथूदकात्पुण्यतमं नान्यत्तीर्थं नरोत्तम ॥ ३६
एतन्मेध्यं पवित्रं च पावनं च न संशयः । तत्र स्नात्वा दिवं यान्ति अपि पापकृतो जनाः ॥ ३७
पृथूदके नरश्रेष्ठ प्राहुरेवं मनीषिणः । मधुपूरं तु तत्रैव तीर्थं भरतसत्तम ॥
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ३८
ततो गच्छेन्नरश्रेष्ठ तीर्थं देव्या यथाक्रमम् । सरस्वत्यारुणायाश्च संगमं लोकविश्रुतम् ॥
त्रिरात्रोपोषितः स्नात्वा मुच्यते ब्रह्महत्यया ॥ ३९
अग्निष्टोमातिरात्राभ्यां फलं चैव समश्नुते । पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥ ४०
अवकीर्णं च तत्रैव तीर्थं कुरुकुलोद्वह । विप्राणामनुकम्पार्थं दर्भिणा निर्मितं पुरा ॥ ४१
व्रतोपनयनाभ्यां चाप्युपवासेन वा द्विजः । क्रियामन्त्रैश्च संयुक्तो ब्राह्मणः स्यान्न संशयः ॥ ४२
क्रियामन्त्रविहीनोऽपि तत्र स्नात्वा नरर्षभ । चीर्णव्रतो भवेद्विप्रो दृष्टमेतत्पुरातनम् ॥ ४३
समुद्राश्चापि चत्वारः समानीताश्च दर्भिणा । तत्र स्नात्वा नरव्याघ्र न दुर्गतिमवाप्नुयात् ॥ ४४
फलानि गोसहस्राणां चतुर्णां विन्दते च सः । ततो गच्छेत राजेन्द्र तीर्थं शतसहस्रकम् ॥ ४५
साहस्रकं च तत्रैव द्वे तीर्थे लोकविश्रुते । उभयोर्हि नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ४६
दानं वाऽप्युपवासो वा सहस्रगुणितो भवेत् । ततो गच्छेत राजेन्द्र रेणुकातीर्थमुत्तमम् ॥ ४७
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः । सर्वपापविशुद्धात्मा अग्निष्टोमफलं लभेत् ॥ ४८

विमोचन उपस्पृश्य जितमन्युर्जितेन्द्रियः । प्रतिग्रहकृतैः पापैः सर्वैः संपरिमुच्यते ॥ ४९
ततः पञ्चवटं गत्वा ब्रह्मचारी जितेन्द्रियः । पुण्येन महता युक्तः स्वर्गलोके महीयते ॥ ५०
यत्र योगेश्वरः स्थाणुः स्वयमेव वृषध्वजः । तमर्चयित्वा देवेशं गमनादेव सिध्यति ॥ ५१
तैजसं वारुणं तीर्थं दीप्यते स्वेन तेजसा । यत्र ब्रह्मादिभिर्देवैर्ऋषिभिश्च तपोधनैः ॥ ५२
सैनापत्ये च देवानामभिषिक्तो गुहस्तदा । तैजसस्य तु पूर्वेण कुरुतीर्थं कुरूद्वह ॥ ५३
कुरुतीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः । सर्वपापविशुद्धात्मा रुद्रलोकं प्रपद्यते ॥ ५४
स्वर्गद्वारं ततो गच्छेन्नियतो नियताशनः । अग्निष्टोममवाप्नोति ब्रह्मलोकं च गच्छति ॥ ५५
ततो गच्छेदनरकं तीर्थसेवी नराधिप । तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥ ५६
तत्र ब्रह्मा स्वयं नित्यं देवैः सह महीपते । अध्यास्ते पुरुषव्याघ्र नारायणपुरोगमैः ॥ ५७
सांनिध्यं चैव राजेन्द्र रुद्रपत्न्यां कुरूद्वह । अभिगम्य तु तां देवीं न दुर्गतिमवाप्नुयात् ॥ ५८
तत्रैव च महाराज विश्वेश्वरमुमापतिम् । अभिगम्य महादेवं मुच्यते सर्वकिल्बिषैः ॥ ५९
नारायणं चाभिगम्य पद्मनाभमरिंदम । शोभमानो महाराज विष्णुलोकं प्रपद्यते ॥ ६०
तीर्थेषु सर्वदेवानां स्नातमात्रो नराधिप । सर्वदुःखपरित्यक्तो द्योतते शिववत्सदा ॥ ६१
ततस्त्वस्थिपुरं गच्छेत्तीर्थसेवी नराधिप । पावनं तीर्थमासाद्य तर्पयेत्पितृदेवताः ॥
अग्निष्टोमस्य यज्ञस्य फलमाप्नोति भारत ॥ ६२
गङ्गाह्रदश्च तत्रैव कूपश्च भरतर्षभ । तिस्रः कोट्यस्तु तीर्थानां तस्मिन्कूपे महीपते ॥
तत्र स्नात्वा नरो राजन्ब्रह्मलोकं प्रपद्यते ॥ ६३
आपगायां नरः स्नात्वा अर्चयित्वा महेश्वरम् । गतिं परामवाप्नोति कुलं चैव समुद्धरेत् ॥ ६४
ततः स्थाणुवटं गच्छेत्त्रिषु लोकेषु विश्रुतम् । तत्र स्नात्वा स्थितो रात्रिं रुद्रलोकमवाप्नुयात् ॥ ६५
बदरीणां वनं गच्छेद्वसिष्ठस्याऽऽश्रमं ततः । बदरी भक्ष्यते यत्र त्रिरात्रोपोषितैर्नरैः ॥ ६६
सम्यग्द्वादश वर्षाणि बदरीं भक्षयेत्तु यः । त्रिरात्रोपोषितश्चैव भवेत्तुल्यो नराधिप ॥ ६७
इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप । अहोरात्रोपवासेन स्वर्गलोके महीयते ॥ ६८
एकरात्रं समासाद्य एकरात्रोषितो नरः । नियतः सत्यवादी च ब्रह्मलोके महीयते ॥ ६९
तथा गच्छेच्च राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् । आदित्यस्याऽऽश्रमो यत्र तेजोराशेर्महात्मनः ॥ ७०
तस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा विभावसुम् । आदित्यलोकं व्रजति कुलं चैव समुद्धरेत् ॥ ७१
सोमतीर्थे नरः स्नात्वा तीर्थसेवी कुरूद्वह । सोमलोकमवाप्नोति नरो नास्त्यत्र संशयः ॥ ७२
ततो गच्छेत धर्मज्ञ दधीचस्य नराधिप । तीर्थं पुण्यतमं राजन्पावनं लोकविश्रुतम् ॥ ७३
यत्र सारस्वतो जातः सिद्धिराद्तपसो निधिः । तस्मिंस्तीर्थे नरः स्नात्वा वाजपेयफलं लभेत् ॥
सारस्वतीं गतिं चैव लभते नात्र संशयः । ततः कन्याश्रमं गत्वा नियतो ब्रह्मचर्यया ॥ ७५
त्रिरात्रमुषितो राजन्नुपवासपरायणः । लभेत्कन्याशतं दिव्यं ब्रह्मलोकं च गच्छति ॥ ७६
ततो गच्छेत धर्मज्ञ तीर्थं संनिहितामपि । यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥
मासि मासि समेष्यन्ति पुण्येन महताऽन्विताः ॥ ७७
संनिहितायामुपस्पृश्य राहुग्रस्ते दिवाकरे । अश्वमेधशतं तेन इष्टं भवति शाश्वतम् ॥ ७८

१ ट. नवतुल्यो । २ क. 'तः सो द्विरास्तप' । ट. 'तः सोऽग्निरास्तप' । ३ क. मतिं । ४ ख. ञ. 'हितीम'
५ ख. ञ. 'हितामु' ।

पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि च । उदपानाश्च विप्राश्च पुण्यान्यायतनानि च ॥ ७९
निःसंशयममावास्यां समेष्यन्ति नराधिप । मासि मासि नरव्याघ्र संनिहितायां जनेश्वर ॥ ८०
तीर्थसंनयनादेव संनिहिता भुवि विश्रुता । तत्र स्नात्वा च पीत्वा च स्वर्गलोके महीयते ॥ ८१
अमावास्यां तथा चैव राहुग्रस्ते दिवाकरे । यः श्राद्धं कुरुते मर्त्यस्तस्य पुण्यफलं शृणु ॥ ८२
अश्वमेधसहस्रस्य सम्यगिष्टस्य यत्फलम् । स्नात एव तदाप्नोति कृत्वा श्राद्धं च मानवः ॥ ८३
यत्किंचिद्दुष्कृतं कर्म स्त्रिया वा पुरुषस्य वा । स्नातमात्रस्य तत्सर्वं नश्यते नात्र संशयः ॥
पद्मवर्णेन यानेन ब्रह्मलोकं स गच्छति ॥ ८४
अभिवाद्य ततो गत्वा द्वारपालं मॅचकुकम् । गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम ॥ ८५
तत्र स्नायीत धर्मज्ञ ब्रह्मचारी समाहितः । राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः ॥ ८६
पृथिव्यां नैमिषं पुण्यमन्तरिक्षे च पुष्करम् । त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ॥ ८७
पांशवोऽपि कुरुक्षेत्रे वायुनाऽतिसमीरिताः । अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥ ८८
दक्षिणेन सरस्वत्या उत्तरेण सरस्वतीम् । ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ॥ ८९
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् । अप्येवं वाचमुत्सृज्य स्वर्गलोके महीयते ॥ ९०
ब्रह्मवेद्यां कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम् । तस्मिन्वसन्ति ये राजन्न ते शोच्याः कथंचन ॥ ९१
तरण्डकारण्डकयोर्यदन्तरं रामह्रदानां च मॅचकुकस्य च ।
एतत्कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते ॥ ९२

इति श्रीमहापुराणे पाद्मे आदिखण्डे सप्तविंशोऽध्यायः ॥ २७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४१७

अथाष्टाविंशोऽध्यायः ।

नारद उवाच—

ततो गच्छेत धर्मज्ञ धर्मतीर्थं पुरातनम् । यत्र धर्मो महाभागस्तप्तवानुत्तमं तपः ॥ १
तेन तीर्थं कृतं पुण्यं स्वेन नाम्ना च चिह्नितम् । तत्र स्नात्वा नरो राजन्धर्मशीलः समाहितः ॥ २
आसप्तमं कुलं चैव पुनीते नात्र संशयः । ततो गच्छेत धर्मज्ञ कलापवनमुत्तमम् ॥ ३
कृच्छ्रेण महता गत्वा तत्र स्नात्वा समाहितः । अग्निष्टोममवाप्नोति विष्णुलोकं च गच्छति ॥ ४
सौगन्धिकं वनं राजंस्ततो गच्छेत मानवः । यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ ५
सिद्धचारणगन्धर्वाः किंनराः समहोरगाः । तद्वनं प्रविशन्नेव सर्वपापैः प्रमुच्यते ॥ ६
ततो हि सा सरिच्छ्रेष्ठा नदीनामुत्तमा नदी । प्लक्षादेवी स्मृता राजन्महापुण्या सरस्वती ॥ ७
तत्राभिषेकं कुर्वीत वल्मीकान्निःसृते जले । अर्चयित्वा पितॄन्देवानश्वमेधफलं लभेत् ॥ ८
ईशानाध्युषितं नाम तत्र तीर्थं सुदुर्लभम् । षड्गुणं याति पांतेषु वल्मीकादिति निश्चयः ॥ ९
कपिलानां सहस्रं च वाजिमेधं च विन्दति । तत्र स्नात्वा नरव्याघ्र दृष्टमेतत्पुरातनैः ॥ १०
सुगन्धां शतकुम्भां च पञ्चयज्ञं च भारत । अभिगम्य नरश्रेष्ठ स्वर्गलोके महीयते ॥ ११

१ ख. अ. संनिहित्यां । २ ख. म. संहिता । ३ ट. °लं त्वरुतक° । ४ ख. अ. मतर्णक° । ५ क. °प्येकां वा° । ६ क. [illegible] मतर्णकस्य । ८ ट. °ञ कारापं° । ९ ख. अ. °शान्यां धूपितं । १० ख. अ. पानीयं ।

त्रिशूलपातं तत्रैव तीर्थमासाद्य दुर्लभम् । तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ १२
गाणपत्यं च लभते देहं त्यक्त्वा न संशयः । ततो राजगृहं गच्छेद्देव्याः स्थानं सुदुर्लभम् ॥ १३
शाकंभरीति विख्याता त्रिषु लोकेषु विश्रुता । दिव्यं वर्षसहस्रं हि शाकेन किल भारत ॥ १४
आहारं सा कृतवती मासि मासि नराधिप । ऋषयोऽभ्यागतास्तत्र देव्या भक्तास्तपोधनाः ॥ १५
आतिथ्यं च कृतं तेषां शाकेन किल भारत । ततः शाकंभरीत्येवं नाम तस्याः प्रतिष्ठितम् ॥ १६
शाकंभरीं समासाद्य ब्रह्मचारी समाहितः । त्रिरात्रमुषितः शाकं भक्षयेन्नियतः शुचिः ॥ १७
शाकाहारस्य यत्सम्यग्वर्षैर्द्वादशभिः फलम् । तत्फलं तस्य भवति देव्याश्छन्देन भारत ॥ १८
ततो गच्छेत्सुवर्णाख्यं त्रिषु लोकेषु विश्रुतं । यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा ॥ १९
वरांश्च सुबहूँल्लेभे देवैरपि सुदुर्लभान् । उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत ॥ २०
अपि चाऽऽत्मा प्रियतरो लोके कृष्ण भविष्यति । त्वन्मुखं च जगत्कृत्स्नं भविष्यति न संशयः ॥ २१
तत्राभिगम्य राजेन्द्र पूजयित्वा वृषध्वजम् । अश्वमेधमवाप्नोति गाणपत्यं च विन्दति ॥ २२
धूमवन्तीं ततो गच्छेत्त्रिरात्रमुषितो नरः । मनसा प्रार्थितान्कामाँल्लभते नात्र संशयः ॥ २३
देव्यास्तु दक्षिणार्धेन रथावर्तो नराधिप । तत्राऽऽगत्य तु धर्मज्ञ श्रद्दधानो जितेन्द्रियः ॥ २४
महादेवप्रसादाद्धि गच्छेत परमां गतिम् । प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ॥ २५
धारां नाम महाप्राज्ञ सर्वपापप्रणाशिनीम् । तत्र स्नात्वा नरव्याघ्र न शोचति नराधिप ॥ २६
ततो गच्छेन्नरव्याघ्र नमस्कृत्य महागिरिम् । स्वर्गद्वारेण तत्तुल्यं गङ्गाद्वारं न संशयः ॥ २७
तत्राभिषेकं कुर्वीत कोटितीर्थे समाहितः । लभते पुण्डरीकं तु कुलं चैव समुद्धरेत् ॥ २८
उष्यैकां रजनीं तत्र गोसहस्रफलं लभेत् । सप्तगङ्गे त्रिगङ्गे च शक्रावर्ते च तर्पयन् ॥
देवान्पितॄंश्च विधिवत्पुण्यलोके महीयते ॥ २९
ततः कनखले स्नात्वा त्रिरात्रोपोषितो नरः । अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ३०
कपिलावटं तु गच्छेत तीर्थसेवी नराधिप । उष्यैकां रजनीं तत्र गोसहस्रफलं लभेत् ॥ ३१
नागराजस्य राजेन्द्र कपिलस्य महात्मनः । तीर्थं कुरुवरश्रेष्ठ सर्वलोकेषु विश्रुतम् ॥ ३२
तत्राभिषेकं कुर्वीत नागतीर्थे नराधिप । कपिलानां सहस्रस्य फलं प्राप्नोति मानवः ॥ ३३
ततो ललितिकां गच्छेच्छन्तनोस्तीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥ ३४

इति श्रीमहापुराणे पाद्म आदिखण्डेऽष्टाविंशोऽध्यायः ॥ २८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४५१

---

अथैकोनत्रिंशोऽध्यायः ।

---

नारद उवाच—

ततो गच्छेत राजेन्द्र कालिन्दीतीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥ १
पुष्करे तु कुरुक्षेत्रे ब्रह्मावर्ते पृथूदके । अविमुक्ते सुवर्णाख्ये यत्फलं नो लभेन्नरः ॥ २
तत्फलं समवाप्नोति यमुनायां नरोत्तम । स्वर्गभोगेऽतिरागो वै येषां मनसि वर्तते ॥ ३

---

१ ट °व्या वाक्येन । २ ख. ञ. वेद्यास्तु । ३ ख. ञ. उपावृत्तो । ४ ख. ञ. °प । यात्रां गृह्णीत ध° । ५ ख. ललितकां । ञ. ललितकं ।

यमुनायां विशेषेण स्नानदानेन सत्तम । आयुरारोग्यसंपत्तौ रूपयौवनतागुणे ॥ ४
येषां मनोरथस्तैस्तु न त्याज्यं यामुनं जलम् । ये बिभ्यति नरकादेर्दारिद्र्याद्ये त्रसन्ति च ॥
सर्वथा तैः प्रयत्नेन तत्र कार्यं निमज्जनम् ॥ ५
दारिद्र्यपापदौर्भाग्यपङ्कप्रक्षालनाय वै । ऋते वै यामुनं तोयं न चान्योऽस्ति युधिष्ठिर ॥ ६
श्रद्धाहीनानि कर्माणि मतान्यर्धफलानि वै । फलं ददाति संपूर्णं यामुनं स्नानमात्रतः ॥ ७
अकामो वा सकामो वा यामुने सलिले नृप । इहामुत्र च दुःखानि मज्जनान्नैव पश्यति ॥ ८
पक्षद्वये यथा चन्द्रः क्षीयते वर्धते यथा । पातकं नश्यते तत्र स्नानात्पुण्यं विवर्धते ॥ ९
यथाऽब्धौ सुखमायान्ति रत्नानि विविधानि च । आयुर्वित्तं कलत्राणि संपदः संभवन्ति च ॥ १०
कामधेनुर्यथा कामं चिन्तामणिर्विचिन्तितम् । ददाति यमुनास्नानं तद्वत्सर्वं मनोरथम् ॥ ११
कृते तपः परं ज्ञानं त्रेतायां यजनं तथा । द्वापरे च कलौ दानं कालिन्दी सर्वदा शुभा ॥ १२
सर्वेषां सर्ववर्णानामाश्रमाणां च भूपते । यामुने मज्जनं धर्मं धाराभिः खलु वर्षति ॥ १३
अस्मिन्वै भारते वर्षे कर्मभूमौ विशेषतः । कालिन्द्यस्नायिनां नृणां निष्फलं जन्म कीर्तितम् १४
नैश्वर्यं गगने यद्वच्चान्द्रेऽमायां तु मण्डले । तद्वन्न भाति सत्कर्म यमुनामज्जनं विना ॥ १५
व्रतैर्दानैस्तपोभिश्च न तथा प्रीयते हरिः । तत्र मज्जनमात्रेण यथा प्रीणाति केशवः ॥ १६
न समं विद्यते किंचित्तेजः सौरेण तेजसा । तद्वन्न यमुनास्नानसमानाः क्रतुजाः क्रियाः ॥ १७
प्रीतये वासुदेवस्य सर्वपापापनुत्तये । कालिन्द्या मज्जनं कुर्यात्स्वर्गलोकाय मानवः ॥ १८
किं रक्षितेन देहेन सुपुष्टेन बलीयसा । अध्रुवेण सुदेहेन यमुनामज्जनं विना ॥ १९
अस्थिस्तम्भं स्नायुबन्धं मांसक्षतजलेपनम् । चर्मावनद्धं दुर्गन्धपूर्णं मूत्रपुरीषयोः ॥ २०
जराशोकविपद्ग्रस्तं रोगमन्दिरमातुरम् । रागमूलमनित्यं च सर्वदोषसमाश्रयम् ॥ २१
परोपतापपापार्तिपरद्रोहपरेर्षिकम् । लोलुपं पिशुनं क्रूरं कृतघ्नं क्षणिकं तथा ॥ २२
निष्ठुरं दुर्धरं दुष्टं दोषत्रयविदूषितम् । अशुचि चापि दुर्गन्धि तापत्रयविमोहितम् ॥ २३
निसर्गतोऽधर्मरतं तृष्णाशतसमाकुलम् । कामक्रोधमहालोभनरकद्वारसंस्थितम् ॥ २४
कृमिवर्चस्तु भस्मादिपरिणामगुणावहम् । ईदृक्शरीरं व्यर्थं हि यमुनामज्जनं विना ॥ २५
बुद्बुदा इव तोयेषु प्रत्यण्डा इव पक्षिषु । जायन्ते मरणायैव यमुनास्नानवर्जिताः ॥ २६
अवैष्णवो हतो विप्रो हतं श्राद्धमपिण्डितम् । अब्रह्मण्यं हतं क्षत्रमनाचारहतं कुलम् ॥ २७
सदम्भश्च हतो धर्मः क्रोधेनैव हतं तपः । अदृढं च हतं ज्ञानं प्रमादेन हतं श्रुतम् ॥ २८
परभक्त्या हता नारी ब्रह्मचारी मदाद्धतः । अदीप्तेऽग्नौ हतो होमो हता भक्तिः समायिका ॥ २९
उपजीव्या हता कन्या स्वार्थे पाकक्रिया हता । शूद्रभिक्षो हतो योगः कृपणस्य हतं धनम् ॥ ३०
अनभ्यासहता विद्या हतो बोधो विरोधकृत् । जीवनार्थं हतं तीर्थं जीवनार्थं हतं व्रतम् ॥ ३१
असत्या च हता वाणी तथा पैशुन्यवादिनी । षट्कर्णगो हतो मन्त्रो व्यग्रचित्तो हतो जपः ॥ ३२
हतमश्रोत्रिये दानं हतो लोकश्च नास्तिकः । अश्रद्धया हतं सर्वं यत्कृतं पारलौकिकम् ॥ ३३
इहलोको हतो नृणां दरिद्राणां यथा नृप । मनुष्याणां हतं जन्म कालिन्दीमज्जनं विना ॥ ३४
उपपातकसर्वाणि पातकानि महान्ति च । भस्मी भवन्ति सर्वाणि यमुनामज्जनान्नृप ॥ ३५

१ ट. °म् । विस्तीर्णे गगनं यद्वच्चन्द्रमुडुडुमण्डलम् । त° । २ क. °वेणाऽऽशुदे° । ३ ट. °जसंयुतम् । ४ ट. °म । रजस्वल° । ५ अ. °मपिण्डि° । ६ ट. गर्भभक्त्या । ७ ट. °ही तया हतः । ८ ख. अ. °हभक्षो हतो ।

वेपन्ते सर्वपापानि यमुनायां गते नरे । नाशके सर्वपापानां यदि स्नास्यन्ति वारिणि ॥ ३६
पावका इव दीप्यन्ते यमुनायां नरोत्तमाः । विमुक्ताः सर्वपापेभ्यो मेघेभ्य इव चन्द्रमाः ॥ ३७
आर्द्रशुष्कलघुस्थूलं वाङ्मनःकर्मभिः कृतम् । तत्र स्नानं दहेत्पापं पावकः समिधो यथा ॥ ३८
प्रमादिकं च यत्पापं ज्ञानाज्ञानकृतं च यत् । स्नानमात्रेण नश्येत यमुनायां नृपोत्तम ॥ ३९
निष्पापास्त्रिदिवं यान्ति पापिष्ठा यान्ति शुद्धताम् । संदेहो नात्र कर्तव्यः स्नाने वै यमुनाजले ४०
सर्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृप । सर्वेषां सर्वदा देवी यमुना पापनाशिका ॥ ४१
एष एव परो मन्त्र एतच्च परमं तपः । प्रायश्चित्तं परं चैव यमुनास्नानमुत्तमम् ॥ ४२
नृणां जन्मान्तराभ्यासात्कालिन्दीमज्जने मतिः । अध्यात्मज्ञानकौशल्यं जन्माभ्यासाद्यथा नृप ४३
संसारकर्दमालेपप्रक्षालनविशारदम् । पावनं पावनानां च यमुनास्नानमुत्तमम् ॥ ४४
स्नातास्तत्र च ये राजन्सर्वकामफलप्रदे । शुभांश्च भुञ्जते भोगांश्चन्द्रसूर्यग्रहोपमान् ॥ ४५
यमुना मोक्षदा प्रोक्ता मथुरासंगता यदि । मथुरायां च कालिन्दी पुण्याधिकविवर्धिनी ॥ ४६
अन्यत्र यमुना पुण्या महापातकहारिणी । विष्णुभक्तिप्रदा देवी मथुरासंगता भवेत् ॥ ४७
भक्तिभावेन संयुक्तः कालिन्द्यां यदि मज्जयेत् । कल्पकोटिसहस्राणि वसते संनिधौ हरेः ॥ ४८
मुक्तिं प्रयान्ति मनुजा नूनं सांख्येन वर्जिताः । पितरस्तस्य तृप्यन्ति तृप्ताः कल्पशतैर्दिवि ॥ ४९
ये पिबन्ति नरा राजन्यमुनासलिलं शुभम् । पञ्चगव्यसहस्रैस्तु सेवितैः किं प्रयोजनम् ॥ ५०
कोटितीर्थसहस्रैस्तु सेवितैः किं प्रयोजनम् । तत्र दानं च होमश्च सर्वं कोटिगुणं भवेत् ॥ ५१

इति श्रीमहापुराणे पाद्म आदिखण्डे ऊनत्रिंशोऽध्यायः ॥ २९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५०२

अथ त्रिंशोऽध्यायः ।

नारद उवाच—

अत्र ते वर्णयिष्यामि इतिहासं पुरातनं । पुरा कृतयुगे राजन्निषधे नगरे वरे ॥ १
आसीद्वैश्यः कुबेराभो नामतो हेमकुण्डलः । कुलीनः सत्क्रियो देवद्विजपावकपूजकः ॥ २
कृषिवाणिज्यकर्ताऽसौ बहुधा क्रयविक्रयी । गोघोटकमहिष्यादिपशुपोषणतत्परः ॥ ३
पयोदधीनि तक्राणि गोमयानि तृणानि च । काष्ठानि फलमूलानि लवणार्द्रादिपिप्पलीम् ॥ ४
धान्यानि शाकतैलानि वस्त्राणि विविधानि च । धातूनिक्षुविकारांश्च विक्रीणीते स सर्वदा ॥ ५
इत्थं नानाविधैर्वैश्य उपायैरपरैस्तथा । उपार्जयामास सदा अष्टौ हाटककोटयः ॥ ६
एवं महाधनः सोऽथ हाऽऽकर्णपलितोऽभवत् । पश्चाद्विचार्य संसारक्षणिकत्वं स्वचेतसि ॥ ७
तद्धनस्य षडंशेन धर्मकार्यं चकार सः । विष्णोरायतनं चक्रे गृहं चक्रे शिवस्य च ॥ ८
तडागं खानयामास विपुलं सागरोपमम् । वाप्यश्च पुष्करिण्यश्च बहुधा तेन कारिताः ॥ ९
वटाश्वत्थाम्रकङ्कोल्लजम्बूनिम्बादिकाननम् । आरोपितं स्वसत्त्वेन तथा पुष्पवनं शुभम् ॥ १०
उदयास्तमनं यावदन्नपानं चकार सः । पुराद्बहिश्चतुर्दिक्षु प्रपां चक्रेऽतिशोभनाम् ॥ ११
पुराणेषु प्रसिद्धानि यानि दानानि भूपते । ददौ तानि स धर्मात्मा नित्यं दानपरस्तदा ॥ १२
यावज्जीवकृते पापे प्रायश्चित्तमथाकरोत् । देवपूजापरो नित्यं नित्यं चातिथिपूजकः ॥ १३
तस्येत्थं वर्तमानस्य संजातौ द्वौ सुतौ नृप । तौ सुप्रसिद्धनामानौ श्रीकुण्डलविकुण्डलौ ॥ १४

तयोर्मूर्ध्नि गृहं त्यक्त्वा जगाम तपसे वनम् । तत्राऽऽराध्य परं देवं गोविन्दं वरदं प्रभुम् ॥ १५
तपःक्लिष्टशरीरोऽसौ वासुदेवमनाः सदा । प्राप्तः स वैष्णवं लोकं यत्र गत्वा न शोचति ॥ १६
अथ तस्य सुतौ राजन्महामानसमन्वितौ । तरुणौ रूपसंपन्नौ धनगर्वेण गर्वितौ ॥ १७
दुःशीलौ व्यसनासक्तौ धर्मकर्माग्रदर्शकौ । न वाक्यं चाऽऽगतौ मातुर्वृद्धानां वचनं तथा ॥ १८
कुमार्गगौ दुरात्मानौ पितृमित्रनिषेधकौ । अधर्मनिरतौ दुष्टौ परदाराभिगामिनौ ॥ १९
गीतवादित्रनिरतौ वीणावेणुविनोदिनौ । वारस्त्रीशतसंयुक्तौ गायन्तौ चेरतुस्तदा ॥ २०
चाटुकारजनैर्युक्तौ बिम्बोष्ठीषु विशारदौ । सुवेषौ चारुवसनौ चारुचन्दनरूषितौ ॥ २१
तथा सुगन्धमाल्याढ्यौ कस्तूरीलक्ष्मलक्षितौ । नानालंकारशोभाढ्यौ मौक्तिकाहारहारिणौ ॥२२
गजवाजिरथौघेन क्रीडन्तौ तावितस्ततः । मधुपानसमायुक्तौ परस्त्रीरतिमोहितौ ॥ २३
नाशयन्तौ पितृद्रव्यं सहस्रं ददतुः शतम् । तस्थतुः स्वगृहे रम्ये नित्यं भोगपरायणौ ॥ २४
इत्थं तु तद्धनं ताभ्यां विनियुक्तमसद्व्ययैः । वारस्त्रीविटशैलूषमल्लचारणबन्दिषु ॥ २५
अपात्रे तद्धनं दत्तं क्षिप्तं बीजमिवोषरे । न सत्पात्रे च तद्दत्तं न ब्राह्मणमुखे हुतम् ॥ २६
नार्चितो भूतभृद्विष्णुः सर्वपापप्रणाशनः । उभयोरेव तद्द्रव्यमचिरेण क्षयं ययौ ॥ २७
ततस्तौ दुःखमापन्नौ कार्पण्यं परमं गतौ । शोचमानौ तु मुह्यन्तौ क्षुत्पीडादुःखपीडितौ ॥ २८
तयोस्तु तिष्ठतोर्गेहे नास्ति यद्भुज्यते तदा । स्वजनैर्बान्धवैः सर्वैः सेवकैरुपजीविभिः ॥ २९
द्रव्याभावे परित्यक्तौ चिन्त्यमानौ ततः पुरे । पश्चाच्चौर्यं समारब्धं ताभ्यां च नगरे नृप ॥ ३०
राजतो लोकतो भीतौ स्वपुरान्निःसृतौ तदा । चक्रतुर्वनवासं तौ सर्वेषामुपपीडितौ ॥ ३१
जघ्नतुः सततं मूढौ शितैर्बाणैर्विषार्पितैः । नानापक्षिवराहांश्च हरिणान्रोहितांस्तथा ॥ ३२
शशकाञ्शल्लकान्गोधाञ्श्वापदांश्चेतरान्बहून् । महाबलौ भिल्लसङ्गावाखेटकभुजौ सदा ॥ ३३
एवं मांसमयाहारौ पापाहारौ परंतप । कदाचिद्भूधरं प्राप्तो ह्येकोऽन्यश्च वनं गतः ॥ ३४
शार्दूलेन हतो ज्येष्ठः कनिष्ठः सर्पदंशितः । एकस्मिन्दिवसे राजन्पापिष्ठौ निधनं गतौ ॥ ३५
यमदूतैस्ततो बद्ध्वा पाशैर्नीतौ यमालयम् । गत्वाऽभिजगदुः सर्वे ते दूताः पापिनावुभौ ॥ ३६
धर्मराज नरावेतावानीतौ तव शासनात् । आज्ञां देहि स्वभृत्येषु प्रसीद करवाम किम् ॥ ३७
आलोच्य चित्रगुप्तेन तदा दूताञ्जगौ यमः । एकस्तु नीयतां वीर निरयं तीव्रवेदनम् ॥ ३८
अपरः स्थाप्यतां स्वर्गे यत्र भोगा अनुत्तमाः । कृतान्ताज्ञां ततः श्रुत्वा दूतैश्च क्षिप्रकारिभिः ३९
निक्षिप्तो रौरवे घोरे यो ज्येष्ठो हि नराधिप । तेषां दूतवरः कश्चिदुवाच मधुरं वचः ॥ ४०
विकुण्डल मया सार्धमेहि स्वर्गं ददामि ते । भुङ्क्ष्व भोगान्सुदिव्यांस्त्वमर्जितान्स्वेन कर्मणा ४१

इति श्रीमहापुराणे पाद्म आदिखण्डे त्रिंशोऽध्यायः ॥ ३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५४३

---

अथैकत्रिंशोऽध्यायः ।

---

नारद उवाच—

ततो हृष्टमनाः सोऽथ दूतं पप्रच्छ तं पथि । संदेहं हृदि कृत्वा तु विस्मयं परमं गतः ॥
विचारयन्हृदि स्वर्गः कस्य हेतोः फलं मम ॥ १

१ ख. ग. 'र्मादिदर्शकौ' । २ ट. 'क्तौ विटगोष्ठीवि' । ३ ख. ग. 'णैर्बलापि' । ट. 'णैर्बिडालकान् । ना' ।

विकुण्डल उवाच—
हे दूतवर पृच्छामि संशयं त्वामहं परम् । आवां जातौ कुले तुल्ये तुल्यं कर्म तथा कृतम् ॥ २
दुर्मृत्युरपि तुल्योऽभूत्तुल्यो दृष्टो यमस्तथा । कथं स नरके क्षिप्तस्तुल्यकर्मा ममाग्रजः ॥ ३
ममाभवत्कथं नाकमिति मे छिन्धि संशयम् । देवदूत न पश्यामि मम स्वर्गस्य कारणम् ॥ ४
देवदूत उवाच—
माता पिता सुतो जाया स्वसा भ्राता विकुण्डल । जन्महेतोरियं संज्ञा जन्तोः कर्मोपभुक्तये ॥ ५
एकस्मिन्पादपे यद्वच्छकुनानां समागमः । यद्यत्समीहितं कर्म कुरुते पूर्वभावितः ॥ ६
तस्य तस्य फलं भुङ्क्ते कर्मणः पुरुषः सदा । सत्यं वदामि ते प्रीत्या नरैः कर्म शुभाशुभम् ॥ ७
स्वकृतं भुज्यते वैश्य काले काले पुनः पुनः । एकः करोति कर्माणि एकस्तत्फलमश्नुते ॥ ८
अन्यो न लिप्यते वैश्य कर्मणाऽन्यस्य कुत्रचित् । अपतन्नरके पापैस्तव भ्राता सुदारुणैः ॥
त्वं च धर्मेण धर्मज्ञ स्वर्गं प्राप्नोषि शाश्वतम् ॥ ९
विकुण्डल उवाच—
आबाल्यान्मम पापेषु न पुण्येषु रतं मनः । अस्मिञ्जन्मनि हे दूत दुष्कृतं हि कृतं मया ॥ १०
देवदूत न जानामि सुकृतं कर्म चाऽऽत्मनः । यदि जानासि मत्पुण्यं तन्मे त्वं कृपया वद ॥ ११
देवदूत उवाच—
शृणु वैश्य प्रवक्ष्यामि यत्त्वया पुण्यमर्जितम् । जानामि तदहं सर्वं न त्वं वेत्सि सुनिश्चितम् ॥ १२
हरिमित्रसुतो विप्रः स्वमित्रो वेदपारगः । आसीत्तस्याऽऽश्रमः पुण्यो यमुनादक्षिणे तटे ॥ १३
तेन सख्यं वने तस्मिंस्तव जातं विशां वर । तत्सङ्गेन त्वया स्नानं माघमासद्वयं तथा ॥ १४
कालिन्दीपुण्यपानीये सर्वपापहरे वरे । तत्तीर्थे लोकविख्याते नाम्ना पापप्रणाशने ॥ १५
एकेन सर्वपापेभ्यो विमुक्तस्त्वं विशांपते । द्वितीये माघपुण्येन प्राप्तः स्वर्गस्त्वयाऽनघ ॥ १६
त्वं तत्पुण्यप्रभावेन मोदस्व सततं दिवि । नरकेषु तव भ्राता महतीं नाम यातनाम् ॥ १७
छिद्यमानोऽसिपत्रैश्च भिद्यमानस्तु मुद्गरैः । चूर्ण्यमानः शिलापृष्ठे तप्ताङ्गारेषु भर्जितः ॥ १८
इति दूतवचः श्रुत्वा भ्रातृदुःखेन दुःखितः । पुलकाङ्कितसर्वाङ्गो दीनोऽसौ विनयान्वितः ॥ १९
उवाच तं देवदूतं मधुरं निपुणं वचः । मैत्री सप्तपदी साधो सतां भवति सत्फला ॥ २०
मित्रभावं विचिन्त्य त्वं मामुपाकर्तुमर्हसि । त्वत्तो हि श्रोतुमिच्छामि सर्वज्ञस्त्वं मतो मम ॥ २१
यमलोकं न पश्यन्ति कर्मणा केन मानवाः । गच्छन्ति निरयं येन तन्मे त्वं कृपया वद ॥ २२
देवदूत उवाच—
सम्यक्पृष्टं त्वया वैश्य नष्टपापोऽसि साम्प्रतम् । विशुद्धे हृदये पुंसां बुद्धिः श्रेयसि जायते ॥ २३
यद्यप्यवसरो नास्ति मम सेवापरस्य वै । तथाऽपि च तव स्नेहात्प्रवक्ष्यामि यथामति ॥ २४
कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । परपीडां न कुर्वन्ति न ते यान्ति यमालयम् ॥ २५
न वेदैर्न च दानैश्च न तपोभिर्न चाध्वरैः । कथंचित्स्वर्गतिं यान्ति पुरुषाः प्राणिहिंसकाः ॥ २६
अहिंसा परमो धर्मो ह्यहिंसैव परं तपः । अहिंसा परमं दानमित्याहुर्मुनयः सदा ॥ २७
मशकान्सरीसृपान्दंशान्यूकाद्यान्मानवांस्तथा । आत्मौपम्येन पश्यन्ति मानवा ये दयालवः ॥ २८
तप्ताङ्गारमयस्कीलं मार्दं प्रेततरङ्गिणीम् । दुर्गतिं नैव गच्छन्ति कृतान्तस्य च ते नराः ॥ २९

१ क. °मः । योऽपापो यो हि यत्कर्म ।

भूतानि येऽत्र हिंसन्ति जलस्थलचराणि च । जीवनार्थं च ते यान्ति कालसूत्रं च दुर्गतिम् ॥ ३०
श्वमांसभोजनास्तत्र पूयशोणितपायिनः । मज्जन्तश्च वसापङ्के दष्टाः कीटैरधोमुखैः ॥ ३१
परस्परं च खादन्तो ध्वान्ते चान्योन्यघातिनः । वसन्ति कल्पानेकांस्ते रुदन्तो दारुणं रवम्[१]॥३२
नरकान्निःसृता वैश्य स्थावराः स्युश्चिरं तु ते । ततो गच्छन्ति ते क्रूरास्तिर्यग्योनिशतेषु च ॥३३
पश्चाद्भवन्ति जातान्धाः काणाः कुब्जाश्च पङ्गवः । दरिद्राश्चाङ्गहीनाश्च मानुषाः प्राणिहिंसकाः ३४
तस्माद्वैश्य परत्रेह कर्मणा मनसा गिरा । लोकद्वयसुखप्रेप्सुर्धर्मज्ञो न तदाचरेत् ॥ ३५
लोकद्वये न विन्दन्ति सुखानि प्राणिहिंसकाः । ये न हिंसन्ति भूतानि न ते बिभ्यति कुत्रचित् ३६
प्रविशन्ति यथा नद्यः समुद्रमृजुवक्रयाः । सर्वे धर्मा अहिंसायां प्रविशन्ति तथा दृढम् ॥ ३७
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । अभयं येन भूतेभ्यो दत्तमत्र विशां वर ॥ ३८
ये नियोगांश्च शास्त्रोक्तान्धर्माधर्मविमिश्रितान् । पालयन्तीह ये वैश्य न ते यान्ति यमालयम् ॥३९
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । स्वधर्मनिरताः सर्वे नाकपृष्ठे वसन्ति ते ॥ ४०
यथोक्तचारिणः सर्वे वर्णाश्रमसमन्विताः । नरा जितेन्द्रिया यान्ति ब्रह्मलोकं तु शाश्वतम् ॥४१
इष्टापूर्तरता ये च पञ्चयज्ञरताश्च ये । दयान्विताश्च ये नित्यं नेक्षन्ते ते यमालयम् ॥ ४२
इन्द्रियार्थनिवृत्ता ये समर्था वेदवादिनः । अग्निपूजारता नित्यं ते विप्राः स्वर्गगामिनः ॥ ४३
अदीनवदनाः शूराः शत्रुभिः परिवेष्टिताः । आहवेषु विपन्ना ये तेषां मार्गो दिवाकरः ॥ ४४
अनाथस्त्रीद्विजार्थे च शरणागतपालने । प्राणांस्त्यजन्ति ये वैश्य न च्यवन्ति दिवस्तु ते ॥ ४५
पङ्ग्वन्धबालवृद्धांश्च रोग्यनाथदरिद्रितान् । ये पुष्णन्ति सदा वैश्य ते मोदन्ते सदा दिवि ॥४६
गां दृष्ट्वा पङ्कनिर्मग्नां रोगमग्नं द्विजं तथा । उद्धरन्ति नरा ये च तेषां लोकोऽश्वमेधिनाम् ॥ ४७
गोग्रासं ये प्रयच्छन्ति ये शुश्रूषन्ति गाः सदा । ये नाऽऽरोहन्ति गोपृष्ठे ते स्वर्लोकनिवासिनः ४८
गर्तमात्रं तु ये चक्रुर्यत्र गौस्तृषा भवेत् । यमलोकमदृष्ट्वैव ते यान्ति स्वर्गतिं नराः ॥ ४९
अग्निपूजादेवपूजागुरुपूजारताश्च ये । द्विजपूजारता नित्यं ते विप्राः स्वर्गगामिनः ॥ ५०
वापीकूपतडागादौ धर्मस्यान्तो न विद्यते । पिबन्ति स्वेच्छया यत्र जलस्थलचराः सदा ॥ ५१
नित्यं दानपरः सोऽत्र कथ्यते विबुधैरपि । यथा यथा च पानीयं पिबन्ति प्राणिनो भृशम् ॥५२
तथा तथाऽक्षयः स्वर्गो धर्मबुद्ध्या विशां वर । प्राणिनां जीवनं वारि प्राणा वारिणि संस्थिताः ५३
नित्यस्नानेन पूयन्ते येऽपि पातकिनो नराः । प्रातःस्नानं हरेद्वैश्य बाह्याभ्यन्तरजं मलम् ॥ ५४
प्रातःस्नानेन निष्पापो नरो न निरयं व्रजेत् । स्नानं विना तु यो भुङ्क्ते मलाशी स सदा नरः ५५
अस्नायी[२] यो नरस्तस्य विमुखाः पितृदेवताः । स्नानहीनो नरः पापः स्नानहीनो नरोऽशुचिः ॥
अस्नायी नरकं भुक्त्वा पुंस्कीटादिषु[३] जायते ॥ ५६
ये पुनः स्रोतसि स्नानमाचरन्तीह पर्वणि । ते नैव नरकं यान्ति न जायन्ते कुयोनिषु ॥ ५७
दुःस्वप्ना दुष्टचिन्ताश्च वन्ध्या भवन्ति सर्वदा । प्रातःस्नानेन शुद्धानां पुरुषाणां विशां वर ॥५८
तिलांश्च तिलपात्रं च तिलप्रस्थं यथाविधि । दत्त्वा प्रेतपतेर्भूमौ[४] न व्रजन्ति नराः क्वचित् ॥ ५९
पृथिवीं काञ्चनं गां च दत्त्वा दानानि षोडश । गत्वा न विनिवर्तन्ते स्वर्गलोकाद्विकुण्डल ॥६०
पुण्यासु तिथिषु प्राज्ञो व्यतीपाते च संक्रमे । स्नात्वा दत्त्वा च यत्किंचिन्नैव मज्जति दुर्गतौ ॥६१

---

१ ख. ग. °म् । कृमियोनिशतं गत्वा स्था° । २ क. °यी नोप्रतस्त° । ३ ख. ग. पुष्कसादिषु । ट. पुरीषादिषु । ४ ट. °तर्गतिं भूयो न ।

नवाऽऽक्रामन्ति दातारो दारुणं रौरवं पथम् । इह लोके न जायन्ते कुले धनविवर्जिते ॥ ६२
सत्यवादी सदामौनी प्रियवादी च यो नरः । अक्रोधनः समाचारो नातिवाद्यनसूयकः ॥ ६३
सदा दाक्षिण्यसंपन्नः सदा भूतदयान्वितः । गोप्ता च परमर्माणां वक्ता परगुणस्य च ॥ ६४
परस्वं तृणमात्रं च मनसाऽपि न यो हरेत् । न पश्यन्ति विशां श्रेष्ठ ह्येते नरकयातनाम् ॥ ६५
परापवादी पाखण्डः पापेभ्योऽपि मतोऽधिकः । पच्यते नरके तावद्यावदाभूतसंप्लवम् ॥ ६६
वक्ता परुषवाक्यानां मन्तव्यो नरकागतः । संदेहो न विशां श्रेष्ठ पुनर्याति च दुर्गतिम् ॥ ६७
न तीर्थैर्न तपोभिश्च कृतघ्नस्य च निष्कृतिः । सहते यातनां घोरां स नरो नरके चिरम् ॥ ६८
पृथिव्यां यानि तीर्थानि तेषु मज्जति यो नरः । जितेन्द्रियो जिताहारो न स याति यमालयम्६९
न तीर्थे पातकं कुर्यान्न च तीर्थोपजीवनम् । तीर्थे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः ॥७०
दुर्जरं पातकं तीर्थे दुर्जरश्च प्रतिग्रहः । तीर्थे च दुर्जरं सर्वमेतत्किंनरकं व्रजेत् ॥ ७१
सकृद्गङ्गाम्भसि स्नातः पूतो गाङ्गेयवारिणा । न नरो नरकं याति अपि पातकराशिकृत् ॥ ७२
व्रतदानतपोयज्ञाः पवित्राणीतराणि च । गङ्गाबिन्द्वभिषिक्तस्य न समा इति नः श्रुतम् ॥ ७३
अन्यतीर्थसमां गङ्गां यो ब्रवीति नराधमः । स याति नरकं वैश्य दारुणं रौरवं महत् ॥ ७४
धर्मद्रवं ह्यपां बीजं वैकुण्ठचरणच्युतम् । धृतं मूर्ध्नि महेशेन यद्गाङ्गममलं जलम् ॥ ७५
तद्ब्रह्मैव न संदेहो निर्गुणं प्रकृतेः परम् । तेन किं समतां गच्छेदपि ब्रह्माण्डगोचरे ॥ ७६
गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । नरो न नरकं याति किं तया सदृशं भवेत् ॥ ७७
नान्येन दह्यते सद्यः क्रिया नरकदायिनी । गङ्गाम्भसि प्रयत्नेन स्नातव्यं तेन मानवैः ॥ ७८
प्रतिग्रहनिवृत्तो यः प्रतिग्रहक्षमोऽपि सन् । स द्विजो द्योतते वैश्य तारारूपश्चिरं दिवि ॥ ७९
गामुद्धरन्ति ये पङ्काद्ये रक्षन्ति च रोगिणः । म्रियन्ते गोगृहे ये च तेषां नभसि तारकाः ॥ ८०
यमलोकं न पश्यन्ति प्राणायामपरायणाः । अपि दुष्कृतकर्माणस्तैरेव हतकिल्बिषाः ॥ ८१
दिवसे दिवसे वैश्य प्राणायामास्तु षोडश । अपि ब्रह्महणं[1] साक्षात्पुनन्त्यहरहः कृताः ॥ ८२
तपांसि यानि तप्यन्ते व्रतानि नियमाश्च ये । गोसहस्रप्रदानं च प्राणायामस्तु तत्समः ॥ ८३
अब्बिन्दुं यः कुशाग्रेण मासे मासे नरः पिबेत् । संवत्सरशतं साग्रं प्राणायामस्तु तत्समः ॥ ८४
पातकं तु महद्यच्च तथा क्षुद्रोपपातकम् । प्राणायामैः क्षणात्सर्वं भस्मसात्कुरुते नरः ॥ ८५
मातृवत्परदारान्ये मन्यन्ते वै नरोत्तमाः । न ते यान्ति नरश्रेष्ठ कदाचिद्यमयातनाम् ॥ ८६
मनसाऽपि परेषां यः कलत्राणि न सेवते । सह लोकद्वयेनास्ति तेन वैश्य धरा धृता ॥ ८७
तस्माद्धर्मान्वितैस्त्याज्यं परदारोपसेवनम् । नयन्ति परदारास्तु नरकानेकविंशतिम् ॥ ८८
लोभो न जायते येषां परदारेषु मानसे । ते यान्ति देवलोकं तु न यमं वैश्यसत्तम ॥ ८९
शश्वत्क्रोधनिदानेषु यः क्रोधेन न जीयते । जितस्वर्गः स मन्तव्यः पुरुषोऽक्रोधनो भुवि ॥ ९०
मातरं पितरं पुत्र आराधयति देववत् । अप्राप्ते वार्धके काले न याति च यमालयम् ॥ ९१
पितुश्चाधिकभावेन येऽर्चयन्ति गुरुं नराः । भवन्त्यतिथयो लोके ब्रह्मणस्ते विशां वर ॥ ९२
इह चैव स्त्रियो धन्याः शीलस्य परिरक्षणात् । शीलभङ्गे च नारीणां यमलोकः सुदारुणः ॥ ९३
शीलं रक्ष्यं सदा स्त्रीभिर्दुष्टसङ्गविवर्जनात् । शीलेन हि परः स्वर्गः स्त्रीणां वैश्य न संशयः ॥ ९४
शूद्रस्य पाकयज्ञेन निषिद्धाचरणेन च । दुर्गतिर्विहिता वैश्य तस्य सा नारकी गतिः ॥ ९५

---

१ ठ. भातृहणं ।

विचारयन्ति ये शास्त्रं वेदाभ्यासरताश्च ये । पुराणं संहितां ये च श्रावयन्ति पठन्ति च ॥ ९६
व्याकुर्वन्ति स्मृतिं ये च ये धर्मप्रतिबोधकाः । वेदान्तेषु निषण्णा ये तैरियं जगती धृता ॥ ९७
तत्तदभ्यासमाहात्म्यैः सर्वे ते हतकिल्बिषाः । गच्छन्ति ब्रह्मणो लोकं यत्र मोहो न विद्यते॥९८
ज्ञानमज्ञाय यो दद्याद्वेदशास्त्रसमुद्भवम् । अपि वेदास्तमर्चन्ति भवबन्धविदारणम् ॥ ९९
श्रूयतामद्भुतं ह्येतद्रहस्यं वैश्यसत्तम । संमतं धर्मराजस्य सर्वलोकामृतप्रदम् ॥ १००
न यमं यमलोकं च न भूतान्घोरदर्शनान् । पश्यन्ति वैष्णवा नूनं सत्यं सत्यं मयोदितम् ॥१०१
प्राहास्मान्यमुनाभ्राता सदैव हि पुनः पुनः । भवद्भिर्वैष्णवास्त्याज्या न ते स्युर्मम गोचराः ॥ १०२
स्मरन्ति ये सकृद्भूताः प्रसङ्गेनापि केशवम् । ते विध्वस्ताखिलाघौघा यान्ति विष्णोः परं पदम् ॥१०३
दुराचारो दुष्कृतोऽपि सदाचाररतोऽपि यः । भवद्भिः स सदा त्याज्यो विष्णुं च भजते नरः ॥ १०४
वैष्णवो यद्गृहे भुङ्क्ते येषां वैष्णवसंगतिः । तेऽपि वः परिवार्याः स्युस्तत्सङ्गहतकिल्बिषाः ॥१०५
इत्थं वैश्यानुशास्त्यस्मान्देवो दण्डधरः सदा । अतो नो वैष्णवा यान्ति राजधानीं यमस्य तु ॥ १०६
विष्णुभक्तिं विना नॄणां पापिष्ठानां विशां वर । उपायो नास्ति नास्त्यन्यः संतर्तुं नरकाम्बुधिम् १०७
श्वपाकमपि नेक्षेत लोकेष्टं वैश्य वैष्णवम् । वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम् ॥ १०८

एतावताऽलमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम् ॥ १०९

नरके तु चिरं मग्नाः पूर्वे ये च कुलद्वये । तदैव यान्ति ते स्वर्गं यदाऽर्चन्ति मुदा हरिम् ॥ ११०
विष्णुभक्तस्य ये दासा वैष्णवान्नभुजश्च ये । ते तु क्रतुभुजां वैश्य गतिं यान्ति निराकुलाः ॥१११
प्रार्थयेद्वैष्णवस्यान्नं प्रयत्नेन विचक्षणः । सर्वपापविशुद्ध्यर्थं तदभावे जलं पिबेत् ॥ ११२
गोविन्देति जपन्मन्त्रं कुत्रचिन्म्रियते यदि । स नरो न यमं पश्येत्तं च नेक्षामहे वयम् ॥ ११३
साङ्गं समुद्रं सध्यानं सऋषिच्छन्ददैवतम् । दीक्षया विधिवन्मन्त्रं जपेद्वै द्वादशाक्षरम् ॥ ११४
अष्टाक्षरेण मन्त्रेण ये जपन्ति नरोत्तमाः । तान्दृष्ट्वा ब्रह्महा शुध्येद्भ्राजते विष्णुवत्स्वयम् ॥ ११५
शङ्खिनश्चक्रिणो भूत्वा ब्रह्माभ्यन्तरगामिनः । वसन्ति वैष्णवे लोके विष्णुरूपेण ते नराः॥११६
हृदि सूर्ये जले वाऽथ प्रतिमास्थण्डिलेऽपि च । समभ्यर्च्य हरिं यान्ति नरास्तद्वैष्णवं पदम् ॥ ११७
अथवा सर्वदा पूज्यो वासुदेवो मुमुक्षुभिः । शालग्रामे मणौ चक्रे वज्रकीटविनिर्मिते ॥ ११८
अधिष्ठानं हि तद्विष्णोः सर्वपापप्रणाशनम् । सर्वपुण्यप्रदं वैश्य सर्वेषामपि मुक्तिदम् ॥ ११९
यः पूजयेद्धरिं चक्रे शालग्रामशिलोद्भवे । राजसूयसहस्रेण तेनेष्टं प्रतिवासरे ॥ १२०
सदा नमन्ति वेदान्ता ब्रह्म निर्वाणमच्युतम् । तत्प्रसादो भवेन्नॄणां शालग्रामशिलार्चनात् ॥ १२१
महाकाष्ठस्थितो वह्निर्मुखस्थाने प्रकाशते । यथा तथा हरिर्व्यापी शालग्रामे प्रकाशते ॥ १२२
अपि पापसमाचाराः कर्मण्यनधिकारिणः । शालग्रामार्चका वैश्य नैव यान्ति यमालयम् ॥ १२३
न तथा रमते लक्ष्म्यां न तथा स्वपुरे हरिः । शालग्रामशिलाचक्रे यथा स रमते सदा ॥ १२४
अग्निहोत्रं कृतं तेन दत्ता पृथ्वी ससागरा । येनार्चितो हरिश्चक्रे शालग्रामशिलोद्भवे ॥ १२५
शिला द्वादश भो वैश्य शालग्रामशिलोद्भवाः । विधिवत्पूजिता येन तस्य पुण्यं वदामि ते १२६
कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः । यत्स्याद्द्वादशकालेषु दिनेनैकेन तद्भवेत् ॥ १२७
यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतम् । उषित्वा स हरेर्लोके चक्रवर्तीह जायते ॥ १२८

कामैः क्रोधैः प्रलोभैश्च व्याप्तो योऽत्र नराधमः । सोऽपि याति हरेर्लोकं शालग्रामशिलार्चनात् १२९
यः पूजयेच्च गोविन्दं शालग्रामे मुदा नरः । आभूतसंप्लवं यावन्न स प्रच्यवते दिवः ॥ १३०
विना तीर्थैर्विना दानैर्विना यज्ञैर्विना मतिम् । मुक्तिं यान्ति नरा वैश्य शालग्रामशिलार्चनात् १३१
नरकं गर्भवासं च तिर्यक्त्वं कृमियोनिताम् । न याति वैश्य पापोऽपि शालग्रामशिलार्चकः १३२
दीक्षाविधानमन्त्रज्ञो यश्चक्रे बलिमाहरेत् । गङ्गागोदावरीरेवा नद्यो मुक्तिप्रदाश्च याः ॥
निवसन्तीह ताः सर्वाः शालग्रामशिलाजले ॥ १३३
नैवेद्यैर्विविधैः पुष्पैर्धूपदीपैर्विलेपनैः ॥ गीतवादित्रस्तोत्राद्यैः शालग्रामशिलार्चनम् ॥ १३४
कुरुते मानवो यस्तु कलौ भक्तिपरायणः । कल्पकोटिसहस्राणि रमते संनिधौ हरेः ॥ १३५
लिङ्गैस्तु कोटिभिर्दृष्टैर्यत्फलं पूजितैस्तुतैः । शालग्रामशिलायास्तु ह्येकेनाह्ना ह तत्फलम् ॥ १३६
सकृदभ्यर्चिते लिङ्गे शालग्रामशिलोद्भवे । मुक्तिं प्रयान्ति मनुजा नूनं सांख्येन वर्जिताः ॥ १३७
शालग्रामशिलारूपी यत्र तिष्ठति केशवः । तत्र देवाः सुरा यक्षा भुवनानि चतुर्दश ॥ १३८
शालग्रामशिलायां तु यः श्राद्धं कुरुते नरः । पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पशतं दिवि॥ १३९
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् । पञ्चगव्यसहस्रैस्तु सेवितैः किं प्रयोजनम् ॥ १४०
कोटितीर्थसहस्रैस्तु सेवितैः किं प्रयोजनं । तोयं यदि पिबेत्पुण्यं शालग्रामशिलाङ्गजम् ॥ १४१
शालग्रामशिला यत्र तत्तीर्थं योजनत्रयम् । तत्र दानं च होमं च सर्वं कोटिगुणं भवेत् ॥ १४२
शालग्रामशिलातोयं यः पिबेद्बिन्दुना समम् ॥ मातृस्तन्यं पुनर्नैव स पिबेद्विष्णुभाङ्नरः ॥ १४३
शालग्रामसमीपे तु क्रोशमात्रं समन्ततः । कीटकोऽपि मृतो याति वैकुण्ठं भुवनं परम् ॥ १४४
शालग्रामशिलाचक्रं यो दद्याद्दानमुत्तमम् । भूचक्रं तेन दत्तं स्यात्सशैलवनकाननम् ॥ १४५
शालग्रामशिलाया यो मूल्यमुत्पादयेन्नरः । विक्रेता चानुमन्ता यः परीक्षासु च मोदते ॥ १४६
ते सर्वे नरकं यान्ति यावदाभूतसंप्लवम् । अतस्तं वर्जयेद्वैश्य चक्रस्य क्रयविक्रयम् ॥ १४७
बहुनोक्तेन किं वैश्य कर्तव्यं पापभीरुणा । स्मरणं वासुदेवस्य सर्वपापहरं हरेः ॥ १४८
तपस्तप्त्वा नरो घोरमरण्ये नियतेन्द्रियः ॥ यत्फलं समवाप्नोति तन्नत्वा गरुडध्वजम् ॥ १४९
कृत्वाऽपि बहुशः पापं नरो मोहसमन्वितः । न याति नरकं नत्वा सर्वपापहरं हरिं ॥ १५०
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च । तानि सर्वाण्यवाप्नोति विष्णोर्नामानुकीर्तनात् १५१
देवं शार्ङ्गधरं विष्णुं ये प्रपन्नाः परायणाः । न तेषां यमसालोक्यं न ते स्युर्नरकौकसः ॥ १५२
वैष्णवः पुरुषो वैश्य शिवनिन्दां करोति यः । न विन्देद्वैष्णवं लोकं स याति नरकं महत् १५३
उपोष्यैकादशीमेकां प्रसङ्गेनापि मानवः । न याति यातनां यामीमिति लोमशतः श्रुतम् ॥ १५४
नेदृशं पावनं किंचित्त्रिषु लोकेषु विद्यते । उभयं पद्मनाभस्य दिनं पातकनाशनम् ॥ १५५
तावत्पापानि देहेऽस्मिन्वसन्तीह विशां वर । यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम् ॥ १५६
अश्वमेधसहस्राणि राजसूयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥ १५७
एकादशेन्द्रियैः पापं यत्कृतं वैश्य मानवैः । एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥ १५८
एकादशीसमं किंचित्पुण्यं लोके न विद्यते । व्याजेनापि कृता यैस्तु वशं यान्ति न भास्करेः १५९
स्वर्गमोक्षप्रदा ह्येषा शरीरारोग्यदायिनी । सुकलत्रप्रदा ह्येषा जीवत्पुत्रप्रदायिनी ॥ १६०
न गङ्गा न गया वैश्य न काशी न च पुष्करम् । न चापि वैष्णवं क्षेत्रं तुल्यं हरिदिनेन तु॥ १६१

१ ख. ञ. व्रतैः । २ ख. ञ. °मीमेति लोकं स वैष्णवम् ।

यमुना चन्द्रभागा न तुल्या हरिदिनेन तु। अनायासेन येनात्र प्राप्यते वैष्णवं पदम् ॥ १६२
रात्रौ जागरणं कृत्वा समुपोष्य हरेर्दिने। दश वै पैतृके पक्षे मातृके दश पूर्वजाः ॥
प्रियाया दश ये वैश्य तानुद्धरति निश्चितम् ॥ १६३
द्वंद्वसङ्गं परित्यक्त्वा नागारिकृतकेतनाः। स्रग्विणः पीतवसनाः प्रयान्ति हरिमन्दिरम् ॥ १६४
बालत्वे यौवने वाऽपि वार्धके वा विशां वर। उपोष्यैकादशीं नूनं नैति पापोऽतिदुर्गतिम् १६५
उपोष्येह त्रिरात्राणि कृत्वा वा तीर्थमज्जनम्। दत्त्वा हेमतिलान्गाश्च स्वर्गं यान्तीह मानवाः १६६
तीर्थे स्नान्ति न ये वैश्य न दत्तं काञ्चनं च यैः। नैव तप्तं तपः किंचित्ते स्युः सर्वत्र दुःखिताः १६७
संक्षिप्य कथितं धर्म नरकस्य निरूपणम्। अद्रोहः सर्वभूतेषु वाङ्मनःकायकर्मभिः ॥ १६८
इन्द्रियाणां निरोधश्च दानं च हरिसेवनम्। वर्णाश्रमक्रियाणां च पालनं विधितः सदा ॥ १६९
स्वर्गार्थी सर्वदा वैश्य तपो दानं न कीर्तयेत्। यथाशक्ति तथा दद्यादात्मनो हितकाम्यया १७०
उपानद्वस्त्रदत्तानि पत्रं मूलं फलं जलम्। अवन्ध्यं दिवसं कार्यं दरिद्रेणापि वैश्यक ॥ १७१
इह लोके परे चैव न दत्तं नोपतिष्ठते। दातारो नैव पश्यन्ति तां तां वै यमयातनाम् ॥
दीर्घायुषो धनाढ्याश्च भवन्तीह पुनः पुनः ॥ १७२
किमत्र बहुनोक्तेन यान्त्यधर्मेण दुर्गतिम्। आरोहन्ति दिवं धर्मैर्नराः सर्वत्र सर्वदा ॥ १७३
तेन बालत्वमारभ्य कर्तव्यो धर्मसंग्रहः। इति ते कथितं सर्वं किमन्यच्छ्रोतुमिच्छसि ॥ १७४

वैश्य उवाच—

श्रुत्वा त्वद्वचनं सौम्य प्रसन्नं चित्तमेव मे। गङ्गोदं पापहं सद्यः पापहारि सतां वचः ॥ १७५
उपकर्तुं प्रियं वक्तुं गुणो नैसर्गिकः सताम्। शीतांशुः क्रियते केन शीतलोऽमृतमण्डलः ॥ १७६
देवदूत ततो ब्रूहि कारुण्यान्मम पृच्छतः। नरकान्निष्कृतिः सद्यो भ्रातुर्मे जायते कथम् ॥ १७७
इति तस्य वचः श्रुत्वा देवदूतो जगाद ह। ध्यानं दृष्ट्वा क्षणं ध्यात्वा तन्मैत्रीरज्जुबन्धनः ॥ १७८
यत्ते वैश्याष्टमे पुण्यं त्वया जन्मनि संचितम्। तद्भ्रात्रे दीयतां सर्वं स्वर्गं तस्य यदीच्छसि ॥ १७९

विकुण्डल उवाच—

किं तत्पुण्यं कथं जातं किं जन्म च पुरातनम्। तत्सर्वं कथ्यतां दूत ततो दास्यामि सत्वरम् १८०

देवदूत उवाच—

शृणु वैश्य प्रवक्ष्यामि तत्पुण्यं च सहेतुकम्। पुरा मधुवने पुण्य ऋषिरासीच्च शाकुनिः ॥ १८१
तपोध्ययनसंपन्नस्तेजसा ब्रह्मणा समः। जज्ञिरे तस्य रेवत्यां नव पुत्रा ग्रहा इव ॥ १८२
ध्रुवः शाली बुधस्तारो ज्योतिष्मानुत पञ्चमः। अग्निहोत्ररता ह्येते गृहधर्मेषु रेमिरे ॥ १८३
निर्मोहो जितकामश्च ध्यानेकाष्ठो गुणाधिकः। एते गृहविरक्ताश्च चत्वारो द्विजसूनवः ॥ १८४
चतुर्थाश्रममापन्नाः सर्वकामविनिस्पृहाः। ग्रामैकवासिनः सर्वे निःसङ्गा निष्परिग्रहाः ॥ १८५
निराशा निष्प्रयत्नाश्च समलोष्टाश्मकाञ्चनाः। येन केनचिदाच्छन्ना येन केनचिदासि(शि)ताः १८६
सायंगृहास्तथा नित्यं नित्यं ध्यानपरायणाः। जितनिद्रा जिताहारा वातशीतसहिष्णवः ॥ १८७
पश्यन्तो विष्णुरूपेण जगत्सर्वं चराचरम्। चरन्ति लीलया पृथ्वीं तेऽन्योन्यं मौनमास्थिताः १८८
न कुर्वन्ति क्रियां कांचिद्देहार्थमात्रं हि योगिनः। दृष्टज्ञाना असंदेहाश्छिद्विकारविशारदाः ॥ १८९
एवं ते तत्र विप्रस्य पूर्वमष्टमजन्मनि। तिष्ठतो मध्यदेशेषु पुत्रदारकुटुम्बिनः ॥ १९०

१ ट. °त्वा अब्रवीद्वाक्यमुत्तमम्। य°। २ ख. ग. °नकोशो गु°। ३ ट. °दल्पमा°।

गेहं तावकमाजग्मुर्मध्याह्ने क्षुत्पिपासिताः । वैश्वदेवान्तरे काले त्वया दृष्टा गृहाङ्गणे ॥ १९१
सगद्गदं साश्रुनेत्रं सहर्षं च ससंभ्रमम् । दण्डवत्प्रणिपातेन बहुमानपुरःसरम् ॥ १९२
प्रणम्य चरणैर्मूर्ध्ना कृत्वा पाणियुगाञ्जलिम् । तदाऽभिनन्दिताः सर्वे त्वया सूनृतया गिरा ॥ १९३
अद्य मे सफलं जन्म जीवितं सफलं तथा । अद्य विष्णुः प्रसन्नो मे सनाथोऽद्यास्मि पावनः ॥ १९४
धन्योऽस्म्यद्य गृहं धन्यं धन्या अद्य कुटुम्बिनः । ममाद्य पितरो धन्या धन्या गावः श्रुतं धनम् ॥
सदृष्टौ भवतां पादौ तापत्रयहरौ मया । भवतां दर्शनं यस्माद्धन्यस्यैव हरेरिव ॥ १९६
एवं संपूज्य कृत्वा तु पादप्रक्षालनं तथा । धृतं मूर्ध्नि विशां श्रेष्ठ श्रद्धया परया तदा ॥ १९७
यत्र पादोदकं वैश्य श्रद्धया शिरसा धृतम् । गन्धपुष्पाक्षतैर्धूपैर्दीपैर्भावपुरःसरम् ॥ १९८
संपूज्य सुन्दरान्नेन भोजिता यतयस्तथा । तृप्ताः परमहंसास्ते विश्रान्ता मन्दिरे निशि ॥ १९९
ध्यायन्तश्च परं ब्रह्म यज्ज्योतिर्ज्योतिषां मतम् । तेषामातिथ्यजं पुण्यं जातं यत्ते विशां वर ॥ २००
न तद्वक्त्रसहस्रेण वक्तुं शक्नोम्यहं खलु । भूतानां प्राणिनः श्रेष्ठाः प्राणिनां मतिजीविनः ॥
मतिमत्सु नराः श्रेष्ठा नरेषु ब्रह्मजातयः ॥ २०१
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः । कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥ २०२
अत एव सुपूज्यास्ते तस्माच्छ्रेष्ठा जगत्त्रये । तत्संगतिर्विशां श्रेष्ठ महापातकनाशिनी ॥ २०३
विश्रान्ता गृहिणो गेहे संतुष्टा ब्रह्मवेदिनः । आजन्मसंचितं पापं नाशयन्तीक्षणेन वै ॥ २०४
संचितं यद्गृहस्थस्य पापमामरणान्तिकम् । विनिर्दहति तत्सर्वमेकरात्रोषितो यतिः ॥ २०५
स्वभ्रात्रे देहि तत्पुण्यं नरकाद्येन मुच्यते । इति दूतवचः श्रुत्वा ददौ पुण्यं स सत्वरम् ॥
हृष्टेन चेतसा भ्राता निरयात्सोऽपिनिर्गतः ॥ २०६
देवैस्तौ पुष्पवर्षेण पूजितौ च दिवं गतौ । ताभ्यां संपूजितः सम्यग्गतो दूतो यथागतः ॥ २०७

अखिलभुवनबोधं देवदूतस्य वाक्यं निगमवचनतुल्यं वैश्यपुत्रो निशम्य ।
स्वकृतसुकृतदानाद्भ्रातरं तारयित्वा सुरपतिवरलोकं तेन सार्धं जगाम ॥ २०८

इतिहासमिमं राजन्यः पठेच्छृणुयादपि । स गोसहस्रदानस्य विशोको लभते फलम् ॥ २०९

इति श्रीमहापुराणे पाद्म आदिखण्ड एकत्रिंशोऽध्यायः ॥ ३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७५२

---

अथ द्वात्रिंशोऽध्यायः ।

---

नारद उवाच—

ततो गच्छेत राजेन्द्र सुगन्धं लोकविश्रुतम् । सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते ॥ १
रुद्रावर्तं ततो गच्छेत्तीर्थसेवी नराधिप । तत्र स्नात्वा नरो राजन्स्वर्गलोके महीयते ॥ २
गङ्गायाश्च नरश्रेष्ठ सरस्वत्याश्च संगमे । स्नातोऽश्वमेधमाप्नोति स्वर्गलोकं च गच्छति ॥ ३
तत्र कर्णह्रदे स्नात्वा देवमभ्यर्च्य शंकरम् । न दुर्गतिमवाप्नोति स्वर्गलोकं च गच्छति ॥ ४
ततः कुब्जाम्रकं गच्छेत्तीर्थसेवी यथाक्रमम् । गोसहस्रमवाप्नोति स्वर्गलोकं च गच्छति ॥ ५
अरुन्धतीवटं गच्छेत्तीर्थसेवी नराधिप । सामुद्रकमुपस्पृश्य त्रिरात्रोपोषितो नरः ॥
गोसहस्रफलं विन्द्यात्स्वर्गलोकं च गच्छति ॥ ६

---

१ म. °या भवता जलम् । ग.° । २ ख. भ. °नः । यतयश्च सु° ।

ब्रह्मावर्तं ततो गच्छेद्ब्रह्मचारी समाहितः । अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ७
यमुनाप्रभवं गच्छेत्समुपस्पृश्य यामुनम् । अश्वमेधफलं लब्ध्वा ब्रह्मलोके महीयते ॥ ८
दर्वीसंक्रमणं प्राप्य तीर्थं त्रैलोक्यविश्रुतम् । अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ९
सिन्धोश्च प्रभवं गत्वा सिद्धगन्धर्वसेवितम् । तत्रोष्य रजनीः पञ्च दद्याद्बहुसुवर्णकम् ॥ १०
अथ देवीं समासाद्य नरः परमदुर्गमम् । अश्वमेधमवाप्नोति गच्छेच्चौशनसीं गतिम् ॥ ११
ऋषिकुल्यां समासाद्य वसिष्ठं चैव भारत । वसिष्ठं समतिक्रम्य सर्वे वर्णा द्विजातयः ॥ १२
ऋषिकुल्यां नरः स्नात्वा ऋषिलोकं प्रपद्यते । यदि तत्र वसेन्मासं शाकाहारो नराधिप ॥ १३
भृगुतुङ्गं समासाद्य वाजिमेधफलं लभेत् । गत्वा वीरप्रमोक्षं च सर्वपापैः प्रमुच्यते ॥ १४
कृत्तिकामघयोश्चैव तीर्थमासाद्य दुर्लभम् । अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति पुण्यकृत् ॥ १५
ततः संध्यां समासाद्य विद्यातीर्थमनुत्तमम् । उपस्पृशेत्स विद्यानां सर्वासां परमो भवेत् ॥ १६
महाश्रमे वसेद्रात्रिं सर्वपापप्रमोचने । एककालं निराहारो लोकान्संवसते शुभान् ॥ १७
षष्ठकालोपवासेन मासमुष्य महालये । तीर्णस्तारयते जन्तून्दश पूर्वान्दशापरान् ॥ १८
दृष्ट्वा महेश्वरं पुण्यं परं सुरनमस्कृतम् । कृतार्थः सर्वकृत्येषु न शोचेन्मरणं क्वचित् ॥
सर्वपापविशुद्धात्मा विन्याद्बहुसुवर्णकम् ॥ १९
अथ वेतसिकां गच्छेत्पितामहनिषेविताम् । अश्वमेधमवाप्नोति गतिं च परमां व्रजेत् ॥ २०
अथ सुन्दरिकां तीर्थं प्राप्य सिद्धनिषेविताम् । रूपस्य भागी भवति दृष्टमेतत्पुरातनैः ॥ २१
ततो ब्राह्मणिकां गत्वा ब्रह्मचारी समाहितः । पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥ २२
ततश्च नैमिषं गच्छेत्पुण्यं द्विजनिषेवितम् । तत्र नित्यं निवसति ब्रह्मा देवगणैः सह ॥ २३
नैमिषं प्रार्थयानस्य पापस्यार्धं प्रणश्यति । प्रविष्टमानस्तु नरः सर्वपापात्प्रमुच्यते ॥ २४
तत्र मासं वसेद्धीरो नैमिषे तीर्थतत्परः । पृथिव्यां यानि तीर्थानि नैमिषे तानि भारत ॥ २५
अभिषेकं तत्र कृत्वा नियतो नियताशनः । राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ २६
पुनात्यासप्तमं चैव कुलं भरतसत्तम । यस्त्यजेन्नैमिषे प्राणानुपवासपरायणः ॥ २७
स मोदेत्स्वर्गलोकस्थ एवमाहुर्मनीषिणः । नित्यं मेध्यं च पुण्यं च नैमिषं नृपसत्तम ॥ २८
गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः । वाजपेयमवाप्नोति ब्रह्मभूतो भवेत्सदा ॥ २९
सरस्वतीं समासाद्य तर्पयेत्पितृदेवताः । सारस्वतेषु लोकेषु मोदते नात्र संशयः ॥ ३०
ततश्च बहुदां गच्छेत्तीर्थसेवी नराधिप । तत्रोष्य रजनीमेकां स्वर्गलोके महीयते ॥
देवसत्रस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ३१
ततश्च रजनीं गच्छेत्पुण्यां पुण्यजनैर्वृताम् । पितृदेवार्चनरतो वाजपेयमवाप्नुयात् ॥ ३२
विमलाशोकमासाद्य विराजति यथा शशी । तत्रोष्य रजनीमेकां स्वर्गलोके महीयते ॥ ३३
गोप्रतारं ततो गच्छेत्सरयूतीर्थमुत्तमम् । यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः ॥ ३४
देहं त्यक्त्वा पुरा राजंस्तस्य तीर्थस्य तेजसा । रामस्य च प्रसादेन व्यवसायाच्च भारत ॥ ३५
तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप । सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥ ३६
रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन । अश्वमेधमवाप्नोति पुनाति स्वकुलं नरः ॥ ३७

• *१ ख. अ. 'न नरः पुण्यो महाश्रमे । ती' । २ ख. अ. महाश्रमं । ३ क. गवामयस्य । ४ ख. ङ. म. ट. ड. बाहुदां । ५ ट. गेहं ।

शतसाहस्रकं तत्र तीर्थं भरतसत्तम । तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः ॥
गोसहस्रफलं पुण्यमाप्नोति भरतर्षभ ॥ ३८
ततो गच्छेत धर्मज्ञ ऊर्ध्वस्थानमनुत्तमम् । कोटितीर्थे नरः स्नात्वा अर्चयित्वा गुहं नृप ॥ ३९
गोसहस्रफलं विन्द्यात्तेजस्वी चापि जायते । ततो वाराणसीं गत्वा अर्चयित्वा वृषध्वजम् ॥ ४०
कपिलानां ह्रदे स्नात्वा राजसूयफलं लभेत् । मार्कण्डेयस्य राजेन्द्र तीर्थमासाद्य दुर्लभम् ॥ ४१
गोमतीगङ्गयोश्चैव संगमे लोकविश्रुते । अग्निष्टोममवाप्नोति कुलं चैव समुद्धरेत् ॥ ४२

इति श्रीमहापुराणे पाद्म आदिखण्डे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७९४

अथ त्रयस्त्रिंशोऽध्यायः ।

युधिष्ठिर उवाच—
वाराणस्याश्च माहात्म्यं संक्षेपात्कथितं त्वया । विस्तरेण मुने ब्रूहि तदा प्रीणाति मे मनः ॥ १
नारद उवाच—
अत्रेतिहासं वक्ष्यामि वाराणस्या गुणाश्रयम् । यस्य श्रवणमात्रेण मुच्यते ब्रह्महत्यया ॥ २
मेरुशृङ्गे पुरा देवमीशानं त्रिपुरद्विपम् । दिव्यासनगता देवी महादेवमपृच्छत ॥ ३
देव्युवाच—
देवदेव महादेव भक्तानामार्तिनाशन । कथं त्वां पुरुषो देवमचिरादेव पश्यति ॥ ४
सांख्ययोगस्तथा ध्यानं कर्मयोगोऽथ वैदिकः । आयासबहुला लोके यानि चान्यानि शंकर ॥ ५
येन विश्रान्तचित्तानां योगिनां कर्मिणामपि । दृश्यो हि भगवान्सूक्ष्मः सर्वेषामथ देहिनाम् ॥ ६
एतद्गुह्यतमं ज्ञानं गूढं ब्रह्मादिसेवितम् । हिताय सर्वभूतानां ब्रूहि कामाङ्गनाशन ॥ ७
ईश्वर उवाच—
अवाच्यमप्रविज्ञानं ज्ञानमज्ञैर्बहिष्कृतम् । वक्ष्ये तव यथातत्त्वं यदुक्तं परमर्षिभिः ॥ ८
परं गुह्यतमं क्षेत्रं मम वाराणसी पुरी । सर्वेषामेव भूतानां संसारार्णवतारिणी ॥ ९
तत्र भक्त्या महादेवि मदीयं व्रतमास्थिताः । निवसन्ति महात्मानः परं नियममास्थिताः ॥ १०
उत्तमं सर्वतीर्थानां स्थानानामुत्तमं च तत् । ज्ञानानामुत्तमं ज्ञानमविमुक्तं परं मम ॥ ११
स्थानान्तरपवित्राणि तीर्थान्यायतनानि च । श्मशानसंस्थितान्येव दिव्यभूमिगतानि च ॥ १२
भूर्लोके नैव संलग्नमन्तरिक्षे ममालयम् । अमुक्तास्तन्न पश्यन्ति मुक्ताः पश्यन्ति चेतसा ॥ १३
श्मशानमेतद्विख्यातमविमुक्तमिति श्रुतं । कालो भूत्वा जगदिदं संहराम्यत्र सुन्दरि ॥ १४
देवीदं सर्वगुह्यानां स्थानं प्रियतरं मम । मद्भक्तास्तत्र गच्छन्ति मामेव प्रविशन्ति च ॥ १५
दत्तं जप्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् । ध्यानमध्ययनं ज्ञानं सर्वं तत्राक्षयं भवेत् ॥ १६
जन्मान्तरसहस्रेषु यत्पापं पूर्वसंचितम् । अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् ॥ १७
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च वर्णसंकराः । स्त्रियो म्लेच्छाश्च ये चान्ये संकीर्णाः पापयोनयः ॥ १८
कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः । काले संनिधनं प्राप्ता अविमुक्ते वरानने ॥ १९
चन्द्रार्धमौल्यस्त्र्यक्षा महावृषभवाहनाः । शिवे मम पुरे देवि जायन्ते तत्र मानवाः ॥ २०

१ ख. ग. ट. [1]मध्यापनं ।

नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी । ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ॥ २१
मोक्षं सुदुर्लभं मत्वा संसारं चातिभीषणम् । अर्चनाचरणे मुक्त्वा वाराणस्यां वसेन्नरः ॥ २२
दुर्लभा तपसा चापि मृतस्य परमेश्वरि । यत्र तत्र विपन्नस्य गतिः संसारमोक्षणी ॥ २३
प्रसादाज्जायते सम्यङ्मम शैलेन्द्रनन्दिनि । अप्रबुद्धा न पश्यन्ति मम मायाविमोहिताः ॥ २४
विण्मूत्ररेतसां मध्ये ते वसन्ति पुनः पुनः । हन्यमानोऽपि यो विद्वान्वसेद्विघ्नशतैरपि ॥ २५
स याति परमं स्थानं यत्र गत्वा न शोचति । जन्ममृत्युजरामुक्तं परं यान्ति शिवालयम् ॥ २६
अपुनर्मरणानां हि सा गतिर्मोक्षकाङ्क्षिणाम् । यां प्राप्य कृतकृत्यं स्यादिति मन्यन्ति पण्डिताः २७
न दानैर्न तपोभिश्च न यज्ञैर्नापि विद्यया । प्राप्यते गतिरुत्कृष्टा याऽविमुक्ते तु लभ्यते ॥ २८
नानावर्णा विवर्णाश्च चाण्डालाद्या जुगुप्सिताः । किल्बिषैः पूर्णदेहाश्च विशिष्टैः पातकैस्तथा ॥ २९
भेषजं परमं तेषामविमुक्तं विदुर्बुधाः । अविमुक्तं परं ज्ञानमविमुक्तं परं पदम् ॥ ३०
अविमुक्तं परं तत्त्वमविमुक्तं परं शिवम् । कृत्वा वै नैष्ठिकीं दीक्षामविमुक्ते वसन्ति ये ॥
तेषां तत्परमं ज्ञानं ददाम्यन्ते परं पदम् ॥ ३१
प्रयागं नैमिषारण्यं श्रीशैलोऽथ महाबलम् । केदारं भद्रकर्णं तु गया पुष्करमेव च ॥ ३२
कुरुक्षेत्रं भद्रकोटिर्नर्मदाऽऽम्रातकेश्वरी । शालग्रामं च कुब्जाम्रं कोकामुखमनुत्तमम् ॥
प्रभासं विजयेशानं गोकर्णं भद्रकर्णकम् ॥ ३३
एतानि पुण्यस्थानानि त्रैलोक्ये विश्रुतानि ह । न यास्यन्ति परं तत्त्वं वाराणस्यां यथा मृताः ॥
वाराणस्यां विशेषेण गङ्गा त्रिपथगामिनी । प्रविष्टा नाशयेत्पापं जन्मान्तरशतैः कृतम् ॥ ३५
अन्यत्र सुलभा गङ्गा श्राद्धं दानं तपो जपः । व्रतानि सर्वमेवैतद्वाराणस्यां सुदुर्लभम् ॥ ३६
जपेच्च जुहुयान्नित्यं ददात्यर्चयतेऽमरान् । वायुभक्षश्च सततं वाराणस्यां स्थितो नरः ॥ ३७
यदि पापो यदि शठो यदि वाऽधार्मिको नरः । वाराणसीं समासाद्य पुनाति सकलं कुलम् ३८
वाराणस्यां येऽर्चयन्ति महादेवं स्तुवन्ति वै । सर्वपापविनिर्मुक्तास्ते विज्ञेया गणेश्वराः ॥ ३९
अन्यत्र योगज्ञानाभ्यां संन्यासादथ वाऽन्यतः । प्राप्यते तत्परं स्थानं सहस्रेणैव जन्मनाम् ॥ ४०
ये भक्ता देवदेवेशि वाराणस्यां वसन्ति वै । ते विन्दन्ति परं मोक्षमेकेनैव तु जन्मना ॥ ४१
यत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना । अविमुक्तं तदासाद्य नान्यदिच्छेत्तपोवनम् ॥ ४२
यतो मयाऽविमुक्तं तदविमुक्तं ततः स्मृतम् । तदेव गुह्यं गुह्यानामेतद्विज्ञानमुच्यते ॥ ४३
ज्ञानाज्ञानाभिनिष्ठानां परमानन्दमिच्छताम् । या गतिर्विदिता सुभ्रूः साऽविमुक्ते मृतस्य तु ॥ ४४
यानि चैवाविमुक्तान्ये देशे दृष्टानि कृत्स्नशः । पुरी वाराणसी तेभ्यः स्थानेभ्यो ह्यधिका शुभा ॥
यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः । व्याचष्टे तारकं ब्रह्म तत्रैव ह्यविमुक्तके ॥ ४६
यत्तत्परतरं तत्त्वमविमुक्तमिति श्रुतम् । एकेन जन्मना देवि वाराणस्यां तदाप्नुयात् ॥ ४७
भ्रूमध्ये नाभिमध्ये च हृदये चैव मूर्धनि । यथाऽविमुक्तमादित्ये वाराणस्यां व्यवस्थितम् ॥ ४८
वरणायास्तथा चास्या मध्ये वाराणसी पुरी । तत्रैव संस्थितं तत्त्वं नित्यमेवं विमुक्तकम् ॥ ४९
वाराणस्याः परं स्थानं न भूतं न भविष्यति । यत्र नारायणो देवो महादेवो दिवीश्वरः ॥ ५०
तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः । उपासते मां सततं देवदेवः पितामहः ॥ ५१
महापातकिनो देवि ये तेभ्यः पापकृत्तमाः । वाराणसीं समासाद्य ते यान्ति परमां गतिम् ॥ ५२

१ ट. 'कमित्येव वा' ।

तस्मान्मुमुक्षुर्नियतो वसेद्वै मरणान्तकम् । वाराणस्यां महादेवाज्ज्ञानं लब्ध्वा विमुच्यते ॥ ५३
किं तु विघ्ना भविष्यन्ति पापोपहतचेतसः । ततो नैवाऽऽचरेत्पापं कायेन मनसा गिरा ॥ ५४
एतद्रहस्यं देवानां पुराणानां च सुव्रते । अविमुक्ताश्रयज्ञानं न कश्चिद्वेत्ति तत्त्वतः ॥ ५५

नारद उवाच—

देवतानामृषीणां च शृण्वतां परमेष्ठिनाम् । देवदेवेन[1] कथितं सर्वपापविनाशनम् ॥ ५६
यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः । यथेश्वराणां गिरिशः स्थानानामेतदुत्तमम् ॥ ५७
यैः समाराधितो रुद्रः पूर्वस्मिन्नेकजन्मनि । ते विन्दन्ति परं क्षेत्रमविमुक्तं शिवालयम् ॥ ५८
कलिकल्मषसंभूता येषामपहता मतिः । न तेषां वेदितुं शक्यं स्थानं तत्परमेष्ठिनः ॥ ५९
ये स्मरन्ति सदा कालं वदन्ति च पुरीमिमाम् । तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम् ॥ ६०
यानि चेह प्रकुर्वन्ति पातकानि कृतालयाः । नाशयेत्तानि सर्वाणि देवः कालतनुः शिवः ॥ ६१
आगच्छेत्तदिदं स्थानं सेवितं मोक्षकाङ्क्षिभिः । मृतानां च पुनर्जन्म न भूयो भवसागरे ॥ ६२
तस्मात्सर्वप्रयत्नेन वाराणस्यां वसेन्नरः । योगी वाऽप्यथवाऽयोगी पापी वा पुण्यकृत्तमः ॥ ६३
न लोकवचनात्पित्रोर्नै चैव गुरुवादतः । मतिर्न क्रमणीया स्यादविमुक्तगतिं प्रति ॥ ६४

इति श्रीमहापुराणे पाद्म आदिखण्डे वाराणसीमाहात्म्ये त्रयस्त्रिंशोऽध्यायः ॥३३॥

आदितः श्लोकानां समष्ट्यङ्काः—१८५७

---

अथ चतुस्त्रिंशोऽध्यायः ।

---

नारद उवाच—

तत्रेदं विमलं लिङ्गमोङ्कारं नाम शोभनम् । यस्य स्मरणमात्रेण मुच्यते सर्वपातकैः ॥ १
एतत्परतरं ज्ञानं पञ्चायतनमुत्तमम् । सेवितं मुनिभिर्नित्यं वाराणस्यां विमोक्षणम् ॥ २
तत्र साक्षान्महादेवः पञ्चायतनविग्रहः । रमते भगवान्रुद्रो जन्तूनामपवर्गदः ॥ ३
यत्तत्पाशुपतं ज्ञानं पञ्चायतनमुच्यते । तदेतद्विमलं लिङ्गमोङ्कारं समुपस्थितम् ॥ ४
शान्त्यतीता तथा शान्तिर्विद्या चैवापरावरा । प्रतिष्ठा च निवृत्तिश्च पञ्चात्मं लिङ्गमैश्वरम् ॥ ५
पञ्चानामपि देवानां ब्रह्मादीनां समाश्रयम् । ओङ्कारबोधकं लिङ्गं पञ्चायतनमुच्यते ॥ ६
संस्मरेदैश्वरं लिङ्गं पञ्चायतनमव्ययम् । देहान्ते तत्परं ज्योतिरानन्दं विशते बुधः ॥ ७
तत्र देवर्षयः पूर्वं सिद्धा ब्रह्मर्षयस्तथा । उपास्य देवमीशानमापुरन्तः परं पदम् ॥ ८
मत्स्योदर्यास्तटे पुण्ये स्थानं गुह्यतमं शुभम् । गोचर्ममात्रं राजेन्द्र ओंकारेश्वरमुत्तमम् ॥ ९
कृत्तिवासेश्वरं लिङ्गं मध्यमेश्वरमुत्तमम् । विश्वेश्वरं तथोंकारं कन्दर्पेश्वरमेव च ॥ १०
एतानि गुह्यलिङ्गानि वाराणस्यां युधिष्ठिर । न कश्चिदिह जानाति विना शंभोरनुग्रहात् ॥ ११
कृत्तिवासेश्वरस्यैव माहात्म्यं शृणु पार्थिव । तस्मिन्स्थाने पुरा दैत्यो हस्ती भूत्वा शिवान्तिकम् ॥ १२
ब्राह्मणान्हन्तुमायातो यत्र नित्यमुपासते । तेषां लिङ्गान्महादेवः प्रादुरासीत्त्रिलोचनः ॥ १३
रक्षणार्थं महादेवो भक्तानां भक्तवत्सलः । हत्वा गजाकृतिं दैत्यं शूलेनावज्ञया हरः ॥ १४
वासस्तस्याकरोत्कृत्तिं कृत्तिवासेश्वरस्ततः । तत्र सिद्धिं परां प्राप्ता मुनयो हि युधिष्ठिर ॥ १५

---

[1] ट. देव्यै दे°।

तेनैव च शरीरेण प्राप्तास्तत्परमं पदम् । विद्याविद्येश्वरा रुद्राः शिवा ये च प्रकीर्तिताः ॥ १६
कृत्तिवासेश्वरं लिङ्गं नित्यमाश्रित्य संस्थिताः । ज्ञात्वा कलियुगं घोरमधर्मबहुलं जनाः ॥
कृत्तिवासं न मुञ्चन्ति कृतार्थास्ते न संशयः ॥ १७
जन्मान्तरसहस्रेण मोक्षोऽन्यत्राऽऽप्यते न वा । एकेन जन्मना मोक्षः कृत्तिवासेऽत्र लभ्यते ॥ १८
आलयं सर्वसिद्धानामेतत्स्थानं वदन्ति हि । गोपितं देवदेवेन महादेवेन शंभुना ॥ १९
युगे युगे ह्यत्र दान्ता ब्राह्मणा वेदपारगाः । उपासते महात्मानं जपन्ति शतरुद्रियम् ॥ २०
स्तुवन्ति सततं देवं त्र्यम्बकं कृत्तिवाससम् । ध्यायन्ति हृदये देवं स्थाणुं सर्वान्तरं शिवम् ॥ २१

गायन्ति सिद्धाः किल गीतकानि वाराणसीं ये निवसन्ति विप्राः ।
तेषामथैकेन भवेन मुक्तिर्ये कृत्तिवासं शरणं प्रपन्नाः ॥ २२
संप्राप्य लोके जगतामभीष्टं सुदुर्लभं विप्रकुलेषु जन्म ॥
ध्याने समाधाय जपन्ति रुद्रं ध्यायन्ति चित्ते यतयो महेशम् ॥ २३
आराधयन्ति प्रभुमीशितारं वाराणसीमध्यगता मुनीन्द्राः ।
यजन्ति यज्ञैरभिसंधिहीनाः स्तुवन्ति रुद्रं प्रणमन्ति शंभुम् ॥ २४
नमो भवायामलयोगधाम्ने स्थाणुं प्रपद्ये गिरिशं पुराणम् ।
स्मरामि रुद्रं हृदये निविष्टं जाने महादेवमनेकरूपम् ॥ २५

इति श्रीमहापुराणे पाद्म आदिखण्डे वाराणसीमाहात्म्ये चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८८२

---

अथ पञ्चत्रिंशोऽध्यायः ।

---

नारद उवाच—

अथान्यत्तत्र वै लिङ्गं कपर्दीश्वरमव्ययम् । स्नात्वा तत्र विधानेन तर्पयित्वा पितॄन्नृप ॥
मुच्यते सर्वपापेभ्यो भुक्तिं मुक्तिं च विन्दति ॥ १
पिशाचमोचनं नाम तीर्थमन्यत्ततः स्थितम् । तत्राऽऽश्चर्यमयो देवो मुक्तिदः सर्वदोषहा ॥ २
कश्चिद्दैत्यो जगामेदं शार्दूलो घोररूपधृक् । मृगीमेकां भक्षयन्तं कपर्दीश्वरमुत्तमम् ॥ ३
तत्र सा भीतहृदया कृत्वा कृत्वा प्रदक्षिणम् । धावमाना सुसंभ्रान्ता व्याघ्रस्य वशमागता ॥ ४
तां विदार्य नखैस्तीक्ष्णैः शार्दूलः स महाबलः । जगाम चान्यविजनं देशं दृष्ट्वा मुनीश्वरान् ॥ ५
मृतमात्रा च सा बाला कपर्दीशाग्रतो मृगी । अदृश्यत महाज्वाला व्योम्नि सूर्यसमप्रभा ॥ ६
त्रिनेत्रा नीलकण्ठा च शशाङ्काङ्कितमूर्धजा । वृषाधिरूढा पुरुषैस्तादृशैरेव संवृता ॥ ७
पुष्पवृष्टिं विमुञ्चन्ति खेचरास्तत्समन्ततः । गणेश्वरी स्वयं भूत्वा न दृष्टा तत्क्षणात्ततः ॥ ८
दृष्ट्वा तदाश्चर्यवरं प्रशशंसुः सुरादयः । तन्महेशस्य वै लिङ्गं कपर्दीश्वरमुत्तमम् ॥ ९
स्मृत्वैवाशेषपापौघात्क्षिप्रमेव विमुच्यते । कामक्रोधादयो दोषा वाराणसीनिवासिनाम् ॥ १०
विघ्नाः सर्वे विनश्यन्ति कपर्दीश्वरपूजनात् । तस्मात्सदैव द्रष्टव्यं कपर्दीश्वरमुत्तमम् ॥ ११
पूजितव्यं प्रयत्नेन स्तोतव्यं वैदिकैः स्तवैः । ध्यायतां चात्र नियतं योगिनां शान्तचेतसाम् ॥ १२

१ ट. °सिद्धीना° । २ ख. ञ. ध्यातव्यं चात्र नियतं योगिभिः शान्तचित्तकैः । जप्तव्यं ज्ञानकैर्ज्ञ्चा कपर्दीशसमीपतः । ब्र° ।

जायते योगसिद्धिः सा षण्मासेन न संशयः । ब्रह्महत्यादयः पापा विनश्यन्त्यस्य पूजनात् ॥ १३
पिशाचमोचने कुण्डे स्नातस्य तु समासतः । तस्मिन्क्षेत्रे पुरा विप्रस्तपस्वी संशितव्रतः ॥ १४
शङ्कुकर्ण इति ख्यातः पूजयामास शंकरम् । जजाप रुद्रमनिशं प्रणवं ब्रह्मरूपिणम् ॥ १५
पुष्पधूपादिभिः स्तोत्रैर्नमस्कारैः प्रदक्षिणैः । उपासीतात्र योगात्मा कृत्वा दीक्षां तु नैष्ठिकीम् ॥ १६
कदाचिदागतं प्रेतं पश्यति स्म क्षुधाऽन्वितम् । अस्थिचर्मपिनद्धाङ्गं निश्वसन्तं मुहुर्मुहुः ॥ १७
तं दृष्ट्वा स मुनिश्रेष्ठः कृपया परया युतः । प्रोवाच को भवान्कस्माद्देशाद्देशमिमं श्रितः ॥ १८
तस्मै पिशाचः क्षुधया पीड्यमानोऽब्रवीद्वचः । पूर्वजन्मन्यहं विप्रो धनधान्यसमन्वितः ॥
पुत्रपौत्रादिभिर्युक्तः कुटुम्बभरणोत्सुकः ॥ १९
न पूजिता मया देवा गावोऽप्यतिथयस्तथा । न कदाचित्कृतं पुण्यमल्पं वाऽनल्पमेव वा ॥ २०
एकदा भगवान्देवो गोवृषेश्वरवाहनः । विश्वेश्वरो वाराणस्यां दृष्टः स्पृष्टो नमस्कृतः ॥ २१
तदाऽचिरेण कालेन पञ्चत्वमहमागतः । न दृष्टं तन्महाघोरं यमस्य सदनं मुने ॥ २२
पिपासयाऽधुनाऽऽक्रान्तो न जानामि हिताहितम् । यदि कंचित्समुद्धर्तुमुपायं पश्यसि प्रभो ॥ २३
कुरुष्व तं नमस्तुभ्यं त्वामहं शरणं गतः । इत्युक्तः शङ्कुकर्णोऽथ पिशाचमिदमब्रवीत् ॥ २४
त्वादृशो न हि लोकेऽस्मिन्विद्यते पुण्यकृत्तमः । यस्त्वया भगवान्पूर्वं दृष्टो विश्वेश्वरः शिवः ॥ २५
संस्पृष्टो वन्दितो भुयः कोऽन्यस्त्वत्सदृशो भुवि । तेन कर्मविपाकेन देशमेतं समागतः ॥ २६
स्नानं कुरुष्व शीघ्रं त्वमस्मिन्कुण्डे समाहितः । येनेमां कुत्सितां योनिं क्षिप्रमेव प्रहास्यसि ॥ २७

स एवमुक्तो मुनिना पिशाचो दयालुना देववरं त्रिनेत्रम् ।
स्मृत्वा कपर्दीश्वरमीशितारं चक्रे समाधाय मनोऽवगाहम् ॥ २८
तदाऽवगाढो मुनिसंनिधाने ममार दिव्याभरणोपपन्नः ।
अदृश्यतार्कप्रतिमो विमाने शशाङ्कचिह्नीकृतचारुमौलिः ॥ २९
विभाति रुद्रैः सहितो दिविष्ठैः समावृतो योगिभिरप्रमेयैः ।
सवालखिल्यादिभिरेष देवो यथोदये भानुरशेषदेवः ॥ ३०
स्तुवन्ति सिद्धा दिवि देवसंघा नृत्यन्ति दिव्याप्सरसोऽभिरामाः ।
मुञ्चन्ति वृष्टिं कुसुमाम्बुमिश्रां गन्धर्वविद्याधरकिंनराद्याः ॥ ३१
संस्तूयमानोऽथ मुनीन्द्रसंघैरवाप्य बोधं भगवत्प्रसादात् ।
समाविशन्मण्डलमेतदग्र्यं त्रयीमयं यत्र विभाति रुद्रः ॥ ३२
दृष्ट्वा विमुक्तं स पिशाचभूतं मुनिः प्रहृष्टो मनसा महेशम् ।
विचिन्त्य रुद्रं कविमेकमग्निं प्रणम्य तुष्टाव कपर्दिनं तम् ॥ ३३

शङ्कुकर्ण उवाच—

कपर्दिनं त्वां परतः परस्ताद्गोप्तारमेकं पुरुषं पुराणम् ।
व्रजामि योगेश्वरमीशितारमादित्यमग्निं कपिलाधिरूढम् ॥ ३४
त्वां ब्रह्मसारं हृदि संनिविष्टं हिरण्मयं योगिनमादिमन्तम् ।
व्रजामि रुद्रं शरणं दिविष्ठं महामुनिं ब्रह्ममयं पवित्रम् ॥ ३५
सहस्रपादाक्षिशिरोभियुक्तं सहस्ररूपं तमसः परस्तात् ।
तं ब्रह्मपारं प्रणमामि शंभुं हिरण्यगर्भाधिपतिं त्रिनेत्रम् ॥ ३६

यत्र प्रसूतिर्जगतो विनाशो येनाऽऽवृतं सर्वमिदं शिवेन ।
तं ब्रह्मपारं भगवन्तमीशं प्रणम्य नित्यं शरणं प्रपद्ये ॥ ३७
अलिङ्गमालोकविहीनरूपं स्वयंप्रभुं चित्पतिमेकरूपम् ।
तं ब्रह्मपारं परमेश्वरं त्वां नमस्करिष्ये न यतोऽन्यदस्ति ॥ ३८
यं योगिनस्त्यक्तसबीजयोगा लब्ध्वा समाधिं परमात्मभूताः ।
पश्यन्ति देवं प्रणतोऽस्मि नित्यं तं ब्रह्मपारं भवतः स्वरूपम् ॥ ३९
न यत्र नामादिविशेषक्लृप्तिर्न संदृशे तिष्ठति यत्स्वरूपम् ।
तं ब्रह्मपारं प्रणतोऽस्मि नित्यं स्वयंभुवं त्वां शरणं प्रपद्ये ॥ ४०
यद्वेदवादाभिरता विदेहं सब्रह्मविज्ञानमभेदमेकम् ।
पश्यन्त्यनेकं भवतः स्वरूपं तं ब्रह्मपारं प्रणतोऽस्मि नित्यम् ॥ ४१
यतः प्रधानं पुरुषः पुराणो बिभर्ति तेजः प्रणमन्ति देवाः ।
नमामि तं ज्योतिषि संनिविष्टं कालं बृहन्तं भवतः स्वरूपम् ॥ ४२
व्रजामि नित्यं शरणं गुहेशं स्थाणुं प्रपद्ये गिरिशं पुराणम् ।
शिवं प्रपद्ये हरमिन्दुमौलिं पिनाकिनं त्वां शरणं व्रजामि ॥ ४३

स्तुत्वैवं शङ्कुकर्णोऽपि भगवन्तं कपर्दिनम् । पपात दण्डवद्भूमौ प्रोच्चरन्प्रणवं परम् ॥ ४४
तत्क्षणात्परमं लिङ्गं प्रादुर्भूतं शिवात्मकम् । ज्ञानमानन्दमत्यन्तं कोटिज्वालाग्निसंनिभम् ॥ ४५
शङ्कुकर्णोऽथ मुक्तात्मा तदात्मा सर्वगोऽमलः । विलिल्ये विमले लिङ्गे तदद्भुतमिवाभवत् ॥ ४६
एतद्रहस्यमाख्यातं माहात्म्यं ते कपर्दिनः । न कश्चिद्वेत्ति तमसा विद्वानप्यत्र मुह्यति ॥ ४७
य इमां शृणुयान्नित्यं कथां पापप्रणाशिनीं । त्यक्तपापो विशुद्धात्मा रुद्रसामीप्यमाप्नुयात् ॥ ४८
पठेच्च सततं शुद्धो ब्रह्मपारं महास्तवम् । प्रातर्मध्याह्नसमये स योगं प्राप्नुयात्परम् ॥ ४९

इति श्रीमहापुराणे पाद्म आदिखण्डे वाराणसीमाहात्म्ये पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९३१

---

अथ षट्त्रिंशोऽध्यायः ।

---

नारद उवाच—

वाराणस्यां महाराज मध्यमेशं परात्परम् । तस्मिन्स्थाने महादेवो देव्या सह महेश्वरः ॥ १
रमते भगवान्नित्यं रुद्रैश्च परिवारितः । तत्र पूर्वं हृषीकेशो विश्वात्मा देवकीसुतः ॥ २
उवास वत्सरं कृष्णः सदा पाशुपतैर्युतः । भस्मोद्धूलितसर्वाङ्गो रुद्राध्ययनतत्परः ॥
आराधयन्हरिः शंभुं कृत्वा पाशुपतं व्रतम् ॥ ३
तस्य ते बहवः शिष्या ब्रह्मचर्यपरायणाः । लब्ध्वा तद्वदनाज्ज्ञानं दृष्टवन्तो महेश्वरम् ॥ ४
तस्य देवो महादेवः प्रत्यक्षं नीललोहितः । ददौ कृष्णस्य भगवान्वरदो वरमुत्तमम् ॥ ५
येऽर्चयन्ति च गोविन्दं मद्भक्ता विधिपूर्वकम् । तेषां तदैश्वरं ज्ञानमुत्पत्स्यति जगन्मयम् ॥ ६
नमस्योऽर्चयितव्यश्च ध्यातव्यो मत्परैर्जनैः । भविष्यन्ति न संदेहो मत्प्रसादाद्द्विजातयः ॥ ७
येऽत्र द्रक्ष्यन्ति देवेशं स्नात्वा देवं पिनाकिनम् । ब्रह्महत्यादिकं पापं तेषामाशु विनश्यति ॥ ८
प्राणांस्त्यक्ष्यन्ति ये मर्त्याः पापकर्मरता अपि । ते यान्ति तत्परं स्थानं नात्र कार्या विचारणा ॥ ९

धन्यास्तु खलु ते विप्रा मन्दाकिन्यां कृतोदकाः । अर्चयित्वा महादेवं मध्यमेश्वरमीश्वरम् ॥ १०
स्नानं दानं तपः श्राद्धं पिण्डनिर्वपणं त्विह । एकैकशः कृतं कर्म पुनात्यासप्तमं कुलम् ॥ ११
संनिहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे । यत्फलं लभते मर्त्यस्तस्माद्दशगुणं त्विह ॥ १२
एवमुक्तं महाराज माहात्म्यं मध्यमेश्वरे । यः शृणोति परं भक्त्या स याति परमं पदम् ॥ १३

इति श्रीमहापुराणे पाद्म आदिखण्डे वाराणसीमाहात्म्ये षट्त्रिंशोऽध्यायः ॥ ३६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९४४

अथ सप्तत्रिंशोऽध्यायः ।

नारद उवाच—

अन्यानि च महाराज तीर्थानि पावनानि तु । वाराणस्यां स्थितानीह संशृणुष्व युधिष्ठिर ॥ १
प्रयागादधिकं तीर्थं प्रयागं परमं शुभम् । विश्वरूपं तथा तीर्थं तालतीर्थमनुत्तमम् ॥ २
आकाशाख्यं महातीर्थं तीर्थं चैवाऽऽर्षभं परम् । सुनीलं च महातीर्थं गौरीतीर्थमनुत्तमम् ॥ ३
प्राजापत्यं तथा तीर्थं स्वर्गद्वारं तथैव च । जम्बुकेश्वरमित्युक्तं धर्माख्यं तीर्थमुत्तमम् ॥ ४
गयातीर्थं परं तीर्थं तीर्थं चैव महानदी । नारायणं परं तीर्थं वायुतीर्थमनुत्तमम् ॥ ५
ज्ञानतीर्थं परं गुह्यं वाराहं तीर्थमुत्तमम् । यमतीर्थं महापुण्यं तीर्थं संमूर्तिकं शुभम् ॥ ६
अग्नितीर्थं महाराज कलशेश्वरमुत्तमम् । नागतीर्थं सोमतीर्थं सूर्यतीर्थं तथैव च ॥ ७
पर्वताख्यं महागुह्यं मणिकर्ण्यमनुत्तमम् । घटोत्कचं तीर्थवरं श्रीतीर्थं च पितामहम् ॥ ८
गङ्गातीर्थं तु देवेशं ययातेस्तीर्थमुत्तमम् । कापिलं चैव सोमेशं ब्रह्मतीर्थमनुत्तमम् ॥ ९
तत्र लिङ्गं पुराणीयं स्थातुं ब्रह्मा यथाऽऽ(दाऽऽ)गतः । तदानीं स्थापयामास विष्णुस्तल्लिङ्गमैश्वरम् ॥
ततः स्नात्वा समागम्य ब्रह्मा प्रोवाच तं हरिम् । मयाऽऽनीतमिदं लिङ्गं कस्मात्स्थापितवानसि ॥
तमाह विष्णुस्त्वत्तोऽपि रुद्रे भक्तिर्दृढा मम । तस्मात्प्रतिष्ठितं लिङ्गं नाम्ना तत्र भविष्यति ॥ १२
भूतेश्वरं तथा तीर्थं तीर्थं धर्मसमुद्भवम् । गन्धर्वतीर्थं सुशुभं वाह्नेयं तीर्थमुत्तमम् ॥ १३
दौर्वासिकं व्योमतीर्थं चन्द्रतीर्थं युधिष्ठिर । चिन्ताङ्गदेश्वरं तीर्थं पुण्यं विद्याधरेश्वरम् ॥ १४
केदारं तीर्थमुग्राख्यं कालंजरमनुत्तमम् । सारस्वतं प्रभासं च रुद्रकर्णह्रदं शुभम् ॥ १५
कोकिलाख्यं महातीर्थं तीर्थं चैव महालयम् । हिरण्यगर्भं गोप्रेक्षं तीर्थं चैवमनुत्तमम् ॥ १६
उपशान्तं शिवं चैव व्याघ्रेश्वरमनुत्तमम् । त्रिलोचनं महातीर्थं लोकार्कं चोत्तराह्वयम् ॥ १७
कपालमोचनं तीर्थं ब्रह्महत्याविनाशनम् । शुक्रेश्वरं महापुण्यमानन्दपुरमुत्तमम् ॥ १८
एवमादीनि तीर्थानि वाराणस्यां स्थितानि वै । न शक्यं विस्तराद्वक्तुं कल्पकोटिशतैरपि । १९

इति श्रीमहापुराणे पाद्म आदिखण्डे वाराणसीमाहात्म्ये सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९६३

अथाष्टात्रिंशोऽध्यायः ।

नारद उवाच—

वाराणस्याश्च माहात्म्यं तस्यां तीर्थानि च प्रभो । कथितानि समासेन तीर्थान्यन्यानि संशृणु ॥ १

१ ख. अ. 'था विनिर्मितं लि' ।

ततो गयां समासाद्य ब्रह्मचारी समाहितः । अश्वमेधमवाप्नोति गमनादेव भारत ॥
यत्राक्षय्यवटो नाम त्रिषु लोकेषु विश्रुतः । पितॄणां तत्र वै दत्तमक्षयं भवति प्रभो ॥
महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः । अक्षयानाप्नुयाल्लोकान्कुलं चैव समुद्धरेत् ॥
ततो ब्रह्मसरो गच्छेद्ब्रह्मारण्योपसेवितम् । पुण्डरीकमवाप्नोति प्रभातमिव शर्वरी ॥
सरसि ब्रह्मणा तत्र यूपश्रेष्ठः समुच्छ्रितः । यूपं प्रदक्षिणं कृत्वा वाजपेयफलं लभेत् ॥
ततो गच्छेत राजेन्द्र धेनुकं लोकविश्रुतम् । एकरात्रोषितो राजन्प्रयच्छेत्तिलधेनुकाम् ॥
सर्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम् । तत्र चिह्नं महाराज अद्यापि हि न संशयः ॥
कपिला सहवत्सा वै पर्वते विचरत्युत । सवत्सायाः पदान्यस्या दृश्यन्तेऽद्यापि भारत ॥
तेषूपस्पृश्य राजेन्द्र पदेषु नृपसत्तम । यत्किंचिदशुभं पापं तत्प्रणश्यति भारत ॥ १०
ततो गृध्रवटं गच्छेत्स्थानं देवस्य शूलिनः । स्नायात्तु भस्मना तत्र संगम्य वृषभध्वजम् ॥ ११
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम् । इतरेषां तु वर्णानां सर्वपापं प्रणश्यति ॥ १२
गच्छेत तत उद्यन्तं पर्वतं गीतनादितम् । सावित्रं तु पदं तत्र दृश्यते भरतर्षभ ॥ १३
तत्र संध्यामुपासीत ब्राह्मणः संशितव्रतः । उपास्ता हि भवेत्संध्या तेन द्वादशवार्षिकी ॥ १४
योनिद्वारं च तत्रैव विश्रुतं भरतर्षभ । तत्राभिगम्य मुच्येत पुरुषो योनिसंकटात् ॥ १५
शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नरः । पुनात्यासप्तमं राजन्कुलं नास्त्यत्र संशयः ॥ १६
एष्टव्या बहवः पुत्रा यद्यप्येको गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ १७
ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप । अश्वमेधमवाप्नोति सिद्धिं च परमां व्रजेत् ॥ १८
ततो गच्छेत राजेन्द्र धर्मपृष्ठं समाहितः । यत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥ १९
धर्मं तत्राभिसंगम्य वाजिमेधफलं लभेत् । ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम् ॥ २०
तत्राभिगम्य ब्रह्माणमर्चयेन्नियतव्रतः । राजसूयाश्वमेधाभ्यां फलं प्राप्नोति भारत ॥ २१
ततो राजगृहं गच्छेत्तीर्थसेवी नराधिप । उपस्पृश्य ततस्तत्र कक्षीवानिव मोदते ॥ २२
यक्षिण्या नैत्यकं तत्र प्राशन्निः पुरुषः शुचिः । यक्षिण्यास्तु प्रसादेन मुच्यते ब्रह्महत्यया ॥ २३
मणिनागं ततो गच्छेद्गोसहस्रफलं लभेत् । नैत्यकं भुञ्जते यस्तु मणिनागस्य मानवः ॥ २४
दष्टस्याऽऽशीविषेणास्य न विषं क्रमते नृप । तत्रोष्य रजनीमेकां सर्वपापैः प्रमुच्यते ॥ २५
ततो गच्छेत ब्रह्मर्षेर्गौतमस्य वनं नृप । अहल्याया ह्रदे स्नात्वा व्रजेत परमां गतिम् ॥ २६
अभिगम्य श्रियं राजन्विन्दते श्रियमुत्तमाम् । तत्रोदपानो धर्मज्ञ त्रिषु लोकेषु विश्रुतः ॥
तत्राभिषेकं कुर्वीत वाजिमेधमवाप्नुयात् ॥ २७
जनकस्य तु राजर्षेः कूपस्त्रिदशपूजितः । तत्राभिषेकं कृत्वा तु विष्णुलोकमवाप्नुयात् ॥ २८
ततो विनाशनं गच्छेत्सर्वपापप्रमोचनम् । वाजिमेधमवाप्नोति सोमलोकं च गच्छति ॥ २९
गण्डकीं च समासाद्य सर्वतीर्थजलोद्भवाम् । वाजपेयमवाप्नोति सूर्यलोकं च गच्छति ॥ ३०
ततो ध्रुवस्य धर्मज्ञ समाविश्य तपोवनम् । गुह्यकेषु महाभाग मोदते नात्र संशयः ॥ ३१
कर्मदां तु समासाद्य नदीं सिद्धनिषेविताम् । पुण्डरीकमवाप्नोति सोमलोकं च गच्छति ॥ ३२
ततो विशालामासाद्य नदीं त्रैलोक्यविश्रुताम् । अग्निष्टोममवाप्नोति स्वर्गलोकं च गच्छति ॥ ३३
अथ माहेश्वरीं धारां समासाद्य नराधिप । अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ३४

१ ट. वाजिमेधम॰ । २ ख. म. नर्मदां । ट. सर्वदा ।

दिवौकसां पुष्करिणीं समासाद्य नरः शुचिः । न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ ३५
माहेश्वरपदं गच्छेद्ब्रह्मचारी समाहितः । माहेश्वरपदे स्नात्वा वाजिमेधफलं लभेत् ॥ ३६
तत्र कोटिस्तु तीर्थानां विश्रुता भरतर्षभ । कूर्मरूपेण राजेन्द्र असुरेण दुरात्मना । ३७
ह्रियमाणा हृता राजन्विष्णुना प्रभविष्णुना । तत्राभिषेकं कुर्वीत तीर्थकोट्यां नराधिप ॥
पुण्डरीकमवाप्नोति विष्णुलोकं च गच्छति ॥ ३८
ततो गच्छेन्नरश्रेष्ठ स्थानं नारायणस्य च । सदा संनिहितो यत्र हरिर्वसति भारत ॥ ३९
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः । आदित्या वसवो रुद्रा जनार्दनमुपासते ॥ ४०
शालग्राम इति ख्यातो विष्णोरद्भुतकर्मणः । अभिगम्य त्रिलोकेशं वरदं विष्णुमच्युतम् ॥ ४१
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति । तत्रोदपानो धर्मज्ञ सर्वपापविमोचनः ॥ ४२
समुद्रास्तत्र चत्वारः कूपे संनिहिताः सदा । तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात् ॥ ४३
अभिगम्य महादेवं वरदं विष्णुमव्ययम् । विराजते यथा सोम ऋणैर्मुक्तो युधिष्ठिर ॥ ४४
जातिस्मर उपस्पृश्य शुचिः प्रयतमानसः । जातिस्मरत्वं प्राप्नोति स्नात्वा तत्र न संशयः ॥ ४५
वटेश्वरपुरं गत्वा अर्चयित्वा च केशवम् । ईप्सिताँल्लभते लोकानुपवासान्न संशयः ॥ ४६
ततस्तु वामनं गत्वा सर्वपापप्रमोचनम् । अभिवाद्य हरिं देवं न दुर्गतिमवाप्नुयात् ॥ ४७
भरतस्याऽऽश्रमं गत्वा सर्वपापप्रमोचनम् । कौशिकीं तत्र सेवेत महापातकनाशिनीम् ॥
राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ४८
ततो गच्छेत धर्मज्ञ चम्पकारण्यमुत्तमम् । तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ४९
अथ गोविन्दमासाद्य तीर्थं परमसंमतम् । उपोष्य रजनीमेकामग्निष्टोमफलं लभेत् ॥ ५०
तत्र विश्वेश्वरं दृष्ट्वा देव्या सह महाद्युतिम् । मित्रावरुणयोर्लोकान्प्राप्नुयाद्भरतर्षभ ॥
त्रिरात्रोपोषितस्तत्र अग्निष्टोमफलं लभेत् ॥ ५१
कन्यासंवेद्यमासाद्य नियतो नियताशनः । मनोः प्रजापतेर्लोकानाप्नोति भरतर्षभ ॥ ५२
कन्यायां ये प्रयच्छन्ति दानमण्वपि भारत । तदक्षयमिति प्राहुर्ऋषयः संशितव्रताः ॥ ५३
निष्ठावासं समासाद्य त्रिषु लोकेषु विश्रुतम् । अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ५४
ये तु दानं प्रयच्छन्ति निष्ठायाः संगमे नराः । ते यान्ति नरशार्दूल ब्रह्मलोकमनामयम् ॥ ५५
तत्राऽऽश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः । तत्राभिषेकं कुर्वाणो वाजपेयमवाप्नुयात् ॥ ५६
देवकूटं समासाद्य देवर्षिगणसेवितम् । अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ५७
ततो गच्छेत राजेन्द्र कौशिकस्य मुनेर्ह्रदम् । यत्र सिद्धिं परां प्राप विश्वामित्रोऽथ कौशिकः ५८
तत्र मासं वसेद्धीरः कौशिक्यां भरतर्षभ । अश्वमेधस्य यत्पुण्यं तन्मासेनाधिगच्छति ॥ ५९
सर्वतीर्थवरं चैव यः सेवेत महाह्रदम् । न दुर्गतिमवाप्नोति विन्द्याद्बहुसुवर्णकम् ॥ ६०
कुमारमभिगम्याथ वीराश्रमनिवासिनम् । अश्वमेधमवाप्नोति शक्रलोकं च गच्छति ॥ ६१
नन्दिन्यां च समासाद्य कूपं त्रिदशसेवितम् । नरमेधस्य यत्पुण्यं तत्प्राप्नोति कुरूद्वह ॥ ६२
कालिकासंगमे स्नात्वा कौशिक्यारुणयोर्यतः । त्रिरात्रोपोषितो विद्वान्सर्वपापैः प्रमुच्यते ॥ ६३
उर्वशीतीर्थमासाद्य तथा सोमाश्रमं बुधः । कुम्भकर्णाश्रमे स्नात्वा पूज्यते भुवि मानवः ॥ ६४
तथा कोकामुखे स्नात्वा ब्रह्मचारी समाहितः । जातिस्मरत्वं प्राप्नोति दृष्टमेतत्पुरातनैः ॥ ६५

१ ङ. गोष्ठं समा । २ ख. म. 'न्यावसथमा' ।

सकृन्नदीं समासाद्य कृतार्थो भवति द्विजः । सर्वपापविशुद्धात्मा स्वर्गलोकं च गच्छति ॥ ६६
ऋषभद्वीपमासाद्य सेव्य क्रौञ्चनिषूदनम् । सरस्वत्यामुपस्पृश्य विमानस्थो विराजते ॥ ६७
औद्यानकं महाराज तीर्थं मुनिनिषेवितम् । तत्राभिषेकं कुर्वीत सर्वपापैः प्रमुच्यते ॥ ६८
ब्रह्मतीर्थं समासाद्य पुण्यं ब्रह्मर्षिसेवितम् । वाजपेयमवाप्नोति नरो नास्त्यत्र संशयः ॥ ६९
ततश्चम्पां समासाद्य भागीरथ्यां कृतोदकः । दण्डार्पणं समासाद्य गोसहस्रफलं लभेत् ॥ ७०
लविढिकां[1] ततो गच्छेत्पुण्यां पुण्यनिषेविताम् । वाजपेयमवाप्नोति विमानस्थश्च पूज्यते ॥ ७१

इति श्रीमहापुराणे पाद्म आदिखण्डे गयादितीर्थमाहात्म्यकथनं नामाष्टात्रिंशोऽध्यायः ॥ ३८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२०३४

---

अथैकोनचत्वारिंशोऽध्यायः ।

---

नारद उवाच—

अथ संध्यां समासाद्य[2] संविद्यां[3] तीर्थमुत्तमम् । उपस्पृश्य नरो विद्वान्भवेन्नास्त्यत्र संशयः ॥ १
रामस्य च प्रसादेन तीर्थराजं कृतं पुरा । तल्लौहित्यं समासाद्य विन्द्याद्बहुसुवर्णकम् ॥ २
करतोयां समासाद्य त्रिरात्रोपोषितो नरः । अश्वमेधमवाप्नोति शक्रलोकं च गच्छति ॥ ३
गङ्गायास्त्वथ राजेन्द्र सागरस्य च संगमे । अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ४
गङ्गायास्तु परं द्वीपं प्राप्य यः स्नाति भारत । त्रिरात्रोपोषितो राजन्सर्वकाममवाप्नुयात् ॥ ५
ततो वैतरणीं गत्वा नदीं पापप्रमोचनीम् । विरजं[4] तीर्थमासाद्य विराजति यथा शशी ॥ ६
प्रभावे[5] च कुलं गत्वा सर्वपापं व्यपोहति । गोसहस्रफलं लब्ध्वा पुनाति स्वकुलं नरः ॥ ७
शोणस्य ज्योतिरथ्याश्च सङ्गमे निवसञ्शुचिः । तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत् ॥ ८
शोणस्य नर्मदायाश्च प्रभवे कुरुपुङ्गव । वंशगुल्ममुपस्पृश्य वाजिमेधफलं लभेत् ॥ ९
ऋषभं तीर्थमासाद्य कोशलायां नराधिप । वाजिमेधमवाप्नोति त्रिरात्रोपोषितो नरः ॥ १०
कोशलायां समासाद्य कालतीर्थमुपस्पृशेत् । वृषभैकादशगुणं लभते नात्र संशयः ॥ ११
पुष्पवत्यामुपस्पृश्य त्रिरात्रोपोषितो नरः । गोसहस्रफलं विन्द्यात्कुलं चैव समुद्धरेत् ॥ १२
ततो बदरिकातीर्थे स्नात्वा प्रयतमानसः । दीर्घायुष्यमवाप्नोति स्वर्गलोकं च गच्छति ॥ १३
ततो महेन्द्रमासाद्य जामदग्न्यनिषेवितम् । रामतीर्थे नरः स्नात्वा वाजिमेधफलं लभेत् ॥ १४
मतङ्गस्य[6] तु केदारं तत्रैव भरतर्षभ । तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ १५
श्रीपर्वतं समासाद्य नदीतीरमुपस्पृशेत् । अश्वमेधमवाप्नोति परां सिद्धिं च गच्छति ॥ १६
श्रीपर्वते महादेवो देव्या सह महाद्युतिः[7] । न्यवसत्परमप्रीतो ब्रह्मा च त्रिदशैर्वृतः ॥ १७
तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः । अश्वमेधमवाप्नोति परां सिद्धिं च गच्छति ॥ १८
ऋषभं पर्वतं गत्वा भाण्डेषु[8] सुरपूजितम् । वाजपेयमवाप्नोति नाकपृष्ठे च मोदते ॥ १९
ततो गच्छेत कावेरीं वृतामप्सरसां गणैः । तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ २०
तत्र तीर्थे समुद्रस्य कन्यातीर्थमुपस्पृशेत् । तत्रोपस्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते ॥ २१

१ ट. लावढिकां । २ ख. म. °द्य विद्यातीर्थमनुत्त° । ३ ट. सद्विद्यां । ४ ख. म. विराजं । ५ ग. म. प्रभवे मेकले ग° । ६ ख. म. नतङ्गस्य । ७ ख. म. °तिः । रमते पर° । ८ ट. पाण्डेषु ।

अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतम् । समुद्रमध्ये राजेन्द्र सर्वलोकनमस्कृतम् ॥ २२
यत्र ब्रह्मादयो देवा मुनयश्च तपोधनाः । भूतयक्षाः पिशाचाश्च किंनराः समहोरगाः ॥ २३
सिद्धचारणगन्धर्वा मानुषाः पन्नगास्तथा । सरितः सागराः शैला उपासत उमापतिम् ॥ २४
त्रिशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः । दशाश्वमेधानाप्नोति गाणपत्यं च विन्दति ॥ २५
उपोष्य द्वादशं रात्रं कृतार्थो जायते नरः । तस्मिन्नेव तु गायत्र्याः स्थानं त्रैलोक्यविश्रुतम् ॥ २६
त्रिरात्रमुषितस्तत्र गोसहस्रफलं लभेत् । निदर्शनं च प्रत्यक्षं ब्राह्मणानां नराधिप ॥ २७
गायत्रीं पठते यस्तु योनिसंकरजो द्विजः । गाथा वा गीतिका वाणी तस्य संपद्यते नृप ॥ २८
अब्राह्मणस्य पठतः सावित्री तूपनश्यति । संवर्तस्य तु विप्रर्षेर्वापीमासाद्य दुर्लभाम् ॥
रूपस्य भागी भवति सुभगश्चाभिजायते ॥ २९
ततो वर्णोद्यमासाद्य तर्पयेत्पितृदेवताः । मयूरहंससंयुक्तं विमानं लभते नरः ॥ ३०
ततो गोदावरीं प्राप्य नित्यसिद्धनिषेविताम् । गवामयमवाप्नोति वायुलोकं च गच्छति ॥ ३१
वेणायाः संगमे स्नात्वा वाजपेयफलं लभेत् । वरदासंगमे स्नात्वा गोसहस्रफलं लभेत् ॥ ३२
ब्रह्मस्थूणां समासाद्य त्रिरात्रोपोषितो नरः । गोसहस्रफलं विन्द्यात्स्वर्गलोकं च गच्छति ॥ ३३
कुब्जावनं समासाद्य ब्रह्मचारी समाहितः । त्रिरात्रोपोषितः स्नात्वा गोसहस्रफलं लभेत् ॥ ३४
ततो देवह्रदे स्नात्वा कृष्णवर्णजलोद्भवे । ज्योतिर्मात्रह्रदे चैव तथा कन्याश्रमे नृप ॥ ३५
यत्र क्रतुशतैरिष्ट्वा देवराजो दिवं गतः । अग्निष्टोमशतं विन्द्याद्गमनादेव तत्र तु ॥ ३६
सर्वदेवह्रदे स्नात्वा गोसहस्रफलं लभेत् । जातिमात्रह्रदे स्नात्वा भवेज्जातिस्मरो नरः ॥ ३७
ततो वापीं महापुण्यां पयोष्णीं सरितां वराम् । पितृदेवार्चनरतो गोसहस्रफलं लभेत् ॥ ३८
दण्डकारण्यमासाद्य महाराज उपस्पृशेत् । शरभङ्गाश्रमं गत्वा शुकस्य च महात्मनः ॥
न दुर्गतिमवाप्नोति पुनाति स्वकुलं नरः ॥ ३९
ततः सूर्यारकं गच्छेज्जमदग्निनिषेवितम् । रामतीर्थे नरः स्नात्वा विन्द्याद्बहुसुवर्णकम् ॥ ४०
सप्तगोदावरीं स्नात्वा नियतो नियताशनः । महापुण्यमवाप्नोति देवलोकं च गच्छति ॥ ४१
ततो देवपथं गच्छेन्नियतो नियताशनः । देवसत्रस्य यत्पुण्यं तदवाप्नोति मानवः ॥ ४२
तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः । वेदानध्यापयत्तत्र मुनीन्सारस्वतः पुरा ॥ ४३
तत्र वेदान्प्रनष्टांस्तु मुनेरङ्गिरसः सुतः । उपविष्टो महर्षीणामुत्तरीयेषु भारत ॥ ४४
ओंकारेण यथान्यायं सम्यगुच्चारितेन ह । येन यत्पूर्वमभ्यस्तं तस्य तत्समुपस्थितम् ॥ ४५
ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः । हरिर्नारायणो देवो महादेवस्तथैव च ॥ ४६
पितामहश्च भगवान्देवैः सह महाद्युतिः । भृगुं नियोजयामास याजनार्थे महाद्युतिम् ॥ ४७
ततः स चक्रे भगवानृषीणां विधिवत्तदा । सर्वेषां पुनराधानं वेददृष्टेन कर्मणा ॥ ४८
आज्यभागेन वै तत्र तर्पितास्तु यथाविधि । देवास्त्रिभुवनं याता ऋषयश्च यथासुखम् ॥ ४९
तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम । पापं विनश्यते सद्यः स्त्रिया वै पुरुषस्य वा ॥ ५०
तत्र मासं वसेद्धीरो नियतो नियताशनः । ब्रह्मलोकं व्रजेद्राजन्पुनीते च कुलं पुनः ॥ ५१
मेधावनं समासाद्य पितृदेवांश्च तर्पयेत् । अग्निष्टोममवाप्नोति स्मृतिं मेधां च विन्दति ॥ ५२

१ ट. योऽनिशं कण्ठतो द्वि° । २ ट. °तो वेणां समा° । ३ अ. °म् । राजसूय° । ४ अ. °ष्णवेणज° । ५ ख. अ. सूर्यार्यकं । ट. गुर्यारकं ।

तत्र कालंजरं गत्वा गोसहस्रफलं लभेत् । आत्मानं साधयेत्तत्र गिरौ कालंजरे नृप ॥ ६६
स्वर्गलोके महीयेत नरो नास्त्यत्र संशयः ॥ ६७
ततो गिरिवरश्रेष्ठे चित्रकूटे विशां पते । मन्दाकिनीं समासाद्य नदीं पापप्रमोचनीम् ॥ ६८
अत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः । अश्वमेधमवाप्नोति गतिं च परमां व्रजेत् ॥ ६९
ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमम् । यत्र देवो महासेनो नित्यं संनिहितो नृप ॥ ७०
पुमांस्तत्र नरश्रेष्ठ गमनादेव सिध्यति । कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ५७
प्रदक्षिणमुपावृत्य शिवस्थानं व्रजेन्नरः । अभिगम्य महादेवं विराजति यथा शशी ॥ ५८
तत्र कूपो महाराज विश्रुतो भरतर्षभ । समुद्रा यत्र चत्वारो निवसन्ति युधिष्ठिर ॥ ५९
तत्रोपस्पृश्य राजेन्द्र कृत्वा चापि प्रदक्षिणम् । नियतात्मा नरः पूतो गच्छेत परमां गतिम् ॥ ६०
ततो गच्छेत्कुरुश्रेष्ठ शृङ्गवेरपुरं महत् । यत्र तीर्णो महाप्राज्ञो रामो दाशरथिः पुरा ॥ ६१
गङ्गायां तु नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः । विधूतपाप्मा भवति वाजपेयं च विन्दति ॥ ६२
ततो मुञ्जवटं गच्छेत्स्थानं देवस्य धीमतः । अभिगम्य महादेवमभ्यर्च्य च नराधिप ॥ ६
प्रदक्षिणमुपावृत्य गाणपत्यमवाप्नुयात् ॥ ६
ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुतम् । यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ॥ ६
लोकपालाश्च सिद्धाश्च निरताः पितरस्तथा । सनत्कुमारप्रमुखास्तथैव च महर्षयः ॥
तथा नागाः सुपर्णाश्च सिद्धाः शुक्रधरास्तथा । सरितः सागराश्चैव गन्धर्वाप्सरसस्तथा ॥ ६
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥ ६७
तत्र त्रीण्यपि कुण्डानि तयोर्मध्येन जाह्नवी । प्रयागात्समतिक्रान्ता सर्वतीर्थपुरस्कृता ॥ ६८
तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता । यमुना गङ्गया सार्धं संगता लोकभाविनी ॥
गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् । प्रयागं जघनस्यान्तमुपस्थमृषयो विदुः ॥ ६९
प्रयागं सुप्रतिष्ठानं कम्बलाश्वतरावुभौ ॥ ७०
तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः । तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर ॥ ७१
प्रजापतिमुपासन्त ऋषयश्च महानघाः । यजन्ते क्रतुभिर्देवास्तथा चक्रधरा नृप ॥ ७२
ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत । प्रयागं सर्वतीर्थेभ्यः प्रभावेणाधिकं प्रभो ॥ ७३
श्रवणात्तस्य तीर्थस्य नामसंकीर्तनादपि । मृत्तिकालम्भनाद्वाऽपि सर्वपापैः प्रमुच्यते ॥ ७
तत्राभिषेकं यः कुर्यात्संगमे संशितव्रतः । पुण्यं सुमहदाप्नोति राजसूयाश्वमेधयोः ॥ ७
एषा यजनभूमिर्हि देवानामपि सत्कृता । दत्तं तत्र स्वल्पमपि महद्भवति भारत ॥ ७
न देववचनात्तात न लोकवचनादपि । मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥ ७
दशतीर्थसहस्राणि षष्टिकोट्यस्तथा पराः । येषां सांनिध्यमत्रैव कीर्तितं कुरुनन्दन ॥ ७
चातुर्विद्ये च यत्पुण्यं सत्यवादिषु चैव यत् । स्नात एव तदाप्नोति गङ्गायमुनसंगमे ॥ ७
ततो भोगवती नाम वासुकेस्तीर्थमुत्तमम् । तत्राभिषेकं यः कुर्यात्सोऽश्वमेधमवाप्नुयात् ॥ ७
तत्र हंसप्रपतनं तीर्थं त्रैलोक्यविश्रुतम् । दशाश्वमेधिकं चैव गङ्गायां कुरुनन्दन ॥ ८
कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता । विशेषो वै कनखले प्रयागे परमं महत् ॥
यद्यकार्यशतं कृत्वा कृतं गङ्गावसेचनम् । सर्वं तत्तस्य गङ्गापो दहत्यग्निरिवेन्धनम् ॥

१ म. ततः । २ ख. म. 'न्त्र गुहस्था' । ३ ख. म. 'श्च विद्याव्रतध' । ४ ट. 'कपावनी । ५ ट. 'पि । मृत्तिका'

सर्वं दहति गङ्गापस्तूलराशिमिवानलः । सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करं स्मृतम् ॥ ८३
द्वापरे तु कुरुक्षेत्रं गङ्गा कलियुगे स्मृता । पुष्करे तु तपस्तप्येद्दानं दद्यान्महालये ॥ ८४
मलये त्वग्निमारोहेद्भृगुतुङ्गे त्वनाशनम् । पुष्करे तु कुरुक्षेत्रे गङ्गापोमध्यमेषु च ॥
सद्यस्तारयते जन्तुः सप्तसप्तावरांस्तथा ॥ ८५
पुनाति कीर्तिता पापं दृष्टा तत्र (भद्रं) प्रयच्छति । अवगाढा च पीता च पुनात्यासप्तमं कुलम् ॥ ८६
यावदस्थि मनुष्यस्य गङ्गायाः स्पृशते जलम् । तावत्स पुरुषो राजन्स्वर्गलोके महीयते ॥ ८७
यथा पुण्यानि तीर्थानि पुण्यान्यायतनानि च । उपास्य पुण्यं लब्ध्वा च भवति परलोकभाक् ॥ ८८
न गङ्गासदृशं तीर्थं न देवः केशवात्परः । ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥ ८९
यत्र गङ्गा महाराज स देशस्तत्तपोवनम् । सिद्धक्षेत्रं च विज्ञेयं गङ्गातीरसमाश्रितम् ॥ ९०
इदं सत्यं द्विजातीनां साधूनां मानसेषु च । मुक्तिं चैव जपेत्कर्णे शिष्टस्यानुगतस्य च ॥ ९१
इदं धर्म्यमिदं मेध्यमिदं स्वर्ग्यमिदं सुखम् । इदं पुण्यतमं रम्यं पावनं धर्ममुत्तमम् ॥ ९२
महाशिषमिदं गुह्यं सर्वपापप्रमोचनम् । अधीत्य द्विजमध्ये च निर्मलत्वमवाप्नुयात् ॥ ९३
श्रीमत्स्वर्ग्यं महापुण्यं सपत्नशमनं शिवम् । मेधाजननमग्र्यं वै तीर्थवंशानुकीर्तनम् ॥ ९४
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् । महीं विजयते राजा वैश्यो धनमवाप्नुयात् ॥
शूद्रो वाऽथेप्सितान्कामान्ब्राह्मणः पारगः पठन् ॥ ९५
यश्चेदं शृणुयान्नित्यं तीर्थपुण्यं सदा शुचिः । जातीः संस्मरते बह्वीर्नाकपृष्ठे च मोदते ॥ ९६
गम्यान्यपि च तीर्थानि कीर्तितान्यगमान्यपि । मनसाऽप्यभिगच्छेत सर्वतीर्थमभीप्सया ॥ ९७
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः । ऋषिभिर्देवकल्पैश्च श्रितानि सुकृतैषिभिः ॥ ९८
एवं त्वमपि कौरव्य विधिनाऽनेन सुव्रत । व्रज तीर्थानि नियतः पुण्यं पुण्येन वर्धते ॥ ९९
भावितैः कारणैः पूर्वमास्तिक्याच्छ्रुतिदर्शनात् । प्राप्यन्ते तानि तीर्थानि सद्भिः शिष्टानुदर्शिभिः ॥
नाव्रतो नाकृतात्मा च नाशुचिर्न च तस्करः । स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ १०१
त्वया तु सम्यग्वृत्तेन नित्यं धर्मार्थदर्शिना । पितरस्तर्पितास्तात सर्वे च प्रपितामहाः ॥
पितामहपुरोगाश्च देवाः सर्षिगणास्तथा ॥ १०२

[ *वसिष्ठ उवाच— ]

च धर्मेण धर्मज्ञ नित्यमेवाभितोषितः । दिलीप कीर्तिं महतीं प्राप्स्यसे भुवि शाश्वतीम् ॥ १०३

नारद उवाच—

एवमुक्त्वाऽभ्यनुज्ञाप्य वसिष्ठो भगवानृषिः । प्रातः प्रीतेन मनसा तत्रैवान्तरधीयत ॥ १०४
दिलीपः कुरुशार्दूल शास्त्रतत्त्वार्थदर्शनात् । वसिष्ठवचनाच्चैव पृथिवीमनुचक्रमे ॥ १०५
एवमेषा महाभाग प्रतिष्ठाने प्रतिष्ठिता । तीर्थयात्रा महापुण्या सर्वपापप्रमोचनी ॥ १०६
अनेन विधिना यस्तु पृथिवीं पर्यटिष्यति । अश्वमेधशतं साग्रं फलं प्रेत्यैष भोक्ष्यते ॥ १०७
तस्माष्टगुणं पार्थ प्राप्स्यसे धर्ममुत्तमम् । दिलीपः पार्थ नृपतिर्यथा पूर्वमवाप्तवान्[३] ॥
नेता च त्वमृषीन्यस्मात्तस्मात्तेऽष्टगुणं फलम् ॥ १०८
रक्षोगणविकीर्णानि तीर्थान्येतानि भारत । न गतिर्विद्यतेऽन्यस्य त्वामृते कुरुनन्दन ॥ १०९

* इदं ख. ञ. पुस्तकयोरेव ।

१ ख. ञ. °ङ्गायोध्यापुरेषु । २ ख. ञ. महर्षीणामि° । ३ ख. ञ. °नू । सेवसे त्व° ।

इदं देवर्षिचरितं सर्वतीर्थानुसंश्रितम् । यः पठेत्कल्य उत्थाय सर्वपापैः प्रमुच्यते ॥ ११०
ऋषिमुख्याः सदा यत्र वाल्मीकिस्त्वथ कश्यपः। आत्रेयस्त्वथ कौण्डिन्यो विश्वामित्रोऽथ गोतमः ॥ १११
असितो देवलश्चैव मार्कण्डेयोऽथ गालवः । भरद्वाजस्य शिष्यश्च मुनिरुद्दालकस्तथा ॥ ११२
शौनकः सह पुत्रेण व्यासश्च तपतां वरः । दुर्वासाश्च मुनिश्रेष्ठो जाबालिश्च महातपाः ॥ ११३
एते ऋषिवराः सर्वे त्वत्प्रतीक्ष्यास्तपोधनाः । एभिः सह महाभाग तीर्थान्येतान्यनुव्रज ॥
प्राप्स्यसे महतीं कीर्तिं यथा राजा महाभिषः ॥ ११४
यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः । तथा त्वं कुरुशार्दूल स्वेन धर्मेण शोभसे ॥ ११५
यथा भगीरथो राजा यथा रामश्च विश्रुतः । यथा वै वृत्रहा सर्वान्सपत्नानदहत्पुरा ॥ ११६
त्रैलोक्यं पालयामास देवराड्विगतज्वरः । तथा शत्रुक्षयं कृत्वा त्वं प्रजाः पालयिष्यसि ॥ ११७
स्वधर्मेणार्जितामुर्वीं प्राप्य राजीवलोचन । ख्यातिं यास्यसि वीर्येण कार्तवीर्यार्जुनो यथा ॥ ११८

सूत उवाच—

एवमाभाष्य राजानं नारदो भगवानृषिः । अनुज्ञाप्य महाराजं तत्रैवान्तरधीयत ॥ ११९
युधिष्ठिरोऽपि धर्मात्मा ऋषिभिः सह सुव्रतः । जगामाखिलतीर्थानि सादरः पृथिवीपतिः १२०
मयोक्तामृषयः सर्वे तीर्थयात्राश्रयां कथाम् । यः पठेच्छृणुयाद्वाऽपि स मुक्तः सर्वपातकैः ॥ १२१
मयोक्तमखिलं तत्त्वं किं भूयः श्रोतुमिच्छथ । ऋषीणां पुण्यकीर्तीनां नावक्तव्यं ममास्ति वै ॥ १२२

इति श्रीमहापुराणे पाद्म आदिखण्डे नानाविधतीर्थकथनं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२१५६

---

अथ चत्वारिंशोऽध्यायः।

---

सूत उवाच—

एवमुक्तानि तीर्थानि विष्णुदेहानि सुव्रताः । एषामन्यतमासङ्गान्मुक्तो भवति मानवः ॥ १
तीर्थानुश्रवणं धन्यं धन्यं तीर्थनिषेवणम् । पापराशिनिपाताय नान्योपायः कलौ युगे ॥ २
वासं कुर्यामहं तीर्थे तीर्थस्पर्शमहं तथा । एवं योऽनुदिनं ब्रूते स याति परमं महत् ॥ ३
पापानि तस्य नश्यन्ति तीर्थालापनमात्रतः । तीर्थानि खलु धन्यानि धन्यसेव्यानि सुव्रताः ॥ ४
तीर्थानां सेविनां देव सेवितो भवति प्रभुः । नारायणो जगत्कर्ता नास्ति तीर्थात्परं पदम् ॥ ५
ब्राह्मणस्तुलसी चैव अश्वत्थस्तीर्थसंचयः । विष्णुश्च परमेशानः सेव्य एव सदा नृभिः ॥ ६
ब्राह्मणानां विशेषेण सेवनं मुनिपुङ्गवाः । सर्वतीर्थावगाहादेरधिकं विदुरग्रजाः ॥ ७
तस्माद्वि(द्वि)जपदं साक्षात्सर्वतीर्थमयं शुभम् । भजेतानुदिनं विद्वांस्तत्र तीर्थाधिकं भवेत् ॥ ८
अश्वत्थस्य तुलस्याश्च गवां सूर्यात्प्रदक्षिणात् । सर्वतीर्थफलं प्राप्य विष्णुलोके महीयते ॥ ९
तस्माद्दुष्कृतकर्माणि नाशयेत्तीर्थसेवनात् । अन्यथा नरकं याति कर्म भोगाद्धि शाम्यति ॥ १०
पापिनां नरके वासः सुकृती स्वर्गमश्नुते । तस्मात्पुण्यं निषेवेत तीर्थं खलु विचक्षणः ॥ ११

ऋषय ऊचुः—

श्रुतानि किल तीर्थानि समाहात्म्यानि सुव्रत । इदानीं श्रोतुमिच्छामः प्रयागस्य विशेषकम् ॥ १२

---

१ ख. म. जपतां । २ ख. म. भगीरथः ।

प्रयागं तु पुरा प्रोक्तं संक्षेपात्सूत यत्त्वया । विशेषाच्छ्रोतुमिच्छामः सूत नः कथ्यतामिति ॥ १३

सूत उवाच—

साधु पृष्टं महाभागाः प्रयागं प्रति सुव्रताः । हन्ताहं तत्प्रवक्ष्यामि प्रयागस्योपवर्णनम् ॥ १४
मार्कण्डेयेन कथितं यत्पुरा पाण्डुसूनवे । भारते च तदा वृत्ते प्राप्तराज्ये पृथासुते ॥ १५
एतस्मिन्नन्तरे राजा कुन्तीपुत्रो युधिष्ठिरः । भ्रातृशोकेन संतप्तश्चिन्तयंस्तु पुनः पुनः ॥ १६
आसीद्दुर्योधनो राजा एकादशचमूपतिः । अस्मान्संतप्य बहुशः सर्वे ते निधनं गताः ॥ १७
वासुदेवं समाश्रित्य पञ्च शेषास्तु पाण्डवाः । कथं द्रोणं च भीष्मं च कर्णं चैव महाबलम् ॥ १८
दुर्योधनं च राजानं भ्रातृपुत्रसमन्वितम् । राजानो निहताः सर्वे ये चान्ये शूरमानिनः ॥ १९
विना राज्येन कर्तव्यं किं भोगैर्जीवितेन वा । धिक्कष्टमिति संचिन्त्य राजा विह्वलतां गतः ॥ २०
निश्चेष्टोऽथ निरुत्साहः किंचित्तिष्ठत्यधोमुखः । लब्धसंज्ञो यदा राजा चिन्तयानः पुनः पुनः २१
कं चरे विधिना योगं नियमं तीर्थमेव वा । येनाहं शीघ्रमामुच्ये महापातककिल्बिषात् ॥ २२
यत्र स्नात्वा नरो याति विष्णुलोकमनुत्तमम् । कथं पृच्छामि वै कृष्णं येनेदं कारितं महत् ॥ २३
धृतराष्ट्रं कथं पृच्छे यस्य पुत्रशतं हतम् । व्यासं कथमहं पृच्छे यस्य गोत्रक्षयः कृतः ॥ २४
एवं वैक्लव्यमापन्नो धर्मपुत्रो युधिष्ठिरः । रुदन्तः पाण्डवाः सर्वे भ्रातृशोकपरिप्लुताः ॥ २५
ये च तत्र महात्मानः समेताः पाण्डवाश्रिताः । कुन्ती च द्रौपदी चैव ये च तत्र समागताः ॥
भूमौ निपतिताः सर्वे रोदमानाः समन्ततः ॥ २६
वाराणस्यां तु मार्कण्डस्तेन ज्ञातो युधिष्ठिरः । यथा विक्लवमापन्नो रोदमानः सुदुःखितः ॥ २७
अचिरेणैव कालेन मार्कण्डस्तु महातपाः । हस्तिनापुरसंप्राप्तो राजद्वारे स तिष्ठति ॥ २८
द्वारपालोऽपि तं दृष्ट्वा राज्ञः कथितवान्द्रुतम् । त्वां द्रष्टुकामो मार्कण्डो द्वारे तिष्ठत्यसौ मुनिः ॥
त्वरितो धर्मपुत्रस्तु द्वारमेत्याऽऽह तत्परः ॥ २९

युधिष्ठिर उवाच—

स्वागतं ते महाप्राज्ञ स्वागतं ते महामुने । अद्य मे सफलं जन्म अद्य मे पावितं कुलम् ॥
अद्य मे पितरस्तृप्तास्त्वयि दृष्टे महामुने ॥ ३०
सिंहासन उपस्थाप्य पादशौचार्चनादिभिः । युधिष्ठिरो महात्मा वै पूजयामास तं मुनिम् ॥ ३१
ततस्तमूचे मार्कण्डः पूजितोऽहं त्वया विभो । आख्याहि त्वरितो राजन्किमर्थं त्वरितं त्वया ॥
केन वा विक्लवीभूतः कथयस्व ममाग्रतः ॥ ३२

युधिष्ठिर उवाच—

अस्माकं चैव यद्वृत्तं राज्यस्यार्थे महामुने । एतत्सर्वं विदित्वा तु भगवानिह चाऽऽगतः ॥ ३३

मार्कण्डेय उवाच—

शृणु राजन्महाबाहो यत्र धर्मो व्यवस्थितः । नैव दृष्टं रणे पापं युध्यमानस्य धीमतः ॥ ३४
किं पुरा राजधर्मेण क्षत्रियस्य विशेषतः । तदेवं हृदये कृत्वा तस्मात्पापं न चिन्तयेत् ॥ ३५
ततो युधिष्ठिरो राजा प्रणम्य शिरसा मुनिम् । पृच्छामि त्वां मुनिश्रेष्ठ सदा त्रैकाल्यदर्शनम् ॥
कथय त्वं समासेन मुच्येऽहं येन किल्बिषात् ॥ ३६

---

१ क. ततः स तुष्टो मा° ।

मार्कण्डेय उवाच—
शृणु राजन्महाभाग यन्मां पृच्छसि भारत । एवं सांख्यं च योगं च तीर्थं चैव युधिष्ठिर ॥ ३७
किं पुनर्ब्राह्मणैः पुण्यैः कीर्तितं वै पुरा विभो । प्रयागगमनं श्रेष्ठं नराणां पुण्यकर्मणाम् ॥ ३८

इति श्रीमहापुराणे पाद्म आदिखण्डे चत्वारिंशोऽध्यायः ॥ ४० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२१९४

अथैकचत्वारिंशोऽध्यायः ।

युधिष्ठिर उवाच—
भगवञ्श्रोतुमिच्छामि पुरा कल्पे यथा स्थितम् । कथं प्रयागगमनं नराणां तत्र कीदृशम् ॥ १
मृतानां का गतिस्तत्र स्नातानां चैव किं फलम् । ये वसन्ति प्रयागे तु ब्रूहि तेषां च किं फलम् ॥
एतन्मे सर्वमाख्याहि परं कौतूहलं हि मे ॥ २
मार्कण्डेय उवाच—
कथयिष्यामि ते वत्स नाथेष्टं यच्च यत्फलम् । पुरा ऋषीणां विप्राणां[२] कथ्यमानं मया श्रुतम् ॥ ३
आप्रयागात्प्रतिष्ठानाद्धर्मकीवासुकीह्रदात् । कम्बलाश्वतरौ नागौ नागाश्च बहुमूलिकाः ॥ ४
एतत्प्रजापतिक्षेत्रं त्रिषु लोकेषु विश्रुतम् । अत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ ५
तत्र ब्रह्मादयो देवा रक्षां कुर्वन्ति संगताः । अन्ये च बहवस्तीर्थाः सर्वपापहराः शुभाः ॥ ६
न शक्याः कथितुं राजन्बहुवर्षशतैरपि । संक्षेपेण प्रवक्ष्यामि प्रयागस्य च कीर्तनम् ॥ ७
षष्टिर्धनुःसहस्राणि परिरक्षन्ति जाह्नवीम् । यमुनां रक्षति सदा सविता सप्तवाहनः ॥ ८
प्रयागं तु विशेषेण स्वयं रक्षति वासवः । मण्डलं रक्षति हरिर्देवैः सह सुसंमतम् ॥ ९
तं वटं रक्षते नित्यं शूलपाणिर्महेश्वरः । स्थानं रक्षन्ति वै देवाः सर्वपापहरं शुभम् ॥
अधर्मेण वृतो लोको नैव गच्छति सत्पदम् ॥ १०
स्वल्पमल्पतरं पापं यदा तस्य नराधिप । प्रयागं स्मरमाणस्य सर्वमायाति संक्षयम् ॥ ११
दर्शनात्तस्य तीर्थस्य नामसंकीर्तनादपि । मृत्तिकालभनाद्वाऽपि नरः पापाद्विमुच्यते ॥ १२
पञ्च कुण्डानि राजेन्द्र येषां मध्ये तु जाह्नवी । प्रयागे तु प्रविष्टस्य पापं नश्यति तत्क्षणात् ॥ १३
योजनानां सहस्रेषु गङ्गां स्मरति यो नरः । अपि दुष्कृतकर्माऽसौ लभते परमां गतिम् ॥ १४
कीर्तनान्मुच्यते पापैर्दृष्ट्वा भद्राणि पश्यति । अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम् ॥ १५
सत्यवादी जितक्रोधो अहिंसां परमां स्थितः । धर्मानुसारी तत्त्वज्ञो गोब्राह्मणहिते रतः ॥ १६
गङ्गायमुनयोर्मध्ये स्नातो मुच्येत किल्बिषात् । मनसा चिन्तितान्कामान्सम्यक्प्राप्नोति पुष्कलान् ॥
ततो गत्वा प्रयागं तु सर्वदेवाभिरक्षितम् । ब्रह्मचारी वसेन्मासं पितॄन्देवांश्च तर्पयेत् ॥
ईप्सिताँल्लभते कामान्यत्र तत्राभिजायते ॥ १८
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता । समागता महाभागा यमुना यत्र निम्नगा ॥ १९
तत्र संनिहितो नित्यं साक्षाद्देवो महेश्वरः । दुष्प्रापं मानुषैः पुण्यं प्रयागं तु युधिष्ठिर ॥ २०

१ ख. म. °त्स प्रयागस्य च य° । २ ख. म. सदसि° ।

देवदानवगन्धर्वा ऋषयः सिद्धचारणाः । तत्रोपस्पृश्य राजेन्द्र स्वर्गलोके सुखं गताः ॥ २१

इति श्रीमहापुराणे पाद्म आदिखण्ड एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२१५

---

अथ द्विचत्वारिंशोऽध्यायः ।

---

मार्कण्डेय उवाच—

शृणु राजन्प्रयागस्य माहात्म्यं पुनरेव तु । प्रयागे सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १
आर्तानां च दरिद्राणां निश्चितव्यवसायिनाम् । स्थानं मुक्त्वा प्रयागं तु नाश्चर्यं तु कदाचन ॥ २
गङ्गायमुनमासाद्य यस्तु प्राणान्परित्यजेत् । दीप्तकाञ्चनवर्णाभे विमाने सूर्यवर्चसि ॥ ३
गन्धर्वाप्सरसां मध्ये स्वर्गे मोदेत मानवः । ईप्सितांल्लँभते कामान्वदन्ति ऋषिपुंगवाः ॥ ४
सर्वरत्नमयैर्दिव्यैर्नानाध्वजसमाकुलैः । वराङ्गनासमाकीर्णैर्मोदते शुभलक्षणैः ॥ ५
गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते । यावन्न स्मरते जन्म तावत्स्वर्गे महीयते ॥ ६
तत्र स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः । हिरण्यरत्नसंपूर्णे समृद्धे जायते कुले ॥ ७
तदेव स्मरते तीर्थं स्मरणात्तत्र गच्छति । देशस्थो यदि वाऽरण्ये विदेशे यदि वा गृहे ॥ ८
प्रयागं स्मरमात्रोऽपि यस्तु प्राणान्परित्यजेत् । स ब्रह्मलोकमाप्नोति वदन्ति ऋषिपुंगवाः ॥ ९
सर्वकामफला वृक्षा मही यत्र हिरण्मयी । ऋषयो मुनयः सिद्धा यत्र लोके प्रगच्छति ॥ १०
स्त्रीसहस्राकुले रम्ये मन्दाकिन्यास्तटे शुभे । मोदते ऋषिभिः सार्धं स्वकृतेनेह कर्मणा ॥ ११
सिद्धचारणगन्धर्वैः पूज्यते दिवि दैवतैः । ततः स्वर्गात्परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् ॥ १२
ततः शुभानि कर्माणि चिन्तयानः पुनः पुनः । गुणवान्वित्तसंपन्नो भवतीह न संशयः ॥ १३
कर्मणा मनसा वाचा सत्यधर्मप्रतिष्ठितः । गङ्गायमुनयोर्मध्ये यस्तु दानं प्रयच्छति ॥ १४
सुवर्णमणिमुक्तां वा यदि धान्यं प्रतिग्रहम् । स्वकार्ये पितृकार्ये वा देवताभ्यर्चनेऽपि वा ॥ १५
निष्फलं तस्य तत्तीर्थं यावत्तत्फलमश्नुते । एवं तीर्थे न गृह्णीयात्पुण्येष्वायतनेषु च ॥ १६
निमित्तेषु च सर्वेषु अप्रमत्तो द्विजो भवेत् । कपिलां पाटलावर्णां प्रयागे यः प्रयच्छति ॥ १७
स्वर्णशृङ्गीं रौप्यखुरां चैलकण्ठीं पयस्विनीम् । प्रयागे श्रोत्रियं साधुं ग्राहयित्वा यथाविधि ॥ १८
शुक्लाम्बरधरं शान्तं धर्मज्ञं वेदपारगम् । सा गौस्तस्मै च दातव्या गङ्गायमुनसंगमे ॥ १९
वासांसि च महार्हाणि रत्नानि विविधानि च । यावद्रोमाणि तस्या गोः सन्ति गात्रेषु सत्तम २०
तावद्वर्षसहस्राणि स्वर्गलोके महीयते । यत्रासौ लभते जन्म सा गौस्तत्राभिजायते ॥ २१
न च पश्यत्यसौ घोरं नरकं तेन कर्मणा । उत्तरान्स कुरून्प्राप्य मोदते कालमक्षयम् ॥ २२
गवां शतसहस्रेभ्यो दद्यादेकां पयस्विनीम् । पुत्रान्दारांस्तथा भृत्यान्गौरेका प्रतितारयेत् ॥ २३
तस्मात्सर्वेषु दानेषु गोदानं तु विशिष्यते । दुर्गमे विषमे घोरे महापातकसंभवे ।
गौरेव रक्षां कुरुते तस्माद्देया द्विजातये ॥ २४

इति श्रीमहापुराणे पाद्म आदिखण्डे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२३९

---

१ क. `के महीयते । इ`। २ क. योगहा ।

अथ त्रिचत्वारिंशोऽध्यायः ।

युधिष्ठिर उवाच—
यथा प्रयागस्य मुने माहात्म्यं कथितं त्वया । तथा यथा प्रमुच्येऽहं सर्वपापैर्न संशयः ॥ १
भगवन्केन विधिना मन्तव्यं धर्मनिश्चयैः । प्रयागे यो विधिः प्रोक्तस्तं मे ब्रूहि महामुने ॥ २
मार्कण्डेय उवाच—
कथयिष्यामि ते वत्स तीर्थयात्राविधिक्रमम् । यो गच्छेत कुरुश्रेष्ठ प्रयागं देवसंयुतम् ॥
बलीवर्दं समारूढः शृणु तस्यापि यत्फलम् ॥ ३
वसते नरके घोरे गवां क्रोधे सुदारुणे । सलिलं च न गृह्णन्ति पितरस्तस्य देहिनः ॥ ४
यस्तु पुत्रांस्तथा बालान्स्नापयेत्पाययेत्तथा । यथाऽऽत्मनस्तथा सर्वान्दानं विप्रेषु दापयेत् ॥
[* ऐश्वर्यं लभते चाग्र्यं ब्रह्मलोके महीयते ] ॥ ५
ऐश्वर्यलोभान्मोहाद्वा गच्छेद्यानेन यो नरः । निष्फलं तस्य तत्तीर्थं तस्माद्यानं परित्यजेत् ॥ ६
गङ्गायमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति । आर्षेण तु विधानेन यथाविभवसंभवम् । ७
न पश्यति यमं घोरं नरकं तेन कर्मणा । उत्तरान्स कुरून्गत्वा मोदते कालमक्षयम् ॥ ८
पुत्रांस्तु दाराल्लँभते धार्मिकान्नयसंयुतान् । तत्र दानं प्रदातव्यं यथाविभवसंभवम् ॥ ९
तेन तीर्थफलेनैव वर्धते नात्र संशयः । स्वर्गे तिष्ठति राजेन्द्र यावदाभूतसंप्लवम् ॥ १०
वटमूलं समाश्रित्य यस्तु प्राणान्परित्यजेत् । सर्वलोकानतिक्रम्य रुद्रलोकं स गच्छति ॥ ११
तत्र ते द्वादशाऽऽदित्यास्तपन्ति रुद्रमाश्रिताः । निर्दहन्ति जगत्सर्वं वटमूलं न दह्यते ॥ १२
नष्टचन्द्रार्कपवनं यदा चैकार्णवं जगत् । स्वपित्यत्रैव वै विष्णुरिज्यमानः पुनः पुनः ॥ १३
देवदानवगन्धर्वा ऋषयः सिद्धचारणाः । सदा सेवन्ति तत्तीर्थं गङ्गायमुनसंगमे ॥ १४
तत्र गच्छन्ति राजेन्द्र प्रयागे संयुतं च यत् । तत्र ब्रह्मादयो देवा दिशश्चैव दिगीश्वराः ॥ १५
लोकपालाश्च साध्याश्च पितरो लोकसंमताः । सनत्कुमारप्रमुखास्तथैव परमर्षयः ॥ १६
अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयः परे । तथा नागाश्च सिद्धाश्च सुपर्णाः खेचराश्च ये ॥ १७
सरितः सागराः शैला नागा विद्याधरास्तथा । हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥ १८
गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् । प्रयागं राजशार्दूल त्रिषु लोकेषु विश्रुतम् ॥ १९
ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत । श्रवणात्तस्य तीर्थस्य नामसंकीर्तनादपि ॥
मृत्तिकालम्भनाद्वाऽपि नरः पापात्प्रमुच्यते ॥ २०
तत्राभिषेकं यः कुर्यात्संगमे संशितव्रतः । तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥ २१
न वेदवचनात्तात न लोकवचनादपि । मतिरुत्क्रमणीया ते प्रयागगमनं प्रति ॥ २२
दश तीर्थसहस्राणि षष्टिकोट्यस्तथाऽपराः । येषां सांनिध्यमत्रैव कीर्तनात्कुरुनन्दन ॥ २३
या गतिर्योगयुक्तस्य सद्युक्तस्य मनीषिणः । सा गतिस्त्यजतः प्राणान्गङ्गायमुनसंगमे ॥ २४
ते न जीवन्ति लोकेऽस्मिन्यत्र यत्र युधिष्ठिर । ये प्रयागं न संप्राप्तास्त्रिषु लोकेषु विश्रुतम् ॥ २५
एवं दृष्ट्वा तु तत्तीर्थं प्रयागं परमं पदम् । मुच्यते सर्वपापेभ्यः शशाङ्क इव राहुणा ॥ २६

* अयं पाठः ख. ञ. पुस्तकयोरेव ।

१ ख. ञ. °ते । कामाल्लोभाद्भयान्मोहाद्गच्छे° । २ ट. न च पश्यति तं घो° ।

कम्बलाश्वतरौ नागौ यमुनादक्षिणे तटे । तत्र स्नात्वा च पीत्वा च मुच्यते सर्वपातकैः ॥ २७
तत्र गत्वा तु तत्स्थानं महादेवस्य धीमतः । नरस्तारयते सर्वान्दशातीतान्दशापरान् ॥ २८
कृत्वाऽभिषेकं तु नरः सोऽश्वमेधफलं लभेत् । स्वर्गलोकमवाप्नोति यावदाभूतसंप्लवम् ॥ २९
पूर्वपार्श्वे तु गङ्गायास्त्रिषु लोकेषु भारत । कूपं चैव तु सामुद्रं प्रतिष्ठानं च विश्रुतम् ॥ ३०
ब्रह्मचारी जितक्रोधस्त्रिरात्रं यदि तिष्ठति । सर्वपापविशुद्धात्मा सोऽश्वमेधफलं लभेत् ॥ ३१
उत्तरेण प्रतिष्ठानाद्भागीरथ्यास्तु पूर्वतः । हंसप्रपतनं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥ ३२
अश्वमेधफलं तस्मिन्स्नातमात्रस्य भारत । यावच्चन्द्रश्च सूर्यश्च तावत्स्वर्गे महीयते ॥ ३३
उर्वशीपुलिने रम्ये विपुले हंसपाण्डुरे । सलिलैस्तर्पयेद्यस्तु पितॄंस्तत्र विमत्सरः ॥ ३४
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च । सेवते पितृभिः सार्धं स्वर्गलोकं नराधिप ॥ ३५
पूज्यते सततं तत्र ऋषिगन्धर्वकिंनरैः । ततः स्वर्गपरिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥ ३६
उर्वशीसदृशीनां तु कन्यानां लभते शतम् । गवां शतसहस्राणां भोक्ता भवति भूमिप ॥ ३७
काञ्चीनूपुरशब्देन सुप्तोऽसौ प्रतिबुध्यते । भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं लभते पुनः ॥ ३८
कुशासनधरो नित्यं नियतः संयतेन्द्रियः । एककालं तु भुञ्जानो मासं भोगपतिर्भवेत् ॥ ३९
सुवर्णालंकृतानां तु नारीणां लभते शतम् । पृथिव्याः ससमुद्राया महाभोगपतिर्भवेत् ॥ ४०
दशग्रामसहस्राणां भोक्ता भवति भूमिप । काञ्चीनूपुरशब्देन सुप्तोऽसौ प्रतिबुध्यते ॥ ४१
धनधान्यसमायुक्तो दाता भवति नित्यशः । स भुक्त्वा विपुलान्भोगांस्तत्तीर्थं स्मरते पुनः ॥ ४२
अथ तस्मिन्वटे रम्ये ब्रह्मचारी जितेन्द्रियः । उपोष्य योगयुक्तश्च ब्रह्मज्ञानमवाप्नुयात् ॥ ४३
कोटितीर्थं समासाद्य यस्तु प्राणान्परित्यजेत् । कोटिवर्षसहस्राणि स्वर्गलोके महीयते ॥ ४४
ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः । सुवर्णमणिमुक्ताढ्ये कुले भवति रूपवान् ॥ ४५
ततो भोगवतीं गत्वा वासुकेरुत्तरेण तु । दशाश्वमेधिकं तत्र तीर्थं तत्रापरं भवेत् ॥ ४६
कृत्वाऽभिषेकं तु नरः सोऽश्वमेधफलं लभेत् । धनाढ्यो रूपवान्दक्षो दाता भवति धार्मिकः ४७
चतुर्वेदेषु यत्पुण्यं सत्यवादेषु यत्फलम् । अहिंसायां तु यो धर्मो गमनादेव तद्भवेत् ॥ ४८
कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाह्यते । कुरुक्षेत्राद्दशगुणा यत्र सिन्ध्वा समागता ॥ ४९
यत्र गङ्गा महाभागा बहुतीर्थतपोधना । सिद्धक्षेत्रं हि तज्ज्ञेयं नात्र कार्या विचारणा ॥ ५०
क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः । दिवि तारयते देवांस्तेन सा त्रिपथा स्मृता ॥ ५१
यावदस्थीनि गङ्गायां तिष्ठन्ति तस्य देहिनः । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ५२
तीर्थानां तु परं तीर्थं नदीनामुत्तमा नदी । मोक्षदा सर्वभूतानां महापातकिनामपि ॥ ५३
सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा । गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे ॥
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ ५४
सर्वेषां चैव भूतानां पापोपहतचेतसाम् । गतिरन्यत्र मर्त्यानां नास्ति गङ्गासमागतिः ॥ ५५
पवित्राणां पवित्रं या मङ्गलानां च मङ्गलम् । महेश्वरशिरोभ्रष्टा सर्वपापहरा शुभा ॥ ५६

इति श्रीमहापुराणे पाद्म आदिखण्डे प्रयागमाहात्म्ये त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२२९५

अथ चतुश्चत्वारिंशोऽध्यायः ।

मार्कण्डेय उवाच—

शृणु राजन्प्रयागस्य माहात्म्यं पुनरेव तु । यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १
मानसं नाम तत्तीर्थं गङ्गायामुत्तरे तटे । त्रिरात्रोपोषितो भूत्वा सर्वकामानवाप्नुयात् ॥ २
गोभूहिरण्यदानेन यत्फलं प्राप्नुयान्नरः । एतत्फलमवाप्नोति तत्तीर्थं स्मरते पुनः ॥ ३
अकामो वा सकामो वा गङ्गायां यो विपद्यते । मृतस्तु भवति स्वर्गे नरकं न च पश्यति ॥ ४
अप्सरोगणसंगीतैः सुप्तोऽसौ प्रतिबुध्यते । हंससारसयुक्तेन विमानेन स गच्छति ॥ ५
बहुवर्षाणि राजेन्द्र षट्सहस्राणि भुञ्जते । ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥ ६
सुवर्णमणिमुक्ताढ्यो जायते तु महाकुले । षष्टितीर्थसहस्राणि षष्टितीर्थशतानि च ॥
माघे मासि गमिष्यन्ति गङ्गायमुनसंगमे ॥ ७
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् । प्रयागे माघमासे तु त्र्यहं स्नातस्य तत्फलम् ॥ ८
गङ्गायमुनयोर्मध्ये पञ्चाग्निं यस्तु साधयेत् । अहीनाङ्गो विरोगश्च पञ्चेन्द्रियसमन्वितः ॥ ९
यावन्ति रोमकूपाणि तस्य गात्रस्य देहिनः । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ १०
ततः स्वर्गात्परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् । स भुक्त्वा विपुलान्भोगांस्तत्तीर्थं भजते पुनः ॥ ११
जलप्रवेशं यः कुर्यात्संगमे लोकविश्रुते । राहुग्रस्तो यथा सोमो विमुक्तः सर्वपातकैः ॥ १२
सोमलोकमवाप्नोति सोमेन सह मोदते । षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ १३
स्वर्गलोकमवाप्नोति ऋषिगन्धर्वसेवितः । परिभ्रष्टस्तु राजेन्द्र समृद्धे जायते कुले ॥ १४
अधःशिरास्तु यो ज्वालामूर्ध्वपादः पिबेन्नरः । शतं वर्षसहस्राणि स्वर्गलोके महीयते ॥ १५
परिभ्रष्टस्तु राजेन्द्र अग्निहोत्री भवेन्नरः । भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं भजते नरः ॥ १६
यस्तु देहं विकर्तित्वा शकुनिभ्यः प्रयच्छति । विहगैरुपभुक्तस्य शृणु तस्यापि यत्फलम् ॥ १७
शतं वर्षसहस्राणां सोमलोके महीयते । ततः स्वर्गात्परिभ्रष्टो राजा भवति धार्मिकः ॥ १८
गुणवान्रूपसंपन्नो विद्वान्सुप्रियदेहवान् । भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं भजते पुनः ॥ १९
यामुने चोत्तरे कूले प्रयागस्य तु दक्षिणे । ऋणप्रमोचनं नाम तीर्थं तत्परमं स्मृतम् ॥ २०
एकरात्रोषितो भूत्वा ऋणैः सर्वैः प्रमुच्यते । सूर्यलोकमवाप्नोति अनृणी च सदा भवेत् ॥ २१

इति श्रीमहापुराणे पाद्म आदिखण्डे प्रयागमाहात्म्ये चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३१६

अथ पञ्चचत्वारिंशोऽध्यायः ।

युधिष्ठिर उवाच—

एतच्छ्रुत्वा प्रयागस्य यत्त्वया कीर्तनं कृतम् । विशुद्धमेतद्धृदयं प्रयागस्य तु कीर्तनात् ॥
अनाशकफलं ब्रूहि भगवंस्तत्र कीदृशम् ॥ १

मार्कण्डेय उवाच—

शृणु राजन्प्रयागे तु अनाशकफलं विभो । प्राप्नोति पुरुषो धीमाञ्श्रद्दधानश्च यादृशम् ॥ २

१ ख. न. °रः । स तत्फ° । २ ख. न. °ते तु यः । अ° ।

अहीनाङ्गो विरोगश्च पञ्चेन्द्रियसमन्वितः । अश्वमेधफलं तस्य गच्छतस्तु पदे पदे ॥ ३
कुलानि तारयेद्राजन्दश पूर्वान्दशापरान् । मुच्यते सर्वपापेभ्यो गच्छेत परमं पदम् ॥ ४

युधिष्ठिर उवाच—

महाभागोऽसि धर्मज्ञ दानं वदसि मे प्रभो । अल्पेनैव प्रदानेन बहून्धर्मानवाप्नुयात् ॥ ५
अश्वमेधस्तु बहुभिः सुकृतैः प्राप्यते इह । एतं मे संशयं ब्रूहि परं कौतूहलं हि मे ॥ ६

मार्कण्डेय उवाच—

शृणु राजन्महावीर यदुक्तं पद्मयोनिना । ऋषीणां संनिधौ पूर्वं कथ्यमानं मया श्रुतम् ॥ ७
पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् । संप्रविष्टस्य तद्भूमावश्वमेधः पदे पदे ॥ ८
व्यतीतान्पुरुषान्सप्त भविष्यांश्च चतुर्दश । नरस्तारयते सर्वान्यस्तु प्राणान्परित्यजेत् ॥ ९
एवं ज्ञात्वा तु राजेन्द्र सदा श्रद्धापरो भवेत् । अश्रद्दधानाः पुरुषाः पापोपहतचेतसः ॥
न प्राप्नुवन्ति तत्स्थानं प्रयागं देवनिर्मितम् ॥ १०

युधिष्ठिर उवाच—

स्नेहाद्वा द्रव्यलोभाद्वा ये तु कामवशं गताः । कथं तीर्थफलं तेषां कथं पुण्यमवाप्नुयुः ॥ ११
विक्रयं सर्वभाण्डानां कार्याकार्यमजानतः । प्रयागे का गतिस्तस्य एवं ब्रूहि महामुने ॥ १२

मार्कण्डेय उवाच—

शृणु राजन्महागुह्यं सर्वपापप्रणाशनम् । मासं वसंस्तु राजेन्द्र प्रयागे नियतेन्द्रियः ॥
मुच्यते सर्वपापेभ्यो यथाऽऽदिष्टं स्वयंभुवा ॥ १३
शुचिस्तु प्रयतो भूत्वाऽहिंसकः श्रद्धयाऽन्वितः । मुच्यते सर्वपापेभ्यः स गच्छेत्परमं पदम् ॥ १४
विश्रम्भघातकानां तु प्रयागे शृणु तत्फलम् । त्रिकालमेव स्नायीत आहारं भैक्ष्यमाचरेत् ॥ १५
त्रिभिर्मासैः प्रमुच्येत प्रयागात्तु न संशयः । अज्ञानेन तु यस्येह तीर्थयात्रादिकं भवेत् ॥ १६
सर्वकामसमृद्धस्तु स्वर्गलोके महीयते । स्थानं स लभते नित्यं धनधान्यसमाकुलम् ॥ १७
एवं ज्ञानेन संपूर्णः सदा भवति भोगवान् । तारिताः पितरस्तेन नरकात्प्रपितामहाः ॥ १८
धर्मानुसारि तत्त्वज्ञ पृच्छतस्ते पुनः पुनः । त्वत्प्रियार्थं समाख्यातं गुह्यमेतत्सनातनम् ॥ १९

युधिष्ठिर उवाच—

अद्य मे सफलं जन्म अद्य मे सफलं कुलम् । प्रीतोऽस्म्यनुगृहीतोऽस्मि दर्शनादेव तेऽद्य वै ॥
त्वद्दर्शनात्तु धर्मात्मन्मुक्तोऽहं सर्वपातकैः ॥ २०

मार्कण्डेय उवाच—

दिष्ट्या ते सफलं जन्म दिष्ट्या ते तारितं कुलम् । कीर्तनाद्वर्धते पुण्यं श्रुतं पापप्रणाशनम् ॥ २१

युधिष्ठिर उवाच—

यमुनायां तु किं पुण्यं किं फलं तु महामुने । एतन्मे सर्वमाख्याहि यथादृष्टं यथाश्रुतम् ॥ २२

मार्कण्डेय उवाच—

तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता । समागता महाभागा यमुना यत्र निम्नगा ॥ २३
येनैव निःसृता गङ्गा तेनैव यमुनाऽऽगता । योजनानां सहस्रेषु कीर्तनात्पापनाशिनी ॥ २४
तत्र स्नात्वा च पीत्वा च यमुनायां युधिष्ठिर । कीर्तनाल्लभते पुण्यं दृष्ट्वा भद्राणि पश्यति ॥ २५
अवगाढा च पीता च पुनात्यासप्तमं कुलम् । प्राणांस्त्यजति यस्त्वत्र स याति परमां गतिम् ॥ २६

अग्नितीर्थमिति ख्यातं यमुनादक्षिणे तटे । पश्चिमे धर्मराजस्य तीर्थं हरवरं स्मृतम् ॥
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ २७
एवं तीर्थसहस्राणि यमुनादक्षिणे तटे । उत्तरेण प्रवक्ष्यामि आदित्यस्य महात्मनः ॥ २८
तीर्थं तु विरजं नाम यत्र देवाः सवासवाः । उपासते स्म संध्यां तु नित्यकालं युधिष्ठिर ॥ २९
देवाः सेवन्ति तत्तीर्थं ये चान्ये विवुधो (?) जनाः।श्रद्धादानपरो भूत्वा कुरु तीर्थाभिषेचनम् ॥ ३०
अन्ये च बहवस्तीर्थाः सर्वपापहराः शुभाः । तेषु स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ ३१
गङ्गा च यमुना चैव उभे तुल्यफले स्मृते । केवलं श्रेष्ठभावेन गङ्गा सर्वत्र पूज्यते ॥ ३२
एवं कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनम् । यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ ३३
यस्त्विदं कल्य उत्थाय पठते च शृणोति वा । मुच्यते सर्वपापेभ्यः स्वर्गलोकं स गच्छति ॥ ३४

इति श्रीमहापुराणे पाद्म आदिखण्डे यमुनामाहात्म्ये पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३५०

---

अथ षट्चत्वारिंशोऽध्यायः ।

---

युधिष्ठिर उवाच—

श्रुतं मे ब्रह्मणा प्रोक्तं पुराणं पुण्यसंमितम् । ताथानां तु सहस्राणि शतानि नियुतानि च ॥ १
सर्वे पुण्याः पवित्राश्च गतिश्च परमा स्मृता । पृथिव्यां नैमिषं पुण्यमन्तरिक्षे च पुष्करम् ॥ २
प्रयागमपि लोकानां कुरुक्षेत्रं विशिष्यते । सर्वाणि संपरित्यज्य कथमेकं प्रशंससि ॥ ३
अप्रमाणमिदं प्रोक्तमश्रद्धेयमनुत्तमम् । गतिं च परमां दिव्यां भोगांश्चैव यथेप्सितान् ॥ ४
किमर्थमल्पयोगेन बहुधर्मं प्रशंससि । एतं मे संशयं ब्रूहि यथादृष्टं यथाश्रुतम् ॥ ५

मार्कण्डेय उवाच—

अश्रद्धेयं न वक्तव्यं प्रत्यक्षमपि तद्भवेत् । नरस्य श्रद्दधानस्य पापोपहतचेतसः ॥
अश्रद्दधानो ह्यशुचिर्दुर्मतिस्त्यक्तमङ्गलः ॥ ६
एते पातकिनः सर्वे तेनेदं भाषितं मया । शृणु प्रयागमाहात्म्यं यथादृष्टं यथाश्रुतम् ॥ ७
प्रत्यक्षं च परोक्षं च यथाऽन्यत्संभविष्यति । यथैवान्यन्मया दृष्टं पुरा राजन्यथाश्रुतम् ॥ ८
शास्त्रं प्रमाणं कृत्वा तु पूज्यते योगमात्मनः । क्लिश्यते चापरस्तत्र नैव योगमवाप्नुयात् ॥ ९
जन्मान्तरसहस्रेभ्यो योगो लभ्येत मानवैः । यथा युगसहस्रेण योगो लभ्येत मानवैः ॥ १०
यस्तु सर्वाणि रत्नानि ब्राह्मणेभ्यः प्रयच्छति । तेन दानेन दत्तेन योगो लभ्येत मानवैः ॥ ११
प्रयागे तु मृतस्येदं सर्वं भवति नान्यथा । प्रधानहेतुं वक्ष्यामि श्रद्दधत्सु च भारत ॥ १२
यथा सर्वेषु भूतेषु सर्वत्रैव तु दृश्यते । ब्रह्म नैवास्ति वै किंचिद्यद्वक्तुं त्विदमुच्यते ॥ १३
यथा सर्वेषु भूतेषु ब्रह्म सर्वत्र पूज्यते । एवं सर्वेषु लोकेषु प्रयागः पूज्यते बुधैः ॥ १४
पूज्यते तीर्थराजश्च सत्यमेतद्युधिष्ठिर । ब्रह्माऽपि स्मरते नित्यं प्रयागं तीर्थमुत्तमम् ॥ १५
तीर्थराजमनुप्राप्य नैवान्यत्किंचिदिच्छति । को हि देवत्वमासाद्य मानुषत्वं चिकीर्षति ॥ १६
अनेनैवानुमानेन त्वं ज्ञास्यसि युधिष्ठिर । यथा पुण्यमपुण्यं वा तथैव कथितं मया ॥ १७

---

१ क. एवं ।

युधिष्ठिर उवाच—
श्रुतं तद्यत्त्वया प्रोक्तं विस्मितोऽहं पुनः पुनः । कथं योगेन तत्प्राप्तिः स्वर्गलोकस्तु कर्मणा ॥१८
तदा च लभते भोगान्वा च तत्कर्मणां फलम् । तानि कर्माणि पृच्छामि पुनर्यैः प्राप्यते मही १९
मार्कण्डेय उवाच—
शृणु राजन्महाबाहो यथोक्तकर्मणा मही । गामग्निं ब्राह्मणं शास्त्रं काञ्चनं सलिलं स्त्रियः ॥ २०
मातरं पितरं चैव यो निन्दति नराधिप । नैतेषामूर्ध्वगमनमेवमाह प्रजापतिः ॥ २१
एवं योगस्य संप्राप्तिः स्थानं परमदुर्लभम् । गच्छन्ति नरकं घोरं ये नराः पापकारिणः ॥ २२
हस्त्यश्वं गामनड्वाहं मणिमुक्तादि काञ्चनम् । परोक्षं हरते यस्तु पश्चाद्दानं प्रयच्छति ॥ २३
न ते गच्छन्ति वै स्वर्गं दातारो यत्र भोगिनः । अनेन कर्मणा युक्ताः पच्यन्ते नरकेऽधमाः २४
एवं योगं च धर्मं च दातारं च युधिष्ठिर । यथा सत्यमसत्यं वा अस्ति नास्तीति यत्फलम् ॥
निरुक्तं तु प्रवक्ष्यामि यथाऽयं स्वयमाप्नुयात् ॥ २५

इति श्रीमहापुराणे पाद्म आदिखण्डे प्रयागमाहात्म्ये षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३७५

---

अथ सप्तचत्वारिंशोऽध्यायः ।

---

मार्कण्डेय उवाच—
शृणु राजन्प्रयागस्य माहात्म्यं पुनरेव तु । नैमिषं पुष्करं चैव गोतीर्थं सिन्धुसागरम् ॥ १
कुरुक्षेत्रं गया चैव गङ्गासागरमेव च । एते चान्ये च बहवो ये च पुण्याः शिलोच्चयाः ॥ २
दश तीर्थसहस्राणि त्रिंशत्कोट्यस्तथा परे । प्रयागे संस्थिता नित्यमेवमाहुर्मनीषिणः ॥ ३
त्रीणि वाऽप्यग्निकुण्डानि येषां मध्ये तु जाह्नवी । प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ॥ ४
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता । गङ्गा यमुनया सार्धं संस्थिता लोकभाविनी ॥ ५
गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् । प्रयागं राजशार्दूल कलां नार्हन्ति षोडशीम् ॥ ६
तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भुव्यन्तरिक्षे च तत्सर्वं जाह्नवी स्मृता ॥ ७
प्रयागं समधिष्ठानं कम्बलाश्वतरावुभौ । भोगवत्यथ या चैव वेदिरेषा प्रजापतेः ॥ ८
तत्र देवाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर । पूजयन्ति प्रयागं ते ऋषयश्च तपोधनाः ॥ ९
यजन्ते क्रतुभिर्देवांस्तथा बहुधना नृपाः । ततः पुण्यतमो नास्ति त्रिषु लोकेषु भारत ॥ १०
प्रभावात्सर्वतीर्थेभ्यः प्रभवत्यधिकं विभो । दश तीर्थसहस्राणि तिस्रः कोट्यस्तथा पराः ॥ ११
यत्र गङ्गा महाभागा स देशस्तत्तपोवनम् । सिद्धक्षेत्रं तु तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥ १२
इति सत्यं द्विजातीनां साधूनामात्मजस्य वा । सुहृदां च जपात्कर्णे शिष्यस्यानुगतस्य वा ॥ १३
इदं धन्यमिदं स्वर्ग्यमिदं सेव्यमिदं सुखम् । इदं पुण्यमिदं रम्यं पावनं धर्म्यमुत्तमम् ॥ १४
महर्षीणामिदं गुह्यं सर्वपापप्रणाशनम् । अधीत्य द्विजोऽध्ययनं निर्मलत्वमवाप्नुयात् ॥ १५
यश्चेदं शृणुयान्नित्यं तीर्थं पुण्यं सदा शुचिः । जातिस्मरत्वं लभते नाकपृष्ठे च मोदते ॥ १६
प्राप्यन्ते तानि तीर्थानि सद्भिः शिष्टार्थदर्शिभिः । स्नाहि तीर्थेषु कौरव्य न च वक्रमतिर्भव १७
त्वया तु सम्यक्पृष्टेन कथितं तु मया विभो । पितरस्तारिताः सर्वे तारिताश्च पितामहाः ॥ १८
प्रयागस्य तु सर्वे ते कलां नार्हन्ति षोडशीम् । एवं ज्ञानं च योगं च तीर्थं चैव युधिष्ठिर ॥ १९

बहुक्लेशेन युज्यन्ते ततो यान्ति परां गतिम् । प्रयागस्मरणाल्लोकः स्वर्गलोकं स गच्छति ॥ २०

इति श्रीमहापुराणे पाद्म आदिखण्डे प्रयागमाहात्म्ये सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२३८९

अथाष्टाचत्वारिंशोऽध्यायः ।

युधिष्ठिर उवाच—

कथा सर्वा त्वियं प्रोक्ता प्रयागस्य महामुने । एवं मे सर्वमाख्याहि यथा हि मम तारयेत् ॥ १

मार्कण्डेय उवाच—

शृणु राजन्प्रवक्ष्यामि प्रोक्तं सर्वमिदं जगत् । ब्रह्मा विष्णुस्तथेशानो देवता प्रभुरव्ययः ॥ २

ब्रह्मा सृजति भूतानि स्थावरं जङ्गमं च यत् । तान्येतानि परो लोके विष्णुः पालयति प्रजाः॥ ३

कल्पान्ते तत्समग्रं हि रुद्रः संहरते जगत् । न ददाति च नाऽऽदत्ते न कदाचिद्विनश्यति ॥ ४

ईश्वरः सर्वभूतानां यः पश्यति स पश्यति । उत्तरेण प्रतिष्ठानादिदानीं ब्रह्म तिष्ठति ॥ ५

महेश्वरो वटे भूत्वा तिष्ठते परमेश्वरः । ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥ ६

रक्षन्ति परमं नित्यं पापकर्मपरायणान् । ये तु चान्ये च तिष्ठन्ति ते यान्ति परमां गतिम् ॥ ७

युधिष्ठिर उवाच—

अप्याह मे यथातत्त्वं यथैषां तिष्ठते श्रुतम् । केन वा कारणेनैव तिष्ठन्ति लोकसंमताः ॥ ८

मार्कण्डेय उवाच—

प्रयागे निवसन्त्येते ब्रह्मविष्णुमहेश्वराः । कारणं तु प्रवक्ष्यामि शृणु तत्त्वं युधिष्ठिर ॥ ९

पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् । तिष्ठन्ति रक्षणार्थाय पापकर्मनिवारणाः ॥ १०

तस्मिंस्तु स्वल्पकं पापं नरके पातयिष्यति । एवं ब्रह्मा च विष्णुश्च प्रयागे स महेश्वरः ॥ ११

सप्त द्वीपाः समुद्राश्च पर्वताश्च महीतले । ध्रियमाणाश्च तिष्ठन्ति यावदाभूतसंप्लवम् ॥ १२

ये चान्ये बहवः सर्वे तिष्ठन्ति च युधिष्ठिर । पृथिवीस्थानमारभ्य निर्मितं दैवतैस्त्रिभिः ॥ १३

प्रजापतेरिदं क्षेत्रं प्रयागमिति विश्रुतम् । एतत्पुण्यं पवित्रं च प्रयागं तु युधिष्ठिर ॥

स्वराज्यं कुरु राजेन्द्र भ्रातृभिः सहितो भव ॥ १४

इति श्रीमहापुराणे पाद्म आदिखण्डे प्रयागमाहात्म्येऽष्टाचत्वारिंशोऽध्यायः ॥ ४८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४०९

अथैकोनपञ्चाशत्तमोऽध्यायः ।

सूत उवाच—

भ्रातृभिः सहिताः सर्वे पाण्डवा धर्मनिश्चयाः । ब्राह्मणेभ्यो नमस्कृत्वा गुरुदेवांस्त्वतर्पयन् ॥ १

वासुदेवोऽपि तत्रैव क्षणेनाभ्यागतस्तदा । पाण्डवैः सहितैः सर्वैः पूज्यमानः स माधवः ॥ २

कृष्णेन सहितैः सर्वैः पुनरेव महात्मभिः । अभिषिक्तः स्वराज्ये तु धर्मपुत्रो युधिष्ठिरः ॥ ३

एतस्मिन्नन्तरे चैव मार्कण्डेयो महात्मवान् । ततः स्वस्तीति चोक्त्वा वै क्षणादाश्रममागतः ॥ ४

युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिः सहितस्तु सः । महादानं ददौ चाथ धर्मपुत्रो युधिष्ठिरः ॥ ५

१ ख. म. न कदाचिन्न वर्धेत न । २ ट. 'नादेवानां प्र' ।

यस्त्विदं कल्यमुत्थाय पठते वा शृणोति वा। मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ६

वासुदेव उवाच—

मम वाक्यं तु कर्तव्यं तव स्नेहाद्ब्रवीम्यहम्। नित्यं संस्मर त्वं राजन्प्रयागं विगतज्वरः ॥ ७
प्रयागं संस्मरन्नित्यं सहास्माभिर्युधिष्ठिर। स्वयं प्राप्स्यसि राजेन्द्र स्वर्गलोकं तु शाश्वतम् ॥ ८
प्रयागमनुगच्छेद्वा वसते वाऽपि यो नरः। सर्वपापविशुद्धात्मा स्वर्गलोकं स गच्छति ॥ ९
प्रतिग्रहादुपावृत्तः संतुष्टो नियतः शुचिः। अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥ १०
अकोपनश्च राजेन्द्र सत्यवादी दृढव्रतः। आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ ११
ऋषिभिः क्रतवः प्रोक्ता देवैश्चापि यथाक्रमम्। न हि शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते ॥ १२
बहूपकरणो यज्ञो नानासंभारविभ्रमः। प्राप्यते विविधैरर्थैः समृद्धैर्वा नरैः क्वचित् ॥ १३
यो दरिद्रैरपि बुधैः शक्यः प्राप्तुं नरेश्वर। ततो यज्ञः फलैः पुण्यैस्तं निबोध जनेश्वर ॥ १४
ऋषीणां परमं गुह्यमिदं भरतसत्तम। तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥ १५
दश कोटिसहस्राणि त्रिंशत्कोट्यस्तथा परे। माघमासे तु गङ्गायां गमिष्यन्ति नरर्षभ ॥ १६
स्वस्थो भव महाराज भुङ्क्ष्व राज्यमकण्टकम्। पुनर्द्रक्ष्यसि राजेन्द्र यजमानो विशेषतः ॥ १७

इति श्रीमहापुराणे पाद्म आदिखण्डे प्रयागमाहात्म्यकथनं नामोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४२६

---

अथ पञ्चाशत्तमोऽध्यायः।

---

ऋषय ऊचुः—

भवता कथितं सर्वं यत्किंचित्पृष्टमेव च। इदानीमपि पृच्छाम एकं वद महामते ॥ १
एतेषां खलु तीर्थानां सेवनाद्यत्फलं भवेत्। सर्वेषां किल कृत्वैकं कर्म केन च लभ्यते ॥
एतन्नो ब्रूहि सर्वज्ञ कर्मैवं यदि वर्तते ॥ २

सूत उवाच—

कर्मयोगः किल प्रोक्तो वर्णानां द्विजपूर्वशः। नानाविधो महाभागास्तत्र चैकं विशिष्यते ॥ ३
हरिभक्तिः कृता येन मनसा वचसा गिरा। जितं तेन जितं तेन जितमेव न संशयः ॥ ४
हरिरेव समाराध्यः सर्वदेवेश्वरेश्वरः। हरिनाममहामन्त्रैर्नश्येत्पापपिशाचकम् ॥ ५
हरेः प्रदक्षिणां कृत्वा सकृदप्यमलाशयाः। सर्वतीर्थसमागाह्यं लभन्ते यन्न संशयः ॥ ६
प्रतिमां च हरेर्दृष्ट्वा सर्वतीर्थफलं लभेत्। विष्णुनाम परं जप्त्वा सर्वमन्त्रफलं लभेत् ॥ ७
विष्णुप्रसादतुलसीमाघ्राय द्विजसत्तमाः। प्रचण्डं विकरालं तद्यमस्याऽऽस्यं न पश्यति ॥ ८
सकृत्प्रणामी कृष्णस्य मातुः स्तन्यं पिबेन्न हि। हरिपादे मनो येषां तेभ्यो नित्यं नमो नमः॥९
पुल्कसः श्वपचो वाऽपि ये चान्ये म्लेच्छजातयः। तेऽपि वन्द्या महाभागा हरिपादैकसेवकाः१०
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा। हरौ भक्तिं विधायैव गर्भवासं न पश्यति ॥ ११
हरेरग्रे स्वनैरुच्चैर्नृत्यंस्तन्नामकृन्नरः। पुनाति भुवनं विप्रा गङ्गादिसलिलं यथा ॥ १२
दर्शनात्स्पर्शनात्तस्य आलापादपि भक्तितः। ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥ १३
हरेः प्रदक्षिणं कुर्वन्नुच्चैस्तन्नामकृन्नरः। करतालादिसंधानं सुस्वरं कलशब्दितम् ॥
ब्रह्महत्यादिकं पापं तेनैव करतालितम् ॥ १४

हरिभक्तिकथामुक्ताख्यायिकां शृणुयाच्च यः । तस्य संदर्शनादेव पूतो भवति मानवः ॥ १५
किं पुनस्तस्य पापानामाशङ्का मुनिपुङ्गवाः । तीर्थानां च परं तीर्थं कृष्णनाम महर्षयः ॥ १६
तीर्थी कुर्वन्ति जगतीं गृहीतं कृष्णनाम यैः । तस्मान्मुनिवराः पुण्यं नातः परतरं विदुः ॥ १७
विष्णुप्रसादनिर्माल्यं भुक्त्वा धृत्वा च मस्तके । विष्णुरेव भवेन्मर्त्यो यमशोकविनाशनः ॥
अर्चनीयो नमस्कार्यो हरिरेव न संशयः ॥ १८
ये हीमं विष्णुमव्यक्तं देवं वाऽपि महेश्वरम् । एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः ॥ १९
तस्मादनादिनिधनं विष्णुमात्मानमव्ययम् । हरिं चैकं प्रपश्यध्वं पूजयध्वं तथैव हि ॥ २०
येऽसमानं प्रपश्यन्ति हरिं वै देवतान्तरम् । ते यान्ति नरकान्घोरान्न तांस्तु गणयेद्धरिः ॥ २१
मूर्खं वा पण्डितं वाऽपि ब्राह्मणं केशवप्रियम् । श्वपाकं वा मोचयति नारायणः स्वयंप्रभुः ॥ २२
नारायणात्परो नास्ति पापराशिदवानलः । कृत्वाऽपि पातकं घोरं कृष्णनाम्ना विमुच्यते ॥ २३
स्वयं नारायणो देवः स्वनाम्नि जगतां गुरुः । आत्मनोऽभ्यधिकां शक्तिं स्थापयामास सुव्रताः २४
अत्र ये विवदन्ते वा आयासलघुदर्शनात् । फलानां गौरवाच्चापि ते यान्ति नरकं बहु ॥ २५
तस्माद्धरौ भक्तिमान्स्याद्धरिनामपरायणः । पूजकं पृष्ठतो रक्षेन्नामिनं वक्षसि प्रभुः ॥ २६
हरिनाममहावज्रं पापपर्वतदारणम् । तस्य पादौ तु सफलौ तदर्थगतिशालिनौ ॥ २७
तावेव धन्यावाख्यातौ यौ तु पूजाकरौ करौ । उत्तमाङ्गमुत्तमाङ्गं तद्धरौ नम्रमेव यत् ॥ २८
सा जिह्वा या हरिं स्तौति तन्मनस्तत्पदानुगम् । तानि लोमानि चोच्यन्ते यानि तन्नाम्नि चोत्थितम् २९
कुर्वन्ति तच्च नेत्राम्बु यदच्युतप्रसङ्गतः । अहो लोका अतितरां दैवदोषेण वञ्चिताः ॥ ३०
नामोच्चारणमात्रेण मुक्तिदं न भजन्ति वै । वञ्चितास्ते च कलुषाः स्त्रीणां सङ्गप्रसङ्गतः ॥ ३१
प्रतिष्ठन्ति च लोमानि येषां नो कृष्णशब्दने । ते मूर्खा ह्यकृतात्मानः पुत्रशोकादिविह्वलाः ॥ ३२
रुदन्ति बहुलालापैर्न कृष्णाक्षरकीर्तने । जिह्वां लब्ध्वाऽपि लोकेऽस्मिन्कृष्णनाम जपेन्न हि ॥ ३३
लब्ध्वाऽपि मुक्तिसोपानं हेलयैव च्यवन्ति ते । तस्माद्यत्नेन वै विष्णुं कर्मयोगेन(ण) मानवः ॥ ३४
कर्मयोगार्चितो विष्णुः प्रसीदत्येव नान्यथा । तीर्थादप्यधिकं तीर्थं विष्णोर्भजनमुच्यते ॥ ३५
सर्वेषां खलु तीर्थानां स्नानपानावगाहनैः । यत्फलं लभते मर्त्यस्तत्फलं कृष्णसेवनात् ॥ ३६
यजन्ते कर्मयोगेन(ण) धन्या एव नरा हरिम् । तस्माद्यजध्वं मुनयः कृष्णं परममङ्गलम् ॥ ३७

इति श्रीमहापुराणे पाद्म आदिखण्डे कर्मयोगप्रशंसनं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

आदितः श्लोकानां समष्ट्यङ्काः—२४६३

---

अथैकपञ्चाशत्तमोऽध्यायः ।

---

ऋषय ऊचुः—

कर्मयोगः कथं सूत येन चाऽऽराधितो हरिः । प्रसीदति महाभाग वद नो वदतां वर ॥ १
येनासौ भगवानीशः समाराध्यो मुमुक्षुभिः । तद्वदाखिललोकानां रक्षणं धर्मसंग्रहम् ॥ २
तं कर्मयोगं वद नः सूत मूर्तिमयस्तु यः । इति शुश्रूषवो विप्रा भवदग्रे व्यवस्थिताः ॥ ३

१ क. येऽन्यथा संप्रपश्यन्ति हरं वै । २ ख. म. °मू । ती च पा° । ३ ख. म. °ली यौ तीर्थं° । ४ ख. म. मर्त्या । ५ ख. म. °लः । कुर्वन्ति बहुलायासं न कृष्णाक्षरकीर्तनम् । जि° । ६ ङ. जन्म । ७ ख. म. °नं हित्वैवैतत्त्यज° ।

सूत उवाच—

एवमेव पुरा पृष्टो व्यासः सत्यवतीसुतः । ऋषिभिरग्निसंकाशैर्व्यासस्तानाह यच्छृणु ॥ ४

व्यास उवाच—

शृणुध्वमृषयः सर्वे वक्ष्यमाणं सनातनम् । कर्मयोगं ब्राह्मणानामात्यन्तिकफलप्रदम् ॥ ५
आम्नायसिद्धमखिलं ब्राह्मणार्थे प्रदर्शितम् । ऋषीणां शृण्वतां पूर्वं मनुराह प्रजापतिः ॥ ६
सर्वपापहरं पुण्यमृषिसंघैर्निषेवितम् । समाहितधियो यूयं शृणुध्वं गदतो मम ॥ ७
कृतोपनयनो वेदानधीयीत द्विजोत्तमः । गर्भाष्टमेऽष्टमे वाऽब्दे स्वसूत्रोक्तविधानतः ॥ ८
दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः । भिक्षाहारो गुरुहितो वीक्षमाणो गुरोर्मुखम् ॥ ९
कार्पासमुपवीतार्थं निर्मितं ब्रह्मणा पुरा । ब्राह्मणानां त्रिवृत्सूत्रं कौषेयवस्त्रमेव वा ॥ १०
सदोपवीती चैव स्यात्सदा बद्धशिखो द्विजः । अन्यथा यत्कृतं कर्म तद्भवत्ययथाकृतम् ॥ ११
वसेदविकृतं वासः कार्पासं वा कषायकम् । तदेव परिधानीयं शुक्लमतीवमुत्तमम् ॥ १२
उत्तरं तु समाम्नातं वासः कृष्णाजिनं शुभम् । तदभावे गवयजं रौरवं वा विधीयते ॥ १३
उद्धृत्य दक्षिणं बाहुं सव्यबाहौ समर्पितम् । उपवीतं भवेन्नित्यं निवीतं कण्ठसज्जने ॥ १४
सव्यबाहुं समुद्धृत्य दक्षिणे तूद्धृतं द्विजाः । प्राचीनावीतमित्युक्तं पित्र्ये कर्मणि योजयेत् ॥ १५
अग्न्यागारे गवां गोष्ठे होमे तर्प्ये तथैव च । स्वाध्याये भोजने नित्यं ब्राह्मणानां च संनिधौ १६
उपासने गुरूणां च संध्ययोः साधुसंगमे । उपवीती भवेन्नित्यं विधिरेष सनातनः ॥ १७
मौञ्जीं त्रिवृत्समाश्लिष्टां कुर्याद्विप्रस्य मेखलाम् । मुञ्जाभावे कुशेनाऽऽहुर्ग्रन्थिनैकेन वा त्रिभिः १८
धारयेद्वैण(धार्यौ वैणव)पालाशौ दण्डौ केशान्तिकौ द्विजः । यज्ञीयवृक्षजं वाऽथ सौम्यमव्रणमेव च १९
सायं प्रातर्द्विजः संध्यामुपासीत समाहितः । कामाल्लोभाद्भयान्मोहात्त्यक्त्वैनां पतितो भवेत् ॥२०
अग्निकार्यं ततः कुर्यात्सायं प्रातः प्रसन्नधीः । स्नात्वा संतर्पयेद्देवानृषीन्पितृगणांस्तथा ॥ २१
देवताभ्यर्चनं कुर्यात्पुष्पैः पत्रैर्यवाम्बुभिः । अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्मतः ॥ २२
असावहं भो नामेति सम्यक्प्रणतिपूर्वकम् । आयुरारोग्यसिद्ध्यर्थं तन्द्रादिपरिवर्जितः ॥ २३
आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने । आकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः ॥
यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् । नाभिवाद्यः स विदुषो यथा शूद्रस्तथैव सः ॥ २५
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥ २६
लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव वा । आददात्(च)यतो ज्ञानं तं पूर्वमभिवादयेत् ॥२७
नोदकं धारयेद्भैक्ष्यं पुष्पाणि समिधस्तथा । एवंविधानि चान्यानि न देवार्थेषु कर्मसु ॥ २८
ब्राह्मणान्कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ २९
उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलः श्वशुरश्चैव मातामहपितामहौ ॥ ३०
वर्णश्रेष्ठः पितृव्यश्च पुंसोऽत्र गुरवः स्मृताः । माता मातामही गुर्वी पितुर्मातुश्च सोदरा ॥ ३१
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः । ज्ञेयस्तु गुरुवर्गोऽयं मातृतः पितृतो द्विजाः ॥३२
अनुवर्तनमेतेषां मनोवाक्कायकर्मभिः । गुरून्दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ॥ ३३
नैतैरुपविशेत्सार्धं विवदेन्नाऽऽत्मकारणात् । जीवितार्थमपि द्वेषाद्गुरुभिर्नैव भाषणम् ॥
उद्रिक्तोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ॥ ३४

१ अ. 'मन्तीव' । २ ट. जप्ये । ३ ट. 'र्थे ऋषादि' ।

गुरूणामपि सर्वेषां पञ्च पूज्या विशेषतः । तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥ ३५
यो भावयति या सूते येन विद्योपदिश्यते । ज्येष्ठो भ्राता च भर्ता च पञ्चैते गुरवः स्मृताः॥३६
आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः । पूजनीया विशेषेण पञ्चैते भूतिमिच्छता ॥ ३७
यावत्पिता च माता च द्वावेतौ निर्विकारिणौ । तावत्सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः॥३८
पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि । स पुत्रः सकलं धर्मं प्राप्नुयात्तेन कर्मणा ॥ ३९
नास्ति मातृसमं दैवं नास्ति पितृसमो गुरुः । तयोः प्रत्युपकारोऽपि न कथंचन विद्यते ॥ ४०
तयोर्नित्यं प्रियं कुर्यात्कर्मणा मनसा गिरा । न ताभ्यामननुज्ञातो धर्ममन्यं समाचरेत् ॥ ४१
वर्जयित्वा मुक्तिफलं नित्यं नैमित्तिकं तथा । धर्मसारः समुद्दिष्टः प्रेत्यानन्तफलप्रदः ॥ ४२
सम्यगाराध्य वक्तारं विसृष्टस्तदनुज्ञया । शिष्यो विद्याफलं भुङ्क्ते प्रेत्य चाऽऽपद्यते दिवि ॥ ४३
यो भ्रातरं पितृसमं ज्येष्ठं मूढोऽवमन्यते । तेन दोषेण संप्रेत्य निरयं घोरमृच्छति ॥ ४४
पुंसां वर्त्मनि [1]पृष्टेन पूज्यो भर्ता तु सर्वदा । अपि मातरि लोकेऽस्मिन्नुपकाराद्धि गौरवम् ॥ ४५
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून्[2]। असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥ ४६
अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् । भो भवत्पूर्वकं त्वेनमभिभाषेत धर्मवित्॥ ४७
अभिवाद्यश्च पूज्यश्च शिरसा नम्य एव च । ब्राह्मणक्षत्रियाद्यैश्च श्रीकामैः सादरं सदा ॥ ४८
नाभिवाद्याश्च विप्रेण क्षत्रियाद्याः कथंचन । ज्ञानकर्मगुणोपेता यद्यप्येते बहुश्रुताः ॥ ४९
ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति श्रुतिः । सवर्णेन सवर्णानां कार्यमेवाभिवादनम् ॥ ५०
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः । पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ॥ ५१
विद्या कर्म वयो [3]बन्धुर्वित्तं भवति पञ्चमम् । मान्यस्थानानि पञ्चाऽऽहुः पूर्वं पूर्वं गुरूत्तरात् ॥५२
पञ्चानां त्रिषु वर्णेषु भूयांसि बलवन्ति च । यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ५३
पन्था देयो ब्राह्मणाय स्त्रियै राज्ञे विचक्षुषे । वृद्धाय भारभग्नाय रोगिणे दुर्बलाय च ॥ ५४
भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम् । निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ॥ ५५
भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः । भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ५६
मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् । भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत् ५७
सजातीयगृहे[4]ष्वेवं सार्ववर्णिकमेव च । भैक्ष्यस्याऽऽचरणं प्रोक्तं पतितादिविवर्जितम् ॥ ५८
वेदयज्ञैरहीनानां प्रशस्तानां [5]स्वकर्मसु । ब्रह्मचार्याहरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम् ॥ ५९
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु । अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥ ६०
सर्वं वा विचरेद्ग्रामं पूर्वोक्तानामसंभवे । नियम्य प्रयतो वाचं दिशस्त्वनवलोकयन् ॥ ६१
समाहृत्य तु भैक्ष्यं तद्यावदर्थममायया । भुञ्जीत प्रयतो नित्यं वाग्यतोऽनन्यमानसः ॥ ६२
[6]भैक्षेण वर्तयेन्नित्यं नैकान्नादो भवेद्व्रती । भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥ ६३
पूजयेदशनं नित्यं प्रदाच्चैतदकुत्सयन् । दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥ ६४
अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥ ६५
प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुखमेव वा । नाद्यादुदङ्मुखो नित्यं विधिरेष सनातनः ॥ ६६

---

१ ख. ग. सृष्टेन । २ ट. °न् । आगच्छध्वमि° । ३ ट बन्धुः कुलं भ° । ४ ट. °व पूर्ववर्णेभ्य एव । ५ क. सुकर्मसु । ६ ञ. भैक्ष्येण ।

प्रक्षाल्य पाणिपादौ च भुञ्जानोऽद्भिरुपस्पृशेत् । शुद्धदेशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ६७

इति श्रीमहापुराणे पाद्म आदिखण्डे कर्मयोगकथनं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२५३०

---

अथ द्विपञ्चाशत्तमोऽध्यायः ।

---

व्यास उवाच—

भुक्त्वा पीत्वा च सुप्त्वा च स्नात्वा रथ्यावसर्पणे[1] । ओष्ठावलेहात्स्पृष्ट्वा वा वासोऽपि परिधाय च
रेतोमूत्रपुरीषाणामुत्सर्गेऽनुक्तभाषणे । ष्ठीवित्वाऽध्ययनारम्भे कासश्वासागमे तथा ॥ २
चत्वरं वा श्मशानं वा समाक्रम्य द्विजोत्तमः । संध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत्पुनः ॥ ३
चण्डालम्लेच्छसंभाषे स्त्रीशूद्रोच्छिष्टभाषणे । उच्छिष्टं पुरुषं दृष्ट्वा भोज्यं चापि तथाविधम् ॥ ४
आचामेदश्रुपाते वा लोहितस्य तथैव च । भोजने संध्ययोः स्नात्वा पीत्वा मूत्रपुरीषयोः ॥ ५
आगतो वाऽऽचमेत्सुप्त्वा सकृत्सकृदथान्यतः । अग्नेर्गवामथाऽऽलम्भे स्पृष्ट्वा प्रयतमेव वा ॥ ६
स्त्रीणामथाऽऽत्मसंस्पर्शे नीलीं वा परिधाय च । उपस्पृशेज्जलं वार्त्रं(?) तृणं वा भूमिमेव वा ॥ ७
केशानां चाऽऽत्मनः स्पर्शे वाससः स्खलितस्य च । अनुष्णाभिरफेनाभिरक्षाराद्भिश्च धर्मतः[2] ॥ ८
शौचेप्सुः सर्वदाऽऽचामेदासीनः प्रागुदङ्मुखः । शिरः प्रावृत्य कण्ठं वा मुक्तकेशशिखोऽपि वा ॥ ९
अकृत्वा पादयोः शौचमागतो[3] न शुचिर्भवेत् । सोपानस्थो जलस्थो वा नोष्णीषी चाऽऽचमेद्बुधः ॥ १०
न चैव वर्ष्णुधाराभिर्न तिष्ठन्नुद्धृतोदकैः । नैकहस्तार्पितजलैर्विना सूत्रेण वा पुनः ॥ ११
न पादुकासनस्थो वा बहिर्जानुरथापि वा । न जल्पन्न हसन्प्रेक्षञ्शयानस्तल्प एव च ॥ १२
नावीक्षिताभिः फेनाद्यैरुपेताभिरथापि वा । शूद्राशुचिकरोन्मुक्तैर्न क्षाराभिस्तथैव च ॥ १३
न चैवाङ्गुलिभिः शब्दं प्रकुर्वन्नान्यमानसः । न वर्णरसदुष्टाभिर्न चैव प्रदरोदकैः ॥ १४
न पाणिक्षुभिताभिर्वा न बहिःस्कन्ध एव वा । हृद्गाभिः पूयते विप्रः कण्ठ्याभिः क्षत्रियः शुचिः ॥ १५
प्राशिताभिस्तथा वैश्यः स्त्रीशूद्रौ स्पर्शतोऽन्ततः । अङ्गुष्ठमूलान्तरतो रेखायां ब्राह्ममुच्यते ॥ १६
अन्तराङ्गुष्ठदेशिन्योः पितॄणां तीर्थमुच्यते । कनिष्ठामूलतः पश्चात्प्राजापत्यं प्रचक्षते ॥ १७
अङ्गुल्यग्रं स्मृतं दैवं तदेवाऽऽर्षं प्रकीर्तितम् । मूले वा दैवमार्षं स्यादाग्नेयं मध्यतः स्मृतम् ॥ १८
तदेव सौमिकं तीर्थमेतज्ज्ञात्वा न मुह्यति । ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत्[4] ॥ १९
कामयेद्वाऽथ दैवेन न तु पित्र्येण वै द्विजाः । त्रिः प्राश्नीयादपः पूर्वं ब्राह्मेण प्रयतस्ततः ॥ २०
संमृज्याङ्गुष्ठमूलेन मुखं वै समुपस्पृशेत् । अङ्गुष्ठानामिकाभ्यां तु स्पृशेन्नेत्रद्वयं ततः ॥ २१
तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् । कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत् ॥ २२
सर्वासामथ योगेन हृदयं तु तलेन वा । स्पृशेत वै शिरस्तद्वदङ्गुष्ठेनांसकद्वयम् ॥ २३
त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः । ब्रह्मा विष्णुर्महेशश्च भवन्तीत्यनुशुश्रुम ॥ २४
गङ्गा च यमुना चैव प्रीयते परिमार्जनात् । संस्पृष्टयोर्लोचनयोः प्रीयेते शशिभास्करौ ॥ २५
नासत्यदस्रौ प्रीयेते स्पृशेन्नासापुटद्वयम् । कर्णयोः स्पृष्टयोस्तद्वत्प्रीयेते चानिलानलौ ॥ २६
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः । मूर्धसंस्पर्शनादेकः प्रीतः स पुरुषो भवेत् ॥ २७

---

१ ख. ग. °णे । श्वानं विलोक्य स्पृष्ट्वा । २ क °रकेशाभिरदुष्टाभिश्च । ३ ग. शौचं मार्गतो । ४ ग. °त् ॥ होम°।

नोच्छिष्टं कुर्वते वक्त्रे विप्रुषोऽङ्गे लगन्ति याः । दन्तवद्दन्तलग्नेषु जिह्वास्पर्शेऽशुचिर्भवेत् ॥ २८
स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् । भूमिपांशुसमा ज्ञेया न तैरस्पृश्यता भवेत् ॥२९
मधुपाके च सोमे च ताम्बूलस्य च भक्षणे । फलमूले चेक्षुदण्डे न दोषं प्राह वै मनुः ॥ ३०
प्रचरंश्चान्नपानेषु द्रव्यहस्तो भवेन्नरः । भूमौ निक्षिप्य तद्द्रव्यमाचम्याभ्युक्षयेत्तु तत् ॥ ३१
तैजसं वै समादाय यद्युच्छिष्टो भवेद्द्विजः । भूमौ निक्षिप्य तद्द्रव्यमाचम्याभ्युक्षयेत्तु तत् ॥ ३२
यद्यद्द्रव्यं समादाय भवेदुच्छेषणान्वितः । अनिधायैव तद्द्रव्यं भूमौ त्वशुचितामियात् ॥ ३३
वस्त्रादिषु विकल्पः स्यात्तत्संस्पृश्याऽऽचमेदिह । अरण्ये तु व्रजन्रात्रौ चौरव्याघ्राकुले पथि ३४
कृत्वा मूत्रं पुरीषं वा द्रव्यहस्तो न दुष्यति । निधाय दक्षिणे कर्णे ब्रह्मसूत्रमुदङ्मुखः ॥ ३५
अह्नि कुर्याच्छकृन्मूत्रं रात्रौ चेद्दक्षिणामुखः । अन्तर्धाय महीं काष्ठैः पत्रैर्लोष्टतृणेन वा ॥ ३६
प्रावृत्य च शिरः कुर्याद्विण्मूत्रस्य विसर्जनम् । छायाकूपनदीगोष्ठचैत्याम्भःपथिभस्मसु ॥ ३७
अग्नौ चैव श्मशाने च विण्मूत्रं न समाचरेत् । न गोमये न काष्ठे वा महावृक्षेऽथ शाद्वले ॥ ३८
न तिष्ठन्न च[3] निर्वासा न च पर्वतमण्डले । न जीर्णदेवायतने न वल्मीके कदाचन ॥ ३९
न[4] च सर्वेषु गर्तेषु प्रगच्छन्न समाचरेत् । तुषाङ्गारकपालेषु राजमार्गे तथैव च ॥ ४०
न क्षेत्रे न बिले वाऽपि न तीर्थे न चतुष्पथे । नोद्यानेऽपां समीपे वा नोषरे न[5] नगराशये ॥ ४१
न सोपानत्पादुको वा छत्री वा नान्तरिक्षके । न चैवाभिमुखः स्त्रीणां गुरुब्राह्मणयोर्गवाम् ॥४२
न देवदेवालययोरपामपि कदाचन । न ज्योतींषि निरीक्षन्वा न वा प्रतिमुखोऽथ वा ॥ ४३
प्रत्यादित्यं प्रत्यनलं प्रतिसोमं तथैव च । आहृत्य मृत्तिकां कूलाल्लेपगन्धापकर्षणीम् ॥ ४४
कुर्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः । नाऽऽहरेन्मृत्तिकां विप्रः पांसुलां न च कर्दमाम् ॥४५
न मार्गान्नोषरोदेशाच्छौचाशिष्टां परस्य च। न देवायतनात्कूपाद्ग्रामो न च जलात्तथा ॥
उपस्पृशेत्ततो नित्यं पूर्वोक्तेन विधानतः ॥ ४६

इति श्रीमहापुराणे पद्म आदिखण्डे कर्मयोगकथने द्विपञ्चाशत्तमोऽध्यायः ॥५२॥

आदितः श्लोकानां समष्ट्यङ्काः—२५७६

---

अथ त्रिपञ्चाशत्तमोऽध्यायः ।

व्यास उवाच—

एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः । आहूतोऽध्ययनं कुर्याद्वीक्षमाणो गुरोर्मुखम् ॥ १
नित्यमुद्यतपाणिः स्यात्साध्वाचारः सुसंयतः । आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ २
प्रतिश्रवणसंभाषे शयानो न समाचरेत् । आसीनो न च भुञ्जानो न तिष्ठेन्न पराङ्मुखः ॥ ३
नीचे शय्यासनं चास्य सर्वदा गुरुसंनिधौ । गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ ४
नोदाहरेदस्य नाम परोक्षमपि केवलम् । न चैवास्यानुकुर्वीत गतिभाषणचेष्टितम् ॥ ५
गुरोर्यत्र परीवादो निन्दा वाऽपि प्रवर्तते । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ ६
दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः । न चैवास्योत्तरं ब्रूयात्स्थितो नाऽऽसीत संनिधौ ॥७

---

१ क. 'म्याद्वक्ष' । २ क. यदुच्छि' । ३ ख. अ. च शूत्कुर्वन्न च । ४ ख. अ. न चोपस्थेषु । ५ ख. अ. न गुहासु च । न ।

उदकुम्भं कुशान्पुष्पं समिधोऽस्याऽऽहरेत्सदा । मार्जनं लेपनं नित्यमङ्गानां वै समाचरेत् ॥ ८
नास्य निर्माल्यशयनं पादुकोपानहावपि । आक्रामेदासनं चास्य च्छायादीन्वा कदाचन ॥ ९
साधयेद्दन्तकाष्ठादीँल्लब्धं चास्मै निवेदयेत् । अनापृच्छ्य न गन्तव्यं भवेत्प्रियहिते रतः ॥ १०
न पादौ सारयेदस्य संनिधाने कदाचन । जृम्भितं हसितं चैव कण्ठप्रावरणं तथा ॥ ११
वर्जयेत्संनिधौ नित्यमङ्गस्फोटनमेव च । यथाकालमधीयीत यावन्न विमना गुरुः ॥ १२
आसीताधो गुरोः पार्श्वे सेवां च सुसमाहितः । आसने शयने याने नैव तिष्ठेत्कदाचन ॥ १३
धावन्तमनुधावेत गच्छन्तमनुगच्छति । गोश्वोष्ट्रयानप्रासादे तथा च विष्टरेषु च ॥ १४
आसीत गुरुणा सार्धं शिलाफलकनौषु च । जितेन्द्रियः स्यात्सततं वश्यात्माऽक्रोधनः शुचिः १५
प्रयुञ्जीत सदा वाचं मधुरां हितकारिणीम् । गन्धमाल्यं रसं कल्पं शुक्तिं प्राणिविहिंसनम् ॥ १६
अभ्यञ्जनाञ्जने पानं छत्रधारणमेव च । कामं लोभं भयं निद्रां गीतं वादित्रवर्तनम् ॥ १७
आतर्जनं परीवादं स्त्रीप्रेक्षालम्भनं तथा । परोपघातं पैशुन्यं प्रयत्नेन विवर्जयेत् ॥ १८
उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् । आहरेद्यावदन्नानि भैक्ष्यं तावद्धहिश्चरेत् ॥ १९
घृतं च लवणं सर्वं वर्ज्यं पर्युषितं च यत् । अनृत्यदर्शी सततं भवेद्गीतादिनिःस्पृहः ॥ २०
नाऽऽदित्यं वै समीक्षेत नाऽऽचरेद्दन्तधावनम् । एकान्तमशुचिस्त्रीभिः शूद्राद्यैरभिभाषणम् ॥ २१
गुरूच्छिष्टं भेषजान्नं प्रयुञ्जीत न कामतः । मलापकर्षणं स्नानं न चरेद्धि कदाचन ॥ २२
न कुर्यान्मानसं विप्रो गुरोस्त्यागे कथंचन । मोहाद्वा यदि वा लोभात्त्यक्त्वा तु पतितो भवेत् २३
लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव वा । आददीत यतो ज्ञानं तं न द्रुह्येत्कदाचन २४
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य न मनुस्त्यागमब्रवीत् ॥ २५
गुरोर्गुरौ संनिहिते गुरुवद्वृत्तिमाचरेत् । नत्वाऽभिसृष्टो गुरुणा स्वान्गुरूनभिवादयेत् ॥ २६
विद्यागुरुष्वेतदेव नित्यावृत्तिषु योगिषु । प्रतिषेधत्सु चाधर्माद्धितं चोपदिशत्सु च ॥ २७
श्रेयः स्वगुरुवद्वृत्तिं नित्यमेव समाचरेत् । गुरुपुत्रेषु दारेषु गुरोश्चैव स्वबन्धुषु ॥ २८
बालः संमानयेन्मान्याञ्शिष्यो वा यज्ञकर्मणि । अध्यापयन्गुरुसुतो गुरुवन्मानमर्हति ॥ २९
उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने । न कुर्याद्गुरुपुत्रस्य पादयोः शौचमेव च ॥ ३०
गुरुवत्प्रतिपूज्याश्च सवर्णा गुरुयोषितः । असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥ ३१
अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च । गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम् ॥ ३२
गुरुपत्नी तु युवती नाभिवाद्या तु पादयोः । कुर्वीत वन्दनं भूम्यामसावहमिति ब्रुवन् ॥ ३३
विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् । गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ ३४
मातृष्वसा मातुलानी श्वश्रूश्चाथ पितृष्वसा । संपूज्या गुरुपत्नीवत्समास्ता गुरुभार्यया ॥ ३५
भ्रातृभार्याश्च संग्राह्या सवर्णाऽहन्यहन्यपि । विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः ॥ ३६
पितुर्भगिन्या मातुश्च ज्यायस्यां च स्वसर्यपि । मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥ ३७
एवमाचारसंपन्नमात्मवन्तमदाम्भिकम् । वेदमध्यापयेद्धर्मं पुराणानि च नित्यशः ॥ ३८
संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्दिशन् । हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुः ॥ ३९
आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः । शक्तोऽन्नदोऽम्बुदः साधुरध्याप्या दश धर्मतः ॥ ४०

---

१ अ. °मङ्गणे वै । २ ट. °वदेतानि भैक्ष्यं चाहरहश्च° । ३ ट. आदित्यं । ४ ट. °स्य म° । ५ ट. °मथान्न° । ६ ट. पुराणाङ्गानि नित्य° ।

कृतेकण्ठस्तथाऽद्रोही मेधावी गुरुकृन्नरः । आप्तः प्रियोऽथ विधिवत्षडध्याप्या द्विजातयः ॥ ४१
एतेषु ब्राह्मणे दानमन्यत्र तु यथोदितम् । आचम्य संयतो नित्यमधीयीत उदङ्मुखः ॥ ४२
उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम् । अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चाऽऽरमेत् ॥ ४३
प्राक्कूलान्पर्युपासीत पवित्रैश्चैव पावकः । प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति ॥ ४४
ब्राह्मणः प्रणवं कुर्यादन्तेऽपि विधिवद्द्विजाः । कुर्यादध्यापनं नित्यं स ब्रह्माञ्जलिपूर्वतः ॥ ४५
सर्वेषामेव भूतानां वेदश्चक्षुः सनातनः । अधीयीताप्ययं नित्यं ब्राह्मण्याद्धीयतेऽन्यथा ॥ ४६
अधीयीत ऋचो नित्यं क्षीराहुत्या स देवताः । प्रीणाति तर्पयन्कालं कामैर्हुताः सदैवताः ॥ ४७
यजूंष्यधीते नियतं दध्ना प्रीणाति देवताः । सामान्यधीते प्रीणाति घृताहुतिभिरन्वहम् ॥ ४८
अथर्वाङ्गिरसो नित्यं मध्वा प्रीणाति देवताः । धर्माङ्गानि पुराणानि मांसैस्तर्पयते सुरान् ॥ ४९
तासां समीपे नियतो नैत्यकं विधिमाश्रितः । गायत्रीं समधीयीत गत्वाऽरण्यं समाहितः ॥ ५०
सहस्रपरमां देवीं शतमध्यां दशावराम् । गायत्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्तितः ॥ ५१
गायत्रीं चैव वेदांश्च तुलयाऽतोलयत्प्रभुः । एकतश्चतुरो वेदा गायत्री च तथैकतः ॥ ५२
ओंकारमादितः कृत्वा व्याहृतीस्तदनन्तरम् । ततोऽधीयीत सावित्रीमेकाग्रः श्रद्धयाऽन्वितः ॥ ५३
पुराकल्पे समुत्पन्ना भूर्भुवः स्वः सनातनाः । महाव्याहृतयस्तिस्रः सर्वाशुभनिबर्हणाः ॥ ५४
प्रधानं पुरुषः कालो विष्णुब्रह्ममहेश्वराः । सत्त्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः ॥ ५५
ओंकारस्तत्परं ब्रह्म सावित्री स्यात्तदुत्तरम् । एष मन्त्रो महायोगः सारात्सार उदाहृतः ॥ ५६
योऽधीतेऽहन्यहन्येतां गायत्रीं वेदमातरम् । विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम् ॥ ५७
गायत्री वेदजननी गायत्री लोकपावनी । गायत्र्या न परं जप्यमेतद्विज्ञाय मुच्यते ॥ ५८
श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः । आषाढ्यां प्रोष्ठपद्यां वा वेदोपाकरणं स्मृतम् ५९
यत्सूर्ययाम्यगमनं मासान्विप्रोऽर्धपञ्चमान् । अधीयीत शुचौ देशे ब्रह्मचारी समाहितः ॥ ६०
पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः । प्रातः शुक्लस्य सायाह्ने पूर्वाह्णे बहुले दले ॥ ६१
छन्दांसि च द्विजोऽभ्यस्येच्छुक्लपक्षे तु वै द्विजः । वेदाङ्गानि पुराणानि कृष्णपक्षेषु मानवः ॥ ६२
इमान्नित्यमनध्यायानधीयानो विवर्जयेत् । अध्यापनं च कुर्वाणोऽभ्यस्यन्नपि प्रयत्नतः ॥ ६३
कर्णश्रवेऽनिले रात्रौ दिवापांसुसमूहने । विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे ॥
अकालिकमनध्यायमेतेष्वाह प्रजापतिः ॥ ६४
एतानभ्युदितान्विद्याद्यदा प्रादुष्कृताग्निषु । तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥ ६५
निर्घाते भूमिचलने ज्योतिषां चोपसर्जने । एतानकालिकान्विद्यादनध्यायानृतावपि ॥ ६६
प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने । सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥ ६७
नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च । धर्मनैपुण्यकामानां पूतगन्धेन नित्यशः ॥ ६८
अन्तः शवगते ग्रामे वृषलस्य च संनिधौ । अनध्यायो रुद्यमाने समये जलदस्य च ॥ ६९
उदके चार्धरात्रे च विण्मूत्रं च विसर्जयन् । उच्छिष्टः श्राद्धभुक्चैव मनसाऽपि न चिन्तयेत् ॥ ७०
प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य वेतनम् । त्र्यहं न कारयेद्ब्रह्म राज्ञो राहोश्च सूतके ॥ ७१
यावदेकान्ननिष्ठा स्यात्स्नेहालोपश्च तिष्ठति । विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्तयेत् ॥ ७२

---

१ ख. ग. 'तज्ञश्च तथा' । २ 'द्विरोमास्त्वि' । ३ ख. ग. 'रमेत् । ४ क. देवतः । ५ ख. ग. कामैः प्रीत्या समाहितः । ६ ख. ग. 'न् । प्रातः सायं च नि' । ७ ख. ग. सनातनात् । ८ क. सर्वाः शु' । ९ ख. ग. 'नां पूतिग' ।

शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् । नाधीयीताऽऽमिषं जग्ध्वा शूद्रश्राद्धान्नमेव च ॥ ७३
नीहारे बाणशब्दे च संध्ययोरुभयोरपि । अमावास्याचतुर्दश्योः पौर्णमास्यष्टमीषु च ॥ ७४
उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् । अष्टकासु अहोरात्रमृत्वन्तासु च रात्रिषु ॥ ७५
मार्गशीर्षे तथा पौषे माघमासे तथैव च । तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षेषु सूरिभिः ॥ ७६
श्लेष्मातकस्य च्छायायां शाल्मलेर्मधुकस्य च । कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥ ७७
समानविद्ये च मृते तथा सब्रह्मचारिणि । आचार्ये संस्थिते चापि त्रिरात्रं क्षपणं स्मृतम् ॥ ७८
छिद्राण्येतानि विप्राणामनध्यायाः प्रकीर्तिताः । हिंसन्ति राक्षसास्तेषु तस्मादेतान्विवर्जयेत् ॥ ७९
नैत्यके नास्त्यनध्यायः संध्योपासनमेव च । उपाकर्मणि चोत्सर्गे होमस्यान्ते तथैव च ॥ ८०
एकामृचमथैकं वा यजुः सामानि वा पुनः । अष्टकाद्यास्वधीयीत मारुते चाभिधावति ॥ ८१
अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः । न धर्मशास्त्रेष्वन्येषु सर्वाण्येतानि वर्जयेत् ॥ ८२
एष धर्मः समासेन कीर्तितो ब्रह्मचारिणः । ब्रह्मणाऽभिहितः पूर्वमृषीणां भावितात्मनाम् ॥ ८३
योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः । स संमूढो न संभाष्यो वेदबाह्यो द्विजातिभिः ॥ ८४
न वेदपाठमात्रेण संतुष्टो वै भवेद्द्विजः । पाठमात्रवसन्यस्तु पङ्के गौरिव सीदति ॥ ८५
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् । स संमूढः शूद्रकल्पः पात्रतां न प्रपद्यते ॥ ८६
यदि त्वात्यन्तिकं वासं कर्तुमिच्छति वै गुरौ । युक्तः परिचरेदेनमाशरीरविमोक्षणम् ॥ ८७
गत्वा वनं च विधिवज्जुहुयाज्जातवेदसम् । अधीयीत तथा नित्यं ब्रह्मनिष्ठः समाहितः ॥ ८८
सावित्रीं शतरुद्रीयं वेदान्तांश्च विशेषतः । अभ्यसेत्सततं युक्तोऽभिक्षाशनपरायणः ॥ ८९
एतद्विधानं परमं पुराणं वेदागमे सम्यगिहोदितं वः ।
पुरा महर्षिप्रवराभिपृष्टः स्वायंभुवो यन्मनुराह देवः ॥ ९०

इति श्रीमहापुराणे पाद्म आदिखण्डे कर्मयोगकथनं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२६६६

---

अथ चतुष्पञ्चाशत्तमोऽध्यायः ।

---

व्यास उवाच—
वेदं वेदौ तथा वेदान्वेदाङ्गानि तथा द्विजाः । अधीत्य चाधिगम्यार्थं तत स्नायाद्द्विजोत्तमः ॥ १
गुरवे तु धनं दत्त्वा स्नायीत तदनुज्ञया । तीर्णव्रतोऽथ युक्तात्मा शक्तो वा स्नातुमर्हति ॥ २
वैणवीं धारयेद्यष्टिमन्तर्वासस्तथोत्तरम् । यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ॥ ३
छत्रं चोष्णीषममलं पादुके चाप्युपानहौ । रौक्मे च कुण्डले धार्ये कृत्तकेशनखः शुचिः ॥ ४
अन्यत्र काञ्चनाद्विप्रो न रक्तां बिभृयात्स्रजम् । शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः ॥
न जीर्णमलवद्वासा भवेद्वै विभवे सति ॥ ५
न रक्तमुल्वणं चान्यधृतं वासो न कुण्डलम् । नोपानहौ स्रजं चाथ पादुके च प्रयोजयेत् ॥ ६
उपवीतमलंकारं कृष्णाजिनं च दर्शयन् । नापसव्यं परीदध्याद्वासो न विकृतं वसेत् ॥ ७

१ ट. 'रात्रं प्रदोषेषु रा' । २ ग. 'मात्रावसानस्तु । ३ ग. 'क्तो भस्मस्नान' । ४ ट. 'या । चीर्ण । ५ ख. ग. पाण्डुके । ६ ख. ग 'रं दर्भान्कृष्णाजिनं तथा । ना' ।

आहरेद्विधिवद्दारान्सदृशानात्मनः शुभान् । रूपलक्षणसंयुक्तान्योनिदोषविवर्जितान् ॥ ८
अमातृगोत्रजभवामन्यमानुषगोत्रजाम् । आहरेद्ब्राह्मणो भार्यां शीलशौचसमन्विताम् ॥ ९
ऋतुकालाभिगामी स्याद्यावत्पुत्रोऽभिजायते। वर्जयेत्प्रतिषिद्धानि प्रयत्नेन दिनानि तु ॥ १०
षष्ठ्यष्टमीं पञ्चदशीं द्वादशीं च चतुर्दशीम् । ब्रह्मचारी भवेन्नित्यं तद्वज्जन्मत्रयाहनि ॥ ११
आदधीत विवाहाग्निं जुहुयाज्जातवेदसम् । एतानि स्नातको नित्यं पावनानि च पा[३]वयेत् ॥ १२
वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । अकुर्वाणः पतत्याशु नरकानतिभीषणान् ॥ १३
अभ्यसेत्प्रयतो वेदं महायज्ञांश्च हापयेत् । कुर्याद्गृह्याणि कार्याणि संध्योपासनमेव च ॥ १४
सख्यं समाधिकैः कुर्यादुपेयादीश्वरं सदा । दैवतान्यभिगच्छेत कुर्याद्भार्याभिपोषणम् ॥ १५
न धर्मं ख्यापयेद्विद्वान्न पापं गूहयेदपि । कुर्वीताऽऽत्महितं नित्यं सर्वभूतानुकम्पकः ॥ १६
वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च। देशवाग्बुद्धिसारूप्यमाचरन्विचरेत्सदा ॥ १७
श्रुतिस्मृत्युदितं सम्यक्साधुभिर्यश्च सेवितः । तमाचारं निषेवेत नेहेतान्यत्र कर्हिचित् ॥ १८
येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥१९
नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतवान् । सत्यवादी जितक्रोधो लोभमोहविवर्जितः२०
सावित्रीजापनिरतः श्राद्धकृन्मुच्यते गृही । मातापित्रोर्हिते युक्तो ब्राह्मणस्य हिते रतः ॥ २१
दाता यज्वा वेदभक्तो ब्रह्मलोके महीयते । त्रिवर्गसेवी सततं देवानां च समर्चनम् ॥ २२
कुर्यादहरहर्नित्यं नमस्येत्प्रयतः सुरान् । विभागशीलः सततं क्षमायुक्तो दयालुकः ॥ २३
गृहस्थस्तु समाख्यातो न गृहेण गृही भवेत् ॥ २४
क्षमा दया च विज्ञानं सत्यं चैव दमः शमः । अध्यात्मनित्यता ज्ञानमेतद्ब्राह्मणलक्षणम् ॥ २५
एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमः । यथाशक्ति चरन्धर्मं निन्दितानि विवर्जयेत् ॥ २६
विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् । गृहस्थो मुच्यते बन्धान्नात्र कार्या विचारणा ॥ २७
[४]विगर्हातिजयक्षेपहिंसाबन्धवधात्मनाम् । अन्यमन्युसमुत्थानां दोषाणां मर्षणं क्षमा ॥ २८
स्वदुःखेषु च कारुण्यं परदुःखेषु सौहृदम् । दयेति मुनयः प्राहुः साक्षाद्धर्मस्य साधनम् ॥ २९
[*अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश]॥ ३०
चतुर्दशानां विद्यानां धारणा हि [६]यथार्थतः । विज्ञानमिति तद्विद्याद्येन धर्मो विवर्धते ॥ ३१
अधीत्य विधिवद्विद्यामर्थं चैवोपलभ्य तु । धर्मकार्याणि कुर्वीत ह्येतद्विज्ञानमुच्यते ॥ ३२
सत्येन लोकं जयति सत्यं तत्परमं पदम् । यथाभूतप्रमादं तु सत्यमाहुर्मनीषिणः ॥ ३३
दमः शरीरोपरतिः शमः प्रज्ञाप्रसादतः । अध्यात्ममक्षरं विद्याद्यत्र गत्वा न शोचति ॥ ३४
यया स देवो भगवान्विद्यया विद्यते परः । साक्षादेव हृषीकेशस्तज्ज्ञानमिति कीर्तितम् ॥ ३५
तन्निष्ठस्तत्परो विद्वान्नित्यमक्रोधनः शुचिः । महायज्ञपरो विप्रो लभते तदनुत्तमम् ॥ ३६
धर्मस्याऽऽयतनं यत्नाच्छरीरं परिपालयेत् । न हि देहं विना विष्णुः पुरुषैर्विद्यते परः ॥ ३७
नित्यं धर्मार्थकामेषु युज्येत नियतो द्विजः । न धर्मवर्जितं काममर्थं वा मनसा स्मरेत् ॥ ३८
सीदन्नपि हि धर्मेण न त्वधर्मं समाचरेत् । धर्मो हि भगवान्देवो गतिः सर्वेषु जन्तुषु ॥ ३९

* टपुस्तक एवायं पाठः ।

१ ख. ग. 'मसमानर्षिगो' । २ क. 'दसा । ए' । ३ ग. धारयेत् । ४ ख. ग. 'ज्ञा देवम' । ५ ख. ग. विधर्मातिक्रमक्रोधाहैं' । ६ ख. ग. यथार्थतः ।

भूतानां प्रियकारी स्यान्न परद्रोहकर्मधीः । न वेददेवतानिन्दां कुर्यात्तैश्च न संवसेत् ॥ ४०
यस्त्विमं नियतो विप्रो धर्माध्यायं पठेच्छुचिः । अध्यापयेच्छ्रावयेद्वा ब्रह्मलोके महीयते ॥ ४१

इति श्रीमहापुराणे पाद्म आदिखण्डे धर्मकथने चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७०७

अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

व्यास उवाच—

न हिंस्यात्सर्वभूतानि नानृतं वा वदेत्कचित् । नाहितं नाप्रियं वाच्यं न स्तेनः स्यात्कदाचन ॥ १
तृणं वा यदि वा शाकं मृदं वा जलमेव वा । परस्यापहरञ्जन्तुर्नरकं प्रतिपद्यते ॥ २
न राज्ञः प्रतिगृह्णीयान्न शूद्रात्पतितादपि । न चान्यस्मादशक्तश्चेन्निन्दितान्वर्जयेद्बुधः ॥ ३
नित्यं याचनको न स्यात्पुनस्तं नैव याचयेत् । प्राणानपहरत्येवं याचकस्तस्य दुर्मतेः ॥ ४
न देवद्रव्यहारी स्याद्विशेषेण द्विजोत्तमः । ब्रह्मस्वं वा नापहरेदापत्स्वपि कदाचन ॥ ५
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । देवस्वं चापि यत्नेन सदा परिहरेत्ततः ॥ ६
पुष्पं शाकोदकं काष्ठं तथा मूलं फलं तृणम् । अदत्तानि च न स्तेयं मनुः प्राह प्रजापतिः ॥ ७
ग्रहीतव्यानि पुष्पाणि देवार्चनविधौ द्विजाः । नैकस्मादेव नियतमननुज्ञाय केवलम् ॥ ८
तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्बुधः । धर्मार्थं केवलं प्राहुरन्यथा पतितो भवेत् ॥ ९
तिलमुद्गयवादीनां मुष्टिर्ग्राह्या पथि स्थितैः । क्षुधितैर्नान्यथा विप्रा धर्मादिभिरिति स्थितिः ॥ १०
न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् । व्रतेन पापं व्यारुह्य कुर्वन्स्त्रीशूद्रदम्भनम् ॥ ११
प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः । छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति ॥ १२
अलिङ्गी लिङ्गिवेशेन यो वृत्तिमुपतिष्ठति । स लिङ्गिनो हरेदेनस्तिर्यग्योनौ च जायते ॥ १३
याचनं योनिसंबन्धं सहवासं च भाषणम् । कुर्वाणः पतते नित्यं तस्माद्यत्नेन वर्जयेत् ॥ १४
[*देवद्रोहं न कुर्वीत गुरुद्रोहं तथैव च] । देवद्रोहाद्गुरुद्रोहः कोटिकोटिगुणाधिकः ॥
जनापवादो नास्तिक्यं तस्मात्कोटिगुणाधिकम् ॥ १५
गोभिश्च दैवतैर्विप्रैः कृष्या राजोपसेवया । कुलान्यकुलतां यान्ति यानि हीनानि धर्मतः ॥ १६
कुविचारैः क्रियालोपैर्वेदानध्ययनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ १७
अनृतात्पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात् । अगोत्रधर्माचरणात्क्षिप्रं नश्यति वै कुलम् ॥ १८
अश्रोत्रियेषु वै दानं वृषलेषु तथैव च । विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम् ॥ १९
अधार्मिकैर्वृते ग्रामे न व्याधिबहुले वसेत् । शूद्रराज्ये च न वसेन्न पाखण्डजनैर्वृते ॥ २०
हिमवद्विन्ध्ययोर्मध्यं पूर्वपश्चिमयोः शुभम् । मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेद्द्विजः ॥ २१
कृष्णो वा यत्र चरति मृगो नित्यं स्वभावतः । पुण्या वा विश्रुता नद्यस्तत्र वा निवसेद्द्विजः २२

* खगपुस्तकयोरेवायं पाठः ।

१ खं. ग. पुष्पे शाकोदके काष्ठे तथा मूले फले तृणे । अदत्तादानमश्रेयो म° । २ क. °मनुज्ञायततेव° । ट. °मनुज्ञाय तत्पतिम् । तृ° । ३ ट. तत्पतिः । ४ ख. ग. व्याजिघ्रन्कुर्व° । ५ ख. ग. °द्रलम्भ° । ६ ख. ग. °ते जन्तुस्तस्मा° । ७ क. °कः । ज्ञाना° । ८ ख. ग. कुविवाहैः । ९ क. °थाऽभिक्ष्यस्य भिक्ष° ।

अर्धक्रोशं नदीकूलं वर्जयित्वा द्विजोत्तमः । नान्यत्र निवसेत्पुण्यं नास्त्यत्र ग्रामसंनिधौ ॥ २३
न संवसेच्च पतितैर्न चाण्डालैर्न पुल्कसैः । न मूर्खैर्नावलिप्तैश्च नोन्त्यैर्जायावसायिभिः ॥ २४
एकशय्यासने पङ्क्तिर्भाण्डे पक्वान्नमिश्रणम् । यजनाध्यापने योनिस्तथैव सहभोजनम् ॥ २५
सहाध्यायस्तु दशमः सहयाजनमेव च । एकादश समुद्दिष्टा दोषाः सांकर्यसंज्ञिताः ॥ २६
समीपे वाऽप्यवस्थानौत्पापं संक्रमते नृणाम् । तस्मात्सर्वप्रयत्नेन सांकर्यं परिवर्जयेत् ॥ २७
एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम् । भस्मना कृतमर्यादा न तेषां संकरो भवेत् ॥ २८
अग्निना भस्मना चैव सलिलेन विशेषतः[४] । द्वारेण स्तम्भमार्गेण षड्भिः पङ्क्तिर्विभिद्यते ॥ २९
न कुर्याच्छुष्कवैराणि विवादं न च पैशुनम् । परक्षेत्रे गां चरन्तीं नाऽऽचक्षीत च कर्हिचित् ॥ ३०
न संवसेत्सूचकेन न कं वै मर्मणि स्पृशेत् । न सूर्यपरिवेषं वा नेन्द्रचापं[६] शराग्निकम् ॥ ३१
परस्मै कथयेद्विद्वाञ्शशिनं वाऽथ काञ्चनम् । न कुर्याद्बहुभिः सार्धं विरोधं बन्धुभिस्तथा ॥ ३२
आत्मनः प्रतिकूलानि परेषां न समाचरेत् । तिथिं पक्षस्य न ब्रूयान्न नक्षत्राणि निर्दिशेत् ॥ ३३
नोदक्यामभिभाषेत नाशुचिं वा द्विजोत्तमाः । न देवगुरुविप्राणां दीयमानं तु वारयेत् ॥ ३४
न चाऽऽत्मानं प्रशंसेद्वा परनिन्दां च वर्जयेत् । वेदनिन्दां देवनिन्दां प्रयत्नेन विवर्जयेत् ॥ ३५
यस्तु देवानृषींश्चैव वेदान्वा निन्दति द्विजः । न तस्य निष्कृतिर्दृष्टा शास्त्रेष्विह मुनीश्वराः ॥ ३६
निन्दयेद्वा गुरुं देवं वेदं वा सोपबृंहणम् । कल्पकोटिशतं साग्रं रौरवे पच्यते नरः ॥ ३७
तूष्णीमासीत निन्दायां न ब्रूयात्किंचिदुत्तरम् । कर्णौ पिधाय गन्तव्यं न चैनमवलोकयेत् ॥ ३८
वर्जयेत्तां परेषां तु गृहेषु गर्हणां बुधः । विवादं सुजनैः सार्धं न कुर्याद्वै कदाचन ॥ ३९
न पापं पापिनां ब्रूयादपापं वा द्विजोत्तमाः । सत्येन तुल्यदोषः स्यान्मिथ्याभिदोषवान्भवेत् ४०
नृणां मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् । तानि पुत्रान्पशून्घ्नन्ति तेषां मिथ्याभिशंसिनाम् ४१
ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे । दृष्टं वै शोधनं वृद्धैर्नास्ति मिथ्याभिशंसिनि ॥ ४२
नेक्षेतोद्यन्तमादित्यं शशिनं वाऽनिमित्ततः । नास्तं यान्तं न वारिस्थं मेघस्पृष्टं न मध्यगम् ॥ ४३
तिरोहितं समीक्षेत नादर्शाद्यनुशायिनम् । न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ॥ ४४
न च मूत्रं पुरीषं वा न च संसृष्टमैथुनम् । नाशुचिः सूर्यसोमादीन्ग्रहानालोकयेद्बुधः ॥ ४५
नाभिभाषेत च परमुच्छिष्टो वाऽवगुण्ठितः । न पश्येत्प्रेतसंस्पर्शं न क्रुद्धस्य गुरोर्मुखम् ॥ ४६
न तैलोदकयोश्छायां न [१०]पंक्तिं भोजनेऽसति । न मुक्तबन्धनं पश्येन्नोन्मत्तं गजमेव च ॥ ४७
नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां वा नाऽऽसनस्थां यथासुखम् ४८
नोदके चाऽऽत्मनो रूपं शुभं वाऽशुभमेव वा । न लङ्घयेच्च मतिमान्नाधितिष्ठेत्कदाचन ॥ ४९
न शूद्राय मतिं दद्यात्कृसरं पायसं दधि । नोच्छिष्टं वा मधु घृतं[११] न च कृष्णाजिनं हविः ॥ ५०
न चैवास्मै व्रतं ब्रूयान्न च धर्मं वदेद्बुधः । न च क्रोधवशं गच्छेद्द्वेषं रागं च वर्जयेत् ॥ ५१
लोभं दम्भं तथाऽवज्ञामसूयां ज्ञानकुत्सनम् । ईर्ष्यां मदं तथा शोकं मोहं च परिवर्जयेत् ॥ ५२
न कुर्यात्कस्यचित्पीडां सुतं शिष्यं तु ताडयेत् । न हीनानुपसेवेत न च तृष्णामतिः[१२] क्वचित् ५३
नाऽऽत्मानं चावमन्येत दैन्यं यत्नेन वर्जयेत् । न विशिष्टमसत्कुर्यान्नाऽऽत्मानं नामयेद्बुधः ॥ ५४

१ ख. ग. ॰र्ण्यं नान्त्यजग्रा॰ । २ ग. नान्त्यैर्नान्त्याव॰ । ३ ख. ग. ॰नात्सांकर्यं क्र॰ । ४ ख. ग. विलेखतः । ट. तृणेन वा । ५ क. सद्भिः । ६ ख. ग. ॰पं पराह्णिक॰ । ७ ख. स्वजनैः । ८ ग. ॰नुगामिन॰ । ९ ङ. ढ. ॰त्प्रेमसं॰ । १० ख. ग. पत्नीं । ११ ग. ॰च्छेद्द्वेषं रा॰ । १२ ख. ग. ॰नं तापये॰ ।

न नखेन लिखेद्भूमिं गां च संवेशयेन्न हि । न नदीषु नदीं ब्रूयात्पर्वतेषु च पर्वतान् ॥ ५५
आवासे भोजने वाऽपि न त्यजेत्सहयायिनम्[1] । नावगाहेदपो नग्नो वह्निं नातिव्रजेत्तथा ॥ ५६
शिरोभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् । न[2] चाप्यशास्त्रैः क्रीडेत स्वानि खानि न संस्पृशेत् ॥ ५७
रोमाणि च रहस्यानि नाशिष्टेन सह व्रजेत् । न पाणिपादवाङ्नेत्रचापल्यं समुपाश्रयेत् ॥ ५८
न शिश्नोदरचापल्यं न च श्रवणयोः क्वचित् । न चाङ्गनखवाद्यं वै कुर्यान्नोऽञ्जलिना पिबेत् ॥ ५९
नाभिहन्याज्जलं पद्भ्यां पाणिना वा कदाचन । न शातयेदिष्टिकाभिर्मूलानि च फलानि च ॥ ६०
न म्लेच्छभाषणं शिक्षेन्नाऽऽकर्षेच्च पदाऽऽसनम् । नखभेदनमास्फोटं छेदनं वा विलेखनम् ॥ ६१
कुर्याद्विमर्दनं धीमान्नाकस्मादेव निष्फलम् । नोत्सङ्गे भक्षयेद्भक्ष्यं वृथाचेष्टां न चाऽऽचरेत् ॥ ६२
न नृत्येदथवा गायेन्न वादित्राणि वादयेत् । न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ६३
न लौकिकैः स्तवैर्देवांस्तोषयेद्वाक्पतेरपि । नाक्षैः क्रीडेन्न धावेत नाप्सु विण्मूत्रमाचरेत् ॥ ६४
नोच्छिष्टः संविशेन्नित्यं न नग्नः स्नानमाचरेत् । न गच्छंस्तु पठेद्वाऽपि न चैव स्वशिरः स्पृशेत् ॥ ६५
नदन्तैर्नखरोमाणि छिन्द्यात्सुप्तं न बोधयेत् । न बालातपमासेवेत्प्रेतधूमं विवर्जयेत् ॥ ६६
नैव स्वप्याच्छून्यगेहे स्वयं नोपानहौ हरेत् । नाकारणाद्वा निष्ठीवेन्न बाहुभ्यां नदीं तरेत् ॥ ६७
न पादक्षालनं कुर्यात्पादेनैव कदाचन । नाग्नौ प्रतापयेत्पादौ न कांस्ये धावयेद्बुधः ॥ ६८
नाभिप्रसारयेद्देवं ब्राह्मणान्गामथापि वा । वाय्वग्निनृपविप्रान्वा सूर्यं वा शशिनं प्रति ॥ ६९
अशुद्धः शयनं यानं स्वाध्यायं स्नानभोजनम् । बहिर्निष्क्रमणं चैव न कुर्वीत कदाचन ॥ ७०
स्वप्नमावपनं स्नानमुद्वर्तं भोजनं गतिम् । उभयोः संध्ययोर्नित्यं मध्याह्ने चैव वर्जयेत् ॥ ७१
न स्पृशेत्पाणिनोच्छिष्टो विप्रो गोब्राह्मणानलान् । न चालनं पदा वाऽपि न देवप्रतिमां स्पृशेत् ॥
नाशुद्धोऽग्निं परिचरेन्न देवान्कीर्तयेदृषीन् । नावगाहेदगाधाम्बु धावयेन्नानिमित्ततः ॥ ७३
न वामहस्तेनोद्धृत्य पिबेद्वक्त्रेण वा जलम् । नोत्तरेदनुपस्पृश्य नाप्सु रेतः समुत्सृजेत् ॥ ७४
अमेध्यालिप्तम[5]र्ह्हं वा लोहितं वा विषाणि वा । व्यतिक्रामेन्न स्रवन्तीं नाप्सु मैथुनमाचरेत् ॥ ७५
चैत्यवृक्षं न वै छिन्द्यान्नाप्सु ष्ठीवनमाचरेत् । नास्थिभस्मकपालानि न केशान्न च कण्टकान् ॥
तुषाङ्गारकरीषं वा नाधितिष्ठेत्कदाचन ॥ ७६
न चाग्निं लङ्घयेद्धीमान्नोपदध्यादधः क्वचित् । न चैनं पादतः कुर्या[6]न्मुखेन न धमेद्बुधः ॥ ७७
न वृक्षमवरोहेत नावेक्षेताशुचिः क्वचित् । अग्नौ न च क्षिपेदग्निं नाद्भिः प्रशमयेत्तथा ॥ ७८
सुहृन्मरणमात्रं वा स्वयं न श्रावयेत्परान् । अपण्यं[7] कूटपण्यं वा विक्रये न प्रयोजयेत् ॥ ७९
न वह्निं मुखनिश्वासैर्ज्वालयेन्नाशुचिर्बुधः । पुण्यस्थानोदकस्थाने सीमान्तं वाहयेन्न तु ॥ ८०
न भिन्द्यात्पूर्वसमयमभ्युपेतं कदाचन । परस्परं पशून्व्याघ्रान्पक्षिणो नावयोधयेत् ॥ ८१
परबाधां न कुर्वीत जलवातातपादिभिः । कारयित्वा सुकर्माणि गुरून्पश्चान्न वञ्चयेत् ॥ ८२
सायं प्रातर्गृहद्वाराव्रक्षार्थं परिघट्टयेत् । बहिर्माल्यं सुगन्धि वा भार्यया सह भोजनम् ॥
विगृह्य वादं कृत्वा वा प्रवेशं च विवर्जयेत् ॥ ८३
न खादन्ब्राह्मणस्तिष्ठेन्न जल्पन्वा हसेद्बुधः । स्वमग्निं चैव हस्तेन स्पृशेन्नाप्सु चिरं वसेत् ॥ ८४
नं[10] पक्षकेणोपधमेन्न शूर्पेण च पाणिना । मुखेनाग्निं समिन्धीत मुखादग्निरजायत ॥ ८५

१ ख. ग. °यायिनम्° । २ ख. ग. न सर्वशस्त्रैः । ३ ख ग. °नापो स्यजे° । ४ ख. ग. °प्रमध्ययनं । ५ ग. °मेध्यालिप्तमन्यद्वा लो° । ६ ट. °यौध्वपूर्वेण न ध° । ७ ट. °ण्यं कट° । ८ ग. °हरेन्न । ९ क. वाहं । १० ट. न व्यजनेनोपधमेन्न कर्षण ।

परस्त्रियं न भाषेत नायाज्यं याजयेद्बुधः । नैकश्चरेत्सदा विप्रः समुदायं च वर्जयेत् ॥ ८६
न देवायतनं गच्छेत्कदाचिद्वाऽप्रदक्षिणम् । न पीडयेद्वा वस्त्राणि न देवायतने स्वपेत् ॥ ८७
नैकोऽध्वानं प्रपद्येत नाधार्मिकजनैः सह । न व्याधिदूषितैर्वाऽपि न शूद्रैः पतितेन वा ॥ ८८
नोपानद्वर्जितो वाऽथ जलादिरहितस्तथा । न वर्त्मनि चितिं वाममतिक्रामेत्कचिद्द्विजः ॥ ८९
न निन्देद्योगिनः सिद्धान्व्रतिनो वा यतींस्तथा । देवतायतनं प्राज्ञा देवानां चैव सत्रिणाम् ॥९०
न क्रामेत्कामतश्छायां ब्राह्मणानां च गोरपि । स्वां तु नाऽऽक्रमयेच्छायां पतिताद्यैर्न रोगिभिः ॥
नाङ्गारभस्मकेशादिष्वधितिष्ठेत्कदाचन ॥ ९१
वर्जयेन्मार्जनीरेणुं स्नानवस्त्रघटोदकम् । न भक्षयेदभक्ष्याणि नापेयं च पिबेद्द्विजः ॥ ९२

इति श्रीमहापुराणे पाद्म आदिखण्डे धर्मकथने पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२७९९

---

अथ षट्पञ्चाशत्तमोऽध्यायः ।

---

व्यास उवाच—

नाद्याच्छूद्रस्य विप्रोऽन्नं मोहाद्वा यदि कामतः । स शूद्रयोनिं व्रजति यस्तु भुङ्क्ते त्वनापदि ॥ १
षण्मासान्यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् । जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते ॥ २
ब्राह्मणक्षत्रियविशां शूद्रस्य च मुनीश्वराः । यस्यान्नेनोदरस्थेन मृतस्तद्योनिमाप्नुयात् ॥ ३
नटान्नं नर्तकान्नं च चण्डालचर्मकारिणाम् । गणान्नं गणिकान्नं च षेडन्नं च विवर्जयेत् ॥ ४
चक्रोपजीविरजकतस्करध्वजिनां तथा । गान्धर्वलोहकारान्नं मृतकान्नं विवर्जयेत् ॥ ५
कुलालचित्रकारान्नं वार्धुषेः पतितस्य च । पौनर्भवच्छत्रिकयोरभिशस्तस्य चैव हि ॥ ६
सुवर्णकारशैलूषव्याधवन्ध्यातुरस्य च । चिकित्सकस्य चैवान्नं पुंश्चल्या दण्डकस्य च ॥ ७
स्तेननास्तिकयोरन्नं देवतानिन्दकस्य च । सोमविक्रयिणश्चान्नं श्वपाकस्य विशेषतः ॥ ८
भार्याजितस्य चैवान्नं यस्य चोपपतिर्गृहे । उत्सृष्टस्य कदर्यस्य तथैवोच्छिष्टभोजिनः ॥ ९
पौपीयोन्नं च संघान्नं शस्त्राजीवस्य चैव हि । भीतस्य रुदितस्यान्नमवक्रुष्टं परिक्षतम् ॥ १०
ब्रह्मद्विषः पापरुचेः श्राद्धान्नं मृतकस्य च । वृथापाकस्य चैवान्नं शावान्नं चाऽऽतुरस्य च ॥ ११
अप्रजानां तु नारीणां कृतघ्नस्य तथैव च । कारुकान्नं विशेषेण शस्त्रविक्रयिणस्तथा ॥ १२
शौण्डान्नं घौण्टिकान्नं च भिषजामन्नमेव च । विद्धप्रजननस्यान्नं परिवेत्रन्नमेव च ॥ १३
पुनर्भुवो विशेषेण तथैव दिधिषूपतेः । अवज्ञातं चावधूतं सरोषं विस्मयान्वितम् ॥ १४
गुरोरपि न भोक्तव्यमन्नं संस्कारवर्जितम् । दुष्कृतं हि मनुष्यस्य सर्वमन्ने व्यवस्थितम् ॥ १५
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् । अर्धकाकुलमित्रं च गोपालो वाहनापितौ ॥ १६
एते शूद्रेषु भोज्यान्ना यश्चाऽऽत्मानं निवेदयेत् । कुशीलवः कुंभकश्च क्षेत्रकर्मक एव च ॥ १७
एते शूद्रेषु भोज्यान्ना दत्त्वा स्वल्पगुणं बुधैः । पायसं स्नेहपक्वं च गोरसश्चैव सक्तवः ॥ १८
पिण्याकं चैव तैलं च शूद्राद्ग्राह्यं द्विजातिभिः । वृन्ताकं नालिकाशाकं कुसुम्भं भस्मकं तथा ॥१९

---

१ ख. म. न वीजयेद्वा वस्त्रेण न । २ म. षण्ढान्नं । ३ ख. म. अपाङ्क्तान्नं । ४ ढ. घोटिकान्नं । ५ ट. ष । वद्ध-प्रजान° । ६ ट. अहङ्काः कु° । ख. म. आर्धिकाः कु° । ७ ख. म. ट. °लो वासना° । ८ म. स्वल्पं पणं च वै । पा° । ९ म. °सुम्भाश्मन्तकं त° ।

पलाण्डुं लशुनं शुक्तं निर्यासं चैव वर्जयेत् । छत्राकं विड्वराहं च स्विन्नं पीयूषमेव च ॥ २०
विलयं विमुखं चैव कोरकाणि विवर्जयेत् । गृञ्जनं किंशुकं चैव कूष्माण्डं च तथैव च ॥ २१
उदुम्बरमलाबुं च जग्ध्वा पतति वै द्विजः । तथा कसरसंयावौ पायसापूपमेव च ॥ २२
अनुपाकृतमांसं च देवान्नानि हवींषि च । यवागूं मातुलिङ्गं च मत्स्यानप्यनुपाकृतान् ॥ २३
नीपं कपित्थं प्लक्षं च प्रयत्नेन विवर्जयेत् । पिण्याकं चोद्धृतस्नेहं देवधान्यं तथैव च ॥ २४
रात्रौ च तिलसंबन्धं प्रयत्नेन दधि त्यजेत् । नाश्नीयात्पयसा तक्रं सक्षारान्नं न योजयेत् ॥ २५
क्रमिदुष्टं भावदुष्टमसत्संसर्गवर्ति यत् । कृमिकीटावपन्नं च सहृल्लेखं च नित्यशः ॥ २६
श्वाघ्रातं च पुनः सिद्धं चाण्डालावेक्षितं तथा । उदक्यया च पतितैर्गवा संघ्रातमेव च ॥ २७
असंगतं पर्युषितं पर्यस्तान्नं च नित्यशः । काककुक्कुटसंस्पृष्टं कृमिभिश्चैव संगतम् ॥ २८
मनुष्यैरप्यवघ्रातं कुष्ठिना स्पृष्टमेव च । न रजस्वलया दत्तं न पुंश्चल्या सरोगया ॥ २९
मलवद्वाससा वाऽपि परवासोऽथ वर्जयेत् । विवत्सायाश्च गोः क्षीरं मेध्य(ष)स्यानिर्दशस्य च ॥ ३०
आविकं बन्धकीक्षीरमपेयं मनुरब्रवीत् । बलाकं हंसदात्यूहं कलविङ्कं शुकं तथा ॥ ३१
कुररं च चकोरं च जालपादं च कोकिलम् । वायसान्खञ्जरीटांश्च श्येनं गृध्रं तथैव च ॥ ३२
उलूकं चक्रवाकं च भासं पारावतं तथा । कपोतं टिट्टिभं चैव ग्रामकुक्कुटमेव च ॥ ३३
सिंहं व्याघ्रं च मार्जारं श्वानं सूकरमेव च । शृगालं मर्कटं चैव गर्दभं च न भक्षयेत् ॥ ३४
न भक्षयेत्सर्वमृगान्पक्षिणोऽन्यान्वनेचरान् । जलेचरान्स्थलचरान्प्राणिनश्चेति धारणा ॥ ३५
गोधा कूर्मः शशः खड्गः शल्लकश्चेति सत्तमाः । भक्ष्यान्पञ्चनखान्नित्यं मनुराह प्रजापतिः ॥ ३६
मत्स्यान्सशल्कान्भुञ्जीय मांसं रौरवमेव च । निवेद्य देवताभ्यस्तु ब्राह्मणेभ्यश्च नान्यथा ॥ ३७
मयूरं तित्तिरं चैव कपोतं च कपिञ्जलम् । वार्ध्रीणसं बकं भक्ष्यं मीनं प्राह प्रजापतिः ॥ ३८
शफरी सिंहतुण्डश्च तथा पाठीनरोहितौ । मत्स्याश्चैते समुद्दिष्टा भक्षणीया द्विजोत्तमाः ॥ ३९
प्रोक्षितं भक्षयेदेषां मांसं च द्विजकाम्यया । यथाविधिप्रयुक्तं च प्राणानामपि चात्यये ॥ ४०
भक्षयेन्नैव मांसानि शेषभोजी न लिप्यते । औषधार्थमशक्तो वा न योगाद्यज्ञकारणात् ॥ ४१
आमन्त्रितस्तु यः श्राद्धे दैवे वा मांसमुत्सृजेत् । यावन्ति पशुरोमाणि तावन्नरकमृच्छति ॥ ४२
अदेयं वाऽप्यपेयं च तथैवास्पृश्यमेव वा । द्विजातीनामनालोक्यं नित्यं मद्यमिति स्थितिः ॥ ४३
तस्मात्सर्वप्रयत्नेन मद्यं नित्यं विवर्जयेत् । पीत्वा पतति कर्मभ्यस्त्वसंभाष्यो भवेद्द्विजः ॥ ४४
भक्षयित्वाऽप्यभक्ष्याणि पीत्वाऽपेयान्यपि द्विजः । नाधिकारी भवेत्तावद्यावत्तन्न जहात्यधः ४५
तस्मात्परिहरेन्नित्यमभक्ष्याणि प्रयत्नतः । अपेयानि च विप्रो वै तथा चेद्याति रौरवम् ॥ ४६

इति श्रीमहापुराणे पाद्म आदिखण्डे भक्ष्याभक्ष्यनियमकथनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२८४५

अथ सप्तपञ्चाशत्तमोऽध्यायः ।

व्यास उवाच—

अथातः संप्रवक्ष्यामि दानधर्ममनुत्तमम् । ब्रह्मणाऽभिहितं पूर्वमृषीणां ब्रह्मवादिनाम् ॥ १

१ ग. कवकानि । २ ट. मूलकं । ३ ग. °जः । वृथा कृसरसं° । ४ ख. ग. क्रियादुष्टं । ५ ख. ग. °त् । केशकी° । ६ ग. अनर्चितं । ७ ग. क्षीरमौष्ट्रमेकशफस्य । ८ ग. °कं संधिनीक्षी° । ९ ग. °त्सर्पमृ° । १० ख. ग. °तिः ॥ राजीवाः सिं° । ११ ग. वा नियो° ।

अर्थानामुचिते पात्रे श्रद्धया प्रतिपादनम् । तदोमित्यभिनिर्दिष्टं भुक्तिमुक्तिफलप्रदम् ॥ २
यो ददाति विशिष्टेभ्यः श्रद्धया परया युतः । तद्वै दत्तमहं मन्ये शेषं कस्यापि रक्षति ॥ ३
नित्यं नैमित्तिकं काम्यं त्रिविधं दानमुच्यते । चतुर्थं विमलं प्रोक्तं सर्वदानोत्तमोत्तमम् ॥ ४
अहन्यहनि यत्किंचिद्दीयतेऽनुपकारिणे । अनुद्दिश्य फलं तस्माद्ब्राह्मणाय तु नित्यकम् ॥ ५
यत्तु पापोपशान्त्यर्थं दीयते विदुषां करे । नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुत्तमम् ॥ ६
अपत्यविजयैश्वर्यसुखार्थं यत्प्रदीयते । दानं तत्काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः ॥ ७
यदीश्वरस्य प्रीत्यर्थं ब्रह्मवित्सु प्रदीयते । चेतसा धर्मयुक्तेन दानं तद्विमलं शिवम् ॥ ८
दानधर्मं निषेवेत पात्रमासाद्य शक्तितः । उपास्यते तु तत्पात्रं यत्तारयति सर्वतः ॥ ९
कुटुम्बभुक्तिवसनाद्देयं यदतिरिच्यते । अन्यथा दीयते यद्वै न तद्दानफलप्रदम् ॥ १०
श्रोत्रियाय कुलीनाय विनीताय तपस्विने । व्रतस्थाय दरिद्राय प्रदेयं भक्तिपूर्वकम् ॥ ११
यस्तु दद्यान्महीं भक्त्या ब्राह्मणायाऽऽहिताग्नये । स याति परमं स्थानं यत्र गत्वा न शोचति १२
इक्षुभिः सततां भूमिं यवगोधूमशालिनीम् । ददाति वेदविदुषे यः स भूयो न जायते ॥ १३
गोचर्ममात्रामपि वा यो भूमिं संप्रयच्छति । ब्राह्मणाय दरिद्राय सर्वपापैः प्रमुच्यते ॥ १४
भूमिदानात्परं दानं विद्यते नेह किंचन । अन्नदानं तेन तुल्यं विद्यादानं ततोऽधिकम् ॥ १५
यो ब्राह्मणाय शान्ताय शुचये धर्मशीलिने । ददाति विद्यां विधिना ब्रह्मलोके महीयते ॥ १६
दद्यादहरहः स्वर्णं श्रद्धया ब्रह्मचारिणे । सर्वपापविनिर्मुक्तो ब्रह्मणः स्थानमाप्नुयात् ॥ १७
गृहस्थायान्नदानेन फलमाप्नोति मानवः । अन्नमेवास्य दातव्यं दत्त्वाऽऽप्नोति परां गतिम् ॥१८
वैशाख्यां पौर्णमास्यां तु ब्राह्मणान्सप्त पञ्च वा । उपोष्य विधिना शान्तः शुचिः प्रयतमानसः ॥
पूजयित्वा तिलैः कृष्णैर्मधुना च विशेषतः । प्रीयतां धर्मराजेति यदा मनसि वर्तते ॥
यावज्जीवं तु यत्पापं तत्क्षणादेव नश्यति ॥ २०
कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥ २१
घृतान्नमुदकुम्भं च वैशाख्यां तु विशेषतः । निर्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ॥ २२
सुवर्णतिलयुक्तैस्तु ब्राह्मणान्सप्त पञ्च वा । तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति ॥ २३
माघमासे तमिस्रे तु द्वादश्यां समुपोषितः । शुक्लाम्बरधरः कृष्णैस्तिलैर्हुत्वा हुताशनम् ॥ २४
प्रदद्याद्ब्राह्मणेभ्यस्तु तिलानेव समाहितः । जन्मप्रभृति यत्पापं सर्वं तरति वै द्विजः ॥ २५
अमावास्यामनुप्राप्य ब्राह्मणाय तपस्विने । यत्किंचिद्देवदेवेशं दद्याच्चोद्दिश्य केशवम् ॥ २६
प्रीयतामीश्वरो विष्णुर्हृषीकेशः सनातनः । सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥ २७
यस्तु कृष्णचतुर्दश्यां स्नात्वा देवं पिनाकिनम् । आराधयेद्द्विजमुखे न तस्यास्ति पुनर्भवः ॥ २८
कृष्णाष्टम्यां विशेषेण धार्मिकाय द्विजातये । स्नात्वाऽभ्यर्च्य यथान्यायं पादप्रक्षालनादिभिः २९
प्रीयतां मे महादेवो दद्याद्द्रव्यं स्वकीयकम् । स सर्वपापनिर्मुक्तः प्राप्नोति परमां गतिम् ॥ ३०
द्विजैः कृष्णचतुर्दश्यां कृष्णाष्टम्यां विशेषतः । अमावास्यायां भक्तैस्तु पूजनीयस्त्रिलोचनः ॥ ३१
एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम् । अर्चयेद्ब्राह्मणमुखे स गच्छेत्परमं पदम् ॥ ३२
एषा तिथिर्वैष्णवी स्याद्द्वादशी शुक्लपक्षतः । तस्यामाराधयेद्देवं प्रयत्नेन जनार्दनम् ॥ ३३
यत्किंचिद्देवमीशानमुद्दिश्य ब्राह्मणे शुचौ । दीयते विष्णुमेवापि तदनन्तफलं स्मृतम् ॥ ३४
यो हि यां देवतामिच्छेत्समाराधयितुं नरः । ब्राह्मणान्पूजयेद्यत्नात्स तस्यास्तोषयेत्ततः ॥ ३५

द्विजानां वपुरास्थाय नित्यं तिष्ठन्ति देवताः । पूज्यन्ते ब्राह्मणालाभे प्रतिमादिषु तैः क्वचित् ॥ ३६
प्रतिमादिषु यत्नेन तस्मात्फलमभीप्सया । द्विजेषु देवता नित्यं पूजनीया विशेषतः ॥ ३७
विभूतिकामः सततं पूजयेद्धि पुरंदरम् । ब्रह्मवर्चसकामस्तु ब्रह्माणं ज्ञानकामुकः ॥ ३८
आरोग्यकामोऽथ रविं धनकामो हुताशनम् । कर्मणां सिद्धिकामस्तु पूजयेद्वै विनायकम् ॥ ३९
भोगकामस्तु शशिनं बलकामः समीरणम् । मुमुक्षुः सर्वसंसारात्प्रयत्नेनार्चयेद्धरिम् ॥ ४०
यस्तु योगं तथा मोक्षमन्विच्छेज्ज्ञानमैश्वरम् । अर्चयेत विरूपाक्षं प्रयत्नेन सुरेश्वरम् ॥ ४१
ये वाञ्छन्ति महाभोगाञ्ज्ञानानि च महेश्वरम् । ते पूजयन्ति भूतेशं केशवं चापि भोगिनः ॥ ४२
वारिदस्तृप्तिमाप्नोति जलदानं ततोऽधिकम् । तैलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ ४३
भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः । गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥ ४४
वासोदश्चन्द्रसालोक्यमश्वदो यानमुत्तमम् । अन्नदाता श्रियं स्वेष्टां गोदो ब्रध्नस्य विष्टपम् ॥ ४५
यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः । धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् ॥ ४६
धान्यान्यपि यथाशक्ति विप्रेषु प्रतिपादयेत् । वेदविद्याविशिष्टेषु प्रेत्य स्वर्गं समश्नुते ॥ ४७
गवां चान्नप्रदानेन सर्वपापैः प्रमुच्यते । इन्धनानां प्रदानेन दीप्ताग्निर्जायते नरः ॥ ४८
फलमूलानि पानानि शाकानि विविधानि च । प्रदद्याद्ब्राह्मणेभ्यस्तु मुदा युक्तः सदा भवेत् ४९
औषधं स्नेहमाहारं रोगिणो रोगशान्तये । ददानो रोगरहितः सुखी दीर्घायुरेव च ॥ ५०
असिपत्रवनं मार्गं क्षुरधारासमन्वितम् । तीक्ष्णतापं च तरति च्छत्रोपानत्प्रदो नरः ॥ ५१
यद्यदिष्टतमं लोके यच्चास्यापेक्षितं गृहे । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ५२
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः । संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम् ॥ ५३
प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च । दत्त्वा चाक्षयमाप्नोति नदीषु च वनेषु च ॥ ५४
दानधर्मात्परो धर्मो भूतानां नेह विद्यते । तस्माद्विप्राय दातव्यं श्रोत्रियाय द्विजातिभिः ॥ ५५
स्वर्गाय भूतिकामेन तथा पापोपशान्तये । मुमुक्षुणा तु दातव्यं ब्राह्मणेभ्यस्तथाऽन्वहम् ॥ ५६
दीयमानं तु यो मोहाद्गोविप्राग्निसुरेषु च । निवारयति पापात्मा तिर्यग्योनिं व्रजेत सः ॥ ५७
यस्तु द्रव्यार्जनं कृत्वा नार्चयेद्ब्राह्मणान्सुरान् । सर्वस्वमपहृत्यैनं राजा राष्ट्रात्प्रवासयेत् ॥ ५८
यस्तु दुर्भिक्षवेलायामन्नाद्यं न प्रयच्छति । म्रियमाणेषु विप्रेषु ब्राह्मणः स तु गर्हितः ॥ ५९
न तस्मात्प्रतिगृह्णीयुर्न वसेयुश्च तेन हि । अङ्कयित्वा स्वकाद्राष्ट्राद्राजा तं विप्रवासयेत् ॥ ६०
पश्चात्सद्भ्यो ददातीह स्वद्रव्यं धर्मसाधनम् । स पूर्वाभ्यधिकः पापी नरके पच्यते नरः ॥ ६१
स्वाध्यायवन्तो ये विप्रा विद्यावन्तो जितेन्द्रियाः । सत्यसंयमसंयुक्तास्तेभ्यो दद्याद्द्विजोत्तमाः ६२
प्रभुक्तमपि विद्वांसं धार्मिकं भोजयेद्द्विजम् । न च मूर्खमवृत्तस्थं दशरात्रमुपोषितम् ॥ ६३
संनिकृष्टमतिक्रम्य श्रोत्रियं यः प्रयच्छति । स तेन कर्मणा पापी दहत्यासप्तमं कुलम् ॥ ६४
यदि स्यादधिको विप्रः शीलविद्यादिभिः स्वयम् । तस्मै यत्नेन दातव्यमतिक्रम्य च संनिधिम् ॥
योऽर्चितं प्रति गृह्णीयाद्दद्यादर्चितमेव च । तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये ॥ ६६
न वार्यपि प्रयच्छेत नास्तिके हैतुकेऽपि च । न पाखण्डेषु सर्वेषु नावेदविदि धर्मवित् ॥ ६७
रूप्यं चैव हिरण्यं च गामश्वं पृथिवीं तिलान् । अविद्वान्प्रतिगृह्णीयाद्भस्मी भवति काष्ठवत् ॥ ६८

---

१ ट. °हाभागा ज्ञाना° । २ ख. ग. °दः सदामिष्टं दी° । ३ क. रणेषु । ४ ख. ग. °पी दहत्या° ।

द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजोत्तमः । अपि राजन्यवैश्याभ्यां न तु शूद्रात्कथंचन ६९
वृत्तिसंकोचमन्विच्छेन्नेहेत धनविस्तरम् । धनलोभे प्रसक्तस्तु ब्राह्मण्यादेव हीयते ॥ ७०
वेदानधीत्य सकलान्यज्ञांश्चावाप्य सर्वशः । न तां गतिमवाप्नोति संतोषाद्यामवाप्नुयात् ॥ ७१
प्रतिग्रहरुचिर्न स्याच्छूद्राच्च तु समाहरेत् । स्थित्यर्थादधिकं गृह्णन्ब्राह्मणो यात्यधोगतिम् ॥ ७२
यस्तु याति न संतोषं न स स्वर्गस्य भाजनम् । उद्वेजयति भूतानि यथा चौरस्तथैव सः ॥ ७३
गुरून्भृत्यांश्चोज्जिहीर्षुस्तर्पयन्देवतातिथीन् । सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः ॥ ७४
एवं गृहस्थो युक्तात्मा देवतातिथिपूजकः । वर्तमानः संयतात्मा याति तत्परमं पदम् ॥ ७५
पुत्रेषु भार्यां निक्षिप्य गत्वाऽरण्यं तु तत्त्ववित् । एकाकी विचरेन्नित्यमुदासीनः समाहितः ॥ ७६
एष वः कथितो धर्मो गृहस्थानां द्विजोत्तमाः । ज्ञात्वा तु तिष्ठेन्नियतं तथाऽनुष्ठापयेद्द्विजान् ॥ ७७

इति देवमनादिमेकमीशं गृहधर्मेण समर्चयेदजस्रम् ।
समतीत्य स सर्वभूतयोनिं प्रकृतिं याति परं न याति जन्म ॥ ७८

इति श्रीमहापुराणे पाद्म आदिखण्डे गृहस्थधर्मनिर्णयो नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९२३

---

अथाष्टपञ्चाशत्तमोऽध्यायः ।

---

व्यास उवाच—

एवं गृहाश्रमे स्थित्वा द्वितीयं भागमायुषः । वानप्रस्थाश्रमं गच्छेत्सदारः साग्निरेव च ॥ १
निक्षिप्य भार्यां पुत्रेषु गच्छेद्वनमथापि वा । दृष्ट्वाऽपत्यस्य वाऽपत्यं जर्जरीकृतविग्रहः ॥ २
शुक्लपक्षस्य पूर्वाह्णे प्रशस्ते चोत्तरायणे । गत्वाऽरण्यं नियमवांस्तपः कुर्यात्समाहितः ॥ ३
फलमूलानि पूतानि नित्यमाहारमाहरेत् । यदाहारो भवेत्तेन पूजयेत्पितृदेवताः ॥ ४
पूजयेदतिथिं नित्यं स्नात्वा चाभ्यर्चयेत्सुरान् । गृहादादाय चाश्नीयादष्टौ ग्रासान्समाहितः ॥ ५
जटाश्च बिभृयान्नित्यं नखरोमाणि नोत्सृजेत् । स्वाध्यायं सर्वथा कुर्यान्नियच्छेद्वाचमन्यतः ॥ ६
अग्निहोत्रं तु जुहुयात्पञ्चयज्ञान्समाचरेत् । उत्पन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा ॥ ७
चीरवासा भवेन्नित्यं स्नायात्त्रिषवणं शुचिः । सर्वभूतानुकम्पश्च प्रतिग्रहविवर्जितः ॥ ८
दर्शेन पौर्णमासेन यजेत नियतं द्विजः । ऋत्विष्ट्याग्रयणे चैव चातुर्मास्यानि कारयेत् ॥ ९
उत्तरायणं च क्रमशो दक्षस्यायनमेव च । वासन्तशारदैर्मेध्यैरुत्पन्नैः स्वयमाहृतैः ॥ १०
पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत्पृथक् । देवताभ्यश्च तद्धुत्वा वन्यं मेध्यतरं हविः ॥ ११
शेषं समुपभुञ्जीत लवणं च स्वयं कृतम् । वर्जयेन्मधुमांसानि भौमानि कैरकानि च ॥ १२
भूस्तृणं शिग्रुकं चैव श्लेष्मातकफलानि च । न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् ॥ १३
न ग्रामजातान्यार्तोऽपि पुष्पाणि च फलानि च। श्रावणेनैव विधिना वह्निं परिचरेत्सदा ॥ १४
न द्रुह्येत्सर्वभूतानि निर्द्वंद्वो निर्भयो भवेत् । न नक्तं किंचिदश्नीयाद्रात्रौ ध्यानपरो भवेत् ॥ १५
जितेन्द्रियो जितक्रोधस्तत्त्वज्ञानविचिन्तकः । ब्रह्मचारी भवेन्नित्यं न पत्नीमपि संश्रयेत् ॥ १६
यस्तु पत्न्या वनं गत्वा मैथुनं कामतश्चरेत् । तद्व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विजः ॥ १७

---

१ म. 'ति पुनर्न या' । २ क. 'स्य दांप' । ३ म. कवकानि । ४ ख. म. कवचं ।

तत्र यो जायते गर्भो न स स्पृश्यो द्विजातिभिः । न हि वेदेऽधिकारोऽस्य तद्वंशेऽप्येवमेव हि ॥ १८
भूमौ शयीत सततं सावित्रीजप्यतत्परः । शरण्यः सर्वभूतानां संविभागपरः सदा ॥ १९
परीवादं मृषावादं निद्रालस्ये च वर्जयेत् । एकाग्निरनिकेतः स्यात्प्रोक्षितां भूमिमाश्रयेत् ॥ २०
मृगैः सह चरेद्दान्तस्तैः सहैव च संवसेत् । शिलायां शर्करायां वा शयीत सुसमाहितः ॥ २१
सद्यः प्रक्षालको वा स्यान्माससंचयिकोऽपि वा । षण्मासनिचयो वाऽपि समानिचय एव वा ॥ २२
नक्तं चान्नं समश्नीयाद्दिवा वाऽऽहृत्य शक्तितः । चतुर्थकालिको वा स्यात्किं वाऽप्यष्टमकालिकः॥२३
चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्जयेत् । पक्षे पक्षे समश्नीयाद्यवागूं कथितां सकृत् ॥ २४
पुष्पमूलफलैर्वाऽपि केवलैर्वर्तयेत्सदा । स्वाभाविकैः स्वयं शीर्णैर्वैखानसमते स्थितः ॥ २५
भूमौ वा परिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम् । स्थानासनाभ्यां विहरेन्न क्वचिद्धैर्यमुत्सृजेत् ॥ २६
ग्रीष्मे पञ्चतपाश्च स्याद्वर्षास्वभ्रावकाशिकः । आर्द्रवासाश्च हेमन्ते क्रमशो वर्धयेत्तपः ॥ २७
उपस्पृशेत्त्रिषवणं पितृदेवांश्च तर्पयेत् । एकपादेन तिष्ठेत मरीचिं वा पिबेत्सदा ॥ २८
पञ्चाग्निधूमगो वा स्यादूष्मगः सोमपोऽपि वा । पयः पिबेच्छुक्लपक्षे कृष्णपक्षे तु गोमयम् ॥ २९
शीर्णपर्णाशनो वा स्यात्कृच्छ्रैर्वा वर्तयेत्सदा । योगाभ्यासरतश्च स्याद्रुद्राध्यायी भवेत्सदा ॥ ३०
अथर्वशिरसोऽध्येता वेदान्ताभ्यासतत्परः । यमान्सेवेत सततं नियमांश्चाप्यतन्द्रितः ॥ ३१
कृष्णाजिनी सोत्तरीयः शुक्लयज्ञोपवीतवान् । अथवाऽग्नीन्समारोप्य स्वात्मनि ध्यानतत्परः ॥ ३२
अनग्निरनिकेतो वा मुनिर्मोक्षपरो भवेत् । तापसेष्वेव विप्रेषु यात्रिकं भैक्ष्यमाहरेत् ॥ ३३
गृहमेधिषु चान्येषु द्विजेषु वनचारिषु । ग्रामादाहृत्य वाऽश्नीयादष्टौ ग्रासान्वने वसन् ॥ ३४
प्रतिगृह्य पुटेनैव पाणिना शकलेन वा । विविधाश्चोपनिषद आत्मसंसिद्धये जपेत् ॥ ३५
विद्याविशेषान्सावित्रीं रुद्राध्यायं तथैव च । महाप्रस्थानिकं वाऽसौ कुर्यादनशनं तथा ॥
अग्निप्रवेशमन्यद्वा ब्रह्मार्पणविधौ स्थितः ॥ ३६

इति श्रीमहापुराणे पाद्म आदिखण्डे वानप्रस्थाश्रमाचारकथनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

श्लोकानामादितः समष्ट्यङ्काः—२९५९

---

अथैकोनषष्टितमोऽध्यायः ।

---

व्यास उवाच—

एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः । चतुर्थं चाऽऽयुषो भागं संन्यासेन नयेत्क्रमात् ॥ १
अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् । योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः ॥२
यदा मनसि संपन्नं वैतृष्ण्यं सर्ववस्तुषु । तदा संन्यासमिच्छेच्च पतितः स्याद्विपर्यये ॥ ३
प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा पुनः । दान्तः शुक्लकषायोऽसौ ब्रह्माश्रममुपाश्रयेत् ॥ ४
ज्ञानसंन्यासिनः केचिद्वेदसंन्यासिनोऽपरे । कर्मसंन्यासिनस्त्वन्ये त्रिविधाः परिकीर्तिताः ॥ ५
यः सर्वत्र विनिर्मुक्तो निर्द्वंद्वश्चैव निर्भयः । प्रोच्यते ज्ञानसंन्यासी आत्मन्येव व्यवस्थितः ॥ ६
वेदमेवाभ्यसेन्नित्यं निराशी निष्परिग्रहः । प्रोच्यते वेदसंन्यासी मुमुक्षुर्विजितेन्द्रियः ॥ ७
यस्त्वग्निमात्मसात्कृत्वा ब्रह्मार्पणपरो द्विजः । ज्ञेयः स कर्मसंन्यासी महायज्ञपरायणः ॥ ८

१ ट. 'वेगर्वसि' । २ ट. यस्तु खान्यात्म' ।

त्रयाणामपि चैतेषां ज्ञानी त्वभ्यधिको मतः । न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः ॥ ९
निर्ममो निर्भयः शान्तो निर्द्वंद्वः पर्णभोजनः । जीर्णकौपीनवासाः स्यान्नग्नो वा ज्ञानतत्परः ॥१०
ब्रह्मचारी जिताहारो ग्रामादन्नं समाहरेत् । अध्यात्मरतिरासीत निरपेक्षो निरामिषः ॥ ११
आत्मनैव सहायेन सुखार्थं विचरेदिह । नाभिनन्देत मरणं नाभिनन्देत जीवनम् ॥ १२
कालमेव प्रतीक्षेत निदेशं भृतको यथा । नाध्येतव्यं न वक्तव्यं श्रोतव्यं न कदाचन ॥ १३
एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते । एकवासाऽथवा विद्वान्कौपीनाच्छादनोऽपि वा ॥ १४
मुण्डी शिखी वाऽथ भवेत्रिदण्डी निष्परिग्रहः । कषायवासाः सततं ध्यानयोगपरायणः ॥
ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा ॥ १५
समः शत्रौ तथा मित्रे तथा मानापमानयोः । भैक्षेण वर्तयेन्नित्यं नैकान्नादी भवेत्कचित् ॥ १६
यस्तु मोहेन वाऽन्यस्मादेकान्नादी भवेद्यतिः । न तस्य निष्कृतिः काचिद्धर्मशास्त्रेषु दृश्यते ॥१७
रागद्वेषवियुक्तात्मा समलोष्टाश्मकाञ्चनः । प्राणिहिंसानिवृत्तश्च मौनी स्यात्सर्वनिस्पृहः ॥ १८
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥ १९
नैकत्र निवसेद्देशे वर्षाभ्योऽन्यत्र भिक्षुकः । स्नात्वा शौचरतो नित्यं कमण्डलुकरः शुचिः ॥२०
ब्रह्मचर्यरतो नित्यं वनवासरतो भवेत् । मोक्षशास्त्रेषु निरतो ब्रह्मसूत्री जितेन्द्रियः ॥ २१
दम्भाहंकारनिर्मुक्तो निन्दापैशुन्यवर्जितः[3] । आत्मज्ञानगुणोपेतो यदि मोक्षमवाप्नुयात् ॥ २२
अभ्यसेत्सततं देवं प्रणवाख्यं सनातनम् । स्नात्वाऽऽचम्य विधानेन शुचिर्देवालयादिषु ॥ २३
यज्ञोपवीती शान्तात्मा कुशपाणिः समाहितः । धौतकाषायवसनो भस्माच्छन्नतनूरुहः ॥ २४
अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च । आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ॥ २५
पुत्रेषु वाऽथ निवसन्ब्रह्मचारी यतिर्मुनिः । वेदमेवाभ्यसेन्नित्यं स याति परमां गतिम् ॥ २६
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं तपः परम् । क्षमा दया च संतोषो व्रतान्यस्य विशेषतः ॥ २७
वेदान्तज्ञाननिष्ठो वा पञ्चयज्ञान्समाहितः । कुर्यादहरहः स्नात्वा भिक्षार्थेनैव तेन हि ॥ २८
होममन्त्राञ्जपेन्नित्यं काले काले समाहितः । स्वाध्यायं चान्वहं कुर्यात्सावित्रीं संध्ययोर्जपेत् २९
ध्यायीत सततं देवमेकान्ते परमेश्वरम् । एकान्नं वर्जयेन्नित्यं कामक्रोधं परिग्रहम् ॥ ३०
एकवासा द्विवासाऽथ शिखी यज्ञोपवीतवान् । कमण्डलुकरो विद्वांस्त्रिदण्डो याति तत्परम् ॥ ३१

इति श्रीमहापुराणे पाद्म आदिखण्डे यतिधर्मनिरूपणं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—२९९०

---

अथ षष्टितमोऽध्यायः ।

---

व्यास उवाच—

एवं त्वाश्रमनिष्ठानां यतीनां नियतात्मनाम् । भैक्ष्येण वर्तनं प्रोक्तं फलमूलैरथापि वा ॥ १
एककालं चरेद्भैक्ष्यं न प्रसज्येत विस्तरम् । भैक्ष्ये प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥ २
सप्तागारं चरेद्भैक्ष्यमलाभे न पुनश्चरेत् । गोदोहमात्रं तिष्ठेत कालं भिक्षुरधोमुखः ॥ ३
भिक्षेत्युक्त्वा सकृत्तूष्णीमश्नीयाद्वाग्यतः शुचिः । प्रक्षाल्य पाणिपादौ च समाचम्य यथाविधि ॥ ४

---

१ ट. वा ध्यान° । २ म. °राशिषः । ३ ट. निर्दोषोऽसत्व° ।

आदित्ये दर्शयित्वाऽन्नं भुञ्जीत प्राङ्मुखो नरः । हुत्वा प्राणाहुतीः पञ्च ग्रासानष्टौ समाहितः ५
आचम्य देवं ब्रह्माणं ध्यायेत परमेश्वरम् । अलाबुदारुपात्रे च मृन्मयं वैणवं तथा ॥ ६
चत्वारि यतिपात्राणि मनुराह प्रजापतिः । प्राग्रात्रे मध्यरात्रे च पररात्रे तथैव च ॥ ७
संध्यासूक्तिविशेषेण चिन्तयेन्नित्यमीश्वरम् । कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसंभवम् ॥ ८
आत्मानं सर्वभूतानां परस्तात्तमसः स्थितम् । सर्वस्याऽऽधारमव्यक्तमानन्दं ज्योतिरव्ययम् ॥९
प्रधानपुरुषातीतमाकाशं दहनं शिवम् । तदन्तं सर्वभावानामीश्वरं ब्रह्मरूपिणम् ॥ १०
ओंकारान्तेऽथ चाऽऽत्मानं समाप्य परमात्मनि । आकाशे देवमीशानं ध्यायेताऽऽकाशमध्यगम् ११
कारणं सर्वभावानामानन्दैकसमाश्रयम् । पुराणपुरुषं विष्णुं ध्यायेन्मुच्येत बन्धनात् ॥ १२
यद्वा[१] गुहादौ प्रकृतौ जगत्संमोहनालये । विचिन्त्यं परमं व्योम सर्वभूतैककारणम् ॥ १३
जीवनं सर्वभूतानां यत्र लोकः प्रलीयते । आनन्दं ब्रह्मणः सूक्ष्मं यत्पश्यन्ति मुमुक्षवः ॥ १४
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् । अनन्तं सत्यमीशानं विचिन्त्याऽऽसीत वाग्यतः ॥ १५
गुह्याद्गुह्यतमं ज्ञानं यतीनामेतदीरितम् । योऽत्र तिष्ठेत्सदाऽनेन सोऽश्नुते योगमैश्वरम् ॥ १६
तस्माज्ज्ञानरतो नित्यमात्मविद्यापरायणः[२] । ज्ञानं समभ्यसेद्ब्रह्म येन मुच्येत बन्धनात् ॥ १७
मत्वा पृथक्त्वमात्मानं सर्वस्मादेव केवलम् । आनन्दमक्षरं ज्ञानं ध्यायेत च ततः परम् ॥ १८
यस्माद्भवन्ति भूतानि यज्ज्ञात्वा नेह जायते । स तस्मादीश्वरो देवः परस्ताद्योऽधितिष्ठति ॥
यदन्तरे तद्गमनं शाश्वतं शिवमव्ययम् ॥ १९
यं[३] इदं स्वपरोक्षस्तु स देवः स्यान्महेश्वरः । व्रतानि यानि भिक्षूणां तथैवाय(?) व्रतानि च ॥
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ॥ २०
उपेत्य च स्त्रियं कामात्प्रायश्चित्तं समाहितः । प्राणायामसमायुक्तं कुर्यात्सांतपनं शुचिः ॥ २१
ततश्चरेत नियमी कृच्छ्रं संयतमानसः । पुनराश्रममागम्य चरेद्भिक्षुरतन्द्रितः ॥ २२
न धर्मयुक्तमनृतं हिनस्तीति मनीषिणः । तथाऽपि न च कर्तव्यः प्रसङ्गो ह्येष दारुणः ॥ २३
एकरात्रोपवासश्च प्राणायामशतं तथा । उक्ता(क्त्वा)नृतं प्रकर्तव्यं यतिना धर्मलिप्सुना ॥ २४
परमापद्गतेनापि न कार्यं स्तेयमन्यतः । स्तेयादभ्यधिकः कश्चिन्नास्त्यधर्म इति स्मृतिः[४] ॥ २५
हिंसा चैवापरा तृष्णा याश्चाऽऽत्मज्ञाननाशिका । यदेतद्द्रविणं नाम प्राणा ह्येते बहिश्चराः ॥२६
स तस्य हरते प्राणान्यो यस्य हरते धनम् । एवं कृत्वा स दुष्टात्मा भिन्नवृत्तो व्रताच्च्युतः ॥ २७
भूयो निर्वेदमापन्नश्चरेद्भिक्षुरतन्द्रितः । अकस्मादेव हिंसां तु यदि भिक्षुः समाचरेत् ॥ २८
कुर्यात्कृच्छ्रातिकृच्छ्रं तु चान्द्रायणमथापि वा । स्कन्देतेन्द्रियदौर्बल्यात्स्त्रियं दृष्ट्वा यतिर्यदि ॥ २९
तेन धारयितव्या वै प्राणायामास्तु षोडश । दिवा स्कन्दे त्रिरात्रं स्यात्प्राणायामशतं बुधाः ॥३०
एकान्ने[६] मधुमांसे च नवश्राद्धे तथैव च । प्रत्यक्षलवणे चोक्तं प्राजापत्यं विशोधनम् ॥ ३१
ध्याननिष्ठस्य सततं नश्यते सर्वपातकम् । तस्मान्महेश्वरं ध्यात्वा तस्य ध्यानपरो भवेत् ॥ ३२
यद्ब्रह्म परमं ज्योतिः प्रतिष्ठाक्षरमव्ययम् । योऽन्तरात्मा परं ब्रह्म स विज्ञेयो महेश्वरः ॥ ३३
एष देवो महादेवः केवलः परमः शिवः । तदेवाक्षरमद्वैतं त(स)दानित्यं परं पदम् ॥ ३४
तस्मान्महीयते देवे स्वधाम्नि ज्ञानसंज्ञिते । आत्मयोगात्मके तत्त्वे महादेवस्ततः स्मृतः ॥ ३५

१ अ. 'कारेणाथ । २ ठ. ध्यात्वा । ३ ख. 'मायवि' । ४ ख अ. यदाहुः श्वापरं यस्तु । ट. य इदं स सुराराध्य सर्वदः स्या' । ५ ख. म. श्रुतिः । ६ म. मधुमासे ।

नान्यं देवं महादेवाद्व्यतिरिक्तं प्रपश्यति । तमेवाऽऽत्मानमन्वेति यः स याति परं पदम् ॥ ३६
मन्यन्ते ये स्वमात्मानं विभिन्नं परमेश्वरात् । न ते पश्यन्ति तं देवं वृथा तेषां परिश्रमः ॥ ३७
एकमेव परं ब्रह्म विज्ञेयं तत्त्वमव्ययम् । स देवस्तु महादेवो नैतद्विज्ञाय बध्यते ॥ ३८
तस्माद्यतेत नियतं यतिः संयतमानसः । ज्ञानयोगरतः शान्तो महादेवपरायणः ॥ ३९
एष वः कथितो विप्रा यतीनामाश्रमः शुभः । पितामहेन मुनिना विभुना पूर्वमीरितः ॥ ४०
नापुत्रशिष्ययोगिभ्यो दद्यादिदमनुत्तमम् । ज्ञानं स्वयंभुवा प्रोक्तं यतिधर्माश्रयं शिवम् ॥ ४१
इति यतिनियमानामेतदुक्तं विधानं सुरवरपरितोषे यद्भवेदेकहेतुः ।
न भवति पुनरेषामुद्भवो वा विनाशः प्रणिहितमनसो ये नित्यमेवाऽऽचरन्ति ॥ ४२

इति श्रीमहापुराणे पाद्म आदिखण्डे षष्टितमोऽध्यायः ॥ ६० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३०३२

अथैकषष्टितमोऽध्यायः ।

सूत उवाच—

एवमुक्तं पुरा विप्रा व्यासेनामिततेजसा । एतावदुक्त्वा भगवान्व्यासः सत्यवतीसुतः ॥ १
समाश्वास्य मुनीन्सर्वाञ्जगाम च यथागतम् । भवद्भ्यस्तु मया प्रोक्तं वर्णाश्रमविधानकम् ॥ २
एवं कृत्वा प्रियो विष्णोर्भवत्येव न चान्यथा । रहस्यं तत्र वक्ष्यामि शृणुत द्विजसत्तमाः ॥ ३
ये चात्र कथिता धर्मा वर्णाश्रमनिबन्धनाः । हरिभक्तिकलांशांशसमाना न हि ते द्विजाः ॥ ४
पुंसामेकेह वै साध्या हरिभक्तिः कलौ युगे । युगान्तरेऽन्यधर्मा हि सेवितव्या नरेण हि ॥ ५
कलौ नारायणं देवं यजते यः स धर्मभाक् । दामोदरं हृषीकेशं पुरुहूतं सनातनम् ॥ ६
हृदि कृत्वा परं शान्तं जितमेव जगत्त्रयम् । कलिकालोरगादंशात्किल्बिषात्कालकूटतः ॥ ७
हरिभक्तिसुधां पीत्वा उल्लङ्घ्यो भवति द्विजः । किं जपैः श्रीहरेर्नाम गृहीतं यदि मानुषैः ॥ ८
किं स्नानैर्विष्णुपादाम्भो मस्तके येन धार्यते । किं यज्ञेन हरेः पादपद्मं येन हृदि धृतम् ॥ ९
किं दानेन हरेः कर्म सभायां यैः प्रकाशितम् । हरेर्गुणगणाञ्श्रुत्वा यः प्रहृष्येत्पुनः पुनः ॥ १०
समाधिना प्रहृष्टस्य स गतिः कृष्णचेतसः । तत्र विघ्नकराः प्रोक्ताः पाखण्डाः पापपेशलाः ॥
नार्यस्तत्सङ्गिनश्चापि हरिभक्तिविघातकाः ॥ ११
नारीणां नयनादेशः सुराणामपि दुर्जयः । स येन विजितो लोके हरिभक्तः स उच्यते ॥ १२
माद्यन्ति मुनयोऽप्यत्र नारीचरितलोलुपाः । हरिभक्तिः कुतः पुंसां नारीभक्तिजुषां द्विजाः ॥ १३
राक्षस्यः कामिनीवेषाश्चरन्ति जगति द्विजाः । नराणां बुद्धिकवलं कुर्वन्ति सततं हि ताः ॥ १४
तावद्विद्या प्रभवति तावज्ज्ञानं प्रवर्तते । तावत्सुनिर्मला मेधा सर्वशास्त्रविधारिणी ॥ १५
तावज्जपस्तपस्तावत्तावत्तीर्थनिषेवणम् । तावच्च गुरुशुश्रूषा तावद्धि तरणे मतिः ॥ १६
तावत्प्रबोधो भवति विवेकस्तावदेव हि । तावत्सतां सङ्गरुचिस्तावत्पौराणलालसा ॥ १७
यावत्सीमन्तिनीलोलनयनान्दोलनं न हि । जनोपरि पतेद्विप्राः सर्वधर्मविलोपनम् ॥ १८
तत्र ये हरिपादाब्जमधुलेशप्रमोदिताः । तेषां न नारीलोलाक्षिक्षेपणं हि प्रभुर्भ(भ)वेत् ॥ १९

१ अ. ट. 'वद्धित' । २ ख ग. 'वत्प्रोत्तीर्णला' ।

जन्म जन्म हृषीकेशसेवनं यैः कृतं द्विजाः । द्विजे दत्तं हुतं वह्नौ विरतिस्तत्र तत्र हि ॥ २०
नारीणां किल के नाम सौन्दर्यं परिचक्षते । भूषणानां च वस्त्राणां चाकचक्यं तदुच्यते ॥ २१
स्नेहात्मज्ञानरहितं नारीरूपं कुतः स्मृतम् । पूयमूत्रपुरीषासृक्त्वङ्मेदोस्थिवसान्वितम् ॥ २२
कलेवरं हि तन्नाम कुतः सौन्दर्यमत्र हि । तदेव पृथगाचिन्त्य स्पृष्ट्वा स्नात्वा शुचिर्भवेत्[१] ॥ २३
तैः संहितं शरीरं हि दृश्यते सुन्दरं जनैः । अहोऽतिदुर्दशा नृणां दुर्दैवघटिता द्विजाः ॥ २४
कुचावृतेऽङ्गे पुरुषो नारीं बुद्ध्वा प्रवर्तते । का नारी वा पुमान्को वा विचारे सति किंच न ॥ २५
तस्मात्सर्वात्मना साधुर्नारीसङ्गं विवर्जयेत् । को नाम नारीमासाद्य सिद्धिं प्राप्नोति भूतले ॥ २६
कामिनीकामिनीसङ्गिसङ्गमित्यपि संत्यजेत् । तत्सङ्गाद्रौरवमिति साक्षादेव प्रतीयते ॥ २७
अज्ञानाल्लोलुपा लोकास्तत्र दैवेन वञ्चिताः । साक्षान्नरककुण्डेऽस्मिन्नारीयोनौ पचेन्नरः ॥ २८
यत एवाऽऽगतः पृथ्व्यां तस्मिन्नेव पुना रमेत् । यतः प्रसरते नित्यं मूत्रं रेतो मलोत्थितम् ॥ २९
तत्रैव रमते लोकः कस्तस्मादशुचिर्भवेत् । तत्रातिकष्टं लोकेऽस्मिन्नहो दैवविडम्बना ॥ ३०
पुनः पुना रमेत्तत्र अहो निस्त्रपता नृणाम् । तस्माद्विचारयेद्धीमान्नारीदोषगणान्बहून् ॥ ३१
मैथुनाद्बलहानिः स्यान्निद्राऽतितरुणायते । निद्रयाऽपहृतज्ञानो ह्यल्पायुर्जायते नरः ॥ ३२
तस्मात्प्रयत्नतो धीमान्नारीं मृत्युमिवाऽऽत्मनः । पश्येद्गोविन्दपादाब्जे मनो वै रमयेद्बुधः ॥ ३३
इहामुत्र सुखं तद्धि गोविन्दपदसेवनम् । विहाय को महामूढो नारीपादं हि सेवते ॥ ३४
जनार्दनाङ्घ्रिसेवा हि ह्यपुनर्भवदायिनी । नारीणां योनिसेवा हि यो निसंकटकारिणी ॥ ३५
पुनः पुनः पतेद्योनौ यन्त्रनिष्पाचितो यथा । पुनस्तामेवाभिलषेद्विद्यादस्य विडम्बनम् ॥ ३६
ऊर्ध्वबाहुरहं वच्मि शृणु मे परमं वचः । गोविन्दे धेहि हृदयं न योनौ यातनाजुषि ॥ ३७
नारीसङ्गं परित्यज्य यश्चापि परिवर्तते । पदे पदेऽश्वमेधस्य फलमाप्नोति मानवः ॥ ३८
कुलाङ्गना दैवदोषादूढा यदि नृणां सती । पुत्रं उत्पाद्यते यस्मिंस्तत्सङ्गं परिवर्जयेत् ॥ ३९
तस्य तुष्टो जगन्नाथो भवत्येव न संशयः । नारीसङ्गो हि धर्मज्ञैरसत्सङ्गः प्रकीर्त्यते ॥ ४०
तस्मिन्सति हरौ भक्तिः सुदृढा नैव जायते । सर्वसङ्गं परित्यज्य हरौ भक्तिं समाचरेत् ॥ ४१
हरिभक्तिश्च लोकेऽत्र दुर्लभा हि मता मम । हरौ यस्य भवेद्भक्तिः स कृतार्थो न संशयः ॥ ४२
तत्तदेवाऽऽचरेत्कर्म हरिः प्रीणाति येन हि । तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं जगत् ॥ ४३
हरौ भक्तिं विना नृणां वृथा जन्म प्रकीर्तितम् । ब्रह्मादयः सुरा यस्य यजन्ते प्रीतिहेतवे ॥ ४४
नारायणमनाव्यक्तं न तं सेवेत को जनः । यस्य माता महाभागा पिता तस्य महाकृती ॥
जनार्दनपदद्वंद्वं हृदये येन धार्यते ॥ ४५
जनार्दन जगद्वन्द्य शरणागतवत्सल । इतीरयन्ति ये मर्त्या न तेषां निरये गतिः ॥ ४६
ब्राह्मणान्हि विशेषेण प्रत्यक्षं हरिरूपिणः । पूजयेयुर्यथायोगं हरिस्तेषां प्रसीदति ॥ ४७
विष्णुर्ब्राह्मणरूपेण विचरेत्पृथिवीमिमाम् । ब्राह्मणेन विना कर्म सिद्धिं प्राप्नोति नैव हि ॥ ४८
द्विजपादाम्बु भक्त्या यैः पीत्वा शिरसि चार्पितम् । तर्पिताः पितरस्तेन आत्माऽपि किल तारितः
ब्राह्मणानां मुखे येन दत्तं मधुरमर्चितम् । साक्षात्कृष्णमुखे दत्तं तद्वै भुङ्क्ते हरिः स्वयम् ॥ ५०
अहोऽतिदुर्भगा लोकाः प्रत्यक्षे केशवे द्विजे । प्रतिमादिषु सेवन्ते तदभावे हि तत्क्रिया ॥ ५१

१ ट. चारुचिक्यं । २ ख. अ. °त् । ईदृशं तु श° । ३ क संघट्टका° । ४ ख अ. °वयोगाद्° । ५ ख. अ. °त्रमुत्पा° ।
६ ख. अ यस्मिन्सती सा गृहसाधिनी । त° । ७ ट. °मर्पित° ।

ब्राह्मणानामधिष्ठानात्पृथ्वी धन्येति गीयते । तेषां पाणौ च य इत्तं हरिपाणौ तदर्पितम् ॥ ५२
तेभ्यः कृतान्नमस्कारात्तिरस्कारो हि पाप्मनाम् । मुच्यते ब्रह्महत्यादिपापेभ्यो विप्रवन्दनात् ॥५३
तस्मात्सतां समाराध्यो ब्राह्मणो विष्णुबुद्धितः । क्षुधितस्य द्विजस्याऽऽस्ये यत्किंचिद्दीयते यदि ।
प्रेत्य पीयूषधाराभिः सिच्यते कल्पकोटिकम् । द्विजतुण्डं महाक्षेत्रमनूषरमकण्टकम् ॥ ५५
तत्र चेदुप्यते किंचित्कोटिकोटिफलं लभेत् । सघृतं भोजनं चास्मै दत्त्वा कल्पं स मोदते ॥ ५६
नानासुमिष्टमन्नं यो ददाति द्विजतुष्टये । तस्य लोका महाभोगाः कोटिकल्पान्तमुक्तिदाः ॥ ५७
ब्राह्मणं च पुरस्कृत्य ब्राह्मणेन च कीर्तितम् । पुराणं शृणुयान्नित्यं महापापदवानलम् ॥ ५८
पुराणं सर्वतीर्थेषु तीर्थं चाधिकमुच्यते । यस्यैकपादश्रवणाद्धरिरेव प्रसीदति ॥ ५९
यथा सूर्यवपुर्भूत्वा प्रकाशाय चरेद्धरिः । सर्वेषां जगतामेव हरिरालोकहेतवे ॥ ६०
तथैवान्तःप्रकाशाय पुराणावयवो हरिः । विचरेदिह भूतेषु पुराणं पावनं परम् ॥ ६१
तस्माद्यदि हरेः प्रीतेरुत्पादे धीयते मतिः । श्रोतव्यमनिशं पुंभिः पुराणं कृष्णरूपिणः ॥ ६२
विष्णुभक्तेन शान्तेन श्रोतव्य(म)मिति दुर्लभम् । पुराणाख्यानममलममलीकरणं परम् ॥ ६३
यस्मिन्वेदार्थमाहृत्य हरिणा व्यासरूपिणा । पुराणं निर्मितं विप्र तस्मात्तत्परमो भवेत् ॥ ६४
पुराणे निश्चितो धर्मो धर्मश्च केशवः स्वयम् । तस्मात्कृती पुराणे हि श्रुते विष्णुर्भवेदिति ॥ ६५
साक्षात्स्वयं हरिर्विप्रः पुराणं च तथाविधम् । एतयोः सङ्गमासाद्य हरिरेव भवेन्नरः ॥ ६६
तथा गङ्गाम्बुसेकेन नाशयेत्किल्बिषं स्वकम् । केशवो द्रवरूपेण पापात्तारयते महीम् ॥ ६७
वैष्णवो विष्णुभजनस्याऽऽकाङ्क्षी यदि वर्तते । गङ्गाम्बुसेकममलममलीकरणं चरेत् ॥ ६८
विष्णुभक्तिप्रदा देवी गङ्गा भुवि च गीयते । विष्णुरूपा हि सा गङ्गा लोकनिस्तारकारिणी ॥६९
ब्राह्मणेषु पुराणेषु गङ्गायां गोषु पिप्पले । नारायणधिया पुंभिर्भक्तिः कार्या ह्यहैतुकी ॥ ७०
प्रत्यक्षविष्णुरूपा हि तत्त्वज्ञैर्निश्चिता अमी । तस्मात्सततमभ्यर्च्या विष्णुभक्त्यभिलाषिणा ॥७१
विष्णौ भक्तिं विना नृणां निष्फलं जन्म चोच्यते । कलिकालपयोराशिं पापग्राहसमाकुलम् ॥७२
विषयासङ्गनावर्तं दुर्बोधफेनिलं परम् । महादुष्टजनव्यालमहाभीमं भयानकम् ॥ ७३
दुस्तरं च तरन्त्येव हरिभक्तितरिस्थिताः । तस्माद्यतेत वै लोको विष्णुभक्तिप्रसाधने ॥ ७४
किं सुखं लभते जन्तुरसद्वार्तावधारणे । हरेरद्भुतलीलस्य लीलाख्याने न सज्जते ॥ ७५
तद्विचित्रकथा लोके नानाविषयमिश्रिताः । श्रोतव्या यदि वै नृणां विषये सज्जते मनः ॥ ७६
निर्वाणे यदि वा चित्तं श्रोतव्या तदपि द्विजाः । हेलया श्रवणाच्चापि तस्य तुष्टो भवेद्धरिः ॥ ७७
निष्क्रियोऽपि हृषीकेशो नानाकर्म चकार सः । शुश्रूषूणां हितार्थाय भक्तानां भक्तवत्सलः ॥ ७८
न लभ्यते कर्मणाऽपि वाजपेयशतादिना । राजसूयायुतेनापि यथा भक्त्या स लभ्यते ॥ ७९
यत्पदं चेतसा सेव्यं सद्भिराचरितं मुहुः । भवाब्धितरणे सारमाश्रयध्वं हरेः पदम् ॥ ८०
रे रे विषयसंलुब्धाः पामरा निष्ठुरा नराः । रौरवे हि किमात्मानमात्मना पातयिष्यथ ॥ ८१
विना गोविन्दसौम्याङ्घ्रिसेवनं मा गमिष्यथ । अनायासेन दुःखानां तरणं यदि वाञ्छथ ॥ ८२
भजध्वं कृष्णचरणावपुनर्भवकारणे । कुत एवाऽऽगतो मर्त्यः कुत एव पुनर्व्रजेत् ॥ ८३
एतद्विचार्य मतिमानाश्रयेद्धर्मसंग्रहम् । नानानरकसंपातादुत्थितो यदि पूरुषः ॥ ८४
स्थावरादितनुं लब्ध्वा यदि भाग्यवशात्पुनः । मानुष्यं लभते तत्र गर्भवासोऽतिदुःखदः ॥ ८५

१ क झ ञ. 'ह्मणानतुकी' । २ ख. ट. 'निर्मितः । ३ ख. म. 'भ्यर्चेद्विष्णुभक्त्याऽमलाशयः । वि' । ४ ट. गतिस्त्वथ ।

ततः कर्मवशाज्जन्तुर्यदि वा जायते भुवि । बाल्यादिबहुदोषेण पीडितो भवति द्विजाः ॥ ८६
पुनर्यौवनमासाद्य दारिद्र्येण प्रपीड्यते । रोगेण गुरुणा वाऽपि अनावृष्ट्यादिना तथा ॥ ८७
वार्धकेन लभेत्पीडामनिर्वाच्यामितस्ततः । मनसश्चलनाद्याधेस्ततो मरणमाप्नुयात् ॥ ८८
न तस्मादधिकं दुःखं संसारेऽप्यनुभूयते । ततः कर्मवशाज्जन्तुर्यमलोके प्रपीड्यते ॥ ८९
तत्रातियातनां भुक्त्वा पुनरेव प्रजायते । जायते म्रियते जन्तुर्म्रियते जायते पुनः ॥ ९०
अनाराधितगोविन्दचरणे त्वीदृशी दशा । अनायासेन मरणं विनाऽऽयासेन जीवनम् ॥ ९१
अनाराधितगोविन्दचरणस्य न जायते । धनं यदि भवेद्गेहे रक्षणात्तस्य किं फलम् ॥ ९२
यदाऽसौ कृष्यते याम्यैर्दूतैः किं धनमन्वियात् । तस्माद्द्विजातिसत्कार्यं द्रविणं सर्वसौख्यदम् ॥ ९३
दानं स्वर्गस्य सोपानं दानं किल्बिषनाशनम् । गोविन्दभक्तिभजनं महापुण्यविवर्धनम् ॥ ९४
बलं यदि भवेन्मर्त्ये न वृथा तद्व्ययं चरेत् । हरेरग्रे नृत्यगीतं कुर्याद्दिनमतन्द्रितः ॥ ९५
यत्किंचिद्विद्यते पुंसां तच्च कृष्णे समर्पयेत् । कृष्णार्पितं कुशलदमन्यार्पितमसौख्यदम् ॥ ९६
चक्षुर्भ्यां श्रीहरेरेव प्रतिमादिनिरूपणम् । श्रोत्राभ्यां कलयेत्कृष्णगुणनामान्यहर्निशम् ॥ ९७
जिह्वया हरिपादाम्बु स्वादितव्यं विचक्षणैः । घ्राणेनाऽऽघ्राय गोविन्दपादाब्जतुलसीदलम् ॥ ९८
त्वचाऽऽस्पृश्य हरेर्भक्तं मनसाऽऽध्याय तत्पदम् । कृतार्थो जायते जन्तुर्नात्र कार्या विचारणा ९९
तन्मना हि भवेत्प्राज्ञस्तथा स्यात्तद्गताशयः । तमेवान्तेऽभ्येति लोको नात्र कार्या विचारणा १००
चेतसा चाप्यनुध्यातः स्वपदं यः प्रयच्छति । नारायणमनाद्यन्तं न तं सेवेत को जनः ॥ १०१

सततनियतचित्तो विष्णुपादारविन्दे वितरणमनुशक्ति प्रीतये तस्य कुर्यात् ॥
नतिमतिरतिमस्याङ्घ्रिद्वये संविदध्यात्स हि खलु नरलोके पूज्यतामाप्नुयाच्च ॥ १०२

इति श्रीमहापुराणे पाद्म आदिखण्ड एकषष्टितमोऽध्यायः ॥ ६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३१३४

अथ द्विषष्टितमोऽध्यायः ।

सूत उवाच—

एवं यन्महिमा लोके लोकनिस्तारकारणम् । तस्य विष्णोः परेशस्य नानाविग्रहधारिणः ॥ १
एकं पुराणं रूपं वै तत्र पाद्मं परं महत् । ब्राह्मं मूर्धा हरेरेव हृदयं पद्मसंज्ञितम् ॥ २
वैष्णवं दक्षिणो बाहुः शैवं वामो महेशितुः । ऊरू भागवतं प्रोक्तं नाभिः स्यान्नारदीयकम् ॥ ३
मार्कण्डेयं च दक्षाङ्घ्रिर्वामो ह्याग्नेयमुच्यते । भविष्यं दक्षिणो जानुर्विष्णोरेव महात्मनः ॥ ४
ब्रह्मवैवर्तसंज्ञं तु वामजानुरुदाहृतः । लैङ्गं तु गुल्फकं दक्षं वाराहं वामगुल्फकम् ॥ ५
स्कान्दं पुराणं लोमानि त्वगस्य वामनं स्मृतम् । कौर्मं पृष्ठं समाख्यातं मात्स्यं मेदः प्रकीर्त्यते ॥ ६
मज्जा तु गारुडं प्रोक्तं ब्रह्माण्डमस्थि गीयते । एवमेवाभवद्विष्णुः पुराणावयवो हरिः ॥ ७
हृदये तत्र वै पाद्मं यच्छ्रुत्वाऽमृतमश्नुते । पाद्ममेतत्पुराणं तु स्वयं देवोऽभवद्धरिः ॥ ८
यस्यैकाध्यायमध्याप्य सर्वपापैः प्रमुच्यते । तत्राऽऽदिमं खण्डमिमं सर्वपाद्मफलप्रदम् ॥ ९
आदिखण्डं समाकर्ण्य महापातकिनोऽपि ये । मुच्यन्ते तेऽपि पापेभ्यस्त्वचो जीर्णाद्यथोरगाः ॥

१ ख. ग. 'हि सुरवर' । २ 'वं ज म महल्लोके । ३ ग. 'दिस्वर्गभोगोऽयं स' । ४ ग. आदिस्वर्गे ।

अपि चेत्सुदुराचारः सर्वधर्मबहिष्कृतः । आदिखण्डं समाकर्ण्य पूयते नात्र संशयः ॥ ११
सर्वं पुराणमाकर्ण्य यत्फलं लभते नरः । तत्सर्वं समवाप्नोति श्रुत्वा पाद्ममहो द्विजाः ॥ १२
समग्रं पाद्ममाकर्ण्य यत्फलं समवाप्नुयात् । आदिखण्डमिदं श्रुत्वा तत्फलं लभते नरः ॥ १३
माघे मासि प्रयागे तु स्नात्वा प्रतिदिनं नरः । यथा पापात्प्रमुच्येत तथा हि श्रवणाद्भवेत् ॥ १४
दत्ता तेन स्वर्णतुला दत्ता चैव धराऽखिला । कृतं वितरणं तेन दरिद्रे यत्कृतमृणम् ॥ १५
हरेर्नामसहस्राणि पठितानि ह्यभीक्ष्णशः । सर्वे वेदास्तथाऽधीतास्तत्तत्कर्म कृतं तथा ॥ १६
अध्यापकाश्च बहवः स्थापिता वृत्तिदानतः । अभयं भयलोकेभ्यो दत्तं तेन तथा द्विजाः ॥ १७
गुणवन्तो ज्ञानवन्तो धर्मवन्तोऽनुमानिताः । मेषकर्कटयोर्मध्ये तोयं दत्तं सुशीतलम् ॥ १८
ब्राह्मणार्थे गवार्थे च प्राणास्त्यक्ताश्च तेन हि । अन्यानि च सुकर्माणि कृतानि तेन धीमता ॥ १९
येनाऽऽदिखण्डं सदसि श्रुतं संश्रावितं तथा । आदिखण्डं समाधीत्य नानाभोगान्समश्नुते ॥ २०
अतः परमनारीणां सुखसुप्तः प्रबुध्यते । किङ्किणीरवसंनादैस्तथा मधुरभाषणैः ॥ २१
इन्द्रस्यार्धासनं भुङ्क्ते इन्द्रलोके वसेच्चिरम् । ततः सूर्यस्य भवनं चन्द्रलोकं ततो व्रजेत् ॥ २२
सप्तर्षिभवने भोगान्भुक्त्वा याति ततो ध्रुवम् । ततश्च ब्रह्मणो लोकं प्राप्य तेजोमयं वपुः ॥
तत्रैव ज्ञानमासाद्य निर्वाणं परमृच्छति ॥ २३
सद्भिः सह वसेद्धीमान्सत्तीर्थे स्नानमाचरेत् । कुर्यादेव सदालापं सच्छास्त्रं शृणुयान्नरः ॥ २४
तत्र पाद्मं महाशास्त्रं सर्वाम्नायफलप्रदम् । आदिखण्डं च तन्मध्ये महापुण्यफलप्रदम् ॥ २५

भजध्वं गोविन्दं नमत हरिमेकं सुरवरं
गमिष्यध्वं लोकानतिविमलभोगानतितराम् ॥
शृणुध्वं हे लोका वदत हरिनामैकमतुलं
यदीच्छावीचीनां सुखतरणमिष्टानि लभत ॥ २६

इति श्रीमहापुराणे पाद्म आदिखण्डे द्विषष्टितमोऽध्यायः ॥ २८ ॥

इति महामुनिश्रीव्यासप्रणीते महापुराणे पाद्म आदिममादिखण्डं समाप्तम् ।

आदितः श्लोकानां समष्ट्यङ्काः—३१६०

---

१ म. आदिस्वर्गं । २ म. 'दिस्वर्गमि' । ३ ख. म. 'था ज्ञाता' । ४ म. 'दिस्वर्गः स' । ५ म. श्रुतः । ६ म. 'वि तस्तथा । ७ म. आदिस्वर्गं । ८ म. 'दिस्वर्गं च । ९ म. 'ण इष्टा' ।

॥ श्रीः ॥

## महामुनिश्रीव्यासप्रणीतं

# पद्मपुराणम् ।

## तत्र द्वितीयं भूमिखण्डम् ।

### अथ प्रथमोऽध्यायः ।

ऋषय ऊचुः—

शृणु सूत महाभाग सर्वतत्त्वार्थकोविद । संदेहमागता विप्रा दारुणं बुद्धिनाशनम् ॥ १
केचित्पठन्ति प्रह्लादं पुराणेषु द्विजोत्तमाः । पञ्चवर्षान्वितेनापि केशवः परितोषितः ॥ २
देवासुरे कथं प्राप्ते हरिणा सह युध्यति । निहतो वासुदेवेन प्रविष्टो वैष्णवीं तनुम् । ३

सूत उवाच—

कश्यपेन पुरा ज्ञातं कृतं व्यासेन धीमता । ब्रह्मणा कथितं पूर्वं व्यासस्याग्रे स्वयं प्रभोः ॥ ४
तमेवं हि प्रवक्ष्यामि भवतामग्रतो द्विजाः । संदेहकारणं जातं छिन्नं देवेन वेधसा ॥ ५

व्यास उवाच—

शृणु सूत महाभाग ब्रह्मणा परिभाषितम् । प्रह्लादस्य यथा जन्म पुराणेऽप्यन्यथा श्रुतम् ॥ ६
जातमात्रः सर्वसुखं वैष्णवं मार्गमाश्रितः । महाभागवतः श्रेष्ठः प्रह्लादो देवपूजितः ॥ ७
विष्णुना सह युद्धाय सपुत्रः सङ्गरं गतः । निहतो वासुदेवेन प्रविष्टो वैष्णवीं तनुम् ॥ ८
सृष्टिभावं शृणुष्व त्वमस्यैव च महात्मनः । सङ्गरं प्राप्य पुत्राद्यैर्विष्णुना सह वीर्यवान् ॥ ९
प्रविष्टो वैष्णवं तेजः संप्राप्य स्वेन तेजसा । [*महाभागवतः श्रेष्ठः प्रह्लादो देवपूजितः] ॥ १०
पुरा कल्पे महाभाग यथा जातः स वीर्यवान् । वृत्तान्तं तस्य वीरस्य प्रवक्ष्यामि समासतः ११
पश्चिमे सागरस्यान्ते द्वारका नाम वै पुरी । सर्वऋद्धिसमायुक्ता सर्वसिद्धिसमन्विता ॥ १२
तस्यामास्ते सदा देवो योगज्ञो योगसत्तमः । शिवशर्मेति विख्यातो वेदशास्त्रार्थकोविदः ॥ १३
तस्यापि पञ्च पुत्रास्तु बभूवुः शास्त्रकोविदाः । यज्ञशर्मा वेदशर्मा धर्मशर्मा तथैव च ॥ १४
विष्णुशर्मा महाभाग नूनं तत्कर्मकोविदः । पञ्चमः सोमशर्मेति पितृभक्तिपरायणः ॥ १५
पितृभक्तिं विना चैव धर्ममन्यं द्विजोत्तमाः । न विदन्ति महात्मानस्तद्भावेन तु भाविताः ॥ १६
तेषां तु भक्तिं संपश्यञ्शिवशर्मा द्विजोत्तमः । चिन्तयामास मेधावी निष्कर्षिष्ये सुरोत्तमान् ॥ १७
पितृभक्तेषु यो भावो नैतेषां मनसि स्थितः । यथा जानाम्यहं चाथ करिष्ये बुद्धिपूर्वकम् ॥ १८

*क. ख. ग. घ. च. छ. झ. पुस्तकेष्वेवायं पाठः ।

१ अ. °गतं विप्र दा°। २ क. ख. च. झ. °च—प्रश्नमेनं पुरा जातं । ३ क. ख. ग. घ. च. छ. झ. ट. सवसुधां । ४ झ. °वं भावमा° । क. ख. ग. घ. ङ. च. छ. ट. ड. ढ. °वं भागमा° । ५ ग. घ झ. ट. °प्य युयुधे विष्णु° । ६ घ. ज. द्विजोत्तमाः ।

विष्णोश्चैव प्रसादात्स सर्वसिद्धिर्बभूव ह । सद्भावं चिन्तयामास अङ्गनार्थं द्विजोत्तमः ॥ १९
उपायं ब्राह्मणश्रेष्ठस्तपसस्तेजसः किल । चकार सोऽप्युपायज्ञो मायया ब्रह्मवित्तमः ॥ २०
तेषामग्रे ततो व्याजं शिवशर्मा व्यदर्शयत् । महता ज्वररोगेण मृता माता विदर्शिता ॥ २१
तैस्तु दृष्ट्वा मृता माता पितरं वाक्यमब्रुवन् । यया वयं महाभाग गर्भागारे प्रवर्धिताः ॥ २२
कलेवरं परित्यज्य स्वयमेव गता क्षयम् । अपहाय गता सेयं स्वर्गे तात किमुच्यते ॥ २३
शिवशर्मोपरिभवं पुत्रं भक्तिपरायणम् । यज्ञशर्माणमाहूय इत्युवाच द्विजोत्तमः ॥ २४
अनेनापि सुतीक्ष्णेन शस्त्रेण निशितेन वै । विच्छिद्याङ्गानि सर्वाणि यत्र तत्र क्षिपस्व हि ॥ २५
तत्कृतं तेन पुत्रेण यथादेशं श्रुतं पितुः । समायातः पुनः पश्चात्पितरं वाक्यमब्रवीत् ॥ २६
यथादिष्टं त्वया तात तत्सर्वं कृतवानहम् । समादिश ममान्यच्च कार्यकारणमद्य च ॥
तच्च सर्वं करिष्यामि दुर्लभं दुर्जयं पितः ॥ २७
तमाज्ञाय महाभागं पितृभक्तं स च द्विजः । निश्चयं परमं ज्ञात्वा द्वितीयस्य विचिन्तयन् ॥ २८
वेदशर्माणमासाद्य गच्छ त्वं मम शासनात् । स्त्रिया विना न युक्तोऽस्मि स्थातुं कन्दर्पमोहितः ॥
या मया दर्शिता नारी सर्वसौभाग्यसंपदा । एनामानय वत्स त्वं ममार्थे कृतनिश्चयः ॥ ३०
एवमुक्तस्तथा प्राह करिष्ये तव सुप्रियम् । पितरं तं नमस्कृत्य तामुवाच गतस्ततः ॥ ३१
त्वां देवि याचते तातः कामबाणप्रपीडितः । अतस्त्वं जरया युक्तं प्रसादसुमुखी भव ॥ ३२
भज त्वं चारुसर्वाङ्गि पितरं मम सुन्दरि । एवमाकर्णितं तस्य मायया वेदशर्मणः ॥ ३३

स्त्र्युवाच—

जरया पीडितस्यापि नैवेच्छामि कदाचन । सश्लेष्ममुखरोगस्य व्याधिग्रस्तस्य सांप्रतम् ॥ ३४
शिथिलस्यापि चाऽऽर्तस्य तस्य वृद्धस्य संगमम् । भवन्तं रन्तुमिच्छामि करिष्ये तव सुप्रियम् ॥ ३५
भवन्तं नृपसौभाग्यैर्गुणरत्नैरलंकृतम् । दिव्यलक्षणसंपन्नं दिव्यरूपं महौजसम् ॥ ३६
किं करिष्यसि चानेन वृद्धेन शृणु मानद । ममाङ्गभोगभावेन सर्वं प्राप्स्यसि दुर्लभम् ॥ ३७
यद्यत्त्वमिच्छसे विप्र तत्तद्दाम्रि न संशयः । एतद्वाक्यं महच्छ्रुत्वा अप्रियं पापसंकुलम् ॥ ३८

वेदशर्मोवाच—

अधर्मयुक्तं ते वाक्यमयुक्तं पापमिश्रितम् । नेदृशं मां वदेर्देवि पितृभक्तं ह्यनागसम् ॥ ३९
पितुरर्थं समायातस्त्वामहं प्रार्थये शुभे । अन्यदेव न वक्तव्यं भज त्वं पितरं मम ॥ ४०
यद्यत्त्वमिच्छसे देवि त्रैलोक्ये सचराचरे । तत्तद्दाम्रि न संदेहो देवराज्योदिकं शुभे ॥ ४१

स्त्र्युवाच—

एवं समर्थो दातुं मे पितुरर्थे यदा भवान् । तदा मे दर्शयाद्यैव सेन्द्रांस्त्वं समहेश्वरान् ॥ ४२
दातुमेवं समर्थोऽसि दुर्लभं मम सांप्रतम् । किं ते बलं महाभाग दर्शयस्व त्वमात्मनः ॥ ४३

वेदशर्मोवाच—

पश्य पश्य बलं देवि प्रभावं तपसो मम । मयाऽऽहूताः समायाता इन्द्राद्याः सुरसत्तमाः ॥ ४४
वेदशर्माणमूचुस्ते किं कुर्मो हि द्विजोत्तम । यमेवमिच्छसे विप्र तं वै दद्मो न संशयः ॥ ४५

वेदशर्मोवाच—

यदि देवाः प्रसन्ना मे प्रसादसुमुखा यदि । इमां तु विपुलां भक्तिं पादयोः पितुरेव मे ॥ ४६

---

१ ग. आत्मनाऽर्थे । २ ग. घ. ङ. छ. ज. ड. ढ. ॰ज्याधिकं । ३ क. ख. च. झ. शुभम् ।

एवमस्तु सुराः सर्वे यथा यातास्तथा गताः । तमुवाच ततो हृष्टा दृष्टं ते तपसो बलम् ॥ ४७
देवैस्तु नास्ति मे कार्यं यदि दातुमिहेच्छसि । यन्मां नयसि गुर्वर्थं तत्कुरुष्व मम प्रियं ॥
देहि त्वं स्वं शिरो विप्र स्वहस्तेन निकृत्य वै ॥ ४८

वेदशर्मोवाच—

धन्योऽहमद्य संजातो मुक्तश्चैव ऋणत्रयात् । स्वशिरोऽपि प्रदास्यामि गृह्यतां गृह्यतां शुभे ॥ ४९
शितेन तीक्ष्णधारेण शस्त्रेण द्विजसत्तमः । निकृत्य स्वं शिरश्चाथ ददौ तस्यै प्रहस्य च ॥ ५०
रुधिरेण प्लुतं सा च परिगृह्य गता मुनिम् ।

स्त्र्युवाच—

तवार्थे प्रेषितं विप्र पुत्रेण वेदशर्मणा ॥ ५१
एतच्छिरः संगृहाण निकृत्तं चाऽऽत्मनाऽऽत्मनः । वेपिताङ्गास्तदालक्ष्य ते बभूवुः परस्परम् ॥ ५२
मृता नो धर्मसर्वस्वा माता सत्यसमाधिना । अयमेव महाभागः पितुरर्थे मृतः शुभः ॥ ५३
धन्योऽयं धन्यतां प्राप्तः पितुरर्थे कृतं शुभम् । एवं संभाषितं तैस्तु भ्रातृभिः पुण्यचारिभिः ॥ ५४
[*एतच्छिरः प्रगृह्य त्वं प्रहितं तव सूनुना] । समाकर्ण्य द्विजो वाक्यं ज्ञात्वा भक्तिपरायणम् ॥ ५५
निकृन्तितं शिरस्तेन पुत्रेण वेदशर्मणा । धर्मशर्माणमाहाथ शिर एतत्प्रगृह्यताम् ॥ ५६

इति श्रीमहापुराणे पाद्मे भूमिखण्डे प्रथमोऽध्यायः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२१६

---

अथ द्वितीयोऽध्यायः ।

---

सूत उवाच—

तदादाय महात्माऽसौ निर्जगाम त्वरान्वितः । पितृभक्त्या तपोभिश्च सत्यार्जवबलेन सः ॥ १
धर्ममाकृष्टवांश्चैव धर्मशर्मा ततस्तदा । समाकृष्टस्तु वै धर्मस्तपसा तस्य धीमतः ॥ २
धर्मशर्माणमागत्य इदं वचनमब्रवीत् । यस्मात्त्वया समाहूतो धर्मशर्मन्समागतः ॥
तन्मे कथय कार्यं त्वं तत्करोमि न संशयः ॥ ३

धर्मशर्मोवाच—

यद्यस्ति गुरुशुश्रूषा यदि निष्ठाऽचलं तपः । तेन सत्येन मे धर्म वेदशर्मा स जीवतु ॥ ४

धर्म उवाच—

दमशौचेन सत्येन तपसा तव सुव्रत । पितृभक्त्या तव भ्राता वेदशर्मा महाभुजः ॥
पुनरेव महात्माऽसौ जीवनं च लभिष्यति ॥ ५
तपसा तेन तुष्टोऽस्मि पितृभक्त्या महामते । वरं वरय भद्रं ते दुर्लभं धर्मवित्तमैः ॥ ६
एवमाकर्णितं तेन सुवाक्यं धर्मशर्मणा । वैवस्वतं महात्मानं तमुवाच महायशाः ॥ ७

---

* क. ख ग. घ. ङ. च छ. ज. झ. ड ढ. इत्येतेषु पुस्तकेष्वयं पाठ उपलभ्यते ।

---

१ ग. घ. च. छ. झ. °णा । उत्तमाङ्गं प्रदत्तं मे पितृभक्तेन तेन ते ॥ तवार्थे द्विजशार्दूल मामेवं परिभुङ्क्ष्व वै ॥ तस्य तैर्भ्रातृभिर्दृष्टं साहसं वेदशर्मणः । वे° । २ क. ख. ग. घ. ङ. च. छ. ज. झ. ड. ढ. °त् । कस्मा° । ३ क. ख. ङ. च. ज. झ. ड. ढ. °ष्ठा बलं । ४ छ. दयार्शौ° ।

देहि मे त्वचलां भक्तिं पितुः पादार्हणे पुनः । धर्मे रतिं तथा मोक्षं सुप्रसन्नो यदा मम ॥ ८
तमुवाच ततो धर्मो मत्प्रसादाद्भविष्यति । एवमुक्ते महावाक्ये वेदशर्मा तदोत्थितः ॥
प्रसुप्तवन्महाप्राज्ञो धर्मशर्माणमब्रवीत् ॥ ९
[*क सा देवी गता भ्रातः क मे तातो भवेदिति । समासेन समाख्यातं यथा पित्रा नियोजितः १०
समाज्ञाय ततो हृष्टो धर्मशर्माणमब्रवीत् । ] ममाद्यैव महाभाग शिरसा जीवितेन च ॥ ११
सुमुखो भव वै भ्रातः कोऽन्यो मे तादृशो भुवि । भ्रातरं चैवमाभाष्य उत्सुकः पितरं प्रति॥१२
गमनाय मतिं चक्रे भ्रात्रा च धर्मशर्मणा । द्वावेतौ तु गतौ तत्र पितरं हृष्टमानसौ ॥ १३
द्वाभ्यां तत्र समास्थाय शिवशर्माणमुत्तमम् । धर्मशर्मा तदोवाच पितरं दीप्तिसंयुतम् ॥ १४
मयाऽद्यैव महाभाग तपसा जीवितेन च । वेदशर्मा समातीतस्त्वं पुत्रं मगृहाण भोः ॥ १५
शिवशर्मा ततो हृष्टो भक्तिं विज्ञाय तस्य च । न किंचिदब्रवीत्तं तु पुनश्चिन्तामुपेयिवान् ॥ १६
पुरतो विनयेनापि वर्तमानं महामतिम् । विष्णुशर्माणमाभाषीद्वत्स मे वचनं कुरु ॥ १७
इन्द्रलोकं व्रजस्वाद्य तस्मादानय चामृतम् । अनया कान्तया सार्धं पातुमिच्छामि सांप्रतम् ॥ १८
सागराद्यत्समुत्पन्नममृतं व्याधिनाशनम् । नाधुनेच्छति मामेषा यथैनां तु लभाम्यहम् ॥
तथा कुरुष्व शीघ्रं त्वमन्यथाऽन्यं प्रयास्यति ॥ १९
वृद्धं ज्ञात्वाऽवमन्येत इयं बाला सुरूपिणी । अद्य देव्याऽनया सार्धं प्रियया भुवनत्रये ॥ २०
निर्दोषो व्याधिनिर्मुक्तो यथा तात भवाम्यहम् । तथा कुरुष्व हे वत्स मद्भक्तोऽसि यदा भुवि॥
एवमाकर्ण्य तद्वाक्यं पितुस्तस्य महात्मनः । विष्णुशर्मा तदोवाच पितरं दीप्ततेजसम् ॥ २२
सर्वमेतत्करिष्यामि भवतः सुखमुत्तमम् । एवमाभाष्य धर्मात्मा विष्णुशर्मा महामतिः ॥ २३
पितरं तं नमस्कृत्य पुनः कृत्वा प्रदक्षिणम् । बलेन महता तस्य तपसा नियमेन च ॥ २४
अन्तरिक्षागतश्चाऽऽसीद्गच्छमानस्य धीमतः । महता वायुवेगेन ऐन्द्रं स प्रतिगच्छति(?) ॥ २५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे शिवशर्मचरिते द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३२४१

---

अथ तृतीयोऽध्यायः ।

---

सूत उवाच—
प्रस्थितस्तेन मार्गेण प्रविष्टो गगनान्तरे । स दृष्टो देवदेवेन सहस्राक्षेण धीमता ॥ १
उद्यमं तस्य वै ज्ञात्वा चक्रे विघ्नं सुराधिराट् । मेनकां तामुवाचेदं गच्छ त्वं मम शासनात् ॥ २
समाचरस्वास्य शीघ्रं गत्वा विघ्नं सुमध्यमे । अस्यैव विप्रवर्यस्य पुत्रस्य शिवशर्मणः ॥ ३

---

* क. ग. घ. ङ. च. छ. ज. झ. ञ. ढ. पुस्तकेष्वयं पाठः ।

---

१ क. ख च. °स इव धर्मज्ञो । २ घ. वा । ३ क ख. ग. घ. ङ. च. छ ज. झ. ञ. ढ. °नसम् । द्वा° । ४ क. ख. च. छ. झ. °म् । तेजसा तव विप्रेन्द्र गृहादेनं यमस्य च । ५ ग. घ. ङ. ज. ञ. ढ. ममाद्यै° । ६ ग. घ. ङ. ज. ञ. ढ. शिरसा । ७ क. ख. ग घ. च. छ. झ. सांप्रतम् । ङ. ज. ञ. ढ. शाश्वतम् । ८ क. ख. च. छ. झ. सुव्रत । ९ क. ख. ग. घ च. छ. झ. °म् । नाशं याति जरा मेऽद्य यथा नीरुग्भवाम्यहं° । १० क. ख. च. सदा । ११ ञ. °न प्रविष्टस्य नभोन्तरे । इ° । १२ ग. घ. ङ ट. ढ. पदं । झ. ऐन्द्रं ।

तथा कुरुष्व भद्रं ते यथा नाऽऽयाति मे गृहम् । एवमाकर्ण्य तद्वाक्यं मेनका प्रस्थिता त्वरात् ॥ ४

[*सूत उवाच—]

रूपौदार्यगुणोपेता सर्वालंकारभूषिता । नन्दनस्य वनस्यान्ते दोलायां समुपस्थिता ॥ ५
सुस्वरेण प्रगायन्ती गीतं वीणास्वरोपमम् । तेन दृष्टा विशालाक्षी चतुरा चारुलोचना ॥ ६
व्यवसायं ततो ज्ञात्वा तस्या विघ्नमनुत्तमम् । इन्द्रेण प्रेषिता चैषा न च भद्रकरा भवेत् ॥ ७
एवं ज्ञात्वा जगामाथ सत्वरः स द्विजोत्तमः । तयो दृष्टस्तथा पृष्टः क यातोऽसि महामते ॥ ८
विष्णुशर्मा तदोवाच मेनकां कामचारिणीम् । इन्द्रलोकं प्रयास्यामि पितुरर्थे त्वरान्वितः ॥ ९
मेनका वेदशर्माणं प्रत्युवाच प्रियं पुनः । कामबाणैः प्रभिन्नाऽहं त्वामद्य शरणं गता ॥ १०
रक्षस्व द्विजशार्दूल यदि धर्ममिहेच्छसि । यावद्धि त्वं मया दृष्टः कामाकुलितचेतसा ॥ ११
संजाता कामसंतप्ता प्रसादसुमुखो भव । कामानलेन संदग्धा तावदेव न संशयः ॥ १२

विष्णुशर्मोवाच—

चरितं देवदेवस्य विदितं मे वरानने । भवत्याश्च प्रजानामि नाहं चैतादृशः शुभे ॥ १३
भवत्यास्तेजसा रूपैरन्ये मुह्यन्ति शोभने । विश्वामित्रादयो देवि पुत्रोऽहं शिवशर्मणः ॥ १४
योगसिद्धिं गतेनापि तपःसिद्धेन चाबले । कामादयो महादोषा आदावेव विनिर्जिताः ॥ १५
अन्यं भज विशालाक्षि इन्द्रलोकं व्रजाम्यहम् । एवमुक्त्वा जगामाथ त्वरितो द्विजसत्तमः ॥ १६
[3]निष्फला मेनका जाता पृष्टा[4] देवेन वज्रिणा । बिभीषां दर्शयामास नानारूपां पुनः पुनः ॥ १७
यथाऽनलेन संदग्धास्तृणानां संचया द्विज । भस्मीभूता भवन्त्येव तथा तास्ता बिभीषिकाः ॥ १८
विप्रस्य तेजसा तस्य पितृभक्तस्य संततम् । प्रलयं गतास्तु घोरास्ता दारुणा भीषिका द्विज ॥ १९
स विघ्नान्दर्शयामास सहस्राक्षः पुनः पुनः । तेजसाऽनाशयद्विप्रः स्वकीयेन महायशाः ॥ २०
एवं विघ्नान्बहूंस्तस्य इन्द्रस्यापि महात्मनः । नाशयामास मेधावी तपसा तेजसाऽपि वा ॥ २१
नष्टेषु तेषु विघ्नेषु दारुणेषु महत्सु च । ज्ञात्वा तस्य कृतान्विघ्नान्दारुणान्दारुणाकृतीन् ॥ २२
अथ क्रुद्धो महातेजा [†नन्दनं वनमाश्रितः । इन्द्रं प्रति महाभागो रोषरक्तान्तलोचनः ॥ २३

सूत उवाच—

निजधर्मरतस्याद्य यो विघ्नं तु समाचरेत् । तस्य दण्डं प्रदास्यामि यो वै हन्यात्स हन्यते ॥ २४
एवं संचिन्तयामास ] विष्णुशर्मा द्विजोत्तमः । इन्द्रलोकादहं चेन्द्रं पातयिष्यामि नान्यथा ॥
अन्यमिन्द्रं करिष्यामि देवानां पालकं पुनः ॥ २५
एवं समुद्यतो विप्र इन्द्रनाशाय सत्तमः । तावदेव समायातो देवेन्द्रः पाकशासनः ॥ २६
भो भो विप्र महाप्राज्ञ[5] तपसा नियमेन च । दमेन सत्यशौचाभ्यां त्वत्समो नास्ति चापरः ॥ २७
अनया पितृभक्त्या ते जितोऽहं दैवतैः सह । ममापराधान्सर्वांस्त्वं क्षन्तुमर्हसि सत्तम ॥
वरं वरय भद्रं ते दुर्लभं च ददाम्यहम् ॥ २८
विष्णुशर्मा तदोवाच देवराजं तथागतम् । विप्रतेजो महेन्द्रेन्द्र[6] असह्यं देवदैवतैः ॥ २९

---

* क. ख. ग. घ. ङ. च. छ. ज. झ. ढ. पुस्तकस्थितमिदम् । † क. ख. च. छ. झ. पुस्तकेष्वेवायं पाठः ।

---

१ ग. घ. ङ. ज. ड. ढ. °का गृह्य सादरम् । सू° । २ क. ख. च. छ. °या प्रोक्तस्तु ज्ञानात्मा क यास्यसि महामुने । त्रि° । ३ क. ख. च. छ. ज. ड. निष्कला । ४ क. ख. च. छ. झ. दृष्टा । ५ क. ख. च. महाभाग । ६ क. ख. ग. घ. च. झ. ड. महदीर्यं ।

पितृभक्तस्य देवेश दुःसहं सर्वथा विभो । तेजोभङ्गो न कर्तव्यो ब्राह्मणानां महात्मनाम् ॥ ३०
पुत्रपौत्रैः समस्तैस्तु ब्रह्मविष्णुहरं पुनः । नाशयन्ते न संदेहो यदि रुष्टा द्विजोत्तमाः ॥ ३१
नाऽऽगच्छेद्यद्भवानद्य तदा ते राज्यमुत्तमम् । आत्मतपःप्रभावेण अन्यस्मै तु महात्मने ॥
दातुकामस्तु संजातो रोषपूर्णेन चक्षुषा ॥ ३२
भवानद्य समायातो वरं दातुमिहेच्छसि । अमृतं देहि देवेन्द्र पितृभक्तिं तथाऽचलाम् ॥ ३३
एवंविधं वरं देहि यदि तुष्टोऽसि शत्रुहन् । एवं ददामि पुण्यं ते वरं चामृतसंयुतम् ॥ ३४
एवमाभाष्य तं विप्रममृतेन च संभृतम् । स कुम्भं दत्तवांस्तस्मै प्रीयमाणेन चाऽऽत्मना ॥ ३५
अचला ते भवेद्विप्र भक्तिः पितरि सर्वदा । एवमाभाष्य तं विप्रं विससर्ज सहस्रदृक् ॥ ३६
प्रसन्नोऽभूच्च तद्दृष्ट्वा विप्रतेजः सुदुःसहम् । विष्णुशर्मा ततो गत्वा पितरं वाक्यमब्रवीत् ॥ ३७
तात इन्द्रात्समानीतममृतं व्याधिनाशनम् । अनेनापि महाभाग नीरुजो भव सर्वदा ॥
अमृतेन त्वमद्यैव परां तृप्तिमवाप्नुहि ॥ ३८
एतद्वाक्यं महच्छ्रुत्वा शिवशर्मा सुतस्य हि । सुतान्सर्वान्समाहूय प्रीयमाणेन चेतसा ॥ ३९
पितृभक्तियुता यूयं मद्वाक्यपरिपालकाः । वरं वृणुध्वं सुप्रीताः पुत्रका दुर्लभं भुवि ॥ ४०
एवमाभाषितं तस्य शुश्रुवुः सर्वसंमताः । ते सर्वे तु समालोक्य पितरं प्रत्यथाब्रुवन् ॥ ४१
अस्माकं जीवतान्माता गता या यममन्दिरम् । नीरुजा भवतादेवी प्रसादात्तव सुव्रत ॥ ४२
भवान्पिता इयं माता जन्मजन्मान्तरे पितः । वयं सुता भवेमेति सर्वे पुण्यकृतस्तथा ॥ ४३

शिवशर्मोवाच—

अद्यैवापि मृता माता भवतां पुत्रवत्सला । जीवमाना सुहृष्टा सा एष्यते नात्र संशयः ॥ ४४
एवमुक्ते शुभे वाक्य ऋषिणा शिवशर्मणा । तेषां माता समायाता प्रहृष्टा वाक्यमब्रवीत् ॥ ४५
एतदर्थं समुत्पन्नं सुवीर्यं तनयं वरम् । नराः सत्पुत्रमिच्छन्ति कुलवंशप्रभावकम् ॥ ४६
स्त्रियो लोके महाभागाः सुपुण्याः पुण्यवत्सलाः । सुतमिच्छन्ति सर्वत्र पुण्यगं पुण्यसाधकम् ४७
कुक्षिं यस्या गतो गर्भः सुपुण्यः परिवर्तते । पुण्यान्पुत्रान्प्रसूते या सा नारी पुण्यभागिनी ॥ ४८
कुलाचारं कुलाधारं पितृमातृप्रतारकम् । विना पुण्यैः कथं नारी संप्राप्नोति सुरो(तो)त्तमम् ॥ ४९
न जाने कीदृशैः पुण्यैरेष भर्ता सुपुण्यभाक् । संजातो धर्मवीर्योऽपि धर्मात्मा धर्मवत्सलः ॥ ५०
यस्य वीर्यान्मया प्राप्ता यूयं पुत्रास्ततोऽधिकाः । एवं पुण्यप्रभावोऽयं भवन्तः पुण्यवत्सलाः ॥ ५१
मम पुत्रास्तु संजाताः पितृभक्तिपरायणाः । अहो लोकेषु पुण्यैश्च सुपुत्रः परिलभ्यते ॥ ५२
एकैकशोऽधिकाः पञ्च मया प्राप्ता महाशयाः । यज्वानः पुण्यशीलाश्च तपस्तेजःपराक्रमाः ॥ ५३
एवं सवर्धितास्ते तु तया मात्रा पुनः पुनः । हर्षेण महताऽऽविष्टाः प्रणेमुर्मातरं मुदा ॥ ५४

पुत्रा ऊचुः—

सुपुण्यैः प्राप्यते मातः सुमाता सुपिता किल । भवती पुण्यकर्त्री तु नो भाग्यैस्तु प्रवर्तिता ॥ ५५
यस्या गर्भान्तरं प्राप्य सुपुण्यैश्च प्रवर्धिताः । जन्मजन्मनि त्वं माता पिता चैष भवत्विति ॥ ५६

पितोवाच—

शृणुध्वं मामकाः पुत्राः सुवरं पुण्यदायकम् । मयि तुष्टे सुता भोगाननुभुञ्जन्तु चाक्षयान् ॥ ५७

१ क. ख. ग. घ. च. छ. झ. देवराट् । २ क. ख. च. छ. झ. नान्यथा । ३ ग. 'रेऽपि नः । व' । ४ क. ख. च. छ. झ. सुपुण्यैः परिवर्धते । ज. सपुण्यैः । ५ क. ख. च. छ. झ. शुभाः । ग. घ. ज. ङ. ढ. सुताः ।

पुत्रा ऊचुः—

यदि तात प्रसन्नोऽसि वरं दातुमिहेच्छसि । अस्मान्प्रेषय गोलोकं वैष्णवं[1] दाहवर्जितम् ॥ ५७

पितोवाच—

गच्छध्वं वैष्णवं लोकं यूयं विगतकल्मषाः । मत्प्रसादात्तपोभिश्च पितृभक्त्याऽनयो तथा ॥ ५९

एवमुक्ते तु तेनापि सुवाक्य ऋषिणा ततः । शङ्खचक्रगदापाणिर्गरुडारूढ आगतः ॥ ६०

सपुत्रं शिवशर्माणमित्युवाच पुनः पुनः । सपुत्रेण त्वयाऽद्यैव जितो भक्त्याऽस्मि वै द्विज ॥ ६१

पुत्रैः सार्धं समागच्छ चतुर्भिः पुण्यकारिभिः । अनया भार्यया सार्धं पुण्यया पतिकामया ॥ ६२

शिवशर्मोवाच—

अमी गच्छन्तु पुत्रा मे वैष्णवं लोकमुत्तमम् । कंचित्कालं तु नेष्यामि भूमौ वै भार्यया सह ॥ ६३

अनेनापि सुपुत्रेण अन्त्येन सोमशर्मणा । एवमुक्ते शुभे वाक्य ऋषिणा सत्यभाषिणा ॥

तानुवाचाथ देवेशः सुपुत्राञ्शिवशर्मणः ॥ ६४

गच्छन्तु मोक्षदं लोकं दाहप्रलयवर्जितम् । एवमुक्ते ततो विप्राश्चत्वारः सत्यचेतसः ॥ ६५

विष्णुरूपधराः सर्वे बभूवुस्तत्क्षणादपि । इन्द्रनीलसमा वर्णैः शङ्खचक्रगदाधराः ॥ ६६

सर्वाभरणसौभाग्या विष्णुरूपा महौजसः । रत्नकङ्कणशोभाढ्या रत्नमालाभिशोभिताः ॥ ६७

प्रविष्टा वैष्णवं लोकं पश्यतः शिवशर्मणः । दीपं दीपा यथा यान्ति तद्वल्लीना महामते ॥ ६८

गतास्ते वैष्णवं धाम पितृभक्त्या द्विजोत्तमाः । प्रभावं तु प्रवक्ष्यामि सुसत्यं सोमशर्मणः ॥ ६९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे शिवशर्मोपाख्याने तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३१०

---

अथ चतुर्थोऽध्यायः ।

---

[*सूत उवाच—

गतेषु तेषु गोलोकं वैष्णवं तमसः परम् । शिवशर्मा महाप्राज्ञः कनिष्ठं वाक्यमब्रवीत् ] ॥ १

ब्राह्मण उवाच —

सोमशर्मन्महाप्राज्ञ त्वं पितुर्भक्तितत्परः । अमृतस्य महाकुम्भं रक्ष दत्तं मयाऽधुना ॥

तीर्थयात्रां प्रयास्यामि अनया भार्यया सह ॥ २

एवमस्तु महाभाग करिष्ये रक्षणं शुभम् । कुम्भं दत्त्वा स मेधावी तस्य हस्ते महात्मनः ॥ ३

दशवर्षप्रमाणं तु तपस्तेपे निरन्तरम् । कुम्भं रक्षति धर्मात्मा दिवारात्रमतन्द्रितः ॥ ४

पुनः स हि समायातः शिवशर्मा महायशाः । मायां कृत्वा महाप्राज्ञो भार्यया स हि संयुतः ॥ ५

कुष्ठरोगातुरो भूत्वा तस्य भार्या च तादृशी । मांसपिण्डोपमौ त्याज्यौ द्वावेतौ हि महात्मनः ॥ ६

सकाशं तस्य धीरस्य विप्रस्य सोमशर्मणः । समागतौ हि तौ दृष्ट्वा सर्वतो हि सुदुःखितौ ॥ ७

कृपया परयाऽऽविष्टः सोमशर्मा महायशाः । तयोः पादौ नमस्कृत्य भक्त्या नमितकन्धरः ॥ ८

---

* नपुस्तकेऽधिकमेतत् ।

---

१ च 'वं दुःखव' । २ ग. घ. ङ. ज. ह. ढ. 'या स्वया । ए' । ३ क. ख. ग. घ. ङ. च. छ. ज.झ.ड.ढ. 'सः । हारक' । ४ ग. ङ. ज. ढ. ब्रह्मदर्शनम् ।

भवादृशं न पश्यामि तपसोऽभिसमन्वितम् । गुणव्रातैः सुपुण्यैश्च किमिदं वर्तितं त्वयि ॥ ९
दासवद्देवताः सर्वा वर्तन्ते सर्वदा तव । आदेशं प्राप्य विप्रेन्द्र चाऽऽकृष्टास्तेजसा तव ॥ १०
तवाङ्गे केन पापेन गदोऽयं वेदनान्वितः । संजातो ब्राह्मणश्रेष्ठ तन्मे कथय कारणम् ॥ ११
इयं पुण्यवती माता महापुण्या पतिव्रता । या हि भर्तृप्रसादेन त्रैलोक्यं धर्तुमिच्छति ॥
सा कथं दुःखमाप्नोति किं नास्ति तपसः फलम् ॥ १२
रागद्वेषौ परित्यज्य विविधेनापि कर्मणा । या च शुश्रूषते कान्तं [*सा कथं दुःखमाप्नुयात् ॥१३
या तु पूजयते कान्तं ] देववद्गुरुवत्सला । सा कथं दुःखमाप्नोति कुष्ठरोगं सुदुःखदम् ॥ १४

शिवशर्मोवाच—

मा शुचस्त्वं महाभाग भुज्यते कर्मजं फलं । नरेण कर्मयुक्तेन पापपुण्यमयेन [3]हि ॥ १५
शोधनं च कुरुष्व त्वमुभयो रोगयुक्तयोः । [*शुश्रूषणं महाभाग यदि पुण्यमिहेच्छसि ॥ १६
एवमुक्ते शुभे वाक्ये सोमशर्मा महायशाः । शुश्रूषां वा करिष्यामि युवयोः पुण्ययुक्तयोः ॥ १७
मया पापेन दुष्टेन कृपणेन द्विजोत्तम । किं कर्तव्यमिहाद्यैव यो गुरू न हि पूजयेत् ॥ १८
एवमाभाष्य [4]दुःखाद्वा तयोर्दुःखेन दुःखितः । श्लेष्ममूत्रपुरीषं स उभयोः पर्यशोधयत् ॥ १
पादप्रक्षालनं चक्रे पादसंवाहनं तथा । स्नानस्थानादिकं चापि तयोर्भक्त्याऽन्वितः स्वयम् २०
द्वावेतौ हि गुरू विप्रः सोमशर्मा महायशाः । तीर्थं नयति [5]धर्मात्मा स्कन्धमारोप्य सत्तमः ॥ २१
द्वावेतौ हि स्वहस्तेन स्नापयित्वा तु मङ्गलैः । सुमन्त्रैर्वेदविच्चैव स्नानस्य विधिपूर्वकम् ॥ २२
तर्पणं हि पितॄणां तु देवतानां तु पूजनम् । द्वाभ्यामपि सधर्मात्मा स कारयति नित्यशः ॥ २३
स्वयं होमं करोत्यग्नौ [6]पंचत्यज्ञमनुत्तमम् । [7]संज्ञापयति सुप्रीतौ द्वावेतौ च महागुरू ॥ २४
शय्यासने च तौ विप्रः प्रस्वापयति नित्यशः । वस्त्रपुष्पादिकं सर्वं ताभ्यां नित्यं प्रयच्छति २५
ताम्बूलं [9]बहुगन्धाढ्यमुभयोरर्पयेत्स तु । सोमशर्मा महाभागस्ताभ्यां[10]मपि च पूरयेत् ॥ २६
मूलं पयः सुभक्ष्याद्यं नित्यमेव ददात्यसौ । तयोस्तु वाञ्छितं नित्यं सोमशर्मा महायशाः ॥ २७
अनेन क्रमयोगेण नित्यमेव प्रसादयेत् । सोमशर्मा सुधर्मात्मा पितरौ परिपूजयेत् ॥ २८
सोमशर्माणमाहूय पिता[11] कुत्सति निष्ठुरः । निन्दितैर्निष्ठुरैर्वाक्यैस्ताडयेन्मुष्टिभिः सदा ॥ २९
कृते कार्ये कृते पुण्ये नित्यमेव सुते पुनः । न कृतं शोभनं मह्यं त्वयैव कुलपांसुना ॥ ३०
एवं नानाविधैर्वाक्यैर्निष्ठुरैर्दुःखदायकैः । अताडयद्दण्डघातैः शिवशर्मा सदाऽऽतुरः ॥ ३१
एवं कृतेऽपि धर्मात्मा नैव कुप्यति कर्हिचित् । मनसा वचसा चैव कर्मणा त्रिविधेन च ॥ ३२
संतुष्टः[14] सर्वदा सोऽपि पितरं [12]परिपूजयेत्[13] । यज्ज्ञात्वा शिवशर्मा च चरितं स्वीयमीक्षते ॥ ३३
अमृतं मत्कृते चापि ह्यानीतं विष्णुशर्मणा । [† पुण्ययुक्तः स धर्मात्मा पितृभक्तिपरः सदा ॥३४

---

* क. ख. च. छ. ञपुस्तकेष्वेवायं पाठः । † क. ख. च. छ ञपुस्तकस्थोऽयं पाठः ।

---

१ छ. °सा तेजसाऽपि वा । गु° । २ ग. घ. ङ. ड. ढ. °र्व्यं कर्तु° । ३ क. ख. ग. ङ. च छ. ज. ञ. ट. ड. हि । अन्यमेव कु° । ४ क. ख. च. छ. ञ. दुःखात्मा । ५ क. ख. च. छ. ञ धर्मार्थे । ६ ङ ज ञ. म. ट. °पञ्चयज्ञम° । ७ क. ख. ग. ङ. च. छ. ज. ड. भुञ्जापयाति । ८ क. ख. च. °रू । स ह्यासने च तौ विप्र आस्था° । ९ ग. ङ. ज. ट. ड. ढ. °हुमूलाढ्य° । १० ञ. °मन्यस्तथाऽर्पये° । ११ ग. छ. निन्दत्येव सुतं पु° । क. ख. च. निन्दत्येनं सुतं पु° । १२ च. परितोषयेत् । १३ ग. घ. ङ. ज. ट. ड. ढ. °त् । तद्वत्स सोमशर्मा च मातरं पितरं दिने । अ° । १४ क. ख. च. छ. ञ. °तं रक्षते सोऽपि ।

एवं बहुतिथे काले शतसंख्ये गते सति । शिवशर्माऽपि पश्यैवं भक्तिं दृष्ट्वा विचिन्त्य वै ॥ ३५
मया वै पूर्वमित्युक्तं सुपुत्रं यज्ञसंज्ञकम् । मातृखण्डानिमान्पुत्र यत्र तत्र क्षिपस्व हि ॥ ३६
मद्वाक्यं पालितं तेन कृता न मातरि कृपा । एतत्स्वल्पतरं दुःखं निर्जीवे घातमिच्छता ॥ ३७
साहसं तु कृतं तेन पुत्रेण वेदशर्मणा । अस्याधिकमहं मन्ये यतोऽयं चलते न च ॥ ३८
निमेषमात्रमेवापि साहसं कारयेत्पुनः । अस्याधिकस्तु संपन्नः प्रभावस्तपसः परः ॥ ३९
नित्यं समाराधनेऽपि ह्यधिकं चास्य दृश्यते । तस्मादस्य परीक्षा च समये तपसः कृता ॥ ४०
भक्तिभावात्तथा सत्यान्नैव पुत्रः प्रणश्यति । मायया च निजाङ्गेऽपि कुष्ठरोगो निदर्शितः ॥ ४१
श्लेष्ममूत्रमलानां च घृणा नैव करोति च । व्रणाञ्शोधयते नित्यं स्वहस्तेन महायशाः ॥ ४२
अङ्गसंवाहनं तद्वत्करोति च महामतिः । दुःसहं वचनं मह्यं दारुणं सहते सदा ॥ ४३
कुत्सने ताडने चैव सदा मिष्टमवाचकः । एवं दुःखसमाचारो मम पुत्रो महामतिः ॥ ४४
दुःखानां सागरे मग्नो बहुक्लेशैस्तु क्लेशितः । अपनेष्याम्यहं दुःखं विष्णोश्चैव प्रसादतः ॥ ४५
चिन्तयित्वा चिरं विप्रः शिवशर्मा महामतिः । पुनर्मायां चकाराथ कुम्भादपहृतं पयः ॥
पश्चात्तं च समाहूय सोमशर्माणमब्रवीत् ॥ ४६
तव हस्ते मया दत्तममृतं व्याधिनाशनम् । तन्मे शीघ्रं प्रयच्छस्व यथा पानं करोम्यहम् ॥
येन नीरुग्भवाम्यद्य प्रसादाद्विष्णुशर्मणः ॥ ४७
एवमुक्ते तदा वाक्ये ऋषिणा शिवशर्मणा । समुत्थाय त्वरायुक्तः सोमशर्मा कमण्डलुम् ॥ ४८
तं च रिक्तं ततो दृष्ट्वा ह्यमृतेन विना कृतम् । कस्य पापस्य वै कर्म केन मे विप्रियं कृतम् ॥ ४९
इति चिन्तापरो भूत्वा सोमशर्मा सुदुःखितः । पितुरग्रे च वृत्तान्तं कथयिष्याम्यहं यदा ॥
कोपं प्रयास्यति तदा गुरुर्मे व्याधिपीडितः ॥ ५०
सुचिरं चिन्तयित्वा तु सोमशर्मा महामतिः । यदि मे सत्यमस्तीति गुरुशुश्रूषणं यदि ॥ ५१
तपस्तप्तं मया पूर्वं निर्व्यलीकेन चेतसा । दमशौचादिभिः सत्यं धर्ममेव प्रपालितम् ॥
तदा घटोऽमृतयुतो भवत्वेष न संशयः ॥ ५२
यावदेवं महाभागश्चिन्तयित्वा विलोकयेत् । तावच्चामृतपूर्णस्तु पुनरेवाभवद्घटः ॥ ५३
तं दृष्ट्वा हर्षसंयुक्तः सोमशर्मा महायशाः । गत्वा गुरुं नमस्कृत्य कुम्भमादाय सत्वरम् ॥ ५४
गृहाण त्वं पितश्चेमं पयःकुम्भं समागतम् । पानं कुरु महाभाग गदान्मुक्तो भवाचिरम् ॥ ५५
एतद्वाक्यं महापुण्यं सत्यधर्मार्थकं पुनः । शिवशर्मा सुतस्यापि श्रुत्वा च मधुराक्षरम् ॥
हर्षेण महताऽऽविष्ट इदं वचनमब्रवीत् ॥ ५६

इति श्रीमहापुराणे पाद्मे भूमिखण्डे शिवशर्मोपाख्याने चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३३६६

अथ पञ्चमोऽध्यायः ।

शिवशर्मोवाच—

तपसा दमशौचाभ्यां गुरुशुश्रूषया तथा । भक्त्या भावेन तुष्टोऽस्मि तवाद्य च सुपुत्रकं ॥
त्यजस्व(त्यजामि) वैकृतं रूपं मत्तः सुखमवाप्नुहि ॥ १

१ क. ख. च. °णा । तात्कालिकमहं मन्ये यथा कर्ता भव निह । नि° । २ क. ख. च. छ. झ. °रः । तयोः सुपुत्रयोर्वाऽपि । ३ क. ख. च. छ झ. च मयैव बहुशः कृ° । ४ क. ख. च. छ. झ. त्सनं° ताडनं पुत्रः सर्वदैव प्रवाहकः । ५ क. ख. च. छ झ. °क । गृहाण वैष्णवं सूक्तं म° ।

एवमुक्त्वा सुतं विप्रो दर्शयामास तां तनुम् । यथा पूर्वं स्थितौ तौ तु तथाऽसौ दृष्टवान्गुरू ॥ २
दीप्तिमन्तौ महात्मानौ सूर्यबिम्बोपमावुभौ । ननाम पादौ सद्भक्त्या ह्युभयोस्तु महात्मनोः ॥ ३
ततः सुतं स संभाष्य हर्षेण महताऽन्वितः । विष्णोः प्रसादाद्धर्मात्मा भार्यया सह केशवम् ॥ ४
जगाम निजपुण्यैश्च योगाभ्यासेन सत्तमः । प्रविष्टो वैष्णवं धाम स मुनिर्दुर्लभं पदम् ॥ ५
न त्वन्यैः प्राप्यते पुण्यैस्तपोभिर्मुक्तिदं पदम् । विष्णोस्तु चिन्तनैर्न्यासध्यानज्ञानैः स्तवैस्तथा ६
न दानैस्तीर्थयात्राभिर्दृश्यते मधुसूदनः । समाधिज्ञानयोगेन दृश्यते परमं पदम् ॥
महायोगैर्यथा विप्रः प्रविष्टो वैष्णवीं तनुम् ॥ ७
सूत उवाच—
ततस्तत्र तपस्तेपे सोमशर्मा महाद्युतिः । अश्मलोष्टसमं मेने काञ्चनं भूषणं पुनः ॥ ८
जिताहारः स धर्मात्मा विक्रियापरिवर्जितः । स सर्वान्विषयांस्त्यक्त्वा एकान्तमपि सेवते ॥ ९
योगासनसमारूढो निराशो निष्परिग्रहः । तस्य वेला तु संप्राप्ता मृत्युकालस्य वै तदा ॥ १०
आगता दानवा विप्रं सोमशर्माणमन्तिके । मृत्युकाले तु संप्राप्ते प्राणयात्राप्रवर्तिके ॥ ११
शालग्रामे महाक्षेत्र ऋषीणां मानवर्धने । केचिद्वदन्ति वै दैत्याः केचिद्वदन्ति दानवाः ॥ १२
एवंविधो महाञ्शब्दः कर्णरन्ध्रगतस्तदा । तस्यैव विप्रवर्यस्य सुचिरात्सोमशर्मणः ॥ १३
ज्ञानध्यानविलग्नस्य प्रविष्टं दैत्यजं भयम् । तेन ध्यानेन तस्यापि दैत्यभूतेन वै तदा ॥ १४
सत्वरं च ततः प्राणा गतास्तस्य महात्मनः । दैत्यभावेन संयुक्तः स हि मृत्युवशं गतः ॥ १५
तस्माद्दैत्यगृहे जातो हिरण्यकशिपोः सुतः । देवासुरे महायुद्धे निहतश्चक्रपाणिना ॥ १६
युध्यमानेन तेनापि प्रह्लादेन महात्मना । सुदृष्टं वासुदेवत्वं विश्वरूपसमान्वितम् ॥ १७
योगाभ्यासेन पूर्वेण ज्ञानमासीन्महात्मनः । सस्मार पूर्वकं सर्वं चरितं शिवशर्मणः ॥ १८
प्रागहं सोमशर्माख्यः प्रविष्टो दानवीं तनुम् । अस्मात्कायात्कदा पुण्यं केवलं धाम उत्तमम् ॥ १९
प्रयास्यामि महापुण्यैर्ज्ञानाख्यैर्मोक्षदायकैः । समरे स्तूयता तेन प्रह्लादेन महात्मना ॥ २०
एवंविधा कथा पूर्वं श्रूयते द्विजसत्तमाः । एवं तु च समाख्यातं सर्वसंदेहनाशनम् ॥ २१
प्रह्लादे निहते संख्ये देवदेवेन विष्णुना । रुरुदे कमला सा तु हतपुत्रा च कामिनी ॥ २२
प्रह्लादस्य तु या माता हिरण्यकशिपोः प्रिया । प्रह्लादस्य महाशोकैर्दिवा रात्रौ प्रशोचति ॥ २३
पतिव्रतां महाभागामागत्य भगवत्प्रियः । रुदमाना दिवा रात्रौ नारदस्तामुवाच ह ॥ २४
मा शुचस्त्वं महाभागे पुत्रार्थं पुण्यभागिनि । निहतो वासुदेवेन तव पुत्रः समेष्यति ॥ २५
भूयः स्वलक्षणोपेतैस्त्वसुरश्च महामतिः । प्रह्लादेति च वै नाम पुनरस्य भविष्यति ॥ २६
विहीनश्चासुरैर्भावैर्देवत्वेन समन्वितः । इन्द्रत्वं भोक्ष्यते भद्रे सर्वदेवैर्नमस्कृतः ॥ २७
सुखी भव महाभागे तेन पुत्रेण वै सदा । [*न प्रकाश्यं त्वया देवि भवार्थदं च कस्यचित् ॥ २८
वक्तव्यं ज्ञानभावैस्तत्संगोप्यं कुरु सर्वदा] । एवमुक्त्वा गतो विप्रो नारदो मुनिसत्तमः ॥ २९
कमलायाश्चोदरे तु जन्मास्यानुत्तमं पुनः । प्रह्लादेति च वै नाम तस्य ख्यातं महात्मनः ॥ ३०
बाल्यभावं गतो विप्राः कृष्णमेव व्यचिन्तयत् । नरसिंहप्रसादेन देवराजोऽभवद्दिवि ॥ ३१

* क. ख. ग. घ. च. छ. झपुस्तकस्थोऽयं पाठः ।

१ क. ख. च. छ. झ. °म मुनिभिर्दु° । २ क. ख. च. छ. झ. यज्ञैः । ३ क. ख. ग. ङ. च. छ. ज. झ. ट. ड. ढ. °त्मा निद्रया प° । ४ क. ख. च. छ. °तस्तवोदरे म° ।

देवत्वं लभ्य चैवासावैन्द्रं पदमनुत्तमम् । मोक्षं यास्यति धर्मात्मा वैष्णवं धाम चोत्तमम् ॥ ३२
असंख्याता महाभागाः सृष्टेर्भावा ह्यनेकशः । मोह एवं न कर्तव्यो ज्ञानवद्भिर्महात्मभिः ॥ ३३
एतद्वः सर्वमाख्यातं यथा पृष्टं द्विजोत्तमाः । [*अन्यं पृच्छत वै प्रश्नं संदेहं वो भिनद्म्यहम् ॥ ३४
विजयं देवतानां च दानवानां महाक्षयम् । कृतं हि देवदेवेन स्थापितं भुवनत्रयम् ॥ ३५

ऋषय ऊचुः—

इद्रत्वं कस्य संजातं देवानां राज्यधारकम् । केन दत्तं त्वमाचक्ष्व विस्तराद्द्विजसत्तम ॥ ३६

सूत उवाच—

विस्तरेण प्रवक्ष्यामि इन्द्रत्वं येन सत्तमाः] । प्राप्तमेव महाभागा यथा पुण्यतमेन च ॥ ३७
हतेषु तेषु दैत्येषु समस्तेषु महाहवे । अतिनष्टेषु पापेषु गोविन्देन महात्मना ॥ ३८
ततो देवाः सगन्धर्वा नागा विद्याधरास्तथा । संप्रोचुर्माधवं सर्वे बद्धप्राञ्जलयस्ततः ॥ ३९
भगवन्देवदेवेश हृषीकेश नमोऽस्तु ते । विज्ञापयामहे त्वां वै तत्सर्वमवधार्यताम् ॥ ४०
शास्ता गोप्ता च पुण्यात्मा अस्माकं कुरु केशव । राजानं पुण्यधर्माणं त्वमिन्द्रं लोकशासनम् ४१
त्रैलोक्यस्य प्रजा देव यमाश्रित्य सुखं वसेत् ॥ ४२

वासुदेव उवाच—

मम लोके महाभागा वैष्णवेन समन्वितः । तेजसा ब्राह्मणश्रेष्ठश्चिरकालं निवासितः ॥ ४३
तस्य कालः प्रपूर्णश्च मम लोके महात्मनः । वसतस्तस्य विप्रस्य मद्भक्तस्य सुरोत्तमाः ॥ ४४
तेजसा वैष्णवेनैव भवतां पालको हि सः । भविष्यति स धर्मात्मा सर्वधर्मानुरञ्जकः ॥ ४५
पालको धारकश्चैव स च ब्राह्मणसत्तमः । भविष्यति च धर्मात्मा भवतां त्राणकारणात् ॥ ४६
अदित्यास्तनयश्चैव सुव्रताख्यो महामनाः । महाबलो महावीर्यः स च इन्द्रो भविष्यति ॥ ४७

सूत उवाच—

एवं वरान्स देवेशो ददौ देवेभ्य उत्तमान् । देवा विजयिनः सर्वे विष्णुना सह सत्तमाः ॥
कश्यपं पितरं द्रष्टुं मातरं च ततो गताः ॥ ४८
प्रणेमुस्ते महात्मानावुभावेतौ सुखासनौ । ऊचुः प्राञ्जलयः सर्वे हर्षेण महताऽन्विताः ॥ ४९
युवयोश्च प्रसादेन देवत्वं हि गता वयम् । [†हर्षेण महताऽऽविष्टो देवान्वाक्यमुवाच सः] ॥ ५०

कश्यप उवाच—

यूयं वै सत्यधर्मेण वर्तमानाः सदैव हि । आवयोश्च प्रसादेन तपसश्च प्रभावतः ॥ ५१
प्राप्तवन्तो भवन्तस्तु देवत्वं चाक्षयं पदम् । वरमेवं ददाम्येष बहुप्रीतिसमन्वितः ॥ ५२
अमरा निर्जराश्चैव ह्यक्षयाश्च भविष्यथ । सर्वकामसमृद्धार्थाः सर्वसिद्धिसमन्विताः ॥
देवा नागाश्च गन्धर्वा मत्प्रसादान्महासुराः ॥ ५३

विष्णुरुवाच—

वरं वरय भद्रं ते देवमातर्यशस्विनि । मनसा चेप्सितं सर्वं तत्ते दद्मि सुनिश्चितम् ॥ ५४

अदितिरुवाच—

त्वं पुत्रवती भूता प्रसादात्तव माधव । अमरा निर्जराः सर्वे चाक्षयाः पुण्यवत्सलाः ॥ ५५

---

* क. ख. च. छ. झ. ङ. पुस्तकस्थोऽयं पाठः । † क. ख. ग. घ. च. छ. झ. पुस्तकेष्वयं पाठः ।

अमी पुत्रा मया लब्धाः श्रूयतां मधुसूदन । [1]सुतरां त्वं च गोविन्द सर्वकामसमृद्धिदः ॥ ५६
मम गर्भे वसंश्चैव भवांश्च मम नन्दनः । त्वया पुत्रेण नित्यं च यथा नन्दामि केशव ॥
एवं महोदयं नाथ पूरयस्व मनोरथम् ॥ ५७

वासुदेव उवाच—

भवत्या देवकार्यार्थे गन्तव्यं मानुषं वपुः । तदाऽहं तव गर्भे वै वासं यास्यामि निश्चितम् ॥ ५८
युगे[2] द्वादशके प्राप्ते भूभारहरणाय वै । जमदग्निसुतो देवि रामो नाम द्विजोत्तमः ॥ ५९
प्रतापी तेजसा युक्तः सर्वक्षत्रवधाय च । तव पुत्रो भविष्यामि सर्व[3]शस्त्रभृतां वरः ॥ ६०
[4]चतुर्विंशतिके प्राप्ते त्रेताख्ये तु तथा युगे । रामो नाम भविष्यामि तव पुत्रः पतिव्रते ॥ ६१
[*पुनः पुत्रो भविष्यामि तवैव शृणु वाऽनघे] । अष्टाविंशतिके प्रा[5]प्ते द्वापरान्ते युगे तदा ॥ ६२
सर्वदैत्यविनाशार्थे भूभारहरणाय च । वासुदेवोऽथ ते पुत्रो भविष्यामि न संशयः ॥ ६३
इदानीं कुरु कल्याणि मद्वाक्यं धर्मसंयुतम् । सर्वलक्षणसंपन्नं सत्यधर्मसमान्वितम् ॥ ६४
सर्वज्ञं सर्वदं देवि पुत्रमुत्पाद्य सुन्दरम् । इन्द्रत्वं तस्य दास्यामि इन्द्रः सोऽपि भविष्यति ॥ ६५
एवं संभाषितं श्रुत्वा महाहर्षसमन्विता । देवदेवप्रसादेन इन्द्रः पुत्रो भविष्यति ॥ ६६
एवमस्तु महाभाग तव वाक्यं करोम्यहम् । ततस्ता देवताः सर्वा जग्मुः स्वस्थानमेव हि ॥
हरिणा सह ते सर्वे निरातङ्का मुदाऽन्विताः ॥ ६७

सूत उवाच—

अदितिः कश्यपं प्राह ऋतुं प्राप्य मनस्विनी । भगवन्दीयतां पुत्रः सुरेन्द्रपदभुञ्जकः ॥ ६८
चिन्तयित्वा क्षणं विप्रस्तामुवाच मनस्विनीम् । एवमस्तु महाभागे तव पुत्रो भविष्यति ॥ ६९
त्रैलोक्यस्यापि कर्ता च यज्ञभोक्ता स एव च । तस्याः शिरसि संन्यस्य स्वहस्तं च द्विजोत्तमः ॥ ७०
तपश्चचार तेजस्वी विष्णुलोके वसन्सदा । तस्य पुण्यक्षयाज्जातं विष्णुलोकाद्द्विजोत्तमाः ॥ ७१
पतनं कर्मव[6]शैतस्ततस्तस्या द्विजोत्तमाः । पुण्यगर्भे गतो विप्र अदित्यास्तु महातपाः ॥ ७२
इन्द्रत्वं भोक्तुकामार्थं सत्यपुण्येन कर्मणा । गर्भं दधार सा देवी पुण्येन तपसा किल ॥ ७३
तपस्तेपे [7]निरालस्या वनवासं गता सती । दिव्यं वर्षशतं यातं तपन्त्यां देवमातरि ॥ ७४
अतप्यत तपस्तीव्रं [8]दुष्करं देवतासुरैः । तस्यास्तु तपसा तेन तेजसा च समन्विता ॥ ७५
सूर्यतेजःप्रतीकाशा द्वितीय इव भास्करः । शुशुभे सा यथा दीप्ता परमं ध्यानमास्थिता ॥ ७६
रूपेणाधिकतां याता तपसस्तेजसा तदा । लयध्यानपरा सा च वायुभक्षा [9]तपस्विनी ॥
अधिकं शुशुभे देवी दक्षस्य तनया तदा ॥ ७७
सिद्धाश्च ऋषयः सर्वे देवाश्चापि महौजसः । स्तुवन्ति तां महाभागां रक्षन्ति च सुतत्पराम् ॥ ७८
पूर्णे वर्षशते तस्या विष्णुस्तत्र समागतः । तामुवाच महाभागामदितिं तपसाऽन्विताम् ॥ ७९
देवि गर्भः सुसंपूर्णः सूतिकालः प्रवर्तते । तवैव तपसा [10]पुष्टस्तेजसा च प्रवर्धितः ॥ ८०

* क. ख. च. पुस्तकस्थोऽयं पाठः ।

१ क. ख. च. झ. सुवरात्तव गोविन्द सर्वकामसमन्विताः । म° । २ क. ख. च. झ. °गे वै दशमे प्रा° । ३ क. ख. ज. झ. ढ. °र्वशास्त्र° । ४ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ढ. सप्तविंशतिके । ५ क. ख. ग. घ. छ. झ. ट. °प्ते युगे वैश्ये तथैव च । स° । ६ क. ख. च. छ. झ. ड. °शतः सुव्रतस्य द्विजस्य च । पु° । ७ क. ख. घ. च. छ. झ. निरालम्बा । ८ क. ख. च. छ. झ. दुश्चरं देवब्राह्मणैः । त° । ९ क ख. च. छ. झ. मनस्विनी । १० क. ख. ग. घ. च. छ. झ. ट. °सा तुष्ट° ।

अद्यैव गर्भमेतं त्वं मुञ्च मुञ्च यशस्विनि । एवमाभाष्य देवेशः स जगाम स्वकं गृहम् ॥ ८१
असूत पुत्रं सा देवी काले मासे महोदये । सुपुत्रं दीप्तिसंयुक्तं द्वितीयमिव भास्करम् ॥ ८२
सुभगं चारुसर्वाङ्गं सर्वलक्षणसंयुतम् । चतुर्बाहुं महाकायं लोकपालं सुरेश्वरम् ॥ ८३
तेजोज्वालासमाकीर्णं चक्रपद्मसुहस्तकम् । चन्द्रबिम्बानुकारेण वदनेन महाप्रभम् ॥ ८४
राजमानं महाभाग्नं तेजसा वैष्णवेन च । अन्यैश्च लक्षणैर्दिव्यैर्दिव्यभावैरलंकृतम् ॥ ८५
सर्वलक्षणसंपूर्णं चन्द्रास्यं कमलेक्षणम् । आजग्मुस्तत्र ते देवा ऋषयो वेदपारगाः ॥ ८६
गन्धर्वाश्च ततो नागाः सिद्धा विद्याधरास्तथा । ऋषयः सप्त ते दिव्याः पूर्वापरमहौजसा ॥ ८७
अन्ये च मुनयः पुण्याः पुण्यमङ्गलदायिनः । आजग्मुस्ते महात्मानो हर्षनिर्भरमानसाः ॥ ८८
तस्मिञ्जाते महाभागे भगवन्तो(ति) महौजसि । आजग्मुर्देवताः सर्वे पर्वतास्तु तपस्विनः ॥ ८९
क्षीराद्याः सागराः सर्वे नद्यश्चैव तथाऽमलाः । मूर्तिमन्तस्ततः सर्वे ये चान्ये हि चराचराः ॥ ९०
मङ्गलैस्तु महोत्साहं चक्रुः सर्वे सुरेश्वराः । ननृतुश्चाप्सरःसंघा गन्धर्वा ललितं जगुः ॥ ९१
वेदमन्त्रैस्ततो देवा ब्राह्मणा वेदपारगाः । स्तुवन्ति तं महात्मानं सुतं वै कश्यपस्य च ॥ ९२
ब्रह्मा विष्णुश्च रुद्रश्च वेदाश्चैव समागताः । साङ्गोपाङ्गैश्च संयुक्तास्तस्मिञ्जाते महौजसि ॥ ९३
मङ्गलं चक्रिरे सर्वे गीतपुण्यैर्महोत्सवैः । हर्षेण निर्भराः सर्वे पूजयन्तो महौजसः ॥ ९४
ब्रह्माद्याश्च त्रयो देवाः कश्यपोऽथ बृहस्पतिः । चक्रिरे नामकर्मादि तस्यैव हि महात्मनः ॥ ९५
वसुदत्तेति विख्यातो वसुदेति पुनस्तव । आखण्डलेति त्वन्नाम मरुत्वान्नाम ते पुनः ॥ ९६
मघवा च बिडौजास्त्वं पाकशासन इत्यपि । शक्रश्चैव हि विख्यात इन्द्रश्चैवेति ते सुतः ॥ ९७
इत्येतानि च नामानि तस्यैव च महात्मनः । चक्रुश्च देवताः सर्वा संतुष्टा हृष्टमानसाः ॥ ९८
स्नानं ते कारयामासुः संस्कारांश्च महासुराः । विश्वकर्माणमाहूय ददुराभरणानि च ॥ ९९
तानि पुण्यानि दिव्यानि तस्मै ते तु महात्मने । जाते तस्मिन्महाभागे देवराजे महात्मनि ॥ १००
एवं मुदं ततः प्रापुः सर्वे देवा महौजसः । पुण्ये तिथौ तथा ऋक्षे सुमुहूर्ते महामतिः ॥ १०१
इन्द्रत्वे स्थापितो देवैरभिषिक्तः सुमङ्गलैः । प्राप्तमैन्द्रं पदं तेन प्रसादात्तस्य चक्रिणः ॥ १०२
तपश्चकार तेजस्वी वसुदत्तः सुरेश्वरः । उग्रेण तेजसा युक्तो वज्रपाशाङ्कुशायुधः ॥ १०३

सूत उवाच—

उग्रं समस्तं तपसः प्रभावं विलोक्य शुक्रो निजगाद गाथाम् ।
लोकेषु चान्यो न भविष्यतीति यथा हि चार्यं च सुदर्शनीयः ॥ १०४
विष्णोः प्रसादात्तपसा महात्मना संप्राप्तमैश्वर्यमिहैव दिव्यम् ।
अनेन तुल्यो न भविष्यतीति लोकेषु चान्यस्तपसोग्रवीर्यः ॥ १०५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे देवासुरैरिन्द्राभिषेको नाम पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३४७१

अथ षष्ठोऽध्यायः ।

सूत उवाच—

कश्यपस्य च भार्याऽन्या दनुर्नाम तपस्विनी । पुत्रशोकेन संतप्ता संप्राप्ता दितिमन्दिरम् ॥ १

१ क. ख. ग. घ. च. छ. झ. ट. सुभुजं । २ क. ख. च. छ. झ. शङ्खश्चै° । ३ क. ख. ग. घ. च. छ. झ. लभे । ४ क. ख. ग. घ. च. छ. झ. ढ. °यं वसुदत्तवीरः । वि° । ५ क. ख. च. छ. झ. ढ. °स्य प्रिया भार्या द° ।

रुदमाना प्रणम्यैव पादपद्मयुगं तदा। दुःखेन महता प्राप्ता दितिस्तां प्रत्यबोधयत्। २

दितिरुवाच—

तवैव हि महाभागे किमिदं रोदकारणम्। पुत्रिण्यश्चैकपुत्रेण लोके नार्यो भवन्ति वै॥ ३
भवती शतपुत्राणां गुणिनामपि भामिनी। माता त्वमसि कल्याणि शुम्भादीनां महात्मनाम्॥ ४
कस्माद्दुःखं त्वया प्राप्तमेतन्मे कारणं वद। हिरण्यकशिपू राजा हिरण्याक्षो महाबलः॥ ५
यस्याः पुत्रौ महात्मानौ महाबलपराक्रमौ। कस्माद्दुःखं महज्जातं तस्माच्चैव सखे वद॥ ६
[*एवमाभाष्य सा देवी तां दितिर्दुःखसंयुताम्]। आख्याहि कारणं सर्वं यस्माद्रोदिषि सांप्रतम्॥
एवमाभाष्य तां देवीं विरराम मनस्विनी॥ ७

दनुरुवाच—

पश्य पश्य महाभागे सपत्न्याश्च मनोरथम्। परिपूर्णं कृतं तेन देवदेवेन चक्रिणा॥ ८
यथा पूर्वं वरो दत्तो ह्यदित्यै देवि विष्णुना। तथेदानीं च पुत्राय तस्या दत्तो वरो महान्॥ ९
कश्यपाद्विश्रुतो जातस्त्रैलोक्यपालकः सुतः। इन्द्रत्वं तस्य वै दत्तं तव पुत्राद्विहृत्य च॥ १०
मनोरथैस्तु संपूर्णा अदितिः सुखवर्धिनी। कनीयान्वसुदत्तश्च तस्य पुत्रश्च संप्रति॥
ऐन्द्रं पदं सुदुष्प्राप्यं देवैः सार्धं भुनक्ति च॥ ११

दितिरुवाच—

कस्मात्पदात्परिभ्रष्टो मम पुत्रो महामतिः। अन्ये च दानवा दैत्यास्तेजोभ्रष्टाः कथं सखे॥ १२
तस्य त्वं कारणं ब्रूहि विस्तरेण यशस्विनि। तामाभाष्य दितिर्वाक्यं विरराम सुदुःखिता॥ १३

दनुरुवाच—

देवाश्च दानवाः सर्वे क्रोधाच्च संगरं गताः। तत्र युद्धं महज्जातं दैत्यसंक्षयकारकम्॥ १४
देवैश्च विष्णुना युद्धे मम पुत्रा निपातिताः। तथैव तव पुत्राश्च हता देवेन चक्रिणा॥ १५
वने गजान्यथा सिंहो द्रावयेत्स्वेन तेजसा। तथा ते मामकाः पुत्रा निहताः शङ्खपाणिना॥ १६
कालनेमिमुखं सैन्यं दुर्जयं यत्सुरासुरैः। नाशितं मर्दितं सर्वं द्रावितं विकलीकृतम्॥ १७
स्वीयार्चिर्भिर्यथा वह्निस्तृणानि ज्वालयेद्वने। तथा दैत्यगणान्सर्वान्निर्दहत्येव केशवः॥ १८
मम पुत्रा मृता देवि बहुशस्तव नन्दनाः। वह्निं प्राप्य यथा सर्वे शलभा यान्ति संक्षयम्॥ १९
तथा ते दानवाः सर्वे हरिं प्राप्य क्षयं गताः। एवमेव हि वृत्तान्तं दितिः शुश्राव दारुणम्॥ २०

दितिरुवाच—

वज्रपातोपमं भद्रे वदस्येवं कथं मम। एवमाभाष्य तां देवी मूर्छिता निपपात ह॥ २१
हा हा कष्टं महज्जातं बहुदुःखं प्रतापकम्। रुरोद करुणं साऽपि पुत्रशोकसुपीडिता॥ २२
तां दृष्ट्वा स मुनिश्रेष्ठ उवाच वचनं शुभम्। मा रोदिषि च भद्रं ते नैवं शोचन्ति त्वद्विधाः॥ २३
सत्त्ववन्तो महाभागे लोभमोहैर्न वर्जिताः। कस्य पुत्रा हि संसारे कस्य देवि सुबान्धवाः॥ २४

* क. ख. च. छ. झ. पुस्तकस्थोऽयं पाठः।

१ क ख च. छ. झ हुण्डादीनां। २ क. ख. ग. घ. ङ. च छ. झ. श्रूयताम्। ३ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. °नीं सुपुत्राख्यं दत्तं देवेन सांप्रतम्। क°। ४ क. ख च. छ. झ. विदली°। ५ क.ख. घ. च. छ. झ. ट. °म्। स्वेच्छयैव यथा। ६ क. ख. ग.घ.च. छ. झ. ट. ड. °हुदुःखप्रदायक°। ७ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ढ. °न वाहिताः।

नास्ति कस्य हि केनापि[1] तत्सर्वं श्रूयतां प्रिये । दक्षस्यापि सुता यूयं सुन्दर्यश्चैव मामकाः ॥२५
भवतीनामहं भर्ता भरकः पूरकः शुभे । पोषकः पालकश्चैव रक्षकोऽस्मि वरानने ॥ २६
कस्माद्वैरं कृतं क्रूरैरसुरैरजितात्मभिः । तव पुत्रा महाभागे सत्यधर्मविवर्जिताः ॥ २७
तेन दोषेण ते सर्वे तव दोषेण वै शुभे । निहता वासुदेवेन देवैश्च सुनिपातिताः ॥ २८
तस्माच्छोको न कर्तव्यः सत्यमोक्षविनाशनः । शोको हि नाशयेत्पुण्यं क्षयात्पुण्यस्य नश्यति २९
तस्माच्छोकं परित्यज्य विघ्नरूपं[3] वरानने । आत्मदोषप्रभावेन दानवा मरणं गताः ॥ ३०
देवा निमित्तभूताश्च नाशिताः स्वेन कर्मणा । एवं ज्ञात्वा महाभागे समागच्छ सुखं मति ॥ ३१
एवमुक्त्वा महायोगी तां प्रियां दुःखभागिनीम् । विषादाच्च[4] निवृत्तोऽसौ विरराम महामतिः ॥ ३२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे दितिविलापो नाम षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५०३

---

अथ सप्तमोऽध्यायः ।

---

दितिरुवाच—

सत्यमुक्तं त्वया नाथ सर्वमेव न संशयः । भर्तृस्नेहं परित्यज्य गता सापत्नजं द्विज ॥ १
अभिमानेन दुःखेन मानभङ्गेन सत्तम । महादुःखेन संतप्ता करिष्ये प्राणमोचनम् ॥ २

कश्यप उवाच—

श्रूयतामभिधास्यामि यथा शान्तिर्भविष्यति । न कः कस्य भवेत्पुत्रो न माता न पिता शुभे ॥३
न भ्राता बान्धवाः कस्य न च स्वजनबान्धवाः । एवं संसारसंबन्धो मायामोहसमन्वितः ॥ ४
स्वयमेव पिता देवि स्वयं माताऽथ बान्धवाः । स्वयं स्वजनवर्गश्च स्वयं सर्वः[5] सनातनः ॥ ५
आचारेण नरो देवि सुखित्वमुपजायते । अनाचारेण पापेन नाशं याति तथा ध्रुवम् ॥ ६
क्रूरयोनिं प्रयात्येवं नरो देवि[6] न संशयः । कर्मणा सत्यहीनेन महापापेन मोहितः ॥ ७
रिपुत्वं वर्तते मर्त्यः प्राणिनां नित्यसंस्थितः । सत्येन वर्तते मर्त्यो यदा लोके प्रिये शुभे ॥
तदा तस्य भवन्त्येवं मित्राः सर्वत्र भाविनि ॥ ८
कृषिकारो यदा देवि क्षेत्रे बीजं सुसंस्थितः । यादृशं तु वपत्येव तादृशं फलमश्नुते ॥ ९
तथा तव च पुत्रैश्च साधुभिः स्पर्धितं सह । कर्मणस्तस्य तस्मात्त्वं[7] फलं भुङ्क्ष्व सुसंस्थितम् ॥ १०
तव पुत्रा महाभागे तपःशान्तिविवर्जिताः[8] । तेन पापेन ते सर्वे पतिता वै महत्पदात् ॥ ११
एवं ज्ञात्वा शमं गच्छ मुञ्च दुःखं सुखं तथा । कस्य पुत्राश्च मित्राणि कस्य स्वजनबान्धवाः ॥
आत्मकर्मानुसारेण फलं भुञ्जन्ति जन्तवः ॥ १२
परार्थे चिन्तनं देवि तत्त्वज्ञानेन पण्डिताः । न कुर्वन्ति महात्मानो व्यर्थमेवं न संशयः ॥ १३
पञ्चभूतात्मकं कायं केवलं संधिजर्जरम् । आत्मामित्रं कृतं तेन सर्वं देवि निशामय ॥ १४
आत्मा नाम महापुण्यः सर्वगः सर्वदर्शकः । सर्वसिद्धिस्तु सर्वात्मा सात्त्विकः सर्वसिद्धिदः ॥ १५

---

१ क. ख. च. छ. झ 'पि संबन्धो देवि श्रूयताम् । द'। २ क. ख. च. छ. झ. 'त्यसौख्यवि' । ३ क. ख. च. छ. झ. रिपुरूपं । ४ क. ख. च. छ. झ. विवादा' । ५ क. ख. च. छ. झ. धर्मः । ६ क. ख. च. छ. झ. भामिनि । ७ क. ख. च. छ. झ. तत्प्राप्तं । ८ क. ख. च. घ. छ. 'गे सत्यशा' । ९ क. ख. ग. च. च. छ. ट. व्रज ।

एवं सर्वमयो देवि भ्रमत्येको निरञ्जनः । भ्रमता निर्जने येन मूर्तिमन्तो द्विजोत्तमाः ॥ १६
चत्वारो दर्शिताः पुण्या बुद्धिमन्तो महौजसः । पञ्चमः श्वसनश्चैवं पूर्वाणां मित्रमेव च ॥ १७
अथो आत्मा समायातो ज्ञानसाहाय्य एव वा । स तान्दृष्ट्वा महात्मा वै ज्ञानमात्मा समब्रवीत्॥
[*ज्ञानं पश्ये अमी पञ्च मन्त्रयन्तः परस्परम्[1]] । गच्छ त्वं मम वाक्येन यूयं क इति पृच्छ ह ॥१९
ज्ञानं वाक्यं परं श्रुत्वा सार्थस्तस्य महात्मनः । तदाहाऽऽत्मानमाराध्यमेतैः किं ते प्रयोजनम् ॥
तत्त्वतो ब्रूहि तत्सर्वं भवाञ्शुद्धो हि सर्वदा ॥ २०

आत्मोवाच—

एते पञ्च महाप्राज्ञा रूपवन्तो मनस्विनः । गत्वा संदर्शयाम्येतानाभाष्ये ज्ञान श्रूयताम् ॥ २१
भव्यानेतान्प्रवक्ष्यामि पञ्चमीं गतिमागतान् । दूत त्वं गच्छ भो ज्ञान कुशलो दूतकर्मणि ॥ २२

ज्ञानमुवाच—

त्वमात्मञ्श्रूयतां वाक्यं सत्यं सत्यं वदाम्यहम् । एतेषां संगतिस्तात कार्या नैव त्वया कदा ॥ २३
[+ पञ्चानामपि शुद्धात्मन्न कार्या शुभमिच्छता] । भवतः संगतिं मोह इच्छत्येष महामते ॥ २४

[†आत्मोवाच—

एतेषां संगति ज्ञान कस्माद्वारयते भवान् । तन्मे त्वं कारणं ब्रूहि याथातथ्येन पण्डित ॥ २५

ज्ञानमुवाच]—

एतेषां सङ्गमात्राचु महद्दुःखं भविष्यति । दुःखमूला हि पञ्चैव शोकसंतापकारकाः ॥ २६
एवमस्तु महाप्राज्ञ करिष्ये वचनं तव । ज्ञानमाभाष्य स ह्यात्मा ध्यानेन सह संगतः ॥ २७

कश्यप उवाच—

ततः पञ्चैव ते तत्राद्राक्षुरात्मानमेव तम् । बुद्धिमूचुः समाहूय संगत्याऽऽत्मानमेव हि ॥ २८
दूतत्वं कुरु कल्याणि ह्यस्माकमात्मना सह । पञ्चतत्त्वा महात्मानो विश्वस्य धारकाः शुभाः ॥२९
भवन्तं मित्रमिच्छन्ति इत्याभाष्य महामतिम् । गत्वा बुद्धे त्वया कार्यं कर्तव्यं सांप्रतं व्रज ॥ ३०
एवमस्तु महाभागाः करिष्ये कार्यमुत्तमम् । एवमाभ्य तान्सा वै गता ह्यात्मानमेव तम् ॥ ३१
अहं बुद्धिर्महाभाग भवन्तं समुपागता । दूतत्वे[4] महतां पार्श्वात्तेषां त्वं वचनं शृणु ॥ ३२
भवन्मैत्रीं समिच्छन्ति ह्येक्षर्या पञ्च चाऽऽत्मकाः । कुरु मैत्रं महाप्राज्ञ जहि ध्यानं सुदूरतः ॥ ३३

ज्ञानमुवाच—

न कर्तव्यस्त्वया चाऽऽत्मन्नेतेषां वै समागमः । एषां संसर्गमात्रेण महद्दुःखं भविष्यति ॥ ३४
मया ज्ञानेन हीनस्त्वं कथं कर्म करिष्यसि । एवमेव न कर्तव्यमेतेषां वै समागमः ॥ ३५
गर्भवासो हि भवतो भविष्यत्यन्यथा विभो । ज्ञानेनैव मया हीनो ह्यज्ञानं यास्यसि ध्रुवम् ॥ ३६
एवमुक्त्वा तमात्मानं विरराम महामतिः । ततस्तामागतां बुद्धिमात्मा प्रोवाच निश्चितम् ॥ ३७
ज्ञानध्यानौ महात्मानावात्मनो मम शोभनौ । तत्र यानं न मे युक्तं तद्बुद्धे किं करोम्यहम् ॥ ३८

---

* क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः । + क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः । † क. ख. ग. घ. च. छ. ज. झ. ङ. पुस्तकस्थोऽयं पाठः ।

---

१ क. ख. घ. ङ. च. छ. ङ. ढ. °व कुर्वाणा मन्त्रमे° । २ च. ज. ड. ढ. °श्य समीपस्था म° । ३ क. ख. ग. घ. ङ. च. छ. ज. झ. ड. ढ. °म् । एतान्गत्वा ब्रवीहि त्वं यू° । ४ क. ख. च. छ. झ. °त्वे भवतां पार्श्वे तेषां । ५ क. ख. च. छ. झ. तेजाद्याः । ६ च. सानं । ७ क. ख. च. छ. झ. °तव्यं त्वया देव वचः शृणु । ग° ।

एवं श्रुत्वा गता बुद्धिस्तेषां पार्श्वे यशस्विनी । समाचष्टे समग्रं तत्कथनं ज्ञानध्यानयोः ॥ ३९
ततस्ते पञ्चकाः सर्वे आत्मानं प्रति जग्मिरे । मैत्रमेव प्रतीच्छामो भवतो नित्यमेव हि ॥ ४०
यस्माच्छुद्धोऽसि लोकेश तस्मात्त्वां समुपागताः । स्वयमेव विचार्यैव ह्युत्तरं नः प्रदीयताम् ॥ ४१

आत्मोवाच—

यूयं पञ्चैव संप्राप्ता मम मैत्रं समिच्छथ । स्वीयं गुणं प्रभावं च कथयन्तु ममाग्रतः ॥ ४२

भूमिरुवाच—

सर्वकायस्य संस्थानं चर्ममांससमन्वितम् । [*अस्थिमूलदृढत्वं च नखलोमसमन्वितम्] ॥ ४३
प्रभावो हि महाप्राज्ञ कायमध्ये ममैव हि । नासिकागमनो गन्धः स मे भृत्यो महामनाः ॥ ४४

आकाश उवाच—

अहमाकाशकः प्राप्तो मम काये प्रभावकम् । श्रूयतामभिधास्यामि परब्रह्मस्वरूपिणे ॥ ४५
बाह्यान्तरावकाशश्च शून्यस्थाने वसाम्यहम् । ममैव भृत्यौ श्रवणे श्रवणार्थं प्रतिष्ठितौ ॥ ४६

वायुरुवाच—

यत्स्वरूपेऽथ निःश्वासे करोम्येवं शुभाशुभम् । कर्म काये स्थितं नित्यं स्पर्शाख्यस्तत्रमे गुणः ॥ ४७

तेज उवाच—

काये सूर्यस्य वै नित्यं विनियोगं करोम्यहम् । सबाह्याभ्यन्तरं सर्वं द्रव्याद्रव्यं प्रदर्शये ॥ ४८
तत्र नेत्रे च भृत्यौ मे द्रव्यलब्धप्रसाधकौ । एवं मयाऽऽत्मव्यापारस्तवाग्रे कथितः परः ॥ ४९

आप ऊचुः—

शुक्रं मज्जा तथा लाला पलं त्वक्संधिसंस्थितम् । रुधिरं प्रेषयामो वै कायमध्ये स्थिता वयम् ॥ ५०
संपोषयामोऽहर्निशममृतेन कलेवरम् । एवंमयः सुव्यापारः कायपत्तनकेऽर्पितः ॥
अमात्यं रसनां विद्धि रसास्वादकरीं पराम् ॥ ५१

नासिकोवाच—

सुगन्धेन परां पुष्टिं कायस्यापि करोम्यहम् । दुर्गन्धं तु परित्यज्य काये सर्वं प्रदर्शये ॥ ५२
बुद्धियुक्ता महाभाग तस्या भावेन भाविता । स्वामिकार्याय कायेऽस्मिन्नहं तिष्ठामि निश्चला ॥
गन्धं मम गुणं विद्धि द्विविधं यत्प्रवर्तितम् ॥ ५४

श्रवणे ऊचतुः—

कार्याकार्यादिकं शब्दं लोकैरुक्तं शुभाशुभम् । शृणुयाव सुकायस्थौ सत्यासत्यं प्रियाप्रियम् ॥ ५५
शब्दो हि मे गुणः प्रोक्तो मम व्यापार एव हि । योजयामि न संदेहो यदा बुद्धिः प्रपूरयेत् ५६

त्वगुवाच—

पञ्चरूपात्मको वायुः शरीरेऽस्मिन्व्यवस्थितः । सबाह्याभ्यन्तरां चेष्टां तेषां जानामि निश्चितम् ५७
शीतोष्णमातपं वर्षं वायोः स्फुरणमेव च । सर्वं जानामि संस्पर्शादङ्गश्लेषादिकं नृणाम् ॥ ५८
स्पर्श एव गुणो मह्यमेतत्सत्यं वदाम्यहम् । एवं हि ते समाख्यातो ह्यात्मव्यापार एव हि ॥ ५९

---

* क. ख. ग. ङ. च. छ. झ. ङ. ढ. पुस्तकस्थोऽयं पाठः ।

---

१ क. ख. ङ. च. छ. झ. ङ ढ. °च—पञ्चरूपेण तिष्ठामि क° । २ क. ख. ग. घ. ङ. छ. झ. ट. ड. ढ. °म् । चर्मकाये स्थितोऽमात्यं शृणुष्वाऽऽत्मन्गुणं हि मे । ते° । ३ क. ख. च. छ. झ. दुष्टादुष्टं । ४ क. ख. ग. घ. ङ. च. छ. ज. छ. ट. ड. ढ नेत्रावमात्यौ मे मम राज्यप्र° । ५ च सर्वं ।

नेत्रे ऊचतुः—

संसारे यानि रूपाणि भव्याभव्यानि सत्तम । यदा प्रेरयते बुद्धिस्तदा पश्याव नान्यथा ॥ ६०
वसावः कायमध्ये वै रूपं गुण इहाऽऽवयोः । एवं व्यापार उक्तो नौ कायमध्ये महामते ॥ ६१

जिह्वोवाच —

बुद्धियुक्ता ह्यहं तात रसभेदान्विचारये । [*क्षारमाम्लादिकं सर्वं नीरसं स्वादु चिन्तये]॥ ६२
व्यापारेण ह्यनेनापि नित्ययुक्ता वसाम्यहम् । [†इन्द्रियाणां हि सर्वेषां बुद्धिरेव प्रणायकः ]॥ ६३
एवं पञ्च समायातानीन्द्रियाणि प्रिये शृणु । स्वीयानि यानि कर्माणि कथयन्ति पुनः पुनः॥ ६४
अथ बुद्धिः [*समायाता तमुवाच महामतिम् । मद्विहीनो यदा कायस्तदा नश्यति नान्यथा ॥
तस्मात्त्वं मां] समास्थाय प्रवर्तस्व महामते ॥ ६५
अथ कर्म समायातमात्मानमिदमब्रवीत् । अहं कर्म महाप्राज्ञ तव पार्श्वे समागतम् ॥ ६६
त्वां प्रेषयाम्यहं तात यथा वै येन गच्छ ह । एवमाकर्ण्य तत्सर्वमात्मा प्रोवाच तान्प्रति ॥ ६७
यूयं पञ्चात्मका युक्ताः सर्वसाधारणाः कि[1]ल । तस्मान्मैत्रं समिच्छामि तत्र पञ्चात्मकं प्रति ॥
ब्रुवन्तु कारणं सर्वे ममाग्रे सर्वमेव तत् ॥ ६८

पञ्चात्मका ऊचुः—

अस्मत्सङ्गप्रसङ्गेन पिण्डमेव प्रजायते । तस्मिन्पि[2]ण्डे महादेव भवान्वसति सुव्रत ॥ ६९
तिष्ठामो ह वयं सर्वे प्रसादात्तव तत्र हि । एतस्मात्कारणान्मैत्रमिच्छामस्तव नित्यशः ॥ ७०

आत्मोवाच—

एवमस्तु महाभागा भवतां प्रियमेव च । करिष्ये नात्र संदेहो मैत्रं हि प्रीतिकारणात् ॥ ७१
वार्यमाणो महाभागो ज्ञानेनापि महात्मना । ध्यानेन च महात्माऽसौ तेषां संगतिमागतः ॥ ७२
स तैः प्रमोहितस्तत्र रागद्वेषादिभिस्तदा । पञ्चतत्त्वसमायुक्तः कायत्वं गतवान्प्रभुः ॥ ७३
यदा गर्भे समायातो विष्ठामूत्रसमाकुले । दुर्गन्धे पिच्छिलावर्ते पतितस्तैः सुसंयुतः ॥ ७४
अङ्गेन व्याकुलो भूतः पञ्चात्मकानुवाच सः । भो भोः पञ्चात्मकाः सर्वे शृणुध्वं वचनं मम ७५
भवतां हि प्रसङ्गेन महादुःखेन मोहितः । नन्वस्मिन्पिच्छिले घोरे पतितोऽस्मि महाभये ॥ ७६

पञ्चात्मका ऊचुः—

तावत्संस्थीयतां राजन्यावद्गर्भं प्रपूरयेत् । पश्चान्निर्गमनं ते वै भविष्यति न संशयः ॥ ७७
अस्माकं हि भवान्स्वामी कायदेशे व्यवस्थितः। [† राज्यमेवं प्रकर्तव्यं सुखभोक्ता भविष्यसि ॥
तेषां तद्वचनं श्रुत्वा चाऽऽत्मा दुःखेन पीडितः] । गन्तुमिच्छन्नसौ तस्मात्पलायनपरोऽभवत् ॥ ७९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे देवासुरप्रकरणे शरीरोत्पत्तिकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३५८२

अथाष्टमोऽध्यायः ।

कश्यप उवाच—

स गर्भो व्याकुलो जातः खिद्यमानो दिने दिने । दुःखक्रान्तो हि धर्मात्मा सर्वपीडाभिपीडितः

* क. ख. ङ. च. छ. ज. झ. ड. ढपुस्तकस्थोऽयं पाठः । † क. ख. च. छ. झ. पुस्तकस्थोऽयं पाठः ।
* क. ख. ग. ङ. च. छ. झ. ड. ढ. पुस्तकस्थोऽयं पाठः । † क. ख. ङ. च. छ. ज. झ. ड. ढ. पुस्तकस्थोऽयं पाठः ।

१ च. °ल । कस्मान्मैत्रं समिच्छन्ति पञ्चात्मका ममैव हि । ब्रु° । २ क. ख. च. छ. झ. °ण्डे यदा दे° ।

अधोमुखस्तु गर्भस्थो मोहजालेन बन्धितः । आधिव्याधिसमाक्रान्तो हाहाभूतो विचेतनः ॥
दुःखेन महताऽऽविष्टो ज्ञानमाह प्रपीडितः ॥ २

आत्मोवाच—

तव वाक्यं महाप्राज्ञ न कृतं तु मया तदा । ध्यानेन वार्यमाणोऽपि पतितो मोहसंकटे ॥
तस्माद्रक्ष महाप्राज्ञ गर्भवासात्सुदारुणात् ॥ ३

ज्ञानमुवाच—

मया त्वं वारितो ह्यात्मन्कृतं वाक्यं न चैव मे । पञ्चात्मकैर्महाक्रूरैः पातितो गर्भसंकटे ॥ ४
इदानीं गच्छ त्वं ध्यानं तस्मात्त्वं प्राप्स्यसे सुखम् । गर्भवासाद्भविष्यते मोक्षस्ते च न संशयः ॥ ५
तस्य तद्वचनं श्रुत्वा ज्ञात्वा ज्ञानस्य तत्त्वताम् । ध्यानमाहूय प्रोवाच श्रूयतां वचनं मम ॥ ६
त्वामहं शरणं प्राप्तो ध्यान मां रक्ष नित्यशः । एवमस्तु महाप्राज्ञ ध्यानमाह महामते ॥ ७
एतद्वाक्यं ततः श्रुत्वा ह्यात्मा वै ध्यानमागतः । ध्यानेन हि समं गर्भे संस्थितो मोहवर्जितः ॥ ८
[*यदा ध्यानं गतो ह्यात्मा विस्मृतं गर्भजं भयम् । स द्वाभ्यां सहितस्तत्र ह्यात्मा मोहविवर्जितः] ९
चिन्तयन्नेव वै नित्यमात्मकं सुखमेव हि । इतो निष्क्रान्तमात्रस्तु त्यजे पञ्चात्मकं वपुः ॥ १०
एवं चिन्तयते नित्यं गर्भवासगतः प्रभुः । सूतिकाले तु संप्राप्ते प्राजापत्येन शोभने ॥ ११
वायुना चालितो गर्भः प्राणेनापि बलीयसा । योनिर्विकाशमायाति चतुर्विंशाङ्गुलं तदा ॥ १२
पञ्चविंशाङ्गुलो गर्भस्तेन पीडा विजायते । एवं संपीड्यमानस्तु मूर्छया मूर्छितः प्रिये ॥ १३
पतितो भूमिभागे तु ज्ञानध्यानसमन्वितः । प्राजापत्येन दिव्येन वायुना स पृथक्कृतः ॥ १४
भूमिसंस्पर्शमात्रेण ज्ञानध्याने तु विस्मृते । संसारमोहसंदग्ध आत्मा प्रियतया स्थितः ॥ १५
गुणदोषसमाक्रान्तो महामोहसमन्वितः । खानपानादिकं सर्वमिच्छत्येव दिने दिने ॥ १६
एवं संपृष्टमानस्तु ह्यात्मा पञ्चात्मकैः सह । व्याप्यते इन्द्रियैः सर्वैर्विषयैः पापकारिभिः ॥ १७
बान्धवानां सुसंमोहे भार्यादीनां तथैव च । आकुलव्याकुलो देवि जायते च दिने दिने ॥ १८
महामोहेन संदग्धो मोहजालं गतः प्रभुः । कैवर्तेन यथा नद्यां शकुलो जातबन्धनः ॥ १९
चलितुं नैव शक्नोति तथा चाऽऽसीत्प्रबन्धितः । मोहजालैस्तु तैः सर्वैर्दृढबन्धैस्तु बन्धितः ॥ २०
एवमात्मा प्रपञ्चेन व्यापितो व्यापकेन हि । ज्ञानविज्ञानविभ्रष्टो रागद्वेषादिभिर्हतः ॥ २१
कामेन पीड्यमानस्तु क्रोधेनैव तथैव वा । प्रकृत्या कर्मणा बद्धो महामूढो विजायते ॥ २२
एवं मूढो यदाऽऽत्माऽसौ कामक्रोधवशं गतः । लोभरागादिभिः सर्वैर्व्यापृतस्तैर्दुरात्मभिः ॥ २३
इयं भार्या ह्ययं पुत्र इदं मित्रमिदं गृहम् । एवं संसारजालेन महामोहेन बन्धितः ॥ २४
पुत्रशोकादिभिर्दुःखैः संतप्तो ह्यनिशं तदा । जरया व्याधिभिश्चैव संग्रस्तश्चाऽऽधिभिस्तथा ॥ २५
एवमात्मा संप्रतप्तो दुःखमोहैः सुदारुणैः । अभिमानैर्मानभङ्गैर्नानादुःखैश्च खण्डितः ॥ २६
वृद्धत्वेन तथा देवि शबलत्वेन पीडितः । दुःखं चिन्तयते नित्यं महाभूतो विचेतनः ॥ २७
रात्रौ स्वप्नान्प्रपश्येत दिवा चैतन्यवर्जितः । वैकल्येन स मोहेन व्याप्तो देवि दिने दिने ॥ २८

* क. ख. ङ. च. छ. ज. झ. ड. ढ. पुस्तकस्थोऽयं पाठः ।

१ ट. °स्तेऽत्र न । २ ग. घ. °त्यमैश्वरं सु° । ३ क. ख. च. छ. झ. तः । स्तन° । ४ क. ख. च. छ. झ. पुनः । ५ क. ख. च. छ. झ. °था बद्धः शफरो जालबन्धनैः । च° । ६ क. ख. च. छ. झ. °र्व्यापित° । ७ क. ख. घ. छ. झ. °तः । वृद्धत्वे चिन्तते ।

संसारे भ्रममाणेन वैराग्यं तत्र दार्शितम् । निःशङ्कं[1] बन्धुहीनं च प्रशान्तं तुष्टमेव च ॥ २९
तमुवाच तदाऽऽत्मा वै कामक्रोधविवर्जितम् । को भवान्नग्नरूपेण कथं मित्रैर्न लज्जसे ॥ ३०
यत्र लोकाः स्त्रियो वृद्धा युवत्यो मातरस्तथा । एतासां हि गतो मध्ये न विभासि ह्यनावृतः ३१

वीतराग उवाच—

को ह्यत्र नग्नो दृश्येत न नग्नोऽस्मीति वै कदा । सुसंबद्धस्त्वहं ज्ञानपरिधानसमन्वितः ॥ ३२
न नग्नोऽस्मि कदा दिव्य भवान्नग्नः प्रदृश्यते । इन्द्रियार्थवशो वर्ती मर्यादायाश्च वर्जितः ॥ ३३

आत्मोवाच—

पुरुषस्य का हि मर्यादा तामाचक्ष्व च सुव्रत । विस्तरेण महाप्राज्ञ यदि जानासि निश्चितम् ॥ ३४
वीतरागो महाप्राज्ञस्तमुवाच महामतिः । सुस्थैर्यं भजते चित्तं सुखदुःखेषु नित्यदा ॥
क्लेशितं सर्वभावैश्च तेष्वलं न[2] परित्यजेत् ॥ ३५
अथ लज्जां प्रवक्ष्यामि मनो या हि विशत्यलम्[3] । मयाऽद्यैवं न कर्तव्यं नग्नस्थानविवर्जितः ॥ ३६
पश्चात्तापसुसंलीनः सा लज्जा परिकथ्यते । कस्य लज्जा प्रकर्तव्या द्वितीयो नास्ति सर्वदा ॥ ३७
एकश्च पुरुषो दिव्यः कस्य किंचिन्न नाशयेत् । अथ लोकान्प्रवक्ष्यामि ये त्वया परिकीर्तिताः ॥ ३८
यथा कुलालकश्चक्रे मृत्पिण्डं च निधापयेत् । भ्रामयित्वा तु सूत्रेण नानाभेदान्प्रकारयेत् ॥ ३९
भाण्डानां तु सहस्राणि स्वेच्छया मतिसंस्थितः । तथाऽयं सृजते धाता नानारूपाणि नान्यथा ॥ ४०
पश्चाद्विनाशमा[4]यान्ति येन केनापि हेतुना । [†ते अलोका महाप्राज्ञा नाशमायान्ति ये च वै]॥ ४१
सर्वदैवं[5] स्थिता ये च ये लोकाश्च सनातनाः । तेषां लज्जा प्रकर्तव्या न वर्तन्ते हि ते भुवि ॥ ४२
आकाशवायुतेजांसि पृथ्वी चाऽऽपश्च पञ्चमाः । अमी लोकाः प्रकाशन्ते[6] ये च सर्वत्र संस्थिताः ४३
सर्वत्रैव च वर्तन्ते कस्य लज्जा विधीयते । स्त्रीणां रूपं[7] प्रवक्ष्यामि श्रूयतां तात सांप्रतम् ॥ ४४
यथा घटसहस्रेषु सोदकेषु विराजते । एकश्चन्द्रो हि सर्वत्र भवांस्तद्वद्विराजते ॥ ४५
गतो जन्तुसहस्रेषु मोहबद्धो महात्मवान् । स्थावरेषु च सर्वेषु जङ्गमेषु तथा भवान् ॥ ४६
योनिद्वारेण पापेन मायामोहमयेन वै । कुचाभ्यामुच्छ्रिताभ्यां च वयसा च विराजते ॥ ४७
त्वङ्मांसस्य तथा वृद्धिर्दृष्टा धात्रा न संशयः । पतनाय च लोकानां मोहरूपं विदर्शितम् ॥ ४८
न भवत्येव सा नारी या त्वया परिकीर्तिता । लीलया कुरुते धाता विनोदाय स आत्मनः ॥ ४९
यथा नार्यास्तथा पुंसो जीवः सर्वत्र संस्थितः । कुचयोनिविहीना ये जीवन्मुक्ताः सदैव हि ॥ ५०
नरस्तु पुरुषः प्रोक्तो नारी प्रकृतिरुच्यते । रमते तेन वै सार्धं न मुक्ता हि कदाचन ॥ ५१
भवान्प्रकृतिसंयुक्तः स्त्रीपुरुषेषु प्रदृश्यते । कः कस्य कुरुते लज्जामेवं ज्ञात्वा समं व्रज ॥ ५२
वृद्धां[8] प्रियां प्रवक्ष्यामि सदा वृद्धा वरानने । जराजर्जरिता जाता यस्याप्यङ्गे वरानने ॥ ५३
श्वेतैश्चैव तथा केशैः पलितैश्च समाकुला । बलहीनाऽथ दीनाऽपि व्यापिता बलिना तदा[9] ॥ ५४
नेयं वृद्धा भवेन्नारी परं वृद्धा च कथ्यते । एतस्या लक्षणं प्रोक्तं[10] युवतीं प्रवदाम्यहम् ॥ ५५

† क. ख च. छ. झ. पुस्तकस्थोऽयं पाठः ।

१ क. ख. घ. छ. निःसङ्गं वस्त्रहीं॰। २ क. ख. च. ॰नो जानात्यसत्पथम् । ३ क. ख. च. छ. ॰म् । सजात्येव अकर्मेदं नग्नस्थानं विलक्षितः । ४ क. ख. च. छ. झ. ॰न्ति कुलालस्य घटा इव । ते । ५ ग. ॰वैदेहस्थि॰ । ६ क. ख. च. छ. झ. प्रकथ्यन्ते । ७ क ख. च. छ. झ. ॰ते । हृन्मांस॰ । ८ क. ख. च. छ. ज. झ. ट. ढ. स्त्रियं । ९ क. ॰दा । एवं वृद्धा भवेन्नारी परं वृद्धा न क॰ । १० क. ख. घ ङ. च. छ. ट. ड. ढ. ॰क्तं वृद्धां स्त्रियं व॰ ।

ज्ञानेन वर्धते नित्यं जीवपार्श्वे समाधिना । सुमतिर्नाम या प्रोक्ता सा[2] च वै युवती भवेत् ॥ ५६
नारी पुरुषलोकेषु सर्वेष्वेव प्रतिष्ठिता[1] । लज्जा तस्याः प्रकर्तव्या चान्यच्चैव वदाम्यहम् ॥ ५७
मातरं च प्रवक्ष्यामि या त्वया परिकीर्तिता । प्राणिनामङ्गदेशेषु सदैव चेतना स्थिता ॥ ५८
परज्ञानप्रदा या च सा प्रज्ञा परिकथ्यते । प्रज्ञा माता समाख्याता प्राणिनां पालनाय सा ॥५९
संस्थिता सर्वलोकेषु पोषणाय हिताय च । सुमतिर्नाम या प्रोक्ता सा माता परिकल्पते[4] ॥ ६०
संसारद्वारमार्गाणि यानि रूपाणि नित्यशः । भवन्ति मातरो ह्येता[5] बहुदुःखप्रदर्शिकाः ॥
मातृरूपं समाख्यातमन्यत्किं ते वदाम्यहम् ॥ ६१

आत्मोवाच—

भवान्को हि समायातो मम संतापनाशकः । विस्तरेण समाख्याहि स्वरूपमात्मनः स्वयम् ॥६२

वीतराग उवाच—

यस्मात्कामा निवर्तन्ते[6] वीतरागः स कथ्यते । शुद्धो यत्नात्प्रपश्येत्तु कर्माण्येतानि चान्यथा ॥६३
यत्समीपं हि नाऽऽयान्ति ह्याशाश्चैव कदाचन । [*क्रोधो लोभस्तथा मोहो यद्भयात्प्रलयं गताः]॥
वीतरागोऽस्मि भद्रं ते विवेको मम बान्धवः ॥ ६४

आत्मोवाच—

कीदृशोऽसौ तव भ्राता विवेको नाम नामतः । तस्यैव लक्षणं ब्रूहि भ्रातुरात्मन एव च ॥ ६५

वीतराग उवाच—

तस्यैव लक्षणं रूपं न वदामि तवाग्रतः । भ्रातुस्तस्य महाभाग आह्वानं च करोम्यहम् ॥ ६६
भो भो विवेक मे भ्रातरावयोस्त्वं वचः शृणु । एह्येहि सुमहाभाग मम स्नेहान्महामते ॥ ६७

कश्यप उवाच—

शान्तिक्षमाभ्यां संयुक्तो भार्याभ्यां च समागतः । सर्वदृक्[7]सर्वगो व्यापी सर्वसत्त्वपरायणः ६८
संदेहानां च सर्वेषां यो रिपुर्ज्ञानवत्सलः । धारणा धीश्च द्वे पुत्र्यौ तस्यैव हि महात्मनः ॥ ६९
तस्य योगः सुतो ज्येष्ठो मोक्षो यस्य महागुरुः । निर्मलो[8] निरहंकारो निराशो निष्परिग्रहः ॥ ७०
सर्ववेला[9]प्रसन्नात्मा गतद्वंद्वो महामतिः । स विवेकः समायातो गुणरत्नैर्विभूषितः ॥ ७१
यस्यामात्यौ महात्मानौ सत्यधर्मौ महामती । क्षमाशान्तिसमायुक्तः स विवेकः समागतः ॥ ७२
वीतरागमुवाचेदमाहूतोऽहं समागतः । तद्भ्रातः कारणं सर्वं कथ्यतां हि ममाग्रतः ॥
यमाश्रित्य त्वयाऽद्यैव कृतमाह्वानमेव मे ॥ ७३

वीतराग उवाच—

पुमान्स्थितोऽयं पुरतो महापाशैर्नियन्त्रितः । मोहस्य दारुणैर्भ्रातः संसारस्य च बन्धनैः ॥ ७४
सर्वस्य व्यापकः स्वामी ह्ययमात्मा ममैव च । पञ्चतत्त्वैः समाविष्टो[10] ज्ञानध्यानविवर्जितः ॥ ७५
पृच्छतामेनमात्मानं भवांस्तत्त्वेषु पण्डितः । वीतरागवचः श्रुत्वा विवेको वाक्यमब्रवीत् ॥ ७६

---

* ङ. ज. ढपुस्तकस्थोऽयं पाठः ।

---

१ क. ख. च. छ. झ. ढ. समाश्रिता । छ. ज. ट. ढ. समास्थिता । २ क. ख. ग. ङ. च. छ. ज. झ ड. ढ. सा वृद्धा यु° । ३ क. ख. च. छ. झ. सर्वदेव । ४ क. ख. ङ. च. छ. झ. ञ. ड. ढ. °कथ्यते । ५ ञ. नैव । ६ ग. घ. ज. ड. °न्ते निराशाः सर्व एव ते । सदोषत्वान्न पश्यन्ति क° । ७ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. °वेतत्त्व° । ८ घ. निर्ममो । ९ क. ख. च. छ. ड. वेता प्र° । १० क. ख. ग. घ. ङ. च. छ. झ. ञ. ट. ड. ढ. विष्टः प्रधानाभ्यां त्रि° ।

विवेक उवाच—

सुखेन स्थीयते देव भवता विश्वनायक। आगते त्वयि संसारे किं किं भुक्तं सुखं शुभम् ॥ ७७

आत्मोवाच—

गर्भवासे महद्दुःखं प्रभुक्तं दारुणं मया। [*भुक्तमेव महाप्राज्ञ ज्ञानहीनेन वै सदा]॥ ७८

देहेऽपि ज्ञानविभ्रष्टो जातोऽहं लोकसंगतः। बाल्ये चाज्ञानतस्तात कृत्याकृत्यं कृतं मया ॥ ७९

तारुण्ये च कृता क्रीडा भुक्ता भार्या अनेकशः। वार्धकं प्राप्य[2] संतप्तः पुत्रशोकादिभिस्तथा॥८०

भार्यादीनां वियोगैस्तु दग्धोऽस्म्यहमहर्निशम्। दुःखैरनेकसंवर्णैः[3] संतप्तोऽस्मि दिने दिने ॥ ८१

दिवा रात्रौ महाप्राज्ञ न विन्दामि सुखं क्वचित्। एवं दुःखैः सुसंतप्तः किं करोमि महामते ॥८२

तमुपायं वदस्वैव सुखं विन्दामि येन वै। अस्मात्संसारजालौघान्मोचयाद्य सुबन्धनात् ॥ ८३

विवेक उवाच—

भवाञ्शुद्धोऽस्ति निर्द्वंद्वो ह्यपापोऽस्ति जगत्पते। वंशं[4] गच्छ महात्मानं वीतरागं सुखप्रदम् ॥८४

निःसंशयं त्वया दृष्टं नग्नमाचारवर्जितम्। सुखप्रदर्शको ह्येष सर्वसंतापनाशकः ॥ ८५

एवमाकर्ण्य शुद्धात्मा वीतरागं गतः पुनः। तमुवाच सुसंदीनः श्रूयतां वचनं मम ॥ ८६

सुखं विन्दामि येनाहं तं मार्गं मम दर्शय। एवमस्तु महाप्राज्ञ करिष्ये वचनं तव ॥ ८७

पुनर्गच्छ विवेकं हि सुखवार्ता कृता त्वया। सुखमार्गस्य वै वक्ता तव एष भविष्यति ॥ ८८

[+वीतरागेण पुण्येन प्रेषितो गतवान्प्रभुः। तमुवाच महात्मानं विवेकं शुद्धसत्तमम् ॥ ८९

सुखं मे दर्शय त्वं हि वीतरागेण प्रेषितः। भवच्छरणमापन्नो रक्ष संसारदारुणात् ॥ ९०

विवेक उवाच—

ज्ञानं गच्छ महाप्राज्ञ स ते सर्वं वदिष्यति]। आत्मा तथोक्तः संप्राप्तो यत्र ज्ञानं प्रतिष्ठितम्९१

भो भो ज्ञान महातेजः सर्वभावप्रदर्शक। शरणं त्वामहं प्राप्तः सुखं मार्गं प्रदर्शय ॥ ९२

ज्ञानमुवाच—

भृत्योऽहं तव लोकेश त्वं मां वेत्सि न सुव्रत। मया ध्यानेन वै पूर्वं वारितस्त्वं पुनः पुनः ९३

पञ्चात्मकानां सङ्गेन चाऽऽपदं प्राप्तवान्भवान्। ध्यानं गच्छ महाप्राज्ञ स ते दाता सुखस्य च९४

ज्ञानेन प्रेषितो ह्यात्मा ध्यानमाश्रित्य संस्थितः। सुखमत्यन्तसिद्धं च ध्यान मे दर्शयस्व ह ॥

भवच्छरणमायातं मामेवं परिरक्षय ॥ ९५

एवं संभाषितं तस्य ध्यानमाकर्ण्य तद्वचः। समुवाच[6] पुनश्चापि तमात्मानं स मित्रवत् ॥ ९६

नैव त्याज्योऽस्म्यहं तात सर्वकर्मसु संस्थितः। त्वयैव वीतरागेण विवेकेन सदैव हि ॥ ९७

ध्यानयुक्तो[7] भवस्व त्वमात्मानमवलोकय। आत्मवांस्त्वं स्थिरो भूत्वा निरातङ्कोऽविकल्पितः९८

यथा दीपो निवातस्थः कज्जलं वमते स्थिरम्। तथा दोषान्प्रज्वलित्वा दर्शनं[8] हि प्रयास्यसि९९

एकान्तस्थो निराहारो[9] मिताशी भव सर्वदा। निर्द्वंद्वः शब्दसंहीनो[10] निश्चलोपासने स्थितः ॥ १००

* ङ. छ. ज. झ. ढ. पुस्तकस्थोऽयं पाठः। + क. ख. ङ. च. छ. झ. ञ. ड. पुस्तकस्थोऽयं पाठः।

१ क. ख. ग. ङ. च. छ. ज. झ. ट. ड ढ. °दुःखमसह्यं दा°। २ क. ख. च. छ. झ. °संबन्धः सं° ग. ड. °संबद्धः सं°। ३ क. ख. च. छ. झ. °समूढः किं°। ४ क. ख. ङ. च. छ. छ. ड. ढ. एवं। ग. घ. वनं। ५ क. ख. च. छ. झ. निःसङ्गं यस्त्वया। ६ क. ख. ङ. च. छ. ज. झ. ट. ड. ढ. °नं प्रहृष्टवान्। नै। ७ क. ख. च. छ. झ. ज्ञानयुक्तो। ८ क. ख. ङ. च. छ. ज. झ ट. ड. ढ. निर्वाणं। ९ क. ख. च. छ. झ. °रोऽमृता°। १० ढ. सर्वसं हीनो।

आत्मानमात्मना ध्यायन्मयैव स्थिरबुद्धिना । प्राप्स्यसे परमं स्थानं तद्विष्णोः परमं पदम् ॥ १०१

इति श्रीमहापुराणे पाद्मे भूमिखण्डेऽध्यात्मकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३६८३

---

अथ नवमोऽध्यायः ।

---

कश्यप उवाच—

एवं संबोधितस्तत्र ह्यात्मा ध्यानादिकैस्तदा । मोक्तुकामः स तत्कार्यं पश्चात्मकं सुबुद्धिमान् ॥ १
निमित्तानि प्रपश्येत्तु प्रार्थितं न प्रयाति सः । विहाय कायं निर्लक्षं पतितं नैव पश्यति ॥ २
सदैव हितयोर्नास्ति संबन्धः प्राणदेहयोः । धनपुत्रकलत्रैश्च संबन्धः केन हेतुना ॥ ३
एवं ज्ञात्वा शर्म गच्छ क्लैब्यं मा गच्छ सुप्रिये । अयमेव परं ब्रह्म ह्ययमेव सनातनः ॥ ४
अयमात्मस्वरूपेण दैत्यदेवेषु संस्थितः । अयं ब्रह्मा ह्ययं रुद्रो ह्ययं विष्णुः सनातनः ॥ ५
अयं सृजति विश्वानि ह्ययं पालयते प्रजाः । संहरत्येष धर्मात्मा धर्मरूपो जनार्दनः ॥ ६
अनेनोत्पादिता देवा दानवाश्चैव सुप्रिये । देवाश्च धर्मसंयुक्ता धर्महीनाः सुतास्तव ॥ ७
धर्मोऽयं माधवस्याङ्गं सर्वदेवैश्च पालितम् । धर्मं च चिन्तयेद्देवि धर्मं चैव प्रपालयेत् ॥
तस्य विष्णुः स धर्मात्मा सर्वदैव प्रसादवान् ॥ ८
धर्मेण वर्तिता देवाः सत्येन तपसा किल । येषां विष्णुः प्रसन्नो वै धर्मस्तैरिह पालितः ॥ ९
विष्णोः कायमिदं धर्मः सत्यं हृदयमेव च । यस्तौ पालयते नित्यं तस्य विष्णुः प्रसीदति ॥ १०
दूषयेद्यः सत्यधर्मौ पापमेव प्रपालयेत् । तस्य विष्णुः प्रकुप्येत नाशयेदतिवीर्यवान् ॥ ११
वैष्णवैः पालितं धर्मं तपःसत्येनसंस्थितैः । तेषां प्रसन्नो धर्मात्मा रक्षामेवं करोति च ॥ १२
तव पुत्रा दनोः पुत्राः सैंहिकेयास्तथैव च । अधर्मेणापि पापेन वर्तिताः पापचेतसः ॥
सूदिता वासुदेवेन समरे चक्रपाणिना ॥ १३
योऽसावात्मा मया प्रोक्तः पूर्वमेव तवाग्रतः । सोऽयं विष्णुर्न संदेहो धर्मात्मा सर्वपालकः ॥ १४
दैत्यकायेषु यः स्वस्थः पापमेव समास्थितैः । जघ्निवान्दानवान्देवि स च क्रुद्धो महामतिः ॥ १५
सबाह्याभ्यन्तरे भूत्वा तव पुत्रा निपातिताः । येन चोत्पादिता देवि तेनैव विनिपातिताः ॥ १६
तेषां मोहो न कर्तव्यो भवत्या वचनं शृणु । पापेन वर्तते योऽसौ स एवं निधनं व्रजेत् ॥ १७
तस्मान्मोहं परित्यज्य सदा धर्मं समाश्रय । एवमस्तु महाभाग करिष्ये वचनं तव ॥ १८
कश्यपं च मुनिश्रेष्ठमेवमाभाष्य दुःखिता । संबोधिता सा मुनिना दुःखं संत्यज्य संस्थिता ॥ १९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे देवासुरप्रकरणे दितिसंबोधनं नाम नवमोऽध्यायः ॥ ९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३७०२

---

१ क. ख. घ. च. छ. ज. झ. ड. ढ. °पश्यैव प्राप्य तांस्तान्प्रया° । २ क. ख. च. छ. ज. विहस्य । ३ क ख. च. छ. झ. निर्लज्जं । ४ क ख. च. छ. झ. सदा । ५ क. ख. च छ. झ. कार्यं परं ध° । ६ क. ख. च. छ. झ. ड. समाचरेत् । ७ क. ख. च छ. झ. °न् । देवैश्च पा° । ८ क. ख. ग. घ. च. छ. झ. °र्वव्यापकः । ९ क. ख. च. छ. झ. ड. °तः । दृष्टवा° । ग. घ. ङ. ढ. °तः । पृष्ट्वा° । ट. °तः । स्पृष्ट्वा° । १० क. ख. ग. घ. च. छ. झ. ट. ड. सत्यं ।

अथ दशमोऽध्यायः ।

ऋषय ऊचुः—

ततस्ते दानवाः सर्वे हिरण्यकशिपूत्तराः । युद्धभग्नास्तु किं कुर्युर्व्यवसायं महामते ॥
विस्तरेणापि नो ब्रूहि तेषां वृत्तमनुत्तमम् । श्रोतुमिच्छामहे सर्वे त्वत्तो वै सांप्रतं द्विजाः ॥

सूत उवाच—

भग्ना रणात्तु ते सर्वे बलहीनास्तु वै तदा । गतदर्पाः सुदुःखार्ता दैत्यास्ते पितरं गताः ॥
भक्त्या प्रणम्य ते सर्वे समूचुः कश्यपं तदा ॥

दानवा ऊचुः—

भवद्वीर्यात्समुत्पत्तिरस्माकं द्विजसत्तम । देवतानां महाभाग दानवानां तथैव च ॥
वयं च दानवाः सर्वे बलवीर्यपराक्रमाः । उपायज्ञाः सुधीराश्च ह्युद्यमेन समन्विताः ॥
वयं तु बहवस्तात देवाः स्वल्पास्तथैव च । कथं जयन्ति ते सर्वे वयं भग्ना महाहवात् ॥
तत्किं वै कारणं तात बलतेजःसमन्विताः ॥
मत्तनागसहस्राणामेकैकस्य महामते । बलमस्ति च दैत्यस्य नास्ति देवेषु तादृशम् ॥
जयश्च दृश्यते तात देवेष्वेव महाहवे । तत्सर्वं कथयस्वैव संशयं छेत्तुमर्हसि ॥

कश्यप उवाच—

शृणुध्वं पुत्रकाः सर्वे यदस्यापि च कारणम् । यस्माद्धि देवास्ते सर्वे समरे जयिनोऽभवन् ॥
बीजनिर्वापकस्तातो माता क्षेत्रमिदं सदा । धारणे पालने चैव पोषणेषु तथैव च ॥ १
किं कुर्याद्विपमार्थे तु पिता पुत्रे च वै तथा । अत्र प्रधानं कर्मैव जानीध्वं बुद्धिमाश्रिताः ॥ १
द्विविधं कर्मसंबन्धं पापपुण्यसमुद्भवम् । सत्यमेवं समाश्रित्य क्रियते धर्म उत्तमः ॥ १
तपोध्यानसमायुक्तं तारणाय हितं सुताः । पतनाय पातकं प्रोक्तं सर्वदैव न संशयः ॥ १
बलेन परिवारेण चाऽऽभिजात्येन पुत्रकाः । पुण्यहीनस्य पुंसो वै तद्बलं विफलायते ॥ १
उन्नता गिरिदुर्गेषु वृक्षाः सन्ति सुपुत्रकाः । पतन्ति वातवेगेन समूलास्तु घना यथा ॥ १
सत्यधर्मविहीनास्ते तथा यान्ति यमक्षयम् । साधारणं प्राणिनां च धर्म एतत्सुपुत्रकाः ॥ १
येन संतरते जन्तुरिह चैव परत्र वा । तद्युष्माभिः परित्यक्तं सत्यं धर्मसमन्वितम् ॥ १
अधर्ममाश्रितं पुत्रा युष्माभिः सत्यवर्जितैः । सत्यधर्मतपोभ्रष्टाः पतिता दुःखसागरे ॥ १
देवाश्च सत्यसंपन्नाः [10]श्रेयसा च समन्विताः । तपःशान्तिदमोपेताः सुपुण्याः पापवर्जिताः ॥ १
यत्र सत्यं च धर्मश्च तपः पुण्यं तथैव च । यत्र विष्णुर्हृषीकेशो जयस्तत्र प्रदृश्यते ॥ २
तेषां सहायः संभूतो वासुदेवः सनातनः । तस्माज्जयन्ति ते देवाः सत्यधर्मसमन्विताः ॥ २
सहायेन बलेनैव पौरुषेण तथैव च । भवन्तः किल वै पुत्रास्तपःसत्यविवर्जिताः ॥ २
[*यस्य विष्णुः सहायश्च तपसश्च बलं तथा । तस्यैव च जयो दृष्ट इति धर्मविदो विदुः ॥ २

* क. ख. च. छ. झ. ट. ड. पुस्तकस्थोऽयं पाठः ।

१ क. ख. ग. घ. च. छ. झ. ट. ड. ढ. तं । २ क. ख. छ झ. तेषामुद्यममुत्त° । ३ क. ख. ग. घ. च. छ. ट. ड. °वें दांपत्यं धर्मसंमतम् । पुनः प्रोचुर्महात्मानौ गुणधर्मार्थसंयुतौ । दा° । ४ क. ख. ग. घ. च. छ. झ. ट. ड. °ता लक्षना. । ५ क. ख. च. छ. झ. ड. किं कर्तुं हि समर्था सा पिता पुत्रस्य चैव हि । अ° । ६ म. °ताः । पातनात्पात° ७ क. ख. च. छ. झ. °पुष्टकाः । ८ म. °नास्तथा । ९ क. ख. छ. झ. सत्पदाद्दृत° । १० क. ख. च. छ. तपसा ।

यूयं धर्मविहीनास्तु तपःसत्यविवर्जिताः] । ऐन्द्रं पदं बलेनैव प्राप्तवन्तश्च पूर्वतः ॥ २४
तपो विना महाभागा धर्मेण यशसा विना । प्राप्याप्यैन्द्रपदं पुत्रास्ततो भ्रष्टा भवन्ति हि ॥
तस्माद्यूयं प्रकुर्वन्तु तपः पुत्राः समन्विताः ॥ २५
अविरोधेन संयुक्ता ज्ञानध्यानसमन्विताः । वैरं चैवं न कर्तव्यं केशवेन समं कदा ॥ २६
एवंविधा यदा पुत्रा यूयं धन्या भविष्यथ । परां सिद्धिं तदा सर्वे प्रयास्यथ न संशयः ॥ २७
एवं संभाषितास्ते तु कश्यपेन महात्मना । समाकर्ण्य पितुर्वाक्यं दानवास्ते महौजसः ॥ २८
प्रणम्य कश्यपं भक्त्या समुत्थाय त्वरान्विताः । सुमन्त्रं चक्रिरे दैत्याः परस्परसमाहिताः ॥ २९
हिरण्यकशिपू राजा तानुवाचाथ दानवान् । तपश्चैव करिष्यामो दुष्करं सर्वदायकम् ॥ ३०
हिरण्याक्षस्तदोवाच चरिष्ये दारुणं तपः । ततो बलेन त्रैलोक्यं ग्रहीष्ये नात्र संशयः ॥ ३१
रणे निर्जित्य गोविन्दं तमिमं पापचेतसम् । व्यापाद्य देवताः सर्वाः पदमैन्द्रं व्रजाम्यहम् ॥ ३२

बलिरुवाच—

एवं न युज्यते कर्तुं युष्माभिर्दितिजेश्वराः । विष्णुना सह यद्वैरं तद्वैरं नाशकारणम् ॥ ३३
दानधर्मैस्तथा पुण्यैस्तपोभिर्यज्ञयाजनैः । तमाराध्य हृषीकेशं सुखं गच्छन्ति मानवाः ॥ ३४

हिरण्यकशिपुरुवाच—

अहमेवं न करिष्ये हरेराराधनं कदा । स्वभावं तु परित्यज्य शत्रुसेवा प्रचर्यते ॥ ३५
मरणादधिकं तत्र मानयन्ति हि पण्डिताः । विष्णोः सेवा न वै कार्या मया चान्यैश्च दानवैः ३६
तमुवाच महात्मानं बलिः पितामहं पुनः । धर्मशास्त्रेषु यद्दृष्टं मुनिभिस्तत्त्ववेदिभिः ॥ ३७
राजनीतियुतं मन्त्रं शत्रोश्चैव प्रसाधनम् । हीनमात्मानमाज्ञाय रिपुं तु बलिनं तथा ॥ ३८
तस्य पार्श्वं प्रगत्यैव जयकालं प्रतीक्षयेत् । दीपच्छायां समाश्रित्य तमो वर्तेत वै तथा ॥ ३९
स्नेहं दशागतं प्रेक्ष्य दीपस्यापि महाबलम् । प्रकाशं याति वेगेन तमश्च वर्धते पुनः ॥ ४०
तथा प्रसाधयेच्छत्रुं स्नेहं निर्दिश्य तत्त्वतः । स्नेहं कृत्वा सुरैः सार्धं धर्मभावैः सुरद्विषः ॥ ४१
पूर्वमुक्तं सुमन्त्रं तु मुनिना कश्यपेन हि । तेन मन्त्रेण राजेन्द्र कुरु कार्यं स्वमात्मवान् ॥ ४२
तस्य तद्वचनं श्रुत्वा प्राह दैत्यः प्रतापवान् । पौत्र नैवं करिष्येऽहं मानभङ्गं तमात्मनः ॥ ४३
अन्ये च दानवाः सर्वे तमूचुर्ज्ञानपण्डितम् । बलिनोक्तं च यत्पुण्यं देवतानां प्रियंकरम् ॥ ४४
शत्रुमानकरं प्रोक्तं दानवानां भयंकरम् । करिष्यामो वयं सर्वे तप एव ह्यनुत्तमम् ॥ ४५
निर्जित्य तपसा देवान्ग्रहीष्यामः स्वकं पदम् । एवमामन्त्र्य ते सर्वे निराकृत्य बलिं तदा ॥ ४६
विष्णोः सार्धं महावैरं हृदि कृत्वा महासुराः । तपश्चक्रुस्ततः सर्वे गिरिदुर्गेषु सानुषु ॥ ४७
एवं ते दानवाः सर्वे त्यक्तरागाः सुनिश्चिताः । कामक्रोधविहीनाश्च निराहारा जितक्लमाः ॥ ४८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे दैत्यतपश्चर्याप्रवृत्तिर्नाम दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः—३७५०

---

१ क. ख. च. छ. ज. झ. ट. ड. °ना । बलदर्पगुणैः पुत्रा न प्राप्यमैन्द्रकं पदम् । त° । २ क. ख. छ. झ. ड. पुण्या । ३ क. ख. ग. घ. च. छ. झ. ड. पुण्यं । ४ क. ख. च. छ. झ. तपोव° । ५ क. ख. च. छ. झ. °च्छन्तु दान° । ६ क. ख. ग. च. छ. झ. ट. ड. °स । स्वं मानं तु । ७ अ. प्रधानतः । ८ अ. °च्छत्रुः स्ने° । ९ अ. पौत्रे चैवं । १० अ. तथाऽऽ-म° । ११ क. ख. च. छ. झ. शत्रुमा° । १२ क. ख. ग. घ. च. छ. झ. ट. ड. ढ. निराश्रिताः ।

अथैकादशोऽध्यायः ।

ऋषय ऊचुः—
सर्वज्ञेन त्वया प्रोक्तं दैत्यदानवसंगरम् । इदानीं श्रोतुमिच्छामः सुव्रतस्य महात्मनः ॥ १
कस्य पुत्रो महाप्राज्ञः कस्य गोत्रसमुद्भवः । किं तपस्तस्य विप्रस्य कथमाराधितो हरिः ॥ २
सूत उवाच—
मया प्रज्ञाप्रभावेन पूर्वमेव यथाश्रुतम् । तथा विप्राः प्रवक्ष्यामि सुव्रतस्य महात्मनः ॥ ३
चरितं पावनं दिव्यं वैष्णवं श्रेयआवहम् । भवतामग्रतः सर्वं विष्णोश्चैव प्रसादतः ॥ ४
पूर्वकल्पे महाभागाः सुक्षेत्रे पापनाशने । रेवातीरे सुपुण्ये च तीर्थे वामनसंज्ञके ॥ ५
कौशिकस्य कुले जातः सोमशर्मा द्विजोत्तमः । स तु पुत्रविहीनस्तु बहुदुःखसमन्वितः ॥ ६
दारिद्र्येण सुदुःखेन सर्वदैव प्रपीडितः । पुत्रोपायं धनस्यापि दिवारात्रौ प्रचिन्तयेत् ॥ ७
एकदा तु प्रिया तस्य सुमना नाम सुव्रता । भर्तारं चिन्तयोपेतमधोमुखमलक्षयत् ॥ ८
समालोक्य तदा कान्तं तमुवाच यशस्विनी । दुःखजालैरसंख्यैस्तु तव चित्तं प्रधर्षितम् ॥ ९
व्यामोहेन प्रमूढोऽसि त्यज चिन्तां महामते । मम दुःखं समाचक्ष्व स्वस्थो भव सुखं व्रज ॥१०
नास्ति चिन्तासमं दुःखं कायशोषणमेव हि । यस्तां संत्यज्य वर्तेत स सुखेन प्रमोदते ॥ ११
चिन्तायाः कारणं विप्र कथयस्व ममाग्रतः । प्रियावाक्यं समाकर्ण्य सोमशर्माऽब्रवीत्प्रियाम् ॥१२
सोमशर्मोवाच—
इच्छया चिन्तनं भद्रे चिन्ता दुःखस्य कारणम् । तत्सर्वं तु प्रवक्ष्यामि श्रुत्वा चैवावधार्यताम् ॥ १३
न जाने केन पापेन धनहीनोऽस्मि सुव्रते । तथा पुत्रविहीनश्च ह्येतद्दुःखस्य कारणम् ॥ १४
सुमनोवाच—
श्रूयतामभिधास्यामि सर्वसंदेहनाशकम् । स्वरूपमुपदेशस्य सर्वविज्ञानदर्शनम् ॥ १५
लोभः पापस्य बीजं हि मोहो मूलं च तस्य हि । असत्यं तस्य स्कन्धो वै माया शाखासुविस्तरः १६
दम्भकौटिल्यपत्राणि कुबुद्ध्या पुष्पितः सदा । नृशंसं[3] तस्य सौगन्ध्यं फलमज्ञानमेव च ॥ १७
छद्मपाखण्डचौर्येर्ष्याः क्रूराः कूटाश्च पापिनः । पक्षिणो मोहवृक्षस्य मायाशाखासमाश्रिताः ॥ १८
अज्ञानं यत्फलं तस्य रसोऽधर्मः प्रकीर्तितः । भावोदकेन संवृद्धिस्तस्याश्रद्धा ऋतुः प्रिय ॥ १९
अधर्मः सुरसस्तस्य चोत्कटैर्मधुरायते । यादृशैश्च फलैश्चैव सुफलो लोभपादपः ॥ २०
तस्य च्छायां समाश्रित्य यो नरः परितुष्यते । फलानि तस्य चाश्नाति सुपक्वानि दिने दिने ॥ २१
फलानां तु रसेनापि ह्यधर्मेण तु पालितः । स संतुष्टो भवेन्मर्त्यः पतनायाभिगच्छति ॥ २२
तस्माच्चिन्तां परित्यज्य पुमाँल्लोभं न कारयेत् । धनपुत्रकलत्राणां चिन्तामेव न कारयेत् ॥ २३
यो हि विद्वान्भवेत्कान्त मूर्खाणां पथमेति हि । सुभार्यामिह विन्दामि कथं पुत्रानहं लभे ॥ २४
एवं चिन्तयते नित्यं दिवारात्रौ विमोहितः । क्षणमेकं प्रपश्येत चिन्तामध्ये महत्सुखम् ॥ २५
पुनश्चैतन्यमायाति महादुःखेन पीड्यते । चिन्तामोहौ परित्यज्य ह्यनुवर्तस्व च द्विज ॥
संसारे नास्ति संबन्धः केन सार्धं महामते ॥ २६

---

१ क. ख. घ. छ. झ. ड. चामरकण्टके । २ क. ख. च. छ. ञ. 'मः । धनपु' । ३ क. ख. ग. घ. ङ. च. छ. ज. ञ. ट. ड. ढ. अनृतं ।

मित्राणि बान्धवाः पुत्राः पितृमातृसभृत्यकाः । संबन्धिनो भवन्त्येते कलत्राणि तथैव च ॥ २७

सोमशर्मोवाच—

संबन्धः कीदृशो भद्रे मम विस्तरतो वद । येन संबान्धिनः सर्वे धनपुत्राप्तबान्धवाः ॥ २८

सुमनोवाच—

ऋणसंबन्धिनः केचित्केचिन्न्यासापहारकाः । भेदैश्चतुर्भिर्जायन्ते पुत्रमित्राः स्त्रियस्तथा ॥ २९
भार्या पिता च माता च भृत्याः स्वजनबान्धवाः । स्वेन स्वेन हि जायन्ते संबन्धेन महीतले ३०
न्यासापहारो भावेन यस्य येन कृतं भुवि । न्यासस्वामी भवेत्पुत्रो गुणवान्रूपवान्भुवि ॥ ३१
येनैवापहृतं ह्येतत्तस्य देहे न संशयः । न्यासापहरणाद्दुःखं स दत्त्वा दारुणं गतः ॥ ३२
न्यासस्वामी स पुत्रोऽभून्न्यासापहारकस्य च । गुणवान्रूपवांश्चैव सर्वलक्षणसंयुतः ॥ ३३
भक्तिं च दर्शयेत्तस्य पुत्रो भूत्वा दिने दिने । प्रियवान्मधुरो वाग्मी बहुस्नेहं विदर्शयन् ॥ ३४
स्वीयं द्रव्यं समुद्गृह्य प्रीतिमुत्पाद्य चोत्तमाम् । यथा येन प्रदत्तं स्यान्न्यासस्य हरणात्पुरा ३५
दुःखमेव महाभाग दारुणं [*प्राणनाशनम् । तादृशं तस्य सौहृद्यात्पुत्रो भूत्वा महागुणैः ॥ ३६
अल्पायुषस्तथा भू(त्वा) मरणं] चोपगच्छति। दुःखं दत्त्वा प्रयात्येव भूत्वा भूत्वा पुनः पुनः ३७
यदाह पुत्र पुत्रेति प्रसादं हि करोति सः । तदा हास्यं करोत्येव कस्य पुत्रो हि कश्चन ॥ ३८
अनेनापहृतं न्यासं मदीयं पापचारिणा । द्रव्यापहरणेनापि मम प्राणा गताः किल ॥ ३९
दुःखेन महता चैव ह्यसह्येन च वै पुरा । तथा दुःखमहं दत्त्वा द्रव्यमुद्गृह्य उत्तमम् ॥
गन्तास्मि सुभृशं चाद्य कस्याहं सुत ईदृशः ॥ ४०
न चैष[4] मे पिता पुत्रः पूर्वमेव न कस्यचित् । पिशाचत्वं मया दत्तमस्यैवेति दुरात्मनः ॥ ४१
एवमुक्त्वा प्रयात्येव तं प्रहस्य पुनः पुनः । प्रयात्यनेन मार्गेण दुःखं दत्त्वा सुदारुणम् ॥ ४२
एवं न्यासं समुद्धर्तुं पुत्राः कान्त भवन्ति वै । संसारे दुःखबहुला दृश्यन्ते यत्र तत्र च ॥ ४३
ऋणसंबन्धिनः पुत्रान्प्रवक्ष्यामि तवाग्रतः ॥ ४४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुव्रतोपाख्यान एकादशोऽध्यायः ॥ ११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३७९४

अथ द्वादशोऽध्यायः ।

सुमनोवाच—

ऋणं यस्य गृहीत्वा यः प्रयाति मरणं किल । अर्थदाता सुतो भूत्वा भ्राता चाथ पिता प्रिया[5] १
मित्ररूपेण वर्तेत ह्यतिदुष्टः सदैव सः । गुणं नैव प्रपश्येत स क्रूरो निष्ठुराकृतिः ॥ २
जल्पते निष्ठुरं वाक्यं सदैव स्वजनेषु च । मिष्टं मिष्टं समश्नाति भोगान्भुनक्ति नित्यशः ॥ ३
द्यूतकर्मरतो नित्यं चौरकर्मणि सस्पृहः । गृहद्रव्यं बलाद्भुङ्क्ते वार्यमाणः स कुप्यति ॥ ४
पितरं मातरं चैव कुत्सते च दिने दिने । द्रावकस्त्रासकश्चैव बहुनिष्ठुरजल्पकः ॥ ५

* क. ख. ग. घ. च. छ. झ. ड. पुस्तकस्थोऽयं पाठः ।

१ ट. च—प्राण° । ठ. ब—प्राणिसं° । २ ञ. कृती । ३ क. ख. च. छ. झ. ड. प्रलापं । ४ क. ख. च. छ. झ. ड. 'चैव मे पिता पूर्वमथैव हि न कस्य च । पि° । ५ ञ. प्रिय ।

एवं भुक्त्वाऽथ तद्‌द्रव्यं सुखेन संप्रतिष्ठति । जातकर्मादिभिर्बाल्यैर्द्रव्यं गृह्णाति दारुणः ॥
पुनर्विवाहसंबन्धाज्ञानाभेदैरनेकधा ॥ ६
एवं संजायते द्रव्यमेवमेतद्ददात्यपि । गृहक्षेत्रादिकं सर्वं ममैव हि न संशयः ॥ ७
पितरं मातरं चैव हिनस्त्येव दिने दिने । सुदण्डैर्मुसलैश्चैव सर्वघातैस्तु दारुणैः ॥ ८
मृते तु तस्मिन्पितरि मातर्येवातिनिष्ठुरः । निःस्नेहो निष्ठुरश्चैव जायते नात्र संशयः ॥ ९
श्राद्धकर्माणि [*दानानि न करोति कदैव सः । एवंविधाश्च वै पुत्राः प्रभवन्ति महीतले ॥ १०
रिपुं पुत्रं प्रवक्ष्यामि] तवाग्रे द्विजपुङ्गव । बाल्ये वयसि संप्राप्ते रिपुत्वे वर्तते सदा ॥ ११
पितरं मातरं चैव क्रीडमानो हि ताडयेत् । ताडयित्वा प्रयात्येव प्रहस्यैव पुनः पुनः १२
पुनरायाति संत्रस्तः पितरं मातरं प्रति । सक्रोधो वर्धते नित्यं वैरकर्मणि सर्वदा ॥ १३
पितरं मारयित्वा च मातरं च ततः पुनः । प्रयात्येवं सुदुष्टात्मा पूर्ववैरानुभावतः ॥ १४
अथातः संप्रवक्ष्यामि यस्माल्लभ्यं भवेत्प्रियम्[१] । मातरं च प्रियं कुर्याद्बाल्ये लालनमाननैः[२] ॥ १५
वयः प्राप्य प्रियं कुर्यान्मातापित्रोरनन्तरम् । भक्त्या संतोषयेन्नित्यं तावुभौ परितोषयेत् ॥ १६
स्नेहेन वचसा चैव प्रियसंभाषणेन च । मृते गुरौ समाज्ञाय स्नेहेन रुदते पुनः ॥ १७
श्राद्धकर्माणि सर्वाणि पिण्डदानादिकां क्रियाम् । करोत्येव सुदुःखार्तस्तेभ्यो यात्रां प्रयच्छति॥
ऋणत्रयान्वितः स्नेहाद्भुञ्जापयति नित्यशः । यस्माल्लभ्यं भवेत्कान्त प्रयच्छति न संशयः॥ १९
पुत्रो भूत्वा महाप्राज्ञ अनेन विधिना किल । उदासीनं प्रवक्ष्यामि तवाग्रे प्रिय सांप्रतम् ॥ २०
उदासीनेन भावेन सदैव परिवर्तते । ददाति नैव गृह्णाति न च कुप्यति तुष्यति ॥ २१
नो वा ददाति संत्यज्य ह्युदासीनो द्विजोत्तम । तवाग्रे कथितं सर्वं पुत्राणां गतिरीदृशी ॥ २२
यथा पुत्रास्तथा भार्या पिता माताऽथ बान्धवाः । भृत्याश्चान्ये समाख्याताः पशवस्तुरगास्तथा ॥ २३
गजा महिष्यो दासाश्च ऋणसंबन्धिनस्त्वमी । गृहीतं न ऋणं तेन आवाभ्यां तु न कस्यचित्[३] ॥ २४
न्यासश्चैव न कस्यापि हृतो वै पूर्वजन्मनि । धारयावो न कस्यापि ऋणं कान्त शृणुष्व हि ॥ २५
न वैरमस्ति केनापि पूर्वजन्मनि वै कृतम् । आवाभ्यां हि न विप्रेन्द्र गृहीतं कस्यचित्पते ॥ २६
एवं ज्ञात्वा शमं गच्छ त्यज चिन्तामनर्थिकाम् । कस्य पुत्राः प्रिया भार्याः कस्य स्वजनबान्धवाः २७
हृतं न चैव कस्यापि नैव दत्तं त्वया पुनः । कथं हि धनमायाति विस्मयं व्रज मा धव ॥ २८
प्राप्तव्यमेव यस्यैव भवेद्‌द्रव्यं द्विजोत्तम । अनायासेन हस्तेन तस्यैव परिजायते ॥ २९
यत्नेन महता चैतद्‌द्रव्यं रक्षति मानवः । व्रजमाने व्रजत्येवं[४] तं विना हि न तिष्ठति ॥ ३०
एवं ज्ञात्वा शमं गच्छ जहि चिन्तामनर्थिकाम् । महामोहेन संमूढा मानवाः पापचेतसः ॥ ३१
इदं गृहमयं पुत्र इमा नार्यो ममैव हि । अनृतं दृश्यते कान्त संसारस्य हि बन्धनम् ॥ ३२
एवं संबोधितो देव्या भार्यया प्रियया तदा । पुनः प्राह प्रियां भार्यां सुहितां ज्ञानवादिनीम्॥ ३३

सोमशर्मोवाच—

सत्यमुक्तं त्वया भद्रे सर्वसंदेहनाशनम् । तथाऽपि वंशमिच्छन्ति साधवः सत्यपण्डिताः ॥ ३४
यथा पुत्रस्य मे चिन्ता धनस्य च तथा प्रिये । येन केनाप्युपायेन पुत्रमुत्पादयाम्यहम् ॥ ३५

* क. ख. ग. घ. च. छ. झ. ड. पुस्तकस्थोऽयं पाठः ।

१ ङ. °म् । आतमात्रः प्रि° । २ क. ख. च. छ. झ. °नक्रीडनैः । ३ ज. ट. ड. ढ. °न्द्र न त्यक्तं हि तथा पते । ४ छ. °व रक्षितं हि । ज. °वं त्रिदिनं हि ।

सुमनोवाच—

पुत्रेण लोकाञ्जयति पुत्रस्तारयते कुलम् । सत्पुत्रेण महाभाग पिता माता च जन्तवः ॥ ३६

एकः पुत्रो वरं विद्वान्बहुभिर्निर्गुणैस्तु किम् । एकस्तारयते वंशमन्ये संतापकारकाः ॥ ३७

पूर्वमेव मया प्रोक्तमन्ये संबन्धगामिनः । पुण्येन प्राप्यते पुत्रः पुण्येन प्राप्यते कुलम् ॥ ३८

सुगर्भः प्राप्यते पुण्यैस्तस्मात्पुण्यं समाचर । जातस्य मृत्युरेवास्ति जन्म एव मृतस्य च ॥ ३९

सुजन्म प्राप्यते पुण्यैर्मरणं तु तथैव च । सुखानां निचयः कान्त भुज्यते पुण्यकर्मभिः ॥ ४०

सोमशर्मोवाच—

पुण्यस्याऽऽचरणं ब्रूहि तथा जन्मान्यपि प्रिये । सुपुण्यः कीदृशो भद्रे वद पुण्यस्य लक्षणम् ॥ ४१

सुमनोवाच—

आदौ पुण्यं प्रवक्ष्यामि यथा पूर्वं श्रुतं मया । पुरुषो वाऽथ वा नारी यथा नित्यं च वर्तते ॥ ४२

यथा पुण्यैः समाप्नोति कीर्तिं पुत्रान्प्रियां धनम् । पुण्यस्य लक्षणं कान्त सर्वमेव वदाम्यहम् ॥ ४३

ब्रह्मचर्येण तपसा मखपञ्चकवर्तनैः । दानेन नियमैश्चापि क्षमाशौचेन वल्लभ ॥ ४४

अहिंसया सुशक्त्या च ह्यस्तेयेनापि वर्तनैः । एतैर्दशभिरङ्गैस्तु धर्ममेव प्रपूरयेत् ॥ ४५

संपूर्णो जायते धर्मो ग्रासैर्भोगो यथोदरे । धर्मं सृजति धर्मात्मा त्रिविधेनैव कर्मणा ॥ ४६

तस्य धर्मः प्रसन्नात्मा पुण्यमेवं तु प्रापयेत् । यं यं चिन्तयते प्राज्ञस्तं तं प्राप्नोति दुर्लभम् ॥ ४७

सोमशर्मोवाच—

कीदृशी धर्ममूर्तिः स्यात्कान्यङ्गानि च भामिनि । प्रीत्या कथय मे कान्ते श्रोतुं श्रद्धा प्रवर्तते ॥ ४८

सुमनोवाच—

लोके धर्मस्य वै मूर्तिः कैर्दृष्टा न द्विजोत्तम । अदृश्यवर्त्मा सत्यात्मा न दृष्टो देवदानवैः ॥ ४९

अत्रिवंशसमुत्पन्नो योऽनसूयात्मजो द्विज । तेन दृष्टः स वै धर्मो दत्तात्रेयेण वै सदा ॥ ५०

द्वावेतौ तु महात्मानौ कुर्वाणौ तप उत्तमम् । धर्मेण वर्तमानौ तौ तपसा च बलेन च ॥ ५१

ईन्द्राधिकेन रूपेण प्रशस्तेन भविष्यतः । [*दशवर्षसहस्रं तु यावत्तौ वनसंस्थितौ ॥ ५२

वायुभक्षौ निराहारौ संजातौ शुभदर्शनौ ] । दशवर्षसहस्रं तु तावत्कालं तपोऽर्जितम् ॥ ५३

सुसाध्यमानयोश्चैव तत्र धर्मः प्रदृश्यते । पञ्चाग्निः साध्यते द्वाभ्यां तावत्कालं द्विजोत्तम ॥ ५४

त्रिकालं संस्थितौ तावन्निराहारव्रतं तथा । जलमध्ये स्थितौ तावद्दत्तात्रेयो यतिस्तथा ॥ ५५

दुर्वासास्तु मुनिश्रेष्ठस्तपसा चैव कर्षितः । धर्मं प्रति स धर्मात्मा चुक्रोध मुनिपुङ्गवः ॥ ५६

क्रुद्धे सति महाभाग तस्मिन्मुनिवरे तदा । अथ धर्मः समायातः स्वरूपेण द्विजोत्तमः ॥ ५७

ब्रह्मचर्यादिभिर्युक्तस्तपोभिश्च स बुद्धिमान् । सत्यं ब्राह्मणरूपेण ब्रह्मचर्यं तथैव च ॥ ५८

तपस्तु द्विजवर्योऽस्ति दमः प्राज्ञो द्विजोत्तमः । [†नियमस्तु महाप्राज्ञो दानमेव तथैव च ॥ ५९

अग्निहोत्रिस्वरूपेण ह्यात्रेयं हि समागतः । क्षमा शान्तिस्तथा लज्जा चाहिंसा च ह्यकल्पना ॥ ६०

* क. ख. च. छ. झ. पुस्तकस्थोऽयं पाठः । † क. ख. च. छ. झ. ट. पुस्तकस्थोऽयं पाठः ।

१ क. ख. ग. च. छ. झ. ड. 'रं कान्त बहु' । २ क. ख. ग. घ. च. छ. झ. ट. ड. 'न्धभागिनः । ३ क. ख. ग. घ. च. छ. झ. ढ. सत्तमे' । ट. शृणुष्वैव । ४ ग. घ. ट. 'सा सुखं नित्यं प्रवर्तते । दा' । ५ क. ख. च. छ. झ. ढ. इदानीं केन रूपेण प्रसन्नो वै भ' । ६ क. ख. च. छ. झ. तयोर्गत' । ७ क. ख. च. छ. झ. ड. 'वदेवं लक्षं गतं तयोः । दु' । ८ क. ख. च. छ. झ. ठ 'दिभिः सर्वैरङ्गैर्युक्तः सुबु' ।

एताः सर्वाः समायाता स्त्रीरूपास्तु द्विजोत्तम]। बुद्धिः प्रज्ञा दया श्रद्धा मेधासत्कृतिशान्तयः॥ ६१
पञ्चाग्नयस्तथा पुण्याः साङ्गा वेदास्तु ते तदा। स्वस्वरूपधराश्चैते सर्वे सिद्धिं समागताः॥ ६२
अग्न्याधानादयः पुण्या अश्वमेधादयस्तथा। रूपलावण्यसंयुक्ताः सर्वाभरणभूषिताः॥ ६३
दिव्यमालाम्बरधरा दिव्यगन्धानुलेपनाः। किरीटकुण्डलोपेता दिव्याभरणभूषिताः॥
दीप्तिमन्तः स्वरूपास्ते तेजोज्वालाभिरावृताः॥ ६४
एवं धर्मः समायातः परिवारसमन्वितः। यत्र तिष्ठति दुर्वासाः क्रोधनः कालवत्तथा॥ ६५

धर्म उवाच—

कस्मात्कोपः कृतो विप्र भवांस्तपःसमन्वितः। क्रोधो हि नाशयेच्छ्रेयस्तप एव न संशयः॥ ६६
सर्वनाशकरं तस्मात्क्रोधं तपसि वर्जयेत्। स्वस्थो भव द्विजश्रेष्ठ उत्कृष्टं तपसः फलम्॥ ६७

दुर्वासा उवाच—

भवान्को हि समायात एतैर्द्विजवरैः सह। एता नार्यः प्रतिष्ठन्ति सुरूपाः समलंकृताः॥
कथयस्व ममाग्रे त्वं विस्तरेण महामते॥ ६८

धर्म उवाच—

अयं ब्राह्मणरूपेण सर्वतेजःसमन्वितः। दण्डहस्तः सुप्रसन्नः कमण्डलुधरस्तथा॥ ६९
तवाग्रे ब्रह्मचर्याख्यः सोऽयं पश्य समागतः। अन्यं पश्य त्वमेवं च दीप्तिमन्तं द्विजोत्तमम्॥७०
कपिलं पिङ्गलाक्षं च सत्यमेनं द्विजोत्तम। तादृशं पश्य धर्मात्मन्वैश्वदेवसमप्रभम्॥ ७१
यत्तपो हि त्वया विप्र सर्वदैव समाश्रितम्। एनं पश्य महाभाग तव पार्श्वे समागतम्॥ ७२
प्रसन्नवाग्दीप्तियुक्तः सर्वजीवदयापरः। दम एव तथाऽऽयातो यः पोषयति सर्वदा॥ ७३
जटिलः कर्कशः पिङ्गो ह्यतितीव्रो महाप्रभुः। नाशको हि स पापानां खड्गहस्तो द्विजोत्तमः॥७४
[*दम एष समायातः पश्य पश्य द्विजोत्तमः]। अभिशान्तो महापुण्यो नित्यक्रियासमन्वितः॥७५
नियमस्तु समायातस्तव पार्श्वे द्विजोत्तमः। अतिशुक्लो महादीप्तः शुद्धस्फटिकसंनिभः॥ ७६
पयःकमण्डलुर्करो दन्तकाष्ठधरो द्विजः। शौच एष समायातो भवतः संनिधाविह॥ ७७
अतिसाध्वी महाभागा सत्यभूषणभूषिता। सर्वाभरणशोभाङ्गी शुश्रूषेयं समागता॥ ७८
अतिधीरा प्रसन्नाङ्गी गौरी प्रहसितानना। पद्महस्ता इयं धात्री पद्मनेत्रा सुपद्मिनी॥ ७९
दिव्यैराभरणैर्युक्ता क्षमा प्राप्ता द्विजोत्तम। अतिशान्ता सुप्रतिष्ठा बहुमङ्गलसंयुताः॥ ८०
दिव्यरत्नकृताशोभा दिव्याभरणभूषिता। तव शान्तिर्महाप्राज्ञ ज्ञानरूपा समागता॥ ८१
परोपकारकरणा बहुसत्यसमाकुला। मितभाषा सदैवासौ प्रज्ञेयं ते समागता॥ ८२
प्रसन्ना सा क्षमायुक्ता सर्वाभरणभूषणा। पद्मासना सुरूपा सा श्यामवर्णा यशस्विनी॥ ८३
[ †अहिंसेयं महाभागा भवन्तं तु समागता। तप्तकाञ्चनवर्णाङ्गी रक्ताम्बरविलासिनी ]॥ ८४

* झ ट. पुस्तकस्थोऽयं पाठः। † क. ख. च. छ. झ. ड. पुस्तकस्थोऽयं पाठः।

१ क. ख. च. छ. झ. ठ. °दा। सर्वे रूपधरास्तत्र धर्मसार्धं स। २ क. च. छ.झ. °ताः। सुभवो नाम पुण्यात्मा अ°। सुभावो नाम पुण्यात्मा। अ°। ३ ग. घ. ङ. ट. माल्याम्ब°। ४ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. सत्त। ५ ज. दान। ६ क. ख. च. छ. झ. कठिनः। झ. जरठः। ७ घ. छ. ज. झ. शीतशा°। ८ ग. घ. छ. ज. ट. झ. ढ. °कर इन्द्रका°। ९ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. °वासावकल्का ते। १० क. ख. च. छ. झ. श्वेताभरणभूषिता। ११ च. पद्मानना।

सुप्रसन्ना सुमन्ना च यत्र तत्र न पश्यति । ज्ञानभावसमाक्रान्ता पुण्यहस्ता तपस्विनी ॥
[ *मुक्ताभरणशोभाढ्या निर्मला चारुहासिनी ] ॥ ८५
इयं श्रद्धा महाभाग पश्य पश्य समागता । बहुबुद्धिसमाक्रान्ता बहुज्ञानसमाकुला ॥ ८६
सुभोगा सत्त्वरूपा सा सुस्थिता चारुमङ्गला । सर्वाविध्यानसंयुक्ता लोकमाता यशस्विनी ॥ ८७
सर्वाभरणशोभाढ्या पीनश्रोणिपयोधरा । गौरवर्णा समायाता नीलवस्त्रविभूषणा ॥ ८८
इयं मेधा महामाज्ञ तवैव परिसंस्थिता । हंसचन्द्रप्रतीकाशा मुक्ताहारविलम्बिनी ॥ ८९
सर्वावरणसंभूषा सुप्रसन्ना मनस्विनी । श्वेतवस्त्रेण संवीता शतपत्रं करे कृतम् ॥ ९०
पुस्तकाक्षं करे यस्या राजमानं सदैव हि । [† एषा प्रज्ञा महाभागा भाग्यवन्तं समागता ॥ ९१
लाक्षारससमाप्रणा सुप्रसन्ना सदैव हि ] । पीतपुष्पकृतामाला हारकेयूरभूषणा ॥ ९२
मुद्रिकाकङ्कणोपेता रत्नकुण्डलमण्डिता । पीतेन वाससा देवी सदैव परिराजते ॥ ९३
त्रैलोक्यस्योपकाराय पोषणायाद्वितीयका । यस्याः शीलं द्विजश्रेष्ठ सदैव परिकीर्तितम् ॥ ९४
सेयं दया सुसंप्राप्ता तव पार्श्वे द्विजोत्तम । इयं वृद्धा महाप्राज्ञा भावभार्या तपस्विनी ॥ ९५
मम माता द्विजश्रेष्ठ धर्मोऽहं तव सुव्रत । इति ज्ञात्वा समं गच्छ मामेवं परिपालय ॥ ९६

दुर्वासा उवाच—

यदि धर्मः समायातो मत्समीपं तु सांप्रतम् । एतन्मे कारणं ब्रूहि किं ते धर्म करोम्यहम् ॥ ९७

धर्म उवाच—

कस्मात्क्रुद्धोऽसि विप्रेन्द्र किमेतैर्विप्रियं कृतम् । तन्मे त्वं कारणं ब्रूहि दुर्वासो यदि मन्यसे ॥ ९८

दुर्वासा उवाच—

नाहं कुपितो देव तदिदं कारणं शृणु । दमशौचैः सुसंक्लेशैः शोधितं कायमात्मनः ॥ ९९
लक्षवर्षप्रमाणं वै तपश्चर्या मया कृता । एवं पश्यामि मामेव न दया ते प्रवर्तते ॥ १००
तस्मात्क्रुद्धोऽस्मि तेऽद्यैव शापत्रयं ददाम्यहम् । एवं ज्ञात्वा तदा धर्मस्तमुवाच महामतिः ॥ १०१

धर्म उवाच—

यि नष्टे महाप्राज्ञ लोको नाशं समेष्यति । दुःखमूलमहं तात निकर्षामि भृशं द्विज ॥ १०२
ौख्यं पश्चादहं दद्मि यदि सत्यं न मुञ्चति । [*उपायोऽयं सुखमूलस्य पुण्यं दुःखेन लभ्यते १०३
ग्यमेवं प्रकुर्वाणः प्राणी प्राणान्विमुञ्चति] । महत्सौख्यं ददामीह परत्र च न संशयः ॥ १०४

दुर्वासा उवाच—

खं येनाऽऽप्यते तेन परं दुःखं प्रपद्यते । तत्तु मर्त्यैः परित्यज्य ह्यन्येनापि भुनक्ति च ॥ १०५
तच्छ्रेयो नैव पश्यामि त्वन्यायं हि कृतं तव । येन कायेन क्रियते भुज्यते तेन तत्सुखम् ॥ १०६
न्येन क्रियते क्लेशमन्येनापि प्रभुज्यते] । तत्सुखं को विजानाति चान्यायं धर्ममेव वा ॥ १०७
*अन्येन क्रियते क्लेशमन्येनापि सुखं पुनः] । भुनक्ति पुरुषो धर्म तत्सर्वं श्रेयसा युतम् ॥ १०८

* क. ख. च. छ. झ. पुस्तकस्थोऽयं पाठः । † क. ख. छ. झ. पुस्तकस्थोऽयं पाठः । * क. ख. ग. ङ. च. छ. पुस्तकस्थोऽयं पाठः । † क. ख. ग. ङ. च. छ. ज. झ. ढ. पुस्तकस्थोऽयं पाठः । * क. ख. च. छ. पुस्तकस्थोऽयं पाठः ।

१ क. ख. च. °नी । शुक्लाभ° । २ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. लज्जा । ३ क. ख. च. छ. झ. °स्विनी । ४ क. ख. च. छ. °तपत्रेण । ढ. °तरूपेण । ५ म. °स्तकरा पङ्कजस्था रा° । ६ क. ख. ग. घ. च. झ. ट. °णाय हिताय च । य° । छ. °णाय तथैव च । ७ क. ख. च. °ति त्वां समगच्छाम मा° । ८ क. ख. च. छ. झ. °ा । ९ क. ख. च. छ. झ. सुकाये नाऽऽप्यते नैव परदुःखं प्रसद्यते ।

पुण्यं चैव ह्यनेनापि ह्यनेन फलमश्नुते। प्रियं कृत्वा पुनः पुण्यमनेन परिभुज्यते ॥ १०९
तत्सर्वं हि सुखं मोक्तं यत्तथा यस्य लक्षणम्। धर्मशास्त्रोदितं चैव कृतं सर्वत्र नान्यथा ॥ ११०
येन कायेन कुर्वन्ति तेन दुःखं सहन्ति ते। परत्र तेन भुञ्जन्ति ह्यनेनापि तथैव वा ॥
इति ज्ञात्वा स धर्मात्मा भैवान्समवलोकयेत् ॥ १११
यथा चौरा महापापाः स्वकायेन सहन्ति ते। दुःखं च दारुणं तीव्रं तथा सुखं कथं न हि ११२

धर्म उवाच—

येन कायेन ये पापा आचरन्ति हि पातकम्। तेन पीडां सहन्त्येव पातकस्य हि तत्फलम् ११३
दण्डमेकं परं दृष्टं धर्मशास्त्रेषु पण्डितैः। तं धर्मपूर्वकं विद्धि ह्येतैर्न्यायैस्त्वमेव हि ॥ ११४

दुर्वासा उवाच—

एवं न्यायं न मन्येऽहं तथैव शृणु धर्मराट्। शापत्रयं प्रदास्यामि क्रुद्धोऽहं तव नान्यथा ॥ ११५

धर्म उवाच—

यदा क्रुद्धो महाप्राज्ञ मामेव हि क्षमस्व च। [*नैव क्षमसि विप्रेन्द्र दासीपुत्रं हि मां कुरु॥ ११६
राजानं तु न कर्तव्यं चाण्डालं च महामुने। प्रसादसुमुखो विप्र प्रणतस्य सदैव हि] ॥
दुर्वासाश्च ततः क्रुद्धो धर्मं चैव शशाप ह ॥ ११७

दुर्वासा उवाच—

राजा भव त्वं धर्माद्य दासीपुत्रश्च नान्यथा। गच्छ चाण्डालयोनिं च धर्म त्वं स्वेच्छया व्रज ११८
एवं शापत्रयं दत्त्वा गतोऽसौ द्विजसत्तमः। अनेनापि प्रसङ्गेन दृष्टो धर्मः पुरा किल ॥ ११९

सोमशर्मोवाच—

धर्मस्तु कीदृशो जातस्तेन शप्तो महात्मना। तद्भोगं तस्य मे ब्रूहि यदि जानासि भामिनि १२०

सुमनोवाच—

* भरतानां कुले जातो धर्मो भूत्वा युधिष्ठिरः। विदुरो दासिपुत्रस्तु अन्यच्चैव वदाम्यहम् ॥१२१
यदा राजा हरिश्चन्द्रो विश्वामित्रेण कर्षितः। तदा चाण्डालतां प्राप्तः स हि धर्मो महामतिः ॥
दुर्वाससो हि शापाद्वै सत्यमुक्तं तवाग्रतः ॥ १२२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सोमशर्मसुमनासंवादे द्वादशोऽध्यायः ॥ १२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९१६

---

अथ त्रयोदशोऽध्यायः।

---

सोमशर्मोवाच—

लक्षणं ब्रह्मचर्यस्य तन्मे विस्तरतो वद। कीदृशं ब्रह्मचर्यं च यदि जानासि भामिनि ॥ १

सुमनोवाच—

नित्यं सत्ये रतिर्यस्य पुण्यात्मा सुप्रुतां व्रजेत्। ऋतौ प्राप्ते व्रजेन्नारीं स्वीयां दोषविवर्जितः ॥२
स्वकुलस्य सदाचारं कदा नैव विमुञ्चति। एतत्ते हि समाख्यातं गृहस्थस्य द्विजोत्तम ॥ ३

---

* क. ख. ग. घ. च. झ. ट. ढ. पुस्तकस्थोऽयं पाठः।

---

१ ग. ह्यन्येना। २ क. ख. ग. घ. च. छ. ज. झ. ट. ढ. 'निं त्वं मच्छापाद्द्विज नान्यथा ए' । ३ क. ख. ज. छ. झ. स्वच्छतां।

ब्रह्मचर्यं मया प्रोक्तं गृहिणां मुक्तिदं किल । यतीनां तु प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ ४
दमसत्यसमायुक्तः पापाद्भीतस्तु सर्वदा । भार्यासङ्गं वर्जयित्वा ध्यानज्ञानप्रतिष्ठितः ॥ ५
यतीनां ब्रह्मचर्यं च समाख्यातं तवाग्रतः । वानप्रस्थस्य वक्ष्यामि तन्मे निगदतः शृणु ॥ ६
आचारेण प्रवर्तेत कामक्रोधविवर्जितः । प्राणिनामुपकाराय संस्थित उञ्छवृत्तिमान् ॥ ७
वनस्थस्य समाख्यातं सत्यमेव वदाम्यहम् । परद्रव्येषु लोलत्वात्परस्त्रीषु तथैव च ॥ ८
दृष्ट्वा मतिर्न यस्य स्यात्स सत्यः परिकीर्तितः । दानमेव प्रवक्ष्यामि येन जीवन्ति मानवाः ॥ ९
आत्मसौख्यं प्रतीच्छेद्यः स गच्छेत्परमं पदम् । अन्नस्यापि महादानं सुखस्य मधुरस्य च ॥१०
ग्रासमात्रं तथा देयं क्षुधार्ताय न संशयः । दत्ते सति महत्पुण्यममृतं सोऽश्नुते सदा ॥ ११
दिने दिने प्रदातव्यं यथाविभवविस्तरम् । वचनं च तृणं शय्यां गृहच्छायां सुशीतलाम् ॥ १२
भूमिमपस्तथा चान्नं प्रियवाक्यमनुत्तमम् । आसनं वसनं पाद्यं कौटिल्येन विवर्जितः ॥ १३
आत्मनो जीवनार्थाय नित्यमेवं करोति यः । [*देवान्पितॄन्समभ्यर्च्य एवं दानं ददाति यः] ॥
इत्येवं मोदतेऽसौ वै परत्रेह तथैव च ॥ १४
अवन्ध्यं दिवसं यो वै दानाध्ययनकर्मभिः । प्रकुर्यान्मानुषो भूत्वा स देवो नात्र संशयः ॥ १५
नियमं च प्रवक्ष्यामि धर्मसाधनमुत्तमम् । देवानां ब्राह्मणानां च पूजास्वभिरतोऽथ यः ॥ १६
नित्यं नियमसंयुक्तो दानैर्व्रतेषु सुव्रत । उपकारेषु सर्वेषु नियमश्च प्रकीर्तितः ॥ १७
क्षमारूपं प्रवक्ष्यामि श्रूयतां द्विजसत्तम । पराक्रोशं हि संश्रुत्य ताडिते सति केनचित् ॥ १८
क्रोधं चैव न गच्छेच्च ताडितोऽपि न ताडयेत् । सहिष्णुः स्यात्स धर्मात्मा न हि रागं प्रयाति च ॥१९
समश्नाति परं सौख्यमिह चामुत्र तेन च । एवं क्षमा समाख्याता शौचमेवं वदाम्यहम् ॥ २०
स बाह्याभ्यन्तरे यो वै शुद्धो रागविवर्जितः । स्नानाचमनकैश्चैव व्यवहारेण वर्तते ॥ २१
शौचमेवं समाख्यातमहिंसां तु वदाम्यहम् । तृणमेव ह्यकार्यार्द्धे छेत्तव्यं न विजानता ॥ २२
अहिंस्रः संयतो भूयाद्यथाऽऽत्मनि तथा परे । शान्तिमेवं प्रवक्ष्यामि शान्त्या सुखं समश्नुते ॥२३
शान्तिरेषा प्रकर्तव्या खेदं नैव परिव्रजेत् । भूतवैरं विसृज्यैव मनसा न प्रकाशयेत् ॥ २४
[*एवं शान्तिः समाख्याताऽप्यस्तेयं च वदाम्यहम् । परस्वं नैव हर्तव्यं परयोषा तथैव च ॥२५
वचनैर्मनोभिः कायैश्च न प्रमेयं प्रकाशयेत् । दममेवं प्रवक्ष्यामि तवाग्रे च द्विजोत्तम ॥ २६
दमनादिन्द्रियाणां वै मनसा नित्यं प्रकाशयेत्] । औद्धत्यं नाशयेत्तेषां सचैतन्यो भवेत्सदा २७
शुश्रूषां हि प्रवक्ष्यामि धर्मशास्त्रेषु यादृशी । पूर्वाचार्यैर्यथा प्रोक्ता तथाऽहं प्रवदाम्यहम् ॥ २८
वाचा देहेन मनसा गुरुकार्यं प्रसाधयेत् । जायतेऽनुग्रहो यत्र शुश्रूषा सा निगद्यते ॥ २९
साङ्गो धर्मः समाख्यातस्तवाग्रे द्विजसत्तम । अन्यच्च ते प्रवक्ष्यामि श्रोतुमिच्छसि यत्पते ॥ ३०
ईदृशे चापि धर्मे तु वर्तते यो नरः सदा । संसारे तस्य संभूतिः पुनरेवं न जायते ॥ ३१
स्वर्गं गच्छति धर्मेण सत्यं सत्यं वदाम्यहम् । एवं ज्ञात्वा महाप्राज्ञ धर्ममेवं व्रजस्व हि ॥ ३२
सर्वं हि प्राप्यते कान्त यदसाध्यं महीतले । धर्मप्रसादतस्तस्मात्कुरु वाक्यं ममैव हि ॥ ३३

* क. ख. ङ. च. छ. झ. पुस्तकस्थोऽयं पाठः । * ग. घ. पुस्तकस्थोऽयं पाठः ।

१ छ. झ. ढ. °त । तप एव प्रव° । २ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. उद्यमाकृतिः । ३ क. ख. ग. घ. च. छ. झ. ट. °नू । तप एव स° । ४ क. ख. ग. घ. ङ. च. छ. ज. झ. ट.ठ. ड. स इहैव परत्र च । अ° । ५ अ. °यः । द्रव्येण मो° । ६ क. ख. च. ड. °नजाते° । ७ ङ. ढ. °ते । समाचीर्णेन ध° ।

भार्यायास्तु वचः श्रुत्वा सोमशर्मा सुबुद्धिमान्। [*पुनः प्रोवाच तां भार्यां सुमनां धर्मवादिनीम्] १४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुमनोपाख्याने त्रयोदशोऽध्यायः ॥ १३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९५०

---

अथ चतुर्दशोऽध्यायः ।

---

सोमशर्मोवाच—

एवंविधं महापुण्यं धर्माख्यानमनुत्तमम् । कथं जानासि भद्रं ते कस्माच्चैव श्रुतं त्वया ॥ १

सुमनोवाच—

भार्गवाणां कुले जातः पिता मम महामते । च्यवनो नाम विख्यातः सर्वज्ञानविशारदः ॥ २

तस्याहमभवं कन्या प्राणादपि च वल्लभा । यत्र यत्र व्रजत्येष तीर्थारामेषु सुव्रत ॥ ३

सभासु च मुनीनां तु देवतायतनेषु च । तेन सार्धं व्रजाम्येका क्रीडमाना सदैव हि ॥ ४

कौशिकान्वयसंभूतो वेदशर्मा महामतिः । पितुर्मम सखा शीघ्रमटमानः समागतः ॥ ५

दुःखेन महताऽऽविष्टश्चिन्तयानो मुहुर्मुहुः । तमागतं महात्मानमुवाच च पिता मम ॥ ६

भवन्तं दुःखसंतप्तमिति जानामि सुव्रत । कस्माद्दुःखी भवाञ्जातस्तन्मे त्वं कारणं वद ॥ ७

एवं वाक्यं ततः श्रुत्वा च्यवनस्य महात्मनः । तमुवाच महात्मानं पितरं मम सुव्रतः ॥ ८

वेदशर्मा महाप्राज्ञः सर्वं दुःखस्य कारणम् । मम भार्या महासाध्वी पतिव्रतपरायणा ॥ ९

अपुत्रा सा हि संजाता मम वंशो न विद्यते । एतत्ते कारणं प्रोक्तं पृच्छसे त्वं तु यच्च माम् १०

एतस्मिन्नन्तरे प्राप्ते कश्चित्सिद्धः समागतः । मम पित्रा तथा तेन ह्युत्थाय वेदशर्मणा ॥ ११

द्वाभ्यामेवाप्यसौ सिद्धः पूजितो भक्तिपूर्वकम् । उपचारैस्तु भोज्याद्यैर्वचनैर्मधुराक्षरैः ॥ १२

द्वाभ्यामन्तर्गतं पृष्टं पूर्वोक्तं च यथा त्वया । उभौ तौ प्राह धर्मात्मा ससखं पितरं मम ॥ १३

धर्मस्य कारणं सर्वं मयोक्तं ते यथा किल ॥ १४

धर्मेण प्राप्यते पुत्रो धनं धान्यं तथा स्त्रियः । ततस्तेन कृतं धर्मं संपूर्णं वेदशर्मणा ॥ १५

तस्माद्धर्मात्सुसंजातं महत्सौख्यं सुपुत्रकम् । तेन सङ्गप्रसङ्गेन ममैष मतिनिश्चयः ॥ १६

यथा कान्त तव प्रोक्तं मयैव परमं शुभम् । तस्माच्छ्रुतं महासिद्धात्सर्वसंदेहनाशनम् ॥

विप्रधर्मं समाश्रित्य ह्यनुवर्तस्व सर्वदा ॥ १७

सोमशर्मोवाच—

धर्मेण कीदृशो मृत्युर्जन्म चैव वदस्व मे । उभयोर्लक्षणं कान्ते तत्सर्वं हि यथागमम् ॥ १८

सुमनोवाच—

सत्यशौचक्षमाशान्तितीर्थपुण्यादिकैस्तथा । धर्मश्च पालितो येन तस्य मृत्युं वदाम्यहम् ॥ १९

रोगो न जायते तस्य न च पीडा कलेवरे । न श्रमो न च वै ग्लानिर्न च स्वेदो भ्रमस्तथा॥२०

दिव्यरूपधरा भूत्वा गन्धर्वा ब्राह्मणास्तथा । वेदपाठसमायुक्ता गीतज्ञानविशारदाः ॥ २१

---

* छ.पुस्तकस्थोऽयं पाठः ।

१ ङ. छ. 'स्याहं प्रियकन्या वै पित्रा सार्धं व्रजाम्यहम् । य' । ढ. 'स्याहं दैत्यकन्याभिः पित्रा सार्धं व्रजाम्यहम् । य' । २ क. ख ङ. च. छ. झ. 'पहारै' ।

तस्य पार्श्वे समायान्ति स्तुतिं कुर्वन्ति चातुलाम् । स्वस्थः सुखासने युक्तो देवपूजागतः किल ॥
तीर्थे च लभते प्राज्ञः स्नानार्थं धर्मतत्परः । अग्न्यागारे गवां स्थाने देवतायतनेषु च ॥ २३
आरामे च तडागे वा यत्राश्वत्थो वटस्तथा । प्लक्षवृक्षं समाश्रित्य श्रीवृक्षं वा तथा पुनः ॥ २४
अश्वस्थानं समाश्रित्य गजस्थानगतो नरः । अशोकं चूतवृक्षं च समाश्रित्य यदा स्थितः ॥ २५
संनिधौ ब्राह्मणानां च राजवेश्मगतोऽथ वा । रणभूमिं समाश्रित्य पूर्वं यत्र मृतो भवेत् ॥ २६
मृत्युस्थानानि पुण्यानि केवलं धर्मकारणम् । गोगृहं तु सुसंप्राप्य तथा चामरकण्टकम् ॥ २७
शुद्धधर्मकरो नित्यं धर्मात्मा धर्मवत्सलः । एवं स्थानं समाप्नोति यदा मृत्युं समाश्रितः ॥ २८
मातरं पश्यते पुण्यां पितरं च नरोत्तमम् । भ्रातरं श्रेयसा युक्तमन्यं स्वजनबान्धवम् ॥ २९
बन्दीजनैस्तथा पुण्यैः स्तूयमानः पुनः पुनः । पापिष्ठं नैव पश्येत नान्यं शूद्रादिकं पुनः ॥ ३०
गीतं गायन्ति गन्धर्वाः स्तुवन्ति स्तावकाः स्तवैः । मन्त्रपाठैस्तथा विप्रा माता स्नेहेन पूजयेत् ३१
पिता स्वजनवर्गाश्च धर्मात्मानं महामतिम् । एवं मृत्युः समाख्यातः पुण्यस्थानेषु वै प्रभो ॥ ३२
प्रत्यक्षान्पश्यते दूतान्हास्यस्नेहसमन्वितान् । न च स्वप्नेन मोहेन क्लेशयुक्तेन नैव च ॥ ३३
धर्मराजो महाप्राज्ञो भवन्तं तु समाह्वयेत् । एह्येहि त्वं महाभाग यत्र धर्मः स तिष्ठति ॥ ३४
तस्य नो मोहसंप्राप्तिर्न ग्लानिः स्मृतिविभ्रमः । जायते नात्र संदेहः प्रसन्नात्मा भविष्यति ३५
ज्ञानविज्ञानसंपन्नः स्मरेदेवं जनार्दनम् । तैः सार्धं तु प्रयात्येवं संतुष्टो हृष्टमानसः ॥ ३६
एकत्वं जायते तस्य त्यजतः स्वं कलेवरम् । दशमद्वारमाश्रित्य ह्यात्मा तस्य स गच्छति ॥ ३७
शिबिका तस्य चाऽऽयाति हंसयानं मनोहरम् । विमानैरेव संयाति हरेर्धाम ह्यनुत्तमम् ॥ ३८
छत्रेण ध्रियमाणेन चामरैर्व्यजनैस्तथा । वीज्यमानः स धर्मात्मा [*पुण्यैरेव समन्ततः ॥ ३९
गीयमानस्तु धर्मात्मा] स्तूयमानश्च पण्डितैः । बन्दिभिश्चारणैर्दिव्यैर्ब्राह्मणैर्वेदपारगैः ॥ ४०
साधुभिः स्तूयमानस्तु सर्वसौख्यसमन्वितः । यथा दानप्रभावेन फलमाप्नोति तत्र सः ॥ ४१
आरामवाटिकामध्ये स प्रयाति सुखेन वै । अप्सरोभिः समाकीर्णो दिव्याभिर्मङ्गलैर्युतः ॥ ४२
देवैः प्रस्तूयमानस्तु धर्मराजं प्रपश्यति । देवाश्च धर्मसंयुक्ता जग्मुः संमुखमेव तम् ॥ ४३
[*एह्येहि वै महाभाग भुङ्क्ष्व भोगान्मनोनुगान् । एवं स पश्यते धर्मं सौम्यरूपं महामतिम् ॥ ४४
स्वस्य पुण्यस्य भावेन भुञ्जते स्वर्गमेव सः ] । भोगक्षयात्स धर्मात्मा पुनर्जन्म प्रयाति वै ॥ ४५
निजधर्मप्रसादात्स कुलं पुण्यं प्रयाति वै । ब्राह्मणस्य तु पुण्यस्य क्षत्रियस्य तथैव च ॥ ४६
धनाढ्यस्य सुपुण्यस्य वैश्यस्यैव महामते । धर्मेण मोदते तत्र पुनः पुण्यं करोति सः ॥ ४७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुमनोपाख्याने चतुर्दशोऽध्यायः ॥ १४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३९९७

अथ पञ्चदशोऽध्यायः ।

सोमशर्मोवाच—

पापिनां मरणं भद्रे कीदृशैर्लक्षणैर्युतम् । तन्मे त्वं विस्तराद्ब्रूहि यदि जानासि भामिनि ॥ १

* क. ख. ङ. च. छ. झ. पुस्तकस्थोऽयं पाठः । * क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड.ढ. पुस्तकस्थोऽयं पाठः ।

१ म. यत्रस्थोऽपि वं' । २ म. 'श्वत्थस्थानमा' । ३ म. 'त्य गुरुस्था' । ४ म. 'द्धकर्म' । ५ क. ख. ङ. च. छ. झ. ढ. 'त मातृपित्रादि' । ङ. 'त मातृपुत्रादि' । ६ म. प्रत्याख्यान्य' ।

सुमनोवाच—

श्रूयतामभिधास्यामि तस्मात्सिद्धाच्छ्रुतं मया । पापिनां मरणे कान्त यादृशं लिङ्गमेव च ॥
महापातकिनां चैव स्थानं चेष्टां वदाम्यहम् ॥ २
विण्मूत्रामेध्यसंयुक्तां भूमिं पापिसमन्विताम् । स तां प्राप्य सुदुष्टात्मा प्राणान्दुःखेन मुञ्चति ॥३
चाण्डालभूमिमासाद्य मरणं याति दुःखितः । गर्दभैरावृतां भूमिं वेश्यागेहं समाश्रितः ॥ ४
चर्मकारगृहं गत्वा निधनायोपगच्छति । अस्थिचर्मनखैः पूर्णामाश्रितां पापकिल्बिषैः ॥ ५
तां प्राप्य चैव दुष्टात्मा मृत्युं याति स निश्चितम् । अन्यां पापसमाचारां प्राप्य मृत्युं स गच्छति ॥ ६
अथ चेष्टां प्रवक्ष्यामि दूतानां तु तमिच्छताम् । भैरवान्दारुणान्घोरानतिकृष्णान्महोदरान् ॥ ७
[*पिङ्गाक्षान्पीतनीलांश्च ह्यतिश्वेतान्महोदरान्] । अत्युच्चान्विकरालांश्च शुष्कमांसत्वचोपमान् ८
रौद्रदन्तान्करालास्यान्सिंहास्यान्सर्पहस्तकान् । स तान्दृष्ट्वा प्रकम्पेत स्विद्यते च मुहुर्मुहुः ॥ ९
खिद्यमानस्य या चेष्टा तामेवं प्रवदाम्यहम् । परद्रव्यापहरणं परभार्याविडम्बनम् ॥ १०
ऋणं परस्य पूर्वं च गृहीतं यत्तु पापिभिः । परतो न प्रदत्तं हि लोभस्वादेन मोहितैः ॥ ११
अन्यमेव महापापं कुमतिग्रहमेव च । [+कण्ठमायान्ति ते सर्वे म्रियमाणस्य तस्य च] ॥ १२
यानि कानि च पापानि पूर्वमेव कृतानि च । आयान्ति कण्ठमूलं ते महापापस्य नान्यथा ॥१३
दुःखमुत्पादयन्त्येते कफबन्धेन दारुणम् । पीडाभिर्दारुणाभिश्च कण्ठे घुरघुरायते ॥ ॥१४
रोदते कम्पतेऽत्यर्थं मातरं पितरं पुनः । [† स्मरते भ्रातरस्तत्र भार्यां पुत्रान्पुनः पुनः] ॥ १५
पुनर्विस्मरणं याति महापापेन मोहितः । तस्य प्राणा न गच्छन्ति बहुपीडासमाकुलाः ॥ १६
एजते ताम्यते चैव मूर्छते च पुनः पुनः । एवं पीडासमायुक्तो दुःखं भुङ्क्तेऽतिमोहितः ॥ १७
तस्य प्राणाः सुदुःखेन महाकष्टैः प्रचालिताः । भयं घोरं समाश्रित्य शृणु कान्त प्रयान्ति ते ॥ १८
एवं प्राणी सदा मुग्धो लोभमोहसमन्वितः । नीयते यमदूतैस्तु तस्य दुःखं वदाम्यहम् ॥ १९
अङ्गारसंचये मार्गे कृष्यमाणो हि नीयते । दह्यमानः सुदुष्टात्मा चेष्टमानः पुनः पुनः ॥ २०
यत्राऽऽतपो महातीव्रो द्वादशादित्यतापितः । नीयते तेन मार्गेण संतप्तः सूर्यरश्मिभिः २१
पर्वतेष्वेव दुर्गेषु च्छायाहीनेषु दुर्मतिः । नीयते तेन मार्गेण क्षुधातृष्णाप्रपीडितः ॥ २२
स दूतैर्हन्यमानस्तु [*गदादण्डैः परश्वधैः । कशाभिस्ताड्यमानस्तु निन्द्यमानस्तु दूतकैः ॥ २३
ततः शीतमये मार्गे वायुना सेव्यते पुनः । तेन शीतेन संदुःखी भूत्वा यान्ति न संशयः ॥
आकृष्यमाणो दूतैस्तु] नानादुर्गेषु नीयते ॥ २४
एवं पापी स दुष्टात्मा [† देवब्राह्मणनिन्दकः । सर्वपापसमायुक्तो नीयते यमकिंकरैः ॥ २५
यमं पश्यति दुष्टात्मा] कृष्णाञ्जनचयोपमम् । तमुग्रं दारुणं भीमं यमदूतैः समावृतम् ॥ २६
सर्वव्याधिसमाकीर्णं चित्रगुप्तसमन्वितम् । आरूढं महिषं देवं धर्मराजं द्विजोत्तम ॥ २७
दंष्ट्राकरालमत्युग्रं तस्याऽऽस्यं कालसंनिभम् । पीतवासं महाहस्तं रक्तगन्धानुलेपनम् ॥ २८
रक्तमाल्यकृताभूषं गदाहस्तं भयंकरम् । एवंविधं महाकायं यमं पश्यति दुर्मतिः ॥ २९

* क. ख. ङ. च. छ पुस्तकस्थोऽयं पाठः । + क ख. ङ. च. छ. ह. ढ. पुस्तकस्थोऽयं पाठः । † ङ.क. ख. छ.झ.ट. ड. ढ.पुस्तकस्थोऽयं पाठः । * क.ख.ङ.च छ.झ. पुस्तकस्थोऽयं पाठः । † क. ख. ग. घ. ङ.च. छ.झ.ढ. पुस्तकस्थोऽयं पाठः ।

१ क. ख. ङ. च. छ.झ. °म् । लिप्साममेध्यसंक्लेदैर्भूमिं । २ ज. कुमतिप्रदमे° । ३ क. ख च. छ. झ. °लाः । पतते कम्पते चै° । ४ ढ. °ताः । अपानमार्गमा° । ५ ज. ट. ड. मार्गे । ६ क. ख. ङ. च. छ. झ. ड. ढ. °मं भीम° ।

तं दृष्ट्वा समनुप्राप्तं सर्वधर्मबहिष्कृतम् । यमः पश्यति तं दुष्टं पापिष्ठं धर्मसंकटम् ॥ १०
शोतयेत्तं महादुःखै पीडाभिर्दारुणायुधैः । यावद्युगसहस्रं तु तावत्कालं प्रपच्यते ॥ ११
यातनासु च नानासु पच्यते च पुनः पुनः । नारकीं याति वै योनिं कृमिकीटेषु पापकृत् ॥ १२
अमेध्ये पच्यते नित्यं हाहाभूतो विचेतनः । मरणं च स पापात्मा एवं याति सुनिश्चितम् ॥ १३
एवं पापस्य तं भोगं भुङ्क्ते चैव स दुर्मतिः । पुनर्जन्म प्रवक्ष्यामि यासु योनिषु जायते ॥ १४
श्वानयोनिं तु संप्राप्य भुङ्क्ते वै पापकं पुनः । व्याघ्रो भवति दुष्टात्मा रासभत्वं व्रजेत्पुनः ॥ १५
मार्जारशूकरीं योनिं सर्पयोनिं तथैव च । नानाभेदासु सर्वासु स गच्छति पुनः पुनः ॥ १६
पापपक्षिषु संयाति सर्वासु च महत्सु च । चाण्डालभिल्लयोनिं च पुलिन्दीं याति वै तथा ॥ १७
एतत्ते सर्वमाख्यातं पापिनां जन्म चैव हि । मरणे शृणु कान्त त्वं चेष्टां तेषां सुदारुणाम् ॥ १८
पापपुण्यसमाचारस्तवाग्रे कथितो मया । अन्यच्चैव प्रवक्ष्यामि यद्यत्पृच्छसि सुव्रत ॥ १९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुमनोपाख्याने पञ्चदशोऽध्यायः ॥ १५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४०३६

---

अथ षोडशोऽध्यायः ।

---

सोमशर्मोवाच—

सर्वं देवि त्वयाऽऽख्यातं धर्मसंस्थानमुत्तमम् । कथं पुत्रमहं विन्द्यां सर्वज्ञं गुणसंयुतम् ॥ १
वद त्वं मे महाभागे यदि जानासि सुव्रते । दानधर्मादिकं भद्रे परत्रेह न संशयः ॥ २

सुमनोवाच—

वसिष्ठं गच्छ धर्मज्ञं तं प्रार्थय महामुनिम् । तस्मात्प्राप्स्यसि वै पुत्रं धर्मज्ञं धर्मवत्सलम् ॥ ३

सूत उवाच—

एवमुक्ते ततो वाक्ये सोमशर्मा द्विजोत्तमः । एवं करिष्ये कल्याणि तव वाक्यं न संशयः ॥ ४
एवमुक्त्वा जगामासौ सोमशर्मा द्विजोत्तमः । वसिष्ठं सर्ववेत्तारं दीप्यमानं तपश्चरम् ॥ ५
गङ्गातीरे स्थितं पुण्यमाश्रमस्थं द्विजोत्तमम् । तेजोज्वालासमाकीर्णं द्वितीयमिव भास्करम् ॥ ६
राजमानं महात्मानं ब्रह्मण्यं च द्विजोत्तमम् । भक्त्या ननाम विप्रेन्द्रं दण्डवत्तं पुनः पुनः ॥ ७
तमुवाच महातेजा ब्रह्मसूनुरकल्मषः । उपाविशाऽऽसने पुण्ये सुखेन सुमहामते ॥ ८
एवमुक्त्वा स योगीन्द्रः पुनः प्राह तपोधनम् । गृहपुत्रेषु ते वत्स दारभृत्येषु सर्वदा ॥ ९
क्षेममस्ति महाभाग पुण्यकर्मसु चाग्निषु । निरामयोऽसि चाङ्गेषु धर्मं पालयसे सदा ॥ १०
किं करोमि प्रियं कामं सुप्रियं ते द्विजोत्तम । एवं संभाष्य तं विप्रं विरराम स कुम्भजः ॥ ११
एवमुक्तो महाप्राज्ञः सोमशर्मा मुनिस्तदा । तमुवाच महात्मानं वसिष्ठं तपतां वरम् ॥ १२

सोमशर्मोवाच—

भगवञ्छ्रूयतां वाक्यं सुप्रसन्नेन चेतसा । यदि मे सुप्रियं कार्यं त्वयैव मुनिपुङ्गव ॥
मम प्रश्नार्थसंदेहं विच्छेदय द्विजोत्तम ॥ १३

---

१ क. ख. च. कर्मकण्टकम् । २ म. शामये॰ । ३ क. ख. च. छ. झ. ढ. ॰मिकोटिषु । ४ क. ख. ङ. च. छ. झ. ॰सु तिर्यक्षु च पु॰ । ५ म. ॰क्षिशुचोत्पात्तिं पापाश्विन्याशुचाऽपि हि । च॰ । ६ क. ख. ग. घ. ङ. च. छ. झ. ट. ढ. ॰रं दिव्यं तं तपतां वर॰ । ७ छ. ब्रह्मश्रिया द्वि॰ । ढ. ब्रह्माश्रयं द्वि॰ । ग. घ. ज. ट. ढ. ब्रह्मप्रियं द्वि॰ ।

दारिद्र्यं केन पापेन पुत्रसौख्यं कथं न हि । एतं मे संशयं तात कस्मात्पापाद्वदस्व मे ॥ १४
महापापेन संमुग्धः प्रियया बोधितो द्विज । तयाऽहं प्रेषितस्तात तव पार्श्वे महामते ॥ १५
तत्सर्वं त्वं समाचक्ष्व सर्वसंदेहनाशनम् । मुक्तिदाता भवस्व त्वं मम संसारबन्धनात् ॥ १६

वसिष्ठ उवाच—

पुत्रा मित्राण्यथ भ्राता भार्या स्वजनबान्धवाः । पञ्च भेदास्तु संबन्धात्पुरुषस्य भवन्ति हि ॥ १७
तद्वै सुमनया प्रोक्तं पूर्वमेव तवाग्रतः । ऋणसंबन्धिनः सर्वे ते कुपुत्रा द्विजोत्तम ॥ १८
पुत्रस्य लक्षणं पुण्यं तवाग्रे प्रवदाम्यहम् । पुण्यप्रसक्तो यस्याऽऽत्मा सत्यधर्मरतः सदा ॥ १९
बुद्धिमाञ्ज्ञानसंपन्नस्तपस्वी वाग्विदां वरः । सर्वकर्मसु धीर्धीरो वेदाध्ययनतत्परः ॥ २०
सर्वशास्त्रप्रवक्ता च देवब्राह्मणपूजकः । याजकः सर्वयज्ञानां ध्यानी त्यागी प्रियंवदः ॥ २१
विष्णुध्यानपरो नित्यं शान्तो दान्तो जपी सदा । पितृभक्तिपरो नित्यं सर्वस्वजनवत्सलः ॥ २२
कुलस्य तारको विद्वान्कुलस्य परितोषकः । एवंगुणैः सुसंयुक्तः सुपुत्रः सुखदायकः ॥ २३
अन्ये संबन्धसंयुक्ताः शोकसंतापदायकाः । एतादृशेन किं कार्यं फलहीनेन तेन च ॥ २४
आयान्ति यान्ति ते सर्वे तापं दत्त्वा सुदारुणम् । पुत्ररूपेण ते सर्वे संसारे दुःखदायकाः ॥ २५
पूर्वजन्मकृतं कर्म यत्त्वया परिपालितम् । तच्च सर्वं प्रवक्ष्यामि श्रूयतामद्भुतं पुनः ॥ २६

वसिष्ठ उवाच—

भवाञ्शूद्रो महाप्राज्ञ पूर्वजन्मनि नान्यथा । कृषिकर्ता ज्ञानहीनो महालोभेन संयुतः ॥ २७
एकभार्योऽन्यविद्वेषी बहुपुत्रो ह्यदत्तवान् । धर्मं नैव प्रजानासि सत्यं नैव परिश्रुतम् ॥ २८
[*दानं नैव त्वया दत्तं शास्त्रं नैव परिश्रुतम् ।] कृता चैव त्वया तीर्थे नैव यात्रा महामते ॥ २९
एकं कृतं त्वया विप्र कृषिमार्गं पुनः पुनः । पशूनां पालनं पूर्वं गवां चैव द्विजोत्तम ॥ ३०
महिषीणां च ह्यश्वानां पालनं च पुनः पुनः । एवं पूर्वं कृतं कर्म त्वया वै द्विजसत्तम ॥ ३१
विपुलं तु धनं तद्वल्लोभेन परिसंचितम् । तेन द्रव्येण पुण्यं च न कृतं तु त्वया कदा ॥ ३२
पात्रे दानं न दत्तं तु दृष्ट्वा दुर्बलमेव च । कृपां कृत्वा न दत्तं तु भवता धनमेव हि ॥ ३३
गोमहिष्यादिकं सर्वं पशूनां संचितं त्वया । विक्रयित्वा धनं विप्र संचितं विपुलं त्वया ॥ ३४
तक्रं घृतं तथा क्षीरं विक्रयित्वा ततो दधि । दुष्कामं चिन्तितं विप्र मोहितो विष्णुमायया ॥ ३५
कृते महार्घमेवात्र ह्यन्नं ब्राह्मणसत्तम । निर्दयेन त्वया दानं न दत्तं तु कदा किल ॥ ३६
देवानां पूजनं विप्र भवता न कृतं कदा । प्राप्य पर्वाणि विप्रेभ्यो द्रव्यं नैव समर्पितम् ॥ ३७
श्राद्धकालं तु संप्राप्य श्रद्धया न कृतं त्वया । भार्या वदति ते साध्वी दिनं चैतत्समागतम् ३८
श्वशुरश्राद्धकालश्च श्वश्र्वाश्चैव महामते । श्रुत्वा त्वं तद्वचस्तस्या गृहं त्यक्त्वा पलायसे ॥ ३९
धर्ममार्गं न दृष्टं ते श्रुतं नैव कदा त्वया । लोभो माता पिता भ्राता लोभः स्वजनबान्धवाः ४०
पालितं लोभमेवैकं त्यक्त्वा धर्मं सदैव हि । तस्माद्दुःखी भवाञ्जातो दारिद्र्येणातिपीडितः ॥ ४१
दिने दिने महातृष्णा हृदये ते प्रपद्यते । यदा यदा गृहे द्रव्यं वृद्धिमायाति ते सदा ॥ ४२

---

* क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः ।

---

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. भावेन । २ क. ख. ग. घ. ङ. च. छ. झ. ढ. समातुरः । छ. समागतः । ३ क. ख. ग घ. ङ. च. छ. ज. झ. ट. ड. ढ. अन्ये । ४ क. घ. ट. °नां दानत्या° । ५ क. ख. ङ. च. छ. झ. ड. ढ. दाता । ६ क. ख. ङ. च. छ. झ. औदासीन्येन । ७ क. ख. घ. ङ. च. छ. झ. ट. ढ. °भार्यः सदा द्वे° । ८ क. ख. ङ. च. छ. झ. ढ. प्रवर्धते ।

ृष्णया दह्यमानस्तु तथा त्वं वह्निरूपया । रात्रौ वा सुप्तसुप्तस्तु निश्चितो हि प्रचिन्तसि ॥ ४३
देनं प्राप्य महामोहैर्व्यापितोऽसि सदैव हि । सहस्रं लक्षकं कोटिः कदा ह्यर्बुदमेव च ॥ ४४
भविष्यति कदा खर्वो निखर्वश्चाथ मे गृहे । एवं सहस्रं लक्षं च कोटिरर्बुदमेव च ॥ ४५
खर्वो निखर्वः संजातस्तृष्णा नैव प्रगच्छति । तत्र कार्यं परित्यज्य वृद्धिमायाति सर्वदा ॥ ४६
ैव दत्तं हुतं चापि प्रभुक्तं नैव च त्वया । खनितं भूमिमध्ये तु क्षिप्तं पुत्रा न जानते ॥ ४७
अन्यमेवमुपायं तु द्रव्यागमनकारणात् । कुरुषे सर्वदा विप्र लोकान्पृच्छसि बुद्धिमान् ॥ ४८
खनित्रं मज्जनं वादं धातुवादमतः परम् । पृच्छमानो भ्रमस्येकस्तृष्णया परिमोहितः ॥ ४९
*स्पर्शं चिन्तयसे नित्यं कल्पान्सिद्धिप्रदायकान् । प्रवेशं विवराणां तु चिन्तमानः प्रगच्छसि ५०
तृष्णानलेन दुःखेन सुखं नैव प्रगच्छसि । तृष्णानलेन संदीप्तो हाहाभूतो विचेतनः ॥ ५१
एवं मुग्धोऽसि विप्रेन्द्र गतस्त्वं कालवश्यताम् । दारापुत्रेषु तद्द्रव्यं पृच्छमानेषु वै त्वया ॥ ५२
कथितं नैव दत्तं च प्राणांस्त्यक्त्वा गतो यमम् । एवं सर्वं मयाऽऽख्यातं वृत्तान्तं तव पूर्वकम् ॥ ५३
अनेन कर्मणा विप्र निर्धनोऽसि दरिद्रवान् । संसारे यस्य सत्पुत्रा भक्तिमन्तः सदैव हि ॥ ५४
सुशीला ज्ञानसंपन्नाः सत्यधर्मरताः सदा । संभवन्ति गृहे तस्य यस्य विष्णुः प्रसीदति ॥ ५५
धनं धान्यं कलत्रं तु पुत्रपौत्रमनन्तकम् । स भुङ्क्ते मर्त्यलोकेऽपि यस्य विष्णुः प्रसन्नवान् ॥ ५६
विना विष्णोः प्रसादेन दारान्पुत्रान्न चाऽऽप्नुयात् । सुजन्म च कुलं विप्र तद्विष्णोः परमं पदम् ५७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुमनोपाख्याने षोडशोऽध्यायः ॥ १६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४०९३

---

अथ सप्तदशोऽध्यायः ।

---

सोमशर्मोवाच—

पूर्वजन्मकृतं कर्म त्वयाऽऽख्यातं च मे मुने । शूद्रत्वेन च विप्रेन्द्र मयैतत्परिवर्जितम् ॥ १
विप्रत्वं हि मया प्राप्तं कथं च द्विजसत्तम । तत्सर्वं कारणं ब्रूहि ज्ञानविज्ञानपण्डित ॥ २

वसिष्ठ उवाच—

यत्त्वया चेष्टितं पूर्वं कर्म धर्माश्रितं द्विज । तदहं संप्रवक्ष्यामि श्रूयतां यदि मन्यसे ॥ ३
ब्राह्मणः कश्चिदनघः सदाचारः सुपण्डितः । विष्णुभक्तस्तु धर्मात्मा नित्यं धर्मपरायणः ॥ ४
यात्राव्याजेन तीर्थानां भ्रमत्येकः स मेदिनीम् । अटमानः समायातस्तव गेहं महामुनिः ॥ ५
याचितं स्थानमेकं वै वासार्थं द्विजसत्तम । अद्य धन्योऽस्म्यहं पुण्यमद्य तीर्थमहं गतः ॥ ६
अद्य तीर्थफलं प्राप्तं तवाद्य बुध दर्शनात् । गवां स्थाने वरं पुण्यं तत्र वासं प्रदर्शितम् ॥ ७
अङ्गसंवाहनं कृत्वा पादौ चैव सुमर्दितौ । क्षालितौ च पुनस्तोयैः स्नातः पादोदकेन हि ॥ ८
सद्यो घृतं दधि क्षीरं तक्रमन्नं प्रदत्तवान् । स तस्मै ब्राह्मणायैव भवानित्थं महामते ॥ ९
एवं संतोषितो विप्रस्त्वयैव सह भार्यया । पुण्यस्यार्धं महाभागो वैष्णवो ज्ञानपण्डितः ॥ १०
अथ प्रभाते संप्राप्ते दिने पुण्ये शुभावहे । आषाढस्यं तु शु[† क्लस्य द्वादशी पापनाशनी ॥ ११

---

* क. ख. ङ. छ. झ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः । † क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थोऽयं पाठः ।

---

१ अ. 'स्य शुक्लपक्ष एकादश्यां द्विजोत्तम । त्वद्गृहस्थश्च कर्माणि चक्रे धर्मरतो द्विज । स्तवनं कृतवान्सवैः सूक्तैः ।

तस्मिन्दिने सुसंप्राप्ता सर्वपातकनाशिनी । यस्यां देवो हृषीकेशो योगनिद्रां प्रगच्छति ॥ १२
तां प्राप्य च ततो लोकास्तत्यजुर्बुद्धिपण्डिताः] । गृहस्य सर्व कर्माणि विष्णुध्यानरता द्विज ॥ १३
[*उत्सवं परमं चक्रुर्गीतमङ्गलवादनैः । ] स्तवनं ब्राह्मणाः सर्वे सूक्तैः स्तोत्रैः सुमङ्गलैः ॥ १४
एवं महोत्सवं प्राप्य स च ब्राह्मणसत्तमः । तस्मिन्दिने स्थितस्तत्र संप्राप्तं हरिवासरम् ॥ १५
एकादश्यास्तु माहात्म्यं पठितं ब्राह्मणेन वै । भार्यापुत्रैस्त्वया सार्धं श्रुतं धर्ममनुत्तमम् ॥ १६
श्रुते तस्मिन्महापुण्ये [†भार्यापुत्रैस्तु प्रेरितः । संसर्गादस्य विप्रस्य व्रतमेतत्समाचर ॥ १७
तदाकर्ण्य महद्वाक्यं सर्वपुण्यप्रदायकम् । व्रतमेतत्करिष्यामि इति निश्चितमानसः] ॥ १८
भार्यापुत्रैः समं गत्वा शुभः स्नानं कृतं त्वया । हृष्टेन मनसा विप्र पूजितो मधुसूदनः ॥ १९
सर्वोपहारैः पुण्यैश्च गन्धपुष्पादिभिस्तथा । रात्रौ जागरणं कृत्वा नृत्यगीतादिभिस्तथा ॥ २०
ब्राह्मणस्य प्रसङ्गेन नद्याः स्नानं कृतं पुनः । पूजितो देवदेवेशः पुष्पधूपादिमङ्गलैः ॥ २१
भक्त्या प्रणम्य गोविन्दं स्नापयित्वा पुनः पुनः । निर्वाणदाम्बु दत्तं ते ब्राह्मणेन महात्मना २२
भक्त्या प्रणम्य तं विप्रं दत्ता तस्मै सुदक्षिणा । कृत्वा च पारणं विप्र पुत्रैर्भार्यादिभिः समम् २३
तोषितो भक्तिपूर्वेण सद्भावेन त्वयैव सः । एवं व्रतं समाचीर्णं त्वयैव द्विजसत्तमः ॥ २४
संगत्या ब्राह्मणस्यैव विष्णोश्चैव प्रसादतः । भवान्ब्राह्मणतां प्राप्तः सत्यधर्मसमन्वितः ॥ २५
तेन व्रतप्रभावेन त्वया प्राप्तं महत्फलम् । भूसुरत्वं महाभाग सत्यधर्मसमन्वितम् ॥ २६
तस्मै तु ब्राह्मणायैव वैष्णवाय महात्मने । श्रद्धया सत्यभावेन दत्तमन्नं सुसंस्कृतम् ॥ २७
तेन दानप्रभावेन मिष्टान्नमुपतिष्ठति । महालुब्धैः प्रमुग्धोऽसि तृष्णया व्यथितं मनः ॥ २८
पूर्वजन्मनि ते विप्र ह्यर्थमेव प्रसंचितम् । न दत्तं ब्राह्मणेभ्यो हि दीनेष्वन्येषु वै त्वया ॥ २९
दारपुत्रेषु लोभेन म्रियमाणेन वै तदा । तस्य पापस्य भावेन दारिद्र्यं त्वामुपाविशत् ॥ ३०
पुत्रलोभं परित्यज्य स्नेहं त्यक्त्वा प्रदूरतः । अपुत्रवान्भवाञ्जातस्तस्य पापस्य वै फलम् ॥ ३१
सुपुत्रं च कुलं विप्र धनं धान्यं धरा स्त्रियः । सुजन्म मरणं चैव सुभोगाः सुखमेव च ॥ ३२
राज्यं स्वर्गश्च मोक्षश्च यद्यद्दुर्लभमेव च । प्रसादात्तस्य देवस्य विष्णोश्चैव महात्मनः ॥ ३३
तस्मादाराध्य गोविन्दं नारायणमतः परम् । प्राप्स्यसि त्वं परं स्थानं तद्विष्णोः परमं पदम् ३४
सुपुत्रत्वं धनं धान्यं सुभोगान्सुखमेव च । पूर्वजन्मकृतं कर्म यत्त्वया परिचेष्टितम् ॥ ३५
तन्मया कथितं सर्वं तवाग्रे परिनिश्चितम् । एवं ज्ञात्वा महाभाग नारायणपरो भव ॥ ३६

ब्रह्मात्मजेनापि महानुभावः स विप्रवर्यः परिबोधितो हि ।
हर्षेण युक्तः सुमहानुभावो भक्त्या वसिष्ठं प्रणिपत्य तत्र ॥ ३७
आमन्त्र्य विप्रं स जगाम गेहं तां प्राह भार्यां सुमनां प्रहर्षितः ।
सर्वं हि वृत्तं ममपूर्वचेष्टितं तेनैव विप्रेण तव प्रसादात् ॥ ३८

* क. ख. ग. घ. ङ. च. छ. ज. झ. ड. ढ. पुस्तकस्थोऽयं पाठः । * क. ख. च. छ. झ. पुस्तकस्थोऽयं पाठः

१ क. ख. ङ. च. ढ. वेदैः । ग. घ. ट. सर्वैः । २ ञ. स्थिते चैवं सं° । ३ क. ख ग. घ. ङ. च. छ. झ. ट. ड ढ. समुपोषणम् । ४ ञ. पुण्य आख्याने धर्मसंयुते । भार्यापुत्रैः स° । ५ क. ख घ. ङ. च. छ. झ. ड. ढ. नद्याः । ६ क ख. ङ. च. छ. ज. झ. °न्धधूपादि° । ७ क. ख. ङ. च. छ. ज. झ. °हत्कुलम् । भूसुराणां म° । ८ क. ख. ङ. च. छ. झ. ढ. °न्यं वराश्रि° । ९ ग. घ. ट. श्रियः । १० क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. °मनामयम् ।

भद्रे वसिष्ठेन विकाशनीतमद्यैव[1] मोहं परिहृत्य दूरात् ।
आराधयिष्ये मधुसूदनं तं यास्यामि मोक्षं परमं पदं तत् ॥ ३९
आकर्ण्य वाक्यं परमं महार्थं सुमङ्गलं मङ्गलदायकं हि ।
हर्षेण युक्ता तमुवाच कान्तं पुण्योऽसि विप्रेन्द्र विबोधितोऽसि ॥ ४०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुमनोपाख्याने सप्तदशोऽध्यायः ॥ १७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४१३३

---

अथाष्टादशोऽध्यायः ।

---

सूत उवाच—

सोमशर्मा महाप्राज्ञः सुमनया सह सत्तमः । कपिलासङ्गमे पुण्ये रेवातीरे सुपुण्यदे ॥ १
स्नात्वा तत्र स मेधावी तर्पयित्वा सुरान्पितॄन् । तपस्तेपे सुशान्तात्मा जपन्नारायणं शिवम् ॥ २
द्वादशाक्षरमन्त्रेण ध्यानयुक्तो महामनाः । तस्यैव देवदेवस्य वासुदेवस्य सुव्रतः ॥ ३
आसने शयने याने स्वप्ने पश्यति केशवम् । सदैव निश्चितो भूत्वा कामक्रोधविवर्जितः ॥ ४
सा च साध्वी महाभागा पतिव्रतपरायणा । सुमना कान्तमेवापि शुश्रूषति तपोन्वितम् ॥ ५
ध्यायमानस्य तस्यापि विघ्नैः संदर्शितं भयम् । सर्पा विषोल्बणाः कृष्णास्तत्र यान्ति महात्मनः॥
पार्श्वतस्तप्यमानस्य तस्य ते सोमशर्मणः । सिंहव्याघ्रगजा दृष्टा भयमेव प्रचक्रिरे ॥ ७
वेताला राक्षसा भूत्वा कूष्माण्डाः प्रेतभैरवाः । भयं प्रदर्शयन्त्येते दारुणाः प्राणिनामलम् ॥ ८
नानाविधा महाभीमाः सिंहास्तत्र समागताः । दंष्ट्राकरालवक्त्राश्च जगर्जुश्चातिभैरवम् ॥ ९
विष्णोर्ध्यानात्स धर्मात्मा न चचाल महामतिः । महाविघ्नैः स संमूढैर्व्यापितो मुनिपुङ्गव ॥ १०
एवं न चलते ध्यानात्सोमशर्मा द्विजोत्तमैः । भम्भारावमहाभीमः सिंहस्तत्र समागतः ॥
[*तं दृष्ट्वा भयवित्रस्तः सस्मार नृहरिं द्विजः] ॥ ११
इन्द्रनीलप्रतीकाशं पीतवस्त्रं महौजसम् । शङ्खचक्रधरं देवं गदापङ्कजधारिणम् ॥ १२
महामौक्तिकहारेण इन्दुवर्णानुकारिणा । कौस्तुभेनापि रत्नेन द्योतमानं जनार्दनम् ॥ १३
श्रीवत्साङ्केन दिव्येन हृदयं यस्य राजते । सर्वाभरणशोभाढ्यं शतपत्रनिभेक्षणम् ॥ १४
सुस्मितास्यं सुप्रसन्नं रत्नहाराभिशोभितम् । राजमानं हृषीकेशं ध्यानं तेन कृतं ध्रुवम् ॥ १५
त्वमेव शरणं कृष्ण शरणागतवत्सल । नमस्ते देवदेवेश किं भयं मे करिष्यति ॥ १६
यस्योदरे त्रयो लोकाः सप्त चान्ये महात्मनः । शरणं तं प्रपन्नोऽस्मि किं भयं मे करिष्यति १७
यस्माद्भयं प्रपद्यन्ते कृत्यादिकमहाबलाः । यो हि सर्वप्रहर्ता च तमस्मि शरणं गतः ॥ १८
वृन्दारकाणां सर्वेषां दानवानां महात्मनाम् । यो गतिः क्लिष्टभक्तानां तमस्मि शरणं गतः १९

---

* अ. पुस्तकस्थोऽयं पाठः ।

---

१ क. ख. ङ. च. छ. झ. ढ. °रिप्राशितं मे । आ° । २ अ. °मनाया महात्मनः । क° । ३ क. ख ङ च. छ. झ- ङ.ढ. °रुणं प्राणनाशनम् । ४ क. ख च. झ. °मः । गङ्गावातैश्च शतिन महावृष्ट्या सुपीडितः । ङ. छ. झ. ढ. °मः । झञ्झावातैश्च शीतेन महावृष्ट्या सुपीडितः । ५ क ख ङ. च. छ. झ. ङ. ढ. °तः । पातकानां च सर्वेषां दानवानां महाभयम् । रक्षको विष्णुभ° ।

अभयो भयनाशाय पापनाशाय ज्ञानवान् । एकश्च ब्रह्मरूपेण तमस्मि शरणं गतः ॥ २०
व्याधीनां नाशनायैव य औषधस्वरूपवान् । निरामयो निरानन्दस्तमस्मि शरणं गतः ॥ २१
अचलांश्चालयेल्लोकानपापो ज्ञानमेव च । तमस्मि शरणं प्राप्तः किं भयं मे करिष्यति ॥ २२
साधूनामपि सर्वेषां पालकः पद्मनाभकः । पाति विश्वं च विश्वात्मा तमस्मि शरणं गतः ॥ २३
यो मे मृगेन्द्ररूपेण भयं दर्शयतेऽग्रतः । तमहं शरणं प्राप्तो नरसिंहं भयापहम् ॥ २४
यमापन्नो महाकायो रणे हस्ती समागतः । गजलीलागतं देवं शरणागतवत्सलम् ॥ २५
गैणपं ज्ञानसंपन्नं सुपाशाङ्कुशधारिणम् । कालास्यं गजतुण्डं च शरणं सुगतोऽस्म्यहम् ॥ २६
हिरण्याक्षप्रहर्तारं वाराहं शरणं गतः । ह्रस्वास्तु वामनाः क्रूराः प्रेताः कूष्माण्डकादयः ॥
वामनं तं प्रपन्नोऽस्मि शरणागतवत्सलम् ॥ २७
मृत्युरूपधराः सर्वे दर्शयन्ति भयं मम । अमृतं तं प्रपन्नोऽस्मि किं भयं मे करिष्यति ॥ २८
[*ब्रह्मण्यो ब्रह्मदो ब्रह्मा ब्रह्मज्ञानमयो हरिः । शरणं तं प्रपन्नोऽस्मि किं भयं मे करिष्यति] २९
अभयो यो हि जगतो भीतिघ्नो भीतिदायकः । [†भयरूपं प्रपन्नोऽस्मि किं भयं मे करिष्यति] ॥ ३०
तारकः सर्वपुण्यानां नाशकः सर्वपापिनाम् । तमहं शरणं प्राप्तो धर्मरूपं जनार्दनम् ॥ ३१
झञ्झावातो महाचण्डो वपुर्दूयति मे भृशम् । शरणं तस्य गन्ताऽस्मि सदा गतिरयं मम ॥ ३२
अतिशीतं चातिवर्षमातपस्तापदायकः । एषां रूपेण यो देवस्तस्याहं शरणं गतः ॥ ३३
कालरूपा अमी प्राप्ता भयदा मम चालकाः । हरिस्वरूपिणामेषां प्रगतः शरणं सदा ॥ ३४

यं सर्वदेवं परमेश्वरं हि निष्केवलं ज्ञानमयं प्रधानम् ।
वदन्ति नारायणमादिसिद्धं सिद्धेश्वरं तं शरणं प्रपद्ये ॥ ३५

इति ध्यायंस्तुवन्नित्यं केशवं क्लेशनाशनम् । भक्त्या तेन समानीतस्तदाऽऽत्महृदये हरिः ॥ ३६
उद्यमं विक्रमं तस्य स दृष्ट्वा सोमशर्मणः । आविर्भूय हृषीकेशस्तमुवाच प्रहर्षयन् ॥ ३७
सोमशर्मन्महाप्राज्ञ श्रूयतां भार्यया सह । वासुदेवोऽस्मि विप्रेन्द्र वरं वरय सुव्रत ॥ ३८
श्रुत्वोदितं स विप्रेन्द्र उन्मील्य नयनद्वयम् । दृष्ट्वा विश्वेश्वरं देवं घनश्यामं महोदयम् ॥ ३९
सर्वाभरणशोभाढ्यं सर्वायुधसमन्वितम् । दिव्यलक्षणसंपन्नं पुण्डरीकनिभेक्षणम् ॥ ४०
पीतेन वाससा युक्तं राजमानं सुरेश्वरम् । [*वैनतेयसमारूढं शङ्खचक्रगदाधरम् ॥ ४१
ब्रह्मादीनां सुधातारं जगतोऽस्य महायशाः] । विश्वरूपं सदारूपं रूपातीतं जनार्दनम् ॥ ४२
हर्षेण महताऽऽविष्टो दण्डवत्प्रणिपत्य च । श्रिया युक्तं भासमानं सूर्यकोटिसमप्रभम् ॥ ४३
बद्धाञ्जलिपुटो भूत्वा तया सुमनया सह । जय देव जगन्नाथ जय मानद माधव ॥ ४४
जय योगीश योगीन्द्र जय यज्ञपते हरे । जय यज्ञेश यज्ञघ्न जय शाश्वत सर्वग ॥ ४५

---

* क. ख. ग. घ. ङ. च. छ झ. ड. ढ. पुस्तकस्थोऽयं पाठः । † क. ख. ङ. च. छ झ. ड. ढ. पुस्तकस्थोऽयं पाठः । * क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः ।

---

१ ग. घ. ज. ट. ड. °हं नतोऽस्म्यह° । ङ. छ. झ. ढ. °हं नमाम्यह° । । २ ङ. झ. ढ. °म् । मदमत्तो महाकायो वनह° । ३ क ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. गजास्यं । ४ क. ख. ङ. च. छ. झ. ढ. °ति । मारकः सर्वलोकानां । ग. घ. ज. ट. ड. °ति । तारकः सर्वलोकानां । ५ अ. °म् । सुरारणं यो हि रणे वपुर्धारयतेऽद्भुतम् । ६ क. ख. ग. ङ. च. छ. झ. ट. ड. ढ. प्रहृष्टवान् । ७ क. ख. च. छ. झ. ढ. विश्वस्यास्य सदाऽतीतं रूपातीतं जगद्गुरुम् । ८ क. ख. ङ. च. छ. ज. झ. ट. ड. ढ. °य जयेत्युवाचैवं ज° । ९ क. ख. ग. घ. च. छ. झ. ङ. ढ. यज्ञाङ्ग ।

जय सर्वेश्वरानन्त जयरूप नमोऽस्तु ते । जय ज्ञानवतां श्रेष्ठ जय त्वं ज्ञाननायक ॥ ४६
जय सर्वद सर्वज्ञ जय सत्त्वविभावन । जय जीवस्वरूपेश महाजीव नमोऽस्तु ते ॥ ४७
जय यज्ञग यज्ञाङ्ग जय प्राणप्रदायक । जय पापघ्न पुण्येश जय पुण्यपते हरे ॥ ४८
जय ज्ञानस्वरूपेश ज्ञानगम्याय ते नमः । जय पद्मपलाशाक्ष पद्मनाभाय ते नमः ॥ ४९
जय गोविन्द गोपाल जय शङ्खधरामल । जय चक्रधराव्यक्त व्यक्तरूपाय ते नमः ॥ ५०
जय विक्रमशोभाङ्ग जय विक्रमनायक । [*जय विद्याविलासाङ्ग नमो वेदमयाय ते ॥ ५१
जय विक्रमशोभाङ्ग जय उद्यमदायक] । जय उद्यमकालाय उद्यमाय नमो नमः ॥ ५२
जय उद्यमशक्ताय जयै उद्यमकारक । युद्धोद्यमप्रवृत्ताय तस्मै सर्वात्मने नमः ॥ ५३
नमो हिरण्यतेजस्क तुभ्यं ते जयते नमः । अतितेजःस्वरूपाय सर्वतेजोमयाय च ॥ ५४
दैत्यतेजोविनाशाय पापतेजोहराय च । गोब्राह्मणहितार्थाय नमोऽस्तु परमात्मने ॥ ५५
नमोऽस्तु हुतभुक्ताय नमो हव्यवहाय ते । नमः कव्यवहायैव स्वधारूपाय ते नमः ॥ ५६
स्वाहारूपाय यज्ञाय योगबीजाय ते नमः । नमस्ते शार्ङ्गहस्ताय हरये पापहारिणे ॥ ५७
सदसच्चोदनायैव नमो विज्ञानशालिने । नमो वेदस्वरूपाय पावनाय नमो नमः ॥ ५८
नमोऽस्तु हरिकेशाय सर्वक्लेशहराय च । केशवाय परायैव नमस्ते विश्वधारिणे ॥ ५९
नमः कृपामयायैव नमो हर्षमयाय च । अनन्ताय नमो नित्यं शुद्धाय क्लेशनाशिने ॥ ६०
आनन्दाय नमो नित्यं दिव्याय दिव्यरूपिणे । रुद्रैर्नमितपादाय विरिञ्चिनमिताय ते ॥ ६१
सुरासुरेन्द्रनमितपादपद्माय ते नमः । नमो नमः सुरेशाय चामृतायामृतात्मने ॥ ६२
क्षीरसागरवासाय नमः पद्मप्रियाय ते । ओंकाराय विशुद्धाय ह्यचलाय नमो नमः ॥ ६३
व्यापिने व्यापकायैव सर्वव्यसनहारिणे । नमो नमो वराहाय महाकूर्माय ते नमः ॥ ६४
नमो वामनरूपाय नृसिंहाय पराय ते । नमो रामाय दिव्याय सर्वक्षत्रवधाय च ॥ ६५
सर्वज्ञानाय मत्स्याय [†नमो रामाय ते नमः । नमः कृष्णाय बुद्धाय नमो म्लेच्छप्रणाशिने ॥ ६६
नमः कपिलविप्राय हयग्रीवाय ते नमः । नमो व्यासस्वरूपाय] नमः सर्वमयाय ते ॥ ६७
एवं स्तुत्वा हृषीकेशं पुनराह जनार्दनम् । [*गुणानां तु परं पारं ब्रह्मा वेत्ति न पावनम्]॥ ६८
न चैव स्तोतुं सर्वेश तथा रुद्रः सहस्रदृक् । वक्तुं को हि समर्थस्तु कीदृशी मे मतिः प्रभो ॥ ६९
[*निर्गुणं सगुणं स्तोत्रं मयैव तव केशव] । विप्रभक्तस्य सर्वेश तव दासोऽस्मि सुव्रत ॥
जन्मजन्मनि लोकेश दयां मे कुरु पावन ॥ ७०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुमनोपाख्यानेऽष्टादशोऽध्यायः ॥ १८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२०३

---

* क. ख. ग. घ. ङ. च. छ. झ. ड. पुस्तकस्थोऽयं पाठः । † क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थोऽयं पाठः । * क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थोऽयं पाठः । † क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थोऽयं पाठः ।

---

१ ङ. °मकर्त्रे च उ° । २ ट. °मभोगाय । ३ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. °य उद्यमत्रयधार° । ४ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. °प्रबुद्धाय । ५ ङ. छ. कर्मात्मने । ड. धर्माय ते । घ. तेजात्मने । ६ झ. हरभक्ताय । ७ ग. घ. ङ. °णे । अघसंघदलायै° । ८ क. ख. ङ. च. झ. ढ. °ते । इन्द्रासुरैर्नमिताय कृष्णाय परमात्मने° । ९ क. ङ. च. छ. झ. चाजिता° । १० क. ख. ङ. च. छ. झ. ढ. °व । क्षम शब्दापशब्दं मे त° ।

अथैकोनाशिंशोऽध्यायः ।

हरिरुवाच—

तपसाऽनेन पुण्येन सत्येनानेन ते द्विज । स्तोत्रेण पावनेनापि तुष्टोऽस्मि व्रियतां वरः ॥ १

वरं दद्मि महाभाग यस्ते मनसि दुर्लभः । यं यमिच्छसि कामं त्वं तं तं ते पूरयाम्यहम् ॥ २

सोमशर्मोवाच—

प्रथमं देहि मे कृष्ण वरमेकं सुनिश्चितम् । सुप्रसन्नेन मनसा यद्यस्ति सुदया मम ॥ ३

जन्मजन्मान्तरं प्राप्य तव भक्तिं करोम्यहम् । दर्शयस्व परं स्थानमचलं मोक्षदायकम् ॥ ४

स्ववंशतारकं पुत्रं दिव्यलक्षणसंयुतम् । विष्णुभक्तिपरं नित्यं मम वंशप्रधारकम् ॥ ५

सर्वज्ञं सर्वदं दान्तं तपस्तेजःसमान्वितम् । देवब्राह्मणलोकानां पालकं पूजकं शुभम् ॥ ६

देवमित्रं पुण्यभावं दातारं ज्ञानपण्डितम् । देहि मे ईदृशं पुत्रं दारिद्र्यं हर केशव ॥

भवत्वेवं न संदेहो वरमेनं वृणोम्यहम् ॥ ७

हरिरुवाच—

एवमेव द्विजश्रेष्ठ भविष्यति न संशयः । मत्प्रसादात्सुपुत्रस्तु तव वंशप्रतारकः ॥ ८

भोक्ष्यसि त्वं वरान्भोगान्दिव्यान्वै मानुषानिह । समादाय परं सौख्यं मनःसंभवजं शुभम् ॥ ९

यावज्जीवसि विप्र त्वं तावद्दुःखं न पश्यसि । दाता भोक्ता गुणग्राही भविष्यसि न संशयः १०

सुतीर्थे मरणं विप्र यास्यसि त्वं परां गतिम् । एवं वरं हरिर्दत्त्वा सप्रियाय द्विजाय सः ॥ ११

अन्तर्धानं गतो देवः स्वप्नवत्परिदृश्यते । तदा सुमनया युक्तः सोमशर्मा द्विजोत्तमः ॥ १२

सुतीर्थे पावने तस्मिन्रेवातीरे सुपुण्यदे । अमरकण्टके विप्रो दानपुण्यं करोति सः ॥ १३

गते बहुतरे काले तस्य वै सोमशर्मणः । कपिलारेवयोः सङ्गे स्नानं कृत्वा स निर्गतः ॥ १४

पुरतो दृष्टवान्विप्रः श्वेतमेकं हि कुञ्जरम् । सुप्रभं सुमदं दिव्यं सुन्दरं चारुलक्षणम् ॥ १५

नानाभरणशोभाङ्गं बहुलक्षणसंयुतम् । सिन्दूरकुङ्कुमैरस्य कुम्भस्थले विचर्चिते ॥ १६

कर्णनीलोत्पलयुतं पताकादण्डसंयुतम् । नागोपरिस्थितो दिव्यः पुरुषो दृष्टमस्तकः ॥ १७

दिव्यलक्षणसंपन्नः सर्वाभरणभूषितः । दिव्यमालाम्बरधरो दिव्यगन्धानुलेपनः ॥ १८

सुसौम्यं सोमवत्पूर्णच्छत्रचामरसंयुतम् । नागारूढं प्रयान्तं तं पुनः पश्यति सत्तमः ॥ १९

सिद्धचारणगन्धर्वैः स्तूयमानं सुमङ्गलम् । सगजं सुन्दरं दृष्ट्वा पुरुषं दिव्यलक्षणम् ॥ २०

व्यतर्कयत्सोमशर्मा विस्मयाविष्टमानसः । कोऽयं प्रयाति दिव्याङ्गः पन्थानं प्राप्य सुव्रतः॥ २१

एवं चिन्तयतस्तस्य स गतः प्राप्तवान्गृहम् । प्राविशन्तं गृहद्वारि देवरूपं मनोहरम् ॥ २२

हर्षेण महताऽऽविष्टः सोमशर्मा द्विजोत्तमः । स्वगृहं प्रति धर्मात्मा त्वरमाणः प्रयाति च ॥

गृहद्वारं गतो यावत्तावत्तं तु न पश्यति ॥ २३

पतितानि च पुष्पाणि प्रेक्ष्य तानि महामतिः । दिव्यानि गन्धयुक्तानि प्राङ्गणे द्विजसत्तमः॥२४

चन्दनैः कुसुमैः पुण्यैः सुगन्धैश्च विलेपितम् । स्वकीयं प्राङ्गणं दृष्ट्वा दूर्वाङ्कुरसमन्वितम् ॥ २५

स एवं विस्मयाविष्टश्चिन्तयानः पुनः पुनः । ददर्श सुमनां प्राज्ञो दिव्यमङ्गलसंयुताम् ॥ २६

१ क. ख. ङ. च. झ. ढ. सुवाञ्छित॰ । २ क. ख. ग. घ. ङ. च छ. झ. ड. ढ. सदा । ३ क. ख. ङ. च. छ. झ. ड. ढ. ॰ह्यं पुत्रसं॰ । ४ क. ख. ग. घ. ङ. च. छ. झ ड. ढ. ॰लक्ष्म्या समान्वित॰ । ५ झ. चापि । ६ झ. ॰विष्टो हृष्यमाणः पु॰ ।

सोमशर्मोवाच—

केन दत्तानि दिव्यानि ह्येतान्या[1]भरणानि च । शृङ्गारं रूपसौभाग्यं वस्त्रालंकारभूषणम् ॥ २७
तन्मे त्वं कारणं भद्रे कथयस्वाविशेषतः । एवं संभाष्य तां भार्यां विरराम द्विजोत्तमः ॥ २८

सुमनोवाच—

शृणु कान्त समायातः कश्चिद्देववरोत्तमः । श्वेतनागं समारूढो दिव्याभरणभूषणः ॥ २९
दिव्यगन्धानुलिप्ताङ्गो दिव्यश्रिया समन्वितः । न जाने को हि देवोऽसौ विप्रगन्धर्वसेवितः ३०
स्तूयमानः समायातो देवकिंनरचारणैः[2] । योषितः पुण्यरूपास्तु रूपशृङ्गारसंयुताः ॥ ३१
सर्वाभरणशोभाढ्याः सर्वाः पूर्णमनोरथाः । ताभिः सह समक्षं मे पुरुषेण महात्मना ॥ ३२
चतुष्कं पूरितं द्रव्यैः[3] सर्वशोभासमन्वितम् । तत्राहमासने पुण्ये स्थापिता स्त्रीगणैः[4] किल ॥ ३३
वस्त्रालंकारभूषां मे ददुस्ते सर्वमेव हि । तथा मङ्गलमन्त्रैस्तु शास्त्रगीतैश्च पुण्यदैः ॥ ३४
अभिषिक्ताऽस्मि तैः सर्वैरन्तर्धानं पुनर्गताः । मामेवं [*परितः सर्वे पुनरूचुर्द्विजोत्तम ॥ ३५
तव गेहे वयं भद्रे ] वसिष्यामः सदैव हि । शुचिर्भवस्व कल्याणि भर्त्रा सार्धं सदैव हि ॥ ३६
एवमुक्त्वा गताः सर्वे एवं दृष्टं मयैव हि । तया यत्कथितं सर्वं समाकर्ण्य महामतिः ॥ ३७
पुनश्चिन्तां प्रपन्नोऽसौ किमिदं देवनिर्मितम् । विचिन्तयित्वाऽथ तदा सोमशर्मा महामतिः ॥ ३८
ब्रह्मकर्मणि संयुक्तः साधर्म्यं धर्ममुत्तमम् । तस्माद्गर्भं महाभागा दधार व्रतशालिनी ॥ ३९
तेन गर्भेण सा देवी ह्यधिकं शुशुभे तदा । सुपुत्रं दीप्तिसंयुक्तं तेजोज्वालासमाकुलम् ॥ ४०
सा हि जज्ञे महाभागा तनयं देवसंनिभम् । अन्तरिक्षे तदा नेदुर्देवदुन्दुभयो मुहुः ॥ ४१
शङ्खान्दध्मुर्महादेवा गन्धर्वा ललितं जगुः । अप्सरसस्तदा सर्वा ननृतुस्ता मुदाऽन्विताः ॥ ४२
अथ ब्रह्मा सुरैः सार्धं समायातो द्विजोत्तम । चकार नाम तस्यैव सुव्रतेति समाहितः ॥ ४३
नाम कृत्वा ततो देवा जग्मुः स्वर्गं महौजसः । गतेषु तेषु देवेषु सोमशर्मा सुतस्य च ॥
जातकर्मादिकं कर्म चकार द्विजसत्तमः ॥ ४४
जाते पुत्रे महाभागे सुव्रते देवनिर्मिते । तस्य गेहे महालक्ष्मीर्धनधान्यसमाकुला ॥ ४५
गजाश्वमहिषीगावः काञ्चनं रत्नमेव च । यथा कुबेरभवनं शुशुभे रत्नसंचयैः ॥ ४६
तत्सोमशर्मणो गेहं संपन्नं परिराजते । दानपुण्यादिकं धर्मं चकार द्विजसत्तमः ॥ ४७
तीर्थयात्रां गतो विप्रो नानापुण्यसमाकुलः । अन्यानि यानि पुण्यानि दानानि द्विजसत्तमः ॥
[†चकार तत्र मेधावी ज्ञानपुण्यसमन्वितः ॥ ४८
एवं साधयते धर्मं पालयेच्च पुनः पुनः । पुत्रस्य जातकर्मादि कर्माणि द्विजसत्तमः ] ॥ ४९
विवाहं कारयामास हर्षेण महता किल । पुत्रस्य पुत्राः संजाताः सुपुण्या लक्षणान्विताः ॥ ५०
सत्यधर्मतपोपेता दानधर्मरताः सदा । स तेषां पुण्यकर्माणि सोमशर्मा चकार ह ॥ ५१
पौत्राणां तु महाभागस्तेषां सौख्येन मोदते । सर्वसौख्यं[6] स बुभुजे तेजसा राजराजवत् ॥ ५२
पञ्चविंशाब्दिको यद्वत्तद्वत्कायस्तु तस्य हि । सूर्यतेजःप्रतीकाशः सोमशर्मा महामतिः ॥ ५३

* क. ख. च छ ढ. पुस्तकस्थोऽयं पाठः । † क. ख. ड. च. छ. झ. ढ. पुस्तकस्थोऽयं पाठः ।

१ क. ख. ङ. च. छ. झ. ट. ड. 'विशङ्किता । ए° । २ क. ख. च. छ. झ. °नोहराः । ता° । ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. रत्नैः । ४ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. ब्राह्मणैः । ५ घ. ङ. ढ. °रभुत्र° । ६ क. ख. ङ. च. छ. झ. ङ. ढ. °ख्यं च संभुज्य जरारोगविवर्जितः । प° ।

सा चापि शुशुभे देवी सुमना पुण्यमङ्गलैः । पुत्रपौत्रैर्महाभागा दानव्रतैश्च संयमैः ॥ ५४
अतिभाति विशालाक्षी पुण्यैः पतिव्रतादिभिः । तारुण्येन समायुक्ता यथा षोडशवार्षिकी ॥ ५५
मोदमानौ महाभागौ दंपती चारुदर्शनौ । हर्षेण च समायुक्तौ मोदमानौ महोदयौ ॥ ५६
एवं तयोस्तु वृत्तान्तं पुण्यौधिकसमन्वितम् । सुव्रतस्य प्रवक्ष्यामि तपश्चर्यां द्विजोत्तमाः ॥ ५७
यथा तेन समाराध्य नारायणमनामयम् ॥ ५८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुमनोपाख्याने सुव्रतोत्पत्तिर्नामैकोनविंशोऽध्यायः ॥ १९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२६१

अथ विंशोऽध्यायः ।

सूत उवाच—

एकदा व्यासदेवोऽसौ ब्रह्माणं जगतः पतिम् । सुव्रताख्यानकं सर्वं पप्रच्छातीव विस्मितः ॥ १

व्यास उवाच—

लोकात्मँल्लोकविन्यास देवदेव महाप्रभो । सुव्रतस्याथ चरितं श्रोतुमिच्छामि सांप्रतम् ॥ २

ब्रह्मोवाच—

पाराशर्य महाभाग श्रूयतां पुण्यसत्तम । सुव्रतस्य सुविप्रस्य तपश्चर्यां वदामि ते ॥ ३
सुव्रतो नाम मेधावी बाल्याद्विष्णुमचिन्तयत् । गर्भे नारायणं देवं दृष्टवान्पुरुषोत्तमम् ॥ ४
पूर्वकर्मानुभावेन हरेर्ध्यानं गतस्तदा । शङ्खचक्रधरं देवं पद्मनाभं सुपुण्यदम् ॥ ५
ध्यायते चिन्तयन्नेवं गीते ज्ञाने प्रपाठने । एवं देवं हरिं ध्यायन्सदैव द्विजसत्तमः ॥ ६
क्रीडत्येवं सदा डिम्भैः सार्धं वै बालकोत्तमः । बालकानां स्वकं नाम हरेश्चैव महात्मनः ॥ ७
चकारासौ हि मेधावी पुण्यात्मा पुण्यवत्सलः । समाह्वयति वै मित्रं हरेर्नाम्ना महामुनिः ॥ ८
भो भोः केशव एह्येहि पाहि माधव चक्रभृत् । क्रीडस्व च मया सार्धं त्वमेव पुरुषोत्तम ॥ ९
वनमेव प्रगन्तव्यमावाभ्यां मधुसूदन । एवमेव समाह्वानं नामभिश्च हरेर्द्विजः ॥ १०
क्रीडने पठने हास्ये शयने गीतप्रेक्षणे । याने च ह्यासने ध्याने मन्त्रे ज्ञाने सुकर्मसु ॥ ११
[ *पश्यत्येवं वदत्येवं जगन्नाथं जनार्दनम् । स ध्यायते तमेकं हि विश्वनाथं महेश्वरम् ॥ १२
तृणे काष्ठे च पाषाणे शुष्के सान्द्रे हि केशवम् । ] पश्यत्येवं स धर्मात्मा गोविन्दं कमलेक्षणम् ॥
आकाशे भूमिमध्ये तु पर्वतेषु वनेषु च । जले स्थले च पाषाणे जीवेषु च महामतिः ॥ १३
नृसिंहं पश्यते विप्रः सुव्रतः सुमनासुतः । बालक्रीडां समासाद्य रमत्येवं दिने दिने ॥ १४
गीतैश्च गायते कृष्णं सुरागैर्मधुराक्षरैः । तालैर्लयसमायुक्तैः सुस्वरैर्मूर्छनान्वितैः ॥ १५

सुव्रत उवाच—

ध्यायन्ति देवाः सततं मुरारिं यस्याङ्गमध्ये सकलं निविष्टम् ॥
योगेश्वरं पापविनाशनं च भजे शरण्यं मधुसूदनाख्यम् ॥ १६

* क. ख. . च. छ. झ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः ।

१ ङ. ढ °नौ महात्मानौ दंपती चारुमङ्गलौ । ए° । २ ग. घ. ट. ढ. चारुमङ्गलौ । ज. चानुरागतः । ३ क. ख. ङ. च. छ. झ. ढ. पुण्यात्मानौ । ४ क. ख. ङ. च. छ. झ. ढ. °...ारस° । ५ क. ख. ङ. च. छ. झ. ड. ढ. महामतिः । ६ क. ख. ङ. च. छ. झ. ढ. तपने । ग. घ. ङ. पतने ।

लोकेषु यो हि सकलेषु विबोधितोऽपि यो लोकगश्च गुणिनो निवसन्ति यत्र ॥
दोषैर्विहीनमखिलैः परमेश्वरं तं संचिन्त्य पादयुगलं सततं नमामि ॥ १७
नारायणं गुणनिधानमनन्तवीर्यं वेदान्तशुद्धमतयः प्रपठन्ति नित्यम् ॥
संसारसागरमपारमनन्तदुर्गमुत्तारणार्थमखिलं शरणं प्रपद्ये ॥ १८
योगीन्द्रमानससरोवरराजहंसं शुद्धं प्रभावमखिलं सततं हि यस्य ॥
तस्यैव पादयुगलं ह्यमलं नमामि दीनस्य मेऽशुभभयात्कुरु देव रक्षाम् ॥ १९
लोकस्य पालनकृते परिणीतधर्मं सत्यान्वितं सकललोकगुरुं सुरेशम् ॥
गायाम्यहं सुरसगीतकतालमानैः श्रीवत्समेकमखिलं भुवनस्य देवम् ॥ २०
ध्यायेऽखिलस्य भुवनस्य पतिं च देवं दुःखान्धकारदलनार्थमिहैव चन्द्रम् ॥
अज्ञाननाशक(म)मलं च दिनेशतुल्यमानन्दकन्दमखिलं महिमासमेतम् ॥
संपूर्णमेवममृतस्य कलौनिधानं तं गीतकौशलमनन्यरसैः प्रगाये ॥ २१
युक्तं सुयोगकरणैः परमार्थदृष्टिं विश्वं स पश्यति चराचरमेकमित्थम् ॥
पश्यन्ति नैव यमिहाथ सुपापलोकास्तं केशवं शरणमेकमुपैमि नित्यम् ॥ २२
कराभ्यां वाद्यमानस्तु तालं तालसमन्वितम् । गीतेन गायते कृष्णं बालकैः सह मोदते ॥ २३
एवं तु क्रीडते नित्यं बालभावेन वै तदा । सुव्रतः सुमनापुत्रो विष्णुध्यानपरायणः ॥ २४
क्रीडमानं प्राह माता सुव्रतं चारुलक्षणम् । भोजनं कुरु मे वत्स क्षुधा त्वां परिपीडयेत् ॥ २५
तामुवाच तदा प्राज्ञः सुमनां मातरं पुनः । महामृतेन तृप्तोऽस्मि हरिध्यानरसेन वै ॥
भोजनासनमारूढो मिष्टमन्नं प्रपश्यति ॥ २६
इदमन्नं स्वयं विष्णुरात्मा ह्यन्नं समाश्रितः । आत्मरूपेण यो विष्णुश्चान्नेनानेन तृप्यतु ॥ २७
क्षीरसागरसंवासो यस्यैव परिसंस्थितः । जलेनानेन पुण्येन तृप्तिमायातु केशवः ॥ २८
ताम्बूलचन्दनैर्गन्धैरेभिः पुष्पैर्मनोहरैः । आत्मरूपेण गोविन्दस्तृप्तिमायातु केशवः ॥ २९
शयनं याति धर्मात्मा तदा कृष्णं प्रचिन्तयेत् । योगनिद्रायुतं कृष्णं तमहं शरणं गतः ॥ ३०
भोजनाच्छादनेष्वेवमासने शयने द्विजः । चिन्तयेद्वासुदेवं तं तस्मै सर्वं प्रकल्पयेत् ॥ ३१
तारुण्यं प्राप्य धर्मात्मा कामभोगान्विहाय वै । संयुक्तः केशवध्याने वैडूर्ये पर्वतोत्तमे ॥ ३२
तत्र सिद्धेश्वरं लिङ्गं वैष्णवं पापनाशनम् । रुद्रमोंकारसंज्ञं च ध्यात्वा चैवं महेश्वरम् ॥ ३३
ब्रह्माणं विद्धि तं देवं नर्मदादक्षिणे तटे । सिद्धेश्वरं समाश्रित्य तपोभावं व्यचिन्तयत् ॥ ३४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुमनोपाख्याने विंशोऽध्यायः ॥ २० ॥

आदितः श्लोकानां समष्ट्यङ्काः—४२९९

---

अथैकविंशोऽध्यायः ।

---

व्यास उवाच—
आश्रमेकं महाभाग करिष्ये सांप्रतं वद । त्वयैव पूर्वमुक्तं तु सुव्रतं च प्रतीश्वरम् ॥ १

---

१ क. ख. ङ. च. छ. झ. ट. ड. ढ. मे मुररिपो कुरु तस्य र° । ग. घ. मेऽसुररिपो कुरु । २ क. ख. ङ. च. छ. झ. °. श्रीरङ्गमे° । ३ क. ख. ङ. च. छ. झ° ड. ढ. °लाविताने । ४ क. ख. ग. घ. छ. च. ज. ज. ट. ड. ढ. °मेव नित्यम् । ५ छ. पवित्रं ६ ग. °च—पुराणे(ने)न महाभाग कारितं किंच तद्वद ।

पूर्वाभ्यासेन स ध्यायन्नारायणमनामयम् । कस्यां जातौ समुत्पन्नः सुव्रतः पूर्वजन्मनि ॥ २
तन्मे त्वं सांप्रतं ब्रूहि कथमाराधितो हरिः । अनेनापि सुदेहेन कोऽयं पुण्यसमन्वितः ॥ ३

ब्रह्मोवाच....

वैदिशे नगरे पुण्ये बहुवृद्धिसमाकुले । तत्र राजा महातेजा ऋतध्वजसुतो बली ॥ ४
तस्याऽऽत्मजो महापुण्यो रुक्मभूषणसंज्ञकः । संध्याबली तस्य भार्या धर्मपत्नी यशस्विनी ॥ ५
तस्यां पुत्रं समुत्पाद्य स आत्मसदृशं बली[३] । तस्य धर्माङ्गदं नाम चकार नृपनन्दनः ॥ ६
सर्वलक्षणसंपन्नः पितृभक्तिपरायणः । रुक्माङ्गदस्य तनयो यो[४]ऽयं भगवतां वरः ॥ ७
पितुः सौख्यार्थमेवापि मोहिन्यर्थे शिरो ददौ । वैष्णवेन च धर्मेण पितृभक्त्या तु तस्य वै ॥ ८
सुप्रसन्नो हृषीकेशः सकायो वैष्णवं पदम् । नीतश्चैव तु सर्वज्ञो वैष्णवः सात्वतां वरः ॥ ९
धर्माङ्गदो महाप्राज्ञः प्रज्ञाज्ञानविशारदः । तत्रस्थो वै महाप्राज्ञो धर्मोऽसौ धर्मभूषणः ॥ १०
दिव्यान्मनोनुगान्भोगान्मोदमानः प्रभुञ्जति । पूर्णे[६] वर्षसहस्रान्ते धर्मात्मा धर्मभूषणः ॥ ११
तस्मात्पदात्परिभ्रष्टो विष्णोरेव प्रसादतः । सुव्रतो नाम मेधावी सुमनानन्दवर्धनः ॥ १२
सोमशर्माख्यतनयः श्रेष्ठो भगवतां वरः । तपश्चचार मेधावी विष्णुध्यानपरोऽभवत् ॥ १३
कामक्रोधादिकान्दोषान्परित्यज्य द्विजोत्तमः । सं[७]नियम्येन्द्रियवर्गं तपस्तेपे स निर्जने ॥ १४
वैदूर्यपर्वतश्रेष्ठे सिद्धेश्वरसमीपतः । एकीकृत्य मनश्चार्यं संयोज्य विष्णुना सह ॥ १५
एवं वर्षशतं स्थित्वा ध्याने तस्य महात्मनः । सुप्रसन्नो जगन्नाथः शङ्खचक्रगदाधरः ॥ १६
तस्मै वरं ददौ चाथ लक्ष्म्या च सह केशवः । भो भोः सुव्रत धर्मात्मन्बुध्यस्व विबुधाधिप[८]॥ १७
वरं वरय भद्रं ते कृष्णोऽहं ते समागतः । एवमाकर्ण्य मेधावी विष्णोर्वाक्यमनुत्तमम् ॥ १८
हर्षेण महताऽऽविष्टो दृष्ट्वा देवं जनार्दनम् । बद्धाञ्जलिपुटो भूत्वा प्रणाममकरोत्तदा ॥ १९

सुव्रत उवाच—

संसारसागरमतीव गभीरपारं दुःखोर्मिभिर्विविधमोहमयैस्तरङ्गैः ॥
संपूर्णमस्ति निजदोषगुणैस्तु प्राप्तं तस्मात्समुद्धर जनार्दन मां सुदीनम् ॥ २०
[ *कर्माम्बुदे महति गर्जति वर्षतीव विद्युल्लतोल्लसति पातकसंचयैर्मे ॥
मोहान्धकारपटलैर्मम नष्टदृष्टेर्दीनस्य तस्य मधुसूदन देहि हस्तम् ॥ ] २१
संसारकाननवरं बहुदुःखवृक्षैः संसेव्यमानमपि मोहमयैश्च सिंहैः ॥
संदीप्त[१०]मस्ति करु[११]णाबहुवह्नितेजःसंतप्यमानमनसं परिपाहि कृष्ण ॥ २२
संसारवृक्षमतिजीर्णमपीह उच्चं मायासुकन्दकरुणाबहुदुःखशाखम्[१२] ॥
जायादिसंघच्छदनं फलितं मुरारे तं चाधिरूढपतितं भगवन्निह रक्ष ॥ २३

---

* क. ख. ग घ. ङ. च छ. झ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः ।

---

१ ञ. °समाविलः । ब्र. । २ क. ख. ङ. च. छ. झ. ड. ढ. °णविश्रुतः । सं° । ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड ढ. ततः । ४ क. च. योग्यो । ५ ञ. °मानो भुगं दिपि । पू° । ६ क. ख. ङ. च. छ. झ. ढ. °र्णे युगस° । ७ ग. घ. ज. संयम्य त्रितयं व । ट. संयम्य त्रिविधं व. । ८ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. विबुधां वर । ९ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. व °महासुदुःखैर्जालोर्मि° । १० ञ. संघाष्टिम° । ११ ञ. करणाल्नव । १२ क. ख. ग. घ. ङ. च छ. ज. झ. ट. ढ. °म् । पापैस्तु संचयघनं ।

दुःखानलैर्विविधमोहमयैः सुधूमैः शोकैर्वियोगमरणान्तकसंनिभैश्च ॥
दग्धोऽस्मि कृष्ण सततं मम देहि मोक्षं ज्ञानाम्बुनाऽथ परिषिच्य सदैव मां त्वम् ॥
मोहान्धकारपटले महतीव गर्ते संसारनाम्नि सततं पतितं हि कृष्ण ।
कृत्वा तरीं मम हि दीनभयातुरस्य तस्माद्विकृष्य शरणं नय मामितस्त्वम् ॥ २५
त्वामेव ये नियतमानसभावयुक्ता ध्यायन्त्यनन्यमनसा पदवीं लभन्ते ।
नत्वैव पादयुगलं [ *च महत्सुपुण्यं ये देवकिंनरगणाः परिचिन्तयन्ति ॥ २६
नान्यं वदामि न भजामि न चिन्तयामि त्वत्पादपद्मयुगलं ] सततं नमामि ।
एवं हि मामुपगतं शरणं च रक्ष दूरेण यान्तु मम पातकसंचयास्ते ॥
दासोऽस्मि भृत्यवदहं तव जन्म जन्म त्वत्पादपद्मयुगलं सततं नमामि ॥ २७
यदि कृष्ण प्रसन्नोऽसि देहि मे वर मुत्तमम् । मम तौ पितरौ कृष्ण सकायौ नय मन्दिरे ॥
आत्मनश्चै कलत्रं च मया सह न संशयः॥ २८

श्रीकृष्ण उवाच—

एवं ते परमः कामो भविष्यति न संशयः । तस्य तुष्टो हृषीकेशो भक्त्या तस्य प्रतोषितः ॥२९
प्रयातो वैष्णवं लोकं दाहप्रलयवर्जितम् । सुव्रतेन समं तौ द्वौ सुमनासोमशर्मकौ ॥ ३०
यावत्कल्पद्वयं प्राप्तं तावद्वै सुव्रतो द्विजः । बुभुजे पुण्यजाँल्लोकान्भोगांश्चैव महामनाः ॥ ३१
देवकार्यार्थमत्रैव कश्यपस्य गृहे पुनः । अवतीर्णो महाप्राज्ञो वचनात्तस्य शार्ङ्गिणः ॥ ३२
ऐन्द्रं पदं हि यो भुङ्क्ते विष्णोश्चैव प्रसादतः । वसुदत्तेति विख्यातः सर्वदेवैर्नमस्कृतः ॥
[*ऐन्द्रं पदं हि यो भुङ्क्ते सांप्रतं वासवो दिवि] ॥ ३३
एतत्ते सर्वमाख्यातं सृष्टिसंबन्धकारणम् । अन्यच्चैव प्रवक्ष्यामि यत्पृच्छसि महामते ॥ ३४

व्यास उवाच—

धर्माङ्गदो महाप्राज्ञो रुक्माङ्गदसुतो बली । आद्ये कृतयुगे प्राप्ते सृष्टिकाले स वासवः ॥
तत्कथं देवदेवेश ह्यन्यो धर्माङ्गदो भुवि ॥ ३५
अन्यो धर्माङ्गदो राजा किंवाऽयं त्रिदशाधिपः । एतं मे संशयं जातं तद्भवांश्छेत्तुमर्हति ॥ ३६

ब्रह्मोवाच—

हन्त ते कीर्तयिष्यामि सर्वसंदेहनाशनम् । देवस्य लीला सृष्ट्यर्थं वर्तते द्विजसत्तम ॥ ३७
यथा वाराश्च पक्षाश्च मासाश्च ऋतवो यथा । संवत्सराश्च मनवो यथा यान्ति युगानि च ॥ ३८
तथा कल्पाः समायान्ति व्रजाम्येवं जनार्दनम् । अहमेव महाप्राज्ञ मयि यान्ति चराचराः ॥३९
पुनः सृजति योगात्माँ पूर्ववद्विश्वमेव हि । पुनश्चाहं पुनर्वेदाः पुनस्ते देवता द्विजाः ॥ ४०
तथा भूपाश्च ते सर्वे प्रजाश्चैव तथाऽखिलाः । प्रभवन्ति महाभाग विद्वांस्तत्र न मुह्यति ॥ ४१
पूर्वकल्पे महाभागो यथा रुक्माङ्गदो नृपः । तथा धर्माङ्गदश्चायं संजातः ख्यातिमान्द्विज ॥ ४२

---

* ग. घ. ज. ट. ड. पुस्तकस्थोऽयं पाठः । * क ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः ।

---

१ क. ख. ङ. च. छ. झ. ट. ड. ढ. कृपां । २ क. ख. ग. घ. ङ. च. छ. झ. ञ. ट. ठ. ध्यानेन ज्ञानम॰ । ३ क. ख. ग. घ. ङ. च. छ. झ. ट. हि काममपि पूरय मेऽद्य कृष्ण दू॰ । ४ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. ॰श्च महादेव म॰ । ५ क. ख. ग. घ. ङ. च. छ. ड. ढ. रुक्माङ्गदो । ६ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. तात । ७ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. ॰त्मा मत्पूर्वं विश्व॰ । ८ क. ख. घ. ङ. च. छ. झ. ट. ड. ॰वैं स्वचरित्रे समाविलाः ।

रामादयो महाप्राज्ञा ययातिनहुषादयः । मन्वादयो महात्मानः प्रभवन्ति लयन्ति च ॥ ४३
ऐन्द्रं पदं प्रभुञ्जन्ति राजानो धर्मतत्पराः । यथा धर्माङ्गदो वीरः प्रभुनक्ति महत्पदम् ॥ ४४
एवं देवाश्च वेदाश्च पुराणस्मृतिपूर्वकाः । एतत्सर्वं समाख्यातं तवाग्रे द्विजसत्तम ॥
चरितं सुव्रतस्याथ पुण्यं सुगतिदायकम् ॥ ४५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे ऐन्द्रे सुव्रतोपाख्यानं नामैकविंशोऽध्यायः ॥ २० ॥

आदितः श्लोकानां समष्ट्यङ्काः—४३४०

---

## अथ द्वाविंशोऽध्यायः ।

---

ऋषय ऊचुः—

विचित्रेयं कथा पुण्या सर्वधर्मप्रदायिनी । सर्वपापहरा प्रोक्ता भवता वदतां वर ॥ १
सृष्टि[3]संबन्धमेतं नस्तद्भवान्वक्तुमर्हति । पूर्वमेव कथं सृष्टिर्विस्तरात्सूतनन्दन ॥ २

सूत उवाच—

विस्तरेण प्रवक्ष्यामि सृष्टिसं[4]हारकारणम् । श्रुतमात्रेण यस्यापि नरः सर्वज्ञतां व्रजेत् ॥ ३
हिरण्यकशिपुर्यो हि तेन व्याप्तं जगत्त्रयम् । तपसाऽऽराध्य ब्रह्माणं वरं प्राप सुदुर्लभम् ॥ ४
[*तस्माद्देवान्महाभागादमरत्वं तथैव च । देवाँल्लोकान्समं व्याप्य प्रभुत्वं स्वयमर्जितम् ॥ ५
ततो देवाः सगन्धर्वा मुनयो वेदपारगाः । नागाश्च किंनराः सिद्धा यक्षाश्चैव तथाऽपरे ॥ ] ६
ब्रह्माणं तं पुरस्कृत्य जग्मुर्नारायणं प्रभुम् । क्षीरसागरसंसुप्तं योगनिद्रां गतं प्रभुम् ॥
संविबोध्य महास्तोत्रैर्देवाः प्राञ्जलयः स्थिताः ॥ ७
संविबुद्धे तु देवेशे वृत्तान्तं सुदुरात्मनः । आचचक्षुर्महात्मानः समाकर्ण्य जगत्पतिः ॥ ८
नृसिंहरूपमास्थाय तं जघान महाबलम् । [*पुनर्वाराहरूपेण हिरण्याक्षं महाबलम्] ॥ ९
तद्वधाच्चैव संतप्ता असुरा युयुधुश्च तम् । सोऽप्यन्यांश्च जघानाथ दानवान्घोरदर्शनान् ॥ १०
एवं वै तेषु नष्टेषु दानवेषु महात्मसु । [†अन्येषु तेषु नष्टेषु दितिपुत्रेषु वै तदा ]॥ ११
पुनः स्थानं हि प्राप्तेषु देवेषु च महात्मसु । यज्ञेष्वथ प्रवृत्तेषु सर्वेषु धर्मकर्मसु ॥ १२
स्वस्थेषु सर्वलोकेषु दितिर्वै दुःखपीडिता । पुत्रशोकेन संतप्ता हाहाभूता विचेतना ॥ १३
भर्तारं सूर्यसंकाशं तपस्तेजःसमन्वितम् । दातारं च महात्मानं भर्तारं कश्यपं तदा ॥ १४
भक्त्या प्रणम्य विप्रेन्द्र तमुवाच महामतिम् । भगवन्नष्टपुत्राऽहं कृता देवेन चक्रिणा ॥ १५
दैत्याश्च दानवाः सर्वे देवैश्चैव निपातिताः । पुत्रशोकानलेनाहं संतप्ता मुनिसत्तम ॥ १६

---

* क ख. ङ. च. छ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः । † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतोऽयं पाठः क ख. ग. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ग. घ. च. छ. ज. झ. ट. ढ. °राणाः स्मृ° । २ क. ख. ङ. च. छ. झ. ढ. °म् । अव्यक्तं ते महाभाग प्रब्रवीमि तवाग्रतः । इ° । म. घ. ट. °म् । अन्यात्किं ते प्रवक्ष्यामि भवतां यद्विरोचते । इ° । ३ ग. घ. ज. ट. संहारमे° । ४ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. °संबन्धका° । ५ क. ख. ग. घ. च. छ. झ. ट. ड. ढ. °लयस्तदा । सं° । ६ क. ख. ङ. च. छ. झ ड. ढ. °म् । उद्धृता वसुधा पुण्या चासुरं घातितं तदा । सो° । ७ क. ख. ङ. च. छ. झ. ढ. दुष्टेषु ।

ममाऽऽनन्दकरं पुत्रं सर्वतेजोहरं विभो । सुबलं चारुसर्वाङ्गं रवितेजःसमप्रभम् ॥ १७
बुद्धिमन्तं च सर्वज्ञं ज्ञातारं सर्वदेहिनाम् । तपस्तेजःसमायुक्तं वेदज्ञं वेदपारगम् ॥ १८
[*ब्रह्मज्ञं ज्ञानवेत्तारं देवब्राह्मणपूजकम् ।] जेतारं सर्वलोकानां †ममाऽऽनन्दकरं द्विज ॥ १९
सर्वलक्षणसंपन्नं पुत्रं मे दीयतां विभो । एवमाकर्ण्य वै तस्याः कश्यपो वाक्यमुत्तमम् ॥ २०
कृपाविष्टमनास्तुष्टो दुःखितां तां द्विजोत्तमः । समुवाच महाभागः कृपणां दीनमानसाम् ॥ २१
तस्याः शिरसि संन्यस्य स्वहस्तं भावतत्परम् । भविष्यति महाभागे यादृशो वाञ्छितः सुतः २२
एवमुक्त्वा जगामासौ मेरुं गिरिवरोत्तमम् । तपस्तेपे निरालम्बा साधयन्परमद्युतिः ॥ २३
एतस्मिन्नन्तरे सा तु गर्भं दधार चोत्तमम् । सा दितिः सर्वधर्मज्ञा चारुकर्मा मनस्विनी ॥ २४
शतवर्षप्रमाणं तु शुचिष्मती बभूव ह । तयाऽथ जनितः पुत्रो ब्रह्मतेजःसमन्वितः ॥ २५
[ *अथ कश्यप आयातो हर्षेण महताऽन्वितः ] । चकार नाम मेधावी तस्य पुत्रस्य सत्तमः २६
बल इत्यब्रवीद्विप्रो नाम तत्सदृशो महान् । एवं नाम च कृत्वाऽथ व्रतबन्धं चकार सः ॥ २७
प्राह पुत्र महाभाग ब्रह्मचर्यं प्रसाधय । एवमेतत्करिष्यामि तद्वाक्यं जगृहे च सः ॥ २८
वेदस्याध्ययनं कुर्याद्ब्रह्मचर्येण सुव्रतः । एवं वर्षशतं जातं तस्यैवं च तपस्यतः ॥ २९
मातुः समीपमायाति तपस्तेजःसमन्वितः । तपोवीर्यमयं दिव्यं ब्रह्मचर्यं महात्मनः ॥ ३०
दितिः पश्यति पुत्रस्य हर्षेण महताऽन्विता । तमुवाच महात्मानं बलं पुत्रं तपस्विनम् ॥ ३१
मेधाविनं महाप्राज्ञं प्रज्ञाज्ञानविशारदम् । त्वयि जीवति भो वत्स प्रजीवन्ति सुता मम ॥ ३२
हिरण्यकशिपाद्याश्च ये हताश्चक्रपाणिना । वैरं साधय मे वत्स जहि देवान्रिपून्रणे ॥ ३३
दनुश्च तमुवाचाथ बलं पुत्रं महाबलम् । आदाविन्द्रं हि देवेशं द्रुतं सूदय पुत्रक ॥ ३४
पश्चाद्देवान्निपात्यैतांस्ततो गरुडवाहनम् । तथा चाऽऽकर्ण्य सा देवी ह्यदितिः पतिदेवता ॥ ३५
दुःखेन महताऽऽविष्टा पुत्रमिन्द्रमभाषत । दितिपुत्रो महातेजा महाकायो व्यवर्धितः ॥ ३६
देवानां हि वधार्थाय तपस्तेपे निरञ्जने । एवं जानीहि देवेश यदि क्षेममिहेच्छसि ॥ ३७
तच्छ्रुत्वा वचनं तस्याः स मातुः पाकशासनः । चिन्तामवाप दुःखेन महतीं देवराट् तदा ॥ ३८
महाभयेन संत्रस्तश्चिन्तयामास वै तदा । कथमेनं हनिष्यामि वेदधर्मविदूषकम् ॥ ३९
इति निश्चित्य देवेशो बलस्य निधनं प्रति । एकदा तु बलः सायं संध्यार्थं सिंधुमागतः ॥ ४०
कृष्णाजिनेन दिव्येन दण्डकाष्ठेन राजितः । अमलेनापि पुण्येन ब्रह्मचर्येण तेजसा ४१
सागरस्योपकण्ठे तं संध्यासनमुपागतम् । जपमानं तु तं दैत्यं दर्शयामास वासवः ॥ ४२
वज्रेण पाटयामास देवेन्द्रोऽसौ बलं तदा । एवं निपतितं दृष्ट्वा गतसत्त्वं गतं भुवि ॥
हर्षेण महताऽऽविष्टो देवराण्मुमुदे तदा ॥ ४३

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । † अ. पुस्तके "देवब्राह्मणकण्टकम्" इति पाठो वर्तते तथाऽपि पूर्वार्धे "देवब्राह्मणपूजकम्" इति विशेषणविरोधादन्यपुस्तकात् 'ममाऽऽनन्दकरं द्विज' इति पाठो मूले निवेशितः ॥ * एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. °र्मं देवते° । २ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °र्वपण्डितम् । ज. °र्वप्राणिनाम् । ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °क्तं सुबलं चारुलक्षणम् । ४ क. ख. च. छ. ढ. °णे । सा दितिस्तमु° । ५ क. ख. च. छ. झ. ढ. तयोराक° । ६ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °हाकायो वर्धते ब्रह्मतेजस । दे° । ७ अ. °पस्तप्यञ्जगाद ह । दिवं अहीहि । ८ क. ख. ङ. च. छ. झ. ढ. तेन सः । सा° । ९ क. ख. ङ. च. छ. झ. ढ. °नं सुशान्तं सं°।

एवं निपातितं दैत्यं दितिनन्दनमेव च[1]। वीक्ष्योत्सवं चकाराऽऽशु सुखेन पाकशासनः ॥ ४४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे बलदैत्यवधो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४३८४

अथ त्रयोविंशोऽध्यायः ।

सूत उवाच—

हतं श्रुत्वा[2] दितिः पुत्रमिन्द्रेण तु महाद्विजाः । दुःखिता करुणं कृत्वा रुरोद च भृशं तथा ॥ १

भर्तारं च पुनः प्राप्य स्वदुःखं समुवाच ह । तव पुत्रो महापाप इन्द्रः सुरगणेश्वरः ॥ २

सागरोपगतं दृष्ट्वा[3] मम पुत्रं बलं तथा । वज्रेण पातयामास जपमानं सनातनम् ॥ ३

एवं श्रुत्वा ततः क्रुद्धो मरीचितनयस्तदा । क्रोधेन महताऽऽविष्टः प्रजज्वालेव वह्निना ॥ ४

अवलुञ्च्य जटामेकां जुहावासौ द्विजोत्तमः । इन्द्रस्यैव वधार्थाय पुत्रमुत्पादयाम्यहम् ॥ ५

तस्मात्कुण्डात्समुत्पन्नो हुताशनमुखादपि । कृष्णाञ्जनचयोपेतः पिङ्गाक्षो भीषणाकृतिः ॥ ६

दंष्ट्राकरालवक्त्रान्तो जगतां भयदायकः । महासत्त्वनिभो घोरो मृगचर्मधरस्तथा ॥ ७

सखड्गस्तेजसा दीप्तो महामेघोपमो बली । उवाच कश्यपं विप्रमादेशो मम दीयताम् ॥ ८

कस्मादुत्पादितो विप्र भवता कारणं वद । तमहं साधयिष्यामि प्रसादात्तव सुव्रत ॥ ९

कश्यप उवाच—

अस्या मनोरथं पुत्र पूरयस्व ममैव हि । आदित्याख्यं महाप्राज्ञ जहि इन्द्रं दुरात्मकम् ॥ १०

निहते देवराजे तु पदमैन्द्रं प्रभुङ्क्ष्व च । एवं तेन समादिष्टः कश्यपेन महात्मना ॥ ११

वृत्रस्तु ह्युद्यमं चक्रे तस्येन्द्रस्य वधाय च । [4]चतुर्वेदस्य चाभ्यासं स चक्रे पौरुषान्वितः ॥ १२

बलं वीर्यं तथा क्षात्रं तेजोधैर्यसमन्वितम् । [ *दृष्ट्वा वृत्रस्य दैत्यस्य सहस्राक्षो भयातुरः] ॥ १३

उपायश्चिन्तितस्तस्य वृत्रस्यापि [5]दुरात्मनः । वधार्थं देवराजेन ह्याहूयासौ महामुनीन् ॥

सप्तर्षीन्प्रेषयामास वृत्रं दैत्येश्वरं प्रति ॥ १४

भवन्तस्तत्र गच्छन्तु यत्र वृत्रः स तिष्ठति । संधिं कुर्वन्तु वै तेन सार्धं मम मुनीश्वराः ॥ १५

एवं तेन समादिष्टा मुनयः सप्त ते तदा । वृत्रासुरं गताः प्रोचुः सहस्राक्षः प्रयाचति ॥ १६

सख्यं कर्तुं प्रयच्छेत्स क्रियतां दैत्यसत्तम । [ †ऋषयः सप्त तत्त्वज्ञा ऊचुर्वृत्रं महाबलम् ॥ १७

सहस्राक्षो महाप्राज्ञो भवता सह सत्तम । मैत्रमिच्छति वै कर्तुं तत्कथं न करोषि किम् ] ॥ १८

अर्धमैन्द्रं पदं वीर स त्वं भुङ्क्ष्व सुखेन वै । वक्ति त्वामेवमिन्द्रोऽपि ह्यसुरा देवतास्तथा[6] ॥

कुरु मैत्रीं तु तैः सर्वैर्वैरं दूरे विसृज्य वै ॥ १९

* एतच्चिह्नान्तर्गत पाठोऽयं ट. पुस्तकस्थः। †एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. ट. ड. ढ. पुस्तकस्थः।

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. च। राज्यं चकार धर्मात्मा सु° । २ क. ख. ङ. च. छ. झ. ड. ढ. °त्वा तया पुत्रं सुबलं बलमेव च । रुदितं करुणं कृत्वा हाहा कष्टं भृशं मम । एवं सुकरुणं कृत्वा बहुकालं तपस्विनी। सा गता कश्यपं कान्तं तमुवाच यशस्विनी । तव । ३ क. ख. ग. घ. ङ च. छ. झ. ट. ड. ढ. °दृष्ट्वा बलं मे महालक्षणम् । व° । ४ क. ख. ग. घ. ङ च. छ. झ. ट. ड. ढ. धनुर्वेदस्य । ५ क. ख. च. झ. महात्मनः । ६ क. ख. ग. ङ. च. छ. झ. ड. ढ. °था । सुखं वर्तन्तु ते सर्वे वैरं ।

वृत्र उवाच—

यदि सत्येन देवेन्द्रो मैत्रमिच्छति सत्तमः । सत्यमाश्रित एवाहं करिष्ये नात्र संशयः ॥ २०
छद्ममेवं पुरस्कृत्य इन्द्रो द्रोहं समाचरेत् । तदा किं क्रियते विप्रा इत्यर्थे प्रत्ययं हि किम् ॥ २१
अथर्षयस्त्विन्द्रमूचुरित्यर्थप्रत्ययं वद । तत्र त्वं सत्यतां ब्रूहि यदि मैत्रमिहेच्छसि ॥ २२

इन्द्र उवाच—

यद्यसत्येन वर्तेऽहं भवद्भिः सह च्छद्मना । ब्रह्महत्यादिकैः पापैर्लिप्येऽहं नात्र संशयः॥ २३
[*ते वृत्रं दैत्यनाथं तं पुनरूचुर्महौजसः । ब्रह्महत्यादिकैः पापैर्लिप्येऽहं नात्र संशयः] ॥ २४
इत्युवाच महाप्राज्ञ त्वामेवं स पुरंदरः । एतेन प्रत्ययेनापि सख्यं कुरु महामते ॥ २५

वृत्र उवाच—

भवतां शिष्टधर्मेण सत्येन तेन तस्य च । मैत्रमेवं करिष्यामि तेन सार्धं द्विजोत्तमाः ॥ २६
वृत्रमिन्द्रस्य संस्थानं नीतं ब्राह्मणपुंगवैः । इन्द्रस्तमागतं दृष्ट्वा वृत्रमित्रार्थमुद्यतम् ॥ २७
सिंहासनात्समुत्थाय ह्यर्घमादाय सत्वरः । ददौ तस्मै स धर्मात्मा वृत्राय द्विजसत्तमाः ॥ २८
अर्धं भुङ्क्ष्व महाप्राज्ञ ऐन्द्रमेवं महत्पदम् । वर्तितव्यं सुखेनापि चाऽऽवाभ्यां दैत्यसत्तम ॥ २९
एवं विश्वासयन्दैत्यं वृत्रं मैत्रेण वै तदा । तेषु तेषु च कार्येषु च्छद्मना द्विजसत्तमाः ॥ ३०
छिद्रं पश्यति दुष्टात्मा वृत्रस्यैवं सदैव हि । निराधारत्वमिन्द्रोऽपि दिवारात्रौ प्रवर्तते ॥ ३१
वृत्रस्य पश्यन्स च्छिद्रं छद्मनाऽपि महात्मनः । उपायं चिन्तयामास वृत्रहत्यै महाबलः ॥ ३२
रम्भा संप्रेषिता तेन मोहायास्यासुरस्य वै । येन केनाप्युपायेन यथाऽहं घातये शुभे ॥ ३३
तथा कुरुष्व कल्याणि संमोहाय सुरद्विषः । वनं पुण्यं महद्दिव्यं पुण्यपादपशोभितम् ॥ ३४
बहुपुष्पफलोपेतं मृगपक्षिसमाकुलम् । विमानैरद्भुतैर्दिव्यैः परितः परिशोभितम् ॥ ३५
दिव्यगन्धर्वसंगीतं भ्रमराकुलितं सदा । कोकिलानां रुतैः पुण्यैः सर्वत्र मधुरायते ॥ ३६
[†शिखिसारङ्गनादैश्च सर्वर्तुकुसुमाकुलम् ]। दिव्यैस्तु चन्दनैर्वृक्षैः सर्वत्र समलंकृतम् ॥ ३७
[*वापीकूपतडागैश्च जलपूर्णैर्मनोहरैः । कमलैः शतपत्रैश्च पुष्पितैः समलंकृतम् ॥ ३८
देवगन्धर्वसिद्धैश्च चारणैश्चैव किंनरैः ] । मुनिभिः शुशुभे दिव्यैर्देवोद्यानवनेन च ॥ ३९
अप्सरोगणसंकीर्णनानाकौतुकमङ्गलैः । हेमप्रासादसंबाधैर्दण्डच्छत्रैश्च चामरैः ॥ ४०
[†कलशैश्च पताकाभिः सर्वत्र समलंकृतम् ] । वेदध्वनिसमाकीर्णं गीतध्वनिसमाकुलम् ॥ ४१
एवं नन्दनमासाद्य सा रम्भा चारुहासिनी । अप्सरोभिः समं तत्र क्रीडत्येवं विलासिनी ॥४२

सूत उवाच—

एकदा तु स वृत्रो वै जगाम नन्दनं वनम् । कतिभिर्दानवैः सार्धं विश्वस्तः परया मुदा ॥ ४३
अलक्ष्यो भ्रमते पार्श्वे तस्यैव च महात्मनः । देवराजः स विप्रेन्द्राश्छिद्रान्वेषी विशङ्कितः॥ ४४

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. च. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. ङ. च. छ. झ. ट. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ ञ. °यं वदेत् । अ° । २ क. ख. ङ. च. छ. झ. ड. ढ. °दा । गतेषु तेषु विप्रेषु स्वस्थानं द्वि° । ३ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. प्राचिन्तयेत् । ४ ग. घ. °मानमन्दिरैर्दिव्यैः सर्वत्र प° । ट °मानवापिकारामैः सर्वत्र प° । ५ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. °र्धं मुदया परया युतः । अ° ।

स हि वृत्रो महाप्राज्ञो विश्वस्तः सर्वकर्मसु । इन्द्रं मित्रं परं ज्ञात्वा भयं चक्रे न तस्य सः ॥ ४५
भ्रममाणो वनं पश्येत्सर्वत्र परमं शुभम् । सुरम्यं कौतुकवनं वनिताशतसंकुलम् ॥ ४६
चन्दनस्यापि वृक्षस्य च्छायां शीतां शुभान्विताम् । समाश्रित्य विशालाक्षी रम्भा तत्र च दीव्यति ४७
सखीभिस्तु महाभागा दोलारूढा यशस्विनी । गायते सुस्वरं गीतं सर्वविश्वप्रमोहनम् ॥ ४८
तत्र वृत्रः समायातः कामाकुलितमानसः । दोलारूढां समालोक्य रम्भां तां सुमनोरमाम् ॥ ४९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वृत्रवञ्चने त्रयोविंशोऽध्यायः ॥ २३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४४३३

---

अथ चतुर्विंशोऽध्यायः ।

---

सूत उवाच—

इयं तु का गायति चारुलोचना विलासयन्ती परितो वनं च ॥
अतीव शोभां लभते मनोहरा ह्यपूर्वभावैः परिमोहयन्ती ॥ १
[*दृष्ट्वा स रम्भां कमलायताक्षीं पीनस्तनीं चन्दनचर्चिताङ्गीम् ।
पद्मानना कामगृहं न वैषा नो वा रतिश्चारुमनोहरेयम् ॥] २
संपूर्णभावां परिरूपयुक्तां कामाङ्गलीलामतिमादधानाम् ।
पश्यामि चैनां च सुकाममोहितां यास्यामि पृच्छामि च का भवेत्सा ॥ ३
इतीव दैत्यः सुविचिन्तयानः कालेन मुग्धः स च कालनोदितः ।
रम्भां तु तां तत्र जगाम सत्वरमुवाच वै दीनमनाः सुलोचनाम् ॥ ४
कस्यासि वा सुन्दरि केन सेविता किं नाम ते पुण्यतमं वदस्व मे ॥
तवैव रूपेण महातितेजसा मुग्धोऽस्मि बाले मम वश्यतां व्रज ॥ ५

एवमुक्ता विशालाक्षी प्राह कामातुरं प्रति । अहं रम्भा महाभाग क्रीडार्थं वनमुत्तमम् ॥ ६
सखीभिः सहिता याता नन्दनं कामदं शुभम् । त्वं च को वा किमर्थं हि मम पार्श्वमुपागतः ॥७

वृत्र उवाच—

श्रूयतामभिधास्यामि योऽहं बाले समागतः । हुताशनात्समुत्पन्नः कश्यपस्य सुतः शुभे ॥ ८
सखाऽहं देवदेवस्य शक्रस्यापि शुभानने । ऐन्द्रं पदं वरारोहे ह्यर्धं मे भुक्तिमागतम् ॥ ९
अहं वृत्रः कथं देवि मां चैवं त्वं न विन्दसि । त्रैलोक्यं वशमायातं पश्य मे वरवर्णिनि ॥ १०
अहं शरणमायातः कामाद्दृग्मि वरानने । रमस्व मां विशालाक्षि कामेनाऽऽकुलितं प्रिये ॥ ११

रम्भोवाच—

वशगाऽहं तवैवाद्य भविष्यामि न संशयः । यद्यद्ददाम्यहं वीर तत्तत्कार्यं त्वयैव हि ॥ १२

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. मुपुण्यदां । २ क. ख. ङ. च. छ. झ. ड. ढ. °सभावैः परिविश्वमोहना । अतीव बाला शुशुभे मनोहरा संपूर्णभावैः परिमोहयेज्जनम् । द° ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °ङ्गशीलामतिशीलभावाम् । प° । ४ क. ख. ग. घ. ङ. छ. ज. झ. ड. ढ. °म् । यास्याम्यहं वश्यमिहैव त्वस्या मनोभवेनाद्य इहैव प्रेषितः । इ° । ५ क. ख. ङ. च. छ. झ. ढ. कामेन । ६ क. ख. ङ. च छ. झ. ट. ढ. °तः । समातुरस्तत्र । ङ. °तः । कामातुरस्तत्र । ७ क. च. ग. घ. ङ. च. छ. झ. ड. ढ. प्रेषिता । ८ क ख. च. छ. झ. ट. ढ. °माद्रक्ष व° ।

एवमस्तु महाभागे तत्तत्सर्वं करोम्यहम् । एवं संभाषणं कृत्वा तया सह महाबलः ॥ १३
तस्मिन्वने महापुण्ये रेमे दानवसत्तमः । तस्या गीतेन नृत्येन हास्येन [१]चलितेन वा ॥ १४
अतिमुग्धो महादैत्यः स तस्याः सुरतेन च । तमुवाच महा[२]भागं दानवं सा वरानना ॥ १५
सुरापानं कुरुष्वेति पिबस्व मधुमाधवीम् । तामुवाच विशालाक्षीं रम्भां शशनिभाननाम् ॥ १६
पुत्रोऽहं ब्राह्मणस्यापि वेदवेदाङ्गपारगः । सुरापानं कथं भद्रे करिष्यामि विनिन्दितम् ॥ १७
त[३]यौ तु रम्भया देव्या प्रीत्या दत्ता सुरा हठात् । तस्या दाक्षिण्यभावैस्तु सुरापानं कृतं तदा १८
अतिमुग्धः सुरापानाज्ज्ञानभ्रष्टोऽभवत्तदा । त[४]दन्तरे सुरेन्द्रेण वज्रेण निहतस्तथा॥ * १९
ब्रह्महत्यादिकैः पापैः स लिप्तो वृत्रहा ततः । ब्राह्मणास्तु ततः प्रोचुरिन्द्र पापं कृतं त्वया ॥२०
अस्मद्वाक्यात्तु विश्वस्तो वृत्रो नाम महाबलः । हतो विश्वासभावेन एवं पापं त्वया कृतम् ॥ २१

इन्द्र उवाच—

येन केनाप्युपायेन हन्तव्योऽरिः सदैव हि । देवब्राह्मणहन्ता च यज्ञधर्मस्य कण्टकः ॥ २२
निहतो दानवो दुष्टो लोकानां च विनाशकृत् । किमर्थं कुपिता यूयमेतन्न्यायस्य लक्षणम् ॥ २३
विचारश्चापि कर्तव्यो भवद्भिर्द्विजसत्तमाः । पश्चा[५]त्कार्यं प्रकर्तव्यं न्याय्यान्याय्यं विचिन्त्यताम्॥
एवं संबोधिता विप्रा इन्द्रेणापि महात्मना । ब्रह्मादिभिः सुरैः सर्वैर्बोधितास्ते च सत्तमाः ॥
जग्मुः स्वस्थानमेवं हि निहते धर्मकण्टके ॥ २५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वृत्रासुरवधो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४४५८

---

अथ पञ्चविंशोऽध्यायः ।

---

सूत उवाच—

वृत्रं तु निहतं श्रुत्वा सा दितिर्दुःखपीडिता । पुत्रशोकेन तेनैव संदग्धा द्विजसत्तमाः ॥ १
उवाच च महात्मानं कश्यपं मुनिसत्तमम् । इन्द्रस्यापि सुदुष्टस्य वधार्थं मुनिपुंगवाः ॥ २
ब्रह्मतेजोमयं दिव्यं दुःसहं सर्वदैवतैः । पुत्रैकं दातुमर्होऽसि सुप्रियाऽहं यदा विभो ॥ ३

कश्यप उवाच—

निहतौ बलवृत्रौ तौ मम पुत्रौ महाबलौ । पापमाश्रित्य देवेन इन्द्रेणापि दुरात्मना ॥ ४
तस्यैव च वधार्थाय पुत्रमेकं ददाम्यहम् । [†वर्षाणां तु शतैकं त्वं शुचिर्भव यशस्विनि]॥ ५
एवमुक्त्वा स योगीन्द्रो हस्तं शिरसि वै तदा । दत्त्वा दित्या सहैवासौ गतो मेरोस्तपोवनम्॥६
तप आस्थाय सा देवी त[६]पन्ती वह्निशालिनी । शु[७]चिष्मती सदा भूत्वा पुत्रार्थं द्विजसत्तमाः ॥ ७
ततो देवैः सहस्राक्षो ज्ञात्वा तस्यास्तमुद्यमम् । दित्याश्चैवं महाभागा अ[८]न्तरप्रेक्षकोऽभवत् ॥ ८

---

* अत्र "छ" चिह्नितपुस्तके "श्रुत्वा सप्तर्षयः क्रुद्धास्तत्राऽऽगत्येन्द्रमब्रुवन्" इति श्लोकार्धं दृश्यते । † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ट ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. ललितेन । २ क. ख. ग. ङ. च. छ. झ. ट ड. ढ. °भागा वृत्रं दानवसत्तमम् । सु° । ३ झ. °या दैत्यं प्रीत्या वै वशमानितम् । त° । ४ छ. तत इन्द्रेण संसुप्तं वज्रेणापि हतं तदा । ब्र° । ५ क. ख. ङ. च. छ. झ. ड. ढ. °श्चात्कोपं प्र° । ६ क. ख. ङ. च. छ. झ. ड. ढ. तपोवननिवासिनी । ७ अ. सुदुःखिता । ८ अ. °न्तरिक्षगतोऽभ° ।

पञ्चविंशाब्दिको भूत्वा देवराड्देवतापसः । ब्राह्मणस्य च रूपेण तस्याश्चान्तिकमागतः ॥ ९
स तां प्रणम्य धर्मात्मा मातरं तपसाऽन्विताम् । तयोक्तस्तु सहस्राक्षो भवान्को द्विजसत्तम ॥१०
तामुवाच सहस्राक्षः पुत्रोऽहं तव शोभने । ब्राह्मणो वेदविद्वांश्च धर्मं जानामि सुव्रते ॥
तपसस्तव साहाय्यं करिष्ये नात्र संशयः ॥ ११
शुश्रूषति स चैवं हि मातरं तां तपस्विनीम् । तमिन्द्रं सा न जानाति आगतं दुष्टकारिणम् ॥१२
धर्मपुत्रं विजानाति शुश्रूषन्तं दिने दिने । अङ्गं संवाहयेद्देव्याः पादौ प्रक्षालयेत्तथा ॥ १३
फलं पुष्पं पयः पत्रं वल्कलाजिनमेव च । ददात्येवं स धर्मात्मा प्रीत्या तस्यै सदैव हि ॥ १४
भक्त्या संतोषिता तस्य संतुष्टा तमभाषत । पुत्रे जाते महापुण्य इन्द्रे च निहते सति ॥ १५
कुरु राज्यं महाभागं पुत्रेण मम दैवकम् । एवमस्तु महाभागे त्वत्प्रसादाच्छुचिस्मिते ॥ १६
तस्याश्चैवान्तरं प्रेप्सुरभवत्पाकशासनः । पूर्णे वर्षशते तस्या ददर्शान्तरमीश्वरः ॥ १७
अकृत्वा पादयोः शौचं दितिः शयनमाविशत् । सुप्ता पश्चाच्छिरः कृत्वा मुक्तकेशा सुविह्वला१८
निद्रामाहारयामास तस्याः कुक्षिं प्रविश्य सः । वज्रपाणिस्ततो गर्भं सप्तधा विचकर्त ह ॥ १९
वज्रेण तीक्ष्णधारेण रुरोद उदरे स्थितः । स गर्भस्तत्र विप्रेन्द्रा इन्द्रहस्तगतेन वै ॥ २०
रुदमानं महागर्भं तमुवाच पुनः पुनः । शतक्रतुर्महातेजा मा रोदीरित्यभाषत ॥ २१
[*सप्तधा कृतवाञ्शक्रस्तं गर्भं दितिजं पुनः ।] पुनः स रोदमानं तमेकैकं सप्तधाऽकरोत् ॥ २२
ते वै जातास्तु मरुतो देवाः सर्वे महौजसः । यथा इन्द्रेण वै प्रोक्ता बभूवुर्नामतस्तथा ॥ २३
[४]अनिवार्यमहाकायास्तीव्रतेजःपराक्रमाः । एकोनाश्च बभूवुस्ते पञ्चाशन्मरुतस्ततः ॥ २४
मरुतो नाम ते ख्याता इन्द्रमेव समाश्रिताः । भूतानामेव सर्वेषां रोचयन्तो जगन्महत् ॥ २५
वरं देवनिकायेषु हरिः प्रादात्प्रजापतिः । [†क्रमशस्तानि राज्यानि पृथुपूर्वाणि तानि वै ॥ २६
स देवः पुरुषः कृष्णः सर्वव्यापी जगद्गुरुः । तपोजिष्णुर्महातेजाः सर्व एकः प्रजापतिः] ॥ २७
पर्जन्यः पावकः पुण्यः सर्वात्मा सर्व एव हि । तस्य सर्वमिदं पुण्यं जगत्स्थावरजङ्गमम् ॥ २८
भूतसर्गमिदं सम्यक्श्रुत्वाऽथ द्विजसत्तमाः । न किंचिद्भयमस्तीह परलोकभयं कुतः ॥ २९
इमां सृष्टिं महापुण्यां सर्वपापहरां शुभाम् । यः शृणोति नरो भक्त्या सर्वपापैः प्रमुच्यते ॥ ३०
स हि धन्यश्च पुण्यश्च स हि सत्यसमन्वितः । यः शृणोति इमां सृष्टिं स याति परमां गतिम् ३१
सर्वपापविशुद्धात्मा विष्णुलोकं च गच्छति ॥ ३२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे मरुदुत्पत्तिर्नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४४९०

---

अथ षड्विंशतितमोऽध्यायः ।

---

सूत उवाच—

स प्रभुः सर्वदेवस्तु ह्यभ्यषिच्य ततो नृपम् । पृथुं वेनस्य तनयं सर्वराज्ये महाप्रभुः ॥ १

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ट. ढ. पुस्तकस्थः । † क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थोऽयं पाठः ।

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °व तोपमः । ब्रा° । २ क. ख. घ. च. छ. झ. ढ °ग इन्द्रेण सम° । ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °दाद्भविष्यति । त° । ४ क. च. अतिवीर्यमहाकोपास्ती° । ५ ङ °माः । नाऽऽवृत्तिभय° । ६ झ. °च—स्वयंभूः स° । ७ क. ख. च. °र्वसत्त्व महाप्रभुम् । म° ।

महाबाहुं महाकायं यथेन्द्रं च सुरेश्वरम् । क्रमेणापि ततो ब्रह्मा राज्यानि सुविचार्य हि ॥ २
यद्यस्यापि भवेद्योग्यं दातुं तदुपचक्रमे । वृक्षाणां ब्राह्मणानां च ग्रहर्क्षाणां तथैव च ॥ ३
सोमं राज्येऽभ्यषिञ्चच्च तपसां च महामतिः । धर्माणां सर्वयज्ञानां पुण्यानां सौम्यतेजसा ॥ ४
अपां मध्ये तथा देवं तीर्थानां हि तथैव च । वरुणं सोऽभ्यषिञ्चद्वै रत्नानां च द्विजोत्तम ॥ ५
अन्येषां सर्वयक्षाणां राज्ये वैश्रवणं पुनः । विष्णुमेव महाप्राज्ञमादित्यानां पितामहः ॥ ६
राज्ये संस्थापयामास तीर्थानां हितहेतवे । सर्वेषामेव पुण्यानां दक्षमेव प्रजापतिम् ॥ ७
समर्थं सर्वधर्मज्ञं प्रजापतिगणेश्वरम् । दैत्यानां दानवानां च विष्णुतेजःसमन्वितम् ॥ ८
प्रह्लादं स्थापयामास स हि राज्ये प्रजापतिः । यमं वैवस्वतं धर्मं पितृराज्येऽभ्यषिञ्चयत् ॥ ९
यक्षराक्षसभूतानां पिशाचोरगरक्षसाम् । योगिनीनां च सर्वासां [*वेतालानां महात्मनाम् ॥ १०
कङ्कालानां हि सर्वेषां कूष्माण्डानां तथैव च । पार्थिवानां तु सर्वेषां] गिरिशं शूलपाणिनम् ॥ ११
पर्वतानां हि सर्वेषां हिमवन्तं महागिरिम् । नदीनां च तडागानां वापिकानां तथैव च ॥
[ †कुण्डानां कूपराज्ये हि दिव्येषु च सुरेश्वरः ] ॥ १२
सागराणां च सर्वेषां पुष्करं तीर्थमुत्तमम् । गन्धर्वाणां च सर्वेषां पुण्यात्मानं महाबलम् ॥ १३
नाम्ना चित्ररथं राज्ये सोऽभ्यषिञ्चत्सुरेश्वरः । नागानां पुण्यवीर्याणां वासुकिं च चतुर्मुखः ॥ १४
सर्पाणां तु तथा राज्येऽभ्यषिञ्चच्च स तक्षकम् । वारणानां तथा राज्ये स चैरावणमादिशत् ॥ १५
अश्वानां चैव सर्वेषामुच्चैःश्रवसमेव च । पक्षिणां चैव सर्वेषां वैनतेयमथापि सः ॥ १६
मृगाणां च ततो राज्ये ब्रह्मा सिंहमथाऽऽदिशत् । गोवृषं तु गवां मध्ये ह्यभ्यषिञ्चत्प्रजापतिः १७
वनस्पतीनां सर्वेषां प्लक्षं राजानमादिशत् । एवं राज्यानि पुण्यानि संस्थाप्य स पितामहः ॥ १८
दिशापालांस्ततो ब्रह्मा स्थापयामास सत्तमः । वैराजस्य तथा पुत्रं पूर्वस्यां दिश्यसिञ्चयत् ॥ १९
सुधन्वानं दिशः पालं राजानं सोऽभ्यषिञ्चयत् । दक्षिणस्यां महात्मानं कर्दमस्य प्रजापतेः ॥ २०
पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषिञ्चयत् । पश्चिमायां तथा ब्रह्मा वरुणस्य प्रजापतेः ॥ २१
[*पुत्रं च पुष्करं नाम सोऽभ्यषिञ्चत्प्रजापतिः] । उत्तरस्यां दिशि ब्रह्मा नलकूबरमेव च ॥ २२
एवं चैवाभ्यषिञ्चच्च [ †दिक्पालान्स महौजसः । यैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ॥ २३
यथाप्रदेशमद्यापि धर्मेण परिपाल्यते । पृथुश्चैव महाभागो] ह्यभिषिक्तो नराधिपः ॥ २४
राजसूयादिभिः सर्वैरभिषिक्तः स एव च । विधिना विधिदृष्टेन स च राज्ये महीपतिः ॥ २५
चाक्षुषे नाम्न्यतीते तु मनौ चैव महौजसि । [*मन्वन्तरे महाभागा देवपुण्ये हितैषिणि] ॥ २६
ततो वैवस्वतायैव मनवे राज्यमादिशत् । विस्तरं चापि व्याख्यास्ये पृथोश्चैव महात्मनः ॥
यदि यूयं च विप्रेन्द्राः शुश्रूषथ ह्यतन्द्रिताः ॥ २७
एतदेव प्रतिष्ठानं महत्पुण्यं प्रकीर्तितम् । [ †सर्वेष्वेव पुराणेषु त्वेवं हि निश्चितं सदा] ॥ २८

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. ङ. च. छ. झ. ट. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. च. छ. झ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. च. छ. झ. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः ट. ड. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. छ. झ. 'स जनताहि' । २ क. ख. ग. घ. ङ. च. छ. झ. ट. ढ. 'गरं स्थापितं पुण्यं सर्वतीर्थमनुत्त' । ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. वेददृष्टेन । ४ क. ख. ङ. च. छ. झ. ढ. 'दये मनोश्चै' ।

पुण्यं यशस्यमायुष्यं स्वर्गवासकरं शुभम् । धन्यं पवित्रं विख्यातं पुत्रदं[1] बुद्धिकारकम् ॥ २९
यः शृणोति नरो भक्त्या भावध्यानसमन्वितः । अश्वमेधसहस्रस्य पुण्यं संजायते ध्रुवम् ॥ ३०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे पृथुचरितप्रस्तावो नाम षड्विंशोऽध्यायः ॥ २६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४५२०

अथ सप्तविंशोऽध्यायः ।

ऋषय ऊचुः—

विस्तरेण समाख्याहि जन्म तस्य महात्मनः । पृथोश्चैव महाभाग श्रोतुकामा वयं पुनः ॥ १
राज्ञा तेन यथा दुग्धा चेयं धात्री महात्मना । पुनर्देवैश्च पितृभिर्मुनिभिस्तत्त्ववेदिभिः ॥ २
यथा दैत्यैश्च नागैश्च[2] वृक्षैश्च पर्वतादिकैः । [*शैलैश्चैव पिशाचैश्च गन्धर्वैः पुण्यकर्मभिः ॥ ३
ब्राह्मणैश्च तथा सिद्धैर्ब्राह्मणैर्भीमविक्रमैः । पूर्वमेव यथा दुग्धा ह्यन्यैश्चैव महात्मभिः] ॥
तेषामेव हि सर्वेषां विशेषं पात्रधारणम् ॥ ४
क्षीरस्यापि विधिं ब्रूहि विशेषं च महामते । वेनस्यापि नृपस्यैव पाणिरेव महात्मनः[3] ॥ ५
मथितो मुनिभिः पूर्वं[4] क्रुद्धैश्चापि महात्मभिः । अकस्मात्कारणं सर्वं सूतपुत्र वदस्व नः ॥ ६
विचित्रेयं महापुण्या कथा पातकनाशिनी । श्रोतुकामा[5] वयं पुण्यां तृप्तिर्नैव प्रजायते ॥ ७

सूत उवाच—

वैन्यस्य च पृथोरेव तस्य विस्तरमेव च । जन्म वीर्यं यथा क्षात्रं पौरुषं द्विजसत्तमाः ॥ ८
प्रवक्ष्यामि यथा सर्वं चरितं तस्य धीमतः । शृणुध्वं भो महाभागा मत्तो वै द्विजसत्तमाः ॥ ९
अभक्ताय न वक्तव्यमश्रद्धाय शठाय च । सुमूर्खाय सुमोहाय कुशिष्याय तथैव च[6] ॥ १०
उदासीनाय कूटाय धर्मनाशाय च द्विजाः । अन्यथा पठते यो हि निरयं च प्रयाति हि ॥ ११
भवन्तो भावयुक्ताश्च सत्यधर्मपरायणाः । भवतामग्रतः सर्वं चरितं पापनाशनम् ॥ १२
संप्रवक्ष्याम्यशेषेण शृण्वतां सुमहात्मनाम् । स्वर्ग्यं यशस्यमायुष्यं धन्यं वेदैश्च संमतम्[7] ॥ १३
रहस्यमृषिभिः प्रोक्तं प्रवक्ष्यामि द्विजोत्तमाः । यश्चैनं कथयेन्नित्यं पृथोर्वैन्यस्य विस्तरम् ॥ १४
ब्राह्मणेभ्यो नमस्कृत्य नैव शोचेत्कृताकृतम् । सप्तजन्मार्जितं पापं श्रुतमात्रेण नश्यति ॥ १५
ब्राह्मणो वेदवेत्ता च क्षत्रियो विजयी भवेत् । वैश्यो धनसमृद्धः स्याच्छूद्रस्तु श्रवणात्सुखी ॥ १६
एवं फलमवाप्नोति[8] पठनाच्छ्रवणादपि । पृथोर्जन्म चरित्रं च पवित्रं पापनाशनम् ॥ १७
धर्मगोप्ता महाप्राज्ञो वेदशास्त्रार्थकोविदः । अत्रिवंशसमुत्पन्नः पूर्वमत्रिसमः[9] प्रभुः ॥ १८
स्रष्टा सर्वस्य धर्मस्य अङ्गो नाम प्रजापतिः । य आसीत्तस्य पुत्रो वै वेनो नाम प्रजापतिः ॥ १९

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °दं वृद्धि° । २ क. ख. ङ. च. छ. झ. °श्च यथा यक्षैर्यथा द्रुमैः । शै° । ३ क. ख. ग. घ. च. छ. झ. महात्मभिः । ४ क. ख. च. ङ. झ. ट. ढ. °र्वं स कस्मादिह कारणात् । क्रुद्धैश्चैव महापुण्यैः मु° । ५ क. ख. ङ. च. छ झ. ढ. °मा महाभाग तृ° । ग. घ. ज. ट. ढ. °मा महापुण्यां तृ° । ६ ढ. च । श्रद्धाहीनाय कूटाय सर्वना° । ७ क. ख. ग. घ. ङ. च. छ. झ. ढ. संमित° । ८ क. ख ग. घ. च. छ. झ. ट. ड. °ति वः शृणोति न संशयः । पृ° । ९ झ. °मत्रिस° ।

धर्ममेवं परित्यज्य सर्वदैव प्रवर्तते । मृत्योः कन्या महाभागा सुनीथा नाम नामतः ॥ २०
तां तु अङ्गो महाभागः सुनीथामुपयेमिवान् । तस्यामुत्पादयामास वेनं धर्मप्रणाशनम् ॥ २१
मातामहस्य दोषेण वेनः कालात्मजात्मजः । निजधर्मं परित्यज्य ह्यधर्मनिरतोऽभवत् ॥ २२
कामाल्लोभान्महामोहात्पापमेव समाचरत् । वेदाचारमयं धर्मं परित्यज्य नराधिपः ॥ २३
अन्ववर्तत पापेन मदमत्सरमोहितः । वेदाध्ययनहीनाश्च प्रवर्तन्ते तदा द्विजाः ॥ २४
निःस्वाध्यायवषट्काराः प्रजास्तस्मिन्प्रजापतौ । प्रवृत्ता न पपुः सोमं हुतं यज्ञेषु देवताः ॥ २५
इत्युवाच स दुष्टात्मा ब्राह्मणान्प्रति नित्यशः । नाध्येतव्यं न होतव्यं न देयं दानमेव च ॥ २६
न यष्टव्यं न होतव्यमिति तस्य प्रजापतेः । आसीत्प्रतिज्ञा क्रूरेयं विनाशे प्रत्युपस्थिते ॥ २७
[*अहमिज्यश्च यष्टा च यज्ञश्चेति पुनः पुनः]। मयि यज्ञा विधातव्या मयि होतव्यमेव च ॥ २८
इत्यब्रवीत्सदा वेनो ह्यहं विष्णुः सनातनः । अहं ब्रह्माऽहमिन्द्रोऽस्मि रुद्रो मित्रः सदागतिः ॥
अहमेव सदा भोक्ता हव्यकव्यस्य नो परः ॥ २९
अथ ते मुनयः क्रुद्धा वेनं प्रति महाबलाः । ऊचुस्ते संगताः सर्वे राजानं पापचेतनम् ॥ ३०

मुनय ऊचुः—

राजा हि पृथिवीनाथः प्रजां पालयते सदा । धर्ममूर्तिः स राजेन्द्रस्तस्माद्धर्मान्हि रक्षयेत् ॥ ३१
वयं दीक्षां प्रविशामो यज्ञे द्वादशवार्षिकीम् । अधर्मं कुरु मा वेन नैष धर्मः सतामिति ॥ ३२
कुरु धर्मं महाराज सत्यपुण्यं समाचरं । राजाऽहं पालयिष्यामि इति ते समयः कृतः ॥ ३३
तांस्तथा ब्रुवतो वीक्ष्य ऋषीन्दुर्वृत्तचेष्टितः । उवाचोद्धर्मगश्चासौ क्रुद्धोऽन्तक इवापरः ॥ ३४
ज्ञानवीर्यतपःसत्यैर्मया वा कः समो भुवि । प्रभवं सर्वभूतानां धर्माणां च विशेषतः ॥ ३५
संमूढा न विदुर्नूनं भवन्तो मां विचेतसः । इमां दहेयं पृथिवीं प्लावयेयं जलैस्तथा ॥ ३६
द्यां भुवं च रुन्धेयं नात्र कार्या विचारणा । यदा न शक्यते मोहादवलेपाच्च पार्थिवः ॥ ३७
अपनेतुं तदा वेनं ततः क्रुद्धा महर्षयः । विस्फुरन्तं ततो वेनं बलात्संगृह्य ते रुषा ॥ ३८
वेनस्य तस्य सव्योरुं ममन्थुर्जातमन्यवः । कृष्णाञ्जनचयोपेतमति[6]ह्रस्वं विलक्षणम् ॥ ३९
दीर्घास्यं च विरूपाक्षं नीलकञ्चुकवर्चसम् । लम्बोदरं व्यूढकर्णमतिबाहुं दुरोदरम् ॥ ४०
ददृशुस्ते महात्मानो निषीदेत्यब्रुवंस्ततः । तेषां तद्वचनं श्रुत्वा निषसाद भयातुरः ॥ ४१
पर्वतेषु वनेष्वेव तस्य वंशः प्रतिष्ठितः । निषादाश्च किराताश्च भिल्लानाहलकास्तथा ॥ ४२
भ्रमराश्च पुलिन्दाश्च ये चान्ये म्लेच्छजातयः । पापाचाराश्च ते सर्वे तस्मादङ्गात्प्रजज्ञिरे ॥ ४३
अथ ते ऋषयः सर्वे प्रसन्नमनसस्ततः । गतकल्मषमेवात्र ज्ञात्वा वेनं नृपोत्तमम् ॥ ४४
ममन्थुर्दक्षिणं पाणिं तस्यैव च महात्मनः । मथिते तस्य पाणौ तु संजातः स्वेद एव हि ॥ ४५
पुनर्ममन्थुस्ते विप्रा दक्षिणं पाणिमेव च । सुकरात्पुरुषो जज्ञे द्वादशादित्यसंनिभः ॥ ४६
तप्तकाञ्चनवर्णाङ्गो दिव्यमालाम्बरो वरः । दिव्याभरणशोभाङ्गो दिव्यगन्धानुलेपनः ॥ ४७

---

* ग. घ. एतच्चिह्नान्तर्गतः पाठोऽयं ग. घ. ङ. पुस्तकस्थः ।

---

१ क. ख. च. छ. झ. ङ. °त्मकः । नि° । २ ट. °चारं स्वधर्मं च प° । ३ ट. न जप्तव्यमि° । ४ क. ख. ग. घ. ङ. च. छ. झ. ट. ङ. ढ. °र । प्रजा° । ५ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °वतः सर्वान्महर्षीनब्रवीत्तदा । वेन प्रहस्य दुर्बुद्धिरिममर्थमनर्थकम् ॥ वेन उवाच ॥ स्रष्टा धर्मस्य कश्चान्यः श्रोतव्यं कस्य वा मया ॥ श्रुतवी° । ६ क. ख. ङ. च. छ. झ. °तिभीतं दु° ।

मुकुटेनार्कवर्णेन कुण्डलाभ्यां विराजितः । महाकायो महाबाहू रूपेणाप्रतिमो भुवि ॥ ४८
खड्गबाणधरो धन्वी कवची च महाप्रभुः । सर्वलक्षणसंपन्नः सर्वालंकारभूषणः ॥ ४९
तेजसा रूपभावेन वर्णैश्चैव महामतिः । दिवि चन्द्रो यथा भाति भुवि वेनात्मजस्तथा ॥ ५०
तस्मिञ्जाते महाभागे देवाश्च ऋषयोऽमलाः । उत्सवं चक्रिरे सर्वे वेनस्य तनयं प्रति ॥ ५१
दीप्यमानः स्ववपुषा साक्षादग्निरिव ज्वलन् । आद्यमाजगवं नाम धनुर्गृह्य महाबलः ॥ ५२
शरांश्च दिव्यान्रक्षार्थं कवचं च महाप्रभम् । जाते सति महाभागे पृथौ वीरे महात्मनि ॥ ५३
संप्रहृष्टानि भूतानि समस्तानि द्विजोत्तमाः । सर्वतीर्थानि तोयानि पुण्यानि विविधानि च ॥
तस्याभिषेकं विप्रेन्द्राः सर्व एवोपचक्रिरे ॥ ५४
पितामहस्ततो देवा भूतानि विविधानि च । स्थावराणि चराण्येव ह्यभ्यषिञ्चन्नराधिपम् ॥ ५५
महावीरं प्रजापालं पृथुमेव द्विजोत्तमाः । पृथुर्वैन्यो राजराजो ह्यभिषिक्तश्चराचरैः ॥ ५६
देवैर्विप्रस्तैथा नागैरभिषिक्तो महामनाः । स राज्यमभिपेदे वै पृथुर्वैन्यः प्रतापवान् ॥ ५७
तस्य पित्रा प्रजाः सर्वाः कदा नैवानुरञ्जिताः । तेनानुरञ्जिताः सर्वा मुमुदिरे सुखेन वै ॥ ५८
अस्यानुरागाद्वीरस्य राजराजेति नाम च । प्रजज्ञेऽस्य सुवीरस्य समुद्रेऽपि द्विजोत्तमाः ॥ ५९
आपस्तस्तम्भिरे सर्वा भयात्तस्य महात्मनः । [*प्रयातस्य रथस्यापि तस्यैव च महात्मनः] ६०
दुर्गमार्गं विलोप्यैव सुमार्गं पर्वता ददुः । आज्ञाभङ्गं न चक्रुश्च गिरयः सर्व एव ते ॥ ६१
अकृष्टपच्या पृथिवी सर्वत्र कामधेनवः । पर्जन्यः कामवर्षी च देवयज्ञा महोत्सवाः ॥ ६२
कुर्वन्ति ब्राह्मणाः सर्वे क्षत्रियाश्च तथा परे । सर्वकामफला वृक्षास्तस्मिञ्शासति पार्थिवे ॥ ६३
न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणाम् । सर्वे सुखेन जीवन्ति लोका धर्मपरायणाः ॥ ६४
तस्मिञ्शासति दुर्धर्षे राजराजे नृपात्मजे । एतस्मिन्नन्तरे काले यज्ञे पैतामहे शुभे ॥ ६५
सूतः सूत्यां समुत्पन्नः सौम्येऽहनि महामतिः । तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ॥ ६६
पृथोः स्तवार्थं तौ तत्र समाहूतौ महर्षिभिः । सूतस्य लक्षणं वक्ष्ये महापुण्यं द्विजोत्तमाः ॥ ६७
शिखासूत्रेण संयुक्तः स्तोत्राध्ययनतत्परः । सर्वशास्त्रार्थवेत्ताऽसावग्निहोत्रमुपासते ॥ ६८
दानाध्ययनसंयुक्तो ब्रह्माचारपरायणः । देवानां ब्राह्मणानां च पूजनाभिरतः सदा ॥ ६९
याचकस्तावकैः पुण्यैर्वेदमन्त्रैर्यजेत्किल । सदाचारपरो नित्यं संभोज्यो ब्राह्मणैः सह ॥ ७०
एवं हि मागधो जज्ञे वेदाध्ययनवर्जितः । बन्दिनश्चारणाश्चान्ये ब्रह्माचारविवर्जिताः ॥ ७१
ज्ञेयास्ते च महाभागाः स्तावकाः प्रभवन्ति वै । स्तवनार्थमुभौ सृष्टौ निपुणौ बन्दिमागधौ ॥ ७२
तावूचुर्ऋषयः सर्वे स्तूयतामेष पार्थिवः । कर्मैतदनुरूपं च यादृशोऽयं नराधिपः ॥ ७३
तावूचतुस्तदा सर्वांस्तानृषीन्बन्दिमागधौ । आवां देवानृषींश्चैव प्रीणयावः स्वकर्मभिः ॥ ७४
न चास्य विद्मो वै कर्म प्रतिष्ठालक्षणं यशः । कर्मणा येन कुर्याव स्तोत्रमस्य महात्मनः ॥ ७५

* एतच्चिह्नान्तर्गतोऽयं पाठः क ख. ङ. च. छ. झ ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. महावरम् । ग. घ. ट. ड. महाबलम् । २ ञ. °महायाश्च ततो भू° ।३क. ख. ङ. च. छ.झ. °था सर्वैर° । ४ क. ख. ग घ. च. राज्ञामधिराज्ये वै । ५ ञ. तस्यापि ताः प्र° । ६ ञ. कर्मणैवा° । ७ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. ध्वजभङ्गं° । ८ क. ख. च. छ. झ. ड. ढ. वेदयज्ञा । ९ क. ख. ङ.. च. छ झ. ड. ढ. महात्मनि । १० क ख. ग. घ. ङ. च. छ. ज. झ. ड. ढ. वेदाध्ययमतत्परः । ११ ञ. ब्रह्माचारसधर्मवान् । १२ ग. घ. ङ. संबन्धो । १३ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. °नः । कथं कुर्याव वै स्तोत्रमविज्ञा नैर्गुणैस्ततः । संप्रोचुस्तौ महात्मानो गुणांस्तस्य महात्मनः । भ° ।

जानीवस्तत्र विप्रेन्द्रा अविज्ञातगुणस्य हि । भविष्यैश्च गुणैः पुण्यैः स्तोतव्योऽयं नराधिपः ॥७६
[*कृतवान्यानि कर्माणि पृथुरेव महायशाः] । ऊचुस्ते मुनयस्तस्य गुणान्दिव्यांश्च भाविनः ॥ ७७
सत्यवाग्ज्ञानसंपन्नो बुद्धिमान्ख्यातविक्रमः । सदा शूरो गुणग्राही पुण्यवांस्त्यागवान्गुणी ॥ ७८
धार्मिकः सत्यवादी च यज्ञानां याजकोत्तमः । प्रियवाक्सत्यवाग्दान्तो धान्यवान्धनवान्सुधीः ७९
गुणज्ञश्च कृतज्ञश्च धर्मज्ञः सत्यवत्सलः । सर्वगः सर्वदो वेत्ता ब्रह्मण्यो वेदवित्सुधीः ॥ ८०
यज्ञवांश्च सुशूरश्च वेदवेदाङ्गपारगः । धन्यो गोप्ता प्रजानां च विजयी समराङ्गणे ॥ ८१
राजसूयादिकानां तु यज्वाऽयं राजसत्तमः । आहर्ता भूतले चैकः सर्वधर्मसमन्वितः ॥ ८२
एते गुणा अस्य चाग्रे भविष्यन्ति महात्मनः । ऋषिभिस्तौ नियुक्तौ च कुर्वाणौ सूतमागधौ ८३
गुणैश्चैव भविष्यैश्च स्तोत्रं तस्य महात्मनः । तदाप्रभृति वै लोकाः स्तवैः स्तुष्टा महामते ॥ ८४
पुरतश्च भविष्यन्ति दातारः स्तावकैर्गुणैः । ततःप्रभृति लोकेऽस्मिन्स्तवेषु द्विजसत्तमाः ॥ ८५
मागधाद्याः प्रपूज्यन्ते तेषां द्रविणमुत्तमम् । सूताय मागधायैव बन्दिनेऽथ महोदयम् ॥ ८६
चारणाय ततः प्रादात्कलिङ्गं देशमेव च । पृथुः प्रादाच्च धर्मात्मा हैहयं देशमेव च ॥ ८७
रेवातीरे पुरं कृत्वा स्वनाम्ना नृपसत्तमः । ब्राह्मणेभ्यो द्विजश्रेष्ठास्तदाऽदाद्विपुलं वसु ॥ ८८
सर्वज्ञं सर्वदातारं धर्मवीर्यं नरोत्तमम् । ददृशुस्तं प्रजाः सर्वा मुनयश्च ततोऽमलाः ॥ ८९
ऊचुः परस्परं पुण्य एष राजा महामतिः । देवादीनां वृत्तिदाता ह्यस्माकं च विशेषतः ॥
प्रजानां पालकश्चैव वृत्तिदो हि भविष्यति ॥ ९०
इयं धात्री महाप्राज्ञा उप्तं बीजं पुरा किल । जीवनार्थं प्रजानां तु ग्रसयित्वा स्थिराऽभवत् ॥९१
ततः पृथुं द्विजश्रेष्ठाः प्रजाः समभिदुद्रुवुः । विधत्स्वेति सुवृत्तिं नो मुनीनां वचनात्तदा ॥ ९२
ग्रसयित्वा तदा तानि पृथ्वी जाता सुनिश्चला । भयं प्रजानां सुमहत्स दृष्ट्वा राजसत्तमः ॥ ९३
महर्षिवचनाच्चापि प्रगृह्य सशरं धनुः । अभ्यधावत वेगेन पृथ्वीं क्रुद्धो नराधिपः ॥ ९४
कुञ्जरं रूपमास्थाय भयात्तस्य तु मेदिनी । वनेषु दुर्गदेशेषु गुप्ता भूता चचार सा ॥ ९५
न पश्यति महाप्राज्ञः कुंरूपं द्विजसत्तमाः । आचचक्षुर्महाभागं कुञ्जरं रूपमास्थिता ॥ ९६
ततः कुञ्जररूपां तामभिदुद्राव पार्थिवः । ताड्यमाना च सा तेन निशितैर्मार्गणैस्तदा ॥ ९७
हरिरूपं समास्थाय पलायनपराऽभवत् । हरिरूपां पार्थिवस्तामभिदुद्राव वेगवान् ॥ ९८
ततः क्रुद्धो महाप्राज्ञो रोषादरुणलोचनः । सुबाणैर्निशितैस्तीक्ष्णैराजघान स मेदिनीम् ॥ ९९
आकुला व्याकुला जाता बाणाघातहता तदा । महिषीरूपमास्थाय पलायनपराऽभवत् ॥ १००
तामप्यधावद्वेगेन बाणपाणिर्धनुर्धरः । सा गौर्भूत्वा द्विजश्रेष्ठाः स्वर्गमेव गता द्रुतम् ॥ १०१
ब्रह्मणः शरणं प्राप्ता विष्णोश्चैव महात्मनः । रुद्रादीनां च देवानां त्राणस्थानं न विन्दति ॥१०२
अलभन्ती च सा त्राणं वैन्यमेवान्वपद्यत । तस्य पार्श्वे पुनः प्राप्ता बाणघातसमाकुला ॥ १०३

* एतच्चिह्नान्तर्गतः पाठोऽयं क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. नरोत्तमः । २ क. ख. ग. घ. च. छ झ. ट. ढ. 'नयः सर्वे गुणान्दिव्यान्महात्मनः । ३ छ. 'द्धिमांश्च्युतविभ्रमः । ४ क. ख. ङ. च. छ. झ. ट. 'वाक्चैव धन्यवाग्धनवान्गुणी । गु' । ५ क. ख. ङ. च. छ झ. ढ. 'धीः । प्रज्ञावां' । ६ क. ख. ग. घ. ङ. च. छ. झ. ट ड. ढ. धाता । ७ क. ख. ग. घ. च. छ. झ. ट. ड आचार्याद्याः । ८ क. ख. ङ. छ. झ. 'दात्तिलिङ्गं देशमुत्तमम् । ९ ग. घ. ट. ड. क्षयं । १० अ. कुञ्जरं द्वि' । ११ क. ख. च. छ. झ. 'क्षुर्महात्मानः कु' ।

बद्धाञ्जलिपुटा भूत्वा तं पृथुं वाक्यमब्रवीत् । त्राहि त्राहीति राजेन्द्र सा[1] राजानमभाषत ॥ १०४
अहं धात्री महाप्राज्ञ सर्वाधारा वसुंधरा । निहतायां मयि नृप निहतं लोकसप्तकम् ॥ १०५
कृताञ्जलिपुटा भूत्वा पूज्या लोकैस्त्रिभिः सदा[2] । अन्यद्ददामि ते भूप अवध्या स्त्री सदा भवेत् ॥
स्त्रीणां वधे महान्दोषो ह्युक्तः पूर्वैर्महात्मभिः । [*गवां वधे महत्पापं दृष्टमस्ति द्विजोत्तमैः]॥१०७
मया विना महाराज कथं धारयसे प्रजाः । अहं यदा[3] स्यां च धरा तदा लोकाश्चराचराः १०८
स्थिरत्वं यान्ति ते सर्वे स्थिरीभूता यदा ह्यहम् । मां विना त इमे लोका विनश्येयुश्चराचराः१०९
[†पुनः प्रजा विनश्येयुर्मम नाशे समागते। कथं धारयिता चासि प्रजा राजन्विना मया ॥ ११०
मयि लोकाः स्थिरा राजन्मयेदं धार्यते जगत्। मद्विनाशे विनश्येयुः प्रजाः सर्वा न संशयः] १११
तस्मान्नार्हसि मां हन्तुं श्रेयश्चेत्त्वं चिकीर्षसि। प्रजानां पृथिवीपाल शृणु मे त्वं हितं वचः ॥११२
उपायैश्च महाभाग सुसिद्धिं यान्त्युपक्रमाः । समालोक्य ह्युपायं त्वं प्रजानां शं विधत्स्व च ११३
[*मां हत्वा त्वं महाराज धारणे पालने सदा। पोषणे च महाप्राज्ञ मद्विना हि कथं नृप ॥११४
धरिष्यसि प्रजां चेमां कोपं यच्छ त्वमात्मनः। अन्नमयी भविष्यामि धरिष्यामि प्रजामिमाम् ११५
अहं नारी ह्यवध्या च प्रायश्चिती भविष्यसि]। अवध्यां च स्त्रियं प्राहुस्तिर्यग्योनिगतामपि ११६
विचार्यैव महाराज धर्मेण त्यक्तुमर्हसि । एवं नानाविधैर्वाक्यैरुक्तो धात्र्या धराधिपः ॥ ११७
कोपमेनं महाराज त्यज दारुणमेव हि । प्रसन्ने त्वयि राजेन्द्र तदा स्वस्था भवाम्यहम् ॥ ११८
एवमुक्तस्तया[5] राजा पृथुर्वैन्यः प्रतापवान्[6] । तामुवाच महाभागां धरित्रीं द्विजसत्तमाः ॥ ११९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे पृथूपाख्याने सप्तविंशोऽध्यायः ॥ २७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४६३९

---

अथाष्टाविंशोऽध्यायः ।

---

पृथुरुवाच—

हते तस्मिन्महापाप एकस्मिन्पापचारिणि । लोकाः सुखेन जीवन्ति साधवः पुण्यदर्शिनः ॥ १
तस्मादेकं प्रहर्तव्यं पापिष्ठं पापचेतनम् । तस्मात्त्वां हि हनिष्यामि सर्वार्थस्य[7] प्रणाशिनीम् ॥ २
त्वया बीजानि सर्वाणि ग्रस्तान्येतानि सांप्रतम्। ग्रासं कृत्वा स्थिरी भूत्वा प्रजा हत्वा क यास्यसि ३
हते पापे दुराचारे सुखं जीवन्ति साधवः । तस्मात्पापं प्रहर्तव्यं सत्यमेव न संशयः ॥ ४
पालितव्यं प्रयत्नेन यस्माद्धर्मः प्रवर्तते । [†भवत्या तु महत्पापं प्रजासंक्षयकारकम् ॥ ५
एकस्यार्थे न यो हन्यादात्मनो वा परस्य वा]। लोकोपतापकं हत्वा न भवेत्तस्य पातकम् ॥ ६
यस्मिंस्तु निहते पाप एकस्मिन्स्वे परे तथा । बहवः सुखमेधन्ते हन्यात्दुष्टं न पातकम् ॥ ७

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. च छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः क ख. ग. घ ङ. च. छ. झ. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ढ साऽऽतुरा तम॰। २ क. ख. ग. घ. ङ. छ. झ. ट. ढ. ॰दा । उवाच चैनं राजानमवध्या स्त्री सदा नृप । स्त्री॰ । ३ ङ. छ. ढ. ॰दा स्थिरा राजंस्त॰ । ४ क. ख. ङ. च. छ. झ. ड. ढ. ॰जा येन धरिष्यसि । मां । ५ छ. ॰स्तदा रा॰ । ६ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. प्रजापतिः । ७ क. ख. च. छ. झ. सर्वसत्त्वप्र॰ ।

प्रजानिमित्तं त्वामेव हनिष्यामि न संशयः । यदि मे पुण्यसंयुक्तं वचनं न करिष्यसि ॥ ८
जगतोऽस्य हितार्थाय साधु चैवं वसुंधरे । हनिष्ये त्वां शितैर्बाणैर्मद्वाक्यात्तु पराङ्मुखीम् ॥ ९
स्वीयेन तेजसा चैव प्रजास्त्रैलोक्यवासिनीः । पुण्याश्चाहं धरिष्यामि धर्मेणापि न संशयः ॥ १०
मच्छासनं समास्थाय धर्मयुक्तं वसुंधरे । इमाः प्रजा आज्ञया मे संजीवय सदैव हि ॥ ११
एवं मे शासनं भद्रे ह्यद्यैव हि करिष्यसि । ततः प्रीतोऽस्मि ते नित्यं गोपायिष्यामि सर्वदा ॥
त्वामेव हि न संदोहमन्ये चैव नृपोत्तमाः ॥ १२
धेनुरूपेण सा देवी बाणाञ्चितकलेवरा । उवाचेदं पृथुं वैन्यं धर्मात्मानं महामतिम् ॥ १३

धरित्र्युवाच—

तवाऽऽदेशं महाराज सत्यपुण्यार्थसंयुतम् । प्रजानिमित्तमत्यर्थं विधास्यामि न संशयः ॥ १४
उद्यमेनापि पुण्येन तूपायैस्ते नरेश्वर । समारम्भाः प्रसिध्यन्ति पुण्याश्चैवाप्युपक्रमाः ॥ १५
उपायं पश्य राजेन्द्र येन त्वं सत्यवान्भवेः । धारयेथाः प्रजाश्चेमा यथा सर्वाः प्रवर्धये ॥ १६
संलग्नाश्चोत्तमा बाणा ममाङ्गे तान्समुद्धर । समां कुरु महाराज तिष्ठेन्मयि यथा पयः ॥ १७

सूत उवाच—

धनुरग्रेण ताञ्शैलान्नानारूपान्गुरूंस्तदा । उत्सारयंस्ततोऽसौ हि समरूपां चकार ह ॥ १८
ततःप्रभृति ते शैला वृद्धिमापुर्द्विजोत्तमाः । तस्या अङ्गात्स्वयं बाणान्स्वकीयान्नृपनन्दनः ॥ १९
[*समुद्धृत्य ततो वैन्यः प्रीतेन मनसा तदा । गर्ताश्च कंदराश्चैव बाणाघातैः समीकृताः ॥ २०
एवं पृथ्वीं समां सर्वां चकार पुण्यवर्धनः]। समां कृत्वा महाभागां वत्समस्या ह्यकल्पयत् ॥ २१
मनुं स्वायंभुवं पूर्वं परिचिन्त्य पुनः पुनः । अतीतेष्वेव सर्वेषु मनुषु द्विजसत्तमाः ॥ २२
विषमत्वं गता भूमिः पन्था नाऽऽसीच्च कुत्रचित्। समानि विषमाण्येवं स्वयमासीद्द्विजोत्तमाः॥२३
पूर्वं मनोश्चाक्षुषस्य प्राप्ते चैवान्तरे तथा । जाते पूर्वविसर्गे च विषमे च धरातले ॥ २४
ग्रामाणां च पुराणां च पत्तनानां तथैव च । देशानां क्षेत्रपन्नानां मर्यादा न हि दृश्यते ॥ २५
कृषिर्नैव च वाणिज्यं न गोरक्षा प्रवर्तते । नानृतं भाषते कश्चिन्न लोभो न च मत्सरः ॥ २६
नाभिमानं च वै पापं न करोति कदाऽपि च। वैवस्वतस्य च मनोः प्राप्ते चैवान्तरे द्विजाः॥२७
वैन्यस्य संभवात्पूर्वं प्रजानामेव संभवः । इमाः प्रजा द्विजाः सर्वा निवासं समरोचयन् ॥ २८
क्वचिद्भूमौ गिरौ वाऽपि नदीतीरेषु वै तदा । कुञ्जेषु सर्वतीर्थेषु सागरस्य तटेषु च ॥ २९
निवासं चक्रिरे सर्वाः प्रजाः पुण्येन वै तदा।तासामाहारः संजातः फलं पुष्पं तथा मधु ॥ ३०
तासां कृच्छ्रेण महता चाऽऽहारः स्याद्द्विजोत्तमाः।पृथुर्वैन्यः समालोक्य प्रजानां कष्टमेव हि॥३१
स्वायंभुवो मनुर्वत्सः कल्पितस्तेन भूभुजा । स्वपाणिः कल्पितस्तेन पात्रमेवं महामते ॥ ३२
स पृथुः पुरुषव्याघ्रो दुदोह वसुधां तदा । सर्वसस्यमयं क्षीरं ससर्वान्नं गुणान्वितम् ॥ ३३
तेन पुण्येन चान्नेन सुधाकल्पेन ताः प्रजाः । पितॄन्यजन्ति देवान्वै प्रजापतिमुखांस्तथा ॥ ३४
प्रसादात्तस्य वैन्यस्य सुखं जीवन्ति ताः प्रजाः। देवेभ्यश्च पितृभ्यश्च दत्त्वा चान्नं प्रजास्तथा ३५

* एतच्चिह्नान्तर्गतोऽयं पाठः क.ख. ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ क ख. ङ. च. छ. झ. ड. ढ. °जा ममाद्यैव सं° । २ ञ. °दोहाम° ३ क. ख. ङ. च. छ. झ. ढ. °ताञ्शिलाशिता:। समुद्धर स्वयं राजञ्शल्यान्ति भृशमेव ते। सू°। ४ ञ. कामानां । ५ क. ख. ङ. च. छ झ. मूलं । ६ ट. °जाः । तृप्तिं नयन्ति देवान्वै प्रजाः पितॄंस्तथाऽपरान् । प्र° ।

ब्राह्मणेभ्यो विशेषेण चातिथिभ्यस्तथैव च। पश्चाद्भुञ्जन्ति पुण्यास्ताः प्रजाः सर्वा द्विजोत्तमाः ३६
यज्ञैश्चान्यैर्यजन्ते च तर्पयन्ति जनार्दनम् । तेनान्नेनैव देवेशं तृप्तिं गच्छन्ति देवताः ॥ ३७
पुनर्वर्षति पर्जन्यः प्रेषितो माधवेन च । तस्मात्पुण्या महौषध्यः संभवन्ति सुपुण्यदाः ॥ ३८
सस्यजातानि सर्वाणि पृथोः प्रभृति नान्यदा। ततोऽन्नेन प्रजाः सर्वा वर्तन्तेऽद्यापि नित्यशः ॥ ३९
ऋषिभिश्चैव मिलितैर्दुग्धा चेयं वसुंधरा । पुनर्विप्रैर्महाभागैः सत्यैवद्भिः सुरैस्तथा ॥ ४०
सोमो वत्सस्वरूपोऽभूद्दोग्धा देवगुरुः स्वयम्। ऊर्जं क्षीरं पयःकल्पं येन जीवन्ति चामराः॥ ४१
तेषामन्नेन पुण्येन सर्वे जीवन्ति जन्तवः । सत्यपुण्यैः प्रवर्तन्ते ऋषिदुग्धा वसुंधरा ॥ ४२
अथातः संप्रवक्ष्यामि यथा दुग्धा वसुंधरा । [*पितृभिश्च पुरा वत्सविधिना येन वै तदा॥ ४३
सुपात्रं राजतं कृत्वा स्वधाक्षीरं द्विजोत्तमाः । परिकल्प्य यमं वत्सं दोग्धा चान्तक एव च] ४४
नागैः सर्पैस्ततो दुग्धा तक्षकं वत्समेव च । अलाबुपात्रमादाय विषं क्षीरं द्विजोत्तमाः ॥ ४५
नागानां तु तथा दोग्धा धृतराष्ट्रः प्रतापवान्। सर्पा नागा द्विजश्रेष्ठास्तेन वर्तन्ति चातुलाः ॥४६
[*नागा वर्तन्ति तेनापि ह्यत्युग्रेण द्विजोत्तमाः । विषेण घोररूपेण सर्पाश्चैव भयानकाः ॥ ४७
तेनैव वर्तयन्त्युग्रा महाकाया महाबलाः] । तदाधारास्तदाचारास्तद्वीर्यास्तत्पराक्रमाः ॥ ४८
अथातः संप्रवक्ष्यामि यथा दुग्धा वसुंधरा । असुरैर्दानवैः सर्वैः कल्पयित्वा द्विजोत्तमाः ॥ ४९
पात्रमत्रामसदृशमायसं सर्वकामिकम् । क्षीरं मायामयं कृत्वा सर्वारातिविनाशनम् ॥ ५०
तेषामभूत्स वै वत्सो विरोचनः प्रतापवान्। [*ऋत्विग्द्विमूर्धा दैत्यानां मधुर्दोग्धा महाबलः ॥५१
तयाऽऽदिमायया दैत्याः प्रवर्तन्ते महाबलाः । महाप्रज्ञा महाकाया महातेजःपराक्रमाः ॥] ५२
तद्बलं पौरुषं तेषां तेन जीवन्ति दानवाः । तयैते स्युरथाद्यापि सर्वे मायाविदो द्विजाः ॥
[*वर्तन्त्यमितप्रज्ञास्ते तदेषाममितं बलम् ] ॥ ५३
तथा तु दुग्धा यक्षैः सा सर्वाधारा सुमेदिनी। [*इति शुश्रुम विप्रेन्द्राः पुरा कल्पे महात्मभिः]॥
अन्तर्धानमयं क्षीरं अयस्पात्रेषु विस्तरे । वैश्रवणो महाप्राज्ञस्तदा वत्सः प्रकल्पितः ॥ ५५
पिता मणिधरस्यापि प्राज्ञो बुद्धिमतां वरः । [*दोग्धा रजतनाभस्तु तस्याश्चाऽऽसीन्महामतिः॥
सर्वज्ञः सर्वधर्मज्ञो यक्षराजसुतो बली । अष्टबाहुर्महातेजा द्विशीर्षः सुमहातपाः ॥ ५७
यक्षा वर्तन्ति तेनापि सर्वदैव द्विजोत्तमाः । पुनर्दुग्धा त्वियं पृथ्वी राक्षसैश्च महाबलैः ॥ ५८
तथा चैषा पिशाचैश्च मारुतैर्दुष्टचारिभिः । उत्प्लुतं तत्र कपालं शात्रं पात्रमयं कृतम् ॥ ५९
सुप्रजां भोक्तुकामास्ते तीव्रकोपपराक्रमाः] । दोग्धा रजतनाभस्तु तेषामासीन्महाबलः ॥
सुमाली नाम वत्सश्च शोणितं क्षीरमेव च ॥ ६०
रक्षांसि यातुधानाश्च पिशाचाश्च महाबलाः । तेन यक्षाश्च जीवन्ति भूतसंघाश्च दारुणाः ॥ ६१

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग घ. ङ. च. छ झ ट. ड ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. झ. ट. ड. ढ पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ग घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. छ. झ. ट ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. छ. झ. ट. ड. ढ. पृथुर्वैन्यः प्रजापतिः । त° । २ क. ख. च. छ. झ. °त्यवद्भिस्तपोऽमलैः । सो° । ग. घ. ट. °त्यमन्त्रैस्तथा बलैः । सो° । ३ क. ख. च. झ. ढ. तेषां सत्येन । ४ ङ. सर्वना° । ५ क. ख. ङ. च. छ. झ. ड. ढ. तदाहारा° । ६ क. ख. च. छ. झ. °त्रमात्मन्न° । ७ ग. घ. ट. उत्पत्यां सुसृतं पा° । ८ क. ख. ग. घ. ङ. च. छ. ट. ड. ढ. °सि तानि सर्वाणि पि° ।

गन्धर्वैरप्सरोभिश्च पुनर्दुग्धा वसुंधरा। कृत्वा वत्सं सुविद्वांसं ते च चित्ररथं पुनः॥ ६२
हुहुहुः पद्मपात्रे तु गान्धर्वं गीतसंकुलम्। सुरुचिर्नाम गन्धर्वस्तेषामासीन्महामतिः॥ ६३
दोग्धा पुण्यतमश्चैव तस्याश्च द्विजसत्तमाः। [*शुचीनां तामहात्मानः सुक्षीरं हुहुहुस्तदा॥]
गन्धर्वास्तेन जीवन्ति यक्षाश्चाप्सरसस्तथा॥ ६४
पर्वतैश्च महापुण्यैर्दुग्धा चेयं वसुंधरा। रत्नानि विविधान्येव चौषधीश्चामृतोपमाः॥] ६५
वत्सश्चैव महाभागो हिमवान्परिकल्पितः। मेरुर्दोग्धा च संजातः पात्रं कृत्वा सुसानु च॥ ६६
तेन क्षीरेण संवृद्धाः शैलाः सर्वे महोच्छ्रयाः। पुनर्दुग्धा महावृक्षैः पुण्यैः कल्पद्रुमादिभिः॥ ६७
पालाशं पात्रमानिन्युश्छिन्नदग्धमरोहणम्। शालो दुदोह पुण्याङ्गः प्लक्षो वत्सोऽभवत्तदा॥ ६८
गुह्यकैश्चारणैः सिद्धैर्विद्याधरगणैस्तथा। दुग्धा चेयं सर्वधात्री सर्वकामप्रदायिनी॥ ६९
यं यमिच्छन्ति ये लोका पात्रवत्सविशेषणैः। तैस्तैस्तेषां ददात्येव क्षीरं सद्भावमीदृशम्॥ ७०
इयं धात्री विधात्री च त्वियं श्रेष्ठा वसुंधरा। सर्वकामदुघा धेनुरियं पुण्यैरलंकृता॥ ७१
इयं ज्येष्ठा कनिष्ठा तु चेयं सृष्टिरियं प्रजा। पावनी पुण्यदा पुण्या सर्वसस्यप्ररोहिणी॥ ७२
[†चराचरस्य सर्वस्य प्रतिष्ठा योनिरेव च। महालक्ष्मीरियं विद्या सर्वविश्वमयी सदा॥ ७३
सर्वकामदुघा दोग्ध्री सर्वबीजप्ररोहिणी]। सर्वेषां श्रेयसां माता सर्वलोकधरा त्वियम्॥ ७४
पञ्चानामपि भूतानां प्रकाशो रूपमेव च। आसीदियं समुद्रान्ता मेदिनीति परिश्रुता॥ ७५
मधुकैटभयोः कृत्स्ना मेदसा समभिप्लुता। तेनेयं मेदिनी देवी प्रोच्यते ब्रह्मवादिभिः॥ ७६
ततश्च प्रीतिमद्राज्ञः पृथोर्वैन्यस्य सत्तमाः। दुहितृत्वमनुप्राप्ता देवी पृथ्वीति चोच्यते॥ ७७
तेन राज्ञा द्विजश्रेष्ठाः पालितेयं वसुंधरा। [*ग्रामाधारं गृहाणां च पुरपत्तनमालिनी]॥ ७८
सस्याकरवती स्फीता सर्वतीर्थमयी द्विजाः। एवं वसुमती देवी सर्वलोकमयी सदा॥ ७९
एवंप्रभावो राजेन्द्रः पुराणे परिपठ्यते। पृथुर्वैन्यो महाभागः सर्वधर्मप्रकाशकः॥ ८०
यथा विष्णुर्यथा ब्रह्मा यथा रुद्रः सनातनः। नमस्कार्यास्त्रयो देवा देवाद्यैर्ब्रह्मवादिभिः॥ ८१
ब्राह्मणैर्ऋषिभिः सर्वैर्नमस्कार्यो नृपोत्तमः। वर्णानामाश्रमाणां यः स्थापकः सर्वलोकधृक्॥ ८२
पार्थिवैश्च महाभागैः पार्थिवत्वमिहेप्सुभिः। आदिराजो नमस्कार्यः पृथुर्वैन्यः प्रतापवान्॥ ८३
धनुर्वेदार्थिभिर्यो वै सदैव जयकाङ्क्षिभिः। नमस्कार्यो महाराजो वृत्तिदाता महीभृताम्॥ ८४
एवं पात्रविशेषाश्च मयाऽऽख्याता द्विजोत्तमाः। वत्सानां सुविशेषाश्च दोग्धॄणां भवदग्रजः॥ ८५
क्षीरस्यापि विशेषं तु यथोद्दिष्टं हि भूभुजः। समाख्यातं तथाऽग्रे च भवतां वै यथार्थतः॥ ८६
धन्यं यशस्यमारोग्यं पुण्यं पापप्रणाशनम्। यः शृणोति चरित्रं तु पृथोस्तस्य द्विजोत्तमाः॥ ८७
तस्य भागीरथीस्नानमहन्यहनि जायते। सर्वपापविशुद्धात्मा विष्णुलोकं प्रगच्छति॥ ८८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे पृथूपाख्यानं नामाष्टाविंशोऽध्यायः॥ २८॥

आदितः श्लोकानां समष्ट्यङ्काः—४७२८

---

* एतच्चिह्नान्तर्गतपाठः क. ख. ग. घ. ङ. च. छ. झ. ट. ढ. पुस्तकस्थः। † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः। * एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः।

---

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. तु गन्धर्वा गीततत्पराः। सु°। २ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ°त्वा तु शैलजम्। ते°। ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. महौजसः। ४ क. ख. ङ. च. छ. झ. ट. ड. ढ. पुष्पाङ्गः। ५ ङ. छ. झ. ढ. प्रतिष्ठा। ६ क. ख. ङ. च. छ. झ. ढ ततोऽभ्युपागम°। ७ छ. °भावा रा°। ८ ङ. छ. ढ. °र्वकर्म°। ९ म. °द्यैर्ब्राह्मणादि°।

अथैकोनत्रिंशोऽध्यायः ।

ऋषय ऊचुः—

योऽसौ वेनः समाख्यातः पापाचारेण वर्तितः । तस्य पापस्य का वृत्तिः किं फलं प्राप्तवान्द्विज ॥
चरितं तस्य वेनस्य समाख्याहि यथा पुरा । विस्तरेण विदां श्रेष्ठ तन्नो वद महामते ॥ २

सूत उवाच—

चरित्रं तस्य वैन्यस्य वेनस्यापि महात्मनः । प्रवक्ष्यामि सुपुण्यं च यथान्यायं यथाश्रुतम् ॥ ३
जाते पृथौ महाभागे तस्मिन्पुत्रे महात्मनि । विमलत्वं गतो राजा धर्मत्वं गतवान्पुनः ॥ ४
महापापानि सर्वाणि चार्जितानि नराधिपैः । तीर्थसङ्गप्रसङ्गेन तेषां पापं प्रयाति च ॥ ५
सतां सङ्गात्प्रजायेत पुण्यमेव न संशयः । पापानां तु प्रसङ्गेन पापं सिध्यति नान्यथा ॥ ६
[*संभाषाद्दर्शनात्स्पर्शादासनाद्भोजनात्किल । पापिनां संगमाच्चैव किल्बिषं परिसंचरेत् ॥ ७
तथा पुण्यात्मकानां च पुण्यमेव प्रसंचरेत् । महातीर्थप्रसङ्गेन पापाः शुध्यन्ति नान्यथा ] ॥
पुण्यां गतिं प्रयान्त्येव निर्धूताशेषकल्मषाः ॥ ८

ऋषय ऊचुः—

तत्कथं यान्ति ते पापाः परां सिद्धिं महामते । तन्नो विस्तरतो ब्रूहि श्रोतुं श्रद्धा प्रवर्तते ॥ ९

सूत उवाच—

लुब्धकाश्च महापापाः संजाता दाशधीवराः । रेवा च यमुना गङ्गा तासामम्भसि संस्थिताः ॥ १०
ज्ञानतोऽज्ञानतः स्नाताः संक्रीडन्ति च वै जले । महानदीप्रसङ्गेन ते यान्ति परमां गतिम् ॥ ११
सदास्नाताश्च वै पापसंघं परित्यजन्ति ते । पुण्यतोयप्रसङ्गाच्च ह्याप्लुताः सर्व एव ते ॥ १२
महानद्याः प्रसङ्गाच्च त्वन्यासां द्विजसत्तमाः । महापुण्यजनस्यापि पापं नश्यति पापिनाम् ॥
प्रसङ्गाद्दर्शनात्स्पर्शान्नात्र कार्या विचारणा ॥ १३
अत्रार्थे श्रूयते विप्रा इतिहासं पुरातनम् । तद्वो ह्यहं प्रवक्ष्यामि बहुपुण्यप्रदायकम् ॥ १४
कश्चिदस्ति मृगव्याधः स तु लुब्धो महामतिः । श्वभिर्वागुरजालैश्च धनुर्बाणैस्तथैव च ॥ १५
मृगान्घातयते नित्यं पिशितस्वादलम्पटः । एकदा स तु दुष्टात्मा बाणपाणिर्धनुर्धरः ॥ १६
श्वानैः परिवृतो दुर्गं वनं च प्रविवेश सः । मृगान्रुरून्वराहांश्च भीतान्सूदितवान्बहून् ॥ १७
रेवातीरं समासाद्य कश्चिच्छफरघातकः । शफरं सूदयित्वा स निर्जगाम बहिर्जलात् ॥ १८
मृगव्याधस्य लुब्धस्य भयत्रस्ता ततो मृगी । जीवत्राणपरा साँ चँ भीता चलितचेतना ॥ १९
त्वरमाणा पलायन्ती रेवातीरं समाश्रिता । श्वभिः संचालिता सा तु बाणघातक्षतातुरा ॥ २०
श्वसमानाऽपि वेगेन स लुब्धो मृगघातकः । पृष्ठ एव समायाति पुरतो याति सा मृगी ॥ २१

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ.पुस्तकस्थः ।

१ ञ. °मस्त्वं ग° । २ क. ख. ग. घ. ङ. च छ. झ ड. °म् । दास[श]त्वं पापसंघातं परित्यज्य प्रज° । ३ ञ. °जलस्या° । ४ क. ख. च. छ. ढ. °धः सुलोभाख्यो महावने । श्व° । ५ क. ख. ङ. च. छ. झ. ढ. °नं विन्ध्यस्य वै गतः । मृ° । ६ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. लोभस्य । ७ क. ख. ङ. च. छ. झ. ढ. साऽऽर्ता जिह्वा ललितवानवा । त्व° । ८ ढ. च जिह्वाललि° । ट. च जिह्वालुलि° । ९ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °न सुलोभो मृ° । १० छ. °ति सा मृगी बाणपीडिता । ह° । झ. °ति सा मृगी बहुचञ्चला । ह° ।

दृष्टवांस्तां शफरहा बाणपाणिः समुद्यतः । दुर्बाणस्य च वेगेन ह्यवरुध्य च तां मृगीम् ॥ २२
तावल्लुब्धो मृगव्याधः श्वभिः सार्धं समागतः । हन्तव्या सा मयैवेयं मृगया मे समागता ॥ २३
तस्य वाक्यं समाकर्ण्य मीनहा मांसलम्पटः । बाणं मुमोच दुष्टात्मा तामुद्दिश्य महाबलः ॥ २४
निहता मृगलुब्धेन बाणेन निशितेन च । प्रमृता सा मृगी तत्र बाणाभ्यां पापचित्तयोः ॥ २५
श्वभिर्दक्षैः समाक्रान्ता त्वरमाणा पपात सा । शिखराख्ये ह्रदे पुण्ये रेवायाः पापनाशने ॥ २६
श्वानश्च त्वरमाणास्ते पतिता विमले ह्रदे । मृगव्याधे वदत्येवं धीवरः क्रोधमूर्छितः ॥ २७
[*मदीयेयं मृगी दुष्ट कस्माद्बाणैर्हता त्वया । तमुवाच पुनः सोऽपि मीनहा मृगघातकम् ]॥ २८
मदीयं न च संदेहो ह्यवलिप्तः प्रभाषसे । युध्यमानौ ततस्तौ तु द्वावप्येतौ परस्परम् ॥ २९
क्रोधलोभान्महाभागौ पतितौ विमले जले । तस्मिन्काले महापर्व वर्तितं गतिदायकम् ॥
अमावास्यासमायोगं महापुण्यफलप्रदम् ॥ ३०
वेलायां पतिताः सर्वे पर्वणस्तस्य सत्तमाः । ज्ञानध्यानविहीनास्ते भावसत्यविवर्जिताः ॥ ३१
तीर्थस्नानप्रसङ्गेन मृगी श्वानश्च लुब्धकाः । सर्वपापविनिर्मुक्तास्ते गताः परमां गतिम् ॥ ३२
तीर्थानां च प्रभावेन सतां सङ्गाद्द्विजोत्तमाः । नाशयेत्पापिनां पापं दहेदग्निरिवेन्धनम् ॥ ३३
यस्मात्तेषां तु संसर्गादृषीणां सुमहात्मनाम् । संभाषाद्दर्शनान्नष्टं स्पर्शाच्चैव नृपस्य च ॥
वेनस्य कल्मषं सर्वं सतां सङ्गात्पुरा किल ॥ ३४
अत्युग्रं पुण्यसंसर्गात्पापमेव न संचरेत् । मातामहस्य दोषेण संलिप्तो वेन एव सः ॥ ३५

ऋषय ऊचुः—

मातामहस्य को दोषस्तन्नो विस्तरतो वद । स मृत्युः स च वै कालः स यमो धर्म एव च ॥ ३६
न हिंसको हि कस्यापि तस्मिन्पापे प्रतिष्ठितः । चराचराश्च ये लोकाः स्वकर्मवशवर्तिनः ॥ ३७
जीवन्ति च म्रियन्ते च भुञ्जन्त्येव स्वकर्मभिः । पापाः पश्यन्ति तं घोरं तेषां कर्म प्रविश्य सः॥
घोरेष्वेव च सर्वेषु कर्मस्वेव च पातकान् । योजयेन्नाशयेत्सूतं प्रशंस्तश्च दिने दिने ॥ ३९
सर्वेष्वेव सुपुण्येषु कर्मस्वेव च पुण्यकान् । योजयेत्सत्यधर्मात्मा तस्य दोषो न दृश्यते ॥
स मृत्योः केन दोषेण पापी वेनस्त्वजायत ॥ ४०

सूत उवाच—

स मृत्युः शासको नित्यं पापानां दुष्टचेतसाम् । वर्तते कालरूपेण तेषां कर्म विमृश्यति॥ ४१
दुष्कृतात्मा दुष्कृतेन कर्मणा नरकं लभेत् । तस्य पापं विदित्वाऽसौ तपत्येव हि तं यमः ॥ ४२
सुकृतात्मा लभेत्स्वर्गं कर्मणा सुकृतेन वै । योजयत्येव तान्सर्वान्मृत्युरेको महाबलः ॥ ४३
महता सौख्यभावेन गीतमङ्गलकारिणा । दानभोगादिभिश्चैव योजयेत्सुकृतात्मकान् ॥ ४४
पीडाभिर्विविधाभिश्च क्लेशैः कष्टैश्च दारुणैः । शासयेत्ताडयेद्विप्राः सक्रोधो मृत्युरेव तान् ॥ ४५

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. ज. पुस्तकस्थः ।

१ क. ख. ङ. छ. झ. ढ. °तः । धनुरानम्य वे° । ग. घ. ज. ड. °तः । धनुर्बाणस्य वे° । २ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °योः । श्वानदन्तैः स° । ३ क. ख. छ. झ. °माः । जना ध्या° । ङ. च. ढ. °माः । जपध्या° । ४ ञ. °माः । विनश्येत्पा° । ५ क. ख. ङ. च. छ. झ. °त्युग्रपुण्यसंसर्गात्पापिनां पापं नश्यति° । अत्युग्रपापिनां सङ्गात्पापमेव प्रसंच° । ६ ञ. योगो । ७ ञ. °मे च । पा° । ८ क. ख. ङ. च. छ. झ. ड. °त यमत्येव दि° । ९ ञ. °शस्तांश्च । १० क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °णैः । त्रास ।

कर्मणैव हि तस्यापि व्यापारं परिवर्तयेत् । मृत्योश्चापि महाभागा लोभात्पुण्या प्रजायते ॥ ४६
सुनीथा नाम वै कन्या संजातैषा महात्मनः । पितुः कर्मविपाकेन क्रीडमाना सदैव सा ॥
प्रजानां शास्ति कर्तारं पापपुण्यनिदर्शनम् ॥ ४७
सा तु कन्या महाभागा सुनीथा नाम तस्य सा । रममाणा वनं प्राप्ता सखीभिः परिवारिता ४८
तत्रापश्यन्महाभागं गन्धर्वतनयं वरम् । गीतकोलाहलस्यापि सुशङ्खं नाम सा तदा ॥ ४९
ददर्श चारुसर्वाङ्गं संतपन्तं महत्तपः । गीतविद्यासुसिद्ध्यर्थं ध्यायामनं सरस्वतीम् ॥ ५०
तस्यापराधमेवासौ संचकार दिने दिने । सुशङ्खः क्षमते नित्यं गच्छ गच्छेति सोऽब्रवीत् ॥ ५१
प्रेषिता नैव गच्छेत्सा विघ्नमेव समाचरेत् । तेनैवमुक्ता सा क्रुद्धाऽताडयत्तपसि स्थितम् ॥ ५२
तामुवाच ततः क्रुद्धः सुशङ्खः क्रोधमूर्छितः । दुष्टे पापसमाचारे कस्माद्विघ्नं त्वया कृतम् ॥ ५३
ताडनात्ताडनं भद्रे न कुर्वन्ति महाजनाः । आकुष्टा नैव क्रुध्यन्ति चेति धर्मस्य संस्थितिः ॥ ५४
त्वयाऽहं घातितः पापे निर्दोषस्तपसि स्थितः । एवमुक्त्वा स धर्मात्मा सुनीथां पापचारिणीम्
विरराम महाक्रोधाज्ज्ञात्वा नारीं निवर्तितः । ततः सा पापमोहाद्वा बाल्याद्वा तमिहैव च ॥ ५६
समुवाच महात्मानं सुशङ्खं तपसि स्थितम् । त्रैलोक्यवासिनां तातो ममैव परिघातकः ॥ ५७
असतो घातयेन्नित्यं सतो न परितापयेत् । नैव दोषो भवेत्तस्य महापुण्येन वर्तयेत् ॥ ५८
एवमुक्त्वा सुनीथा तु पितरं वाक्यमब्रवीत् । मया हि ताडितस्तात गन्धर्वतनयो वने ॥ ५९
तपस्तपन्स वै तात कामक्रोधविवर्जितः । मामुवाच स धर्मात्माऽकामरागसमास्थितः ॥ ६०
न ताडयेत्ताडयन्तं क्रोशन्तं नैव क्रोशयेत् । इत्युवाच स मां तात तन्मे त्वं कारणं वद ॥ ६१
एवमुक्तः स वै मृत्युः सुनीथां द्विजसत्तमाः । किंचिन्नोवाच धर्मात्मा प्रश्नमत्युत्तरं ततः ॥ ६२
वनं प्राप्ता पुनः सा हि सुशङ्खं तपसि स्थितम् । कशाघातैस्ततो दुष्टा जघान तपतां वरम् ॥ ६३
सुशङ्खस्ताडितो विप्रा मृत्योश्चैव हि कन्यया । ततः क्रुद्धो महातेजाः शशाप तां सुमध्यमाम् ॥ ६४
निर्दोषोऽपि च वै भद्रे यस्मात्त्वयैव ताडितः । अहमेवं तपःसंस्थस्तस्माच्छापं ददाम्यहम् ॥ ६५
गार्हस्थ्यं हि समास्थाय सङ्गो भर्त्रा यदा तदा । पापाचारमयः पुत्रो देवब्राह्मणनिन्दकः ॥ ६६
सर्वपापरतो दुष्टस्तव गर्भाद्भविष्यति । एवं शप्त्वा गतश्चासौ तप एव समाश्रितः ॥ ६७
गते तस्मिन्महाभागे सा सुनीथाऽऽगता गृहम् । समाचष्टे महात्मानं पितरं प्रति सा द्विजाः ॥ ६८
यथा शप्ता तदा तेन गन्धर्वतनयेन तु । तत्सर्वं संश्रुतं तेन मृत्युना परिभाषितम् ॥ ६९
कस्मात्त्वया ताडितोऽस्ति तपस्वी दोषवर्जितः । युक्तं नैव कृतं भद्रे तपतस्तस्य ताडनम् ॥ ७०
एवमाभाष्य धर्मात्मा मृत्युः परमदुःखितः । [* बभूव स हितं तस्या दिष्टमेवं विचिन्तयन्] ७१

सूत उवाच—

अत्रिपुत्रो महातेजा अङ्गो नाम महीपतिः । एकदा तु गतो विप्रास्तद्वनं प्रति नन्दनम् ॥ ७२
तत्र दृष्टो देवराजस्तेनेन्द्रः पाकशासनः । अप्सरसां गणैर्युक्तो गन्धर्वैः किंनरैस्तथा ॥ ७३
[ † गीयमानो महास्तोत्रैर्ऋषिभिर्देवमङ्गलैः । ] गीयमानो गीतकैश्च सुस्वरैः सप्तकैस्तथा ॥ ७४

---

* ञ. पुस्तकस्थोऽयमेतच्चिह्नान्तर्गतः पाठः । † एतच्चिह्नान्तर्गतोऽयं पाठो ग. घ. ङ. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. प्रयोजयेत् । २ क. ख. ङ. च. छ. झ. ढ. विपश्यैव क्री° । ३ ट. °म वश्यगा । र° । ४ ञ. सुसखं । ५ क. ख. ङ. च. छ. झ. ड. ढ. सुसखः । ६ क. ख. ङ. च. छ. झ. ढ. दुष्टे । ७ क. ख ङ. च छ. झ. ड. ढ. सुसखं ८ ञ. जातो । ९ ङ. छ. झ °क्त्वा गता सा तु । १० क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °त्मा क्रोधरां । ११ क. ख. ङ. च. छ. झ. ड ढ. सुसख° । १२ क. ख. ङ. च. छ. झ. ड. ढ. °व वने सं° । १३ क. ख. ङ. च. छ. झ. ढ. प्रतापत्राम् ।

[*वीज्यमानः सुगन्धैश्च व्यजनैः सर्व एव सः]। योषिद्भी रूपयुक्ताभिश्चामरैर्हंसगामिभिः ॥७५
छत्रेण हंसवर्णेन चन्द्रबिम्बानुकारिणा । एवं वै राजमानं तु सहस्राक्षं महाबलम् ॥ ७६
दृष्ट्वा विस्मयमापेदे वासवं कामसंयुतम् । तस्य पार्श्वे महाभागां पौलोमीं चारुलोचनाम् ॥ ७७
रूपेण तेजसा चैव तपसा च यशस्विनीम् । सौभाग्येन विराजन्तीं पातिव्रत्ययुतां सतीम् ॥७८
तया सह सहस्राक्षः स रेमे नन्दने वने । तस्य लीलां समालोक्य ह्यङ्गो राजा द्विजोत्तमाः॥७९
धन्यो वै देवराजोऽयमीदृशैः परिवारितः । अहोऽस्य तपसो वीर्यं येन प्राप्तं महत्पदम् ॥ ८०
यदाऽस्य सदृशः पुत्रः सर्वलोकप्रधानकः । स्यान्मे तदा महत्सौख्यं प्राप्स्यामीह न संशयः ॥८१
इति चिन्तापरो भूत्वा त्वरमाणो गृहं गतः ॥ ८२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्यान एकोनत्रिंशोऽध्यायः ॥ २९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४८१०

---

अथ त्रिंशोऽध्यायः ।

---

सूत उवाच—

अथ त्वङ्गो महातेजा दृष्ट्वा चेन्द्रस्य संपदम् । भोगांश्चैव विलासं च लीलां तस्य महात्मनः ॥ १
कथं वा ईदृशः पुत्रो मम स्याद्धर्मसंयुतः । चिन्तयित्वा क्षणं चैव स चाङ्गः खेदसंयुतः ॥ २
[†स्वकं गेहं समायातः स त्वङ्गः सत्यतत्परः] । अत्रिं पप्रच्छ पितरं प्रणतो नम्रकंधरः ॥ ३
कोऽयं पुण्यसमाचार इन्द्रत्वं प्राप्तवान्महान् । कस्य धर्मस्य वै व्युष्टिः किं कृतं कर्म चेदृशम् ॥ ४
[*कः कृतो धर्म एतेन कमाराधितवान्मुने] । तन्मे त्वं विस्तरेणापि वद सत्यवतां वर ॥ ५

अत्रिरुवाच—

साधु पृष्टं महाभाग त्वया वै धर्मकारणम् । चरितं तस्य देवस्य तन्मे निगदतः शृणु ॥ ६
सुव्रतो नाम मेधावी पुरा ब्राह्मणसत्तमः । तेन कृष्णो हृषीकेशस्तपसा चैव तोषितः ॥ ७
पुण्यगर्भमतः प्राप्तो अदित्यां कश्यपात्किल । विष्णोश्चैव प्रसादेन देवराजो बभूव सः ॥ ८

अङ्ग उवाच—

कथमिन्द्रसमः पुत्रो मम स्यात्पुत्रवत्सल । तदुपायं समाचक्ष्व भवाञ्ज्ञानवतां वरः ॥ ९

अत्रिरुवाच—

समासेनापि तस्यैव सुव्रतस्य महात्मनः । चरित्रमखिलं पुण्यं निशामय महामते ॥ १०
सुव्रतो नाम मेधावी पुराऽऽराधितवान्हरिम् । तस्य भावं सुभक्तिं च ध्यानं चैव महात्मनः ११
समालोक्य जगन्नाथो दत्तवान्वै महत्पदम् । स ऐन्द्रं सर्वभोगाढ्यं त्रैलोक्यं सचराचरम् ॥ १२
विष्णोश्चैव प्रसादाद्धि चानुभुङ्क्ते त्रिलोकधृक् । एवं ते सर्वमाख्यातमिन्द्रस्यापि विचेष्टितम् ॥१३

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. झ. छ. ट. ड. ढ. पुस्तकस्थः । † एतच्चिह्नार्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतोऽयं पाठो ड. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °णा । राजमानं सहस्राक्षं सर्वाभरणभूषितम् । २ क. ख. ङ. च. छ. झ. ड. ढ. °हमङ्गलाम् । ३ क. ख. ङ. च. छ. झ. ढ. °क्य तुङ्गश्चैव द्वि° । ४ क. ख. ङ. च. छ. झ. ढ. तुङ्गो । ५ क. ख. ङ. च. छ. झ. ढ. तुङ्गः । ६ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. °धु साधु महाभाग यथैवं पृच्छसे मयि । च° । ७ क. ख. ङ. च. छ. झ. ढ. तुङ्ग । ८ क. ख. ङ. च. छ. झ. ढ. °ण्यं तुङ्गस्याग्रे निवेदितम् । सु° । ग. घ. ट. ड. °ण्यं त्वङ्गस्याग्रे निवेदितम् । सु° । ९ म. इन्द्रः ।

भक्त्या तुष्यति गोविन्दो भावध्यानेन सत्तम । सर्वं ददाति सततं भक्त्या संतोषितो हरिः १४
तस्मादाराध्य गोविन्दं सर्वदं सर्वसंभवम् । सर्वज्ञं सर्ववेत्तारं सर्वेशं पुरुषं परम् ॥
तस्मात्प्राप्स्यसि सर्वं त्वं यद्यदिच्छसि नन्दन ॥ १५

सुखस्य दाता परमार्थदाता मोक्षस्य दाता जगतामिहेशः ।
तस्मात्तमाराधय गच्छ पुत्र संप्राप्स्यसे हीन्द्रसमं हि पुत्रम् ॥ १६
आकर्ण्य वाक्यं परमार्थयुक्तं महात्मनाऽसौ ऋषिणा हि तेन ।
संगृह्य तत्त्वं वचनं हि तस्य आराधितुं शाश्वतमव्ययं सः ॥ १७
आमन्त्र्य चोक्तः पितरं महात्मा ब्रह्मात्मजं ब्रह्मसमानमेव ।
संप्राप्तवान्मेरुगिरेस्तु शृङ्गं तत्काञ्चनै रत्नमयैः समेतम् ॥ १८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने त्रिंशोऽध्यायः ॥ ३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—४८३८

---

अथैकत्रिंशोऽध्यायः ।

---

सूत उवाच—

नानारत्नैः सुदीप्ताङ्गैर्हाटकेनापि सर्वतः । राजमानो गिरिश्रेष्ठो यथा सूर्यः स्वरश्मिभिः ॥ १
छायामशोकां संप्राप्य शीतलां सुखदायिनीम् । ध्यायन्ति योगिनः सर्वे ह्युपविष्टा दृढासने ॥ २
क्वचित्तपन्ति मुनयः क्वचिद्गायन्ति किंनराः । संतुष्टाश्चैव गन्धर्वाः सुवीणातालधारिणः ॥ ३
तालमानलये लीनाः स्वरैः सप्तभिरन्वितैः । मूर्छनारतिसंयुक्तैर्व्यक्तं गीतं मनोरमम् ॥ ४
तस्मिन्हि पर्वतश्रेष्ठे चन्दनाच्छादसंस्थिताः । गन्धर्वा गीततत्त्वज्ञा गीतं गायन्ति तत्पराः ॥ ५
नृत्यन्ति योषितस्तत्र देवानां पर्वतोत्तमे । पापघ्नी पुण्यदा दिव्या सुश्रेयःसुप्रदायिनी ॥ ६
वेदध्वनिः सुप्रचुरा श्रूयते पर्वतोत्तमे । चन्दनाशोकपुन्नागैः शालैस्तालैस्तमालकैः ॥ ७
वृक्षैः सुमेघसंकाशै राजते पर्वतोत्तमः । संतानकैः कल्पवृक्षैर्गङ्गायाः पयसाऽऽकुलैः ॥ ८
नगेन्द्रो भाति सर्वत्र नागवृक्षैः सुपुष्पितैः । नानाधातुसमाकीर्णो नानारत्नमयो गिरिः ॥ ९
नानाकौतुकसंयुक्तो नानामङ्गलसंयुतः । देववृन्दैः सुसंयुक्तश्चाप्सरोगणसंकुलः ॥ १०
ऋषिभिर्मुनिभिः सिद्धै[*गन्धर्वैः परिभाति सः । गजैश्चाचलसंकाशैः सिंहनादैर्विराजते ॥ ११
शरभैर्मत्तशार्दूलै]र्मृगयूथैरलंकृतः । वापीकूपतडागैश्च संपूर्णः शीतलोदकैः ॥ १२
हंसकारण्डवाकीर्णैः पर्वतः परिशोभते । स्वर्णोत्पलैश्च श्वेतैश्च [*रक्तोत्पलैर्विराजते ॥ १३
नदीस्रवणसंघातैर्विमलैश्चोदकैस्तथा । शालैस्तालैस्तमालैस्तु रौप्यैश्च स्फाटिकैस्तथा ॥ १४
विस्तीर्णैः काञ्चनैर्दिव्यैः सूर्यवह्निसमप्रभैः । शिलातलैश्च संपूर्णः शैलराजो विराजते ॥ १५

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. झ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ च. छ. झ. ड. ढ 'स्य प्रणम्य तं शा' । २ क. ख. ङ. च. छ. झ. तुङ्गः । ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. वटैः । ४ क. ख. ङ. च छ. झ. ड. ढ. 'क्षै रम्भापादपसंकु' । ५ ख. ग. घ. ङ. च. ट. ड. नाकन्नं । ६ क. ख. ङ. च. छ. झ. ट. 'गधूर्तैर' । ७ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. विमलोदकैः । ८ क. ख. ग. घ. ङ. च. छ. झ. ट. सर्वत्र ।

विमानैर्देवतानां च प्रासादैः पर्वतोत्त(प)मैः । हंसकेन्दुमतीकाशैर्हेमदण्डैरलंकृतः ॥ १६
कलशैश्चामरैर्युक्तैः प्रासादैः परिशोभितः । नानागुणप्रमुदितदेववृन्दैश्च राजते ॥ १७
देववृन्दैरनेकैश्च] गन्धर्वैश्चारणैस्तथा । सर्वत्र राजते पुण्यो मेरुर्गिरिवरोत्तमः ॥ १८
तस्माद्गङ्गानदी पुण्या पुण्यलभ्या[1] महानदी । प्रसृता पुण्यतीर्थाढ्या हंसपद्मैः समाकुला ॥ १९
मुनिभिः सेव्यमाना सा ऋषिसंघैर्महानदी । एवंगुणं गिरिश्रेष्ठं पुण्यकौतुकमङ्गलम्[2] ॥ २०
अङ्गश्चात्रिसुतः पुण्यः प्रविवेश महामुनिः । गङ्गातीरे सुपुण्ये च त्वेकान्ते[3] रत्नकन्दरे ॥ २१
तत्रोपविश्य मेधावी कामक्रोधविवर्जितः । सर्वेन्द्रियाणि संयम्य हृषीकेशं मनःकृतम् ॥ २२
ध्यायमानः स धर्मात्मा कृष्णं क्लेशापहं प्रभुम् । आसने शयने याने ध्याने च मधुसूदनम् ॥ २३
नित्यं पश्यति युक्तात्मा योगयुक्तो जितेन्द्रियः । चराचरेषु जीवेषु तेषु पश्यति केशवम् ॥ २४
आर्द्रेषु चैव शुष्केषु सर्वेष्वन्येषु स द्विजः । एवं वर्षशतं जातं तप्यमानस्य तस्य च ॥ २५
बहुविघ्नाश्च घोराश्च दर्शनं यान्ति नित्यशः । तेजसा तस्य देवस्य नृसिंहस्य महात्मनः ॥ २६
निरातङ्कः स धर्मात्मा दहत्यग्निरिवेन्धनम् । नियमैः संयमैश्चान्यैरुपवासैर्द्विजोत्तमाः[4] ॥ २७
क्षीयमाणस्तु संजातो दीप्यमानः स्वतेजसा । सूर्यपावकसंकाशस्त्वङ्ग एवं प्रदृश्यते ॥ २८
एवं तपःसुनिरतं ध्यायमानं जनार्दनम् । आविर्भूयाब्रवीद्देवो वरं वरय मानद ॥ २९
तं च दृष्ट्वा हृषीकेशमङ्गः परमनिर्वृतः । तुष्टाव प्रणतो भूत्वा वासुदेवं प्रसन्नधीः ॥ ३०

अङ्ग उवाच—

त्वं गतिः सर्वभूतानां भूतभावन पावन । भूतात्मा सर्वभूतेशो नमस्तुभ्यं गुणात्मने ॥ ३१
गुणरूपाय गुह्याय गुणातीताय ते नमः । गुणाय गुणकर्त्रे च गुणाढ्याय गुणात्मने ॥ ३२
भवाय भवकर्त्रे च भक्तानां भवहारिणे । भवाय[6] भवगुह्याय नमो भवविनाशिने ॥ ३३
यज्ञाय यज्ञरूपाय यज्ञेशाय नमो नमः । यज्ञकर्मप्रसङ्गाय[7] नमः शङ्खधराय च ॥ ३४
नमो[8] हिरण्यवर्णाय नमो रथाङ्गधारिणे । सत्याय सत्यभावाय सर्वसत्यमयाय च ॥ ३५
धर्माय धर्मकर्त्रे च सर्वकर्त्रे च ते नमः । धर्माङ्गाय सुवीराय धर्माधाराय ते नमः ॥ ३६
नमः पुण्याय पुत्राय ह्यपुत्राय महात्मने । [ *मायामोहविनाशाय सर्वमायाकराय ते ] ॥ ३७
मायाधराय मूर्ताय त्वमूर्ताय नमो नमः [ †सर्वमूर्तिधरायैव शंकराय नमो नमः ] ॥ ३८
ब्रह्मणे ब्रह्मरूपाय परब्रह्मस्वरूपिणे । नमस्ते सर्वधाम्ने च नमो धामधराय च ॥ ३९
श्रीमते श्रीनिवासाय श्रीधराय नमो नमः । क्षीरसागरवासाय चामृताय च ते नमः ॥ ४०
महौषधाय घोराय[10] महाप्रज्ञापराय च । अक्रूराय प्रमेध्याय मेध्यानां पतये नमः ॥ ४१
अनन्ताय ह्यशेषाय चानघाय नमो नमः । आकाशस्य प्रकाशाय[11] पक्षिरूपाय ते नमः ॥ ४२
हुताय हुतभोक्त्रे च हवीरूपाय ते नमः[12] । बुद्धाय बुधरूपाय सदाबुद्धाय ते नमः ॥ ४३

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ड. ढ. पुण्यतोया । ट पुण्यवन्या । २ क. ख. ङ. च. छ. झ. ड. ढ. °म् । तुङ्ग° । ३ क. ख. ङ. च. छ. झ. ड. ढ. °न्ते चारुक° । ४ क. ख. ङ. च. छ. झ. °त्तमः । क्षी° । ५ क. ख. ङ. च. छ. झ. ढ. तुङ्ग । ६ ञ. भवोद्भवाय गु° । ७ ट. ड. °कर्त्रे च संत्राय । ८ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °मो नमो हिरण्याय न° । ९ च. च मूलधर्मधराय । १० ग. घ. वीराय । ड. धीराय । ११ क ख ङ. च. ज. ढ. °य वहिरू° । १२ क. ख. ङ. च. ढ. °मः । नमो हव्याय बुद्धाय स्वधाकाराय ते ।

स्वाहाकाराय शुद्धाय ह्यव्यक्ताय महात्मने । व्यासाय वासवायैव वसुरूपाय ते नमः ॥ ४४
वासुदेवाय विश्वाय वह्निरूपाय ते नमः । [*हरये केवलायैव वामनाय नमो नमः ॥ ४५
नमो नृसिंहदेवाय सत्त्वपालाय ते नमः । नमो गोविन्द गोपाय नम एकाक्षराय च ॥ ४६
नमः सर्वक्षरायैव हंसरूपाय ते नमः । त्रितत्त्वाय नमस्तुभ्यं पञ्चतत्त्वाय ते नमः ॥ ४७
पञ्चविंशतितत्त्वाय तत्त्वाधाराय वै नमः । कृष्णाय कृष्णरूपाय लक्ष्मीनाथाय ते नमः ॥ ४८
नमः पद्मपलाशाक्ष आनन्दाय पराय च । नमो विश्वंभरायैव पापनाशाय वै नमः ॥
नमः पुण्यसुपुण्याय सत्यधर्माय ते नमः ॥ ४९

नमो नमः शाश्वत अव्ययाय नमो नमः संघ(सर्व)नभोमयाय ।
श्रीपद्मनाभाय महेश्वराय नमामि ते केशव पादपद्मम् ॥ ५०
आनन्दकन्द कमलाप्रिय वासुदेव सर्वेश ईश मधुसूदन देहि दास्यम् ।
पादौ नमामि तव केशव जन्म जन्म कृपां कुरुष्व मम शान्तिद शङ्खपाणे ॥ ५१
संसारदारुणहुताशनतापदग्धं पुत्रादिबन्धुमरणैर्बहुशोकतापैः ।
ज्ञानाम्बुदेन मम प्लावय पद्मनाभ दीनस्य मच्छरणरूप भवस्व नाथ ॥ ५२

एवं स्तोत्रं समाकर्ण्य तु(त्व)ङ्गस्यापि महात्मनः । दर्शयित्वा स्वकं रूपं घनश्यामं महौजसम् ५३
शङ्खचक्रगदापाणिं पद्महस्तं महाप्रभम् । वैनतेयसमारूढमात्मरूपं प्रदर्शितम् ॥ ५४
सर्वाभरणशोभाङ्गं हारकङ्कणकुण्डलैः । राजमानं परं दिव्यं निर्मलं वनमालया ॥ ५५
तुङ्गस्याग्रे हृषीकेशः शोभमानं महाप्रभम् । श्रीवत्साङ्केन पुण्येन कौस्तुभेन जनार्दनः ॥ ५६
दर्शयित्वा स्वकं देहं सर्वदेवमयो हरिः । सर्वालंकारशोभाढ्यं तुङ्गस्याग्रे जनार्दनः ॥ ५७
स उवाच महात्मानं तं तुङ्गमृषिसत्तमम् । भो भो विप्र महाभाग श्रूयतां वचनं शुभम् ॥ ५८
मेघगम्भीरघोषेण समाभाष्य द्विजोत्तमम् । तपसा तेन तुष्टोऽस्मि वरं वरय शोभनम् ॥ ५९
तुष्टमानं हृषीकेशं तं दृष्ट्वा कमलापतिम् । दीप्यमानं विराजन्तं विश्वरूपं जनेश्वरम् ॥ ६०
पादाम्बुजद्वयं तस्य प्रणम्य च पुनः पुनः । हर्षेण महताऽऽविष्टस्तमुवाच जनार्दनम् ॥ ६१
दासोऽहं तव देवेश शङ्खचक्रगदाधर । वरं मे दातुकामोऽसि देहि त्वं वंशजं सुतम् ॥ ६२
दिवि चन्द्रो यथा भाति सर्वतेजःसमन्वितः । तादृशं देहि मे पुत्रं सर्वलोकस्य रक्षकम् ॥ ६३
सर्वदेवप्रियं देव ब्रह्मण्यं धर्मपण्डितम् । दातारं ज्ञानसंपन्नं धर्मतेजःसमन्वितम् ॥ ६४
त्रैलोक्यरक्षकं कृष्ण सत्यधर्मानुपालकम् । यज्वनामुत्तमं चैकं शूरं त्रैलोक्यभूषणम् ॥ ६५
ब्रह्मण्यं वेदसिद्धांशं सत्यसंधं जितेन्द्रियम् । अजितं सर्वजेतारं विष्णुतेजःसमप्रभम् ॥ ६६
वैष्णवं पुण्यकर्तारं पुण्यजं पुण्यलक्षणम् । शान्तं तु तपसोपेतं सर्वशास्त्रविशारदम् ]॥ ६७
सुशीलं सर्वधर्मज्ञं भवतो गुणसंयुतम् । ईदृशं देहि मे पुत्रं दातुकामो यदा वरम् ॥ ६८

वासुदेव उवाच—

एभिर्गुणैः समोपेतस्तव पुत्रो भविष्यति । अत्रिवंशस्य वै धर्ता विश्वस्यास्य महामते ॥ ६९

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

---

१ ङ. झ. ढ. कपिलायैव । २ क. ख. ङ. च. ड. ढ. तेजसे । त्रिं । ३ ङ. च. ढ. महाप्रभुम् । ४ ढ. 'दविद्वांसं सं' ।
५ क. ख. ङ. च. झ. ढ. 'मू । वेदज्ञं योगिनां श्रेष्ठं भं' ।

तेजसा यशसा पुण्यैः पितरं चोद्धरिष्यति । उद्धरिष्यति यः सत्यैः पितरं च पितामहम् ॥ ७०
भवान्प्राप्स्यसि मे सर्वं तद्विष्णोः परमं पदम् । इत्युक्त्वा देवदेवेशः[2][3] स्तमङ्गं प्रति स द्विजः ॥ ७१
कस्यचित्पुण्यवीर्यस्य पुण्यां कन्यां विवाहय । तस्यामुत्पादय सुतं पुण्यं पुण्यावहं प्रियम् ॥ ७२
स भविष्यति धर्मात्मा मत्प्रसादान्महामुने । [*सर्वज्ञः सर्ववेत्ता च यादृशो वाञ्छितस्त्वया ]॥
एवं वरं ततो दत्त्वा त्वन्तर्धानं गतो हरिः ॥ ७३

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्यानेऽङ्गवरप्रदानं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४९११

---

## अथ द्वात्रिंशोऽध्यायः ।

ऋषय ऊचुः—

शप्ता गन्धर्वमुख्येन सुशङ्खेन महात्मना । तस्याः शापः कथं जातः किं किं कर्म कृतं तया ॥ १
सा लेभे कीदृशं पुत्रं तस्य शापाद्विदां वर । सुनीथायाश्चरित्रं तु त्वं नो विस्तरतो वद ॥ २

सूत उवाच—

सुशङ्खेनापि तेनैव सा शप्ता तनुमध्यमा । पितुः स्थानं गता सा तु सुनीथा दुःखपीडिता ॥ ३
स्वचरित्रं तदा सर्वं पितरं प्रति चाब्रवीत् । श्रुतवान्सोऽपि धर्मात्मा मृत्युर्धर्मवतां वरः ॥ ४
तामुवाच सुनीथां[11] तु सुतां शप्तां महात्मना । भवती दुष्कृतं पापं धर्मतेजःप्रणाशनम् ॥ ५
कस्मात्कृतवती भद्रे मुनेस्तस्य हि ताडनम् । [† विरुद्धं सर्वलोकस्य भवत्या परिकल्पितम् ] ॥६
कामक्रोधविहीनं तं सुशान्तं धर्मवत्सलम् । तपोमार्गविलग्नं च परब्रह्मणि संस्थितम्[12] ॥ ७
तमेव घातयेद्यो वै तस्य पापं शृणुष्व हि । पापात्मा जायते पुत्रि किल्बिषं भुञ्जते स हि ॥ ८
ताडयन्तं ताडयेद्यः क्रोशन्तं क्रोशयेत्पुनः । तस्य पापं स वै भुङ्क्ते ताडितस्य न संशयः ॥ ९
स वै शान्तः संजितात्मा ताडयन्तं न ताडयेत् । निर्दोषं प्रति येनापि ताडनं च कृतं सुते ॥१०
पश्चान्मोहेन पापेन निर्दोषोऽपि च ताडयेत् । पापं कर्तुश्च यत्पापं निर्दोषं प्रति गच्छति ॥ ११
ताडनं नैव तस्माद्धि कार्यं दोषवतोऽपि च । दुष्कृतं च महत्पुत्रि त्वयैवं परिपालितम् ॥ १२
शप्ता तेनापि पश्चाच्च तस्मात्पुण्यं[13] समाचर । सतां संगममासाद्य सदैव परिवर्तय ॥ १३
योगध्यानेन दानेन परिवर्तय नित्यशः । सतां सङ्गो महापुण्यो बहुक्षेमप्रदायकः ॥ १४
बाले पश्य सुदृष्टान्तं सतां सङ्गस्य यद्गुणम् । अपां संस्पर्शनात्स्नानात्पानाद्दर्शनतोऽपि वा ॥ १५
मुनयः सिद्धिमायान्ति बाह्याभ्यन्तरक्षालिताः । [14]आयुष्मन्तो भवन्त्येते लोकाः सर्वे चराचराः ॥

---

* एतच्चिह्नान्तर्गतोऽयं पाठः ङ.पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ढ. स्थानं । २ क. ख. ङ. च. छ. झ. ढ. °शस्तं तुष्टं । ३ क. ख. च. छ. झ. °तं तस्मात्पौत्रो न संशयः । स । ४ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °म् । भविष्यति न संदेहो म° । ५ क. ख. ङ. च. छ. झ. ढ. मत्प्रसादान्महामते । ६ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. गन्धर्वपुत्रेण सु° । ७ छ. झ. सुसखेन । ८ ञ. तस्य शापात्कथं । ९ क. ख. ग. घ. ङ. च. छ. ट. ड. ढ. °पाद्द्विजोत्तम । सु° । १० क. ख. ग. ङ. च. छ. झ. ट. ड. ढ. मृत्युः सत्यत्र° । ११ क. ख. ङ. च. छ. झ. ड. ढ. °द्रे सुशान्तस्य । १२ क. ख. ङ. च. छ. झ. ढ. °ते बहु । ता° । १३ क. ख. ग. घ. ङ. च. छ. ट. ड. ढ. नन्दिनि । १४ क. ख. ङ. च. छ. झ. ढ. शुचिष्मन्तो ।

[*अपि संतोषशीलश्च मृदुगामी प्रियंकरः । निर्मलो रसवांश्चासौ पुण्यवीर्यो मलापहः ॥ १७
तथा शान्तो भवेत्पुत्रि सर्वसौख्यप्रदायकः । यथा वह्निप्रसङ्गाच्च मलं त्यजति काञ्चनम् ॥ १८
तथा सतां हि संसर्गात्पापं त्यजति मानवः । सत्यवह्निप्रदीप्तश्च प्रज्वलेत्पुण्यतेजसा ॥ १९
सत्येन दीप्तिमांश्चैव ज्ञानेनापि सुनिर्मलः । अत्युष्णो ध्यानभावेन ह्यस्पृश्यः पापजैर्नरैः ॥ २०
सत्यवह्नेः प्रसङ्गाच्च पापेन्धनं दिधक्षति । तस्मात्सत्यस्य संसर्गः कर्तव्यो नान्यथा त्वया ]॥ २१
तस्मात्पुत्रि महाभागे चिन्तयाधोक्षजं हरिम् । पापभावं परित्यज्य पुण्यमेव समाश्रय ॥ २२

सूत उवाच—

एवं पित्रा सुनीथा सा दुःखिता प्रविबोधिता । नमस्कृत्य पितुः पादौ सा गता निर्जनं वनम् ॥
कामक्रोधौ परित्यज्य बाल्यभावं तपस्विनी । मोहद्रोहौ च मायां च त्यक्त्वा चैकान्तमास्थिता २४
तस्याः सख्यः समाजग्मू रम्भाद्यास्तास्तपोन्विताः । ददृशुस्तां विशालाक्ष्यः सुनीथां दुःखभागिनीम्
ध्यायन्तीं चिन्तयानां तामूचुस्ताः समुपागताः । कस्माच्चिन्तसि भद्रं ते त्वनया चिन्तयाऽन्विता ॥
संतापकारणं ब्रूहि चिन्ता दुःखप्रदायिनी । एकैव सार्थका चिन्ता धर्मस्यार्थे विचिन्त्यते ॥ २७
द्वितीया सार्थका चिन्ता योगिनां धर्मनन्दिनि । अन्या चानर्थका चिन्ता तां नैव परिकल्पयेत् ॥
कामनाशकरी चिन्ता बलतेजःप्रणाशिनी । नाशयेत्सर्वसौख्यं तु रूपहानिं विदर्शयेत् ॥ २९
[ †तृष्णामोहौ तथा लोभमेतांश्चिन्ता हि प्रापयेत् । पापमुत्पादयेच्चिन्ता चिन्तिता च दिने दिने ३०
चिन्ता व्याधिप्रकाशाय नरकाय प्रकल्पयेत् ] । तस्माच्चिन्तां परित्यज्य चानुवर्तस्व शोभने ॥ ३१
अर्जितं कर्मणा पूर्वं स्वयमेव नरेण तु । तदेव भुङ्क्तेऽसौ जन्तुर्ज्ञानवान्न विचिन्तयेत् ॥ ३२
तस्माच्चिन्तां परित्यज्य सुखदुःखादिकं वद । तासां तद्वचनं श्रुत्वा सुनीथा वाक्यमब्रवीत् ॥ ३३

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुनीथाचरितं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४९४४

---

अथ त्रयस्त्रिंशोऽध्यायः ।

---

सूत उवाच—

यथा शप्ता वने पूर्वं सुशङ्खेन महात्मना । तासु सर्वं यथाऽऽख्यातं सखीष्वेवं विचेष्टितम् ॥
आत्मनश्च महाभागा दुःखेनापि प्रपीडिता ॥ १

सुनीथोवाच—

अन्यच्चाहं प्रवक्ष्यामि सख्यः शृण्वन्तु सांप्रतम् ॥ २
मदीयां रूपसंपत्तिं वयसो गुणसंपदम् । विपश्यन्मां पितुश्चिन्ता संजाता मम कारणात् ॥ ३
देवेभ्यो दातुकामोऽसौ मुनिभ्यस्तु महायशाः । स्वहस्ते तु निगृह्यैव देवानिदमुदाहरत् ॥ ४
गुणाढ्येयं सुता बाला ममैवं चारुलोचना । दातुकामोऽस्मि भद्रं वो गुणिने वै महात्मने ॥ ५

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठो ङ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ढ. 'भारं प' । २ क. ख. ङ. च. छ. झ. ढ. 'जग्मुः क्रीडार्थं लीलयाऽन्वि' । ३ क. ख. ङ. च. छ. झ. ट. ड. ढ. भद्रे त्वं त्व' । ४ क. ख. ङ. च. छ. झ. 'कायना' । ५ क. ख. ङ. च. छ. झ. ड. ढ. सुसखेन । ६ क. ख. ङ.च. छ.ट.ड. ढ. 'वै समाख्या' ।

मृत्योर्वाक्यं ततो देवा ऋषयः शुश्रुवुस्तथा । तमूचुर्भाषमाणं ते देवा इन्द्रपुरोगमाः ॥ ६
तव कन्या गुणाढ्येयं सत्यानां परमावधिः । दोषेणैकेन संदुष्टा ऋषिशापेन तेन वै ॥ ७
अस्यामुत्पत्स्यते पुत्रो दुष्टवीर्यः पुमान्किल । भविताऽसौ महापापी पुण्यवंशविनाशकः ॥ ८
गङ्गातोयेन संपूर्णो यथा कुम्भः प्रदृश्यते । सुराया बिन्दुना लिप्तो मद्यकुम्भः प्रजायते ॥ ९
पापस्य पापसंसर्गात्कुलं पापि प्रजायते । आरनालस्य वै बिन्दुः क्षीरमध्ये प्रयाति चेत् ॥ १०
पश्चान्नाशयते क्षीरमात्मरूपं प्रकाशयेत् । तस्माद्विनाशयेत्पुण्यं पापपुत्रो न संशयः ॥ ११
अनेनैव हि दोषेण तवेयं पापभागिनी । अन्यस्मै दीयतां गच्छ देवैरुक्तः पिता मम ॥ १२
देवैश्चापि सगन्धर्वैर्ऋषिभिश्च महात्मभिः । तैश्चापि स परित्यक्तः पिता मे दुःखपीडितः ॥ १३
ममाप्येवं प्रतीकारं न कुर्वन्ति हि सज्जनाः । एवं पापमयं कर्म मया चैव पुरा कृतम् ॥ १४
ततश्चाहं स्वयत्नेन वनमेव समाश्रिता । तप एव चरिष्यामि करिष्ये कायशोषणम् ॥ १५
भवतीभिः सुपृष्टाऽहं कार्यकारणमेव हि । मम चिन्तानुगं कर्म मया सख्यः प्रकाशितम् ॥ १६
एवमुक्त्वा सुनीथा च मृत्योः कन्या यशस्विनी । विरराम सुदुःखार्ता किंचिन्नोवाच वै पुनः १७

सख्य ऊचुः—

दुःखमेव महाभागे त्याज्यं कायविनाशनम् । नास्ति कस्य कुले दोषो देवैः प्रोक्तः समाश्रितः १८
क्षिप्रमुक्तं पुरा तेन ब्रह्मणा हरिसंनिधौ । देवैश्चापि न हि त्यक्तो ब्रह्मा पूज्यतमोऽभवत् ॥ १९
ब्रह्महत्याप्रमुक्तोऽसौ देवराजोऽपि पश्यते । देवैः सार्धं महाभागैस्त्रैलोक्यं परिभुञ्जति ॥ २०
गौतमस्य प्रियां भार्यामहल्यां गतवान्पुरा । परदाराभिगामित्वं देवत्वे परिवर्तते ॥ २१
ब्रह्महत्योपमं कर्म दारुणं कृतवान्हरः । ब्रह्मणस्तु कपालेन चाद्यापि परिवर्तते ॥ २२
देहो निपतितो(तः) पश्य निमिशापेन वा पुनः । अगस्त्यः कुम्भसंभूतस्त्रैलोक्यं परिकल्पयेत् ॥ २३
लोकस्थाश्च प्रजा यस्य देवाद्याश्च चराचराः । कृष्णो भुङ्क्ते महाशापं भार्गवेण कृतं पुरा ॥ २४
गुरुदारान्गतश्चन्द्रः क्षीणश्चैव प्रदृश्यते । भविष्यति महातेजा राजराजः प्रतापवान् ॥ २५
पाण्डुपुत्रो महाप्राज्ञो धर्मात्मा स युधिष्ठिरः । गुरोश्चैव वधार्थाय त्वनृतं स वदिष्यति ॥ २६
एतेष्वेव महत्पापं वर्तितं च महत्सु च । वैगुण्यं कस्य वै नास्ति कस्य नास्ति किलाञ्जनम् ॥ २७
भवती स्वल्पदोषेण लिप्ताऽनेन वरानने । उपकारं करिष्यामस्तवैव वरवर्णिनि ॥ २८
तवाङ्गे ये गुणाः सन्ति सतां स्त्रीणां यथा शुभे । अन्यत्रापि न पश्यामस्तान्गुणांश्चारुवल्लभे ॥ २९
रूपमेव वरस्त्रीणां प्रथमं भूषणं शुभे । शीलमेव द्वितीयं च तृतीयं सत्यमेव च ॥ ३०
आर्यत्वं च चतुर्थं च पञ्चमं धर्ममेव हि । षष्ठं सतीत्वं दृढता सप्तमं साहसोऽष्टमम् ॥ ३१

---

१ क.ख.ग.घ.ङ.च छ.ज.झ.ट.ड.ढ. °स्तदा । त° । २ क.ख. ग. घ. च. छ. झ. ट. शीलानां । ३ ग.घ ट ड पापस्य जा° । ४ क.ख.ङ.च.छ.झ.ढ. तद्वद्वि° । ५ च.छ.झ.ढ. °येद्दशं पा° । ६ क.ख.ग.घ.ङ.च.छ.ज. झ. ट. ड. ढ. सज्जनाः । ७ क. ख.ङ.च.छ.झ.ढ. °म् । संतप्ता दुःखशोकेन । ८ क.ख.ङ.च.छ.झ.ड.ढ. °वैः पापं समाश्रितम् । क्षि° । ९ क.ख.ङ. च. छ. झ. ट.ढ. °तः । जिह्मनु° । १० क.ख.ग.ङ.च.छ.ज.ढ. हरसै° । ११ अ. °क्यं मुक्त एव हि । गौ° । १२ ग. घ. ज. °ते । दैवान्निपतितं तत्र ऋषिभिर्वेदपारगैः । अ° । १३ क.ख.ङ.च. छ. झ. ढ. °नः । आदित्यः कुष्ठसंयुक्तस्त्रैलोक्यं हि प्रकाशये । छ. °नः । आदित्यः पङ्गुसंयुक्त° । १४ क. ख. ङ. च छ. झ.ड.ढ. लोका नमन्ति तं देवं दे° । च.ज. ट. लोकस्यास्य परं दे° । दे° । १५ क. ख. ङ. च. छ. झ. ढ. °व गुणः स्त्री° । १६ क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. हि । मधुरत्वं ततः प्रोक्तं षष्ठमेवं वरानने । शुद्धत्वं सप्तमं बाले ह्यन्तर्बाह्येषु योषिताम् ॥ अष्टमं हि पतिभावं शुश्रूषा नवमं किल । सहिष्णुत्वं दशमं प्रोक्तं रतिश्चैकादशं तथा । पातिव्रत्यं ततः प्रो° ।

नवमं मङ्गलं गानं दशमं व्यवसायता । एकादशस्तथा स्त्रीणां कामाधिक्यं प्रकीर्तितम् ॥ ३२
मधुरं वचनं प्रोक्तं द्वादशं वरवर्णिनि । तैस्त्वं [1]संभाविता बाले मा भैर्देवि वरानने[2] ॥ ३३
येनोपायेन ते भर्ता भविष्यति सुधर्मकृत् । तमुपायं प्रपश्यामस्त्वदर्थे वयमेव हि ॥
स्वस्था भव महाभागे मा वै त्वं साहसं कुरु ॥ ३४

सूत उवाच—

एवमुक्ता सुनीथा तु पुनरूचे सखीस्तु ताः । कथयध्वं ममोपायं येन भर्ता भविष्यति ॥ ३५
तामूचुस्ता वरा नार्यो रम्भाद्याश्चारुलोचनाः । रूपमाधुर्यसंयुक्ता भविती(त्री) भूतिवर्धिनी ॥ ३६
ब्रह्मशापेन संभीता वयमत्र समागताः । [*तां प्रोचुर्हि विशालाक्षीं मृत्युकन्यां सुलोचनाम्] ३७
विद्यामेकां प्रदास्यामः पुरुषाणां प्रमोहिनीम् । सर्वमायाविदां भद्रे सर्वभद्रप्रदायिनीम् ॥ ३८
विद्याबलं ततो दद्युस्तस्यै ताः सुखदायकम् । यं यं मोहयितुं भद्र इच्छस्येवं सुरादिकम् ॥ ३९
तं तं सद्यो मोहय वा इत्युक्ता सा तथाऽकरोत् । विद्यायां हि सुसिद्धायां सा सुनीथा सुनन्दिता
समेतैव सखीभिस्तु पुरुषान्सा विपश्यति । अटमाना गता पुण्यं नन्दनं वनमुत्तमम् ॥ ४१
गङ्गातीरे ततो दृष्ट्वा ब्राह्मणं रूपसंयुतम् । सर्वलक्षणसंपन्नं सूर्यतेजःसमप्रभम् ॥ ४२
रूपेणाप्रतिमं लोके द्वितीयमिव मन्मथम् । देवरूपं महाभागं भाग्यवन्तं सुभाग्यदम् ॥ ४३
अनौपम्यं महात्मानं विष्णुतेजःसमन्वितम् । वैष्णवं सर्वपापघ्नं विष्णुतुल्यपराक्रमम् ॥
कामक्रोधविहीनं तमत्रिवंशविभूषणम् ॥ ४४

दृष्ट्वा स्वरूपं तपसा तपन्तं दिव्यप्रभावं परितप्यमानम् ।
पप्रच्छ रम्भां स्वसखीं सुमोहात्कोऽयं दिविष्ठप्रवरो महात्मा ॥ ४५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—४९८९

अथ चतुस्त्रिंशोऽध्यायः ।

रम्भोवाच—

ब्रह्मा ह्यव्यक्तसंभूतस्तस्माज्जज्ञे प्रजापतिः । अत्रिर्नाम स धर्मात्मा तस्य पुत्रो महामनाः ॥ १
अङ्गो नाम अयं भद्रे नन्दनं वनमागतः । इन्द्रस्य संपदं दृष्ट्वा नानातेजःसमन्विताम् ॥ २
कृता स्पृहा त्वनेनापि इन्द्रस्य सदृशे पदे । ईदृशो हि यदा पुत्रो मम स्याद्वंशवर्धनः ॥ ३
सुश्रेयो मे भवेज्जन्म यशःकीर्तिसमन्वितम् । आराधितो हृषीकेशस्तपोभिर्नियमैस्ततः ॥ ४
सुप्रसन्ने हृषीकेशे वरं याचितवानयम् । इन्द्रस्य सदृशं पुत्रं विष्णुतेजःपराक्रमम् ॥ ५
वैष्णवं सर्वपापघ्नं देहि मे मधुसूदन । दत्त एवं मया पुत्र ईदृशः परिपालकः ॥ ६
तदाप्रभृति विप्रेन्द्रः पुण्यां कन्यां प्रपश्यति । यथा त्वं चारुसर्वाङ्गी तथाऽयं परिपश्यति ॥ ७

* एतच्चिह्नान्तर्गतोऽयं पाठ क. ख. ग. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. संभूषिता । २ क. ख. ग. घ. ङ. च. छ. झ. ट. ढ. हि । तामूचुस्ता वराः सख्यो मा । ३ क. ख. ङ. च. छ. झ. ङ. ढ. प्रमत्येव । ४ क. ख. ङ. च. छ. झ. ढ. तुष्टो । ५ क.ख.ङ.च. छ. झ. ड. स्याद्धर्मसंयुतः । सुं । ६ क. ख. ङ च. छ. झ. ढ. सर्वधारकः ।

एनं गच्छ वरत्वेन अस्मात्पुत्रो भविष्यति । पुण्यात्मा सर्वधर्मज्ञो विष्णुतेजःपराक्रमः ॥ ८
एतत्ते सर्वमाख्यातं यथा त्वं परिपृच्छसि । अयं भर्ता तव श्रेष्ठो भवेद्देवि न संशयः ॥ ९
सुशङ्खस्यापि यः शापो वृथा सोऽपि भविष्यति । एवं जाते महाभागे पुत्रे धर्मप्रचारिणि ॥ १०
भविष्यति सुखं भद्रे सत्यं सत्यं वदाम्यहम् । सुक्षेत्रे कर्षको यादृग्बीजं वपति तत्परः ॥ ११
स तथा भुञ्जते देवि यथा बीजं तथा फलम् । अन्यथा नैव जायेत तत्सर्वं सदृशं भवेत् ॥ १२
अयमेव महाभागस्तपस्वी पुण्यवीर्यवान् । अस्य वीर्यात्समुत्पन्नो ह्यस्यैव गुणसंपदा ॥ १३
युक्तः पुत्रो महातेजाः सर्वधर्मभृतां वरः । भविष्यति महाभागो युक्तात्मा योगतत्त्ववित् ॥ १४

एवं हि वाक्यं मुनिशम्य बाला रम्भाप्रयुक्तं शिवदायकं तत् ।
विचिन्त्य बुद्ध्या हि सखीमुखोद्गतं मेनेऽथ सर्वं परिसत्यमेव हि ॥ १५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५००५

---

अथ पञ्चत्रिंशोऽध्यायः ।

---

सुनीथोवाच—

सत्यमुक्तं त्वया भद्र एवमेतत्करोम्यहम् । अनया विद्यया विप्रं मोहयिष्यामि नान्यथा ॥ १
साहाय्यं देहि मे पुण्यं येन गच्छामि सांप्रतम् । एवमुक्ता तया रम्भा तामुवाच यशस्विनी ॥ २
कीदृशं दद्मि साहाय्यं तत्त्वं कथय भामिनि । दूतत्वं गच्छ मे भद्र एनं प्रति सुसांप्रतम् ॥ ३
एवमुक्त्वा तु सा रम्भां विरराम सुलोचना । एवमेतत्प्रतिज्ञातं रम्भया देवभार्यया ॥ ४
करिष्ये तव साहाय्यमादेशो मम दीयताम् । सद्भावेन विशालाक्षी रूपयौवनशालिनी ॥ ५
मायया दिव्यरूपा सा संबभूव वरानना । रूपेणाप्रतिमा लोके मोहयन्ती जगत्त्रयम् ॥ ६
मेरोश्चैव महापुण्ये शिखरे चारुकन्दरे । नानाधातुसमाकीर्णे नानारत्नोपशोभिते ॥ ७
देववृक्षैः समाकीर्णे बहुपुष्पोपशोभिते । [*देववृन्दसमाकीर्णे गन्धर्वाप्सरसेविते] ॥ ८
मनोहरे सुरम्ये च शीतच्छायासमाकुले । चन्दनानामशोकानां तरूणां चारुहासिनी ॥ ९
दोलायां सा समारूढा सर्वशृङ्गारशोभिता । कौशेयेन सुनीलेन राजमाना वरानना ॥ १०
अतीवशोभमानेन कञ्चुकेन द्विजोत्तमाः । सर्वाङ्गसुन्दरी बाला वीणांवादनतत्परा ॥ ११
गायमाना वराङ्गी तं सुस्वरं सुविमोहनम् । ताभिः परिवृता बाला सखीभिः सुमनोहरा ॥ १२
अङ्गस्तु कन्दरे पुण्य एकान्ते ध्यानमास्थितः । कामक्रोधविहीनस्तु ध्यायमानो जनार्दनम् ॥ १३
स श्रुत्वा सुस्वरं गीतं मधुरं सुमनोहरम् । तालमानक्रियोपेतं सर्वसत्त्वविकर्षणम् ॥ १४
ध्यानाच्चलिताचित्तस्तु मायागीतेन मोहितः । समुत्थायाऽऽसनात्तूर्णं पश्यमानो मुहुर्मुहुः ॥ १५

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

---

१ क. ख ङ. च. छ. झ. ढ. वरारोहे । २ क. ख. ङ च. छ. झ. ढ सुसखस्यां । ३ क. ख. ङ. च. छ. झ. ढ. हि मुनीथया तदा तत्त्वार्थमेतत्परिं । ४ क. ख. ङ. च. छ. झ. ढ. मनस्विनीम् । ५ क. ख. ङ च. छ. झ. ढ. °पसंचये । दे° । ६ क. ख. ङ. च. छ. झ. बन्धूकपुष्पवर्णेन । ७ क. ख. ङ. च. छ. झ. ड. ढ. °णातालकराविला । गा° । ८ क. ख. ग. घ. ङ. च. छ. झ. ट. ढ. °रं विश्रमो° । ९ क. ख. ङ. च. छ. झ. ढ. तुङ्गस्तु । १० क. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °श्चचाल तेजस्वी मा° ।

जगाम तत्र वेगेन मायाचालितमानसः । दोलासंस्थां विपश्यैव वीणादण्डकधारिणीम् ॥ १६
हास्यमानां सुगायन्तीं पूर्णचन्द्रनिभाननाम् । मोहितस्तेन गीतेन रूपेणापि महायशाः ॥ १७
तस्या लावण्यभावेन मन्मथस्य शराहतः । आकुलव्याकुलो जातो मुनिपुत्रो द्विजोत्तमाः ॥ १८
प्रलपत्यतिमोहेन जृम्भते च पुनः पुनः । स्वेदः कम्पोऽथ संतापस्तस्याङ्गे जायते क्षणात् ॥ १९
मुह्यते च महामोहैर्ग्लानः स्खलितमानसः । वेपमानस्ततः शुष्को दूयमानः समागतः ॥ २०
तामालोक्य विशालाक्षीं मृत्योः कन्यां यशस्विनीम् । अथोवाच महात्मा स सुनीथां चारुहासिनीम्॥
का त्वं कस्य वरारोहे सखीभिः परिवारिता । केन कार्येण संप्राप्ता केन त्वं प्रेषिता वनम् ॥२२
तवाङ्गं सुन्दरं सर्वं समाभाति वरानने । समाचक्ष्व ममाद्यैव प्रसादसुमुखी भव ॥ २३
मायामोहेन संमुग्धस्तस्याः कर्म न विन्दति । मार्गणैर्मन्मथस्यापि परिविद्धो महामुनिः ॥ २४
एवंविधं महद्वाक्यं समाकर्ण्य महामतेः । नोवाच किंचित्सा विप्रं समालोक्य सखीमुखम् ॥ २५
रम्भायाः सा सुनीथा तु संज्ञया परितोषिता । समुवाच ततो रम्भा सादरं तं द्विजोत्तमम् २६
इयं कन्या महाभागा मृत्योश्चापि महात्मनः । सुनीथा सुप्रसिद्धेयं सर्वलक्षणसंयुता ॥ २७
पतिमन्वेषते बाला धर्मवन्तं तपोनिधिम् । शान्तं दान्तं महाप्राज्ञं वेदविद्याविशारदम् ॥ २८
तामुवाच ततस्त्वङ्गो रम्भामप्सरसां वराम् । मया चाऽऽराधितो विष्णुः सर्वविश्वमयो हरिः २९
तेन दत्तो वरो मह्यं पुत्राख्यः सर्वसिद्धिदः । तन्निमित्तमहं भद्रे सुतार्थं नित्यमेव च ॥ ३०
कस्यचित्पुण्यवीर्यस्य कन्यामेकामचिन्तयम् । सदैवाहं न पश्यामि सुशुभामात्मनः क्वचित् ॥ ३१
इयं धर्मस्य वै कन्या धर्माचारा वरानना । मामेव हि भजत्वेषा यदि कान्तमिहेच्छति ॥ ३२
यं यमिच्छेदियं बाला तं तं दद्मि न संशयः । देयं वाऽदेयमेवापि त्वस्याः संगमकारणात्॥ ३३
एवमेव त्वया देयं रम्भोवाच द्विजोत्तमम् । [*विप्रेन्द्र त्वं शृणुष्वैव मम वाक्यं च सांप्रतम् ॥ ३४
एषा नैव त्वया त्याज्या धर्मपत्नी सदैव हि । अस्या दोषगुणौ चैव ग्राह्यौ नैव कदा त्वया ॥
इत्यर्थे प्रत्ययं विप्र प्रत्यक्षं परिदर्शय ॥ ३५
स्वहस्तं देहि विप्रेन्द्र सत्यप्रत्ययदायकम् । एवमस्तु मया दत्तो ह्यस्या हस्तो न संशयः ॥ ३६

सूत उवाच—

एवं संबन्धिकं कृत्वा सत्यप्रत्ययकारकम् । गान्धर्वेण विवाहेन सुनीथामुपयेमिवान् ॥ ३७
तस्मै दत्त्वा सुनीथां तां रम्भा हृष्टेन चेतसा । सा तां चाऽऽमन्त्रयित्वा वै गता गेहं स्वकं पुनः ॥
प्रहृष्टचेतसः सख्यः स्वस्थानं प्रतिजग्मिरे । गतासु तासु सर्वासु सखीषु द्विजसत्तमः ॥ ३९
रेमे त्वङ्गस्तया सार्धं प्रियया भार्यया सह । तस्यामुत्पाद्य पुत्रैकं सर्वलक्षणसंयुतम् ॥ ४०
चकार नाम तस्यैवं वेनाख्यं तनयस्य हि । ववृधे स महातेजाः सुनीथातनयस्तदा ॥ ४१
वेदशास्त्रमधीत्यैव धनुर्वेदं गुणान्वितम् । सर्वासां सोऽपि मेधावी विद्यानां पारमेयिवान् ॥ ४२
स तस्य तनयो वेनः शिष्टाचारेण वर्तते । स वेनो ब्राह्मणश्रेष्ठाः क्षत्राचारपरोऽभवत् ॥ ४३
दिवि चेन्द्रो यथा भाति सर्वतेजःसमन्वितः । स भात्येवं महाप्राज्ञः स्वबलेन पराक्रमैः ॥ ४४

* एतच्चिह्नान्तर्गतोऽयं पाठो झ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. °स्ततस्तुङ्गो द्° । २ क.ख.च.छ.झ. महामुनेः । ३ क.ख.ग. घ. ङ. च. छ. झ. ट. ड. ढ. °यं श्रूयतां द्विजसत्तम । रम्भोवाच—एषा । ४ क. ख. ङ. च. छ. झ. ढ. °मे तुङ्ग° । ५ क.ख.ङ.च.छ.झ.ढ. °न्॥ तुङ्गस्य । [illegible]

नाहुषस्यान्तरे प्राप्ते वैवस्वतसमागते । प्रजापालं विना लोके प्रजाः सीदन्ति वै सदा ॥ ४५
ऋषयो धर्मतत्त्वज्ञाः प्रजाहेतोस्तपोधनाः । चिन्तयन्ति महीपालं धर्मज्ञं सत्यपण्डितम् ॥ ४६
तं वेनमेव ददृशुः संपन्नं[1] सर्वलक्षणैः । प्राजापत्ये पदे[2] चैनमभ्यषिञ्चन्द्विजोत्तमाः ॥ ४७
अभिषिक्ते महाभागे[3] त्वङ्गपुत्रे तदा नृपे । ते प्रजापतयः सर्वे जग्मुस्ते च तपोवनम् ॥ ४८
गतेषु तेषु सर्वेषु वेनो राज्यं करोति सः ॥ ४९

सूत उवाच—

सा सुनीथा सुतं दृष्ट्वा सर्वराज्यप्रसाधकम् । विशङ्कते प्रभावेन शापात्तस्य महात्मनः ॥ ५०
ममापत्यो महाभागो धर्मात्मा[4] संभविष्यति । इत्येवं चिन्तयेन्नित्यं पूर्वपापाद्विशङ्किता ॥ ५१
धर्माङ्गानि सुपुण्यानि सुताग्रे परिदर्शयेत् । सत्यभावादिकान्पुण्यान्गुणान्सा वै प्रकाशयेत् ॥ ५२
इत्युवाच सुतं सा हि चाहं धर्मसुता सुत । पिता ते धर्मतत्त्वज्ञस्तस्माद्धर्मं समाचर ॥ ५३
इत्येवं बोधयेन्नित्यं पुत्रं वेनं तदा सती । मातापित्रोस्तयोर्वाक्यं प्रज्ञायुक्तं स पालयेत् ॥ ५४
एवं वेनः प्रजापालः संजातः क्षितिमण्डले । लोकाः सुखेन जीवन्ति प्रजा धर्मेण रञ्जिताः ॥ ५५
एवं राज्यप्रभावं तु वेनस्यापि महात्मनः । धर्मप्रभावा वर्तन्ते तस्मिञ्शासति पार्थिवे ॥ ५६

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५०६१

अथ षट्त्रिंशोऽध्यायः ।

ऋषय ऊचुः—

एवं वेनस्य वै राज्ञः सृष्टिरेव महात्मनः । धर्माचारं परित्यज्य कथं पापे मतिर्भवेत् ॥ १

सूत उवाच—

ज्ञानविज्ञानसंपन्ना मुनयस्तत्त्ववेदिनः । शुभाशुभं वदन्त्येनं तन्न स्यादिह चान्यथा ॥ २
तप्यमानेन तेनापि सुशङ्खेन महात्मना । दत्तः शापः कथं विप्रा न यथावच्च जायते ॥
वेनस्य पातकाचारं सर्वमेव वदाम्यहम् ॥ ३
तस्मिञ्शासति धर्मज्ञे प्रजापाले महात्मनि । पुरुषः कश्चिदायातो[5] ब्रह्मलिङ्गधरस्तदा ॥ ४
नग्नरूपो महाकायः सितमुण्डो महाप्रभः । मार्जनीं शिखिपत्राणां कक्षायां स हि धारयन् ॥ ५
गृहीत्वा पानपात्रं च नालिकेरमयं करे । पठमानो मरुच्छास्त्रं वेदशास्त्रविदूषकम्[6] ॥ ६
यत्र वेनो महाराजस्तत्रोपायात्त्वरान्वितः । सभायां तस्य वेनस्य प्रविवेश स पापवान् ॥ ७
तं दृष्ट्वा समनुप्राप्तं वेनः प्रश्नं तदाऽकरोत् । भवान्को हि समायात ईदृग्रूपधरो मम ॥ ८
सभायां वद मामत्र तूर्णं कस्मात्समागतः । को वेषः किं तु ते नाम को धर्मः कर्म किं तव ॥ ९
को वेदस्ते क आचारैः[7] को नयः का प्रभावना । किं ज्ञानं कः प्रभावस्ते किं सत्यं धर्मलक्षणम् ॥
तत्त्वं सर्वं समाचक्ष्व ममाग्रे सत्यमेव च । श्रुत्वा वेनस्य तद्वाक्यं पापो वाक्यमुदाहरत् ॥ ११

---

१ क. ख. ङ. ट. ढ. °न्नं लक्षणैर्गुणैः । २ क. ख. ङ. च. छ झ ढ °दे पुण्ये अभ्य° । ३ क. ख. ङ. च. छ. झ. ढ. °गे तुङ्ग° । ४ क. ख. ङ. च. छ. झ. ढ. धर्मत्राता भ° । ५ क. ख. ङ. च. झ. ढ. °यातः पद्मालि° । छ. °यातश्छद्मालि° । ६ क. ख. ग. घ. ङ. च. छ. झ. ढ. °दधर्मवि° । ७ क. ख. ङ. च. छ. झ. ङ. ढ. °रः किं तपः का ।

पाप उवाच—

करोष्येवं वृथा भावं महामूढो न संशयः । अहं धर्मस्य सर्वस्वमहं पूज्यतमः सुरैः ॥ १२
अहं ज्ञानमहं सत्यमहं धाता सनातनः । अहं धर्म अहं मोक्षः सर्वदेवमयो ह्यहम् ॥ १३
ब्रह्मदेहात्समुद्भूतः सत्यसंधोऽस्मि नान्यथा । जिनरूपं विजानीहि सत्यधर्मकलेवरम् ॥
मम रूपं हि ध्यायन्ति योगिनो ज्ञानतत्पराः ॥ १४

वेन उवाच—

तवैव कीदृशो[2] धर्मः किं ते दर्शनमेव च । किमाचारो वदस्वैहि इत्युक्तं तेन भूभुजा ॥ १५

पाप उवाच—

अर्हन्तो देवता यत्र निर्ग्रन्थो गुरुरुच्यते । दया वै परमो धर्मस्तत्र मोक्षः प्रदृश्यते[3] ॥ १६
ईदृशोऽस्मिन्न संदेह आचारं प्रवदाम्यहम् । यजनं याजनं नापि वेदाध्ययनमेव च ॥ १७
नास्ति संध्या तपो दानं स्वधास्वाहाविवर्जितम् । हव्यकव्यादिकं नास्ति नास्ति यज्ञादिका क्रिया
पितॄणां तर्पणं नास्ति नातिथिर्वैश्वदेविकम् । कृष्णस्य न तथा पूजा ह्यर्हन्तध्यानमुत्तमम् ॥ १९
एवं धर्मसमाचारो जैनमार्गे प्रदृश्यते । एतत्ते सर्वमाख्यातं जैनधर्मस्य लक्षणम् ॥ २०

वेन उवाच—

वेदे प्रोक्तो यथा धर्मो यत्र यज्ञादिकाः क्रियाः । पितॄणां तर्पणं श्राद्धं वैश्वदेवं न दृश्यते ॥ २१
न दानं न तपो वाऽस्ति किं वै धर्मस्य लक्षणम् । वद सत्यं ममाग्रे त्वं दयाधर्मश्च कीदृशः ॥ २२

पाप उवाच—

पञ्चतत्त्वप्रबद्धोऽयं प्राणिनां काय एव च । आत्मा वायुस्वरूपोऽयं तेषां नास्ति प्रसङ्गता ॥ २३
यथा जलेषु भूतानामपि सङ्गमवेहि तत् । जायते बुद्बुदाकारं तद्वद्भूतसमागमः ॥ २४
पृथ्वीभावो रजःस्थस्तु चाऽऽपस्तत्रैव संस्थिताः । ज्योतिस्तत्र प्रदृश्येत वायुरावर्तते च त्रीन् ॥ २५
आकाशमावृणोत्पश्चाद्बुद्बुदत्वं प्रजायते । अप्सु मध्ये प्रभात्येव सुतेजो वर्तुलं परम् ॥ २६
क्षणमात्रं प्रदृश्येत तत्क्षणं नैव दृश्यते । तद्वद्भूतसमायोगः सर्वत्र परिदृश्यते ॥ २७
अन्तकाले प्रयात्यात्मा पञ्च पञ्चसु यान्ति ते । मोहमुग्धास्ततो मर्त्या वर्तन्ते च परस्परम् ॥ २८
श्राद्धं कुर्वन्ति मोहेन क्षयाहे पितृतर्पणम् । क्वाऽऽस्ते मृतः समश्नाति कीदृशोऽसौ नरोत्तमः[11] ॥ २९
किं ज्ञानं कीदृशं कार्यं केन दृष्टं वदस्व नः । मिष्टमन्नं प्रभुक्त्वा तु तृप्तिं यान्ति च ब्राह्मणाः ३०
कस्य श्राद्धं प्रदीयेत[12] सा तु श्रद्धा निरर्थिका । अन्यदेवं प्रवक्ष्यामि वेदानां कर्म दारुणम् ॥ ३१
यदाऽतिथिर्गृहं याति भोजनं लभते ध्रुवम् । तदा चाऽऽहृत्य राजेन्द्र अतिथिं परिभोजयेत् ॥ ३२
अश्वमेधे मखे त्वश्वं गोमेधे वृषमेव च । नरमेधे नरं राजन्वाजपेये तथा ह्यजम् ॥ ३३
राजसूये महाराज प्राणिनां घातनं बहु । पुण्डरीके गजं हन्याद्गजमेधे तु कुञ्जरम् ॥ ३४
सौत्रामण्यां पशुं मेध्यमेवमेव[13] प्रदृश्यते । नानारूपेषु सर्वेषु श्रूयतां नृपनन्दन ॥ ३५

---

१ क. ख. ङ. च. छ झ. ढ. राज्यं । २ क. ख. ङ. च. छ. झ. ड. °दृशं कर्म किं । ३ क. ख. ङ. च. छ. झ. °ते । दर्शनेऽस्मि° । ग. घ. ट. ड. °ते । दर्शितोऽस्मि° । ४ क. ख. ङ. च. छ. झ. ढ. क्षपणस्य वरा पू° । ५ अ. °जा अर्हे तु ध्या° । ६ अ. °प्रमेयोऽयं । ७ क. ख. च. °त्मवपुःस्व° । ८ अ. °मतो हि । ९ अ. °गुना वर्तितं पृथक् । आ° । १० अ. °श्वासच्छुद्ध्यर्थं प्र° । ११ क. ख. ङ. च. छ. झ. नृपोत्तम । १२ क. ख. ङ. च. छ. झ. ढ. °ति महोक्षं पचते द्विजः । अजं वा राजरा° । १३ क. ख. ङ. च. छ. झ. ड. ढ. मेधे मेषमेव ।

नानाजातिविशेषाणां पशूनां घातनं स्मृतम् । कस्माद्धि दीयते दानं किं नु दानस्य लक्षणम् ३६
न दत्तमुत्कटं ज्ञेयं क्रियते यदि भोजनम् । अत्यन्तदोषहीनांस्तान्हिंसन्ति यान्महामखे ॥ ३७
तत्र किं दृश्यते धर्मः किं फलं तत्र भूपते । पशूनां मारणं यत्र निर्दिष्टं वेदपण्डितैः ॥ ३८
तस्माद्धिनष्टधर्मं च न पुण्यं मोक्षदायकम् । दयां विना हि यो धर्मः स धर्मो विफलायते ॥ ३९
जीवानां पालनं यत्र तत्र धर्मो न संशयः । स्वाहाकारः स्वधाकारस्तपः संघोऽभिजायते ॥ ४०
दयाहीनं निष्फलं स्यान्नास्ति धर्मस्तु तत्र हि । एते वेदा अवेदाः स्युर्दया यत्र न विद्यते ॥ ४१
दयादानपरो नित्यं जीवमेव प्ररक्षयेत् । चाण्डालो वा स शूद्रो वा स वै ब्राह्मण उच्यते ॥ ४२
ब्राह्मणो निर्दयो यो वै पशुघातपरायणः । स वै सुनिर्दयः पापी कठिनः क्रूरचेतनः ॥ ४३
वचनैः कथ्यते वेदः स वेदो ज्ञानवर्जितः । यत्र ज्ञानं भवेन्नित्यं स वै वेदः प्रतिष्ठितः ॥ ४४
दयाहीनेषु वेदेषु विप्रेषु च महामते । नास्ति सत्यं क्रिया तत्र वेदविप्रेषु वै कदा ॥ ४५
वेदा अवेदा राजेन्द्र ब्राह्मणाः सत्यवर्जिताः । दानस्यापि फलं नास्ति तस्माद्दानं न दीयते ४६
यथा श्राद्धस्य वै चिह्नं तथा दानस्य लक्षणम् । जिनस्यापि च यद्धर्मं भुक्तिमुक्तिप्रदायकम्॥४७
तवाग्रेऽहं प्रवक्ष्यामि बहुपुण्यप्रदायकम् । आदौ दया प्रकर्तव्या शान्तभूतेन चेतसा ॥ ४८
आराधयेद्धृदा देवं जिनमेकं चराचरम् । मनसा शुद्धभावेन जिनमेकं प्रपूजयेत् ॥ ४९
नमस्कारः प्रकर्तव्यस्तस्य देवस्य नान्यथा । मातापित्रोस्तु वै पादौ कदा नैवाभिवन्दयेत् ॥ ५०
अन्येषामेव का वार्ता श्रूयतां राजसत्तम ॥ ५१

वेन उवाच—

एते विप्राश्च ह्याचार्या गङ्गाद्याः सरितस्तथा । वदन्ति पुण्यतीर्थानि बहुपुण्यप्रदानि च ॥
तत्किं वदस्व सत्यं मे यदि धर्ममिहेच्छसि ॥ ५२

पाप उवाच—

आकाशाद्वै महाराज सद्यो वर्षन्ति वै घनाः । भूमौ हि पर्वतेष्वेव सर्वत्र पतते जलम् ॥ ५३
तदाप्लाव्य ततस्तिष्ठेन्नद्यां सर्वत्र भावयेत् । नद्यो जलप्रवाहास्तु तासु तीर्थं श्रुतं कथम् ॥ ५४
जलाशया महाराज तडागाः सागरास्तथा । पृथिव्या धारकाश्चैव गिरयो ह्यश्मराशयः ॥ ५५
नास्त्येतेषु च वै तीर्थं *जलैर्जलदमुत्तमम् । स्नाने दाने यथा पुण्यं कस्मात्सत्रेषु नैव हि ॥ ५६
दृष्ट्वा स्नानेनं वै सिद्धिर्मीनाः सिध्यन्ति नान्यथा। यत्र जीवस्तत्र तीर्थं तत्र धर्मः सनातनः ॥
तपोदानादिकं सर्वं पुण्यं तत्र प्रतिष्ठितम् ॥ ५७

एको जिनः सर्वमयो नृपेन्द्र नास्त्येव धर्मं परमं हि तीर्थम् ।
अयं तु लोके परमस्तु तस्माद्ध्यायस्व नित्यं सुसुखो भविष्यसि ॥ ५८

---

* "जलैर्यत्र दनु" इत्यन्यपुस्तके वर्तते तथाऽपि [ जलदैर्जलमु ] इति समीचीनपाठ इति भाति ।

---

१ क. ख. ङ. च. छ. ढ. °म् । पश्चाद्धि । २ क. ख. च. न । ३ क. °म् । तदन्नमुत्थितं ज्ञेयं क्रियते भूरिभो° । ४ क. ख. ङ. च. छ. झ. °स्माद्धि तत्र वै धर्मे न° । ५ क. ख. ङ. च. छ. झ. सत्यो नृपोत्तम । द° । ६ ख देदो न वे° । ७ क. ख. ग. घ. ङ. च. छ. झ. ढ. ड. ढ. °त्यं तत्र वे° । ८ क. ख. ङ. च. छ. झ. ड. ढ. °ष्ठेद्द्यां स° । ९ भ °ष्ट्वा दाने° । १० भ. °न ते सिद्धमविसि° ।

विनिन्द्य धर्मं सकलं सवेदं दानं सुपुण्यं परियज्ञरूपम् ।
पापस्य भावैर्बहुबोधितो नृपस्त्वङ्गस्य पुत्रो भुवि तेन पापिना ॥ ५९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने षट्त्रिंशोऽध्यायः ॥ ३६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५१२०

---

अथ सप्तत्रिंशोऽध्यायः ।

---

सूत उवाच—

एवं संबोधितो वेनः पापभावं गतः किल । पुरुषेण तेन पापेन महापापेन मोहितः ॥ १
नमस्कृत्य ततः पादौ तस्यैव च दुरात्मनः । वेदधर्मं परित्यज्य सत्यैधर्मादिकां क्रियाम् ॥ २
सुयज्ञानां निवृत्तिः स्याद्वेदानां हि तथैव च । पुण्यशास्त्रमयो धर्मस्तदा तैरप्रवर्तितः ॥ ३
सर्वपापमयो लोकः संजातस्तस्य शासनात् । तेन यज्ञाश्च वेदाश्च धर्मशास्त्रार्थमुत्तमम् ॥ ४
न दानाध्ययनं विप्रास्तस्मिञ्शासति पार्थिवे । एवं धर्मप्रलोपोऽभून्महत्पापं प्रवर्तितम् ॥ ५
अङ्गेन वार्यमाणस्तु [*चान्यथा कुरुते भृशम् । पितुः पादौ ननामाथ मातुश्चैव दुरात्मवान् ॥ ६
सनकस्यापि विप्रस्य अहमेकः प्रतापवान् । पित्रा निवार्यमाणश्च] मात्रा चैव दुरात्मवान् ॥ ७
न करोति शुभं पुण्यं तीर्थदानादिकं तथा । आत्मभावं स्वरूपं च बहुकालं महायशाः ॥ ८
पुनः पुनर्विचार्यैव कस्मात्पापी त्वजायत । [ †तुङ्गः प्रजापतेः पुत्रो वंशलाञ्छनमागतम् ] ॥ ९
ततः पप्रच्छ धर्मात्मा राजा मधुरमेव च । कस्माद्दोषात्समुत्पन्नो वद सत्यं मम प्रिये ॥ १०

सुनीथोवाच—

बाल्ये कृतं मया पापं सुशङ्खस्य महात्मनः । तपसि संस्थितस्यापि नान्यत्किंचित्कृतं मया ॥ ११
शप्ताऽहं कुप्यता तेन दुष्टा ते संततिर्भवेत् । इति जाने महाभाग तेनायं दुष्टतां गतः ॥ १२
तच्छ्रुत्वा वचनं राजा दिष्टमेवान्वपद्यत । अथ सप्तर्षयस्तत्र वेनपार्श्वे समागताः ॥
समाश्वास्य ततः प्रोचुरङ्गस्य तनयं प्रति ॥ १३

ऋषय ऊचुः—

मा वेन साहसं कार्षीः प्रजापालो भवानिह । त्वयि सर्वमिदं लोकं त्रैलोक्यं सचराचरम् ॥ १४
धर्माधर्मात्मकं राजन्सकलं हि प्रतिष्ठितम् । पापकर्म परित्यज्य धर्मकर्म समाचर ॥ १५
एवमुक्ते तु तैर्वाक्ये प्रहसन्वाक्यमब्रवीत् ॥ १६

---

*एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । †एतच्चिह्नान्तर्गतः पाठः क ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

---

१ क.ख.ङ.छ च.छ झ.ढ. 'पस्तुङ्ग' । २ क.ख.ङ.च.झ. जैनेन । ३ क.ख.ङ च. छ.झ. ढ. 'त्यपुण्यादि' । ४ क. ख. ङ च.छ झ.ढ. 'मयं धर्मे तदा नैव प्रवर्तितम् । स' । ५ क.ख.ङ.च.छ. झ. ढ. तुङ्गेन । ६ ङ. छ. झ. अयमे' । ७ क.ख.ग घ. ङ. च. छ. झ. ट. ड. ढ. 'त्मा सुतां मृत्योर्महात्मनः । क' । ८ क.ख.ङ.च.छ.झ ढ. कस्य दोषा' । ९ क.ख.ग. 'च—पूर्वमेव सुवृत्तान्तमात्मनः पुण्यवादिनी ॥ समाचष्टे तदाऽज्ञाय मम दोषान्महामते ॥ संजात ईदृशः पुत्रो महापापी द्विजोत्तम ॥ व्रीडमाना समाभाष्य भर्तारं भयविह्वला ॥ समाकर्ण्य महातेजास्तया सह वनं ययौ ॥ गते तस्मिन्महाभागे सभार्ये च वनं तदा ॥ अं' । १० ढ. 'दं राजंल्लो' ।

वेन उवाच—

अहमेव परो धर्मो[1]ऽहमेवार्हः सनातनः । अहं धाता ह्यहं गोप्ता त्वहं[2] वै सत्यमेव च ॥ १७
[*अहं धर्मो[3] महापुण्यो जैनधर्मः सनातनः । ] मामेव कर्मणा विप्रा भजध्वं धर्मरूपिणम् ॥ १८

ऋषय ऊचुः—

ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः । सर्वेषामेव वर्णानां श्रुतिरेषा सनातनी ॥ १९
वेदाचारेण वर्तन्ते तेन जीवन्ति जन्तवः । ब्रह्मवंशात्समुद्भूतो भवान्ब्राह्मण एव च ॥ २०
पश्चाद्राजा पृथिव्यां तु संजातः ख्यातविक्रमः । राज्ञः पुण्येन राजेन्द्र सुखं जीवन्ति वै प्रजाः[4] २१
राज्ञः पापेन नश्यन्ति तस्मात्सत्यं समाचर । समादृतस्त्वया धर्मः कृतश्चापि नराधिप ॥ २२
तस्मात्त्रेतायुगस्यायं द्वापरस्य तथा न हि । कलेश्चैव प्रदेशे[5] तु वर्तयिष्यन्ति मानवाः ॥ २३
जैनधर्मं समाश्रित्य सर्वे पापप्रमोहिताः । वेदाचारं परित्यज्य पापं यास्यन्ति मानवाः ॥ २४
[†पापस्य मूलमेवं वै जैनधर्मं न संशयः । अनेन मुग्धा राजेन्द्र महामोहेन पातिताः ॥ २५
मानवाः] पापसंघातास्तेषां नाशाय नान्यथा । भविष्यत्येव गोविन्दः सर्वपापापहारकः ॥ २६
म्लेच्छरूपं समाश्रित्य संहरिष्यति पातकान् । पापेषु संगतेष्वेवं म्लेच्छनाशाय वै पुनः ॥ २७
कल्किरेव स्वयं देवो भविष्यति न संशयः । व्यवहारं कलेश्चैव त्यज पुण्यं समाश्रय ॥
वर्तयस्व हि देहेन प्रजापालो भव स्वयम् ॥ २८

वेन उवाच—

अहं ज्ञानवतां श्रेष्ठो[6] विश्वज्ञानं च वै द्विजाः । योऽन्यथा वर्तते चैव स दण्ड्यो भवति ध्रुवम् ॥ २९
अत्यर्थं[7] भाषमाणं तं राजानं पापचेतसम् । कुपितास्ते महात्मानः सर्वे[8] वै ब्रह्मणः सुताः ॥ ३०
कुपितेष्वेव विप्रेषु वेनो राजा महात्मसु । तेषां शापभयाच्चैव वल्मीकं प्रविवेश ह ॥ ३१
अथ ते मुनयः क्रुद्धा वेनं पश्यन्ति सर्वतः । तैर्ज्ञातं न प्रनष्टं तु वल्मीकस्थं तु सांप्रतम् ॥ ३२
बलादानिन्युस्ते विप्रा क्रूरं तं पापचेतसम् । दृष्ट्वा च पापकर्माणं मुनयः सुसमाहिताः ॥ ३३
सव्यं पाणिं[9] ममन्थुस्ते भूपस्य जातमन्यवः । तस्माज्जातो महाह्रस्वो नीलवर्णो भयंकरः ॥ ३४
बर्बरो रक्तनेत्रस्तु बाणपाणिर्धनुर्धरः । सर्वेषामेव पापानां निषादानां बभूव ह ॥ ३५
धाता पालयिता राजा म्लेच्छानां तु विशेषतः । तं दृष्ट्वा पापकर्माणमृषयस्तु महामते ॥ ३६
ममन्थुर्दक्षिणं पाणिं वेनस्यापि दुरात्मनः । तस्माज्जज्ञे महात्माऽसौ येन दुग्धा वसुंधरा ॥ ३७
पृथुर्नाम महाप्राज्ञो राजराजो महाबलः । तस्य पुण्यप्रसादाच्च वेनो धर्मार्थकोविदः ॥ ३८
चक्रवर्तिपदं भुक्त्वा प्रसादात्तस्य चक्रिणः । जगाम वैष्णवं लोकं तद्विष्णोः परमं पदम् ॥ ३९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५१५९

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. च. छ. ड. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

---

१ ग. ट. ड. °र्मो अहमेव स° । २ क. ख. ङ च. छ. ड. ढ. °हं वेदार्थ एव । ३ ग. घ. ट. °ण्यो यश्च धं । ४ ङ छ झ ढ द्विजाः । ५ क. ख. च. छ. झ. ट. ड. प्रवेशे । ६ क. ख. ङ. च. छ. श्रेष्ठः सर्वं ज्ञातं मया इह । गो° । ड. श्रेष्ठः सर्वज्ञानं हि मे द्वि° । ७ क. ख. ङ. च. छ. झ. ढ. अत्यन्तं । ८ क. ख. ङ. च. छ. झ. ड. ढ सप्तैते ब्र° । ९ क. ख. ङ. च. छ. झ. ढ. जानुं ।

अथाष्टात्रिंशोऽध्यायः ।

ऋषय ऊचुः—

कथं वेनो गतः स्वर्गं पापं कृत्वा सुदारुणम् । तत्त्वतो विस्तरेणापि वद सत्यवतां वर ॥ १

सूत उवाच—

ऋषीणां पुण्यसंसर्गात्संभाषाच्च द्विजोत्तमाः । कायस्य मथनात्पापं[1] वदन्त्यस्य विनिर्गतम् ॥ २

पश्चाद्वेनः सुपुण्यात्मा ज्ञानं लेभे च शाश्वतम् । रेवाया दक्षिणे कूले तपश्चचार स द्विजः ॥ ३

तृणबिन्दोर्ऋषेश्चैव ह्याश्रमे पापनाशने । वर्षाणां च शतं साग्रं कामक्रोधविवर्जितः ॥ ४

तस्य वै तपसा देवः शङ्खचक्रगदाधरः । प्रसन्नोऽभून्महाभागा निष्पापस्य नृपस्य वै ॥ ५

उवाच च प्रसन्नात्मा व्रियतां वरमुत्तमम् ॥

वेन उवाच—

यदि देव प्रसन्नोऽसि देहि मे वरमुत्तमम् । अनेनापि शरीरेण गन्तुमिच्छामि त्वत्पदम् ॥ ६

[*पित्रा सार्धं महाभाग मात्रा चैव सुरेश्वर । तवैव तेजसा देव तद्विष्णोः परमं पदम्] ॥ ७

भगवानुवाच—

क्व गतोऽसौ महामोहो येन त्वं मोहितो नृप । लोभेन मोहयुक्तेन तमोमार्गे निपातितः ॥ ८

वेन उवाच—

यन्मे पूर्वकृतं पापं तेनाहं मोहितो विभो । अतो मामुद्धरास्मात्त्वं पापाच्चैव सुदारुणात् ॥

अजप्तव्यमथोपव्यं(?) तद्वदानुग्रहाद्विभो ॥ ९

भगवानुवाच—

साधु भूप महाभाग पापं ते नाशमागतम् । शुद्धोऽसि तपसा च त्वं ततः पुण्यं वदाम्यहम् ॥ १०

पुरा वै ब्रह्मणा तात पृष्टोऽहं भवता यथा । तस्मै यदुदितं वत्स तत्ते सर्वं वदाम्यहम् ॥ ११

एकदा ब्रह्मणा ध्यानस्थितेन नाभिपङ्कजे । प्रादुरास तदा तस्य वरदानाय सुव्रत ॥ १२

तेन पृष्टं महत्पुण्यं स्तोत्रं पापप्रणाशनम् । वासुदेवाभिधानं च सुगतिप्रदमिच्छता ॥ १३

स्तोत्राणां परमं तस्मै वासुदेवाभिधं महत् । सर्वसौख्यप्रदं नृणां पठतां जपतां सदा ॥

उपादिशं महाभाग विष्णुप्रीतिकरं परम् ॥ १४

विष्णुरुवाच—

एतत्सर्वं जगद्व्याप्तं मया त्वव्यक्तमूर्तिना । अतो मां मुनयः प्राहुर्विष्णुं विष्णुपरायणाः ॥ १५

वसन्ति यत्र भूतानि वसत्येषु च यो विभुः । स वासुदेवो विज्ञेयो विद्वद्भिरहमादरात् ॥ १६

संकर्षति प्रजाश्चान्ते ह्यव्यक्ताय यतो विभुः । ततः संकर्षणो नाम्ना विज्ञेयः शरणागतैः ॥ १७

ईङ्क्षिते[2] कामरूपोऽहं बहु स्यामितिकाम्यया । प्रद्युम्नोऽहं बुधैस्तस्माद्विज्ञेयोऽस्मि सुतार्थिभिः ॥ १८

अत्र लोके विनावेशौ सर्वेशौ हरकेशवौ । निरुद्धोऽहं योगबलाभ्र केनातोऽनिरुद्धवत् ॥ १९

विश्वाख्योऽहं प्रतिजगज्ज्ञानविज्ञानसंयुतः । अहमित्यभिमानी च जाग्रच्चिन्तासमाकुलः ॥ २०

तैजसोऽहं जगच्चेष्टामयश्चेन्द्रियरूपवान् । ज्ञानकर्मसमुद्रिक्तः स्वप्नावस्थां गतो ह्यहम् ॥ २१

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ट. ढ. पुस्तकस्थः ।

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ठ. ढ. 'पं बहिस्तस्य । २ क. ख. ङ. च. छ. झ. ढ. तस्योप्रतं । ३ ज. ह्यभि(ति) ते ।

प्राज्ञोऽहमधिदैवात्मा विश्वाधिष्ठानगोचरः । सुषुप्तावास्थितो लोकादुदासीनो विकल्पितः ॥ २२
तुरीयोऽहं निर्विकारी गुणावस्थाविवर्जितः । निर्लिप्तः साक्षिवद्विश्वप्रतिबिम्बितविग्रहः ॥ २३
चिदाभासश्चिदानन्दश्चिन्मयश्चित्स्वरूपवान् । नित्योऽक्षरो ब्रह्मरूपो ब्रह्मन्नेवमवेहि माम् ॥ २४

भगवानुवाच—

इत्युक्त्वाऽन्तर्दधे विष्णुः स्वरूपं ब्रह्मणे पुरा । सोऽपि ज्ञात्वा जगद्व्याप्तिं कृतात्मा समभूत्क्षणात्
राजंस्त्वमपि शुद्धात्मा पृथोर्जन्मन एव च । तथाऽप्याराधय विभुं स्तोत्रेणानेन सुव्रत ॥ २६
तुष्टो विष्णुस्तमभ्याह वरं वरय मानद ॥ २७

वेन उवाच—

सुगतिं देहि मे विष्णो दुष्कृतात्तारयस्व माम् । शरणं त्वां प्रपन्नोऽस्मि कारणं वद सद्व्रतः ॥ २८

विष्णुरुवाच—

पूर्वमेव महाभाग त्वङ्गेनापि महात्मना । अहमाराधितस्तेन तस्मै दत्तो वरो मया ॥ २९
प्रयास्यसे महाभाग विष्णोर्लोकमनुत्तमम् । कर्मणा स्वेन पूर्वेण पुण्येन नृपनन्दनम् ॥ ३०
[*आत्मार्थे त्वं महाभाग वरमेकं प्रयाचय] । शृणु वेन महाभाग वृत्तान्तं पूर्वसंभवम् ॥ ३१
तत्र मात्रे पुरा दत्तः शापः क्रुद्धेन भूपते । सुशङ्खेन सुनीथायै बाल्ये पूर्वं महात्मना ॥ ३२
ततस्त्वङ्गे वरो दत्तो मयैव विदितात्मना । त्वां समुद्धर्तुकामेन सुपुत्रस्ते भविष्यति ॥ ३३
एवमुक्त्वा तु पितरं तवाहं गुणवत्सल । भवदङ्गात्समुद्भूतः करिष्ये लोकपालनम् ॥ ३४
दिवीन्द्रो हि यथा भाति तथाऽहं भूतले स्थितः । आत्मा वै जायते पुत्र इति सत्यवती श्रुतिः ३५
अतस्त्वं सुगतिं वत्स लभिष्यसि वरान्मम । गत्यर्थमात्मनो राजन्दानमेकं समाचर ॥ ३६
यस्त्वां पातकरूपोऽहं सुनीथायाः परंतप । अभुवं नग्नरूपेण कर्तुं त्वां तु विधर्मगम् ॥ ३७
अन्यथा तु सुशङ्खस्य वाक्यमेवान्यथा भवेत् । अतो विधिर्निषेधश्च ह्यहमेव नृपोत्तम ॥ ३८
कर्मानुरूपफलदो बुद्ध्यतीतो गुणाग्रह । दानमेव परं श्रेष्ठं दानं सर्वप्रभावकम् ॥ ३९
तस्माद्दानं ददस्व त्वं दानात्पुण्यं प्रवर्तते । दानेन नश्यते पापं तस्माद्दानं ददस्व हि ॥ ४०
अश्वमेधादिकैर्यज्ञैर्यजस्व नृपनन्दन । भूमिदानादिकं दानं ब्राह्मणेभ्यः शुभावहम् ॥ ४१
सुदानात्प्राप्यते भोगः सुदानात्प्राप्यते यशः । सुदानाज्जायते कीर्तिः सुदानात्प्राप्यते सुखम् ॥४२
दानेन स्वर्गमाप्नोति फलं तत्र भुनक्ति च । दत्तस्यापि सुदानस्य श्रद्धायुक्तस्य सर्वदा ॥ ४३
काले प्राप्ते भजेत्तीर्थे पुण्यस्यापि फलं त्विदम् । पात्रभूताय विप्राय श्रद्धायुक्तेन चेतसा ॥ ४४
यो ददाति महादानं गोभूस्वर्णान्नपूर्वकम् । तस्याहं सकलं दद्मि मनसा यद्यदिच्छति ॥ ४५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्यानेऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५२०४

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ढ. वासुदेव उवाच । २ क. च. °वैत्र पावनम् । ३ क.ख.ङ.च.छ.झ. ढ. सत्तम । ४ ख. झ. ढ. °पि सुदानदः । पा° । ५ क.ख.ङ.च.छ.झ.ढ. °द्धापूतेन । ६ क.ख.ङ.च.छ.ड.ढ. °नं मयि भावं निवेश्य च । त°।

## अथैकोनचत्वारिंशोऽध्यायः ।

---

वेन उवाच—

कालस्य तस्य मे ब्रूहि लक्षणं[1] बुद्धिपूर्वकम् । [*तीर्थस्यापि च यद्रूपं पात्रस्यापि सुलक्षणम्]॥ १
दानस्यापि जगन्नाथ विधिं विस्तरतो वद । प्रसादसुमुखो भूत्वा[2] श्रद्धा श्रोतुं प्रवर्तते ॥ २

विष्णुरुवाच[3]—

दानकालं प्रवक्ष्यामि नित्यनैमित्तिकं नृप । काम्यं चापि महाराज चतुर्थं प्रायिकं पुनः ॥ ३
सूर्यस्योदयवेलायां पापं नश्यति सर्वतः । अन्धकारादिकानां च घोराणां नाशकारकः ॥ ४
दिवि सूर्यो ममांशोऽयं तेर्जसां[4] कल्पितो निधिः । तस्यैव तेजसा दग्धं भस्मतां याति किल्विषम् ॥५
उदयन्तं ममांशं यो[5] दृष्ट्वा दत्ते तु वार्यपि । तस्य किं कथ्यते भूप नित्यं पुण्यविवर्धकम् ॥ ६
प्राप्तायां हि सुवेलायां तस्यां दानं करोति यः । स्नात्वाऽभ्यर्च्य पितॄन्देवा[6]ञ्श्रद्धाभक्तिसमन्वितः
यथाशक्तिप्रभावेन दयायुक्तेन[7] चेतसा । अन्नं फलं पयः पुष्पं वस्त्रं ताम्बूलभूषणम् ॥ ८
हेमरत्नादिकं चैव तस्य पुण्यमनन्तकम् । मध्याह्ने च तथा राजन्नपराह्णे तथैव च ॥ ९
मामुद्दिश्य हि यो दद्यात्तस्य पुण्यमनन्तकम् । खानपानादिकं[8] सर्वमिष्टं लेपनकुङ्कुमम् ॥ १०
कर्पूरो(रा)दिकमेवापि वस्त्रालंकारभूषणम् । अविच्छिन्नं ददात्येवं भोगसौख्यप्रदायकम् ॥ ११
नित्यकालो मयाऽऽख्यातो दानपूजार्थिनां शुभः । अथातः संप्रवक्ष्यामि नैमित्तिकमनुत्तमम् १२
त्रिकालेष्वपि दातव्यं दानमेव न संशयः । शून्यं दिनं न कर्तव्यमात्मनो हितमिच्छता ॥ १३
यस्मिन्काले प्रदत्तं हि किंचिद्दानं नराधिप । तत्प्रभावान्महाप्राज्ञो बहुसामर्थ्यसंयुतः ॥ १४
धनाढ्यो गुणवान्युक्तः पण्डितोऽतिविचक्षणः । पक्षमासदिनं यावन्न दत्तं वै यदाऽशनम् ॥ १५
तावद्वै[9] वारयाम्येनं भक्ष्याच्चैव नरोत्तमम् । स्वमलं भक्षितं चैव ह्यदत्त्वा दानमुत्तमम् ॥ १६
उत्पादयाम्यहं रोगं सर्वभोगनिवारणम् । तेषां कायेषु संसृष्टं बहुपीडाप्रदायकम् ॥ १७
[†मन्दानलेन संयुक्तं ज्वरं संतापकारकम् ।] त्रिकालेषु न दत्ते यो ब्राह्मणेषु सुरेषु च ॥ १८
स्वयमश्नाति मिष्टं तु तेन पापं महत्कृतम् । प्रायश्चित्तेन रौद्रेण तमेवं परिशोषयेत्[10] ॥ १९
उपवासैर्महाराज कायशोषकरादिभिः । चर्मकारो यथा चर्म कुण्डस्योपरि निर्घृणः ॥ २०
शोधयेच्च कषायैश्च तच्चर्म[11] स्फोटयत्यथ । तथाऽहं पापकर्तारं शोधयामि न संशयः ॥ २१
ओषधीनां प्रयोगैश्च कषायैः कटुकैर्ध्रुवम् । उष्णोदकैश्च संतापैर्वायुरूपेण[12] नान्यथा[13] ॥ २२
सुखं भुंक्ते[14] ततः सोऽग्रे भोगान्पुण्यान्मनोनुगान्[15] । न करोति समर्थः सन्सर्वदानमनुत्तमम् ॥ २३

---

* एतच्चिह्नान्तर्गतः पाठः क.ख.ङ.च.छ.झ.ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः क.ख.ङ.च.छ.झ.ड.ढ. पुस्तकस्थः ।

१ क. ख. ग.घ. ङ.च.छ.झ.ट.ड.ढ. सर्वे । २ क.ख.ङ.च.छ.झ.ड.ढ. °त्वा दया मे यदि व° । ३ क.ख.ग.घ.ङ.च.छ.झ.ट.ड.ढ. वासुदेव उवाच । ४ क.ख.ङ.च.छ.झ.ड.ढ. °जसा मे प्रकल्पितः । त° । ग.घ. °जसामेव कल्पितः । त° । ५ ङ. यो धामचक्रं सुदारुणम् । तत्र मे कथ्यते कालो बहुपुण्यप्रवर्धकः । प्रा° । ६ ङ. °वान्दानदाता भवेत्पुनः । य° । ७ क. ख.ग.घ. ङ.च.ड.ढ श्रद्धापूतेन । ८ क.ख.ग.घ.ङ.च.छ.झ.ड.ढ. °कं मिष्टं लेपनाङ्गं तु कु° । ९ ग.घ. वै तदा बहु ॥ तमेवं धारयत्येव बुद्ध्या चैव नरोत्तम । स्व° । १० क.ख.ङ.च.छ.झ.ड.ढ. °शोधयेत् । ११ क.ख.ङ.च.छ.झ.ढ. कुद्रव्यं । १२ क. ख. च. ङ. °पैर्विश्वरू° । ग. घ. छ. °पैर्वैश्यरू° । ट. °पैर्वोधरू° । ढ. °पैर्वेदरू° । १३ क. ख. ङ. च. छ. झ. °था । अन्ये भुञ्जन्ति तस्याग्रे भो° । १४ ग. घ. ट.ड. भुञ्जन्ति तस्याग्रे । १५ क. ख. ङ. च. छ. झ °नू । किं करोति समर्थश्च न दत्तं दा° । ग. घ. ट. °नू । किं करोति समर्थः सन्सर्व° ।

महता पापरोगेण तमेवं परितापये । नित्यकाले हि यद्दत्तमात्मार्थे दानमर्थिने ॥ २४
न तद्दत्तं हि राजेन्द्र श्रद्धापूतेन चेतसा । तथा तांस्तारयाम्येतानुपायैर्दारुणैः किल ॥ २५

वासुदेव उवाच—

नैमित्तिकांस्तथा कालान्पुण्यांश्चैव तवाग्रतः । प्रवक्ष्यामि नरश्रेष्ठ स्वबुद्ध्या शृणु तत्त्वतः ॥ २६
अमावास्या महाराज पौर्णमासी तथैव च । यदा भवति संक्रान्तिर्व्यतीपातो नरेश्वर ॥ २७
वैधृतिश्च तथा प्रोक्ता ह्येकादशी तथा भवेत् । महामाघी तथाऽऽषाढी वैशाखी कार्तिकी तथा २८
अमासोमसमायोगे मन्वादिषु युगादिषु । गजच्छाया तथा प्रोक्ता पितृक्षयतिथिस्तथा ॥ २९
एते नैमित्तिकाः प्रोक्तास्तवाग्रे नृपसत्तम । एतेषु दीयते दानं तस्य दानस्य यत्फलम् ॥ ३०
तत्फलं तु प्रवक्ष्यामि श्रूयतां नृपसत्तम । मामुद्दिश्य तु यो भक्त्या ब्राह्मणाय प्रयच्छति ॥ ३१
तस्याहं निर्विकल्पेन प्रयच्छामि न संशयः । महत्सौख्यं महाराज स्वर्गमोक्षादिकं बहु ॥ ३२
काम्यं कालं प्रवक्ष्यामि दानस्य फलदायकम् । व्रतानामेव सर्वेषां [ *देवादीनां तथैव च ॥ ३३
दानस्य पुण्यकालं तं संप्रोक्तं द्विजसत्तमैः । आभ्युदयिकमेवापि कालं वक्ष्यामि ते नृप ॥ ३४
शुभानामेव सर्वेषां ] वैवाहिकमनुत्तमम् । पुत्रस्य जातमात्रस्य चौलमौञ्ज्यादिकं तथा ॥ ३५
प्रासादध्वजदेवानां प्रतिष्ठादिककर्मणि । वापीकूपतडागानां गृहारामस्य यत्नतः ॥ ३६
तदाऽऽभ्युदयिकं प्रोक्तं मातॄणां यत्र पूजनम् । तस्मिन्काले ददेद्दानं सर्वसिद्धिप्रदायकम् ॥ ३७
त्रिविधो य स्तु ते कालः प्रोक्तश्चैव नृपोत्तम । अन्यच्चैव प्रवक्ष्यामि पापपीडानिवारणम् ॥ ३८
मृत्युकाले च संप्राप्ते क्षयं ज्ञात्वा नृपोत्तम । तत्र दानं प्रदातव्यं यममार्गसुखप्रदम् ॥ ३९
नित्यनैमित्तिकात्कालात्काम्याभ्युदयिकात्तथा । अन्त्यः कालः समाख्यातो महाराज तवाग्रतः ॥ ४०
एते कालाः समाख्याताः स्वकर्मफलदायकाः । तीर्थस्य लक्षणं राजन्प्रवक्ष्यामि तवाग्रतः ॥ ४१
सुतीर्थानामियं गङ्गा भाति पुण्या सरस्वती । रेवा च यमुना तापी तथा चर्मण्वती नदी ॥ ४२
सरयूर्घर्घरा वेणा पुण्या पापप्रणाशिनी । कावेरी कपिला चान्या विशाला विश्वपावनी ॥ ४३
गोदावरी समाख्याता तुङ्गभद्रा नरोत्तम । [†पापानां भीतिदा नित्यं भीमरथी प्रपठ्यते ॥ ४४
वेदिका कृष्णगङ्गा च ह्यन्याः सरिद्वरोत्तमाः] । एतासां पुण्यकालेषु सन्ति तीर्थान्यनेकशः ॥ ४५
ग्रामे वा यदि वाऽरण्ये नद्यः सर्वत्र पावनाः । तत्र तत्र प्रकर्तव्याः स्नानदानादिकाः क्रियाः ॥
यदा न ज्ञायते नाम तासां तीर्थस्य सत्तम । नाम चैव प्रकर्तव्यं विष्णुतीर्थमिदं नृप ॥ ४७
तीर्थेषु तद्वद्देवोऽहं तीर्थे चापि न संशयः । मामेवोच्चारयेद्यो वै तीर्थदेवेषु साधकः ॥ ४८
तस्य पुण्यफलं जातं मन्नाम्ना नृपनन्दन । अज्ञातानां च तीर्थानां देवानां नृपसत्तम ॥ ४९
स्नाने दाने महाराज मन्नामैव समुच्चरेत् । तीर्थानामेव राजेन्द्र धात्रा नाम इदं कृतम् ॥ ५०
सिन्धवः सप्त पुण्याख्याः सर्वस्थाः क्षितिमण्डले । यत्र तत्र प्रकर्तव्यं स्नानदानादिकं नृप ॥ ५१
अक्षय्यं फलमाप्नोति सुतीर्थानां प्रसादतः ॥ ५२

---

*एतच्चिह्नान्तर्गतः पाठः क.ख.ग.घ.ङ.च.छ.झ.ट.ड.ढ. पुस्तकस्थः । †एतच्चिह्नान्तर्गतः पाठः क.ख.ङ.च.झ.ड.ढ. पुस्तकस्थः ।

---

१ ट. °मश्रुभिः । न । २ क.ख.ङ.च.छ.झ.ट.ड.ढ. °प्रे परिकीर्तिताः । ए° । ३ क.ख.ङ.च.छ.झ.ढ. °प । मखाना° । ४ ग. घ. ट. ढ. °वैन्द्राद्विप्र° । ५ क.ख.ङ.च.छ.झ.ढ. °म् । आभ्युदयिकमेवं ते कालं प्रोक्तं द्विजोत्त° । ६ ङ. °षु सर्वदा वासो ममास्त्यत्र न । ७ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °म । नामान्येव नरस्तत्र म° । ८ क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. °त्रा माला इमाः कृताः । सिं° ।

तीर्थरूपा महारूपाः सागराः सप्त एव च । मानसाद्यास्तथा राजन्सरस्यश्च प्रकीर्तिताः ॥ ५३
निर्जला अपि ताः प्रोक्तास्तीर्थरूपा न संशयः । स्वल्पा नद्यो महाराज तासु तीर्थं प्रतिष्ठितम् ॥
खातेष्वेव च सर्वेषु वर्जयित्वा च कूपकम् । पर्वतास्तीर्थरूपाश्च [*मेर्वाद्याश्च महीतले ॥ ५५
यज्ञभूमिश्च यज्ञश्च ] अग्निहोत्रे यथा स्थितः । श्राद्धभूमिस्तथा शुद्धा देवशाला तथा पुनः ॥ ५६
होमशाला तथा प्रोक्ता वेदाध्ययनवेश्म च । गृहेषु पुण्यसंयुक्तं गोस्थानं वरमुत्तमम् ॥ ५७
सोमपायी वसेद्यत्र तीर्थं तत्र प्रतिष्ठितम् । आरामा यत्र वै पुण्या अश्वत्थो यत्र तिष्ठति ॥ ५८
ब्रह्मवृक्षो भवेद्यत्र वटवृक्षस्तथैव च । [†अन्ये च वन्यसंघाते तथा तीर्थं प्रतिष्ठितम्] ॥ ५९
[*एते तीर्थाः समाख्याताः पिता माता तथैव च] । पुराणं पठ्यते यत्र गुरुर्यत्र च तिष्ठति ॥
सुभार्या विद्यते यत्र तत्र तीर्थं न संशयः ॥ ६०
पिता चैव सुपुत्रश्च विद्यते यत्र तीर्थकम् । एतान्यपि च तीर्थानि राजवेश्म तथैव च ॥ ६१

वेन उवाच—

पात्रस्य लक्षणं ब्रूहि यस्मै देयं सुरोत्तम । प्रसादसुमुखो भूत्वा कृपां कृत्वा च माधव ॥ ६२

विष्णुरुवाच—

शृणु राजन्महाप्राज्ञ पात्रस्यापि सुलक्षणम् । यस्मै देयं तु दानं च श्रद्धापूतैर्महात्मभिः ॥ ६३
ब्राह्मणं सुकुलोपेतं वेदाध्ययनतत्परम् । शान्तं दान्तं दयोपेतं शुद्धमेव विशेषतः ॥ ६४
प्रज्ञावन्तं ज्ञानवन्तं देवपूजनतत्परम् । तपस्यन्तं महाभागं वैष्णवं ज्ञानपण्डितम् ॥ ६५
धर्मज्ञं च सुशीलं च पाखण्डैस्तु विवर्जितम् । एवं पात्रं समासाद्य देयमन्यद्ददाम्यहम् ॥ ६६
एवमेतैर्गुणैर्युक्तं स्वस्रपुत्रं तथैव च । एवं पात्रं विजानीहि दुहितातनयं ततः ॥ ६७
जामातरं महाराज भावैरेतैस्तु संयुतम् । गुरुं च दीक्षितं चैव पात्रभूतं नरोत्तम ॥ ६८
एतान्येव सुपात्राणि दानयोग्यानि सत्तम । वेदाचारसमोपेतः पात्रत्वं चैव गच्छति ॥ ६९
वर्जयेत्कितवं विप्रं तथा काणं च वर्जयेत् । अतिकृष्णं महाराज कपिलं परिवर्जयेत् ॥ ७०
कर्कटाक्षं सुनीलं च श्यावदन्तं विवर्जयेत् । नीलदन्तं तथा राजन्पीतदन्तं तथैव च ॥ ७१
गोदन्तं कृष्णदन्तं च बर्बरं वातरोगिणम् । हीनाङ्गमधिकाङ्गं च कुष्ठिनं कुनखं तथा ॥ ७२
दुश्चर्माणं महाराज खल्वाटं परिवर्जयेत् । अन्यायेषु रता यस्य जाया विप्रस्य भूपते ॥ ७३
तस्य दानं न दातव्यं यदि ब्रह्मसमो भवेत् । स्त्रीजिताय न दातव्यं शोकार्ताय महामते ॥ ७४
व्याधिताय न दातव्यं मृतभोजिषु भूपते । चौराय च न दातव्यं सद्यः स्तेनसमो भवेत् ॥ ७५

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ क. ख. च. छ. झ. ड. ढ. 'जेराः पल्वलाः प्रो' । २ क. ख. च. छ. झ. ड. ढ. 'मू । ख्यातेष्वेतेषु स' । ग. घ. ट 'मू । ख्याते' । ३ ङ. 'मिश्च श्राद्धं च दे' । ४ ट. 'त्र बिल्ववृ' । ५ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. 'यः । सुपुत्रास्तिष्ठते यत्र तीर्थं तत्र न संशयः । ए' । ६ क. ख. ङ. च. छ. झ. ढ. 'मू । सत्यवन्तं महापुण्यं वै' । ७ क. ख. ङ. च. छ. झ. ढ. अलौल्यं । ट. गतलौल्यं । ८ क. ख. ङ. च. छ. झ. ढ. 'त्रं नरोत्तम । ए' । ९ क ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. 'पेतस्तृप्तिं नैव च ग' । १० क. ख. ङ. च. ड. ढ. 'त्किल तं वि' । ११ क. ख. ङ. च. छ. झ. ढ. 'णं सुधूर्तकम् । अ' । १२ ग. घ. ङ. कुपितं । १३ ग. घ. 'दण्डं तथा राजन्पीतदण्डं त' । १४ क. ख. ङ. च. छ. झ. ढ. गोघ्नं सुक' । १५ क. ख. ङ. च. झ. ढ. 'र्बरमतिश्मश्रुलम् । ग. घ. ज. 'र्बरं वातश्लेष्मिणम् । ङ. 'र्बरं श्लेष्मिणं तथा । ही' । १६ क. ख. ङ. च. छ. झ. ड. ढ. सपद्यास्त्रिस' ।

अतिस्तब्धाय नो देयं शठाय च विशेषतः । वेदशास्त्रसमायुक्तः सदाचारेण वर्जितः ॥
श्राद्धे दाने च राजेन्द्र नैव युक्तः कदाचन ॥ ७६
अथ दानं प्रवक्ष्यामि यत्फलं पुण्यदायकम् । काले तीर्थेषु पात्राणां श्रद्धायोगाच्च जायते ॥ ७७
नास्ति श्रद्धासमं पुण्यं नास्ति श्रद्धासमं सुखम् । नास्ति श्रद्धासमं तीर्थं संसारे प्राणिनां नृप ॥
श्रद्धाभावेन संयुक्तो मामेव परिसंस्मरेत् । पात्रहस्ते प्रदातव्यं द्रव्यमेव नृपोत्तम ॥ ७९
एवंविधस्य दानस्य विधियुक्तस्य यत्फलम् । अनन्तं तदवाप्नोति मत्प्रसादात्सुखी भवेत् ॥ ८०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्यान एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५२८४

---

अथ चत्वारिंशोऽध्यायः ।

---

वेन उवाच—

नित्यदाने फलं चैव त्वत्तः पूर्वं मया श्रुतम् । नैमित्तिकस्य दानस्य दत्तस्यापि हि यत्फलम् ॥ १
तत्सर्वं हि समाचक्ष्व प्रसादाज्जगदीश्वर । शृण्वंस्तृप्तिं न गच्छामि श्रोतुं श्रद्धा प्रवर्तते ॥ २

विष्णुरुवाच—

नैमित्तिकं प्रवक्ष्यामि दानमेव नृपोत्तम । महापर्वणि संप्राप्ते येन दानानि श्रद्धया ॥ ३
सत्पात्रेभ्यः प्रदत्तानि तस्य पुण्यफलं शृणु । गजं रथं प्रदत्ते यो ह्यश्वं चापि नृपोत्तम ॥ ४
स च भृत्यैस्तु संयुक्तः पुण्यदेशे नृपोत्तमः । जायते हि महाराज मत्प्रसादान्न संशयः ॥ ५
राजा भवति धर्मात्मा ज्ञानवान्बलवान्सुधीः । अजेयः सर्वभूतानां महातेजाः प्रजायते ॥ ६
महापर्वणि संप्राप्ते भूमिदानं ददाति यः । गोदानं वा महाराज सर्वभोगपतिर्भवेत् ॥ ७
ब्राह्मणाय सुपुण्याय दानं दद्यात्प्रयत्नतः । महादानं तु यो दद्यात्तीर्थे पर्वणि चाऽऽगते ॥ ८
[*तेषां चिह्नं प्रवक्ष्यामि भूपतिर्वं प्रजायते । ] तीर्थे पर्वणि संप्राप्ते गुप्तदानं ददाति यः ॥ ९
निधीनामाशु संप्राप्तिरक्षरा परिजायते । महापर्वणि संप्राप्ते तीर्थेषु ब्राह्मणाय च ॥ १०
सुचेलं च महादानं काञ्चनेन समन्वितम् । पुण्यं फलं प्रवक्ष्यामि तस्य दानस्य भूपते ॥ ११
जायन्ते बहवः पुत्राः सद्गुणा वेदपारगाः । आयुष्मन्तः प्रजावन्तो यशःपुण्यसमन्विताः ॥ १२
विपुलाश्चैव यज्वानो ज्ञाततत्त्वा महामते । सौख्यं च लभते पुण्यं धर्मवान्परिजायते ॥ १३
महापर्वणि संप्राप्ते तीर्थं संप्राप्य यत्नतः । कपिलां काञ्चनीं दद्याद्ब्राह्मणाय महात्मने ॥ १४
तस्य पुण्यं प्रवक्ष्यामि दानस्यास्य महामते । कपिलादा महाराज महासौख्यं प्रभुञ्जते ॥ १५
यावद्ब्रह्मा प्रजीवेत तावत्तिष्ठन्ति सर्वशः । महापर्वणि संप्राप्ते ह्यलंकृत्य च गां तदा ॥ १६

---

* एतच्चिह्नान्तर्गतः पाठः क. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. च. छ. झ. अतृप्तेश्च न दातव्यं श° । ङ. ढ. अतृप्ताय न दातव्यं । ग. घ. ट. अतिधृष्टे न दातव्यं श° । २ क. ख. ङ. च. छ. झ ढ. सफलं । ३ क. ख. च. छ. झ. °व्यं स्वल्पमे° । ४ क. ङ. च. छ. झ. ढ. °दाद्धि प्रयत्नत । शृ° । ५ ग. घ. ट. °ते यः पृथ्वीदानं नृ° । ६ ग. घ. ट. सर्वभूतैस्तु संयुक्तः पुण्यदेहे नृ° । ७ क. ङ. च. ढ. °वैलोक्प° । ८ क. ङ. च. छ. झ. ड. ढ. °दानानि यो दद्यात्तीर्थे पर्वणि पात्रवित् । ते° । ग. घ. ट. °दानानि यो दद्यात्तीर्थे सर्वाणि पात्रवित् । ते° । ९ क. च. °ते । सर्वशास्त्रविदो हृष्टाः सगुणा । १० ट. °वन्तः पशुपुत्रस° । ११ क. ग. घ. ङ. च. छ. झ. ट. ड. ढ. जायन्ते । १२ क. ङ. च. छ. झ. ढ. °ज्वानः स्फीता लक्ष्मीर्महा° । १३ ग. घ. ङ. सकाञ्चनीं ।

काञ्चनेनापि संयुक्तां वस्त्रालंकारभूषणैः । तस्य दानस्य राजेन्द्र फलभोगं वदाम्यहम् ॥ १७
विपुला जायते लक्ष्मीर्दानभोगसमाकुला । सर्वविद्यापतिर्भूत्वा विष्णुभक्तो भवेत्किल ॥ १८
विष्णुलोके वसेन्मर्त्यो यावत्तिष्ठति मेदिनी । तीर्थे गत्वा तु यो दद्याद्ब्राह्मणेषु विभूषणम् ॥ १९
भुक्त्वा तु विपुलान्भोगानिन्द्रेण सह मोदते । महापर्वणि संप्राप्ते वस्त्रं च द्विजपुङ्गवे ॥ २०
दत्त्वाऽन्नं भूमिसंयुक्तं[2] पात्रे श्रद्धासमन्वितः । मोदते[3] स तु वैकुण्ठे विष्णुतुल्यपराक्रमः ॥ २१
सवस्त्रं काञ्चनं दत्त्वा द्विजाय परिशीलिने । स्वेच्छया ह्यग्निसदृशो वैकुण्ठे वसते ध्रुवम् ॥ २२
सुवर्णस्य सुकुम्भं च घृतेन [ *परिपूरयेत् । पिधानं रौप्यं कर्तव्यं वस्त्रहारैरलंकृतम् ॥ २३
पुष्पमालान्वितं कुर्याद्ब्रह्मसूत्रेण शोभितम् । प्रतिष्ठयेद्वेदमन्त्रैस्तं संपूज्य ] महामते ॥ २४
उपचारैर्वरैश्चैव षोडशैः परिपूजयेत् । स्वलंकृत्य ततो दद्याद्ब्राह्मणाय महामते ॥ २५
षोडशैव ततो गावः सवस्त्राः कांस्यदोहिनीः । कुम्भैर्युक्ताश्च चत्वारो दक्षिणां च सकाञ्चनाम् २६
तथा द्वादशका गावो वस्त्रालंकारभूषणाः । पृथग्भूताय विप्राय दातव्या नात्र संशयः ॥ २७
एवमादीनि दानानि ह्यन्यानि नृपनन्दन । तीर्थकालं सुसंप्राप्य पात्रसंपत्तिमेव च ॥
श्रद्धाभावेन दातव्यं बहुपुण्यकरं भवेत् ॥ २८

विष्णुरुवाच—

विष्णुमुद्दिश्य यद्दानं कामनापरिकल्पितम् । तस्य दानस्य भावेन भावेन परिभावितः ॥ २९
तादृक्फलं समश्नाति मानुषो नात्र संशयः । आभ्युदयिकं प्रवक्ष्यामि यज्ञादिषु प्रदीयते ॥ ३०
तेन दानेन तस्यापि शुद्धेन च नृपोत्तम । प्रज्ञावृद्धिमवाप्नोति नैव दुःखं च विन्दति ॥ ३१
भोगान्भुङ्क्ते स धर्मात्मा जीवमानस्तु सांप्रतम् । ऐन्द्रांस्तु भुङ्क्तेऽसौ भोगान्दाता दिव्यगतिः पुनः ३२
स्वकुलं नयते स्वर्गं कल्पानां च सहस्रकम् । एवमाभ्युदयं प्रोक्तमथान्यं ते वदाम्यहम् ॥ ३३
कायस्य संक्षयं ज्ञात्वा जरया परिपीडितम् । दानं तेन प्रदातव्यमाशां कस्य न कारयेत् ॥ ३४
मृते मयि च मे पुत्रा अन्ये स्वजनबान्धवाः । कथमेते भविष्यन्ति मां विना सुहृदो मम ॥ ३५
तेषां मोहात्प्रमुग्धोऽपि न ददाति स किंचन । मृत्युं प्रयाति मोहात्मा रुदन्ति मित्रबान्धवाः ३६
दुःखेन पीडिताः सर्वे मायामोहेन पीडिताः । संकल्पयन्ति दानानि मोक्षं वै चिन्तयन्ति च ३७
तस्मिन्मृते महाराज मायामोहे गते सति । विस्मरन्ति च दानानि लोभात्मानो ददन्ति न ॥ ३८
योऽसौ मृतो महाराज यमपथं सुदुःखितः । तृषाक्षुधासमाक्रान्तो बहुदुःखैः प्रपीडितः ॥ ३९
तस्माद्दानं प्रदातव्यं स्वयमेव न संशयः । कस्य पुत्राश्च पौत्राश्च कस्य भार्या नृपोत्तम ॥ ४०
संसारे नास्ति कः कस्य तस्माद्दानं प्रदीयते । ज्ञानवता प्रदातव्यं स्वयमेव न संशयः ॥ ४१
अन्नं पानं च ताम्बूलमुदकं काञ्चनं तथा । सुगां[11] संवत्सां[12] भूमिं च फलानि विविधानि च ४२

* एतच्चिह्नान्तर्गतः पाठः क. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ क. च. °लभावं व° । २ ङ. °क्तं स्वर्णपात्रस° । ३ क. ङ. च. छ. ज. झ. ट. ड. ढ. °ते दिवि वै° । ४ क. च. °ण्ठे स सुखी भवेत् । सु । ५ ङ. ढ. सुरूपाः । ६ क. ङ. च. छ. झ. ड. °मादिमुदा° । ७ क. ङ. च. छ. झ. ड. ढ. °च-व्रतमु° । ग. घ. °च-ब्रह्ममु° । ८ क. ग. घ. ङ. च. छ. झ. ट. ड. ढ. प्रजात्रं° । ९ क. ङ.छ. झ. ठ. दिव्यां गतिं गतः । स्वं° । १० क. ङ. च. छ. °नः । सुकुले जायते स्वर्गात्पुण्यानां च महात्मनाम् । एं° । ग. झ. ट. °नः । सुकुले जायते स्वर्गात्कुल्यानां च महात्मनाम् । एं° । ड. सुकुले जायने स्वगात्कुलानां च महात्मनाम् । एं । ११ ग. घ. सुवत्सां । १२ क. ङ. च. झ. ट. °त्सां छत्रं च भूमिं चैव ह्यनेकधाम् । ज° ।

जलपात्राण्यनेकानि सोदकानि नृपोत्तम । वाहनानि विचित्राणि यानान्येव महामते ॥ ४३
नानागन्धं सकर्पूरं पादयोर्वै सुखप्रदौ । उपानहौ प्रदातव्यौ यदीच्छेद्विपुलं शुभम् ॥ ४४
एतैर्दानैर्महाराज यममार्गं सुखेन वै । प्रयाति मानवो नूनं यमदूतैरलंकृतम् ॥ ४५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने चत्वारिंशोऽध्यायः ॥ ४० ॥

आदितः श्लोकानां समष्ट्यङ्काः—५३२९

---

अथैकचत्वारिंशोऽध्यायः ।

---

वेन उवाच—

पुत्रो भार्या कथं तीर्थं माता पिता कथं वद । गुरुश्चैव कथं तीर्थं तन्मे विस्तरतो वद ॥ १

विष्णुरुवाच—

अस्ति वाराणसी रम्या गङ्गायुक्ता महापुरी । तस्यां वसति वैश्यो हि कृकलो नाम नामतः ॥ २
तस्य भार्या महासाध्वी साधुव्रतपरायणा । धर्माचारपरा नित्यं सा वै पतिपरायणा ॥ ३
सुकला नाम पुण्याङ्गी सुपुत्रा चारुमङ्गला । सत्यंवदा शुभा शुद्धा प्रियाकारा प्रियव्रता ॥ ४
एवंगुणसमायुक्ता सुभगा चारुहासिनी । स वैश्य उत्तमो वाग्मी धर्मज्ञो ज्ञानवान्गुणी ॥ ५
पुराणे श्रौतधर्मे च सदा श्रवणतत्परः । तीर्थयात्राप्रसङ्गेन बहुपुण्यप्रदायकम् ॥ ६
श्रद्धया निर्गतो यात्रां तीर्थानां पुण्यमङ्गलम् । ब्राह्मणानां प्रसङ्गेन सार्थवाहेन तेन वै ॥ ७
प्रस्थितो धर्ममार्गं तु तमुवाच पतिव्रता । पतिस्नेहेन संमुग्धा भर्तारं वाक्यमब्रवीत् ॥ ८

सुकलोवाच—

अहं ते धर्मतः पत्नी सहपुण्यकरा प्रिय । पतिमार्गं प्रयाताऽहं पतिदेवं यजाम्यहम् ॥ ९
कदा नैवं भवांस्त्याज्यः सद्भावाच्च द्विजोत्तम । तव च्छायां समाश्रित्य करिष्ये व्रतमुत्तमम् ॥ १०
पतिव्रताख्यं पापघ्नं नारीणां गतिदायकम् । पुण्या स्त्री कथ्यते लोके या स्यात्पतिपरायणा ॥ ११
युवतीनां पृथक्तीर्थं विना भर्तुर्द्विजोत्तम । सुखदं नास्ति वै लोके स्वर्गमोक्षप्रदायकम् ॥ १२
सव्यं पादं स्वभर्तुश्च प्रयागं विद्धि सत्तम । वामं च पुष्करं तस्य या नारी परिकल्पयेत् ॥ १३
तस्य पादोदकस्नानात्तत्पुण्यं परिजायते । प्रयागपुष्करसमं स्नानं स्त्रीणां न संशयः ॥ १४
सर्वतीर्थसमो भर्ता सर्वधर्ममयः पतिः । मखानां यजनात्पुण्यं यद्वै भवति दीक्षिते ॥
तत्पुण्यं समवाप्नोति भर्तुश्चैव हि सांप्रतम् ॥ १५
प्रयागं पुष्करं चैव यात्रां कृत्वा हि यद्भवेत् । तत्फलं समवाप्नोति भर्तुः शुश्रूषणादपि ॥ १६
समासेन प्रवक्ष्यामि तन्मे निगदतः शृणु । नास्त्यस्या हि पृथग्धर्मः पतिशुश्रूषणं विना ॥ १७
तस्मात्कान्त सहायं ते कुर्वाणा सुखदायिनी । तव च्छायां समाश्रित्य त्वागमिष्यामि नान्यथा ॥ १८

---

१ क.च. झ. ड. मोदकानि । २ ङ. °रं यममार्गं सुखप्रदम् । उ° । ३ क. ङ.च.छ.झ.ढ. सुखम् । ४ क.ग.घ.ङ.च. छ. झ. ट. ड. ढ. °यो राजन्यम° । ५ ङ. ड. ढ. °कृतः । इ° । ६ क.ख.ग.घ.ङ.च.छ.झ.ड.ढ. सदा । ७ ग. घ. प्रियका° । ८ क. ख. ङ. च. छ. झ. ट. प्रियप्रिया । ड. प्रियंकरा । ९ क.ख.च.झ. शुभकारिणी । ङ. छ. चारुकारिणी । १० क. ख. च. झ. °व मया त्याज्यं भवता च द्वि° । ङ. छ. ढ. °व मया त्याज्यं स्याद्भवन्तं वै द्वि° । ११ क. ख. ङ. च. छ. झ. ढ. °ष्ये धर्ममु° । १२ क. ख. ङ. च. छ. झ. ढ. परिक्षालयेत् । १३ क. ख. ङ. च. छ. झ. ढ. °र्वपुण्यम । ग. घ. ङ. °र्वतीर्थम° । १४ क. ख. ङ. च. छ. ढ. °म् । गयादीनां सुतीर्थानां या° ।

विष्णुरुवाच—

रूपं शीलं गुणं भक्तिं समालोक्य च सर्वथा । सौकुमार्यं विचार्यैव कृकलः स पुनः पुनः ॥ १९
यद्येवं स्याद्गमिष्यामि दुर्गमार्गे सुदुःखदम् । रूपमेव भवेच्चास्याः शीतातपविलोडितम् ॥ २०
पद्मपत्रप्रतीकाशमस्याश्चाङ्गं प्रवर्णकम् । महावातेन शीतेन कृष्णवर्णं भविष्यति ॥ २१
पथि कर्कशसुग्रावैः पादौ चास्याः सुकोमलौ । एष्यते वेदनां तीव्रां यथा गन्तुं न च क्षमा ॥ २२
क्षुत्तृष्णाभिः परीताङ्गी कीदृक्केयं भविष्यति । वामाङ्गी मम च स्थानं धर्मस्थानं वरानना ॥ २३
मम प्राणप्रिया नित्यं नित्यं धर्मस्य चाऽऽश्रयः । नाशमेति यदा बाला मम नाशो भवेदिह ॥ २४
इयं मे जीविका नित्यमियं प्राणस्य चेश्वरी । न नयिष्ये च तत्तीर्थमेकश्चैव व्रजाम्यहम् ॥ २५
चिन्तयित्वा क्षणं तेन कृकलेन महात्मना । तस्य चित्तानुगो भावस्तया ज्ञातो नृपोत्तम ॥ २६
पुनश्चोवाच सुकला भर्तारं प्रस्थितं तदा । अनघा नैव संत्याज्या पुरुषैः शृणु सत्तम ॥ २७
मूलमेव हि धर्मस्य पुरुषस्य महामते । ज्ञात्वा चैवं महाभाग नय मामपि सांप्रतम् ॥ २८

विष्णुरुवाच—

श्रुत्वा सर्वं हि तेनापि प्रियया बहुभाषितम् । प्रहस्यैव वचो ब्रूते मा मैवं कृपणं वद ॥ २९
नैव त्याज्या भवेद्भार्या प्राप्ता धर्मेण वै प्रिये । येन भार्या परित्यक्ता सुनीता धर्मचारिणी ॥ ३०
दशाङ्गधर्मस्तेनापि परित्यक्तो वरानने । तस्मात्त्वामेव भद्रं ते नैव त्यक्ष्ये कदा प्रिये ॥ ३१
एवमाभाष्य तां भार्यां संबोध्य च पुनः पुनः । तया चाज्ञातमात्रेण सार्थेन स तु संगतः ॥ ३२
गते तस्मिन्महाभागे कृकले पुण्यकर्मणि । देवकर्मसुवेलायां काले पुण्ये शुभानना ॥ ३३
नैव पश्यति भर्तारमागतं मन्दिरं निजम् । समुत्थाय त्वरायुक्ता रुदन्ती सुकला तदा ॥ ३४
पृच्छति स्माथ सा बाला भर्तुः शोकातिपीडिता । युष्माभिर्वै महाभागा दृष्टोऽसौ कृकलो मम ३५
प्राणेश्वरो गतः क्वापि भवन्तो मम बान्धवाः । [*यदि दृष्टो महाभागाः कृकलो मम सांप्रतम् ३६
भर्ता मे पुण्यकर्ता वै सर्वज्ञः सत्यपण्डितः ] । कथयन्तु महात्मानो यदि दृष्टो महामतिः ॥ ३७
तस्यास्तद्भाषितं श्रुत्वा तामूचुस्ते महामतिम् । धर्मयात्राप्रसङ्गेन नाथस्ते कृकलः शुभे ॥ ३८
तीर्थयात्रां गतो भद्रे कस्माच्छोचसि सुव्रते । साधयित्वा महातीर्थं पुनरेष्यति शोभने ॥ ३९
एवमाश्वासिता भीरुः पुरुषैराप्तकारिभिः । पुनर्गेहं गता राजन्सुकला चारुभाषिणी ॥ ४०
रुरोद करुणं दुःखं सुकलाऽपि परायणा । यावदायाति मे भर्ता भूमौ स्वप्स्यामि संस्तरे ॥ ४१
घृतं तैलं न भोक्ष्येऽहं दधि क्षीरं तथैव च । लवणं च परित्यक्तं ताम्बूलं हि तथैव च ॥ ४२
मधुरं च तथा राजंस्त्यक्तं गुडादिकं तथा । एकाहारा निराधारा तावत्स्थास्ये न संशयः ॥ ४३
[† यावच्चाऽऽगमनं भर्तुः पुनरेव भविष्यति । एवं दुःखान्विता भूत्वा एकवेणीधरा पुनः] ॥ ४४
एककञ्चुकसंवीता मलिना च बभूव सा । मलिनेनापि वस्त्रेण त्वेकेनैव स्थिता पुनः ॥ ४५

* एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ग. घ. ङ. छ. झ. ड. ढ. पुस्तकस्थः ।

१ ङ. छ. झ. ढ. °क्य वयस्तथा । २ ङ.ङ.छ. झ.ढ. झञ्झावातेन । ३ ञ. °शकूर्पाद्यैः पा° । ४ ग. घ. ट. पथा । ड. पथि । ५ क. ख. च. °ङ्गी दृश्येयं न भ° । ६ क. ख. च. झ. नित्यं प्रिया प्रा° । ७ क. ख. ङ. च. छ. झ. ढ. स्वतन्त्रा । ८ क. ख. ङ. झ. ड. ढ. °ते तामेवं कृकलः पुनः । नै° । ९ ट. पुनः । १० क. ख. च. °दाचन । ए° । ११ क. ख. ङ. च. छ. झ. ढ. °दा । वयस्या पृच्छति भर्तुर्दुःखशो° । १२ क. ख. ङ. च. छ. झ. ढ. महासतीम् । १३ ग. घ. ट. °ता तैस्तु वयस्यैश्चारुवादिभिः । ड. °ता तैस्तु वयस्यैश्चाटुवादिभिः । १४ ग. घ. ट. °ता पतिभावा ब° ।

हाहाकारं प्रमुञ्चन्ती निश्वसन्ती सुदुःखिता । वियोगवह्निना दग्धा कृष्णाङ्गी मलधारिणी॥ ४६
एवं दुःखसमाचारा सुकृशा विह्वला तदा । रोदमाना दिवारात्रौ निद्रां लेभे न वै निशि ॥ ४७
क्षुधा न विन्दते राजन्दुःखेन विदली कृता। अथ सख्यः समायाताः पप्रच्छुः सुकलां तदा ॥ ४८

सख्य ऊचुः—

सुकले चारुसर्वाङ्गि कस्माद्रोदिषि सांप्रतम् । ततो नः कारणं ब्रूहि दुःखस्य च वरानने ॥ ४९

सुकलोवाच—

स मां त्यक्त्वा गतो भर्ता धर्मार्थं धर्मतत्परः । तीर्थयात्राप्रसङ्गेन त्वटते मेदिनीं ततः ॥ ५०
मां त्यक्त्वा स गतः स्वामी निर्दोषां पापवर्जिताम् । अहं साध्वी समाचारा सदापुण्या पतिव्रता५१
मां त्यक्त्वा स गतो भर्ता तीर्थसाधनतत्परः । तेनाहं दुःखिता सख्यो वियोगेनापि पीडिता॥५२
जीवनाशो वरं श्रेष्ठं वरं वै विषभक्षणम् । वरमग्निप्रवेशो वै वरं कायविनाशनम् ॥ ५३
नारीं प्रियां परित्यज्य भर्ता याति सुनिष्ठुरः । भर्तृत्यागो वरं नैव प्राणत्यागो वरं सखि ॥ ५४
वियोगं न समर्थाऽहं सहितुं नित्यदारुणम् । तेनाहं दुःखिता सख्यो वियोगेनापि नित्यशः॥५५

सख्य ऊचुः—

तीर्थयात्रां गतो भर्ता पुनरेष्यति ते पतिः । वृथा शोषयसे कायं वृथा शोकं करोषि वै ॥ ५६
वृथा त्वं तपसे बाले वृथा भोगान्परित्यजेः । पिबस्व चान्नं भुङ्क्ष्व स्वं यद्दत्तं पूर्वजन्मनि ॥५७
कस्य भर्ता सुताः कस्य कस्य स्वजनबान्धवाः। कः कस्य नास्ति संसारे संबन्धं केन वै न हि ॥
भक्ष्यते भुज्यते बाले संसारस्य हि तत्फलम् । मृते प्राणिनि कोऽश्नाति को हि पश्यति तत्फलम्
पीयते भुज्यते बाल एतत्संसारसत्फलम् ॥ ५९

सुकलोवाच—

भवतीभिः प्रयुक्तं तन्न स्याद्वेदेन संमतम् । [ *स्वभर्तुर्वा पृथग्भूता तिष्ठत्येका सदैव हि ॥ ६०
पापरूपा भवेन्नारी तां न मन्यन्ति सज्जनाः । ] भर्तुः सार्धं सदा सख्यो दृष्टो वेदेषु सर्वदा॥६१
संबन्धः पुण्यसंसर्गाज्जायते नान्यकारणात् । नारीणां च सदा तीर्थं भर्ता शास्त्रेषु पठ्यते ॥ ६२
यमेवाऽऽवाहयेन्नित्यं वाचा कायेन कर्मभिः । मनसा पूजयेन्नित्यं सत्यभावेन तत्परा ॥ ६३
एतत्पार्श्वं महातीर्थं दक्षिणाङ्गं सदैव हि । तमाश्रित्य यदा नारी गृहस्था परिवर्तते ॥ ६४
यजते दानपुण्यैश्च तस्य दानस्य यत्फलम् । वाराणस्यां च गङ्गायां यत्फलं न च पुष्करे ॥ ६५
द्वारकायां न चावन्त्यां केदारे शशिभूषणे । लभते नैव सा नारी यजमाना सदा किल ॥ ६६
तादृशं फलमेवं सा न प्राप्नोति कदा सखि । सुसुखं पुत्रसौभाग्यं स्नानं दानं च भूषणम् ॥ ६७
वस्त्रालंकारसौभाग्यं रूपं तेजःफलं सदा । यशः कीर्तिमवाप्नोति गुणं च वरवर्णिनि ॥
भर्तुः प्रसादाच्च सर्वं लभते नात्र संशयः ॥ ६८
विद्यमाने यदा कान्ते अन्यधर्मं करोति या । निष्फलं जायते तस्याः पुंश्चली परिकथ्यते ॥ ६९
नारीणां यौवनं रूपमवतारं स्मृतं ध्रुवम् । एकश्चापि हि भर्तुश्च तस्यार्थे भूमिमण्डले ॥ ७०
सुपुत्रा सुयशा नारी परिकथ्येत वै सदा । तुष्टे भर्तरि संसारे दृश्या नारी न संशयः ॥ ७१

* एतच्चिह्नान्तर्गतः पाठः क.ख.ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ ग. घ. ङ. सुकला विमनास्तदा । २ ग. घ. ट. ङ. मत्यं । ३ म. घ. ङ. झ. ट. ड. ढ. पानं । ४ ङ. छ. ट. ड. 'ते । तमेवाऽऽराधये' । ५ ज ट 'स्यां गयायां च य' ।

पतिहीना यदा नारी भवेत्सा भूमिमण्डले। कुतस्तस्याः सुखं रूपं यशः कीर्तिः सुता भुवि ॥७२
सुदौर्भाग्यं महादुःखं संसारे परिभुज्यते। पापभागा भवेत्सा च दुःखाचारा सदैव हि ॥ ७३
तुष्टे भर्तरि तस्यास्तु तुष्टाः स्युः सर्वदेवताः । तुष्टे भर्तरि तुष्यन्ति ऋषयो देवमानवाः ॥ ७४
भर्ता नाथो गुरुर्भर्ता देवता दैवतैः सह । भर्ता तीर्थश्च पुण्यश्च नारीणां नृपनन्दन ॥ ७५
शृङ्गारं भूषणं रूपं वर्णसौगन्ध्यमेव च । कृत्वा संतिष्ठते नित्यं वर्जयित्वा सुपर्वसु ॥ ७६
शृङ्गारैर्भूषणैः सा तु शुशुभे सा यदा पतिः । [ *पत्या विना भवत्येवं क्षीरं सर्पमुखे यथा ॥७७
भर्तुरर्थे महाभागा सुव्रता चारुमङ्गला । गते भर्तरि या नारी शृङ्गारं कुरुते यदि ॥ ७८
रूपं वर्णं च तत्सर्वं श्रमरूपेण जायते । वदन्ति भूतले लोकाः पुंश्चलीयं न संशयः] ॥
तस्माद्भर्तुर्वियुक्ताया नार्याः शृणुत भूतले ॥ ७९
इच्छन्त्या वै महासौख्यं भवितव्यं कदाचन । सुतापायाः परो धर्मो भर्ता शास्त्रेषु गीयते ॥ ८०
तस्माद्वै शाश्वतो धर्मो न त्याज्यो भार्यया किल । एवं धर्मं विजानामि कथं भर्ता परित्यजेत् ॥८१
इत्यर्थे श्रूयते सख्य इतिहासं पुरातनम् । सुदेवायाश्च चरितं सुपुण्यं पापनाशनम् ॥ ८२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरित एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५४११

---

अथ द्विचत्वारिंशोऽध्यायः ।

---

सख्य ऊचुः—

या सुदेवा त्वया प्रोक्ता किमाचारा वदस्व नः । त्वया प्रोक्तं महाभागे वद नः सत्यमेव च ॥१

सुकलोवाच—

अयोध्यायां महाराजा स आसीद्धर्मकोविदः । मनुपुत्रो महाभागः सर्वधर्मार्थतत्परः ॥ २
इक्ष्वाकुर्नाम सर्वज्ञो देवब्राह्मणपूजकः । तस्य भार्या सदा पुण्या पतिव्रतपरायणा ॥ ३
तया सार्धं यजेद्यज्ञांस्तीर्थानि विविधानि च । देवराजस्य वीरस्य काशीशस्य महात्मनः ॥ ४
सुदेवा नाम वै कन्या सत्याचारपरायणा । उपयेमे महाराज इक्ष्वाकुस्तां महीपतिः ॥ ५
सुदेवां चारुसर्वाङ्गीं सत्यव्रतपरायणाम् । तया सार्धं यजेद्यज्ञान्सुपुण्यान्पुण्यनायकः ॥ ६
स रेमे नृपशार्दूलो गृहे च प्रियया तदा । एकदा तु महाराजस्तया सार्धं वनं ययौ ॥ ७
गङ्गारण्यं समासाद्य गैयायां क्रीडते सदा । सिंहान्हत्वा वराहांश्च गजान्समहिषांस्ततः ॥ ८
क्रीडमानस्य तस्यापि वराहश्च समागतः । बहुशूकरयूथेन पुत्रपौत्रैरलंकृतः ॥ ९
एका च शूकरी तस्य प्रिया पार्श्वे प्रतिष्ठति । दृष्ट्वाऽथ शूकरश्चैनं राजानं मृगयारतम् ॥ १०
पर्वताधारमाश्रित्य भार्यया सहै सूकरः । तिष्ठत्येकः सुवीर्येण पुत्रान्पौत्रान्गुरूञ्शिशून् ॥ ११
ज्ञात्वा तेषां महाराज मृगाणां कदनं महत् । तानुवाच सुतान्पौत्रान्भार्यां तां च स शूकरः ॥१२

---

*एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. ड. ढ. पुस्तकस्थः ।

---

१ ज. सुसौभाग्यं न संसारे दौर्भाग्यं चापि भुञ्जते । २ ग. घ. ङ. ट. ड. सुभार्यायाः । ३ ग. घ. शास्त्रधर्मस्तु न । ४ ग. घ. ङ. छ. झ. ट. ढ. मृगयां । ड. गङ्गायां । ५ ज. ेति । वराहं शूकरयूथैस्तमेव परिवारितम् । दृष्ट्वा तु राजराजेन दुर्जयो मृगयादिभिः । प ं । ६ घ. ह तिष्ठति । पुत्रपौत्रैः परिवृतास्तिष्ठत्येव दिवानिशम् । ज्ञा ं ।

कोशलाधिपतिर्वीरो मनुपुत्रो महाबलः । क्रीडते मृगयां कान्ते मृगान्संहरते बहून् ॥ १३
स मां दृष्ट्वा महाराज एष्यते नात्र संशयः । अन्येषां लघुकानां मे नास्ति प्राणभयं ध्रुवम् ॥ १४
मम रूपं नृपो दृष्ट्वा क्षमां नैव करिष्यति । हर्षेण महताऽऽविष्टो बाणपाणिर्धनुर्धरः ॥ १५
श्वभिर्युक्तो महातेजा लुब्धकैः परिवारितः । प्रिये करिष्यते घातं ममाप्येव न संशयः ॥ १६

शूकर्युवाच—

यदा यदा पश्यसि लुब्धकान्बहून्महावने कान्त समायुधान्बहून् ।
एभिस्तु पुत्रैर्मम पौत्रकैः समं दूरं परं याहि पलायमानः ॥ १७
त्यक्त्वा सुधैर्यं बलपौरुषं महान्महाभयेनापि विषण्णचेतनः ।
दृष्ट्वा नृपेन्द्रं पुरुषार्थमुत्तमं करोषि किं कान्त वदस्व कारणम् ॥ १८
तस्यास्तु वाक्यं स निशम्य कोल उवाच तां शूकरराज उत्तरम् ।
यदर्थभीतोऽस्मि सुलुब्धकात्प्रिये दृष्ट्वा गतो दूरं निशम्य शूकरान् ॥ १९
सुलुब्धकाः पापशठा महाप्रिये कुर्वन्ति पापं परिदुर्गकन्दरे ।
सदैव दुष्टा बहुपापचित्तका जाताश्च सर्वे परिपापिनां कुले ॥ २०
तेषां हि हस्तान्मरणाद्बिभेमि मृतोऽपि यास्यामि पुनरेव पापम् ।
दूरं गिरिं पर्वतकन्दरं च व्रजामि कान्ते अपमृत्युभीतः ॥ २१
अयं हि पुण्यो नृपनाथ आगतो विश्वाधिपः केशवरूपभूपः ।
युद्धं करिष्ये समरे महात्मना सार्धं प्रिये पौरुषविक्रमेण ॥ २२
जेष्यामि भूपं यदि स्वेन तेजसा भोक्ष्यामि कीर्तिं त्वतुलां पृथिव्याम् ।
नो वा हतो वीरवरेण संगरे यास्यामि लोकं मधुसूदनस्य ॥ २३
ममाङ्गभूतेन पलेन मेदसा तृप्तिं परां यास्यति भूमिनाथः ।
तृप्ता भविष्यन्ति सुलोकदेवता यस्मादयं चाऽऽगतो वज्रपाणिः ॥ २४
अस्यैव हस्तान्मरणं यदा भवेल्लाभश्च मे सुन्दरि कीर्तिरुत्तमा ।
तस्माद्यशो भूमितले जगत्त्रये व्रजामि लोकं मधुसूदनस्य ॥ २५

नैवं भीतोऽस्मि क्षुब्धोऽस्मि गतोऽहं गिरिसानुषु । पापाद्भीतो गतः कान्ते धर्मं दृष्ट्वा स्थिरो ह्यहम् ॥ २६
न जाने पातकं पूर्वमन्यजन्मनि चार्जितम् । येनाहं शूकरीं योनिं गतोऽहं पापसंचयात् ॥ २७
क्षालयिष्याम्यहं घोरं पातकं पूर्वसंचयम् । बाणोदकैर्महाघोरैस्तीक्ष्णैश्च निशितैः शतैः ॥ २८
पुत्रान्पौत्रान्वरां कन्यां कुटुम्बं बालवृद्धकम् । गिरिं गच्छ गृहीत्वा त्वं मम मोहमिमं त्यजे ॥ २९
मम स्नेहं परित्यज्य हरिरेष समागतः । अस्य हस्तात्प्रयास्यामि तद्विष्णोः परमं पदम् ॥ ३०
देवेनापि ममाद्यैव स्वर्गद्वारमनुत्तमम् । उद्घाटितकपाटं तु यास्यामि सुमहद्दिवम् ३१

सुकलोवाच—

तच्छ्रुत्वा वचनं तस्य शूकरस्य महात्मनः । उवाच तत्प्रिया सख्यः सीदमानान्तरा तदा ॥ ३२

शूकर्युवाच—

यस्मिन्यूथे भवेत्स्वामी पुत्रपौत्रैरलंकृतः । मित्रैश्च भ्रातृभिश्चैव अन्यैः स्वजनबान्धवैः ॥ ३३

---

१ ट. बाणभयं । २ ड. त्वचलां । ३ ड. न्पौत्रांश्च कन्याश्च कुटुम्बं सहबालकं । ४ ज. ज । मया मोहः परित्यक्तो ह । ५ ज. महागतिम् ।

तथैवालंकृतो यूथो भवता परिशोभते । त्वां विनाऽयं महाभाग कीदृग्यूथो भविष्यति ॥ ३४
तवैव सुबलेनापि गर्जमानाश्च शूकराः । विचरन्ति गिरौ कान्त तनया मम बालकाः ॥ ३५
मृदून्मूलांस्तु भक्षन्ति निर्भयास्तव तेजसा । दुर्गेषु वनकुञ्जेषु पर्वतान्तर्दरीषु च ॥ ३६
न कुर्वन्ति भयं तीव्रं सिंहानामिह पर्वते । मानवानां महाभाग पालितास्तव तेजसा ॥ ३७
त्वया त्यक्ता अमी सर्वे बालका मम दारकाः । दि(दी)नाश्चैव वराकाश्च भविष्यन्ति विचेतनाः ३८
नित्यं चैव सुखं कर्म गत्वा पश्यन्ति बालकाः । पतिहीना यथा नारी शोभते नैव शोभना ॥ ३९
अलंकृता चापि दिव्यैरलंकारैः सुकाञ्चनैः । रत्नैः परिच्छदैर्वस्त्रैः पितृमातृसहोदरैः ॥ ४०
श्वश्रूश्वशुरकैश्चान्यैः पतिहीना न भाति सा । चन्द्रहीना यथा रात्रिः पुत्रहीनं यथा कुलम् ॥ ४१
दीपहीनं यथा गेहं नैव भाति कदा किल । त्वां विनाऽयं तथा यूथो नैव शोभति मानद ॥ ४२
आचारेण यथा मर्त्यो ज्ञानहीनो यतिः किल । मन्त्रहीनं यथा राज्यं तथाऽयं नैव शोभते ॥ ४३
कैवर्तेन विना नावः संपूर्णाः परिसागरे । न भान्त्येव यथा सार्थः सार्थवाहेन वै तथा ॥ ४४
सेनाध्यक्षेण च विना यथा सैन्यं न भाति च । त्वां विना वै तथा सैन्यं शूकराणां महामते ॥
दीनो भविष्यति यथा वेदहीनो यथा द्विजः । मयि भारं कुटुम्बस्य विनिवेश्य प्रगच्छसि ॥ ४६
मरणं ज्ञात्वा सुलभं का प्रतिज्ञा तवेदृशी । त्वां विनाऽहं न शक्नोमि धर्तुं प्राणान्प्रियेश्वर ॥ ४७
त्वयैव सहिता स्वर्गं भूमिं वाऽपि महामते । नरकं वा प्रभोक्ष्यामि सत्यं सत्यं वदाम्यहम् ॥ ४८
अथ पुत्रान्सपुत्रांश्च गृहीत्वा यूथमुत्तमम् । आवां व्रजाव यूथेश दुर्गमेवं सुकन्दरम् ॥ ४९
जीवितव्यं परित्यज्य मरणायाभिगम्यते । तत्र किं दृश्यते लाभो मरणे वद सांप्रतम् ॥ ५०

वराह उवाच—

वीराणां त्वं न जानासि सुधर्मं शृणु सांप्रतम् । युद्धार्थिना हि वीरेण वीरं गत्वा प्रयाचितम् ॥
देहि मे योधनं संख्ये युद्धार्थी त्वहमागतः । परेण याचितं युद्धं न ददाति यदा भटः ॥ ५२
कामाल्लोभाद्भयाद्वाऽपि मोहाद्वा शृणु वल्लभे । कुम्भीपाके स नरके वसेद्युगसहस्रकम् ॥ ५३
क्षत्रियाणां परो धर्मो युद्धं देयं न संशयः । तद्युद्धं दीयमानेन रङ्गभूमिं गतेन वै ॥ ५४
जित्वा शत्रुं पुनस्तत्र यशः कीर्तिं प्रभुञ्जते । नो वा हतोऽपि युद्धेऽस्मिन्युध्यमानः सुनिर्भयः ॥
वीरलोकमवाप्नोति दिव्याँल्लोकान्प्रभुञ्जते । यावद्वर्षसहस्राणां विंशत्येका प्रिये शृणु ॥ ५६
वीरलोके वसेत्तावद्देववीरैर्महीयते । मनुपुत्रः समायातः स्वयं वीरो न संशयः ॥ ५७
संग्रामं याचमानस्तु युद्धं देयं मया ध्रुवम् । युद्धातिथिः समायातो विष्णुरूपः सनातनः ॥
सत्कारो युद्धरूपेण कर्तव्यश्च मया शुभे ॥ ५८

शूकर्युवाच—

यदा युद्धं त्वया देयं राज्ञे चैव महात्मने । ततोऽहं पौरुषं कान्त पश्ये वै तव कीदृशम् ॥ ५९
एवमुक्त्वा प्रियान्पुत्रान्समाहूय त्वरान्विता । उवाच पुत्रका यूयं शृणुध्वं वचनं मम ॥ ६०
युद्धातिथिः समायातो विष्णुरूपः सनातनः । मया तत्र प्रगन्तव्यं यत्रायं हि गमिष्यति ॥ ६१

---

१ ग. घ. ज. ट. °दृग्रूपो भ° । २ ग. घ. ङ. ज. झ. ट. ड. ढ. यथा । ३ ङ. झ. ढ. मन्त्रिहीनो यथा राजा त° । ज. मन्त्रहीनो यथा राजा त° । ४ ग. घ. ज. ट. °ते । सर्वमेव प्र° । ५ ग. घ. ज. त्वं राजनीतिं स्वध° । ६ ज. युधि । ङ. ढ. नरः । ७ ज. °भे । भुङ्क्ते पापं स नरके यावद्यु° । ८ ङ. ढ. °व्यान्भोगान्प्र° । ९ ज. °णु । पुनर्भुङ्क्ते वीरलोकादवतीर्य महीतले । म° ।

यावत्तिष्ठति वै नाथो भवतां प्रतिपालकः । यूयं गच्छन्तु वै दूरं दुर्गे गिरिगुहामुखम् ॥ ६२
सुखं जीवत मे वत्सा वर्जयित्वा सुलुब्धकान् । मया तत्र प्रगन्तव्यं यत्रैष हि गमिष्यति ॥ ६३
भवतां श्रेष्ठोऽयं भ्राता यूथरक्षां करिष्यति । एते पितृव्यकाः सर्वे भवतां त्राणकारकाः ॥
दूरं प्रयान्तु वै सर्वे मां विहाय सुपुत्रकाः ॥ ६४

पुत्रा ऊचुः—

अयं हि पर्वतः श्रेष्ठो बहुमूलफलोदकः । भयं तु कस्य वै नास्ति सुखं जीवनमस्ति वै ॥ ६५
युवाभ्यां हि अकस्माद्धि युद्धमुक्तं भयंकरम् । तन्नो हि कारणं मातर्वद सत्यमिहैव हि ॥ ६६

शूकर्युवाच—

अयं राजा महारौद्रः कालरूपः समागतः । क्रीडते मृगया लुब्धो मृगान्हत्वा बहून्वने ॥ ६७
इक्ष्वाकुर्नाम दुर्धर्षो मनुपुत्रो महाबलः । संहरिष्यति कालोऽयं दूरं यान्तु सुपुत्रकाः ॥ ६८

पुत्रा ऊचुः—

मातरं पितरं त्यक्त्वा यः प्रयाति स पापधीः । महारौद्रं सुघोरं तु नरकं याति नान्यथा ॥ ६९
मातुः पुण्यं पयः पीत्वा पुष्टो भवति निर्घृणः । मातरं पितरं त्यज्य यः प्रयाति सुदुर्बलः ॥ ७०
पूयं नरकं पिबेन्नित्यं कृमिदुर्गन्धसंकुलम् । मातस्तस्मान्न यास्यामो गुरुं त्यक्त्वा इहैव च ॥ ७१
एवं वेदादसंजातं (?) तेषां धर्मार्थसंयुतं । व्यूहं कृत्वा स्थिताः सर्वे बलतेजःसमाकुलाः ॥ ७२
साहसोत्साहसंहृष्टाः पश्यन्ति नृपनन्दनम् । नदन्तः पौरुषैर्युक्ताः क्रीडमाना वने तदा ॥ ७३

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते द्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५४८३

---

अथ त्रिचत्वारिंशोऽध्यायः ।

---

सुकलोवाच—

एवं ते शूकराः सर्वे युद्धाय समुपस्थिताः । [*पुरः स्थितस्य ते राज्ञो ह्यवतस्थुश्च लुब्धकाः ॥ १
महावराहो राजेन्द्र गिरिसानुं समाश्रितः । महता यूथभावेन व्यूहं कृत्वा प्रतिष्ठति ॥ २
कपिलः स्थूलपीनाङ्गो महादंष्ट्रो महामुखः । दुःसहः शूकरो राजन्गर्जते चातिभैरवम् ] ॥ ३
स तं पश्य महाराज शालतालवनाश्रयम् । तेषां तद्वचनं श्रुत्वा मनुपुत्रः प्रतापवान् ॥ ४
[† गृह्यतां शूरवाराहं विध्यतां बलदर्पितम् । एवमाभाष्य तान्वीरो मनुपुत्रः प्रतापवान् ] ॥ ५
अथ ते लुब्धकाः सर्वे मृगयामदमोहिताः । संनद्धा दंशिताः सर्वे श्वानैः सार्धं प्रजग्मिरे ॥ ६
हर्षेण महताऽऽविष्टो राजराजो महाबलः । अश्वारूढः स्वसैन्येन चारुरङ्गेन संयुतः ॥ ७
गङ्गातीरं समासाद्य मेरुं गिरिवरोत्तमम् । रत्नधातुसमाकीर्णं नानावृक्षैरलंकृतम् ॥ ८

---

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. ड. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ ज. तातो । २ क. ख. च. छ. झ. °तां प्रीतिं । ३ ग. ज. ट ड. वञ्चयित्वा । ४ ड. यत्र नाथो ग° । ५ ज. °ति सुखार्थधीः । ६ अ. दारुणम् । ७ ज. °णः । तां त्यक्त्वा पूयभोज्यं च नरकं संप्रयाति हि । पूयं तत्र पिं° । ८ ज. °म् । तस्माद्व्यूहं स्थिताः सर्वे बलतेजःसमाकुलाः । युवाभ्यां सहिताः सर्वे मातर्योत्स्याम भूभुजा । एवमुक्त्वा ततः सर्वे यूथं कृत्वा च ते तथा । न° । ९ ड. महाबलः । १० ज. दुर्मदः शूकरोऽत्यर्थं गर्जे° । ११ ज. सायुधाः । १२ ड. °वृक्षसमाकुलम् ।

सुकलोवाच[1]—

[*यो बलधाममरीचिचयकरनिकरमयंप्रोत्तुङ्गोऽत्युच्चं गगनमेव संप्राप्तो नानानगाचरितशोभो गिरिराजो भाति ॥ ९

योजनबहलोविमलगङ्गाप्रवाहसमुच्चरत्तीरवीचीतरङ्गभङ्गैर्मुक्ताफलसदृशैर्निर्मलाम्बुकणैः सर्वत्रप्रक्षालितशिलातलो] गिरीन्द्रः सुश्रियः(श्रीकः) ॥ १०

देवैश्चारणकिंनरैः परिवृतो गन्धर्वविद्याधरैः
सिद्धैरप्सरसां गणैर्मुनिजनैर्नागेन्द्रविद्याधरैः ।
श्रीखण्डैर्बहुचन्दनैस्तु सरलैः शालैस्तमालैर्गिरिः
पुन्नागैर्बहुसिद्धिदायकवनैः कल्पद्रुमैः शोभते ॥

नानाधातुविचित्रो वै नानारत्नविचित्रितैः । विमानैः काञ्चनैर्दण्डैः[3] कलत्रैरुपशोभते ॥ १२

नालीकेरवनैर्दिव्यैः पूगवृक्षैर्विराजते । दिव्यपुन्नागबकुलैः कदलीखण्डमण्डितैः ॥ १३

सुपुष्पैश्चम्पकैरद्रिः पाटलैः केतकैस्तथा । नानावल्लीवितानैश्च पुष्पितैः पद्मकैस्तथा ॥ १४

नाना[†वर्णैः सुपुण्यैश्च नानावृक्षैरलंकृतः । दिव्य]वृक्षैः समाकीर्णः स्फाटिकैश्च शिलातलैः ॥ १५

योगियोगीन्द्रसंसिद्धैः कन्दरान्तर्निवासिभिः । निर्झरैश्चैव रम्यैश्च बहुप्रस्रवणैर्गिरिः ॥ १६

नदीप्रवाहसंहृष्टैः संगमैरुपशोभते । ह्रदैश्च पल्वलैः कुण्डैर्निर्मलोदकधारिभिः ॥ १७

गिरिराजो विभात्येकः सानुभिः सह संस्थितैः । शरभैश्चैव शार्दूलैर्मृगयूथैरलंकृतः ॥ १८

महामत्तैश्च मातङ्गैर्महिषै रुरुभिः सदा । अनेकैर्दिव्यभावैश्च गिरिराजो विभाति सः ॥ १९

अयोध्याधिपतिर्वीर इक्ष्वाकुर्मनुनन्दनः । तया सुभार्यया[6] युक्तश्चतुरङ्गबलेन वै ॥ २०

पुरतो लुब्धका यान्ति श्वानः शूराश्च शीघ्रगाः । यत्राऽऽस्ते शूकरः शूरो भार्यया सहितो बली २१

बहुभिः शूकरैर्गुप्तो गुरुभिः शिशुभिस्तथा । मेरुभूमिं समाश्रित्य गङ्गातीराश्रमं ततः ॥ २२

सुकलोवाच—

तामुवाच वराहस्तु सुप्रियां हर्षसंयुतः । प्रिये पश्य समायातः कोशलाधिपतिर्बली ॥ २३

मामुद्दिश्य महाप्राज्ञो मृगयां क्रीडते नृपः । युद्धमेकः करिष्यामि सुरासुरप्रहर्षणम् ॥ २४

अथ भूपो महातेजा बाणपाणिर्धनुर्धरः । सुदेवां सत्यधर्माङ्गीं तामुवाच महर्षितः ॥ २५

पश्य कान्ते महाकालं गर्जमानं यथा घनम् । [ *परिवारसमायुक्तं दुःसहं मृगघातिभिः ॥ २६

अद्यैवाहं हनिष्यामि सुबाणैर्निशितैः प्रिये । मामेव हि महाशूरो शु(यु)द्धाय समुपाश्रयेत् ॥ २७

एवमुक्त्वा प्रियो भार्यां लुब्धकान्वाक्यमब्रवीत् । यथा शूरो महाशूराः प्रेषयध्वं हि शूकरम् २८

अथ ते प्रेषिताः शूरा बलतेजःपराक्रमाः ] । गर्जमानाः प्रधावन्ति[11] बलतेजःपराक्रमाः ॥ २९

कोलं प्रति गताः सर्वे वायुवेगेन सांप्रतम् । विध्यन्ति बाणजालैस्ते निशितैर्वनचारकाः ॥
नानाशस्त्रैश्च शुभ्रैस्तु[12] वराहं वीररूपिणम् ॥ ३०

---

* एतच्चिह्नान्तर्गतः पाठो ग घ. ज. ट. ड. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ग. घ ङ. ट. ड. ढ. पुस्तकस्थः ।
* एतच्चिह्नान्तर्गतः पाठो ग. घ. ट. ड. ढ. पुस्तकस्थः ।

---

१ ज. 'च—सुमेरुर्नाम नगोत्तमः प्रदीप्तमरीचिः प्रो' । २ ज. 'न्त्रकैरन्वितः । श्री' । ३ ढ. 'नैर्दिव्यैः क' । ४ ङ. छ. ढ. 'लश्चैरु' । ५ ग. घ. ज. ट. 'संबद्धः सं' । ङ. संसिद्धैः सं' । ६ ज. सुदेवया । ७ ग. घ. ज. ट. 'रैर्युक्तो गु' । ८ ग. घ. ज. ङ. 'रात्समन्ततः । ९ ज. 'च— तं दृष्ट्वोवाच वाराहः सु' । १० ढ 'रारोहां सु' । ११ ङ. 'न्ति परितः कालयोधिनः। कों' । १२ ङ कुन्तैश्च ।

[*सुकलोवाच—
पतन्ति बाणतोमरा विमुक्ता लुब्धकैः शरा
घना गिरिं प्रवर्षिणो यथा तथा धरान्तरे ॥
हतो दृढप्रहारिभिः स निर्जितस्ततस्तथा
शतैस्तु यूथपालकः स कोलः संगरं गतः ॥ ३१
स्वपुत्रपौत्रबान्धवैः परांश्च संहरेत्स वै
पतन्ति ते स्वदंष्ट्रया हता हवेऽवलुब्धकाः ॥
पतन्ति पादहस्तकाः स्थितस्य वेगभ्रामणैः
स लुब्धगर्जमेव तं वराहोऽपश्यदागतम् ॥ ३२
स्वतेजसा विनाशितं मुखाग्रदंष्ट्रया हतं
गतः स यत्र भूपतिः स्वतेजसा महामतिः ॥
विवक्षये स्वपुत्रकान्प्रियांश्च पुत्रबान्धवान्
† ........................................... ॥ ३३
इक्ष्वाकुनाथं सुमहत्प्रसह्य संत्रास्य क्रुद्धः स हि शूकरेशः ।
युद्धं वने वाञ्छति तेन सार्धमिक्ष्वाकुणा संगरहर्षयुक्तः ॥ ३४
वाराहः पुनरेव युद्धकुशलः संवाञ्छते संगरं
तुण्डाग्रेण सुतीक्ष्णदन्तनखरैः क्रुद्धो धरां क्षोभयन् ।
हुङ्कारोच्चारगर्वात्प्रहरति विमलं भूपतिं तं च राज-
ञ्ज्ञात्वा विष्णुपराक्रमं मनुसुतस्त्वानन्दरोमाञ्चितः ॥ ३५
दृष्ट्वा शूकरपौरुषं यमतुलं मेने पतिर्देवराड्
देवारिं मनसा विचिन्त्य सहसा वाराहरूपेण वै ।
संप्रेक्ष्यैव महाबलं बहुतरं युक्तं त्वरेर्वारणं
सैन्यं कोलविनाशनाय सहसा संगृह्य संगृह्यताम् ॥ ३६
प्रेषिताश्च वारणा रथाश्च वेगवत्तराः
सुबाणखड्गधारिणो भृशुण्डिभिश्च मुद्गरैः ॥
सपाशपाणिलुब्धका नदन्ति तत्र तत्परा
निवारितो न तिष्ठते हया गजाश्च यद्गताः ॥ ३७
क्वचित्क्वचिन्न दृश्यते क्वचित्क्वचित्प्रदृश्यते [*क्वचिद्भयं प्रदर्शयेत्क्वचिद्भयान्प्रमर्दयेत् ] ॥ ३८
मर्दयित्वा भटाञ्शूरान्वाराहो रणदुर्जयः । शब्दं चकार दुर्धर्षः क्रोधारुणितलोचनः ॥ ३९
कोशलाधिपतिर्वीरस्तं दृष्ट्वा रणदुर्जयम् । युध्यमानं महाकायं मुञ्चन्तं मेघवत्स्वनम् ॥ ४०
गर्जति समरं विचरति विलसति वीरान्स्वतेजसा वीरः ।
तडिदिव मुखे सुदंष्ट्रस्त(ष्ट्रा त)स्य विभात्युल्लसत्येव ॥ ४१

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ट. ड. पुस्तकस्थः । † अत्र चतुर्थचरणः सर्वपुस्तकेषु भ्रष्ट एव दृश्यते ।
* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ञ. ढ. पुस्तकस्थः ।

१ ङ. स गर्जितस्तथा शतैः श । २ ङ. तं महासमूहसंयुतं । ३ ङ. पतिर्भूधरो दे ।

मनुपुत्रस्तथा दृष्ट्वा कोलं च निशितैः शरैः । प्रतिभिन्नमेकैकं शस्त्राहतं च बन्धुभिः ॥ ४२

पुनरपि युद्धं प्रवाञ्छति* ........................... ।

नरपतिरुवाच सैन्याः किमिह न गृह्णन्तु(?)ओजसा शूराः ॥

युध्यध्वं तत्र निशितैर्बाणैस्तीक्ष्णैरनेनापि ॥ ४३

समाकर्ण्य ततो वाक्यं क्रुद्धस्यापि महात्मनः । ततस्ते सैनिकाः सर्वे युद्धाय समुपस्थिताः ॥ ४४

अनेकैर्भटसाहस्रैर्वने[1] तं समरे स्थितम् । दिक्षु सर्वासु संहत्य बिभिदुः शूकरं रणे ॥ ४५

(प्र)विद्धश्च कैश्चित्तदा बाणजालैः सुयोधैश्च संग्रामभूमौ विशालैः ।

क्वचिच्चक्रघातैः क्वचिद्वज्रपातैर्हतं दुर्जयं सङ्गरे तं महान्तैः ॥ ४६

ततः पौरुषैः क्रोधयुक्तः स कोलः सुविच्छिद्य पाशान्रणे प्रस्थितः सः ।

महाशूकरैः सार्धमेव प्रयातस्ततः शोणितस्यापि धाराभिषिक्तः ॥ ४७

करोति प्रहारं च तुण्डेन वीरो हयानां द्विपानां च चिच्छेद वीरः ।

स्वदंष्ट्राग्रभागेन(ण) तीक्ष्णेन वीरान्पदातीन्हि संपातयेद्रोषभावैः ।

जघानास्य शुण्डं गजस्यापि रुष्टो भटान्हतान्पादनखैस्तु हृष्टः ॥ ] ४८

ततस्ते शूकराः सर्वे लुब्धकाश्च परस्परम् । युयुधुः सङ्गरं कृत्वा रोषारुणविलोचनाः ॥ ४९

लुब्धकैश्च हताः कोलाः कोलैश्चापि सुलुब्धकाः । निहताः पातिता भूमौ क्षतजेनापि सारुणाः ५०

जीवं त्यक्त्वा हताः कोलैर्लुब्धकाः पतिता रणे । मृताश्च शूकरास्तत्र शूराः[2] प्राणांश्च तत्यजुः ५१

यत्र यत्र मृता भूमौ पातिता मृगघातकाः । बहवः शूकरा रा[3]जन्स्वव्यापारैर्निपातिताः ॥ ५२

कति नष्टा हताः कोला नीता दुर्गेषु संश्रिताः । कुञ्जेषु कन्दरान्तेषु गुहान्तेषु नृपोत्तम ॥ ५३

लुब्धकाश्च मृताः केचिच्छिन्ना दंष्ट्राग्रशूकरैः । प्राणांस्त्यक्त्वा गताः स्वर्गं खण्डशो विदलीकृताः ॥ ५४

वागुरापाशजालाश्चै[4] कृतकापञ्जरास्ततः । नाडीश्च पातिता भूमौ यत्र तत्र समन्ततः ॥ ५५

एकोऽपि दयितासार्धं वाराहः परितिष्ठति । पौत्रकैः सप्रपश्चैश्च(?)युद्धार्थी बलदर्पितः ॥ ५६

तमुवाच तदा कान्तं शूकरं शूकरी पुनः । गच्छ कान्त मया सार्धमेभिस्तु बालकैः सह ॥ ५७

प्राह प्रीतस्तु तां तत्र स्वप्रियां तु किरिःकिटिः(?) । क्व गच्छामि प्रभग्नोऽहं स्थानं नास्ति महीतले

मयि नष्टे महाभागे कोलयूथं विनश्यति ॥ ५८

द्वयोश्च सिंहयोर्मध्ये शूकरः पिबते जलम् । द्वयोः शूकरयोर्मध्ये सिंहो नैव पिबेत्पयः ॥ ५९

एवं शूकरजातीषु दृश्यते बलमुत्तमम् । तदहं नाशयाम्येव यदा भग्नो व्रजाम्यहम् ॥ ६०

जाने धर्मं महाभागे बहुश्रेयोविदायकम् । कामाल्लोभाद्भयाद्वाऽपि युध्यमानः प्रणश्यति ॥ ६१

रणतीर्थं परित्यज्य स स्यात्पापी न संशयः । निशितं शस्त्रसंव्यूहं दृष्ट्वा हर्षं प्रगच्छति ॥ ६२

अवगाह्याऽऽशु सिन्धुं स तीर्थपारं प्रगच्छति । स याति वैष्णवं लोकं पुत्राणां[6] शतमुद्धरेत् ॥ ६३

[†समायान्तं च(तश्च)तदहं कथं भग्नो व्रजाम्यहम्] । योधनं शस्त्रसंकीर्णं प्रवीरानन्ददायकम् ६४

दृष्ट्वा प्रयाति संहृष्टस्तस्य पुण्यफलं शृणु । पदे पदे[7] महत्स्नानं भागीरथ्याः प्रजायते ॥ ६५

रणाद्भग्नो गृहं याति कामाल्लोभात्प्रिये शृणु । मातृदोषं प्रकाशेत्स क्रियाजातश्च कथ्यते ॥ ६६

* चतुर्ष्वपि पुस्तकेषु भ्रष्ट एवात्रस्थः पाठः । † एतच्चिह्नान्तर्गतोऽयं पाठः ट. पुस्तकस्थः ।

१ ट. ड. वने । २ ङ. ढ. श्वानः । ३ ड. राजंश्चक्रपातैर्नि । ४ म. श्च कुटका । ५ ज. युद्धाप्रष्टः प्र । ६ ग. घ. ङ. छ. ज.झ. ट. ढ. पुरुषाञ्शत । ड. पितॄणां । ७ ड. देऽश्वमेधस्य फलं तस्य प्र ।

अत्र यज्ञाश्च तीर्थाश्च अत्र देवा महौजसः । पश्यन्ति कौतुकं कान्ते मुनयः सिद्धचारणाः ॥ ६७
त्रैलोक्यं वर्तते तत्र यत्र वीरप्रकाशनम् । समराङ्गणं प्रपश्यन्ति सर्वे त्रैलोक्यवासिनः ॥ ६८
शपन्ति निर्घृणं पापं प्रहसन्ति पुनः पुनः । दुर्गतिं दर्शयेत्तस्य धर्मराजो न संशयः ॥ ६९
संमुखः समरे युद्धे स्वशिराच्छोणितं पिबेत् । अश्वमेधफलं भुङ्क्ते इन्द्रलोकं प्रगच्छति ॥ ७०
यदा जयति संग्रामे शत्रूञ्शूरो वरानने । तदा प्रभुञ्जते लक्ष्मीं नानाभोगान्न संशयः ॥ ७१
यदा तत्र त्यजेत्प्राणान्संमुखश्च निराश्रयः । स गच्छेत्परमं लोकं देवकन्याः प्रभुञ्जते ॥ ७२
एवं धर्मं विजानामि कथं भग्नो व्रजाम्यहम् । अनेन समरे युद्धं करिष्ये नात्र संशयः ॥ ७३
मनोः पुत्रेण धीरेण[1] राज्ञा इक्ष्वाकुणा सह । डिम्भान्गृह्य प्रयाहि त्वं सुखं जीव वरानने[2] ॥ ७४
तस्य श्रुत्वा वचः प्राह बद्धाऽहं तव बन्धनैः । स्नेहमानप्रहास्यैश्च रतिक्रीडनकैः प्रिय ॥ ७५
पुरतस्ते सुतैः सार्धं प्राणांस्त्यक्ष्यामि मानद । एवमेव सुसंभाष्य[3] परस्परहितैषिणौ ॥ ७६
युद्धाय निश्चितौ भूत्वा समालोकयतो रिपून् । कोशलाधिपतिर्वीरं तमिक्ष्वाकुर्महामतिम् ॥ ७७
यथैव मेघः परिगर्जते दिवि प्रावृट्सुकाले सुतडित्प्रकाशैः ।
तथैव संगर्जति कान्तया समं समाह्वयेद्राजवरं खुराग्रैः ॥ ७८
तं गर्जमानं ददृशे महात्मा वराहमेकं पुरुषार्थयुक्तम् ।
ससार स्वेनैव जवेन युक्तः सुसंमुखस्तस्य नृवीरधीरः ॥ ७९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते त्रिचत्वारिंशत्तमोऽध्यायः ॥४३॥

आदितः श्लोकानां समष्ट्यङ्काः—५५६२

---

अथ चतुश्चत्वारिंशोऽध्यायः ।

---

सुकलोवाच—
स्वसैन्यं दुर्धरं[4] दृष्ट्वा निर्जितं दुर्धरेण तम्[5] । चुकोप भूपतिः क्रूरं दुःसहं सूकरं प्रति ॥ १
धनुरादाय वेगेन बाणं कालोपमं[6] तदा । तस्याभिमुखमेवासौ हयेनाभिससार सः ॥ २
[*स यदा नृपतिं[7] हयपृष्ठगतं वरपौरुषयुक्तममित्रहणम् ।
परिपश्यति शूकरयूथपतिः प्रगतोऽभिमुखं रणभूमितले ॥ ३
निशितेन शरेण हतो हि यदा नृपतेर्हयपादतले प्रगतः ।
तमिहैव विलङ्घ्य च वेगमनाः प्रखरेण जवेन च कोलवरः ॥ ४

---

* एतच्चिह्नान्तर्गतः पाठो ज. पुस्तकस्थः ।

---

१ ग. घ ज. ट. ड. वीरेण । २ ग. घ. ज. ट. ड. सह । ३ ग. घ. ज. ट. ड. ंष्य संप्रधार्य परस्परम् । युं । ४ ग. घ. ज. ट. ड. दुर्जयं । ५ ट. ंतं पुरतो रणे । चुं । ६ ग. घ. ङ. ज. ड. ढ. कालानलोपमम् । तं । ७ ड. नृपो हयमारुह्य वरं पौरुषयुक्तमनन्तबलम् । स निशम्य शूकरनाथो रणे प्रगतो हि मुसंमुखभूमितलम् । निशितेन शरेण हतो नृपतिना हयपादतलप्रगतः कुमतिः । तमिहैव विलङ्घ्य च वेगमनाः प्रखरेण जवेन तु कोलवरः । निशितेन हतो नृपतिना न हि याति क्षितौ परियुद्धगतिः । निहतस्तुरगः स च वीरवरस्तुरगः पतितो भुवि आस्यहतः । लघुस्यन्दनमेव गतो नृपतिर्निशितेन शरेण हतः स किरिःकिटिः । स हि गर्जति शूकरजातिरवो ह्यपरिस्थितपौरुषतेजवरैः । गदया निहतः स भूपतिना शिरमध्यरणेन कृता तेन यथा । परित्यज्य तं वितमेव स्वकं गत एव हरेर्गृहमेव वरम् । कृत्वा हि युद्धं समरे हि तेन राज्ञा समं शूकरराजराजः । पपात भूमौ निहतो यदा स बर्बरं ।

व्यथितस्तुरगः स किरिःकिटिना न हि याति क्षितौ स हि विद्धगतिः ।
तुरगः पतितो भुवि तुण्डहतो लघुस्यन्दनमेव गतो नृपतिः ॥ ५
स हि गर्जति शूकरजातिरवैरथ संस्थितकोशलयेन जवैः ।
गदया निहतः किल भूपतिना रणमध्यगतः स हि यूथपतिः ॥ ६
परित्यज्य तनुं च स्वकां हि तदा गत एव हरेर्गृहमेव वरम् ॥ ७
कृत्वा हि युद्धं समरे हि तेन राज्ञा समं शूकरराजराजः ॥
पपात भूमौ मरुता नगो यथा ववर्षिरे देववराः सुपुष्पैः ॥ ] ८
तस्योपरि पुष्पचयः सुजातः संतानकानामपि सौरभश्च ॥
स कुङ्कुमैश्चन्दनवृष्टिमेव कुर्वन्ति देवाः परितुष्टमानाः ॥ ९
विपश्यमानः स हि तेन राज्ञा चतुर्भुजः सोऽपि बभूव राजन्(?) ॥
दिव्याम्बरो भूषणदिव्यरूपः स्वतेजसा भाति दिवाकरो यथा ॥ १०
दिव्येन यानेन गतो दिवं तदा सुपूज्यमानः सुरराजदेवैः ॥
गन्धर्वराजः स बभूव भूयः पूर्वं स्वकं कायमिहैव त्यक्त्वा ॥ ११

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५५७३

---

अथ पञ्चचत्वारिंशोऽध्यायः ।

---

सुकलोवाच—

अथ ते लुब्धकाः सर्वे शूकरीं प्रति जग्मिरे । शूराश्च दारुणाः प्राप्ताः पाशहस्ताश्च भीषणाः ॥१
चतुरश्च ततो डिम्भान्धृत्वा स्थिता च शूकरी । कुटुम्बेन समं कान्तं हतं दृष्ट्वा महाहवे ॥ २
भर्तुर्मे चिन्तितं प्राप्तमृषिदेवैश्च पूजितः । गतः स्वर्गं महात्माऽसौ वीरेणानेन कर्मणा ॥ ३
अनेनापि यथा यास्ये स्वर्गं भर्ता स तिष्ठति । तथा सुनिश्चितं कृत्वा पुत्रान्प्रति विचिन्तितम् ॥ ४
यदा जीवन्ति मे बालाश्चत्वारो वंशधारकाः । भवत्यस्य सुवीरश्च कोलस्यापि महात्मनः ॥ ५
केनोपायेन पुत्रान्वै रक्षायुक्तान्करोम्यहम् । इति चिन्तापरा भूत्वा दृष्ट्वा पर्वतसंकटम् ॥ ६
तत्र मार्गं सुविस्तीर्णं निष्काशाय प्रयास्यते । तानुवाच महाराज पुत्रान्प्रति विमोहिता ॥ ७
यावत्तिष्ठाम्यहं पुत्रास्तावद्गच्छन्तु शीघ्रगाः । तेषां मध्ये सुतो ज्येष्ठः कथं यास्यामि मातरम् ॥८
त्यक्त्वा स्वजीवलोभाच्च धिङ्मां मातः सुजीवितम् । पितृवैरं करिष्यामि साधयिष्ये रणे रिपुम् ॥
गृहीत्वा त्वं कनीयसो भ्रातॄंस्त्रीन्दुर्गकन्दरम् ॥ ९
मातरं पितरं त्यक्त्वा यो याति स हि पापधीः । नरकं च प्रयात्येव कृमिकोटिसमाकुलम् ॥ १०
तमुवाच सुदुःखार्ता त्वां त्यक्त्वाऽहं कथं सुत । प्रयास्यामि महापापा त्रयो गच्छन्तु मे सुताः ॥ ११
त्रयस्तु पुरतः कृत्वा द्वाभ्यामपि च भूपते । जग्मतुर्दुर्गमार्गेण [*तेषामेव सुपश्यताम् ॥
तेजसा सुबलेनापि गर्जन्तश्च पुनः पुनः ॥ १२

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

---

१ ङ. ढ. श्वानश्च । २ ज. ॱताः । कनीयसस्त्रयस्त्वेव गता गिरिवनान्तरम् । तौ जग्मतू रणभुवं तेषा ।

अथ ते लुब्धकाः शूराः संप्राप्ताश्च त्वरंहसा । यथा तेनापि मार्गेण] त्रयस्ते प्रेषिता नृपम् ॥ १३
तिष्ठेते तत्पथं रुद्ध्वा द्वावेतौ जननीसुतौ । लुब्धकाश्च ततः प्राप्ताः खड्गबाणधनुर्धराः ॥ १४
महन्युस्तोमरैस्तीक्ष्णैश्चक्रैश्च मुशलैस्ततः । मातरं पृष्ठतः कृत्वा तनयो युयुधे[3] स तैः ॥ १५
दंष्ट्रया निहताः केचित्केचित्तुण्डेन पातिताः[4] । संजघान खुराग्रैश्च शूराश्च पतिता रणे ॥ १६
युयुधे शूकरः संख्ये[5] दृष्टो राज्ञा महात्मना । पितुः सकाशाच्छूरोऽयमिति ज्ञात्वा स संमुखः ॥ १७
बाणपाणिर्महातेजा मनुसूनुः प्रतापवान् । निशितेनापि बाणेन अर्धचन्द्रानुकारिणा ॥ १८
राज्ञा हतः पपातोर्व्यां विद्धोरस्को महात्मना । ममार सहसा भूमौ पपात स हि शूकरः ॥ १९
पुत्रमोहात्परं[6] विष्टा तस्योपरि गता स्वयम् । तया च निहताः शूरास्तुण्डघातैर्महीतले ॥ २०
निपेतुर्लुब्धकाः शूराः कति नष्टा मृता नृप । द्रावयन्ती महत्सैन्यं दंष्ट्रया शूकरी ततः ॥ २१
यथा कृत्या समुद्भूता महाभयविदायिका । तमुवाच ततो राज्ञी देवराजसुता प्रिया ॥ २२
अनया निहतं राजन्महत्सैन्यं तवैव हि । कस्मादुपेक्षसे कान्त तन्मे त्वं कारणं वद ॥ २३
तामुवाच महाराजो नाहं हन्मि इमां स्त्रियम् । महादोषं(षः)प्रिये दृष्टं(ष्टः)स्त्रीवधे दैवतैः किल २४
तस्मान्न घातये नारीं प्रेषयेऽहं न कंचन । अस्या वधनिमित्तार्थे पापाद्बिभेमि सुन्दरि ॥ २५
एवमुक्त्वा तदा राजा विरराम महामतिः । लुब्धको भार्गवो[7] नाम ददृशे स[8] तु शूकरीम् ॥ २६
कुर्वतीं कदनं तेषां दुःसहां सुभटैरपि । प्रविव्याध सुवेगेन बाणेन निशितेन हि ॥ २७
संलग्नेन सुबाणेन शोणितेन परिप्लुता । शोभमाना त्वरं प्राप्ता वीरश्रिया समाकुला ॥ २८
तुंण्डेन निहतं संख्ये झंझरं तु[12] तया पुनः । पतमानेन तेनापि झणंझणहता तदा ॥ २९
खड्गेन निशितेनापि पपात विद्लीकृता । श्वसमाना रणे राजन्मूर्छां याति परिप्लुता ॥ ३०
दुःखेन महताऽऽविष्टा जीवमाना महीतले ॥ ३१

इति श्रीमहापुराणे पाद्मे भूमिखण्डे सुकलाचरिते पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५६०४

अथ षट्चत्वारिंशोऽध्यायः ।

सुकलोवाच—

श्वसतीं शूकरीं दृष्ट्वा पतितां पुत्रवत्सलाम् । सुदेवा[13] कृपयाऽऽविष्टा गता तां दुःखितां प्रति ॥ १
अभिषिच्य[14] मुखं तस्याः शीतलेनोदकेन वा । पुनः सर्वाङ्गमेवापि दुःखितां रणशालिनीम् ॥ २
पुण्यतोयेन शीतेन सा उवाचाभिषिञ्चतीम् । [*उवाच मानुषीं[15] वाचं सुस्वरं[16] नृपतेः प्रियाम् ॥ ३
भद्रं भवतु[17] ते देवि त्वभिषिक्ता त्वया यदि । संस्पर्शाद्दर्शनात्तेऽद्य गतो मे पापसंचयः ॥ ४
तदाकर्ण्य महद्वाक्यमद्भुताकारसंयुतम् । चित्रमेतन्मया दृष्टं[18] कृतं त्रेतानयं(?)कदा ॥ ५

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. झ. ट. ड. ढ. पुस्तकस्थः ।

---

१ ज. °राः । प्रासैश्च तोम° । २ छ. °स्तीक्ष्णैः शरैश्च । ३ ग. घ. ट. ड. °धे खुरैः । दं° । ४ ज. °ताः । अन्ये खुराग्र. निहताः शू° । ५ ज. °ख्ये राज्ञा तेन म° । ६ ङ. ढ. °त्रशोकात्प° । ७ ग. भृगुवा । ८ ग. सु तु सुन्दरीम् । ज. शूरसुन्दरीम् । ९ ग. घ. ट. कष्टेन । ज. दंष्ट्रया । १० ग. घ. भृगुवं । ज. ड. भृगुवान् । ११ ङ. ढ. झर्झरेण ह । १२ ज. विह्वली° । १३ ग. घ. सुरुचा । १४ ग. घ. ज. ट. °च्य खुरांस्तस्याः । १५ ज. शूकरीं । १६ ज. सुदेवां । १७ ज. भवेच्च मे दे° । १८ ज °ष्टं सुकृतं तर्कये यथा । प° ।

[* पशुजातिमती चेयं सौष्ठवं भाषते स्फुटम् । ] स्वरव्यञ्जनसंपन्नं संस्कृतमुत्तमं मम ॥ ६
हर्षेण विस्मयेनापि कृत्वा साहसमुत्तमम् । तत्रस्था सा महाभागा तं पतिं वाक्यमब्रवीत् ॥ ७
पश्य राजन्नपूर्वेयं संस्कृतं भाषते महत् । पशुयोनिगता चेयं यथा वै मानुषी वदेत् ॥ ८
तदाकर्ण्य ततो राजा सर्वज्ञानवतां वरः । अद्भुतमद्भुताकारं यन्न दृष्टं श्रुतं मया ॥ ९
तामुवाच ततो राजा सुप्रियां सुश्रवां तदा । पृच्छ चैनां शुभां कान्ते का चेयं तु भविष्यति १०
श्रुत्वा तु नृपतेर्वाक्यं सा पप्रच्छ च शूकरीम् । का भविष्यसि त्वं भद्रे चित्रं ते दृश्यते बहु ११
पशुयोनिगता त्वं वै भाषसे मानुषं वचः । सौष्ठवं ज्ञानसंपन्नं वद मे पूर्वचेष्टितम् ॥ १२
भर्तुश्चापि महाभागे भटस्यापि महात्मनः । कोऽयं पूर्वं महावीर्यो गतः स्वर्गं पराक्रमैः ॥ १३
आत्मनश्च सुभर्तुश्च सर्वं पूर्वानुगं वद । एवमुक्त्वा महाभागा विरराम नृपोत्तम ॥ १४

शूकर्युवाच—

यदि पृच्छसि मां भद्रे ममास्य च महात्मनः । तत्सर्वं ते प्रवक्ष्यामि चरितं पूर्वचेष्टितम् ॥ १५
अयं पूर्वं महाप्राज्ञो गन्धर्वो गीतपण्डितः । रङ्गविद्याधरो नाम सर्वशास्त्रार्थकोविदः ॥ १६
मेरुं गिरिवरश्रेष्ठं चारुकन्दरनिर्झरम् । तमाश्रित्य महातेजाः पुलस्त्यो मुनिसत्तमः ॥ १७
तपश्चचार तेजस्वी निर्व्यलीकेन चेतसा । रङ्गविद्याधरस्तत्र संगतः स्वेच्छया शुभे ॥ १८
वृक्षच्छायां समाश्रित्य गीतमभ्यसते तदा । स्वरतालसमोपेतं लयमानसमन्वितम् ॥ १९
तं तु श्रुत्वा मुनिस्तस्य ध्यानाच्चलितमानसः । गायन्तं तमुवाचेदं गीतविद्याधरं प्रति ॥ २०
भवद्गीतेन दिव्येन देवा मुह्यन्ति नान्यथा । सुस्वरेण सुपुण्येन तालमानेन पण्डित ॥ २१
लययुक्तेन भावेन मूर्छनासहितेन च । मे मनः स्खलितं ध्यानाद्गीतेनानेन सुव्रत ॥ २२
इदं स्थानं परित्यज्य अन्यत्स्थानं व्रजस्व ह ॥ २३

गीतविद्याधर उवाच—

आत्मज्ञानसमां विद्यामहमत्र प्रसाधये । दुःखं न दद्मि कस्यापि सुखं लोकेषु सर्वदा ॥ २४
गीतेनानेन दिव्येन सर्वास्तुष्यन्ति देवताः । शंभुश्चापि समानीतो गीतध्वनिरतो द्विज ॥ २५
गीतं सर्वरसं प्रोक्तं गीतमानन्ददायकम् । शृङ्गाराद्या रसाः सर्वे गीतेनापि प्रतिष्ठिताः ॥ २६
शोभामायान्ति गीतेन वेदाश्चत्वार उत्तम । गीतेन देवताः सर्वास्तोषमायान्ति नान्यथा ॥ २७
तदेवं निन्दसे गीतमामेवं परिवादयेः । न न्यायोऽयं महाभाग तवैव इह दृश्यते ॥ २८

पुलस्त्य उवाच—

सत्यमुक्तं त्वयाऽद्यैव गीतार्थे बहुपुण्यदम् । शृणु त्वं मामकं वाक्यं मानं त्यज महामते ॥ २९
नाहं गीतं प्रकुत्सामि गीतं वन्दामि नान्यथा । विद्याश्चतुर्दश सर्वा एकभावेन भाविताः ॥ ३०

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. ड पुस्तकस्थः ।

१ ज. ड. 'पि दृष्ट्वाऽऽश्चर्यमनुत्त' । २ ज. 'च सुदेवां तु स्वप्रियां हृष्टमानसः । पृ' । ३ ग. ट. सुरुचां । ४ ग. घ. 'सि भद्रं ते चि' । ५ ड राजपत्नी । ६ ज. 'गा सुदेवा विरराम ह । शू' । ७ ग. घ. ज. ट. ड. 'र्वविद्यार्थ' । ८ ग. घ. ट. ड. 'निर्भर' । ९ ज. तच्च श्रुत्वा मुनिर्गीतं ध्या' । १० ग. घ. ज. ट. ड. 'दं रङ्गवि' । ११ ग. घ. 'त । नय' । १२ ज. ड. सर्वतः । १३ ग. घ. विद्याधर । ज. रङ्गविद्याधर । १४ ग. ड. 'आत्मजातिस' । ज. 'आत्मजातिसमां विद्यां महत्तम प्र' । १५ ग. घ. ज. ट. ड. 'पि मुने लोकस्य स' । १६ ज 'न तुष्यन्ति देवताः सदा । शं' । १७ ग. घ. ज. ट. ड. त्याज्यो' । १८ घ. ज. वदामि । ड. विन्दामि ।

प्राणिनां सिद्धिमायान्ति मनसा निश्चलेन च । तपश्च तद्वन्मन्त्राश्च सिध्यन्त एकचिन्तया ॥ ३१
हृषीकाणां महावर्गश्चपलोऽयमसंमतः । विषयेष्वेव सर्वेषु नयत्यात्मानं सर्वदा ॥ ३२
चालयित्वा मनस्तस्माद्ध्यानादेव न संशयः । यत्र शब्दं न रूपं च युवती नैव तिष्ठति ॥ ३३
मुनयस्तत्र गच्छन्ति तपःसिद्ध्यर्थहेतवे । अयं गीतैः पुनीतस्ते बहुसौख्यप्रदायकः ॥ ३४
तपसे सर्वदा वीर तिष्ठामो वनसंस्थिताः । अन्यस्थानं प्रयाहि त्वं नो वा वयं व्रजामहे ॥ ३५

गीतविद्याधर उवाच—

इन्द्रियाणां बलं वर्गं जितं येन महात्मना । सतपाः कथ्यते योगी स च धीरः स साधकः॥३६
शब्दं श्रुत्वाऽथ वा दृष्ट्वा रूपमेवं महामते । चलते नैव यो ध्यानात्स धीरस्तपसाधकः ॥ ३७
भवन्तस्तेजसा हीना जितेन्द्रियास्तु नान्यथा । स्वर्गेऽपि नास्ति सामर्थ्यं मम गीतस्य दूषणे ३८
वर्जयन्ति वैनं सर्वे हीनवीर्या न संशयः । इदं साधारणं विप्र वनमेव न संशयः ॥ ३९
देवानां सर्वजीवानां यथा मम तथा तव । कथं गच्छाम्यहं त्यक्त्वा वनमेवमनुत्तमम् ॥ ४०
यूयं गच्छन्तु तिष्ठन्तु येद्भव्यं तत्तु नान्यथा । एवमाभाष्य तं विप्रं गीतविद्याधरस्तदा ॥ ४१
समाकर्ण्य ततस्तेन मुनिना तस्य उत्तरम् । चिन्तयामास मेधावी किं कृत्वा सुकृतं भवेत् ॥ ४२
क्षमां कृत्वा जगामाथ अन्यत्स्थानं द्विजोत्तमः । तपश्चचार धर्मात्मा योगासनगतः सदा ॥ ४३
कामं क्रोधं परित्यज्य मोहं लोभं तथैव च । सर्वेन्द्रियाणि संयम्य मनसा सममेव च ॥
एवं स्थितस्तदा योगी पुलस्त्यो मुनिसत्तमः ॥ ४४

सुकलोवाच—

गते तस्मिन्महाभागे पुलस्त्ये मुनिपुङ्गवे । कालादिष्टेन तेनापि गीतविद्याधरेण च ॥ ४५
चिन्तितं सुचिरं कालं नष्टोऽयं हि भयान्मम । क गतस्तिष्ठते क्वापि किं करोति कथं च सः ४६
ज्ञात्वाऽयमात्मजं तेन एकान्तव्रतशालिनम् । गतो वराहरूपेण तस्याऽऽश्रममनुत्तमम् ॥ ४७
आसनस्थं महात्मानं तेजोज्वालासमाविलम् । दृष्ट्वा चकार वै क्षोभं विप्रस्य तस्य भामिनि॥४८
धर्षयेन्नियतं विप्रं तुण्डाग्रेण कुचेष्टया । पशुं ज्ञात्वा महाराज क्षमते तस्य दुष्कृतम् ॥ ४९
मूत्रते पुरतो गत्वा विष्ठां च कुरुते ततः । नृत्यते क्रीडते तत्र पतते प्राङ्गणे पुनः ॥ ५०
पशुं ज्ञात्वा परित्यक्तो मुनिना तेन भूपते । एकदा तु तदाऽऽयातस्तेन रूपेण वै पुनः ॥ ५१
अट्टाट्टहासेन पुनर्हास्यमेवं कृतं तदा । रोदनं च कृतं तत्र गीतं गायति सुस्वरम् ॥ ५२
चालयेत्तं तथा विप्रं गीतविद्याधरो नृप । चेष्टितं तस्य वै दृष्ट्वा घोणी एष भवेन्न हि ॥ ५३
ज्ञात्वा तस्य तु वृत्तान्तमामेवं परिचालयेत् । पशुं ज्ञात्वा मया त्यक्तो दुष्ट एष सुनिर्घृणः ॥ ५४
एवं ज्ञात्वा महात्मानं गन्धर्वाधममेव हि । चुकोप मुनिशार्दूलस्तं शशाप महामतिः ॥ ५५
यस्माच्छूकररूपेण मामेवं परिचालयेः । तस्माद्व्रज महापाप योनिं चैव च शौकरीम् ॥ ५६
शप्तस्तेनापि विप्रेण गतो देवं पुरंदरम् । तमुवाच महात्मानं कम्पमानो वरानने ॥ ५७
शृणु वाक्यं सहस्राक्ष तव वाक्यं कृतं मया । तप एव हि कुर्वन्तं दारुणं मुनिपुंगवम् ॥ ५८

---

१ ग. घ. °तः प्रणीत° । २ ज. °च—जितेन्द्रियस्तु वै योगी तपते सर्वदाऽऽत्म° । ३ ज. धीरः कृच्छ्रसा° । ४ ग. घ. वरं । ५ ग. घ. ट. ड. यच्छ्रेष्ठं तत्प्रकुर्वताम् । ए° । ज. यथेष्टं तत्प्रकुर्वताम् । ए° । ६ ज. °दा । विरराम मुनिश्चापि श्रुत्वा तस्य तथोक्त° । ७ ज. सः । गत्वा प्रतापयाम्येनमेकान्ते कृच्छ्रशालि° । ८ क. ख. ग. घ. ङ. च. छ. ड. ढ. °त्वा पद्मात्म° । ९ ज. ट. आश्रमस्थं । १० ज. विघ्नं । ११ ञ. प्राङ्गणे । १२ ज. °दा स तु दुष्टात्मा तेन । १३ ड °ण देवरूपं प्रणाशितम् । तस्मात्स्थानाद्गतः सोऽपि प्रणनाम पुं° । १४ क. ख. ग. घ. ङ. घ. छ. झ. ट. ड. ढ. कार्ये ।

तस्मात्तपःप्रभावं तं चालितं क्षोभितं मया । शप्तस्तेनास्मि विप्रेण देवरूपं प्रणाशितम् ॥ ५९
पशुयोनिं गतं चेन्द्र मामेवं परिरक्षय । ज्ञात्वा तस्य स वृत्तान्तं गीतविद्याधरस्य च ॥ ६०
तेन सार्धं गतश्चेन्द्रस्तं मुनिं प्रत्यभाषत । दीयतामनुग्रहो नाथ सुसिद्धोऽसि द्विजोत्तम ॥
क्षम्यतामस्य वै पापं यदनेन हि ते कृतम् ॥ ६१

पुलस्त्य उवाच—

वचनात्तव देवेश क्षन्तव्यं च मयाऽपि हि । भविष्यति महाराज मनुपुत्रो महाबलः ॥ ६२
इक्ष्वाकुर्नाम धर्मात्मा सर्वधर्मानुपालकः । तस्य हस्ताद्यदा मृत्युरस्यैव च भविष्यति ॥ ६३
तदैष वै स्वकं देहं प्राप्स्यते नात्र संशयः । एतत्ते सर्ववृत्तान्तं तैव चैव निवेदितम् ॥ ६४
आत्मनश्च प्रवक्ष्यामि पत्या सार्धं शृणुष्व हि । मया च पातकं घोरं यत्कृतं पापया पुरा ॥ ६५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५६६९

---

अथ सप्तचत्वारिंशोऽध्यायः ।

---

सुकलोवाच—

सुश्रवा चारुसर्वाङ्गी तामुवाचाथ शूकरीम् । पशुयोनिं गता त्वं हि [*कथं वदसि संस्कृतम् ॥ १
एवंविधं महाज्ञानं कस्माद्भूतं वदस्व मे । कथं जानासि वै भर्तुश्चरितमात्मनः शुभे ॥ २

शूकर्युवाच—

पशोर्भावेन मोहेन मुष्टाऽहं वरवर्णिनि ] । निहता खड्गबाणैश्च पतिता रणमूर्धनि ॥ ३
मूर्छयाऽभिपरिक्लिन्ना ज्ञानहीना वरानने । त्वयाऽभिषिक्ता तोयेन पुण्यहस्तेन सुन्दरि ॥ ४
पुण्योदकेन शीतेन तव हस्तगतेन वै । अभिषिक्ते हि मे काये मोहो नष्टो विहाय माम् ॥ ५
यथा भानोः सुतेजोभिरन्धकारः प्रयाति सः । तथा तवाभिषेकेण मम पापं गतं शुभे ॥ ६
प्रसादात्तव चार्वङ्गि लब्धं ज्ञानं पुरातनम् । पुण्यां गतिं प्रयास्यामि इति ज्ञातं मया शुभे ॥ ७
श्रूयतामभिधास्यामि पूर्ववृत्तान्तमात्मनः । यत्कृतं तु मया भद्रे पापया दुष्कृतं बहु ॥ ८
कलिङ्गाख्ये शुभे देशे श्रीपुरं नाम पत्तनम् । सर्वसिद्धिसमाकीर्णं चतुर्वर्णनिषेवितम् ॥ ९
वसति स्म द्विजः कश्चिद्वसुदत्तेति नामतः । ब्रह्माचारपरो नित्यं सत्यधर्मपरायणः ॥ १०
वेदवेत्ता ज्ञानवेत्ता शुचिष्मान्गुणवान्धनी । धनधान्यसमाकीर्णः पुत्रपौत्रैरलंकृतः ॥ ११
तस्याहं तु सुता भद्रे सोदरैः स्वजनबान्धवैः । अलंकारैः सुशृङ्गारैर्भूषिताऽस्मि वरानने ॥ १२
सुदेवा नाम मे तातश्चकार स महामतिः । तस्याहं दयिता नित्यं पितुश्चापि महात्मनः ॥ १३
रूपेणाप्रतिमा जाता संसारे नास्ति तादृशी । रूपयौवनगर्वेण मत्ताऽहं चारुहासिनी ॥ १४

---

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. ढ पुस्तकस्थः ।

---

१ ज. °स्मात्तु तपसे विप्रश्चालितः क्षोभितो मया । २ ग. घ. ज. ट. ढ °मोर्थपा° । ३ ग. ध. ज. तस्य देवि नि° । ४ ज. °तं पूर्वजन्मनि । इ° । ५ ग. घ. ज. ड. सुदेवा । ट. सुरुचा । ६ ङ. °वेदशम् । ७ ङ. पशुयोगेन । ८ ग. घ. ज. ट. ढ. °याऽतिपरिच्छिन्ना । ९ क. °म् । तस्मिञ्जातो वराकस्य नाम्ना वसुदत्तो न सः । १० ट. °श्चिद्वासुदेवेति । ११ ज. ब्रह्मचर्यप° । १२ घ. घ. ज. ढ. वेदवेदान्तवेत्ताऽसौ शु° । १३ ग. घ. °ने । वसुदेवा ततो नाम चक्रा° । ज. °ने । वसुदेवेति मे नाम चक्रा° । ट. °ने । वासुदेवस्ततो नाम चक्रा° । ढ. °ने । सुदेवेति च मे नाम चक्रा° ।

अहं कन्या सुरूपा वै सर्वालंकारशोभिता । मां दृष्ट्वा तु ततो लोकाः सर्वे स्वजनवर्गकाः ॥ १५
मामेवं याचमानास्ते विवाहार्थं वरानने । याचिताऽहं द्विजैः सर्वैर्न ददाति पिता मम ॥ १६
स्नेहाच्चैव महाभागे सुमोहाच्च महामतिः । न दत्ताऽहं तदा तेन पित्रा [1]चैव महात्मना ॥ १७
संप्राप्तं यौवनं बाल्ये[2] मयि भावसमन्वितम् । रूपं मे तादृशं दृष्ट्वा मम माता सुदुःखिता ॥ १८
पितरं मे ह्युवाचाथ कस्मात्कन्या न दीयते[3] । त्वं कस्मै सुद्विजायैव ब्राह्मणाय महात्मने ॥ १९
देहि कन्यां महाभाग संप्राप्ता यौवनं त्वियम्[4] । वसुदत्तो[5] द्विजश्रेष्ठः प्रत्युवाच द्विजोत्तमः ॥ २०
मातरं मे महाभागां श्रूयतां वचनं मम । महामोहेन मुग्धोऽस्मि सुताया वरवर्णिनि ॥ २१
यो मे गृहस्थो विप्रो वै भविष्यति[6] शुभे शृणु । तस्मै कन्यां प्रदास्यामि जामात्रे च न संशयः॥२२
[ *मम प्राणात्प्रिया चेयं सुदेवा नात्र संशयः । एवमुक्त्वा मदर्थे[7] स विरराम पिता मम॥]२३
कौशिकस्य कुले जातः सर्वविद्याविशारदः । ब्राह्मणानां गुणैर्युक्तः शीलवान्गुणवाञ्शुचिः ॥२४
वेदाध्ययनसंपन्नं पठमानं हि सुस्वरम्[9] । भिक्षार्थं द्वारमायान्तं पितृमातृविवर्जितम् ॥ २५
तं दृष्ट्वा समनुप्राप्तं रूपवन्तं[8] महामतिम्[10][11] । तं पप्रच्छ पिता चैवं को भवान्वै भविष्यसि ॥ २६
किं ते नाम कुलं गोत्रमाचारं वद सांप्रतम् । समाकर्ण्य पितुर्वाक्यं वसुदत्तमुवाच सः ॥ २७
कौशिकस्यान्वये[12] जातो वेदवेदाङ्गपारगः । शिवशर्मेति मे नाम पितृमातृविवर्जितः ॥ २८
सन्ति मे भ्रातरश्चान्ये चत्वारो वेदपारगाः । [ †एवं कुलं समाख्यातमाचारं कुलसंभवम्]॥ २९
एवं सर्वं समाख्यातं पितरं शिवशर्मणा । शुभे लग्ने तिथौ प्राप्ते नक्षत्रे भगदैवते ॥ ३०
पित्रा दत्ताऽस्मि सुभगे तस्मै विप्राय वै तदा । पितृगेहं वसाम्येका तेन सार्धं महात्मना ॥ ३१
नैव शुश्रूषितो भर्ता मया स पापया तदा । पितृमातृसुद्रव्येण[13] गर्वेणापि प्रमोहिता ॥ ३२
अङ्गसंवाहनं तस्य न कृतं हि मया कदा । रतिभावेन स्नेहेन वचनेन मया शुभे ॥ ३३
क्रूरबुद्ध्या हि दृष्टोऽसौ सर्वदा पापया मया । पुंश्चलीनां प्रसङ्गेन तद्भावं हि गता शुभे ॥ ३४
मातापित्रोश्च भर्तुश्च भ्रातॄणां हितमेव च । न करोम्यहमेवापि यत्र तत्र व्रजाम्यहम् ॥ ३५
एवं मे दुष्कृतं दृष्ट्वा शिवशर्मा पतिर्मम । स्नेहाच्छ्वशुरवर्गस्य मम भर्ता महामतिः ॥ ३६
न किंचिद्वदते सोऽपि क्षमते दुष्कृतं मम । वार्यमाणा कुटुम्बेन अहमेव सुपापिनी ॥ ३७
तस्य शीलं विदित्वा ते साधुत्वं शिवशर्मणः । पिता मातां[14] त्विमे सर्वे मम पापेन दुःखिताः॥३८
भर्ता मे दुष्कृतं दृष्ट्वा तस्य गृहाद्विनिर्गतः । तं देशं ग्राममेवं हि परित्यज्य गतस्ततः ॥ ३९
गते भर्तरि मे तातः संजातश्चिन्तयाऽन्वितः । मम दुःखेन दुःखात्मा यथा रोगेण पीडितः ॥४०
मम माता उवाचैव भर्तारं दुःखपीडितम् । कस्माच्चिन्तयसे कान्त वद दुःखं ममाग्रतः ॥ ४१
वसुदत्त उवाचैनां मातरं मम संमुखः । सुतां त्यक्त्वा गतो विप्रो जामाता शृणु वल्लभे ॥ ४२
इयं पापसमाचारा निर्घृणा पापचारिणी । अनयां[15] हि परित्यक्तः शिवशर्मा महामतिः[16] ॥ ४३

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ङ. छ. झ. ट. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. ड. पुस्तकस्थः ।

१ ज. मम । २ ग. घ. ज. ट. °ल्ये वयसा च स° । ङ. °ल्ये मदभा° । ३ ङ. °ते । यौवनस्था त्वया कान्त ब्रा° । ४ ज. °म् । तच्छ्रुत्वा वसुदत्तोऽसौ प्र° । ५ ट. वासुदेवो । ६ ज. °यं वसुदेवा न सं° । ७ ग. घ. ङ. छ. झ. वसुदत्तः । ट. वासुदेवः । ८ ङ. °वान्रूपवा° । ९ ट. सस्वरम् । १० ङ. ज. ढ. महामतिः । ११ ज. °म् । पप्रच्छ च कुलं शीलं कन्यादानार्थमेव त° । १२ ग. घ. ज. मे पित° । १३ ग. घ. ज. ट. °सुभद्रेण । १४ ज. °ता भ्रातरश्च म° । १५ ग. [illegible] ज. ट. ड. °याऽपि प° । १६ ग. घ. ज. ट. महामुनिः ।

समस्तस्य कुटुम्बस्य दाक्षिण्येन महामतिः । [1]ममायं स द्विजः कान्ते सुदेवां नैव भाषते ॥ ४४
वैसते सौम्यभावेनैं नैव निन्दति कुत्सति[4] । सुदेवां पापसंचारां स वै पण्डितबुद्धिमान् ॥ ४५
भविष्यति त्वियं दुष्टा सुदेवा कुलनाशिनी । अहमेनां परित्यक्ष्ये ब्रह्माचारविनाशिनीम् ॥ ४६

ब्राह्मण्युवाच—

अद्य ज्ञातं त्वया कान्त सुताया गुणदूषणम् । तव मोहेन स्नेहेन नष्टेयं शृणु सांप्रतम् ॥ ४७
अपत्यं लालयेत्तावद्यावत्पञ्चमवार्षिकम् । शिक्षाबुद्ध्या सदा कान्त पुनर्मोहेन पोषयेत् ॥ ४८
स्नानाच्छादनभक्ष्यैश्च भोज्यैः पेयैर्न संशयः । गुणेषु योजयेत्कान्त सद्विद्यासु च तान्सुतान् ४९
गुणशिक्षार्थनिर्मोहः पिता भवति सर्वदा । पालने पोषणे कान्त संमोहः परिजायते ॥ ५०
गुणं न वर्णयेत्पुत्रं कुत्सयेच्च दिने दिने । कठिनं च वदेन्नित्यं [*वचनैः परिपीडयेत् ॥ ५१
यथा हि साधयेन्नित्यं] सुविद्यां ज्ञानतत्परः । अभिमाने छलेनापि पापं त्यज्य प्रदूरतः ॥
निपुणो जायते नित्यं विद्यासु च गुणेषु च ॥ ५२
माता च ताडयेत्कन्यां स्नुषां श्वश्रूश्च ताडयेत् । गुरुश्च ताडयेच्छिष्यं ततः सिध्यति नान्यथा ५३
भार्यां च ताडयेत्कान्तो ह्यमात्यं नृपतिस्तथा । हयं च वाहयेद्वीरो गजं मात्रो दिने दिने ॥ ५४
[10]शिक्षाबुद्ध्या प्रसिध्यन्ति ताडनात्पालनाद्विभो । त्वयेयं नाशिता नाथ सर्वदैव न संशयः ॥ ५५
सार्धं सुब्राह्मणेनापि भवता शिवशर्मणा । निरङ्कुशा कृता गेहे तेन नष्टा महामते ॥ ५६
तावद्धि धारयेत्कन्यां गृहे कान्त वचः शृणु । अष्टवर्षान्विता यावत्प्रबलां नैव धारयेत् ॥ ५७
पितुर्गेहे स्थिता पुत्री यत्पापं हि प्रकुर्वते । उभाभ्यामपि तद्याति त्वेनस्ताभ्यामपि ध्रुवम् ॥ ५८
तस्मान्न धारयेत्पुत्रीं समर्थां निजमन्दिरे । यस्य दत्ता भवेत्सा वै तस्य गेहे प्रपोषयेत् ॥ ५९
[†तत्र यत्साधयेत्कान्त सगुणं भक्तिपूर्वकम् । कुलस्य जायते कीर्तिः पिता सुखेन जीवति॥ ६०
तत्रस्था कुरुते पापं तत्पापं भुञ्जते पतिः] । तत्रस्था वर्धते नित्यं पुत्रैः पौत्रैः सदैव सा ॥ ६१
पिता कीर्तिमवाप्नोति सुतायाः सुगुणैः [12]प्रिय । तस्मान्न धारयेत्कान्त गेहे पुत्रीं[13] सभर्तृकाम् ६२
इत्यर्थे श्रूयते कान्त इतिहासं (सो) भविष्यति । अष्टाविंशतिके प्राप्ते युगे द्वापरके महत् ॥ ६३
उग्रसेनस्य वीरस्य यदुज्येष्ठस्य यत्प्रभो । चरित्रं ते प्रवक्ष्यामि शृणुष्वैकमना द्विज ॥ ६४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५७३३

---

अथाष्टचत्वारिंशोऽध्यायः ।

---

ब्राह्मण्युवाच—

मायुरे विषये रम्ये मथुरायां नृपोत्तमः । उग्रसेनेति विख्यातो यादवः परवीरहा ॥ १

---

*एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. ङ पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

१ ज. ॑यं गौरवात्कान्ते । २ ग. घ. ज. ट. ड. वदते । ३ ज. ॑न नवैनां परिकु॑ । ४ ज. ॑ति । वसुदेवां पापवृत्तिं ज्ञात्वाऽसौ पण्डितो द्विजः । भ॑ । ५ ज. ॑न् । किं भविष्यति मे पुण्यमनया पापवृत्तया । अहमेनां परित्यक्ष्ये यष्मे ब्रह्मविनाशिनी । ब्रा॑ । ६ ड. पुत्रान्मोहे॑ । ७ ड. लालने । ८ ज. ॑ते । मुगुणं ९ ग. घ. ज. ट. कुत्सितं । १० ट. शिक्ष्या बु॑ । ११ ग. घ. ज. ट. ड. प्रवासयें । १२ क. सह । ग. घ. ज. ट. किल । १३ ज. ॑के तदा । उ॑ ।

सर्वधर्मार्थतत्त्वज्ञो वेदज्ञः श्रुतवान्बली । दाता भोक्ता गुणग्राही सद्गुणान्वेत्ति भूपतिः ॥ २
राज्यं चकार मेधावी प्रजा धर्मेण पालयेत् । एवमेव महातेजा उग्रसेनः प्रतापवान् ॥ ३
वैदर्भविषये पुण्ये सत्यकेतुः प्रतापवान् । तस्य कन्या महाभागा पद्माक्षी कमलानना ॥ ४
नाम्ना पद्मावती नाम सत्यधर्मपरायणा । सा स्त्रीणां च गुणैर्युक्ता द्वितीयेव समुद्रजा ॥ ५
वैदर्भी शुशुभे राजन्स्वगुणैः सत्यकारणैः । माथुरस्तूग्रसेनस्तु ह्युपयेमे सुलोचनाम् ॥ ६
तया सह महाभागः सुखं रेमे प्रतापवान् । अतिप्रीतो गुणैस्तस्यास्तया सह सुखी भवेत् ॥ ७
तस्याः स्नेहेन प्रीत्या वै स मुग्धो मथुरेश्वरः । पद्मावती महाभाग तस्य प्राणप्रियाऽभवत् ॥ ८
तया विना न बुभुजे[4] तया सह प्रक्रीडयेत् । तया विना न वै लेभे परमं सुखमेव सः ॥ ९
एवं प्रीतिकरौ जातौ परस्परमनुत्तमौ । स्नेहवन्तौ द्विजश्रेष्ठ सुखसंप्रीतिदायकौ ॥ १०
सत्यकेतुश्च राजेन्द्रः सस्मार स पद्मावतीम् । स्वसुतां तां महाभागां माता तस्याः सुदुःखिता ॥ ११
सा दूतान्प्रेषयामास वैदर्भी माथुरं प्रति । उग्रसेनं नृवीरेन्द्रं सादरेण द्विजोत्तम ॥ १२
गत्वा दूतोऽथ मथुरां राजानं वाक्यमब्रवीत् । विदर्भाधिपतिं भक्त्या स स्नेहेन न्यवेदयत् ॥ १३
आत्मनः कुशलं ब्रूते भवतां परिपृच्छति । सत्यकेतुर्महाराज त्वामेवं परिस्निग्धवान् ॥ १४
दर्शनाय सुतां चाऽऽर्य पद्मावतीं च प्रेषय । यदि त्वं मन्यसे नाथ प्रीतिस्नेहं हि तस्य च ॥ १५
प्रेषयस्व महाभागां तव प्रीतिकरां सदा । औत्सुक्येन महाराज सा शोकेनानुवर्तते ॥ १६
समाकर्ण्य ततो वाक्यमुग्रसेनो नरोत्तमः । प्रीत्या स्नेहेन तस्यापि सत्यकेतोर्महात्मनः ॥ १७
दाक्षिण्येन च विप्रेन्द्र प्रेषयामास भूपतिः । पद्मावतीं प्रियां भार्यामुग्रसेनः प्रतापवान् ॥ १८
प्रेषिता तेन राजेन्द्र गता पद्मावती स्वकम् । पूर्वं गृहं संती[10] सा तु महाहर्षेण संयुता ॥ १९
पितृपूर्वं कुटुम्बं तु ददृशे चारुमङ्गला । पितुः पादौ ननामाथ शिरसा सत्यतत्परा ॥ २०
आगतायां महाराज[11] पद्मावत्यां द्विजोत्तम[12] । हर्षेण महताऽऽविष्टो[13] विदर्भाधिपतिर्नृपः ॥ २१
वर्धिता मानदानैश्च[14] वस्त्रालंकारभूषणैः । पद्मावती सुखेनापि पितुर्गेहे प्रवर्तते ॥ २२
सखीभिः सहिता सा तु निःशङ्कं परिवर्तते । रमते सा तदा तत्र यथापूर्वं तथैव च ॥ २३
गृहे वने तडागेषु प्रासादेषु तथैव च । पुनर्बाला बभूवाथ निर्लज्जेव[15] प्रवर्तत ॥ २४
निःशङ्का वर्तते विप्र सखीभिः सह सर्वदा । पतिव्रता महाभागा हर्षेण महताऽन्विता ॥ २५
सुखं तु पितृगेहस्य दुर्लभं श्वाशुरे गृहे । एवं ज्ञात्वा तदा रेमे कदा ईदृग्भविष्यति ॥ २६
अनेन मोहभावेन क्रीडालुब्धा वरानना । सखीभिः सहिता नित्यं वनेषूपवने[16] तदा ॥ २७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरितेऽष्टाचत्वारिंशोऽध्यायः ॥ ४८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५७६०

अथैकोनपञ्चाशत्तमोऽध्यायः ।

ब्राह्मण्युवाच—

एकदा तु महाभाग गता सा पर्वतोत्तमम् । रमणीयं वनं दृष्ट्वा कदलीखण्डमाण्डितम् ॥ १

१ ग घ. ज. वान्वशी । दा॰ । २ ज. ॰णान्वितविग्रहः । रा॰ । ३ ग. घ. ट. ड. महासेन । ४ ज. ॰जे क्रीडत्येव निरन्तरम् । त॰ । ५ ज. यादवेन्द्रं । ६ अ. ॰त्तमः । उग्रसेनं महाराज रा॰ । ङ. ॰त्तमः । उग्रसेनं स गत्वा तु रा॰ । ७ ज. ॰से वीर श्वश्रोः प्रीतिकरं सदा । प्रे॰ । ८ ग. घ. ज. नरेश्वरः । ९ ज. पितुः । १० ग. घ. ट. संकुलम् । ११ ज. महाभाग । १२ ज. नृपोत्तमः । १३ ज. ॰तिस्तदा । व॰ । १४ ज. ॰नदैश्चैव व॰ । १५ ज. ॰व च पूर्ववत् । निः॰ । १६ ज. ॰नेषु व्रजते सदा ।

शालैस्तालैस्तमालैश्च नालिकेरैस्तथोत्कटैः । पूगीफलैर्मातुलुङ्गैर्नारङ्गैश्चारुजम्बुकैः ॥ २
चम्पकैः पाटलैः पुण्यैः पुष्पितैः केतकैर्वरैः । अशोकबकुलोपेतं नानावृक्षैरलंकृतम् ॥ ३
पर्वतं पुष्पवन्तं च पुष्पितैश्च नगोत्तमैः । सर्वत्र शोभितं रम्यं नानाधातुसमाकुलम् ॥ ४
[*गौररम्यतरं दृष्ट्वा तदेव वनमुत्तमम् ]। तडागं सर्वतो भद्रं पुण्यतोयेन पूरितम् ॥ ५
कमलैः पुष्पितैश्चान्यैः सुगन्धैः कनकोत्पलैः । श्वेतोत्पलैर्विभासन्तं रक्तोत्पलसुपुष्पितैः ॥ ६
नीलोत्पलैश्च कह्लारैर्हंसैश्च जलकुक्कुटैः । पक्षिभिर्जलजैश्चान्यैर्नानाधातुसमाकुलम् ॥ ७
तडागं सर्वतः शुभ्रं नानापक्षिगणैर्युतम् । कोकिलानां रुतैः पुण्यैः सुस्वरैः परिशोभितम् ॥ ८
मयूराणां तथा शब्दैः सर्वं च मधुरायते । षट्पदानां सुनादेन सर्वत्र परिशोभते ॥ ९
एवंविधं गिरिं रम्यं तदेव वनमुत्तमम् । तडागं सर्वतो भद्रं ददृशे नृपनन्दिनी ॥ १०
वैदर्भी क्रीडमाना सा सखीभिः सहिता तदा । समालोक्य वनं पुण्यं सर्वत्र कुसुमाकुलम् ॥ ११
चापल्येन प्रभावेन स्त्रीभावेन च लीलया । पद्मावती सरस्तीरे सखीभिः सहिता तदा ॥ १२
जलक्रीडासमालीना हसते गायते पुनः । सुखेन रममाणा सा तस्मिन्सरसि भामिनी ॥ १३
एवं[४] विप्र तदा सा तु सुखेन परिवर्तते । गोभिलो नाम वै दैत्यो[५] भृत्यो वैश्रवणस्य च ॥ १४
दिव्येनापि विमानेन सर्वभोगपरिष्कृतः । याति चाऽऽकाशमार्गेण तडागस्योर्ध्वमागतः ॥ १५
तेन दृष्टा विशालाक्षी वैदर्भी निर्भया तदा । सर्वयोषिद्वरा सा हि उग्रसेनस्य वै प्रिया ॥ १६
रूपेणाप्रतिमा लोके सर्वाङ्गेषु विराजते । रतिर्वै मन्मथस्यापि किं वाऽपीयं हरिप्रिया ॥ १७
किं वाऽपि पार्वती देवी शची किं वा भविष्यति । यादृशी दृश्यते चेयं नारीणामुत्तमा वरा १८
अन्या चैवेदृशी नास्ति द्वितीया क्षितिमण्डले । नक्षत्रेषु यथा चन्द्रः संपूर्णो भाति शोभनः १९
गुणरूपकलाभिस्तु तथा भाति वरानना । पुष्करेषु यथा हंसस्तथेयं चारुहासिनी ॥ २०
अहो रूपमहो भावमस्यास्तु परिदृश्यते । का कस्य शोभना बाला चारुवृत्तपयोधरा ॥ २१
विपश्य गोभिलो दैत्यः पद्मावतीं वराननाम् । चिन्तयित्वा क्षणं विप्र का कस्यापि भविष्यति॥
ज्ञानेन महता ज्ञात्वा वैदर्भीति न संशयः । दयिता उग्रसेनस्य पतिव्रतपरायणा ॥ २३
आत्मबलेन तिष्ठन्ती दुष्प्राप्या पुरुषैरपि । उग्रसेनो महामूर्खः प्रेषिता येन वै वरा ॥ २४
पितुर्गेहमियं बाला स तु भाग्येन वर्जितः । अनया विना स जीवेच्च कथं कूटमतिः सदा ॥ २५
किंवा नपुंसको राजा एनां यो हि परित्यजेत् । तां दृष्ट्वा स तु कामात्मा संजातस्तत्क्षणादपि॥
इयं पतिव्रता बाला दुष्प्राप्या पुरुषैरपि । कथं भोक्ष्याम्यहं गत्वा कामोऽति मम पीडयेत्॥ २७
अभुक्त्वाऽहं यदा यास्ये मृत्युर्मम तदा भवेत्। अद्यैव हि न संदेहो यतः कामो महाबलः ॥ २८
इतिचिन्तापरो भूत्वा उपायं ससृजे तदा । कृत्वा मायामयं रूपमुग्रसेनस्य भूपतेः ॥ २९
यादृशस्तूग्रसेनश्च साङ्गोपाङ्गो महानृपः । गोभिलस्तादृशो भूत्वा गत्या च स्वरभाषया ॥ ३०
यथावस्त्रो यथावेषो वयसा च तथा पुनः । दिव्यमालाम्बरधरो दिव्यगन्धानुलेपनः ॥ ३१
सर्वाभरणशोभाङ्गो यादृशो माथुरेश्वरः । भूत्वा च तादृशो दैत्य उग्रसेनमयस्तदा ॥ ३२

* एतच्चिह्नान्तर्गतोऽयं पाठो ज. पुस्तकस्थः ।

१ ग. घ. ङ. ड. ढ. पुण्यैः । २ ङ. ढ. वेटैः । अं । ३ ज. सस्नेहं । ४ ग. घ. ट. ड. विश्वसिता सा । ५ ग. घ. ङ. ट. ड. दैत्यः पुत्रो वै । ६ ग. घ. ङ. ट. ड. ढ. परिप्लुतः । ७ ज. मूढमतिः । ८ ग. घ ज. ड. माल्याम्ब । ९ ज. [illegible] पीरवेश्व ।

मायया परया युक्तो रूपतारुण्यसंयुतः । पर्वताग्रे अशोकस्य च्छायामाश्रित्य संस्थितः ॥ ३३
शिलातलस्थो दुष्टात्मा वीणां दण्डेन वार(द)कः । सुस्वरं गायमानस्तु गीतं विश्वप्रमोदनम् ॥ ३४
तालमानक्रियोपेतं सप्तस्वरविभूषितम् । गीतं गायति दुष्टात्मा तस्या रूपेण मोहितः ॥ ३५
पर्वताग्रे स्थितो विप्र हर्षेण महताऽन्वितः । सखीमध्यगता सा तु पद्मावती वरानना ॥ ३६
शुश्रुवे सुस्वरं गीतं तालमानलयान्वितम् । कोऽयं गायति धर्मात्मा महत्सौख्यप्रदायकम् ॥ ३७
गीतं हि सत्क्रियोपेतं सर्वभावसमन्वितम् । सखीभिः सहिता गत्वा औत्सुक्येन नृपात्मजा ॥ ३८
अशोकच्छायामाश्रित्य विमलेऽथ शिलातले । दृष्ट्वा भूपालवेषेण गोभिलं दानवाधमम् ॥ ३९
पुष्पमालाम्बरधरं दिव्यगन्धानुलेपनम् । सर्वाभरणशोभाढ्यं पद्मावती पतिव्रता ॥ ४०
माथुरेशः समायातः कदा धर्मपरायणः । मम नाथो महात्मा वै राज्यं त्यक्त्वा प्रदूरतः ॥ ४१
यावद्विचिन्तयेत्सा च तावत्पापेन तेन सा । समाहूता सुवक्त्रा च एहि त्वं हि प्रिये मम ॥ ४२
चकिता शङ्किता सा च कथं भर्ता समागतः । लज्जिता दुःखिता जाता अधः कृत्वा ततो मुखम् ४३
अहं पापा दुराचारा निःशङ्का परिवर्तिता । कोपमेवं महाभागः करिष्यति न संशयः ॥ ४४
यावद्धि चिन्तयेत्सा च तावत्तेनापि पापिना । समाहूता स्वयं सा च एह्येहि त्वं मम प्रिये ॥ ४५
त्वया विना कृतो देवि प्राणान्धर्तुं वरानने । न हि शक्नोम्यहं कान्ते जीवितं प्रियमेव च ॥
तव स्नेहेन मुग्धोऽस्मि त्वां त्यक्त्वा नोत्सहे भृशम् ॥ ४६

ब्राह्मण्युवाच—

एवमुक्त्वा(क्ता) गता तस्य संमुखी लज्जयाऽन्विता । समालिङ्ग्य ततो दैत्यं सती पद्मावती तदा ४७
एकान्तं तु समानीता सुभुक्ता स्वेच्छया ततः । दैत्येन गोभिलेनापि सत्यकेतोः सुता तदा ॥ ४८

सुकलोवाच—

सुखस्थानेऽस्य संकेतमविन्दन्ती वरानना । स्ववस्त्रं सा परिगृह्य शङ्किता दुःखिताऽभवत् ॥ ४९
सा सक्रोधमुवाचाथ गोभिलं दानवाधमम् । कस्त्वं पापसमाचारो निर्घृणो दीनवाकृतिः ॥ ५०
शप्तुकामा समुद्युक्ता दुःखेनाऽऽकुलितेक्षणा । वेपमाना तदा राजन्दुःखभारेण पीडिता ॥ ५१
मम कान्तच्छलेनैव त्वमागतो दुरात्मवान् । नाशितं धर्मवत्कायं पतिव्रतमनुत्तमम् ॥ ५२
सुस्वरं रुदितं कृत्वा मम जन्म त्वया हृतम् । [*पश्य मे बलमत्रैव शापं दास्ये सुदारुणम्] ॥ ५३
एवं संभाषमाणां तां शप्तुकामां स गोभिलः ॥ ५४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरित एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५८१४

अथ पञ्चाशत्तमोऽध्यायः ।

सुकलोवाच—

* एतच्चिह्नान्तर्गतः पाठो ज. पुस्तकस्थः ।

१ ङ. ढ. °मोहनम् । २ ज. °तः । स्थितस्तां भोक्तुकामस्तु ह° । ३ ग. ज. ट. ड. हि मूर्छनोपे° । ४ ग. ट. ड. °न चेतसा । ५ अ. °ता त्वरंभाव ए° । ६ ज. °यः । पुनश्चोवाच दैत्येन्द्रश्चिन्तयन्तीं तदा स्थिताम् । त्वया विना क्षपन्देवि दिनानि कतिचित्स्वहम् ॥ दीनोऽस्मि सततं भद्रे प्रा° । ७ ग. ड. मायिना । ८ ट. ड. क्षणं । छ. झ. कृतं । ९ ग. घ. ङ. छ. झ. ड. ढ. °न लुब्धोऽस्मि । १० ज. मुदा । ११ ग. घ. ज. ट. दारुणाकृ° । १२ ज. °दाऽत्यर्थं दुः° । १३ ग. घ. ट. °भावेन पी° । १४ ज. °व आगतस्त्वं सुदुष्टधीः । ना° । १५ च °स्वरमुदि° । १६ ज. हतम् । १७ अ. ब्राह्मण्युवाच ।

तस्यास्तु वचनं श्रुत्वा गोभिलो वाक्यमब्रवीत् । भवती शप्तुकामाऽसि कस्मान्मे कारणं वद ॥ १
केन दोषेण लिप्तोऽस्मि यस्मात्त्वं शप्तुमुद्यता । गोभिलो नाम दैत्योऽस्मि पौलस्त्यस्य भटः शुभे २
दैत्याचारेण वर्तामि जाने विद्यामनुत्तमाम् । वेदशास्त्रार्थवेत्ताऽस्मि कलासु निपुणः पुनः ॥ ३
एवं सर्वं विजानामि दैत्याचारं शृणुष्व मे । परस्वं परदारांश्च बलाद्भुञ्जामि नान्यथा ॥ ४
वयं दैत्याः समाकर्ण्य दैत्याचारेण सांप्रतम् । वर्तामो ज्ञातिभावेन सत्यं सत्यं वदाम्यहम् ॥ ५
ब्राह्मणानां हि च्छिद्राणि विपश्यामो दिने दिने । तेषां हि तपसां नाशं विघ्नैः कुर्मो न संशयः ६
छिद्रं प्राप्य न संदेहो नाशयामो न संशयः । ब्राह्मणाञ्शृयतां भद्रे देवयज्ञं वरानने ॥ ७
नाशयामो वयं यज्ञान्धर्मं यज्ञं न संशयः । [*सुब्राह्मणान्परित्यज्य देवं नारायणं प्रभुम् ॥ ८
पतिव्रतां महाभागां सुदतीं भर्तृतत्पराम् । दूरेणापि परित्यज्य तिष्ठामो नात्र संशयः ] ॥ ९
तेजो देवि सुविप्रस्य हरेश्चैव महात्मनः । अन्याः पतिव्रता याश्च शप्तुं दैत्याश्च न क्षमाः ॥ १०
पतिव्रताभयेनापि विष्णोः सुब्राह्मणस्य च । नश्यन्ति दानवाः सर्वे दूरं राक्षसपुंगवाः ॥ ११
अहं दानवधर्मेण विचरामि महीतलम् । कस्मात्त्वं शप्तुकामाऽसि मम दोषो विचार्यताम् ॥ १२

पद्मावत्युवाच—

मम धर्मः सुकायश्च त्वयैव परिनाशितः । अहं पतिव्रता साध्वी पतिकामा तपस्विनी ॥ १३
स्वमार्गे संस्थिता पाप मायया परिनाशिता । तस्मात्त्वामप्यहं दुष्ट आधक्ष्यामि न संशयः ॥ १४

गोभिल उवाच—

धर्ममेवं प्रवक्ष्यामि भवती यदि मन्यते । अग्निविद्ब्राह्मणस्यापि श्रूयतां नृपनन्दिनि ॥ १५
जुहोति च त्रिकालं यो न त्यजेदग्निमन्दिरम् । स चाग्निहोत्री भवति यजत्येवं दिने दिने ॥ १६
अन्यच्चैवं प्रवक्ष्यामि भृत्यधर्मं वरानने । मनसा कर्मणा वाचा विशुद्धो यो हि नित्यशः ॥ १७
नित्यमादेशकारी यो भक्त्यात्तिष्ठति चाग्रतः । स भृत्यः कथ्यते देवि पुण्यभोक्ता न संशयः ॥ १८
यः पुत्रो गुणवाञ्ज्ञाता पितरं पालयेच्छुभः । मातरं च विशेषेण मनसा कायकर्मभिः ॥ १९
तस्य भागीरथीस्नानमहन्यहनि जायते । अन्यथा कुरुते यो हि स पापीयान्न संशयः ॥ २०
अन्यच्चैवं प्रवक्ष्यामि पतिव्रतमनुत्तमम् । वाचा सुमनसा चैव कर्मणा शृणु भामिनि ॥ २१
शुश्रूषां कुरुते या हि भर्तुश्चैव दिने दिने । तुष्टे भर्तरि या प्रीता न त्यजेत्क्रोधनं पुनः ॥
तस्य दोषं न गृह्णाति ताडिता तुष्यते पुनः ॥ २२
भर्तुः कर्मसु सर्वेषु पुरतस्तिष्ठते सदा । सा चापि कथ्यते नारी पतिव्रतपरायणा ॥ २३
पतितं पितरं पुत्रैर्बहुदोषसमन्वितम् । तस्मादपि च न त्याज्यं क्रोधितं कुष्ठिनं तदा ॥ २४
एवं पुत्राः शुश्रूषन्ति पितरं मातरं किल । ते यान्ति परमं लोकं तद्विष्णोः परमं पदम् ॥ २५
एवं हि स्वामिनं येऽपि उपचर्यन्ति भृत्यकाः । पत्युर्लोकं प्रयान्त्येते प्रसादात्स्वामिनस्तदा ॥ २६

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ ज. °स्त्यस्यामरः शु° । २ ज. °द्भुञ्जे सदा ह्यहम् । व° । ग. घ. ट. ङ. °द्भुञ्जाम्यहं तथा । ३ ङ. मुनिभावेन । ४ ङ. छ. झ. ढ. सुमार्ति । ङ. सुशीलां । ५ छ. द्विकालं । ६ ङ. °ज्यं कुष्ठिनं क्रोधितं त° । ७ छ. व्याधिनं । ८ ङ. इन्द्रलोकं ।

अग्निं नैव त्यजेद्विप्रो ब्रह्मलोकं प्रयाति सः। अग्नित्यागकरो विप्रो वृषलीपतिरुच्यते ॥ २७
स्वामिद्रोही भवेद्भृत्यः स्वामित्यागान्न संशयः। अग्निं च पितरं चैव न त्यजेत्स्वामिनं शुभे २८
त्याज्यं विप्रसुते भृत्यैः सत्यं सत्यं वदाम्यहम्। परित्यज्य प्रगच्छन्ति ते यान्ति नरकार्णवम् २९
पतितं व्याधितं देवि विकलं कुष्ठिनं भवेत्। सर्वधर्मविहीनं तु कृतपातकसंचयम् ॥
भर्तारं न त्यजेन्नारी यदि श्रेय इहेच्छति ॥ ३०
[ *त्यक्त्वा कान्तं व्रजेन्नारी अन्यत्कार्यमिहेच्छति ]। सा स्याद्धि पुंश्चली लोके सर्वधर्मबहिष्कृता ३१
गते भर्तरि या ग्रामं भार्गं शृङ्गारमेव च। लौल्याच्च कुरुते नारी पुंश्चली वदते जनः ॥ ३२
एवं धर्मं विजानामि वेदशास्त्रैश्च संमतम्। दानवा राक्षसाः प्रेता धात्रा सृष्टा यदा तु ते ॥ ३३
तत्ते हि कारणं सर्वं प्रवक्ष्यामि न संशयः। ब्राह्मणा दानवेष्विह पिशाचे राक्षसेषु च ॥ ३४
धर्माधर्मफलं प्रोक्तमधीतं तैस्तु सुन्दरि। विन्दन्ति सकलं सर्वे आचरन्ति न दानवाः ॥ ३५
विधिहीनं प्रकुर्वन्ति दानवा ज्ञानवर्जिताः। अन्यायेन व्रजन्त्येते मानवा विधिवर्जिताः ॥ ३६
तेषां संस्कारका धात्रा कृतास्ते चापि नान्यथा। विधिहीनं प्रकुर्वन्ति ये तु धर्मं नराधमाः ३७
तान्वयं शासयामो वै दण्डेन महता किल। भवत्या दारुणं कर्म कृतमेव सुनिर्घृणम् ॥ ३८
गार्हस्थ्यं हि परित्यज्य त्वत्राऽऽयाता किमर्थं वै। वदस्येवं मुखेनापि अहं हि पतिदेवता ॥ ३९
कर्मणा नास्ति तद्दृष्टं पतिदैवतमेव ते। निःशङ्का वर्तसे सा वै प्रमत्ता गिरिकानने ॥ ४०
मया त्वं साधिता पापा दण्डेन महता शृणु। भर्तारं च परित्यज्य किमर्थं त्वमिहाऽऽगता ॥ ४१
शृङ्गारं भूषणं वेषं कृत्वा तिष्ठसि निर्घृणे। किमर्थं हि कृतं पापे कस्य हेतोर्वदस्व मे ॥ ४२
अधर्मचारिणी दुष्टा पतिं त्यक्त्वा समागता। क्वाऽऽस्ते तत्पतिदैवत्वं दर्शय त्वं ममाग्रतः ॥ ४३
भवती पुंश्चली [† नाम यया त्यक्तः स्वकः पतिः। पृथक्शय्या यदा नारी तदा सा पुंश्चली मता]
योजनानां शतैकस्य अन्तरेण प्रवर्तसे। क्वास्ति ते पतिदेवत्वं पुंश्चल्याचारचारिणि ॥ ४५
निर्लज्जे निर्घृणे दुष्टे किं मे वदसि संमुखी। तपसः क्वास्ति ते भावः क तेजो बलमेव च ॥
दर्शयस्व ममाद्यैव बलवीर्यपराक्रमम् ॥ ४६

पद्मावत्युवाच—

स्नेहेनापि समानीता श्रूयतामसुराधम। भर्तुर्गेहादहं पित्रा क्वाऽऽस्ते तत्र च पातकम् ॥ ४७
नैव कामान्न लोभाच्च न मोहान्न च मत्सरात्। आगताऽहं परित्यज्य पतिभावेन संस्थिता ॥ ४८
भर्तृरूपच्छलेनापि त्वयैव परिवञ्चिता। भवन्तं माथुरं ज्ञात्वाऽऽगताऽहं संमुखं तव ॥ ४९
मायाविनं यदा जाने त्वामेवं दानवाधम। एकेन हुंकृतेनैव भस्मीभूतं करोम्यहम् ॥ ५०

गोभिल उवाच—

चक्षुर्हीना न पश्यन्ति मानवाः शृणु सांप्रतम्। धर्मनेत्रविहीना त्वं कथं जानासि मामिह ॥ ५१
यदा ते भाव उत्पन्नः पितुर्गेहं प्रति शृणु। पतिभावं परित्यज्य मुक्ता ध्यानेन त्वं तदा ॥ ५२
ज्ञाने तत्त्वं यदा नष्टं स्फुटं च हृदयं तव। कथं मां त्वं विजानासि ज्ञानचक्षुर्हता भुवि ॥ ५३

*एतच्चिह्नान्तर्गतः पाठो ढ. पुस्तकस्थः। † एतच्चिह्नान्तर्गतः पाठो ग. घ. ङ. छ. झ. ड. ढ. पुस्तकस्थः।

१ ङ. छ. झ. ड. ढ. °र्मार्थं सकलं। २ ज. °लं ते तु कर्मच्छिद्रादिपूरणम्। वि°। ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. मानवाः। ४ ज. अज्ञानेन प्रकुर्वन्ति ये तु विध्युदिताः क्रियाः। ते°। ५ ज. कृतं तच्छृणु सांप्रतम्। वि°। ६ ज. °म पतिं त्यक्त्वा यदागता। पृ°। ७ ज. दुर्मुखी।

कस्या माता पिता भ्राता कस्याः स्वजनबान्धवाः । सर्वस्थाने पतिर्ह्येको भार्यायास्तु न संशयः ।।
इत्युक्त्वा हि प्रहस्यैव गोभिलो दानवाधमः ।[3] न भयं विद्यते तेऽद्य ममापि शृणु पुंश्चलि ।। ५५
किं भवेत्तव रोषेण वृथैव परिकम्पसे । मम गेहं समाश्रित्य भुंक्त्वा भोगान्मनोनुगान् ।। ५६

पद्मावत्युवाच—

गच्छ पापसमाचार किं त्वं वदसि निर्घृण । सतीभावेन संस्थाऽस्मि पतिव्रतपरायणा ।। ५७
धक्ष्यामि त्वां महापाप यद्येवं तु वदिष्यसि ।। ५८
एवमुक्त्वा तु सा कान्त निषसाद महीतले । दुःखेन महताऽऽविष्टा तामुवाच स गोभिलः ।। ५९
तवोदरे मया न्यासः स्ववीर्यस्य कृतः शुभे । तस्मादुत्पत्स्यते पुत्रस्त्रैलोक्यक्षोभकारकः ।।
एवमुक्त्वा जगामाथ गोभिलो दानवस्तदा ।। ६०
गते तस्मिन्दुराचारे दानवे पापचारिणि । दुःखेन महताऽऽविष्टा नृपकन्या रुरोद ह ।। ६१

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते पञ्चाशत्तमोऽध्यायः ।। ५० ।।

आदितः श्लोकानां समष्ट्यङ्काः—५८७५

अथैकपञ्चाशत्तमोऽध्यायः ।

ब्राह्मण्युवाच—

गते तस्मिन्दुराचारे गोभिले पापचेतसि । पद्मावती रुरोदाथ दुःखेन महताऽन्विता ।। १
तस्यास्तु रुदितं श्रुत्वा सख्यः सर्वा द्विजोत्तम । पप्रच्छुस्तां राजकन्यां ताः सर्वाश्च वरानानाम् २
कस्माद्रोदिषि भद्रं ते कथयस्व हि चेष्टितम् । क्व गतोऽसौ महाराजो माथुराधिपतिस्तव ।। ३
येन त्वं हि समाहूता प्रिये त्यक्त्वा वदस्व नः । ता उवाच सुदुःखेन रुदमाना पुनः पुनः ।। ४
तया आवेदितं सर्वं यज्जातं दोषसंभवम् । ताभिर्नीता पितुर्गेहं वेपमाना सुदुःखिता ।। ५
मातुः समक्षं तस्यास्तु आचचक्षुस्तदा स्त्रियः । समाकर्ण्य ततो देवी गता सा भर्तृमन्दिरम् ।। ६
भर्तारं श्रावयामास सुतावृत्तान्तमेव हि । समाकर्ण्य ततो राजा महादुःखी त्वजायत ।। ७
यानाच्छादनकं दत्त्वा परिवारसमन्विताम् । मथुरां प्रेषयामास गता सा प्रियमन्दिरम् ।। ८
सुतादोषं समाच्छाद्य पिता माता द्विजोत्तम । उग्रसेनस्तु धर्मात्मा पद्मावतीं समागताम् ।। ९
स दृष्ट्वा मुमुदे देवीमुवाचेदं वचः पुनः । त्वया विना न शक्नोमि जीवितुं हि वरानने ।। १०
बहु प्रभासि मे प्रीता गुणैः शीलैस्तु सर्वदा । भक्त्या सत्येन मे कान्ते पतिदैवत्यकैर्गुणैः ।। ११
समाभाष्य प्रियां भार्यां पद्मावतीं नरेश्वरः । तया सार्धं स वै रेम उग्रसेनो नृपोत्तमः ।। १२
ववृधे दारुणो गर्भः सर्वलोकभयंकरः । पद्मावती विजानाति तस्य गर्भस्य कारणम् ।। १३
स्वोदरे वर्धमानस्य चिन्तयन्ती दिवानिशम् । अनेनापि विजातेन लोकनाशकरेण वै ।। १४
अनेनापि न मे कार्यं दुष्टपुत्रेण सांप्रतम् । औषधीं पृच्छते सा तु गर्भपातस्य सर्वतः ।। १५
[12]नारीमहौषधीं सा हि विन्दती च दिने दिने । गर्भस्य पातनायैव उपाया बहुशः कृताः ।। १६

१ ग. घ. ज. आत्मा । २ ग. घ. ज. ट. °कत्थसे । ३ छ. देहं । ४ ङ. ज. ढ. भुङ्क्ष्व । ५ ट. दैत्यं । ६ ग. घ. ज. ट. ढ. °लोक्ये चातिसुन्दरः । ए° । ७ ग. घ. ङ. वराननाः । ८ ग. घ. ङ. छ. ज. झ. ड. ढ. °येत्युक्त्वा । ९ ग. घ. ज. ट. °नः । प्रचोदितं तया सं । ङ. °नः । तासामावे । १० ज. °तादुष्कृतमे° । ११ घ. °त । भूषणाच्छादनं दं । १२ ग. घ. ज. ट. ढ. नानाम ।

ववृधे दारुणो गर्भः सर्वलोकभयंकरः । तामुवाच ततो गर्भः पद्मावतीं स मातरम् ॥ १७
कस्मात्त्वं व्यथसे मातश्चौषधीभिर्दिने दिने । पुण्येन वर्धते चाऽऽयुः पापेनाल्पं तु जीवितम् १८
आत्मकर्मविपाकेन जीवन्ति च म्रियन्ति च । आमगर्भा म्रियन्त्यन्ते त्वपक्वास्तु महीतले ॥ १९
जातमात्रा म्रियन्त्यन्ये कति ते यौवनान्विताः । बालवृद्धाश्च तरुणा आयुषो वशतां गताः ॥२०
सर्वे कर्मविपाकेन जीवन्ति च म्रियन्ति च । ओषध्यो मन्त्रदेवाश्च निमित्तानि न संशयः ॥२१
मामेव हि न जानासि भवती यादृशो ह्यहम् । दृष्टः श्रुतस्त्वया पूर्वं कालनेमिर्महा[1]बलः ॥ २२
दानवानां महावीर्यस्त्रैलोक्य[2]स्य भयप्रदः । देवासुरमहायुद्धे हतोऽहं विष्णुना पुरा ॥ २३
साधनाय च तद्वैरमागतोऽस्मि तवोदरे । साहसं च श्रमं मातर्मा कुरुष्व दिने दिने ॥ २४
एवमुक्त्वा[3] द्विजश्रेष्ठ मातरं विरराम सः । माता चै[4] उद्यमं त्यज्य महादुःखादभूत्तदा ॥ २५
दे[5]शाब्दाश्च गता यावत्तावद्वृद्धिमवाप्नुयात् । पश्चाज्जज्ञे महा[6]तेजाः कंसोऽभूत्स महाबलः ॥ २६
येन संत्रासिता लोकास्त्रैलोक्यस्य निवासिनः । यो हतो वासुदेवेन गतो[7] मोक्षं न संशयः ॥२७
एवं श्रुतं मया कान्त भवितव्यं भविष्यति । पुराणेष्वेव सर्वे[8]षु निश्चितं कथितं तव ॥ २८
पितृगेहे स्थिता कन्या नाशमेवं प्रयाति सा । गृहवासाय मे कान्त[*कन्यामोहं न कारयेत् २९
इमां दुष्टां महापापां परित्यज्य स्थिरो भव । प्राप्तव्यं तु महापापं दुःखं दारुणमेव च ॥
लोके श्रेयस्करं कान्त] तद्[9]गच्छस्व त्वं मया सह ॥ ३०

शूकर्युवाच—

एतद्वाक्यं सुमन्त्रं तु श्रुत्वा स हि द्विजोत्तमः । त्यागे मतिं चकारासौ समाहूता व(त्व)हं तथा ॥
सकलं व[11]स्त्रशृङ्गारं मम दत्तं शुभे शृणु । तवैव दुर्नयैर्विप्रः शिवशर्मा द्विजोत्तमः ॥ ३२
गतो वै मतिमान्दुष्टे[12] कुलदुष्टप्रचारिणि । यत्र ते तिष्ठते भर्ता तत्र गच्छ न संशयः ॥
त्वया यद्रोचते स्थानं यथा दृष्टं तथा कुरु ॥ ३३
एवमुक्त्वा महाभागे पितृमातृकुटुम्बकैः । परित्यक्ता गता शीघ्रं निर्लज्जाऽहं वरानने ॥ ३४
न लभाम्यहमेवापि वासस्थानं सुखं शुभे । भर्त्सयन्ति च मां लोकाः पुंश्चलीयं समागता ॥ ३५
अटमाना गता देशात्कुलमानेन वर्जिता । देशे गुर्जरके पुण्ये सौराष्ट्रे शिवमन्दिरे ॥ ३६
व[13]नस्थलेति विख्यातं नगरं वृद्धिसंकुलम् । अतीव पीडिता देवी क्षुधयाऽहं य[14]दा शृणु ॥ ३७
कर्परं हि करे गृह्य भिक्षार्थमुपचक्रमे । गृहाणां द्वारदेशेषु प्रविशामि सुदुःखिता ॥ ३८
म[15]म रूपं विपश्यन्ति लोकाः कुत्सन्ति भामिनि । न ददति च मे भिक्षां पापा चेयं समागता ॥
एवं दुःखसमाचारा महारोगेण पीडिता । अटमाना य[16]दा दृष्टं गृहमेकमनुत्तमम् ॥ ४०
तुङ्गमाकारसंवेष्टं वेदशालासमन्वितम् । वेदध्वनिसमाकीर्णं बहुविप्रसमाकुलम् ॥ ४१
धनधान्यसमा[17]कीर्णं दासीदासैरलंकृतम् । प्रविवेश गृहं रम्यं लक्ष्म्या मुदितमेव तत् ॥ ४२

* एतच्चिह्नान्तर्गतः पाठो भ. पुस्तके नास्ति ।

१ ज.ङ. °हासुरः । दा° । २ ज. °स्मि धरातले । सा° । ग.घ.ट°स्मि वरानने । सा° । ३ ग. घ. ज. ट. ड. °क्त्वा ततस्तां च मा° । ४ ग. घ. ज. ट. ड. च वचनं तस्य श्रुत्वा दुःखातिदुःखिता । द° । ५ ज. दश मासा ग° । ढ. दशाहाश्च । ६ ग. घ. ज. ट. °तेजा दुःसहश्च म° । ७ ग. घ. ज. ट. गतः स्वर्गे न । ८ ग. घ. ट. निखिलं । ज. लिखितं । ९ ग. घ. ज. ट. तद्व्रज त्वं । १० ज °च–तयोक्तं वसुदत्तस्तु श्रु° । ११ ढ. वस्तुशृ° । १२ ट. °ष्टे वातदु° । १३ ङ. छ. ढ. °नस्थानेति । १४ ङ. छ. झ. ढ. तदा । १५ ग. घ. ज. ट. मलरू° । १६ ग. घ. ङ. छ. झ. ट. ढ. मया । १७ ग. झ. ज. ट. °मायुक्तं दासीदासेन संकुलम् ।

तद्गृहं सर्वतो भद्रं तस्यैव शिवशर्मणः । भिक्षां देहीत्युवाचार्थं सुदेवा दुःखपीडिता ॥ ४३
शिवशर्माऽथ शुश्राव भिक्षाशब्दं द्विजोत्तमः । मङ्गला नाम वै भार्या लक्ष्मीरूपा वरानना ॥ ४४
[*तां हसन्नाह धर्मात्मा शिवशर्मा महामतिः । हसन्तीं दुर्बलां प्राप्तां भिक्षार्थं द्वारमागताम् ४५
समाहूय प्रिये चैनां देहि त्वं भोजनं शुभे । कृपया परयाऽऽविष्टा ज्ञात्वा मां तु समागताम् ४६
प्रोवाच मङ्गला कान्तं दास्यामि प्रियभोजनम् । एवमुक्त्वा च भर्तारं मङ्गला मङ्गलान्विता ॥ ४७
पुनर्मां भोजयामास मिष्टान्नेन सुदुर्बलाम् । मामुवाच स धर्मात्मा शिवशर्मा महामुनिः ॥ ४८
का त्वमत्र समायाता कथं वा भ्रमसे जगत् । केन कार्येण सर्वत्र कथयस्व ममाग्रतः ॥ ४९
एवमाकर्ण्य तद्वाक्यं भर्तुश्चैव महात्मनः । स्वरेण लक्षितः कान्तो मया वै पापया तदा ॥ ५०
व्रीडयाऽधोमुखी जाता दृष्टो भर्ता यदा मया । मङ्गला चारुसर्वाङ्गी भर्तारमिदमब्रवीत् ॥ ५१
का चेयं हि समाचक्ष्व त्वां दृष्ट्वा हि विलज्जति । कथयस्व प्रसादेन का च एषा भविष्यति ५२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरित एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५९२७

---

अथ द्विपञ्चाशत्तमोऽध्यायः ।

---

शिवशर्मोवाच—

मङ्गले श्रूयतां वाक्यं यदि पृच्छसि सांप्रतम् । यदर्थं हि त्वया पृष्टं तन्निबोध वरानने ॥ १
इयं हि सांप्रतं प्राप्ता वराकी भिक्षुरूपिणी । वसुदत्तस्य विप्रस्य सुतेयं चारुलोचने ॥ २
सुदेवा नाम भद्रेयं मम जाया प्रिया सदा । केनापि कारणेनैव देशं त्यक्त्वा समागता ॥ ३
मम दुःखेन दग्धेयं वियोगेन वरानने । मां ज्ञात्वा सा समायाता भिक्षुरूपेण ते गृहम् ॥ ४
एवं ज्ञात्वा त्वया भद्र आतिथ्यं परिशोभनम् । कर्तव्यं च न संदेह इच्छन्त्या मम सुप्रियम् ॥५
भर्तुर्वाक्यं निशम्यैव मङ्गला पतिदेवता । हर्षेण महताऽऽविष्टा स्वयमेव सुमङ्गला ॥ ६
स्नानाच्छादनभोज्यं च मम चक्रे वरानने । रत्नकाञ्चनयुक्तैश्च भरणैश्च पतिव्रता ॥ ७
अहं हि भूषिता भद्रे तथैव पतिकाम्यया । तयाऽहं सुखिता देवि मानस्नानैश्च भोजनैः ॥ ८
भर्त्राऽहं मानिता भद्रे जातं दुःखमनन्तकम् । ममोरसि महातीव्रं सर्वप्राणविनाशनम् ॥ ९
तस्या मानं मया दृष्टमात्मनश्च सुदुष्कृतम् । चिन्ता मे दारुणा जाता यथा प्राणा व्रजन्ति मे १०
कदा सुवचनं दत्तं न मया पापया भृशम् । अस्यैव विप्रवर्यस्य ह्याचरन्त्या च दुष्कृतम् ॥ ११
पादप्रक्षालनं नैव चाङ्गसंवाहनं न हि । एकान्तं न मया दत्तं तस्यैव हि महात्मनः ॥ १२
कथं संभाष्यमस्यैव करिष्ये पापनिश्चया । रात्रौ चैव तदा तत्र पतिता दुःखसागरे ॥ १३
एवं हि चिन्तमानायाः स्फुटितं हृदयं मम । गताः प्राणाः शरीरं मे त्यक्त्वा तत्र वरानने ॥ १४

---

* एतच्चिह्नान्तर्गतः पाठो अ. पुस्तके नास्ति ।

---

१ ज. °थ तदाऽहं दुः° । २ ज. वराकीं । ३ ग. घ. ज. ट. ड. महामतिः । ४ ग. घ. ङ. छ. झ. ट. ड. कस्य । ५ ज. तत्सर्वं । ६ ग. घ. ज. ट. ड. °न कस्य का च भ° । ७ ज. °मे । त्वद्गेहे सां° । ८ ज. °ने । वसुदेवा नाम चेयं । ९ ग. घ. ज. °यं न मे जा° । १० ज. इत्युवाच मम प्रियः । भ° । ११ ग. घ. ज. ट. °श्च आसनैश्च । १२ क. ख. ग. घ. छ. ज. झ. ट. ड. यथा । १३ ज. मे पतितं धरणतिले । अ° ।

अथ दूताः समायाता धर्मराजस्य वै तदा । [*वीराश्च दारुणाः क्रूरा गदाचक्रासिधारिणः १५
तैस्तु बद्धा महाभागे शृङ्खलैर्दृढबन्धनैः । नीता यमपुरं तैस्तु रुदमाना सुदुःखिता ॥ १६
मुद्गरैस्ताड्यमानाऽहं दुर्गमार्गेण पीडिता । भर्त्स्यमाना यमस्याग्रे तैस्तत्राहं प्रवेशिता ॥ १७
दृष्टाऽहं यमराजेन सक्रोधेन महात्मना । अङ्गारसंचये क्षिप्ता क्षिप्ता नरकसंचये ॥ १८
लोहस्य पुरुषं कृत्वा अग्निना परितापितः । ममोरसि समुत्क्षिप्तो निजभर्तुश्च वञ्चनात् ॥ १९
नानापीडातिसंतप्ता नरकाग्निप्रतापिता । तैलद्रोण्यां परिक्षिप्ता करम्भवालुकोपरि] ॥ २०
असिपत्रैश्च संछिन्ना जलयन्त्रेण भ्रामिता । कूटशाल्मलिवृक्षेषु क्षिप्ताऽनेन महात्मना ॥ २१
सर्वेष्वेव नरकेषु क्षिप्ताऽहं नृपनन्दिनि । पीडायुक्तेषु तीव्रेषु तेनैवापि महात्मना ॥ २२
पूयशोणितविष्ठायां पातिता कृमिसंकुले । करपत्रैः पाटिताऽहं शक्तिभिस्ताडिता भृशम् ॥ २३
अन्येष्वेव नरकेषु पातिता नृपनन्दिनि । योनिवक्त्रे प्रक्षिप्ताऽस्मि पातिता दुःखकण्टके ॥ २४
धर्मराजेन तेनाहं नरकेषु निपातिता । बहुलां योनिमासाद्य भुक्तं दुःखं सुदारुणम् ॥ २५
गताऽहं क्रोष्टुकीं योनिं श्वानयोनिं पुनर्गता । सर्पकुक्कुटमार्जारीमाखुयोनिं गता ह्यहम् ॥ २६
एवं योनिविशेषेषु पापयोनिषु तेन च । क्षिप्ताऽस्मि धर्मराज्ञा वै पीडासु सर्वयोनिषु ॥ २७
तेनैवाहं कृता भूमौ शूकरी नृपनन्दिनि । तव हस्ते महाभागे सन्ति तीर्थान्यनेकशः ॥ २८
तेनोदकेन सिक्ताऽस्मि त्वयैव वरवर्णिनि । मम पापं गतं देवि प्रसादात्तव सुन्दरि ॥ २९
तवैव तेजःपुण्येन जातं ज्ञानं वरानने । इदानीमुद्धर त्वं मां पतितां नर्के[1]संकटात् ॥ ३०
यदा नोद्धरसे देवि पुनर्यास्यामि दारुणाम् । नर्कयोनिं महाभागे त्राहि मां दुःखभागिनीम् ॥
गताऽहं पापभावेन दीनाऽहं च निराश्रया ॥ ३१

सुश्रवोवाच—

किं कृतं हि मया भद्रे सुकृतं पुण्यसंभवम् । येनाहमुद्धरे त्वां वै तन्मे वद[2]स्व सांप्रतम् ॥ ३२

शूकर्युवाच—

अयं राजा महाभाग इक्ष्वाकुर्मनुनन्दनः । विष्णुरेष महाप्राज्ञो[3] भवती श्रीर्हि नान्यथा ॥ ३३
पतिव्रता महाभागा पतिव्रतपरायणा । त्वं सती स[4]र्वदा भद्रे सर्वतीर्थमयी प्रिया ॥ ३४
देवी सर्वमयी नित्यं देवी सर्वमयी सदा । महापतिव्रता लोक ए[5]का त्वं नृपतेः प्रिया ॥ ३५
यथा शुश्रूषितो भर्ता भवत्या[6] हि न संशयः । एकस्य दिवसस्यापि पुण्यं देहि वरानने ॥ ३६
पतिशुश्रूषितस्यापि यदि मे कुरुषे प्रियम् । मम माता पिता[7] त्वं वै त्वं मे गुरुः सनातनः ॥ ३७
अहं पापा दुराचारा अ[8]सत्या ज्ञानवर्जिता । मामुद्धर महाभागे भीताऽहं यमताडनात् ॥ ३८

सुकलोवाच—

एवं श्रुत्वा तदा राज्ञी समालोक्य नृपं तदा । किं करोमि महाराज एषा किं वदते प्रभो ॥ ३९

---

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. ड. पुस्तकस्थः ।

---

१ ग. घ. ट. नर्कसंकटे । ज. नरकार्णवे २ ग. घ. ज. ड. सुदेवो॰ । ३ ग. घ. ज. ट. ड. ॰द सुनिश्चित॰ । ४ ग. घ. ट. सत्यसंपन्ना पुण्यस्त्री सत्यसंपदा । सर्वतीर्थमयी देवी सर्वतीर्थमयी । ज. सत्यसंपन्ना पुण्यस्त्री सत्यसंपदा । सर्वतीर्थमयी देवी सर्वपुण्यमयी तथा । महा॰ । ५ ज. एतस्य नृ॰ । ६ ग. घ. ज. ट. ॰त्या एकचित्तया । ए॰ । ङ. ढ. ॰त्या नु अहर्निशम् । ए॰ । छ. ॰त्या पुण्यकारणात् । ए॰ । ङ. ॰त्या त्वेकचित्तया । ए॰ । ७ ग. घ. ज. ट. ङ. ॰ताऽपि त्वं बन्धुस्त्वं च गुरुः सखा । अ॰ । ८ ज. असती ।

इक्ष्वाकुरुवाच—

एतां दुःखां वराकीं वै पापयोनिं गतां शुभे । समुद्धर स्वपुण्यैस्त्वं महच्छ्रेयो भविष्यति ॥ ४०
एवमुक्ता वरा नारी सुश्रवा चारुमङ्गला । वर्षैकस्य सुपुण्यं ते मया दत्तं वरानने ॥ ४१
एवमुक्तेन वाक्येन तया देव्या हि तत्क्षणात् । रूपयौवनसंपन्ना दिव्यमालाविभूषिता ॥ ४२
दिव्यदेहा च संभूता तेजोज्वालासमाकुला । सर्वभूषणशोभाढ्या नानारत्नैश्च शोभिता ॥ ४३
संजाता दिव्यरूपा सा दिव्यगन्धानुलेपना । दिव्यं विमानमारूढा अन्तरिक्षं गता सती ॥ ४४
तामुवाच ततो राज्ञीं प्रणता नतकन्धरा । स्वस्त्यस्तु ते महाभागे प्रसादात्तव सुन्दरि ॥ ४५
व्रजामि पातकान्मुक्ता स्वर्गं पुण्यतमं शुभम् । प्रणम्यैव गता स्वर्गं सुदेवा शृणु सत्तम ॥ ४६
एतत्ते सर्वमाख्यातं सुकलाया निवेदितम् ॥ ४७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते सुदेवास्वर्गारोहणं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—५९७४

---

अथ त्रिपञ्चाशत्तमोऽध्यायः ।

---

सुकलोवाच—

एवं धर्मं श्रुतं पूर्वं पुराणेषु मया तदा । पतिहीना कथं भोगं करिष्ये पापनिश्चया ॥ १
कान्तेन तु विना तेन जीवं काये न धारये । एवमुक्त्वा परं धर्मं पतिव्रतमनुत्तमम् ॥ २
तास्तु सत्यपरा नार्यो हर्षेण महताऽन्विताः । श्रुत्वा धर्मं परं पुण्यं नारीणां गतिदायकम् ॥ ३
स्तुवन्ति तां महाभागां सुकलां धर्मवत्सलाम् । ब्राह्मणाः सुस्वराः सर्वे पुण्यस्त्रियो नरोत्तम ॥ ४

विष्णुरुवाच—

तस्या ध्यानप्रभावं तु पतिकामप्रभावताम् । अत्यर्थं दृष्टवानिन्द्रः सुविचिन्त्य सुरेश्वरः ॥ ५
सुकलायाः परं भावं सुविचार्य नरेश्वर । अचलं धैर्यमस्याश्च पतिष्येऽहं न संशयः ॥ ६
सस्मार मन्मथं देवं त्वरमाणः सुराधिपः । पुष्पचापं स संगृह्य मीनकेतुः समागतः ॥ ७
प्रियया तया समायुक्तो रत्या दृष्टो महाबलः । बद्धाञ्जलिपुटो भूत्वा सहस्राक्षमुवाच सः ॥ ८
कस्मादहं त्वया नाथ अधुना संस्मृतो विभो । आदेशो दीयतां मेऽद्य सर्वभावेन मानद ॥ ९

इन्द्र उवाच—

सुकलेयं महाभागा पतिव्रतपरायणा । शृणुष्व कामदेव त्वं कुरु साहाय्यमुत्तमम् ॥ १०
निकर्षिष्ये महाभागां सुकलां पुण्यमङ्गलाम् । [*तच्छ्रुत्वा वचनं तस्य शक्रस्य तमथाब्रवीत्] ११
एवमस्तु सहस्राक्ष करिष्यामि न संशयः । साहाय्यं देवदेवेश तव कौतुककारणात् ॥ १२
एवमुक्त्वा महातेजाः कन्दर्पो मुनिदुर्जयः । देवाञ्जेतुं समर्थोऽहं समुनीनृषिसत्तमान् ॥ १३
किं पुनः कामिनीं देव यस्याङ्गे नास्ति वै बलम् । कामिनीनामहं देव अङ्गेषु निवसाम्यहम् १४

---

* एतच्चिह्नान्तर्गतोऽयं पाठो ज.पुस्तकस्थः ।

---

१ ज. °क्ता तदा राज्ञी सु° । २ ग. घ. ज. ट. ड. सुदेवा । ३ ग. घ. ज. ट. ड. पुण्यं । ४ ज. °र्मं सा चचाल पतिव्रता । ता° । ५ ज. बान्धवाः । ६ ङ. ढ. °ह्मणाश्च सुराः । ७ ज. °स्वराश्चैव पुण्याश्चैव स्त्रियो नृप । वि° । ८ ज. मू° । धर्षयिष्य इमां कामं साहाय्यं कुरु सांप्रतम् । तं° ।

भाले कचेषु नेत्रेषु कुचाग्रेषु च सर्वदा । नाभौ कटौ पृष्ठदेशे जघने योनिमण्डले ॥ १५
अधरे दन्तभागेषु कक्षायां हि न संशयः । [*अङ्गेष्वेवं प्रत्यङ्गेषु सर्वत्र निवसाम्यहम् ॥ १६
नारी मम गृहं देव सदा तत्र वसाम्यहम् । तत्रस्थः पुरुषान्सर्वान्मारयामि न संशयः ॥ १७
स्वभावेनाबला नारी संतप्ता मम मार्गणैः । भ्रातरं पितरं दृष्ट्वा अन्यं स्वजनबान्धवम् ॥ १८
सरूपं सगुणं देव मम बाणाहता सती । ] चलते नात्र संदेहो विपाकं[१] नैव चिन्तयेत् ॥ १९
योनिः स्पन्दति[२] नारीणां स्तनौ चैव सुरेश्वर । नास्ति धैर्यं सुरेशान सुकलां नाशयाम्यहम् ॥ २०

इन्द्र उवाच—

पुरुषोऽहं भविष्यामि रूपवान्गुणवान्धनी । कौतुकार्थमिमां नारीं चालयामि मनोद्भव ॥ २१
[†नैव कामान्न संत्रासान्न वा लोभान्न कारणात् । न वै मोहान्न वै क्रोधात्सत्यं सत्यं रतिप्रिय २२
कथं मे दृश्यते तस्या महत्सत्यं पतिव्रतम् । निष्कर्षिष्य इतो गत्वा भवन्मोहोऽत्र कारणम् ॥ २३
एवं कामं च संदिश्य जगाम सुरराट् स्वयम् ] । मन्मथाकृतिः संभूतो रूपवान्गुणवान्स्वयम् ॥ २४
सर्वाभरणशोभाङ्गः सर्वभोगसमन्वितः । भोगलीलासमाकीर्णः सर्वदौदार्यसंयुतः[३] ॥ २५
यत्र सा तिष्ठते देवी कृकलस्य प्रिया नृप । आत्मलीलां च रूपं च गुणभावं प्रदर्शयेत् ॥ २६
नैव पश्यति सा तं तुं[४] पुरुषं रूपसंपदम् । यत्र यत्र व्रजेत्सा हि तत्रे[५] तां पश्यते नृप ॥ २७
साभिलाषेण मनसा तामेवं परिपश्यति । कामचेष्टां सहस्राक्षो दर्शयन्सर्वभावकैः ॥ २८
चतुष्पथे पथे तीर्थे यत्र देवी प्रयाति सा । तत्र तत्र सहस्राक्षस्तामेव परिपश्यति ॥ २९
इन्द्रेण प्रेषिता दूती तत्पार्श्वं प्रति सा गता । सुकलां च महाभागां प्रत्युवाच प्रहस्य वै ॥ ३०
अहो सत्यमहो धैर्यमहो कीर्तिरहो[६] क्षमा । अस्या रूपेण[७] संसारे नास्ति नारी वरानना ॥ ३१
का त्वं भवसि कल्याणि कस्य भार्या भविष्यासि । यस्य त्वं सगुणा भार्या स धन्यः पुण्यभाग्भुवि ॥
तस्यास्तु वचनं श्रुत्वा तामुवाच मनस्विनी[८] । वैश्यजात्यां समुत्पन्नो धर्मात्मा सत्यवत्सलः ॥ ३३
तस्याहं हि प्रिया भार्या सत्यसंधस्य धीमतः । कृकलस्यापि वैश्यस्य सत्यमेव वदामि ते ॥ ३४
मम भर्ता स धर्मात्मा तीर्थयात्रां गतः सुधीः । तस्मिन्गते महाभागे मम भर्तरि सांप्रतम् ॥ ३५
अतिक्रान्ताः शृणुष्व त्वं त्रयश्चैवापि वत्सराः । ततोऽहं दुःखिता जाता विना तेन महात्मना ३६
एतत्ते सर्वमाख्यातमात्मवृत्तान्तमेव च । भवती पृच्छंती[९] का मां भविष्यति वदस्व मे ॥ ३७
सुकलाया वचः श्रुत्वा दूत्या आभाषितं पुनः । मामेवं पृच्छसे भद्रे तत्ते सर्वं वदाम्यहम् ॥ ३८
अहं तवान्तिकं प्राप्ता कार्यार्थं वरवर्णिनि । श्रूयतामभिधास्यामि श्रुत्वा चैवावधार्यताम् ॥ ३९
गतस्ते निर्घृणो भर्ता त्वां त्यक्त्वा तु वरानने । किं करिष्यासि तेनापि [*प्रियाघातकरेण च ॥
यस्त्वां त्यक्त्वा गतः पापी साध्व्याचारसमन्विताम् । किं वा स ते गतो बाले तत्र जीवति वै मृतः ॥
किं करिष्यति तेनापि] भवती खिद्यते वृथा । कस्मान्नाशयसे त्वं च देहं हेमसमप्रभम् ॥ ४२
बाल्ये वयसि संप्राप्ते मानवो न च विन्दति । एकं सुखं महाभागे बालक्रीडां विना शुभे ॥ ४३

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ट. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. ड. पुस्तकस्थः ।
* एतच्चिह्नान्तर्गतः पाठो ग. घ. छ. ज. झ. ट. ड.पुस्तकस्थः ।

१ ग. घ. ज. ट. पातकं । २ अ. स्कन्दति । ३ ग. घ. ट. ड. सर्वावयवसं । ज. सर्वावयवसुंदरः । यं । ४ ग. घ. ज. ट. ड. तु सुरूपं नृपसं । ५ ग. घ. ट. ड. °त्र तत्र व्रजेन्नृप । ६ ग. घ. ङ. छ. ज. झ. ड. ढ. °हो कान्तिर° । ७ ज. सदृशी । ८ ग. घ. ज. ट. ड. यशस्विनी । ९ ग. घ. ज. ट. °च्छति का त्वं हसिष्यासि व° ।

वार्धक्ये दुःखसंप्राप्तिर्जरा कार्यं प्रहारयेत् । तारुण्ये भुज्यतां भोगाः सुखान्सर्वान्वरानने ॥ ४४
यावत्तिष्ठति तारुण्ये तावद्भुञ्जति मानवः । सुखभोगादिकं सर्वं स्वेच्छया सेवते नरः ॥ ४५
यावत्तिष्ठति तारुण्यं तावद्भोगान्प्रभुञ्जते । वयस्यपि गते भद्रे तारुण्ये किं करिष्यसि ॥ ४६
संप्राप्ते वार्धके देवि किंचित्कार्यं न सिध्यति । स्थविरश्च तपः कर्तुं सुखकार्यं न गच्छति ॥ ४७
व(प)यस्यपि गते बाले क्रियते सेतुबन्धनम् । तादृशोऽयं भवेत्कायस्तारुण्ये तु गते शुभे ॥ ४८
तस्मात्सुसंमुखेनापि पिबस्व मधुमाधवीम् । काम एष दहत्यङ्गं तवेदं चारुलोचने ॥ ४९
अयमेकः समायातः पुरुषो रूपवान्गुणी । अयं हि पुरुषव्याघ्रः सर्वज्ञो गुणवान्धनी ॥ ५०
तवार्थे नित्यसंयुक्तः स्नेहेन वरवर्णिनि । वृद्धत्वं नास्ति चैवास्य स्वयं सिद्धः सुसिद्धिदः ॥५१
अजरो निर्जरो व्यापी सुसिद्धः सर्ववित्तमः । अकामः कामदो लोक आत्मरूपेण वर्तते ॥ ५२
यथा गेहस्य संस्थानं तथा गेहस्य दृश्यते । यथा वार्धकिना कायो यथा सूत्रेण मन्दिरम् ॥ ५३
अश्मकाष्ठसुसंपन्नैर्नानादारुसमुद्भवैः । मृत्तिकाष्ठो(?)दकेनापि प्रमाता परिमाणयेत् ॥ ५४
लेपितं लेपनैः काष्ठं चित्रं भवति चित्रकैः । प्रथमं रूपमायाति गृहं सूत्रेण मूलतः ॥ ५५
पुष्णन्ति(ष्णाति) च स्वयं तत्तु लेपनाद्वै दिने दिने । वायुना दोलितं नित्यं गृहं च मलिनायते ॥ ५६
मध्यमो वास्तुतः(?) कालो गृहस्य परिकथ्यते । रूपहानिर्भवेत्तस्य गृहस्वामी विलेपयेत् ॥ ५७
स्वेच्छया च गृहस्वामी रूपवन्तं नयेद्गृहम् । [10]संपन्ने(?) तस्य गेहस्य दूतिके परिकथ्यते ॥ ५८
काष्ठशिल्पस्य शीर्णत्वं बहुकालैः [11]प्रयाति(?) ते ॥

सुकलोवाच—

बाल्यं नास्त्यपि जीवस्य तारुण्यं नास्ति जीविते[12][13] । स्थानभ्रष्टा प्रजायन्ते मूलाग्रं[15] प्रचलन्ति ते ५९
न [14]सहेल्लेपनाभारमाधारेण प्रतिष्ठति । एतद्गृहस्य वार्धक्यं कथितं शृणु दूतिके ॥ ६०
पतमानं गृहं गत्वा गृहस्वामी परित्यजेत्[16] । गेहमन्यं प्रविन्देद्यः प्रयात्येवं हि सत्वरम् ॥ ६१
तथा बाल्यं च तारुण्यं नृणां वृद्धत्वमेव च[17] । स बाल्ये बालरूपश्च ज्ञानहीनं प्रकारयेत् ॥ ६२
चिन्तयेत्काममेवापि वस्त्रालंकारभूषणैः । लेपनैश्चन्दनैश्चान्यैस्ताम्बूलप्रभवादिभिः ॥ ६३
[18]कार्यैस्तारुण्यतां याति अतिरूपो विजायते । बाह्याभ्यन्तरमेवापि[19] रसैः सर्वैः प्रपोषयेत् ॥ ६४
तेन पोषणभावेन [20]परिपुष्टः प्रजायते । जायते मांसवृद्धिस्तु रसैश्चापि नृपोत्तम ॥ ६५
याति विस्तरतां राजन्नङ्गान्याप्यायितान्यपि । प्रत्यङ्गानि रसैश्चैव स्वं स्वं रूपं प्रयान्ति वै ॥६६
दन्ताधरौ स्तनौ बाहू कटिपृष्ठे ऊरू उभे । हस्तपादतलौ तद्वद्वुद्धितत्त्वं तु च प्रपेदिरे ॥ ६७
उभाभ्यामपि तान्येव[21] वृद्धिमायान्ति तानि वै । अङ्गानि रसमांसाभ्यां स्वरूपाणि भवन्ति ते ॥६८
तैः स्वरूपैर्भवेन्मर्त्यो रसवृद्धश्च दूतिके । स्वरूपः कथ्यते मर्त्यो लोके केन[22] प्रियो भवेत् ॥ ६९

१ ग. ज. ड. °रुण्यं तावत्तिष्ठति । २ ग. घ. ज. °रुण्यं किं करिष्यति । सं° । ३ ज. °ने । वनेऽत्रैकः । ४ ग. घ. ङ. °रुषः प्राप्तः स° । ५ ग. घ. ट. ङ. °संगुप्तः स्ने° । ६ ट. देहस्य । ७ ङ. ट. °किकः कायस्तथा । ८ ङ. सूत्रितम् । ९ ज. ट. °नार्थैर्दिने । १० ङ. ढ. तारुण्यं । ११ ङ. नः । १२ ग. घ. ज. ट. ङ. दूतिके । १३ घ. °ते । ध्यानस्थानं प्रजायन्ते सूत्रोऽयं प्रबल° । ट. °ते । ध्यानस्थानं प्रजायेत सूत्रोऽयं प्रचलायते । १४ ग. घ. ट. °हेत्तज्जराभावमा° । १५ ग. घ. ज. ट. °के । एतन्मात्रं गृहं ज्ञात्वा । ङ. °के । एतन्मात्रगृ° । १६ ग. घ. ज. गेहं सत्यं प्र° । १७ ग. घ. ज. ट. च । संपन्ने बाल्यरूपे च ज्ञा° । ज. वा । १८ ग. घ. ङ. °यस्तु वशतां याति मुनिरू° । १९ ग. घ. °पि सर्वैः सर्वैः प्र° । ज. °पि सर्वैः सर्वे प्र° । ट. °पि सर्वैः पूर्वैः प्र° । २० क. ख. ग. घ. छ. ज. झ. ट. ङ. °रितुष्टः । २१ ग. घ. ज. ट. °व बुद्धिं । २२ ग. घ. ज. झ. ट. ङ. °न. प्रशोभते । वि° ।

विष्ठामूत्रस्य वै कोशः काय एष च दूतिके । अपवित्रं शरीरे[1]ऽयं सदा स्रवति निर्घृणः ॥ ७०
तस्य किं वर्ण्यते रूपं जलबुद्बुदवच्छुभे । यावत्पञ्चाशद्वर्षाणि तावत्तिष्ठति वै दृढः ॥ ७१
पश्चाच्च जायते हानिरस्यैवापि दिने दिने । दन्ताः शिथिलतां यान्ति लालायते तथा मुखम् ॥ ७२
चक्षुर्भ्यामपि न पश्येत्कर्णाभ्यां न शृणोति च । गन्तुं कर्तुं न शक्नोति हस्तपादैश्च दूतिके ७३
अक्षमो जायते कायो जराकालेन पीडितः । तद्रसः शोषमायाति तदा[3]ऽग्निना प्रशोषितः ॥
अक्षमो जायते दूति केन रूपमिहेष्यते ॥ ७४
यथा जीर्णे गृहे याति क्षयमेव न संशयः । तथा संक्षयमायाति वार्धक्ये तु कलेवरम् ॥ ७५
मम रूपं समं जातं वर्णस्येव दिने दिने । केनाहं रूपसंयुक्ता केन रूपत्वमिष्यते ॥ ७६
यथा जीर्णो गृहो याति केनासौ पुरुषो बली । यस्यार्थमागता दूति भवति केन संशयः ॥ ७७
किमत्रैव त्वया दृष्टं ममाङ्गे वद सांप्रतम् । तस्याङ्गादिह मे दूति नास्ति चाधिकमेव च ॥ ७८
यथा त्वं च तथाऽसौ वै तथाऽहं नात्र संशयः । कस्थं रूपं न विद्येतं रूपं स्त्री नास्ति भूतले ॥ ७९
उच्छ्रयाः पतनान्ताश्च नगास्तु गिरयः शुभे । कालेन पीडिता यान्ति तद्वद्भूतानि नान्यथा ॥ ८०
अरूपो रूपवान्दिव्य आत्मा सर्वगतः शुभे । स्थावरेषु च सर्वेषु जङ्गमेष्वेव दूतिके ॥
एको निवसते शुद्धो घटेष्वेव यथोदकम् ॥ ८१
घटनाशात्प्रयात्येकमेकत्वं तत्र बुध्यसे । पिण्डनाशाय पश्चात्मा एकरूपोऽपि जायते ॥ ८२
एकं रूपं मया दृष्टं संसारे वसतां सदा । एवं वदस्व तं गत्वा यस्यार्थमिह चाऽऽगता ॥ ८३
दर्शयस्व अपूर्वं मे यदि मां भोक्तुमिच्छसि । व्याधिना पीड्यमानस्य कफेनापि [*वृतस्य च ८४
अङ्गाद्विचल(लि)ते शोणे स्थानभ्रष्टोऽभिजायते । अङ्गसंधिषु सर्वासु पलत्वं चान्तरङ्गतः ॥
एकतो नाशमायाति स्वं हि रूपं परित्यजेत् ॥ ८५
विष्ठात्वं जायते शीघ्रं क्रिमिभिश्च भवेत्किल । तद्वद्दुःखकरे वाऽपि निजरूपं] परित्यजेत् ॥ ८६
रूपत्वं याति वै पश्चात्क्रमिदुर्गन्धिसंकुलः । जायन्ते तत्र वै यूकाः कृमित्वं वा न संशयः ॥ ८७
स कृमिः कुरुते स्फोटं कण्डुश्च परिदारुणा । व्यथामुत्पादयेत्पूयः सर्वाङ्गं परिचालयेत् ॥ ८८
नखाग्रैर्घृष्यमाणा सा कण्डूशान्तिः प्रजायते । [†तद्वत्तैश्च शृणुष्वैव सुरतस्य न संशयः ॥ ८९
भुञ्जत्येव रसान्मर्त्यः सुभिक्षान्पिबते पुनः । वायुना तेन प्राणेन पाकस्थानं प्रणीयते ॥ ९०
यदुक्तं प्राणिभिर्दूति पाकस्थानं गतं पुनः । सर्वं तद्वेहितं तत्र मया वै पातयेन्मलम् ॥ ९१
सारभूतो रसस्तत्र तद्रक्तश्च प्रजायते] । निर्मलः शुद्धवीर्यं च ब्रह्मस्थानं प्रयाति च ॥ ९२
आकृष्टः स समानेन नीतस्तेनापि वायुना । स्थानं न लभते वीर्यं चञ्चलत्वेन वर्तते ॥ ९३
प्राणिनां च कपालेषु क्रिमयः सन्ति पञ्च वै । द्वावेतौ कर्णमूले तु नेत्रस्थाने ततः पुनः ॥ ९४
कनिष्ठाङ्गुलिमानेन रक्तपुच्छाश्च दूतिके । अतसीपुष्पवर्णेन कृष्णपुच्छा न संशयः ॥
तेषां नामानि भद्रं ते मत्तो निगदतः शृणु ॥ ९५

---

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ग. घ. पुस्तकस्थः ।

---

१ म. 'रीरोऽयं । २ च. 'त्पञ्चसहस्राणि । ३ ग. घ. ङ. 'ति जठराग्निप्रशो' । ङ. छ. ढ. 'ति जराग्नितापशो' । ४ अ. 'पत्वमिष्य' । ५ म. दूती भवन्ति के' । ६ ग. घ. ज. ट. 'ति किमस्त्याधि' । ७ ग. घ. ज. 'ति यं प्रशंसति । कि' । ङ. 'ति ममातीव प्रशंससि । कि' । ८ म. 'स्य पश्य न वि' । ९ अ. 'त स्वानाना' । १० ग. घ. ज. ट. 'त्प्रयोज्यैवमे' । ११ ग. 'लत्वमनुरागतः ।

पिङ्गला शृङ्गली नाम द्वौ कृमी कर्णमूलयोः[2] । चपलः पिप्पलश्चैव द्वावेतौ नासिकाग्रयोः ॥ ९६
शृङ्गली जङ्गली चान्ये नेत्रयोरन्तरस्थितौ । कृमीणां शतपञ्चाशत्ता[3]दृग्रूपा न संशयः ॥ ९७
[*भालान्तेऽवस्थिताः सर्वे राजिकायाः प्रमाणतः । कपालरोगिणः सर्वे विकुर्वन्ति न संशयः॥
अन्यमेवं प्रवक्ष्यामि पुत्रौत्पत्त्यं महाक्रिमिम् । तण्डुलस्य प्रमाणेन तद्वद्वर्णो न संशयः ॥ ९९
केशद्वयं मुखे तस्य विद्यते शृणु दूतिके । प्राणिनां संक्षयं विद्धि तत्क्षणे हि न संशयः] ॥ १००
[4]स्वैस्थाने संस्थितस्यापि प्राजापत्यस्य वै मुखे । तद्वीर्यरसरूपेण पततेनात्र संशयः ॥ १०१
पिबते मुखेन तद्वीर्यं तेन मत्तः प्रजायते । तालुस्थाने[5] प्रतोद्यैव चञ्चलत्वेन वर्तते ॥ १०२
इडा च पिङ्गला नाडी[6] सूक्ष्मतामवसंस्थिता । [7]सुचलेनापि तस्यैव नाडिका जाल(लं)कम्पते ॥ १०३
कामकण्डूर्भवेद्दूति सर्वेषां प्राणिनां किल । पुंसश्च स्फुटते लिङ्गं नार्या योनिश्च दूतिके ॥ १०४
स्त्रीपुंसौ प्रसंपन्नौ तौ व्रजेते संगमं ततः । कायेन कायः संघृष्य मैथुनेन हि जायते ॥ १०५
क्षणमात्रं च वै सौख्यं पुनः कण्डूश्च तादृशी । सर्वत्र दृश्यते दूति भावमेवंविधं किल ॥ १०६
व्रज त्वमात्मनः स्थानं नैवास्त्यत्र अपूर्वता । अपूर्वं नास्ति मे किंचित्करोम्येवं न संशयः॥१०७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६०८०

---

अथ चतुष्पञ्चाशत्तमोऽध्यायः ।

---

विष्णुरुवाच—

एवमुक्ता गता दूती तया सुकलया तदा । समासेन सुसंप्रोक्तमवधार्य पुरंदरः ॥ १
तदर्थं भाषितं तस्याः सत्यधर्मसमन्वितम् । आलोच्य साहसं धैर्यं ज्ञानमेव पुरंदरः ॥ २
ईदृशं न वदेत्काचिन्नारी भूत्वा महीतले । योगरूपं सुसिद्धं च ज्ञानोदकेन क्षालितम् ॥ ३
पवित्रेयं महाभागा सत्यरूपा न संशयः । त्रैलोक्यं हि समस्तं तु एषा धर्तुं भवेत्क्षमा ॥ ४
एतदर्थं विचार्यैव जिष्णुः कन्दर्पमब्रवीत् । त्वया सह गमिष्यामि [11]द्रष्टुं तां कृकलां(ल)प्रियाम्॥५
प्रत्युवाच सहस्राक्षं मन्मथो बलदर्पितः । गम्यतां तत्र देवेश यत्राऽऽस्ते सा पतिव्रता ॥ ६
[12]ज्ञानं वीर्यं बलं धैर्यं तस्याः सत्यं पतिव्रतम् । गत्वाऽहं नाशयिष्यामि कियन्मात्रा(त्रं) सुरेश्वर ७
समाकर्ण्य सहस्राक्षो वचनं मन्मथस्य च । भो भो दूत शृणुष्व त्वमधिकं भाषितं त्वया ॥ ८
सुदृढा सत्यवीर्येण सुस्थिरा धर्मकर्मभिः । सुकलेयमजेया वै तत्र ते पौरुषं न हि ॥ ९
इत्याकर्ण्य ततः क्रुद्धो मन्मथस्त्विन्द्रमब्रवीत् । ऋषीणां देवतानां च मया बलं प्रणाशितम् ॥१०
अस्या बलं कियन्मात्रं भवेन्मम प्रकथ्यताम् । त्वं च पश्यस्व देवेश नाशयिष्यामि तां स्त्रियम्॥
भवन्तं वै यथा चाग्रे ततो दृष्ट्वा त्वरं व्रजेत् । तथेमां भावयिष्यामि रूपेण स्वेन तेजसा ॥ १२

---

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ज. ट. ड. पुस्तकस्थः ।

---

१ ग. घ. ज. ड. °ङ्गली पिङ्गला ना° । २ ग. घ. ज. °योः । पुंश्चली पुंश्चली° । ड. °योः । पुंश्चली शृङ्गली । ३ छ.ड.ढ. °दृग्भूता न । ४ ग. घ. ज. ट. ड. संस्थाने । ५ ग. ज. ड. °स्थानं प्रमेहौ च च° । ६ ङ. °डी सुषुम्नाख्या च सं° । ७ ग. सुरा नरापि तस्यैव कृष्णवर्णश्च कथ्यते । ज. ड. सुराननाऽपि तस्यैव कृष्णवर्णश्च कथ्यते । ८ ग. घ. ज. ट. ड. पुनः । ९ ग. घ. ज. ट. ड. °वै भाषसे किं° । १० ग भावितं । ११ ग. घ. ज. ट. ड. प्रष्टुं । १२ क.ख.ङ.च.छ.झ.ड. ढ. मानं ।

गच्छ तत्र महत्कार्यमुत्पाद्यं सांप्रतं ध्रुवम् । कस्मात्कुत्ससि मे तेजस्त्रैलोक्यस्य विनाशनम् ॥ १३

विष्णुरुवाच—

आकर्ण्य वाक्यं तु मनोभवस्य एषा न साध्या तव काम जाने ।
धर्मेण वीर्येण सुसत्यभावा पुण्येन पुण्या बहुपुण्यचारा ॥ १४
पश्यामि तेजो बलमुग्रवीर्यमितो हि गत्वा च धनुष्मता वै ।
तेनापि सार्धं प्रजगाम देवो रत्या च दूत्या च पतिव्रतां ताम् ॥ १५
एकां सुपुण्यां स्वगृहे स्थितां तां ध्याने प्रलीनां परिहर्तुकामाम् ॥
यथासुयोगं परिध्यायमानां विकल्पहीनां न च कल्पयेत्कः ॥ १६
अत्यद्भुतं रूपमनन्यतेजःकन्दर्पयुक्तं हि सतां प्रमोदम् ॥
लीलायुतं भावयुतं महात्मा तस्याग्रमेवं च पुनर्ददर्श ॥ १७
दृष्ट्वा सुलीलं पुरुषं महान्तं चरन्तमेवं परिकामभावम् ॥
जाया हि वैश्यस्य महात्मनस्तु मेने न सा रूपगुणं न तेजः ॥ १८
जलं यथा पद्मदले गतं वै प्रयाति दूरं च दलं विहाय ॥
शङ्काकुलं मानसमेव सद्यः संजातमस्यास्तु पतिव्रतायाः ॥ १९
अनेन दूती परिप्रेषिता पुरा तं तु ब्रुवत्येव गुणज्ञमेनम् ॥
लीलास्वरूपं बहु आत्मभावं मामेव सर्वं परिदर्शयेद्यः ॥ २०
ममैव कालं प्रबलं प्रबुद्ध्वा गते हि कान्ते स्वगुणौघशृङ्खलैः ॥
रत्या समेतः स कथं तु जीवेत्पत्या स्वभावेन प्रसादितं च (?) ॥ २१
ममापि भावं परिगृह्य कान्तोऽजीवत्क्रियान्वाऽपि सुबुद्धियुक्तः ॥
शून्यो हि कायो मम चास्ति सद्यश्चेष्टाविहीनो मृतकल्प एव ॥ २२
कायस्वयानस्य प्रजाः प्रनष्टा सुहृत्क्रियाख्यं परिगृह्य कर्म ॥
ममापि केनापि समं तु कान्तं स ऊर्ध्वशोभामनयच्च कामः ॥ २३
यदा स्तुतो वचनैर्हर्षयुक्तः स्वकन्धरोपरि नृत्यमानः ॥
दत्त्वा अनेनापि प्रभाषयेद्ध्रुवं यो मां हि वाञ्छत्यपि भोक्तुकामः ॥ २४
एवं विचार्यैव तदा महासती सत्याख्यरज्ज्वा विनिबद्धतेजाः ॥
ज्ञात्वा गृहान्तः प्रविवेश सा तदा स्वकान्तभावं निजमेव रक्ता ॥ २५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६१०९

---

१ ग. घ. ज. ॰त्यराता पु॰ । ङ. ॰त्यदेहा पु॰ । २ ग. ॰रिभर्तुगुक्ताम् । ३ ग. घ. ञ. ॰कत्थहीनां नरकस्य एकाम् अ॰ । ४ ञ. ॰नां तु रहस्य एकाम् । अ॰ । ५ क. ख. ग. घ. च. छ. झ. ट. ड. ढ. प्रमोहम् । ६ क. ख. ङ. च. छ. झ. ट. ड. ढ. भोगयुतं । ७ क. ख. ङ. च. छ. झ. ढ. ॰वेतसत्यात्मभारेण प्रमर्दितश्च । म॰ । ङ. ॰वेतसत्याश्च भा॰ । ८ क. ख. ङ. च. छ. झ. ड. ढ. कामस्य प्रामस्य । ९ ग. घ. ज. ट. ड. ॰हृत्कृपाख्यं । १० क. ख. ग. घ. झ. ढ. ॰भामनमेथकायः । य॰ । ११ झ. ॰उज्वा नियतं विचेतः ।

अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

---

विष्णुरुवाच—

भावं विदित्वा सुरराट् तु तस्याः प्रोवाच कामं पुरतः स्थितं तम् ॥
न चास्ति शक्या सुकला विजेतुं सत्यात्मकं ध्यानमुदंशिता(?)सती ॥ १
धर्माख्यचापं स्वकरे गृहीत्वा जानाति ध्यानं वरमेकबाणम् ।
योद्धुं रणे संप्रति संस्थिता सती वीरो यथा दर्पितवीर्यभावैः ॥ २
जिगीषतेयं पुरुषार्थमेव त्वमात्मयुक्तः कुरु पौरुषं तु ।
देवा न जेतुं सुकलां समर्था यद्भव्यमेवं हि मयैव चिन्त्यम् ॥ ३
दग्धोऽसि पूर्वं त्वमिहैव शंभुना महात्मनोऽनेन समं विरोधम् ।
कृत्वा फलं तस्य विकर्मणश्च प्राप्तोऽस्यलं भस्म सुसत्यमेव ॥ ४
यथा पुरा कर्म कृतं त्वया स्मर प्रारब्धमेवं तु तथैव तीव्रम् ।
सुकुत्सितां कीर्तिमवाप्स्यसि ध्रुवं साध्वी मया सार्धमिहैव कुप्यते ॥ ५
येऽज्ञानवन्तः पुरुषा जगत्त्रये वैरं विकुर्वन्ति महात्मभिः समम् ।
भुञ्जाव दुःखं तदनन्तपारं चापायुधास्याश्च तपोविनाशा(त्) ॥ ६
व्याघुष्य आवां तु व्रजाव काम एनां परित्यज्य सतीं प्रयुक्ताम् ।
सत्याः प्रसङ्गेन पुरा मया तु लब्धं फलं पापमयं त्वसह्यम् ॥ ७
त्वमेव जानासि चरित्रमेतच्छप्तोऽस्मि तेनापि च गौतमेन ।
जातश्च सर्वाङ्गभगाङ्ककोऽहं भवान्गतो मां तु विहाय तत्र ॥ ८
तेजःप्रभावो ह्यतुलः सतीनां धाता समर्थः सहितुं न सूर्यः ।
संकुत्सितं रूपमिदं तु रक्षेत्पुराऽनुसूयामुनि(ना) हि शप्तम् ॥ ९
[*निरुध्य सूर्यं परितेजवन्तमुद्यन्तमेवं प्रभया सुदीप्तम् ।
भर्तुश्च मृत्युं परिज्ञाय कामं ] माण्डव्यशप्तस्य तु कौण्डिकस्य ॥ १०
अत्रेः प्रिया सत्यमया पतिव्रता स्वपुत्रतां देवत्रयं हि निन्ये ।
तथा पुरा मन्मथ ते श्रुतं यदा सत्कारयोग्याः प्रभवन्ति सत्यः ॥ ११
सावित्रीनाम्नी द्युमत्सेनपुत्री नीतं प्रियं सा त्विह आनिनाय ।
यमादहो सत्यवतश्च पत्नी सतीत्वमेवं परिपूजितं च ॥ १२
अग्नेः शिखां कः परिसंस्पृशेद्वै भवेद्धि कः सागरमेव रूढः ।
गले तु बद्ध्वा सुशिलां महत्तरां यो मर्तुकामः परिचालयेत्सतीम् ॥ १३
उक्ते तु वाक्ये बहुनीतियुक्त इन्द्रेण कामस्य सुशिक्षणार्थम् ।
आकर्ण्य वाक्यं मकरध्वजस्तु उवाच देवेन्द्रमथैनमेव ॥ १४

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. छ झ. ड. ढ. पुस्तकस्थः ।

---

१ ग. घ. ज. स्ति मानं सुरते च जे । २ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. ना तेन । ३ क. ङ. झ. ट 'श्च जातोऽस्यनङ्गः स्मर सं । ४ म. रं न कु । ५ क. ख. ङ. च. छ. झ. ढ. सुकुष्ठिनं । ६ क. ख. ग. घ. ङ. च. छ ज. झ. ट. ड. ढ. दा नमस्कारयत्ताः प्रं ।

तवातिदेशादहमागतो वै धैर्यं सुहृत्त्वं पुरुषार्थमेव ॥
त्यक्त्वा तदर्थं परिभाषसे मां निःसत्त्वरूपं बहुभीतियुक्तम् ॥ १५
व्यांबुद्धि(?)यास्यामि यदा सुरेश स्याल्लोकमध्ये मम कीर्तिनाशः ॥
ऊर्ध्वंकरो मानविहीन एव सर्वे वदिष्यन्त्यनया जितं माम् ॥ १६
ये वै जिता देवगणाश्च दानवाः पूर्वं मुनीन्द्रास्तपसा प्रयुक्ताः ॥
हास्यं करिष्यन्ति ममापि सद्यो नार्या जितो मन्मथ एष भीतः ॥ १७
तस्मात्प्रयास्यामि त्वयैव सार्धमस्या बलं मानधनः सुरेश ॥
तेजश्च धैर्यं परिनाशयिष्ये भवांस्तु कस्मात्प्रबिभेति इन्द्र ॥ १८
संबोध्य चैवं स सुराधिनाथं चापं गृहीत्वा सशरं सपुष्पम् ॥
उवाच क्रीडां पुरतः स्थितां सखीं विधाय मायां भवति प्रयाहि ॥ १९
वैश्यस्य भार्यां सुकलां सुपुण्यां सत्ये स्थितां धर्मविदां गुणज्ञाम् ।
इतो हि गत्वा कुरु कार्यमुत्तमं साहाय्य(य्य)रूपं च प्रिये सखे शृणु ॥ २०
क्रीडां समाभाष्य ततो मनोभवस्त्वन्ते स्थितां प्रीति(?)मथाऽऽह्वयत्पुनः ॥
कार्यं भवत्या मम कार्यमुत्तममेनां सुहृद्यैः परिभावयस्व ॥ २१
इन्द्रं हि दृष्ट्वा सुकला यथा भवेत्स्नेहानुगा चारुविलोचनेयम् ।
तैस्तैः प्रभावैर्गुणवाक्ययुक्तैर्नयस्व वश्यं मम व्याकुलां कुरु ॥ २२
भो भोः सखे साधय गच्छ शीघ्रं मायामयं नन्दनरूपयुक्तम् ।
पुष्पोपयुक्तं तु फलप्रभावं घुष्टं रुतैः कोकिलषट्पदानाम् ॥ २३
आहूय वीरं मकरन्दमेव रसायनं स्वादुगुणैरुपेतम् ।
सहानिलाद्यैर्निजकर्मयुक्तैः संप्रेषयित्वा पुनरेव कामः ॥
चक्रे प्रयाणं सुरराजसार्धं संमोहनायापि महासतीं ताम् ॥ २४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६१२९

---

अथ षट्पञ्चाशत्तमोऽध्यायः ।

---

विष्णुरुवाच—

तस्याः सत्यविनाशाय मन्मथश्च सुराधिपः । प्रस्थितौ सुकलां तर्हि सत्यं धर्ममथाब्रवीत् ॥ १
पश्य धर्म महाप्राज्ञ मन्मथस्यापि चेष्टितम् । तवार्थमात्मनश्चैव पुण्यस्यापि महात्मनः ॥ २
विसृजामि महत्स्थानं वासरूपं सुखोदयम् । सत्याख्यं स च विप्राख्यं सुदेवाख्यं गृहोत्तमम् ॥ ३
तमेव नाशयेज्ज्ञात्वा काम एष प्रसन्नधीः । द्विषद्रूपः सुदुष्टात्मा अस्माकं हि न संशयः ॥ ४

---

१ ज. व्यायुध्य । २ ग घ. ज. ट. अयस्करो । ३ क. ख. ङ. च. छ. झ. ढ. भीमः । ४ ग. घ. ङ. ज. ञ.; ढ. सुस्नेहैः । ५ क. ख. ङ. च. छ. ह्यमतीनाम् । ६ ग. घ. झ. ङ. ढ. ॰सतीनाम् । ७ ग. घ. ज. ट. सुरनिर्मुक्तौ सं । ८ ञ. ममैव । ९ क. ख. ङ. च. छ. झ. ढ. ॰येद्गत्वा । १० क. ख. च. प्रमादधी. । ङ. छ. झ. प्रमत्तधीः । ११ ग. घ. ज. ट. ढ. विश्वरूपः ।

पतिस्तपोधनो विप्रः सती भार्या पतिव्रता । सुसत्यो भूपतिर्धर्मो मम गेहं न संशयः ॥ ५
यत्राहं वृद्धिसंतुष्टा त(ष्टस्त)त्र वासो हि ते भवेत् । तत्र पुण्यं समायाति श्रद्धया सह क्रीडते ॥ ६
क्षमा शान्तिसमायुक्तमायाति मम मन्दिरम् । संतोषश्च दमश्चैव दया सौहृद एव च ॥ ७
प्रज्ञायुक्तः स निर्लोभो यत्राहं तत्र संस्थितः । शुचिप्रभावस्तत्रैव अमी वै सत्यबान्धवाः ॥ ८
अस्तेयमप्यहिंसा च तितिक्षा बुद्धिरेव च । मम गेहे समायान्ति धन्यतां शृणु धर्मराट् ॥ ९
गुरुणा च पितृभ्यां च विष्णुर्लक्ष्म्या समन्वितः । मद्गेहं तु समायान्ति देवाश्चाग्निपुरोगमाः ॥ १०
मोक्षमार्गं प्रकाशेद्यो ज्ञानौदार्यसमन्वितः । एतैः सार्धं वसाम्येव सतीषु धर्मवत्सु च ॥ ११
साधुष्वेतेषु सर्वेषु गृहरूपेषु मे सदा[1] । भक्तेनापि कुटुम्बेन वसाम्येव त्वया सह ॥ १२
समर्थाः साधुरूपास्ते वेधसा मे गृहाः कृताः । संचरामि महाभाग स्वच्छन्देन बलीयसा ॥ १३
ईश्वरश्च जगत्स्वामी त्रिशूली वृषवाहनः । मम गेहस्वरूपेण वर्तते शिवसंगतः ॥ १४
तदहं संस्थितो याचे गृहरूपं महेश्वरम् । सदनं शंकराख्यं मे नाशितं मन्मथेन वै ॥ १५
विश्वामित्रं महात्मानं तपन्तं तप उत्तमम् । मेनकां हि समाश्रित्य कामो नाशितवान्पुरा ॥ १६
सती पतिव्रताऽहल्या गौतमस्य प्रिया शुभा । सत्याच्च चालिता तेन मन्मथेन दुरात्मना ॥ १७
मुनयः सत्यधर्मज्ञा नानास्त्रियः पतिव्रताः । सस्पृहाश्च कृताः सर्वा दीपिताः कामवह्निना ॥ १८
दुर्धरो दुःसहः पापी योऽतिसत्येषु निष्ठुरः[2] । मामेव पश्यते नित्यं कथितः कुत्र तिष्ठति ॥ १९
स मां ज्ञात्वा समायाति बाणपाणिर्धनुर्धरः । नाशयेन्मद्गृहं पापो वीतिहोत्रैश्च नामकैः ॥ २०
पापलेशाश्च ये कूटा अन्ये पाषण्डसंश्रयाः । ते तु बुद्ध्याऽहिताः सर्वे सत्यगेहं विशन्ति हि ॥ २१
सेनाध्यक्षैरसत्यैस्तु[3] च्छद्मना तेन साधितः । पातयेन्मर्दयेद्देहं[4] पापः शस्त्रैर्दुरात्मभिः ॥ २२
मामेवं ताडयेत्पापो[5] महाबलमनोभवः । अस्य नाम्ना[6] प्रदग्धोऽहं शून्यतां हि व्रजामि वै ॥ २३
नूतनं गृहमिच्छामि स्त्रियं सत्यं च भूपतिम् । कृकलस्यापि वैश्यस्य प्रियेयं शिवमङ्गला ॥ २४
सद्गृहं सुकुलाख्यं मे दग्धुं पापः समुत्थितः । अयमेष सहस्राक्षः कामेन सहितो बली ॥ २५
कामस्य कारणात्कस्मात्पूर्ववृत्तं न विन्दति । अहल्यायाः प्रसङ्गेन मन्दपुंस्त्वं प्रजग्मिवान् ॥ २६
पौरुषं हि ततो नष्टं सत्यस्यैव प्रधर्षणात् । नष्टः कामस्य दोषेण सुरराट् तत्र संस्थितः ॥ २७
भुक्तवान्दारुणं शापं दुःखेन महताऽन्वितः । कृकलस्य प्रियामेतां सुकलां धर्मचारिणीम् ॥
एष हर्तुं सहस्राक्ष उद्यतः कामसंयुतः[7] ॥ २८
कथमेतेन इन्द्रेण न प्रयाति तथा कुरु । धर्मराज महाप्राज्ञ भवान्मतिमतां वरः ॥ २९

धर्मराज उवाच—

ऊनं तेजः करिष्यामि कामस्य मरणं तथा । उपायः स मया दृष्टो येनाद्यैव विनश्यति ॥ ३०
प्रयात्वेषा महाप्रज्ञा शकुनीरूपधारिणी । भर्तुरागमनं पुण्यं शब्देनाऽऽख्यातु वै यतः ॥ ३१
शकुनस्य प्रभावेन भर्तुश्चाऽऽगमनेन च । हृष्टा पुष्टाऽभविष्यत्सा स्थिरचित्ता न संशयः ॥ ३२
प्रज्ञा[8] च प्रेषिता तेन गता सा सुकलागृहम् । प्रकुर्वती महच्छब्दं हृष्टं दैवज्ञमेव च ॥ ३३
[*पूजिता मानिता पुण्या धूपगन्धादिभिस्तदा । ब्राह्मणं पृच्छती ज्ञानं कदैष्यति[9] पतिर्मम] ॥ ३४

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. छ. ज. झ. ट. ड. ढ. पुस्तकस्थः ।

१ क. ख. छ. झ. ढ. ॑दा । उक्ते॑ । २ ट. कुपितः । ३ ग. ॑ध्यक्षोऽसत्यस्तु । ४ ग. घ. ज. ट. ड. ॑येद्देहं । ५ ढ. ॑येत्पापो मं॑ । ६ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. धाम्ना । ७ ट. ॑तः । यथा चैते॑ । ८ क. ख. ङ. च. छ. प्रज्ञा । ९ ग. घ. ङ. किमेष्यति ।

ब्राह्मण उवाच—

भर्तुश्चाऽऽगमनं भद्रे तवैवं वदति ध्रुवं । दिनानां सप्तकात्पूर्वमागमिष्यति नान्यथा ॥ ३५

इत्येवमाकर्ण्य सुमङ्गलं वचः प्रहर्षयुक्ता सहसा बभूव ॥

धर्मज्ञमेकं सुगुणं च कान्तं कृतप्रतिष्ठं हि समागतं तम् ॥ ३६

इति श्रीमहापुराणे पाद्मे द्वितीये भूमिखण्डे वेनोपाख्याने सुकुलाचरिते षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६१६५

---

अथ सप्तपञ्चाशत्तमोऽध्यायः ।

---

विष्णुरुवाच—

क्रीडा सतीरूपधरा सुभूत्वा गेहे गता चारुपतिव्रतायाः ॥

तामागतां संमुखं रूपयुक्तां सा सादरं वाक्यमुवाच धन्या ॥ १

वाक्यैः सुपुण्यैः परिपूजिता सा उवाच क्रीडा सुकलां विहस्य ॥

मायानुगं विश्वविमोहनं सती प्रत्युत्तरं सत्यप्रमेययुक्तम् ॥ २

ममापि भर्ता कैकलो गुणज्ञो धीरः सुविद्वान्महिमाप्रयुक्तः ॥

त्यक्त्वा गतः पुण्यतरः सुपुण्यां मामेव नाथः शृणु पुण्यकीर्तिः ॥ ३

[ *वाक्यैः सुपुण्यैः सुकलासुयुक्तैः परिष्वजेन्मे सुकलात्मना कैः ]

आकर्ण्य सर्वं सुकला तदुक्तं सा शुद्धभावं च प्रभाषयेत्ताम् ॥ ४

कस्माद्गतः सुन्दरि नाथ तेऽद्य विहाय त्वां रूपवतीं च साध्वीम् ॥

आख्यातु सर्वं भवती स्वभर्तुः सखीस्वरूपा गृहमागता मे ॥ ५

क्रीडा बभाषे शृणु सत्यमेतच्चारित्रजातं मम भर्तुरस्य ।

अहं प्रिये तस्य सदैव युक्ता यमिच्छते तं परिसाधयामि ॥ ६

कर्मस्वपुण्यं वचनं स्वभर्तुर्ध्यानोपयुक्ता सकलं करोमि ।

एकान्तशीलस्य गुणैकधाम्नः सुभाषितं कान्तमिहैव देवि ॥ ७

मम पूर्वविपाकोऽयं संप्रत्येवं प्रवर्तते । यतस्त्यक्त्वा गतो भर्ता मामेवं मन्दभागिनीम् ॥ ८

सखे न धारये जीवं स्वकीयं कायमेव च । पत्या विना कथं नार्यः सुजीवन्ति च निर्घृणाः ॥ ९

रूपसौभाग्यशृङ्गारसुखं संपत्तिरेव च । नारीणां हि महाभागे भर्ता शास्त्रेषु गीयते ॥ १०

तच्च सर्वं समाकर्ण्य यदुक्तं क्रीडया तदा । सत्यभावं विदित्वाऽस्याः सर्वं संभाषितं तथा ॥ ११

विषण्णा सा महाभागा सुकला पतिदेवता । तामुवाच ततः सर्वमात्मचेष्टानुगं वचः ॥ १२

समासेन समाख्यातं पूर्ववृत्तान्तमात्मनः । यथा भर्ता गतो यात्रां पुण्यसाधनतत्परः ॥ १३

आत्मदुःखं सुखं चोक्त्वा विरराम मनस्विनी । बोधिता क्रीडया सा तु समाश्वास्य पतिव्रता १४

---

* एतच्चिह्नान्तर्गतः पाठो ग. च. ङ. पुस्तकस्थः ।

---

१ ग. घ. ज. ठ. ङ. स्थिरम् । २ ग. 'समध्ये स आग' । ३ क. ख. च. छ. झ. ट. प्रबलो । ट. कुशलो । ४ ट. सुखस्वरूपा । ५ ङ. 'स्वभावं व' । ६ ग. 'शीलां सगुणेन रत्या शुश्रूषि' । ७ क. ख. ङ. च. छ. झ. ढ. विश्वस्ता ।

सूत उवाच—

एकदा तु तया प्रोक्तं क्रीडया सुकलां प्रति । सखे पश्य वनं सौम्यं दिव्यैर्वृक्षैरलंकृतम् ॥ १५

तत्र तीर्थं परं पुण्यमस्ति पातकनाशनम् । नानावल्लीवितानैश्च सुपुण्यैः परिशोभितम् ॥ १६

आवाभ्यामपि गन्तव्यं पुण्यहेतोर्वरानने । समाकर्ण्य तया सार्धं सुकला मायया तदा ॥ १७

प्रविवेश वनं दिव्यं नन्दनोपममेव सा । सर्वर्तुकुसुमोपेतं कोकिलाशतनादितम् ॥ १८

गीयमानं सुमधुरैर्नादैर्मधुकरैरपि । कूजद्भिः पक्षिभिः पुण्यैः पुण्यध्वनिसमाकुलम् ॥ १९

चन्दनादिसुवृक्षैश्च सौरभैश्च विराजितम् । सर्वभावैः सुसंपूर्णं माधव्या माधवेन वै ॥ २०

चरितं मोहनायैव सुकलायाश्च कारणात् । तया सार्धं प्रविष्टा सा तद्वनं सर्वभावनम् ॥ २१

ददर्श सौख्यदं पुण्यं मायाभावं न विन्दति। पश्यमाना वनं दिव्यं तया सह जनेश्वरः (र)॥ २२

सुकौतुकान्यनेकानि दैवयुक्तानि तानि सा । तया रत्या सुसंयुक्तः कामः शक्र(क्रः) समागतः ॥

सर्वभोगपतिर्भूत्वा कामलीलासमाकुलः । कामदेवं समाभाष्य एषा सा सुकलाऽऽगता ॥ २४

प्रहरस्व महाभागां क्रीडायाः पुरतः स्थिताम् । मायां कृत्वा समानीतां क्रीडया तव संनिधौ ॥

पौरुषं दर्शयाद्यैव यद्यस्ति कुरु निश्चितम् । २५

काम उवाच—

आत्मरूपं दर्शयस्व चतुरं लीलयाऽन्वितम् । येनाहं प्रहरे त्वेनां पञ्चबाणैः सहस्रदृक् ॥ २६

इन्द्र उवाच—

काऽऽस्ते सुपौरुषं मूढ येन लोकं वितन्वितम्। ममाऽऽधारपरो भूत्वा योद्धुमिच्छसि सांप्रतम्२७

काम उवाच—

तेनापि देवदेवेन महादेवेन शूलिना । पूर्वमेव हृतं रूपं मम कायो न विद्यते ॥ २८

इच्छाम्यहं यदा नारीं हन्तुं शृणुष्व सांप्रतम् । [illegible] कायं समाश्रित्य ह्यात्मरूपं प्रदर्शये ॥ २९

पुमांसं वा सहस्राक्ष नार्याः कायं समाश्रये । पूर्वं दृष्ट्वा यदा नारीं तामेव परिचिन्तयेत् ॥ ३०

चिन्त[illegible]मानस्य पुंसस्तु नारीरूपं पुनः पुनः । अदृष्टं तत्समाश्रित्यै पुंसमुन्मादयाम्यहम् ॥ ३१

तथाऽप्युन्मादयाम्येव नार्यागमनसंशयः । संस्मरणात्स्मरो नाम मम जातं सुरेश्वर ॥ ३२

तादृशोऽतादृशो रङ्गवस्तुरूपं समाश्रये । आत्मतेजःप्रकाशेन बाध्यबाधकतां व्रजेत् ॥ ३३

[*नारीरूपं समाश्रित्य धीरं पुरुषं प्रमोहयेत् । पुरुषं तु समाश्रित्य भावयामि सुयोषितम् ॥ ३४

रूपहीनोऽस्मि हे इन्द्र अस्मद्रूपं समाश्रयेत्]। तव रूपं समाश्रित्य तां साधये यथेप्सिताम् ॥ ३५

एवमुक्त्वा स देवेन्द्रं कार्यं तस्य महात्मनः । सखाऽसौ माधवस्यापि ह्याश्रित्य कुसुमायुधः॥ ३६

तामेव हन्तुं कुसुमायुधोऽपि साध्वीं सुपुण्यां कृकलस्य भार्याम् ।
समुत्सुकस्तिष्ठति बाणपाणिर्लक्ष्यं तु तस्या नयनं विलोक्य ॥ ३७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६२०२

---

* एतच्चिह्नान्तर्गतः पाठो ज. ट. ड. पुस्तकस्थः ।

---

१ ङ. छ. झ. ढ. सुपुष्पैः । २ क. ख. ग. घ. ङ. छ. झ. ट. ढ. मायया । ३ क. ख. ङ. छ. झ. ड. ढ. विडम्बितं । ४ ब. °त्य पुंस्त्वमासाद° । ५ अ. °मृ । पुंस्त्वादापाद° । ६ अ. नार्या गर्भे प्र ।

अथाष्टपञ्चाशत्तमोऽध्यायः ।

---

विष्णुरुवाच—

क्रीडाप्रयुक्ता सुवनं प्रविष्टा वैश्यस्य भार्या सुकला च तन्वी ।
ददर्श सर्वं गहनं मनोज्ञं तामेव पप्रच्छ सखीं सती सा ॥ १
अरण्यमेतत्प्रवरं सुपुण्यं दिव्यं सखे कस्य मनोभिरामम् ।
सिद्धं सुकामैः प्रवरैः समस्तैर्मनोभवारामसमानकल्पम् ॥ २

क्रीडोवाच—

एतद्वनं दिव्यगुणैः प्रयुक्तं सिद्धस्वभावैः परिभावनेनं[1] ।
पुष्पाकुलं कामफलोपयुक्तं विपश्य सर्वं मकरध्वजस्य ॥ ३

एवं वाक्यं ततः श्रुत्वा हर्षेण महताऽन्विता । समालोक्य महद्वृत्तं कामस्य च दुरात्मनः ॥ ४
वायुनाऽऽनीयमानं तं समाघ्राति न सौरभे(भम्) । वाति वायुः स्वभावेन सौरभ्येण समन्वितः॥५
तद्घ्राणो विशते नाशं यथा तथा सुलीलया । सा गन्धं नैव गृह्णाति पुष्पाणां च वरानना ॥ ६
न चाऽऽस्वादयते तत्र फलानां वा रसं सती । स सखा कामदेवस्य रममाणो विलज्जितः[4] ॥ ७
[*लज्जितः प्राङ्मुखो भूत्वा भूपालवचनच्छदैः । फलेभ्यस्तु सुपक्वेभ्यः पुष्पमञ्जरिभ्यस्ततः ॥
विरूपश्चापतद्भूमौ रुदत्येष तया जितः] ॥ ८
मकरन्दः सुदीनात्मा फलाद्भुवि गतः पुनः । भक्ष्यते मक्षिकाभिश्च यथा मूर्खवचस्तथा ॥ ९
मक्षिकाभक्ष्यमाणस्तु प्रवाहेणैव याति सः । मन्दं मन्दं प्रयात्येव तं हसन्ति च पक्षिणः ॥ १०
नाना[†रुतैः प्रचलन्ति सुखमानन्दनिर्भराः । प्रीत्या] शकुनयस्तत्र वनमध्यनगास्थिताः ॥
सुकलया जितो ह्येष निम्नं पन्थानमास्थितः ॥ ११

प्रीत्या समेता रतिः कामभार्या श्रुत्वाऽब्रवीत्सा सुकलां विहस्य ।
स्वस्त्यस्तु ते स्वागतमेव भद्रे रमस्व प्रीत्या त्वनया च रत्या ॥ १२

वदन्त्यौ तौ(ते) स्त्रियो(यौ) दृष्ट्वा श्रुत्वोवाच सुभाषितम् । रतिं प्रति गृहीत्वा मे गतो भर्ता महामतिः
यत्र मे तिष्ठते भर्ता तत्राहं पतिसंयुता । तत्र कामश्च मे प्रीतिरयं कायो निराश्रयः ॥ १४
द्वे अप्युक्तं समाकर्ण्य रतिप्रीती विलज्जिते । व्रीडमाने गते ते द्वे यत्र कामो महाबलः ॥ १५
ऊचतुस्तं महावीरमिन्द्रकायसमाश्रितम् । चापमाकर्षमाणं तं नेत्रलक्ष्यं महाबलम् ॥ १६
दुर्जेयेयं महाप्राज्ञ त्यज पौरुषमात्मनः । पतिकामा महाभागा पतिव्रता सदैव सा ॥ १७

काम उवाच—

अनयाऽऽलोक्यते रूपमिन्द्रस्यास्य महात्मनः । यदि देवि तदा चाहं हनिष्यामि न संशयः ॥१८
अथ वेषधरो देवो महारूपः सुराधिपः । यस्यामनुगतस्तूर्णं परया लीलया तदा ॥ १९
सर्वभोगसमाकीर्णः सर्वाभरणशोभितः । दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ॥ २०

---

* एतच्चिह्नान्तर्गतः पाठो ग. घ. ङ. छ. ट. ड ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. छ. ड. °रिमाधवेन । २ ङ. °न । वृक्षैर्युतं पुष्पफ° । ३ ञ. °घ्रायातिसौ° । ४ क. ख. ग. घ. ङ. च. छ. ड. विनिर्जितः ।

तया रत्या समायातो यत्राऽऽस्ते पतिदेवता । प्रत्युवाच महाभागां सुकलां सत्यचारिणीम् ॥ २१
पूर्वं दूतीसमक्षं ते प्रीतिस्तु महिता मया । कस्मान्न मन्यसे भद्रे भज मां त्वमिहाऽऽगतम् ॥ २२

सुकलोवाच—

रक्षायुक्ताऽस्मि भद्रं ते भर्तुः पुत्रैर्महात्मभिः । एकाकिनी सहायैश्च नैव कस्य भयं मम ॥
शूरैश्च पुरुषाकारैः सर्वत्र परिरक्षिता ॥ २३
नातिप्रस्तावये वक्तुं व्यग्रा कर्मणि तस्य च । यावत्प्रस्पन्दते नेत्रं तावत्कालं महामते ॥ २४
भवान्न लज्जते कस्माद्रममाणो मया सह । भवान्को हि समायातो निर्भयो मरणादपि ॥ २५

इन्द्र उवाच—

त्वामेवं हि प्रपश्यामि वनमध्ये समागताम् । समाख्यातास्त्वया शूरा भर्तुश्च तनयाः पुनः ॥
कथं पश्याम्यहं तावद्दर्शयस्व ममाग्रतः ॥ २६

सुकलोवाच—

निजगृहमपवर्गस्याऽऽधिपत्ये निवेश्य
धृतिमतिगतिबुद्ध्याख्यैस्तु संन्यस्य सत्यम् ॥
अचलसकलधर्मो नित्ययुक्तो महात्मा
शमदमसहधर्मात्मा सदा मां जुगोप ॥ २७
मामेवं परिरक्षते दमगुणैस्तैस्तैः सुधर्मः सदा
सत्यं पश्य समागतं मम पुरः शान्तिक्षमाभ्यां युतम् ॥
सत्याख्यस्तु महाबलः पृथुयशा यो मां न मुञ्चेत्कदा
बद्ध्वा मां दृढबन्धनैः सुनियतं पुण्यत्वमेवं गतः ॥ २८

रक्षायुक्ताः कृताः सर्वे सत्यार्थाः शृणु सांप्रतम् । धर्मलोभातिगाः सर्वे दमबुद्धिपराक्रमाः ॥ २९
मामेवं हि परीक्षन्ते किं मां प्रार्थयसे बलात् । को भवान्निर्भयो भूत्वा दूत्या सार्धं समागतः ३०
सत्यधर्ममुखाः पुण्या ज्ञानाद्याः प्रबलाः सुताः । मम भर्तुः सहायाश्च ते मां रक्षन्ति वै सदा ३१
अहं रक्षापरा नित्यं दमशान्तिपरायणा । न मां जेतुं समर्थश्च अपि साक्षाच्छचीपतिः ॥ ३२
यदि वा मन्मथो वाऽपि समागच्छति वीर्यवान् । दंशिताऽहं सदा सत्यैमत्या कष्टेन सर्वदा ३३
निरर्थकास्तस्य बाणा भविष्यन्ति न संशयः । त्वामेवं हि हनिष्यन्ति धर्माद्यास्ते महाबलाः ॥ ३४
दूरं गच्छ पलायस्व माऽत्र तिष्ठ ममाग्रतः । वार्यमाणो यदा तिष्ठेर्भस्मीभूतो भविष्यसि ॥ ३५
भर्त्रा विना निरीक्षेत मम रूपं यदा भवान् । यथा दारु दहेद्वह्निस्तथा धक्ष्यामि नान्यथा ॥ ३६
एवमुक्तः सहस्राक्षो मन्मथं प्राह संमुखम् । पश्य पौरुषमेतासां युध्यस्व निजपौरुषैः ॥ ३७
यथाऽऽगतास्तथा सर्वे महाशापभयातुराः । स्वं स्वं स्थानं महाराज इन्द्राद्याः प्रययुस्तदा ॥ ३८
गतेषु तेषु सर्वेषु सुकला सा पतिव्रता । स्वगृहं पुण्यसंयुक्ता पतिध्यानेन चाऽऽगता ॥ ३९
स्वगृहं पुण्यसंयुक्तं सर्वतीर्थमयं तदा । सर्वयज्ञमयं राजन्संप्राप्ता पतिदेवता ॥ ४०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरितेऽष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६२४०

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. दूत्या । २ ग. घ, ङ. °मू । ज्ञातिख्यातिम° । ३ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °त्यसत्या° ।

अथैकोनषष्टितमोऽध्यायः ।

विष्णुरुवाच—
कृकलः सर्वतीर्थानि साधयित्वा गृहं प्रति । प्रस्थितः सार्थवाहेन महानन्दसमन्वितः ॥ १
एवं चिन्तयते नित्यं संसारः सफलो मम । स्वर्गं प्रयान्ति ते सर्वे पितरो मम नान्यथा ॥ २
तावत्प्रत्यक्षरूपेण बद्ध्वा तस्य पितामहान्[1](हम्) । पुरतस्तस्य संभूते न हि ते पुण्यमुत्तमम् ॥ ३
[*दिव्यरूपो महाकायः कृकलं वाक्यमब्रवीत् । [2]तीर्थयात्राफलं नास्ति श्रम एव वृथा कृतः] ४
[†स्वयं संतोषमायाति न हि ते पुण्यमुत्तमम्] । एवं श्रुत्वा तदा वैश्यः कृकलो दुःखपीडितः ॥५
भवान्को वा वदत्येवं कस्माद्बद्धः पितामहः । केन दोषप्रभावेन तन्मे त्वं कारणं वद ॥ ६
कस्मात्तीर्थफलं नास्ति मम यात्रा कथं न हि । सर्वमेवं समाचक्ष्व यदि जानासि संस्फुटम् ॥ ७
धर्म उवाच[3]—
विनीतां विमलां पुण्यां भार्यां त्यक्त्वा प्रयाति यः । तस्य पुण्यतमं सर्वं वृथा भवति नान्यथा ८
धर्माचारपरां पुण्यां साधुव्रतपरायणाम् । पतिव्रतपरां भार्यां सुगुणां पुण्यवत्सलाम् ॥ ९
तामेवापि परित्यज्य धर्मकार्ये प्रयाति यः । वृथा तस्य कृतः सर्वो धर्मो भवति नान्यथा ॥ १०
सर्वाचारपरा धन्या धर्मसाधनतत्परा । सतीव्रतरता नित्यं सर्वज्ञा ज्ञानवत्सला ॥ ११
एवंगुणा भवेद्भार्या यस्य पुण्या महासती । तस्य गेहे सदा देवास्तिष्ठन्ति च महौजसः ॥ १२
पितरो गेहमध्यस्था यशो वाञ्छन्ति तस्य च । गङ्गाद्याः सरितः पुण्याः सागरास्तत्र नान्यथा ॥
[*पुण्या सती यस्य गेहे वर्तते सत्यतत्परा । तत्र यज्ञाश्च गावश्च ऋषयस्तत्र नान्यथा] ॥ १४
तत्र सर्वाणि तीर्थानि पुण्यानि विविधानि च । भार्यायोगेण तिष्ठन्ति सर्वाण्येतानि नान्यथा १५
पुण्यभार्याप्रयोगेण सुगार्हस्थ्यं प्रजायते । [†गार्हस्थ्यात्परमो धर्मो द्वितीयो नास्ति भूतले ॥ १६
गृहस्थस्य गृहः पुण्यः सत्यपुण्यसमन्वितः । सर्वतीर्थमयो वैश्य सर्वदेवसमन्वितः] ॥ १७
गार्हस्थ्यं च समाश्रित्य सर्वे जीवन्ति तत्त्वतः[4] । तादृशं नैव पश्यामि ह्यन्यमाश्रममुत्तमम्[5] ॥ १८
मन्त्राग्निहोत्रं देवाश्च[6] सर्वे धर्माः सनातनाः । दानाचाराः प्रवर्तन्ते यस्य पुंसश्च वै गृहे ॥ १९
एवं यो भार्यया हीनस्तस्य गेहं वनायते । यज्ञाश्चैव न सिध्यन्ति दानानि विविधानि च ॥ २०
भार्याहीनस्य पुंसोऽपि न सिध्यति महाव्रतम् । धर्मकर्माणि सर्वाणि पुण्यानि विविधानि च २१
नास्ति भार्यासमं तीर्थं धर्मसाधनहेतवे । शृणुष्व त्वं गृहस्थस्य नान्यो धर्मो जगत्त्रये ॥ २२
यत्र भार्या गृहं तत्र पुरुषस्यापि नान्यथा । ग्रामे वाऽप्यथवाऽरण्ये सर्वधर्मस्य साधनम् ॥ २३
नास्ति भार्यासमं तीर्थं नास्ति भार्यासमं सुखम् । नास्ति भार्यासमं पुण्यं तारणाय हिताय च ॥
धर्मयुक्तां सतीं भार्यां त्यक्त्वा याति नराधमः । गृहधर्मं परित्यज्य काऽऽस्ते धर्मस्य ते फलम् ॥
तया विना यदा तीर्थे श्राद्धं दानं कृतं त्वया । तेन दोषेण वै बद्धास्तव पूर्वपितामहाः ॥ २६

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ग. घ. छ. झ. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. च. छ. झ. ढ. पुस्तकस्थः ।

१ ङ. पितामहः । २ ङ. छ. ढ. शततीर्थफलं । ३ ङ. °च—तीर्थे सुशीलां पुण्यां तां भा° । ४ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. जन्तवः । ५ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °म् । यत्राग्नि° । ६ क. ख. च. छ. झ. ट. ड. वेदाश्च ।

भवांश्चौरस्त्वमी चौरा यैश्च भुक्तं च लोलुपैः। त्वया दत्तस्य श्राद्धस्य अन्नमेवं तया विना॥ २७
सुपुत्रः श्रद्धयोपेतः श्राद्धदानं ददाति यः। भार्यादत्तेन पिण्डेन तस्य पुण्यं वदाम्यहम्॥ २८
यथाऽमृतस्य पानेन पितॄणां तृप्तिर्जायते। पितॄणां नात्र संदेहः सत्यं सत्यं वदाम्यहम्॥ २९
गार्हस्थ्यस्य च धर्मस्य भार्या भवति स्वामिनी। त्वयैवं तां विना मूढ चौरकर्म कृतं वृथा॥ ३०
अमी पितामहाश्चौरा यैश्च भुक्तं तया विना। भार्या पचति चैवान्नं स्वहस्तेनामृतोपमम्॥ ३१
तदन्नमेव भुञ्जन्ति पितरो हृष्टमानसाः। तेनैव तृप्तिमायान्ति संतुष्टाश्च भवन्ति ते॥ ३२
तस्माद्भार्यां विना धर्मः पुरुषाणां न सिध्यति। [*नास्ति भार्यासमं तीर्थं सुपुंसां गतिदायकम्]॥
भार्यां विना हि यो धर्मः स एव विफलो भवेत्॥ ३३

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने एकोनषष्टितमोऽध्यायः॥ ५९॥

आदितः श्लोकानां समष्ट्यङ्काः—६२७३

---

अथ षष्टितमोऽध्यायः।

---

कृकल उवाच—

कथं मे जायते सिद्धिः कथं पितृविमोचनम्। तन्मे सुविस्तरेणापि धर्मराज वदाधुना॥ १

धर्मराज उवाच—

गच्छ गेहं महाभाग त्वां विना दुःखिताऽभवत्। संबोधय त्वं सुकलां सुपुण्यां धर्मचारिणीम्॥
श्राद्धदानं गृहं गत्वा तस्या हस्तेन वै कुरु॥ २
स्मृत्वा पुण्यानि तीर्थानि पूजय त्वं सुरोत्तमान्। तीर्थयात्राकृता सिद्धिस्तव चैव भविष्यति॥ ३
भार्यां विना हि यो लोको धर्मं साधितुमिच्छति। विलोप्य धर्मं गार्हस्थ्यमेकाकी विचरेद्वनम्॥
विफलो जायते लोके नान्नमश्नन्ति देवताः॥ ४
यज्ञाः सिद्धिं न चाऽऽयान्ति गृहिणीरहिते गृहे। स एकाकी समर्थो न धमार्थसाधनाय च॥ ५

विष्णुरुवाच—

एवमुक्त्वा गतो धर्मो यथाऽऽयातस्तथा पुनः। कृकलोऽपि स धर्मात्मा स्वगृहं प्रति प्रस्थितः॥ ६
स्वगृहं प्राप्य मेधावी दृष्ट्वा तां च पतिव्रताम्। सार्थवाहेन तेनापि मुमुदे वाऽन्तरात्मना॥ ७
तया समागतं दृष्ट्वा भर्तारं धर्मकोविदम्। कृतं सुमङ्गलं कर्म भर्तुरागमने तदा॥ ८
समाचष्टे स धर्मात्मा धर्मस्यापि विचेष्टितम्। समाकर्ण्य महाभागा भर्तुर्वाक्यं मुदावहम्॥
धर्मवाक्यं प्रशस्याथ अनुमेने च तं तथा॥ ९
अथासौ कृकलश्चापि तया सार्धं सुपुण्यकम्। चकार श्रद्धया श्राद्धं देवपूजां गृहे स्थितः॥ १०
पितरो देवगन्धर्वा विमानैश्च समागताः। तुष्टुवुस्तौ महात्मानौ दंपती मुनयस्तथा॥ ११
अहं चापि तथा ब्रह्मा देव्या युक्तो महेश्वरः। सर्वे देवाः सगन्धर्वास्तस्याः सत्येन तोषिताः॥ १२
ऊचुस्तौ तु महात्मानौ धर्मज्ञौ सत्यपण्डितौ। भार्यया सह भद्रं ते वरं वरय सुव्रत॥ १३

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ट. ढ. पुस्तकस्थः।

---

१ क. ख. ङ. च. छ. झ. ढ. °व वञ्चिता मू°। २ ङ. स्वभार्या। ३ क. ख. ङ. च. छ. झ. ट. ड. ढ. °द्धिं तदा यान्ति यदा स्याद्गृहिणी गृ°। ४ क. ख. ग. च. झ. ट. ड. ढ. °पि स्वस्थानं प्राप्य बुद्धिमान्। तं°। ५ छ. सुश्रद्धया।

कुकल उवाच—

कस्य पुण्यस्य सङ्गेन तपसश्च सुरोत्तमाः । सभार्याय वरं दातुं भवन्तो हि समागताः ॥ १४

इन्द्र उवाच—

एषा सती महाभागा सुकला चारुमङ्गला । अस्याः सत्येन तुष्टाः स्म दातुकामा वरं तव ॥ १५
समासेन तु संप्रोक्तं सर्ववृत्तान्तमेव च । तस्याश्चरितमाहात्म्यं श्रुत्वा भर्ता स हर्षितः ॥ १६
तया सह स धर्मात्मा हर्षव्याकुललोचनः । ननाम देवताः सर्वा दण्डवच्च पुनः पुनः ॥ १७
यान्तु तुष्टिं महाभागास्त्रयो देवाः सनातनाः । अन्ये च ऋषयः पुण्याः कृपां कृत्वा ममोपरि १८
जन्मजन्मनि देवानां भक्तिमेवं करोम्यहम् । धर्मे सत्ये रतिः स्यान्मे भवतां हि प्रसादतः ॥ १९
पश्चाद्धि वैष्णवं लोकं सभार्यः सपितामहः । गन्तुमिच्छाम्यहं देवा यदि तुष्टा महौजसः ॥ २०

देवा ऊचुः—

एवमस्तु महाभाग सर्वं तव भविष्यति । सुकलेयं महापुण्या तव पत्नी यशस्विनी ॥ २१

विष्णुरुवाच—

इत्युक्त्वा पुष्पवृष्टिं तां तयोरुपरि भूपते । चक्रुर्जगुः पुण्यगीतं ललितं मधुरं ततः ॥ २२
गन्धर्वा गीततत्त्वज्ञा ननृतुश्चाप्सरोगणाः । ततो देवाः सगन्धर्वाः स्वं स्वं स्थानं नृपोत्तम ॥ २३
वरं दत्त्वा प्रजग्मुस्ते स्तूयमानाः पतिव्रताम् । नारीतीर्थं समाख्यातमन्यत्किं प्रवदामि ते ॥ २४
एतत्ते सर्वमाख्यातं पुण्याख्यानमनुत्तमम् । यः शृणोति नरो राजन्सर्वपापैः प्रमुच्यते ॥ २५
श्रद्धया शृणुयान्नारी सुकलाख्यानमुत्तमम् । सौभाग्येन सुसत्येन पुत्रपौत्रैश्च युज्यते ॥ २६
मोदते धनधान्यैश्च सह भर्त्रा सुखी भवेत् । पतिव्रता भवेत्सा च जन्मजन्मनि नान्यथा ॥ २७
ब्राह्मणो वेदविद्भूयात्क्षत्रियो विजयी भवेत् । [*धनधान्यं भवेत्तस्य वैश्यगेहे न संशयः ॥ २८
धर्मज्ञो जायते राजन्सदाचारः सुखी भवेत् । शूद्रः सुखमवाप्नोति पुत्रपौत्रैः प्रवर्धते ॥
विपुला जायते लक्ष्मीर्धनधान्यैरलंकृतः] ॥ २९

† इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने सुकलाचरिते षष्टितमोऽध्यायः ॥ ६० ॥

आदितः श्लोकानां समष्ट्यङ्काः—५१२०

---

अथैकषष्टितमोऽध्यायः ।

---

वेन उवाच—

भार्यातीर्थं समाख्यातं सर्वतीर्थोत्तमोत्तमम् । पितृतीर्थं समाख्याहि पुत्राणां तारणं परम् ॥ १

विष्णुरुवाच—

कुरुक्षेत्रे महापुण्ये कुण्डलो नाम भूसुरः । सुकर्मा नाम सत्पुत्रः कुण्डलस्य महात्मनः ॥ २
गुरू तस्य महावृद्धौ धर्मज्ञौ शास्त्रकारिणौ । द्वावेतौ तौ महाप्राज्ञौ जरया परिपीडितौ ॥ ३

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. ङ. च. छ. झ. ढ. पुस्तकस्थः । † अत्र 'इति पद्मपुराणे चतुर्थखण्डः समाप्तः' इति ग. पुस्तके । 'इति चतुर्थखण्डः समाप्तः' इति घ. पुस्तके ।(भूमिखण्डस्याऽऽदिभागोऽयम्) एतदपि क्वचित्पुस्तके दृश्यते ।

---

१ ङ. वरत्रयम् । स° । २ क. ख. ङ. च. छ. झ. ट. ड ढ. °नः । यदि तुष्टा म° । ३ क. ख. ङ. च. छ. झ. ढ. °स्त्रकोविदौ । द्वा° ।

तयोः शुश्रूषणं चक्रे भक्त्या च परया ततः । धर्मज्ञो भावसंयुक्तो ह्यहर्निशमरिंदम ॥ ४
तस्माद्वेदानधीते स पितुः शास्त्राण्यनेकशः । सर्वाचारपरो दान्तः सत्यवाग्ज्ञानवत्सलः ॥ ५
अङ्गसंवाहनं चक्रे गुर्वोश्च स्वयमेव सः । पादप्रक्षालनं चैव स्नानभोजनकां क्रियाम् ॥ ६
भक्त्या चैव स्वभावेन संततं तन्मयो भवेत् । मातापित्रोश्च राजेन्द्र उपचर्यां करोति सः ॥ ७

सूत उवाच—

तद्वर्तमानकाले तु बभूव नृपसत्तम । पिप्पलो नाम वै विप्रः कश्यपस्य कुलोद्भवः ॥ ८
धर्मकर्मा महाभाग जितात्मा जितविग्रहः । दमशौचशमोपेतः कामक्रोधविवर्जितः ॥ ९
दशारण्ये गतो धीमाज्ज्ञानशान्तिपरायणः । सर्वेन्द्रियाणि संयम्य तपस्तेपे महामनाः ॥ १०
तपःप्रभावतस्तस्य जन्तवो गतविग्रहाः । वसन्ति सुयुगे तत्र एकोदरगता इव ॥ ११
तत्तपस्तस्य मुनयो दृष्ट्वा विस्मयमाययुः । नेदृशं केनचित्तप्तं यथाऽसौ तप्यते मुनिः ॥ १२
देवाश्च इन्द्रप्रमुखाः परं विस्मयमाययुः । अहो अस्य तपस्तीव्रं शमश्चेन्द्रियसंयमः ॥ १३
निर्विकारो निरुद्वेगः कामक्रोधविवर्जितः । शीतवातातपसहो धराधर इव स्थितः ॥ १४
विषये विमुखो धीरो मनसोऽतीतसंग्रहः । न शृणोति यथा शब्दं कस्यचिद्द्विजसत्तमः ॥ १५
संस्थानं तादृशं गत्वा स्थित्वा एकाग्रमानसः । ब्रह्मध्यानमयो भूत्वा सानन्दमुखपङ्कजः ॥ १६
अश्मकाष्ठ इवात्यर्थं निश्चेष्टो गिरिवत्स्थितः । स्थाणुवद्दृश्यते चासौ सुस्थिरो धर्मवत्सलः ॥ १७
तपःक्लिष्टशरीरोऽतिश्रद्धावाननसूयकः । एवं वर्षसहस्रैकं संजातं तस्य धीमतः ॥ १८
पिपीलिकाभिर्बह्वीभिः कृतं मृद्भारसंचयम् । तस्योपरि महाकायं वल्मीकानां च मन्दिरम् ॥ १९
वली(ल्मी)कोदरमध्यस्थो जडीभूत इव स्थितः । स एवं पिप्पलो विप्रस्तप्यते सुमहत्तपः ॥ २०
कृष्णसर्पैस्तु सर्वत्र वेष्टितो द्विजसत्तमः । तमुग्रतेजसं विप्रं दशन्ति स्म विषोल्बणाः ॥ २१
संप्राप्य गात्राणि विषं त्वचं तस्य न भेदयेत् । तेजसा तस्य विप्रस्य नागाः शान्तिमथाऽऽगमन
तस्य कायात्समुद्भूता अर्चिषो दीप्ततेजसः । नानारूपाः सुबहुशो दृश्यन्ते च पृथक्पृथक् ॥ २३
यथा वह्नेः प्रदृश्यते तथैव च नृपोत्तम । यथा मेघोदरे सूर्यः प्रविष्टो भाति रश्मिभिः ॥
वल्मीकस्थस्तथा विप्रः [*पिप्पलो भाति तेजसा ॥ २४
सर्पा दंशन्ति विप्रं तं ] सक्रोधा दशनैरपि । न भिन्दन्ति दंष्ट्राग्राच्चर्म भित्त्वा नृपोत्तम ॥ २५
[† एवं वर्षसहस्रैकं तप आचरतस्ततः । गतं च राजराजेन्द्र मुनेस्तस्य महात्मनः ॥ २६
त्रिकालं साध्यमानस्य लीलातपवधान्वितम् । गतं कालं महाराज पिप्पलस्य महात्मनः ॥ २७
तद्वच्च वायुभक्षं च कृतं तेन महात्मना ] । त्रीणि वर्षसहस्राणि गतान्येवं च भूपते ॥ २८
तस्य मूर्ध्नि ततो देवैः पुष्पवृष्टिः कृता पुरा । ब्रह्मज्ञोऽसि महाभाग धर्मज्ञोऽसि न संशयः ॥
सर्वज्ञानमयोऽसि त्वं संजातः स्वेन कर्मणा ॥ २९

---

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. घ. ङ. च. छ. ज. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. घ. ङ. च. झ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. घ. च. छ. झ. ड. कृपया । २ क. घ. ङ. च. छ. झ. ड. ढ. दान्तो धर्मज्ञो ज्ञान° । ३ क. ख. ङ. च. छ. झ. ढ. तद्ध्याने । ४ क. ख. घ. ङ. च. छ. झ. ड. ढ. °वः । तपस्तेपे निराहारो जि° । ५ क. ख. ङ. च. छ. झ. ड. ढ. °तमत्सरः । द° । ६ ड. दयाशौचदमोपेतः । ७ ड. निराहारो । ८ ड. °नपरो भू° । ९ क. ख. ङ. च. छ. झ. °तानि तस्य तप्यतः । त° ।

यं यं त्वं वाञ्छसे कामं तं तं प्राप्स्यसि नान्यथा । सर्वकाममयी सिद्धिः स्वत एव भविष्यति ॥
समाकर्ण्य ततो वाक्यं पिप्पलोऽपि महामनाः । प्रणम्य देवताः सर्वा भक्त्या नमितकन्धरः ॥ ३१
हर्षेण महताऽऽविष्टो देवान्प्रति उवाच ह । इदं चैव जगत्सर्वं मम वश्यं यथा भवेत् ॥ ३२
तथा कुरुध्वं भो देवा विद्याधरो भवाम्यहम् । एवमुक्त्वा स मेधावी विरराम नृपोत्तम ॥ ३३
एवमस्त्विति ते प्रोचुर्द्विजश्रेष्ठं सुरास्तदा । दत्त्वा वरं महाभाग जग्मुस्तस्मै महात्मने ॥ ३४
गतेषु तेषु देवेषु पिप्पलो द्विजसत्तमः । ब्रह्मण्यं साधयेन्नित्यं विश्ववश्यं प्रचिन्तयेत् ॥ ३५
तदाप्रभृति राजेन्द्र पिप्पलो द्विजसत्तमः । विद्याधरपदं लब्ध्वा कामगामी महीयते ॥ ३६
एवं स पिप्पलो विप्रो विद्याधरपदं गतः । संजातो देवलोकेशः सर्वविद्याविशारदः ॥ ३७
एकदा तु महातेजाः पिप्पलः परिचिन्तयेत् । विश्वं वश्यं भवेत्सर्वं मम दत्तो वरोत्तमः ॥ ३८
तदर्थं प्रत्ययं कर्तुमुद्यतो द्विजसत्तमः । यं यं चिन्तयते वश्यं तं तं हि वशमानयेत् ॥ ३९
एवं तत्प्रत्ययं ज्ञात्वा मनसा परिकल्पितम् । द्वितीयो नास्ति वै लोके मत्समः पुरुषोत्तमः ॥४०

सूत उवाच—

एवं हि चिन्तमानस्य पिप्पलस्य महात्मनः । ज्ञात्वा मानसिकं भावं सारसस्तमुवाच ह ॥ ४१
सरस्तीरगतो राजन्सुस्वरं व्यञ्जनान्वितम् । स्वनं सौष्ठवसंयुक्तमुक्तवान्पिप्पलं प्रति ॥ ४२
कस्मादुद्वहसे गर्वमेवं त्वं परमात्मकम् । सर्ववश्यात्मकीं सिद्धिं नाहं मन्ये तवैव हि ॥ ४३
वश्यावश्यमिदं कर्म अर्वाचीनं प्रशस्यते । पराचीनं न जानासि पिप्पल त्वं हि मूढधीः ॥ ४४
वर्षाणां तु सहस्राणि यावत्त्रीणि त्वया तपः । समाचीर्णं ततो गर्वं भवान्मूढ इहाऽऽगतः ॥ ४५
कुण्डलस्य सुतो धीरः सुकर्मा नाम यः सुधीः । वश्यावश्यं जगत्सर्वं तस्याऽऽसीच्छृणु सांप्रतम्॥
अर्वाचीनं पराचीनं स वै जानाति बुद्धिमान् । लोके नास्ति महाज्ञानी तत्समः शृणु पिप्पल ॥
न दत्तं तेन वै दानं न ध्यानं परिचिन्तितम् । हुतयज्ञादिकं कर्म न कृतं तेन वै कदा ॥ ४८
न गतस्तीर्थयात्रायां सद्गुरूपासनं न च । नो कदा कृतवान्विप्र धर्मसेवार्थमुत्तमम् ॥ ४९
स्वच्छन्दचारी ज्ञानात्मा पितृमातृसुहृत्सदा । वेदाध्ययनसंपन्नः सर्वशास्त्रार्थकोविदः ॥ ५०
यादृशं तस्य वै ज्ञानं बालस्यापि सुकर्मणः । तादृशं नास्ति ते ज्ञानं वृथा त्वं गर्वमुद्वहेः ॥ ५१

पिप्पल उवाच—

को भवान्पक्षिरूपेण मामेवं परिकुत्सयेत् । कस्माभिन्दसि मे ज्ञानं पराचीनं तु कीदृशम् ॥ ५२
तन्मे विस्तरतो ब्रूहि त्वयि ज्ञानं कथं भवेत् । अर्वाचीनगतिं सर्वां पराचीनस्य सांप्रतम् ॥ ५३
वद त्वमण्डजश्रेष्ठ ज्ञानपूर्वं सुविस्तरम् । किं वा ब्रह्मा च विष्णुश्च किं वा रुद्रो भविष्यसि॥५४

सारस उवाच—

नास्ति ते तपसो भावः फलं नास्ति श्रुतस्य वा । यत्त्वया परितप्तस्य तपसश्च फलं शृणु ॥५५
कुण्डलस्यापि पुत्रस्य बालस्यापि यथा गुणः । तथा ते नास्ति वै ज्ञानं पराचीनस्य तत्पदम्५६
इतो गत्वाऽपि पृच्छ त्वं मम रूपं द्विजोत्तम । स वदिष्यति धर्मात्मा सर्वज्ञानं तवैव हि ॥ ५७

---

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °र्ण्य महद्वाक्यं । २ ञ. °द्याधारो । ३ घ. ट. ड. °त्यं वश्याव° । ४ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °लो नाम विद्याधरमहामतिः । सं° । ५ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °त् । वश्यांव° । ६ ङ. °नं तं स्वरसं° । ७ क. ख. ङ. च. छ. झ. ट. ड. ढ. ज्ञानं ।

विष्णुरुवाच—

एवमाकर्ण्य तत्सर्वं सारसेन प्रभाषितम् । तं जगाम स वेगेन ब्रह्मात्मानं नृपोत्तमः ॥ ५८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्यान एकषष्टितमोऽध्यायः ॥ ६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६३६०

---

अथ द्विषष्टितमोऽध्यायः ।

---

विष्णुरुवाच—

कुण्डलस्याऽऽश्रमं गत्वा सत्यधर्मसमाकुलम् । [*सुकर्माणं ततो दृष्ट्वा पितृमातृपरायणम् ॥ १

शुश्रूषन्तं महात्मानं गुरू सत्यपराक्रमम् । महारूपं महातेजं महाज्ञानसमाकुलम्] ॥ २

मातापित्रोस्तु पादान्त उपविष्टं नृपोत्तम । महाभक्त्याऽन्वितं शान्तं सर्वज्ञानमहानिधिम् ॥ ३

कुण्डलस्यापि पुत्रेण सुकर्मणा महात्मना । आगतं पिप्पलं दृष्ट्वा द्वारदेशे महामतिम् ॥ ४

आसनात्तूर्णमुत्थाय अभ्युत्थानं कृतं पुनः । आगच्छस्व महाभाग विद्याधर महामते ॥ ५

आसनं पाद्यमर्घ्यं च ददौ तस्मै महात्मने । निर्विघ्नोऽसि महाप्राज्ञ कुशलेनापि वर्तसे ॥ ६

निरामयं च पप्रच्छ पिप्पलं च समागतम् । यस्मादागमनं तेऽत्र तत्सर्वं प्रवदाम्यहम् ॥ ७

वर्षाणां हि सहस्राणि यावत्त्रीणि त्वया तपः । तप्तमेव महाभाग सुरेभ्यः प्राप्तवान्वरम् ॥ ८

वश्यत्वं च त्वया प्राप्तं कामचारस्तथैव च । तेन मत्तो न जानासि गर्वं उद्वहितस्त्वया ॥ ९

दृष्ट्वा ते चेष्टितं सर्वं सारसेन महात्मना । ममाभिधानं कथितं मम ज्ञानमनुत्तमम् ॥ १०

पिप्पल उवाच—

योऽप्यसौ सारसो विप्र सरित्तीरे प्रयुक्तवान् । सर्वज्ञानं वदेन्मां हि स च कः प्रभुरीश्वरः ॥ ११

सुकर्मोवाच—

भवन्तमुक्तवान्यो वै सरित्तीरे तु सारसः । ब्रह्माणं तं महात्मानं विद्धि त्वं परमेश्वरम् ॥ १२

अन्यत्किं पृच्छसे विप्र ब्रूहि तच्च वदाम्यहम् ॥

विष्णुरुवाच—

एवमुक्तः स धर्मात्मा सुकर्माणमुवाच ह ॥ १३

पिप्पल उवाच—

त्वयि वश्यं जगत्सर्वमिति शुश्रुम भूतले । तन्मे त्वं कौतुकं विप्र प्रदर्शय प्रयत्नतः ॥ १४

पश्य कौतुकमेवात्र वश्यावश्यस्य कारणम् । तमुवाच स धर्मात्मा सुकर्मा पिप्पलं प्रति ॥ १५

अथ सस्मार वै देवान्सुकर्मा प्रत्ययाय वै । इन्द्राद्याँल्लोकपालांश्च देवांश्चाग्निपुरोगमान् ॥ १६

समागताः समाहूता नागविद्याधरास्तथा । सुकर्माणं ततः प्रोचुस्ते सर्वेऽपि समागताः ॥

कस्मात्स्मृतास्त्वया विप्र भवांस्तत्कारणं वद ॥ १७

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ढ. °न दशारण्यं महाश्रमम् । घ. ट. ड. °न महात्मानं ददर्श ह । २ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. तेऽद्य । ३ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °वाद्य वं । ४ क. ख. घ. ङ. झ. ट. ड. ढ. प्रोचुर्दे॰ वाश्चाग्निपुरोगमाः । कं ।

सुकर्मोवाच—

अयं मे ह्यतिथिः प्राप्तो विद्याधरो हि पिप्पलः । मामेवं भाषते प्राज्ञो विश्ववश्यस्य कारणम् १८
प्रत्ययार्थं समाहूता अस्यैव च महात्मनः । स्वं स्वं स्थानं प्रगच्छध्वमित्युवाच सुरान्प्रति ॥ १९
तमूचुस्ते ततो देवाः सुकर्माणं महामतिम् । अस्माकं दर्शनं विप्र विफलं नैव जायते ॥ २०
वरं वरय भद्रं ते मनसा यद्धि रोचते । तत्प्रदद्मो न संदेहस्त्वेवमूचुः सुरोत्तमाः ॥ २१
भक्त्या प्रणम्य तान्देवान्वरं ब्रूते द्विजोत्तमः । अचलां दत्त देवेन्द्रा सुभक्तिं भावसंयुताम् ॥
मातापित्रोश्च मे नित्यमेतद्वरमनुत्तमम् ॥ २२
[*पिता मे वैष्णवं लोकं प्रयात्वेतद्वरोत्तमम् । तद्वन्माता च देवेशा वरमन्यं न याचये ॥] २३

देवा ऊचुः—

पितृभक्तोऽसि विप्रेन्द्र[1] सुभक्तिस्ते भवत्विह । सुकर्मञ्श्रूयतां वाक्यं प्रीत्या युक्ताः सदैव ते॥२४
एवमुक्त्वा गता देवाः स्वर्लोकं नृपनन्दन । सुकर्मणैवमाश्चर्यं तस्याग्रे परिदर्शितम् ॥ २५
दृष्टं तु पिप्पलेनापि कौतुकं महदद्भुतम् । तमुवाच स धर्मात्मा पिप्पलः कुण्डलात्मजम् ॥ २६
अर्वाचीनं त्विदं रूपं पराचीनं च कीदृशम् । प्रभावमुभयोश्चैव वदस्व वदतां वर ॥ २७

सुकर्मोवाच—

अर्वाचीनस्य रूपस्य लिङ्गमेव वदामि ते । येन लोकाः प्रमोद्यन्त इन्द्राद्याः सचराचराः॥ २८
अयमेष जगन्नाथः सर्वगो व्यापकः परः । अस्य रूपं न दृष्टं हि केनाप्येव हि योगिना ॥ २९
श्रुतिरेव वदत्येवं न वक्तुं शक्यतेऽपि सः । अपादो ह्यकरोऽनासो ह्यकर्णो मुखवर्जितः ॥ ३०
सर्वं पश्यति वै कर्म कृतं त्रैलोक्यवासिनाम् । तेषामुक्तमकर्णश्च स शृणोति सुशान्तिदः ॥ ३१
गतिहीनो व्रजेत्सोऽपि सर्वत्र परिदृश्यते । पाणिहीनः पादहीनः कुरुते च प्रधावति ॥
सर्वत्र दृश्यते विश्वव्यापकः पादवर्जितः ॥ ३२
यं न पश्यन्ति देवेन्द्रा मुनयस्तत्त्वदर्शिनः । स च पश्यति तान्सर्वान्सत्यासत्यपदे स्थितः ॥ ३३
व्यापकं विमलं सिद्धं[3] सिद्धिदं सर्वनायकम्[2]। यं जानाति महायोगी व्यासो धर्मार्थकोविदः॥३४
तेजोमूर्तिः स चाऽऽकाशमेकवर्णमनन्तकम् । व्यासश्चैव विजानाति मार्कण्डेयश्च तत्पदम् ॥ ३५
पराचीनं प्रवक्ष्यामि शृणुष्वैकाग्रमानसः । यदाऽऽहृत्य स भूतात्मा स्वयमेव प्रजापतिः ॥ ३६
अप्सु शय्यां समाश्रित्य शेषभोगास्थितः प्रभुः । तमाश्रित्य स्वपित्येको बहुकालं जनार्दनः[5]॥ ३७
जलान्धकारसंतप्तो मार्कण्डेयो महामुनिः । स्थानमिच्छन्स योगात्मा निर्विण्णो भ्रमणेन सः॥३८
भ्रममाणः स ददृशे शेषपर्यङ्कशायिनम् । सूर्यकोटिप्रतीकाशं दिव्याभरणभूषितम् ॥ ३९
दिव्यमाल्याम्बरधरं सर्वव्यापिनमीश्वरम् । योगनिद्रां[6] गतं कान्तं शङ्खचक्रगदाधरम्[7] ॥ ४०
एका नारी महाकाया कृष्णाञ्जनचयोपमा । दंष्ट्राकरालवदना भीमरूपा द्विजोत्तम ॥ ४१
तयोक्तोऽसौ मुनिश्रेष्ठो मा भैरिति महामुनिः । पद्मपत्रं सुविस्तीर्णं पञ्चयोजनमायतम् ॥ ४२
तस्मिन्पत्रे महादेव्या मार्कण्डेयो महामुनिः । संनिवेश्य सुखेनापि नास्त्यत्र च भयं तव ॥ ४३
तामुवाच स योगीन्द्रः का त्वं भवासि भामिनि । [†पृष्टैवं मुनिना देवी सादरं प्राह भूसुर]॥ ४४

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. ढ. पुस्तकस्थः । † ञ. पुस्तक एवेदम् ।

१ ङ. °न्द्र भक्त्या ते संभ° । २ क. ख. च. सुसाक्षिकः । ङ. ससाक्षिकः । ३ क. ख. ङ. च. छ.झ.ढ. °द्धं श्रुतिराख्याति निश्चितम् । ४ ट. दर्शनात्मकम् । ५ ङ. °नः । मायान्ध° । ६ ञ. °निद्रा च तत्कान्ता श° । ७ ञ. °धरा । एकाकिनी म° ।

नागभोगस्य पर्यङ्के यः शयीत स केशवः । अस्याहं वैष्णवी शक्तिः कालरात्रिरिह द्विज ॥ ४५
मामेवं विद्धि विप्रेन्द्र सर्वमायासमन्विताम् । महामाया पुराणेषु जगन्मोहाय कीर्तिता ॥ ४६
इत्युक्त्वा सा गता देवी अन्तर्धानं हि पिप्पल । तस्यां देव्यां गतायां तु मार्कण्डेयो ह्यपश्यत ४७
तस्य नाभ्यां समुत्पन्नं पङ्कजं हाटकप्रभम् । तस्माज्जज्ञे महातेजा ब्रह्मा लोकपितामहः ॥ ४८
तस्माद्धि जज्ञिरे लोकाः सर्वे स्थावरजङ्गमाः । इन्द्राद्या लोकपालाश्च देवाश्चाग्निपुरोगमाः ॥ ४९
[*अर्वाचीनं स्वरूपं तु दर्शितं हि मया नृप । अर्वाचीनः शरीरोऽयं पराचीनो निराश्रयः ५०
यदा स दर्शयेत्कायं कायरूपा भवन्ति ते]। अर्वाचीनास्ततः सर्वे ब्रह्माद्याः पिप्पलाखिलाः ५१
[†अर्वाचीना अमी लोका ये भवन्ति जगत्त्रये] । पराचीनः स विश्वात्मा यं प्रपश्यन्ति योगिनः
मोक्षरूपं परं स्थानं परब्रह्मस्वरूपकम् । अव्यक्तमक्षरं हंसं शुद्धं सिद्धिसमन्वितम् ॥ ५३
पराचीनस्य यद्वृत्तं विद्याधर तवाग्रतः । सर्वमेव समाख्यातमन्यत्किं ते वदाम्यहम् ॥ ५४

विद्याधर उवाच—

कस्मादेतन्महाज्ञानमुद्भूतं तव सुव्रत । अर्वाचीनगतिं विद्वान्पराचीनगतिं तथा ॥ ५५
त्रैलोक्यस्य परं ज्ञानं त्वय्येवं परिवर्तते । तपसो नैव पश्यामि परां निष्ठां हि सुव्रत ॥
स्वप्रभावं वदस्वैवं केन ज्ञानं तवाखिलम् ॥ ५६

सुकर्मोवाच—

एतदेव न जानामि न कृतं कायशोषणम् । यजनं याजनं धर्मं न ज्ञानं तीर्थसाधनम् ॥ ५७
न मया साधितं चान्यत्पुण्यं किंचित्सुकर्मजम् । स्फुटमेकं प्रजानामि पितृमातृप्रपूजनम् ॥ ५८
उभयोस्तु स्वहस्तेन मातापित्रोश्च पिप्पल । पादप्रक्षालनं पुण्यं स्वयमेव करोम्यहम् ॥ ५९
अङ्गसंवाहनं स्नानं भोजनादिकमेव च । त्रिकालोपासनं भीतः साधयामि दिने दिने ॥ ६०
पादोदकं तयोश्चैव मातापित्रोर्दिने दिने । भक्त्या भावेन विन्दामि पूजयामि स्वभावतः ॥ ६१
गुरू मे जीवमानौ तौ यावत्कालं हि पिप्पल । तावत्कालं तु मे लाभो ह्यतुलश्च प्रजायते ॥ ६२
त्रिकालं पूजयाम्येतौ भावशुद्धेन चेतसा । स्वच्छन्दलीलासंचारी वर्ताम्येवं हि पिप्पल ॥ ६३
किं मे चान्येन तपसा किं मे कायस्य शोषणैः । किं मे सुतीर्थयात्राभिरन्यैः पुण्यैश्च सांप्रतम् ॥
मखानामेव सर्वेषां यत्फलं प्राप्यते बुधैः । [*तत्फलं तु मया दृष्टं पितुः शुश्रूषणादपि ॥ ६५
मातुः शुश्रूषणं तद्वत्पुत्राणां गतिदायकम् । सर्वधर्मस्य सर्वस्वं सारभूतं जगत्त्रये ॥ ६६
पुत्रस्य जायते लोको मातुः शुश्रूषणादपि] । पितुः शुश्रूषणे तद्वमहत्पुण्यं प्रजायते ॥ ६७
तत्र गङ्गा गया तीर्थं तत्र पुष्करमेव च । यत्र माता पिता तिष्ठेत्पुत्रस्यापि न संशयः ॥ ६८
अन्यानि तत्र तीर्थानि पुण्यानि विविधानि च । भजन्ते तानि पुत्रस्य पितुः शुश्रूषणादपि ॥ ६९
पितुः शुश्रूषणात्तस्य दानस्य तपसः फलम् । सत्पुत्रस्य भवेद्विप्र नान्यत्कर्म समाश्रयेत् ॥ ७०
पितुः शुश्रूषणात्पुण्यं पुत्रः प्राप्नोत्यनुत्तमम् । सुकर्मणस्तु सर्वत्र इह चैव परत्र च ॥ ७१

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो ङ. झ. ढ. पुस्तकस्थः ।

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °रित्युच्यते । मा° । २ ख. विद्यात्परा° । ३ घ. ट. ड. °ह्येव प° । ४ घ. ट. ड. °श्च तत्पर । पा° । ५ क. ख. ङ. च. छ. झ. ढ. °काले ध्यानसंलीनः सा° । ६ ख. ङ. च. छ. ढ. वन्दामि । ७ क. ख. ङ. च. छ. झ. ढ. द्विजैः ।

जीवमानौ गुरौ(रू) एतौ स्वमातापितरौ तथा । शुश्रूषते सुतो भक्त्या तस्य पुण्यफलं शृणु ७२
देवास्तस्यापि तुष्यन्ति ऋषयः पुण्यवत्सलाः । त्रयो लोकाश्च तुष्यन्ति पितुः शुश्रूषणादिह ॥७३
मातापित्रोस्तु यः पादौ नित्यं प्रक्षालयेत्सुतः । तस्य भागीरथीस्नानमहन्यहनि जायते ॥ ७४
पुण्यैर्मिष्टान्नपानैर्यः पितरं मातरं तथा । भक्त्या भोजयते नित्यं तस्य पुण्यं वदाम्यहम् ॥ ७५
अश्वमेधस्य यज्ञस्य फलं पुत्रस्य जायते । ताम्बूलैश्छादनैश्चैव पानैश्चाशनकैस्तथा ॥ ७६
भक्त्या चान्नेन पुण्येन गुरू येनाभिपूजितौ । सर्वज्ञानी भवेत्सोऽपि यशः कीर्तिमवाप्नुयात् ॥७७
मातरं पितरं दृष्ट्वा हर्षात्संभाषते सुतः । निधयस्तस्य संतुष्टा नित्यं गेहे वसन्ति च ॥
वेद्धाः सौहृदमायान्ति पुत्रस्य सुखदाः सदा ॥ ७८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थमाहात्म्ये द्विषष्टितमोऽध्यायः ॥ ६० ॥

आदितः श्लोकानां समष्ट्यङ्काः—६४४०

---

अथ त्रिषष्टितमोऽध्यायः ।

---

सुकर्मोवाच—

[*तयोश्चापि द्विजश्रेष्ठ मातापित्रोश्च स्नातयोः । पुत्रस्यापि हि सर्वाङ्गे पतन्त्यम्बुकणा यदा ॥
सर्वतीर्थसमं स्नानं पुत्रस्यापि प्रजायते] ॥ १
पतितं क्षुधितं वृद्धमशक्तं सर्वकर्मसु । व्याधितं कुष्ठिनं तातं मातरं च तथाविधाम् ॥ २
उपाचरति यः पुत्रस्तस्य पुण्यं वदाम्यहम् । विष्णुस्तस्य प्रसन्नात्मा जायते नात्र संशयः ॥ ३
प्रयाति वैष्णवं लोकं यदप्राप्यं हि योगिभिः । पितरौ विकलौ दीनौ वृद्धौ दुःखितमानसौ ॥ ४
महागदेन संतप्तौ परित्यजति पापधीः । स पुत्रो नरकं याति दारुणं कृमिसंकुलम् ॥ ५
वृद्धाभ्यां यः समाहूतो गुरुभ्यामिह सांप्रतम् । न प्रयाति सुतो भूत्वा तस्य पापं वदाम्यहम् ॥ ६
विष्ठाशी जायते मूढोऽमेध्यभोजी न संशयः । यावज्जन्मसहस्रं तु पुनः श्वानोऽभिजायते ॥ ७
पुत्रगेहे स्थितौ मातापितरौ वृद्धकौ तथा । स्वयं ताभ्यां विना भुक्त्वा प्रथमं जायते घृणिः ॥ ८
मूत्रं विष्ठां च भुञ्जीत यावज्जन्मसहस्रकम् । कृष्णसर्पो भवेत्पापी यावज्जन्मशतत्रयम् ॥ ९
मातरं पितरं वृद्धमवज्ञाय प्रवर्तते । गृध्रोऽपि जायते दुष्टो जन्मकोटिशतैरपि ॥ १०
पितरौ कुत्सते पुत्रः कटुकैर्वचनैरपि । स च पापी भवेद्व्याघ्रः पश्चाद्दुःखी प्रजायते ॥ ११
मातरं पितरं पुत्रो न नमस्यति पापधीः । कुम्भीपाके वसेत्तावद्यावद्युगसहस्रकम् ॥ १२
नास्ति मातुः परं तीर्थं पुत्राणां च पितुस्तथा । नारायणसमावेताविह चैव परत्र च ॥ १३
तस्मादहं महाप्राज्ञ पितृदेवं प्रपूजये । मातरं च तथा नित्यं यथायोगं यथाहितम् ॥ १४
पितृमातृप्रसादेन संजातं ज्ञानमुत्तमम् । त्रैलोक्यं सकलं विप्र संप्राप्तं वश्यतां मम ॥ १५

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. भूत्वा । २ क. ख. ङ. च. छ. झ. ड. ढ. गावः । ३ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. विकलं । ४ क. ङ. च. छ. ड. °ढो ग्रामघ्राणी न । ५ घ. °था । आत्मना भुज्यते तत्र प्रथमं मिष्टमेव सः । मू° । ६ छ. °ते । प्राहोऽपि । ट. °ते । गर्भे विजा° । ङ. °ते । प्रहोऽपि । ७ घ. ट. पश्चाद्दुष्टः । ङ. परभक्षः । ङ. ढ. पश्चाद्दक्षः । ८ ङ. °था । तारणाय हि पापाच्च सेवेदत्र प° ।

अर्वाचीनं परं ज्ञानं पितुश्चास्य प्रसादतः । पराचीनं च विप्रेन्द्र वासुदेवस्वरूपकम् ॥ १६
सर्वज्ञानं समुद्भूतं पितृमातृप्रसादतः । को न पूजयते विद्वान्पितरं मातरं तथा ॥ १७
साङ्गोपाङ्गैरधीतैस्तैः श्रुतिशास्त्रसमन्वितैः । वेदैरपि च किं विप्र पिता येन न पूजितः ॥ १८
माता न पूजिता येन तस्य वेदा निरर्थकाः । यज्ञैश्च तपसा विप्र किं दानैः किं च पूजनैः॥ १९
प्रयाति तस्य वैफल्यं न माता येन पूजिता । न पिता पूजितो येन जीवमानो गृहे स्थितः ॥२०
एष पुत्रस्य वै धर्मस्तथा तीर्थं नरेष्विह । [*एष पुत्रस्य वै मोक्षस्तथा जन्म फलं शुभम् ]॥
एष पुत्रस्य वै यज्ञो दानमेव न संशयः ॥ २१
पितरं पूजयेन्नित्यं भक्त्या भावेन तत्परः । तस्य ज्ञानं समस्तं स्याद्यदुक्तं पूर्वमेव हि ॥ २२
दानस्यापि फलं लब्धं तीर्थस्यापि न संशयः । यज्ञस्यापि फलं तेन येन माताऽप्युपासिता॥२३
पिता च येन वै भक्त्या नित्यमेवाप्युपासितः । तस्य सर्वा विप्र सिद्धा यज्ञाद्याः पुण्यदाः क्रियाः
एतदर्थे मया ज्ञातं धर्मशास्त्रं श्रुतं पुरा । पितृभक्तिपरो नित्यं भवेत्पुत्रो हि पिप्पल ॥
तुष्टे पितरि संप्राप्तो यदुराजः पुरा सुखम् ॥ २५
[* रुष्टे पितरि च प्राप्तं महत्पापं पुरा शृणु । गुरुणा पौरवेणापि पित्रा शप्तेन भूतले] ॥ २६
एवं ज्ञात्वा मया सम्यग्द्वावेतौ समुपासितौ । एतयोश्च प्रसादेन प्राप्तं फलमनुत्तमम् ॥ २७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६४६७

---

अथ चतुःषष्टितमोऽध्यायः ।

---

पिप्पल उवाच—

पितुः प्रसादभावाद्वै यदुना सुखमुत्तमम् । कथं प्राप्तं सुभुक्तं च [*तन्मे विस्तरतो वद ॥ १
कस्मात्पापप्रभावं च] पुत्रेण तु द्विजोत्तम । तत्सर्वं विस्तरेणापि वद मे कुण्डलात्मज ॥ २

सुकर्मोवाच—

श्रूयतामभिधास्यामि चरित्रं पापनाशनम् । नहुषस्य सुपुण्यस्य ययातेश्च महात्मनः ॥ ३
सोमवंशात्प्रसूतो वै नहुषो मेदिनीपतिः । दानधर्माननेकांश्च स चकारातुलानपि ॥ ४
शतं चैवाश्वमेधानामियाज नृपसत्तमः । वाजपेयशतं चापि अन्यान्यज्ञाननेकशः ॥ ५
आत्मपुण्यप्रभावेन ऐन्द्रं लोकमवाप सः । पुत्रं धर्मगुणोपेतं प्रजापालं विधाय सः ॥ ६
ययातिं सत्यसंपन्नं धर्मवीर्यं महामतिम् । ऐन्द्रं पदं गतो राजा यस्य पुत्रः परंतपः ॥ ७
ययातिः सत्यसंपन्नः प्रजा धर्मेण पालयेत् । [*स्वयमेव प्रपश्येद्यः प्रजाकर्माणि तान्यपि] ॥ ८
इयाज यज्ञान्धर्मात्मा श्रुत्वा धर्ममनुत्तमम् । यज्ञतीर्थादिकं सर्वं दानपुण्यं चकार सः ॥
राज्यं चकार मेधावी क्षत्रधर्मेण पालयन् ॥ ९

---

* एतच्चिह्नान्तर्गतः पाठः ङ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ङ. झ. ट. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. घ. ङ. छ. झ. ट. ढ. °तः । वासुदेवस्य तस्यैव पराचीनं महामते । स° । २ म. सुभक्तेन पुत्रे° । ३ झ. पुनर्भुक्तं द्वि° । ङ. ढ. रुरुभुक्तं । ४ ङ. धर्मोचार्ये । ५ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °वी सत्यधर्मेण वै तदा । या° । ६ म. °न् । अशीतिश्च स° ।

यावदशीतिसहस्राणि वर्षाणि नृपनन्दनः । [*तावत्कालं गतं तत्र ययातेस्तु महात्मनः] ॥ १०
तस्य पुत्राश्च चत्वारस्तद्वीर्यबलविक्रमाः । तेषां नामानि वक्ष्यामि शृणुष्वैकाग्रमानसः ॥ ११
तस्याऽऽसीज्ज्येष्ठपुत्रस्तु रुरुर्नाम महाबलः । पुरुर्नाम द्वितीयोऽभूत्तृतीयः कुरुरेव च ॥
यदुश्चापि स धर्मात्मा चतुर्थो नृपनन्दन ॥ १२
[† एवं चत्वारः पुत्राश्च ययातेस्तु महात्मनः ] । तेजसा पौरुषेणापि पितृतुल्यपराक्रमाः ॥ १३
एवं राज्यं कृतं तेन धर्मेणापि ययातिना । यशः कीर्तिश्च तस्यापि त्रैलोक्ये प्रचुराऽभवत् ॥ १४

विष्णुरुवाच—

एकदा तु द्विजश्रेष्ठो नारदो ब्रह्मनन्दनः । इन्द्रलोकं गतो द्रष्टुं देवदेवं पुरंदरम् ॥ १५
सहस्राक्षस्ततोऽपश्यद्धुताशनसमप्रभम् । देवो विप्रं समायान्तं सर्वज्ञं ज्ञानपण्डितम् ॥ १६
पूजितं मधुपर्काद्यैर्भक्त्या नमितकन्धरः । निवेश्य स्वासने पुण्ये तं पप्रच्छ महामुनिम् ॥ १७

इन्द्र उवाच—

कस्मादागमनं लोकात्किमर्थमिह चाऽऽगतः । किं तेऽद्य सुप्रियं विप्र करोम्यथ महामते ॥ १८

नारद उवाच—

देवराज कृतं सर्वं भक्त्या यच्च प्रभाषितम् । संतुष्टोऽस्मि महाप्राज्ञ प्रश्नोत्तरं वदाम्यहम् ॥ १९
महीलोकात्तु संप्राप्तः सांप्रतं तव मन्दिरम् । त्वामन्वेष्टुं समायातो दृष्ट्वा नाहुषमुत्तमम् ॥ २०

इन्द्र उवाच—

सत्यधर्मेण को राजा प्रजाः पालयते सदा । सर्वधर्मसमायुक्तः श्रुतवाञ्ज्ञानवान्गुणी ॥ २१
पृथिव्यामस्ति को राजा देवज्ञो ब्राह्मणप्रियः । ब्रह्मण्यो वेदविच्छूरो दाता यज्वा सुभक्तिमान् ॥ २२

नारद उवाच—

एभिर्गुणैस्तु संयुक्तो नहुषस्याऽऽत्मजो बली । यस्य सत्येन वीर्येण सर्वे लोकाः प्रतिष्ठिताः २३
भवादृशो हि भूर्लोके ययातिर्नहुषात्मजः । भवान्स्वर्गे स चैवास्ति भूतले भूतिवर्धनः ॥ २४
पितुः श्रेष्ठो महाराज ह्यश्वमेधशतं तथा । वाजपेयशतं चक्रे ययातिः पृथिवीपतिः ॥ २५
दत्तान्यनेकरूपाणि दानानि तेन भक्तितः । गवां लक्षसहस्राणि तथा कोटिशतानि च ॥ २६
कोटिहोमांश्चकाराथ लक्षहोमांस्तथैव च । भूमिदानादिकं दानं ब्राह्मणेभ्योऽददाच्च सः ॥ २७
साङ्गोपाङ्गः स्वरूपो हि धर्मस्तेनैव पालितः । एवंगुणैः समायुक्तो ययातिर्नाहुषो भुवि ॥ २८
वर्षाणां तु सहस्राणि ह्यशीतिर्नृपनन्दनः । राज्यं चकार सत्येन यथाविप्र भवानिव ॥ २९

सुकर्मोवाच—

एवमाकर्ण्य देवेन्द्रो नारदाच्च मुनीश्वरात् । समालोच्य स मेधावी संभीतो धर्मपालनात् ॥ ३०
शतयज्ञप्रभावेन नहुषेण पुरा मम । ऐन्द्रं पदं गृहीतं च देवराजोऽभवत्तदा ॥
शचीबुद्धिप्रभावेन पदभ्रष्टो व्यजायत ॥ ३१
तादृशोऽयं महाराजः पितृतुल्यपराक्रमः । लक्ष्यते नात्र संदेहः पदमैन्द्रमवाप्स्यति ॥ ३२

---

* एतच्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः ।

१ अ. °स्तु तुर्वसुर्वै म° । २ अ. °लः । अनुर्ना° । ३ ङ. झ. ढ. महामुने । ४ घ. ङ. छ. झ. ट. ढ. °म् । सत्यलो° । ५ ङ. ढ. वेदज्ञो । ६ ङ. प्रतापिताः । ७ ङ. °णि पुण्यानि विविधानि च । ग° । ८ घ. ङ. छ. झ. ट. ड. ढ. °वत्पुरा । श° ।

[*येन केनाप्युपायेन तं भूपं दिवमानये ]। इत्येवं चिन्तयामास तस्माद्भीतः सुरेश्वरः ॥ ३३
[† भूपालस्य नृपश्रेष्ठययातेः स महद्भयात् ]। तमानेतुं ततो दूतं प्रेषयामास देवराट् ॥ ३४
नाहुषाय विमानं तु सर्वज्ञानसमन्वितः। सारथिं मातलिं चैव विमानेन समन्वितम् ॥ ३५
गतो हि मातलिस्तत्र यत्रासौ नहुषात्मजः। प्रहितः सुरराजेन आनेतुं तं महामतिम् ॥ ३६
सभायां वर्तमानस्तु यथाचेन्द्रः प्रभासते। तथा ययातिर्धर्मात्मा स्वसभायां विराजते ॥ ३७
तमुवाच महात्मानं राजानं सत्यभूषणम्। सारथिर्देवराजस्य शृणु राजन्वचो मम ॥ ३८
प्रहितो देवराजेन सकाशं तव सांप्रतम्। यद्ब्रूते देवराजस्तु तत्सर्वं सुमनाः कुरु ॥ ३९
आगन्तव्यं त्वयाऽद्यैव ऐन्द्रं लोकं हि नान्यथा। पुत्रे राज्यं विसृज्यैव कृत्वा चान्तेष्टिमात्मनः ॥
इलो राजा महातेजा वसते नहुषात्मज। पुरूरवा महाबाहो विप्रचित्तिः प्रतापवान् ॥ ४१
शिविर्वसति तत्रैव मनुरिक्ष्वाकुसत्तमः। सगरो नाम मेधावी नहुषश्च पिता तव ॥ ४२
कृतवीर्यः कृतघ्नश्च शंतनुश्च महामनाः। भरतो युवनाश्वश्च कार्तवीर्यो नरेश्वरः ॥
यज्ञानाहृत्य बहुधा मोदन्ते दिवि भूभृतः ॥ ४३
अन्ये ये चापि राजानो यज्वानः सुमहाबलाः। सेव्यन्ते दिवि चेन्द्रेण मोदन्ते च स्वकर्मणा ४४
त्वं पुनः सर्वधर्मेषु संस्थितः सांप्रतं भुवि। शक्रेण सह मोदस्व स्वर्गलोके महीपते ॥ ४५

ययातिरुवाच—

किं मया तत्कृतं कर्म येन प्रार्थयते भवान्। इन्द्रस्य देवराजस्य तत्सर्वं मे वदस्व ह ॥ ४६

मातलिरुवाच—

यावच्छतसहस्राणि वर्षाणि नृपनन्दन। दानयज्ञादिकं कर्म त्वयैव परिसाधितम् ॥ ४७
दिवं गच्छ महाराज कर्मणा तेन सांप्रतम्। सख्यं च देवराजेन गत्वा कुरु महामते ॥ ४८
पञ्चात्मकशरीरस्य भूमौ त्यागं कुरुष्व हि। दिव्यं रूपं समास्थाय भुङ्क्ष्व भोगान्मनोरमान् ॥
यथा यथा कृता भूमौ यज्ञा दानं तपश्च ते। तथा तथा स्वर्गभोगाः प्रार्थयन्ते नरेश्वर ॥ ५०

ययातिरुवाच—

येन कायेन सिध्येत सुकृतं दुष्कृतं भुवि। मातले तत्कथं त्यज्य गच्छेल्लोकमुपार्जितम् ॥ ५१

मातलिरुवाच—

यत्रैवोपार्जितं कार्यं पञ्चात्मकं मृतं नृप। तत्रैव तत्परित्यज्यं दिव्येनैव व्रजन्ति ते ॥ ५२
ईश्वरा मानवाः सर्वे पापपुण्यप्रसाधकाः। तेऽपि कायं परित्यज्य अधः स्वर्गं व्रजन्ति च ॥ ५३

ययातिरुवाच—

पञ्चात्मकेन कायेन सुकृतं दुष्कृतं नराः। उत्पाद्यैव प्रयान्त्येव अन्यद्रूपं च मातले ॥ ५४
को विशेषो हि धर्मज्ञ भूमौ कायं परित्यजेत्। पापपुण्यप्रभावाद्वै कायस्य पतनं भवेत् ॥ ५५

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः। † एतच्चिह्नान्तर्गतः पाठो घ. छ. ट. पुस्तकस्थः।

---

१ घ. ज. ट. ड. प्राणवायुं। २ क. ख. ङ. च. छ. झ. ड. ढ. सर्वकामसमन्वितम्। ट. सर्वक्रमसमन्वितम्। ३ छ. ड. °त्यभाष°। ४ ड. संतुष्टा। घ. ट. मरुतः। ५ क. ख. ङ. च. छ. झ. ड. ढ. °लाः। सर्वे ते दि°। ट. °लाः। वसन्ति दि°। ६ क. ख. घ. च. झ. ट. ड. °र्वधर्मज्ञः सर्वधर्मेषु संस्थितः। स°। ङ. छ. ढ. °र्वकर्मज्ञः सर्वधर्मेषु संस्थितः। स°। ७ ड. °वद-शीतिस°। ८ क. ख. ङ. च. छ. झ. ड. ढ. °त्मकमिदं नृ°। ९ ङ. ढ. °ज्य व्रजत ऊर्ध्वं प्र°। १० क. ख. च. छ. झ. अध-ऊर्ध्वं च।

दृष्टान्तो दृश्यते सूत मत्यहं मर्त्यमण्डले । विशेषं नैव पश्यामि धर्मपुण्यस्य चाधिकम् ॥ ५६
सत्यधर्मादिकं पुण्यं येन कायेन मानवः । सैमर्जयति वै मर्त्यस्तं कस्माद्विप्रसर्जयेत् ॥ ५७
आत्मा कायश्च द्वावेतौ मित्ररूपावुभावपि । कायं मित्रं परित्यज्य आत्मा याति सुनिश्चितम् ५८

मातलिरुवाच—

सत्यमुक्तं त्वया राजन्कायं त्यक्त्वा प्रयाति सः । संबन्धो नास्ति तेनापि समं कायेन चाऽऽत्मनः
यस्मात्पञ्चस्वरूपोऽयं संधिजर्जरितस्तदा । जरया पीड्यमानस्तु स जीवं त्यक्तुमिच्छति ॥ ६०
जरादोषप्रभग्ने च तत्र स्थातुं स नेच्छति । आकुलव्याकलो भूत्वा जीवं त्यक्त्वा प्रयाति सः ६१
सत्येन धर्मपुण्यैश्च दानैर्नियमसंयमैः । अश्वमेधादिभिर्यज्ञैस्तीर्थैः संयमनैस्तथा ॥ ६२
सुकृतैश्चैव पुण्यैश्च जरा नैव प्रबाधते । पातकैश्च महाराज पचते कायमेव सा ॥ ६३

ययातिरुवाच—

कस्माज्जरा समुत्पन्ना कस्मात्कायं प्रपीडयेत् । मम विस्तरतः सूत वक्तुमर्हसि सत्तम ॥ ६४

मातलिरुवाच—

हन्त ते वर्णयिष्यामि जरायाः परिकारणम् । यस्माच्चैवं समुद्भूता कायमध्ये नृपोत्तम ॥ ६५
पञ्चभूतात्मकः कायो विषयैः पञ्चभिर्वृतः । यमात्मा त्यजते राजन्स कायः परिधक्ष्यते ॥ ६६
वह्निना दीप्यमानस्तु सरसः प्रज्वलेन्नृप । तस्माद्विजायते धूमो धूमान्मेघश्च जायते ॥ ६७
मेघात्प्रवर्तते चाम्भस्ततः पृथ्वी प्रजायते । ऊर्ध्वमायाति सा पृथ्वी यथा नारी रजस्वला ॥६८
तस्मात्प्रजायते गन्धो गन्धाद्रसो नृपोत्तम । रसात्प्रभवते चान्नमन्नाच्छुक्रं न संशयः ॥ ६९
शुक्राद्धि जायते कायः कुरूपः काय एव च । यथा पृथ्वी सृजेद्गन्धान्रसैश्चरति भूतले ॥ ७०
तथा कायश्चरेन्नित्यं रसाधारो हि सर्वशः । गन्धश्च जायते तस्माद्गन्धाद्रसो भवेत्पुनः ॥ ७१
तस्माज्जज्ञे महावह्निर्दृष्टान्तं पश्य भूपते । यथा काष्ठाद्भवेद्वह्निः पुनः काष्ठं प्रकाशयेत् ॥ ७२
कायमध्ये रसादग्निस्तद्वदेव प्रजायते । तत्र संचरते नित्यं कायं पुष्णाति भूपते ॥ ७३
यावद्रसस्य चाऽऽधिक्यं तावज्जीवः प्रशान्तिमान् । चरित्वा तादृशं वह्निः क्षुधारूपेण वर्तते॥७४
अन्नमिच्छत्यसौ तीव्रः पयसा च समन्वितम् । प्रदा(धा)नं लभते चान्नमुदकं चापि भूपते ॥७५
शोणितं चरते वह्निस्तद्वद्वीर्यं न संशयः । यक्ष्मरोगो भवेत्तस्मात्सर्वकायप्रणाशकः ॥ ७६
रसाधिक्यं भवेद्राजन्नथ वह्निः प्रशाम्यति । रसेन पीड्यमानस्तु ज्वररूपोऽभिजायते ॥ ७७
ग्रीवापृष्ठं कटिं पायुं सर्वास्वेव तु संधिषु । आरुध्य तिष्ठते वह्निः काये वह्निः प्रवर्तते ॥ ७८
तस्याऽऽधिक्यं चरेन्नित्यं कायं पुष्णाति संमतः । रसस्तु वृद्धिमायाति बलरूपो भवेत्तदा ॥ ७९
अतिरिक्तो बलेनैव वीर्यान्मर्माणि चालयेत् । तेनैव जायते कामः शोषवान्पुरुषो भवेत् ॥ ८०
स कामाग्निः समाख्यातो बलनाशकरो नृप । मैथुनस्य प्रसङ्गेन विनाशत्वं कलेवरे ॥ ८१
नारीणां संश्रयेत्पाणी पीडितः कामवह्निना । मैथुनस्य प्रसङ्गेन मूर्छते मर्म कृन्तति ॥ ८२
तेजोहीनो भवेत्कायो बलहीनश्च जायते ॥ ८३
बलहीनो यदा स्याद्वै दुर्बलो वह्निनेरितः । [*स वह्निः प्रचरेत्कायः(ये) शोणितं शुक्रमेव च ८४

* क. ख. ङ. च. छ. झ. ढ. ढ. पुस्तकस्थमेतत् ।

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. प्रत्यक्षं । २ ङ. ढ. °मि पापपु° । ३ घ. ट. स सर्जति ततो म° । ४ क. ख. घ. च. छ. झ. ट. ड. ढ. °ति स निश्चितः । मा° । ङ. ढ. °ति सुनिश्चितः । मा° । ५ छ. प्रजायते । ६ ड. भूपते । ७ क. ख. ङ. च. छ. झ. ट. ड. ढ. °मः शल्यरूपो भवेन्नृप । स । ८ क. ख. च. छ. झ. °हिपीडितः ।

शुक्रशोणितयोर्नाशाच्छून्यदेहो विजायते । अतीव जायते वायुः प्रचण्डो दारुणाकृतिः ॥
विवर्णो दुःखसंतप्तः शून्यबुद्धिस्ततो भवेत् ] ॥ ८५
दृष्टा श्रुता च या नारी तच्चित्तो भ्रमते सदा । तृप्तिर्न जायते काये [*लोलुपे चित्तवर्त्मनि॥८६
विरूपश्च सुरूपश्च ध्यानान्मध्ये प्रजायते । बलहीनो यदा कामी मांसशोणितसंक्षयात् ॥ ८७
पलितं जायते] काये नाशिते कामवह्निना । तस्मात्संजायते कामी वृद्धो भूत्वा दिने दिने ॥ ८८
सुरते चिन्तते नारीं यथा वार्धुषिको नरः । तथा तथा भवेद्धानिस्तेजसोऽस्य नरेश्वर ॥ ८९
तस्मात्प्रजायते कामो नाशरूपो न संशयः । प्राणिनां कालरूपेण ज्वरो भवति दारुणः ॥ ९०
स्थावरा जङ्गमाः सर्वे ज्वरेण परिपीडिताः । नाशमायान्ति ते सर्वे बहुपीडाप्रपीडिताः ॥ ९१
अनेन विधिना जीर्णमन्यत्किं ते वदाम्यहम् । एवमुक्तो महाप्राज्ञो मातलिं वाक्यमब्रवीत् ॥ ९२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थकथने चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६५२९

अथ पञ्चषष्टितमोऽध्यायः ।

ययातिरुवाच—
धर्मस्य रक्षकः कायो मातले आत्मना सह । नाकमेष न प्रयाति तन्मे त्वं कारणं वद ॥ १
मातलिरुवाच—
पञ्चानामपि भूतानां संगतिर्नास्ति भूपते । आत्मना सह भद्रं ते संगत्या नैव वर्तते ॥ २
सर्वेषां नात्र संघातः कायग्रामे प्रवर्तते । जरया पीडिताः सर्वे स्वं स्वं स्थानं प्रयान्ति ते ॥ ३
रसाधिका स्यात्पृथिवी सा राजन्परिकथ्यते । रसैः क्लिन्ना ततः पृथ्वी मृदुत्वं याति भूपते ॥ ४
भिद्यते पिपीलिकाभिर्मूषिकाभिस्तथैव सा । छिद्राण्येव प्रजायन्ते वल्मीकाश्च महोदराः ॥ ५
तद्वत्काये प्रजायन्ते गण्डमाला विचर्चिकाः । क्रिमिभिर्भिद्यमानश्च काय एष [† नरोत्तम ॥ ६
गुल्मास्तत्र प्रजायन्ते सद्यःपीडाकरास्तदा । एभिर्दोषैः समायुक्तः कायोऽयं नहुषात्मज ॥ ७
कथं प्राणसमायोगादिवं याति ] नरेश्वरः । काये पार्थिवभागोऽयं समानार्थः प्रतिष्ठितः ॥ ८
न कायः स्वर्गमायाति यथा पृथ्वी तथा स्थितः । एवं ते सर्वमाख्यातं दोषो वै पार्थिवस्य हि ॥ ९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थकथने पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६५६८

अथ षट्षष्टितमोऽध्यायः ।

ययातिरुवाच—
पापाच्च पतते कायो धर्माच्च शृणु मातले । विशेषं नैव पश्यामि पुण्यस्यापि महीतले ॥ १

* क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थमेतत् । † एतच्चिह्नान्तर्गतोऽयं पाठो घ. ट. ड. पुस्तकस्थः ।

१ ड. विषण्णो । २ क. ङ. ट. ढ. कायो । ३ ड. °ने । स्मरते चिन्तितां ना° । ४ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °नां क्षयरू° । ५ ड. °र्वे कामपीडासुदुःखिताः । ६ ङ. झ. ढ. °ह वर्तन्ते संगत्या नैव पञ्च ते । ७ क. ख. ङ. च. झ. ढ. तत्र । ट. चात्र । ८ ग. घ. छ. ज. झ. ड. ढ. °मे न व° । ९ ड. कायः । १० क. ख. च. प्रकल्पितः ।

पुनः प्रजायते कायो यथा हि पतनं पुरा । कथमुत्पद्यते देहस्तन्मे त्वं कारणं वद ॥ २

मातलिरुवाच—

अथ नारकिणां पुंसामधर्मादेव केवलात् । क्षणमात्रेण भूतेभ्यः शरीरमुपजायते ॥ ३
तद्वद्धर्मेण चैकेन देवानामौपपादिकम् । सद्यः प्रजायते दिव्यं शरीरं भूतसारतः ॥ ४
कर्मणा व्यतिमिश्रेण यच्छरीरं महात्मनाम् । तद्रूपपरिमाणेन विज्ञेयं हि चतुर्विधम् ॥ ५
उद्भिज्जाः स्थावरा ज्ञेयास्तृणगुल्मादिरूपिणः । कृमिकीटपतङ्गाद्याः स्वेदजा नाम देहिनः ॥ ६
अण्डजाः पक्षिणः सर्वे नक्रा मत्स्याश्च भूपते । जरायुजाश्च विज्ञेया मानुषाः सचतुष्पदाः ॥ ७
तत्र सिक्ता जलैर्भूमिरन्न ऊष्माऽभिजायते । वायुना धम्यमाना च क्षेत्रे बीजं प्रवर्तते ॥ ८
यथा तप्तानि बीजानि संसिक्तान्यम्भसा पुनः । ऊष्मणा च मृदुत्वं च मूलभावं प्रयाति च ॥ ९
तन्मूलादङ्कुरोत्पत्तिरङ्कुरात्पर्णसंभवः । पर्णान्नालं ततः काण्डं तत्काण्डात्प्रभवः पुनः ॥ १०
प्रभवाच्च भवेत्क्षीरं क्षीरात्तण्डुलसंभवः । तण्डुलाच्च ततः पक्वात्सृजन्त्यौषधयस्तदा ॥ ११
यवाद्याः शालिसंपूर्वाः श्रेष्ठास्तत्र दश स्मृताः । ओषध्यः फलसारा याः शेषाः शुद्धाः प्रकीर्तिताः
एतास्तृणा मर्दिताश्च मुनिभिः पूर्वसंस्कृताः । शूर्पोलूखलपात्राद्यैः स्थालिकोदकवह्निभिः ॥ १३
षड्विधा हि स्वभेदेन परिणामं व्रजन्ति ताः । अन्योन्यरससंयोगादनेकस्वादतां गताः ॥ १४
भक्ष्यं भोज्यं पेयलेह्यं चोष्यं खाद्यं च भूपते । तासां भेदाः षडङ्गाश्च मधुराद्याश्च षड्गुणाः॥१५
तदन्नं पिण्डकवलैर्ग्रासैर्भुक्तं च देहिभिः । अन्तःस्थूलाशये सर्वप्राणान्स्थापयति क्रमात् ॥ १६
अपक्वभुक्तमाहारं स वायुः कुरुते द्विधा । संप्रविश्यान्नमध्ये तु पक्वं कृत्वा पृथग्गुणम् ॥ १७
अग्नेर्मूर्ध्नि जलं स्थाप्यं तदन्नं च जलोपरि । जलस्याधः स्वयं प्राणः कोष्ठाग्निं धमते शनैः ॥१८
वायुना धम्यमानोऽग्निरत्युष्णं कुरुते जलम् । तदन्नमुष्णयोगेन समन्तात्पच्यते पुनः ॥ १९
द्विधा भवति तत्पक्वं कीटं चापि पृथग्रसम् । मलैर्द्वादशभिः कीटं भिन्नदेहाद्बहिर्व्रजेत् ॥ २०
कर्णाक्षिनासिकाजिह्वादन्तौष्ठप्रजनं गुदम् । मलान्स्रवेत्कप(फ)स्वेदो(दौ) विण्मूत्रं द्वादश स्मृताः ॥
ताभ्यां वै प्रतिबद्धाश्च सर्वा नाड्यः समन्ततः । तासां मुखे ततः सूक्ष्मं प्राणः स्थापयते रसम्॥
रसेन तेन नाडीस्ताः प्राणः पूरयते पुनः । संतर्पयन्ति ता नाड्यः पूर्णा देहं समन्ततः ॥ २३
ततः स नाडीमध्यस्थः श(शा)रीरेणोष्मणा रसः । पच्यते पच्यमानस्य भवेत्पाकद्वयं पुनः॥२४
त्वङ्मांसास्थि मज्जा मेदो रुधिरं च प्रजायते । रक्ताल्लोमानि मांसं च केशाः स्नायुश्च मांसतः॥
स्नायोर्मज्जा तथाऽस्थीनि वसा मज्जास्थिसंभवा । मज्जाकारेण वै कल्पं शुक्रं च प्रसवात्मकम् ॥
इति द्वादश अन्नस्य परिणामाः प्रकीर्तिताः । शुक्रेऽन्नस्य परीणामः शुक्राद्देहस्य संभवः ॥ २७
ऋतुकाले यदा शुक्रं निर्दोषं योनिसंस्थितम् । तदा तद्वायुना स्पृष्टं स्त्रीरक्तमेकतां नयेत् ॥ २८
विसर्गकाले शुक्रस्य जीवः कारणसंयुतः । नित्यं प्रविशते योनिं कर्मभिः स्वैर्विचालितः ॥ २९

१ क. ख. ङ. च. छ. झ. ढ. °न्मे विस्तरतो व° । २ ङ. °त् । लक्ष्यमा° । ३ ञ. °पादुक° । ४ क. ख. घ ङ. च. छ. झ. ट. ढ. तद्भूतप° । ५ ङ. नाभिदे° । ६ ङ. °था तु कामिनीयोनिः संसिक्ता रेतसा । ७ ञ. ऊष्मतां । ८ क. ख. ङ. च. छ. झ. ढ. °लिपर्यन्ताः श्रे° । ९ क. ख. ङ. च. छ झ. ढ. श्रेष्ठाः सप्तद° । १० क. ख. ङ. च. छ. झ. ढ. °एता लूना म° । ट. एताः पुनर्मर्दि° । ११ घ. ज. ट. ढ. °ज्यं च पेयं च लेह्यं चोष्यं च पिच्छलम् । ता° । १२ ग. सर्वे प्रा° । १३ ञ. °रं परायुः । १४ क. ख. ङ. च. छ. झ. ढ. °क्वं पृथक्कीटं पृ° । १५ घ. ङ. °न्तोच्छिष्टमलं गु° । १६ क. ख. घ. ङ. च. छ. झ. ट. ढ. ढ° °ताः । इत्याद्यौ प्र° । १७ क. ख. च. छ. झ. नखा । घ. ज. ट. ढ. ततो ।

ऋं च रक्तमेकस्थमेकाहात्कललं भवेत् । पञ्चरात्रेण कललं बुद्बुदत्वं ततो व्रजेत् ॥ ३०
वते मासमात्रेण पञ्चधा जायते पुनः । ग्रीवा शिरश्च स्कन्धश्च पृष्ठवंशस्तथोदरम् ॥ ३१
णी पादौ तथा पार्श्वौ कटिर्गात्रं तथैव च । मासद्वयेन सर्वाणि क्रमशः संभवन्ति च ॥ ३२
[*त्रिभिर्मासैः प्रजायन्ते शतशोऽङ्कुरसंभवाः । मासैश्चतुर्भिर्जायते अङ्गुल्यादि यथाक्रमम्]॥ ३३
खं नासा च कर्णौ च मासैर्जायन्ति पञ्चभिः । दन्तपङ्क्तिस्तथा जिह्वा जायते च ततः पुनः ३४
र्णयोश्च भवेच्छिद्रं षण्मासाभ्यन्तरे पुनः । पायुर्मेण्ढ्रमुपस्थं च शिश्नश्चाप्युपजायते ॥ ३५
धयो ये च गात्रेषु मासैर्जायन्ति सप्तभिः ॥ ३६
त्यङ्गमङ्गं संपूर्णं शिरः केशसमन्वितम् । विभक्तावयवं स्पष्टं पुनर्मासाष्टमेव(?) च ॥ ३७
श्चात्मकसमायुक्तः परिपक्वशरीरकः । मातुराहारवीर्येण षड्विधेन रसेन च ॥
ाभिसूत्रनिबद्धेन वर्धते स दिने दिने ॥ ३८
तः स्मृतिं लभेज्जीवः संपूर्णेऽस्मिञ्शरीरके । दुःखं सुखं विजानाति निद्रासुप्तं पुराकृतम् ॥ ३९
तश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः । नानायोनिसहस्राणि मया दृष्टान्यनेकशः ॥ ४०
अधुना जातमात्रोऽहं प्राप्तसंस्कार एव च । ततः श्रेयः करिष्यामि येन गर्भे न संभवः ॥ ४१
र्भस्थश्चिन्तयत्येवमहं गर्भाद्विनिःसृतः । अध्येष्यामि परं ज्ञानं संसारविनिवर्तकम् ॥ ४२
अवश्यं गर्भदुःखेन महता परिपीडितः । जीवः कर्मवशादास्ते मोक्षोपायं विचिन्तयन् ॥ ४३
यथा गिरिगुहाक्रान्तः कश्चिद्दुःखेन तिष्ठति । तथा जरायुणा देही दुःखं तिष्ठति दुःखितः ॥ ४४
तितः सागरे यद्वद्दुःखमास्ते समाकुलः । गर्भोदकेन सिक्ताङ्गस्तथाऽऽस्ते व्याकुलात्मकः ॥ ४५
लोहकुम्भे यथा न्यस्तः पच्यते कश्चिदग्निना । गर्भकुम्भे तथा क्षिप्तः पच्यते जठराग्निना ॥ ४६
सूचीभिरग्निवर्णाभिर्दुर्भिन्नस्य निरन्तरम् । यद्दुःखं जायते तस्य तद्गर्भेऽष्टगुणं भवेत् ॥ ४७
गर्भवासात्परं वासं कष्टं नैवास्ति कुत्रचित् । देहिनां दुःखमतुलं सुघोरमपि संकटम् ॥ ४८
इत्येतद्गर्भदुःखं हि प्राणिनां परिकीर्तितम् । चरस्थिराणां सर्वेषामात्मगर्भानुरूपतः ॥ ४९
गर्भात्कोटिगुणं पीडा यातुर्जन्मनि पीडनात् । संमूर्छितस्य जायेत जायमानस्य देहिनः ॥ ५०
इक्षुवत्पीड्यमानस्य पापमुद्गरकेण च । गर्भान्निष्क्रममाणस्य प्रबलैः सूतिवायुभिः ॥
जायते सुमहद्दुःखं परित्राणं न विदन्ति ॥ ५१
यन्त्रेण पीड्यमानाः स्युर्निःसाराश्च यथेक्षवः । तथा शरीरं योनिस्थं पात्यते यन्त्रपीडनात् ॥ ५२
अस्थिमद्वर्तुलाकारं स्नायुबन्धनवेष्टितम् । रक्तमांसवसाक्लिष्टं विण्मूत्रद्रव्यभाजनम् ॥ ५३
केशलोमनखच्छन्नं रोगायतनमुत्तमम् । वदनैकमहाद्वारं गवाक्षाष्टकभूषितम् ॥ ५४
ओष्ठद्वयकपाटं तु दन्तजिह्वागलान्वितम् । नाडीस्वेदप्रवाहं च कफपित्तपरिप्लुतम् ॥ ५५
[ †जराशोकसमाविष्टं कालवक्त्रानले स्थितम् । कामक्रोधसमाक्रान्तं श्वसनैश्चोपमर्दितम् ] ॥ ५६
[ *भोगतृष्णातुरं मूढं रागद्वेषवशानुगम् ] । सवृत्ताङ्गं च प्रत्यङ्गं जरायुपरिवेष्टितम् ॥ ५७

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो घ. पुस्तकस्थः ।
* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

---

१ ग. भवेत्तु मा° । २ क. ख. ङ. च. छ. झ. ड. ढ. पर्वाणि । ३ क. ख. ङ. च. छ. झ. ड. ढ. ततो नखाः । क° । ४ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °कथा । अ° । ५ ङ. °डा योनियन्त्राणि° । ६ ग. घ. ज. °लैः सूति° । ७ घ. ट. °राश्वासितक्ष° । ८ क. ख. च छ. झ. ड. °ससदालिप्तं वि° ।

संकटेनाविविक्तेन योनिमार्गेण निर्गतम् । विण्मूत्ररक्तचित्राङ्गं षट्कौशिकसमुद्भवम् ॥ ५८
अस्थिपञ्जरसंघातं ज्ञेयमस्मिन्कलेवरे । शतत्रयं षष्ट्यधिकं पञ्चपेशीशतानि तु ॥ ५९
सार्धाभिस्तिसृभिश्छन्नं समन्ताद्रोमकोटिभिः । शरीरं स्थूलसूक्ष्माभिर्दृश्यादृश्याश्च ताः स्मृताः ६०
एतावतीभिर्नाडीनां कोटिभिस्तत्समन्वितम् । प्रस्वेदमशुचिं ताभिरन्तरस्थं च तेन हि ॥ ६१
द्वात्रिंशद्दशनाः प्रोक्ता विंशतिश्च नखाः स्मृताः । पित्तस्य कुडवं ज्ञेयं कफस्यार्धाढकं तथा ॥६२
वसायाश्च पैलत्रिंशत्तदर्धं कैललस्य वा । वातार्बुदपलं ज्ञेयं पलानि दश मेदसः ॥ ६३
पलत्रयं महारक्तं मज्जा रक्ताच्चतुर्गुणा । शुक्रार्धकुडवं ज्ञेयं तदर्धं देहिनां बलम् ॥ ६४
मांसस्य चैकपिण्डेन पलसाहस्रमुच्यते । रक्तं पलशतं ज्ञेयं विण्मूत्रं चाप्रमाणतः ॥ ६५
इति देहगृहं राजन्नित्यमन्वेष्यमात्मनः । अविशुद्धं विशुद्धस्य कर्मबन्धविनिर्मितम् ॥ ६६
[ *शुक्रशोणितसंयोगाद्देहः संजायते क्वचित् । नित्यं विण्मूत्रपूर्णश्च तेनायमशुचिः स्मृतः ॥ ६७
यथा वै विष्ठया पूर्णः (र्णोऽ)शुचिः स्यात्तु बहिर्घटः]। पञ्चभिः शोध्यमानोऽपि देहोऽयमशुचिर्भवेत्
यं प्राप्यातिपवित्राणि पञ्चगव्यं हवींषि च । अशुचित्वं क्षणाद्यान्ति कोऽन्योऽस्मादशुचिस्ततः॥
[*हृद्यान्यप्यन्नपानानि यं प्राप्य सुरभीणि च । अशुचित्वं प्रयान्त्याशु कोऽन्यः स्यादशुचिस्ततः]
हे जनाः किं न पश्यध्वं यो निर्याति दिने दिने । देहात्तु कश्मलं पूतिस्तदाधारः कथं शुचिः॥
देहः संसिच्यमानोऽपि पञ्चगव्यकुशाम्बुभिः । घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति ॥ ७२
स्रोतांसि यस्य सततं प्रवहन्ति क्षणे क्षणे । कफमूत्राद्यत्यशुचिः स देहः शुध्यते कथम् ॥ ७३
सर्वाशुचिविलिप्तस्य शरीरस्य न विद्यते । शुचिरेकः प्रदेशोऽपि शुचिर्न स्यादतेऽपि वा ॥ ७४
दृष्ट्वा च देहस्रोतांसि मृदाऽद्भिः शोध्यते करः । तथाऽप्यशुचिभाजश्च न विरज्यन्ति ते नराः ७५
कायमगरुधूपाद्यैर्यत्नेनापि सुसंस्कृतम् । न जहाति स्वभावं हि श्वपुच्छमिव नामितम् ॥ ७६
यथा जात्यैव कृष्णोर्णा न शुक्ला जातु जायते । संशोध्यमानाऽपि तथा भवेन्मूर्तिर्न निर्मला॥७७
जिघ्रन्नपि स्वदुर्गन्धं पश्यन्नपि मलं स्वकम् । न विरज्येत लोकोऽयं पीडयन्नपि नासिकाम् ॥७८
अहो मोहस्य माहात्म्यं येन व्यामोहितं जगत् । जिघ्रन्पश्यन्स्वकान्दोषान्कायस्य न विरज्यते॥
स्वदेहाशुचिगन्धेन यो विरज्येत मानवः । विरागकारणं तस्य किमन्यदुपदिश्यते ॥ ८०
सर्वमेव जगत्पूतं देहमेवाशुचि परम् । जन्मनाऽवयवस्पर्शाच्छुचिरप्यशुचिर्भवेत् ॥ ८१
गन्धलेपापनोदार्थं शौचं देहस्य कीर्तितम् । यस्यापि विगमात्पश्चाद्भावशुद्ध्या विशुध्यति ॥ ८२
गङ्गातोयेन सर्वेण मृद्भारैर्गात्रलेपनैः । मर्त्यो दुर्गन्धदेहोऽसौ भावदुष्टो न शुध्यति ॥ ८३
तीर्थस्नानैस्तपोभिश्च दुष्टात्मा न च शुध्यति । स्वमूर्तिः क्षालिता तीर्थे न शुद्धिमधिगच्छति॥८४
अन्तर्भावप्रदुष्टस्य विशतोऽपि हुताशनम् । न स्वर्गो नापवर्गश्च देहनिर्बन्धनं परम् ॥ ८५
भावशुद्धिः परं शौचं प्रमाणं सर्वकर्मसु । अन्यथाऽऽलिङ्ग्यते कान्ता भावेन दुहिताऽन्यथा ॥८६
मनसो भिद्यते वृत्तिर्भिन्नेष्वपि च वस्तुषु । अन्यथैव ततः पुत्रं भावयत्यन्यथा पतिम् ॥ ८७

* एतच्चिह्नान्तर्गतोऽयं पाठो ङ. छ. झ. ड. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. °त्कासिकाङ्गं । २ ढ. कुण्डं त्रिंश° । ३ घ. ङ. ज. झ. ट. ड. पलं विंश° । ४ ञ. वाल्लस्य । ५ क. ख. ङ. च. छ. झ. ढ. °न्ति गिरेरिव । क° । ६ ञ. स्यादते° । ७ घ. ङ. छ. ज. झ. ट. ड. ढ. °पिसुं । ८ ञ. °मेव शु° । ९ घ. ट. ड. °द्भारैः शतले° । १० क. ख. °रैश्च नगोपमैः । आ मृत्योराचरञ्छौचं भा° । छ. °रैर्न च गोमयैः । आ मृत्योराचरञ्छौचं भा° । झ. °रैश्च नगोपमैः । म° । ११ क. ख. ङ. च. छ. झ. ढ. °निर्दहनं ।

यथा यथा स्वभावस्य महाभागं मुदावहम् । परित्यक्ता यथा भार्या भावहीना न कामयेत् ॥८८
तस्माद्विविधमन्नाद्यं भक्ष्याणि सुरभीणि च। स्वभावेन नरस्तस्माद्भावः सर्वत्र कारणम् ॥ ८९
चित्तं शोधय यत्नेन किमन्यैर्बाह्यशोधनैः। भावतः शुचिः शुद्धात्मा स्वर्गं मोक्षं च विन्दति॥९०
ज्ञानामलाम्भसा पुंसः सद्वैराग्यमृदा पुनः । अविद्यारागविण्मूत्रलेपो नश्येद्विशोधनैः ॥ ९१
एवमेतच्छरीरं हि निसर्गादशुचि विदुः । अध्यात्मसारानिःसारं कदलीसारसंनिभम् ॥ ९२
ज्ञात्वैवं देहदोषं यः प्राज्ञः स शिथिलो भवेत्। सोऽतिक्रामति संसारं दृढग्राहीव तिष्ठति ॥ ९३
एवमेतन्महाकष्टं जन्मदुःखं प्रकीर्तितम् । पुंसामज्ञानदोषेण नानाकर्मवशेन च ॥ ९४
गर्भस्थस्य मतिर्याऽऽसीत्संजातस्य प्रणश्यति। संमूर्छितस्य दुःखेन योनियन्त्रप्रपीडनात् ॥ ९५
बाह्येन वायुना तस्य मोहसङ्गेन देहिनाम् । स्पृष्टमात्रेण घोरेण ज्वरः समुपजायते ॥ ९६
तेन ज्वरेण महता महामोहः प्रजायते । संमूढस्य स्मृतिभ्रंशः शीघ्रं संजायते पुनः ॥ ९७
स्मृतिभ्रंशात्तस्य पूर्वकर्मज्ञानसमुद्भवा । रतिः संजायते पूर्णा जन्तोस्तत्रैव जन्मनि ॥ ९८
रक्तो मूढश्च लोकोऽयमकार्ये संप्रवर्तते । न चाऽऽत्मानं विजानाति न परं न च दैवतम् ॥ ९९
न शृणोति परं श्रेयः सति चक्षुषि नेक्षते । समे पथि शनैर्गच्छन्स्खलतीव पदे पदे ॥ १००
स्वापं सुप्तो न जहाति बोध्यमानो बुधैरपि। संसारे क्लिश्यते तेन नरो लोभवशानुगः ॥ १०१
गर्भस्मृतेरभावे च शास्त्रमुक्तं शिवेन च । नानादुःखविनाशाय स्वर्गमोक्षप्रसाधनम् ॥ १०२
येन त्वस्मिञ्शिवे ज्ञाते धर्मकर्मार्थसाधने । न कुर्वन्त्यात्मनः श्रेयस्तदत्र महदद्भुतम् ॥ १०३
अव्यक्तेन्द्रियवृत्तित्वाद्बाल्ये दुःखं महत्पुनः। इच्छन्नपि न शक्नोति वक्तुं कर्तुं च संस्कृतम् ॥१०४
भुङ्क्ते तेन महद्दुःखं बाल्येन व्याधिनाऽन्यथा। बाल्यरोगैश्च विविधैः पीडाबालग्रहैरपि ॥ १०५
तृड्बुभुक्षापरीताङ्गः क्वचिद्गच्छति तिष्ठति । विण्मूत्रमज्जनार्थं च मोहाद्बालः समाचरेत् ॥ १०६
[*कौमारः कर्णवेधेन मातापित्रोश्च लालनम् । अक्षराध्ययनाद्यैश्च दुःखं स्याद्गुरुशासनम् ॥१०७
अन्यत्रेन्द्रियवृत्तिश्च कामरागप्रयोजनात् । रोगावृतस्य सततं कुतः सौख्यं च यौवने ॥ १०८
ईर्षया सुमहद्दुःखं मोहाद्दुःखं सुजायते ]। तत्र स्यात्कुपितस्यैव रागो दुःखाय केवलम् ॥ १०९
रात्रौ न कुरुते निद्रां कामाग्निपरिखेदितः। दिवा वाऽपि कुतः सौख्यमर्थोपार्जनचिन्तया ॥११०
व्यवायाश्रितदेहस्य ये पुंसः शुक्रबिन्दवः । [*न ते सुखाय मन्तव्याः स्वेदजा इव बिन्दवः] ॥१११
कृमिभिः पीड्यमानस्य कुष्ठिनः पामरस्य च। कण्डूयनाभितापेन यत्सुखं स्त्रीषु तद्विदुः ॥ ११२
यादृशं मन्यते सौख्यमर्थोपार्जनचिन्तया । तादृशं स्त्रीषु मन्तव्यमधिकं नैव विद्यते ॥ ११३
मर्त्यस्य वेदना सैव यां विना चित्तनिर्वृतिः। ततोऽन्योन्यं पुरा प्राप्तमन्ते सैवान्यथा भवेत्॥११४

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. ड. ढ. पुस्तकस्थः ।

१ क. ख. घ. ङ. च. छ. झ. ट. ढ. °गमुदाहृतम् । प° । २ ङ. उदाहृतः । ३ च. छ. झ. ढ. °त् । नाद्यादि° । ४ क. ख. ङ. च. छ. झ. ढ. अभावेन । ५ क. ख. छ. झ. ढ. °हसंज्ञेन । ६ घ. ङ. द्वारेण । ७ क. ख. ङ. च. छ. झ. ड. ढ. तूर्णं । ८ क. ख. ङ. च. छ. ड. ढ. वक्तो । ९ क. ख. ङ. च. छ. झ. ड. ढ. °दे । सत्यां बुद्धौ न जानाति । १० क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. च । तद्दुःखकथनार्थाय । ११ ङ. संस्कृतं । १२ क. ख. घ. ङ. च. ड. ढ. दत्तं । १३ क. ख. घ. ङ. च. छ. झ. ड. ढ. लौल्येन । १४ ङ. छ. झ. ढ. °त्रभक्षणाद्यं च । १५ क. ख. ङ. च. छ. झ. ढ. ताडनम् । १६ क ख. ङ. च. झ. ढ.प्रमत्तेन्द्रियवृत्तिश्च । १७ क. ख. घ. ङ. च. छ. झ. ट. ढ. °भिभिस्ताड्य° । १८ घ. ज. ट. गण्डस्य ।

तदेवं जरया ग्रस्तमामयान्यपि न प्रियम् । अपूर्ववत्स्वमात्मानं जरया परिपीडितम् ॥
यः पश्यन्न विरज्येत कोऽन्यस्तस्मादचेतनः ॥ ११५
जराभिभूतोऽपि जन्तुः पत्नीपुत्रादिबान्धवैः । अशक्तत्वाद्दुराचारैर्भृत्यैश्च परिभूयते ॥ ११६
धर्ममर्थं च कामं च मोक्षं न जरया पुनः । शक्तः साधयितुं तस्माद्युवा धर्मं समाचरेत् ॥ ११७
वातपित्तकफादीनां वैषम्यं व्याधिरुच्यते । वातादीनां समूहेन देहोऽयं परिकीर्तितः ॥
तस्माद्व्याधिमयं ज्ञेयं शरीरमिदमात्मनः ॥ ११८
वातादिव्यतिरिक्तस्य व्याधीनां च जनस्य च । रोगैर्नानाविधैर्याति देही दुःखान्यनेकधा ॥
तानि च स्वात्मवेद्यानि किमन्यत्कथयाम्यहम् ॥ ११९
एकोत्तरं मृत्युशतमस्मिन्देहे प्रतिष्ठितम् । तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः ॥ १२०
ये त्विहाऽऽगन्तवः प्रोक्तास्ते प्रशाम्यन्ति भेषजैः । जपहोमप्रदानैश्च कालमृत्युर्न शाम्यति ॥१२१
यदि वाँऽपमृत्युर्न स्याद्वै विषाणामदनं किल । नापैति तत्र पुरुषो ह्यपमृत्योर्बिभेति सः ॥ १२२
विविधा व्याधयस्तत्र सर्पाद्याः प्राणिनस्तथा । विषाणि चाभिचाराश्च मृत्योर्द्वाराणि देहिनाम् ॥
पीडितं सर्वरोगाद्यैरपि धन्वन्तरिः स्वयम् । प्रतिकर्तुं न शक्नोति कालप्राप्तं हि नान्यथा ॥ १२४
नौषधं न तपो दानं न मन्त्रा न च बान्धवाः । शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥१२५
रसायनतपोयज्ञयोगसिद्धिमहात्मभिः । अवान्तरितशान्तिः स्यात्कालमृत्युमवाप्नुयात् ॥
जायते योनिकोटीषु मृतः कर्मवशात्पुनः ॥ १२६
देहभेदेन यः पुंसां वियोगः कर्मसंक्षयात् । मरणं तद्विनिर्दिष्टं न नाशः परमार्थतः ॥ १२७
महातमःप्रविष्टस्य च्छिद्यमानेषु मर्मसु । यद्दुःखं मरणे जन्तोर्न तस्येहोपमा क्वचित् ॥ १२८
हा तात मातः कान्तेति क्रन्दत्येवं सुदुःखितः । मण्डूक इव सर्पेण ग्रस्यते मृत्युना जगत् ॥१२९
बान्धवैः स परित्यक्तः प्रियैश्च परिवारितः । निश्वसन्दीर्घमुष्णं च मुखेन परिशुष्यते ॥ १३०
शय्यान्तः परिवृत्तश्च मुह्यते च मुहुर्मुहुः । संमूढः क्षिपतेऽत्यर्थं हस्तपादावितस्ततः ॥ १३१
शय्यातः पतते भूमिं भूमेः शय्यां पुनर्महीम् । विवशस्त्यक्तलज्जश्च मूत्रविष्ठानुलेपितः ॥ १३२
याचमानश्च सलिलं शुष्ककण्ठौष्ठतालुकः । चिन्तयानश्च वित्तानि कस्यैतानि मृते मयि ॥ १३३
यमदूतैर्नीयमानः कालपाशेन कर्षितः । म्रियते पश्यतामेवं कण्ठे घुरघुरायते ॥ १३४
जीवस्तु जन्मनैकेन देहाद्देहमिति क्रमात् । संप्राप्योत्तरसङ्गं च देहं त्यजति पूर्वकम् ॥ १३५
[*मरणात्प्रार्थनादुःखमधिकं हि विवेकिनाम् ।] क्षणिकं मरणाद्दुःखमनन्तं प्रार्थनाकृतम् ॥ १३६
जगतां पतिरर्थित्वाद्विष्णुर्वामनतां गतः । अधिकः कोऽपरस्तस्माद्यो न यात्यतिलाघवम् ॥१३७
ज्ञातं मयेदमधुना मृत्योरधिकमद्भुतम् । न परं प्रार्थयेद्भूयस्तृष्णा लाघवकारणम् ॥
निसर्गात्सर्वभूतानामिति दुःखपरंपराम् ॥ १३८
चतुर्मासानतीतानि दुःखान्येतानि यानि च । न नरः शोचयेज्जन्म न विरज्यति तेन वै ॥१३९
अत्याहारान्महद्दुःखमनाहारान्महातुरः । त्रुटते भोजने कण्ठमन्यच्चैवं कुतः सुखम् ॥ १४०

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ढ. पुस्तकस्थः ।

१ घ. ज. ट. °रिवारित° । २ क. ख. ङ. च. छ. झ. ढ. °नां पञ्जरस्य । ३ अ. वाऽप्यस्य मृत्युः स्यादिष्टभावादश- ङ्कितः । ना° । ४ क. ख. ङ. च. छ. झ. ढ. वाञ्छते । ५ अ. अधिकं । ६ घ. ट. °त्योर्भवति यद्गुरु । न । ७ क. ख. ङ. च. छ. झ. ढ. °रा । वर्तमानान्यती° । ८ ङ. नरा न साधयन्संज्ञां ज्ञानं विघ्नन्ति तेन ते । अं° ।

क्षुधा हि सर्व रोगाणां व्याधिः श्रेष्ठतमः स्मृतः । सा काम्यौषधलाभेन क्षणमात्रं प्रयास्यति॥ १४१
क्षुदाधिवेदना तीव्रा निःशेषबलकृन्तनी । तयाऽभिभूतो म्रियते यथाऽन्यैर्व्याधिभिर्नरः ॥ १४२
आहारेऽपि हि किं सौख्यं जिह्वाग्रे हि प्रवर्तिनि । तत्क्षणादर्धकालेन कण्ठं प्राप्य निवर्तते १४३
इति क्षुद्व्याधितप्तानामन्नमौषधवत्स्मृतम् । न तत्सुखाय मन्तव्यं परमार्थेन पण्डितैः ॥ १४४
मृतोऽयमग्रतः शेते सर्वकार्यविवर्जितः । तत्रापि च कुतः सौख्यं तमसा चोदितात्मनः ॥ १४५
प्ररोधे हि कुतः सौख्यं कार्यैरुपहतात्मनः । कृषिवाणिज्यसेवाख्यगोरक्षादिपरिश्रमैः ॥ १४६
प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । तृप्ताः कामेन बाध्यन्ते निद्रया निशि जन्तवः॥ १४७
अर्थस्योपार्जने दुःखं दुःखमर्जितरक्षणे । नाशे दुःखं व्यये दुःखमर्थस्यैव कुतः सुखम् ॥ १४८
चौरेभ्यः सलिलेभ्योऽग्नेः स्वजनात्पार्थिवादपि । भयमर्थवतां नित्यं मृत्योर्देहभृतामिव ॥ १४९
खे यथा पक्षिभिर्मांसं भुज्यते श्वापदैर्भुवि । जले च भक्ष्यते मत्स्यैस्तथा सर्वत्र वित्तवान्॥ १५०
विमोहयन्ति संपत्सु तापयन्ति विपत्सु वा । वेदयन्त्यर्जने दुःखं कथमर्थाः सुखावहाः ॥ १५१
प्रागर्थं याति चोद्विग्नः पश्चात्सर्वार्थनिःस्पृहः । जन्तुरर्थागमाच्चापि सुखी स्यात्तेन दुःख्यपि १५२
हेमन्ते शिशिरे दुःखं ग्रीष्मे तापश्च दारुणः । प्रावृष्यत्यल्पवृष्टिभ्यां कालेऽप्येवं कुतः सुखम् १५३
विवाहविस्तरे दुःखं तद्गर्भोद्वहने पुनः । प्रसवैरपि दुःखैश्च दुःखं विष्ठादिकर्मजम् ॥ १५४
दन्ताक्षिरोगे पुत्रस्य हा कष्टं किं करोम्यहम् । गावो नष्टाः कृषिर्भग्ना भार्या च प्रपलायिता १५५
अमी प्राघूर्णिकाः प्राप्ता भयं मे शंसिनो ग्रहाः । बालापत्या च मे भार्या किं करिष्यति वै धनम्
प्रदेयकाले कन्यायाः कीदृशश्च वरो भवेत् । एतच्चिन्ताभिभूतानां कुतः सौख्यं कुटुम्बिनाम् १५७

कुटुम्बचिन्ताकुलितस्य पुंसः श्रुतं च शीलं च गुणाश्च सर्वे ।
अपक्वकुम्भे निहिता इवाऽऽपः प्रयान्ति देहेन समं विनाशम् ॥ १५८

राज्येऽपि हि कुतः सौख्यं सन्धिविग्रहचिन्तया । पुत्रादपि भयं यत्र तत्र सौख्यं हि कीदृशम्॥
स्वजातीयाद्भयं प्रायः सर्वेषामेव देहिनाम् । एकद्रव्याभिलाषित्वाच्छुनामिव परस्परम् ॥ १६०
न प्रविश्य वनं कश्चिन्नृपः ख्यातो हि भूतले । निखिलं यस्तिरस्कृत्य सुखं तिष्ठति निर्भयः १६१
युद्धे बाहुसहस्रं हि पातयामास भूतले । श्रीमतः कार्तवीर्यस्य ऋषिपुत्रः प्रतापवान् ॥ १६२
ऋषिपुत्रस्य रामस्य रामो दशरथात्मजः । जघान वीर्यमतुलमूर्ध्वगं सुमहात्मनः ॥ १६३
जरासंधेन रामस्य तेजसा नाशितं यशः । जरासंधस्य भीमेन तस्यापि पवनात्मजः ॥ १६४
हनुमान्भरतेनापि प्रक्षिप्तः पतितः क्षितौ । निवातकवचाः सर्वे दानवा बलदर्पिताः ॥ १६५
जितवानर्जुनस्तान्वै गोपैः स च विनिर्जितः । सूर्यः प्रतापयुक्तो हि मेघैः संछाद्यते क्वचित् १६६
क्षिप्यन्ते वायुना मेघा वायोर्वीर्यं नगैर्जितम् । दह्यन्ते वह्निना शैलाः स वह्निः शाम्यते जलैः ॥
तज्जलं शोष्यते सूर्यैस्ते सूर्याः संहृ वारिणा(?)। त्रयो लोकाः समेताश्च नश्यन्ते ब्रह्मणो दिने १६८

---

१ घ. ज. ट. सा काम्यौषधलेपेन । छ. झ. सच्छान्त्यौषधलेपेन । २ छ. झ. क्षुद्व्याधि° । ३ क. ङ. च. छ. झ. ढ. प्रबोधे । म. प्रारम्भे । ४ ट. तृष्णा कामेन बाध्येत नि° । ५ ट. तरवतः । ६ ङ. छ. झ. ढ. विमोदयन्ति । ७ ङ. छ. ड. ढ. °हृः । तयोरर्थपतिर्दुःखी सुखी सर्वार्थसाधकः । हे° । ८ घ. ङ. ड. °णः । सवातातपश्च° । ९ ड. दुःखामिष्टादिकर्मतः । द° । १० क. ख. च. छ. ड. ढ. °र्या कः करिष्यति बन्धन° । ११ ङ. °ध्यान्ति बान्धवाः । प्र° । १२ म. °मश्च दर्पं द° । १३ म. अनदानस्य रामेण ते° । १४ म. °शः । आमदग्न्यप्रभावेण त° । १५ म. परमात्मनः । ह° । १६ म. °मानपि सूर्येण प्र° । १७ °हृद्वारिणा । त्रैलोक्येन स° । इति क्वचित्पुस्तके ।

ब्रह्माऽपि त्रिदशैः सार्धमुपसंह्रियते पुनः । परार्धद्वयकालान्ते शिवेन परमात्मना ॥ १६९
एवं नैवास्ति संसारे यस्य सर्वोत्तमं पदम् । विहायैकं जगन्नाथं परमात्मानमव्ययम् ॥ १७०
कालं यान्ति सुराः सर्वे मतिमानेन वर्जिताः । एवं भूते जगत्यस्मिन्कः पुनः पण्डितोऽपि वा १७१
न चास्ति सर्ववित्कश्चिन्न च मूर्खश्च सर्वशः । यो यद्वस्तु विजानाति तत्र तत्र स पण्डितः १७२
समाधाने तु सर्वत्र प्रभावः सदृशः स्मृतः । स्थितस्यातिशयत्वेन प्रभावः कस्यचित्कचित् ॥ १७३
दानवैर्निर्जिता देवास्ते देवैर्निर्जिताः पुनः । इत्यन्योन्यं स्थितावेतौ भाग्यैर्जयपराजयौ ॥ १७४
एवं वस्त्रयुगं राजन्प्रस्थमात्रं तु भोजनम् । मानं छत्रासनं चैव सुखदुःखाय केवलम् ॥ १७५
सार्वभौमोऽपि भवति श्रद्धामात्रपरिग्रहः । उदकुम्भसहस्रेभ्यः क्लेशायासप्रविस्तरः ॥ १७६
प्रत्यूषे तूर्णनिर्घोषः सतां पुरनिवासिभिः । राज्येऽभिमानमात्रं हि ममेदं बाधते गृहे ॥ १७७
सर्वाभरणशृङ्गारः सर्वमालेपनं परम् । सर्वसंलपितं गीतं चित्तमुन्मत्तचेष्टितम् ॥ १७८
इत्येवं राज्यसंभोगैः कुतः सौख्यं विचारतः । नृपाणां विग्रहे चिन्ता वाऽन्योन्यविजिगीषया १७९
प्रायेण श्रीमदालेपान्नहुषाद्या महानृपाः । स्वर्गं प्राप्ता निपतिताः कः श्रिया विन्दते सुखम् १८०
स्वर्गेऽपि हि कुतः सौख्यं दृष्ट्वा दीप्तां परश्रियम् । उपर्युपरि देवानामन्योन्यातिशयस्थिताम् १८१
नरैः पुण्यफलं स्वर्गे मूलच्छेदेन भुज्यते । यदर्थं क्रियते कर्म तत्र दोषस्तु दारुणः ॥ १८२
[*छिन्नमूलस्तरुर्यद्वद्विवशः पतितः क्षितौ] । क्षीणपुण्यास्ततस्तद्वन्निपतन्ति दिवौकसः ॥ १८३
सुखाभिलाषनिष्ठानां सुखभोगादिसंप्लवैः । अकस्मात्पतितं दुःखं कष्टं स्वर्गे दिवौकसाम् ॥ १८४
इति स्वर्गेऽपि देवानां नास्ति सौख्यं विचारतः । क्षयश्च विषयासिद्धौ स्वर्गे भोगाय कर्मणः १८५
तत्र दुःखं महत्कष्टं नरकाग्निषु देहिनाम् । घोरैश्च विविधैर्भावैर्वाङ्मनःकायसंभवैः ॥ १८६
कुठारच्छेदनं तीव्रं वल्कलानां च तक्षणम् । पर्णशाखाफलानां च पातश्चण्डेन वायुना ॥ १८७
तन्मूलनाशश्च गजैरन्यैश्चैव हि देहिभिः । दावाग्निहिमपातैश्च दुःखं स्थावरजातिषु ॥ १८८
पशूनामात्मशमनं दण्डताडनमेव च । नासावेधेन संत्रासः प्रतोदेन सुताडनम् ॥ १८९
वेत्रकाष्ठादिनिगडैरङ्कुशेनाङ्गबन्धनम् । भावेन मनसा क्लेशैर्भिक्षायुवादिपीडनम् ॥ १९०
आत्मयूथवियोगैश्च बलात्प्रयनबन्धने । पशूनां सन्ति कायानामेवं दुःखान्यनेकशः ॥ १९१
वर्षाशीतातपाद्दुःखं सुकष्टं ग्रहपक्षिणाम् । क्लेशमानातिकायानामेवं दुःखान्यनेकधा ॥ १९२
गर्भवासे महद्दुःखं [*जन्मदुःखं तथा नृणाम् । सुबाल्ये च महद्दुःखं] कौमारे गुरुशासनम् १९३
यौवने कामरागाभ्यां दुःखं चैवेर्ष्यया पुनः । कृषिवाणिज्यसेवाद्यैः सुगोरक्षादिकर्मभिः ॥ १९४

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । * क. ख. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थमेतत् ।

---

१ क. ख. घ. ङ. च. झ. ड. ढ. °म् । ज्ञात्वा सातिशयं सर्वमतिमानं विवर्जयेत् । ए° । छ. °म् । ज्ञात्वा सातिशयं सर्वमभिमानं विवर्जयेत् । ए° । ट. °म् । ज्ञात्वा याति शमं सर्वं प्रीतिमानो विवर्जयेत् । ए° । २ क. ख. ङ. च. छ. झ. °म् । पानं शय्याऽऽस° । ३ म. °प्राशनं । ४ छ झ. खट्वामात्रपरिग्रहः । ५ क. ख. ङ. च. छ. झ. ढ. समं । ६ क. ख. च. हि सदैवं वा° । ७ क. ख. ङ. च. छ. झ. ड. ढ. सर्वमामरणं सारः । ८ घ. ट. ड. °तं नित्यमु° । ९ क. ख. ङ. च. छ. झ. ढ. °ते । तदाऽन्यत्क्रिय° । १० छ. दृष्टं । ११ क. ख. ङ. च. छ. झ. ढ. तत्कलानां । १२ क. ख. ङ. च. छ. झ. म. ढ. तत्क्षणम् । ग. ज. रक्षणम् । १३ म. °तोदकसुताडनात् । आ° । १४ क. ख. ङ. च. छ. झ. ढ °ने । तद्वद्बुभुक्षा सर्पाणां क्रोधे दुःखं च दारुणम् । दुष्टानां घातनं लोके पाशेन च निबन्धनम् । अकस्माज्जन्म मरणं कीटादीनां मुहुर्मुहुः । प° । १५ क. ख. ङ. च. छ. झ. ढ. °ल्ये दुःखं चाज्ञानं कौ° । १६ ड. °खं वै विषयात्पुनः ।

वृद्धभावे च जरया व्याधिभिश्च प्रपीडनात्। मरणे च महद्दुःखं प्रार्थनायां ततोऽधिकम् ॥ १९५
राजाग्निजलदाघातचौरशत्रुभयं महत् । अर्थस्यार्जनरक्षायां दुःखं नाशे भवेत्पुनः ॥ १९६
कार्पण्यं मत्सरोद्वेगो धनाधिक्ये भयं महत् । अकार्ये संप्रवृत्तिश्च दुःखानि धनिनां नृप ॥ १९७
भृत्यवृत्तिः कुसीदं च दासत्वं परवञ्चनम् । इष्टानिष्टवियोगैश्च संयोगैश्च सहस्रशः ॥ १९८
दुर्भिक्षं दुर्भगत्वं च मूर्खत्वं च दरिद्रता । अधरोत्तरभागश्च नरकं राज्यविक्रमम् ॥ १९९
अन्योन्यतोभवं दुःखमन्योन्याभिभवस्तथा । अन्योन्याच्च प्रकोपश्च राज्ञो दुःखं महीभृताम् ॥
अनित्यता प्रभावानां कृतकर्मस्य देहिनः । अन्योन्यमर्मभेदार्थमन्योन्यकरपीडनम् ॥
लुब्धश्च पापमोहेन ह्यन्योन्यस्य च भक्षणम् ॥ २०१
इत्येवमादिभिर्दुःखैर्यस्माद्ग्रस्तं चराचरम् । विबुधादिमनुष्यान्तं तस्मात्सर्वं त्यजेद्बुधः ॥ २०२
स्कन्धात्स्कन्धे नयन्भारं विश्रामं मन्यते यथा । तद्वत्सर्वमिदं लोके दुःखं दुःखेन शाम्यति २०३
अन्योन्यातिशयोपेताः संभवा भोगसंप्लवे । धर्मक्षयाच्च देवानां दिवि दुःखमवस्थितम् ॥ २०४
नानायोनिसहस्रेषु संभवः पुण्यसंक्षयात् । रोगाश्च विविधाकारा देवलोकेऽपि ये स्मृताः ॥२०५
यज्ञस्य हि शिरश्छिन्नमश्विभ्यां संधितं पुनः । तेन दोषेण यज्ञस्य शिरोरोगः सदैव हि ॥ २०६
मार्तण्डानां महत्कुष्ठं वरुणस्य जलोदरः । पूष्णो दशनवैकल्यं भुजस्तम्भः शचीपतेः ॥ २०७
सुमहाक्षयरोगश्च सोमस्यापि प्रकीर्तितः । ज्वरस्तु सुमहानासीद्दक्षस्यापि प्रजापतेः ॥ २०८
कल्पे कल्पे च देवानां महतामपि संक्षयः । परार्धद्वयकालान्ते ब्रह्मणश्चाप्यनित्यता ॥ २०९
दक्षस्य दुहितां पुत्रीं ब्रह्मा कामितवान्पुनः । क्रोधेन चण्डिकां देवीं योगज्ञां शप्तवान्प्रभुः ॥२१०
कामक्रोधौ स्थितौ यत्र तत्र दोषास्तदात्मकाः । दुःखानि च समस्तानि संस्थितानि न संशयः
विश्लेषजन्ममरणं सर्वाशित्वं हविर्भुजम् (:) । स्त्रीवधः कामशक्तिश्च सारण्यं पाण्डवेन वै(?)२१२
रुद्रेण त्रिपुरं दग्धं दक्षयज्ञश्च नाशितः । स्कन्दस्य जन्मैवं शुद्धात्क्रीडादीनां सहस्रशः ॥ २१३
एवं त्रयोऽपि रागाद्यैर्दोषैर्देवाः समन्विताः । एभ्यः परः प्रभुः शान्तः परिपूर्णः स मुक्तिदः ॥
एवमेतज्जगत्सर्वमन्योन्यातिशये स्थितम् । दुःखैराकुलितं ज्ञात्वा निर्वेदं परमं व्रजेत् ॥ २१५
निर्वेदाच्च विरागः स्याद्विरागाज्ज्ञानसंभवः । ज्ञानेन तत्परं ज्ञात्वा शिवं मुक्तिमवाप्नुयात् ॥ २१६
समस्तदुःखनिर्मुक्तः स्वस्थाने स सुखी सदा । सर्वज्ञः परिपूर्णश्च मुक्त इत्यभिधीयते ॥ २१७

मातलिरुवाच—

एतत्ते सर्वमाख्यातं यत्त्वया परिपृच्छितम् । धर्माधर्मविवेको हि सर्वज्ञानसमुच्चयः ॥
इन्द्रलोकं प्रगन्तव्यं देवराजस्य शासनात् ॥ २१८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थमाहात्म्ये षट्षष्टितमोऽध्यायः ॥ ६६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६७६८

---

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °रो दम्भो ध° । २ क. ख ङ. च. छ. झ. ढ. सदा । ३ क. ख. ङ. च. छ. झ. ढ. °रतन्नता । इ° । ४ क. ख. ङ. च. छ. झ ड. °विभ्रम° । ५ अ. °न्योन्यशापतो नाशं भगवो भोगसंभवे । ६ ट. ड. °र्धक्षयकाले तु ब्र° । ७ ट. °न्गुरा । क्रो° । ८ घ. ज. ट. ड. विशीर्णजन्ममरणं सर्वाशित्वं हविर्भुजम् । ९ अ. स्त्रीधर्मः । १० क. ख. च. ड. सामर्थ्यं । ङ. छ. झ. ढ. सारथ्यं । ११ क. ख. ङ. च. छ. झ. ङ. ढ. °वे बले । रु° । १२ अ. °न्मने शुद्धिः क्रीडावीतं स° । १३ अ. °स्रदक् । ए° । १४ क. ख. घ. ङ. च. छ. झ. ट. ड. स्वस्थात्मा ।

अथ सप्तषष्टितमोऽध्यायः ।

ययातिरुवाच—

अस्मद्भाग्यप्रलब्धं च भवतो दर्शनं परम् । संजातं शक्रसंवाद यतः श्रेयो ममातुलम् ॥ १
मानवा मर्त्यलोके च पापं कुर्वन्ति दारुणम् । तेषां कर्मविपाकं च मातले वद सांप्रतम् ॥ २

मातलिरुवाच—

श्रूयतामभिधास्यामि पापाचारस्य लक्षणम् । श्रुते सति महाज्ञानमत्र लोके प्रजायते ॥ ३
वेदनिन्दां प्रकुर्वन्ति ब्रह्माचारस्य कुत्सनम् । महापातकमेवापि ज्ञातव्यं ज्ञानपण्डितैः ॥ ४
साधूनामपि सर्वेषां यः पीडां हि समाचरेत् । महापातकमेवापि प्रायश्चित्ते न हि व्रजेत् ॥ ५
कुलाचारं परित्यज्य अन्याचारं व्रजन्ति ये । एतत्पातकसंचारं कथितं तत्त्ववेदिभिः ॥ ६
मातापित्रोश्च यो निन्दां ताडयेद्भगिनीं सदा । स्वसारं निन्दयेद्यो वै तदेव पातकं ध्रुवम् ॥ ७
संप्राप्ते श्राद्धकालेऽपि पञ्चक्रोशान्तरे स्थितम् । जामातरं परित्यज्य अन्यं चै भगिनीसुतम् ॥ ८
स्वसारं चैव राजेन्द्र परित्यज्य प्रवर्तते । कामात्क्रोधाद्भयाद्वाऽपि अन्यं भोजयते सदा ॥ ९
पितरो नैव भुञ्जन्ति श्राद्धे विघ्नं व्रजन्ति ये । एतत्सुपातकं तस्य पितृघातः (त)समं कृतम् ॥१०
दानकालेऽपि संप्राप्त आगता ब्राह्मणाः किल । [*भूरिदानं परित्यज्य कतिभ्यो हि प्रवर्तते] ॥
एकस्मै दीयते दानमन्येभ्योऽथ न दीयते । एतत्सुपातकं घोरं दानभ्रंशकरं स्मृतम् ॥ १२
यजमानश्च स्वगृहं प्रस्थितान्ब्राह्मणांस्त्यजेत् । तेषु त्यक्तेषु यद्दानं न तद्दानस्य लक्षणम् ॥ १३
समाश्रितं च वै विप्रं सर्वाचारसमान्वितम् । सर्वैः पुण्यैः समायुक्तं सुदानैर्बहुभिर्नृप ॥
तं समभ्यर्च्य विद्वांसं प्राप्तं विप्रं सदाऽर्हयेत् ॥ १४
तं संत्यज्य ददेद्दानमन्यस्मै ब्राह्मणाय च । दत्तं तु तद्भवेत्तस्य निष्फलं नात्र संशयः ॥ १५
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चापि चतुर्थकः । पुण्यकालेषु सर्वेषु निर्धनं पूजयेद्द्विजम् ॥ १६
[*मूर्खं वाऽपि च विद्वांसं तस्य पुण्यफलं शृणु । अश्वमेधस्य यज्ञस्य फलं तस्य प्रजायते]॥ १७
तस्माद्धि कारणाद्राजञ्शक्यं प्राप्यं च कारयेत् । अन्यो विप्रः समायातस्तत्कालं श्राद्धकर्मणि ॥
उभौ तौ पूजयेत्तत्र भोजनाच्छादनैस्तथा । ताम्बूलैर्दक्षिणाभिश्च पितरस्तस्य हर्षिताः ॥ १९
श्राद्धभुक्ताय विप्राय न दद्याद्दक्षिणां तथा । आदराच्छ्राद्धकर्ता यो गोहत्यादिसमं लभेत् ॥२०
द्वावेतौ पूजयेत्तस्माच्छ्राद्धे च नृपसत्तम । निर्धनस्तत्प्रभावाद्वै तमेकं हि प्रपूजयेत् ॥ २१
व्यतीपाते च संप्राप्ते वैधृतौ च नृपोत्तम । अमायां च महाराज क्षयाहे चापराह्णके ॥
श्राद्धमेवं प्रकर्तव्यं ब्राह्मणादिसवर्णकैः ॥ २२
यज्ञे यथा महाराज ऋत्विजश्च प्रकारयेत् । तथा विप्राः प्रकर्तव्याः श्राद्धदानेऽथ सर्वदा ॥ २३

* एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. घ. ङ. च. छ. ज. ट. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो ङ. छ. झ. ड. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ड. ढ. प्रसङ्गेन भ° । २ क. ख. ङ. च. छ. झ. ढ. °ज्ञानं प्रश्नकाले प्रं° । ३ ङ. ढ. °दा पितृस्वसां निन्दयेद्यस्तदे° । ४ क. ख. ङ. च. छ. झ. ट. °च दुहितासु° । ५ ङ. ढ. °न्ति देवाश्चैव न भुञ्जति । ए° । ६ ङ. भूमिदानं परित्यज्य कतिभ्यो हि प्रदीयते । ७ क. ख. ङ. च. छ. झ. ट. धर्माचारसमन्वितम् । ८ ङ. °प । मूर्खं न गणये-द्विद्वांसं पोष्यं विप्रं सदा भवेत् । ९ क. ख. ङ. च. छ. झ. संश्रितं । १० क. ख. ङ. च. झ. ढ. चापरपक्षके । ११ ञ. °न(ना)य स° ।

[*अविज्ञातः प्रकर्तव्यो ब्राह्मणो नैव जानता । यस्यापि ज्ञायते वंशः कुलं त्रिपुरुषं तथा] ॥
आचारश्च तथा राजंस्तान्विप्रान्संनिमन्त्रयेत् ॥ २४
कुलं न ज्ञायते यस्य आचारेण विचारयेत् । श्राद्धे दाने प्रकर्तव्ये विशुद्धो मूर्ख एव हि ॥ २५
अविज्ञातो भवेद्विप्रो वेदवेदाङ्गपारगः । श्राद्धदानं प्रकर्तव्यं तस्माद्विप्रं निमन्त्रयेत् ॥ २६
आतिथ्यं तु प्रकर्तव्यमपूर्वे नृपसत्तम । अन्यथा कुरुते पापी स याति नरकं ध्रुवम् ॥ २७
तस्माद्विप्रः प्रकर्तव्यो दाने श्राद्धे च पर्वसु । आदौ परीक्षयेद्विप्रं श्राद्धे दाने प्रकारयेत् ॥ २८
नाश्नन्ति तस्य वै गेहे पितरो विप्रवर्जिताः । शापं दत्त्वा ततो यान्ति श्राद्धाद्वै विप्रवर्जितात् ॥
महापापी भवेत्सोऽपि ब्रह्महा स च कथ्यते ॥ २९
पैत्राचारं परित्यज्य यो वर्तेत नराधिप । महापापी स विज्ञेयः सर्वधर्मबहिष्कृतः ॥ ३०
ये त्यजन्ति शिवाचारं वैष्णवं भोगदायकम् । निन्दन्ति ब्राह्मणान्धर्मान्विज्ञेयाः पापवर्धनाः ॥ ३१
शिवाचारं परित्यज्य शिवभक्तान्द्विषन्ति च । हरिं निन्दन्ति ये पापा ब्रह्मद्वेषकराः सदा ॥
आचारनिन्दकाश्चैव महापातककृत्तमाः ॥ ३२
आद्यं पूज्यं परं ज्ञानं पुण्यं भागवतं तथा । वैष्णवं हरिवंशं च मात्स्यकं कौर्ममेव च ॥ ३३
ये पूजयन्ति पाद्मं च तेषां श्रेयो वदाम्यहम् । प्रत्यक्षं तेन वै देवः पूजितो मधुसूदनः ॥ ३४
तस्मात्प्रपूजयेज्ज्ञानं वैष्णवं विष्णुवल्लभम् । देवस्थाने हि नित्यं वै वैष्णवं पुस्तकं नृप ॥
तस्मिन्प्रपूजिते विप्रपूजितः कमलापतिः ॥ ३५
असंपूज्य हरेर्ज्ञानं येऽधीयते लिखन्ति च । अज्ञाय तत्प्रयच्छन्ति शृण्वन्ति धारयन्ति च ॥ ३६
विक्रीणन्ति च लोभेन कुज्ञाननियमेन च । असंस्कृतप्रदेशे तु यथेष्टं स्थापयन्ति च ॥ ३७
हरेर्ज्ञानं यथाक्षेमं प्रत्यक्षाच्च प्रकाशयेत् । अधीते च समर्थश्च यः प्रसादं करोति च ॥ ३८
अशुचिश्चाशुचिस्थाने यः प्रवक्ति शृणोति च । इति सर्वं समासेन गुरुनिन्दासमं स्मृतम् ॥ ३९
गुरुपूजामकृत्वैव यः शास्त्रं श्रोतुमिच्छति । न करोति च शुश्रूषामाज्ञाभङ्गं च भावयेत् ॥ ४०
नाभिनन्दति तद्वाक्यमुत्तरं च प्रयच्छति । गुरुकर्माभिसाध्यं च तदुपेक्षां करोति च ॥ ४१
गुरुमार्तमशक्तं वा विदेशे प्रस्थितं तथा । अरिभिः परिभूतं वा यः संत्यजति पापकृत् ॥
पठमानं पुराणं तु तस्य पापं वदाम्यहम् ॥ ४२
कुम्भीपाके वसेत्तावद्यावदिन्द्राश्चतुर्दश । पठमानं गुरुं यो हि उपेक्षयति पापधीः ॥ ४३
तस्यापि पातकं घोरं चिरं नरकदायकम् । भार्यापुत्रेषु मित्रेषु यश्चावज्ञां करोति च ॥
इत्येतत्पातकं ज्ञेयं गुरुनिन्दासमं महत् ॥ ४४
ब्रह्मघ्नः स्वर्णस्तेयी च गोहन्ता गुरुतल्पगः । महापातकिनस्त्वेते योगनाशकपञ्चमाः ॥ ४५
क्रोधाद्द्वेषाद्भयाल्लोभाद्ब्राह्मणस्य विशेषतः । मर्मादिकृन्तको यश्च ब्रह्मघ्नः स प्रकीर्तितः ॥ ४६
ब्राह्मणं यः समाहूय याचमानमकिंचनम् । पश्चान्नास्तीति यो ब्रूयात्स च वै ब्रह्महा स्मृतः ॥ ४७
यस्तु विद्याभिमानेन निस्तेजयति च द्विजान् । उदासीनान्सभामध्ये ब्रह्महा स प्रकीर्तितः ॥ ४८
मिथ्यागुणैरथाऽऽत्मानं नयत्युत्कर्षतां बलात् । गुरुं विबोधयेद्यस्तु स च वै ब्रह्महा स्मृतः ॥ ४९

* एतच्चिह्नान्तर्गतः पाठो ङ. ढ. पुस्तकस्थः ।

१ क. छ. झ. ढ. °न ज्ञानानि° । २ ङ. ढ. °त् । स ब्रह्महा कृतघ्नश्च गो° । ३ क. ख. ङ. च. छ. झ. ढ. सुरापी ।
४ ङ. छ. झ. ङ. ढ. विरोध° ।

क्षुत्तृष्णार्तमदेहानां यदन्नं भोक्तुमिच्छताम् । यः समाचरते विघ्नं तमाहुर्ब्रह्मघातकम् ॥ ५०
पिशुनः सर्वलोकानां रन्ध्रान्वेषणतत्परः । उद्वेजनकरः क्रूरः स च वै ब्रह्महा स्मृतः ॥ ५१
देवद्विजगवां भूमिं पूर्वदत्तां हरेत्तु यः । प्रनष्टामपि कालेन तमाहुर्ब्रह्मघातकम् ॥ ५२
द्विजवित्तापहरणं परेण समुपार्जितम् । ब्रह्महत्यासमं ज्ञेयं तस्य पातकमुत्तमम् ॥ ५३
अग्निहोत्रं परित्यज्य पञ्चयज्ञादिकर्म च । मातापित्रोर्गुरूणां च कूटसाक्ष्यं चे यश्चरेत् ॥ ५४
अप्रियं शिवभक्तानामभक्ष्यस्य च भक्षणम् । वने निरपराधानां प्राणिनां च प्रमारणम् ॥ ५५
गवां गोष्ठे देवगृहे पुरे ग्रामे च दीपनम् । इति पापानि घोराणि पूर्वपापसमानि तु ॥ ५६
दीनसर्वस्वहरणं परस्त्रीगजवाजिनाम् । गोभूरजतरत्नानामोषधीनां रसस्य च ॥ ५७
चन्दनागरुकर्पूरकस्तूरीपूपवाससाम् । परन्यासापहरणं स्वर्णस्तेयसमं स्मृतम् ॥ ५८
कन्याया वरयोग्याया अदानं सदृशे वरे । पुत्रमित्रकलत्रेषु गमनं भगिनीषु च ॥ ५९
कुमारीसाहसं घोरमन्त्यजस्त्रीनिषेवणम् । सवर्णायाश्च गमनं गुरुतल्पसमं स्मृतम् ॥ ६०
महापातकतुल्यानि पापान्युक्तानि यानि तु । तानि पातकसंज्ञानि तत्पश्चादुपपातकम् ॥ ६१
[*द्विजायार्थं प्रतिज्ञाय न प्रयच्छति यः पुनः । न च तत्स्मरते नित्यं तुल्यं तदुपपातकम्]॥६२
द्विजद्रव्यापहरणं मर्यादाया व्यतिक्रमः । अतिमानोऽतिकोपश्च दाम्भिकत्वं कृतघ्नता ॥ ६३
अत्यन्तविषयासक्तिः कार्पण्यं शाठ्यमत्सरम् । परदाराभिगमनं साध्वीकन्याविदूषणम् ॥ ६४
परिवित्तिः परिवेत्ता यया च परिविद्यते । तयोर्दानं च कन्यायास्तयोरेव च याजनम् ॥ ६५
पुत्रमित्रकलत्राणामभावे स्वामिनस्तथा । भार्याणां च परित्याग(गः)साधूनां च तपस्विनाम्॥६६
गवां क्षत्रियवैश्यानां स्त्रीशूद्राणां च घातनम् । शिवायतनवृक्षाणां पुष्पारामविनाशनम् ॥ ६७
यः पीडामाश्रमस्थानामाचरेदल्पिकामपि । तद्भृत्यपरिवर्गस्य शूद्रात्परतरस्य च ॥ ६८
वस्त्रधान्यपशुस्तेयमयाच्यानां प्रयाचनम् । यज्ञारामतडागानां दारापत्यस्य विक्रयः ॥ ६९
तीर्थयात्रोपवासानां व्रतानां च सुकर्मणाम् । स्त्रीधनान्युपजीवन्ति स्त्रीभवाद्यन्नजीवितोः ॥ ७०
अधर्मं विब्रूयाद्यस्तु अधर्मं वर्णते नरः । परदोषप्रवादी च परच्छिद्रावलोककः ॥ ७१
परद्रव्याभिलाषी च परदारावलोककः । एते गोघ्नसमानास्तु ज्ञातव्या नृपनन्दनं ॥ ७२
यः कर्ता(?)सर्वशास्त्राणां यो हर्ता पशुविक्रयी । निर्दयोऽतीव भृत्येषु पशूनां दमकश्च यः ॥ ७३
मिथ्या प्रवदते वाचमाकर्णयति यश्च ताम् ॥ स्वामिमित्रगुरुद्रोही मायावी चपलः शठः ॥ ७४
[*ये भार्यापुत्रमित्राणि बालवृद्धकृशश्चाराः । भृत्यानतिथिबन्धूंश्च त्यक्त्वाऽश्नन्ति बुभुक्षितान् ॥
येऽतिमिष्टं समश्नन्ति नो वाऽप्यन्नं ददति च । पृथक्पाकी स विज्ञेयो ब्रह्मवादिषु गर्हितः] ७६
नियमान्स्वयमादाय ये त्यजन्त्यजितेन्द्रियाः । प्रवर्गा वञ्चिता यैश्च संयुक्ता ये च मद्यपैः ॥ ७७

---

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. झ. ढ. ठपुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ठ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ढ. न्यासेन । २ ग. घ सुहृद्वधः । अ° । ३ क. ख. ङ. च. छ. झ. ड. ढ. °ष्ठेवने चाग्नेः पु° । ४ क. ख. ङ. च. छ. ड. ढ. °णि सुरापानस° । ५ क. ख. ङ. च छ. झ. ड. ढ. °रीपट्टवा° । ६ ड. °म् । एतासां चैव ग° । ७ क. ख. ङ. च. झ. ढ. अन्यत्र वि° । ८ ट. साधुमत्सरः । ९ क. ख. ङ. च. छ. झ. ड. ढ. °ताः । स्वधर्मं विक्रयेद्यस्तु स्वधर्मं व° । घ. ण. °ताः । अधर्मं विब्रूयाद्यस्तु स्वधर्मं । १० ट. °न । विष्कर्ता । ११ घ. ट. ठ. भुञ्जते ।

ये चापि क्षतरोगार्ता गां पिपासाक्षुधातुराम् । न पालयन्ति यत्नेन ते गोघ्ना नारकाः स्मृताः ॥
सर्वपापरता ये च चतुष्पात्क्षेत्रभेदकाः । साधून्विप्रगुरूंश्चैव ये वै गां ताडयन्ति च ॥ ७९
ये ताडयन्ति निर्दोषां नारीं साधुपदे स्थिताम् । आलस्यबद्धसर्वाङ्गो यः स्वपिति मुहुर्मुहुः ॥ ८०
दुर्बलांश्च नियुञ्जन्ति बलाच्च प्रेषयन्ति च । पीडयन्त्यतिभारेण सक्षतान्वाहयन्ति च ॥ ८१
वृषभाणां च वृषणौ पेषयन्ति च दुर्जनाः । गोवत्सानां च दमनं महापातकसंमितम् ॥ ८२
आशया समनुप्राप्तं क्षुत्तृष्णाश्रमपीडितम् । ये चातिथिं न मन्यन्ते ते वै निरयगामिनः ॥ ८३
अनाथं विकलं दीनं बालं वृद्धं क्षुधातुरम् । नानुकम्पन्ति ये मूढास्ते यान्ति निरयार्णवम् ॥ ८४
अजाविको माहिषिको यः शूद्रान्वृषलीपतिः । शूद्रो विप्रस्य क्षत्रस्य य आचारेण वर्तते ॥ ८५
शिल्पिनः कारवो वैद्यास्तथा देवलका नराः । भृतका भृत्यकर्माणः सर्वे निरयगामिनः ॥ ८६
यश्चोदितमतिक्रम्य स्वेच्छया आहरेत्करम् । नरके परिपच्येत यश्च दण्डं वृथा नयेत् ॥ ८७
उत्कोचकैरधिकृतैस्तस्करैश्च प्रपीडिता । यस्य राज्ञः प्रजा राष्ट्रे पच्यते नरकेषु सः ॥ ८८
ये द्विजाः प्रतिगृह्णन्ति नृपस्यान्यायवर्तिनः । प्रयान्ति तेऽपि घोरेषु नरकेषु न संशयः ॥ ८९
पापकारकपौराणां यत्पापं पार्थिवस्य च । तेन भीतो नृपः कुर्यात्प्रजानां परिनिग्रहम् ॥ ९०
अचौरं चौरवद्यश्च चौरं चाचौरवत्पुनः । अविचार्य नृपः कुर्यात्सोऽपि वै नरकं व्रजेत् ॥ ९१
घृततैलान्नपानानि मधु मांसं सुरासवम् । गुडेक्षुक्षीरशाकादि दधिमूलफलानि च ॥ ९२
तृणकाष्ठं पुष्पपत्रे कांस्यं रजतमेव वा । उपानच्छत्रशकटशिबिकानाशनं मृदु ॥ ९३
ताम्रं सीसं त्रपु कांस्यं शङ्खाद्यं रजतोद्भवम् । वादित्रं वेणुवंशाद्यं गृहस्योपस्कराणि च ॥ ९४
ऊर्णाकार्पासकौशेयरङ्गपत्रोत्तराणि च । तथा सूक्ष्माणि वस्त्राणि येऽन्येषां वै हरन्ति च ॥ ९५
एवमादीनि चान्यानि द्रव्याणि नरकं तु ते । गच्छन्ति सततं भूप हृत्वा हृत्वा गृहाधिपम् ॥ ९६
बह्वल्पकाद्यपि तथा परस्य ममताकृतम् । अपहृत्य नरो याति नरके नात्र संशयः ॥ ९७
एवमादिकपापानि कुर्वद्भिर्मरणोत्तरम् । शरीरं यातनार्थाय पूर्वाकारमवाप्यते ॥ ९८
यमलोकं व्रजन्त्येते शरीरेण यमाज्ञया । यमदूतैर्महाघोरैर्नीयमानाः सुदुःखिताः ॥ ९९
देवमानुषतिर्यञ्चामधर्मनियतात्मनाम् । [*धर्मराजः स्मृतः शास्ता सुघोरैर्विविधैर्वधैः] ॥ १००
विनयाचारयुक्तानां प्रमादसलिलाशयात् । प्रायश्चित्तैर्गुरुः शास्ता न तु तैरिष्यते यमः ॥ १०१
पारदारिकचौराणामन्यायव्यवहारिणाम् । नृपतिः शासकः प्रोक्तः प्रच्छन्नानां च धर्मराट् ॥ १०२
तस्मात्कृतस्य पापस्य प्रायश्चित्तं समाचरेत् । नान्यथा नश्यते पापं कल्पकोटिशतैरपि ॥ १०३
यः करोति स्वयं कर्म स भुङ्क्ते तत्फलं नरः । [*कायेन मनसा वाचा तस्य वाऽधोगतिः फलम्

* एतच्चिह्नान्तर्गतः पाठो घ. ट. ठ. ड. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो घ. ट. ठ. ड. पुस्तकस्थः ।

१ ङ. °ताः । मद्यपानरता ये च रहस्याक्षेत्र° । २ ङ. °श्च न पुष्णन्ति नष्टाभान्वेष° । ३ क. ख. ङ. च. छ. झ. ड. ढ. °षिकः सामुद्री भृ° । ४ ङ. °था हेमकारा वृषध्वजाः । भृ° । ५ क. ख. ङ. च. छ. झ. ड. ढ. °कामात्य° । घ. ट. ठ. °काः प्रेत्य° । ६ घ. ट. ठ. ड. दण्डरुचिर्नृपः । उ° । ७ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पारदारिक° । ८ घ. ट. ठ. ड. च । भवत्यरक्षितो घोरस्तस्य प्राप्नोति वै ग्रहः । अ° । ङ छ. झ. ढ. च । भवत्यरक्षितो घोरो राज्ञस्तस्य परिग्रहः । अ° । ९ क. ख. च. छ. झ. ड. °पद्मोद्भवानि च । १० ङ. च. छ. ट. ड. ढ. ये लोभेन हृ° । ११ ङ. ढ. °णि विविधानि च । नरकं तु ध्रुवं गच्छेदपहृत्याल्पकान्यपि । यद्वा तद्वा परद्रव्यमपि सर्षपमात्रकम् । अ° । १२ क. ङ. प्रमत्तानां । १३ घ. झ. ट. ठ. ड. ढ. नाभुक्तस्यान्यथा नाशः क° । १४ क.ख.घ.ङ.च.छ.झ.ट.ठ.ड.ढ. °र्म कारयेद्वाऽनुमो दयेत् । का° ।

इति संक्षेपतः प्रोक्ताः पापभेदास्त्रिधाऽधुना । कथ्यन्ते गतयश्चित्रा नराणां पापकर्मणाम् ॥]१०५
[*एतत्ते नृपतेऽधर्मफलं प्रोक्तं सुविस्तरात्] । अन्यत्किं ते प्रवक्ष्यामि तन्मे ब्रूहि नरोत्तम १०६
[*अधर्मस्य फलं प्रोक्तं धर्मस्यापि वदाम्यहम् । इत्युक्त्वा मातलिस्तत्र राजानं धर्मवत्सलम् ॥
तस्मिन्धर्मप्रसङ्गेन पुण्यं ख्यातं महात्मनाम्] ॥ १०७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थे ययातिचरिते सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६८९३

---

अथाष्टषष्टितमोऽध्यायः ।

---

ययातिरुवाच—

अधर्मस्य फलं सूत श्रुतं सर्वं मया विभो । धर्मस्यापि फलं ब्रूहि श्रोतुं कौतूहलं मम ॥ १

मातलिरुवाच—

अथ पापैरिमे यान्ति यमलोकं चतुर्विधाः । संत्रासजननं घोरं विवशाः सर्वदेहिनः ॥ २
गर्भस्थैर्जायमानैश्च बालैस्तरुणमध्यमैः । [*स्त्रीपुंनपुंसकैर्वृद्धैर्यातव्यं सर्वजन्तुभिः ॥ ] ३
शुभाशुभं कृतं कर्म देहिनां प्रविचार्यते । चित्रगुप्तादिमध्यस्थैर्ज्ञातव्यं सर्वदर्शिभिः ॥ ४
न तेऽत्र प्राणिनः सन्ति ये न यान्ति यमक्षयम् । अत्र शान्तिकृतं कर्म स्मृत्युक्तं तद्विचारितम् ५
ये तत्र शुभकर्माणः सौम्यचित्ता दयान्विताः । ते नरा यान्ति सौम्येन यथा यमनिकेतनम् ॥ ६
यश्च दद्याद्द्विजेन्द्राणामुपानत्काष्ठपादुके । स विमानेन महता सुखं याति यमालयम् ॥ ७
छत्रदानेन गच्छन्ति पथा सान्द्रेण देहिनः । दिव्यवस्त्रपरीधाना यान्ति वस्त्रप्रदायिनः ॥ ८
शिबिकायाः प्रदानेन विमानेन सुखं व्रजेत् । सुखासनप्रदानेन सुखं यान्ति यमालयम् ॥ ९
आरामकर्ता छायासु शीतलासु सुखं व्रजेत् । यान्ति पुष्पकयानेन पुष्पमालाप्रदायिनः ॥ १०
देवतागृहकर्ता च यतीनामाश्रमस्य च । अनाथस्याऽऽतुराणां च क्रीडत्यतिगृहोत्तमैः ॥ ११
देवाग्निगुरुविप्राणां मातापित्रोश्च पूजकः । गुणान्वितेषु दीनेषु यच्छत्यावसथान्यपि ॥
स प्रयाति सर्वकामं स्थानं पैतामहं नृप ॥ १२
श्रद्धया येन विप्राय दत्तं काकिणिमात्रकम् । स स्याद्दिव्यतिथिर्भूप देवानां कीर्तिवर्धनः ॥
तस्माच्छ्रद्धान्वितैर्देयं तत्फलं भवति ध्रुवम् ॥ १३

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने ययातिचरिते पितृतीर्थेऽष्टषष्टितमोऽध्यायः ॥ ६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६९०६

---

* ञ. पुस्तक एवेदमेतच्चिह्नान्तर्गतम् । * एतच्चिह्नान्तर्गतः पाठो घ. छ. झ. ठ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो घ. ङ. छ. झ. ट. ठ ड. ढ. पुस्तकस्थः ।

---

१ घ ङ. छ. झ. ट. ठ. ड. ढ. अवश्यं हि कृतं कर्म भोक्तव्यं त° । २ ड. ढ. °के । जवनाश्वेन । ३ छ. वराश्वेन । ४ ञ. च कृत्वा याति गृ° । ५ ञ त्तमे । दे° । ६ ङ. छ. झ. ढ. °कः । आर्तेषु दीनेषु गुणान्वितेषु यच्छ्रद्धया स्वल्पमपि प्रदत्तम् । तत्सर्वकामान्समुपैति लोके श्राद्धे च दानं प्रवदन्ति सन्तः ॥ श्रद्धा प्रदाने विज्ञेयमपि वालाग्रमात्रकम् । श्रद्धादाने सदा तस्माच्छ्रद्धायास्तत्फलं भवेत् । इ° ।

अथैकोनसप्ततितमोऽध्यायः ।

---

मातलिरुवाच—

अथ धर्माः शिवेनोक्ताः शिवधर्मागमोत्तमाः । ज्ञेया विद्भिर्विधानेन कर्मयोगप्रभेदतः ॥ १
हिंसादिदोषनिर्मुक्ताः क्लेशायासविवर्जिताः । सर्वभूतहिताः शुद्धाः सुसूक्ष्मास्तु महाबलाः ॥ २
अनन्तशाखाः कथिताः शिवमूलैकमास्थिताः । ज्ञानध्यानैः समायुक्ताः शिवधर्माः सनातनाः ॥ ३
धारयन्ति शिवं यस्माद्धार्यते शिवभाषितैः । शिवधर्माश्रितास्तस्मात्संसारार्णवतारणाः ॥ ४
अथाहिंसा क्षमा सत्यं ह्रीः श्रद्धेन्द्रियसंयमः । दानमिज्या ततो ध्यानं दशकं धर्मसाधनम् ॥ ५
अथ व्यस्तैः समस्तैर्वा शिवधर्मैरनुष्ठितैः । शिवैकस्थानसंप्राप्तिर्गतिरेकैव कल्पिता ॥ ६
यथा भूः सर्वभूतानां स्थानं साधारणं स्मृतम् । तत्स्थानं शिवभक्तानामतुलं केवलं स्मृतम् ॥ ७
यथेह सर्वभूतानां भोगाः सातिशयाः स्मृताः । मताः पुण्यविशेषेण भोगाः शिवपुरे तथा ॥ ८
शुभाशुभफलं चात्र भुज्यते सर्वदा नृभिः । शिवधर्मस्य चैकस्य फलं तत्रोपभुज्यते ॥ ९
यस्य यादृग्भवेत्पुण्यं श्रद्धापात्रविशेषतः । भोगाः शिवपुरे तस्य ज्ञेयाः सातिशयाः शुभाः ॥ १०
स्थानप्राप्तिः परं तुल्या भोगाः शान्तिमयाः स्मृताः । कुर्यात्तस्मिन्महास्थानं महायोगजिगीषया ११
सर्वातिशयमेवैकं भावितं च सुरोत्तमैः । आत्मयोगाधिपत्यं स्याच्छिवः सर्वजगत्पतिः ॥ १२
[*केचित्तत्रैव मुच्यन्ते ज्ञानयोगरता नराः । आवर्तन्ते पुनश्चान्ये संसारे भोगतत्पराः] ॥ १३
तस्माद्विमुक्तिमिच्छंस्तु भोगासक्तिं विवर्जयेत् । विरक्तः शान्तचित्तात्मा शिवज्ञानमवाप्नुयात् ॥ १४
ये चान्यासक्तहृदया यजन्तीशं प्रयत्नतः । तेषामपि ददातीशः स्थानं भावानुरूपतः ॥ १५
तत्रार्चयन्ति ये रुद्रं सकृदुच्छिष्टकर्मणा । तेषां पिशाचलोकेषु भोगानीशः प्रयच्छति ॥ १६
संतप्ता दुःखभावेन म्रियन्ते सर्वदेहिनः । अन्नदः प्राणदः प्रोक्तः प्राणदश्चापि सर्वदः ॥ १७
तस्मादन्नप्रदानेन सर्वदानफलं भवेत् । [*त्रैलोक्ये यानि रत्नानि भोगाः स्त्रीवाहनानि च
अन्नदानप्रदः सर्वमिहामुत्र फलं] लभेत् ॥ १८
[13]यस्मादन्नेन पुष्टाङ्गः कुरुते पुण्यसंचयम् । अन्नप्रदातुस्तस्यार्धं कर्तुश्चार्धं न संशयः ॥ १९
धर्मार्थकाममोक्षाणां देहः परमसाधनम् । [*स्थितिस्तस्यान्नपानाभ्यामतस्तत्सर्वसाधनम्] ॥ २०
अन्नं प्रजापतिः साक्षादन्नं विष्णुः शिवः स्वयम् । तस्मादन्नसमं दानं न भूतं न भविष्यति ॥ २१
त्रयाणामपि लोकानामुदकं जीवनं स्मृतम् । [*पवित्रमुदकं दिव्यं शुद्धं सर्वरसाश्रयम् ॥ २२
अन्नपानाश्वगोवस्त्रशय्यासूत्रासनानि च] । प्रेतलोके प्रशस्तानि दानान्यष्टौ विशेषतः ॥ २३

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढपुस्तकस्थः ।

---

१ ख. ङ. छ. झ. ट. ठ. ढ. °या बहुविधास्ते च क° । ङ. °या बहुविधास्ते च कर्मभेदप्र° । २ छ. सुशान्तास्तु । ३ ङ. छ. झ. ढ. °नसुपुण्याया: शि° । ४ ङ. ढ. °मू । तत्तथा शिवभक्तानां तुल्यं शिवपुरं स्मृ° । ५ क. ख. ङ. च. छ. झ. ढ. °ताः । नानापु° । ६ छ. शान्तिशया । ङ. शान्त्याशयाः । ७ ङ. °र्यात्पुण्यमिहामुत्र म° । ८ क. ख. ङ. च. छ. °हाभाग° । ङ. ढ. °हाभोग° । ९ ङ. °र्वाधिपत्यमेवैकं तत्र नास्ति पुरोत्तमे । आ° । १० क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °त्मभोगा° । ११ ङ. स्यात्तत्रैवास्ति शिवाशया । के° । १२ क. ख. ङ. च. छ. झ. ड. ढ. प्रसक्ततः । १३ घ. ङ. ट. ठ. ढ.यस्यान्नदानपु° । छ. झ. ड. यस्यान्नपानपु° ।

एवं दानविशेषेण धर्मराजपुरं नरः । यस्माद्याति सुखेनैव तस्माद्धर्मं समाचरेत् ॥ २४
ये पुनः क्रूरकर्माणः सदा दानविवर्जिताः । भुञ्जते दारुणं दुःखं नरके नृपनन्दन ॥ २५
तथा सुखं प्रभोक्ष्यन्ति दानं कृत्वा तु चातुलम् । तेषां स्वयं भवेत्सौख्यं कर्मयोगरतात्मनाम् २६
अप्रमेयगुणैर्दिव्यैर्विमानैः सार्वकामिकैः । असङ्ख्यस्तत्पुरं व्याप्तं प्राणिनामुपकारकैः ॥ २७
सहस्रसोमदिव्यं वा सूर्यतेजःसमप्रभम् । रुद्रलोकमिति प्रोक्तमशेषगुणसंयुतम् ॥ २८
सर्वेषां शिवभक्तानां तत्पुरं परिकीर्तितम् । [*रुद्रक्षेत्रे मृतानां च जङ्गमस्थावरात्मनाम्] ॥ २९
अप्येकदिवसं भक्त्या यः पूजयति शंकरम् । सोऽपि याति शिवं स्थानं किं पुनर्बहुशोऽर्चयन् ३०
वैष्णवा विष्णुभक्ताश्च विष्णुध्यानपरायणाः । तेऽपि यान्ति च वैकुण्ठं समीपं चैव चक्रिणः ३१
ब्रह्मवादी च धर्मात्मा ब्रह्मलोकं प्रयाति सः । पुण्यकर्ता सुपुण्येन पुण्यलोकं प्रयाति च ॥ ३२
तस्मादीशं सदा भक्त्या भावयेदात्मनाऽऽत्मनि । हरौ वाऽपि महाराज युक्तात्मा ज्ञानवान्स्वयम् ॥
तस्मात्सर्वविचारेण भावदोषविचारतः ॥ ३३
एवं विष्णुप्रभावेन विशिष्टेनापि कर्मणा । नरैः स्थानमवाप्येत वेशभावानुरूपतः ॥ ३४
इत्येतदपरं प्रोक्तं श्रीमच्छिवपुरं महत् । देहिनां कर्मनिष्ठानां पुनरावर्तकं स्मृतम् ॥ ३५
ऊर्ध्वं शिवपुराज्ज्ञेयं वैष्णवं लोकमुत्तमम् । वैष्णवा मानवा यान्ति विष्णुध्यानपरायणाः ॥ ३६
ब्राह्मणा ब्रह्मलोकं तु सदाचारा नरोत्तमाः । प्रयान्ति यज्विनः सर्वे सुनीतास्तत्र कोविदाः ३७
इन्द्रलोकं तथा यान्ति क्षत्रिया युद्धगामिनः । अन्ये च पुण्यकर्तारः पुण्यलोकान्प्रयान्ति च ॥ ३८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने ययातिचरिते मातापितृतीर्थे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६९४४

---

अथ सप्ततितमोऽध्यायः ।

---

मातलिरुवाच—

यमपीडां प्रवक्ष्यामि महातीव्रां सुदारुणाम् । भुञ्जन्ति पापिनः सर्वे कूटास्ते ब्रह्मघातिनः ॥ १
क्वचित्पापाः प्रपच्यन्ते तीव्रेण नरकाग्निना । क्वचित्सिंहैर्वृकैर्व्याघ्रैर्दंशैः कीटैस्तु दारुणैः ॥ २
क्वचिन्महाजलौकोभिः क्वचिच्चाजगरैः पुनः । मक्षिकाभिश्च रौद्राभिः क्वचित्सर्पैर्विषोल्बणैः ॥ ३
मत्तमातङ्गयूथैश्च बलोत्कृष्टैः प्रमाथिभिः । पन्थानमुल्लिखद्भिश्च तीक्ष्णशृङ्गैर्महावृषैः ॥ ४
महाशृङ्गैश्च महिषैर्दुष्टगात्रप्रबाधकैः । डाकिनीभिश्च रौद्राभिर्विकटाक्षैश्च राक्षसैः ॥ ५
व्याधिभिश्च महारौद्रैः पीड्यमाना व्रजन्ति ते । महातुलासमारूढा दोल्यमाना अतीव ते ॥ ६
महावेगप्रधूतास्ते महाचण्डेन वायुना । महापाषाणवर्षेण भिद्यमानाश्च सर्वतः ॥ ७
पतद्भिर्वज्रनिर्घोषैरुल्कापातैश्च दारुणैः । प्रदीप्ताङ्गारवर्षेण हन्यमाना व्रजन्ति ते ॥ ८

---

*एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ ड. °न्ति धर्मकर्तार एव च । ते° । २ ड. स्वपुण्येन । ३ म. °विवार्जितः । ४ छ. झ. ड. विसृष्टे° । ५ क. ख. ङ. च. छ. झ. ढ. °वै पुरीं तां तत्र । म. °वै पुनी° । ६ क. ख. ङ. घ. छ. झ. ड. ढ. °द्धशालिनः । ७ क. ख. ङ. च. छ. झ. ड. ढ. °वै क्रूरास्ते । ८ क. ख. च. ड. °व्रेणैव विषाग्नि° । ९ घ. ठ. °षै रुष्टैर्यन्त्रप्रसाध° । १० क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °करालैश्च । ११ ट. °हादोलास° ।

महता पांशुवर्षेण पूर्यमाणा यमं गताः । ये नराः पापकर्माणः पापं भुञ्जन्ति दारुणम् ॥ ९
एवं पापविशेषेण पापिष्ठाः पापकारकाः । निरयं प्राप्य भुञ्जन्ति बहुपीडासमाकुलम् ॥ १०
एतत्ते सर्वमाख्यातं विवेकं पापपुण्ययोः । अन्यत्किं ते प्रवक्ष्यामि धर्मसारमनुत्तमम् ॥ ११

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने ययातिचरिते पितृतीर्थे सप्ततितमोऽध्यायः ॥ ७० ॥

आदितः श्लोकानां समष्ट्यङ्काः—६९५९

---

अथैकसप्ततितमोऽध्यायः ।

---

ययातिरुवाच—

यत्त्वया सर्वमाख्यातं धर्माधर्ममनुत्तमम् । शृण्वतोऽथ मम श्रद्धा पुण्यं चैव प्रवर्धते ॥ १
देवानां लोकसंस्थानां वद संख्याः प्रकीर्तिताः । यस्य पुण्यप्रसङ्गेन येन प्राप्तं च मातले ॥ २

मातलिरुवाच—

योगयुक्तं प्रवक्ष्यामि [*तपसा यदुपार्जितम् । देवानां वाससंस्थानं सुखभोगप्रदायकम् ॥ ३
धर्मभावं प्रवक्ष्यामि या]यासेनार्जितं पृथक् । उपरिष्टाच्च लोकानां स्वरूपं चाप्यनुक्रमात् ॥ ४
तत्राष्टगुणमैश्वर्यं पार्थिवं पिशिताशिनाम् । तस्मात्सद्योगतानां च नराणामुत्तमं स्मृतम् ॥ ५
बहुद्वारं षोडशकुलं पार्थिवात्पश्च तद्द्विधा । एकं निरवशेषं च यच्छेषं कुलतेजसाम् ॥ ६
गन्धर्वाणां च वार्थव्यमाग्नं च सकलं स्मृतम् । [*पाञ्चभौतिकमिन्द्रस्य चत्वारिंशद्गुणं महत् ]॥
सोमस्य मानसं दिव्यं विश्वेशं पाञ्चभौतिकम् ॥ ७
सौम्यं प्रजापतीशानामहंकारगुणान्वितम् । चतुःषष्टिगुणं ब्राह्म्यं बौधमैश्वर्यमुत्तमम् ॥ ८
विष्णोः प्रधानकं सूक्ष्मं शिवस्याऽऽत्मगतं महत् । आदिमध्यान्तरहितं विशुद्धं तत्त्वलक्षणम् ॥ ९
सर्वाभिभावकं सूक्ष्ममनौपम्यं परात्परम् । सुसंपूर्णं जगद्धेतुः पशुपाशविमोक्षणम् ॥ १०
यो यत्स्थानमनुप्राप्तस्तस्य भोगस्तदात्मकः । विमानं तत्समानं च भवेदीशप्रसादतः ॥ ११
नानारूपाणि भावानां दृश्यन्ते कोटयस्त्विमाः । अष्टाविंशतिरेवोर्ध्वसुदीर्घाः सुकृतात्मनाम् १२
ये कुर्वन्ति नमस्कारमीश्वराय क्वचित्क्वचित् । संपर्कात्कौतुकाल्लोभात्तद्विमानं लभन्ति ते ॥ १३
नामसंकीर्तनं चापि प्रसङ्गेन शिवस्य यः । कुर्याद्वाऽपि नमस्कारं न तस्य विफलं भवेत् ॥ १४
इत्येता गतयः प्रोक्ता महत्यः शिवकर्मणि । कर्मणा मनसा वाचा पुंसामीशानुभावतः ॥ १५
प्रसङ्गेनापि ये कुर्युराकण्ठं स्मरणं नरः । ते लभन्तेऽतुलं सौख्यं किं पुनस्तत्परायणाः ॥ १६
विष्णुचिन्तां प्रकुर्वन्ति ध्यानेनाऽऽकुलमानसाः । ते यान्ति परमं स्थानं तद्विष्णोः परमं पदम् ॥
शैवं च वैष्णवं लोकमेकरूपं नरोत्तम । द्वयोश्चाप्यन्तरं नास्ति एकरूपं महात्मनोः ॥ १८
शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे । शिवस्य हृदये विष्णुर्विष्णोश्च हृदये शिवः ॥ १९

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. च. झ. ड. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

---

१ ङ. °णा द्यमङ्गलाः । ये । २ क. ख. ङ. च. छ. झ. ड. ढ. पुनरेव । ३ ञ. °म् । चतुर्द्वारं षट्सकलं । ४ ञ. °र्थिवं वाद्यते द्विधा° । ५ ञ. °र्षं सकलं ततः ग° । ६ ङ. छ. ढ. °यव्यं याज्यं च । ७ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °णाधिकम् । ८ क. ख. घ. ङ. च. छ. झ. ट. ट. ढ. पुण्यार्थं । ९ क. ख. च. छ. झ. कुर्युः श्रीकण्ठस्य° । ङ. ढ. कुर्युः शंकरस्य° ।

एकमूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः । त्रयाणामन्तरं नास्ति गुणभेदाः प्रकीर्तिताः ॥ २०
शिवभक्तोऽसि राजेन्द्र तथा भागवतोऽसि च । तेन देवाः प्रसन्नास्ते ब्रह्मविष्णुमहेश्वराः ॥
सुप्रीता वरदा राजन्कर्मणा तव सुव्रत[1] ॥ २१
इन्द्रादेशात्समायातः संनिधौ[2] तव मानद । ऐन्द्रमेनं(तत्) पदं याहि पश्चाद्ब्राह्म्यं महेश्वरम् ॥ २२
वैष्णवं च प्रयाहि त्वं दाहमलयवर्जितम् । अनेनापि विमानेन दिव्येन सर्वगामिना ॥ २३
देवानां दिव्यभोगांस्त्वं भुङ्क्ष्व राजन्मनोनुगान् । समारुह्य विमानं त्वं पुष्पकं सुखगामिन(ना)म् २४

सुकर्मोवाच—

एवमुक्त्वा द्विजश्रेष्ठ राजानं धर्मवत्सलम् । ययातिं मातली राज्ञा पूजितः सादरं तदा ॥ २५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने ययातिचरिते मातापितृतीर्थे एकसप्ततितमोऽध्यायः ॥ ७१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—६९८०

---

अथ द्विसप्ततितमोऽध्यायः ।

---

पिप्पल उवाच—

मातलेश्च वचः श्रुत्वा स राजा नहुषात्मजः । किं चकार महाप्राज्ञस्तन्मे विस्तरतो वद ॥ १
सर्वपुण्यमयी पुण्या कथेयं पापनाशिनी । श्रोतुमिच्छाम्यहं प्राज्ञ नैव तृप्तोऽस्मि सर्वथा ॥ २

सुकर्मोवाच—

सर्वधर्मभृतां श्रेष्ठो ययातिर्नृपसत्तमः । तमुवाचाऽऽगतं दूतं मातलिं चेन्द्रसारथिम् ॥ ३

ययातिरुवाच—

शरीरं नैव त्यक्ष्यामि न गमिष्ये[3] पुरंदरम् । शरीरेण विना दूत पार्थिवेन न संशयः ॥ ४
यद्यपीह महादोषाः कायस्यैवं प्रकीर्तिताः । पूर्वं चापि त्वया मेऽद्य सर्वमुक्तं गुणागुणम् ॥ ५
नाहं त्यक्त्वा[4] शरीरं वै गमिष्ये त्रिदिवं पुनः । इत्याचक्ष्व इतो गत्वा देवदेवं पुरंदरम् ॥ ६
एकाकिनाऽपि जीवेन कायेनापि महामते । नैव सिद्धिं प्रयात्येव सांसारिकीमिहैव हि ॥ ७
नैव प्राणं विना कायो जीवः कायं विना न हि । उभयोश्चापि मित्रत्वं नयिष्ये[5] नाशमेव न ॥ ८
यस्य प्रसादभावाद्वै सुखमश्नाति केवलम् । शरीरस्याप्ययं प्राणो भोगान्[6]न्यान्मनोनुगान् ॥ ९
एनं त्यक्त्वा स्वर्गभोगं भोक्ष्येऽहं देवदूत न । संभवन्ति महादुष्टा व्याधयो दुःखदायकाः ॥ १०
मातले किल्बिषाच्चैव जरादोषादि जायते । पश्य मे पुण्यसंयुक्तं कायं षोडशवार्षिकम् ॥ ११
जन्मप्रभृति मे कायः शतार्धं च प्रयाति हि । तथाऽपि नूतनो भावः कायस्यापि प्रजायते ॥
मम कालो गतो दूत अब्दलक्षमनुत्तमम्[8] ॥ १२
यथा षोडशवर्षस्य कायः पुंसः प्रशोभते । तथा मे शोभते देहो बलवीर्यसमन्वितः ॥ १३
नैव ग्लानिर्न मे हानिर्न भ्रमो व्याधयो[9] न च । मातले मम कायो हि धर्मोत्साहेन वर्धते ॥ १४

---

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. सुव्रत । २ ङ. त्वं जनिप्र॰ । ३ क. ख. ङ. च. छ. झ. ड. ढ. ॰ष्ये दिवं पुनः । झ॰ । ४ ङ. त्यक्ष्ये शरीरं तु न गमिष्ये दि॰ । ५ छ. ॰ष्येऽहं शमेन च । य॰ । ६ ङ. ॰गाञ्श्लाघ्यान्म॰ । ७ घ ञ. ट. ठ. ड. ढ. एवं ज्ञात्वा स्वर्गभोगं न भोक्ष्ये देवदूतक । सं॰ । ८ क. अष्टल॰ । छ. अब्दानां शतम् । ९ क. ख. च. छ. झ. ॰यो जरा । मा॰ । ङ. ढ. ॰यो न वा । मा॰ ।

सर्वामृतमयं दिव्यमौषधं परमौषधम् । पापव्याधिप्रणाशार्थं धर्मार्थं हि कृतं पुरा ॥ १५
तेन मे शोधितः कायो गददोषो न जायते । हृषीकेशस्य देवस्य नामोच्चारणमुत्तमम् ॥ १६
एतद्रसायनं दूत नित्यमेव करोम्यहम् । तेन मे व्याधयो दोषाः पापाद्याः प्रलयं गताः ॥ १७
विद्यमाने हि संसारे कृष्णनाम्नि महौषधे । मानवा मरणं यान्ति पापव्याधिप्रपीडिताः ॥
न पिबन्ति महामूढाः कृष्णनामरसायनम् ॥ १८
तेन[1] ध्यानेन भावेन पूजाभावेन मातले । सत्येन दानपुण्येन मम कायो निरामयः ॥ १९
पापाच्च आमयात्पीडाः प्रभवन्ति शरीरिणाम् । पीडाभ्यो जायते मृत्युः प्राणिनां नात्र संशयः॥
तस्माद्धर्मः प्रकर्तव्यः पुण्यं सत्याश्रयं नरैः । पञ्चभूतात्मकः कार्यः शिरासंधिषु जर्जरैः[3] ॥ २१
एवं संधीकृतो मर्त्यो हेमाकारे(कृते)व कङ्कणम् । तत्र भावो महानग्निर्धातुरेव कलेवरम् ॥ २२
शतखण्डमयो विप्रयो[4]ऽनुसंभति[5](?)बुद्धिमान् । [*हरेर्नाम्ना च दिव्येन सौभाग्येनापि पिप्पल ॥२३
पञ्चात्मका हि ये खण्डाः शतसंधिषु जर्जराः । तेनानुसंधिताः सर्वे कायधातुसमा अभवन्]॥२४
हरिपूजोपचारेण ध्यानेन नियमेन वा । सत्यभावेन दानेन कायः शुद्धो विजायते ॥ २५
दोषा नश्यन्ति कायस्य व्याधयः शृणु मातले । बाह्याभ्यन्तरशौचं हि दुर्गन्धिर्नैव जायते ॥
शुचिस्ततो भवेत्सूत प्रसादात्तस्य चक्रिणः ॥ २६
[*नाहं स्वर्गं गमिष्यामि स्वर्गमत्र करोम्यहम् । तपसा चैव भावेन स्वधर्मेण महीतलम् ॥ २७
स्वर्गरूपं करिष्यामि प्रसादात्तस्य चक्रिणः] । एवं ज्ञात्वा प्रयाहि त्वं कथयस्व पुरंदरम् ॥ २८

सुकर्मोवाच—

इत्थं श्रुत्वा स वै दूतो नृपतेः परिभाषितम् । [*आशीर्भिरभिनन्द्याथ आमन्त्र्य नृपतिं गतः] ॥
सर्वं निवेदयामास स इन्द्राय महात्मने ॥ २९
समाकर्ण्य सहस्राक्षो ययातेस्तु महात्मनः । तदर्थं चिन्तयामास समानेतुं दिवं प्रति ॥ ३०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थे ययातिचरिते द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७०१०

---

अथ त्रिसप्ततितमोऽध्यायः ।

---

पिप्पल उवाच—

गते तस्मिन्महाभागे दूत इन्द्रस्य वै पुनः । किं चकार स धर्मात्मा ययातिर्नहुषात्मजः ॥ १

सुकर्मोवाच—

तस्मिन्गते देववरस्य दूते स चिन्तयामास नरेन्द्रसूनुः ।
आहूय दूतप्रवरान्स सत्वरं धर्मार्थयुक्तं परमादिदेश ॥ २

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो ङ. ढ. पुस्तकस्थः।
* एतच्चिह्नान्तर्गतः पाठःक. ख. ङ. च. छ. झ. ड. पुस्तकस्थः ।

---

१ क. ख. ग. घ. ङ. च. छ. झ. ट. ड. ढ. °न ज्ञानेन ध्यानेन । २ क. ख. ड. °यः शतसं° । ३ ङ. छ. झ. ढ. °रः । तमनुसंदधते मर्त्यो हेमकारेव टङ्कणैः । त° । ड. °रः । तमनुसंदधते मर्त्यो हेमकारेव काञ्चनैः । ४ झ °यो निष्ठो योऽप्सु संधत्त बु° । ५ ड. °नुसज्जति ।

गच्छन्तु दूता मम शासनेन स्वीयेषु देशेषु परेषु चैव ।
शृण्वन्तु सर्वेऽपि तथैव लोका जुषन्तु वाक्यं मम धर्मयुक्तम् ॥
व्रजन्तु लोकाः सुपथं हरेश्च भावैः सुपुण्यैरमृतोपमानैः ॥ ३
सुकर्मभिश्चापि च ज्ञानध्यानैस्तपोभिरित्थं सततं नियुक्ताः ।
यज्ञैश्च दानैर्मधुसूदनैकमर्चन्तु लोका विषयान्विहाय ॥ ४
सर्वत्र पश्यन्तु मरारिमेकं शुष्केषु चाऽऽर्द्रेष्वपि स्थावरेषु ॥
अभ्रेषु भूमौ सचराचरेषु स्वीयेषु कायेष्वपि जीवरूपम् ॥ ५
देवं तमुद्दिश्य ददन्तु दानान्यातिथ्यभावैः परिज्ञानकैश्च ॥
नारायणं देववरं यजध्वं दोषैर्विमुक्ता अचिराद्भविष्यथ ॥ ६
यो मामकं वाक्यमिहैव मानवो लोभाद्विमोहादपि नैव कारयेत् ॥
स शास्यतां याति सुनिर्वृतो ध्रुवं ममापि चौरो हि यथा निकृष्टः ॥ ७
आकर्ण्य वाक्यं नृपतेश्च दूताः संहृष्टभावाः सकलां च पृथ्वीम् ॥
संश्रावयन्ति स्म नृपप्रणीतमादेशभावं सकलं प्रजासु ॥ ८
विप्रादिमर्त्या अमृतं सुपुण्यमानीतमेवं भुवने च राज्ञा ॥
पिबन्तु पुण्यं परिवैष्णवाख्यं दोषैर्विहीनं परिणाममिष्टम् ॥ ९
श्रीकेशवं क्लेशहरं वरेण्यमानन्दरूपं परमार्थमेव ॥
नामामृतं दोषहरं तु राज्ञा आनीतमत्रैव पिबन्तु लोकाः ॥ १०
श्रीपद्मनाभं कमलेक्षणं च आधाररूपं जगतां महेशम् ॥
नामामृतं दोषहरं तु राज्ञा आनीतमत्रैव पिबन्तु लोकाः ॥ ११
पापापहं व्याधिविनाशरूपमानन्ददं दानवदैत्यनाशनम् ॥
नामामृतं दोषहरं तु राज्ञा आनीतमत्रैव पिबन्तु लोकाः ॥ १२
[*यज्ञाङ्गरूपं च रथाङ्गपाणिं पुण्याकरं सौख्यमनन्तरूपम् ॥
नामामृतं दोषहरं तु राज्ञा आनीतमत्रैव पिबन्तु लोकाः ] ॥ १३
विश्वाधिवासं विमलं विरामं रामाभिधानं रमणं मुरारिम् ॥
नामामृतं दोषहरं तु राज्ञा आनीतमत्रैव पिबन्तु लोकाः ॥ १४
आदित्यरूपं तमसां विनाशं चन्द्रप्रकाशं मलपङ्कजानाम् ॥
नामामृतं दोषहरं तु राज्ञा आनीतमत्रैव पिबन्तु लोकाः ॥ १५
सखङ्गपाणिं मधुसूदनाख्यं तं श्रीनिवासं सगुणं सुरेशम् ॥
नामामृतं दोषहरं तु राज्ञा आनीतमत्रैव पिबन्तु लोकाः ॥ १६
नामामृतं दोषहरं सुपुण्यमधीत्य यो माधवविष्णुभक्तः ॥
प्रभातकाले नियतो महात्मा स याति मुक्तिं न हि कारणं च ॥ १७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थे ययातिचरिते त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७०२७

---

* एतच्चिह्नान्तर्गतः पाठो घ. ट. ड. पुस्तकस्थः ।

---

१ क. ख. छ. झ. ड. °रिपैत्रिकं । घ. ट. ठ. °रिजातकैः । २ क. ख. छ. झ. जपध्वं । ङ. भजध्वं । ३ घ. ठ. ड. °मत्रैव । ४ क. ख. ङ. च. छ. झ. ढ. मनपं । ५ क. ख. ङ. च. छ. झ. ड. ढ. मानव ।

अथ चतुःसप्ततितमोऽध्यायः ।

सुकर्मोवाच—

दूतास्तु ग्रामेषु वदन्ति सर्वे देशेषु द्वीपेष्वथ पत्तनेषु ॥
लोकाः शृणुध्वं नृपतेस्तथाऽऽज्ञां सर्वप्रभावैर्हरिमर्चयन्तु ॥ १
दानैश्च यज्ञैर्बहुभिः सुकर्मभिर्धर्मादिभिर्वा यजनैर्मनोभिः ॥
ध्यायन्तु लोका मधुसूदनं तमादेशमेवं नृपतेस्तु तस्य ॥ २
एवं प्रकृष्टं सकलं सुपुण्यमाकर्णितं भूमितले सुलोकैः ॥
तदाप्रभृत्येवं समस्तमर्त्या ध्यायन्ति गायन्ति मुरारिमेकम् ॥ ३
जपन्ति तप्यन्ति यजन्ति चैव वेदप्रणीतैश्च सुसूक्तमन्त्रैः ॥
श्रोत्रैकपुण्यैरमृतोपमानैः श्रीकेशवं तद्गतमानसास्ते ॥ ४
व्रतोपवासैर्नियमैश्च दानैर्विहाय दोषान्विषयान्समस्तान् ॥
[*लक्ष्मीनिवासं जगतां निवासं लोकास्तु भक्त्या परिपूजयन्ति ॥ ५
इत्याज्ञा तस्य भूपस्य वर्तते क्षितिमण्डले । वैष्णवेन प्रभावेन जनाः] सर्वे यजन्ति ते ॥ ६
नामभिः कर्मभिर्विष्णुं यजन्ते यज्ञकोविदाः । तद्ध्यानास्तद्व्यवसिता विष्णुपूजापरायणाः ॥ ७
यावद्भूमण्डलं सर्वं यावत्तपति तिग्मगुः । तावद्धि मानवा लोकाः सर्वे भागवतास्तु ते ॥ ८
विष्णोश्चैव प्रभावेन पूजास्तोत्रैश्च नामभिः । आधिहीनाश्च ते भूमौ संजाता मानवास्तदा ॥ ९
वीतशोकाश्च पुण्याश्च सर्वे चैव तपोधनाः । संजाता वैष्णवा विप्र प्रसादात्तस्य चक्रिणः ॥ १०
आमयैश्च विहीनास्ते दोषै रोषैश्च वर्जिताः । [*सर्वैश्वर्यसमापन्नाः सर्वरोगविवर्जिताः] ॥
प्रसादात्तस्य देवस्य संजाता मानवास्तदा ॥ ११
अमरा निर्जराः सर्वे धनधान्यसमन्विताः । मर्त्या विष्णुप्रसादेन पुत्रपौत्रैरलंकृताः ॥ १२
तेषामेव महाभाग गृहद्वारेषु नित्यदा । कल्पद्रुमाः सुपुण्यास्ते सर्वकामफलप्रदाः ॥ १३
सर्वकामदुघा गावः सचिन्तामणयस्तथा । सन्ति तेषां गृहे पुण्याः सर्वकामप्रदायकाः ॥ १४
अमरा मानवा जाताः पुत्रपौत्रैरलंकृताः । सर्वदोषविहीनास्ते विष्णोश्चैव प्रसादतः ॥ १५
सर्वसौभाग्यसंपन्नाः पुण्यमङ्गलसंयुताः । सुपुण्या दानसंपन्ना ज्ञानध्यानपरायणाः ॥ १६
न दुर्भिक्षं न च व्याधिर्नाकालमरणं नृणाम् । तस्मिञ्शासति धर्मज्ञे ययातौ नृपतौ तदा ॥ १७
वैष्णवा मानवाः सर्वे विष्णुव्रतपरायणाः । तद्ध्यानास्तज्जपाः सर्वे संजाता भावतत्पराः ॥ १८
तेषां गृहाणि दिव्यानि पुण्यानि द्विजसत्तम । पताकाभिस्तु शुभ्राभिः शङ्खयुक्तानि तानि च १९

* एतच्चिह्नान्तर्गतः पाठः क.ख.घ.ङ.च.छ.झ.ट.ठ.ड.ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. °हुभिस्तपोभिर्धर्माभिलाषैर्यज° । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °व यजन्ति प्र° । ३ ङ. °न्ति तमर्चयन्ति । ज° । ४ घ. ट. ठ. ड. °म् । ध्यायन्ति गायन्ति यजन्ति मर्त्या वे° । ५ ट. °त्तपाठैः । श्रो° । ६ क. ख. घ. ङ. च. छ. ज. झ. ट. ठ. ढ. °सं तं श्रीनिवासं प° । ७ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °न्ते ज्ञानको° । ८ ड. °स्तद्गतप्राणा वि° । ९ ङ. छ. झ. ढ. °धिव्याधिविहीनास्ते सं । १० घ. ङ. छ. झ. ट. ठ. ड. ढ. °र्वे वै स्थिरयौवनाः । ११ घ. ङ. च. छ. झ. ट. ठ. ड. ढ. मर्त्या वि° । १२ ङ. छ. झ. ड. घ. °ष्णुध्यानप° । १३ घ. ट. ठ. शुद्धाभिः ।

गदाङ्कितध्वजाश्चित्रचक्राङ्कितानि नित्यं वै । पद्माङ्कितानि भास्वन्ति विमानप्रतिमानि च ॥
गृहाणि भित्तिभागेषु चित्रितानि सुचित्रकैः ॥ २०
सर्वत्र गृहद्वारेषु पुण्यस्थानेषु सर्वशः । वनानि सन्ति दिव्यानि श्रद्धालाभयुतानि च ॥ २१
तुलस्या च द्विजश्रेष्ठ युक्तानि हरिमन्दिरैः । भास्वन्ति गुणदिव्यानि गृहाणि प्राणिनां सदा २२
सर्वत्र वैष्णवो भावो मङ्गलं बहु दृश्यते । [*शङ्खशब्दाश्च भूलोके मिथः स्फोटकरै रवैः ॥
श्रूयन्ते तत्र विप्रेन्द्र दोषपापविनाशकाः] ॥ २३
शङ्खस्वस्तिकपद्मानि गृहद्वारेषु तानि च । विष्णुभक्ताभिर्नारीभिर्लिखितानि द्विजोत्तम ॥ २४
गीतरागैश्च तानैश्च मूर्छनातालसुस्वरैः । गायन्ति केशवं लोका विष्णुध्यानपरायणाः ॥ २५

हरिं मुरारिं प्रवदन्ति केचिच्छ्रीशाच्युतं माधवमेव चान्ये ।
श्रीनारसिंहं कमलेक्षणं तं गोविन्दमेकं कमलापतिं च ॥ २६
कृष्णं च रामं शरणं व्रजन्ति जपन्ति जाप्यैः परिपूजयन्ति ।
दण्डप्रणामैः प्रणमन्ति विष्णुं तद्ध्यानयुक्ताः परिवैष्णवास्ते ॥ २७

इति श्रीमहापुराणे पाद्मे वेनोपाख्याने ययातिचरिते चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७०५४

---

अथ पञ्चसप्ततितमोऽध्यायः ।

---

सुकर्मोवाच—

कृष्णं विष्णुं हरिं रामं मुकुन्दं मधुसूदनम् । नारायणं हृषीकेशं नारसिंहं तमच्युतम् ॥ १
केशवं पद्मनाभं तु वासुदेवं च वामनम् । वाराहं कमठं मत्स्यं कपिलं च सुराधिपम् ॥ २
[*विश्वेशं विश्वरूपं च ह्यनन्तमनघं शुचिम् । पुरुषं पुष्कराक्षं च श्रीधरं श्रीपतिं हरिम् ॥
श्रीदं श्रीशं श्रीनिवासं सुमोक्षं मोक्षदं प्रभुम् ] ॥ ३
इत्येवमुच्चरन्तो हि नामानि मानवा भुवि । प्रभजन्ति जनाः सर्वे बालवृद्धकुमारकाः ॥ ४
प्रणमन्ति हरिं नार्यो गृहकर्मरताः सदा । आसने शयने याने ध्याने ज्ञाने च माधवम् ॥ ५
क्रीडमानास्तथा बाला गोविन्दं प्रणमन्ति च । दिवा रात्रौ सुमधुरं ब्रुवन्ति हरिनाम च ॥ ६
विष्णूच्चारो हि सर्वत्र श्रूयते हि द्विजोत्तम । वैष्णवेन प्रभावेन मर्त्या वर्तन्ति भूतले ॥ ७
प्रासादकलशाग्रेषु देवतायतनेषु च । यथा सूर्यस्य बिम्बानि तथा चक्राणि भान्ति वै ॥ ८
कृष्णस्य दृश्यते भावः सर्वत्र जगतीतले । तेनराज्ञा कृतं विप्र पुण्यं चापि महात्मना ॥ ९
विष्णुलोकस्य समतां तथा नीतं महीतलम् । नहुषस्यापि पुत्रेण वैष्णवेन ययातिना ॥ १०
उभयोर्लोकयोर्भावमेकीभूतं महीतले । भूतलस्यापि विष्णोश्च ह्यन्तरं नैव दृश्यते ॥ ११

---

* एतच्चिह्नान्तर्गतः पाठो क. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो घ क. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ अ. °तभुजा° । २ क. °क्तिपरायणाः । प° । ३ घ. क. छ. झ. ट. ठ. ड. ढ. °न्ति पुण्यदि° । ४ ङ. छ. झ. ढ. °न्ति केशवं प्रीत्या जितं । ५ घ. क. छ. झ. ट. ठ. ड. ढ. °ण्यं शरण्यं श° । ६ घ. ङ. छ. झ. ट. ठ. ड. ढ. प्रवदन्ति ते । दि° । ७ घ. क. छ. झ. ट. ठ. ड. ढ. °वै । वैकुण्ठे दृश्यते भावं तद्भावं ज° ।

विष्णूच्चारं हि वैकुण्ठे प्रकुर्वन्ति च वैष्णवाः । भूतले तादृशोच्चारं प्रकुर्वन्ति च मानवाः ॥ १२
उभयोर्लोकयोर्भाव एको हि विप्र दृश्यते । जरारोगभयं नास्ति मृत्युहीना नरा यतः ॥ १३
दानभोगप्रभावस्तु अधिको दृश्यते भुवि । पुत्राणां च सुखं पुण्यमधिकं पौत्रजं तथा ॥ १४
स्वान्भोक्ष्यन्ति सुखेनापि मानवा भुवि सत्तमाः । विष्णोः प्रसाददानेन उपदेशेन तस्य च॥१५
सर्वव्याधिविनिर्मुक्ता मानवा वैष्णवास्तथा । स्वर्गलोकतिरस्कारः कृतो राज्ञा महीतले ॥ १६
पञ्चविंशप्रमाणेन वर्षाणां नृपसत्तमै । वेदविज्ञा नराः सर्वे ज्ञानध्यानपरायणाः ॥ १७
यज्ञदानपराः सर्वे दयाभावाश्च मानवाः । उपकाररताः सर्वे पुण्या धन्याः शुभा नराः ॥ १८
सर्वे धर्मपरा विप्र विष्णुध्यानपरायणाः । राज्ञा तेनोपदिष्टास्ते संजाता वैष्णवा भुवि ॥ १९

विष्णुरुवाच—

श्रूयतां नृपशार्दूल चरित्रं तस्य भूपतेः । सर्वधर्मपरो नित्यं विष्णुभक्तश्च नाहुषिः ॥ २०
अब्दानां चैव लक्षैकं तस्यापि सुगतं भुवि । नूतनो दृश्यते कायः पञ्चविंशाब्दको यथा ॥ २१
पञ्चविंशात्मको भाति रूपेण वयसा तदा । प्रशस्तः प्रौढिसंपन्नः प्रसादात्तस्य चक्रिणः ॥ २२
मानवा भूमिलोकस्था यमं नैवानुयान्ति ते । रागदोषविनिर्मुक्ताः कामपाशविवर्जिताः ॥ २३
सुखिता दानपुण्यैश्च सर्वधर्मपरायणाः । विस्तारं ते जनाः सर्वे संतत्याऽपि गता नृप ॥ २४
यथा दूर्वा वटाश्चैव विस्तारं यान्ति भूतले । तथा ते मानवाः सर्वे पुत्रपौत्रैः प्रविस्तृताः ॥ २५
मृत्युदोषविहीनास्ते चिरं जीवन्ति ते जनाः । स्थिरकायाश्च सुखिनो जरारोगविवर्जिताः ॥२६
पञ्चविंशाब्दिकाः सर्वे नरा दृश्यन्ति भूतले । सत्याचारपराः सर्वे विष्णुध्यानपरायणाः ॥ २७
एवं हि सर्वे मर्त्यास्ते प्रसादात्तस्य चक्रिणः । संजाता मानवाः सर्वे दानभोगपरायणाः ॥ २८
मृतो न श्रूयते लोके सर्वस्मिञ्जगतीतले । शोकं नैव प्रपश्यन्ति दोषं नैव प्रयान्ति ते ॥ २९
स्वर्गलोकस्य यद्रूपं तद्रूपं भूतलस्य च । संजातां विष्णुभक्तास्ते प्रसादात्तस्य चक्रिणः ॥ ३०
यमदूता विधिभ्रष्टा विष्णुदूतैस्तु ताडिताः । रुदमाना गताः सर्वे धर्मराजं परस्परम् ॥ ३१
तत्सर्वं कथितं दूतैश्चेष्टितं भूतले च तैः । अमृत्यु भूतलं जातं दानभोगेन भास्करे ॥ ३२
[*नहुषस्याऽऽत्मजेनापि कृतं देव ययातिना । विष्णुभक्तेन पुण्येन स्वर्गरूपं प्रदर्शितम् ॥ ३३
एवमाकर्णितं सर्वं धर्मराजेन वै तदा । ] धर्मराजस्तदा तत्र दूतेभ्यः श्रुतविस्तरः ॥
चिन्तयामास सत्यार्थं क्षणैकं नृपचेष्टितम् ॥ ३४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने ययातिचरिते पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७०८८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ ट. ड. ढ. पुस्तकस्थः ।

---

१ ङ. विष्णुध्यानं । २ घ. ट. ठ. ङ. °ते । राजमृत्युभ° । ३ झ. ट. ङ. °म । गदैर्हीना नराः सर्वे विष्णुध्या° । ४ क. ख. ङ. च. छ. झ. ढ. प्रबलः । ५ क. ख. ङ. च. छ. झ. ढ. °गद्वेष° । ६ ङ. कामायासवि° । ७ क. ख. ङ. घ. छ. झ. ड. ढ. °पुण्यैश्च । ८ क. ख. च. ङ. °था कैतवको भोगो विस्तारं याति भू° । ९ ङ. °नाश्च स्थिरकाया ह्यरोगिणः । धर्माध्यक्षाश्च । १० झ. ट. ङ. °ता मानवश्रेष्ठ प्र° । ११ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. अधिकं । १२ क. ख. ङ. घ. छ. झ. ड.ढ. सर्वार्थे ।

अथ षट्सप्ततितमोऽध्यायः ।

सुकर्मोवाच—

सौरिर्दूतैस्तथा सर्वैः सह स्वर्गं जगाम ह । द्रष्टुं तत्र सहस्राक्षं देववृन्दैः समावृतम् ॥ १
धर्मराजं समायान्तं ददर्श सुरराट् तदा । समुत्थाय त्वरायुक्तो ददावर्घमनुत्तमम् ॥
पप्रच्छाऽऽगमनं तस्य कथयस्व ममाग्रतः ॥ २
तदाकर्ण्य महद्वाक्यं देवराजेन भाषितम् । धर्मराजोऽब्रवीत्सर्वं ययातेश्चरितं महत् ॥ ३

धर्मराज उवाच—

श्रूयतां देवदेवेश यस्मादागमनं मम । कथयाम्यहमत्रापि येन चैवाऽऽगतस्तव ॥ ४
नहुषस्याऽऽत्मजेनापि वैष्णवेन महात्मना । कारिता वैष्णवाः सर्वे [*ये वसन्ति महीतले ॥ ५
वैकुण्ठस्य समं रूपं मर्त्यलोकस्य वै कृतम् । अमरा मानवा जाता ] जरारोगैर्विवर्जिताः ॥ ६
पापमेव न कुर्वन्ति असत्यं न वदन्ति ते । कामक्रोधविहीनास्ते लोभमोहविवर्जिताः ॥ ७
दानशीला महात्मानः सर्वे धर्मपरायणाः । सर्वकामैः समर्चन्ति नारायणमनामयम् ॥ ८
तेन वैष्णवधर्मेण मानवा जगतीतले । निरामया वीतभया सर्वे च स्थिरयौवनाः ॥ ९
दूर्वा वटा यथा देव विस्तारं यान्ति भूतले । तथा ते विस्तरं प्राप्ताः पुत्रपौत्रैः प्रपौत्रकैः ॥
तेषां पुत्रैश्च पौत्रैश्च वंशाद्वंशान्तरं गताः ॥ १०
एवं वैष्णवधर्मेण जरामृत्युविवर्जितः । मर्त्यलोकः कृतस्तेन नहुषस्याऽऽत्मजेन च ॥
पदभ्रष्टोऽस्मि संजातो व्यापारेण विवर्जितः ॥ ११
एवं ते सर्वमाख्यातमात्मकर्मविनाशनम् । एवं ज्ञात्वा सहस्राक्ष लोकस्यास्य हितं कुरु ॥ १२
एतत्ते सर्वमाख्यातं यथा पृष्टोऽस्मि वै त्वया । एतस्मात्कारणादिन्द्र आगतस्तव संनिधौ ॥ १३

इन्द्र उवाच—

पूर्वमेव मया दूत आगमार्थं महात्मनः । प्रेषितो धर्मराजेन्द्र दूतेनास्यापि भाषितम् ॥ १४
नाहं स्वर्गस्य चैवार्थी नाऽऽगमिष्ये दिवं पुनः । स्वर्गरूपं करिष्यामि सर्वं तद्भूमिमण्डलम् ॥ १५
इत्याचचक्षे भूपालः प्रजापाल्यं करोति च । तस्य धर्मप्रभावेन भीतस्तिष्ठामि सर्वतः ॥ १६

धर्मराज उवाच—

येन केनाप्युपायेन तमानयस्व भूपतिम् । देवराज महाभाग यदि चेच्छसि मत्प्रियम् ॥ १७
इत्याकर्ण्य वचस्तस्य धर्मस्यापि सुराधिपः । चिन्तयामास मेधावी सर्वतत्त्वेन पिप्पल ॥ १८
काममाह समाहूय गन्धर्वांश्च पुरंदरः । [† मकरन्दं रतिं देव आनिनाय महात्मनः ] ॥ १९
तथा कुरुत वै यूयं यथाऽऽगच्छति भूपतिः । यूयं गच्छन्तु भूर्लोकं मयाऽऽदिष्टा न संशयः ॥ २०
एवमुक्ता गताः सर्वे यत्र राजा स नाहुषिः । नटरूपेण ते सर्वे कामाद्याः कर्मणा द्विज ॥ २१

* एतच्चिह्नान्तर्गतः पाठः क. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ङ. झ. ढ.पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. सर्वकर्मैः । ड. सर्वधर्मैः । २ क. ख. ङ. च. छ. झ ड. ढ. वीतशोकाः । ३ क. ख. ङ. च. छ. झ. ढ. सर्वदा । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. भूपते । ५ क. ख. ङ. च. छ. झ. ड. ढ. °य धर्मं गच्छ पु° । ६ ड. नररू° । ७ ङ. कामेन तु समं ययुः । आ° । ८ ट. °द्या गायनाः प्रभुम् । आ° ।

आशीर्भिरभिनन्द्यैव ते च ऊचुः सुनाटकम् । तेषां तद्वचनं श्रुत्वा ययातिः पृथिवीपतिः ॥ २२
सभां चकार मेधावी देवरूपां सुपण्डितैः । समायातः स्वयं भूपो ज्ञानविज्ञानकोविदः ॥ २३
तेषां तु नाटकं राजा पश्यमानः स नाहुषिः । चरित्रं वामनस्यापि उत्पत्तिं विप्ररूपिणः ॥ २४
रूपेणाप्रतिमा लोके सुस्वरं गीतमुत्तमम् । गायमाना जरा राजभार्या रूपेण वै तदा ॥
तस्या गीतेन लास्येन हास्येन ललितेन च ॥ २५
मधुरालापतस्तस्य कन्दर्पस्य च मायया । मोहितस्तेन भावेन दिव्येन चरितेन च ॥ २६
बलश्चैव यथारूपं बलिर्बद्धो यथा पुरा । वामनस्य यथा रूपं चक्रे मन्मथस्तादृशम् ॥ २७
सूत्रधारः स्वयं कामो माधवः पारिपार्श्वकः । नटीवेषधरा जाता सा रतिर्हृष्टवल्लभा ॥ २८
नेपथ्याभिचराः सर्वे तस्मिन्वै नाट्यकर्मणि । मकरन्दो महामार्ज्ञः क्षोभयामास भूपतिम् ॥ २९
यथा यथा पश्यति नृत्यमुत्तमं गीतं समाकर्ण्य च भूपतिः सः ॥
तथा तथा मोहवशं प्रणीतः साधुप्रणीतेन महानुभावः ॥ ३०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थे ययातिचरिते षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७११८

---

अथ सप्तसप्ततितमोऽध्यायः ।

---

सुकर्मोवाच—

कामस्य गीतलास्येन हास्येन ललितेन च । मोहितस्तेन राजेन्द्रो नटरूपेण पिप्पल ॥ १
कृत्वा मूत्रपुरीषं च स राजा नहुषात्मजः । अकृत्वा पादयोः शौचमासन उपविष्टवान् ॥ २
तदन्तरं तु संप्राप्य संचचार जरा नृपम् । कामश्चापि नृपश्रेष्ठ इन्द्रकार्यं कृतं हि तैः ॥ ३
निवृत्ते नाटके तस्मिन्गतेषु तेषु भूपतिः । जराभिभूतो धर्मात्मा कामसंसक्तमानसः ॥ ४
मोहितः कामदेवेन विह्वलो विकलेन्द्रियः । अतीव मुग्धो धर्मात्मा विषयैश्च पराजितः ॥ ५
एकदा मृगयाशीलः संप्राप्तः कामसंयुतः । वने च क्रीडते विप्र मोहरागवशं गतः ॥ ६
क्रीडमानस्य तस्यापि नृपतेश्च महात्मनः । मृगश्चैकः समायातश्चतुःशृङ्गो ह्यनौपमः ॥ ७
सर्वाङ्गसुन्दरो विप्र हेमवर्णतनूरुहः । रत्नमौलिः सुचित्राङ्गो दर्शनीयमनोहरः ॥ ८
अभ्यधावतस वेगेन तं दृष्ट्वा चापबाणवान् । इत्याशशङ्क मेधावी कोऽपि दैत्योऽयमागतः ॥ ९
तेन राजा मृगेणापि दूरमाकर्षितस्तदा । गतः स रथवेगेन श्रमेण परिखेदितः ॥ १०
पश्यमानस्य तस्यापि मृगस्त्वन्तरधीयत । स पश्यति वनं तत्र नन्दनोपममद्भुतम् ॥ ११
चारुवृक्षसमाकीर्णं भूतपञ्चकशोभितम् । गुरुभिश्चन्दनैः पुण्यैः कदलीखण्डमण्डितैः ॥ १२

---

१ घ. ट. ठ. °न्द्यैव राजन्पश्य सुनाटकम् । ङ. °न्द्यैनं राजानं नाहुषिं तदा । तें । २ ङ. बहुश्रुताम् । ३ घ. ट. ठ. ङ. सम्भपालः स्वयं भूत्वा ज्ञा° । ४ ङ. नर्तनें । ५ घ. ङ. छ. झ ड. ढ. °पि नृत्यन्ति नटरू° । ६ क. ख. ङ. च. छ. झ. ड. ढ. °पे विन्ध्यावल्या य° । ७ ङ. °कः । नारीवे° । ८ घ. झ. ठ. ङ. °ज्ञः प्रज्ञाभावेन नृत्यति । य° । ९ क. ख. ठ. च. छ. झ. ड. ढ. जराप्रणीतेन । १० घ ठ. ट. ङ. °रूपो बभूव ह । कृ° । ११ क. ख. ङ. च. छ. झ. ड. ढ. °प्रमोहेन । १२ ङ. ढ. °डतेऽसौ हि मो° । १३ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °रो राजन्हेम° । १४ क. ख. ङ. च. छ. झ. ड. ढ. रत्नज्योतिः ।

बकुलाशोकपुंनागैर्नारीकेलैश्च तिन्दुकैः । पूगीफलैश्च खर्जूरैः कुमुदैः सप्तपर्णकैः ॥ १३
पुष्पितैः कर्णिकारैश्च नानावृक्षैः सदाफलैः । पुष्पितामोदसंयुक्तैः केतकैः पाटलैस्तथा ॥ १४
पश्यमानो महाराजो ददर्श सर उत्तमम् । पुण्योदकेन संपूर्णं विस्तीर्णं पञ्चयोजनम् ॥ १५
हंसकारण्डवाकीर्णं जलपक्षिनिनादितम् । कमलैश्चापि मुदितं श्वेतोत्पलविराजितम् ॥ १६
रक्तोत्पलैः शोभमानं हाटकोत्पलमण्डितम् । नीलोत्पलैः प्रकाशन्तं(?)कह्लारैरतिशोभितम् ॥ १७
मत्तैर्मधुकरैश्चापि सर्वत्र परिनादितम् । [ *एवं सर्वगुणोपेतं ददर्श सर उत्तमम् ॥ १८
पञ्चयोजनविस्तीर्णं दशयोजनदीर्घकम् । तडागं सर्वतोभद्रं दिव्यभावैरलङ्कृतम् ] ॥ १९
रथवेगेन संखिन्नः किंचिच्छ्रमेण पीडितः । निषसाद तटे तस्य श्रितश्छायां सुशीतलाम् ॥ २०
स्नात्वा पीत्वा जलं शीतं पद्मसौगन्ध्यवासितम् । सर्वश्रमोपशमनममृतोपममेव तत् ॥ २१
शीतच्छायाश्रितेनापि राज्ञा तेन च भूतले । गीतध्वनिं समाकर्ण्य गीयमानं यथा तथा ॥ २२
यथा स्त्री गायते दिव्या तथाऽयं श्रूयते ध्वनिः । गीतप्रियो महाराज एवं चिन्तां परां गतः २३
चिन्ताकुलस्तु धर्मात्मा यावच्चिन्तयते क्षणम् । तावन्नारी वरा काचित्पीनोन्नतपयोधरा ॥ २४
नृपतेः पश्यमानस्य गता दृष्टिपथं वने । सर्वाभरणशोभाङ्गी शीललक्षणसंपदा ॥ २५
[†तस्मिन्वने समायाता नृपतेः पुरतः स्थिता] । सा पृष्टा तेन वै राज्ञा का त्वं किंकारणाऽऽगता
वद सर्वं विशालाक्षि तच्छ्रुत्वा वचनं तु सा । नोवाच किंचिद्भूपालं लज्जमाना वरानना ॥ २७
प्रहस्यैवं गता शीघ्रं वीणावादनतत्परा । विस्मयेनापि राजेन्द्रो महता व्यावृतस्तदा ॥ २८
मया संभाषिता चापि न सा ब्रूते तथोत्तरम् । ततश्चिन्तां समापेदे ययातिः पृथिवीपतिः ॥ २९
योऽसौ मृगो यथा दृष्टश्चतुःशृङ्गसुवर्णकः । तस्मान्नारी समुद्भूता तत्सत्यं प्रतिभाति मे ॥ ३०
मायारूपमिदं सत्यं दानवानां भविष्यति । [*चिन्तयित्वा क्षणं राजा ययातिर्नहुषात्मजः] ३१
यावच्चिन्तयते राजा तावन्नारी महावने । अन्तर्धानं गता विप्र प्रहस्य नृपनन्दनम् ॥ ३२
एतस्मिन्नन्तरे गीतं सुस्वरं नृपतिः पुनः । शुश्राव परमं दिव्यं मूर्छनातालसंयुतम् ॥ ३३
जगाम सत्वरं राजा यत्र गीतध्वनिर्महान् । जलान्ते पुष्कले चैव महत्सदनमुत्तमम् ॥ ३४
तस्योपरि वरा नारी शीलरूपगुणान्विता । दिव्यलक्षणसंपन्ना दिव्याभरणभूषिता ॥ ३५
दिव्यैर्भावैः प्रभात्येका वीणादण्डकधारिणी । गायन्ती सुन्दरं गीतं तालमानलयान्वितम् ॥ ३६
तेन गीतप्रभावेन मोहयन्ती चराचरम् । देवान्मुनिगणान्सर्वान्दैत्यान्गन्धर्वकिंनरान् ॥ ३७
तां च दृष्ट्वा विशालाक्षीं रूपतेजोपशालिनीम् । संसारे नास्ति चैवान्या नारीदृशी चराचरे॥ ३८
पुरा नटो जरायुक्तो नृपते काम एव हि । संचरंश्च महाकामस्तदाऽसौ प्रकटोऽभवत् ॥ ३९
घृतं स्पृष्ट्वा यथा वह्नी रश्मिमान्संप्रजायते । तां च दृष्ट्वा तथा कामस्तत्कायात्प्रकटोऽभवत् ॥ ४०

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. च. ड. °नकीलकम् । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. वने । ३ ड. °स्य अन्तश्छा° । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. वृक्षच्छायाश्रितेनापि । ५ क. ख. ङ. च. छ. झ. ड. ढ. °ता । तामुवाच महाराजः का हि कस्य भविष्यसि । किमर्थं हि समायाता तन्मे त्वं कारणं वद । पृष्टा सती तदा तेन न किंचिदपि पिप्पल । शुभाशुभं च भूपालं ब्रूते नैव वरा° । ६ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °ता राजन्प्रह° । ७ क. ख. च. छ. झ. °ष्करेष्वेव सहस्रदलमु° । ड. °ष्करे चैव सहस्रदलमु° । ङ. ढ. °ष्करं चैव सहस्रदलमु° । ८ ञ. कायमेव ।

मन्मथाविष्टधर्मात्मा तां दृष्ट्वा चारुलोचनाम् । ईदृग्रूपा न दृष्टा मे युवती विश्वमोहिनी ॥ ४१
चिन्तयित्वा क्षणं राजा कामसंसक्तमानसः । तस्याः स विरहेणापि लुब्धोऽभून्नृपतिस्तदा ॥४२
कामाग्निना दह्यमानः कामज्वरेण पीडितः । कथं स्यान्मम चैवेयं कथं भावो भविष्यति ॥ ४३
यदीयं प्राप्यते तर्हि सफलं जीवितं भवेत् । [ *यदा मां गूहते बाला पद्मास्या पद्मलोचना ]४४
एवं विचिन्त्य धर्मात्मा ययातिः पृथिवीपतिः । तामुवाच वरारोहां का त्वं कस्यासि वा शुभे४५
पूर्वं दृष्टा तु या नारी सा दृष्टा पुनरेव च । तां च पप्रच्छ धर्मात्मा का चेयं तव पार्श्वगा ॥ ४६
सर्वं कथय कल्याणि अहं हि नहुषात्मजः । सोमवंशप्रसूतश्च सप्तद्वीपाधिपः शुभे ॥ ४७
ययातिर्नाम मे देवि ख्यातोऽहं भुवनत्रये । त्वयि संगच्छते चेतो भावमेवं प्रवाञ्छते ॥ ४८
देहि मे संगमं भद्रे कुरुष्व प्रियमेव मे । यं यं हि वाञ्छसे कामं तं तं दद्मि न संशयः ॥ ४९
दुर्जयेनापि कामेन हतोऽहं वरवर्णिनि । तस्मात्राहि सुशीलं मां प्रपन्नं शरणं तव ॥ ५०
राज्यं च सकलामुर्वीं शरीरं चापि चाऽऽत्मनः । संगमे तव दास्यामि त्रैलोक्यमिदमेव ते ॥५१
तस्य राज्ञो वचः श्रुत्वा सा स्त्री पद्मनिभानना । विशालां स्वसखीं प्राह ब्रूहि राजानमागतम् ॥
नाम चोत्पत्तिस्थानं च पितरं मातरं शुभे । ममापि भवते कामो अस्याग्रे च निवेदय ॥ ५३
तस्याश्च काङ्क्षितं ज्ञात्वा विशाला भूपतिं तदा । उवाच मधुरालापैः श्रूयतां नृपनन्दन ॥ ५४

विशालोवाच—

काम एष पुरा दग्धो देवदेवेन शंभुना । रुरोद सा रतिर्दुःखाद्भर्तृहीना हि सुस्वरम् ॥ ५५
अस्मिन्सरसि राजेन्द्र रतिर्हि न्यवसत्सदा । तस्याश्च विप्रलापं तु सुस्वरं करुणान्वितम् ॥ ५६
समाकर्ण्य ततो देवी कृपया परयाऽन्विता । संजाता राजराजेन्द्र शंकरं वाक्यमब्रवीत् ॥ ५७
जीवयस्व महादेव पुनरेव मनोभवम् । वराकीयं महाभाग भर्तृहीना हि दुःखिता ॥ ५८
कामेनाथ समायुक्तामस्मत्स्नेहात्कुरुष्व वै । तच्छ्रुत्वा च वचः प्राह जीवयामि मनोभवम् ॥ ५९
कायेनापि विहीनोऽयं पञ्चबाणो मनोभवः । भविष्यति न संदेहो माधवस्य सखा पुनः ॥ ६०
दिव्येनापि शरीरेण वर्तयिष्यति नान्यथा । महादेवप्रसादेन मीनकेतुः स जीवितः ॥ ६१
आशीर्भिरभिनन्द्यैव देव्याः कामं मनोभवम् । गच्छ काम प्रवर्तस्व नित्यं हि प्रियया सह ॥६२
तावन्मर्त्ये महातेजाः स्थितिसंहारकारकः । पुनः कामः सरः प्राप्तो यत्राऽऽस्ते दुःखिता रतिः ॥
इदं कामसरो राजन्नत्र सा संस्थिता रतिः । दग्धे तस्मिन्महाभागे मन्मथे दुःखधर्षिणि ॥ ६४
रत्याः कोपात्समुत्पन्नः पावको दारुणाकृतिः । अतीव दग्धा तेनापि सा रतिर्मोहमूर्छिता ॥ ६५
अश्रुपातं मुमोचाथ भर्तृहीना नरोत्तम । नेत्राभ्यां हि जले तस्याः पतिता अश्रुबिन्दवः ॥ ६६
तेभ्यो जातो महाशोकः सर्वसौख्यप्रणाशकः । [†क्षणात्पश्चात्समुद्भूते अश्रुभ्यो नृपसत्तम ॥ ६७
वियोगो नाम दुर्मेधास्तेभ्यो जज्ञे प्रणाशकः ] । दुःखसंतापकौ चोभौ जज्ञाते दारुणौ तदा ॥६८
मूर्छा नाम ततो जज्ञे दारुणा सुखनाशिनी । शोकाज्जज्ञे महाराज कामज्वरोऽथ विभ्रमः ॥ ६९
प्रलापो बहुलश्चैव उन्मादो मृत्युरेव च । तस्यास्तदाऽश्रुबिन्दुभ्यो जज्ञिरे विश्वनाशकाः ॥ ७०

* एतच्चिह्नान्तर्गतः पाठः छ. झ. ट. ठ. ड. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ड. पुस्तकस्थः ।

१ अ. °थाकृष्टचित्तोऽसौ तां । २ क. ख. ङ. च. छ. झ. ड. ढ. °वं दुःखसमाचारो य° । ३ ङ. छ. झ. ड. ढ. सुदीनं । ४ ड. °पि मे भावं कामं ममाग्रे । ङ. ढ. °पि भावं मे काममस्याग्रे । ५ छ. झ. ड. °त्याः कण्ठात्स° । ६ ङ. छ. झ. ढ. °पो विह्वल° ।

तस्याः पार्श्वे समुत्तस्थुः सर्वे ते दुःखकारिणः । मूर्तिमन्तो महाराज सद्भावगुणसंयुताः ॥ ७१
काम एष समायातः केनाप्युक्तं तदा नृप । महानन्देन संयुक्ता दृष्ट्वा कामं समागतम् ॥ ७२
नेत्राभ्यामश्रुपूर्णाभ्यां पतिता अश्रुबिन्दवः । अप्सु मध्ये महाराज चापल्याज्जज्ञिरे प्रजाः ॥ ७३
प्रीतिर्नाम तदा जज्ञे ख्यातिर्लज्जा नरोत्तम । तेभ्यो जज्ञे महानन्दः शान्तिश्चान्या नृपोत्तम ॥ ७४
जज्ञाते द्वे शुभे कन्ये सुखसौभाग्यदायके । लीला क्रीडा मनोभावसंभोगस्तु महानृप ॥ ७५
रत्यास्तु वामनेत्राद्वै ह्यानन्दादश्रुबिन्दवः । जलान्ते पतिता राजंस्तस्माज्जज्ञे सुपङ्कजम् ॥ ७६
तस्मात्सुपङ्कजाज्जाता चेयं नारी वरानना । अश्रुबिन्दुमती नाम रतिपुत्री नरोत्तम ॥ ७७
अस्याः प्रीत्या सुसौहार्दादहं वर्ते हि नित्यदा । सखिभावस्वभावेन संहृष्टा सर्वदा शुभा ॥ ७८
विशाला नाम मे ख्यातं वरुणस्य सुता नृप । अस्याः स्वान्ते प्रवर्तेऽहं स्नेहात्स्निग्धाऽस्मि सर्वदा
एतत्ते सर्वमाख्यातमस्याश्चाऽऽत्मन एव च । वरार्थमेषा राजेन्द्र तपश्चरति शोभना ॥ ८०

ययातिरुवाच—

सर्वमेव त्वयाऽऽख्यातं मया ज्ञातं शुभे शृणु । मामेवं हि भजत्वेषा रतिपुत्री वरानना ॥ ८१
यमेषा वाञ्छते बाला तं च कामं ददाम्यहम् । तथा कुरुष्व कल्याणि यथा मे वशगा भवेत् ८२

विशालोवाच—

अस्या व्रतं प्रवक्ष्यामि तदाकर्णय भूपते । पुरुषं यौवनोपेतं सर्वज्ञं वीरलक्षणम् ॥ ८३
देवराजसमं राजन्धर्माचारसमन्वितम् । तेजस्विनं महाप्राज्ञं दातारं यज्वनां वरम् ॥ ८४
गुणानां धर्मभावस्य ज्ञातारं पुण्यभाजनम् । [*लोक इन्द्रसमं राजन्यज्ञवर्त्मनि तत्परम् ] ॥
सर्वैश्वर्यसमोपेतं नारायणपरायणम् ॥ ८५
देवानां सुप्रियं नित्यं ब्राह्मणानामतिप्रियम् । ब्रह्मण्यं वेदतत्त्वज्ञं त्रैलोक्ये ख्यातविक्रमम् ॥ ८६
एवंगुणैः समोपेतं त्रैलोक्ये च प्रपूजितम् । सुमतिं सुप्रियं कान्तं वाञ्छत्येषा नृपोत्तम ॥ ८७

ययातिरुवाच—

एभिर्गुणैः समोपेतं विद्धि मामिह चाऽऽगतम् । अस्या अनुरूपो भर्ताऽहं सृष्टो धात्रा न संशयः ८८

विशालोवाच—

भवन्तं पुण्यसंनद्धं जाने राजञ्जगत्त्रये । पूर्वं तु ये गुणाः सर्वे मयोक्ताः सन्ति ते त्वयि ॥ ८९
एकेनापि च दोषेण त्वामेषा हि न मन्यते । एष मे संशयो जातो भवान्विष्णुसमो नृपः ॥ ९०

ययातिरुवाच—

समाचक्ष्व महादोषं येनैषा मां न मन्यते । तत्त्वेन चारुसर्वाङ्गि प्रसादसुमुखी भव ॥ ९१

विशालोवाच—

आत्मदोषं न जानासि कस्मात्त्वं जगतीपते । जरया व्याप्तकायोऽसि कामेनापि न पश्यसे ॥ ९२
एवं श्रुत्वा महद्वाक्यमप्रियं जगतीपतिः । दुःखेन महताऽऽविष्टस्तामुवाच पुनर्नृपः ॥ ९३

---

* एतच्चिह्नान्तर्गतः पाठो घ. ट. ठ. ड. पुस्तकस्थः ।

---

१ क. ख. ङ. च. झ. ढ. सर्वतापाङ्गधारि॰ । छ. सर्वे ते चाङ्गधारि॰ । ड. सर्वतो वेगधारि॰ । २ घ. ट. ठ. महालोके । ड. महामोहः । ३ क. ख. घ. ङ. च. छ. ज. झ. ट. ठ. ड. ढ. पुण्ये । ४ क. ख. घ. ङ. च. छ. ज. झ. ट. ठ. ड. ढ. ॰खसंभोगदा॰ । ५ ङ. छ. झ. ढ. सर्वभावस्य । ६ ङ. छ. झ. ढ. ॰णमिवापरम् । ७ क. ख. ङ. च. ढ. ॰ष्णुमयो नृ॰ । ८ क. ख. ङ. च. छ. झ. ट. ठ. ड. ढ. ॰सि अनेनापि न मन्यते । ए॰

जरादोषो न मे भद्रे संसर्गात्कस्यचित्कदा । समुद्भूतो ममाङ्गे वै तं न जाने जरागमम् ॥ ९४
यं यं हि वाञ्छते बाला त्रैलोक्ये दुर्लभं शुभे । तमस्यै दातुकामोऽहं व्रियतां वर उत्तमः ॥ ९५

विशालोवाच—

जराहीनो यदा स्यास्त्वं तदा ते सुप्रिया भवेत् । [*एतद्विनिश्चयं राजन्सत्यं सत्यं वदाम्यहम् ९६
श्रुतिरेवं प्रजेद्राजन्] पुत्रे भ्रातरि भृत्यके । जरा संक्राम्यते यस्य तस्याङ्गे परिसंचरेत् ॥ ९७
तारुण्यं तस्य वै गृह्य तस्मै दत्त्वा जरां पुनः । उभयोः प्रीतिसंवादः सुरुच्या जायते शुभः ९८
यथाऽऽत्मदानपुण्यस्य कृपया यो ददाति च । फलं राजन्स्थिरं तस्य जायते नात्र संशयः ९९
दुःखैश्चोपार्जितं पुण्यमन्यस्मै हि प्रदीयते । सुपुण्यं तद्भवेत्तस्य पुण्यस्य फलमश्नुते ॥ १००
पुत्राय दीयतां राजंस्तस्मात्तारुण्यमेव च । मगृह्यैव समायुक्तः सुन्दरत्वेन भूपते ॥ १०१
यथा त्वामिच्छते भोक्तुं तथा त्वं कुरु भूपते । एवमाभाष्य तं भूपं विशाला विरराम ह ॥ १०२

वासुदेव उवाच—

एवमाकर्ण्य राजेन्द्रो विशालावचनं तदा । एवमस्तु महाभागे करिष्ये वचनं तव ॥ १०३
कामासक्तः स मूढस्तु ययातिः पृथिवीपतिः । गृहं गत्वा समाहूय सुतान्वाक्यमुवाच ह ॥ १०४
तुरुं पुरुं कुरुं राजा यदुं च पितृवत्सलम् । कुरुध्वं पुत्रकाः सौख्यं यूयं हि मम शासनात् १०५

पुत्रा ऊचुः—

पितृवाक्यं प्रकर्तव्यं पुत्रैश्चापि शुभाशुभम् । उच्यतां तात तच्छीघ्रं कृतं विद्धि न संशयः १०६
एवमाकर्ण्य तद्वाक्यं पुत्राणां पृथिवीपतिः । आचचक्षे पुनस्तेषु हर्षेणाऽऽकुलमानसः ॥ १०७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थे ययातिचरिते सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७२२५

---

अथाष्टसप्ततितमोऽध्यायः ।

---

ययातिरुवाच—

एकोऽपि(केन)गृह्यतां पुत्रा जरा मे दुःखदायिनी । धीरो भूत्वा ततश्चैव तारुण्यं मम दीयताम् १
स्वकीयं हि महाभागाः सुरूपमतुलं ततः । संतप्तं मानसं मेऽद्य स्त्रियाऽऽसक्तं सुचञ्चलम् ॥ २
भाजनस्था यथाऽपश्च आवर्तयति पावकः । तथा मे मानसं पुत्राः कामानलेन चालितम् ॥ ३
एको गृह्णातु मे पुत्रा जरां दुःखप्रदायिनीम् । स्वीयं ददातु तारुण्यं यथाकामं चराम्यहम् ॥ ४
जरायाश्चोपग्रहणं करिष्यति सुतोत्तमः । स भुनक्ति च मे राज्यं धनुः संधारयिष्यति ॥ ५
तस्य सौख्यं सुसंपत्तिर्धनं धान्यं भविष्यति । [†विपुला सन्ततिस्तस्य यशःकीर्तिर्भविष्यति]॥६

पुत्रा ऊचुः—

भवान्धर्मपरो राजन्प्रजाः सत्येन पालकः । कस्मात्ते हीदृशो भावो जातः प्रकृतिचालनः ॥ ७

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. छ. झ. पुस्तकस्थः ।

---

१ छ. °संबन्धं सु° । २ ङ. क. ख. ङ. च. छ. झ. ड. समागच्छ । ङ. समभुङ्क्ष्व । ३ घ. ट. ठ. पुरुमोवाच । ४ ङ. भुवं ।

ययातिरुवाच—

आगता नर्तकाः पूर्वं पुरे मे नाट्यवर्तनाः । तेभ्यो मे कामसंदोहः संजातो मोह ईदृशः ॥ ८
जरया व्याहृतः कायो मम संक्लिष्टमानसम् । संबभूव सुतश्रेष्ठाः कामेन च समाकुलम् ॥ ९
काचिद्दृष्टा मया नारी दिव्यरूपा वरानना । मया संभाषिता पुत्राः किंचिन्नोवाच मानिनी १०
विशाला नाम तस्याश्च सखी चारुविलक्षणा । सा मामाह शुभं वाक्यं सर्वसौख्यप्रदायकम् ११
जराहीनो यदा स्यास्त्वं तदा ते सुप्रियं भवेत् । एवं मम कृते वाक्यं तयोक्तं हि शिवागमम् ॥१२
मया जरापनोदार्थं त्वदग्रे समुदाहृतम् । एवं ज्ञात्वा प्रकर्तव्यं यत्सुखं हि सुपुत्रकाः ॥ १३

तुरुरुवाच—

शरीरं प्राप्यते पुत्रैः पितुर्मातुः प्रसादतः । धर्मश्च क्रियते राजञ्शरीरेण विपश्चिता ॥ १४
पित्रोः शुश्रूषणं कार्यं पुत्रैश्चापि विशेषतः । न च यौवनदानस्य कालोऽयं मे नराधिप ॥ १५
प्रथमे वयसि भोक्तव्यं [*विषयं मानवैर्नृप । इदानीं तत्र कालोऽयं वर्तते तव सांप्रतम् ॥ १६
जरां तां च प्रदत्त्वा वै पुत्रे तात मन्नृहशम् । पश्चात्सुखं प्रभोक्तव्यं ]न तु स्यात्तव जीवितम् ॥१७
तस्माद्वाक्यं महाराज करिष्ये नैव ते ह्यहम् । एवमाभाष्य तु नृपं तुरुर्ज्येष्ठः सुतस्तदा ॥ १८
तुरोर्वाक्यं ततः श्रुत्वा क्रुद्धो राजाऽभ्यभाषत । तुरुं शशाप धर्मात्मा रोषेणारुणलोचनः ॥ १९
अपध्वस्तस्त्वया देशो ममैवं पापचेतन । तस्मात्पापी भवस्व त्वं सर्वधर्मबहिष्कृतः ॥ २०
[2]शिवशास्त्रविहीनश्च वेदैर्वेदाङ्गवर्जितः । सर्वाचारविहीनस्त्वं भविष्यसि न संशयः ॥ २१
ब्रह्मघ्नस्त्वं देवदुष्टः सुरापः सत्यवर्जितः । चण्डकर्मप्रकर्ता त्वं भविष्यसि नराधमः ॥ २२
सुरालीनक्षुधः पापी गोघ्नश्चैव भविष्य[3]सि । दुष्कर्मा मुक्तकक्षश्च ब्रह्मद्वेष्टाऽशिवाकृतिः ॥ २३
परदाराभिगामी त्वं महादुष्टश्च लम्पटः । सर्वभक्षश्च दुर्मेधाः सदा त्वं च भविष्यसि ॥ २४
सगोत्रां रमसे नारीं सर्वधर्मप्रणाशकः । पुण्यज्ञानविहीनात्मा कुष्ठवांश्च भविष्यसि ॥ २५
तव पुत्राश्च पौत्राश्च ईदृशाश्च न संशयः । भविष्यन्ति ह्यपुण्याश्च मच्छापकलुषीकृताः ॥ २६
एवं तुरुं स शप्त्वा वै यदुं पुत्रमथाब्रवीत् । जरां वै धारयस्वेह भुङ्क्ष्व राज्यमकण्टकम् ॥ २७
[ † बद्धाञ्जलिपुटो भूत्वा तदा राजानमब्रवीत् ] ॥ २८

यदुरुवाच—

[*जराभारं न शक्नोमि वोढुं तात कृपां कुरु । शीतमध्वा कदन्नं च वयोतीताश्च योषितः ॥
मनसः प्रातिकूल्यं च जरायाः पञ्च हेतवः ] ॥ २९
[5]जराभावं न शक्नोमि वयसि प्रथमे नृप । कः समर्थो हि वै धर्तुं क्षम तात ममाधुना ॥ ३०
अथ क्रुद्धो महाराजो यदुं चापि शशाप ह । राज्यहीनो हि ते वंशः कदाचिद्वै[6] भविष्यति ॥ ३१
काले त्वं तेजसा हीनः क्षत्रधर्मविवर्जितः । भविष्यसि न संदेहः[7] संक्रोशनपरः स्वयम् ॥ ३२

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

---

१ क. ख. च. °तः । चिरायुस्त्ववि° । ङ. ढ. °तः । शिखया त्वंवि° । २ छ. झ. शिरसा त्वं त्रि° । ३ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °दशाख्यविव° । ४ ट. °सि । दुःखकर्माऽप्यदत्तश्च ब्रह्मद्वेष्टा शिवाहतिः । ङ. झ. ढ. °सि । दुष्कर्मा मुक्तकच्छश्च ब्रह्मद्वेष्टा निराकृतिः । ५ ङ. च. छ. झ. ढ. जरादुःखं । ६ क. ख. घ. ङ. च. छ. झ. ए. ठ. ड. °ति । वंशस्ते-जःसमाहि° । ७ क. ख. ङ. च. छ. झ. ढ. °देहो मच्छासनपराङ्मुखः । य° ।

यदुरुवाच—

निर्दोषोऽहं महाराज कस्माच्छप्तस्त्वयाऽधुना । दयां कुरु सुदीनस्य प्रसादसुमुखो भव ॥ ३३

ययातिरुवाच—

महादेवः कुले ते वै स्वांशेनापि हि पुत्रक । करिष्यति विसृष्टिं च तदा पूतं कुलं तव ॥ ३४

यदुरुवाच—

शप्तः पुत्रो महाराज विनिर्दोषः पितस्त्वया । अनुग्रहो दीयतां मे यदि वै वर्तते दया ॥ ३५

ययातिरुवाच—

यो भवेच्छ्रेष्ठपुत्रश्च पितुर्दुःखाभिहारकः । राज्यभोगं स वै भुङ्क्ते भारवोढा भवेत्स हि ॥ ३६
त्वया धर्मं न प्रवृत्तं अभाष्योऽसि न संशयः । भवता नाशिताऽऽज्ञा मे मया दण्डेन पातितः ॥ ३७
तस्मादनुग्रहो नास्ति यथेष्टं तत्तथा कुरु ॥

यदुरुवाच—

यस्मान्मे नाशितं राज्यं वंशश्चैव त्वया नृप । तस्माद्दुष्टो भविष्यामि तव वंशपतिर्नृप ॥ ३८
तव वंशे भवितारो नानाभेदा नृपास्तु ये । तेषां ग्रामांश्च देशांश्च श्रियं रत्नानि यानि वै ॥ ३९
भोक्ष्यन्ति च न संदेहो अतिचण्डा महाबलाः । मम वंशसमुद्भूतास्तुरुष्का म्लेच्छरूपिणः ॥ ४०
त्वया ये नाशिताः सर्वे शप्ताः शापैश्च दारुणैः । एवमाभाष्य राजानं यदुः क्रुद्धो नृपं तदा ॥ ४१
अथ क्रुद्धो महाराजः पुनश्चैनं शशापह । मत्प्रजानाशकाः सर्वे वंशजास्ते च वै शृणु ॥ ४२
यावच्चन्द्रश्च सूर्यश्च पृथ्वी नक्षत्रतारकाः । तावत्सर्वे प्रपच्यन्ते नरके चैव रौरवे ॥ ४३
कुरुं दृष्ट्वा ततो बालं क्रीडमानं सुखंकरम् । शर्मिष्ठातनयं राजा नायाचत स्तनंधयम् ॥ ४४
शिशुं ज्ञात्वा परित्यक्तः कुरुस्तेनैव वै तदा । शर्मिष्ठायाः परं पुत्रं पुरुं च जगतीश्वरः ॥ ४५
तमाह च समाहूय जरा मे गृह्यतां सुत । भुङ्क्ष्व राज्यं मयादत्तं सुपुण्यं हतकण्टकम् ॥ ४६

पुरुरुवाच—

राज्यं दैवेन भोक्तव्यं पित्रा भुक्तं तथा तव । तवाऽऽदेशं करिष्यामि जरा मे दीयतां नृप ॥ ४७
तारुण्येन ममाद्यैव भूत्वा सुन्दररूपधृक् । भुङ्क्ष्व भोगान्महाभाग विषयासक्तचेतसा ॥ ४८
यावदिच्छा महाभाग विहरस्व तया सह । पुरुमाह ततो राजा सुप्रसन्नो महामनाः ॥ ४९
मम याच्ञा त्वया वत्स न कृता विफला यतः । तस्माद्वरं प्रदास्यामि तुभ्यं वत्स महाभुज ॥ ५०
यस्माज्जरा गृहीता मे दत्तं तारुण्यकं स्वकम् । तेन राज्यं प्रभुङ्क्ष्व त्वं मया दत्तं महामते ॥ ५१
ततः कृते विनिमये वयसोस्तातपुत्रयोः । तत्क्षणाद्वृद्धभावश्च पुरोरङ्गे प्रदृश्यते ॥ ५२
नूतनत्वं गतो राजा यथा षोडशवार्षिकः । रूपेण महता युक्तो द्वितीय इव मन्मथः ॥ ५३

---

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. °या सर्वं प्रकर्तव्यं भव्याभव्यं न । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. महादण्डेन घातितः । ३ ङ. छ. ढ. °वन्म्लेच्छाः प्रपच्यन्ते कुम्भीपाके च रौ° । ४ ट. पुरुं । ५ क. ख. घ. ङ. च. झ. ठ. ढ. सुलक्षणम् । ६ घ. ठ. °व । सदाऽऽदे° । ७ घ. ट. ठ. °गान्सकामांश्च वि° । ८ क. ख. घ. ङ. च. छ. झ. ठ. ढ. °वज्जीवाम्यहं तात तावज्जरां धराम्यहम् । एवं श्रुत्वा ततो राजा प्रत्युवाच महायशाः । यस्माद्वत्स ममाऽऽज्ञा वै कृता विफला त्वया । तस्माद्वरं प्रदास्यामि बहुसौख्यबलप्रदम् । एवमुक्तस्तु तेनापि पुरू राज्ञा महीपते । तारुण्यं दत्तवांस्तं जग्राहास्य जरां नृप । तत्क्ष° ।

धनू राज्यं च च्छत्रं चं अश्वं चान्यद्धनं गजम् । कोशं [2]वेशं बलं सर्वं चामैर[3]व्यजने तथा ॥
ददौ तस्मै महाराजः पुरोश्चैव महात्मनः ॥ ५४
कामासक्तश्च धर्मात्मा तां नारीमनुचिन्तयन् । स्ववृत्तं नैव सस्मार कामात्मा नहुषात्मजः ॥
अश्रुबिन्दुमती यत्र जगाम लघुविक्रमः ॥ ५५
तां च दृष्ट्वा विशालाक्षीं चारु[5]पीनपयोधराम् । विशालां च महाराजः कन्द[6]र्पोद्घूर्णमानसः ॥ ५६

राजोवाच—

उवाच चाऽऽगतो भद्रे विशाले चारुलोचने । जरां त्यक्त्वा महाभागे दोषरूपां महाबलाम् ॥
तारुण्येन समायुक्तः किमन्यत्करवाण्यहम् ॥ ५७
[*तरुणो भूत्वा समायातो भजत्वेषा ममाधुना । यं यं हि वाञ्छते चैषा तं तं दद्मि न संशयः॥

विशालोवाच—

यदा भवान्समायातो जरां दुष्टां विहाय च । दोषेणैकेन लिप्तोऽसि भवन्तं नैव मन्यते ॥ ५९

राजोवाच—

मम दोषं वदस्व त्वं यदि जानासि निश्चितम् । तं तु दोषं त्यजे तन्वि गुणरूपं न संशयः]॥ ६०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने पितृतीर्थेऽष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७२८५

---

अथोनाशीतितमोऽध्यायः ।

---

विशालोवाच—

शर्मिष्ठा देवयानी च यस्य भार्ये सुलोचने । [†सौभाग्यं तत्र वै दृष्टमन्यथा नास्ति भूतले ] ॥
तत्कथं त्वं महाभाग अस्याः कार्यवशो भवेः ॥ १
[*सापत्नकेन भावेन भवान्भर्ता प्रतिष्ठितः । ससर्पोऽसि महाराज भूतले चन्दनं यथा ॥ २
सर्पैश्च वेष्टितं राजन्महाचन्दनमेव हि । तथा त्वं वेष्टितः सर्पैः सपत्नीनामसंज्ञकैः ॥ ३
वरमग्निप्रवेशं च शिखरात्पतनं वरम् । रूपतेजःसमायुक्तं सपत्नीसहितं प्रियम् ] ॥ ४
न वरं तादृशं कान्तं सपत्नीविषसंयुतम् । इयं न मन्यते कान्तं भवन्तं गुणसागरम् ॥ ५

ययातिरुवाच—

देवयान्या न मे कार्यं तथा शर्मिष्ठया शुभे । इत्यर्थेऽहं स्पृशे कायं सत्यधर्मसमन्वितम् ॥ ६

अश्रुबिन्दुमत्युवाच—

अहं राज्यस्य भोक्त्री च तव कायस्य भूपते । यद्यद्ददाम्यहं कार्यं तत्तत्कार्यं त्वया ध्रुवम् ॥ ७

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. पुस्तकस्थः ।

---

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. च व्यजनं चाऽऽसनं । २ क. ख. ङ. च. झ. देशं । छ. दण्डं । ३ क. ख. ङ. च. छ. झ. ट. ठ. °मरं स्यन्दनं त° । ४ क. ख. घ. च. छ. झ. ट. ठ. °न् । तत्सरः सागरोत्प्रेक्ष्यं का° । ५ क. ख. च. °रुरूपमनोहराम् । ६ ट. °न्दर्पाकृष्टमा° । ७ घ. ट. च. हृष्टो । ८ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. °म् । तस्मान्न म° ।

इत्यर्थे प्रत्ययं देहि मम वै स्वकरं नृप । बहुधर्मसमोपेतं पुण्यलक्षणसंयुतम् ॥ ८

ययातिरुवाच—

अन्यां भार्यां न विन्दामि त्वां विना नृपनन्दिनि । राज्यं च सकलामुर्वीं मम कायं वरानने ॥९
मत्कोषं भुङ्क्ष्व चार्वङ्गि मया दत्तो वरस्तव । यं यं मे भाषसे भद्रे तं तं कामं करोम्यहम् ॥१०

अश्रुबिन्दुमत्युवाच—

अनेनापि महाराज तव भार्या भवाम्यहम् । एवमुक्तः स राजेन्द्रो हर्षव्याकुललोचनः ॥
गान्धर्वेण विवाहेन ययातिः पृथिवीपतिः ॥ ११
उपयेमे शुभां पुण्यां मन्मथस्याऽऽत्मजां नृपः । तया सार्धं महात्मा वै स रेमे द्विजपुंगव ॥ १२
सागरस्य च तीरेषु वनेषूपवनेषु च । पर्वतेषु च रम्येषु सरित्सु च तया सह ॥
रमते राजराजेन्द्रस्तारुण्येन महीपतिः ॥ १३
एवं विंशत्सहस्राणि गतानि निरतस्य च । भूपस्य तस्य राजेन्द्र ययातेस्तु महात्मनः ॥ १४

विष्णुरुवाच—

एवं तया महाराजो ययातिर्मोहितस्तदा । कंदर्पस्य प्रयोगेण इन्द्रस्यार्थे महामना: ॥ १५

सुकर्मोवाच—

एवं पिप्पल मुग्धोऽसौ ययातिः पृथिवीपतिः । तस्या मोहेन कामेन रतेन ललितेन च ॥
न जानाति दिनं रात्रिं मुग्धः कामस्य कन्यया ॥ १६
एकदा मोहितं भूपं ययातिं कामनन्दिनी । उवाच प्रणतं नम्रं वशगं चारुलोचना ॥ १७

अश्रुबिन्दुमत्युवाच—

संजातं दोहदं कान्त तन्मे कुरु मनोरथम् । अश्वमेधं मखश्रेष्ठं यजस्व पृथिवीपते ॥ १८

राजोवाच—

एवमस्तु महाभागे करोमि तव सुप्रियम् । समाहूय सुतं पूरुं राजभोगे विनिःस्पृहम् ॥ १९
स आहूतः समायातो भक्त्या नमितकंधरः । बद्धाञ्जलिपुटो भूत्वा प्रणाममकरोत्तदा ॥ २०
तस्याश्च पादौ सुश्रोण्या ननाम भक्तिपूर्वकम् । आदेशं(शो) दीयतां राजन्नाहूतोऽहं समागतः ॥
किं करोमि महाप्राज्ञ दासोऽहं तव सुव्रत ॥ २१

राजोवाच—

अश्वमेधस्य यज्ञस्य संभारं कुरु पुत्रक । समाहूय द्विजान्पुण्यानृत्विजो भूमिपांस्तथा ॥ २२
एवमुक्तो महातेजाः पुरुः परमधार्मिकः । सर्वं चकार संपूर्णं यथोक्तं तु महात्मना ॥ २३
तया सार्धं स यज्ञाय दीक्षितः कामकन्यया । अश्वमेधे महायज्ञे दत्त्वा दानान्यनेकशः ॥ २४
ब्राह्मणेभ्यो महाराजो भूरिदानमनन्तकम् । दीनेषु च विशेषेण ययातिर्हृष्टमानसः ॥ २५

---

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. °तं चारुल° । २ क. ख. ङ. च. छ. झ. ढ. वरवर्णिनि । ३ ङ. झ. ढ. दत्तः कर° । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. °वमाकर्ण्य रा° । ५ घ. ट. ठ. वै रेमे स नृपनन्दनः । सा° । ६ छ. °तिः । पर्वार्वि° । ७ घ. ङ. छ. झ. ट. ठ. ढ प्रपञ्चेन । ८ घ. ङ. छ. झ. ट. ठ. ढ. °मते । सु° । ९ क. ख. घ. ङ. च. छ. ट. ठ. ढ. श्रेष्ठं । १० घ. ट. ठ. °मिपान्नृप । ए° । ११ ठ. ढ. भूमिदा° । १२ क. ख. घ. ङ. च. छ. ट. ठ. ढ. °तिः पृथिवीपतिः । य° ।

यज्ञान्ते च महाराजस्तामुवाच वराननाम् । अन्यच्च सुप्रियं बाले किं करोमि वदस्व मे ॥
तत्सर्वं देवि कर्ताऽस्मि यथासाध्यं वरानने ॥ २६

सुकर्मोवाच—

इत्युक्ता तेन सा राजा भूपालं प्रत्युवाच ह । [*जातं मे दोहदं राजंस्तत्कुरुष्व ममानघ] ॥२७
इन्द्रलोकं ब्रह्मलोकं शिवलोकं तथैव च । विष्णुलोकं महाराज द्रष्टुमिच्छामि सुप्रिय ॥ २८
[† दर्शयस्व महाभाग यदहं सुप्रिया तव ] । एवमुक्तस्तया राजा तामुवाच स सुप्रियाम् ॥ २९
साधु साधु महाभागे पुण्येनैवं प्रभाषसे । स्त्रीस्वभावाच्च चापल्यात्कौतुकाच्च वरानने ॥ ३०
यत्त्वयोक्तं महाभागे तदसाध्यं विभाति मे । तत्साध्यं पुण्यदानेन यज्ञेन तपसांऽपि च ॥ ३१
अन्यथा न भवेत्साध्यं यत्त्वयोक्तं वरानने । [*असाध्यं तु भवत्या वै भाषितं पुण्यमिश्रितम् ] ३२
मर्त्यलोकाच्छरीरेण अनेनापि च मानवः । श्रुतो दृष्टो न मेऽद्यापि गतः स्वर्गं सुपुण्यकृत् ॥ ३३
ततोऽसाध्यं वरारोहे यत्त्वया भाषितं मम । अन्यदेव करिष्यामि प्रियं ते तद्वद प्रिये ॥ ३४

देव्युवाच—

अन्यैश्च मानुषै राजन्नसाध्यं स्यान्न संशयः । त्वयि साध्यं महाराज सत्यं सत्यं वदाम्यहम् ३५
तपसा यशसा वीर्यैर्ज्ञानैर्दानैर्मखैर्नृप । भवादृशोऽन्यो नैवास्ति लोकेऽस्मिन्नृप मानवः ॥ ३६
क्षात्रं बलं सुतेजश्च त्वयि सर्वं प्रतिष्ठितम् । तस्मात्त्वया प्रकर्तव्यं मत्प्रियं नहुषात्मज ॥ ३७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने पितृतीर्थकथने ययातिचरित ऊनाशीतितमोऽध्यायः ॥ ७९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७३२२

---

## अथाशीतितमोऽध्यायः ।

---

पिप्पल उवाच—

कामकन्यां यदा राजा उपयेमे द्विजोत्तम । किं चक्राते तदा ते द्वे पूर्वभार्ये सुपुण्यके ॥ १
देवयानी महाभागा शर्मिष्ठा वार्षपर्वणी । तयोश्चरित्रं यत्सर्वं कथयस्व ममाग्रतः ॥ २

सुकर्मोवाच—

यदाऽऽनीता कामकन्या स्वगृहं तेन भूभुजा । अत्यर्थं स्पर्धते सा तु देवयानी तेरस्विनी ॥ ३
तस्यार्थे तु सुतौ शप्तौ क्रोधेनाऽऽकुलितात्मना । शर्मिष्ठां च समाहूयं शब्दं चक्रे यशस्विनी ॥ ४
रूपेण तेजसा दानैः सत्यपुण्यव्रतैस्तदा । [† शर्मिष्ठा देवयानी ते स्पर्धेते तु तया सह ॥ ५
दुष्टभावं तयोश्चापि सा ज्ञात्वा कामजा तदा । राज्ञे सर्वं तया विप्र कथितं तत्क्षणादिह ] ॥ ६
यदुं पुत्रं समाहूय नृपो वाक्यमथाब्रवीत् । मात्रोस्त्वमुभयोस्तात शिरश्छिन्धि सुपुत्रक ॥
[*सुप्रियं कुरु मे वत्स यदि श्रेयो हि मन्यसे ॥ ७

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. च. छ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ङ. छ. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो घ. ट. ठ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः ख. ढ. पुस्तकस्थः ।

---

१ ख. ङ. च. छ. ट. ढ. साध्यासाध्यं । २ क. ङ. च. छ. झ. ढ. मनस्विनी । ३ ख. घ. ङ. च. छ. ट. ठ. ढ. °लितेक्षणा । श° । ४ ख. ङ. च. छ. ढ. °य सख्यं चक्रे मनस्वि° ।

एवमाकर्ण्य तस्यापि पितुर्वाक्यं यदुस्तदा ] । प्रत्युवाच नृपश्रेष्ठं पितरं प्रति निग्रही ॥ ८
न हन्तव्ये तु मे तात मातरौ दोषवर्जिते । मातृघाते महान्दोषः कथितो वेदपण्डितैः ॥
तस्माद्धातं महाराज एतयोर्न करोम्यहम् ॥ ९
दोषाणां तु सहस्रेण युक्ता माता यदा भवेत् । भगिनी चापि राजेन्द्र दुहिता च तथाऽऽत्मनः ॥
पुत्रैश्च भ्रातृभिश्चैव नैव वध्या भवेत्कदा । एवं ज्ञात्वा महाराज मातरौ नैव घातये ॥ ११
यदोर्वाक्यं तथा श्रुत्वा स च क्रुद्धोऽभ्यभाषत । [*शशाप तं सुतं पश्चाद्ययातिः पृथिवीपतिः]॥१२
यत्त्वयाऽवमतोऽहं वै तस्मात्पापमवाप्स्यसि । मातुरंशं भजस्व त्वं मच्छापकलुषीकृतः ॥ १३
एवं शप्त्वा यदुं पुत्रं ययातिः पृथिवीपतिः । पुत्रं शप्त्वा महाराजस्तया सार्धं महायशाः ॥
रमते सुखभोगेन विष्णुध्यानपरायणः ॥ १४
अश्रुबिन्दुमती सा च तेन सार्धं सुलोचना । बुभुजे चारुसर्वाङ्गी दिव्यान्भोगान्मनोनुगान् ॥
एवं कालो गतस्तस्य ययातेः सुमहात्मनः ॥ १५
अक्षया निर्जराः सर्वा अमराश्च प्रजास्तदा । [ †सर्वे लोका महाभाग विष्णुध्यानपरायणाः] १६
तपसा सत्यभावेन विष्णोर्ध्यानेन पिप्पल । सर्वे लोका महाभाग सुखिनः साधुसेवकाः ॥ १७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने पितृतीर्थे ययातिचरितेऽशीतितमोऽध्यायः ॥ ८० ॥

आदितः श्लोकानां समष्ट्यङ्काः—७३३९

---

अथैकाशीतितमोऽध्यायः ।

---

सुकर्मोवाच—

अथेन्द्रोऽसौ महाप्राज्ञः सदा भीतो महात्मनः । ययातेर्विक्रमं दृष्ट्वा दानपुण्यादिकं बहु ॥ १
मेनकां प्रेषयामास स्ववेश्यां दौत्यकर्मणि । गच्छ भद्रे महाभागे ममाऽऽदेशं वदस्व हि ॥ २
कामकन्यामितो गत्वा देवराजवचो वद । येन केनाप्युपायेन राजानं त्वमिहाऽऽनय ॥
एवं श्रुत्वा गता सा तु मेनका तत्र प्रेषिता । समाचष्टे तु तत्सर्वं देवराजविभाषितम् ॥
एवमुक्ता गता सा तु मेनका तत्प्रणोदिता ॥ ३
गतायां मेनकायां तु रतिपुत्री मनस्विनी । राजानं धर्मसंकेतं प्रत्युवाच यशस्विनी ॥ ४
त्वयाऽहंमानिना राजन्सत्यवाक्येन वै पुरा । स्वकरं मत्करे दत्त्वा सत्यधर्मसमन्वितम् ॥ ५
यद्यद्वदाम्यहं राजंस्तत्तत्कार्यं हि वै त्वया । तदेव तु त्वया वीर न कृतं भाषितं मम ॥
तस्मात्त्वां तु परित्यक्ष्ये यास्यामि पितृमन्दिरम् ॥ ६

राजोवाच—

यथोक्तं हि मया भद्रे तत्ते कर्ता न संशयः । असाध्यं तु परित्यज्य साध्यमेव वदस्व मे ॥ ७

अश्रुबिन्दुमत्युवाच—

एतदर्थं मया कान्तो भवान्वै समुपाश्रितः । सर्वलक्षणसंपन्नः सर्वधर्मसमन्वितः ॥ ८
सर्वं साध्यं तव ज्ञात्वा भोक्तारं सर्वसंपदाम् । कर्तारं सर्वधर्माणां स्रष्टारं पुण्यकर्मणाम् ॥ ९
त्रैलोक्यसाधकं ज्ञात्वा त्रैलोक्येऽप्रतिमं च वै । विष्णुभक्तमहं जाने वैष्णवानां महावरम् ॥ १०

---

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. झ ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः ख. घ. ङ. च. छ. ट. ठ. ढ. पुस्तकस्थः ।

इत्याशया मया भर्ता स त्वमङ्गीकृतः पुरा । यस्य विष्णुप्रसादोऽस्ति स सर्वत्र परिव्रजेत् ॥ ११
दुर्लभं नास्ति राजेन्द्र त्रैलोक्ये सचराचरे । सर्वेषु चैव लोकेषु विद्यते न च सुव्रतं ॥
तव विष्णोः प्रसादेन स्वर्गे च नृपसत्तम ॥ १२
मर्त्यलोकं समासाद्य त्वयैव वसुधाधिप । जरापीडाविहीनाश्च मृत्युहीना नराः कृताः ॥ १३
गृहद्वारेषु सर्वेषां मर्त्यानां तु नरर्षभ । अनेके कल्पवृक्षाश्च त्वयैव परिकल्पिताः ॥ १४
येषां गृहेषु मर्त्यानां मुनयः कामधेनवः । त्वयैव प्रेषिता राजन्स्थिरीभूताः कृताः सदा ॥
सुखिनः सर्वकामैश्च मानवाश्च त्वया कृताः ॥ १५
गृहैकमध्ये साहस्रं कुलीनानां प्रदृश्यते । एवं वंशविवृद्धिश्च मानवानां त्वया कृता ॥ १६
यमस्यापि विरोधेन इन्द्रस्यापि नरोत्तम । व्याधिपापविहीनस्तु मर्त्यलोकस्त्वया कृतः ॥ १७
स्वतेजसाऽहंकारेण स्वर्गरूपं तु भूतलम् । दर्शितं हि महाराज त्वत्समो नास्ति भूपतिः ॥ १८
पुराणेऽपि प्रभूते हि नान्यश्चास्ति भवादृशः । भवन्तमित्यहं जाने सर्वधर्मप्रदायकम् ॥ १९
तस्मान्मया कृतो भर्ता वदस्वैव ममाग्रतः । [*नर्ममुक्तं[6] नृपेन्द्र त्वं वद सत्यं ममाग्रतः] ॥ २०
यदि ते सत्यमस्तीति धर्मं चापि नराधिप । देवलोकेषु मे नास्ति गमने गतिरुत्तमा ॥ २१
सत्यं त्यक्त्वा यदा च त्वं नैव स्वर्गं गमिष्यसि । तदा कूटं तव वचो भविष्यति न संशयः ॥
पूर्वं कृतं तु यच्छ्रेयो भस्मभूतं भविष्यति ॥ २२

राजोवाच—

सत्यमुक्तं त्वया भद्रे साध्यासाध्यं न चास्ति मे । सर्वं साध्यं[7] स्वर्गलोके प्रसादाज्जगतां पतेः ॥ २३
न याम्यहं यथा स्वर्गं तच्च मे कारणं शृणु । भागं तु ते न दास्यन्ति मम मृत्युश्च देवताः ॥ २४
ततो वै मानवे लोके प्रजाः सर्वा ममानघे । मृत्युयुक्ता भविष्यन्ति मया हीना न संशयः ॥
अतः स्वर्गं न गच्छामि सत्यमुक्तं वरानने ॥ २५

देव्युवाच—

लोकान्दृष्ट्वा गमिष्यामि मर्त्यलोकं च वै पुनः । रूपं पश्य ममाद्य त्वं जाता श्रद्धा ममातुला २६

राजोवाच—

सर्वमेवं करिष्यामि यत्त्वयोक्तं न संशयः । एवमुक्त्वा प्रियां राजा चिन्तयामास वै तदा ॥ २७
अन्तर्जलचरो मत्स्यः सोऽपि जालेन बध्यते । मरुत्समानवेगोऽपि मृगः प्राप्नोति बन्धनम् २८
योजनानां सहस्रस्थमामिषं भक्षते खगः । स पाशं पादसंलग्नं न पश्येद्दैवमोहितः ॥
स वैषम्यकरः कालः कालः संमानहानिदः ॥ २९
एवं भयंकरः कालो यत्र कुत्रापि निष्ठुरः । नरं करोति दातारं याचितारं च वै पुनः ॥ ३०
भूतानि स्थावरादीनि दिवि वा यदि वा भुवि । सर्वत्र कल्पते कालः कालो लोक[12] इदं जगत् ३१
अनादिनिधनो योऽसौ जगतः कारणं परम् । लोकेषु कालः पचति वृक्षे फलमिवाऽऽहितम् ३२

* एतच्चिह्नान्तर्गतः पाठः क. ख. च. छ. पुस्तकस्थः ।

१ ङ. छ. ढ. °र्वेष्वेव सुलोकेषु विद्यते तव सु° । २ ङ. ढ. °त । विष्णोश्चैव प्रसादेन गगने गतिरुत्तमा । म° । ३ छ. भूतले । ४ ङ. ढ. °रा नैव प्रसूतो हि । ५ क. ख. ङ. च. छ. ढ. °प्रभाकरम् । ६ क. ख. च. °र्मयुक्तं । ७ ङ. °ध्यं तु मे कार्यं त्वत्प्रसादाज्जगत्त्रये न । ८ क. ख. ङ. छ. ढ. पश्यते । ९ ङ ढ स पश्येत्कण्ठसं° । १० ङ. छ. ढ. °तः । कालः समाविषमकः । ११ क. ख. घ. च. ङ. °दः । पराभवकरः । १२ ङ. ह्येष ।

न मन्त्रा न तपो दानं न मित्राणि न बान्धवाः। शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥३३
त्रयः कालकृताः पाशाः शक्यन्ते न निवर्तितुम्। विवाहो जन्म मरणं यथा यत्र च येन च ३४
यथा जलधरा व्योम्नि भ्राम्यन्ते मातरिश्वना। तथेदं कर्मयुक्तेन कालेन भ्रामितं जगत् ॥ ३५

सुकर्मोवाच—

कालोऽयं कर्मयुक्तश्च यो नरैः समुपासितः। कालस्तु प्रेरयेत्कर्म तं तं कालः करोति सः ॥ ३६
उपद्रवाघातदोषाः सर्पाश्च व्याधयस्ततः। सर्वे कर्मप्रयुक्तास्ते प्रचरन्ति च मानुषम् ॥ ३७
सुखस्य हेतवो ये च ह्युपायाः पुण्यमिश्रिताः। ते सर्वे कर्मसंसक्ता न पश्येयुः शुभाशुभम् ॥३८
कर्मदा यदि वा लोके कर्मसंबन्धिबान्धवाः। कर्माणि चोदयन्तीह पुरुषं सुखदुःखयोः ॥ ३९
सुवर्णं रजतं चापि यथा रूपं निबध्यते। तथा निबध्यते यस्तु स्वकर्मणि वशानुगः ॥ ४०
पञ्चैतानि विसृज्यन्ते गर्भस्थस्यैव देहिनः। आयुः कर्म च वित्तं च विद्या निधनमेव च ॥ ४१
यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति। तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ ४२
देवत्वमथ मानुष्यं पशुत्वं पक्षिता तथा। तिर्यक्त्वं स्थावरत्वं च प्राप्यते वै स्वकर्मभिः ॥ ४३
यथा कृतं तथा भुङ्क्ते नित्यं विहितमात्मना। आत्मना विहितं दुःखमात्मना विहितं सुखम् ॥४४
गर्भसंज्ञामुपादाय भुङ्क्ते वै पूर्वदैहिकम्। संत्यजन्ति स्वकं कर्म न कचित्पुरुषा भुवि ॥ ४५
वित्तेन प्रज्ञया वाऽपि समर्थाः कर्तुमन्यथा। स्वकृतान्युपभुञ्जन्ति दुःखानि च सुखानि च ॥
हेतुं प्राप्य नरो नित्यं कर्मपाशैश्च बध्यते ॥ ४६
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्। तथा शुभाशुभं कर्म कर्तारमनुगच्छति ॥ ४७
उपभोगादृते तस्य नाश एव न विद्यते। प्राक्तनं बन्धनं कर्म कोऽन्यथा कर्तुमर्हति ॥ ४८
सुशीघ्रमपि धावन्तं विधानमनुधावति। [*शेते सह शयानेन पुरा कर्म यथाकृतम् ॥ ४९
उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति। करोति कुर्वतः कर्म च्छायेवानुविधीयते ] ॥ ५०
यथा छायातपौ नित्यं संबद्धौ च परस्परम्। तद्वत्कर्म च कर्ता च सुसंबन्धौ परस्परम् ॥ ५१
ग्रहा रोगा विषाः सर्पा डाकिन्यो राक्षसास्तथा। पीडयन्ति नरं पश्चात्पीडितं पूर्वकर्मणा ॥ ५२
येन यत्रोपभोक्तव्यं सुखं वा दुःखमेव च। स तत्र बद्ध्वा बन्धेन बलाद्दैवेन नीयते ॥ ५३
दैवं प्राहुर्हि भूतानां सुखदुःखोपपादने। अन्यत्र संचितं कर्म जाग्रतः स्वपतोऽपि वा ॥ ५४
अन्यर्थो मुच्यते दैवाद्धन्धमेवं जिघांसति। शस्त्राग्निविषदुर्गेभ्यो रक्षितव्यं च रक्षति ॥ ५५
अरक्षितं भवेत्सत्यं दैवं तमेव रक्षति। दैवेन नाशितं यत्तु तस्य रक्षा न दृश्यते ॥ ५६
यथा पृथिव्यां बीजानि उप्तानि च धनानि च। तथैवाऽऽत्मनि कर्माणि तिष्ठन्ति प्रभवन्ति च॥
तैलक्षये यथा दीपो निर्वाणमधिगच्छति। [*कर्मक्षयात्तथा जन्तुः शरीरान्नाशमृच्छति] ॥ ५८
कर्मक्षयात्तथा मृत्युस्तत्त्वविद्भिरुदाहृतः। विविधाः प्राणिनामस्य स्मृता रोगाश्च हेतवः ॥ ५९
तथा मम विपाकोऽयं पूर्वं कृतस्य नान्यथा। संप्राप्तो नात्र संदेहः स्त्रीरूपो दैवसंज्ञकः ॥ ६०
मम गेहे समायाता नाटका नटनर्तकाः। तेषां सङ्गमसङ्गेन जरा कार्यं समाश्रिता ॥ ६१
सर्वं कर्मकृतं मन्ये यन्मे संभावितं ध्रुवम्। तस्मात्कर्म प्रधानं च उपायाश्च निरर्थकाः ॥ ६२

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः। *एतच्चिह्नान्तर्गतः पाठो ङ. छ. झ. पुस्तकस्थः।

१ क. ख. ङ. च. ढ. °ते जन्तुः स्व°। २ क. ख. ङ. च. छ. झ. ड. ढ. बलेन। ३ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °न्यथा चिन्त्यते क°। ४ छ. झ. °था ह्युपपद्येत दैवमेवं जि°।

पूर्वं वै देवराजेन मदर्थे दूत उत्तमः । मातलिः प्रेषितः पुण्यो न कृतं तस्य तद्वचः ॥ ६३
तस्य कर्मविपाकोऽयं दृश्यते सांप्रतं मम । इति चिन्तापरो भूत्वा दुःखेन महताऽन्वितः ॥ ६४
यदाऽस्या हि वचः प्रीत्या न करोमि च सर्वथा । सत्य[*धर्मावुभावेतौ यास्यतस्तौ न संशयः ६५
सदृशं च समायातं यद्दृष्टं मम कर्मणा । भविष्यति न संदेहो] दैवो हि दुरतिक्रमः ॥ ६६
एवं चिन्तापरो भूत्वा ययातिः पृथिवीपतिः । कृष्णं क्लेशापहं देवं जगाम शरणं हरिम् ॥ ६७
ध्यात्वा नत्वा ततः स्तुत्वा मनसा मधुसूदनम् । त्वामहं शरणं प्राप्तस्त्राहि मां कमलाप्रिय ॥ ६८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने पितृतीर्थे ययातिचरित एकाशीतितमोऽध्यायः ॥ ८१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७४०९

---

अथ अशीतितमोऽध्यायः ।

---

सुकर्मोवाच—

एवं चिन्तयते यावद्राजा परमधार्मिकः । तावत्प्रोवाच सा देवी रतिपुत्री वरानना ॥ १
किं त्वं चिन्तयसे राजंस्त्वमद्यैव महामते । प्रायेणापि स्त्रियः सर्वाश्चपलाः स्युर्न संशयः ॥ २
नाहं चापल्यभावेन त्वामेवं विनियोजये । नाहं हि कारयाम्यद्य भवत्पार्श्वे नृपोत्तम ॥ ३
अन्याः स्त्रियो यथा लोके चापल्याच्चोदयन्ति च । अकार्यं राजराजेन्द्र मोहाल्लोभाच्च लम्पटाः ॥
लोकानां दर्शनायैव जाता श्रद्धा ममोरसि । देवानां दर्शनं पुण्यं दुर्लभं हि सुमानुषैः ॥ ५
तेषां च दर्शनं राजन्कारयामि वदस्व मे । दोषपापकरं यत्तु मत्सङ्गादिह यद्भवेत् ॥ ६
कथं चिन्तयसे दुःखं यथाऽन्यः प्राकृतो जनः । महाभयाद्यथा भीतो मोहगर्भे[1] गतो यथा ॥ ७
त्यज चिन्तां महाराज गन्तव्यं हि त्वया दिवि । [3]येनोद्देशेन दुःखं तु तन्न कार्यं मया कदा ॥८
एवमुक्तस्तया राजा तामुवाच वराङ्गनाम् । चिन्तितं यन्मया देवि तन्मे त्वं शृणु सांप्रतम् ॥ ९
मानभङ्गो मया दृष्टो मयैव चाऽऽत्मनः प्रिये । मयि स्वर्गं गते कान्ते प्रजा दीना भविष्यति ॥ १०
त्रासयिष्यति दुष्टात्मा यमस्तु व्याधिभिः प्रजाम् । त्वया सार्धं प्रयास्यामि स्वर्लोकं च वरानने॥
एवमाभाष्य तां राजा समाहूय सुतोत्तमम् । पुरुं तं सर्वधर्मज्ञं जरायुक्तं महामतिम् ॥ १२
[† एह्येहि सर्वधर्मज्ञ धर्मं जानासि निश्चितम् ] । ममाऽऽज्ञया हि धर्मात्मन्धर्मः संपालितस्त्वया॥
जरा मे दीयतां तात तारुण्यं गृह्य चाऽऽत्मनः ॥ १४
राज्यं कुरु ममेदं त्वं सकोशबलवाहनम् । आसमुद्रं प्रभुङ्क्ष्व त्वं वसुपूर्णां[4] वसुंधराम् ॥ १५
मया दत्तां महाभाग सग्रामवनपत्तनाम् । प्रजानां पालनं पुण्यं कर्तव्यं सर्वदा त्वया ॥ १६
दुष्कृतां शासनं नित्यं साधूनां प्रतिपालनम् । कर्तव्यं च त्वया तात धर्मशास्त्रप्रमाणतः ॥ १७
ब्रह्मण्येन प्रभावेन विधिदृष्टेन कर्मणा । भक्तानां पालनं कार्यं यस्मात्पूज्या जगत्त्रये ॥ १८
पञ्चमे सप्तमे घस्रे कोशं पश्य विपश्चितैः[5] । कार्यैषां नित्यदा पूजा प्रसाद्य धनभोजनैः ॥ १९
[*चारचक्षुर्भवस्व त्वं नित्यं दानरतो भव[6]] । मा भव त्वं रतः शत्रौ सदा गोप्यस्तु पण्डितैः॥२०

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ.पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः छ. झ. ढपुस्तकस्थः ।

---

१ छ. 'अन्वर' । २ क. छ. झ. ड. ढ 'गर्ते ग' । ३ ङ. ढ. येन ते भवते दुःखं त' । ४ क. ख. ङ. च. छ. ड. ढ. रत्नपूर्णां । ५ छ. झ. ट. 'त । बलं च नित्यं संपूज्यं प्रसादय' । ६ ङ. ढ. 'व । भवस्व नियतो मन्त्रैः स' ।

नियतात्मा भवस्व त्वं मा गच्छ मृगयां सुत । विश्वासस्तु त्वया त्याज्यः स्त्रीषु कोशे बले रिपौ
पौत्राणां चैव सर्वेषां बेलानां संग्रहं कुरु । यज्ञैर्यज हृषीकेशं पुण्यात्मा भव सर्वदा ॥ २२
प्रजानां वाञ्छितं सर्वमर्पयस्व दिने दिने । प्रजासौख्यं [*प्रकर्तव्यं प्रजां पोषय पुत्रक ॥ २३
स्वीयवंशः] प्रकर्तव्यः परदारेषु मा कृथाः । मतिं दुष्टां परस्वेषु रिपूणां बलमेव च ॥
[*चिन्तयस्व सदा वत्स मद्वाक्ये निरतो भव ॥ २४
वेदानां हि सदा चिन्ता शास्त्राणां हि च सर्वदा । कुरुष्वैवं सदा वत्स शस्त्राभ्यासरतो भव २५
संतुष्टः सर्वदा वत्स स्वशय्यानिरतो भव । गजाभ्यासस्तु कर्तव्यः स्यन्दनस्य च सर्वदा] ॥२६
एवमादिश्य तं पुत्रमाशीर्भिरभिनन्द्य च । स्वहस्तेन परिस्थाप्य स्वासने नृपसत्तमः ॥ २७
स्वां जरां तु समाश्रित्य दत्त्वा तारुण्यमस्य च । गन्तुकामस्तदा स्वर्गं ययातिः पृथिवीपतिः॥२८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने पितृतीर्थे ययातिचरिते द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७०७७

---

अथ त्र्यशीतितमोऽध्यायः ।

---

सुकर्मोवाच—

समाहूय प्रजाः सर्वा द्वीपानां वसुधाधिपः । हर्षेण महताऽऽविष्ट इदं वचनमब्रवीत् ॥ १
इन्द्रलोकं ब्रह्मलोकं शिवलोकं ततः परम् । वैष्णवं लोकपापघ्नं प्राणिनां गतिदायकम् ॥
व्रजाम्यहं न संदेहो ह्यनया सह सत्तमाः ॥ २
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव प्रजा मम । सकुटुम्बैः सुखेनापि स्थातव्यमाज्ञयैव हि ॥ ३
पुरुरेष महाबाहुर्भवतां प्रतिपालकः । [*स्थापितोऽस्ति मया लोका राजा धीरः सदण्डकः]॥४
एवमुक्तास्तु ताः सर्वाः प्रजा राजानमब्रुवन् । श्रूयते सर्ववेदेषु पुराणेषु नृपोत्तम ॥ ५
धर्ममेव परिख्यातं न दृष्टं केन वै पुरा । [† दृष्टोऽस्माभिरसौ धर्मो दशाङ्गः सत्यवल्लभः]॥ ६
सोमवंशसमुत्पन्नो नहुषस्य महागृहे । हस्तपादमुखैर्युक्तः सर्वाचारप्रचारकः ॥ ७
ज्ञानविज्ञानसंपन्नः पुण्यानां च महानिधिः । गुणानां हि महाराज आधारः सत्यपण्डितः ॥ ८
कुर्वन्ति च महाधर्मं सत्यवन्तो महौजसः । नाधिकं दृष्टमस्माभिर्भवतः कामरूपिणः ॥ ९
भवन्तं धर्मकर्तारमीदृशं सत्यवादिनम् । कर्मणा त्रिविधेनापि वयं त्यक्तुं न शक्नुमः ॥ १०
यत्र त्वं तत्र च वयं सुखं वा दुःखमेव वा । नरकेऽपि भवान्यत्र वयं तत्र न संशयः ॥ ११
किं दारैर्धनभोगैश्च किं चैव जीवितेन च । त्वां विनाऽपि महाराज तेन नास्त्यत्र कारणम् ॥
त्वयैव सह राजेन्द्र वयं यास्याम नान्यथा ॥ १२

---

* एतच्चिह्नान्तर्गतः पाठो ङपुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो ङपुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ठ. ड.पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क.ख. ङ. छ. झ. ट. ठ. ढ.पुस्तकस्थः ।

---

१ घ. ठ. ढ. पत्राणां २ क. ख. ङ. च. ङ. झ. ट. ड. ढ. कलानां । घ. ज. झ. फलानां । ३ घ. ङ. छ. ट. ठ. ड. ढ. °नां कण्टकान्सर्वान्मर्दय° । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °प्य करे दत्तं च स्वायुधम् । स्वां । ५ घ. ट. ठ. धर्मः कृशा° । ६ ट. °सः । तद्धर्मं ह° । ७ क ख. घ. ङ. च. छ. झ. ट ठ. ड. ढ. °वन्तं कामरूपिणम् । भ° । ८ क. ख. घ. ङ. च. छ. झ. ट. ट. ड. ढ. °यं नो सुखं पुण्यमेव च । न° ।

एवं श्रुत्वा वचस्तासां प्रजानां पृथिवीपतिः । हर्षेण महताऽऽविष्टः प्रजा वाक्यमुवाच ह ॥ १३
आगच्छन्तु मया सार्धं सर्वे लोकाः सुपुण्यकाः । नृपो रथं समारुह्य तया वै कामकन्यया ॥ १४
रथेन हंसवर्णेन चन्द्रबिम्बानुकारिणा । चामरैर्व्यजनैश्चापि वीज्यमानो गतव्यथः ॥ १५
केतुना तेन पुण्येन शुभ्रेणापि महायशाः । शोभमानो यथा देवो देवराजः पुरंदरः ॥ १६
ऋषिभिः स्तूयमानश्च [*बन्दिभिश्चारणैस्तथा । प्रजाभिः स्तूयमानश्च ] ययातिर्नहुषात्मजः १७
प्रजाः सर्वा मुदा युक्ताः समायाता नरेश्वरम् । गजैरश्वै रथैश्चान्यैः प्रस्थिताश्च दिवं प्रति ॥ १८
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्ये पृथग्जनाः । सर्वे ते वैष्णवा लोका विष्णुध्यानपरायणाः
तेषां तु केतवः शुक्ला हेमदण्डैरलंकृताः । [† शङ्खचक्राङ्किताः सर्वे सदण्डाः सपताकिनः ॥ २०
प्रजावृन्देषु भासन्ति पताका मारुतेरिताः । दिव्यमालाधराः सर्वे शोभितास्तुलसीदलैः ]॥ २१
दिव्यचन्दनदिग्धाङ्गा दिव्यगन्धानुलेपनाः । दिव्यवस्त्रकृताशोभाः सर्वाभरणभूषिताः ॥ २२
सर्वे लोकाः सुरूपास्ते राजानमनुजग्मिरे ।प्रजानां च सहस्राणि लक्षकोटिशतानि च ॥ २३
अर्वखर्वसहस्राणि ते जनाः परिजग्मिरे । तेन राज्ञा समं सर्वे वैष्णवाः पुण्यकारिणः ॥
विष्णुध्यानपराः सर्वे जपदानपरायणाः ॥ २४

सुकर्मोवाच—

एवं ते प्रस्थिताः सर्वे हर्षेण महताऽन्विताः । पुरुं पुत्रं महाराजः स्वराज्ये प्रतिषिच्य तम् ॥२५
इन्द्रलोकं जगामाथ ययातिः पृथिवीपतिः । तेजसा तस्य पुण्येन धर्मेण तपसा तदा ॥
ते जनाः प्रस्थिताः सर्वे वैष्णवं लोकमुत्तमम् ॥ २६
ततो देवाः सगन्धर्वाः किन्नराश्चारणास्तथा । सहिता देवराजेन आगताः संमुखं तदा ॥
तैः सहापि च सर्वैश्च पूजयन्तो नृपोत्तमम् ॥ २७

इन्द्र उवाच—

स्वागतं ते महाभाग मम गेहं समाविश । अत्र भोगान्प्रभुङ्क्ष्व त्वं दिव्यान्पुण्यान्मनोरमान्॥२८

राजोवाच—

सहस्राक्ष महाराज तव पादाम्बुजं वयम् । नमस्कृत्वा व्रजामोऽद्य ब्रह्मलोकं सनातनम् ॥ २९
देवैः प्रस्तूयमानश्च ब्रह्मलोकं जगाम ह । पद्मयोनिर्महातेजाः सार्धं मुनिवरैस्तदा ॥ ३०
आतिथ्यं च चकारास्य अर्घ्यादिभिः सुविस्तरैः । उवाच विष्णुलोकं हि प्रयाहि त्वं स्वकर्मणा
ब्रह्मणा भाषितश्चैवं जगाम शिवमन्दिरम् । चक्र आतिथ्यपूजां च शंकरश्चोमया सह ॥ ३२
शिवः संपूज्य तं चापि राजानमिदमब्रवीत् । कृष्णभक्तोऽसि राजेन्द्र ममापि सुप्रियो भवान्३३
स्थातव्यमत्र राजेन्द्र त्वयैव मम मन्दिरे । सर्वभोगान्प्रभुङ्क्ष्व त्वं सुदुष्प्राप्या हि मानुषैः ॥ ३४
अन्तरं नास्ति राजेन्द्र मम विष्णोर्न संशयः । योऽसौ विष्णुः स्वरूपेण स च रुद्रो न संशयः॥
रुद्रो यः स च वै विष्णुर्जानीहि त्वं नरेश्वर । [*उभयोरन्तरं नास्ति तस्मादेवं वदाम्यहम्॥३६
विष्णुभक्तस्य पुण्यस्य स्थानमेवं न संशयः । तस्मादत्र महाराज स्थातव्यं हि त्वयाऽनघ]॥ ६७

* एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ पुस्तकस्थः ।
एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. दिव्यं । २ घ. च. झ. ट. ह. ढ. नराधिपः ।

एवमुक्तः शिवेनापि ययातिर्हरिवल्लभः । भक्त्या प्रणम्य देवेशं शंभुं नमितकंधरः ॥ ३८
एतत्सत्यं महादेव त्वयोक्तमिह सांप्रतम् । युवयोरन्तरं नास्ति एका मूर्तिस्त्रिधाऽभवत् ॥ ३९
वैष्णवं गन्तुमिच्छामि पादौ तव नमाम्यहम् । एवमस्तु महाराज गच्छ लोकं च वैष्णवम् ॥ ४०
समादिष्टः शिवेनापि प्रणम्य च शिवामुमाम् । पृथ्वीशस्तैर्महापुण्यैर्वैष्णवैर्विष्णुवल्लभैः ॥ ४१
नृत्यमानास्ततस्ते तु पुरतस्तस्य भूपतेः । शङ्खशब्दैस्तथा वाद्यैर्घण्टानादैः सुपुष्कलैः ॥ ४२
अप्सरोभिर्युतो राजा पूज्यमानोऽथ किंनरैः । सुस्वरैर्गीयमानस्तु पाठकैः शास्त्रकोविदैः ॥ ४३
गायन्ति पुरतस्तस्य गन्धर्वा गीततत्पराः । ऋषिभिर्देववृन्दैश्च स्तूयमानः समन्ततः ॥ ४४
अप्सरोभिः सुरूपाभिः सेव्यमानः स नाहुषिः । गन्धर्वैः किंनरैः सिद्धैश्चारणैः पुण्यसंयुतैः ४५
साध्यैर्विद्याधरै राजा मरुद्भिर्वसुभिस्तथा । रुद्रैश्चाऽऽदित्यवर्गैश्च लोकपालैर्दिगीश्वरैः ॥ ४६
स्तूयमानो महाराजस्त्रैलोक्येन समन्ततः । ददर्श वैष्णवं लोकमनौपम्यमनामयम् ॥
विमानैः काञ्चनै राजा सर्वशोभासमाकुलैः ॥ ४७
हंसकुन्देदुधवलैर्विमानैरुपशोभितम् । प्रासादैः शतशोभैश्च मेरुमन्दरसंनिभैः ॥ ४८
शिखरैरुल्लसद्भिस्तु स्वर्व्योमहाटकान्वितैः । कलशैः शोभमानैश्च शोभते सुपुरोत्तमम् ॥ ४९
तारागणैर्यथाऽऽकाशं तेजःश्रिया प्रकाशते । प्रज्वलत्तेजज्वालाभिर्लोचनैरिव लोकते ॥ ५०
नानारत्नैर्हरेर्लोको हसते दशनैरिव । समाह्वयति तान्पुण्यान्वैष्णवान्विष्णुवल्लभान् ॥ ५१
ध्वजव्याजेन राजेन्द्रचलिताग्रैः सुपल्लवैः । श्वसनान्दोलितैस्तैश्च ध्वजाग्रैश्च मनोहरैः ॥ ५२
हेमदण्डैश्च घण्टाभिः सर्वत्र समलंकृतम् । सूर्यतेजःप्रकाशैश्च गोपुराट्टालकैः पुनः ॥ ५३
गवाक्षैर्जालमालैश्च वातायनैर्महागुणैः । प्रतोलीभिः प्रकाशेत प्राकारैर्हेमरूपकैः ॥ ५४
तोरणैः सपताकाभिर्नानाशब्दैः सुमङ्गलैः । कलशाग्र्यैश्चक्रबिम्बै रविबिम्बसमप्रभैः ॥ ५५
सुशोभनैः स्यमन्तैश्च नीलाम्बुदसमप्रभैः । दण्डच्छत्रसमाकीर्णैः कलशैरुपशोभितम् ॥ ५६
प्रावृट्कालाम्बुदाकारैर्मन्दिरैरुपशोभितम् । कलशैः शोभमानैस्तैर्ऋक्षैर्द्यौरिव भूतलम् ॥ ५७
दण्डजालपताकाभिर्ऋक्षजालसमप्रभैः । तादृशैः स्फाटिकाकारैः कान्तिखण्डेन संनिभैः ॥
हेमप्रासादसंबाधैर्नानाधातुमयैस्ततः ॥ ५८
विमानैरर्बुदसंख्यैः शतकोटिसहस्रकैः । सर्वभोगयुतैस्तैश्च शोभमानं हरेर्गृहम् ॥ ५९
यैः समाराधितो देवः शङ्खचक्रगदाधरः । सुप्रसादात्ततस्तेषु निवसन्ति गृहेषु च ॥ ६०
सर्वपुण्येषु दिव्येषु दिव्यौघेषु च मानवाः । वैष्णवाः पुण्यकर्तारो निर्धूताशेषकल्मषाः ॥ ६१
एवंविधैर्गृहैः पुण्यैः शोभितं विष्णुमन्दिरम् । नानावृक्षैः समाकीर्णैर्वनैश्चन्दनशोभितैः ॥ ६२
सर्वकामफलै राजन्सर्वत्र समलंकृतम् । वापीकूपतडागैश्च सारसैरुपशोभितम् ॥ ६३
हंसकारण्डवाकीर्णैः पद्मकह्लारकोत्पलैः । शतपत्रैर्महापत्रैः पद्मोत्पलविराजितैः ॥ ६४
कनकोत्पलवर्णैश्च सरोभिश्च विराजते । वैकुण्ठं सर्वशोभाढ्यं देवोद्यानैरलंकृतम् ॥ ६५
दिव्यशोभासमाकीर्णं वैष्णवैरुपशोभितम् । वैकुण्ठं ददृशे राजा मोक्षस्थानमनुत्तमम् ॥ ६६

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पृथ्वीवासैर्म°। २ क. ख. ङ. च. छ. झ. ड. ढ. °शब्दैः सुपापघ्नैः सिंहनादैश्च पु°। ३ ङ. °क्ये तु समन्ततः । ४ ङ. छ. ढ. सुभोगैः शतकक्षैश्च निर्जलाम्बुदसंनिभैः । ड. °सुशोभैः शतकुन्दैश्च शरदम्बुदसंनिभैः । ५ क. ख. च. भूपते । ङ. छ. ढ. शोभते । ६ क. ख. ङ. च. छ. झ. ट. ड. ढ. °भिरिन्द्रनील°। घ. ङ. °भिरिन्दुनील° । ७ क. ख. ङ. च. छ. झ. ड. ढ. °न्तिशङ्खेन्दुसं° । ८ ङ. °नैरिन्दुसंकाशैः श° ।

वद्वृन्दैः समाकीर्णं ययातिर्नहुषात्मजः।[2] प्रविवेश पुरं दिव्यं सर्व[1]दाहविवर्जितम् ॥ ६७
दर्श सर्वक्लेशघ्नं नारायणमनामयम् । वितानैरुपशोभं तं सर्वाभरणशोभितम् ॥ ६८
तवक्षं जगन्नाथं श्रीवत्साङ्कं महागतिम् । वैनतेयसमारूढं श्रिया युक्तं परात्परम् ॥ ६९
र्वेषां देवलोकानां यो गतिः परमेश्वरः । परमानन्दरूपेण कैवल्येन विराजते ॥ ७०
व्यमानं महालोकैः सुपुण्यैर्वैष्णवैर्हरिम् । देववृन्दसमाकीर्णं[3] गन्धर्वगणसेवितम् ॥ ७१
प्सरोभिर्[4]महात्मानं दुःखक्लेशापहं प्रभुम् । नारायणं ननामाथ स्वपत्न्या सह भूपतिः ॥
नेमुर्मानवाः सर्वे वैष्णवा मधुसूदनम् ॥ ७२
ता ये वैष्णवाः सर्वे राज्ञा सह महामते । पादाम्बुजद्वयं तस्य नेमुर्भक्त्या महामते ॥ ७३
णमन्तं महात्मानं राजानं दीप्ततेजसम् । तमुवाच हृषीकेशस्तुष्टोऽहं तव सुव्रत ॥ ७४
रं वरय राजेन्द्र यत्ते मनसि दुर्लभम् । तत्ते दास्ये न संदेहो मद्भक्तोऽसि महामते ॥ ७५

राजोवाच—

दि तुष्टोऽसि देवेश मम वै मधुसूदन । दासत्वं देहि सततमात्मनश्च जगत्पते ॥ ७६

विष्णुरुवाच—

वमस्तु महाभाग मम भक्तो न संशयः । मम लोके त्वया राजन्स्थातव्यं त्वनया सह ॥ ७७
वमुक्तो महाराजो ययातिः पृथिवीपतिः। प्रसादात्तस्य देवस्य विष्णुलोकं[6] प्रभासितम् ॥
नेवसत्येष भूपालो वैष्णवं लोकमुत्तमम् ॥ ७८

ति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने पितृतीर्थे ययातिचरिते ययातिस्वर्गारोहणं नाम त्र्यशीतितमोऽध्यायः ॥८३॥

आदितः श्लोकानां समष्ट्यङ्काः—७१९९

---

अथ चतुरशीतितमोऽध्यायः ।

---

सुकर्मोवाच—

एतत्ते सर्वमाख्यातं चरितं पापनाशनम् । पुत्राणां तारकं दिव्यं बहु[7]श्रेयःप्रदायकम् ॥ १
प्रत्यक्षं दृश्यते लोके ययातिचरितं शुभम् । राज्यं च पुरुणा प्राप्तं स्वर्गतिं प्राप्तवान्गुरुः ॥ २
पितृ[8]प्रसादात्कोपाच्च यथा जातं तथा पुनः । [*पुत्राणां तारकं पुण्यं यशस्यं धनधान्यदम् ]॥३
[† शापयुक्ताविमौ चोभौ गुरुश्च यदुरेव च ] । पितृमातृसमं नास्ति अभीष्टफलदायकम् ॥ ४
[*साभिलाषेण भावेन पिता पुत्रं समाह्वयेत् । माता च पुत्र पुत्रेति तस्य पुण्यफलं शृणु ॥ ५
समाहूतो यदा पुत्रः प्रयाति मातरं प्रति । यो याति हर्षसंयुक्तो गङ्गास्नानफलं लभेत् ॥ ६
पादप्रक्षालनं यश्च कुरुते च महायशाः । सर्वतीर्थफलं भुङ्क्ते प्रसादादुभयोः सुतः ] ॥ ७
अङ्गसंवाहनाच्चाथ अश्वमेधफलं लभेत् । भोजनाच्छादनै[9]श्चैव गुरू च परिपोषयेत् ॥ ८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः ट. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. झ. ड. ढ. पुस्तकस्थः ।

---

१ ङ. °र्वक्लेशवि° । २ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. विमानै° । ३ ङ. °र्णे सर्ववर्णसुसे° । ४ क. ख. च. °रोभिः समाकीर्णं दुः° । ५ क. ख. ङ. च. छ. झ. ढ. श्रीकृष्ण उवाच । ६ क. ख. ङ. च. छ. ड. ढ. प्रसाधितम् । ७ क. ख. च. °हुदेयप्र° । ८ ङ. °तृतीर्थप्रसादेन शापाश्चैव त° । ९ ङ. ढ. °दनस्नानैर्गुरुं यः पोषयेत्सुतः । पू° ।

पृथ्वीदानस्य यत्पुण्यं तत्पुण्यं तस्य जायते । सर्वतीर्थमयी गङ्गा तथा माता न संशयः ॥ ९
बहुपुण्यमयः सिन्धुर्यथा लोके प्रतिष्ठितः । अस्मिन्नेव पिता तद्वत्पुराणाः कवयो विदुः ॥ १०
शंसते क्रोशते यस्तु पितरं मातरं पुनः । स पुत्रो नरकं याति बहुदुःखप्रदायकम् ॥ ११
मातरं पितरं वृद्धौ गृहस्थो यो न पोषयेत् । स पुत्रो नरकं याति वेदनां प्राप्नुयाद्ध्रुवम् ॥ १२
कुत्सते पापकर्ता यो गुरुं पुत्रः सुदुर्मतिः । निष्कृतिस्तस्य नो दृष्टा पुराणैः कविभिः कदा ॥ १३
एवं मत्वा त्वहं विप्र पूजयामि दिने दिने । मातरं पितरं भक्त्या पादसंवाहनादिभिः ॥ १४
कृत्याकृत्यं वदेच्चैव समाहूय गुरुर्मम । तत्करोम्यविचारेण शक्त्या स्वस्य च पिप्पल ॥ १५
तेन मे परमं ज्ञानं संजातं गतिदायकम् । एतयोश्च प्रसादेन संसारे परिवर्तते ॥ १६
ये विप्र भक्तिं कुर्वन्ति मानवा भुवि संस्थिताः । अत्रस्थस्तदहं जाने अधिस्वर्गे प्रवर्तते ॥
[*नागानां तु इहस्थोऽपि चारं जानामि पिप्पल ] ॥ १७
एतयोश्च प्रसादेन ज्ञानं मम प्रदृश्यताम् । गच्छ विद्याधरश्रेष्ठ भवानर्चतु माधवम् ॥ १८

विष्णुरुवाच—

एवं संचोदितस्तेन पिप्पलो हि स्वकर्मणा । आनम्य तं द्विजश्रेष्ठं लज्जितोऽपि दिवं ययौ ॥
सुकर्मा सोऽपि धर्मात्मा गुरुं शुश्रूषते पुनः ॥ १९
एतत्ते सर्वमाख्यातं तीर्थयात्रानुगं मया । अन्यत्किं ते प्रवक्ष्यामि वद वेन महामते ॥ २०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने मातापितृतीर्थमाहात्म्यवर्णनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७१७५

---

अथ पञ्चाशीतितमोऽध्यायः ।

---

वेन उवाच—

भगवन्देवदेवेश प्रसादाच्च मम त्वया । भार्यातीर्थं समाख्यातं पितृतीर्थमनुत्तमम् ॥ १
मातृतीर्थं हृषीकेश बहुपुण्यप्रदायकम् । प्रसादसुमुखो भूत्वा गुरुतीर्थं वदस्व मे ॥ २

विष्णुरुवाच—

कथयिष्याम्यहं राजन्गुरुतीर्थमनुत्तमम् । सर्वपापहरं प्रोक्तं शिष्याणां गतिदायकम् ॥ ३
[† शिष्याणां हि परं पुण्यं धर्मरूपं सनातनम् । एवं तीर्थं परं ज्ञानं प्रत्यक्षफलदायकम् ] ॥ ४
यस्य प्रसादाद्राजेन्द्र इहैव फलमश्नुते । परलोकसुखं भुङ्क्ते यशःकीर्तिमवाप्नुयात् ॥ ५
प्रसादात्तस्य राजेन्द्र गुरो[*श्चैव महात्मनः । प्रत्यक्षं दृश्यते शिष्यैस्त्रैलोक्यं सचराचरम् ॥ ६
व्यवहारं च लोकानामाचारं नृपनन्दन । विज्ञानं विन्दते शिष्यो मोक्षं चैव प्रयाति च †] ॥ ७

---

* एतच्चिह्नान्तर्गतः पाठो ङ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ङ. छ. झ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । † एतदग्रे क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकेष्वयमधिकः पाठो दृश्यते 'शिष्यः प्रकाशमुद्योतैरुपदेशैर्महामते' इति ।

---

१ ञ. प्राशते । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. °रं नित्यं भक्त्या नमितकन्धरः । कृ° । ड. °रं चाहं भक्त्या नमितकन्धरः । कृ° । ३ ङ. छ. झ. ढ. °सादाच्च त्रैलोक्यं मम वश्यताम् । ४ क. ख. घ. च. छ. ट. ठ. ड. आमन्त्र्य । ५ ङ. ढ. पितृतीर्थानुगं । ६ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. श्रीभगवानुवाच ।

सर्वेषामेव लोकानां यथा सूर्यः प्रकाशकः । गुरुः प्रकाशकस्तद्वच्छिष्याणां बुद्धिदानतः ॥ ८
रात्रावेव प्रकाशेच्च सोमो राजा नृपोत्तम । तेजसा नाशयेत्सर्वमन्धकारं चराचरम् ॥ ९
[*गृहं प्रकाशयेद्दीपः समूहं नृपसत्तम] । अज्ञानतमसा व्याप्तं शिष्यमुद्योतयेद्गुरुः ॥ १०
दिवा प्रकाशकः सूर्यः शशी रात्रौ प्रकाशते ॥ ११
गृहप्रकाशको दीपस्तमोनाशकरः सदा । रात्रौ दिवा गृहस्यान्ते गुरुः शिष्यं सदैव हि ॥ १२
अज्ञानाख्यं तमस्तस्य गुरुः सर्वं प्रणाशयेत् । तस्माद्गुरुः परं तीर्थं शिष्याणामवनीपते ॥ १३
एवं ज्ञात्वा ततः शिष्यः सर्वभावैः प्रसादयेत् । गुरुं पुण्यमयं ज्ञात्वा त्रिविधेनापि कर्मणा ॥ १४

सूत उवाच—(?)

इत्यर्थे श्रूयते विप्रा इतिहासः पुरातनः । सर्वपापहरः पुंसां च्यवनस्य महात्मनः ॥ १५
भार्गवस्य कुले जातश्च्यवनो मुनिसत्तमः । तस्य चिन्ता समुत्पन्ना एकदा तु द्विजोत्तमाः ॥ १६
कदाऽहं ज्ञानसंपन्नो भविष्यामि महीतले । दिवा रात्रौ चिन्तयेत्स ज्ञानार्थो द्विजसत्तमः ॥ १७
एवं संचिन्तयानस्य मतिरासीन्महात्मनः । तीर्थयात्रां प्रयास्यामि त्वभीष्टफलदायिनीम् ॥ १८
गृहे पित्रादिकं त्यक्त्वा भार्यां पुत्रं धनं ततः । तीर्थयात्राप्रसङ्गेन अटते मेदिनीं तदा ॥ १९
लोमानुलोमयात्रां स गङ्गायाः कृतवान्नृप । स तद्वन्नर्मदायाश्च सरस्वत्या मुनीश्वरः ॥ २०
गोदावर्यादिसर्वासां नदीनां सागरस्य च । अन्येषां सर्वतीर्थानां क्षेत्राणां च नृपोत्तमः॥
देवानां पुण्यलिङ्गानां यात्राव्याजेन सोऽभ्रमत् ॥ २१
भ्रामितस्तेन मुनिना तीर्थानां स्पर्शनैस्ततः । कायश्च निर्मलो जातः सूर्यतेजःसमप्रभः ॥ २२
च्यवनः काशते दीप्त्या पूतात्माऽनेन कर्मणा । भ्रममाणः समायातः क्षेत्राणामुत्तमं तदा ॥ २३
नर्मदादक्षिणे कूले नाम्ना अमरकण्टकम् । ददर्श सुमहल्लिङ्गं सर्वेषां गतिदायकम् ॥ २४
नत्वा स्तुत्वा पूजयित्वा सिद्धनाथं महेश्वरम्। [*ज्वालेश्वरं ततो दृष्ट्वा दृष्ट्वा चाप्यमरेश्वरम्] २५
ब्रह्मेशं कपिलेशं च मार्कण्डेश्वरमुत्तमम् । एवं यात्रां ततः कृत्वा ओंकारं तु पुनर्गतः ॥ २६
वटच्छायां समाश्रित्य शीतलां श्रमनाशिनीम् । सुखेन संस्थितो विप्रश्च्यवनो मुनिसत्तमः २७
तत्र सुप्तः स शुश्राव सुशब्दं पक्षिणां तदा । दिव्यभाषासमायुक्तं ज्ञानविज्ञानसंयुतम् ॥ २८
शुकश्च एकस्तत्राऽऽस्ते बहुकालप्रजीवकः । कुञ्जलो नाम ज्ञानात्मा बहुपुत्रः सभार्यकः ॥ २९
आसंस्तस्य हि पुत्राश्च चत्वारः पितृनन्दनाः । तेषां नामानि राजेन्द्र कथयिष्ये तवाग्रतः ॥ ३०
ज्येष्ठः स उज्ज्वलो नाम द्वितीयश्च समुज्ज्वलः।तृतीयो विज्वलो नाम चतुर्थश्च कपिञ्जलः॥३१
एवं पुत्रास्तु चत्वारः कुञ्जलस्य महात्मनः । शुकस्य तस्य पुण्यस्य पितृमातृपरायणाः ॥ ३२
भ्रमन्ति गिरिकुञ्जेषु द्वीपेषु सुसमाहिताः । भोजनार्थं सुसंक्षुब्धाः क्षुधया परिपीडिताः ॥ ३३
सोदरास्ते क्षुधाशामैः फलैरमृतसंनिभैः । अमृतस्वादुतोयैश्च तृष्णां शाम्य नृपोत्तम ॥(?) ३४

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. पुस्तकस्थः ।

---

१ क. ख. घ. च. छ. झ. ट. ड. °न्ते शिष्यस्यापि न संशयः । अ° । २ क. ख. घ. च. छ. झ. ट. ठ. ड गुरुसूर्यः प्रकाशकः । त° । ३ अ. °ते राजभिति° । ४ अ. नृपोत्तम । ५ क. ख. ङ. च. छ. झ. ड. गृहक्षेत्रा° । घ. ट. ठ. गृहमैत्रा° । ६ अ. °दा । अनुलोमविलोमेन ग° । ७ क. ख. ङ. च. छ. झ. ड. ढ. ओङ्कारं । ८ ङ. कुलेश्वरं । छ. कालेश्वरं । ९ अ. °कारेश्वरमागतः । १० क. ख. ङ. च. छ. झ. ड. ढ. भृगुनन्दनः । ११ अ. °दा । पशुभा° ।

नित्यं चैव रसाढ्यानि आहारार्थं सुपुत्रकाः । नीत्वा फलानि दंपत्योर्निक्षिपन्ति प्रयत्नतः ।। ३५
मातुरर्थं महाभागा भक्त्या भावेन तोषिताः । संतुष्टा आहारमुत्पाद्य भक्षयन्ति पठन्ति च ।। ३६
तत्र क्रीडारताः सर्वे विलसन्ति सहोदराः । संध्याकालं समाज्ञाय पितुरन्तिकमुत्तमम् ।।
आयान्ति भक्ष्यमादाय गुर्वर्थं तु प्रयत्नतः ।। ३७
पश्यतस्तस्य विप्रस्य च्यवनस्य महात्मनः । आगताश्च द्विजाः सर्वे पितुर्नीडं सुशोभनम् ।। ३८
[ *पितरं मातरं चोभौ ननमुस्ते महामते । ताभ्यां भक्ष्यं समासाद्य उपतस्थुस्तयोः पुरः ।। ३९
सर्वे संभाषिताः पित्रा मानितास्ते सुतोत्तमाः । मात्रा च कृपया राजन्वचनैः प्रीतिदायकैः ।।
पक्षवातेन शीतेन मातापित्रोश्च ते तदा ।। ४०
तेषां मायाधनं तौ द्वौ चक्राते पक्षिणौ नृप । आशीर्भिरभिनन्द्यैव द्वाभ्यामपि सुपुत्रकान् ।। ४१
तैश्च दत्तं सुसंपुष्टमाहारममृतोपमम् । तावेव हि सुसंप्रीतिं चक्राते द्विजसत्तमाः ।। ४२
पिबेते निर्मलं तोयं तीर्थकोटिसमुद्भवम् । स्वस्थानं तु समाश्रित्य सुखसंतुष्टमानसौ ।।] ४३
सोऽशित्वा भार्यया सार्धं तैश्च संतुष्टमानसः । कथां दिव्यां सुपुण्यां च चकार तनयैर्द्विजः ।। ४४

विष्णुरुवाच—

पित्रा तु कुञ्जलेनापि उज्ज्वलः स्वात्मजस्ततः । क गतश्चेति संपृष्टः किमपूर्वं त्वया पुनः ।।
तत्र दृष्टं श्रुतं यच्च तन्मे कथय नन्दन ।। ४५
कुञ्जलस्य पितुर्वाक्यं समाकर्ण्य स उज्ज्वलः । पितरं प्रत्युवाचाथ भक्त्या नमितकंधरः ।।
कृत्वा मूर्ध्ना प्रणामं च कथां चक्रे मनोहराम् ।। ४६

उज्ज्वल उवाच—

प्लक्षद्वीपं महाभाग नित्यमेव प्रयाम्यहम् । महता उद्यमेनापि त्वाहारार्थं महामते ।। ४७
प्लक्षद्वीपे महाभाग सन्ति देशा अनेकशः । पर्वताः सरितोद्यानवनानि च सरांसि च ।।
ग्रामाश्च पत्तनाश्चैव प्रजाश्चातिप्रमोदिताः ।। ४८
सदा सुखेन संतुष्टा लोकाः सन्ति सुतेजसः । दानपुण्यनयोपेताः श्रद्धाभावसमन्विताः ।। ४९
प्लक्षद्वीपे महाराज आसीत्पुण्यमतिः सदा । दिवोदासेति विख्यातः सत्यधर्मपरायणः ।। ५०
तस्यापत्यं समुत्पन्नं नारीणामुत्तमं तदा । गुणरूपसमायुक्ता सुशीला चारुमङ्गला ।।
दिव्यादेवीति विख्याता रूपेणाप्रतिमा भुवि ।। ५१
पित्रा विलोकिता सा तु रूपलावण्यसंयुता । प्रथमे वयसि दिव्या वर्तते चारुमङ्गला ।। ५२
स तां दृष्ट्वा दिवोदासो दिव्यादेवीं सुतां तदा । कस्मै प्रदीयते कन्या सुवराय महात्मने ।। ५३
इतिचिन्तापरो भूत्वा समालोच्य नृपोत्तमः । रूपदेशस्य राजानं समालोक्य महीपतिः ।। ५४
[† चित्रसेनं महात्मानं समाहूय नरोत्तमः ।] कन्यां ददौ महात्माऽसौ चित्रसेनाय [2]धीमते ।। ५५
तस्या विवाहयज्ञस्य संप्राप्ते समये नृप । मृतोऽसौ चित्रसेनस्तु कालधर्मेण वै किल ।। ५६
दिवोदासस्तु धर्मात्मा चिन्तयामास भूपतिः । ब्राह्मणान्स समाहूय पप्रच्छ नृपनन्दनः ।। ५७

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. पुस्तकस्थः ।

१ क. ख. घ. ङ. च. छ. झ. ट. ड. °सौ । स्वस्थानं तु समाश्रित्य सुखसंतुष्टमानसौ । चक्राते च कथां दिव्यां सुपुण्यां पापनाशिनीम् । पि° । २ क. ख. घ. ङ. च. छ. झ. ड. ढ. प्रीतये ।

अस्या विवाहकाले तु चित्रसेनो दिवं गतः । अस्यास्तु कीदृशं कर्म भविष्यं तद्ब्रुवन्तु मे ॥ ५८

ब्राह्मणा ऊचुः—

विवाहो जायते राजन्कन्यायास्तु विधानतः । पतिर्मृत्युं प्रयात्यस्यां नो चेत्सङ्गं करोति च ॥ ५९
महाव्याध्यभिभूतश्च त्यागं कृत्वा प्रयाति वा । प्रव्राजितो भवेद्राजन्धर्मशास्त्रेषु दृश्यते ॥ ६०
उद्वाहितायां कन्यायामुद्वाहः क्रियते बुधैः । न स्याद्रजस्वला यावदन्येष्वपि विधीयते ॥
विवाहं तु विधानेन पिता कुर्यान्न संशयः ॥ ६१
एवं राजा समादिष्टो धर्मशास्त्रार्थकोविदैः । विवाहार्थं समायात इन्द्रप्रस्थं द्विजोत्तमैः ॥ ६२
दिवोदासः सुधर्मात्मा द्विजानां च निदेशतः । विवाहार्थं महाराज उद्यमं कृतवांस्तदा ॥ ६३
पुनर्दत्ता तदा तेन दिव्यादेवी द्विजोत्तमाः । रूपसेनाय पुण्याय तस्मै राज्ञे महात्मने ॥
मृत्युधर्मं गतो राजा विवाहस्य समीपतः ॥ ६४
यदा यदा महाभागो दिव्यादेव्याश्च भूमिपः । चक्रे विवाहं तद्भर्ता म्रियते लग्नकालतः ॥ ६५
एकविंशतिभर्तारः काले काले मृतास्तदा । ततो राजा महादुःखी संजातः ख्यातविक्रमः ॥ ६६
समालोच्य समाहूय मन्त्रिभिः सह निश्चितः । स्वयंवरे तदा बुद्धिं चकार पृथिवीपतिः ॥ ६७
प्लक्षद्वीपस्य राजानः समाहूता महात्मना । स्वयंवरार्थमाहूतास्तथा ते धर्मतत्पराः ॥ ६८
तस्यास्तु रूपं संश्रुत्य राजानो मृत्युनोदिताः । संग्रामं चक्रिरे मूढास्ते मृताः समराङ्गणे ॥
एवं तात क्षयो जातः क्षत्रियाणां महात्मनाम् ॥ ६९
दिव्यादेवी सुदुःखार्ता गता साऽचलकन्दरम् । रुरोद करुणं बाला दिव्यादेवी मनस्विनी ७०
एवं तात मया दृष्टमपूर्वं तत्र वै तदा । तन्मे सुविस्तरं तावदस्याः कथय कारणम् ॥ ७१

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे च्यवनोपाख्याने पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७२४६

---

अथ षडशीतितमोऽध्यायः ।

---

कुञ्जल उवाच—

तस्यास्तु चेष्टितं वत्स दिव्यादेव्या वदाम्यहम् । पूर्वजन्मकृतं सर्वं त्वं मे निगदतः शृणु ॥ १
अस्ति वाराणसी पुण्या नगरी पापनाशिनी । तस्यामास्ते महाप्राज्ञः सुवीरो नाम नामतः ॥
वैश्यजात्यां समुत्पन्नो धनधान्यसमाकुलः ॥ २
तस्य भार्या महाप्राज्ञ चित्रा नाम शुचिस्मिता । कुलाचारं परित्यज्य ह्यनाचारेण वर्तते ॥ ३
न मन्यते हि भर्तारं स्वैरवृत्त्या प्रवर्तते । धर्मपुण्यविहीना तु पापमेव समाचरेत् ॥ ४
भर्तारं कुत्सते नित्यं नित्यं च कलहप्रिया । नित्यं परगृहे वासो भ्रमते सा गृहे गृहे ॥ ५
परच्छिद्रं सदा पश्येत्सदा दुष्टा च प्राणिषु । साधुनिन्दारता दुष्टा बहुहास्यकरी सदा ॥ ६

---

१ घ. ठ. °स्यास्तावद्यागं क° । ङ. °स्यास्तावस्यागं क° । २ °ते । तस्माद्व्रजस्व कन्यायाश्चान्यः पतिर्विधी° । ३ ङ. छ अनुद्वाहितायां । ४ ङ. °धैः । तस्यां रजस्वलायां च अन्यः पतिर्विधी° । ५ क. ख. घ. ङ. च. छ. झ. ठ. ङ. °वाहः क्रियतामस्या इत्यूचुस्ते द्विजोत्तमाः । दि° । ६ ङ. °हसमयेऽपि सः । य° । ७ ङ. ढ. सुविश्रुता । ८ घ. ट. ङ. रौद्र्या क्रूरया । ङ. ढ. रौद्रकृत्या । ९ घ. ठ. ङ. °दाऽतुष्टा । १० ट. रुष्टा ।

अनाचारां महापापां ज्ञात्वा वीरोऽपि नन्दनः । स तां त्यक्त्वा महाप्राज्ञ उपयेमे महामतिः ॥७
अन्यवैश्यस्य वै कन्यां तया सह प्रवर्तते । धर्माचारेण पुण्यात्मा सत्यधर्ममतिः सदा ॥ ८
निरस्ता तेन सा चित्रा एवं सा भ्रमते महीम् । दुष्टानां संगतिं प्राप्ता नराणां पापिनां सदा॥९
दूतीकर्म चकाराथ सा तेषां पापनिश्चया । गृहभङ्गं चकाराथ साधूनां पापकारिणी ॥ १०
साध्वीं नारीं समाहूय पापवाक्यैः प्रलोभयेत् । मनोभङ्गं चकाराथ वाक्यैः प्रत्ययदायकैः ॥११
साधूनां सा स्त्रियं भङ्क्त्वाऽप्यन्यस्मै परिदापयेत्। एवं गृहशतं भग्नं चित्रया पापचिन्तया ॥१२
संग्रामं सा महादुष्टाऽकारयत्पतिपुत्रकैः । मनांसि चालयेत्पापा पुरुषाणां स्त्रियः प्रति ॥ १३
अकारयच्च संग्रामं यमग्रामविवर्धनम् । एवं गृहशतं भङ्क्त्वा पश्चात्सा निधनं गता ॥ १४
त्रासिता[1] यमराजेन बहुदण्डैः सुनन्दन । भुञ्जापिता यातनाश्च रौरवादिषु वै तदा ॥ १५
पाचिता रौरवे चित्रा चित्राः पीडाः प्रदर्शिताः । यादृशं क्रियते कर्म तादृशं परिभुञ्जते ॥ १६
[*तया गृहशतं भग्नं चित्रया पापचित्तया । तस्य कर्मविपाकोऽयं तया भुक्तो द्विजोत्तम] ॥ १७
यस्माद्गृहशतं भग्नं तस्माद्दुःखं भुनक्ति वै । विवाहसमये प्राप्ते दैवं च पाकतां गतम् ॥
भर्ता विवाहसमये यतो मृत्युं समागतः ॥ १८
यत्संख्याकं गृहं भग्नं तत्संख्याका वरा मृताः[2] । स्वयंवरे तदा वत्स विवाहे चैकविंशतिः ॥ १९
एतत्ते सर्वमाख्यातं तस्यास्तु पूर्वचेष्टितम् । तया पापं कृतं घोरं गृहभङ्गाख्यमेव च ॥ २०

उज्ज्वल उवाच—

प्लक्षद्वीपस्य भूपस्य दिवोदासस्य सा सुता । केन पुण्यप्रभावेन तया प्राप्तं महत्कुलम् ॥ २१
एवं मे संशयस्तात वर्तते प्रब्रवीतु मे । एवं पापसमाचारा कथं जाता नृपात्मजा ॥ २२

कुञ्जल उवाच—

चित्रायाश्चेष्टितं पुण्यं सर्वं ते प्रवदाम्यहम् । यत्कृतं हि तया पूर्वं तच्छृणुष्व महामते ॥ २३
कश्चित्सिद्धः समायातो भ्रममाणो महीतलम् । कुचेलो वस्त्रहीनश्च कक्षाधारः सुदण्डकः ॥ २४
कौपीनेन समायुक्तो दिग्वासाः पाणिपात्रकः । गृहद्वारं समाश्रित्य चित्रायाः परिसंस्थितः ॥२५
स मौनी सर्वमुण्डश्च जितात्मा विजितेन्द्रियः । निराहारो जिताहारः सर्वतत्त्वार्थदर्शकः ॥ २६
दूराध्वानपरिश्रान्तश्चिन्तयाऽऽकुलमानसः[3] । श्रमेण खिद्यमानश्च[4] तृष्णार्तश्च सुपुत्रक ॥ २७
चित्राद्वारं समागत्य च्छायामाश्रित्य संस्थितः । तया दृष्टो महात्माऽसौ चित्रया श्रमपीडितः २८
सेवां[5] चक्रे दैवदिष्टा तस्य चैव महात्मनः । पादप्रक्षालनं कृत्वा दत्त्वा चाऽऽसनमुत्तमम् ॥ २९
आस्यतामासने विप्र सुखेनापि सुकोमले । क्षुधापनोदनार्थं हि भुज्यतामन्नमुत्तमम् ॥
स्वेच्छया परितुष्टश्च शीतलं तूदकं पिब ॥ ३०
एवमुक्त्वा तथा कृत्वा देववत्पूज्य तं सुत । अङ्गसंवाहनं कृत्वा नाशितः श्रम एव च ॥ ३१
एवं तया सत्कृतस्तु भुक्त्वा पीत्वा द्विजोत्तम । सिद्धस्तस्यै प्रसन्नोऽभूत्सर्वतत्त्वार्थदर्शकः ॥ ३२
कियत्कालं स धर्मात्मा तस्या गेहे स्थिरोऽभवत्। स्वेच्छया चाऽऽगतः पुत्र यथा योगी तथा गतः

* एतच्चिह्नान्तर्गतः पाठः क. ख.घ.ङ.च.छ.झ.ट. ट. ड. ढ. पुस्तकस्थः ।

१ घ. ङ. ट. ठ. ड. ढ. शासिता । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °ताः । दिव्यादेव्या मयाऽऽख्यातं यथा मे पृच्छितं त्वया । ए° । ३ क. ख. घ. ङ. च. छ. झ. ठ. ड. ढ. °न्त आतपाकु° । ड. °न्त आर्तव्याकु° । ४ ग. ज. म. ट. म्रियमाणश्च । ५ क. ख. घ. ङ. घ. छ. झ. ए. ठ ड. ढ. कृपां ।

गते तस्मिन्महाभागे सिद्धे चैव महात्मनि । सा चित्रा मरणं प्राप्ता स्वकर्मवशमागता ॥ ३४
शासिता धर्मराजेन महादण्डैः सुदुःखदैः । सा चित्रा नरकं प्राप्ता वेदनाव्रातदायकम् ॥ ३५
भुक्त्वा दुःखं स्वकर्मोत्थं सार्धं युगसहस्रकम् । भोगान्ते तु पुनर्जन्म संप्राप्तं मानुषस्य च ॥ ३६
सर्वसङ्गजितः सिद्धो दिव्येनापि स्वतेजसा । तस्यै पुण्यप्रसादेन प्राप्तं पुण्येन तत्कुलम् ॥ ३७
क्षत्रियाणां महाराज्ञो दिवोदासस्य वै गृहे । दिव्यादेवी वरापत्यं संजातं तस्य मानद ॥ ३८
सा हि दत्तवती चान्नं जलं पुण्यं महात्मने । तस्य पुण्यस्य माहात्म्यात्प्राप्तः पुण्यफलोदयः॥३९
पिबते शीतलं तोयं मिष्टान्नं च भुनक्ति वै । दिव्यान्भोगान्प्रभुञ्जाना वर्तते पितृमन्दिरे ॥ ४०
तस्य प्रसादाद्विमर्षे राजकन्या व्यजायत । पापकर्मस्वभावाद्वा गृहभङ्गान्महामते ॥
वैधव्यं भुञ्जते सा तु दिव्यादेवी सुपुत्रक ॥ ४१
एतत्ते सर्वमाख्यातं दिव्यादेव्याः सुचेष्टितम् । अन्यत्किं ते प्रवक्ष्यामि पृच्छयतां तद्वदाम्यहम् ४२

उज्ज्वल उवाच—

कथं सा मुच्यते शोकान्महादुःखाद्वदस्व मे । सा स्याच्च कीदृशी बाला महादुःखेन पीडिता ४३
तत्सुखं कीदृशं तस्माद्विपाकश्च भविष्यति । एतन्मे संशयं तात सांप्रतं छेत्तुमर्हसि ॥ ४४
कथं सा लभते मोक्षं तं चोपायं वदस्व मे । एकाकिनी महाभागा महारण्ये प्ररोदिति ॥ ४५

विष्णुरुवाच—

पुत्रवाक्यं महच्छ्रुत्वा क्षणमेकं विचिन्त्य सः । प्रत्युवाच महाप्राज्ञः कुञ्जलः पुत्रकं प्रति ॥ ४६
शृणु वत्स महाभाग सत्यमेतद्वदाम्यहम् । पापयोनिं तु संप्राप्यै पूर्वकर्मसमुद्भवाम् ॥
तिर्यक्त्वे न च मे ज्ञानं नष्टं संप्रति पुत्रक ॥ ४७
अस्यं वृक्षस्य सङ्गाच्च प्रयतस्य महात्मनः । रेवायाश्च प्रसादेन विष्णोश्चैव प्रसादतः ॥ ४८
येन सा लभते ज्ञानं मोक्षस्थानं निवर्तते(?) । उपदेशं प्रवक्ष्यामि मोक्षमार्गमनुत्तमम् ॥ ४९
यास्यते कल्मषान्मुक्ता यथा हेम हुताशनात् । शुद्धं च जायते वत्स सङ्गाद्वहेः स्वरूपवर्तं ॥ ५०
हरेर्ध्यानान्महाप्राज्ञ शीघ्रं तस्य महात्मनः । जपाद्व्रताद्यथा पापं प्रशमं याति नान्यथा ॥ ५१
[*मदं त्यजति नागेन्द्रो भयात्सिंहस्य वै यथा] । नामोच्चारेण [† कृष्णस्य तत्प्रयाति हि किल्बिषम्
तेजसा वैनतेयस्य विषहीना इवोरगाः । ब्रह्महत्यादिकाः पापाः प्रशमं यान्ति नान्यथा ॥ ५३
नामोच्चारेण ] तत्पापं चक्रपाणेः प्रयाति वै । यदा नामशतं पुण्यमघराशिविनाशनम् ॥
सा जपेत्सुस्थिरा भूत्वा कामक्रोधविवर्जिता ॥ ५४
सर्वेन्द्रियाणि संयम्य त्वात्मज्ञानेन गोपयेत् । तस्य ध्यानं प्रविष्टा सा एवंभूता समाहिता ॥ ५५
सा जपेत्परमं ज्ञानं तदा मोक्षं प्रयाति च । तन्मनास्तत्पदे लीना योगयुक्ता यदा भवेत् ॥ ५६

* एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

१ क. ख. च. झ. ड. च । पूर्वं संपूजितः सिद्धः शुद्धेनापि सुचेतसा । ङ. ढ. च । पूर्वं संपूजितः सिद्धस्तया पुण्यतां वरः । त° । २ क. ख. ङ. च. छ. झ. ड. ढ. °स्य कर्मविपाकोऽयं प्रा° । ३ ङ. °कन्याऽभवद्वरा । पा° । ४ म. °षम्यं सा गताऽरण्ये पापभोगात्सुपु° । ५ ङ. °तेऽभीष्टं त । ६ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. सूत उवाच । ७ छ. झ. °प्य स्मृतिभ्रंशमभून्मम । ति° । ङ. °प्य स्मृतिभ्रंशश्च मेऽभवत् । ति° । ङ. ढ. प्य बुद्धिभ्रंशमभून्मम । ति° । ८ क. ख. ङ. च. छ. झ. °स्य देवप्रसङ्गाच्च प्रणवस्य । ९ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. महात्मनः । १० ङ. °तु । °ातुर्ध्या° ।

उज्ज्वल उवाच—

वद तात परं ज्ञानं प्रथमं मम सांप्रतम् । पश्चाद्ध्यानं व्रतं पुण्यं नाम्नां शतमथापि वा ॥ ५७

कुञ्जल उवाच—

परं ज्ञानं प्रवक्ष्यामि यन्न दृष्टं तु केनचित् । श्रूयतां पुत्र कैवल्यं केवलं दुःखवर्जितम् ॥ ५८

सूत उवाच—

यथा दीपो निवातस्थो निश्चलो वायुवर्जितः । प्रज्वलन्नाशयेत्सर्वमन्धकारं महामते ॥ ५९
तद्वद्दोषविहीनात्मा भवत्येव निराश्रयः । निराशो निश्चलो वत्स न मित्रं न रिपुस्तदा ॥ ६०
न शोको न च हर्षश्च न लोभो न च मत्सरः । संभ्रमालापमोहैश्च सुखदुःखैर्विमुच्यते ॥ ६१
विषयेष्वपि सर्वेषु इन्द्रियाणि न भुञ्जते । तदा स केवलो जातः कैवल्यत्वं प्रजायते ॥ ६२
अग्निकर्मप्रसङ्गेन दीपस्तैलं प्रशोषयेत् । वर्त्याधारेण राजेन्द्र निस्तमो वायुवर्जितः ॥ ६३
कज्जलं वमते पश्चात्तैलस्यापि महामते । [*कृष्णा सा दृश्यते रेखा दीपस्याग्रे महामते] ॥ ६४
स्वयमाकर्षते तैलं तेजसा निर्मलो भवेत् । देहवर्तिस्थितस्तद्वत्कर्मतैलं प्रशोषयेत् ॥ ६५
विषयान्कज्जलं कृत्वा प्रत्यक्षान्संप्रदर्शयेत् । जाप्येन निर्मलो भूत्वा स्वयमेव प्रकाशयेत् ॥ ६६
क्रोधादिभिः क्लेशसंज्ञैर्वायुभिः परिवर्जितः । निस्पृहो निश्चलो भूत्वा तेजसा स्वयमुज्ज्वलेत् ६७
त्रैलोक्यं पश्यते सर्वं स्वस्थानस्थः स्वतेजसा । [† केवलं* ज्ञानरूपोऽयं मया ते परिकीर्तितः ६८
ध्यानं चैव प्रवक्ष्यामि द्विविधं तस्य चक्रिणः] । केवलं ज्ञानरूपेण दृश्यते ज्ञानचक्षुषा ॥ ६९
योगयुक्ता महात्मानः परमार्थपरायणाः । यं पश्यन्ति यतीन्द्रास्ते सर्वज्ञं सर्वदर्शकम् ॥ ७०
हस्तपादादिहीनश्च सर्वत्र परिगच्छति । सर्वं गृह्णाति त्रैलोक्यं स्थावरं जङ्गमं सुत ॥ ७१
मुखनासाविहीनस्तु घ्राति भुङ्क्ते हि पुत्रक । अकर्णः शृणुते सर्वं सर्वसाक्षी जगत्पतिः ॥ ७२
अरूपो रूपसंपन्नः पञ्चवर्गसमन्वितः । सर्वलोकस्य यः प्राणः पूजितः स चराचरैः ॥ ७३
अजिह्वो वदते सर्वं वेदशास्त्रानुगं सुत । अत्वचः स्पर्शमेवापि सर्वेषामेव जायते ॥ ७४
सदानन्दो विरक्तात्मा एकरूपो निराश्रयः । निर्जरो निर्ममो व्यापी सगुणो निर्गुणोऽमलः॥ ७५
अवश्यः सर्ववश्यात्मा सर्वदः सर्ववित्तमः । तस्य ध्याता न चैवास्ति सर्वैः सर्वमयो विभुः ७६
एवं सर्वमयं ध्यानं पश्यते यो महात्मनः । [*स याति परमं स्थानममूर्तममृतोपमम् ॥] ७७
द्वितीयं तु प्रवक्ष्यामि ह्यस्य ध्यानं महात्मनः । मूर्ताकारं तु साकारं निराकारं निरामयम् ॥ ७८
ब्रह्माण्डं सर्वमतुलं वासितं यस्य वासना । (?) स तस्माद्वासुदेवेति उच्यते मम नन्दन ॥ ७९
वर्षमाणस्य मेघस्य यद्वर्षं तस्य तद्भवेत् । सूर्यतेजःप्रतीकाशं चतुर्बाहुं सुरेश्वरम् ॥ ८०

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ.च.छ.झ.ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो घ. ट. ड. ढ. पुस्तकस्थः ।
* अत्र "ङ" पुस्तके, अधिको ग्रन्थो दृश्यते स संगतिहीनो भात्यत एव टिप्पणीरूपेण दीयते "केवलं ज्ञानरूपोऽसौ विश्वात्मा प्रीयतामिति । अनेन विधिना विद्वान्कुर्याद्यः शुभमुत्तमम् । इदं पठेद्यः शृणुयान्मुहूर्तं पश्येत्प्रसङ्गादपि दी···मानम् । सोऽप्यत्र संघातविमुक्तदेहः प्राप्नोति विद्याधरनायकत्वम् । यावत्समाः सप्त नरः करोति यः सप्तमीं सप्तविधानयुक्ताम्" इति ।
* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ झ मलवर्जितम् । २ ङ. विविधं । ३ छ. झ. °ते तेन च° । ४ क. ख. च. ढ. °न्ति विनिद्रास्तु यतयः स° । छ. °न्ति विनिद्रान्तु सर्वगं स° । ५ अ. °र्वकृत्परि° । ६ क. ख. ङ. च. छ. झ. ढ. °र्गवशं गतः । ७ अ. ब्रह्मणः सर्वमतुलावा° । ८ अ. °सिता य° ।

दक्षिणे शोभते शङ्खो हेमरत्नविभूषितः । सूर्यबिम्बसमाकारं चक्रं पद्मप्रतिष्ठितम् ॥ ८१
कौमोदकी गदा तस्य महासुरविनाशिनी । वामे च शोभते वत्स करे तस्य महात्मनः ॥ ८२
महापद्मं तु गन्धाढ्यं तस्य दक्षिणहस्तगम् । शोभमानं सदा ध्यायेत्सायुधं कमलाप्रियम् ॥ ८३
कम्बुग्रीवं वृत्तमास्यं पद्मपत्रनिभेक्षणम् । राजमानं हृषीकेशं दशनै रत्नसंनिभैः ॥ ८४
गुडाकेशाः सन्ति यस्य अधरं बिम्बसंनिभम् । शोभते पुण्डरीकाक्षः किरीटेनापि पुत्रक ॥ ८५
विशालेनापि रूपेण केशवस्तु सुचक्षुषा । कौस्तुभेनापि वै तेन राजमानो जनार्दनः ॥ ८६
सूर्यतेजःप्रकाशाभ्यां कुण्डलाभ्यां प्रभाति च । श्रीवत्साङ्केन पुण्येन सर्वदा राजते हरिः ॥ ८७
केयूरकङ्कणैर्हारैर्मौक्तिकैर्ऋक्षसंनिभैः । वपुषा भ्राजमानस्तु विजयो जयतां वरः ॥ ८८
राजते सोऽपि गोविन्दो हेमवर्णेन वाससा । [*मुद्रिकारत्नयुक्ताभिरङ्गुलीभिर्विराजते ॥ ८९
सर्वायुधैः सुसंपूर्णो दिव्यैराभरणैर्हरिः । वैनतेयसमारूढो लोककर्ता जगत्पतिः ॥ ९०
एवं तं ध्यायते नित्य]मनन्यमनसा नरः । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ९१
एतत्ते सर्वमाख्यातं ध्यानमेव जगत्पतेः । व्रतं चैव प्रवक्ष्यामि सर्वपापनिवारणम् ॥ ९२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे षडशीतितमोऽध्यायः ॥ ८६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७३३८

---

अथ सप्ताशीतितमोऽध्यायः ।

---

कुञ्जल उवाच—

व्रतभेदान्प्रवक्ष्यामि यैश्च आराध्यते हरिः । जया च विजया चैव जयन्ती पापनाशिनी ॥ १
त्रिःस्पृशा वञ्जुली चान्या तिलगन्धा तथाऽपरा । अखण्डा द्वादशी चान्या मनोरक्षा सुपुत्रक ॥ २
दिव्यप्रभावाः सन्त्यन्यास्तिथयः पुत्रपौत्रदाः । अशून्यशयनं चान्यज्जन्माष्टमीमहाव्रतम् ॥ ३
एतैर्व्रतैः समाचीर्णैः पापं दूरं प्रयाति च । प्राणिनां नात्र संदेहः सत्यं सत्यं वदाम्यहम् ॥ ४
स्तोत्रं तस्य प्रवक्ष्यामि पापराशिप्रणाशनम् । सुपुत्र शतनामाख्यं नराणां गतिदायकम् ॥ ५
तस्य देवस्य कृष्णस्य शतनामाख्यमुत्तमम् । संप्रत्येव प्रवक्ष्यामि तच्छृणुष्व सुपुत्रक ॥ ६
विष्णोर्नामशतस्यापि ऋषिं छन्दो वदाम्यहम् । देवं चैव महाभाग सर्वपातकशोषणम् ॥ ७
[*विष्णोर्नामशतस्यापि ऋषिर्ब्रह्मा प्रकीर्तितः । ओंकारो देवता प्रोक्तश्छन्दोऽनुष्टुप्तथैव च ॥
सर्वकामिकसंसिद्ध्यै मोक्षे च विनियोगकः ॥ ८
नमाम्यहं हृषीकेशं केशवं मधुसूदनम् । सूदनं सर्वदैत्यानां नारायणमनामयम् ॥ ९

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ढ. ठ. ड. ढ. पुस्तकस्थः । * एतदादिविनियोगक इत्यन्त-ग्रन्थस्थाने 'अस्य विष्णोः शतनामस्तोत्र[मन्त्र]स्य ब्रह्मा ऋषिः सदोंकारो देवताऽनुष्टुप्छन्दः सर्वकामनासिद्ध्यर्थे सर्वपापापक्षयार्थे विनियोगः' इत्ययं ग्रन्थः, ट. पुस्तके दृश्यते । क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकेष्वप्ययं ग्रन्थः किंचिद्भिन्नतया दृश्यते ।

---

१ ञ. पद्मं प्र° । २ ङ. विद्रुमाकृति । ३ क. ख. ङ. च. ढ. सुवर्चसा । छ. झ. सुवक्षसा । ४ ङ. °णैर्दामैर्मौ° । ५ ञ. न्याऽनिलदग्धा व° । ६ क. ख. च. धारका । ७ क. मनोरथा । ८ क. ख. च. छ. झ. ड. ढ. °क । एकादश्यास्तु भेदाश्च सन्ति पुत्र ह्यनेकधा । अ° ।

जयन्तं विजयं कृष्णमनन्तं वामनं तथा । विष्णुं विश्वेश्वरं पुण्यं विश्वात्मानं सुरार्चितम् ॥ १०
अनघं त्वघहर्तारं नारसिंहं श्रियः प्रियम् । श्रीपतिं श्रीधरं श्रीदं श्रीनिवासं महोदयम् ॥ ११
श्रीरामं माधवं मोक्षं क्षमारूपं जनार्दनम् । सर्वज्ञं सर्ववेत्तारं सर्वेशं सर्वदायकम् ॥ १२
हरिं मुरारिं गोविन्दं पद्मनाभं प्रजापतिम् । आनन्दं ज्ञानसंपन्नं ज्ञानदं ज्ञानदायकम् ॥ १३
अच्युतं सबलं चन्द्रवक्त्रं व्याप्तपरावरम् । योगेश्वरं जगद्योनिं ब्रह्मरूपं महेश्वरम् ॥ १४
मुकुन्दं चापि वैकुण्ठमेकरूपं कविं ध्रुवम् । [*वासुदेवं महादेवं ब्रह्मण्यं ब्राह्मणप्रियम् ॥ १५
गोप्रियं गोहितं यज्ञं यज्ञाङ्गं यज्ञवर्धनम् । यज्ञस्यापि सुभोक्तारं वेदवेदाङ्गपारगम् ॥ १६
वेदज्ञं वेदरूपं तं विद्यावासं सुरेश्वरम् ] । प्रत्यक्षं च महाहंसं शङ्खपाणिं पुरातनम् ॥ १७
पुष्करं पुष्कराक्षं च वाराहं धरणीधरम् । प्रद्युम्नं कामपालं च व्यासध्यातं महेश्वरम् ॥ १८
सर्वसौख्यं महासौख्यं सांख्यं च पुरुषोत्तमम् । योगरूपं महाज्ञानं योगीशमजितं प्रियम् ॥ १९
असुरारिं लोकनाथं पद्महस्तं गदाधरम् । गुहावासं सर्ववासं पुण्यवासं महाजनम् ॥ २०
[*वृन्दानाथं बृहत्कायं पावनं पापनाशनम् । गोपीनाथं गोपसखं गोपालं गोगणाश्रयम् ॥ २१
परात्मानं पराधीशं कपिलं कार्यमानुषम्] । नमामि निखिलं नित्यं मनोवाक्कायकर्मभिः ॥ २२

नाम्नां शतेनापि तु पुण्यकर्ता यः स्तौति कृष्णं मनसा स्थिरेण ॥
स याति लोकं मधुसूदनस्य विहाय दोषानिह पुण्यभूतः ॥ २३

नाम्नां शतं महापुण्यं सर्वपातकशोधनम् । अनन्यमनसा ध्यायेज्जपेद्ध्यानसमन्वितः ॥ २४
नित्यमेव नरः पुण्यं गङ्गास्नानफलं लभेत् । तस्मात्तु सुस्थिरो भूत्वा समाहितमना जपेत् ॥ २५
त्रिकालं यो जपेन्मर्त्यो नियतो नियमे स्थितः । अश्वमेधफलं तस्य जायते नात्र संशयः ॥ २६
एकादश्यामुपोष्यैव पुरतो माधवस्य यः । जागरे प्रजपेन्मर्त्यस्तस्य पुण्यं वदाम्यहम् ॥
पुण्डरीकस्य यज्ञस्य फलमाप्नोति मानवः ॥ २७
तुलसीसंनिधौ स्थित्वा मनसा यो जपेन्नरः । राजसूयफलं भुङ्क्ते वर्षेणापि च मानवः ॥ २८
शालग्रामशिला यत्र यत्र द्वारावतीशिला । उभयोः संनिधौ जाप्यं कर्तव्यं सुखमिच्छता ॥ २९
बहुसौख्यं प्रभुक्त्वैव कुलानां शतमेव च । एकेन चाधिकं मर्त्य आत्मना सह तारयेत् ॥ ३०
कार्तिके स्नानकर्ता यः पूजयेन्मधुसूदनम् । पठेत्तत्पुरतः स्तोत्रं स याति परमां गतिम् ॥ ३१
माघस्नायी हि संपूज्य भक्त्या च मधुसूदनम् । ध्यायेच्चैव हृषीकेशं जपेद्वाऽथ शृणोति च ॥ ३२
सुरापानादिपापानि विहाय परमं पदम् । विना विघ्नं नरः पुत्र संप्रयाति जनार्दनम् ॥ ३३
श्राद्धकाले हि यो मर्त्यो भुञ्जतां च द्विजन्मनाम् । यो जपेच्च शतं नाम्नां स्तवं पापविनाशनम् ॥
पितरस्तुष्टिमायान्ति तृप्ता यान्ति परां गतिम् ॥ ३४

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः * एतच्चिह्नान्तर्गतोऽयं पाठो ग. पुस्तक एव ।

१ क. ख. ङ. च. छ. झ. ड. ढ. विश्वाधारं । २ ङ. श्रीकरं । ३ ङ. विज्ञानं । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °पं जगत्पतिम् । ५ क. ख. ङ. च. छ. झ. ड. ढ. °म् । अव्यक्तं तं म° । ६ ग. व्यासं धन्यं म° । ७ ङ. °ख्यं सांख्यगम्यं दैत्यघ्नं पु° । ८ क. ख. ङ. च. ढ. °ख्यं मोक्षं च । ९ क. ख. ङ. च. ड. ढ. योगिनां गतिदं । छ. झ. योगिनां मतिदं । घ. ढ. ठ. योगिनामजितं । १० क. ख. ङ. च. छ. झ. ढ. °म् । मुरारिं लोकनाथं तं प° । ११ घ. ट. ठ. पुण्यहासं । छ. झ. ढ. पुष्पहासं । १२ क. ख. घ. ङ. चं. छ. झ. ट. ठ. ड. ढ. °त्यं नारायणमनामयम् । ना° । १३ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °म् । पूजयेच्च ह° ।

ब्राह्मणो वेदविद्यैव क्षत्रियो विजयी भवेत् । धनेधान्यं प्रभुञ्जीत वैश्यो जपति यः सदा ॥ ३५
शूद्रः सुखं प्रभुङ्क्ते च ब्राह्मणत्वं च गच्छति । प्राप्य जन्मान्तरं वत्स वेदविद्यां प्रविन्दति ॥ ३६
सुखदं मोक्षदं स्तोत्रं जप्तव्यं च न संशयः । केशवस्य प्रसादेन सर्वसिद्धो भवेन्नरः ॥ ३७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७३७५

---

अथाष्टाशीतितमोऽध्यायः ।

---

कुञ्जल उवाच—

व्रतं स्तोत्रं महाध्यानं ज्ञानं चैव सुपुत्रक । मयाऽऽख्यातं तवाग्रे च विष्णोः पापप्रणाशनम् ॥ १
एवं चतुष्टयं सो हि सदा पुण्यं समाचरेत् । प्रयाति वैष्णवं लोकं सर्वसौख्यप्रदायकम् ॥ २
इतो गत्वा भवान्वत्स दिव्यादेवीं प्रबोधय । अशून्यशयनं नाम व्रतराजं वदस्व ताम् ॥
समुद्धर महापापाद्राजकन्यां यशस्विनीम् ॥ ३
त्वया पृष्टं मयाऽऽख्यातं पुण्यदं पापनाशनम् । गच्छ गच्छ महाभाग इत्युक्त्वा विरराम सः ४

विष्णुरुवाच—

एवमुक्तश्चोज्ज्वलस्तु सुपित्रा कुञ्जलेन हि । प्रणम्य पादौ धर्मात्मा मातापित्रोर्महामतिः ॥
जगाम त्वरितो राजन्प्लक्षद्वीपं स उज्ज्वलः ॥ ५
तं गिरिं सर्वतोभद्रं नानाधातुसमाकुलम् । नानारत्नमयैस्तुङ्गैः शिखरैरुपशोभितम् ॥ ६
नानाप्रवाहसंपूर्णैरुदकैर्निर्मलैर्नृप । [*नद्यः सन्ति विशालास्तास्तस्मिन्गिरिवरोत्तमे ॥ ७
किन्नरास्तत्र गायन्ति गन्धर्वाः सुस्वरं नृप ]। अप्सरोभिः समाकीर्णं देववृन्दैः समाश्रितम् ॥ ८
सिद्धचारणसंघुष्टं मुनिवृन्दैरुपासितम् । नानापक्षिनिनादैश्च सर्वत्र परिनादितम् ॥ ९
एवं गिरिं समासाद्य उज्ज्वलो लघुविक्रमः। सुस्वरेणापि तां दिव्यादेवीं तत्र समास्थिताम्॥ १०
रोरूयमाणां तां प्राज्ञो वचनं चेदमब्रवीत् । का त्वं भवसि कस्यासि कस्माद्रोदिषि सांप्रतम्॥ ११
कस्मात्खिन्ना महाभागे केन ते विप्रियं कृतम्। समाचक्ष्व त्वमनघे सर्वं दुःखस्य कारणम् ॥ १२

दिव्यादेव्युवाच—

विपाको हि महाभाग कर्मणां मम सांप्रतम् । इह तिष्ठामि दुःखेन वैधव्येन समन्विता ॥ १३
[*भवान्को हि महाभाग कृपया मम पीडितः। पक्षिरूपधरो भद्र सुस्वरं परिभाषसे ॥ १४
एवमाकर्ण्य तत्सर्वं भाषितं राजकन्यया । अहं पक्षी महाभागे न सिद्धो नापि ज्ञानवान् ॥ १५
रुदमानां महालापैस्त्वां दृष्ट्वा तु मया इह । तदा पृच्छाम्यहं देवि वद मे कारणं त्विह]॥ १६

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ढ. °यो विन्दते महीम् । ध° । २ ट. °नपुर्द्धि प्र° । ३ म. यो । ४ क. ख. ङ. च. ढ. °कं देवानामपि दुर्लभम् । ५ क. ख. च. छ. झ. ढ. °वृन्दैरुपासित° । ६ क. ख. ङ. च. छ. झ. ढ. °न्दैरलंकृत° । ७ ङ. ड. ढ. °पि सा कन्या गिरौ तस्मिन्प्ररोदिति । रो° । ८ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. कल्याणि । ९ ङ. °स्मास्थितं म° । १० क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °क्ष्व ममाद्यैव स° ।

पितुर्गेहे यथावृत्तमात्मवृत्तान्तमेव हि । तया चाऽऽवेदितं सर्वं यथासंख्येन दुःखदम् ॥ १७
तदाकर्ण्य समासेन उज्ज्वलो हि महामनाः । तामुवाच महापक्षी दिव्यादेवीं सुदुःखिताम् ॥ १८
यथा तव विवाहे च भर्तारो मरणं गताः । स्वयंवरनिमित्तेन क्षयं गतं च क्षत्रियम् ॥ १९
एतत्ते चेष्टितं सर्वं मया पितरि भाषितम् । अन्यजन्मकृतं कर्म तव पापं सुलोचने ॥ २०
मम पित्रा ममाग्रे च त्वत्कर्म परिभाषितम् । [*तेन दोषेण सम्यक्त्वं लिप्ताऽसि तु वरानने २१
एतावत्कारणं सर्वं शुकस्य परिपृच्छितम् । पूर्वं कर्मविपाकं च भुङ्क्ष्व त्वं च स्वमाशु च] ॥ २२
अथ सा तद्वचः श्रुत्वा नृपकन्योज्ज्वलस्य तु । प्रत्युवाच महात्मानं ब्रुवन्तं पक्षिणं शुभम् ॥ २३
माननीयोऽसि मे पक्षिन्कृपां कुरु मयि प्रभो । कथयस्व प्रसादेन तस्य पापस्य निष्कृतिम् ॥२४
प्रायश्चित्तं सुपुण्यं च मम पातकशोधनम् । येन प्राप्नोम्यहं पुण्यं विशुद्धाशेषकिल्बिषा ॥
[†प्रायश्चित्तं महाप्राज्ञ वदस्व त्वं प्रसादतः] ॥ २५

उज्ज्वल उवाच—

त्वदर्थं तु महाभागे कुञ्जलः पृच्छितो मया । समाख्यातं तु तेनापि प्रायश्चित्तमनुत्तमम् ॥ २६
तत्कुरुष्व महाभागे सर्वपातकशोधनम् । ध्यायस्व हि हृषीकेशं शतनामजपं कुरु ॥ २७
जपयज्ञेन वै देवि कुरु व्रतमनुत्तमम् । अशून्यशयनं नाम महापातकशोधनम् ॥ २८
समाचष्टे स धर्मात्मा सर्वज्ञानप्रकाशकम् । ध्यानं स्तोत्रं स्वरूपं च विष्णोश्चैव महात्मनः ॥ २९

विष्णुरुवाच—

तस्मात्सा जगृहे सर्वं संस्थिता निर्जने वने । सर्वद्वंद्वविनिर्मुक्ता संजाता तपसि स्थिता ॥ ३०
[*व्रतं चक्रे जिताहारा निराधारा सुदुःखिता ] । कामक्रोधविहीना च वर्गं संयम्य नित्यशः ॥
इन्द्रियाणां महाराज महामोहं निरस्य च ॥ ३१
अब्दे चतुर्थके प्राप्ते सुप्रसन्नो जनार्दनः । तस्यै संदर्शयामास स्वरूपं वरदः प्रभुः ॥ ३२

सूत उवाच—

इन्द्रनीलघनश्यामं शङ्खचक्रगदाधरम् । सर्वाभरणशोभाढ्यं पद्महस्तं महेश्वरम् ॥ ३३
बद्धाञ्जलिपुटा भूत्वा वेपमाना निराश्रया । उवाच गद्गदैर्वाक्यैर्ननाम मधुसूदनम् ॥ ३४
तेजसा तव दिव्येन ध्यातुं शक्नोमि नैव हि । दिव्यरूपो भवान्कस्त्वं तद्वद कृपया प्रभो ॥ ३५
[†कथयस्व प्रसादेन किमत्र तव कारणम् । सर्वमेव प्रसादेन प्रब्रवीहि महामते ॥ ३६
देवमेव विजानामि तेजसा इङ्गितैस्तव । ज्ञानहीना जगन्नाथ न जाने रूपनामनी ॥
किं च ब्रह्मा भवान्विष्णुः किं वा शंकर एव वा ॥] ३७
एवमुक्त्वा प्रणम्यैव दण्डवद्धरणीं गता । तामुवाच जगन्नाथः प्रणतां राजनन्दिनीम् ॥ ३८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो घ. ङ. ड. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. झ. ड. ढ. पुस्तकस्थः ।

---

१ ड. महामतिः । २ क. ख. ङ. च. ढ. °या तु परिवेदित° । ड. °याऽपि परिवेदित° । ३ घ. ङ. ट. ठ. ड. °प्रे तत्कृपया प्° । ४ छ. झ. प्रभस्य । ५ क. ख. ङ. च. छ. झ. ड. ढ. पुनः । ६ क. छ. झ. ड. ढ. °भू । प्रणता दीनया वाचा कुरु तात कृपां मम । क° । ७ क. ख. घ. ङ. च. छ. झ. ठ. ढ. °ढ । भव ज्ञानपरा नित्यं कु° । ८ क. ख. घ. ङ. ट. ठ. ड. °स्ये स दातुकामस्तु वरं वरदनायकः । मू° । ९ क. ख. ङ. च. छ. झ. ड. ढ. स्यातुं ।

श्रीभगवानुवाच—

त्रयाणामपि देवानामन्तरं नास्ति शोभने । ब्रह्मा समर्चितो येन शंकरो वा वरानने ॥
तेनाहमर्चितो नित्यं नात्र कार्या विचारणा ॥ ३९
एतौ ममाभिन्नतरौ नित्यं चापि त्रिरूपवान् । अहं देवि हृषीकेशः कृपया तव चाऽऽगतः ॥ ४०
स्तवेनानेन पुण्येन व्रतेन नियमेन च । संजाता कल्मषैर्हीना वरं वरय शोभने ॥ ४१

दिव्यादेव्युवाच—

जयाजित हृषीकेश कृष्ण क्लेशापहारक । नमामि ते पदद्वंद्वं मामुद्धर भवार्णवात् ॥ ४२
एष एवास्ति मे कामो वरणीयः प्रसीद मे । तव पादौ भजिष्यामि भक्तिं देहि ममानघ ॥ ४३
दर्शयस्व जगन्नाथ मोक्षमार्गं निरामयम् । दासत्वं देहि वैकुण्ठे यदि तुष्टो जनार्दन ॥ ४४

भगवानुवाच—

एवमस्तु महाभागे निर्धूताशेषकिल्बिषा । वैष्णवं परमं लोकं दुर्लभं योगिनां सदा ॥ ४५
गच्छ गच्छ महालोकं प्रसादान्मम सांप्रतम् । एवमुक्ता महाभागा माधवेन महात्मना ॥ ४६
दिव्यादेवी बभूद्दिव्या सूर्यतेजःसमप्रभा । पश्यतां सर्वलोकानां दिव्याभरणभूषिता ॥ ४७
दिव्यमालान्विता सा च मुक्ताहारविलम्बिनी । गता सा वैष्णवं लोकं दाहप्रलयवर्जितम् ॥ ४८
उज्ज्वलस्तु समायातः स्वगृहं हर्षसंयुतः । तत्सर्वं कथयामास पितरं प्रति सत्तमः ॥ ४९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थेऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७४२४

---

अथोननवतितमोऽध्यायः ।

---

विष्णुरुवाच—

कुञ्जलस्तु ततः श्रुत्वा द्वितीयं वाक्यमब्रवीत् । भवान्कथय तत्सर्वं किमपूर्वं च दृष्टवान् ॥
श्रुतवांश्चाप्यपूर्वं वा श्रोतुकामोऽस्मि सांप्रतम् ॥ १
एवं पित्रा समादिष्टः कुञ्जलेन समुज्ज्वलः । पितरं प्रत्युवाचाथ विनयावनतस्ततः ॥ २

समुज्ज्वल उवाच—

हिमवन्तं नगश्रेष्ठं देववृन्दनिषेवितम् । आहारार्थं प्रगच्छामि भवतश्चाऽऽत्मनः पितः ॥
[*पश्यामि कौतुकं नित्यं यन्न दृष्टं श्रुतं क्वचित् ] ॥ ३
गन्धर्वऋषिसंकीर्णमप्सरोभिः प्रशोभितम् । बहुकौतुकशोभाढ्यं मङ्गलं मङ्गलैर्युतम् ॥ ४
बहुपुष्पफलोपेतैर्वनैर्नानाविधैस्तथा । अनेककौतुकभरैर्मानसं परिराजते ॥ ५
तत्र दृष्टं मया तात अपूर्वं कौतुकं तदा । बहुहंससमाकीर्णो हंस एकः समागतः ॥ ६

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °णा । अभिन्नौ पूजितौ यैश्च तैरहं च प्रपूजितः । अ° । २ क. ख. घ. ङ. [च]. छ. झ. ट. ठ. ड. ढ. °तू । वरं मे दातुकामोऽसि चक्रपाणे प्र° । ३ क. ख च. छ. झ. ड. ढ. च दिव्यहा° । ४ घ. [ङ]. ठ. ड. सूत उवाच । ५ छ. देवासुरनि° । घ. ङ. देववृक्षनि° । ६ ङ. °दा । देवर्षिगणसं° । ७ क. ख. घ. ङ. च. छ. [झ]. ट. ठ. ड. ढ. °र्वं मानसान्तिके । ब° ।

स च कृष्णो महाभाग त्रयोऽप्यन्ये समागताः । सितेतरैश्चञ्चुपादैरन्यतःशुक्लविग्रहाः ॥ ७
चतस्रस्तत्र वै भार्या रौद्राकारा विभीषणाः । दंष्ट्राकरालसंकूरा ऊर्ध्वकेश्यो भयानकाः ॥
पश्चात्तेषां समायातास्तस्मिन्सरसि मानसे ॥ ८
कृष्णहंसास्तु संस्नाता मानसे तात मत्पुरः । विभ्रान्ताः परिश्रान्ये न स्नातास्तत्र मानसे ॥ ९
कृष्णान्हंसांस्तु संस्नाताञ्जहसुस्ताः स्त्रियस्तदा । ततः पूर्वं विनिष्क्रान्तो हंस एको महातनुः १०
पश्चात्त्रयो विनिष्क्रान्तास्तैश्चाहं समुपेक्षितः । विहायसा प्रयातास्ते विवदन्तः परस्परम् ॥ ११
तास्तु स्त्रियो महाभीताः समन्ताद्दिवि बभ्रमुः । विन्ध्यस्य शिखरे पुण्ये वृक्षच्छायासु पक्षिणः ॥
निषण्णास्तत्र ते सर्वे दग्धा दुःखै सुदारुणैः । तेषां संपश्यमानानां लुब्धकः समुपागतः ॥ १३
मृगयां क्रीडयित्वा तु बाणपाणिर्धनुर्धरः । शिलातलं समासाद्य निषसाद सुखेन वै ॥ १४
पश्चाद्भिल्ली समायाता अन्नमादाय चोदकम् । स्वप्रियं पश्यते तावत्सद्दशैर्लक्षणैर्युतम् ॥ १५
अत्यद्भुतं तया दृष्टं स्वकान्तस्तेजसाऽन्वितः । दिव्यतेजःसमाक्रान्तो यथा सूर्यो दिवि स्थितः ॥
[*पुंसमन्यं परिज्ञाय तं परित्यज्य सर्पिता ॥ १६

व्याध उवाच—

एह्येहि त्वं प्रिये चात्र कस्मान्मां त्वं न पश्यसि । क्षुधया पीड्यमानोऽहं त्वामहं चावलोकये॥१७
तस्य वाक्यं समाकर्ण्य शीघ्रं व्याधी समागता । भर्तुः पार्श्वे समासाद्य विस्मिता चाभवत्तदा]॥
कोऽयं तेजःसमाकारो देवोपमः समाह्वयेत् ॥ १८
तमुवाच ततो व्याधी भर्तारं दीप्ततेजसम् । अत्र किं ते कृतं वीर यद्भवान्दिव्यलक्षणः ॥ १९

सूत उवाच—

एवमाभाषितो व्याध्या व्याधः प्रियामभाषत । अहं ते वल्लभः कान्ते भवती च मम प्रिया ॥२०
कस्मान्मां नैव जानासि कथं शङ्कां प्रवर्तयेः । क्षुधया पीड्यमानोऽहं पयश्चान्नं प्रदीयताम् ॥२१

व्याध्युवाच—

बर्बरः कृष्णवर्णश्च रक्ताक्षः कृष्णकञ्चुकः । ईदृशश्चास्ति मे भर्ता सर्वसत्त्वभयंकरः ॥ २२
भवान्को दिव्यदेहस्तु प्रियेत्युक्त्वा समाह्वयेत् । एवं मे संशयं जातं वद सत्यं ममाग्रतः ॥ २३
कुलं नाम स्वकं गोत्रं क्रीडालिङ्गं तथैव च । समाचष्टे(ष्ट्व) प्रियायास्तु तस्याः प्रत्यय आगतः २४
प्रत्युवाचाथ सा व्याधी भर्तारं हृष्टमानसा । कस्मात्त्वेदृशः कायः श्वेतकञ्चुकधारकः ॥
कथं जातः समाचक्ष्व महातेजःसमन्वितः ॥ २५

सूत उवाच—

एवं संपृच्छ्यमानस्तु भार्यया मृगघातकः । प्रत्युवाच ततो लुब्धस्तां प्रियां सुखदायिनीम् ॥२६
नर्मदोत्तरकूले तु संगमश्चास्ति सुव्रते । आतपेनाऽऽकुलो जीवो मम जातस्तु सुप्रिये ॥ २७
अस्मिन्हि संगमे कान्ते श्रमश्रान्तोऽस्मि सत्वरम् । गतः स्नात्वा जलं पीत्वा पश्चादिह समागतः २८

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ ड. °ह्रातेजात्रयो° । २ ङ. °ताः । तादृशास्ते च बाला वा अन्ये शुभ्रा महीपते । च° । ङ. झ. ढ. °ताः । तादृशास्ते च नीला वा अन्ये शुभ्रा महीपते । च° । ३ म. °वोऽयं समुपागतः । त° । ४ क. ख. ङ. च. ङ. ढ. प्रियम° । ५ ड. °स्मान्न ज्ञायते कान्ते तस्माद्धास्यं प्रवर्तते । क्षु° । ६ क. ख. ङ. च. छ. झ. ढ. प्रासं । ७ क. ख. ङ. च. छ. झ. ड. ढ. °श्च ममाऽऽश्चर्यं प्रवर्तते । सू° ।

तदाप्रभृति मे काय ईदृशस्तेजसाऽऽवृतः । संजातो बहुशोभाढ्यः कञ्चुकः सुप्रभां गतः ॥ २९
तेनाऽऽख्याते कुलादौ च प्रत्यक्षं लक्षिते तथा । निश्चित्य संगमे पुण्यं विज्ञातं च तया ततः ३०
प्रत्युवाचाथ भर्तारं संगमं मम दर्शय । तव पश्चात्प्रदास्यामि भोजनं मानसंयुतम् ॥ ३१
इत्युक्तः प्रियया व्याधः सत्वरं प्रजगाम ह । संगमो दर्शितस्तस्यै तेनासौ पापनाशनैः ॥ ३२
सभार्यास्ते महाभाग पक्षिणो लघुविक्रमाः । ताभ्यां सार्धं ययुः सर्वे रेवासंगममुत्तमम् ॥ ३३
तेषां तु पश्यमानानां पक्षिणां मम पश्यतः । तयाऽपि स्नापितो भर्ता पुनः स्नाता हि साऽपि च ३४
दिव्यदेहधरौ चोभौ दिव्यकान्तिसमन्वितौ । पश्यतां पक्षिणां चैव दिव्यवस्त्रानुलेपनौ ॥ ३५
दिव्यमालाम्बरधरौ दिव्यगन्धानुलेपनौ । वैष्णवं यानमासाद्य मुनिगन्धर्वपूजितौ ॥ ३६
[*गतौ तौ वैष्णवं लोकं वैष्णवैः परिपूजितौ] । स्तूयमानौ महात्मानौ दंपती दृष्टवानहम् ॥ ३७
व्रजन्तौ स्वर्गमार्गेण कूजन्ति पक्षिणस्तदा । तीर्थराजवरं दृष्ट्वा हर्षयुक्ताक्षरैस्तथा ॥ ३८
चत्वारः कृष्णहंसास्ते संगमे पापनाशने । स्नात्वा वै भावशुद्धास्ते प्राप्ता उज्ज्वलतां तदा ॥ ३९
स्नात्वा पीत्वा जलं ते तु पुनर्बहिर्विनिर्गताः । ताश्च पत्न्यस्तदा कृष्णा मृतास्तत्स्नानमात्रतः ॥ ४०
क्रन्दमाना विचेष्टन्त्यो हाहाकारैर्भृशं पितः । यमलोकं गतास्तास्तु तात दृष्टा मया तदा ॥ ४१
उड्डीनास्तु ततो हंसाः स्वस्थानं प्रति जग्मिरे । एवं तात मया दृष्टं प्रत्यक्षं कथितं तव ॥ ४२
कृष्णवर्णा महाकाया धार्तराष्ट्रास्तु तत्प्रियाः । कथयस्व प्रसादेन के भविष्यन्ति वै पितः ॥ ४३
निर्गतान्मानसान्मध्याद्धार्तराष्ट्रान्वदस्व मे । [†के भविष्यन्ति मे तात कथयस्व च सांप्रतम्] ४४
कस्मात्ते कृष्णतां प्राप्ताः कस्माद्वै शुक्लतां पुनः । संप्राप्तास्तत्क्षणात्स्नाताः कस्मान्मृताश्च ताः स्त्रियः ॥
एवं वै संशयस्तात संजातो दारुणो मम । छेत्तुमर्हति चाद्यैव भवाञ्ज्ञानविचक्षणः ॥
प्रसादसुमुखो भूत्वा प्रणतस्य सदैव मे ॥ ४६
एवं संभाष्य पितरं विरराम समुज्ज्वलः । ततः प्रवक्तुमारेभे स शुकः कुञ्जलाभिधः ॥ ४७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे ऊननवतितमोऽध्यायः ॥ ८९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७४७१

---

अथ नवतितमोऽध्यायः ।

---

सूत उवाच—
एवं पुण्यतमं श्रुत्वा समुज्ज्वलसुभाषितम् । कुञ्जलः स हि धर्मात्मा प्रत्युवाच सुतं प्रति ॥ १
कुञ्जल उवाच—
संप्रवक्ष्याम्यहं तात श्रूयतां स्थिरमानसः । सर्वसंदेहविध्वंसं पवित्रं पापनाशनम् ॥ २
इन्द्रलोकप्रवृत्तं तं संवादं देवकौतुकम् । सभायां तस्य देवस्य इन्द्रस्यापि महात्मनः ॥ ३
एकदा तु महाप्राज्ञो नारदो मुनिसत्तमः । देवं द्रष्टुं सहस्राक्षं जगाम त्वरितस्तदा ॥ ४

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ.झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ ङ. °तो वज्रसंयुक्तः क° । ङ. छ. ढ. °तो वज्रसंयुक्तः कञ्चुकः शुभ्रतां ग° । २ ङ. °धस्तया सह ज° । ३ ङ. °नः । मुदितास्ते । ४ क. ख. ङ. च. छ. झ. ट. ठ. ड. ढ. °तौ । संजातौ पक्षिणां श्रेष्ठ दि° ।

तमागतं सहस्राक्षः सूर्यतेजःसमप्रभम् । ददर्श हर्षमापन्नः समुत्थाय महामतिः ॥ ५
ददावर्घ्यं च पाद्यं च भक्त्या प्रणतमानसः । बद्धाञ्जलिपुटो भूत्वा प्रणाममकरोत्तदा ॥ ६
आसने कोमले पुण्ये विनिवेश्य द्विजोत्तमम् । पप्रच्छ प्रणतो भूत्वा श्रद्धया परया युतः ॥ ७
कस्माद्याऽऽगमनं तेऽद्य कारणं वद सांप्रतम् । इत्युक्ते देवराजेन प्रत्युवाच महामुनिः ॥ ८
भवन्तं द्रष्टुमायातः पृथिवीलोकतो हरे । स्नात्वा पुण्यप्रदेशेषु तीर्थेषु च सुश्रद्धया ॥ ९
देवान्पितॄन्समभ्यर्च्य दृष्ट्वा क्षेत्राण्यनेकधा । [*एतत्ते सर्वमाख्यातं यत्त्वया पृच्छितं पुरा] ॥१०

इन्द्र उवाच—

दृष्टानि पुण्यतीर्थानि क्षेत्राणि च त्वया मुने । किं तीर्थं प्राप्य देवर्षे मुच्यते ब्रह्महत्यया ॥ ११
सुरापो मुच्यते पापाद्गोघ्नो हेमापहारकः । मित्रद्रोहान्महापापी भार्याहर्ता च तद्वद ॥ १२

नारद उवाच—

यानि कानि च तीर्थानि गयादीनि सुरेश्वर । तेषां नैव प्रपश्यामि विशेषं पापनाशनम् ॥ १३
सुपुण्यानि सुदिव्यानि पापघ्नानि समानि च । सर्वाण्येव सुतीर्थानि जानाम्यहं पुरंदर ॥ १४
अविशेषं विशेषं च नैव जानामि सांप्रतम् । प्रत्यक्षं क्रियतां देव तीर्थानां गतिदायकम् ॥ १५
एवं वाक्यं समाकर्ण्य नारदस्य महात्मनः । समाहूतानि चेन्द्रेण तीर्थानि भूगतानि च ॥ १६
मूर्तिमन्ति च दिव्यानि [†समायातानि सांप्रतम् । बद्धाञ्जलीनि सर्वाणि ] भूषितानि सुभूषणैः
दिव्याम्बराणि स्निग्धानि तेजोवन्ति च सुव्रत। [*स्त्रीपुंसोस्तु स्वरूपाणि कृतानि च विशेषतः]
हंसचन्द्रप्रकाशानि दिव्यरूपधराणि च । [†मुक्ताफलस्य वर्णेन प्रभासन्ति सुरेश्वर ] ॥ १९
तप्तकाञ्चनवर्णानि सारुणानि च तत्र च । [*कान्त्या शुक्लसुपीतानि प्रभासन्ति सभान्तरे ॥२०
कानि पद्मानि भान्त्येव मूर्तिमन्तीनि भान्ति च] । सूर्यतेजःप्रकाशानि तडिद्वर्णानि कानिचित् २१
कानिचिद्रौप्यवर्णानि हारकेयूरकङ्कणैः । मालाभिश्च सुशोभीनि कमण्डलुकराणि च ॥
तत्कालं स्मृतमात्रेण आयातानि सभान्तरे ॥ २२
गोमती नर्मदा पुण्या चन्द्रभागा सरस्वती । देविका [10]बिम्बिका कुब्जा कुञ्जला मञ्जुला सुता २३
रम्भा भानुमती पुण्या पारा चैव सुघर्घरा । शोणा च सिन्धुसौवीरा कावेरी कपिला तथा ॥२४
मुकुन्दा भेदिनी पुण्या सुपुण्या च महेश्वरी । चर्मण्वती तथा ख्याता लोपा चान्या सुकौशिकी

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. च. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

१ ङ. °ततः । आ° । २ घ. ङ. छ. झ. ट. ठ. ड. ढ. °कः । स्वामिद्रो° । ३ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °हाभाग भा° । ४ क. ख. च. °पी नार्या हन्ता कथं सुखम् । ना° । ङ. °पी नार्या हर्ता कथं सुखी । ना° । झ. °पी नार्या हन्ता कथं सुखी । ना° । ड. ढ. °पी नारीहन्ता कथं सुखी । ना° । ५ क. ख. ङ. च. छ. ड. ढ. प्रत्ययं । ६ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °हूय सहस्राक्षस्तीर्थान्भूतलसंस्थितान् । यानि कानि च तीर्थानि सर्वाणि भू° । ७ घ. ट. ठ ढ. °नि सुरूपाणि पुरंदर । का° । ८ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °त् । चकासति च रौप्याणि प्रभासन्ति सभान्तरे । सर्वाभरणवस्त्राद्यैः प्रशोभन्ते नरेश्वर ॥ हारकङ्कणकेयूरैर्माल्यभिस्तु पुरंदर । दिव्यचन्दनदिग्धानि सुरभीणि गुरूणि च ॥ कमण्डलुकराण्येव आगतानि सभा° । ९ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °रे । भक्त्या तु म° । १० ङ. ढ वेदिका ।

सुहंसा हंसवाहा च हंसवेगा मनोरथा । सुरथा सारुणा वेगा सुषेणा च सुपद्मिनी ॥ २६
वाहनी सरघा चान्या पुण्या चान्या पुलन्दिका । हिमा मनोरथा दिव्या चन्द्रिका वेदसंक्रमा २७
ज्वाला हुताशनी स्वाहा काला चैव कपिञ्जली । स्वधा सुकाला कालिङ्गा गम्भीरा हिमवाहिनी
देवद्रवी वीरवाहा लक्षहोमाऽप्यघापहा । पाराशरी वेदगर्भा हेमवेशा सुपुण्ड्रकी ॥ २९
एता नद्यो महापुण्या मूर्तिमत्यो ह्यघापहाः । सर्वाभरणशोभाढ्याः कुम्भहस्ताः सुपूजिताः ॥ ३०
प्रयागः पुष्करश्चैव सर्वतीर्थमनोरमः । वाराणसी महापुण्या ब्रह्महत्याव्यपोहिनी ॥ ३१
द्वारावती प्रभासश्च ह्यवन्ती नैमिषस्तथा । दण्डक[*श्च दशारण्यं महेश्वरकलेवरौ ॥ ३२
कालञ्जरो ब्रह्मक्षेत्रं मथुरो नाम वाहकः । माया काञ्ची]तथाऽन्यानि दिव्यानि विविधानि च ॥
अष्टषष्टिस्तु तीर्थानि नदीनां दश कोटयः । गोदावरीमुखाः सर्वाः समायातास्तदाज्ञया ॥ ३४
द्वीपानां तु समस्तानि तीर्थानि च महान्ति च । [+मूर्तिलिङ्गधराण्येव सहस्राक्षं सुरेश्वरम्]॥ ३५
समाजग्मुः समस्तानि तदादेशकराणि च । प्रणेमुर्देवदेवेशं नतशीर्षाणि सर्वशः ॥ ३६
तैस्तु प्रोक्तो महातीर्थैर्देवराजस्तु सादरम् । कस्मात्त्वया समाहूता देवराज वदस्व नः ॥ ३७
ब्रूहि नः कारणं सर्वं नमस्तुभ्यं सुराधिप । [*एवमाकर्णितं सर्वं तीर्थानां वचनं तदा ।]
एवमाकर्ण्य तद्वाक्यं देवराजोऽभ्यभाषत ॥ ३८
कः समर्थो महाभागा ब्रह्महत्यां व्यपोहितुम् । गोवधाख्यं महापापं स्त्रीवधाख्यमनुत्तमम् ॥ ३९
स्वामिद्रोहात्समुद्भूतं सुरापानाच्च दारुणम् । हेमस्तेयोद्भूतं पापं गुरुनिन्दासमुद्भवम् ॥ ४०
भ्रूणहत्यां महाघोरां कः समर्थो निवर्तितुम् । राजद्रोहं महापापं बहुपीडाप्रदायकम् ॥ ४१
मित्रद्रोहं तथा चान्यत्सर्वविश्वासघातकम् । देवभेदं तथा चान्यल्लिङ्गभेदं ततः परम् ॥ ४२
वृत्तिच्छेदं च विप्राणां गोप्रचारप्रणाशनम् । अगारदाहनं चान्यद्ग्रामदीपनकं परम् ॥ ४३
षोडशैते महापापा अगम्यागमनं तथा । स्वामित्यागात्समुद्भूतं रणस्थानात्पलायनम् ॥ ४४
एतानि नाशयेत्को वै [+समर्थस्तीर्थसत्तमः । समर्थो भवतां मध्ये] प्रायश्चित्तं विना ध्रुवम् ॥ ४५
पश्यतां देवतानां च नारदस्य च पश्यतः । ब्रुवन्तु सर्वे संचिन्त्य निश्चितं पापनाशनम् ॥ ४६
एवमुक्ते शुभे वाक्ये देवेशेन महात्मना । संमन्त्र्य तीर्थराजेन प्रोचुः शक्रं सभागतम् ॥ ४७

तीर्थान्यूचुः—

श्रूयतामभिधास्यामो देवराज नमोऽस्तु ते । यावन्ति सर्वतीर्थानि सर्वपापहराणि च ॥ ४८
ब्रह्महत्यादिकान्येव त्वयोक्तानि सुरेश्वरम् । महाघोराणि पापानि नाशितुं नैव शक्नुमः ॥ ४९
प्रयागः पुष्करश्चैव सर्वतीर्थमनुत्तमम् । वाराणसी महाभाग सर्वपातकनाशिनी ॥
महापातकनाशाय चत्वारोऽमितविक्रमाः ॥ ५०
उपपातकनाशाय वयं धात्रा विनिर्मिताः । महापापोपपापार्थं सृष्टोऽसौ पुष्करो ध्रुवम् ॥ ५१

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. छ. झ. ड. ढ. वेणा भद्रवेणा सु° । २ क. ख. ङ. च. छ. झ. ढ. हेमा ३ ङ. शुद्धा । ४ छ. झ. हेमगर्भा ।

एवमाकर्ण्य तद्वाक्यं तीर्थानां सुरराट् ततः । हर्षेण महताऽऽविष्टस्तेषां स्तोत्रं चकार ह ॥ ५२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थकथने नवतितमोऽध्यायः ॥ ९० ॥

आदितः श्लोकानां समष्ट्यङ्काः—७५२३

---

अथैकनवतितमोऽध्यायः ।

---

कुञ्जल उवाच—

ब्रह्महत्याऽभिभूतश्च सहस्राक्षो यदा पुरा । गौतमस्य प्रियासङ्गादगम्यागमनात्तथा ॥ १
सुजातं पातकं तस्य त्यक्तुं देवैश्च ब्राह्मणैः । सहस्राक्षस्तपस्तेपे निरालम्बो निराश्रयः ॥ २
तपन्ति देवताः सर्वा ऋषयो यक्षकिंनराः । देवराजस्य पूजार्थमभिषेकं प्रचक्रिरे ॥ ३
देशे मालवके नीत्वा देवराजं सुतोत्तमाः । चक्रुः स्नानं महाभागाः कुम्भैरुदकपूरितैः ॥ ४
स्नापितुं प्रथमं नीतो वाराणस्यां स्वयं ततः । प्रयागे च सहस्राक्षः सर्वतीर्थे ततः पुनः ॥ ५
महात्मना पुष्करेण स्नापितः स्वयमेव च । ब्रह्मादिभिः सुरैः सर्वैर्मुनिवृन्दैर्द्विजोत्तमैः ॥ ६
नागवृन्दैर्नगैः सर्वैर्गन्धर्वैश्च सकिंनरैः । स्नापितो देवराजस्तु वेदमन्त्रैः सुसंस्कृतः ॥
[ *मुनिभिः सर्वपापघ्नैस्तस्मिन्काले द्विजोत्तम ] ॥ ७
शुद्धे तस्मिन्सहस्राक्षे महाभागे महामतौ । ब्रह्महत्या गता तस्य अगम्यागमनोद्भवा ॥ ८
[ + पापेन तेन घोरेण सार्धमिन्द्रस्य भूतले ] । सुप्रसन्नः सहस्राक्षस्तीर्थेभ्योऽपि वरं ददौ ॥ ९
भवन्तस्तीर्थराजानो भविष्यथ न संशयः । मत्प्रसादात्पवित्राश्च यस्मादहं विमोक्षितः ॥
सुघोरात्किल्बिषादत्र युष्माभिर्विमलैरहम् ॥ १०
एवं तेभ्यो वरं दत्त्वा मालवाय वरं ददौ । यस्मात्स्वयं त्वयाऽप्येतद्धितं मम पातकम् ॥
तस्मात्त्वमन्नपानैश्च धनधान्यैरलंकृतः ॥ ११
भविष्यसि न संदेहो मत्प्रसादान्न संशयः । सुदुष्कालैर्विना त्वं तु भविष्यसि न संशयः ॥ १२
एवं तस्मै वरं दत्त्वा सहस्राक्षः पुरंदरः । क्षेत्राणि सर्वतीर्थानि देशान्मालवकांस्तथा ॥
[*आखण्डलेन सार्धं ते स्वस्थानं प्रति जग्मिरे ॥ १३

सूत उवाच—

तदाप्रभृति चत्वारः प्रयागः पुष्करस्तथा ] । वाराणसी सर्वतीर्थं प्रापुः स्वस्थानमुत्तमम् ॥ १४

कुञ्जल वाच—

[+ अस्ति पाञ्चालदेशे तु विदुरो नाम क्षत्रियः ] । तेन लोभप्रसङ्गेन ब्राह्मणो निहतः पुरा ॥ १५
शिखासूत्रविहीनस्तु तिलकेन विवर्जितः । भिक्षार्थमटते सोऽहि ब्रह्मघ्नोऽहं समागतः ॥ १६
ब्रह्मघ्नाय सुरापाय भिक्षा चान्नं प्रदीयताम् । गृहेष्वेवं समस्तेषु भ्रमते याचते पुरा ॥ १७

---

*एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतोऽयं पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । +एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ढ. °मन्त्रैस्तपोबलैः । मु° । ढ. °मन्त्रैः सुशोभनैः । मु° ।

एवं सर्वेषु तीर्थेषु अटन्नेव समागतः । ब्रह्महत्या ततस्तस्य न याति द्विजसत्तम ॥ १८
वृक्षच्छायां समाश्रित्य दह्यमानेन तेजसा । संस्थितो विदुरः पापी दुःखशोकसमन्वितः ॥ १९
चन्द्रशर्मा ततो विप्रो महामोहेन पीडितः । निवसन्मगधे देशे गुरुघातक उच्यते ॥ २०
स्वजनैर्बन्धुवर्गैश्च परित्यक्तो दुरात्मवान् । स तत्र हि समायातो यत्रासौ विदुरः स्थितः ॥
[ *शिखासूत्रविहीनस्तु विप्रलिङ्गैर्विवर्जितः ] ॥ २१
तदाऽसौ पृच्छितस्तेन विदुरेण दुरात्मना । भवान्को हि समायातो दुर्भगो दग्धमानसः॥
विप्रलिङ्गैर्विहीनस्तु कस्मात्त्वं भ्रमसे महीम् ॥ २२
विदुरेणोदितः सोऽपि चन्द्रशर्मा द्विजोत्तमः । आचष्टे सर्वमेवापि यथापूर्वं कृतं स्वकम् ॥ २३
पातकं च महाघोरं वसता च गुरोर्गृहे । महामोहगतेनापि क्रोधेनाऽऽकुलचेतसा ॥ २४
गुरोर्घातः कृतः पूर्वं तेन दग्धोऽस्मि सांप्रतम् । स्ववृत्तान्तं निवेद्यैवं चन्द्रशर्माऽप्यपृच्छत ॥ २५
भवान्को हि सुदुःखात्मा वृक्षच्छायां समाश्रितः । विदुरेण समासेन आत्मपापं निवेदितम् ॥ २६
अथ कश्चिद्द्विजः प्राप्तस्तृतीयः श्रमकर्षितः । वेदशर्मेति वै नाम्ना बहुपातकसंचयः ॥ २७
द्वाभ्यामपि च संपृष्टः को भवान्दुष्कृताकृतिः । कस्माद्भ्रमसि पृथ्वीं त्वमात्मभावं निवेदय ॥ २८
वेदशर्मा ततः सर्वमात्मचेष्टितमेव च । कथयामास ताभ्यां वै ह्यगम्यागमनं कृतम् ॥ २९
धिक्कृतः सर्वलोकैश्च अन्यैः स्वजनबान्धवैः । तेन पापेन संलिप्तो भ्रमाम्येवं महीमिमाम् ॥ ३०
वञ्जुलो नाम वैश्योऽथ सुरापायी समागतः । स गोघ्नस्तु विशेषेण तैश्च पृष्टो यथा पुरा ॥ ३१
तेभ्य आवेदितं तेन यथाजातं स्वपातकम् । तैस्तथाऽऽकर्णितं सर्वं सम्यक्तस्य प्रभाषितम् ॥ ३२
चत्वार एवं पापिष्ठा एकस्थानं समागताः । कः कस्यापि न संपर्कं भोजनाच्छादनेन च ॥ ३३
करोति च महाभाग वार्तां चक्रुः परस्परम् । न विशन्त्यासने चैके न स्वपन्त्येकसंस्तरे ॥ ३४
एवं दुःखसमाविष्टा नानातीर्थेषु ते गताः । एतेषां पातका घोरा न नश्यन्ति च नन्दन ॥ ३५
सामर्थ्यं नास्ति तीर्थानां महापातकनाशने । विदुराद्यास्ततस्ते तु गताः कालञ्जरं गिरिम् ॥ ३६

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे एकनवतितमोऽध्यायः ॥ ९१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७५५९

---

अथ द्विनवतितमोऽध्यायः ।

---

कुञ्जल उवाच—

कालञ्जरं समासाद्य निवसन्ति सुदुःखिताः । महापापैस्तु संदग्धा हाहाभूता विचेतनाः ॥ १
तत्र कश्चित्समायातः सिद्धरूपी द्विजोत्तमः । तेन पृष्टाः सुदुःखार्ता भवन्तः केन दुःखिताः ॥ २
स तैः प्रोक्तो महाप्राज्ञः सर्वज्ञानविशारदः । तेषां ज्ञात्वा महापापान्कृपां चक्रे सुपुण्यभाक् ॥ ३

सिद्ध उवाच—

अमासोमसमायोगे प्रयागः पुष्करस्तथा । सर्वतीर्थस्तृतीयस्तु वाराणसी चतुर्थिका ॥ ४

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. पुस्तकस्थः ।

---

१ म. °त्यक्तः पुराऽऽऽत्म°। २ ङ. छ. द्विजाधमः । ३ ङ. °धेन ज्वलितेन च । गु° । ४ ङ. च । न करोति महाभाग ज्ञानवार्तां द्विजोत्तम । न । ५ ङ. °न्तश्चैको महायशाः । ते° ।

गच्छथैषु च वै यूयं चत्वारः पापकारिणः। गङ्गाम्भसि यदा स्नातास्तदा मुक्ता भविष्यथ ॥
पातकेभ्यो न संदेहो निर्मलत्वं गमिष्यथ ॥ ५
आदिष्टास्तेन ते सर्वे प्रणेमुस्तं प्रयत्नतः। कालञ्जरात्ततो जग्मुः सत्वरं पापपीडिताः ॥ ६
वाराणसीं समासाद्य स्नात्वा चैव द्विजोत्तम। प्रयागं पुष्करं चैव सर्वतीर्थं तु सत्वराः ॥
अमासोमसमायोगे जग्मुस्ते पापकृत्तमाः ॥ ७
विदुरश्चन्द्रशर्मा च वेदशर्मा तृतीयकः। गोघ्नोऽथ वञ्जुलश्चैव सुरापः पापचेतनः ॥ ८
तस्मिन्पर्वणि संप्राप्ते स्नाता गङ्गाम्भसि द्विज। स्नानमात्रेण मुक्तास्तु गोवधाद्यैस्तु किल्बिषैः ॥ ९
ब्रह्महत्यागुरुहत्यासुरापानादिपातकैः। लिप्तानि तानि तीर्थानि परिभ्रमन्ति मेदिनीम् ॥ १०
पुष्करः सर्वतीर्थश्च प्रयागः पापनाशनः। वाराणसी चतुर्था तु लिप्ता पापैर्द्विजोत्तम ॥ ११
कृष्णत्वं पेदिरे सर्वे हंसरूपेण बभ्रमुः। सर्वेष्वेव सुतीर्थेषु स्नानं चक्रुर्द्विजोत्तमाः ॥ १२
कृष्णत्वं मुच्यते नैव तेषां पापेन चाऽऽगतम्। सुतीर्थेषु महाराज स्नाताः सर्वेषु वै पुनः ॥ १३
यद्यत्तीर्थं प्रयान्त्येते सर्वे तीर्था द्विजोत्तम। हंसरूपेण ते यान्ति तैश्च सार्धं सुदुःखिताः ॥ १४
भार्याः पातकरूपाश्च भ्रमन्ति परितस्तथा। अष्टषष्टिः सुतीर्थानि हंसरूपेण बभ्रमुः ॥ १५
तैश्च सार्धं महाराज महातीर्थसमं पुनः। मानसं च गतास्ते च पातकाकुलमानसाः ॥
तत्र स्नाता महाराज न जहति च पातकम् ॥ १६
लज्जयाऽऽविष्टमनसा मानसो हंसरूपधृक्। संजातः कृष्णकायश्च यं त्वं वै दृष्टवान्पुरा ॥ १७
रेवातीरं ततो जग्मुस्त्वत्सार्धं पापनाशनम्। रेवायाः[३] संगमे पुण्ये सुरसिद्धनिषेविते ॥ १८
स्नानमात्रेण मुक्तास्ते पापेभ्यो द्विजसत्तम। विहाय एवं तं वर्णं शुद्धत्वं प्रतिजग्मिरे ॥ १९
यं यं तीर्थं प्रयान्त्येते गत्वा स्नानं प्रचक्रमुः। जहसुस्ताः स्त्रियो दृष्ट्वा कृष्णत्वं नैव गच्छति ॥ २०
तोयानलेन कुब्जायाः पातकं परमेव च। भस्मावशेषं संजातं तदा मृतास्तु ताः स्त्रियः ॥ २१
ब्रह्महत्यागुरुहत्यासुरापानागमागमाः। भस्मीभूतास्तु संजाता रेवया कुब्जया हताः ॥ २२
तास्तु हता महाभाग या मृतास्तु सरित्तटे। अष्टषष्टिस्तु तीर्थानां(नि) हंसरूपेण बभ्रमुः ॥ २३
सार्धं हंसः समायातो विद्धि त्वं तत्तु मानसम्। कृष्णहंसास्तु चत्वारस्तेषां नामानि मे शृणु ॥ २४
प्रयागः पुष्करश्चैव सर्वतीर्थस्तथैव च। वाराणसी चतुर्थी च पुत्र जाताऽघनाशना ॥ २५
ब्रह्महत्याभिभूताश्च बभ्रमुः सर्वतो महीम्। तीर्थान्येतानि दुःखेन तीर्थेषु च महामते ॥ २६
न गतं पातकं घोरं तेषां च भ्रमतां सुत। कुब्जायाः संगमे शुद्धा विमुक्ताः किल्बिषात्किल ॥ २७
तीर्थानामेव सर्वेषां पुण्यानामिह संमतः। राजा प्रयागः संजात इन्द्रस्य पुरतः किल ॥ २८
तावद्राजन्ति तीर्थानि यावद्रेवा न दृश्यते। तावद्गर्जन्ति तीर्थानि यावद्रेवा न दृश्यते ॥ २९
ब्रह्महत्यादिकानां तु नाशने सा प्रतिष्ठिता। कपिलासंगमे पुण्ये रेवायाः[६] संगमे तथा ॥ ३०
मेघनादसमायोगे तथा चैवोरुसंगमे। महापुण्या महाधन्या रेवा सर्वत्र दुर्लभा ॥ ३१
सैवोंकारे भृगुक्षेत्रे नर्मदा कुब्जसंगमे। दुष्प्राप्या सा नरै रेवा माहिष्मत्यां सुतोत्तम ॥ ३२
विटङ्कासंगमे पुण्ये कीटके मङ्गलेश्वरे। सर्वत्र दुर्लभा रेवा सुरपुण्यसमाकुला ॥ ३३

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. °स्ते च महापुरीम्। वि°। २ क. ख. ङ. च. छ. झ. ड. ढ. °ग्मुरुत्तरं पा°। ३ क. ख. ङ. च. छ. झ. ड. ढ. कुब्जायाः। ४ म. °ण वै तदा। ५ म. °र्धं देहैः समासाद्य विहर्तुं तत्र मा°। ६ क. ख. च. छ. झ. ङ. कुब्जायाः। ७ क. ख. ङ. च. छ. झ. ड. ढ. श्रीकण्ठे।

तीर्थमाता महादेवी अघराशिविनाशिनी । उभयोः कूलयोर्मध्ये यत्र तत्र नरः सुधीः ॥
अश्वमेधफलं भुङ्क्ते स्नानेनैकेन मानवः ॥ ३४
एतत्ते सर्वमाख्यातं यत्त्वया परिपृच्छितम् । सर्वपापापहं पुण्यं गतिदं चापि शृण्वताम् ॥ ३५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे च्यवनोपाख्याने द्विनवतितमोऽध्यायः ॥ ९२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७५९४

---

अथ त्रिनवतितमोऽध्यायः ।

---

कुञ्जल उवाच—

किं विज्वल त्वया दृष्टमद्भुतं भ्रमता महीम् । आश्चर्येण समायुक्तं तन्मे कथय सुव्रत ॥ १
इतः प्रयासि यं देशमाहारार्थं तु सांप्रतम् । तत्र दृष्टं ममाऽऽचक्ष्व चित्रं कौतुकमेव वा ॥ २

विज्वल उवाच—

अस्ति मेरुगिरेः पृष्ठ आनन्दं नाम काननम् । दिव्यवृक्षैः समाकीर्णं फलपुष्पमयैः सदा ॥ ३
देववृन्दैः समाकीर्णं मुनिसिद्धसमन्वितम् । अप्सरोभिः सुरूपाभिर्गन्धर्वैः किंनरोरगैः ॥ ४
वापीकूपतडागैश्च नदीप्रस्रवणैस्तथा । आनन्दकाननं पुण्यं दिव्यभावैः प्रभासते ॥ ५
विमानैः कोटिसंख्याभिर्हंसकुन्देन्दुसंनिभैः । गीतकोलाहलै रम्यैर्मेघध्वनिनिनादितम् ॥ ६
षट्पदानां निनादैश्च सर्वत्र मधुरायते । चन्दनैश्च सुवृक्षैश्च चम्पकैः पुष्पितैर्वृतम् ॥ ७
नानावृक्षैः प्रभात्येवमानन्दवनमुत्तमम् । नानापक्षिनिनादैश्च वनं कोलाहलान्वितम् ॥ ८
एवमानन्दकं दृष्टं मया तत्र सुशोभनम् । विमलं च सरस्तात शोभते सागरोपमम् ॥ ९
संपूर्णं पुण्यतोयेन पद्मसौगन्धिकैः शुभैः । जलजन्तुसमायुक्तं हंसकारण्डवान्वितम् ॥ १०
[*एवमासीत्सरस्तस्य सुमध्ये काननस्य हि । देवगन्धर्वसंबाधैर्मुनिवृन्दैरलंकृतम्] ॥ ११
[+किंनरोरगगन्धर्वैश्चारणैश्च सुशोभते । तत्राऽऽश्चर्यं मया दृष्टं तात वक्तुं न शक्यते] ॥ १२
विमाने दिव्यभोगाढ्ये कलशैरुपशोभिते । छत्रदण्डपताकाभी राजमानोऽथ तत्र हि ॥ १३
[*सर्वभोगयुतेना(तश्चा)पि गीयमानोऽथ किंनरैः । गन्धर्वैश्चाप्सरोभिश्च शोभमानोऽथ सुव्रत] १४
स्तूयमानो महासिद्धैर्ऋषिभिस्तत्त्ववेदिभिः । रूपेणाप्रतिमो लोके न दृष्टस्तादृशः क्वचित् ॥ १५
सर्वाभरणशोभाङ्गो दिव्यमालाविभूषितः । महारत्नकृता माला तस्योरसि विराजते ॥ १६
तत्समीपे स्थिता चैका नारी दृष्टा वरानना । मुक्ताहारैः समायुक्ता वलयैः कङ्कणैर्युता ॥ १७

---

* एतच्चिह्नान्तर्गतः पाठः क ख. च. झ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ च. छ. झ. ट. ट. ट. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. तीर्थमाला । २ क. ख. ङ. च. छ. झ. ड. ढ. °म् । एवमुक्त्वा महाप्राज्ञस्तृतीयं पुत्रमब्रवीत् । इ° । ३ घ. ट. ठ. ड. °वृक्षैः स° । ४ ड. °ते । कोटिसंख्यादिभिर्युक्तं हंसैः कु° । ५ घ. ङ. छ. झ. ट. ठ. ड. °म्यैर्वेदध्व° । ६ ङ °म् । विमलोऽस्ति तत्र वै तात सागरः शोभते सदा । सं° । ञ. °म् । तत्र तावत्प्रमाणोऽस्ति शोभमानः सरोवरः । सं° । ७ ञ. संपूर्णः । ८ ञ. °युक्तो हं° । ९ ञ. °न्वितः । दे° । क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °ते । हेमहारैश्च मुक्तानां वल° ।

दिव्यवस्त्रपरीधाना चन्दनाद्यनुलेपना । स्तूयमाना गीयमाना पुरुषेण सहाऽऽस्थिता ॥ १८
रतिरूपा वरारोहा पीनश्रोणिपयोधरा । सर्वाभरणशोभाङ्गी तादृशी रूपसंपदा ॥ १९
द्वावेतौ तु मया दृष्टौ विमानेनापि चाऽऽगतौ । रूपलावण्यमाधुर्यसंयुक्तौ हृष्टमानसौ ॥ २०
समुत्तीर्य विमानात्तु गतौ तौ सरसोऽन्तिके । स्नातौ तत्र महात्मानौ स्त्रीपुंसौ कमलेक्षणौ ॥ २१
प्रगृह्य तौ महाशस्त्रौ दंपती च परस्परम् । तादृशौ च शवौ तत्र पतितौ सरसस्तटे ॥ २२
[*प्रभासेते तदा तौ तु स्त्रीपुंसौ कमलेक्षणौ । रूपेणापि महाभाग तादृशावेव तौ शवौ ॥ २३
देवरूपोपमस्तात यथापूर्वं तथा पुनः ।] यथा रूपं हि तस्यास्ति तादृशः स च दृश्यते ॥
यादृग्रूपा च सा नारी शवरूपा च तादृशी ॥ २४
स्त्रीशवस्य च यन्मांसं शस्त्रेणोत्कीर्य सा ततः । भक्षते तस्य मांसानि रक्ताप्लुतानि यानि च ॥ २५
पुरुषो भक्षते तद्वच्छवमांसं समातुरः । क्षुधया पीड्यमानौ तौ भक्षेते पिशितं तयोः ॥ २६
यावत्तृप्तिं समायातौ तावन्मांसं प्रभक्षितम् । सरसश्च जलं पीत्वा संजातौ सुखितौ पितः ॥
कियत्कालं स्थितौ तत्र विमानेन गतौ पुनः ॥ २७
अन्ये द्वे च स्त्रियौ तात मया दृष्टे च तत्र वै । रूपसौभाग्यसंपन्ने ते स्त्रियौ चारुलक्षणे ॥ २८
ताभ्यां प्रभक्षितं मांसं यदा तात महावने । सहसा ते तदा ते द्वे हास्यैरट्टाट्टकैः पुनः ॥
भक्षेते च स्वमांसानि द्वावेतौ परिनित्यशः ॥ २९
कृत्वा स्नानादिकं मांसं पश्यतो मम तत्र हि । अन्ये स्त्रियौ महाभाग रौद्राकारसमन्विते ॥ ३०
दंष्ट्राकरालवदने तत्रैवातिविभीषणे । ऊचतुः खादमाने तु देहि देहीति वै पुनः ॥ ३१
एवं दृष्टं मया तात आश्चर्यं सरसस्तटे । नित्यमुत्तीर्य तावेवं ते चाप्यन्ये च वै पितः ॥
कुर्वन्ति सदृशीं चेष्टां पूर्वोक्तां मम पश्यतः ॥ ३२
भवता पृच्छितं तात यत्कथाश्चर्यमेव च । मया प्रोक्तं तवाग्रे वै सर्वसंदेहकारणम् ॥ ३३
[+कथयस्व प्रसादाद्य प्रीयमाणेन चेतसा । विमानेनाऽऽगतो योऽसौ स्त्रिया सार्धं द्विजोत्तम ॥ ३४
दिव्यरूपधरो यस्तु स कस्तु कमलेक्षणः । का च नारी महाभाग महामांसं प्रभक्षति ॥ ३५
स कश्चाप्यागतस्तात सा चैवाऽऽगत्य भक्षति । प्रहसेते तदा ते द्वे स्त्रियो तात वदस्व नः ]॥ ३६
तौ दंपती समाचक्ष्व द्वे स्त्रियौ चापि तत्परे । देहि देहीति वादिन्यौ संशयं छिन्धि सुव्रत ॥ ३७
एवं पृष्टस्तृतीयेन विज्वलेनाऽऽत्मजेन सः । प्रोवाच सर्वं वृत्तान्तं च्यवनस्यापि शृण्वतः ॥ ३८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे त्रिनवतितमोऽध्यायः ॥ ९३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७६३२

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. च. छ. झ. ट. ठ. ड. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठो घ. ङ. छ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ढ. °र्यसर्वशोभासमाविलौ । स° । घ. ट. ठ. ड. °र्यसर्वशोभासमन्वितौ । स° । २ घ. ङ. छ. ट. ठ. ड. ढ. °त्यमेव प्रपश्यामि ह्यत्याश्चर्यं पितः शृणु ॥ नित्यमुत्कीर्य भक्षेते तौ द्वौ तन्मांसमेव च ॥ जायेते च सुसंपूर्णकामौ च शवयोः पुनः ॥ आश्चर्यमेतत्संजातं दृष्टं तात मया तदा ॥ भ° ।

अथ चतुर्नवतितमोऽध्यायः ।

---

कुञ्जल उवाच —
श्रूयतामभिधास्यामि तत्सर्वं कारणं सुत । यस्मात्तौ तादृशौ जातौ स्वमांसपरिभक्षकौ ॥ १
सर्वत्र कारणं कर्म शुभं वाऽशुभमेव च । पुण्येन कर्मणा पुत्र जन्तुः सौख्यं भुनक्ति च ॥
दुष्कृतं भुङ्क्त एवापि पापयुक्तेन कर्मणा ॥ २
सूक्ष्मधर्मं विचार्यैव शास्त्रज्ञानेन चक्षुषा । स्थूलधर्मं प्रदृष्ट्वैव सुविचार्य पुनः पुनः ॥ ३
समारभेत्ततः कर्म मनसा विपुलेन वा । स मूर्तिकारकः शिल्पी समावर्तयते यथा ॥ ४
अग्नेश्च तेजसा पुत्र ज्वालाभिश्च समन्ततः । द्रवीभूतो भवेद्धातुर्वह्निना तापितः शनैः ॥ ५
यादृशं वत्स भक्ष्यं तु रसयुक्तं च सेव्यते । तादृशं जायते वत्स रूपं चैव न संशयः ॥
कर्म एव प्रधानं यज्जीवरूपेण वर्तते ॥ ६
यादृशं वपते बीजं क्षेत्रे तु कृषिकारकः । भुनक्ति तादृशं वत्स फलमेव न संशयः ॥ ७
यादृशं क्रियते कर्म तादृशं परिभुज्यते । विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥ ८
कर्मदायादका लोके कर्म एव च बान्धवाः । कर्माणि चोदयन्तीह पुरुषं सुखदुःखयोः ॥ ९
सुवर्णं रजतं वाऽपि यथा रूपं निषेच्य(व्य)ते । तथा निषेव्यते जन्तुः पूर्वकर्मवशानुगः ॥ १०
पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः । आयुः कर्म च वित्तं च विद्या निधनमेव च ॥ ११
यथा कृषिफलं कर्तुः प्राप्यते यद्यदीहति । तथा पूर्वकृतं कर्म कर्तारं प्रतिपद्यते ॥ १२
देवत्वमथ मानुष्यं पशुतां पक्षितां तथा । तिर्यक्त्वं स्थावरत्वं च याति जन्तुः स्वकर्मभिः ॥ १३
स एव तु तथा भुङ्क्ते नित्यं विहितमात्मनः । आत्मना विहितं दुःखमात्मना विहितं सुखम् ॥
गर्भशय्यामुपादाय भुङ्क्ते ते पूर्वदैहिके ॥ १४
पूर्वदेहकृतं कर्म न कश्चित्पुरुषो भुवि । बलेन प्रजया वाऽपि समर्थः कर्तुमन्यथा ॥ १५
स्वकृतान्येव भुञ्जन्ति दुःखानि च सुखानि च । हेतुभिः करणैर्वाऽपि सोऽहंकारेण बध्यते ॥ १६
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तद्वच्छुभाशुभं कर्म कर्तारमनुगच्छति ॥
उपभोगादृते तस्य नाश एव न विद्यते ॥ १७
प्राक्तनं बन्धनं कर्म कोऽन्यथा कर्तुमर्हति । सुशीघ्रमपि धावन्तं विधानमपि धावति ॥ १८
शोभते संनिपातेन पुरा कर्म यथाकृतम् । उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ॥ १९
करोति कुर्वतः कर्म च्छायेवानुविधीयते । यथा छायातपौ नित्यं सुसंबन्धौ परस्परम् ॥ २०
उपसर्गा हि विषया उपसर्गा जरादयः । पीडयन्ति नरं पश्चात्पीडितं पूर्वकर्मणा ॥ २१
येन यत्रोपभोक्तव्यं सुखं वा दुःखमेव च । स तत्र बध्यते जन्तुर्बलाद्दैवेन नीयते ॥ २२
दैवं प्रभुश्च जीवानां सुखदुःखोपपादनम् । अन्यथा कर्म तच्चिन्त्यं जाग्रतः स्वपतोऽपि वा ॥ २३
अन्यथा दुःखिनं दैवं वध्यमेव जिघांसति । शस्त्राग्निविषदुर्गेभ्यो रक्षितव्यं च रक्षति ॥ २४
यथा पृथिव्यां बीजानि सर्वं वृक्षास्तृणानि च । तथैवाऽऽत्मनि कर्माणि तिष्ठन्ति प्रभवन्ति च ॥
तैलक्षयाद्यथा दीपो निर्वाणमधिगच्छति । कर्मक्षयात्तथा जन्तोः शरीरं नाशमृच्छति ॥ २६

१ क. ख. च. छ. झ. ढ. °सा निपुणेन च । स । २ ग. यत्र । ३ ङ. छ. ढ. °मृ । ग्रहराजा विषराजो डाकिन्यो भूतविज्वराः । पि° ।

कर्मक्षयात्तथा मृत्युस्तत्त्वविद्भिरुदाहृतः। त्रिविधाः प्राणिनां रोगाः स्मृतास्तेषां च हेतवः ॥२७
तस्मात्तत्तु प्रधानं च प्राणिनां कर्म एव हि। यत्पुरा क्रियते कर्म तदिहैव प्रभुज्यते ॥ २८
यत्त्वया दृष्टमेवापि पृच्छितं तात सांप्रतम्। तस्यार्थं हि मयोक्तं वै भुञ्जाते तौ हि सांप्रतम्॥२९
आनन्दके त्वया दृष्टं तयोः कर्म सुदारुणम्। शृणु वत्स प्रवक्ष्यामि विपाकं पूर्वकर्मणः ॥ ३०
कर्मभूमिरियं तात चान्या भोगाय भूमयः। स्वर्गादीनां महाप्राज्ञ कर्ता गत्वा भुनक्ति च ॥ ३१
चोलदेशे महाप्राज्ञ सुबाहुर्नाम भूपतिः। रूपवान्गुणवान्धीरः पृथिव्यां नास्ति तादृशः ॥ ३२
विष्णुभक्तो महाज्ञानी वैष्णवानां च सुप्रियः। कर्मणा विविधेनापि ध्यायेत्स मधुसूदनम् ॥ ३३
अश्वमेधादिकान्सर्वान्यजेद्यज्ञान्स वै नृपः। पुरोधास्तस्य चैवास्ति जैमिनिर्नाम ब्राह्मणः ॥ ३४
स चाऽऽहूय सुबाहुं तमिदं वचनमब्रवीत्। राजन्देहि सुदानानि यैश्च सौख्यं प्रभुज्यते ॥ ३५
दानैस्तु लभते लोकान्दुर्गान्प्रेत्य गतो नरः। दानेन सुखमाप्नोति यशः प्राप्नोति शाश्वतम् ॥३६
दानेनैवास्य सत्कीर्तिर्जायते मर्त्यमण्डले। [*यावत्कीर्तिः स्थिरा चात्र तावत्कर्ता दिवं वसेत् ३७
तद्दानं दुष्करं प्राहुर्दातुं नैव प्रशक्यते। तस्मात्सर्वप्रयत्नेन दातव्यं मानवैः सदा ॥ ] ३८

राजोवाच—

दानस्य तपसो वाऽपि द्वयोर्मध्ये सुदुष्करम्। किं वा महाफलं प्रेत्य तन्मे ब्रूहि द्विजोत्तम ॥ ३९

जैमिनिरुवाच—

दानान्न दुष्करतरं पृथिव्यामस्ति किंचन। राजन्प्रत्यक्षमेवैकं दृश्यते लोकसाक्षिकम् ॥ ४०
परित्यज्य प्रियान्प्राणान्धनार्थे लोभमोहिताः। प्रविशन्ति नरा लोके समुद्रमटवीं तथा ॥ ४१
सेवामन्ये प्रकुर्वन्ति प्रपठन्ति विपश्चितः। हिंसाप्रायान्बहून्क्लेशान्कृषिं चैव तथा परे ॥ ४२
तस्य दुःखार्जितस्यापि प्राणेभ्योऽपि गरीयसः। अर्थस्य पुरुषव्याघ्र परित्यागः सुदुष्करः ॥
विशेषतो महाराज तस्य न्यायार्जितस्य च ॥ ४३
श्रद्धया विधिवत्पात्रे दत्तस्यान्तो न विद्यते। श्रद्धा धर्मसुता देवी पावनी विश्वभाविनी ॥ ४४
सावित्री प्रसवित्री च संसारार्णवतारिणी। श्रद्धया ध्यायते धर्मो विद्वद्भिश्चाऽऽत्मवादिभिः॥४५
निष्किंचनास्तु मुनयः श्रद्धावन्तो दिवं गताः। सन्ति दानान्यनेकानि नानाभेदैर्नृपोत्तम ॥ ४६
अन्नदानात्परं नास्ति प्राणिनां गतिदायकम्। तस्मादन्नं प्रदातव्यं पयसा च समन्वितम् ॥ ४७
मधुरेणापि पुण्येन वचसा च समन्वितम्। नास्त्यन्नाच्च परं दानमिह लोके परत्र च ॥ ४८
तारणाय हितायैव सुखसंपत्तिहेतवे। श्रद्धया दीयते पात्रे निर्मलेनापि चेतसा ॥ ४९
अन्नस्यैकप्रदानस्य फलं भुङ्क्ते नरः सदा। ग्रासाग्रं संप्रदातव्यं मुष्टिप्रस्थं न संशयः ॥ ५०
अक्षयं जायते तस्य दानस्यापि महत्फलम्। न च प्रस्थं न वा मुष्टिं यस्यापि न हि संभवेत् ५१
अनास्तिकप्रभावेन पर्वणि प्राप्य मानवः। श्रद्धया ब्राह्मणं चैकं भक्त्या चैव प्रभोजयेत् ॥ ५२
एकस्यापि प्रदानस्य ह्यन्नस्यापि नरेश्वर। जन्मान्तरं सुसंप्राप्य नित्यमेव भुनक्ति च ॥
पूर्वजन्मनि यद्दत्तं भक्त्या पात्रे सकृन्नरैः ॥ ५३

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः।

---

१ क. ख. च. छ. झ. ड. सर्पादीनां। घ. ट. ठ. सूर्यादीनां। ङ. ढ. तत्त्वादीनां। २ म. कर्मसुता। ३ क. ख. ङ. च. छ. ड. ढ. °या साध्यते धर्मो महर्धिनार्थराशिभिः। ४ ञ. सर्वाणि।

जन्मान्तरं च संप्राप्य नित्यं चान्नं प्रभुज्यते । अन्नदानं प्रयच्छन्ति नित्यं हि ब्राह्मणाय ये ॥
मिष्टान्नपानं भुञ्जन्ति ते नराः स्वर्गगामिनः ॥ ५४
अन्नमेव वदन्त्येते ऋषयो वेदपारगाः । प्राणरूपं न संदेहममृताद्धि समुद्भवम् ॥ ५५
प्राणास्तेन प्रदत्ता हि येन चान्नं समर्पितम् । अन्नदानं महाराज देहि त्वं वै प्रयत्नतः ॥ ५६
एवमाकर्ण्य वै राजा जैमिनेस्तु महद्वचः । पुनः पप्रच्छ तं विप्रं जैमिनिं ज्ञानपण्डितम् ॥ ५७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७६८९

---

अथ पञ्चनवतितमोऽध्यायः ।

---

सुबाहुरुवाच—

स्वर्गस्य मे गुणान्ब्रूहि सांप्रतं वै द्विजोत्तम । एतत्सर्वं द्विजश्रेष्ठ करिष्यामि सभावकम् ॥ १

जैमिनिरुवाच—

नन्दनादीनि दिव्यानि रम्याणि विविधानि च । तत्रोद्यानानि पुण्यानि सर्वकामप्रदानि च ॥ २
सर्वकामफलैर्वृक्षैः शोभनानि समन्ततः । विमानानि सुदिव्यानि सेवितान्यप्सरोगणैः ॥ ३
सर्वत्रैव विचित्राणि कामगानि वशानि च । तरुणादित्यवर्णानि मुक्ताजालान्तराणि च ॥
चन्द्रमण्डलशुभ्राणि हेमशय्यासनानि च ॥ ४
सर्वकामसमृद्धाश्च सर्वदुःखविवर्जिताः । नराः सुकृतिनस्तेषु विचरन्ति यथासुखम् ॥ ५
न तत्र नास्तिका यान्ति न स्तेना नाजितेन्द्रियाः । न नृशंसा न पिशुनाः कृतघ्ना न च मानिनः ॥ ६
सत्याश्रयस्थिताः शूरा दयावन्तः क्षमापराः । यज्वानो दानशीलाश्च तत्र गच्छन्ति मानवाः ॥ ७
न रोगा न जरा मृत्युर्न शोको न हिमातपौ । न तत्र क्षुत्पिपासा च न ग्लानिश्चापि कस्यचित् ॥ ८
एते चान्ये च बहवो गुणाः स्वर्गस्य भूपते । दोषास्तत्रैव ये सन्ति ताञ्शृणुष्व च भूपते ॥ ९
शुभस्य कर्मणः कृत्स्नं फलं तत्रैव भुज्यते । न चात्र क्रियते भूप दोषस्तत्र महानयम् ॥ १०
असंतोषश्च भवति दृष्ट्वाऽन्येषां परां श्रियम् । सुखव्याप्तमनस्कानां सहसा पतनं तथा ॥ ११
इह यत्क्रियते कर्म फलं तत्रैव भुज्यते । कर्मभूमिरियं राजन्फलभूमिश्च सा स्मृता ॥ १२

सुबाहुरुवाच—

महान्तस्तु इमे दोषास्त्वया स्वर्गस्य कीर्तिताः । निर्दोषाः शाश्वता येऽन्ये तांस्त्वं लोकान्वद द्विज ॥ १३

जैमिनिरुवाच—

आब्रह्मसदनादेव दोषाः सन्ति च वै नृप । अत एव हि नेच्छन्ति स्वर्गप्राप्तिं मनीषिणः ॥ १४
आ ब्रह्मसदनादूर्ध्वं तद्विष्णोः परमं पदम् । शुभं सनातनं ज्योतिः परं ब्रह्मेति तद्विदुः ॥ १५
न तत्र मूढा गच्छन्ति पुरुषा विषयात्मकाः । दम्भलोभभयक्रोधद्रोहद्वैषैरभिद्रुताः ॥ १६
निर्ममा निरहंकारा निर्द्वंद्वाः संयतेन्द्रियाः । ध्यानयोगरताश्चैव तत्र गच्छन्ति साधवः ॥ १७
एतत्ते सर्वमाख्यातं यत्त्वया परिपृच्छितम् ॥ १८

---

१ घ, ङ, छ, झ, ट, ठ, ड, ढ, 'ष्ट्वा दीप्तां प' । २ ङ. 'हान्तः स्वल्पा ये दो' ।

कुञ्जल उवाच—

एवं स्वर्गगुणाञ्श्रुत्वा सुबाहुः पृथिवीपतिः । तमुवाच महात्मानं जैमिनिं वदतां वरम् ॥ १९

सुबाहुरुवाच—

नाहं स्वर्गं गमिष्यामि नैव इच्छाम्यहं मुने । यस्माच्च पतनं प्रोक्तं न तत्कर्म करोम्यहम् ॥ २०

दानमेकं महाभाग नाहं दास्ये कदा ध्रुवम् । दानस्य फललोभाच्च तस्मात्पातो न संशयः ॥ २१

इत्येवमुक्त्वा धर्मात्मा सुबाहुः पृथिवीपतिः । ध्यानयोगेन देवेशं यजिष्ये कमलाप्रियम् ॥

दाहप्रलयसंवर्ज्यं विष्णुलोकं व्रजाम्यहम् ॥ २२

जैमिनिरुवाच—

सत्यमुक्तं त्वया भूप सर्वश्रेयःसमाकुलम् । राजानो दानशीलाश्च महायज्ञैर्यजन्ति ते ॥ २३

सर्वदानानि दीयन्ते यज्ञेषु नृपनन्दन । आदावन्नं सुयज्ञेषु वस्त्रं ताम्बूलमेव च ॥ २४

काञ्चनं भूमिदानं च गोदानं प्रवदन्ति च । सुयज्ञैर्वैष्णवं लोकं सुकृतेन प्रयान्ति ते ॥ २५

[*दानेन तृप्तिमायान्ति संतुष्टाः सन्ति भूमिप । तपस्विनो महात्मानो नित्यमेव व्रजन्ति ते]॥२६

सुभिक्षां याचयित्वा तु स्वस्थानं तु समागताः । भिक्षान्नस्य भागानि प्रकुर्वन्ति च भूपते॥२७

ब्राह्मणाय विभागैकं गोग्रासं तु महामते । पार्श्ववर्तिन एकं ये प्रयच्छन्ति तपोधनाः ॥ २८

तस्यान्नस्य प्रदानेन फलं भुञ्जन्ति मानवाः । क्षुधातृषाविहीनाश्च विष्णुलोकं व्रजन्ति ते ॥ २९

तस्मात्त्वमपि राजेन्द्र देहि न्यायार्जितं धनम् । दानाज्ज्ञानं ततः प्राप्य ज्ञानात्सिद्धिं च यास्यसि॥

य इदं शृणुयान्मर्त्यः पुण्याख्यानमनुत्तमम् । विमुक्तः सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥३१

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७७२०

---

अथ षण्णवतितमोऽध्यायः ।

---

सुबाहुरुवाच—

दुष्टेन कर्मणा येन सुकृतेनापि कर्मणा । नरकं कीदृशैर्यान्ति तन्मे त्वं वक्तुमर्हसि ॥ १

जैमिनिरुवाच—

ब्राह्मण्यं पुण्यमुत्सृज्य ये द्विजा लोभमोहिताः । कुकर्मण्युपजीवन्ति ते वै निरयगामिनः ॥ २

नास्तिका भिन्नमर्यादाः कन्दर्पविषयोन्मुखाः । दाम्भिकाश्च कृतघ्नाश्च ते वै निरयगामिनः ॥ ३

ब्राह्मणेभ्यः प्रतिश्रुत्य न प्रयच्छन्ति ये धनम् । ब्रह्मस्वानां च हर्तारो नरा निरयगामिनः ॥ ४

पुरुषाः पिशुनाश्चैव मानिनोऽनृतवादिनः । असंबद्धप्रलापाश्च ते वै निरयगामिनः ॥ ५

ये परस्वापहर्तारः परदूषणसोत्सुकाः । पैराश्रिया प्रतप्यन्ते ते वै निरयगामिनः ॥ ६

प्राणिनां प्राणहिंसायां ये नरा निरताः सदा । परनिन्दारता ये च ते वै निरयगामिनः ॥ ७

कूपारामतडागानां प्रपानां च विदूषकाः । [+सरसां चैव भेत्तारो नरा निरयगामिनः ॥ ८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः छ. पुस्तकस्थः ।

१ घ. ट. ड. परश्रिया । २ ङ. °दा । नास्तिका भिन्नमर्यादास्ते वै । ३ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °नां वादिनां च परंतप । उ° ।

विपर्ययं व्रजेद्यस्तान्शिशून्भृत्यातिथींस्ततः ] । उत्सन्नपितृदेवेज्यास्ते वै निरयगामिनः ॥ ९
प्रव्रज्यादूषका राजन्ये चैवाऽऽश्रमदूषकाः । सखीनां दूषकाश्चैव ते वै निरयगामिनः ॥ १०
आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् । न चिन्तयन्ति ये विष्णुं ते वै निरयगामिनः ॥ ११
प्रयाजानां मखानां च कन्यानां शुद्धचेतसाम् । साधूनां च गुरूणां च दूषका निरयंगमाः ॥ १२
[ *काष्ठैर्वा शङ्कुभिर्वाऽपि शूलैरश्मभिरेव वा । ये मार्गानुपरुन्धन्ति ते वै निरयगामिनः ]॥ १३
सर्वभूतेष्वविश्वस्ताः कामेनाऽऽर्तास्तथैव च । सर्ववर्णेषु भुञ्जानास्ते वै निरयगामिनः ॥ १४
आगतान्भोजनार्थाय ब्राह्मणान्वृत्तिकर्शितान् । अवज्ञाय प्रवर्तन्ते निरयेषु पतन्ति वै ॥ १५
क्षेत्रं वृत्तिं गृहं चैव प्रीतिं छिन्दन्ति ये नराः । आशाच्छेदं च कुर्वन्ति ते वै निरयगामिनः ॥ १६
[ +शस्त्राणां चैव कर्तारः शल्यानां धनुषां तथा । विक्रेतारश्च राजेन्द्र ते वै निरयगामिनः ]॥ १७
अनाथं वैष्णवं दीनं रोगार्तं वृद्धमेव च । नानुकम्पन्ति ये मूढास्ते वै निरयगामिनः ॥ १८
नियमान्पूर्वमादाय ये पश्चादजितेन्द्रियाः । अतिक्रामन्ति चाञ्चल्यात्ते वै निरयगामिनः ॥ १९
हन्त ते कथयिष्यामि नरान्वै स्वर्गगामिनः । भोगिनः सर्वलोकस्य ये प्रोक्तास्तान्निबोध मे ॥ २०
सत्येन तपसा ज्ञानध्यानेनाध्ययनेन वा । ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥ २१
ये च होमपरा ध्यानदेवतार्चनतत्पराः । आददाना महात्मानस्ते नराः स्वर्गगामिनः ॥ २२
शुचयः शुचिदेशे वा वासुदेवपरायणाः । भक्त्या च विष्णुमापन्नास्ते नराः स्वर्गगामिनः ॥ २३
मातापित्रोश्च शुश्रूषां ये कुर्वन्ति सदाऽऽदृताः । वर्जयन्ति दिवा स्वप्नं ते नराः स्वर्गगामिनः ॥ २४
सर्वहिंसानिवृत्ताश्च साधुसङ्गाश्च ये नराः । सर्वस्यापि हिते युक्तास्ते नराः स्वर्गगामिनः ॥ २५
शुश्रूषाभिः समायुक्ता गुरूणां मानदा नराः । प्रतिग्रहनिवृत्ताश्च ते नराः स्वर्गगामिनः ॥ २६
भयात्कामात्तथाऽऽक्रोशाद्दरिद्रान्पूर्वकर्मणः । न कुत्सन्ति च ये नूनं ते नराः स्वर्गगामिनः ॥ २७
सहस्रपरिवेष्टारस्तथैव च सहस्रदाः । दातारश्च सहस्राणां ते नराः स्वर्गगामिनः ॥ २८
आत्मस्वरूपभाजश्च यौवनस्थाः क्षमारताः । ये वै जितेन्द्रिया वीरास्ते नराः स्वर्गगामिनः ॥ २९
सुवर्णस्य प्रदातारो गवां भूमेश्च भारत । अन्नानां वाससां चैव पुरुषाः स्वर्गगामिनः ॥ ३०
निवेशनानां वन्यानां नराणां च परंतप । स्वयमुत्पाद्य दातारः पुरुषाः स्वर्गगामिनः ॥ ३१
द्विषतामपि ये दोषान्न वदन्ति कदाचन । कीर्तयन्ति गुणांश्चैव ते नराः स्वर्गगामिनः ॥ ३२
दृष्ट्वा विप्रान्प्रहृष्यन्ति प्रियं दत्त्वा वदन्ति च । त्यक्तदानफलेच्छाश्च ते नराः स्वर्गगामिनः ॥ ३३
ये परेषां श्रियं दृष्ट्वा न तप्यन्ति विमत्सराः । प्रहृष्टाश्चाभिनन्दन्ति ते नराः स्वर्गगामिनः ॥ ३४

* एतच्चिह्नान्तर्गतः पाठो ङ. छ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. च. छ. झ. ट. ठ. ढ. पुस्तकस्थः ।

१ ङ. °न्ये वै राज्यमुद्° । २ घ.ङ.छ.ट.ड.ड.ढ. °नः । ब्राह्मणानां गवां चैव कन्यानां सुहृदां तथा । सा° । ३ ङ. °रस्थिभिरे° । ४ क. ख. ङ. च. छ. झ. ढ. °स्ताः कालकर्ता । घ. ट. ड. °स्ताः कलिकर्ता तथै° । ५ क. ख. च. छ. झ. °न् । परीक्षां ये च कुर्वन्ति । नि° । ङ. ढ. °न् । प्रतिषेधं च कुर्वन्ति नि° । ६ क. ख. च. झ. वस्त्राणां । ७ क. ख. ङ. च. झ. ड. ढ. शिल्पानां । ८ ङ. छ. झ. ढ. °याः । विलोपयन्ति तान्भूयस्ते वै । घ. ट. ड. ड. °याः । विलापयन्ति तान्भूयस्ते वै । ९ ङ. ढ. °नः । इत्येते कथिता राजन्नरा निरयगा° । १० क. ख. च. छ. झ. °सा क्षान्त्या दाने° । घ. ट.ठ. °सा ज्ञानाद्दाने° । ङ. °सा क्षान्त्या दानेनाध्यापने° । ड. °सा क्षान्त्या ज्ञानेनाध्यापने° । ११ ङ. ढ°मतपःस्नान° । १२ ङ. ढ. आश्रधाना । छ. झ. आदधाना । १३ ङ. छ. झ. ढ. °णाः । पठन्ति विष्णुगायत्रीं ते न° । घ. ट. ठ. ड. °णाः । पठन्ति विष्णुं गायन्ति ते न° । १४ क. ख. घ. च. ट. ठ. सर्वसहाश्च । १५ छ. झ. °दाः । त्रातार° । १६ छ. धान्यानां वित्तानां च ।

प्रवृत्तौ च निवृत्तौ च मुनिशास्त्रोक्तमेव च। आचरन्ति महात्मानस्ते नराः स्वर्गगामिनः ॥ ३५
ये नराणां वचो वक्तुं न जानन्ति च विप्रियम्। प्रियवाक्येन विज्ञातास्ते नराः स्वर्गगामिनः॥ ३६
[*ये नाम भागं कुर्वन्ति कुतृष्णाश्रमकर्षिणः(?)। हन्तकारस्य दातारस्ते नराः स्वर्गगामिनः॥ ३७
वापीकूपतडागानां प्रपानां चैव वेश्मनाम्। आरामाणां च कर्तारस्ते नराः स्वर्गगामिनः]॥ ३८
असत्येष्वपि सत्या ये ऋजवोऽनार्जवेष्वपि। प्रवक्तारश्च दातारस्ते नराः स्वर्गगामिनः ॥ ३९
यस्मिन्कस्मिन्कुले जाता बहुपुत्राः शतायुषः। सानुक्रोशाः सदाचारास्ते नराः स्वर्गगामिनः ॥ ४०
अवन्ध्यं दिवसं कुर्युर्धर्मेणैकेन सर्वदा। व्रतं गृह्णन्ति ये नित्यं ते नराः स्वर्गगामिनः ॥ ४१
मित्रामित्रे स्तुवन्तश्च तुल्यं पश्यन्ति ये सदा। शान्तात्मानो जितात्मानस्ते नराः स्वर्गगामिनः॥ ४२
ये च स्युर्भयसंत्रस्ता ब्राह्मणांश्च तथा स्त्रियः। सार्थान्वा परिरक्षन्ति ते नराः स्वर्गगामिनः॥ ४३
गङ्गायां पुष्करे तीर्थे गयायां च विशेषतः। पितृपिण्डप्रदातारस्ते नराः स्वर्गगामिनः ॥ ४४
न वशाश्चेन्द्रियाणां ये तथा संयमने रताः। त्यक्तभोगभयक्रोधास्ते नराः स्वर्गगामिनः ॥ ४५
[+यूकामत्कुणदंशादीन्ये जन्तूंस्तुदतस्तनुम्। पुत्रवत्परिरक्षन्ति ते नराः स्वर्गगामिनः ॥ ४६
मनसश्चेन्द्रियाणां च सर्वदा निग्रहे रताः। परोपकारनिरतास्ते नराः स्वर्गगामिनः ॥ ४७
यज्ञानां च विशेषेण विधिना संवपन्ति ये। सर्वद्वंद्वसहा दान्तास्ते नराः स्वर्गगामिनः] ॥ ४८
ये पूताः परदारांश्च कर्मणा मनसा गिरा। रमयन्ति न सत्त्वस्थास्ते नराः स्वर्गगामिनः ॥ ४९
निन्दितानि न कुर्वन्ति कुर्वन्ति विहितानि च। आत्मशक्तिं विजानन्ति ते नराः स्वर्गगामिनः ॥
एतत्ते कथितं सर्वं मया तत्त्वेन पार्थिव। दुर्गतिः सुगतिश्चैव प्राप्यते कर्मभिर्यथा ॥ ५१

ततः परेषां प्रतिकूलमाचरन्प्रयाति घोरं नरकं सुदुःखदम्।
सदाऽनुकूलस्य नरस्य जीविनः सुखावहा मुक्तिरदूरसंस्थिता॥ ५२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे षण्णवतितमोऽध्यायः ॥ ९६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७७७३

---

अथ सप्तनवतितमोऽध्यायः।

---

कुञ्जल उवाच—
एवमाकर्ण्य तां राजा मुनिना तेन भाषिताम्। धर्माधर्मगतिं सर्वां तं मुनिं प्रत्यभाषत ॥ १

सुबाहुरुवाच—
सोऽहं धर्मं करिष्यामि नाहं पापं द्विजोत्तम। वासुदेवं जगद्योनिं भजिष्ये नितरां मुने ॥ २
ततो धर्मेण तेनैव संपूज्य मधुसूदनम्। इष्ट्वा च विविधैर्यज्ञैर्विष्णुलोकं स भूपतिः ॥
पूजितः सर्वकामैश्च प्राप्तवान्सत्वरं मुदा ॥ ३
गते सति महालोके देवदेवं न पश्यति। क्षुधा जाता महातीव्रा तृष्णा चातिप्रवर्धते ॥
[*तयोश्चापि महाप्राज्ञ जीवपीडाकरा बहु ॥ ४

---

* एतच्चिह्नान्तर्गतः पाठो ङ. छ. झ. ङ. पुस्तकस्थः। + एतच्चिह्नान्तर्गतः पाठो ञ. पुस्तके नास्ति। * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट, ठ. ड. ढ. पुस्तकस्थः।

---

१ ठ °नां प्रासादानां च वे°। २ ङ. छ. ढ. °पि। रिपुष्वपि हिता ये च ते न°। ३ घ. ङ. छ. ट. ठ. ढ. °नः। आक्रोशन्तं स्तुवन्तं च तु°। ४ ङ. छ. ढ. °यः। आत्मना प°। ५ घ, छ. ट. ठ. ड. °क्तलोभभ°। ६ ङ. छ. ढ. यथोक्तेन। ७ छ. झ. महातीमा।

राजा च प्रियया सार्धं क्षुधातृष्णाप्रपीडितः । न पश्यति हृषीकेशं दुःखेन महताऽन्वितः] ॥ ५

सूत उवाच—

एवं सुदुःखिते राजा प्रियया सह सत्तमः । आकुलो व्याकुलो जातः पीडितः क्षुधया भृशम् ॥ ६
इतश्चेतश्च वेगैश्च धावते वसुधाधिपः । सर्वाभरणशोभाङ्गो वस्त्रचन्दनभूषितः ॥ ७
पुष्पमालाप्रशोभाङ्गो हारकुण्डलमण्डितः । रत्नदीप्त्या प्रशोभाङ्गः प्रययौ स महीपतिः ॥ ८
एवं दुःखसमाचारः स्तूयमानश्च पाठकैः । दुःखशोकसमाविष्टः स्वप्रियां वाक्यमब्रवीत् ॥ ९
विष्णुलोकमहं प्राप्तस्त्वया सह सुशोभने । ऋषिभिः स्तूयमानोऽपि विमानेनापि भामिनि ॥ १०
कर्मणा केन मे चेयं क्षुधाऽतीव प्रवर्धते । विष्णुलोकं च संप्राप्य न दृष्टो मधुसूदनः ॥ ११
तत्किं हि कारणं भद्रे न भुनज्मि महत्फलम् । कर्मणाऽथ निजेनापि एतद्दुःखं प्रवर्तते ॥
सैवं श्रुत्वा च तद्वाक्यं राजानमिदमब्रवीत् ॥ १२

भार्योवाच—

सत्यमुक्तं त्वया राजन्नास्ति धर्मस्य वै फलम् ॥ १३
वेदशास्त्रपुराणेषु सम्यक्पश्यन्ति ब्राह्मणाः । दुःखशोकौ विधूयेह सर्वदोषाभिरस्य च ॥ १४
नामोच्चारणमात्रेण विष्णोश्चैव सुचक्रिणः । पुण्यात्मानो महाभागा ध्यानेनापि महात्मनः ॥ १५
त्वया चाऽऽराधितो देवः शङ्खचक्रगदाधरः । [*अन्नादिदानं विप्रेभ्यो न प्रदत्तं द्विजोदितम्]१६
फलं तस्य प्रजानामि न दृष्टो मधुसूदनः । क्षुधा मां बाधते राजंस्तृष्णा चैव प्रशोषयेत् ॥ १७

कुञ्जल उवाच—

एवमुक्तस्तु प्रियया राजा चिन्ताकुलेन्द्रियः । ततो दृष्ट्वा महापुण्यमाश्रमं सुमनोहरम् ॥ १८
दिव्यवृक्षसमाकीर्णं तडागैरुपशोभितम् । नानावृक्षसमाकीर्णं सर्वकामसमन्वितम्[२] ॥ १९
श्रीखण्डैश्चागुरुगन्धैश्च सुपुष्पैः सुशुभायते । एवं पुष्पसमाकीर्णं सुपुण्यं श्रिय(सुश्रि)योज्ज्वलम् ॥२०
वापीकूपतडागैश्च पुण्यतोयप्रपूरितैः । हंसकारण्डवाकीर्णं नानाखगविशोभितम्[३] ॥ २१
आश्रमः शोभते पुण्यैर्मुनिभिस्तत्त्ववेदिभिः । दिव्यवृक्षसमाकीर्णं मृगव्रातैश्च शोभितम् ॥ २२
नानापुष्पसमाकीर्णं हृद्यगन्धसमाकुलम् । द्विजसिद्धैः समाकीर्णमृषिशिष्यैः समाकुलम् ॥ २३
योगियोगीन्द्रसंघुष्टं देववृन्दैरलंकृतम् । कदलीवनसंघैश्च सुफलैः परिशोभितम् ॥ २४
स सुबाहुस्ततो राजा तया स्वप्रियया सह । प्रविवेश महापुण्यं नन्दनं सर्वकामदम् ॥ २५
भासमानो दिशः सर्वा यत्राऽऽस्ते सूर्यसंनिभः । वामदेवो मुनिश्रेष्ठो वैष्णवानां वरः सदा ॥२६
राजमानं महादीप्त्या परया सूर्यसंनिभम् । योगासनसमारूढं योगपट्टेन शोभितम् ॥ २७
ध्यायमानं हृषीकेशं भुक्तिमुक्तिप्रदायकम् । वामदेवं महात्मानं ददर्श मुनिसत्तमम् ॥ २८
तत्र गत्वा प्रणम्यैव स राजा प्रियया सह । वामदेवस्ततो दृष्ट्वा प्रणतं राजसत्तमम् ॥ २९
आशीर्भिरभिनन्द्यैव प्रियया सहितं मुदा । उपवेश्याऽऽसने पुण्ये सुबाहुं राजसत्तमम् ॥ ३०
आसनादि ततः पाद्यैरर्घपूजादिकेन च । सत्कारं कारयामास सभार्यं संस्थितं तदा ॥
अथ पप्रच्छ राजानं महाभागवतोत्तमम् ॥ ३१

* एतच्चिह्नान्तर्गतः पाठः, ट. पुस्तकस्थः ।

१ क. ख. ड. च. छ. झ. श्रमनाशनम् । २ ङ. छ. ढ. °र्णं ब्रह्मलक्ष्म्या समायुतम् । ३ क. ख. च. छ. झ. ढ. पद्मकह्लारशोभितम् ।

वामदेव उवाच—
त्वामहं विष्णुधर्मज्ञं विष्णुभक्तं नरोत्तम । जाने ज्ञानेन राजेन्द्र दिव्येन चोलभूमिपम् ॥
निरामयोऽसि वै राजन्भार्यया प्रियया सह ॥ ३२
राजोवाच—
निरामयोऽस्मि भगवन्प्राप्तो विष्णोः परं पदम् । मया हि परया भक्त्या वासुदेवो जनार्दनः ३३
आराधितो जगन्नाथो भक्त्या प्रीतः सुरेश्वरः । कस्मात्तत्र न पश्यामि तं देवं कमलापतिम्॥ ३४
क्षुधा मे बाधते चात्र तृष्णाऽतीव सुदारुणा । ताभ्यां शान्तिं न गच्छामि सुखं विन्दामि नैव च
एतन्मेऽकारणं [*दुःखं संजातं मुनिसत्तम । तन्मे त्वं कारणं] ब्रूहि प्रसादसुमुखो भव ॥ ३६
वामदेव उवाच—
भवान्भक्तोऽसि राजेन्द्र श्रीकृष्णस्य सदैव हि । आराधितस्त्वया भक्त्या परया मधुसूदनः ३७
भक्त्योपचारैः स्नानाद्यैर्गन्धपुष्पादिभिस्तथा । न पूजितोऽथ नैवेद्यैः फलैश्च जगतां पतिः ॥३८
दशमीं प्राप्य राजेन्द्र सदैव हि त्वया कृतम् । एकभक्तं न दत्तं तु ब्राह्मणाय सुभोजनम्॥ ३९
एकादशीं च संप्राप्य न कृतं भोजनं त्वया । विष्णुमुद्दिश्य विप्राय न दत्तं भोजनं त्वया ॥४०
अन्नदानं विशेषेण कदा दत्तं न हि त्वया । अन्नं चामृतरूपेण पृथिव्यां संस्थितं सदा ॥ ४१
ओषध्यस्तु महाराज नानाभेदास्तु ताः शृणु । कटुतिक्तकषायाश्च क्षाराम्लमधुरास्तथा ॥ ४२
स्निग्धाश्चोपस्कराः सर्वा नानारूपाश्च भूतले । अमृताज्जज्ञिरे सर्वा ओषध्यः पुष्टिहेतवः ॥ ४३
अन्नमेव तु संस्कृत्य ओषधीर्व्यञ्जनान्विताः । देवेभ्यो [+विष्णुरूपेभ्य इति संकल्प्य दीयते ।
पितृभ्यो] विष्णुरूपेभ्यो हस्ते च ब्राह्मणस्य च ॥ ४४
अतिथिभ्यस्ततो दत्त्वा परिजनं प्रभोजयेत् । स्वयं तु भुज्यते पश्चात्तदन्नममृतोपमम् ॥ ४५
प्रेत्य दुःखं न तस्यास्ति सुखमेव हि केवलम् । ब्राह्मणाः पितरो देवाः क्षेत्ररूपाश्च भूपते ॥ ४६
यथा हि कर्षकः कश्चित्सुकृषिं कुरुते सदा । तद्वन्मर्त्यः कृषिं कुर्यात्क्षेत्रे विप्राख्यके नृप ॥ ४७
स्वभावलाङ्गलेनापि ब्रह्मतोदेन नोदयेत् । वृषभौ तु मतौ नित्यं बुद्धिश्चैव तपस्तथा ॥ ४८
सत्यज्ञानानुभावीशः शुद्धात्मा च प्रतोदकः । विप्रे चैव महाक्षेत्रे नमस्कारैर्विसर्जयेत् ॥ ४९
स्फोटयेत्कल्मषं नित्यं कर्षको हि यथा नृप । क्षेत्रस्य उद्यमे युक्तो विष्णुकामः प्रसाधयेत् ॥५०
तद्वाक्यैश्च महापुण्यैः शुभैर्विप्रान्प्रसादयेत् । पर्वतीर्थाप्तिकालश्च घनरूपोऽभिवर्षणे ॥ ५१
पशुकामो भवेत्क्षेत्री ततः क्षेत्रे प्रवापयेत् । तद्वद्भूप प्रशस्ताय विप्राय परिदीयते ॥ ५२
क्षेत्र उप्तस्य बीजस्य यथा क्षेत्री प्रभुञ्जते । फलमेव महाराज तथा दाता भुनक्ति च ॥ ५३
प्रेत्य चात्रैव नित्यं च तृप्तो भवति नान्यथा । ब्राह्मणाः पितरो देवाः क्षेत्ररूपा न संशयः ५४
मानवानां महाराज वेपतां प्रददति च । फलमेव न संदेहो यादृशं तादृशं ध्रुवम् ॥ ५५
[†कटुकाद्धि न जायेत राजन्मधुर एव च । तद्वच्च मधुराख्याच्च न जायेत्कटुकः सदा ॥ ५६
यादृशं वपते बीजं तादृशं फलमश्नुते । न वापयति यः क्षेत्रं न स भुञ्जति तत्फलम् ॥ ५७
तद्वद्देवाश्च विप्राश्च पितरः क्षेत्ररूपिणः । दर्शयन्ति फलं राजन्दत्तस्यापि न संशयः] ॥ ५८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । † क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थोऽयं पाठः ।

---

१ ड. °द्वद्विष्णुप्रपन्नाय । क. ख. ङ. च. छ. झ. ढ. °द्वद्धि सुप्रसन्नाय । २ क. ख. ङ. च. छ. ढ. वापिता ।

याद‍ृशं हि कृतं कर्म त्वयैव च शुभाशुभम् । ताद‍ृशं भुङ्क्ष्व राजेन्द्र यथा तेनैव जायते ॥ ५९
न पुरा देवविप्रेभ्यः पितृभ्यश्च कदा त्वया । मिष्टान्नपानमेवापि दत्तं सुमनसा तदा ॥ ६०
सुभोज्यैर्भोजनैर्मिष्टैर्मधुरैश्चोष्यपेयकैः । सुभक्ष्यैरात्मना भुक्तं कस्मै दत्तं न च त्वया ॥ ६१
स्वशरीरं त्वया पुष्टमन्नैरमृतसंभवैः । यस्मात्कृतं महाराज तस्मात्क्षुधा प्रवर्तते ॥ ६२
कर्मैव कारणं राजन्नराणां सुखदुःखयोः । जन्ममृत्योर्महाभाग भुङ्क्ष्व तत्कर्मणः फलम् ॥ ६३
पूर्वेऽपि च महात्मानो दिवं प्राप्ताः स्वकर्मणा । पुनः प्रयाता भूर्लोकं कर्मणः क्षयकालतः ॥ ६४
नलो भगीरथश्चैव विश्वामित्रो युधिष्ठिरः । कर्मणैव हि संप्राप्ताः स्वर्गं राजन्स्वकालतः ॥ ६५
दिष्टं हि प्राक्तनं कर्म तेन दुःखं सुखं लभेत् । तदुल्लङ्घयितुं राजन्कः समर्थोऽपि हीश्वरः ॥ ६६
अथ तस्मान्नृपश्रेष्ठ स्वर्गतस्यापि तेऽभवत् । क्षुत्तृष्णासंभवो वेगस्ततो दुष्टं हि कर्म ते ॥ ६७
यदि ते क्षुत्प्रतीकारो ह्यभीष्टो नृपसत्तम । तद्गत्वा भुङ्क्ष्व कायं स्वमानन्दारण्यसंस्थितम् ॥
तव चेयं महाराज्ञी क्षुत्क्षामाऽतीव दृश्यते ॥ ६८

सुबाहुरुवाच—

कस्य दानेन किं पुण्यं द्रव्यस्य मुनिसत्तम । तत्प्रब्रूहि महाप्राज्ञ यदि तुष्टोऽसि सांप्रतम् ॥ ६९

वामदेव उवाच—

अन्नदानान्महासौख्यमुदकस्य महामते ॥ ७०
स्वर्गे भुञ्जन्ति वै मर्त्याः पीड्यन्ते नैव पातकैः । यदा दानं न दत्तं तु भवेदपि च मानवैः ॥ ७१
मृत्युकाले तु संप्राप्ते दानं सर्वं ददाति च । आदावेव प्रदातव्यमन्नं चोदकसंयुतम् ॥ ७२
सुच्छत्रोपानहौ दद्याज्जलपात्रं तु शोभनम् । भूमिं सुकाञ्चनं धेनुमष्टौ दानानि योऽर्पयेत् ॥ ७३
स्वर्गे न जायते तस्य क्षुधातृष्णादिबाधनम् । क्षुधा न वर्धते राजन्नन्नदानात्सुतृप्तिमान् ॥ ७४
तृष्णा तीव्रा न हि स्याद्वै तृप्तो भवति सर्वदा । उदकस्य प्रदानेन च्छत्रदानेन भूपते ॥ ७५
छायामाप्नोति सुस्निग्धां वाहनं च नृपोत्तम । [ *उपानहप्रदानेन अन्यदेवं वदाम्यहम् ] ॥ ७६
भूमिदानान्महाभोगान्समृद्धान्प्राप्नुयान्नरः । गोदानेन महाराज रसैः पुष्टो भवेत्सदा ॥
सुखभोगान्स भुञ्जानः स्वर्गलोके वसेन्नरः ॥ ७७
तृप्तो भवति वै दाता गोदानेन न संशयः । नीरुजः सुखसंपन्नः संतुष्टश्च्युतिवर्जितः ॥ ७८
काञ्चनेन सुवर्णस्तु जायते नात्र संशयः । सुश्रीमान्रूपवांस्त्यागी रत्नदानाद्भवेन्नरः ॥ ७९
मृत्युकाले तु संप्राप्ते तिलदानं प्रयच्छति । सर्वभोगपतिर्भूत्वा विष्णुलोकं स गच्छति ॥ ८०
एवं दानविशेषेण प्राप्यते परमं सुखम् । गोदानं भूमिदानं च अन्नं चैवोदकं त्वया ॥ ८१
जीवमानेन राजेन्द्र न दत्तं ब्राह्मणाय वै । मृत्युकाले च नो दत्तं तस्मात्क्षुत्ते प्रवर्तते ॥ ८२
एतत्ते कारणं प्रोक्तं जातं कर्मवशानुगम् । याद‍ृशं हि कृतं कर्म ताद‍ृशं परिभुज्यते ॥ ८३

सुबाहुरुवाच—

कथं क्षुधा प्रशान्तिं मे प्रयाति मुनिसत्तम । अनया शोषितो देहो ह्यतीव परिदूयते ॥ ८४

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ घ. ङ. ट. ठ. ड. ढ. °च । कियत्कालमिदं कर्म कर्तव्यं प्रियया सह । त° । २ ङ. छ. ढ. °हाभाग सर्वान्कामानवाप्नुयात् । गो° ।३ क. ख. घ. च. झ. ट. ठ. ड. °न्सर्वान्कामानवाप्नुयात् । गो° । ४ ङ. ढ. °ष्टस्तु धनान्वितः ।

अतस्तृप्त्यै द्विजश्रेष्ठ प्रायश्चित्तं वदस्व मे । कर्मणश्चास्य घोरस्य यथा शान्तिर्भवेन्मम ॥ ८५

वामदेव उवाच—

प्रायश्चित्तं न चैवास्ति ऋते भोगान्नरोत्तम । कर्मणश्च फलं सर्वं तत्त्वं स्वस्य प्रभुङ्क्ष्व हि ॥ ८६
यत्र ते पतितः कायः प्रियायाश्चैव भूपते । युवाभ्यां हि प्रगन्तव्यं तत्र स्मरणपूर्वकम् ॥ ८७
उभाभ्यामपि भोक्तव्यः कायश्चाक्षय एव सः ।[*स्वं स्वं राजन्न संदेहस्त्वया वै प्रियया सह॥]

सुबाहुरुवाच—

कियत्कालं प्रभोक्तव्यं मयैवं प्रियया सह । तदादिश महाभाग प्रमाणं तद्वचो मम ॥ ८९

वामदेव उवाच—

वासुदेवाभिधं स्तोत्रं महापातकनाशनम् । यदा त्वं श्रोष्यसे राजंस्तदा मोक्षं प्रयास्यसि ॥
एतत्ते सर्वमाख्यातं स्वेच्छया गच्छ तत्कुरु ॥ ९०
एवं श्रुत्वा ततो राजा भार्यया सह वै तदा । गत्वा तत्र शरीरं स्वं भुङ्क्ते वै प्रियया सह॥९१
नित्यमेव महाप्राज्ञ तद्वत्पूर्णं भवेद्वपुः । नित्यं प्रभुङ्क्ते वै राजा राज्ञी चास्य क्षुधान्विता ॥ ९२
यथा यथा स राजाऽपि भुङ्क्ते वै स्वकलेवरम् । हसन्ति च तदा नार्यस्तयोर्भावं वदाम्यहम्[1]॥९३
देवैः सार्धं ततः श्रुत्वा चरितं तस्य भूपतेः । हास्यं च कुरुते शक्रस्तस्य राज्ञः सुरेश्वरः ॥ ९४
ततो वर्षशतान्ते तु वामदेवं महामुनिम् । स्मृत्वा स गर्हयामास आत्मानं प्रति सुव्रत ॥ ९५
न दत्तं पितृदेवेभ्यो ब्राह्मणेभ्यः[4] कदा मया । न दत्तमतिथिभ्यो हि[5] तद्[6]उत्थमिह भुज्यते ॥ ९६
दीनेभ्योऽपि न दत्तं मे कृपया वाऽऽतुराय च । एवं स भुङ्क्ते वै मांसं गर्हयन्स्वीयकर्म तत्॥९७
एवं स्वमांसं भुञ्जानं सुबाहुं प्रियया सह । हसेते च तदा दृष्ट्वा प्रज्ञा श्रद्धा च द्वे स्त्रियौ ॥ ९८
तस्य कर्मविपाकस्य शुभात्मा हसते नृप । मम सङ्गप्रसङ्गेन न दत्तं पापचेतसा ॥ ९९
प्रज्ञा च वचनैस्तैस्तु राजानं हसते पुनः । क्व गतोऽसौ महामोहो येन त्वं मोहितो नृप ॥ १००
लोभेन मोहयुक्तेन तमोगर्ते निपातितः । तत्रापतित्वा सद्यैव(?) पतितो दुःखसंकटे ॥ १०१
दानमार्गं परित्यज्य लोभमार्गं गतो नृप । भार्यया सह भुङ्क्ष्व त्वं व्यापितः क्षुधया भृशम्१०२
एवं तं हसते प्र[7]ज्ञा सुबाहुं प्रिययाऽन्वितम् । एतद्वै कारणं प्रोक्तं तयोर्हास्यस्य पुत्रक ॥ १०३
भक्षमाणस्य भूपस्य देहं स्वं दुःखिते तदा । ऊचतुर्देहि[8] देहीति क्षुधा तृष्णा च ते परे ॥ १०४
क्षुधा तृष्णा महाप्राज्ञ भीमरूपे भयानके।पयसा मिश्रितं भक्तं याचेते नृपतीश्वरम्॥ १०५
एतत्ते सर्वमाख्यातं यत्त्वया परिपृच्छितम् । अन्यत्किं ते प्रवक्ष्यामि तद्वदस्व महामते ॥ १०६

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. पुस्तकस्थः ।

---

१ ङ. ढ. °च—साहसाकारसंयुक्तं मयैव द्विजसत्तम । त° । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. °ज्ञी तस्य पुत्रक । य° । ड. °ज्ञी तत्र सुपुत्रक । यं । ३ क ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °म् । प्रज्ञासार्धं महाश्रद्धा चरित्रं तस्य भूपतेः । हास्यं हि कुरुते नित्यं तस्य श्रद्धानुगायिनी । प्रज्ञया प्रेर्यमाणेन न दत्तं श्रद्धयाऽन्वितम् । ब्राह्मणेभ्यः सुसंकल्प्य अन्नमुद्दिश्य वैष्णवे । एवं स भक्षते मांसं स्वस्य कायस्य नित्यशः । योषित्तदात्मकायं च रसैश्चामृतसंनिभैः । न । ४ क. ख. घ. ङ. छ. झ. ट. ठ. ड. ढ. °भ्यः सुतोत्तम । न । ५ क. ख. ङ. च. छ. झ. ड. ढ. हि वृद्धेभ्यश्च विशेषतः । दी° । घ. ट. ठ. हि विप्रेभ्यश्च विशेषतः । दी° । ६ क. ख. घ. ङ. छ. झ. ट ठ ड. ढ. °सं स्वयमेव यथा नृप । ए° । ७ घ. ट. ठ. ड. प्राज्ञं । ८ क. ख. ङ. च. छ. ढ. °ति याच्यमानः शृणुष्व हि । क्षु° । घ, ट, ठ, ड. °ति वाच्यमानः शृणुष्व हि । क्षु° । ९ झ. ड. ढ. °मि धर्मसंदेहमिश्रितम् । वि° ।

विज्वल उवाच—

वासुदेवाभिधानं च स्तोत्रं कथय मे पितः । येन मोक्षं व्रजेदाशु तद्विष्णोः परमं पदम् ॥ १०७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे सप्तनवतितमोऽध्यायः ॥ ९७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७८८०

अथाष्टानवतितमोऽध्यायः ।

विष्णुरुवाच—

एवमुक्ते शुभे वाक्ये विज्वलेन महात्मना । कुञ्जलो वदतां श्रेष्ठः स्तोत्रं पुण्यमुपादिशत् ॥ १
ध्यात्वा नत्वा हृषीकेशं सर्वक्लेशविनाशनम् । सर्वश्रेयःप्रदातारं सर्वदुःखविनाशनम् ॥ २
मोक्षद्वारं सुखोपेतं शान्तिदं पुष्टिवर्धनम् । सर्वकामप्रदातारं ज्ञानदं ज्ञानवर्धनम् ॥ ३
वासुदेवस्य यत्स्तोत्रं विज्वलाय प्रकाशितम् । [*वासुदेवाभिधानं चाप्रमेयं पुण्यवर्धनम् ]॥
सोऽवगम्य पितुः सर्वं विज्वलः पक्षिणां वरः ॥ ४
तत्र गन्तुं प्रचक्राम पितुः पृष्टं तदा नृप । एवं गन्तुं कृतमतिं विज्वलं ज्ञानपारगम् ॥
उवाच पुत्रं धर्मात्मा उपकारसमुद्यतम् ॥ ५

कुञ्जल उवाच—

पुत्र तस्य महज्जाने पातकं चापि भूपतेः । इतो गत्वा पठस्व त्वं सुबाहोश्चोपशृण्वतः ॥ ६
यथा यथा श्रोष्यति स्तोत्रमुत्तमं तथा तथा ज्ञानमयो भविष्यति ॥
श्रीवासुदेवस्य न संशयो वै तस्य प्रसादाच्च शिवं मयोक्तम् ॥ ७
अथाऽऽमन्त्र्य गुरुं तस्मादुड्डीय लघुविक्रमः । आनन्दकाननं पुण्यं संप्राप्तो विज्वलस्तदा ॥ ८
वृक्षच्छायां समाश्रित्य उपविष्टो मुदाऽन्वितः। प्रेक्षमाणः स राजानं विमानेनाऽऽगतं पुनः ॥ ९
एष्यत्यसौ कदा राजा सुबाहुः प्रियया सह । पातकान्मोचयिष्यामि स्तोत्रेणानेन वै कदा ॥१०
तावद्विमानः संप्राप्तः किङ्किणीजालमण्डितः । गन्धर्ववरसंघुष्टस्त्वप्सरोभिः समन्वितः ॥ ११
सर्वकर्मसमृद्धस्तु अशोदकविवर्जितः । तस्मिन्याने स्थितो राजा सुबाहुः प्रियया सह ॥ १२
समुत्तीर्णो विमानात्तु सरसस्तस्य संनिधौ । शस्त्रमादाय तीक्ष्णं तु यावत्कृन्तति तच्छवम् ॥ १३
तावद्धि विज्वलेनापि समाधानं कृतं तदा । भो भोः पुरुषशार्दूल देवोपम भवानिदम् ॥ १४
करोषि(ति) निर्घृणं कर्म नृशंसैर्न च शक्यते । कर्तुं ततस्तु पृच्छे त्वां कोऽयं विधिविपर्ययः॥१५
दुष्कृतं साहसं कर्म निन्द्यं लोकेषु सर्वदा । वेदाचारविहीनं तु कस्मात्प्रारब्धवानिह ॥ १६
तन्मे त्वं कारणं सर्वं कथयस्व यथातथम् । इत्येवं भाषितं तस्य विज्वलस्य महात्मनः ॥ १७
समाकर्ण्य महाराजः स्वप्रियां वाक्यमब्रवीत् । प्रिये वर्षशतं भुक्तं मयेदं पापकर्मणा ॥ १८

* एतच्चिह्नान्तर्गतः पाठः घ. ट. ठ. पुस्तकस्थः ।

१ क. ख. घ. ङ. च. ट. ठ. ड. ढ. °रं हरेः स्तोत्रमुदीरितम् । वासुदेवाभिधानं तत्सर्वं° । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °गम्यावधार्यैव वि° । ३ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °रः । एवं स्तोत्रं महापुण्यं वासुदेवाख्यमुत्तमम् । कुञ्जलेनोपदिष्टं तत्र गृहे विज्वलस्तदा । कु° । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. वृक्षशाखां । ५ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °तुं पुरुषशार्दूल को° । ६ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °ये युगसहस्रं तु वर्तितं मम चात्र च । क° ।

कदा न भाषितं केन यथाऽयं परिभाषते । ममैवं पीड्यमानस्य क्षुधया हृदयं प्रिये ॥ १९
निर्गतं चोत्सुकं कान्ते शान्तिश्चित्ते प्रवर्तते । यावदस्य श्रुतं वाक्यं सर्वदुःखस्य शान्तिदम् ॥ २०
तावच्चित्ते समाह्लादो वर्धते चारुहासिनि । कोऽयं यमोऽम्बुपो धर्मः सहस्राक्षोऽथवा प्रिये ॥ २१
मुनीनां स्याद्वचः सत्यं यदुक्तं मुनिना पुरा । एवमाभाषितं श्रुत्वा प्रियस्यानन्तरं प्रिया ॥ २२
राजानं प्रत्युवाचाथ भार्या पतिपरायणा । सत्यमुक्तं त्वया नाथ इदमाश्चर्यमुत्तमम् ॥ २३
यथा ते वर्तते कान्त मम चित्ते तथा पुनः । पक्षिरूपधरः कोऽयं पृच्छते हितकारिवत् ॥ २४
एवमाभाषितं श्रुत्वा प्रियायाः पृथिवीपतिः । बद्धाञ्जलिपुटो भूत्वा पक्षिणं वाक्यमब्रवीत् ॥ २५

सुबाहुरुवाच—

स्वागतं ते महाप्राज्ञ पक्षिरूपधर प्रभो । शिरसा भार्यया सार्धं तव पादाम्बुजद्वयम् ॥ २६
नमस्करोम्यहं पुण्यमस्तु नस्त्वत्प्रसादतः । भवान्कः पक्षिरूपेण पुण्यमेवं प्रभाषते ॥ २७
यादृशं क्रियते कर्म पूर्वदेहेन सत्तम । सुकृतं दुष्कृतं वाऽपि तदिहैव प्रभुज्यते ॥ २८
अथ तेनाऽऽत्मकं वृत्तं तदग्रे विनिवेदितम् । यथोक्तं कुञ्जलेनापि पित्रा पूर्वं श्रुतं तथा ॥ २९
[*कथयस्व स्ववृत्तान्तं भवान्को मे प्रभाषते] । सुबाहुं प्रत्युवाचेदं वाक्यं पक्षिवरस्तदा ॥ ३०

विज्वल उवाच—

शुकजात्यां समुत्पन्नः कुञ्जलो नाम मे पिता । तस्याहं विज्वलो नाम तृतीयस्तु सुतेष्वहम् ॥ ३१
नाहं देवो न गन्धर्वो न च सिद्धो महाभुज ॥ ३२
नित्यमेव प्रपश्यामि कर्म चैतत्सुदारुणम् । कियत्कालं महत्कर्म साहसाकारसंयुतम् ॥ ३३
करिष्यसि महाराज तन्मे त्वं कारणं वद ।

सुबाहुरुवाच—

वासुदेवाभिधानं यत्पूर्वमुक्तं हि ब्राह्मणैः ॥ ३४
श्रोष्याम्यहं यदा भद्र गतिं स्वां प्राप्नुयात्तदा । पुण्यात्मना भाषितं वै मुनिना संयतात्मना ॥ ३५
तदाऽहं पातकान्मुक्तो भविष्यामि न संशयः ।

विज्वल उवाच—

तवार्थे पृच्छितस्तातस्तेन मे कथितं च यत् । तत्तेऽद्याहं प्रवक्ष्यामि शाश्वतं शृणु सत्तम ॥ ३६
ॐ अस्य श्रीवासुदेवाभिधानस्तोत्रस्यानुष्टुप्छन्दः । नारद ऋषिः । ॐकारो देवता । सर्वपातकनाशाय चतुर्वर्गसाधनार्थे च विनियोगः ॥ ॐ नमो भगवते वासुदेवाय, इति मन्त्रः ॥
परमं पावनं पुण्यं वेदज्ञं वेदमन्दिरम् । विद्याधारं मखाधारं प्रणवं तं नमाम्यहम् ॥ ३९
निरावासं निराकारं सुप्रकाशं महोदयम् । निर्गुणं गुणकर्तारं नमामि प्रणवं परम् ॥ ४०
गायत्रीसाम गायन्तं गीतज्ञं गीतसुप्रियम् । गन्धर्वगीतभोक्तारं प्रणवं तं नमाम्यहम् ॥ ४१
महाकान्तं महोत्साहं महामोहविनाशनम् । आचिन्वन्तं जगत्सर्वं गुणातीतं नमाम्यहम् ॥ ४२

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. वर्तते । २ क. ख. ङ. च. छ. झ. ड. °यं देवो नु गन्धर्वः सहस्राक्षो भविष्यति । मु° । घ. ट. ठ. °यं देवानुगो धर्मः सहस्राक्षो भविष्यति । मु° । ३ ड. °द्भुरो देवि सिद्धः कश्चिद्भविष्यति । ए° । ४ क. ख. घ. च. ट. ठ. ड. ढ. द्विजोत्तमः । ५ ङ. जपे । ६ क. ख घ. ङ. च. छ. झ. ट. ठ. ड. ढ. भवाधारं ।

भाति सर्वत्र यो भूत्वा भूतानां भूतिवर्धनः । स[1]मभागाय सद्धर्मं नमामि प्रणवं प[2]रम् ॥ ४३
विचारं वेदरूपं तं ये[3]ज्ञाख्यं यज्ञवल्लभम् । योनिं सर्वस्य लोकस्य ओंकारं प्रणमाम्यहम् ॥ ४४
तारकं स[4]र्वलोकानां नौरूपेण विराजितम् । संसारार्णवमग्नानां नमामि प्रणवं हरिम् ॥ ४५
वसते स[5]र्वभूतेषु एकरूपेण नैकधा[6] । धामकैवल्यरूपेण नमामि वरदं सुखम् ॥ ४६
सूक्ष्मं सूक्ष्मतरं शुद्धं निर्गुणं गुणनायकम् । वर्जितं प्राकृतैर्भावै[7]र्वेदाख्यं तं नमाम्यहम् ॥ ४७
देवदैत्यवियोगैश्च वर्जितं तुष्टिभिस्तथा । वेदैश्च योगिभिर्ध्येयं तमोंकारं नमाम्यहम् ॥ ४८
व्यापकं विश्ववेत्तारं विज्ञानं परमं प[8]दम् । शिवं शिवगुणं शान्तं वन्दे प्रणवमीश्वरम् ॥ ४९
यस्य मायां प्रविष्टास्तु ब्रह्माद्याश्च सुरासुराः । न विन्दन्ति परं शुद्धं मोक्षद्वारं नमाम्यहम् ॥ ५०

आनन्दकन्दाय च केवलाय शुद्धाय हंसाय परावराय ।
नमोऽस्तु तस्मै गुणनायकाय श्रीवासुदेवाय महाप्रभाय ॥ ५१
श्रीपाञ्चजन्येन विराजमानं रविप्रभेणापि सुदर्शनेन ।
गदाख्यकेनापि विशोभमानं विष्णुं सदैवं शरणं प्रपद्ये ॥ ५२
यं वेदकोशं सुगुणं गुणानामाधारभूतं सचराचरस्य ।
यं सूर्यवैश्वानरतुल्यतेजसं तं वासुदेवं शरणं प्रपद्ये ॥ ५३
तमोघनानां निकरैः प्रकाशं करोति नित्यं यतिधर्महेतुम् ।
उद्योतमानं रवितेजसोर्ध्वं तं वासुदेवं शरणं प्रपद्ये ॥ ५४
सुधानिधानं विमलांशुरूपमानन्दमानेन विराजमानम् ।
यं प्राप्य जीवन्ति सुरादिलोकास्तं वासुदेवं शरणं प्रपद्ये ॥ ५५
यो भाति सर्वत्र रविप्रभावैः करोति शोषं च रसं ददाति ।
यः प्राणिनामन्तरगः सवायुस्तं वासुदेवं शरणं प्रपद्ये ॥ ५६
ज्येष्ठस्तु रूपेण स देवदेवो बिभर्ति लोकान्सकलान्महात्मा ।
एकार्णवे नौरिव वर्तते यस्तं वासुदेवं शरणं प्रपद्ये ॥ ५७
अन्तर्गतो लोकमयः सदैव भवत्यसौ स्थावरजङ्गमानाम् ।
स्वाहामुखो देवमुखस्य हेतुस्तं वासुदेवं शरणं प्रपद्ये ॥ ५८
रसैः सुपुण्यैः सकलैस्तु पुष्टः स सौम्यरूपैर्गुणवित्त लोके ।
रत्नाधिपो निर्मलतेजसैव तं वासुदेवं शरणं प्रपद्ये ॥ ५९
[*अस्त्येव सर्वत्र विनाशहेतुः सर्वाश्रयः सर्वमयः स सर्वः ।
विना हृषीकैर्विषयान्प्रभुङ्क्ते तं वासुदेवं शरणं प्रपद्ये ] ॥ ६०
[14]तेजःस्वरूपेण बिभर्ति लोकान्सत्त्वान्समस्तान्स चराचरस्य ।
निष्केवलो ज्ञानमयः सुशुद्धस्तं वासुदेवं शरणं प्रपद्ये ॥ ६१

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. झ. ञ. ढ. पुस्तकस्थः ।

१ घ.ट.ठ. °मभावाय संबन्धं न°। ङ. सर्वज्ञं भिक्षुसंबन्धं न°। २ ङ.ढ. शिवम् । ३ ङ.ढ. °ज्ञास्यं भक्तवत्सलम् । ४ घ. ङ.झ.ट.ठ.ड.ढ. °र्वभूतानां । ५ क.छ.ढ. °र्वलोकेषु । ६ ङ. °धा । काम° । ७ घ.ट.ठ. °र्वेदस्त्यातं । ङ.छ.ढ. °र्वेदस्थानं न°। ८ क.ख.घ.ङ.च.छ.झ.ट.ठ.ड.ढ. शुभम् । ९ ङ. ढ. °य विशुद्धबुद्धये शु° । १० ङ. °न्दकन्देन । ११ क.ख.ङ.च.झ.ड.ढ. °त्र वरप्र°। १२ क.ख.ङ.च.झ.ढ. °वगणस्य। १३ क.ख.ङ छ.झ.ढ. °णदः स लो°। १४ क.ख.घ.ङ.च.झ.ट.ड.ढ. जीवस्वरूपेण।

[*दैत्यान्तकं दुःखविनाशमूलं शान्तं परं शक्तिमयं विशालम् ।
संप्राप्य देवा विलयं प्रयान्ति तं वासुदेवं शरणं प्रपद्ये] ॥ ६२
सुखं सुखान्तं सुहृदं सुरेशं ज्ञानार्णवं तं सुहितं हितं च ।
सत्याश्रयं सत्यगुणोपविष्टं तं वासुदेवं शरणं प्रपद्ये ॥ ६३
यज्ञस्वरूपं पुरुषार्थरूपं सत्यान्वितं मापतिमेव पुण्यम् ।
विज्ञानमेतं जगतां निवासं तं वासुदेवं शरणं प्रपद्ये ॥ ६४
अम्भोधिमध्ये शयनं हि यस्य नागाङ्गभोगे शयने विशाले ।
श्रीः पादपद्मद्वयमेव सेवते तं वासुदेवं शरणं प्रपद्ये ॥ ६५
पुण्यान्वितं शंकरमेव नित्यं तीर्थैरनेकैः परिसेव्यमानम् ।
तत्पादपद्मद्वयमेव तस्य श्रीवासुदेवस्य नमामि नित्यम् ॥ ६६
[+अघापहं वा यदि वाऽम्बुजं तद्रक्तोत्पलाभं ध्वजवायुयुक्तम् ।
अलंकृतं नूपुरमुद्रिकाभिः श्रीवासुदेवस्य नमामि पादम् ॥ ] ६७
देवैः सुसिद्धैर्मुनिभिः सदैव नुतं सुभक्त्या उरगाधिपैश्च ।
तत्पादपङ्केरुहमेव पुण्यं श्रीवासुदेवस्य नमामि नित्यम् ॥ ६८
यस्यापि पादाम्भसि मज्जमानाः पूता दिवं यान्ति विकल्मषास्ते ॥
मोक्षं लभन्ते मुनयः सुतुष्टास्तं वासुदेवं शरणं प्रपद्ये ॥ ६९
पादोदकं तिष्ठति यत्र विष्णोर्गङ्गादितीर्थानि सदैव तत्र ।
त्यजन्ति प्राणांश्च अपापदेहाः प्रयान्ति शुद्धाः सुगृहं मुरारेः ॥ ७०
पादोदकेनाप्यभिषिच्यमाना अत्युग्रपापैः परिलिप्तदेहाः ।
ते यान्ति मुक्तिं परमेश्वरस्य तस्यैव पादौ सततं नमामि ॥ ७१
नैवेद्यमात्रेण सुभक्षितेन सुचक्रिणस्तस्य महात्मनश्च ।
ते वाजपेयस्य फलं लभन्ते सर्वार्थयुक्ताश्च नरा भवन्ति ॥ ७२
नारायणं दुःखविनाशनं तं मायाविहीनं सकलं गुणज्ञम् ।
यं ध्यायमानाः सुगतिं व्रजन्ति तं वासुदेवं सततं नमामि ॥ ७३
यो वन्द्यस्त्वृषिसिद्धचारणगणैर्देवैः सदा पूज्यते
यो विश्वस्य हि सृष्टिहेतुकरणे ब्रह्मादिकानां प्रभुः ।
यः संसारमहार्णवे निपतितस्योद्धारको वत्सल-
स्तस्यैवापि नमाम्यहं सुचरणौ भक्त्या वरौ साधकौ ॥ ७४

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. झ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः ।

१ क. ख. घ ङ. च. झ. ट. ड. ढ. सुखान्तं । २ ट. °नात्मवन्तं । ३ क. ख. झ. यज्ञाङ्गरूपं परमार्थरूपं मखान्वि° । ङ. ढ. यज्ञाङ्गरूपं परमार्थरूपं मायान्वि° । ट. यज्ञाङ्गरूपं । ४ ड. °त्र । पिबन्ति यत्प्राप्य सुपा° । ट. °त्र । त्यजन्ति यं प्राप्य सुपा° । ५ ग. भक्तिं । ६ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. °णं नरकवि° । ७ ट. °म् । सद्धर्मराशिं सुगतिं सुकान्तं तं । ८ क. ख. च. छ. झ. ढ. यं धामराशिं सुगतं सुकान्तं तं । ९ घ. ट. ठ. ड. °दैवः स° । १० ड. महात्मनः । ११ क. ङ. च. छ. झ. ड. ढ. पावनौ ।

यो दृष्टो निजमण्डपे सुरगणैः श्रीवामनः सामगः
सामोद्गीतकुतूहलः सुरगणैस्त्रैलोक्य एकः प्रभुः ।
कुर्वंस्तु ध्वनितैः स्वकैर्गतभयान्यः पापभीतान्रणे
तस्याहं चरणारविन्दयुगलं वन्दे परं पावनम् ॥ ७५
राजन्तं निजमण्डले मखमुखे ब्रह्मश्रिया पूजितं
दिव्येनापि स्वतेजसा करमयं यं चेन्द्रनीलोपमम् ।
देवानां हितकाम्यया सुतनुजं वैरोचनस्यार्पकं
दासत्वं मम दीयतां सुरपते वन्दे परं वामनम् ॥ ७६
तं दृष्टं रविमण्डले मुनिगणैः संप्राप्नवन्तं दिवं
चन्द्रार्कौ तु तपन्तमेव सहसा संप्राप्नवन्तौ सदा ।
तस्यैवापि सुचक्रिणः सुरगणाः प्रापुर्लयं सांप्रतं
काये विश्वविकोशके तमतुलं नौमि प्रभुं विक्रमम् ॥ ७७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थेऽष्टनवतितमोऽध्यायः ॥ ९८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—७९५७

---

अथ नवनवतितमोऽध्यायः ।

---

विष्णुरुवाच[1]—
स्तोत्रं पवित्रं परमं पुराणं पापापहं पुण्यमयं शिवं च ॥
धन्यं सुसूक्तं परमं सुजाप्यं निशम्य राजन्स सुखी बभूव ॥ १
गता सुतृष्णा क्षुधया समेता देवोपमो भूमिपतिर्बभूव ।
भार्या च राज्ञः सुभगा बभूव जातावुभौ पापविमुक्तदेहौ ॥ २
हरिस्तु देवः प्रभुराविरासीद्द्विजैः सुपुण्यैर्हरिभक्तियुक्तैः ।
आगत्य भूपं गतकल्मषं तं श्रीशङ्खचक्राब्जगदासिधर्ता ॥ ३
श्रीनारदो भार्गवव्यासमुख्याः समागतास्तत्र मृकण्डसूनुः ।
वाल्मीकिनामा मुनिर्विष्णुभक्तः समागतो ब्रह्मसुतो वसिष्ठः ॥ ४
गर्गो महात्मा हरिभक्तियुक्तो जाबालिरभ्यावथं काश्यपश्च ।
आजग्मुरेते हरिणा समेता विष्णुप्रिया भागवतां वरिष्ठाः ॥ ५
पुण्याः सुधन्या गतकल्मषास्ते हरेः सुपादाम्बुजभक्तिलीनाः ।
श्रीवासुदेवं परिवार्य तस्थुः[6] स्तुवन्ति भूपं विविधप्रकारैः ॥ ६

---

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. सूत उवाच । २ क. ख. ङ. च छ. झ. ड. ढ. राजा स । ३ घ. ट. ठ. ड. भूतप° । ४ क. ख. च. ड. च तस्यापि सुभाति रूपैर्जाता° । ङ. छ. झ. ढ. च तस्यापि विभाति रूपैर्जाता° । घ. ट. ठ. च तस्य सुभगा च रूपैर्जाता° । ५ ङ. छ. झ. ड. ढ. °थ कश्य° । ६ क. ख. च. झ. °पं परिवार्य तस्थुः । दे° । छ. °पं परिवार्य ते तु । दे° ।

देवाश्च सर्वे हुतभुङ्मुखाश्च ब्रह्मा हरश्चापि[1] स देवदेवः ।
गायन्ति दिव्यं मधुरं मनोहरं गन्धर्वराजादिसुगायनाश्च ॥ ७
[4]सुदेवयुक्तैः परमार्थसंमितैः स्तवैः सुपुण्यैर्मुनयः स्तुवन्ति ।
उच्चैस्तरां भूपतिमेव देवता हरिर्बभाषे वचनं मनोहरम् ॥ ८
वरं यथेष्टं वरयस्व भूपते ददाम्यहं ते परितोषितो यतः ।
हरेस्तु वाक्यं स निशम्य राजा दृष्ट्वा मुरारिं वदमानमग्रे ॥ ९
नीलोत्पलाभं [5]मुरघातिनं प्रभुं शङ्खाब्जचक्रासिगदाप्रधारिणम् ।
श्रिया समेतं परमेश्वरं तं रत्नोज्ज्वलं कङ्कणहारभूषितम् ॥ १०
[*रविप्रभं देवगणैः सुसेवितं महार्हहाराभरणैः सुभूषितम् ] ।
सुदिव्यगन्धैर्वरलेपनैर्हरिं सुभक्तिभावैरवनीं गतो नृपः ॥ ११
दण्डप्रणामैः सततं ननाम जयेत्युवाचाथ महामुदं गतः ।
दासोऽस्मि भृत्योऽस्मि सुरेश ते सदा भक्तिं न जाने तव भावमुत्तमम् ॥ १२
[6]जायान्वितं मामिह चाऽऽगतं हरे प्रपाहि वै त्वां शरणं प्रपन्नम् ।
धन्यास्तु ते माधव मानवा द्विजाः सदैव ये ध्यानमनोविलीनाः ॥ १३
समुच्चरन्तो[7] भव केशवेति प्रयान्ति वैकुण्ठमितः सुनिर्मलाः ॥
तवैव पादाम्बुजमार्जनं[8] पयः पुण्यं तथा ये शिरसा वहन्ति ॥
समस्ततीर्थोद्भवतोयसंप्लुतास्ते मानवा यान्ति हरेश्च धाम ॥ १४
नास्ति [9]योगो न मे भक्तिर्नास्ति ज्ञानं न मे क्रिया। कस्य पुण्यस्य सङ्गेन वरं पापे प्रयच्छसि १५

हरिरुवाच—

वासुदेवाभिधानं यन्महापातकनाशनम् । भवता विज्वलात्पुण्याच्छ्रुतं राजन्विकल्मषम् ॥ १६
तेन त्वं[10] मुक्तिभागी च संजातो नात्र संशयः। मम लोके प्रभुङ्क्ष्व त्वं दिव्यान्भोगान्मनोनुगान्

सुबाहुरुवाच—

यदि देव वरो देयो मह्यं दीनाय वै त्वया । विज्वलाय प्रयच्छ त्वं प्रथमं वरमुत्तमम् ॥ १८

हरिरुवाच—

विज्वलस्य पिता पुण्यः कुञ्जलो ज्ञानपण्डितः । वासुदेवमहास्तोत्रं नित्यं जपति भूपते ॥ १९
पुत्रैश्च प्रियया चैव समेतो मां प्रपत्स्यति । यश्चैवं जपति स्तोत्रं तस्य दास्ये महत्फलम् ॥ २०
एवमुक्ते शुभे वाक्ये राजा केशवमब्रवीत् । इदं स्तोत्रं महापुण्यं सफलं कुरु केशव ॥ २१

वासुदेव उवाच—

[11]सत्ये युगे महाराज यदा स्तोष्यति मानवः । तदा मोक्षं प्रदास्यामि तत्क्षणान्नात्र संशयः ॥ २२
त्रेतायां मासमात्रेण [12]मासषट्केन द्वापरे । वर्षैकेण कलौ प्राप्ते ये जपन्ति च मानवाः ॥ २३

* एतच्चिह्नान्तर्गतः पाठो ङ. झ. ढ. ढ. पुस्तकस्थः ।

१ ढ. हरिश्चापि । २ क. ख. ङ. च. छ. झ. ढ. °पि सुदिव्यदेव्यः । गा° । ३ क. ख. ङ. च. छ. झ. ढ. ढ. गीतं । ४ क. ख. च. झ. सुवेगयु° । ५ ढ. गुरुरूपिणं । ६ क. ख. ङ. च. छ. झ. ढ. पापान्वितं । ७ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. ढ. °रन्माधव । ८ क. ख. ङ. च. छ. ढ. ढ. °मार्गनिर्गतं पयः पुनीतं शि° । ९ ढ. भावो । ढ. पुण्यं । १० ङ. ढ. त्वं भक्तियुक्तोऽसि सं° । ११ ढ. छ. ढ. कृते । क. ख. च. झ. ढ. प्राप्ते काले । १२ ठ. ढ. द्विमासेनैव ।

स्वर्गं यास्यन्ति राजेन्द्र वैष्णवं गतिदायकम् । त्रिकालमेककालं वा स्नातो जपति ब्राह्मणः॥२४
यं यं तु वाञ्छते कामं स स तस्य भविष्यति । क्षत्रियो जयमाप्नोति धनधान्यैरलंकृतः ॥ २५
वैश्यो भविष्यति श्रीमाञ्शूद्रः सुखमवाप्नुयात् । अथ यः श्रावयेत्स्तोत्रं पापान्मुक्तो भविष्यति ॥
श्रावको नरकं घोरं कदाचिन्नैव पश्यति । मम स्तोत्रप्रसादाच्च सर्वसिद्धो भविष्यति ॥ २७
भुञ्जानेषु च विप्रेषु श्राद्धकाले तु यः पठेत् । पितरो वैष्णवं लोकं तृप्ता यास्यन्ति भूपते ॥ २८
तर्पणान्ते जपं कुर्याद्ब्राह्मणो वाऽपि क्षत्रियः । पिबन्ति चामृतं तस्य पितरो हृष्टमानसाः ॥ २९
होमे च यज्ञमध्ये च भावाज्जपति मानवः । तत्र विघ्ना न जायन्ते सर्वसिद्धिर्भविष्यति ॥ ३०
विषमे दुर्गसंस्थाने सिंहव्याघ्रभयेषु च । चौराणां संकटे प्राप्ते तत्र स्तोत्रमुदीरयेत् ॥ ३१
तत्राभयं महाराज स्तोत्रपाठाद्भविष्यति । अशेषेष्वेव दुर्गेषु राजद्वारे गते नरे ॥ ३२
वासुदेवाभिधानस्य अयुतं जपते नरः । ब्रह्मचर्येण च स्नातः क्रोधलोभविवर्जितः[३] ॥ ३३
द्विलक्षं बिल्वकैर्होमं घृतगुग्गुलसंयुतम् । वासुदेवं प्रपूज्यैव कुर्यात्प्रयतमानसः ॥ ३४
स्तोत्रं[४] प्रति ततो देयो होमो ध्यानेन मानवैः । तेषां सुभृत्यवर्तित्वं पार्श्वं नैव त्यजाम्यहम् ॥३५
कलौ युगेऽपि संप्राप्ते स्तोत्रे दास्यं प्रयास्यति । वेदभङ्गप्रसङ्गेन यस्य कस्य न दीयते ॥ ३६
सर्वकामसमृद्धार्थः सर्वदैव भविष्यति । एवं हि सफलं स्तोत्रं मया भूप कृतं शृणु ॥ ३७
ब्रह्मणा निर्मितं स्तोत्रं जप्तं रुद्रेण वै पुरा । ब्रह्महत्याविनिर्मुक्त इन्द्रो मुक्तश्च किल्बिषात् ॥ ३८
देवाश्च ऋषयः सर्वे सिद्धविद्याधरोरगाः । जपित्वा स्तोत्रमेतत्तु सिद्धिमापुर्यथेप्सिताम् ॥ ३९
पुण्यो धन्यः स वै दाता पुत्रवान्हि भविष्यति । मम स्तोत्रं पठेद्यस्तु नात्र कार्या विचारणा॥४०
आगच्छ त्वं स्त्रिया सार्धं मम स्थानं नृपोत्तम । हस्तावलम्बनं दत्तं हरिणा तस्य भूपतेः ॥ ४१
नेदुर्दुन्दुभयस्तत्र गन्धर्वा ललितं जगुः । ननृतुश्चाप्सरःश्रेष्ठाः पुष्पवृष्टिं प्रचक्रिरे ॥ ४२
देवाश्च ऋषयः सर्वे वेदस्तोत्रैः स्तुवन्ति ते । ततो दयितया सार्धं जगाम नृपतिर्हरिम् ॥ ४३

तं स्तूयमानं सुरसिद्धसंघैः स विज्वलः पश्यति हृष्टमानसः ॥
समागतस्तिष्ठति यत्र वै पिता माता च वेगेन महाप्रभावः ॥ ४४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे नवनवतितमोऽध्यायः ॥ ९९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८००१

---

अथ शततमोऽध्यायः ।

---

विष्णुरुवाच—

नर्मदायास्तटे रम्ये वटे तिष्ठति वै पिता । विज्वलोऽपि समायातः पितरं प्रणिपत्य सः ॥ १
वासुदेवाभिधानस्य स्तोत्रस्यापि महामतिः । समाचष्टे स धर्मात्मा महिमानं पितुः पुरः ॥ २
यथा विष्णुः समागत्य ददौ तस्मै वरं शुभम् । तत्सर्वं कथयामास सुप्रसन्नेन चेतसा ॥ ३
कुञ्जलोऽपि च वृत्तान्तं समाकर्ण्य च भूपतेः । हर्षेण महताऽऽविष्टः पुत्रमालिङ्ग्य विज्वलम् ॥४
आह पुण्यं कृतं वत्स त्वया राज्ञि महात्मनि । उपकारं महत्पुण्यं वासुदेवस्य कीर्तनात् ॥ ५

---

१ ढ. अन्त्यजः शृणुयात्स्तो° । २ ढ. वैरिणां । ३ क. ख. ङ. च. छ. झ. ढ. °तः । तिलतण्डुलकैर्होमं दशांशमाज्य-मिश्रितम् । ठ. ढ. °तः । तिलतण्डुलकैर्होमं गुडगुग्गुलसंयुतम् । ४ क. ख. ङ. च. छ. झ. ट. ढ. श्लोकं ।

अथैवं स प्रशस्यापि आशीर्भिरभिनन्द्य च । स्थितस्तस्मिन्वटे रम्ये च्यवनस्योप पश्यतः ॥ ६
एतत्ते सर्वमाख्यातं तेषां वृत्तं महात्मनाम् । वैष्णवानां महाराज अन्यत्किं ते वदाम्यहम् ॥ ७

वेन उवाच—

अमृतं शङ्खपात्रेण पानार्थं मम चार्पितम् । [*तस्मात्कस्य न च श्रद्धा पातुं मर्त्यस्य भूतले ] ॥
उत्तमं वैष्णवं ज्ञानं[३] पानानामिह सर्वदा ॥ ८
त्वयैवं कथ्यमानस्य पाने तृप्तिर्न जायते । श्रोतुं हि देवदेवेश मम श्रद्धा विवर्धते ॥ ९
कथयस्व प्रसादेन कुञ्जलस्यापि चेष्टितम् । महात्मना किमुक्तं तु चतुर्थतनयं प्रति ॥
तन्मे सुविस्तरादेवं कथयस्व महामते ॥ १०

विष्णुरुवाच—

श्रूयतामभिधास्यामि चरितं कुञ्जलस्य च । बहुश्रेयःसमायुक्तं चरितं च्यवनस्य च ॥ ११
इदं पुण्यं नरश्रेष्ठ ह्याख्यानं पापनाशनम् । यः शृणोति नरो भक्त्या गोसहस्रफलं लभेत् ॥ १२

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे शततमोऽध्यायः ॥ १०० ॥

आदितः श्लोकानां समष्ट्यङ्काः—७३२२

---

अथैकाधिकशततमोऽध्यायः ।

---

सूत उवाच—

देवदेवो हृषीकेशस्त्वङ्गपुत्रं नृपोत्तमम् । समाचष्टे समाश्रेयमाख्यानं पापनाशनम् ॥ १
श्रूयतामभिधास्यामि चरित्रं श्रेयदायकम् । द्विजस्यापि च वृत्तान्तं कुञ्जलस्य महात्मनः ॥ २

विष्णुरुवाच—

कुञ्जलश्चापि धर्मात्मा चतुर्थं पुत्रमेव च । समाहूय मुदा युक्त उवाचैनं कपिञ्जलम् ॥ ३
किं तु पुत्र त्वया दृष्टं श्रुतं वाऽपूर्वकं च यत् । भोजनार्थं मयासि त्वमितः कुत्र सुतोत्तमः ॥
तदाचक्ष्व महाभाग यद्धि दृष्टं सुपुण्यदम् ॥ ४

कपिञ्जल उवाच—

यच्च तात मया दृष्टमपूर्वं तद्वदाम्यहम् । [†यच्च दृष्टं श्रुतं केन कस्माच्चैव श्रुतं मया
तदिहैव प्रवक्ष्यामि श्रूयतामधुना पितः ॥ ] ५
शृण्वन्तु भ्रातरः सर्वे मातस्त्वं शृणु सांप्रतम् । कैलासः पर्वतश्रेष्ठो धवलश्चन्द्रसंनिभः ॥ ६
नानाधातुसमाकीर्णो नानावृक्षोपशोभितः । गङ्गाजलैः शुभैः पुण्यैः क्षालितः सर्वतोऽपि च ॥ ७
नदीनां तु सहस्राणि ख्यातानि विविधानि च । यस्मात्तात प्रसूतानि जलानि शुभदानि च ॥ ८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. च. छ. झ. ट. ठ. ड. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. च । पुत्रं देवसमोपेतं स्तुत्वा चैव पुनः पुनः । ए° । २ क. ख. च. °नार्थममृतं श्रृणु । त° । घ. ट. ठ. °नार्थमानीतं दिवः । त° । ३ क. ख. घ. च. छ. झ. ट. ड. ढ. °नं वैष्णवैश्चरितं पुनः । त्व° । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °व कृपया कथयस्व मे । वि° । ५ घ. ट. ठ. ड. लोकाश्रयः । ६ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. दिव्यानि । ७ क. ख. च. छ. झ. विमलानि । घ. ङ. ट. ठ. ड. ढ. विविधानि ।

तडागानि सहस्राणि सोदकानि महान्ति च । महागिरौ सरस्यश्च हंससारससेविताः ॥ ९
तस्मिञ्शिखरिणां श्रेष्ठे पुण्यदाः पापनाशिकाः । विविधानि प्रशस्तानि पुष्पितानि वनानि च ॥ १०
नानावृक्षोपयुक्तानि हरितानि समन्ततः । किंनराणां गणैश्चैव अप्सरोभिः समाकुलः ॥ ११
गन्धर्वैश्चारणैः सिद्धैर्देववृन्दैः सुशोभितः । दिव्यवृक्षवनोपेतो गङ्गापातैः समाकुलः ॥ १२
[*दिव्यगन्धैः सुगन्धैश्च नानारत्नसमन्वितः] । स्फाटिकाभिः शिलाभिश्च सर्वतः समलंकृतः ॥ १३
सूर्यतेजोमयो राजंस्तेजोभिश्च समाकुलः । चन्दनैश्चारुगन्धैश्च बकुलैर्नीलपुष्पकैः ॥ १४
नानापुष्पमयैर्वृक्षैः सर्वत्र समलंकृतः । पक्षिणां सुनिनादैश्च दिव्यानां मधुरायते ॥ १५
षट्पदानां निनादैश्च वृक्षैर्वै मधुरायते । कोकिलानां तु गीर्भिश्च ध्वनितः सकलो गिरिः ॥
गणैः कोटिभिराकीर्णं तत्राऽऽस्ते शिवमन्दिरम् ॥ १६
स्वर्गाभिरमणं पुण्यं पुण्यदं सुशिलोच्चयम् । दिग्गजानां सुघोषैश्च शब्दितं च समन्ततः ॥ १७
नानामृगैः समाकीर्णं शाखामृगसमाकुलम् । मयूरकेकाघोषैश्च गुहासु च विनादितम् ॥ १८
कन्दरैर्लेपनैः कूटैः सानुभिश्च विराजितम् । नानाप्रस्रवणोपेतमौषधीभिर्विराजितम् ॥ १९
दिव्यं दिव्यगुणोपेतं पुण्यधामसमाकुलम् । सेवितं पुण्यलोकैश्च पुण्यराशिं महागिरिम् ॥ २०
पुलिन्दभिल्लकोलैश्च सेवितं पर्वतोत्तमम् । विकटैः शिखरैः कूटैरद्रिराजः प्रशोभते ॥ २१
अन्यैर्नानाविधैः पुष्पैः कौतुकैर्मङ्गलैः शुभैः । गङ्गोदकप्रपातैश्च महाशब्दं प्रशुश्रुवे ॥ २२
[+शंकरस्य गृहं तात कैलासं गतवानहम् । तत्राऽऽश्चर्यं मया दृष्टं यन्न दृष्टं कदा श्रुतम्] ॥ २३
श्रूयतामभिधास्यामि तात सर्वं मयोदितम् । शिखराद्गिरिराजस्य मेरोः पुण्यान्महोदयात् ॥ २४
हिमक्षीरसवर्णस्तु प्रवाहः पतते भुवि । गङ्गायाश्च महाभाग रंहसा भोगवर्जितः ॥ २५
कैलासस्य शिरः प्राप्य तत्र विस्तरतां गतः । दशयोजनविस्तीर्णस्तत्र गङ्गाह्रदो महान् ॥
महातोयेन पुण्येन विमलेन विराजते ॥ २६
सर्वतोभद्रतां प्राप्तो महाहंसैः प्रशोभते । [*नामोच्चारेण दिव्येन पुण्येन मधुरेण च ॥ २७
हंसास्तत्र प्रकूजन्ति तेन स्रोतो विराजते] । तस्यैवाग्रे शिलायां हि कन्या चैका महामते ॥ २८
आसीना मुक्तकेशा तु रूपद्रविणशालिनी । दिव्यरूपसुसंपन्ना सर्वलक्षणसंयुता ॥ २९
दिव्यालंकारसंभूषा सा च तत्र विराजते । न जाने गिरिराजस्य तनया वा महोदधेः ॥ ३०
नो वाऽस्ति ब्रह्मणः पत्नी नो वा स्वाहा भविष्यति । इन्द्राणी वा महाभागा रोहिणी वा भविष्यति ॥
ईदृशी न यमस्यापि युवती परिदृश्यते । अन्यासां च सुदिव्यानां नारीणां तात सर्वथा ॥ ३२
यादृशं शीलसद्भावं गुणरूपं तु दृश्यते । अप्सरसां कदा नास्ति तादृशं रूपलक्षणम् ॥ ३३
यादृशं तु मया दृष्टं तदङ्गे विश्वमोहनम् । शिलापदे समासीना दुःखेनापि समाकुला ॥ ३४

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठो घ. ङ. छ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो घ. ङ. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. सपद्मानि । २ क. ख. घ. ङ. च. छ. झ. ट. ढ. ड. महागिरौ । ३ घ. ट. ठ. ड. °काः । वनानि विविधान्येव पु° । ४ घ. ङ. छ. झ. ट. ठ. ड. ढ. °नि शुभानि च । किं° । ५ क. ख. ङ. च. छ. झ. ढ. दिव्यभागैः । ड. दिव्यभोगैः । ६ क. ख. ङ. च. ड. ढ. सवनो । ७ ङ. ड. ढ. °म् । अंशुभिर्धवलं पुण्यं पुण्यराशिशि° । ८ ङ. छ. ढ. °म् । सिंहैश्च गर्जमानैश्च शरभैः कुञ्जरैस्ततः । ९ ट. ड. प्रव्रजन्ति । १० ङ. छ. झ. ड. तस्यतीरे शि° । ११ घ. ट. ड. °मा सुवर्णा सर्वलक्षणा । दि° । १२ छ. ड. सगुणा सर्वलक्षणा । दि° । ङ. ढ. सगुणा दिव्यलक्षणा । दि° । १३ क. ख. च. °शी रूपसंपत्तिर्युवतीनां न इ° ।

रुदते सुस्वरैर्बाला अनेकैः स्वजनैर्विना । अश्रूणि पतमानानि मुक्ताभानि बहूनि च ॥ ३५
निर्मलानि पतन्त्यत्र स्रोतस्येव महामते । बिन्दवो मौक्तिकाभास्ते पतिता हि महोदके ॥ ३६
तेभ्यो भवन्ति पद्मानि हृद्यानि सुरभीणि च । पद्मानि जज्ञिरे तेभ्यो नेत्राश्रुभ्यो महामते ॥ ३७
गङ्गाम्भसि तरन्त्येव असंख्यातानि तानि तु [*पतितानि सुहृद्यानि रंहसा यान्ति तानि तु] ॥
गङ्गाप्रवाहमध्ये तु हंसवृन्दैः समं पितः । [+भागीरथ्याः प्रवाहस्तु तस्माच्चैव विनिर्गतः ॥ ३९
कैलासशिखरं प्राप्य रत्नाख्यं चारुकन्दरम् । वर्तते तोयपूर्णस्तु योजनद्वयविस्तृतः ॥ ४०
हंसवृन्दसमाकीर्णो जलपक्षिसमाकुलः । नानावर्णविशेषाणि सन्ति पद्मानि तत्र च ॥ ४१
प्रवाहे निर्मले तात मुनिवृन्दनिषेविते ।] अश्रुभ्यो यानि जातानि प्रभाते कमलानि च ॥ ४२
गङ्गोदकप्लुतान्येव सौरभ्याणि महान्ति च । प्रभवन्ति प्रवाहे तु निर्मले जलपूरिते ॥
[*जलमध्ये सुहंसैश्च जलपक्षिनिनादिते] ॥ ४३

सूत उवाच—

रत्नाढ्ये तु गिरौ त[३]स्मिन्रत्नेश्वरमहेश्वरः । देवदैत्यैः सुपूज्योऽपि तिष्ठत्येव तु सर्वदा ॥ ४४
तत्र दृष्टो मया तात कश्चित्पुण्यमयो मुनिः । जटाभारसमाक्रान्तो [४]निर्वासा दण्डधारकः ॥ ४५
निराधारो निराहारस्तपसाऽतीव दुर्बलः । कृशाङ्गोऽप्यस्थिसंघातस्त्वङ्मात्रेणैव चेष्टितः ॥ ४६
भस्मनाऽऽकुलितान्येव तस्याङ्गानि महात्मनः । शुष्कपत्राणि भक्षेत शीर्णानि पतितानि च ॥४७
[+शिवभक्तः समासीनो दुःखाधारो महातपाः । अश्रुभ्यो यानि जातानि पद्मानि सुहृद्यानि च] ४८
गङ्गातोयात्समानीय देवदेवं प्रपूजयेत् । रत्नेश्वरं महाभागो नृत्यगीतविशारदः ॥ ४९
गायते नृत्यते तस्य द्वारस्थस्त्रिपुरद्विषः । तत्राऽऽगत्य स धर्मात्मा रोदते सुस्वरैरपि ॥ ५०
एवं दृष्टं मया तात अपूर्वं वदतां वर । कथयस्व प्रसादान्मे यदि त्वं वेत्सि कारणम् ॥ ५१
सा का नारी महाभाग कस्मात्तत्र प्ररोदिति । कस्मात्सदैव पुरुषो देवमर्चेन्महेश्वरम् ॥ ५२
तन्मे त्वं विस्तराद्ब्रूहि सर्वसंदेहकारणम् । एवमुक्तो महाप्राज्ञः कुञ्जलोऽपि सुतेन हि ॥ ५३
कपिञ्जलेन प्रोवाच विस्तराच्छृण्वतो मुने ॥ ५४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८०६६

---

अथ द्व्यधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—

सर्वं वत्स प्रवक्ष्यामि यत्त्वयोक्तं ममाधुना । [५]भवयोर्वेदनं यत्तु यस्मा[६]ज्जातं द्विजोत्तम ॥ १
एकदा तु महादेवी पार्वती [७]पर्वतोत्तमे । क्रीडमाना महात्मानमीश्वरं वाक्यमब्रवीत् ॥ २

---

* एतच्चिह्नान्तर्गतः पाठः क ख. घ. ङ.च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ अ. प्रवाहे । २ क. घ. ङ. च. छ. झ. ट. ड. ढ. ढ. रत्नाख्ये । ३ छ. °स्मिन्वसते च म° । ४ क. ख. ङ. च. छ. झ. ड. ढ. निराशो । ५ अ. °योस्तेजसा सा तु य° । ६ अ. °ज्जाता द्वि° । ७ क. ख. ङ. च. छ. झ. ड. ढ. प्रमदोत्तमा ।

ममोरसि महादेव महदेतत्सुदोहदम् । दर्शयस्व ममाग्रे त्वं काननं काननोत्तमम् ॥ ३
महादेव उवाच—
एवमस्तु महादेवि नन्दनं देवसंकुलम् । दर्शयिष्यामि ते पुण्यं द्विजसिद्धनिषेवितम् ॥ ४
एवमाभाष्य तां देवीं तया सह गणैस्ततः । जग्मतुर्वत्स तौ देवौ नन्दनं नवमेव तु ॥ ५
सर्वाङ्गसुन्दरं पुष्पमाल्याद्याभरणैर्युतम् । घण्टामालाभिसंयुक्तं किङ्किणीजालमालिनम् ॥ ६
वसनैः पद्मपुष्पैस्तु मुक्तामाल्यसुशोभितम् । हंसचन्द्रप्रतीकाशं वृषभं चारुलक्षणम् ॥ ७
समारूढो महादेवो गणकोटिसमावृतः । नन्दिभृङ्गिमहाकालस्कन्दचण्डमनोहराः ॥ ८
वीरभद्रो गणेशश्च पुष्पदन्तो जनेश्वरः । सुबलोऽतिबलो नाम मेघनादो घटावहः ॥ ९
घण्टाकर्णश्च कालिन्दः पुलिन्दो वीरबाहुकः । केशारिः किंकरो नाम चन्द्रहासः प्रजापतिः॥१०
एते चान्ये च बहवः सनकाद्यास्तपोधनाः । गणैश्च कोटिसंख्यातैः स शिवः परिवारितः ॥ ११
नन्दनं वनमेवापि सेवितं देवकिंनरैः । प्रविवेश महादेवो गणैर्देव्या च सेवितः ॥ १२
दर्शयामास देवेशो गिरिजायै सुशोभितम् । नानापादपसंछन्नं फलपुष्पसमाकुलम् ॥ १३
[*दिव्यरम्भासमाकीर्णं पुष्पवद्भिश्च चम्पकैः । मल्लिकाभिः सुपुष्पाभिर्मालतीजालसंकुलम्]१४
नित्यपुष्पितशाखाभिः पादपैः शोभितं वनम् । राजमानं महावृक्षैश्चन्दनैश्चारुगन्धिभिः ॥ १५
देवदारुवनैर्जुष्टं लवङ्गैश्च समाकुलम् । [+सरलैर्नारिकेलैश्च तद्वत्पूगीफलद्रुमैः ॥ १६
खर्जूरपनसैर्दिव्यैः फलभारावनामितैः । परिमलोद्गारसंयुक्तैर्गुरुवृक्षसमाकुलम् ॥ ]
अग्नितेजःसमाभासैः सप्तपर्णैः सुपुष्पितैः ॥ १७
राजवृक्षैः कदम्बैश्च पुष्पशोभासमन्वितम् । जम्बुनिम्बमहावृक्षैर्मातुलिङ्गसमाकुलम् ॥ १८
नारङ्गैः सिन्दुवारैश्च पिप्पलैः शालतिन्दुकैः ।[+उदुम्बरैः कपित्थैश्च जम्बुपादपशोभितम् ॥ १९
लकुचैः पुष्पसौगन्धैः स्फुटनागैः समाकुलम्] । चूतैश्च फलराजाद्यैर्नीलैश्चैव घनोपमैः ॥ २०
शोभितं नन्दनं पुण्यं शिवेन परिदर्शितम् । शोभितं च द्रुमैश्चान्यैः सर्वैर्नीलवनोपमैः ॥ २१
सर्वकामफलोपेतैः कल्याणफलदायकैः । कल्पद्रुमैर्महापुण्यैः शोभितं नन्दनं वनम् ॥ २२
नानापक्षिनिनादैश्च संकुलं मधुरस्वनैः । कोकिलानां रुतैः पुण्यैरुद्घुष्टं मधुकारिभिः ॥ २३
मकरन्दविलीनाभिर्भ्रमरीभिर्विराजितम् । नानावृक्षैः समाकीर्णं नानामृगगणाकुलम् ॥ २४
वृक्षेभ्यः पतितैः पुष्पैः सुगन्धैः पतितैर्भुवि । सा च भू राजते पुत्र पूजितेव सुगन्धिभिः ॥ २५
तत्र वाप्यो महापुण्याः पद्मसौगन्धनिर्मलाः । तोयैस्ताः क्षुभिताः पुत्र हंसकारण्डवोषिताः॥ २६
तडागैः सागरप्रख्यैस्तोयसौगन्ध्यपूजितैः । नन्दनं भाति सर्वत्र गणैरप्सरसां महत् ॥ २७
विमानैः कलशैः शुभ्रैर्हेमदण्डैः सुशोभनैः । नन्दनं वनराजस्तु प्रासादैश्च सुशोभितः ॥ २८
यत्र तत्र प्रभात्येव किंनराणां महागणैः । [*गन्धर्वैरप्सरोभिश्च सुरूपाभिर्द्विजोत्तम ॥ ] २९

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. घ. झ. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. च. छ. झ. ड. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ पुस्तकस्थः ।

१ घ. महोदय म° । २ ङ. °म् । वेणुमा । ३ छ. झ. °म् । भ्रमरैः पुष्पवल्लैश्च मु° । ४ ङ. घटेश्वरः । ५ घ. ठ. ङ. पाटलानां वनोत्तमम् । ६ ङ. ढ. बकुलैः । ७ ख. ङ. च. छ. झ. ढ. °नागैः स° । ८ क. ख. ङ. च °म् । नीलैः शालवनैर्दिव्यैस्तालानां तु वनैस्ततः । छ. झ. ड. °म् । तमालैस्तु विशालैस्तैः शोभितं तपनोपमैः । ९ ङ. छ. झ. ढ. कल्पनाद्रुपदा° । १० क. ख. घ. ङ. च. छ. झ. ट. ठ.ड. ढ° ण्यैर्मधुरैर्मधु° । ११ ङ नद्यो । १२ क.ख.ङ.च.छ.झ.ढ. सुधान्वितैः ।

देवतानां विनोदैश्च मुनिवृन्दैः सुयोगिभिः । सर्वत्र शोभते पुण्यं स्थानं तु नन्दनस्य च ॥ ३०
एवं समालोक्य महानुभावो भवश्च देव्या सहितो महात्मा ॥
श्रीनन्दनं पुण्यवतां निवासं सुखाकरं शान्तिगुणोपपन्नम् ॥ ३१
आदित्यतेजःसमतेजसां गणैः प्रभाति वै रश्मिभिर्जातरूपैः ।
पुष्पैः फलैः कामगुणोपपन्नैः कल्पद्रुमो नन्दनकाननेऽपि ॥ ३२
एवंविधं पादपराजमेव समीक्ष्य देवी च शिवं बभाषे ।
अस्याभिधानं कथयस्व नाथ सर्वस्य पुण्यस्य नगस्य पुण्यम् ॥ ३३

शिव उवाच—

अस्य प्रतिष्ठा महती शुभाख्या देवेषु मुख्यो मधुसूदनश्च ।
नदीषु मुख्या सुरनिम्नगाऽपि विसृष्टिकर्ता च यथैव धाता ॥ ३४
सुखावहानां तु यथैव चन्द्रो भूतेषु मुख्या च यथैव पृथ्वी ।
नगेन्द्रराजो हि यथा नगानां जलाशयेष्वेव यथा समुद्रः ॥ ३५
महौषधीनामिव देवि चान्नं महीधराणां हिमवान्यथैव ।
विद्यासु मध्ये च यथाऽऽत्मविद्या लोकेषु सर्वेषु यथा नरेन्द्रः ॥ ३६
तथैव मुख्यस्तरुराज एष सर्वातिथिः सर्वपतेः श्रियोपमः ।

पार्वत्युवाच—

गुणांश्च शंभो मम कीर्तयस्व वृक्षाधिपस्यापि शुभान्सुपुण्यान् ॥ ३७
आकर्ण्य देवो वचनं बभाषे देव्यास्तु सर्वं सुतरोर्हितस्य ।
यं यं तु कल्पयन्ति सुपुण्ययुक्ता देवोपमा देववराश्च देवि ॥ ३८
तं तं हि वृक्षः प्रददाति तेभ्यः फलाद्रसानां स च वृक्ष एकः ।
तस्माच्च सर्वे प्रभवन्ति पुण्या दुष्प्राप्यमत्रैव तपोधिकास्ते ॥ ३९
जीवाधिकं रत्नमयं सुदिव्यं देवास्तु भुञ्जन्ति महाप्रधानाः ।
शुश्राव देवी वचनं शिवस्य आश्चर्यभूतं मनसा विचिन्त्य ॥ ४०
तस्यानुमत्या परिकल्पितं च स्त्रीभावरूपं सुगुणं सुरूपम् ।
सर्वाङ्गरूपं सुगुणं सुरूपं तस्मात्तदा सा गिरिजा प्रलेभे ॥ ४१
विश्वस्य मोहाय यथोपविष्टा[१] सहायरूपा मकरध्वजस्य ।
क्रीडानिधानं सुखसिद्धिरूपं सर्वाभिपन्ना कमलायताक्षी ॥ ४२
पद्मानना पद्मकरा सुपद्मा चामीकरस्यापि यथा सुमूर्तिः ।
प्रभासु तद्वद्विमला सुतेजा लीलासुतेजाश्च सुकुञ्चितास्ते ॥ ४३
प्रलम्बकेशाः परिसूक्ष्मबद्धाः पुष्पैः सुगन्धैः परिलेपिताश्च ।
प्रवद्धकुन्ता दृढकेशबन्धैर्विभाति सा रूपवरेण बाला ॥ ४४
सीमन्तमार्गे च मुक्ताफलानां माला विभात्येव यथा तरूणाम्[२] ।
सीमन्तमूले तिलकं सुदेव्या यथोदितो दैत्यगुरुः सुतेजाः ॥ ४५

---

१ क. ख. च. ङ. °पदिष्टा । १ म. यथा श्रीः । प° ।

भाले सुपद्मे मृगनाभिपद्मसमुत्थतेजःप्रकरैर्विभाति ॥
सीमन्तमूले तिलकस्य तेजः प्रकाशयेद्रूपश्रियं सुलोके ॥ ४६
केशेषु मुक्ताफलके च भाले तस्याः सुशोभां विकरोति नित्यम् ।
यथा तु चन्द्रः परितो विभाति सुरम्यचेष्टेव विभाति तद्वत् ॥ ४७
संपूर्णचन्द्रोऽपि यथा विभाति ज्योत्स्नानिपातेन हिमांशुतेजः ।
तस्यास्तु वक्त्रं परिभाति तद्वच्छोभाकरं विश्वविशारदं च ॥ ४८
हिमांशुरेवापि कलङ्कयुक्तः संक्षीयते नित्यकलाविहीनः ।
संपूर्णमस्त्येव सदैव हृष्टं तस्यास्तु वक्त्रं परिनिष्कलङ्कम् ॥ ४९
गन्धं विकाशं कमले स्वकीयं ततः समालोक्य सुखं न लेभे ।
पद्मानना सर्वगुणोपपन्ना मदीयभावैः परिनिर्मितेयम् ॥ ५०
गन्धं स्वकीयं तु विपश्य पद्मं तस्या मुखाद्वाति जगत्समीरः ।
लज्जाभियुक्तं सहसा बभूव जलं समाश्रित्य सदैव तिष्ठति ॥ ५१
*कतिमातिनियतबुद्ध्या सुधियो वदन्ति समदननृपतेः कोशं समुद्रकलाभिः ।
सुवरदशनरत्नैर्हास्यलीलाभियुक्ता अरुणअधरबिम्बं शोभमानस्तु आस्यः ॥ ५२
शुद्धा सुनासिका तस्याः सुकर्णौ रत्नभूषितौ । हेमकान्तिसमोपेतौ कपोलौ दीप्तिसंयुतौ ॥ ५३
रेखात्रयं प्रशोभेत ग्रीवायां परिसंस्थितम् । सौभाग्यसंपच्छृङ्गारैस्तिस्रो रेखा इहैव हि ॥ ५४
सुस्तनौ कठिनौ पीनौ वर्तुलौ बिल्वसंनिभौ । तस्याः कन्दर्पकलशावभिषेकाय कल्पितौ ॥
अंसावतीव शोभेते सुसमौ मानसान्वितौ ॥ ५५
सुभुजौ वर्तुलौ स्निग्धौ सुवर्णौ लक्षणान्वितौ । सुसमौ करपद्मौ तौ पद्मवर्णौ सुशीतलौ ॥ ५६
दिव्यलक्षणसंपन्नौ पद्मस्वस्तिकसंयुतौ । सरलाः पद्मसंयुक्ता अङ्गुल्यो नखसंयुताः ॥ ५७
नखानि मणिभासीनि जलबिन्दुनिभानि च । पद्मगर्भप्रतिच्छन्नो वर्णस्तदङ्गसंभवः ॥ ५८
पद्मगन्धा च सर्वाङ्गे पद्मेव भाति भामिनी । सर्वलक्षणसंपन्ना नगकन्या सुशोभिता ॥ ५९
रक्तोत्पलनिभौ पादौ सुशक्तौ चातिशोभनौ । रत्नज्योतिःसमाकारा नखाः पादाग्रसंभवाः ६०
यथोद्दिष्टं च शास्त्रेषु तथा चाङ्गे प्रदृश्यते । सर्वाभरणशोभाङ्गी हारकङ्कणनूपुरा ॥ ६१
मेखलाकटिसूत्रेण काञ्चीनादेन राजते । नीलेन पट्टवस्त्रेण परां शोभां गता तु सा ॥ ६२
कञ्चुकेनापि दिव्येन सुरक्तेन गुणान्विता । पार्वतीकल्पिताद्भावाद्गुणं प्राप्ता महोदयम् ॥ ६३
कल्पद्रुमान्मुदं लेभे शंकरं वाक्यमब्रवीत् । यथोक्तं तु त्वया देव तथा दृष्टं वनं मया ॥
यादृशं कथ्यते भावैस्तादृशं परिदृश्यते । ६४

सूत उवाच—

अथ सा चारुसर्वाङ्गी तयोः पार्श्वे समेत्य वै । पादाम्बुजं ननामाथ सा भक्त्या उभयोर्मुदा ॥ ६५
उवाच वचनं स्निग्धं हृद्यं हारि च सा तदा । कस्मादृष्टा त्वया मातः कथयस्वात्र कारणम् ॥ ६६

देव्युवाच—

वृक्षस्य कौतुकाद्भावान्मया वै प्रत्ययः कृतः । सद्यः प्राप्तं फलं भद्रे भवतीरूपसंपदा ॥ ६७

* सर्वपुस्तकेषु च्छन्दोभङ्गोऽर्थासंगतिश्च ।

१ क. ख. च. श्लक्ष्णौ । २ क. ख. ङ. छ. झ. सुश्लक्ष्णौ ।

अशोकसुन्दरीनाम्ना लोके ख्यातिं प्रयास्यसि । सर्वसौभाग्यसंपन्ना मम पुत्री न संशयः ॥ ६८
सोमवंशे तु विख्यातो यथा देवः पुरंदरः । नहुषो नाम राजेन्द्रस्तव नाथो भविष्यति ॥ ६९
एवं दत्त्वा वरं तस्यै जगाम गिरिजा गिरिम् । कैलासं शंकरेणापि मुदा सा परयाऽन्विता ॥७०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८१३६

---

अथ त्र्यधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—

अशोकसुन्दरी जाता सर्वयोषिद्वरा तदा । रेमे तु नन्दने पुण्ये सर्वकामगुणान्विते ॥ १
सुरूपाभिः सुकन्याभिर्देवानां चारुहासिनि । सर्वान्भोगान्प्रभुञ्जाना गीतनृत्यविचक्षणा ॥ २
विप्रचित्तिसुतो हुण्डो रौद्रस्तीव्रश्च सर्वदा । स्वेच्छाचारो महाकामी नन्दनं प्रविवेश ह ॥ ३
अशोकसुन्दरीं दृष्ट्वा सर्वालंकारशोभिताम् । तस्यास्तु दर्शनाद्दैत्यो विद्धः कामस्य मार्गणैः ॥ ४
तामुवाच महाकायः का त्वं कस्यासि सुन्दरि । कस्मात्त्वं कारणाच्चात्र ह्यागताऽसि वनोत्तमम् ॥५

अशोकसुन्दर्युवाच—

शिवस्यापि सुपुण्यस्य सुताऽहं शृणु सांप्रतम् । स्वसाऽहं कार्तिकेयस्य जननी गिरिजा मम ॥ ६
बालभावेन संप्राप्ता लीलया नन्दनं वनम् । भवान्को हि किमर्थं तु मामेवं परिपृच्छसि ॥ ७

हुण्ड उवाच—

विप्रचित्तेः सुतश्चाहं गुणलक्षणसंयुतः । हुण्डेति नाम्ना विख्यातो बलवीर्यसमन्वितः ॥
दैत्यानामप्यहं श्रेष्ठो मत्समो नास्ति राक्षसः ॥ ८
देवेषु मर्त्यलोकेषु तपसा यशसा कुलैः । अन्येषु नागलोकेषु धनभाग्यैर्वरानने ॥ ९
दर्शनात्ते विशालाक्षि हतः कन्दर्पमार्गणैः । शरणं तेऽप्यहं प्राप्तः प्रसादसुमुखी भव ॥
भवस्व वल्लभा भार्या मम प्राणसमा प्रिया ॥ १०

अशोकसुन्दर्युवाच—

श्रूयतामभिधास्यामि सर्वसंबन्धकारणम् । भवितव्या सुजातस्य लोके स्त्री पुरुषस्य हि ।
भवितव्यस्तथा भर्ता स्त्रिया यः सदृशो गुणैः ॥ ११
संसारे लोकमार्गोऽयं शृणु हुण्ड यथाविधि । अस्त्येव कारणं चात्र यथा ते न भवाम्यहम् ॥१२
सुभार्या दैत्यराजेन्द्र शृणुष्व यतमानसः । तरुराजादहं जाता यदा काले महामते ॥ १३
शंभोर्भावं सुसंगृह्य पार्वत्या कल्पिताऽस्म्यहम् । देवस्यानुमतो देव्या सृष्टो भर्ता ममैव हि ॥ १४
सोमवंशे महाप्राज्ञः स धर्मात्मा भविष्यति । जिष्णुर्जिष्णुसमो वीर्ये तेजसा पावकोपमः ॥ १५
सर्वज्ञः सत्यसंधश्च त्यागे वैश्रवणोपमः । यज्वा दानपतिः सोऽपि रूपेण मन्मथोपमः ॥ १६
नहुषो नाम धर्मात्मा गुणशीलमहानिधिः । देव्या देवेन मे दत्तः ख्यातो भर्ता भविष्यति॥१७

---

१ घ. ट. ठ. ड. वीक्षकः । २ क. ख. ङ. च. छ. झ. ढ. ढ. °ष्णुर्विष्णु° । ३ क. ख. ञ. छ. °मः । धर्मज्ञः सत्यवाग्धीरस्त्यागे । ङ. झ. ड. °मः । धर्मज्ञः सत्यवान्धीरस्त्यागे ।

यस्मात्सर्वगुणोपेतं पुत्रमाप्स्यामि सुन्दरम् । इन्द्रोपेन्द्रसमं लोके ययातिं जनवल्लभम् ॥ १८
लप्स्याम्यहं हितं वीरं यस्माच्छम्भोः प्रसादतः । [*अहं पतिव्रता वीर परभार्या विशेषतः। ]१९
अतस्त्वं सर्वदा हुण्ड त्यज भ्रान्तिमितो व्रज। प्रहस्यैवं वचो ब्रूते सोऽशोकसुन्दरीं प्रति २०

हुण्ड उवाच—

नैव युक्तं त्वया प्रोक्तं देव्या देवेन चैव हि । नहुषो नाम धर्मात्मा सोमवंशे भविष्यति ॥ २१
भवती वयसा ज्येष्ठा स कनिष्ठो न युज्यते+।कनिष्ठा स्त्री प्रशस्ता स्यात्पुरुषो न प्रशस्यते ॥ २२
कदा स पुरुषो भद्रे तव भर्ता भविष्यति । तारुण्यं यौवनं यावन्नाशमेव प्रयास्यति ॥ २३
यौवनस्य बलेनापि रूपवत्यः सदा स्त्रियः । पुरुषाणां वल्लभत्वं प्रयान्ति वरवर्णिनि ॥ २४
तारुण्यं हि महामूल्यं युवतीनां वरानने । तस्याऽऽधारेण भुञ्जन्ति भोगान्कामान्मनोनुगान् ॥२५
कदा सोऽभ्येष्यते भद्र आयुपुत्रः शृणुष्व मे । यौवनं वर्ततेऽद्यैव वृथा चैव भविष्यति ॥ २६
गर्भत्वं च शिशुत्वं च कौमारं च निशामय । कदा स यौवनोपेतस्तव योग्यो भविष्यति ॥ २७
यौवनस्य प्रलोभेन पिबस्व मधुमाधवीम् । मया सह विशालाक्षि रमस्व त्वं सुखेन वै ॥ २८
हुण्डस्य वचनं श्रुत्वा शिवस्य तनया पुनः । उवाच दानवेन्द्रं सा साधो तन्न भविष्यति ॥ २९
अष्टाविंशतिके प्राप्ते द्वापराख्ये युगे तदा । शेषावतारो धर्मात्मा वसुदेवसुतो बलः ॥ ३०
रैवतस्य सुतां भार्यां दिव्यां चैव करिष्यति। साऽपि जाता महाभागा कृताख्ये हि युगोत्तमे ॥ ३१
युगत्रयप्रमाणेन सा हि ज्येष्ठा बलादपि । बलस्यापि प्रिया जाता रेवती प्राणसंमिता ॥ ३२
भविष्यद्द्वापरे प्राप्ते इह सा तु भविष्यति । मायावती पुरा जाता गन्धर्वतनया वरा ॥ ३३
अपहृत्य निहत्यैव शंबरो दानवोत्तमः । तस्या भर्ता समाख्यातो माधवस्य सुतो बली ॥ ३४
प्रद्युम्नो नाम वीरेशो यादवेन्द्रस्य नन्दनः । तस्मिन्युगे भविष्ये च भाव्यं पृष्टं पुरातनैः ॥ ३५
व्यासादिभिर्महाभागैर्ज्ञानवद्भिर्महात्मभिः । एवं हि दृश्यते दैत्य वाक्यं देव्या तदोदितम् ॥ ३६
मां प्रत्युक्तं यथा धात्र्या पुत्र्या हिमवतस्तदा । त्वं तु लोभेन कामेन लुब्धो वदसि दुष्कृतम् ॥
किल्बिषेण समायुक्तं वेदशास्त्रविवर्जितम् । यद्यस्य दृष्टमेवास्ति शुभं वाऽप्यशुभं यथा ॥ ३८
पूर्वकर्मानुसारेण तद्भविष्यति तस्य च । [*देवानां ब्राह्मणानां च वदने यत्सुभाषितम् ॥ ३९
निःसरेद्यदि सत्यं तदन्यथा नैव जायते । मद्भाग्यादेवमाज्ञातं नहुषस्यापि तस्य च । ]
समायोगं विचार्यैव देव्या प्रोक्तं शिवेन च ॥ ४०
एवं ज्ञात्वा शमं गच्छ त्यज भ्रान्तिं मनःस्थिताम् । नैव शक्तो भवान्दैत्य मनो मे चालितुं ध्रुवम् ॥४१
पतिव्रतादृढं चित्तं कः प्रचालयितुं विभुः । महाशापेन योक्ष्यामि इतो गच्छ महासुर ॥ ४२
एवमाकर्ण्य तद्वाक्यं हुण्डो वै दानवो बली । मनसा चिन्तयामास कथं भार्या भवेदियम् ॥ ४३
विचिन्त्य हुण्डो मायावी अन्तर्धानं समागतः । मायया कन्यकारूपो बभूव मम नन्दन ॥ ४४
सा कन्याऽपि वरारोहा मायारूपाऽगमत्ततः। हास्यलीलासमायुक्ता यत्राऽऽस्ते भवनन्दिनी ॥४५

*एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । + एतदग्रे क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकेषु 'बलेन वयसा युक्तो नहुषस्तु न युज्यते'इत्यर्धमधिकम्। *एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ 'हं रणे धीरं २ ग. घ. च. छ. ज. झ. ञ. ट. ठ. ढ. महामूलं । ३ ङ. °म् । तस्मान्निष्क्रम्य वेगेन तस्मात्स्थानाद्विहाय ताम् ।अन्यस्मिन्दिवसे प्राप्ते मायां कृत्वा तमोमयीम् । दिव्यं मायामयं रूपं कृत्वा नार्यास्तु दानवः । हा° ।

उवाच वाक्यं स्निग्धेव अशोकसुन्दरीं प्रति । काऽसि कस्यासि सुभगे तिष्ठसि त्वं तपोवने॥ ४६
किमर्थं क्रियते बाले कामशोषणकं तपः । तन्ममाऽऽचक्ष्व सुभगे किं निमित्तं सुदुष्करम् ॥ ४७
तन्निशम्य शुभं वाक्यं दानवेनापि भाषितम् । मायारूपेण च्छन्नेन साभिलाषेण सत्वरम् ॥४८
आत्मसृष्टिसुवृत्तान्तं प्रवृत्तं तु यथा पुरा । तपसः कारणं सर्वं समाचष्टे सुदुःखिता ॥ ४९
उपप्लवं तु तस्यापि दानवस्य दुरात्मनः । मायारूपं न जानाति सौहृदात्कथितं तया ॥ ५०

हुण्ड उवाच—

साधुव्रताऽसि हे देवि सम्यग्व्रतपरायणा । साधुशीलसमाचारा सोवाचाशोकसुन्दरीम् ॥
अहं पतिव्रता भद्रे पतिव्रतपरायणा ॥ ५१
तपश्चरामि सुभगे भर्तुरर्थे महासती । मम भर्ता हतस्तेन हुण्डेनापि वरात्मना
तस्य नाशाय वै घोरं तपस्यामि महत्तपः ॥ ५२
एहि मे स्वाश्रमे पुण्ये गङ्गातीरे वसाम्यहम् । अन्यैर्मनोहरैर्वाक्यैरुक्ता प्रत्ययकारकैः ॥ ५३
हुण्डेन सखिभावेन मोहिता शिवनन्दिनी । समाकृष्टा सुवेगेन महामोहेन मोहिता ॥ ५४
नीता चाऽऽत्मगृहं दिव्यमनौपम्यं सुशोभनम् । मेरोः सुशिखरे पुत्र वैडूर्याख्यं पुरोत्तमम् ॥५५
स्वस्त्रीवर्गगणोपेतं काञ्चनाख्यं सदा शुभम् । तुङ्गप्रासादसंबाधैः कलशैर्दण्डचामरैः ॥ ५६
नानावृक्षसमोपेतैर्वनैर्नीलैर्घनोपमैः । वापीकूपतडागैश्च नदीभिस्तु जलाशयैः ॥ ५७
शोभमानं महारत्नैः प्राकारैर्हेमसंयुतैः । सर्वकामसमृद्धार्थैः पूर्णं दैत्यगृहैस्तथा ॥ ५८
ददृशे सा पुरं रम्यमशोकसुन्दरी तदा । कस्य देवस्य संस्थानं कथयस्व सखे मम ॥ ५९
सोवाच दानवेन्द्रस्य पूर्वं दृष्टस्य वै त्वया । हुण्डस्य स्थानमेतद्धि सोऽहं दानवपुंगवः ॥ ६०
मया त्वं तु समानीता मायया चात्र भामिनि ।[*तामाभाष्य गृहं नीता शातकौम्भं सुशोभनम्
नानावेश्मैः समाजुष्टं कैलासशिखरोपमम्] । निवेश्य सुन्दरीं तत्र दोलायां कामपीडितः ॥ ६२
पुनः स्वरूपी दैत्येन्द्रः कामबाणप्रपीडितः । करसंपुटमाबध्य उवाच वचनं तदा ॥ ६३
यं यं त्वं वाञ्छसे भद्रे तं तं दद्मि न संशयः । भज मां त्वं विशालाक्षि भजन्तं कामपीडितम् ॥

अशोकसुन्दर्युवाच—

नैव चालयितुं शक्या भवता दानवेश्वर । मनसाऽपि न वै धार्या मम मोहं समागतम् ॥(?)६५
भवादृशैर्महापापैर्देवैर्वा दानवाधम । दुष्प्राप्याऽहं न संदेह[३] एवं प्राह पुनः पुनः ॥ ६६
स्कन्दानुजा सा तपसाऽभियुक्ता जाज्वल्यमाना महता रुषा च ।
संहर्तुकामा परिदानवं तं कालस्य जिह्वेव यथा स्फुरन्ती ॥ ६७
सा प्रोवाच पुनर्देवी तमेवं दानवाधमम् । उग्रं कर्म कृतं पाप आत्मनाशनहेतवे ॥ ६८
आत्मनाशाय नाशाय स्वजनस्यास्य वै त्वया । स्वगृहं प्रापिता दीप्ता सुशिखा कृष्णवर्त्मनः ६९
यथाऽशुभः कूटपक्षी सर्वशोकैः समुद्भतः । गृहं स प्रविशेद्यस्य तस्य नाशो भवेद्ध्रुवम् ॥ ७०
स्वजनस्य च सर्वस्य धनस्य च कुलस्य च । स द्विजो नाशमिच्छेत विशत्येवं यदा गृहम् ॥ ७१
तथा तेऽहं गृहं प्राप्ता तव नाशं समीहती । जीवं कुलं धनं धान्यं पुत्रपौत्रादिकं तथा ॥ ७२

* एतच्चिह्नान्तर्गतः पाठश्छपुस्तकस्थः ।

१ क. ख. ङ. च. ड. ढ. मायामोहेन । २ छ. °नसो नैव संधानं म° । ३ क. छ. ढ. °देहो मा वदस्व पु° । ४ झ. °था च कुर्कुटः पक्षी सर्वलोकेऽप्यमङ्गलः । गृ° । ५ क. ख. ङ. च. छ. झ. ढ. तव ।

पुत्राणां धनधान्यस्य ते वंशस्य च सांप्रतम् । सर्वं ते नाशयित्वाऽहं यास्यामि च न संशयः॥७३
यथा त्वयाऽहमानीता चरन्ती परमं तपः । पतिकामा प्रवाञ्छन्ती नहुषं चाऽऽयुनन्दनम् ॥ ७४
तथा त्वां मम भर्ता हि नाशयिष्यति दानव । [1]तन्निमित्त उपायोऽयं दृष्टो देवेन वै पुरा ॥ ७५
सत्येयं लौकिकी गाथा यां गायन्ति विदो जनाः । प्रत्यक्षं दृश्यते लोके न विन्दन्ति कुबुद्धयः॥
यत्र येन प्रभोक्तव्यं यस्माद्दुःखसुखादिकम् । सत्यं च भुज्यते तत्र तस्मादेव न संशयः ॥ ७७
कर्मणोऽस्य फलं भुङ्क्ष्व स्वकीयस्य महीतले । यास्यसे निरयं स्थानं परदाराभिमर्शनात् ॥७८
सुतीक्ष्णं हि सुधारं तु सुखड्गं च विघट्टति । अङ्गुल्यग्रेण कोपाय तथा मां विद्धि सांप्रतम् ॥७९
सिंहस्य संमुखं गत्वा क्रुद्धस्य गर्जितस्य वो । को लुनाति मुखात्केशान्साहसाकारसंयुतः ॥ ८०
सत्याचारां दमोपेतां नियतां तपसि स्थिताम् । निधनं चेच्छते सद्यो यो वै मां भोक्तुमिच्छति ॥
स मणिं कृष्णसर्पस्य जीवमानस्य सांप्रतम् । ग्रहीतुमिच्छत्येवापि यथा कालेन प्रेषितः ॥ ८२
भवांस्तु प्रेषितो मूढ कालेन [3]काममोहितः । तदा त ईदृशी जाता कुमतिः किं न पश्यसि ॥ ८३
ऋते तु आयुपुत्रेण समालोकयते हि रुः । अन्यो हि निधनं याति मम गात्रावलोकनात् ॥ ८४
एवमाभाष्य तं दुष्टं गङ्गातीरं गता सती । सशोका दुःखसंविग्ना नियता नियमान्विता ॥ ८५
पूर्वमाचरितं घोरं पतिकामनया तपः । तव नाशार्थमद्याहं चरिष्ये दारुणं तपः ॥ ८६
यदा त्वां निहतं दुष्ट नहुषेण महात्मना । निशितैर्वज्रसंकाशैर्बाणैराशीविषोपमैः ॥ ८७
रणे निपतितं पाप मुक्तकेशं सलोहितम् । [4]गतोत्साहं प्रद्रक्ष्यामि तदा यास्याम्यहं पतिम् ॥ ८८
एवं सुनियमं कृत्वा गङ्गातीरे अनुत्तमे । संस्थिता हुण्डनाशाय [5]निश्चिता शिवनन्दिनी ॥ ८९
वह्नेर्यथा दीप्तिमती शिखोज्ज्वला तेजोभियुक्ता प्रदहेत्सुलोकान् ॥
क्रोधेन दीप्ता विबुधेशपुत्रिका गङ्गातटे दुश्चरमाचरत्तपः ॥ ९०

कुञ्जल उवाच—

एवमुक्त्वा महाभागा शिवस्य तनया गता । गङ्गाम्भसि ततः स्नात्वा सुपुरे काञ्चनाह्वये ॥ ९१
तपश्चचार तन्वङ्गी हुण्डस्य वधहेतवे । अशोकसुन्दरी बाला सत्येन च समन्विता ॥ ९२
हुण्डोऽपि दुःखितो जात [6]आत्मना पापचेतसा । चिन्तयामास संतप्तो ह्यतीव [7]वंचनानलैः ॥ ९३
समाहूय अमात्यं तं कम्पनाख्यमथाब्रवीत् । समाचष्ट प्रवृत्तान्तं तस्याः शापोद्भवं महत् ॥ ९४
शप्तो ह्यशोकसुन्दर्या शिवस्यापि सुकन्यया । नहुषस्यापि मे भर्तुस्त्वं तु हस्तान्मरिष्यसि ॥ ९५
[8]नैवं स्यात्तु ह्यसौ गर्भ आयोर्भार्या न गुर्विणी । यथा तु स्यादलीकस्तु तस्याः शापस्तथा कुरु ९६

कम्पन उवाच—

अपहृत्य प्रियां तस्य आयोश्चापि समानय । अनेनापि प्रकारेण तव शत्रुर्न जायते ॥ ९७
[*नो वा प्रपातयस्व त्वं गर्भं तस्याः प्रभीषणैः । अनेनापि प्रभावेण तव शत्रुर्न जायते]॥ ९८
जन्मकालं प्रतीक्षस्व नहुषस्य दुरात्मनः । अपहृत्य समानीय जहि त्वं पापचेतनम् ॥ ९९
एवं संमन्त्र्य तेनापि कम्पनेन स दानवः । अभूत्स चोद्यमी ह्येवं नहुषस्य प्रणाशने ॥ १००

---

* एतच्चिह्नान्तर्गतः पाठः छ. पुस्तकस्थः ।

---

१ ङ. छ. तन्निमित्त । २ ग. घ. ञ. ट. ठ. ड. वा । कौतुकान्मृगकोपेन साहसात्कर्तुमिच्छति । स॰ । ३ क. ख. ङ. च. छ. झ. ड. ढ. काममोहितः । ४ ङ. ढ. गतासुं च प्र॰ । छ. गताशं च प्र॰ । ५ क. ख. ङ. च. छ. झ. ड. ढ. निश्चला । ६ ढ. आपधुतेन चे॰ । ७ क. ख. मदनानलैः । ८ ङ. छ. झ. ढ. ॰व जातस्त्वसौ ।

विष्णुरुवाच—

[1]ऐलपुत्रो महाभाग आयुर्नाम क्षितीश्वरः । सार्वभौमः स धर्मात्मा सत्यधर्मपरायणः ॥ १०१
इन्द्रोपेन्द्रसमो राजा तपसा यशसा बलैः । दानयज्ञैः सुपुण्यैश्च सत्येन नियमेन च ॥ १०२
एकच्छत्रेण वै राज्यं चक्रे भूपतिसत्तमः । पृथिव्यां सर्वधर्मज्ञः सोमवंशस्य भूषणम् ॥ १०३
पुत्रं न विन्दते राजा तेन दुःखी व्यजायत । चिन्तयामास धर्मात्मा कथं मे जायते सुतः १०४
इति चिन्तां समापेद आयुश्च पृथिवीपतिः । पुत्रार्थं परमं यत्नमकरोत्सुसमाहितः ॥ १०५
अत्रिपुत्रो महात्मा वै दत्तात्रेयो द्विजोत्तमः । क्रीडमानः स्त्रिया सार्धं [*मदिरारुणलोचनः १०६
वारुण्या मत्तधर्मात्मा स्त्रीवृन्देन समावृतः । अङ्के युवतिमाधाय] सर्वयोषिद्वरां शुभाम् ॥ १०७
गायते नृत्यते विप्रः सुरां च पिबते भृशम् । विना यज्ञोपवीतेन महायोगीश्वरोत्तमः ॥ १०८
पुष्पमालाभिर्दिव्याभिर्मुक्ताहारपरिच्छदैः । चन्दनागुरुदिग्धाङ्गो राजमानो मुनीश्वरः ॥ १०९
तस्याऽऽश्रमं नृपो गत्वा तं दृष्ट्वा द्विजसत्तमम् । प्रणाममकरोन्मूर्ध्ना दण्डवत्सुसमाहितः ॥ ११०
अत्रिपुत्रः स धर्मात्मा समालोक्य नृपोत्तमम् । आगतं पुरतो भक्त्या अथ ध्यानं समास्थितः १११
एवं वर्षशतं प्राप्तं तस्य भूपस्य सत्तम । निश्चलत्वं परिज्ञाय मानसं भक्तितत्परम् ॥ ११२
[+समाहूय समाचष्टे किमर्थं क्लिश्यसे नृप । ब्रह्माचारेण हीनोऽस्मि ब्रह्मत्वं नास्ति मे कदा ११३
सुरामांसप्रलुब्धोऽस्मि स्त्रिया सक्तः सदैव हि । वरदाने न मे शक्तिरन्यं शुश्रूष ब्राह्मणम् ११४

आयुरुवाच—

भवादृशो महाभाग नास्ति ब्राह्मणसत्तमः । सर्वकामप्रदाता वै त्रैलोक्ये परमेश्वरः] ॥ ११५
अत्रिवंशे महाभाग गोविन्दस्त्वं सुरोत्तम । ब्राह्मणस्यैव रूपेण भवान्वै गरुडध्वजः ॥ ११६
नमोऽस्तु देवदेवेश नमोऽस्तु परमेश्वर । त्वामहं शरणं प्राप्तः शरणागतवत्सल ॥ ११७
उद्धरस्व हृषीकेश मायां कृत्वा प्रतिष्ठसि । विश्वस्थानां प्रजानां च विद्वांसं विश्वनायकम् ११८
जानाम्यहं जगन्नाथं भवन्तं मधुसूदनम् । मां रक्ष शरणं प्राप्तं विश्वरूप नमोऽस्तु ते ॥ ११९

कुञ्जल उवाच—

गते बहुतिथे काले दत्तात्रेयो नृपोत्तमम् । उवाच मत्तरूपेण कुरु त्वं वचनं मम ॥ १२०
कपालेन सुरां देहि बहुलं मांसभोजनम् । एवमाकर्ण्य तद्वाक्यं स चाऽऽयुः पृथिवीपतिः ॥ १२१
उत्सुकस्तु कपालेन सुरामाहृत्य वेगवान् । पलं सुविपुलं चैव छित्त्वा हस्तेन सत्वरम् ॥ १२२
नृपेन्द्रः प्रददौ तस्मै दत्तात्रेयाय पुत्रक । अथ प्रसन्नचेताश्च संजातो मुनिपुंगवः ॥ १२३
दृष्ट्वा भक्तिं प्रभावं च गुरुशुश्रूषणं तथा । समुवाच नृपेन्द्रं तमायुं प्रणतमानसम् ॥ १२४
वरं वरय भद्रं ते दुर्लभं भुवि भूपते । सर्वमेव प्रदास्यामि यं यमिच्छसि सांप्रतम् ॥ १२५

राजोवाच—

भवान्दाता वरं [12]सत्यमिच्छया मुनिसत्तम । पुत्रं देहि गुणोपेतं सर्वज्ञं गुणसंयुतम् ॥ १२६

* एतच्चिह्नान्तर्गतः पाठो ङ. छ. ड ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ड. ढ तुजपुत्रो । २ घ. ट. ठ. ड. ढ. सत्यधर्मज्ञः । ३ क. ख. घ. च. छ. झ. ट. ठ. ड. योगीन्द्रः । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. अवज्ञाय ततः स्थि° । ५ घ. ङ. छ. ट. ठ. ढ. °श्चस्यास्य प्रधातारं भवन्तं वि° । ६ ग. मत्पूजनेन । ७ क. ख. घ. छ. च. छ. झ. ड. पाचितं । ट. पवित्रं । ८ ड उद्धृतेन क° । ९ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. सुपाचितं । १० ङ. छ. ढ. परम् । ११ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. प्रणतमादृतः । ड. प्रणतमादृतम् । १२ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. सत्यं कृपया ।

[1]देवतीर्थार्चनकरमजेयं देवदानवैः । [2]राक्षसैर्दानवैर्घोरैः क्षत्रियैः किंनरैस्तथा ॥ १२७
देवब्राह्मणसंभक्तः प्रजापालो विशेषतः । यज्वा [3]दीनगतिः शूरः शरणागतवत्सलः ॥ १२८
दाता भोक्ता महात्मा च वेदशास्त्रेषु पारगः । धनुर्वेदेषु निष्णातः शास्त्रेषु च परायणः ॥ १२९
अनाहतमतिर्धीरः संग्रामेष्वपराजितः । एवंगुणः सुरूपश्च यस्माद्वंशः प्रजायते ॥ १३०
देहि पुत्रं महाभाग मम वंशप्रभाकरम् । यदि वाऽपि वरो देयस्त्वया मे स्वेच्छया विभो ॥ १३१

दत्तात्रेय उवाच—

एवमस्तु महाराज तव पुत्रो भविष्यति । तव वंशकरः पुण्यः सर्वजीवदयापरः ॥ १३२
एभिर्गुणैस्तु संयुक्तो वैष्णवांशेन संयुतः । राजा च सार्वभौमश्च इन्द्रतुल्यो नरेश्वरः ॥ १३३
एवं खलु वरं दत्त्वा ददौ फलमनुत्तमम् । नृपमाह महायोगी स्वभार्यायै प्रदीयताम् ॥ १३४
एवमुक्त्वा विसृज्यैव तमायुं पृथिवीपतिम् । आशीर्भिरभिनन्द्यैव ह्यन्तर्धानं चकार ह ॥ १३५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८२७०

---

अथ चतुरधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—

गते तस्मिन्महाभागे दत्तात्रेये महामुनौ । आजगाम महाराजः शक्रप्रस्थपुरं प्रति ॥ १
इन्दुमत्या गृहं हृष्टः प्रविवेश श्रियाऽन्वितम् । सर्वकामसमृद्धार्थं कुबेरभवनोपमम् ॥ २
चक्रे राज्यं स मेधावी यथा स्वर्गे पुरंदरः । स्वर्भानुसुतया सार्धमिन्दुमत्या द्विजोत्तम ॥ ३
सा च इन्दुमती राज्ञी गर्भमाप फलाशनात् । दत्तात्रेयस्य वचनाद्दिव्यतेजःसमन्वितम् ॥ ४
इन्दुमत्या महाभाग स्वप्नं दृष्टमनुत्तमम् । रात्रौ देवान्वितं तावद्बहुमङ्गलदायकम् ॥ ५
गृहान्तरे विशन्तं च पुरुषं सूर्यसंनिभम् । मुक्तामालान्वितं विप्रं श्वेतवस्त्रेण शोभितम् ॥ ६
श्वेतपुष्पकृता माला तस्य कण्ठे विराजते । सर्वाभरणशोभाङ्गो दिव्यगन्धानुलेपनः ॥ ७
चतुर्भुजः शङ्खपाणिर्गदाचक्रासिधारकः । छत्रेण ध्रियमाणेन चन्द्रबिम्बानुकारिणा ॥ ८
शोभमानो महातेजा दिव्याभरणभूषितः । हारकङ्कणकेयूरैर्नूपुराभ्यां विराजितः ॥ ९
चन्द्रबिम्बानुकाराभ्यां कुण्डलाभ्यां विराजितः । एवंविधो महाप्राज्ञः कश्चित्पुमान्समागतः ॥ १०
इन्दुमतीं समाहूय स्नापिता पयसा तदा । शङ्खेन क्षीरपूर्णेन हंसवर्णेन भामिनी(म्) ॥ ११
रत्नकाञ्चनबद्धेन संपूर्णेन पुनः पुनः । श्वेतं नागं सुरूपं च सहस्रशिरसं वरम् ॥ १२
महामणिसुसंदीप्तं ज्वालामालासमाकुलम् । क्षिप्तं तेन [11]मुखप्रान्ते दत्तं मुक्ताफलं पुनः ॥ १३

---

१ क. ख. घ. च. छ. झ. ट. ठ. देववीर्ये सुदेवं च ह्यजेयं देवदा° । ङ. ढ. देववीर्ये सुतेजं च ह्यजेयं देवदा° । ड. देववीर्ये सुदेवं च ह्यजेयं दैत्यदा° । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. °वैः । क्षत्रियै राक्षसैर्घोरैर्गन्धर्वैः किं° । ड. °वैः । क्षत्रियै राक्षसैर्वीरैर्गन्धर्वैः किं° । ३ क. ख. घ. ङ. च. छ. झ. ड. ढ. दानपतिः । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °हात्यागी वे° । ५ क. ख. घ. ङ. च. छ. ट. ठ. ड. ढ. °प्रधारकम् । ६ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. कृपया । ७ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. गृहे । ८ क. ख. ङ. च. °युं प्रणतं पुरः । आ° । घ. ट. ठ. ड. °युं प्रणतं पुनः । आ° । ९ घ. ख. च. छ. झ. ट. ठ. ड. °जः स आयुः स्वपु° । १० क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °दार्थमिन्द्रस्य भ° । ११ क. ख. घ. च. झ. ठ. ड. सुस्वप्रान्ते ।

कण्ठे तस्याः स देवेश इन्दुमत्या महायशाः । हस्ते पद्मं ततो दत्त्वा स्वस्थानं प्रति जग्मिवान् १४
एवंविधं महास्वप्नं सा तु दृष्ट्वा सुतोत्तम । समाचष्टे महाभागा तमायुं भूपतिं पतिम् ॥ १५
समाकर्ण्य महाराजश्चिन्तयामास वै पुनः । समाहूय गुरुं पश्चात्कथितं स्वप्नमुत्तमम् ॥
शौनकं सुमहाभागं सर्वज्ञं ज्ञानिनां वरम् ॥ १६

राजोवाच—

अद्य रात्रौ महाभाग मम पत्न्या द्विजोत्तम । विप्रो गेहं विशन्दृष्टः किमिदं स्वप्नकारणम् ॥ १७

शौनक उवाच—

वरो दत्तस्तु ते पूर्वं दत्तात्रेयेण धीमता । आदिष्टं च फलं राज्ञ्यां सुगुणं सुतहेतवे ॥ १८
तत्फलं किं कृतं राजन्कस्यै त्वया नियोजितम् । स्वभार्यायै मया दत्तमिति राज्ञोदितं वचः १९
श्रुत्वोवाच महाप्राज्ञः शौनको द्विजसत्तमः । वृत्तान्तं स्वप्नभावेन तव गेहे सुतोत्तमः ॥ २०
वैष्णवांशेन संयुक्तो भविष्यति न संशयः । स्वप्नस्य कारणं राजन्नेतत्ते कथितं मया ॥ २१
इन्द्रोपेन्द्रसमो राजंस्तव पुत्रो भविष्यति । पुत्रस्ते सर्वधर्मात्मा सोमवंशस्य भूषणः ॥ २२
धनुर्वेदे सवेदे च सगुणोऽसौ भविष्यति । एवमुक्त्वा स राजानं शौनको गतवान्गृहम् ॥ २३
हर्षेण महताऽऽविष्टो राजाऽभूत्सह भार्यया ॥ २४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८२९२

---

अथ पञ्चोत्तरशततमोऽध्यायः ।

---

कुञ्जल उवाच—

गता सा नन्दनवनं सखीभिः सह क्रीडितुम् । तत्रोक्तं केनचिद्वाक्यमस्या गर्भे महाबलः ॥ १
भविष्यति सुतश्रेष्ठो हुण्डस्यान्तं करिष्यति । एवंविधं महद्वाक्यं[*मप्रियं दुःखदायकम् ॥ २
समाकर्ण्य समायाता पितुरग्रे निवेदितम् । समासेन तया तस्य पुरतो दुःख]दायकम् ॥ ३
पितुरग्रे जगादाथ पिता श्रुत्वा च विस्मितः । शापमशोकसुन्दर्याः सस्मार च पुरा कृतम् ॥ ४
गर्भस्य नाशनायैव इन्दुमत्याः स दानवः । विविक्तमुद्यमं चक्रे कालाकृष्टो दुरात्मवान् ॥ ५
छिद्रान्वेषी ततो भूत्वा चेन्दुमत्याश्च नित्यशः । यदा पश्यति तां राज्ञीं रूपौदार्यगुणान्विताम् ॥
दिव्येन तेजसा युक्तां रक्षितां विष्णुतेजसा । [+दिव्यतेजःसमायुक्तां सूर्यबिम्बोपमां तु ताम् ] ॥
तस्याः पार्श्वे महाभाग रक्षणार्थं स्थितः सदा । दुरात्मा दानवो हुण्डस्तस्याश्च बहु दर्शयेत् ॥ ८
नानाविधा भीषिकाश्च मायावी मायया सदा । गर्भस्य तेजसा चैव रक्षिता विष्णुतेजसा ॥ ९
भयं न जायते तस्या मनस्येव कदा पुनः । विफलो दानवो जात उद्यमश्च निरर्थकः ॥ १०

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः ङ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ड. °मः । दत्तात्रेयप्रसादेन । घ. ट. ठ. °मः । दत्तात्रेयप्रभावेन । २ क. ख. ङ. च. ङ. तत्राऽऽकर्ण्य महद्वाक्यमप्रियं तु तदा पितुः । चारणानां स पुत्राणां भाषतां हर्षकेण वै । आयोर्गेहे महावीर्यो विष्णुतुल्यपराक्रमः । वेदे तु ब्रह्मणा तुल्यः सर्वशास्त्रविशारदः । भ° । ३ ग. घ. ज. म. ट. ठ. °क्यमाश्रुत्वा सुखदायकम् । पितुरग्रे ज° ।

मनः खिन्नं बभूवास्य हुण्डस्यापि दुरात्मनः । एवं वर्षशतं तस्य पश्यमानस्य वै गतम् ॥ ११
प्रसूता सा हि पुत्रं चै धर्मात्मानं महामतिम् । रात्रौ चैव सुतश्रेष्ठ तस्याः पुत्रो व्यजायत ॥
तेजस्वी वीरशोभाभिर्यथा सूर्यो नभस्तले । १२

सूत उवाच—

अथ दासी महादुष्टा काचित्सूतिगृहागता । अशौचाचारसंयुक्ता महामङ्गलवादिनी ॥ १३
तस्याः सर्वं परिज्ञाय स हुण्डो दानवाधमः । अस्या अङ्गं प्रविश्यैव प्रविष्टश्चाऽऽयुमन्दिरे ॥ १४
महाजने प्रसुप्ते च निद्रयाऽतीव मोहिते । तं पुत्रं देवगर्भाभमपहृत्य बहिर्गतः ॥ १५
काञ्चनाख्यं पुरं प्राप्तः स्वकीयं दानवाधमः । समाहूय प्रियां भार्यां [3]विपुलां तामथाब्रवीत् ॥ १६
वधस्वैनं महापापं बालरूपं रिपुं मम । पश्चात्सूदस्य वै हस्ते भोजनार्थं प्रदीयताम् ॥ १७
नानाद्रव्यैः समायुक्तं पाचयस्व हि [4]निर्घृणम् । सूदहस्तान्महाभागे अहं भोक्ष्ये न संशयः ॥ १८
वाक्यमाकर्ण्य तद्भर्तुर्[5]विपुला विस्मिताऽभवत् । कस्मान्निर्घृणतां याति मम भर्ताऽतिनिष्ठुरः ॥ १९
सर्वलक्षणसंपन्नं देवगर्भोपमं सुतम् । कस्य कस्मात्प्रभक्षेत कृपाहीनः सुनिर्घृणः ॥ २०
इत्येवं चिन्तयामास कारुण्येन समन्विता । पुनः पप्रच्छ भर्तारं कस्माद्भक्षसि बालकम् ॥ २१
यस्माद्भवसि संक्रुधो ह्यतीव निरपत्रपः । सर्वं मे कारणं ब्रूहि तत्त्वेन दनुजेश्वर ॥ २२
आत्मदोषस्य वृत्तान्तं समासेन निवेदितम् । शापं ह्यशोकसुन्दर्या हुण्डेनापि दुरात्मना ॥ २३
तया ज्ञातं तु तत्सर्वं कारणं दानवस्य वै । वध्योऽयं बालकः सत्यं नो वा भर्ता मरिष्यति ॥ २४
इत्येवं संविचार्यैव [6]विपुला क्रोधमूर्छिता । मेकलां तु समाहूय सैरन्ध्रीं वाक्यमब्रवीत् ॥ २५
जह्येनं बालकं दुष्टं मेकलेऽद्य महानसे । सूदहस्ते प्रदेहि त्वं हुण्डभोजनहेतवे ॥ २६
मेकला बालकं गृह्य सूदमाहूय चाब्रवीत् । राजादेशं कुरुष्वाद्य पचस्वैनं हि बालकम् ॥ २७
एवमाकर्णितं तेन सूदेनापि महात्मना । आदाय बालकं हस्ताच्छस्त्रमुद्यम्य चोद्यतः ॥ २८
एष वै देवदेवस्य दत्तात्रेयस्य तेजसा । रक्षितस्त्वायुपुत्रश्च स जहास पुनः पुनः ॥ २९
तं हसन्तं समालोक्य स सूदः कृपयाऽन्वितः । सैरन्ध्री कृपया युक्ता सूदं तं प्रत्युवाच ह ॥ ३०
नैव वध्यस्त्वयाऽयं सूद शिशुरेष महामते । दिव्यलक्षणसंपन्नः कस्य जातः सुसत्कुले ॥ ३१

सूत उवाच—

सत्यमुक्तं त्वया भद्रे वाक्यं वै कृपयाऽन्वितम् । राजलक्षणसंपन्नो रूपवान्कस्य बालकः ॥ ३२
कस्माद्भोक्ष्यति पापात्मा हुण्डोऽयं दानवाधमः । येन वै रक्षितो वंशः पूर्वमेव स्वकर्मणा ॥ ३३
आपत्स्वपि स जीवेत दुर्गेषु नान्यथा भवेत् । नद्या वेगहृतश्चापि वह्निमध्यगतोऽपि वा ॥ ३४
जीवते नात्र संदेहो यस्य कर्म सहायकम् । तस्माद्धि क्रियते कर्म धर्मपुण्यसमन्वितम् ॥ ३५
आयुष्मन्तो नरास्तेन प्रविन्दन्ति सुखं ततः । तारकं पालकं कर्म रक्षते जाग्रते हि तत् ॥ ३६
भुक्तिदं जायते नित्यं मैत्रस्थानप्रदायकम् । दानपुण्यान्वितं कर्म प्रियवाक्यसमन्वितम् ॥ ३७
उपकारयुतं यश्च करोति शुभकृत्तदा । तमेव रक्षते कर्म सर्वदैव न संशयः ॥ ३८

---

१ क ख ङ. च. छ. झ. ट. ठ. मनेप्सितं नैव जातं हु° । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. च स्वभर्नोस्तनया तदा । रा° । ३ क. ख. घ. ङ. च. छ. झ ड. ढ. विधुदां । ४ ड. निर्जितम् । ५ छ. ड. °विधुदा । ६ घ. छ. ठ. ठ. ड. विधुदा । ७ ड. °तः । स तु दैवेन देवेशकृपयाऽपि स्वकर्मणा । र° । ८ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °याऽथैव शि° ।

अन्ययोनिं प्रयाति स्म प्रतिषिद्धेन कर्मणा । किं करोति पिता माता अन्ये स्वजनबान्धवाः ३९
कर्मणा निहतो यस्तु न स्युस्तस्य हि रक्षणे । येनैव कर्मणा चैव रक्षितश्चाऽऽयुनन्दनः ॥ ४०
तस्मात्कृपान्वितो जातः सूदः कर्मवशानुगः । सैरन्ध्री च तथा जाता प्रेरिता तस्य कर्मणा॥४१
द्वाभ्यामेव सुतस्तस्य रक्षितश्चारुलक्षणः । रात्रावेव प्रणीतोऽसौ तस्माद्गीत्या महाश्रमे ॥ ४२
वसिष्ठस्याऽऽश्रमे पुण्ये सैरन्ध्र्या पुण्यकर्मणा । शुभे पर्णकुटीद्वारे तस्मिन्नेव महाश्रमे ॥ ४३
गता सा स्वगृहं पश्चान्निक्षिप्य बालकं च तम् । एणं निपात्य सूदेन पाचितं मांसमेव हि ॥ ४४
भोजयित्वा स दैत्येन्द्रो हुण्डस्तुष्टोऽभवत्तदा । शापं ह्यशोकसुन्दर्या मोघं मेने तदाऽसुरः ॥
हर्षेण महताऽऽविष्टः स हुण्डो दानवेश्वरः ॥ ४५

कुञ्जल उवाच—

प्रभाते विमले जाते वसिष्ठो मुनिसत्तमः । बहिर्गतो हि धर्मात्मा कुटीद्वारात्प्रपश्यति ॥ ४६
संपूर्णं बालकं दृष्ट्वा दिव्यलक्षणसंयुतम् । संपूर्णेन्दुप्रतीकाशं सुन्दरं चारुलोचनम् ॥ ४७
पश्यन्तु मुनयः सर्वे यूयमागत्य बालकम् । कस्य केन समानीतं रात्रौ चैवाङ्गणे मम ॥ ४८
देवगन्धर्वगर्भाभं राजलक्षणसंयुतम् । कन्दर्पकोटिसंकाशं पश्यन्तु मुनयोऽमलम् ॥ ४९
महाकौतुकसंयुक्ता हृष्टा द्विजवरास्ततः । समपश्यंस्तं तु पुत्रमायोश्चैव महात्मनः ॥ ५०
वसिष्ठः स तु धर्मात्मा ज्ञानेनाऽऽलोक्य बालकम् । [*आयुपुत्रं समाज्ञातं चरित्रेण समन्वितम्]
वृत्तान्तं तस्य दुष्टस्य हुण्डस्यापि दुरात्मनः । कृपया ब्रह्मपुत्रस्तु समुत्थाय सुबालकम् ॥ ५२
कराभ्यामथ गृह्णाति यावद्द्विजवरोत्तमः । तावद्वृष्टिं सौमनस्यां चक्रुर्देवा द्विजोपरि ॥ ५३
ललितं सुस्वरं गीतं जगुर्गन्धर्वकिंनराः । ऋषयो वेदमन्त्रैश्च स्तुवन्ति नृपनन्दनम् ॥ ५४
वसिष्ठस्तं समालोक्य वरं वै दत्तवांस्तदा । नहुषेत्येव ते नाम ख्यातिं लोके गमिष्यति ॥ ५५
हुषितो नैव तेनापि बालभावैर्नराधिप । तस्मान्नहुष ते नाम देवपूज्यो भविष्यसि ॥ ५६
जातकर्मादिकं कर्म तस्य चक्रे द्विजोत्तमः । व्रतदानं विसर्गं च गुरुशिष्यादिलक्षणम् ॥ ५७
वेदं चाधीत्य संपूर्णं षडङ्गं सपदक्रमम् । सर्वाण्येव च शास्त्राणि ह्यधीत्य द्विजसत्तमात् ॥ ५८
सैविसर्गं धनुर्वेदं सरहस्योपसंयमम् । शस्त्रास्त्राणि च दिव्यानि जग्राह मुनिसत्तमात् ॥ ५९
ज्ञानशास्त्राणि चान्यानि राजनीत्यादिकानि च । वसिष्ठादायुपुत्रस्तु शिष्यरूपेण भक्तिमान्॥६०
सर्वविद्यासुनिष्पन्नो नहुषश्चातिसुन्दरः । प्रसादाच्च वसिष्ठस्य चापबाणधरोऽभवत् ॥ ६१

इति श्रीमहापुराणे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे पञ्चोत्तरशततमोऽध्यायः ॥ १०५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८३५४

---

अथ षडधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—

आयुभार्या महाभागा स्वर्भानोस्तनया सुतम् । अपश्यन्ती स्वकं चापि देवोपममनौपमम् ॥ १

---

* एतच्चिह्नान्तर्गतः पाठो घ. छ. ट. ठ. ड. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. अनयो नयतां याति प्रेरितस्तस्य क° । २ घ. छ. ट. ठ. ड. अन्यं । ३ ङ. °मलाः । म° । ४ छ. झ. ट. ठ. ड. सुतोपरि । ५ क. ख. ङ. च. छ. झ. ठ. ड. ढ. वसिष्ठाच्च । ६ क. ख. ङ. च. छ. झ. ड. ढ. °नि प्रहमक्षोयुतानि च शा° । ७ घ. छ. ट. ठ. ड. सूत ।

हाहाकारं महत्कृत्वा रुरोद वरवर्णिनी । केन मे लक्षणोपेतो हृतो बालः सुलक्षणः ॥ २
तपसा दानयज्ञैश्च नियमैर्दुष्करैः सुतः । संप्राप्तो हि मया वत्सः सकामैर्दारुणैः पुनः ॥ ३
दत्तात्रेयेण पुण्येन तुष्टेन सुमहात्मना । दत्तः पुत्रो हृतः केन रुरोद करुणान्विता ॥ ४
हा पुत्र वत्स मे तात हा बाल गुणमन्दिर । क्वासि केनाभिनीतोऽसि मम शब्दः प्रदीयताम् ॥ ५
सोमवंशस्य सर्वस्य भूषणस्त्वं न संशयः । केन त्वमद्य नीतोऽसि मम प्राणैः समन्वितः ॥ ६
सुराजलक्षणैर्दिव्यैः संपूर्णः कमलेक्षणः । केनाप्यद्य हृतो वत्स किं करोमि क्व याम्यहम् ॥ ७
स्फुटं जानाम्यहं कर्म ह्यन्यजन्मनि यत्कृतम् । न्यासभङ्गः कृतः कस्य तस्मात्पुत्रो हृतो मम ॥ ८
[*किंवा छलं कृतं कस्य पूर्वजन्मानि पापया । कर्मणः कस्य वै दुःखमनुभुञ्जामि नान्यथा ॥ ९
रत्नापहारिणी जाता पुत्ररत्नं हृतं मम] । तस्माद्देवेन वै दिव्य अनौपम्यगुणाकरः ॥ १०
किंवा वितर्कितो विप्रः कर्मणस्तस्य वै फलम् । प्राप्तं मया न संदेहः पुत्रशोकान्वितं भृशम् ॥ ११
किंवा शिशुविरोधश्च कृतो जन्मान्तरे मया । तस्य पापस्य भुञ्जामि कर्मणः फलमीदृशम् ॥ १२
याचमानस्य चैवाग्रे वैश्वदेवस्य कर्मणि । किं वाऽपि नार्पितं चान्नं व्याहृतिभिर्हुतं द्विजैः ॥ १३
एवं सुवेदनायुक्ता स्वर्भानुतनया तदा । इन्दुमती महाभागा शोकविह्वलिताऽभवत् ॥ १४
पतिता मूर्छिता शोकाद्विह्वलत्वं गता सती । निःश्वासं मुञ्चमाना सा वत्सहीना यथा हि गौः ॥ १५
आयू राजाऽथ शोकेन दुःखेन महताऽन्वितः । हृतं श्रुत्वा हि पुत्रं तु धैर्यं तत्याज पार्थिवः १६
तपसश्च फलं नास्ति नास्ति दानस्य वै फलम् । यस्मादेवं हृतः पुत्रस्तस्मान्नास्त्यत्र संशयः १७
दत्तात्रेयः प्रसन्नस्तु वरं मे दत्तवान्पुरा । अजेयं च जयोपेतं पुत्रं सर्वगुणान्वितम् ॥ १८
तद्वरस्य प्रसादात्तु कथं विघ्नो ह्यजायत । इति चिन्तापरो राजा दुःखितः प्रारुदद्भृशम् ॥ १९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे नाहुषे षडधिकशततमोऽध्यायः ॥ १०६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८३७३

---

अथ सप्तोत्तरशततमोऽध्यायः ।

---

कुञ्जल उवाच—

अथासौ नारदः साक्षात्स्वर्गाद्राजानमागतः । नृपमाश्वासयामास कस्माद्राजन्प्ररुद्यते ॥ १
पुत्रापहरणात्तेऽद्य क्षेमं जातं महामते । देवादीनां महाराज एवं ज्ञात्वा तु मा शुचः ॥ २
सर्वविद्या गुणांश्चापि वरान्कामांस्तथैव च । लब्ध्वा कामाभिसंपूर्णो ह्यागमिष्यति ते सुतः ॥ ३
येनाप्यपहृतस्तेऽद्य बालो देवगुणोपमः । आत्मगेहे महाराज कालो नीतो न संशयः ॥ ४
तस्य नाशं स वै कृत्वा महावीर्यो महाबलः । स त्वामभ्येष्यते भूयः शिवस्य सुतया सह ॥ ५
इन्द्रोपेन्द्रसमः पुत्रो भविष्यति स्वतेजसा । इन्द्रत्वं भोक्ष्यते सोऽपि निजैश्च पुण्यकर्मभिः ॥ ६

---

* एतच्चिह्नान्तर्गतः पाठो घ. छ. ट. ठ. ड. पुस्तकस्थः ।

---

१ घ. ट. ठ. ड. °वा फलं कस्य पूर्वं पापयाऽपहृतं मया । पुत्रसंतापजं दुःखं तस्मात्प्राप्नोमि । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °मि पुत्रशोकं सुदारुणम् । या° । ३ क. ख. ङ. च. झ. ढ. प्रभुञ्जानस्य । ४ ड. °न करुणान्विताः । ५ क. ख. ङ. च. छ. झ. ड. ढ. °यं यौवनोपे° । ६ क. ख. च. छ. झ. ट. ठ. ड. ढ. °वेज्ञो हि गुणी भूत्वा सर्ववेत्ता न संशयः । सर्वकलाभि° ।

एवमाभाष्य राजानमायुं देवर्षिसत्तमः । जगाम सहसा तस्य पश्यतः सानुगस्य ह ॥ ७
गते तस्मिन्महाभागे नारदे देवसद्मनि । आयुरागत्य तां राज्ञीं तत्सर्वं विन्यवेदयत् ॥ ८
दत्तात्रेयेण दत्तस्तु पुत्रो देववरोपमः । स वै राज्ञि कुशल्यास्ते विष्णोश्चैव प्रसादतः ॥ ९
येनाप्यसौ हृतः पुत्रः सगुणो मे वरानने । शिरस्तस्य गृहीत्वा तु पुनरेवाऽऽगमिष्यति ॥ १०
इत्याह नारदो भद्रे मा कृथाः शोकमेव च । त्यजे मोहं महामोदं कुरु भद्रे सुखाकरम् ॥ ११
भर्तुर्वाक्यं निशम्यैवं राज्ञी इन्दुमती ततः । अतिहर्षान्विता जाता पुत्रस्याऽऽगमनं प्रति ॥ १२
यथोक्तं देवऋषिणा तत्तथैव भविष्यति । दत्तात्रेयेण मे दत्तस्तनयो ह्यजरामरः ॥ १३
भविष्यति न संदेहः प्रतिभात्येवमेव हि । इत्येव चिन्तयित्वा तु ननाम द्विजपुंगवम् ॥ १४
नमोऽस्तु तस्मै परिसिद्धिदाय अत्रेः सुपुत्राय महात्मने च ॥
यस्य प्रसादेन मया सुपुत्रः प्राप्तः सुपुण्यश्च यशःप्रदश्च ॥ १५
एवमुक्त्वा तु सा देवी विरराम सुहर्षिता । आगमिष्यन्तमाज्ञाय नहुषं तनयं पुनः ॥ १६

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे नाहुषे सप्तोत्तरशततमोऽध्यायः ॥ १०७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८३८९

---

अथाष्टोत्तरशततमोऽध्यायः ।

---

कुञ्जल उवाच—
ब्रह्मपुत्रो महातेजा वसिष्ठस्तपतां वरः । नहुषं तं समाहूय इदं वचनमब्रवीत् ॥ १
वनं गच्छस्व शीघ्रं त्वं वन्यमानय पुष्कलम् । स मुनेर्वाक्यमाकर्ण्य नहुषस्तु वनं ययौ ॥ २
अयमेष महाप्राज्ञो नहुषो नाम वीर्यवान् । आयुपुत्रः सुधर्मात्मा बाल्यान्मात्रा वियोजितः ॥ ३
अस्यैवातिवियोगेन आयुभार्या प्ररोदिति । अशोकसुन्दरी चापि तपस्तेपे सुदुश्चरम् ॥ ४
कदा पश्यति सा देवी पुत्रमिन्दुमती शुभम् । नहुषं नाम धर्मज्ञं हृतं पूर्वं तु दानवैः ॥ ५
तन्नाशाय निरालम्बा शिवस्य तनया वरा । अशोकसुन्दरी बालाऽप्यायुपुत्रस्य कारणात् ॥ ६
सा संगता ह्यनेनापि कदा चैव भविष्यति । एवं सांसारिकं वाक्यं दिवि चारणभाषितम् ॥ ७
शुश्राव स हि धर्मात्मा नहुषो विक्रमान्वितः । स गत्वा वन्यमादाय वसिष्ठस्याऽऽश्रमं प्रति ॥ ८
वन्यं निवेद्य पुण्यात्मा वसिष्ठाय महात्मने । बद्धाञ्जलिपुटो भूत्वा भक्त्या नमितकंधरः ॥ ९
तमुवाच महाप्राज्ञं वसिष्ठं तपतां वरम् । भगवन्मे श्रुतं वाक्यमपूर्वं चारणेरितम् ॥ १०
एष वै नहुषो नाम्ना आयुपुत्रो वियोजितः । मात्रा सह सुदुःखैस्तु इन्दुमत्या हि दानवैः ॥ ११
शिवस्य तनया बाला तपस्तेपे सुदुश्चरम् । निमित्तमस्य धीरस्य नहुषस्येति वै गुरो ॥ १२
एवमाभाषितं तत्र तत्सर्वं च श्रुतं मया । कोऽसावायुः स धर्मात्मा का सा चेन्दुमती शुभा ॥ १३
अशोकसुन्दरी का सा नहुषश्चेति कः प्रभो । एतन्मे संशयं जातं तद्भवांश्छेत्तुमर्हति ॥ १४
अन्यः कोऽपि महाप्राज्ञः कुत्रासौ नहुषेति च । तत्र सर्वं मम ब्रूहि कारणान्तरमेव च ॥ १५

---

१ ङ. स एव भद्रे संजातो विष्णोश्च सह तेजसा । ये° । २ घ. छ. झ. ट. ठ. °ज येन महामोहं कायधर्मविनाशनम् । ३ ङ. परिसद्द्विजाय । ४ ङ. °सः सुवरिश्च सुपुण्यद° । ५ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. सूत । ६ क. ख. ङ. च. छ. झ. ड. ढ. °प्राज्ञ इहाऽऽसीन्नहु° ।

वसिष्ठ उवाच—

आयू राजा स धर्मात्मा सप्तद्वीपाधिपो बली। भार्या चेन्दुमती तस्य सत्यरूपा तपस्विनी ॥ १६
तस्यामुत्पादितः पुत्रो भवान्वै गुणमन्दिरम्। आयुना राजराजेन सोमवंशस्य भूषणम् ॥ १७
हरस्य कन्या सुश्रोणी गुणरूपैरलंकृता। अशोकसुन्दरी नाम्ना सुभगा चारुहासिनी ॥ १८
तवार्थे सा तपस्तेपे निरालम्बा तु यौवने। तस्या भर्ता भवान्सृष्टो धात्रा योगेन निश्चितः ॥ १९
गङ्गायास्तीरमासाद्य ध्यानयोगसमन्विताम्। हुण्डस्तु दानवेन्द्रो यो दृष्ट्वा चैकाकिनीं स ताम् २०
तपसा प्रज्वलन्तीं च सुभगां कमलेक्षणाम्। रूपौदार्यगुणोपेतां कामबाणैः प्रपीडितः ॥ २१
तां बभाषेऽन्तिकं गत्वा मम भार्या भवेति च। एवं सा तद्वचः श्रुत्वा तमुवाच यशस्विनी ॥ २२
मा हुण्ड साहसं कार्षीर्मा जल्पस्व पुनः पुनः। अप्राप्याऽहं त्वया दैत्य परभार्या विशेषतः॥ २३
देवेन मे पुरा सृष्ट आयुपुत्रो महाबलः। नहुषो नाम मेधावी भविष्यति पतिर्मम ॥ २४
देवैर्दत्तो महातेजा मरणं त्वं परीप्ससि। [*ततः शापं प्रदास्यामि येन भस्मी भविष्यसि] ॥ २५
एवमाकर्ण्य तद्वाक्यं कामबाणप्रपीडितः। मायया च हृता तेन प्रणीता निजमन्दिरम् ॥ २६
ज्ञात्वा तया महाभाग शप्तोऽसौ दानवाधमः। नहुषस्यैव हस्तेन तव मृत्युर्भविष्यति ॥ २७
अजाते त्वयि संजाता वदसे त्वं यथैव तत्। स त्वमायुसुतो वीर हृतो हुण्डेन पापिना ॥ २८
सूदेन रक्षितो दास्या प्रेषितो मम चाऽऽश्रमम्। एवं त्वं वनमध्ये च दृष्टश्चारणकिंनरैः ॥ २९
यत्तु वै स्मारितं वत्स मया तत्कथितं पुनः। जहि तं पापकर्तारं हुण्डाख्यं दानवाधमम् ॥ ३०
नेत्राभ्यां हि प्रमुञ्चन्तीमश्रूणि परिमार्जय। इतो गत्वा प्रपश्य त्वं गङ्गातीरं महाबलम् ॥ ३१
निपात्य दानवेन्द्रं त्वं कारागृहात्समानय। अशोकसुन्दरी या हि तस्या भर्ता भवस्व हि ॥ ३२
एतत्ते सर्वमाख्यातं प्रश्नस्यापि हि कारणम्। आभाष्य नहुषं विप्रो विरराम महामतिः ॥ ३३
आकर्ण्य सर्वं मुनिना नियुक्तमाश्चर्यरूपं प्रविचिन्त्य भूयः।
तस्यान्तमेकः परिकर्तुकाम आयोः सुतः कोपमथो चकार ॥ ३४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे नाहुषेऽष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८४२३

---

अथ नवाधिकशततमोऽध्यायः।

---

कुञ्जल उवाच—

प्रणिपत्य महात्मानं वसिष्ठं तपतां वरम्। अरण्यं निर्जगामाथ बाणपाणिधनुर्धरः ॥ १
एणस्य मांसं सुविपाच्य भोजितं बालस्तया रक्षित एव बुद्ध्या।
आयोः सुपुत्रः सगुणः सरूपो देवोपमो देवगुणैश्च युक्तः ॥ २

---

* एतच्चिह्नान्तर्गतः पाठः, छ. पुस्तकस्थः।

---

१ क. ख. ङ. च. छ. झ. ड. ढ. °म्बा तपोव°। २ छ. ङ. तपस्त्रिनी। ३ घ. छ. ट. ठ. ड. °ति महाबलः। दे°। ४ ट. °दत्तस्तिर्महा°। ५ क. ख. ङ. च छ. झ. ड. ढ. °रैः। त्वं तु सुश्रावितो व°। ६ क. ख. घ. ङ. च. छ. झ. ड. ढ. °रय त्वमिन्दुमतीं प्रबोधय। नि°। ७ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. विष्णुरुवाच। ८ क.ख.ङ. च. छ. झ. ड. ढ. आमन्त्र्य।

तेनैव मांसेन सुसंस्कृतेन मृष्टेन पक्केन रसानुगेन ।
तमेष दैत्यं परिभाष्य सूदो दुष्टं सुहर्षेण व्यभोजयत्तदा ॥ ३
भुञ्जे दानवो मांसं रसेनाक्तं सुचारुणा । हर्षेणापि समाविष्टो जगामाशोकसुन्दरीम् ॥ ४
तामुवाच ततस्तूर्णं कामोपहतचेतनः । आयोः पुत्रो मया भद्रे भक्षितः पतिरेव ते ॥ ५
मामेव भज चार्वङ्गि भुङ्क्ष्व भोगान्मनोनुगान् । किं करिष्यासि तेन त्वं मानुषेण गतायुषा ॥ ६
उवाच तद्वचः श्रुत्वा शिवकन्या यशस्विनी । भर्ता मे दैवतैर्दत्तो अमरो दोषवर्जितः ॥ ७
तस्य मृत्युर्न वै दृष्टो देवैरपि महात्मभिः । एवमाकर्ण्य तद्वाक्यं दानवो दुष्टचेष्टितः ॥ ८
तामुवाच विशालाक्षीं प्रहस्यैव पुनः पुनः । अद्यैव भक्षितं मांसमायुपुत्रस्य सुन्दरि ॥ ९
जातमात्रस्य बालस्य नहुषस्य दुरात्मनः । एवं त्वाकर्ण्य सा वाक्यं कोपं चक्रे सुदारुणम् ॥ १०
प्रोवाच सत्यसंस्था सा तपसा भाविता पुनः । तप एव मया तप्तं मनसा नियमेन वै ॥ ११
आयुसूनुश्चिरायुश्च स सत्येन भविष्यति । इतो गच्छ दुराचार यदि जीवितुमिच्छसि ॥ १२
अन्यथा त्वामहं शप्स्ये पुनरेव न संशयः । एवमाकर्णितं तस्याः सूदेन नृपतिं प्रति ॥ १३
परित्यज्य महाराजन्नेतामन्यां समाश्रय । सूदेन प्रेषितो दैत्यः स हुण्डो दानवाधमः ॥ १४
निर्जगाम त्वरायुक्तः स स्वां भार्यां प्रियां प्रति । चेष्टितं नैव जानाति दास्या सूदेन यत्कृतम् ॥
तस्यै निवेदितं सर्वं प्रियायै वृत्तमेव च ॥ १५

सूत उवाच—

अशोकसुन्दरी सा च महता तपसा किल ॥ १६
दुःखशोकेन संतप्ता कृशीभूता तपस्विनी । चिन्तयन्ती प्रियं कान्तं तं ध्यायति पुनः पुनः ॥ १७
किं न कुर्वन्ति वै दैत्या उपायैर्विविधैरपि । उपायज्ञाः सदा बुद्ध्या ह्युपायेनापि सर्वदा ॥ १८
वर्तन्ते दनुजश्रेष्ठा नानाभावैः सुसंपदा । यथोपायेन वेगेन हृताऽहं पापिना पुरा ॥ १९
तथा स घातितः पुत्र आयोश्चैव भविष्यति । यं दृष्ट्वा दैवयोगेन भवितारमनामयम् ॥ २०
उद्यमेनापि पश्येत किंवा नश्यति वा न वा । किंवा स उद्यमः श्रेष्ठः किंवा तत्कर्मजं फलम् ॥ २१
भाविभावः कथं नश्येत्ततो वेदः प्रतिष्ठति । विशेषो भावितो देवैः स कथं चान्यथा भवेत् ॥ २२
एवं सा तु महाभागा चिन्तयन्ती पुनः पुनः । विद्युद्धरः किंनरस्तु बृहद्वंशो महातनुः ॥ २३
एतन्मध्ये महाकायः पक्षाभ्यां हि विवर्जितः । द्विभुजो वंशहस्तश्च हारकङ्कणशोभितः ॥ २४
दिव्यगन्धानुलिप्ताङ्गो भार्यया सह चाऽऽगतः । तामुवाच निरानन्दां स सुतां शंकरस्य हि ॥ २५
किं त्वं चिन्तयसे देवि विद्धि विद्युद्धरं हि माम् । किंनरं विष्णुभक्तं त्वां प्रेषितं देवसत्तमैः ॥ २६
दुःखमेवं न कर्तव्यं भवत्या नहुषं प्रति । हुण्डेन पापचारेण वधार्थं तस्य धीमतः ॥ २७
कृतमेवाखिलं कर्म हृतश्चाऽऽयुसुतः शुभे । स तु वै रक्षितो देवैरुपायैर्विविधैरपि ॥ २८
हुण्ड एवं विजानाति आयुपुत्रो हतो मया । भक्षितस्तु विशालाक्षि इति जानाति सुव्रते ॥ २९
भवतीं श्रावयित्वा तु गतोऽसौ दानवाधमः । स्वेन पूर्वविपाकेन पुण्यस्यापि महायशाः ॥ ३०
पूर्वजन्मार्जितेनैव तव भर्ता स जीवति । पुण्यस्यापि बलेनैव येषामायुर्विनिर्मितम् ॥ ३१

---

१ ड. °दो दैवान्वगमायुसुतस्य तस्य । बु° । छ. °दो दैवानुगमायुसुतस्य राजन् । बु° । २ क ख. घ. ढ. च. छ. झ. ड. ट. कालोप° । ३ क. ख. ङ. च. छ. झ. ड. ढ. तपस्विनी । ४ क. ख. ङ. च. छ. झ. ड. ढ. हुण्डः पापचेतनः । नि° । ५ क ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. सुयमेना° ।

स्वर्जितस्य महाभागे नाशमिच्छति घातुकः । हृतमाना महापापाः परतेजोविदूषकाः ॥ ३२
तेषामथो विनाशाय प्रवृत्तं हि दिने दिने । नानाविधैरुपायैस्ते विषशस्त्रादिभिस्ततः ॥ ३३
हन्तुमिच्छन्ति तं पुण्यं पुण्यकर्माभिरक्षितम्[1] । पापिनश्चैव हुण्डाद्या मोहनस्तम्भनादिभिः ॥ ३४
पीडयन्ति दुराचारा नानाभेदैर्बलाबलैः । सुकृतस्य प्रयोगेण पूर्वजन्मार्जितेन वा ॥ ३५
पुण्यस्यापि महाभागे पुण्यवन्तं च रक्षितम् । विफलत्वं प्रयान्त्येव उपायाः पापिभिः कृताः ३६
यन्त्रतन्त्राणि मन्त्राश्च शस्त्राग्निविषबन्धनाः । रक्षयन्ति महात्मानं देवपुण्यैः सुरक्षितम् ॥ ३७
कर्तारो भस्मतां यान्ति स वै तिष्ठति पुण्यभाक् । आयुपुत्रस्य वीरस्य रक्षका देवताः शुभे ॥ ३८
पुण्यस्य संचयं सर्वं तपसां निधिमेव च । तस्माच्च रक्षितो वीरो नहुषो बलिनां वरः ॥ ३९
सत्येन तपसाऽनेनै पुण्यैश्च संयमैर्दमैः । मा कृथा दारुणं दुःखं मुञ्च शोकमकारणम् ॥ ४०
स हि जीवति धर्मात्मा मात्रा पित्रा विना वने । तपोवने वसत्येकस्तपस्विभिरलंकृतः[3] ॥ ४१
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदस्य पारगः । विराजते शशी यद्वत्स्वकलाभिः सुतेजसा ॥ ४२
तथा विराजते सोऽपि स्वकलाभिः सुमध्यमे । विद्याभिश्च महापुण्यैस्तपोभिर्विविधैस्तथा ॥ ४३
राजते परवीरघ्नो रिपुहा सुरवल्लभः । हुण्डं निहत्य दैत्येन्द्रं त्वामेवं हि प्रलप्स्यते ॥ ४४
त्वया सार्धं श्रिया चैव पृथिव्यामेकभूपतिः । भविष्यति महायोगी यथा स्वर्गे तु वासवः ॥ ४५
त्वं तस्मात्प्राप्स्यसे भद्रे सुपुत्रं वासवोपमम् । ययातिं नाम धर्मज्ञं प्रजापालनतत्परम् ॥ ४६
तथा कन्याशतं चापि रूपौदार्यगुणान्वितम् । यासां पुण्यैर्महाराज इन्द्रलोकं प्रयास्यति ॥ ४७
इन्द्रत्वं भोक्ष्यते देवि नहुषः पुण्यविक्रमः । ययातिर्नाम धर्मात्मा आत्मजस्ते भविष्यति ॥ ४८
[ *प्रजापालो महाराजः सर्वजीवदयापरः ] । तस्य पुत्रास्तु चत्वारो भविष्यन्ति महौजसः ४९
बलवीर्यगुणोपेता धनुर्वेदस्य पारगाः । प्रथमस्तु वसुर्नाम पुरुर्नाम द्वितीयकः ॥ ५०
उरुर्नाम तृतीयस्तु चतुर्थो वीर्यवान्यदुः । एवं पुत्रा महावीर्यास्तेजस्विनो महाबलाः ॥ ५१
भविष्यन्ति महात्मानः सर्वतेजःसमन्विताः । यदोश्चैव सुता धीराः सिंहतुल्यपराक्रमाः ॥ ५२
तेषां नामानि भद्रे ते शृणु मे गदतः शुभे । भोजश्च भीमकश्चापि अन्धकः कुकुरस्तथा ॥ ५३
वृष्णिर्नाम सुधर्मात्मा सत्याधारो भविष्यति । षष्ठस्तु श्रुतसेनश्च श्रुताधारश्च सप्तमः ॥ ५४
कालदंष्ट्रो महावीर्यः समरे कालजिद्बली । यदोः पुत्रा महावीर्या यादवाख्या धरातले ॥ ५५
तेषां पुत्राश्च पौत्राश्च भविष्यन्ति धरातले । एवं नहुषवंशो वै तव देवि भविष्यति ॥ ५६
दुःखमेव परित्यज्य स्थीयतामधुना सुखम् । समेष्यति महाप्राज्ञस्तव भर्ता शुभानने ॥ ५७
निहत्य दानवं हुण्डं त्वामेवं परिणेष्यति । दुःखजातानि सोष्णानि नेत्राभ्यां हि पतन्ति च ५८
अश्रूणि चेन्दुमत्याश्च संमार्जयति मानदः । आयोश्च दुःखमुत्कृत्य स्वकुलं तारयिष्यति ॥ ५९
सुखिनं पितरं कृत्वा प्रजापालो भविष्यति । एतत्ते सर्वमाख्यातं देवानां कथनं शुभे ॥
दुःखशोकं परित्यज्य सुखेन परिवर्तय ॥ ६०

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च छ. झ ट. ठ. ड. ढ. पुस्तकस्थः ।

१ क ख. ङ. च. झ. ड. ट. °मू । कौचटाभिः कुविद्याभिर्मोह° । २ ड. °न ह्युपायैः सं° । ३ क. ख. ङ. च. छ. झ. ड. ढ. °स्विपरिपालितः । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °था स हि महाप्राज्ञः कलाभिः शृणु सुन्दरि । वि° । ५ क. ख. घ. ङ. च. झ. ट. ड. ढ. °भिर्यशसा तदा । रा° । छ. °निर्यशसा सदा । रा° । ६ ङ. °सां सुतैर्म° । ७ क. ख. ङ. च. छ. झ. ढ. वरानने । ८ क. ख. ङ. च. छ. झ. ढ. सहस्रशः ।

अशोकसुन्दर्युवाच—

[*कदा होष्यति मे भर्ता विहितो दैवतैर्यदि । सत्यं वदस्व धर्मज्ञ मम सौख्यं प्रवर्धय ॥ ६१
शीघ्रं द्रक्ष्यसि भर्तारं त्वमेव शृणु सुन्दरि] । एवमुक्त्वा जगामाथ गन्धर्वो विबुधालयम् ॥ ६२
अशोकसुन्दरी चापि तपस्तेपे हि तत्र वै । कामं क्रोधं परित्यज्य लोभं चापि शिवात्मजा ॥६३

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे नाहुषे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८४८६

---

अथ दशाधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—

आमन्त्र्य च मुनीन्सर्वान्वसिष्ठं तपतां वरम् । समुत्सुको गन्तुकामो नहुषो दानवं प्रति ॥ १
ततस्ते मुनयः सर्वे वसिष्ठाद्यास्तपोधनाः । आशीर्भिरभिनन्द्यैनमायोः पुत्रं महाबलम् ॥ २
आकाशे देवताः सर्वा जघ्नुर्वै दुन्दुभीन्मुदा । पुष्पवृष्टिं प्रचक्रुश्च नहुषस्यापि मूर्धनि ॥ ३
अथ देवः सहस्राक्षः सुरैः सार्धं समागतः । ददौ शस्त्राणि चास्त्राणि [+ सूर्यतेजोपमानि च ॥४
देवेभ्यो नृपशार्दूलो जगृहे द्विजसत्तमाः । तानि दिव्यानि चास्त्राणि दिव्यरूपोपमोऽभवत्]॥ ५
अथ ते मुनयः सर्वे सहस्राक्षमथाब्रुवन् । स्यन्दनो दीयतामस्मै नहुषाय सुरेश्वर ॥ ६
मुनीनां मतमाज्ञाय वज्रपाणिः स सारथिम् । आहूय मातलिं चापि ह्यादिदेश सुराधिपः ॥ ७
एनं गच्छ महात्मानं युज्यतां स्यन्दनेन वै । सध्वजेन महात्मानं समरे नृपनन्दनम् ॥ ८
स चोवाच सहस्राक्षं करिष्ये तव शासनम् । एवमुक्त्वा जगामाऽऽशु ह्यायुपुत्रं रणोद्यतम् ॥ ९
राजानं प्रत्युवाचाथ देवराजेन भाषितम् । विजयी भव धर्मज्ञ रथेनानेन संगरे ॥ १०
इत्युवाच सहस्राक्षस्त्वामेव नृपतीश्वर । जहि त्वं दानवं संख्ये हुण्डं वै पापचेतनम् ॥ ११
एवमाकर्ण्य राजेन्द्रः सानन्दपुलकोद्गमः । प्रसादाद्देवराजस्य वसिष्ठस्य महात्मनः ॥ १२
दानवं सूदयिष्यामि समरे पापचेतसम् । देवानां च विशेषेण मम मायाप्रचारिणम् ॥ १३
एवमुक्ते शुभे वाक्ये नहुषेण महात्मना । अथाऽऽयातः स्वयं विष्णुः शङ्खचक्रगदाधरः ॥ १४
स्वचक्राच्चक्रमुत्पाद्य सूर्यबिम्बोपमं महत् । ज्वलता तेजसा दीप्तं सुवृत्तान्तं शुभावहम् ॥ १५
नहुषाय ददौ देवो हर्षेण महता किल । तस्मै शूलं ददौ शंभुः सुतीक्ष्णं तेजसाऽन्वितम् ॥ १६
तेन शूलवरेणासौ शोभते समरोद्यतः । [*द्वितीयः शंकरश्चायं त्रिपुरघ्नो यथा प्रभुः] ॥ १७
ब्रह्मास्त्रं दत्तवान्ब्रह्मा वरुणः पाशमुत्तमम् । [+ चन्द्रतेजःप्रतीकाशं जलजं नालसंगतम् ] ॥ १८
वज्रमिन्द्रस्तथा शक्तिं वायुश्चापं समार्गणम् । आग्नेयास्त्रं तथा वह्निर्ददौ तस्मै महात्मने ॥ १९

---

*एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः +एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख.घ. ङ. च. ट. ठ. ड. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. छ. झ. ट. ड. ढ. सूत । २ ग. घ. ज. ञ. ट. ठ. °कोऽभवद्धुण्डं हन्तुं वै दानवाधमम् । तं° । ३ क. ख. ङ. च. छ. झ. ढ. °पोमला: । आ° । ४ क. ख. ङ. च. छ. ढ. देवताः । ५ क. ख ङ. च. छ. झ. ट. ठ. ड. देवानां । ६ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. महाप्राज्ञं ।

शस्त्राण्यस्त्राणि सर्वाणि दिव्यानि विविधानि च । ददुर्देवा महात्मानस्तस्मै राज्ञे महौजसे ॥२०

कुञ्जल उवाच—

अथ आयुसुतो वीरो दैवतैः परिमानितः॥ २१
आशीर्भिर्नन्दितश्चापि मुनिभिस्तत्त्वदर्शिभिः । आरुरोह रथं दिव्यं भास्वरं रत्नभूषितम् ॥ २२
[*घण्टारवैः प्रणदन्तं क्षुद्रघण्टासमाकुलम्] । रथेन तेन दिव्येन शुशुभे नृपनन्दनः ॥ २३
दिवि मार्गे यथा सूर्यस्तेजसा स्वेन वै किल । [†प्रतपंस्तेजसा तद्वद्दैत्यानां मस्तकेषु सः] ॥ २४
जगाम शीघ्रं वेगेन यथा वायुः सदागतिः । [*यत्रासौ दानवः पापस्तिष्ठते स्वगणैर्युतः] ॥
तेन मातलिना सार्धं वाहकेन महात्मना ॥† २५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे नाहुषे दशाधिकशततमोऽध्यायः ॥ ११० ॥

आदितः श्लोकानां समष्ट्यङ्काः—८५११

---

अथैकादशाधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—

[*निर्गच्छमाने समरे च वीरे नहुषे हि तस्मिन्सुरराजतुल्ये ।
सकौतुका मङ्गलगीतयुक्ताः स्त्रियस्तु सर्वाः परिजग्मुरत्र ॥ १
देवतानां वरा नार्यो रम्भाद्यप्सरसस्तदा । किंनर्यः कौतुकोत्सुक्यो जगुः स्वरेण सत्तम] ॥ २
गन्धर्वाणां तथा नार्यो रूपालंकारसंयुताः । कौतुकेन गतास्तत्र यत्र राजा स तिष्ठति ॥ ३
पुरं महोदयं नाम हुण्डस्यापि दुरात्मनः । नन्दनोपवनै[+ दिव्यैः सर्वत्र समलंकृतम् ॥ ४
सप्तकक्षायुतैर्गेहैः कलशैरुपशोभितैः । सोपानकैर्महादण्डैः शोभमानं पुरोत्तमम् ॥ ५
कैलासशिखराकारैः सोन्नतैर्दिवमाश्रितैः । सर्वश्रियाऽन्वितै]र्दिव्यैर्भ्राजमानं गृहोत्तमैः ॥ ६
वनैश्चोपवनैर्दिव्यैस्तडागैः सागरोपमैः । जलपूर्णैः सुशोभैस्तु पद्मै रक्तोत्पलान्वितैः ॥ ७
महारत्नप्रकाशैश्च ह्यट्टालकशतैरपि । परिखाभिः सुपूर्णाभिर्जलशब्दैः सुशोभितम् ॥ ८
अन्यैश्चैव महारत्नैर्गजैश्चैव विराजितम् । सुनारीभिः समाकीर्णं पुरुषैश्च महाप्रभैः ॥ ९
नानाप्रभावैर्दिव्यैश्च शोभमानं महोदयम् । राजश्रेष्ठो महावीरो नहुषो ददृशे पुरम् ॥ १०
पुरप्रान्ते वनं दिव्यं दिव्यवृक्षैरलंकृतम् । तद्विवेश महावीरो नन्दनं हि यथाऽमरः ॥ ११
रथेन सह धर्मात्मा तेन मातलिना सह । प्रविष्टः स तु राजेन्द्रो वनमध्ये सरित्तटे ॥ १२
तत्र ता रूपसंयुक्ता दिव्या नार्यः समागताः । गन्धर्वा गीततत्त्वज्ञा जगुर्गीतैर्नृपोत्तमम् ॥
सूताश्च मागधाः सर्वे तं स्तुवन्ति नरोत्तमम् । शुश्राव गीतं मधुरं नहुषः किंनरेरितम् ॥ १३

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थकथने नाहुष एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८५२४

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो घ. छ. ट. ठ. पुस्तकस्थः । † एतस्मात्प्राक् 'निर्गच्छमानं मुनिदेववृन्दैर्दृष्टं नृपेन्द्रं बलवीर्यकोविदम् । इन्द्रोपमं विष्णुसमं सुसंख्ये वधाय हुण्डस्य समुत्सुकं तम्' । इत्यधिकं क. ख. घ. छ. च. छ. ट. ठ. ड. ढ. पुस्तकेषु । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

---

१ घ. ट. ठ. ड. सूत ।

अथ द्वादशाधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—

तदेव गानं च सुराङ्गनाभिर्गीतं समाकर्ण्य च गीतकैर्ध्रुवैः ।
समाकुला चापि बभूव तत्र सा शंभुपुत्री परिचिन्तयाना ॥ १
आसनात्तूर्णमुत्थाय महोत्साहेन संयुता । तूर्णं गता वरारोहा तपोबलसमन्विता ॥ २
तं दृष्ट्वा देवसंकाशं दिव्यलक्षणसंयुतम् । दिव्यगन्धानुलिप्ताङ्गं दिव्यमालाभिशोभितम् ॥ ३
दिव्यैराभरणैर्वस्त्रैः शुशुभे नृपनन्दनः । [*दीप्तिमांश्च यथा सूर्यो दिव्यलक्षणसंयुतः ॥ ४
किंवा देवो महाप्राज्ञो गन्धर्वो वा भविष्यति । किंवा नागसुतः सोऽयं किंवा विद्याधरो भवेत् ॥ ५
देवेषु नैव पश्यामि कुतो यक्षेषु जायते । अनया लीलया देवः सहस्राक्षोऽपि जायते ॥ ६
शंभुरेव भवेत्किंवा किंवा चायं मनोभवः । किंवा पितुः सखा मे स्यात्पौलस्त्योऽयं धनाधिपः] ॥
एवं समालोकयन्ती बलरूपगुणान्वितम् । समेत्य तं सखीभिस्तु रम्भाद्याभिः स्थिताऽभवत् ॥ ८

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८५३२

---

अथ त्रयोदशाधिकशततमोऽध्यायः ।

---

रम्भोवाच—

तप एतत्परित्यज्य किमालोकयसे शुभे । मनः संरक्ष वै साध्वि पुरुषस्य विचिन्तनात् ॥ १

अशोकसुन्दर्युवाच—

मनस्तपसि लीनं मे नहुषस्यापि काम्यया । न वै चालयितुं शक्यं देवैरपि सहेश्वरैः ॥ २
एनं दृष्ट्वा महाभागे मनो मे चलते भृशम् । रन्तुमिच्छाम्यहं गत्वा एवमुत्कण्ठतां गतम् ॥ ३
एवं विपर्ययश्चाऽऽसीन्मनसो मे वरानने । तन्मे त्वं कारणं ब्रूहि तवास्ति ज्ञानमुत्तमम् ॥ ४
आयोः पुत्रस्य भार्याऽहं देवैः सृष्टा महात्मनः । कस्मान्मे धावते चेत उत्सुकं रन्तुमेव च ॥ ५

रम्भोवाच—

सर्वेष्वेवं महाभागे देहरूपेषु भामिनि । वसत्यात्मा स्वयं ब्रह्म ज्ञानरूपः सनातनः ॥ ६
यद्यपि प्रकृतेर्भावैरिन्द्रियैरपकारिभिः । मोहपाशशतैर्बद्धस्तथा सिद्धस्तु सर्वदा ॥ ७
प्रकृतिर्नैव जानाति तां वै वैज्ञानिकीं कलाम् । अयं शुद्धस्तु धर्मज्ञ आत्मा वेत्ति च सुन्दरि ॥ ८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ घ. छ. ट. ठ. ड. °नाभिः स्तोत्रं सुपुण्यं परिचारणेरितम् । तमेव गायन्ति सुगीतकैस्तु शंभोस्तु पुत्री । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °व्यरूपसमप्रभम् । ३ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °माचिन्तयतीव यावत्स-विस्तरं रूपगुणान्विता सा । समेत्य रम्भा सुमहासखीभिरुवाच तां शम्भुसुतां प्रहस्य ॥८॥ ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °भे । तपसः क्षरणं स्याद्वै पु° । ५ ड. महाभागं । ६ ड. शुभे । ७ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °हि यद्यस्ति । ८ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. महात्माभिः । ९ क. ख. घ. ङ. च छ. झ. ट. ठ. ड. ढ. °व हि सत्त्वेषु घटरू° । १० ग. ज. ञ. ट. °नि । वासनात्मा स्वयं ब्रह्माज्ञानरूपस्य चाऽऽत्मनः ।

गच्छत्यपि मनस्तात एनं दृष्ट्वा महामतिम् । पापमेवं परित्यज्य सत्यमेव प्रधावति ॥ ९
भर्ताऽयमायुपुत्रस्ते तत्सत्यं च न संशयः । अन्यं दृष्ट्वा विशङ्केत पुरुषं पापलक्षणम् ॥ १०
[*एवं विधिः कृतो देवैः सत्यपाशेन बन्धितः । अस्यास्तु ह्यायुपुत्रोऽपि भर्तृत्वमुपयास्यति॥११
एवमाकर्णितं भद्रे ह्यात्मानं चापि सुन्दरि ] । तद्ध्रुवं सत्यसंपन्नो विज्ञानात्मा स्वयं स्थितः १२
अन्यं भावं न जानाति ह्यायुपुत्रं च विन्दति । प्रकृतिर्नैव ते देवि ह्येनं जानाति चाऽऽगतम् १३
एवं ज्ञात्वा प्रधानात्मा तवाद्यैव प्रधावति । आत्मा सर्वं प्रजानाति आत्मा देवः सनातनः॥ १४
स्वयमेव नरेन्द्रोऽयं नहुषो नाम वीर्यवान् । तस्माद्गच्छति चेतस्ते सत्यबन्धं विशिष्यते ॥ १५
आयोः सुतं परिज्ञाय अन्यं चैव न गच्छति । एतत्ते सर्वमाख्यातं शाश्वतं त्वन्मनोगतम् ॥ १६
हुण्डं हत्वा महाघोरं समरे दानवाधमम् । त्वां नयिष्यति स्वस्थानमायोश्च गृहमुत्तमम् ॥ १७
हृतो दैत्येन वीरेन्द्रो निजपुण्येन शेषितः । [†बाल्यात्प्रभृति वीरेन्द्रो वियुक्तः स्वजनेन वै ] १८
पितृमातृविहीनस्तु गतो वृद्धिं महावने । यास्यत्येव पितुर्गेहं त्वयैव सह सांप्रतम् ॥ १९
एवमाभाषितं श्रुत्वा रम्भायाः शिवनन्दिनी । हर्षेण महताऽऽविष्टा तामुवाच तपस्विनी ॥ २०
अयमेव स धर्मात्मा मम भर्ता सुवीर्यवान् । मनो मे धावते सत्यं कामाकुलितविह्वलम् ॥ २१
नास्ति चित्तसमो देवो यो जानाति सुनिश्चितम् । सत्यमेतन्मया दृष्टं सुचित्रं चारुहासिनि॥ २२
मनोभवसमानं तु पुरुषं दिव्यलक्षणम् । न(प्र)धावत्यतिभावेन एनं दृष्ट्वा यथा सखि ॥ २३
तथा न धावते भद्रे पुंसमन्यं न मन्यते । एवं गन्तव्यमावाभ्यां सखीभिर्गृहमेव हि ॥ २४
एवमाभाष्य सा रम्भां गमनायोपचक्रमे । गमनायोत्सुकां ज्ञात्वा नहुषस्यान्तिकं प्रति ॥
तामुवाच ततो रम्भा कस्माद्देवि न गम्यते ॥ २५

सूत उवाच—

सख्या च रम्भया सार्धं नहुषं वीरलक्षणम् । तस्यान्तिकं तु संप्राप्य प्रेषयामास तां सखीम्२६
एनं गच्छ महाभागे नहुषं देवरूपिणम् । कथयस्व कथामेतां तवार्थ आगता यतः ॥ २७
एवं सखि करिष्यामि सुप्रियं तव सुव्रते । एवमुक्त्वा गता रम्भा नहुषं राजनन्दनम् ॥ २८
चापबाणधरं वीरं द्वितीयमिव वासवम् । प्रत्युवाच गता रम्भा सख्या वचनमुत्तमम् ॥ २९
आयुपुत्र महाभाग रम्भाऽहं समुपागता । शिवस्य कन्यया वीर तपस्यन्त्या प्रयोजिता ॥ ३०
त्वदर्थं देवदेवेन उमया दिव्यया पुरा । भार्यारत्नं वने सृष्टं श्रेष्ठं लोकेषु दुर्लभम् ॥ ३१
दुष्प्राप्यं च नरश्रेष्ठैर्देवैः सेन्द्रैस्तपोधनैः । गन्धर्वैः पन्नगैः सिद्धैश्चारणैः पुण्यलक्षणैः ॥ ३२
स्वयमेव समायातं तवार्थे शृणु सांप्रतम् । स्त्रीरत्नं च महाप्राज्ञ प्रकृष्टं पुण्यनिर्मितम् ॥ ३३
अशोकसुन्दरी नाम तवार्थं तपसि स्थिता । अत्यर्थं तु तपस्तप्तं भवन्तमिच्छते सदा ॥ ३४
एवं ज्ञात्वा महाप्राज्ञ भजमानां भजस्व हि । त्वदृते सा वरारोहा पुरुषं नैव याचते ॥ ३५
नहुषेण तयोक्तं तु श्रुत्वा तथाऽवधारितम् । प्रत्युत्तरं ददौ चाथ रम्भे मे श्रूयतां वचः ॥ ३६
[*तत्तु सर्वं विजानामि यत्त्वयोक्तं ममाग्रतः । ममाग्रे कथितं पूर्वं वसिष्ठेन महात्मना ॥ ३७

* एतच्चिह्नान्तर्गतः पाठो घ. ट. ठ. ड. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः ।

१ क. ख. ग. तद्भावस॰ । २ ङ. एनं । ३ घ. ट. ठ. ड. समुद्रजाम् । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ढ. ॰तेऽत्यर्थं का॰ । ५ ग. घ. ज. ञ. ट. ठ. विस्तरं । ६ ट. कुशल । ७ घ. च. झ. ट. ठ. ड. ॰पतृणध॰ ।

सर्वमेव विजानामि यस्यास्तु तप उत्तमम् । ] श्रूयतां वचनं रम्भे येन सौख्यं भविष्यति ॥ ३८
अहत्वा दानवं हुण्डं न गच्छामि वरानने । सर्वमेतत्सुवृत्तान्तमहं जानामि चैव हि ॥ ३९
ममार्थे तव संभूतिस्तप आचरितं त्वया । मम भार्या न संदेहो भवती विधिना कृता ॥ ४०
ममार्थे निश्चयं कृत्वा तप आचरितं त्वया । हृता तस्मादुपायेन भवती नियमस्थिता ॥ ४१
सूतिगृहादहं तेन दानवेनाधमेन च । बालभावस्थितो देवि पितृमातृविनाकृतः ॥ ४२
तस्मात्तं तु हनिष्यामि [*हुण्डं तं दानवाधमम् । पश्चात्त्वामुपनेष्येऽहं ] वसिष्ठस्याऽऽश्रमं प्रति॥
एवं कथय भद्रं ते रम्भे मत्प्रियकारिणीम् । एवं विसर्जिता तेन सत्वरं सा गता पुनः ॥ ४४
अशोकसुन्दरीं देवीं कथयामास तस्य च । समासेन तथा सर्वं रम्भा सा द्विजसत्तम ॥ ४५
अशोकसुन्दरी बाला ह्यवधार्य सुभाषितम् । नहुषस्यापि वीरस्य हर्षेण च समन्विता ॥ ४६
तस्थौ तत्र तया सार्धं स्वसख्या रम्भया तदा । भर्तुश्च कीदृशं वीर्यमिति पश्याम्यहं स्थिता ४७

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे नाहुषे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८५७९

अथ चतुर्दशाधिकशततमोऽध्यायः ।

कुञ्जल उवाच—

अथ ते दानवाः सर्वे हुण्डस्य परिचारकाः । नहुषस्यापि संवादं रम्भायाः शुश्रुवुस्तदा ॥ १
आचचक्षुश्च ते हुण्डं दैत्येन्द्रं सर्वमेव तत् । तमाकर्ण्य स चुक्रोध दूतं वाक्यमथाब्रवीत् ॥ २
गच्छ दूत ममाऽऽदेशात्त्वमेवं तं समाचर । संभाषते तया सार्धं पुरुषः शिवकन्यया ॥ ३
स्वामिनिर्देशमाकर्ण्य जगाम लघु दानवः । विविक्ते नहुषं वीरमिदं वचनमब्रवीत् ॥ ४
[+रथेन साश्वसूतेन दिव्येन परितिष्ठसि । धनुषा दिव्यबाणैस्तु सभायां हि भयंकरः ॥ ५
कस्य केन सुकार्येण प्रेषितः केन वै भवान् । ] अनया रम्भया तेऽद्याप्यनया शिवकन्यया ॥६
किमुक्तं तत्स्फुटं सर्वं कथयस्व ममाग्रतः । हुण्डस्य देवमर्दस्य न बिभेति भवान्कथम् ॥ ७
एतन्मे सर्वमाचक्ष्व यदि जीवितुमिच्छसि । सद्यो गच्छात्र मा तिष्ठ दुःसहो दानवाधिपः ॥ ८

नहुष उवाच—

योऽसावायुर्बली राजा सप्तद्वीपाधिपः प्रभुः । तस्य मां तनयं विद्धि सर्वदैत्यविनाशनम् ॥
नहुषं नाम विख्यातं देवब्राह्मणपूजकम् ॥ ९
हुण्डेनापहृतं बाल्ये स्वामिना तव मानद । सेयं कन्या शिवस्यापि दैत्येनापहृता पुरा ॥ १०
घोरं तपश्चरत्येषा हुण्डस्यापि वधाय च । योऽहमादौ हृतो बालस्त्वयाऽऽयोः सूतिकागृहात् ११
दास्या अपि करे दत्तः सूदस्यापि दुरात्मना । वधार्थं श्रूयतां पाप सोऽहमद्य समागतः ॥ १२

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ पापं । २ छ. वराङ्गनाम् । ३ क. ख. घ. ङ. च. च. छ. झ.ढ. °स्मात्सुपापेन । ४ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. सूत । ५ क. ख. घ. ङ. च. छ. झ ट. ठ. ड. ढ. पापाः । ६ क. ख. ङ. च. छ. झ. ढ. °ध विशठं वा° । ७ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. वीर । ८ छ. °शाज्जानीहि पुरुषं हि तम् । सं° । ९ ढ. तत्र । १० क. ख. ङ. छ. झ. ढ. विशठो । ड. विसृष्टो ।

अस्यापि हुण्डदैत्यस्य दुष्टस्य पापकर्मणः । अन्यांश्च दानवान्घोरान्नयिष्ये यमसादनम् ॥ १३
मामेवं विद्धि पापिष्ठ एवं कथय दानवम् । एवमाकर्ण्य तत्सर्वं नहुषस्य महात्मनः ॥ १४
गत्वा हुण्डं स दुष्टात्मा आचचक्षेऽस्य भाषितम् । निशम्य तन्मुखात्पूर्णं चुक्रोध दितिजेश्वरः १५
कस्मात्सूदेन पापेन तया दास्या न घातितः । यतोऽयं वृद्धिमायातो मया व्याधिरुपेक्षितः १६
अद्यैनं घातयिष्यामि त्वनया शिवकन्यया । आयोः पुत्रं खलं युद्धे बाणैरेभिः शिलाशितैः ॥ १७
एवमुक्त्वा विचिन्त्यैव सारथिं वाक्यमब्रवीत् । योजय स्यन्दनं त्वं मे वाजिभिः साधुभिः शुभैः ॥ १८
सेनाध्यक्षं समाहूय इत्युवाच रुषाऽन्वितः । सज्यतां मम सैन्यं त्वं शूराम्नागान्प्रकल्पय ॥ १९
सारोहैस्तुरगान्योज पताकाध्वजचामरैः । चतुरङ्गं बलं मेऽद्य योजयस्व हि सत्वरम् ॥ २०
एवमाकर्ण्य तत्तस्य हुण्डस्यापि मतं लघु । सेनाध्यक्षो महाप्राज्ञः सर्वं चक्रे यथाविधि ॥ २१
चतुरङ्गेण तेनासौ बलेन महताऽऽवृतः । जगाम नहुषं वीरं[3] चापबाणधरं रणे ॥ २२
इन्द्रस्य स्यन्दने युक्तं सर्वशस्त्रभृतां वरम् । उद्यतं समरे वीरं दुरापं देवदानवैः ॥ २३
पश्यन्ति गगने देवा विमानस्था महौजसः । तेजोज्वालासमाकीर्णं दिविस्थमिव भास्करम् ॥ २४

सूत उवाच—

अथ ते दानवाः सर्वे ववृषुस्तं शरोत्तमैः । खड्गैः पाशैर्महाशूलैः शक्तिभिश्च परश्वधैः ॥ २५
युयुधुः संयुगे तेन नहुषेण महात्मना । संरम्भाद्गर्जमानास्ते यथा मेघा गिरौ तथा ॥ २६
तद्विक्रमं समालोक्य आयुपुत्रः प्रतापवान् । इन्द्रायुधसमं चापं विस्फार्य सगुणस्वरम् ॥ २७
वज्रस्फोटसमः शब्दः चापस्यापि महात्मना । नहुषेण कृतो विप्रा दानवानां भयप्रदः ॥ २८
महता तेन शब्देन दानवाश्च चकम्पिरे । कम्पनाविष्टहृदया भग्नसत्त्वा महाहवे ॥ २९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे च्यवनोपाख्याने नाहुषे चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८६०८

---

अथ पञ्चदशाधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—

ततस्त्वसौ संयति राजमानः समुद्यतश्चापधरो महात्मा ॥
[+ यथैव कालः कुपितः स लोकान्संहर्तुमैच्छत्तु तथा स दानवान् ॥ १
महास्त्रजालै रवितेजतुल्यैः सुदीप्तिमद्भिर्निजघान तेजसा ॥
वायुर्यथोन्मूलयतीह पादपांस्तथैव राजा निजघान दानवान् ॥ ] २
वायुर्यथा मेघचयं च दिव्यं संचालयेत्स्वेन बलेन तेजसा ॥
तथा स राजा ह्यसुरान्समस्तान्संनाशयेद्बाणवरैः सुतीक्ष्णैः ॥ ३
न शेकुर्दानवाः सर्वे बाणवर्षं महात्मनः । मृताः केचिद्द्रुताः केचिन्नष्टाः केचिन्महाहवात् ॥ ४

---

+ एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः ।

---

१ ङ. °क्त्वा स दैत्येन्द्रः सा° । २ क. ख. ङ. च. छ. झ. ढ. समातुरः । ३ क. ख. ङ. च. छ. झ. ढ. धीरं । ४ छ. °घा इवाम्बरे । त° । ५ क. ख. घ. ङ. च. छ, झ. ठ. ड. ढ. कश्मलावि° । ६ क. ख. ङ. च. छ. झ. ड. ढ. °रान्मदोत्कटान्संना° ।

महातेजं महाप्राज्ञं महादानवशासनम् । स चुक्रोध सुदुष्टात्मा दृष्ट्वा तं नृपनन्दनम् ॥ ५
स्थितो गत्वेदमाभाष्य तिष्ठ तिष्ठेति चाऽऽह्वे । त्वामद्यैव नयिष्यामि आयुपुत्र यमान्तिके ॥ ६
नहुष उवाच—
स्थितोऽस्मि समरे पश्य त्वामहं हन्तुमागतः । अहत्वा नैव यास्यामि भवन्तं पापचेतनम् ॥ ७
इत्युक्त्वा धनुरादाय बाणानग्निशिखोपमान् । छत्रेण ध्रियमाणेन शुशुभे सोऽपि संगरे ॥ ८
इन्द्रस्य सारथिं दिव्यं मातलिं वाक्यमब्रवीत् । वाहयस्व रथं मेऽद्य हुण्डदैत्यस्य संमुखे ॥ ९
इत्युक्तस्तेन वीरेण मातलिर्लघुविक्रमः । तुरगांश्चोदयामास महावातरयोपमान् ॥ १०
उत्पेतुश्च ततो वाहा हंसा इव सरोजले । छत्रेण चेन्दुवर्णेन स रथेन पताकिना ॥ ११
नभस्तलं समासाद्य यथा सूर्यो विराजते । आयुपुत्रस्तथा संख्ये तेजसा विक्रमेण च ॥ १२
अथ हुण्डो रथस्थोऽपि भ्राजमानः स्वतेजसा । सर्वायुधास्त्रसंयुक्तस्तद्वत्सोऽप्यम्बरे स्थितः॥१३
उभयोर्वीरयोर्युद्धं देवविस्मयकारकम् । आसीत्तदा महाप्राज्ञ दारुणं भीतिदायकम् ॥ १४
सुबाणैर्निशितैस्तीक्ष्णैः कङ्कपत्रैः शिलीमुखैः । हुण्डेन ताडितो राजा स बाह्वोरन्तरे तदा ॥ १५
सुभाले पञ्चभिर्बाणैर्विद्धः क्रुद्धोऽभवत्तदा । [*स विद्धस्तु महाबाणैरधिकं शुशुभे नृपः ॥ १६
सारुणः करमालाभिरुदयंश्च दिवाकरः । रुधिरेण सुदिग्धाङ्गो हेमबाणैस्तनुस्थितैः ॥ १७
सूर्यवच्छोभते राजा पूर्ववन्नभसि स्थितः] । दृष्ट्वा तु पौरुषं तस्य दानवं वाक्यमब्रवीत् ॥ १८
तिष्ठ तिष्ठ क्षणं दैत्य पश्य मे लाघवं पुनः । इत्युक्त्वा चरणे दैत्यं जघान दशभिः शरैः ॥ १९
मुखे बाणैर्हतस्तेन मूर्छितो निपपात ह । पश्यमानैः सुरैः सर्वै रथोपरि महाबलः ॥ २०
देवैश्च चारणैः सिद्धैः कृतः शब्दः सुहर्षजः । जय जयेति राजेन्द्र शङ्खान्दध्मुः पुनः पुनः ॥ २१
स कोलाहलशब्दस्तु तुमुलो देवतेरितः । कर्णरन्ध्रं समाविष्टो हुण्डस्य मूर्छितस्य च ॥ २२
श्रुत्वा स धनुरादाय बाणमाशीविषोपमम् । स्थीयतां स्थीयतां युद्धे न मृतोऽस्मि त्वया हतः॥२३
इत्युक्त्वा पुनरुत्थाय लाघवेन समन्वितः । एकविंशतिभिर्बाणैर्नहुषं चाहनत्पुनः ॥ २४
एकेन मुष्टिमध्ये तु बहुभिर्जानुमध्यतः । चतुर्भिश्च महाश्वांश्च च्छत्रमेकेन चैव च ॥ २५
पञ्चभिर्मातलिं विद्ध्वा रथनीडं तु सप्तभिः । [† ध्वजदण्डं त्रिभिस्तीक्ष्णैर्दानवः शिखिभिस्त्रिभिः ]॥ २६
आदानं दानवेन्द्रस्य शरमोक्षं दुरात्मनः । लाघवं तस्य वै दृष्ट्वा देवास्ते विस्मयं गताः ॥ २७
तस्य पौरुषमापश्य स राजा दानवेश्वरम् । धीरोऽसि कृतविद्योऽसि शूरोऽसि रणपण्डितः॥२८
इत्युक्त्वा दानवं तं तु धनुर्विस्फार्य भूपतिः । मार्गणैर्दशभिस्तं तु विव्याध लघुविक्रमः ॥ २९
त्रिभिर्ध्वजं प्रचिच्छेद स पपात धरातले । तुरगान्पातयामास चतुर्भिस्तस्य सायकैः ॥ ३०
एकेन च्छत्रं तस्यापि चकर्त लघुविक्रमः । दशभिः सारथिस्तस्य प्रेषितो यममन्दिरम् ॥ ३१
दंशनं दशभिश्छित्वा शरैश्च विदलीकृतः । सर्वाङ्गेषु च त्रिंशद्भिर्विव्याध दनुजेश्वरम् ॥ ३२
हताश्वो विरथो जातो बाणपाणिर्धनुर्धरः । अभ्यधावत्स वेगेन वर्षयान्निशितैः शरैः ॥ ३३
खड्गचर्मधरो दैत्यो राजानं तमधावत । धावमानस्य हुण्डस्य खड्गं चिच्छेद भूपतिः ॥ ३४

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतःपाठो ङ. पुस्तकस्थः ।

१ क. ख. म. °व यथाम्बरे । छ° । २ ङ. °द्वत्स चाऽऽह्वे स्थि° । ३ ङ. ढ. ठ. सुबाणैः पञ्चभिर्विद्धो नहुषोऽपि पुनस्तदा । ४ छ. झ. °खे भाले हत° । ५ ङ. °तां दृष्ट वै यु° । ६ घ. ट. ठ. ढ. °र्णैर्निशितैस्तं ।

क्षुरप्रैर्निशितैर्बाणैश्चर्म चिच्छेद भूपतिः । अथ हुण्डः सुदुष्टात्मा समालोक्य समन्ततः ॥ ३५
जग्राह मुद्गरं तूर्णं मुमोच लघुविक्रमः । वज्रवेगं समायान्तं ददृशे नृपतिस्तदा ॥ ३६
मुद्गरं स्वनवन्तं चापातयदम्बराच्चतः । [*दशाभिर्निशितैर्बाणैः क्षुरप्रैश्च स्वविक्रमात् ] ॥ ३७
मुद्गरं पतितं दृष्ट्वा दशखण्डमयं भुवि । गदामुद्यम्य वेगेन राजानं समधावत ॥ ३८
खड्गेन तीक्ष्णधारेण तस्य बाहुं प्रचिच्छिदे । सगदं पतितं भूमौ साङ्गदं कटकान्वितम् ॥ ३९
महाशब्दं ततः कृत्वा वज्रस्फोटमयं स तु । रुधिरेण विदिग्धाङ्गो धावमानो महाहवे ॥ ४०
क्रोधेन महताऽऽविष्टो ग्रस्तुमिच्छति भूपतिम् । दुर्निवार्यः समायातः पार्श्वे तस्य च भूपतेः ॥४१
नहुषेण महाशक्त्या ताडितो हृदि दानवः । पतितः सहसा भूमौ वज्राहत इवाचलः ॥ ४२
तस्मिन्दैत्ये गते भूमावितरे दानवा गताः । विविशुर्गिरिदुर्गेषु कति पातालमास्थिताः ॥ ४३
देवाः प्रहर्षं जग्मुस्ते गन्धर्वाः सिद्धचारणाः । हते तस्मिन्महापापे नहुषेण महात्मना ॥ ४४
तस्मिन्हते दैत्यवरे महाहवे देवाश्च सर्वे प्रमुदं च लेभिरे ।
तां देवरूपां तपसा विवर्धितां स आयुपुत्रः प्रतिलभ्य हर्षितः ॥ ४५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे च्यवनोपाख्याने नाहुषे पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८६५३

---

अथ षोडशाधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—

अशोकसुन्दरी पुण्या रम्भया सह हर्षिता । नहुषं प्राप्य विक्रान्तं तमुवाच तपस्विनी ॥ १
अहं ते धर्मतः पत्नी देवैर्दिष्टा तपस्विनी । उद्वाहयस्व मां वीर पतिधर्ममिहेच्छतीम् ॥ २
सदैव चिन्तमाना च त्वामहं तप आस्थिता । भवान्धर्मप्रसादेन मया प्राप्तो नृपोत्तम ॥ ३

नहुष उवाच—

मदर्थे नियता भद्रे यदि त्वं तप आस्थिता । गुरोर्वाक्यान्मुहूर्तेन तव भर्ता भवाम्यहम् ॥ ४
अनया रम्भया सार्धमावां गच्छाव भामिनि । समारोप्य रथे तां तु रम्भां च सुमनोहराम् ॥ ५
तेनैव रथमुख्येन वसिष्ठस्याऽऽश्रमं प्रति । जगाम लघुवेगेन ताभ्यां सह महाशयाः ॥ ६
तमाश्रमगतं विप्रं समालोक्य प्रणम्य च । तया सार्धं महातेजा हर्षेण महताऽन्वितः ॥ ७
यथा च युद्धं संजातं निहतो दानवो यथा । निवेदयामास सर्वं वसिष्ठाय महात्मने ॥ ८
वसिष्ठोऽपि समाकर्ण्य नहुषस्य विचेष्टितम् । हर्षेण महताऽऽविष्ट आशीर्भिरभिनन्द्य तम् ॥ ९
तिथौ लग्ने शुभे प्राप्ते तयोस्तु मुनिपुंगवः । विवाहं कारयामास अग्निब्राह्मणसंनिधौ ॥ १०
आशीर्भिरभिनन्द्यैवं मिथुनं प्रेषितं पुनः । मातरं पितरं पश्य द्रुतं गत्वा महामते ॥ ११
त्वां च दृष्ट्वा हि ते माता पिताऽसौ चापि सुव्रतः । हर्षेण वृद्धिमाप्नोतु पर्वणीव तु सागरः॥ १२
एवं संप्रेषितो वीरो मुनिना ब्रह्मसूनुना । तेनैव रथवर्येण जगाम लघुविक्रमः ॥ १३

---

* एतच्चिह्नान्तर्गतः पाठो घ. ट. ठ. ड. पुस्तकस्थः ।

---

१ ङ. °रं स्वेन बाणेन चिच्छेद नृपतिस्तदा । द° । २ ङ. पातयामास मुद्गरम् । ३ ङ. °त । राजा परशुना तस्य बाहुं चिच्छेद पर्वतः । प्र° ।

नमस्कृत्य द्विजेन्द्रं तं गतो मातलिना तदा । [*स्वपुरं पितरं द्रष्टुं तां च मातां यशस्विनीम्॥१४
सूत उवाच]—
अप्सरा मेनका नाम प्रेषिता दैवतैस्ततः । आयोर्भार्या सुदुःखेन पतिता शोकसागरे ॥ १५
तामुवाच महाभागां देवीमिन्दुमतीं प्रति । मुञ्च शोकं महाभागे तनयं पश्य संमुखम् ॥ १६
निहत्य दानवं पापं तव पुत्रापहारकम् । समायान्तं सभार्यां च वीरश्रिया समन्वितम् ॥ १७
सुवृत्तं संगरे तत्र नहुषेण यथा कृतम् । तस्यै निवेदयामास इन्दुमत्यै च मेनका ॥ १८
मेनकाया वचः श्रुत्वा हर्षेणाऽऽकुलितेक्षणा । सखि सत्यं ब्रवीषि त्वमित्युवाच सगद्गदम् ॥१९
साम्रृतं सुप्रियं वाक्यं मनःप्रोत्साहकारकम् । जीवादिकं मया देयं त्वयि सर्वस्वमेव च ॥ २०
एवमाभाष्य तां देवी राजानमिदमब्रवीत् । तव पुत्रो महाबाहुः समायातो हि सांप्रतम् ॥ २१
आख्याति च महाभाग एषा चैव वराप्सरा । भर्तारमेवमाभाष्य विरराम प्रहर्षिता ॥ २२
समाकर्ण्य नृपेन्द्रस्तु तामुवाच प्रियां सतीम् । पुरा प्रोक्तं महाभागे मुनिना नारदेन हि ॥ २३
पुत्रं प्रति न कर्तव्यं दुःखं राजन्कदाचन । तं निहत्य स्ववीर्येण दानवं चैष्यते पुनः ॥ २४
संजातं सत्यमेवं हि मुनिना भाषितं पुरा । अन्यथा वचनं तस्य कथं देवि भविष्यति ॥ २५
दत्तात्रेयो मुनिश्रेष्ठः साक्षाद्देवो जनार्दनः । शुश्रूषितो मया देवि त्वया च तपसा पुरा ॥ २६
पुत्ररत्नं तेन दत्तं विष्णुतेजःसमन्वितम् । सदा हनिष्यति परं दानवं पापचेतनम् ॥ २७
सर्वदैत्यप्रहर्ता च प्रजापालो महाबलः । दत्तात्रेयेण मे दत्तो वैष्णवांशः सुतोत्तमः ॥ २८
एवं संभाष्य तां देवीं राजा चेन्दुमतीं तदा । महोत्सवं ततश्चक्रे पुत्रस्याऽऽगमनं प्रति ॥ २९
हर्षेण महताऽऽविष्टो विष्णुं सस्मार वै पुनः ॥ ३०

अर्चोपपन्नं सुरसंघयुक्तमानन्दरूपं परमार्थमेकम् ।
क्लेशापहं सौख्यप्रदं नराणां सद्वैष्णवानामिह मोक्षदं परम् ॥ ३१

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८६८४

---

अथ सप्तदशाधिकशततमोऽध्यायः ।

---

कुञ्जल उवाच—
नहुषः प्रियया सार्धं तया चैवापि रम्भया । ऐन्द्रेणापि सुदिव्येन स्यन्दनेन वरेण च ॥ १
नागाह्वयं पुरं प्राप्तः सर्वशोभासमन्वितम् । दिव्यमण्डपयुक्तं च भवनैरुपशोभितम् ॥ २
हेमतोरणगेहैश्च पताकाभिरलंकृतम् । नानावादित्रसंघोषैर्बन्दिचारणशोभितम् ॥ ३
देवरूपोपमैः पुण्यैः पुरुषैः समलंकृतम् । नारीभिर्दिव्यरूपाभिर्गजाश्वैः स्यन्दनैस्तथा ॥ ४
नानामङ्गलशब्दैश्च वेदध्वनिसमाकुलम् । गीतवादित्रशब्दैश्च वीणावेणुस्वनैस्तथा ॥ ५

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ट. ढ. पुस्तकस्थः ।

---

१ च. ट. ठ. ड. °स्यै महामतिः । मे° । २ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ °मङ्गल्यु° । ३ ढ. °भसंघैश्च ।

सर्वशोभासमाकीर्णं विवेश स पुरोत्तमम् । वेदमङ्गलघोषैश्च ब्राह्मणैरभिपूजितः ॥ ६
ददर्श पितरं वीरो मातरं तां सुपुण्यकाम् । हर्षेण महताऽऽविष्टः पितुः पादौ ननाम सः ॥ ७
अशोकसुन्दरी सा तु तयोः पादौ पुनः पुनः । ननाम भक्त्या भावेन चोभयोः सा वरानना ८
रम्भा च सा ननामाप्यदर्शयत्प्रीतिमुत्तमाम् । [*नमस्कृत्वा समाभाष्य स्वगुरुं नृपनन्दनः ॥ ९
अनामयं च पप्रच्छ मातरं पितरं प्रति । एवमुक्तो महाभागः सानन्दपुलकोद्गमः ॥ १०

आयुरुवाच—

अद्यैव व्याधयो नष्टा दुःखशोकावुभौ गतौ । भवतो दर्शनात्पुत्र संतुष्टं दृश्यते जगत् ] ॥ ११
कृतकृत्योऽस्मि संजातस्त्वयि जाते महौजसि । स्ववंशोद्धरणं कृत्वा ह्यहमेव समुद्धृतः ॥ १२

इन्दुमत्युवाच—

पर्वणी प्राप्य चेन्दोस्तु तेजो दृष्ट्वा महोदधिः । वृद्धिं याति महाभाग तथाऽहं तव दर्शनात् ॥ १३
वर्धिताऽस्मि सुहृष्टाऽस्मि ह्यानन्देन समाकुला । दर्शनात्ते महाभाग धन्या जाताऽस्मि मानद १४
एवं संभाष्य तं पुत्रमालिङ्ग्य तनयोत्तमम् । शिरस्याघ्राय तस्यापि वत्सं धेनुर्यथा स्वकम् ॥ १५
अभिनन्द्य सुतं प्राप्तं नहुषं देवरूपकम् । आशीर्भिः सर्वपुण्याभिर्देवी चेन्दुमती तथा ॥ १६

सूत उवाच—

अथासौ मातरं पुण्यं देवीमिन्दुमतीं सुतः । कथयामास वृत्तान्तं यथा चाऽऽहवमात्मनः ॥ १७
स्वभार्यायास्तथोत्पत्तिं प्राप्तिं चैव महायशाः । हुण्डेनापि यथा युद्धं हुण्डस्यापि निपातनम् ॥ १८
समासेन समस्तं तदाख्यातं स्वयमेव हि । मातापित्रोर्यथा चाग्रे तयोरानन्ददायकम् ॥ १९
मातापितरावाकर्ण्य पुत्रस्यापि पराक्रमम् । हर्षेण महताऽऽविष्टौ संजातौ पूर्णमानसौ ॥ २०
नहुषो धनुरादाय इन्द्रस्य स्यन्दनेन च । जिगाय पृथिवीं सर्वां सप्तद्वीपां सपत्तनाम् ॥ २१
पित्रोः समर्पयामास वसुपूर्णां वसुंधराम् । पितरं हर्षयन्नित्यं दानधर्मैः सुकर्मभिः ॥ २२
पितरं याजयामास राजसूयादिभिस्तदा । महायज्ञैः सुदानैश्च व्रतैर्नियमसंयमैः ॥ २३
[+सुदानैर्यशसा पुण्यैर्यज्ञैः पुण्यमहोदयैः ] । सुसंपूर्णौ कृतौ तौ तु पितरौ चाऽऽयुसूनुना ॥ २४
अथ देवाः समागत्य नागाह्वयं पुरोत्तमम् । अभ्यषिञ्चन्महात्मानं नहुषं वीरमर्दनम् ॥ २५
मुनिभिः सह सिद्धैश्च ह्यायुनाऽनेन भूभुजा । अभिषिच्य स्वराज्ये तं समेतं शिवकन्यया ॥ २६
भार्यायुक्तः सुकायेन आयू राजा महायशाः । दिवं जगाम धर्मात्मा देवैः सिद्धैः सुपूजितः ॥ २७
ऐन्द्रं पदं परित्यज्य ब्रह्मलोकं गतः पुनः । हरलोकं जगामाथ स राजा देवपूजितः ॥ २८
स्वकर्मभिर्महाराजः सुपुत्रस्यापि तेजसा । हरेर्लोकं जगामाथ स राजा भक्तसत्तमः ॥ २९
पुरुषैः पुण्यकर्माख्यैरीदृशे पुण्य उत्तमे । यतितव्यं महाभाग किमन्यैः शोककारकैः ॥ ३०
जातो यथा स धर्मात्मा नहुषः पितृतारकः । कुलस्य धर्ता सर्वस्य ज्ञानविज्ञानसंयुतः ॥ ३१
एतत्ते सर्वमाख्यातं चरितं तस्य धीमतः । अन्यत्किं ते प्रवक्ष्यामि वद पुत्र कपिञ्जल ॥ ३२

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. ट. ठ. ड. ढ.पुस्तकस्थः ।

---

१ ङ. °थ निवसत्येव पूजितः । पु° । छ. °थ निवसत्येष भूपतिः । पु° । २ ङ. °ण्यधर्मा° । ३ ङ. °कसागरैः । आ° । ४ क. ङ. फ[illegible] ।

एवंविधं पुण्यमयं चरित्रं वरिष्ठमेतद्यशसा समेतम् ॥
आयोः सुतस्यापि शृणोति मर्त्यो भोगान्स भुक्त्वैति पदं मुरारेः ॥ ३३

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे च्यवनोपाख्याने नाहुषे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८७१७

अथाष्टादशाधिकशततमोऽध्यायः ।

कपिञ्जल उवाच—

गङ्गामुखे पुरा तात रोदमाना वराङ्गना । नेत्राभ्यामश्रुबिन्दूनि पतन्ति च महाजले ॥ १
गङ्गामध्ये निमज्जन्ति भवन्ति कमलानि च । पुण्यानि हृद्यरूपाणि सुगन्धीनि महान्ति च* ॥२
अस्थिशेषोऽथ पुरुषो जटाचीरधरः पुनः । तानि सौगन्ध्ययुक्तानि पद्मानि विचिनोति सः ॥ ३
हेमवर्णानि दिव्यानि शिवं नीत्वा समर्चयेत् । सा का नारी समाचक्ष्व स वा को हि महामते ॥ ४
अर्चयित्वा शिवं चापि कस्मात्पश्चात्प्ररोदिति । एतन्मे सर्वमाचक्ष्व यद्यहं तव वल्लभः ॥ ५

कुञ्जल उवाच—

शृणु वत्स प्रवक्ष्यामि वृत्तान्तं देवनिर्मितम् । चरितं सर्वपापघ्नं विष्णोश्चैव महात्मनः ॥ ६
योऽसौ हुण्डो महावीर्यो नहुषेण हतो रणे । तस्य पुत्रो महावीर्यो विहुण्डस्तपसाऽन्वितः ॥ ७
निहतं पितरं श्रुत्वा सामात्यं सपरिच्छदम् । आयुपुत्रेण धीरेण नहुषेण बलीयसा ॥ ८
तपश्चचार संक्रुद्धो देवान्हन्तुं समुद्यतः । पौरुषं तस्य दुष्टस्य तपसा वर्धितस्य च ॥ ९
जानन्ति देवाः सर्वे तु दुःसहं समराङ्गणे । हुण्डात्मजो विहुण्डस्तु त्रैलोक्यं हन्तुमिच्छति ॥ १०
पितुर्वैरं करिष्यामि हनिष्ये मानवान्सुरान् । एवं समुद्यतः पापी देवब्राह्मणकण्टकः ॥ ११
उपद्रवं समारेभे प्रजाः पीडयते च सः । तस्यैव तेजसा दग्धा देवाश्चेन्द्रपुरोगमाः ॥ १२
शरणं देवदेवस्य जग्मुर्विष्णोर्महौजसः । देवदेवं जगन्नाथं शङ्खचक्रगदाधरम् ॥ १३
ऊचुश्च पाहि नो नित्यं विहुण्डस्य महाभयात् ॥ १४

विष्णुरुवाच—

वर्धन्तु देवाः सर्वे तु सुसुखेन महेश्वराः । विहुण्डं नाशयिष्यामि पापिनं देवकण्टकम् ॥ १५
एवमाभाष्य तान्देवान्मायां कृष्णो विधाय च । स्वयमेव स्थितस्तत्र नन्दने सुमहायशाः ॥ १६
मायामयं चकाराथ स्वकं रूपं गुणान्वितम् । विष्णुमाया महाभागा सर्वविश्वप्रमोहिनी ॥ १७
[+चकार रूपमतुलं विष्णोर्माया प्रमोहिनी] । विहुण्डस्य वधार्थाय रूपलावण्यशालिनी ॥ १८

कुञ्जल उवाच—

स देवानां वधार्थाय दिव्यमार्गं जगाम ह । नन्दने तपन्तीं मायामपश्यद्दितिजेश्वरः ॥ १९
तया विमोहितो दैत्यः कामबाणकृतान्तरः । आत्मनाशं न जानाति कालरूपां वरस्त्रियम् ॥ २०
तां दृष्ट्वा तप्तहेमाभां रूपद्रविणशालिनीम् । लुब्धो विहुण्डः पापात्मा तामुवाच वराङ्गनाम् ॥२१
काऽसि काऽसि वरारोहे मम चित्तप्रमाथिनी । संगमं देहि मे भद्रे रक्ष रक्ष वरानने ॥ २२

* एतदग्रे क. ख. ङ. च. छ. झ. ढ. पुस्तकेषु ' तस्यास्तात सुनेत्राभ्यां किमर्थं सा प्रदेवति । गङ्गोदके महाभाग निर्मला अश्रुबिन्दवः ' इत्यधिकम् । + एतच्चिह्नान्तर्गतोऽयं पाठो ङ. पुस्तकस्थः ।

संगमात्तव देवेशि यं यमिच्छसि सांप्रतम् । तं तं दद्मि महाभागे दुर्लभं देवदानवैः ॥ २३

मायोवाच—

मामेव भोक्तुमिच्छा चेद्दार्यं मे देहि दानव । सप्तकोटिमितैश्चैव[1] पुष्पैः पूजय शंकरम् ॥ २४
कामोदसंभवैर्दिव्यैः सुगन्धैर्देवदुर्लभैः । तेषां पुष्पकृतां मालां मम कण्ठे सुशोभिताम् ॥ २५
आरोपय महाभाग एतद्दार्यं प्रदेहि मे । तदाऽहं सुप्रिया भार्या भविष्यामि न संशयः ॥ २६

विहुण्ड उवाच—

[*एवं देवि करिष्यामि वरं दद्मि प्रयाचितम् ]। वनानि यानि पुण्यानि दिव्यानि दितिजेश्वरः २७
बभ्राम मन्मथाविष्टो न पश्यति च तद्द्रुमम् । कामोदकाख्यं पप्रच्छ यत्र तत्र गतः स्वयम्॥२८
कामोदको द्रुमो नास्ति वदत्येवं महाजनः । पृच्छमानः स दुष्टात्मा कामबाणैः प्रपीडितः ॥२९
पप्रच्छ भार्गवं गत्वा भक्त्या नमितकंधरः । कामोदकं द्रुमं ब्रूहि कान्तं पुष्पसमन्वितम् ॥ ३०

शुक्र उवाच—

कामोदः पादपो नास्ति योषिदेवास्ति दानव । यदा सा हसते चैव प्रसङ्गेन महर्षिता ॥ ३१
[†सुहासाज्जज्ञिरे दैत्य सुगन्धानि वराण्यपि। सुमान्येतानि दिव्यानि] कामोदानि न संशयः३२
अतिपीतानि पुष्पाणि सौरभेण युतान्यपि । तेनाप्येकेन पुष्पेण यः पूजयति शंकरम् ॥ ३३
तस्येप्सितं महाकामं संपूरयति शंकरः । तस्याश्च रोदना[*देव प्रभवन्ति न संशयः ॥ ३४
तादृशान्येव पुष्पाणि लोहितानि महान्ति च । सौरभेण विना दैत्य] तेषां स्पर्शं न कारयेत् ३५
एवमाकर्ण्य तस्यापि वाक्यं शुक्रस्य भाषितम् । उवाच सा तु कुत्राऽऽस्ते कामोदा भृगुनन्दन ३६

शुक्र उवाच—

गङ्गाद्वारे महापुण्ये सर्वपातकशोधने । कामोदाख्यं पुरं तत्र निर्मितं विश्वकर्मणा ॥ ३७
कामोदपत्तने नारी दिव्यभोगैरलंकृता । तथा चाऽऽभरणैर्भाति सर्वदेवैः सुपूजिता ॥ ३८
त्वया तत्रैव गन्तव्यं पूजितव्या वराप्सराः । उपायेनापि पुण्येन तां प्रहासय दानव ॥ ३९
एवमुक्त्वा स योगीन्द्रः शुक्रस्तं दानवं प्रति । विरराम महातेजाः स्वकार्यायोद्यतोऽभवत् ॥४०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे कामोदाख्यानं नामाष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८७५७

---

अथैकोनविंशत्यधिकशततमोऽध्यायः ।

---

कपिञ्जल उवाच—

एतस्या हसनात्तात सुपुष्पाणि भवन्ति वै । पुण्यानि दिव्यगन्धीनि दुर्लभानि सुरासुरैः ॥ १
कस्मात्ता देवताः सर्वाः प्रवाञ्छन्ति महामते । [† शंकरस्तोषमायाति हास्यपुष्पैः सुपूजितः ॥२

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. ट. ठ. ड. ढ. पुस्तकस्थः ।

---

१ घ. छ. ट. ठ. ड. °टिसुहृद्यैस्त्वं पु° । २ क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. ट. ठ. ड. ढ. °ष्ठे स्म दानव । आ° । ३ ड. कामोदोपवने । [illegible]

को गुणस्तस्य पुष्पस्य तन्मे कथय विस्तरात्] । गङ्गासमागमे पुण्ये वाराणस्याश्च मध्यगे ॥ ३
कामोदा सा भवेत्का तु कस्य पुत्री वराङ्गना । हासात्तस्या महाभाग पुष्पाणि प्रभवन्ति च ॥४
किंगुणं तत्फलं ब्रूहि सकलं विस्तरेण च ॥ ५

कुञ्जल उवाच—

पुरा देवैर्महादैत्यैः कृत्वा सौहार्दमुत्तमम् । अमृतार्थे प्रमथितं सागरक्षीरमुद्यतैः ॥ ६
मथनाद्देवदैत्यानां कन्यारत्नचतुष्टयम् । वरुणेन दर्शितं पूर्वं सोमेनैव तथा पुनः ॥ ७
पश्चात्प्रदर्शितं पुण्यममृतं कलशस्थितम् । कन्याचतुष्टयं तत्र देवानां हितमिच्छति ॥ ८
सुलक्ष्मीर्नाम सा चैका द्वितीया वारुणी तथा । कामोदाख्या हृता या च श्रेष्ठा चैव चतुर्थिका९
तासां मध्ये वरा श्रेष्ठा पूर्वं जाता महामते । तुलसीति समाख्याता लोके पूज्या सदैव हि ॥१०
निपानरूपा सर्वेषां पयःफेनसमुद्भवा । अमृतस्य तरङ्गाच्च कामोदाख्या बभूव ह ॥ ११
सोमो राजा तथा लक्ष्मीर्जज्ञाते त्वमृतादपि । त्रैलोक्यभूषणं सोमः संजातः शंकरस्य हि ॥ १२
मृत्युरोगहरा जाता सुराणां वारुणी तथा। ज्येष्ठा सुपुण्यदा जाता लोकानां हितमिच्छताम् १३
अमृतादुत्थिता देवी कामोदा नाम पुण्यदा । विष्णोः प्रीत्यै भविष्ये तु वृक्षरूपं प्रयास्यति १४
विष्णुप्रीतिकरी सा तु भविष्यति सदैव हि । तुलसी नाम सा पुण्या भविष्यति न संशयः॥१५
तया सह जगन्नाथो रमिष्यति सदैव हि । तुलस्याः पत्रमेकं यो नीत्वा कृष्णाय दास्यति ॥१६
स मेनेऽस्योपकारं तु किमस्मै प्रददाम्यहम् । इत्येवं चिन्तयित्वा तु तस्य प्रीतिकरो भवेत् ॥ १७
एवं कामोदनामाऽसौ पूर्वकन्याचतुष्टये । यदा सा हसते देवी हर्षाद्गद्गदभाषिणी ॥ १८
सौवर्णानि सुगन्धीनि मुखात्तस्याः पतन्ति च । अम्लानानि सुपुष्पाणि तानि संगृह्य यत्नतः ॥
योऽर्चयेच्छंकरं देवं ब्रह्माणं माधवं तथा । तस्य देवाः प्रतुष्यन्ति यं यमिच्छति तत्प्रदाः ॥ २०
रोदित्येषा यदा सा च केन दुःखेन दुःखिता । नेत्राश्रुभ्यो हि तस्यास्तु प्रभवन्ति पतन्ति च ॥
तानि चैव महाभाग हृद्यानि सुमहान्ति च । सौरभेण विना तैस्तु यः पूजयति शंकरम् ॥ २२
तस्य दुःखं च संतापो जायते नात्र संशयः । पुष्पैस्तु तादृशैर्देवान्सकृदर्चति पापधीः ॥ २३
तस्य दुःखं प्रकुर्वन्ति देवास्तत्र न संशयः । एतत्ते सर्वमाख्यातं कामोदाख्यानमुत्तमम् ॥ २४
अथ कृष्णो विचिन्त्यैव दृष्ट्वा विक्रमसाहसम् । विहुण्डस्यापि पापस्य उद्यमं साहसं तदा ॥ २५
नारदं प्रेषयामास मोहयैनं दुरासदम् । नारदस्त्वथ संश्रुत्य वाक्यं विष्णोर्महात्मनः ॥ २६
गच्छमानं दुरात्मानं कामोदां प्रति दानवम् । गत्वा तमाह दैत्येन्द्रं नारदः प्रहसन्निव ॥ २७
क्व यासि त्वं हि दैत्येन्द्र सत्वरस्तु समातुरः । सांप्रतं केन कार्येण कस्यार्थे केन नोदितः ॥२८
ब्रह्मात्मजं नमस्कृत्य प्रत्युवाच कृताञ्जलिः । कामोदपुष्पार्थमहं प्रस्थितोऽस्मि द्विजोत्तम ॥ २९
तमुवाच स धर्मात्मा पुष्पैः किं ते प्रयोजनम् । विप्रवर्य पुनः प्राह कार्यकारणमात्मनः ॥ ३०
नन्दनाख्ये वने पुण्ये काचिन्नारी वरानना । तस्या दर्शनमात्रेण गतोऽहं कामवश्यताम् ॥ ३१
तया प्रोक्तोऽस्मि विप्रेन्द्र पुष्पैः कामोदसंभवैः । पूजयस्व महादेवं पुष्पैस्तैः सप्तकोटिभिः ॥ ३२
ततस्ते सुप्रिया भार्या भविष्यामि न संशयः । तदर्थं प्रस्थितोऽस्म्यद्य कामोदाख्यं पुरं प्रति ३३
तामहं कामयिष्यामि सिन्धुजां शृणु सत्तम । मनोहरैर्महाहास्यैर्हासयिष्याम्यहं पुनः ॥ ३४
प्रीता सती महाभागा हसिष्यति पुनः पुनः । तद्धास्यं गद्गदं विप्र मम कार्यप्रवर्धनम् ॥ ३५

१ क. ख. ग. घ. ङ. च. ज. झ. म. ट. ठ.ड.ढ. मृदुरो° । २ क. ख. घ. ङ. च. छ. झ.ट.ठ. ड. ढ. सौहृद्यानि ।

तस्या हास्यात्पतिष्यन्ति दिव्यानि कुसुमानि च । तैस्तु देवमुमाकान्तं पूजयिष्यामि सांप्रतम् ३६
तेन पूजाप्रदानेन तुष्टो दास्यति मे फलम् । ईश्वरः सर्वभूतेशः शंकरो लोकभावनः ॥ ३७

नारद उवाच—

तत्र दैत्य न गन्तव्यं कामोदाख्ये पुरोत्तमे । विष्णुरस्ति स मेधावी सर्वदेवजयावहः ॥ ३८
येनोपायेन पुष्पाणि कामोदाख्यानि दानव । तव हस्ते प्रयास्यन्ति तदुपायं वदाम्यहम् ॥ ३९
गङ्गातोयेषु दिव्यानि पतितानि न संशयः । प्रवाहस्य जलैः पुण्यैरागमिष्यन्ति सांप्रतम् ॥ ४०
तानि त्वं प्रतिगृह्णाण सुहृद्यानि महान्ति च । गृहीत्वा तानि पुष्पाणि साधयस्व हि वाञ्छितम्॥
नारदो दानवश्रेष्ठं मोहयित्वा ततः पुनः । चिन्तयामास धर्मात्मा कथं कार्यं मयाऽधुना ॥ ४२
कथमश्रूणि सा मुञ्चेत्केनोपायेन दुःखिता । चिन्तयानस्य तस्यैवं क्षणं वै नारदस्य च ॥
ततो बुद्धिः समुत्पन्ना कामोदाख्यं पुरं गतः ॥ ४३

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे कामोदाख्यानं नामैकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८८००

अथ विंशत्यधिकशततमोऽध्यायः ।

कुञ्जल उवाच—

कामोदाख्यं पुरं दिव्यं सर्वदेवसमाकुलम् । सर्वकामसमृद्ध्यर्थमपश्यन्नारदस्ततः ॥ १
कामोदाया गृहं प्राप्य प्रविवेश द्विजोत्तमः । कामोदां तु ततो दृष्ट्वा सर्वकामसमाकुलाम् ॥ २
तया संपृच्छितो विप्रः सुवाक्यैः स्वागतादिभिः । दिव्यासने समारूढस्तां पप्रच्छ द्विजोत्तमः ३
सुखेन स्थीयते भद्रे विष्णुतेजःसमुद्भवे । अनामयं च पप्रच्छ आशीर्भिरभिनन्द्य ताम् ॥ ४

कामोदोवाच—

प्रसादाद्भवतां विष्णोः सुखेन वर्तयाम्यहम् । कथयस्व महाभाग त्वं प्रश्नोत्तरकारणम् ॥ ५
महामोहः समुत्पन्नो ह्यकस्मान्मुनिपुंगव । व्यापकः सर्वलोकानां ममाङ्गमतिनाशकः ॥ ६
तस्मान्निद्रा समुत्पन्ना यथा मर्त्ये प्रवर्तते । सुप्तया तु मया दृष्टः स्वप्नो वै दारुणो मुने ॥ ७
केनाप्युक्तं समेत्यैवं पुरतो मे द्विजोत्तम । अव्यक्तो यो हृषीकेशः संसारं स गमिष्यति ॥ ८
तदाप्रभृति दुःखेन व्यापिताऽस्मि महामते । तन्मे त्वं कारणं ब्रूहि भवाञ्ज्ञानवतां वरः ॥ ९

नारद उवाच—

वातिकः पैत्तिकश्चैव कफजः सांनिपातिकः । स्वप्नः प्रवर्तते भद्रे मानवेषु न संशयः ॥ १०
न जायते च देवेषु स्वप्नो निद्रा च सुन्दरि । आदित्योदयवेलायां दृश्यते स्वप्न उत्तमः ॥ ११
स स्वप्नो मानवानां च पुण्यस्य फलदायकः । अन्यच्चैव प्रवक्ष्यामि स्वप्नस्य कारणं शुभे ॥ १२
महावातोल्बणे चैव चलन्त्यापो वरानने । त्रुटन्त्यम्बुकणाः सूक्ष्मास्तस्मादुदकसंचयात् ॥ १३
बहिरेव पतन्त्येते निर्मलाम्बुकणाः शुभे । पुनर्लयं प्रयान्त्येते दृश्यादृश्या भवन्ति ते ॥ १४

१ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. °र्वदैत्यक्षया° । छ. °र्वदैत्यभया° । २ क. ख. घ. ङ. च. छ. झ. ट. ड. ढ. सूत । ३ क. ख. ग. झ. °तः । चिन्तयानः कार्यसिद्धिं प्र° । ४ ढ. जायेत स देवेषु तपोनिष्ठेषु सु° । ५ ढ. °णाः स्थूलास्त° ।

तद्वत्स्वप्नस्य वै भावः कथ्यते शृणु भामिनि । आत्मा शुद्धो न रक्तस्तु रागद्वेषविवर्जितः ॥ १५
पञ्चभूतात्मकानां च मुषित्वैव सुनिश्चलः । षड्विंशतिसुतत्त्वानां मध्ये चैष विराजते ॥ १६
शुद्धात्मा केवलो नित्यः प्रकृतेः संगतिं गतः । तद्भावैर्वायुरूपैश्च चलते स्थानतो यदा ॥ १७
आत्मनस्तेजसश्चैव प्रतितेजः प्रजायते । अन्तरात्मा शुभं नाम तस्य एव प्रकथ्यते ॥ १८
पयसश्च यथा भिन्ना भवन्त्यम्बुकणाः शुभे । आत्मनस्तु तथा तेजो ह्यन्तरात्मा प्रकथ्यते ॥ १९
स हि पृथ्वी स वै वायुः स चाप्याकाश एव हि । स वै तेजश्च दिव्यं तु एते पञ्च पुरा कृताः
आत्मनस्तेजसो भूता मलरूपा महात्मनः । तस्यापि संगतिं प्राप्ता एकत्वं च प्रयान्ति ते ॥ २१
आत्माभावप्रदोषेण नाशयन्ति वरानने । [*मृत्पिण्डमन्यमिच्छन्ति वारं वारं वरानने] ॥ २२
तेषां क्रीडाविहारोऽयं सृष्टिसंबन्धकारणम् । उदकस्य तरङ्गस्तु जायते च विलीयते ॥ २३
पुनर्भूतिः पुनर्हानिस्तथा दृश्यः पुनः पुनः । अपां रूपस्य दृष्टान्तं तद्वदेषां न संशयः ॥ २४
आत्मा न नश्यते देवि तेजो वायुर्न नश्यति । न नश्यतो धराकाशौ न नश्यन्त्याप एव च॥२५
पञ्चैव आत्मना सार्धं प्रभवन्ति प्रयान्ति च । आत्मादयो ह्यमी भद्रे नित्यरूपा न संशयः॥ २६
पिण्ड एव प्रणश्येत तेषां संजात एव च । विषयाणां सुदोषैश्च रागद्वेषादिभिर्हतैः ॥ २७
प्राणाः प्रयान्ति वै पिण्डात्पञ्च पञ्चात्मका द्विजाः। पिण्डान्ते वसत आत्मा प्रतिरूपः स्थितः स च
अन्तरात्मा यथा चाग्नेः स्फुलिङ्गस्तु प्रकाशते । तथा प्रकाशमायाति दृश्यादृश्यः प्रजायते ॥ २९
शुद्धश्चात्मा परं ब्रह्म सदा जागर्ति नित्यशः । अन्तरात्मा प्रबद्धस्तु प्रकृतेश्च महागुणैः ॥ ३०
अन्नाहारैस्तु संपुष्टैरन्तरात्मा सुखं व्रजेत् । सुसुखाज्जायते [†मोहस्तस्मान्मनः प्रमुह्यति ॥ ३१
पश्चात्संजायते] निद्रा तामसी लयवर्धिनी । नाडीमार्गेण यः सूर्यो मेरुमुल्लङ्घ्य गच्छति ॥ ३२
तदा रात्रिः प्रजायेत यावन्नोदयते रविः । विषयान्धकारैर्मुक्तस्त्वन्तरात्मा प्रकाशते ॥ ३३
भावैस्तत्त्वात्मकानां तु पञ्चभावैस्तु प्रेषितैः । पूर्वजन्मास्थितैः पिण्डैरन्तरात्मा प्रगृह्यते ॥ ३४
स च पश्यति वै स्थानमुच्चावचं शुभानने । संसारे अन्तरात्मा वै दोषैर्बद्धः प्रणीयते ॥ ३५
कायं रक्षति जीवात्मा पश्चात्तिष्ठति नित्यशः ॥ ३६
उदानः स्फुरते तीव्रस्तस्माच्छब्दः प्रजायते । [*शुष्का भस्त्रा यथा श्वासं कुरुते वायुपूरिता ३७
तद्वच्छब्दवशाच्छ्वासमुदानः कुरुते बलात् । आत्मनस्तु प्रभावेन ह्युदानो बलवान्भवेत् ॥ ३८
एवं कायः प्रमुग्धस्तु मृतकल्पः प्रजायते] । ततो निद्रा महामाया तस्याङ्गेषु प्रयाति सा ॥ ३९
हृदि कण्ठे तथा चाऽऽस्ये नासिकाग्रे प्रतिष्ठति । बाहू विकुच्य संतिष्ठेद्धृद्गतां नाभिमण्डले ॥ ४०
आत्मनस्तु प्रभावाच्च उदानो नाम मारुतः । प्रजायते महातीव्रो बलरोधं करोति सः ॥ ४१
यथा रज्जुप्रबन्धस्तु दारुकीलधरः स्थितः । तथा चाऽऽत्मा सुसंलग्नः प्राणवायुर्न संशयः॥ ४२
अन्तरात्मप्रसक्तस्तु प्राणवायुः शुभानने । बुद्धिविद्रोहितो भद्रे अन्तरात्मा प्रधावति ॥ ४३

* एतच्चिह्नान्तर्गतः पाठः, छ. झ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. झ. ढ. पुस्तकस्थः ।
* एतच्चिह्नान्तर्गतः पाठो झ. पुस्तकस्थः ।

१ छ. °ने । एतन्निमित्तमि° । २ घ. ट. ठ. झ. °तः । प्रणाशं यान्ति वै पिण्डाः पञ्च । ३ क. ख. घ. ङ. च. छ. ञ. ट. ठ. ड. ढ. द्विज । ४ क. ख. ङ. च. ञ. ड. ढ. °दा जयति । निश्चितः । अ° । ५ क. ख. ङ. च. छ. ञ. ड. ढ. °सी तमव° । ६ क. ख. ङ. च ञ. ढ. °भ्रतत्त्वैः प्रपोषितः । पु° । छ. °भ्रतरत्नैः प्रतोषितः । पु° । ७ क. ख. ङ. च. ञ. ड. ढ. महामते । ८ ङ. बलाद्रोधं । ९ घ. ट. ठ. ड. °वायुर्महामते । बु° ।

पूर्वजन्मार्जितान्वासान्स्मृत्वा तत्र प्रधावति । तत्र संस्थो महाप्राज्ञः स्वेच्छया रमते पुनः ॥ ४४
एवं नानाविधान्स्वप्नानन्तरात्मा प्रपश्यति । उत्तमांश्च विरुद्धांश्च कर्मयुक्तान्वरानने ॥ ४५
गिरींस्तथा सुदुर्गांश्च बहूनुच्चावचांस्तथा । तदेव वातिकं विद्धि [*कफवत्तद्वदाम्यहम् ॥ ४६
जलं नदीं तडागांश्च पयःस्थानानि पश्यति । अग्निं च पश्यते देवि बहु काञ्चनमुत्तमम् ॥ ४७
तदेव पैत्तिकं विद्धि ]भाव्यं चैव वदाम्यहम् । प्रभाते दृश्यते स्वप्नो भव्यो वाऽभव्य एव च ॥४८
कर्मयुक्तो वरारोहे लाभालाभप्रकाशकः । स्वप्नस्यापि अवस्थानं कथितं वरवर्णिनि ॥ ४९
तद्भाव्यं तु वरारोहे विष्णोश्चैव भविष्यति । तन्निमित्तं त्वया दृष्टो दुःस्वप्नः स तु प्रेक्षितः ॥ ५०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे कामोदाख्याने विंशाधिकशततमोऽध्यायः ॥ १२० ॥

आदितः श्लोकानां समष्ट्यङ्काः—८८५०

अथैकविंशाधिकशततमोऽध्यायः ।

कामोदोवाच—

न विदुर्देवताः सर्वा यस्यान्तं रूपमेव हि । यस्मिँल्लीनस्तु सर्वोऽयं स विश्वात्मा प्रकथ्यते ॥ १
यस्य मायाप्रमुग्धस्तु संसारः शृणु नारद । कस्मात्प्रयाति संसारं मम स्वामी जगत्पतिः ॥ २
पापैश्चापि सुपुण्यैश्च नरो बद्धस्तु कर्मभिः । संसारं सरते विप्र हरिः कस्माद्व्रजेद्वद ॥ ३

नारद उवाच—

शृणु देवि प्रवक्ष्यामि यत्कृतं तेन विष्णुना । भृगोरग्रे प्रतिज्ञातं यज्ञरक्षां करोम्यहम् ॥ ४
इन्द्रस्य वचनात्सद्यो गतोऽसौ दानवैः सह । योद्धुं विहाय गोविन्दो भृगोश्चैव मखोत्तमम् ॥ ५
मखं त्यक्त्वा गते देवि पश्चात्तैर्दानवोत्तमैः । आगत्य ध्वंसितः सर्वः स यज्ञः पापचेतनैः ॥ ६
हरिं क्रुद्धस्तु योगीन्द्रः शशाप भृशमेव तम् । दश जन्मानि भुङ्क्ष्व त्वं मच्छापकलुषीकृतः ॥ ७
कर्मणश्चास्य संभोगं संभोक्ष्यति जनार्दनः । तन्निमित्तं त्वया देवि दुस्वप्नः प्रसमीक्षितः ॥ ८
इत्युक्त्वा तां गतो विप्रो ब्रह्मलोकं स नारदः । कृष्णस्यापि सुदुःखेन दुःखिता साऽभवत्तदा ॥
रुरोद करुणं बाला हाहेति वदती मुहुः । गङ्गातीरोपविष्टा सा जलान्ते शृणु नन्दन ॥ १०
स्वनेत्राभ्यां तथाऽश्रूणि दुःखेनापि प्रमुञ्चति । तान्यश्रूणि प्रमुक्तानि गङ्गातोये पतन्त्यपि ॥ ११
जलेष्वेव निमज्जन्तस्तस्याश्चाप्यश्रुबिन्दवः । संभवन्ति पुनस्तात पद्मरूपाणि तानि च ॥ १२
गङ्गातोयप्रयुक्तानि वाहितानि प्रयान्ति वै । ददृशे दानवश्रेष्ठो विष्णुमायाप्रमोहितः ॥ १३
दुःखजानि न जानाति मुनिना कथितान्यपि । हर्षेण महताऽऽविष्टः परिजग्राह सोऽसुरः ॥ १४
पद्मैस्तु पुष्पितैः सोऽपि पूजयेद्गिरिजाप्रियम् । सप्तकोटिभिर्दैत्येन्द्रो विष्णुमायाहृतान्तरः ॥ १५
अथ क्रुद्धा जगद्धात्री शंकरं वाक्यमब्रवीत् । पश्यैतस्य विकर्मत्वं दानवस्य तु दुर्मतेः ॥ १६
शोकोत्पन्नैः प्रफुल्लैश्च भवन्तं परिपूजयेत् । प्राप्यते दुःखसंतापं मुदं प्राप्तुं न चार्हति ॥ १७

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. ढ. स वा आत्मा । ड. स वै स्वात्मा । २ ख. ङ. च. छ. झ. ढ. °म् । नरकान्दश प्रभु° । ३ क. ख. घ. ङ. छ. झ. ट. ठ. ड. ढ. °स्य महामते । शो° ।

ईश्वर उवाच—

सत्यमुक्तं त्वया भद्रे अनेन पापकारिणा । सत्योद्यमः परित्यक्तः कामोदार्थं कृतः पुरा ॥ १८
शोकजानि प्रफुल्लानि गङ्गातोयगतान्यपि । अयमेष प्रगृह्णाति कामाकुलितचेतनः ॥ १९
पूजयेच्चापि दुष्टात्मा शोकसंतापकारकैः । दुःखजैः शोकजैः पुष्पैस्तैस्तु श्रेयः कथं भवेत् ॥ २०
[*यादृशेनापि भावेन मामेव परिपूजयेत् ] । तादृशेनापि भावेन अस्य सिद्धिर्भविष्यति ॥ २१
मन्ये ध्यानविहीनोऽयं कामोदान्यस्तमानसः । संजातः पापचारित्रो जहि देवि स्वतेजसा ॥ २२
एवमाकर्ण्य तद्वाक्यं शंभोश्चैव महात्मनः । अस्यैव संक्षयं शंभो करिष्ये तव शासनात् ॥ २३
एवमुक्त्वा ततो देवी तस्यापि वधकाङ्क्षया । वर्तते हि विहुण्डस्य वधोपायं विचिन्तयेत् ॥ २४
[+कृत्वा मायामयं रूपं ब्राह्मणस्य महात्मनः । पूजयेच्छंकरं नाथं सुपुष्पैः पारिजातकैः ] ॥ २५
समेत्य दानवः पापो दिव्यां पूजां विनाशयेत् । कामाकुलः सुदुःखार्तस्तद्गतो भावतत्परः ॥ २६
विष्णोश्चैव महामायां पूर्वदृष्टां स दानवः । सस्मार चापि वै नित्यं कामबाणप्रपीडितः ॥ २७
तस्याः स्मरणमात्रेण कंदर्पेण बलीयसा । विरहाकुलदुःखार्तो दैवतैर्हि मुहुर्मुहुः ॥ २८
कालकृष्टः सुदुष्टात्मा शोकजातानि तानि सः । परिगृह्य समायातः पूजनार्थं महेश्वरम् ॥ २९
देव्या कृतां हि तां पूजां सुपुष्पैः पारिजातकैः । तानि नीत्वा तु लोभेन शोकजैः परिपूजयेत् ३०
नेत्राभ्यां तस्य दुष्टस्य बिन्दवोऽश्रुसमुद्भवाः । अविरलास्ततो वत्स पतन्ति लिङ्गमस्तके ॥ ३१
देवी ब्राह्मणरूपेण तमुवाच महामते । को भवान्पूजयेद्देवं शोकाकुलमनाः सदा ॥ ३२
पतन्त्यश्रूणि देवस्य मस्तके शोकजानि ते । अपवित्राणि मे ब्रूहि एतमर्थं ममाग्रतः ॥ ३३

विहुण्ड उवाच—

पूर्वं दृष्टा मया नारी सर्वसौभाग्यसंपदा । [*सर्वलक्षणसंपन्ना कामस्याऽऽयतनं महत् ] ॥ ३४
तस्या मोहेन संदग्धः कामेनाऽऽकुलतां गतः । तया प्रोक्तं हि संभोगे देहि मे दायमुत्तमम् ॥ ३५
कामोदसंभवैः पुष्पैः पूजयस्व महेश्वरम् । तेषां पुष्पकृतां मालां मम कण्ठे परिक्षिप ॥ ३६
कोटिभिः सप्तसंख्यातैः पूजयस्व महेश्वरम् । तदर्थं पूजयाम्येव ईश्वरं फलदायकम् ॥ ३७
कामोदसंभवैः पुष्पैर्दुर्लभैर्देवदानवैः ॥ ३८

देव्युवाच—

क्व ते भावः क्व ते ध्यानं क्व ते ज्ञानं दुरात्मनः । [+ईश्वरस्यापि संबन्धो नास्ति किंचित्तवैव हि] ३९
कामोदाया वरं रूपं कीदृशं वद सांप्रतम् । क्व लब्धानि सुपुष्पाणि हास्यात्तस्या भवानि च ॥ ४०

विहुण्ड उवाच—

भावं ध्यानं न जानामि न दृष्टा सा मया कदा । गङ्गातोयगतान्येव परिगृह्णामि नित्यशः ॥ ४१
तैरहं पूजयाम्येकं शंकरं हि वदाम्यहम् । ममाग्रे कथितं विप्र शुक्रेणापि महात्मना ॥ ४२
वचनात्तस्य देवस्य पूजयामि दिने दिने । एतत्ते सर्वमाख्यातं यच्च पृष्टोऽस्मि सांप्रतम् ॥ ४३

देव्युवाच—

कामोदारोदनात्पुष्पैर्दुःखेनाथ समुद्भवैः । लिङ्गमर्चयसे पाप पापभावेन नित्यशः ॥ ४४
यादृशेनापि भावेन पुष्पैश्च यादृशैस्त्वया । अर्चितो देवदेवेशस्तादृशं फलमाप्नुहि ॥ ४५

* एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठो घ. छ. ट. ठ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ.ड. ढ. पुस्तकस्थः ।

[*दिव्यपूजां विनाश्यैवं शोकपुष्पैः समर्चयेत् । एतद्दोषस्त्वैवाद्य समुत्पन्नः सुदारुणः ] ॥ ४६
तस्माद्दण्डं प्रदास्यामि भुङ्क्ष्व स्वकर्मजं फलम् । तस्य वाक्यं समाकर्ण्य कालाकृष्टोऽभ्यभाषत॥४७
रे रे दुष्ट अनाचार मम कर्मप्रदूषक । हन्मि त्वामिह खड्गेन अनेनापि न संशयः ॥ ४८
इत्युक्त्वा ब्राह्मणं तं स निशितं खड्गमाददे । हन्तुकामः स्वशक्त्या च अभ्यधावत दानवः ४९
सा देवी विप्ररूपेण संक्रुद्धा परमेश्वरी । स्वस्थानमागतं दृष्ट्वा हुंकारं विससर्ज ह ॥ ५०
तेन हुंकारनादेन पतितो दानवाधमः । निश्चेष्टः कामरूपेण वज्राहत इवाचलः ॥ ५१
पतिते दानवे तस्मिन्सर्वलोकविनाशके । लोकाः स्वास्थ्यं गताः सर्वे दुःखतापविवर्जिताः ॥५२
एतस्मात्कारणात्पुत्र सा स्त्री वै परिरोदिति । गङ्गातीरे वरारोहा दुःखव्याकुलमानसा ॥
एतत्ते सर्वमाख्यातं यत्त्वया परिपृच्छितम् ॥ ५३

विष्णुरुवाच—

एवमुक्त्वा स्वपुत्रं च कुञ्जलः पक्षिणां वरः । विरराम महाप्राज्ञः किंचिन्नोवाच भूपते ॥ ५४

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे कामोदाख्यान एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

कामोदाख्यानं समाप्तम् ।

आदितः श्लोकानां समष्ट्यङ्काः—८९०५

---

अथ द्वाविंशत्यधिकशततमोऽध्यायः ।

---

विष्णुरुवाच—

कुञ्जलो धर्मपक्षी स इत्युक्त्वा तान्सुतान्प्रति । विरराम महाप्राज्ञः किंचिन्नोवाच तान्पुनः ॥ १
वटाधस्थो द्विजश्रेष्ठस्तमुवाच महाशुकम् । को भवान्धर्मवक्ता हि पक्षिरूपेण वर्तते ॥ २
किंवा देवोऽथ गन्धर्वः किंवा विद्याधरो भवान् । कस्य शापादिमां प्राप्तो योनिं कीरस्य पातकीम् ॥३
कस्मात्त ईदृशं ज्ञानं वर्ततेऽतीन्द्रियं शुक । सुपुण्यस्य तु कस्यापि कस्य वै तपसः फलम् ॥ ४
किंवा प्रच्छन्नरूपेण अनेनापि महामते । कस्त्वं सिद्धोऽथ देवो वा तन्मे कथय कारणम् ॥ ५

कुञ्जल उवाच—

भोः सिद्ध त्वामहं जाने कुलं ते गोत्रमुत्तमम् । विद्यां तपः प्रभावं च यस्माद्भ्रमसि मेदिनीम् ६
सर्वं विप्र प्रवक्ष्यामि स्वागतं तव सुव्रत । उपविश्याऽऽसने पुण्ये छायामाश्रय शीतलाम् ॥ ७
अव्यक्तप्रभवो ब्रह्मा तस्माज्जज्ञे प्रजापतिः । ब्रह्मणस्तु गुणैर्युक्तो भृगुर्ब्रह्मसमो द्विजः ॥ ८
भार्गवो नाम तस्याऽऽसीत्सर्वधर्मार्थतत्त्ववित् । तस्यान्वये भवान्विप्र च्यवनः ख्यातिमान्भुवि ९
नाहं देवो न गन्धर्वो नाहं विद्याधरः पुनः । योऽहं विप्र प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ १०
कश्यपस्य कुले जातः कश्चिद्ब्राह्मणसत्तमः । वेदवेदाङ्गतत्त्वज्ञः सर्वधर्मप्रकाशकः ॥ ११
विद्याधर इति ख्यातः कुलशीलगुणैर्युतः । राजमानः सदा विप्रः प्रभावैस्तपसः सदा ॥ १२
संबभूवुः सुतास्तस्य त्रयो विद्याधरस्य वै । वसुशर्मा नामशर्मा धर्मशर्मा तु ते त्रयः ॥ १३
[† तेषामहं धर्मशर्मा कनिष्ठो गुणवर्जितः । वसुशर्मा मम भ्राता वेदशास्त्रार्थपारगः] ॥ १४

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च छ. झ. ड. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख.ङ.ख छ. झ. ड. ढ. पुस्तकस्थः ।

१ ङ. °पक्षीन्द्र इ° ।

आचारैश्च समायुक्तो विद्यादिस्वगुणैः पुनः । नामशर्मा महाप्राज्ञस्तद्वद्वाऽऽसीद्गुणाधिकः ॥ १५
अहमेव महामूर्खः संजातः शृणु सत्तम । विद्यानामुत्तमं विप्र भावमर्थं शुभं कदा ॥ १६
न शृणोमि न वै यामि गुरुगेहमनुत्तमम् । ततस्तु जनको मे तु मामेव परिचिन्तयेत् ॥ १७
धर्मशर्मेति मे पुत्रो ह्यस्य नाम निरर्थकम् । संजातः क्षितिमध्ये तु न विद्वान्मे गुणाकरः ॥ १८
इति चिन्त्य स धर्मात्मा मामुवाच सुदुःखितः । व्रज पुत्र गुरोर्गेहं विद्यार्थं परिसाधय ॥ १९
एवमाकर्ण्य तत्तस्य पितुर्वाक्यं मया शुभम् । [*नाहं तात गमिष्यामि गुरोर्गेहं सुदुःखदम् ॥२०
यत्रैव ताडनं नित्यं भ्रूभङ्गादि च क्रोधनम् । अन्नं न दृश्यते तत्र कर्मणा शृणु सत्तम ॥ २१
दिवा रात्रौ न निद्राऽस्ति नास्ति सुखस्य साधनम्[1]]। तस्माद्धि कारणात्तात न यास्ये गुरुमन्दिरम् २२
विद्याकार्यं न करिष्ये क्रीडार्थमुत्सुकः पितः । भोक्ष्ये स्वप्स्ये प्रसादात्ते करिष्ये क्रीडनं पुनः २३
डिम्भैः सार्धं सुखेनापि दिवारात्रावतन्द्रितः । [+मामुवाच स धर्मात्मा मूढं ज्ञात्वा सुदुःखितः] २४
मा पुत्र साहसं कार्षीर्विद्यार्थमुद्यमं कुरु । विद्यया प्राप्यते सौख्यं यशः कीर्तिस्तथाऽतुला ॥ २५
ज्ञानं स्वर्गः सुमोक्षश्च तस्माद्विद्यां प्रसाधय । पूर्वं सुदुःखमूला तु पश्चाद्विद्या सुखप्रदा ॥ २६
तस्मात्साधय पुत्र त्वं विद्यां गुरुगृहं व्रज । पितुर्वाक्यमकुर्वाणो ह्यहमेवं दिने दिने ॥ २७
यत्र तत्र स्थितो नित्यमर्थहानिं करोम्यहम् । उपहासः कृतो लोकैर्मम विप्र प्रकुत्सनम् ॥ २८
मम लज्जा समुत्पन्ना जीवनाशकरी तदा । विद्यार्थमुद्यतो विप्र कं गुरुं प्रार्थयाम्यहम् ॥ २९
इतिचिन्तापरो जातो दुःखशोकसमाकुलः । कथं विद्यामहं जाने कथं विन्दाम्यहं गुणान् ॥ ३०
कथं मे जायते स्वर्गः कथं मोक्षं व्रजाम्यहम् । इत्येवं चिन्तयन्विप्र[2] वार्धक्यमगमं पुनः ॥ ३१
देवतायतने दुःखी उपविष्टस्त्वहं कदा । मद्भाग्यैः प्रेषितः कश्चित्सिद्धोऽकस्मात्समागतः ॥ ३२
निराश्रयो निराहारः सदानन्दस्तु निस्पृहः । एकान्तमास्थितो विप्र दयायुक्तो[3] जितेन्द्रियः ॥ ३३
परब्रह्मणि संलीनो ज्ञानध्यानसमाधिमान् । तमहं संश्रितो विप्र ज्ञानरूपं महामतिम् ॥ ३४
अहं सिद्धप्रभावेन भक्त्या नमितकंधरः । नमस्कृत्य महात्मानं पुरतस्तस्य संस्थितः ॥ ३५
दीनरूपो ह्यहं जातो मन्दभाग्यस्त्वहं यतः । तेनाहं पृच्छितो विप्र कथं भवान्प्रशोचति ॥ ३६
केनाभिप्रायभावेन दुःखमेवं भुनक्ति वै । तेनैवमुक्तो विप्रेन्द्र घृणिना[4] योगिना तदा ॥ ३७
सुमूढत्वं मया तस्य पूर्ववृत्तान्तमेव हि । तस्मै संश्रावितं सर्वं सर्वज्ञत्वं कथं व्रजेत् ॥ ३८
एतदर्थमहं दुःखी भवान्मम गतिर्ध्रुवम् । स चोवाच महात्मा मे सर्वं ज्ञानस्य कारणम् ॥ ३९

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे च्यवनसंवादे द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८९४४

---

अथ त्रयोविंशत्यधिकशततमोऽध्यायः ।

---

सिद्ध उवाच—

श्रूयतामभिधास्यामि ज्ञानरूपं तवाग्रतः । न स्तो ज्ञानस्य वै हस्तौ न च पादौ न चक्षुषी ॥ १

---

*एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः । +एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

१ क. ख. ङ. च. छ. झ. ढ. °म् । बहुदुःखमयं तात । २ घ. ट. ठ. ड. छ. °न्तयाऽऽविष्टो दुःखार्तोऽपि गतः पु° । ३ क. ख. ग. ङ. च. छ. ज. झ. ञ. ड. °प्र विषादम° । ४ छ. ड. योगयुक्तो । ५ क. ख. ङ. च छ. झ. ढ. ज्ञानिना ।

नासाकर्णौ च ज्ञानस्य नास्ति वै प्राणसंग्रहः । केन दृष्टं तु वै ज्ञानं कानि लिङ्गानि तस्य च ॥२
आकारैर्वर्जितं नित्यं सर्वं वेत्ति स सर्ववित् । दिवा प्रकाशकः सूर्यो रात्रौ प्रकाशयेच्छशी ॥ ३
गृहे प्रकाशको दीपो लोकमध्ये स्थिता ह्यमी । तत्पदं केन वै धाम्ना दृश्यते शृणु सत्तम ॥ ४
न विन्दन्ति च मूढास्ते मोहिता[1] विष्णुमायया । कायमध्ये स्थितं ज्ञानं ध्यानदीप्तमनौपमम् ॥ ५
तत्पदं तेन दृश्येत चन्द्रसूर्यादिभिर्न च । हस्तपादं विना ज्ञानमचक्षुः कर्णवर्जितम्[2] ॥ ६
सर्वत्र गतिमच्चास्ति सर्वं गृह्णाति पश्यति । सर्वमाघ्राति विप्रेन्द्र शृणोत्येव न संशयः ॥ ७
नास्ति ज्ञानसमो दीपः सर्वान्धकारनाशने । स्वर्गे भूमौ च पाताले स्थाने स्थाने च दृश्यते ॥८
कायमध्ये स्थितं ज्ञानं न विन्दन्ति कुबुद्धयः । ज्ञानस्थानं प्रवक्ष्यामि यस्माज्ज्ञानं प्रजायते ॥ ९
प्राणिनां हृदये नित्यं निहितं सर्वदा द्विज । कामादीन्सुमहाभोगान्महामोहादिकांस्ततः ॥ १०
विवेकवह्निना सर्वान्दिधक्षति सदैव यः । सर्वशान्तिमयो भूत्वा चेन्द्रियार्थान्प्रमर्दयेत् ॥ ११
ततस्तु जायते ज्ञानं सर्वतत्त्वार्थदर्शकम् । शान्तिमूलमिदं ज्ञानं निर्मलं पापनाशनम् ॥ १२
तस्माच्छान्तिं कुरुष्व त्वं सर्वसौख्यप्रवर्धिनीम् । समः शत्रौ च मित्रे च यथाऽऽत्मनि तथा परे
भवस्व नियतो नित्यं जिताहारो जितेन्द्रियः । मैत्रं नैव प्रकर्तव्यं वैरं दूरं परित्यज ॥ १४
निःसङ्गो निस्पृहो भूत्वा एकान्तस्थानसंश्रयः । सर्वप्रकाशको ज्ञानी सर्वदर्शी भविष्यसि ॥ १५
एकस्थानस्थितो वत्स त्रैलोक्ये यद्भविष्यति । वृत्तान्तं वेत्स्यसि त्वं तु मत्प्रसादान्न संशयः ॥ १६

कुञ्जल उवाच—

सिद्धेन तेन मे विप्र ज्ञानरूपं प्रकाशितम् । तस्य वाक्ये स्थितो नित्यं तद्भावेनापि भावितः १७
त्रैलोक्ये वर्तते यद्यदेकस्थानस्थितो ह्यहम् । तत्तदेव प्रजानामि प्रसादात्तस्य सद्गुरोः ॥ १८
तत्ते सर्वं समाख्यातमात्मवृत्तान्तमेव हि । अन्यत्किं ते प्रवक्ष्यामि तद्ब्रूहि द्विजसत्तम ॥ १९

च्यवन उवाच—

कीरयोनिं कथं प्राप्तो भवाञ्ज्ञानवतां वरः । तन्मे त्वं कारणं ब्रूहि सर्वसंदेहनाशनम् ॥ २०

कुञ्जल उवाच—

संसर्गाज्जायते पापं संसर्गात्[3]पुण्यमेव वा । तस्माद्धि वर्जयेच्छुद्धो भव्यो[4] विरुद्धमेव च ॥ २१
लुब्धकेनापि पापेन केनाप्येकः शुकः शिशुः । बन्धयित्वा समानीतो विक्रयार्थं समुद्यतः ॥ २२
चाटुकारं सुरूपं तं चाटुवाक्यं समीक्ष्य च । गृहीतो ब्राह्मणेकेन मम दत्तः सुप्रीतये ॥ २३
ज्ञानध्यानस्थितो नित्यमहमेवं द्विजोत्तम । स मे बालस्वभावेन कौतुकात्करसंस्थितः ॥ २४
तस्य कौतुकवाक्यैर्वा मुग्धोऽहं द्विजसत्तम । शुकस्य पुत्ररूपस्य नित्यं तत्परमानसः ॥ २५
मामेवं वदते सोऽपि तात मामेहि आस्यताम् । स्थानं[6] गच्छ महाभाग देवानर्चय सांप्रतम् ॥२६
इत्यादिचाटुकैर्वाक्यैर्मामेवं परिभाषते । तस्य वाक्यविनोदेन विस्मृतं ज्ञानमुत्तमम् ॥ २७
पुष्पार्थं फलभोगार्थं गतोऽहं वनमेव हि । नीतः शुको बिडालेन मम दुःखाय केवलम् ॥ २८
अनृशंसैर्नृभिः सर्वैर्वयस्थैः साधुकारिभिः । बिडालेन हतः पक्षी तेनैव भक्षितो हि मे ॥ २९
श्रुत्वा मृत्युं गतं विप्र शुकं तं चाटुकारकम् । महता दुःखभावेन[7] असह्येनातिपीडितः ॥ ३०

---

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °ता मोहमा° । २ ङ. स्कन्धवर्जितम् । ३ क. ख. ङ. च. छ. झ. ढ. °र्गाद्धर्म एव हि । त° । ४ छ. भव्यं संसर्गमे° । ५ ग. घ. ज. ञ. ट. ठ. ड. पुण्येन । ६ क. ख. घ. ङ. च. छ. ट. ठ. ड. ढ. स्नानं । ७ क. ख. ङ. च. छ. ढ. °भारेण अ° ।

[ *तस्य दुःखेन मुग्धोऽस्मि तीव्रेणापि सुपीडितः ] । महता मोहजालेन बद्धोऽहं द्विजपुंगव ३१
प्रालपं रामचन्द्रेति शुकराजेति पण्डित । श्लोकराजेति तं विप्र मोहाच्चलितमानसः ॥ ३२
ततोऽहं दुःखसंतप्तः संजातः स्वेन कर्मणा । वियोगेनापि विप्रेन्द्र शुकस्य शृणु सांप्रतम् ॥ ३३
विस्मृतं तन्मया ज्ञानं सिद्धेनापि प्रकाशितम् । संस्मरञ्शुकसंज्ञानं तं शुकं चाटुकारकम् ॥ ३४
वत्स वत्सेति नित्यं वै प्रालपं शृणु भार्गव । गद्यपद्यमयैर्वाक्यैः संस्कृताक्षरसंयुतैः ॥ ३५
त्वां विना कश्च मां वत्स बोधयिष्यति सांप्रतम् । कथाभिस्तु विचित्राभिः पक्षिराज प्रसाद्य माम् ॥
अस्मिन्सुनिर्जनोद्याने विहाय क्व गतो भवान् । केन वै वत्स दोषेण तन्मे कथय सांप्रतम् ॥ ३७
एवंविधैरहं वाक्यैः करुणैस्तैस्तु मोहितः । एवमादि प्रलप्याहं शोकेनापि सुपीडितः ॥ ३८
मृतोऽहं तेन दुःखेन तद्भावेनापि मोहितः । मरणे यादृशो भावो मतिश्चाऽऽसीच्च यादृशी ॥ ३९
तादृशेनापि भावेन जातोऽहं द्विजसत्तम । गर्भवासो मया प्राप्तो ज्ञानस्मृतिविधायकः ॥ ४०
स्मृतं पूर्वकृतं कर्म स्वयमेव प्रचेष्टितम् । मया पापेन मूढेन किं कृतं ह्यकृतात्मना ॥ ४१
गर्भयोगसमारूढः पुनस्तं चिन्तयाम्यहम् । तेन मे निर्मलं ज्ञानं जातं तु सर्वदर्शकम् ॥ ४२
गुरोस्तस्य प्रसादाच्च प्राप्तं ज्ञानमनुत्तमम् । तस्य वाक्योदकैः स्वच्छैः कायस्य मलमेव मे ४३
सबाह्याभ्यन्तरं विप्र क्षालितं निर्मलं कृतम् । तिर्यक्त्वं च मया प्राप्तं शुकजातिसमुद्भवम् ॥ ४४
शुकस्य ध्यानभावेन मरणे समुपस्थिते । तस्मिन्काले मृतो विप्र तद्भावेनापि भावितः ॥ ४५
तादृशोऽस्मि पुनर्जातः शुकरूपो महीतले । मरणे यादृशो भावः प्राणिनां परिजायते ॥ ४६
तादृशाः स्युस्तु सत्त्वास्ते तद्रूपास्तत्पराक्रमाः । तद्गुणास्तत्स्वरूपाश्च भावभूता भवन्ति हि ४७
मृत्युकालस्य विप्रेन्द्र भावेनापि न संशयः । [†अतुलं प्राप्तवाञ्ज्ञानमहमत्र महामते ॥ ४८
तेन सर्वं विपश्यामि यद्भूतं यद्भविष्यति । वर्तमानं महाप्राज्ञ ज्ञानेनापि महामते ॥ ४९
सर्वं विदाम्यहं ह्यत्र संस्थितोऽपि न संशयः ।] तारणाय मनुष्याणां संसारे परिवर्तताम् ॥
नास्ति तीर्थं गुरुसमं बन्धच्छेदकरं द्विज ॥ ५०
एतत्ते सर्वमाख्यातं शृणु भार्गवनन्दन । यत्त्वया पृच्छितं विप्र तत्ते सर्वं प्रकाशितम् ॥ ५१
स्थलजाच्चोदकात्सर्वं बाह्यं मलं प्रणश्यति । जन्मान्तरकृतान्पापान्गुरुतीर्थं प्रणाशयेत् ॥
संसारे तारणायैव जङ्गमं तीर्थमुत्तमम् ॥ ५२

विष्णुरुवाच—

शुक एवं महाप्राज्ञश्च्यवनाय महात्मने । तत्त्वं *प्रकाशयित्वा तु विरराम नृपोत्तम ॥ ५३
[+एतत्ते सर्वमाख्यातं जङ्गमं तीर्थमुत्तमम्] । वरं वरय भद्रं ते यद्वै मनसि वर्तते ॥ ५४

वेन उवाच—

नाहं राज्यस्य कामार्थी नान्यत्किंचित्प्रकामये । सदेहो गन्तुमिच्छामि तव कायं जनार्दन ॥
एवं वरमहं मन्ये यदि दातुमिहेच्छसि ॥ ५५

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च छ. झ. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. घ. च. छ. झ. ट. ठ. ड. पुस्तकस्थः । * इदमार्षम् । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. ङ. च. झ. ढ. ॰न दग्धो॰ । २ छ. झ. ॰स्मिन्मुनिजनो॰ ।

विष्णुरुवाच—

यज त्वमश्वमेधेन राजसूयेन भूपते । गोभूस्वर्णाम्बुधान्यानां कुरु दानं महामते ॥ ५६
दानान्नश्यति वै पापं ब्रह्मवध्यादिघोरकम् । चतुर्वर्गस्तु दानेन सिध्यत्येव न संशयः ॥ ५७
तस्माद्दानं प्रकर्तव्यं मामुद्दिश्य च भूपते । यादृशेनापि भावेन मामुद्दिश्य ददाति यः ॥ ५८
तादृशं तस्य वै भावं सत्यमेवं करोम्यहम् । ऋषीणां दर्शनात्स्पर्शान्नष्टस्ते पापसंचयः ॥ ५९
आगमिष्यसि यज्ञान्ते मम देहं न संशयः । एवमाभाष्य तं वेनमन्तर्धानं गतो हरिः ॥ ६०

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने गुरुतीर्थे त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥,

आदितः श्लोकानां समष्ट्यङ्काः—९००४

---

अथ चतुर्विंशत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

अन्तर्धानं गते विष्णौ वेनो राजा महामतिः । क्व गतो देवदेवेश इतिचिन्तापरोऽभवत् ॥ १
हर्षेण महताऽऽविष्टश्चिन्तयित्वा नृपोत्तमः । समाहूय पृथुं चैव स्वपुत्रं मधुराक्षरैः ॥ २
उवाच च महाभागो हर्षेण महताऽऽवृतः । त्वया पुत्रेण भूर्लोके तारितोऽस्मि सुपातकात् ॥ ३
नीत उज्ज्वलतां वत्स वंशो मे सांप्रतं पृथो । मया विनाशितो दोषैस्त्वया चैव प्रकाशितः ॥ ४
यजेऽहं चाश्वमेधेन दास्ये दानान्यनेकशः । विष्णुलोकं प्रयास्यामि सकायस्त्वत्प्रसादतः ॥ ५
संभरस्व महाभाग संभारांश्चाप्यनुत्तमान् । आमन्त्रय महाभागान्ब्राह्मणान्वेदपारगान् ॥ ६
एवं पृथुः समादिष्टो वेनेनापि महात्मना । प्रत्युवाच महात्मा स वेनं पितरमादरात् ॥ ७
कुरु राज्यं महाभाग भुङ्क्ष्व भोगान्मनोनुगान् । सुदिव्यान्मानुषान्पुण्यान्यज्ञैर्यज जनार्दनम् ॥ ८
[+एवमुक्त्वा प्रणम्यैनं पितरं ज्ञानतत्परम् ]। धनुरादाय स पृथुः सत्राणं[3] यत्नपूर्वकम् ॥ ९
आदिदेश वरान्सर्वान्घोषध्वं भूतले मम । पापमेवं न कर्तव्यं कर्मणा नियमेन वै ॥ १०

---

+एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः ।

---

१ क. ख. घ. ङ. च. छ. झ. ट. ठ. ड. ढ. °ते । दानैर्यज्ञैश्च भूयस्त्वमन्नाद्यैः शुभदायकैः । पश्चादागच्छ मे कायं सुखी भव गतज्वरः । एवमाभाष्य तं वेनमन्तर्धानं गतो हरिः । हर्षेण महताऽऽविष्टो वेनराजा महामतिः । क्व गतो देवदेवेश इति चिन्त्य मुहुर्मुहुः ॥

इति श्रीपद्मपुराणे गुरुतीर्थाख्यानं समाप्तम् ॥

व्यास उवाच—

विष्णुना देवदेवेन समाख्यातमनुत्तमम् । धर्माख्यानं महापुण्यं सर्वपातकनाशनम् । तीर्थानां जङ्गमानां हि सङ्घं प्रत्ययकारकम् । स वेनः किं चकाराथ तन्मे कथय पद्मज ।

ब्रह्मोवाच—

पुनरुवाच जगन्नाथो नारायणो नृपोत्तमम् । यज त्वमश्वमेधेन दद दानं महामते । दानान्नश्यन्ति ते पापा अघोरा गतिनाशकाः । हस्तिहत्यादिका राजंस्तस्माद्दानं प्रदीयते । चतुर्वर्गस्तु दानेन सिध्यते नात्र संशयः । तस्माद्दानं प्रदातव्यं मामुद्दिश्य नरोत्तम । यादृशेनापि भावेन मामुद्दिश्य ददाति यः । तादृशं तस्य भावेन सत्यमेकं करोम्यहम् । ऋषीणां दर्शनात्स्पर्शान्नष्टं ते पातकं नृप । पश्चाद्भवान्समागच्छ गेहं च मम संनिधौ । एवमुक्त्वा हृषीकेशो अन्तर्धानं गतस्ततः । हर्षेण ।

२ क. ख. घ. ङ. च. छ. झ. ठ. ढ. महाभाग । ३ क. ख. ङ. च. छ. झ. ड. ढ. त्रिविधेन ।

करिष्यति च यः पापमाज्ञां वेनस्य भूपते। उल्लङ्घ्य वध्यतां सोऽपि यास्यते नात्र संशयः॥ ११
दानमेवं प्रदातव्यं यज्ञैश्चैव जनार्दनम्। यजध्वं मानवाः सर्वे तन्मनस्का विमत्सराः॥ १२
एवं शिक्षां तु दत्त्वा च राज्यं भृत्येषु वेनजः। निक्षिप्य स गतो विप्रास्तपसोऽर्थे तपोवनम्॥ १३
सर्वान्दोषान्परित्यज्य संयम्य विषयेन्द्रियान्। शतवर्षप्रमाणं वै निराहारो बभूव ह॥ १४
तपसा तस्य वै तुष्टो ब्रह्मा पृथुमुवाच ह। तपस्तपसि कस्मात्त्वं तन्ममाऽऽचक्ष्व सुव्रत॥ १५

पृथुरुवाच—

अहो वेनो महाप्राज्ञः पिता मे कीर्तिवर्धनः। [*समाचरति यः पापमस्य राज्ये नराधमः॥ १६
शिरश्छेत्ता भवत्वेष तस्य देवो जनार्दनः]। अदृष्टैश्च महाचक्रैर्हरिः शास्ता भवेत्स्वयम्॥ १७
मनसा कर्मणा वाचा कर्तुं वाञ्छन्ति पातकम्। तेषां शिरांसि त्रुट्यन्तु शक्रवृक्षफलं यथा॥ १८
एतदेव वरं मन्ये शृणु त्वत्तः सुरेश्वर। प्रजानां दोषभावैश्च न लिप्यति पिता मम॥ १९
तथा कुरुष्व देवेश यदि भद्रमिहेच्छसि। ददस्व उत्तमं कामं चतुर्मुख नमोऽस्तु ते॥ २०

ब्रह्मोवाच—

एवमस्तु महाभाग पिता ते पूततां गतः। विष्णुना शासितो वत्स पुत्रेणापि त्वया पृथो॥ २१
एवं पृथुं समुद्दिश्य वरं दत्त्वा गतो विभुः। पृथुश्चापि महाप्राज्ञो राज्यकर्मणि संस्थितः॥ २२
वैन्यस्य राज्ये विप्रेन्द्राः पापं कश्चिन्न चाऽऽचरेत्। यस्तु चिन्तयते पापं त्रिविधेनापि कर्मणा॥ २३
शिरश्छेदो भवेत्तस्य यथा चक्रैर्निकृन्तितः। तदाप्रभृति वै पापं नैव कोऽपि समाचरेत्॥ २४
इत्याज्ञा वर्तते तस्य वैन्यस्यापि महात्मनः। सर्वलोकाः समाचारैः परिवर्तन्ति नित्यशः॥ २५
दानभोगैः प्रवर्तन्ते सर्वधर्मपरायणाः। सर्वसौख्यैः प्रवर्धन्ते प्रसादात्तस्य भूपतेः॥ २६

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने चतुर्विंशत्यधिकशततमोऽध्यायः॥ १२४॥

आदितः श्लोकानां समष्ट्यङ्काः—९०३०

---

अथ पञ्चविंशत्यधिकशततमोऽध्यायः।

---

सूत उवाच—

वेनस्याऽऽज्ञां समाप्राप्य पूतः परमधार्मिकः। संबभार स संभारान्नानापुण्यान्नृपात्मजः॥ १
निमन्त्र्य ब्राह्मणान्सर्वान्नानादेशोद्भवानथ। अथ वेन इयाजासावश्वमेधेन भूपतिः॥ २
दानान्यदाद्ब्राह्मणेभ्यो नानारूपाण्यनेकशः। जगाम वैष्णवं लोकं सकायो जगतीपतिः॥ ३
विष्णुना सह धर्मात्मा नित्यमेव प्रवर्तते। एतद्वः सर्वमाख्यातं चरितं तस्य भूपतेः॥ ४
सर्वपापोपशमनं सर्वदुःखविनाशनम्। पृथुरेवं स धर्मात्मा राज्यं पृथ्व्याश्चकार ह॥ ५
त्रैलोक्येन समं पृथ्वीं दुदोह नृपसत्तमः। प्रजाऽनुरञ्जिता तेन पुण्यधर्मानुकर्मभिः॥ ६
एतत्ते सर्वमाख्यातं भूमिखण्डमनुत्तमम्। प्रथमं सृष्टिखण्डं हि भूमिखण्डं द्वितीयकम्॥ ७
भूमिखण्डस्य माहात्म्यं कथयिष्याम्यहं पुनः। अस्य खण्डस्य वै श्लोकं यः शृणोति नरोत्तमः॥ ८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ड. ढ. पुस्तकस्थः।

---

१ अ. न्तु शक्रवृ°। ट. °न्तु शिशवृ°। घ. ठ. °न्तु संशवृ°। २ क. ख. ङ. छ. झ. ड. ढ. पृथुः। ३ ड. °र्मार्थक°।

ऽदैनस्यैकस्य वै पापं तस्य चैव प्रणश्यति । यो नरो भावसंयुक्तो ह्यध्यायं शृणुते सुधीः ॥ ९
तस्य पुण्यं प्रवक्ष्यामि श्रूयतां द्विजसत्तमाः । दत्तस्य गोसहस्रस्य ब्राह्मणेभ्यः सुपर्वणि ॥ १०
यत्फलं तत्प्रजायेत विष्णुश्चैव प्रसीदति । अस्य पद्मपुराणस्य पठमानस्य नित्यशः ॥ ११
कलौ युगे सुविघ्नाश्च जायन्ते तस्य नो कदा ॥ १२

व्यास उवाच—

कस्मात्कलौ प्र(न)जायन्ते शृण्वानस्य च पद्मज । नरस्य पुण्यपकस्य नाना विघ्नाः सुदारुणाः ॥

ब्रह्मोवाच—

मखस्याप्यश्वमेधस्य यत्फलं परिकथ्यते । तत्फलं दृश्यते विप्राः पुराणे पद्मसंज्ञके ॥ १४
अश्वमेधमखः पुण्यः कलौ नैव प्रवर्तते । पुराणं चापि यत्तद्वदश्वमेधसमं किल ॥ १५
अश्वमेधस्य यत्पुण्यं स्वर्गमोक्षफलप्रदम् । न भुञ्जन्ति नराः पापाः पापमार्गेषु संस्थिताः ॥ १६
पुराणस्यास्य च फलं पद्मसंज्ञस्य सत्तमाः । अश्वमेधस्य यत्पुण्यं [*स्वर्गमोक्षफलप्रदम् ॥ १७
न भुञ्जन्ति नराः पापाः पापमार्गेषु संस्थिताः । पुराणस्यास्य पुण्यस्य पद्मसंज्ञस्य सत्तम ॥ १८
कलौ युगे नरैः पापैर्गन्तव्यं नरकार्णवम् । तस्माच्छ्रोष्यन्ति तत्पुण्यं] चतुर्वर्गप्रसाधकम् ॥ १९
येन श्रुतमिदं पुण्यं पुराणं पद्मसंज्ञकम् । सर्वं हि साधितं तेन चतुर्वर्गस्य कारणम् ॥ २०
अश्वमेधस्य यज्ञस्य फलं तस्य प्रजायते† । शृण्वानस्य नरस्यापि महाविघ्नो न संचरेत् ॥ २१
अश्रद्धा जायते चापि पाठकस्य नरस्य च । लोभश्च जायते तस्य श्रावकस्य द्विजोत्तमाः ॥ २२
प्रेषिता देवदेवेन महामोहाः सुदारुणाः । अकरोत्स विनाशं तु शृण्वतश्चास्य नित्यशः ॥ २३
दूषकाः कुत्सकाः पापाः संभवन्ति दिने दिने । ज्ञातव्यं तु सुशुद्धेन विघ्नरूपं ममाधुना ॥ २४
[*संजातं दृश्यते व्यास तथा होमं समाचरेत् । ] वैष्णवैश्च महामन्त्रैर्विष्णुसूक्तैः सुपुण्यदैः २५
विष्ण्वाराधनमन्त्रेण सहस्रशीर्षकेण च । इदं विष्णुरित्यनेन आब्रह्मेण पुनः पुनः ॥ २६
त्र्यम्बकेण च मन्त्रेण [+होममेव समाचरेत् । बृहत्साम्ना सुमन्त्रेण ] द्वादशाक्षरकेण वा ॥ २७
यस्य देवस्य यो होमस्तस्य मन्त्रेण होमयेत् । अष्टोत्तरतिलाज्यैश्च पालाशैः समिधैरपि ॥ २८
विघ्नेशं पूजयेत्पूर्वं शारदां च सुरेश्वरीम् । ग्रहाणामपि कर्तव्यं स्थापनं पूजनं द्विजाः ॥ २९
जातवेदोमहामायां चण्डिकां क्षेत्रनायकम् । तिलैश्च तण्डुलैराज्यैस्तेषामन्नसमुद्भवैः ॥ ३०
एवं होमः प्रकर्तव्यो ब्राह्मणेभ्यो धनार्पणम् । यथासामर्थ्यमेवापि दक्षिणा धेनुसंयुताः ॥ ३१
ततो विघ्नाः प्रणश्यन्ति पुराणं सिद्धिमाप्नुयात् । एवं न कुरुते यस्तु तस्य विघ्नं वदाम्यहम् ३२
तस्याङ्गे जायते रोगो बहुपीडाप्रदायकः । भार्याशोकः पुत्रशोको धनहानिः प्रजायते ॥ ३३
नानाविधान्महारोगान्भुञ्जते नात्र संशयः । यस्य गेहे नास्ति वित्तमुपवासं समाचरेत् ॥ ३४
एकादशीं स संप्राप्य पूजयेन्मधुसूदनम् । उपचारैः षोडशभिर्भावयुक्तेन चेतसा ॥ ३५

*एतच्चिह्नान्तर्गतः पाठः, ङ. छ. झ. ड. ढ. पुस्तकस्थः । †एतदग्रे क. ख. ङ. च. छ. झ. ड. ढ. पुस्तकेषु 'अश्वमेधादयो यज्ञाः कस्माभ्रष्टा महामते । कलौ युगे तु ते सर्वे सर्वदा साङ्गसुस्वराः । यः कोऽपि शत्रुसंपन्नः श्रद्धावान्भावतत्परः । श्रोतुमिच्छति धर्मात्मा सपुत्रो भार्यया सह । श्रवणार्थे महाश्रद्धा पूर्वे यत्र प्रजायते' इत्यधिकं दृश्यते । * एतच्चिह्नान्तर्गतः पाठः क. ख. घ. ङ. च. छ. झ. ट. ट. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च छ. झ. ढ. पुस्तकस्थः ।

१ क. ख. ङ. ड. ढ यो ऽन्तरे भा° । २ क. ख. च. प्रायः । घ. छ. ठ. तात । ३ क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. ड. ढ. विष्णोरराटम° ।

आम्रपर्णान्भोजयेद्यस्तु यथावित्तानुसारतः। केशवाय ततो दत्त्वा संकल्प्य हविषाऽन्वितम्॥ ३
स्वयं कुर्यात्ततः प्राज्ञो भोजनं सह बान्धवैः। पुत्रैश्च भार्यया युक्तस्ततः सिद्धिमवाप्नुयात्॥ ३
पुराणसंहिता पूर्णा श्रोतव्या धर्मतत्परैः। चतुर्वर्गस्य वै सिद्धिर्जायते तस्य नान्यथा॥ ३
सपादं लक्षमेकं तु ब्रह्माख्यं पुष्करं शृणु। कृते युगे तु निष्पापाः शृण्वन्ति मनुजा द्विजाः॥ ३
लक्षस्यार्धं ततः कृत्स्नं पुराणं पद्मसंज्ञकम्। श्लोकानां तु सहस्राभ्यां द्वाभ्यामेव तथाऽधिकम्॥ ४
त्रेतायुगे तथा प्राप्ते शृण्वन्ति मनुजा द्विजाः। चतुर्वर्गफलं भुक्त्वा ते यास्यन्ति हरिं पुनः॥ ४
द्वाविंशतिसहस्राणां संहिता पद्मसंज्ञका। द्वापरे कथिता विप्र ब्रह्मणा परमात्मना॥ ४
द्वादशैव सहस्राणां पद्माख्यां च सुसंहिताम्। कलौ युगे पठिष्यन्ति मानुषा विष्णुतत्पराः॥ ४
एकोऽर्थश्चैकभावश्च चतुर्ष्वपि प्रवर्तितः। संहितास्वपि विप्रेन्द्राः शेषाख्यानप्रविस्तरः॥ ४
द्वादशैव सहस्राणि नाशं यास्यन्ति सत्तमाः। कलौ युगे तु संप्राप्ते प्रथमं हि भविष्यति॥ ४
भूमिखण्डं नरः श्रुत्वा सर्वपापैः प्रमुच्यते। रोगैर्दुःखैः शत्रुभिश्च विमुक्तः सुखमाप्नुयात्॥ ४
अन्यत्सर्वं परित्यज्य जपं दानं तथा श्रुतम्। श्रोतव्यं हि प्रयत्नेन पद्माख्यं पापनाशनम्॥ ४
प्रथमं सृष्टिखण्डं हि भूमिखण्डं द्वितीयकम्। तृतीयं स्वर्गखण्डं च पातालं तु चतुर्थकम्॥ ४
पञ्चमं चोत्तरं खण्डं सर्वपापप्रणाशनम्। यः शृणोति नरो भक्त्या पञ्च खण्डान्यनुक्रमात्॥ ४
सहस्रगोप्रदानस्य मानवो लभते फलम्। महाभाग्येन लभ्यन्ते पञ्च खण्डानि भूसुराः॥
श्रुतानि मोक्षदानि स्युः सत्यं सत्यं न संशयः॥ ५

इति श्रीमहापुराणे पाद्मे भूमिखण्डे वेनोपाख्याने पञ्चविंशत्यधिकशततमोऽध्यायः॥ १२५॥

इति श्रीमहामुनिव्यासप्रणीते महापुराणे पाद्मे द्वितीयं भूमिखण्डं समाप्तम्।

अध्यायानामादितः समष्ट्यङ्काः—१८७

आदितः श्लोकानां समष्ट्यङ्काः—९०८०




प्रश्नोपनिषद्दीपिका च, एतत्पुस्तकद्वयमानन्दाश्रमस्थपण्डितैः संशोधितम् । १ ०

९ मुण्डकोपनिषत्सटीकशांकरभाष्योपेता, नारायणविरचिता मुण्डकोपनिषद्दीपिका च, एतत्पुस्तकद्वयमानन्दाश्रमस्थपण्डितैः संशोधितम् । ० १०

१० सगौडपादीयकारिकाथर्ववेदीयमाण्डूक्योपनिषत्सटीकशांकरभाष्योपेता, अहमदाबादनाम्नि नगरे संस्कृताध्यापकैः काथवटे इत्युपाह्वैः रा० रा० 'आबासाहेब इत्येतैः संशोधिता, आनन्दाश्रमस्थपण्डितैः संशोधिता शंकरानन्दविरचिता माण्डूक्योपनिषद्दीपिका च । २ ६

११ ऐतरेयोपनिषत्सटीकशांकरभाष्योपेता, विद्यारण्यविरचिता ऐतरेयोपनिषद्दीपिका च, एतत्पुस्तकद्वयमानन्दाश्रमस्थपण्डितैः संशोधितम् । १ ३

१२ तैत्तिरीयोपनिषत्सटीकशांकरभाष्योपेता, पण्डित वामनशास्त्री इस्लांपूरकर इत्येतैः संशोधिता । शंकरानन्दकृता तैत्तिरीयोपनिषद्दीपिका, तथा विद्यारण्यकृता तैत्तिरीयोपनिषद्दीपिका च, एतत्पुस्तकद्वयमानन्दाश्रमस्थपण्डितैः संशोधितम् । ३ ५

१३ तैत्तिरीयोपनिषद्भाष्यवार्तिकं सुरेश्वराचार्यकृतं सटीकमानन्दाश्रमस्थपण्डितैः संशोधितम् । २ २

१४ छान्दोग्योपनिषत्सटीकशांकरभाष्योपेता, 'आगाशे' इत्युपाह्वैर्बालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधिता । ५ ०

१५ बृहदारण्यकोपनिषत्सटीकशांकरभाष्योपेता, 'आगाशे' इत्युपाह्वैर्बालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधिता । ८ ०

१६ बृहदारण्यकोपनिषद्भाष्यवार्तिकमानन्दगिरिकृतटीकासमेतम् । एतत्पुस्तकम् 'आगाशे' इत्युपाह्वैर्बालशास्त्रितनूजैः काशीनाथशास्त्रिभिः संशोधितम् । तत्र केवलसंबन्धवार्तिकरूपः प्रथमो भागस्तस्य मूल्यम् । ३

१६ प्रथमाध्यायद्वितीयाध्यायरूपो द्वितीयो भागस्तस्य मूल्यम् । ८

( अस्यान्तिमाध्यायचतुष्टयं सांप्रतं मुद्रणावस्थायां वर्तते )

१७ कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषत्सभाष्या तथा च शंकरानन्दकृता श्वेताश्वतरोपनि[illegible]पिका, नारायणकृता

तरोपनिषद्दीपिका, विज्ञानभगवत्कृतं श्वेताश्वतरोपनिषद्विव-
रणम्, एतत्पुस्तकचतुष्टयमानन्दाश्रमस्थपण्डितैः संशोधितम् । २ १

१८ सौ[redacted]राणं, लेले इत्युपाह्वैः वे० शा० रा० काशीनाथशास्त्रिभिः
सं[redacted] । ३ ८

१९ [redacted]ः वैराजक्षेत्रनिवासिभिः रा० रा० बापटोपाह्वैः
[redacted]संशोधितः । ३ १२

[redacted]न्मुक्तिविवेकः वे० शा० रा० पणशी-
[redacted]संशोधितः । १ ३

[redacted]आनन्दगिरिकृतटीकासंवलित-
[redacted]नि च वे० शा० सं० रा०
[redacted] संशोधितानि । तत्र
प्रथ[redacted]पादद्वयं च, इत्येतद्द्वयं प्रथमो
भागस्त[redacted] ६ ०

२१ श्रीमद्द्वैपाय[redacted]यानन्दगिरिकृतटीकासंवलितशां-
करशारीरकभाष्य[redacted] । तेषां च द्वितीयाध्यायान्तिमपादद्वय-
समेततृतीयाध्यायचतुर्थाध्यायरूपो द्वितीयो भागस्तस्य मूल्यम् । ६ ०

२२ विद्यारण्यकृतः श्रीशंकरदिग्विजयो धनपतिसूरिकृतडिण्डिमा-
ख्यटीकयाऽद्वैतराज्यलक्ष्मीटीकान्तर्गतविशेषविभागटिप्पण्या
च समेत आनन्दाश्रमस्थपण्डितैः संशोधितः । ६ ०

२३ भारतीतीर्थमुनिप्रणीतो वैयासिकन्यायमालाविस्तरः, जयपुर-
महाराजाश्रितेन संस्कृतपाठशालाध्यापकेन वे० शा० दाधी-
चपण्डितशिवदत्तेन संशोधितः । १ १२

२४ श्रीमन्माधवप्रणीतो जैमिनीयन्यायमालाविस्तरः जयपुर-
महाराजाश्रितेन संस्कृतपाठशालाध्यापकेन वे० शा०
दाधीचपण्डितशिवदत्तेन संशोधितः । ८ ०

२५ स्कन्दपुराणान्तर्गता सूतसंहिता श्रीमाधवाचार्यकृतटीकोपेता वे०
[redacted]पाह्वैर्वासुदेवशास्त्रिभिः संशोधिता ।
[redacted] प्रथमो भागस्तस्य मूल्यम् । ३ ८

[redacted]ता श्रीमाधवाचार्यकृतटीकोपेता
[redacted]शास्त्रिभिः संशोधिता । तस्याश्चतु-
[redacted]विभागस्तस्य मूल्यम् । ४ ४

[redacted]मुद्रणावस्थायां वर्तते )

सांप्रतं मुद्रणावस्थायां वर्तमानानि पुस्तकानि ।

पालकाप्यमुनिविरचितो हस्त्यायुर्वेदग्रन्थः, जयपुरमहाराजाश्रितेन संस्कृतपाठशालाध्यापकेन वे० शा० दाधीचपण्डितशिवदत्तेन संशोधितः। (मुद्रितप्रायः)

धन्वन्तरीयनिघण्टू राजनिघण्टुसहितो भाषाषट्कगतपर्यायशब्दसमेतद्रव्यावलिवर्णानुक्रमकोशसहितः सपरिशिष्टश्च, वे० शा० रा० रा० वैद्योपनामकैर्नारायणशास्त्रिभिः संशोधितः । ( मुद्रितप्रायः )

कुसुमावल्याख्यटीकासंवलितो वृन्दमाधवः ।

---

एतत्स्थूलवर्णपङ्क्तेरधो यानि पुस्तकानि क्रमशः प्रदत्तानि सन्ति, तान्यस्माभिः सांप्रतं संशोध्यन्ते । अतस्तानि पुस्तकान्येष्वन्यतमं वा यस्य कस्यापि सकाशे स्याच्चेत्, तर्हि तेनावश्यमस्मत्सकाशं प्रेषणीयम् । तेनास्मदुपरि तस्य महत्युपकृतिः स्यात् । वयमपि तस्य तत्पुस्तकं शोधनमुद्रणानन्तरं मुद्रितपुस्तकसमेतं प्रेषयिष्यामः ।

श्रीशार्ङ्गदेवकृतः संगीतरत्नाकरश्चतुरकल्लिनाथविरचितटीकासमेतः ।

वराहमिहिरविरचिता बृहत्संहिता भट्टोत्पलकृतटीकासमेता ।

अपरार्ककृतटीकासमेता याज्ञवल्क्यस्मृतिः ।

तैत्तिरीयशाखीयानां संहिताब्राह्मणारण्यकानि श्रीमत्सायणाचार्यकृतभाष्यसमेतानि ।

विद्यारण्यकृता छान्दोग्योपनिषद्दीपिका बृहदारण्यकोपनिषद्दीपिका च ।

नित्यानन्दकृता बृहदारण्यकोपनिषन्मिताक्षरा ।

अष्टादशपुराणान्तर्गतं ब्रह्मपुराणम् ।

तथा नानाविधाः शतसंख्यामिता उपनिषदश्च ।

( इत्येतानि पुस्तकानि सांप्रतं संशोध्यन्ते )

भवति । यदा च द्वित्रमासैर्ग्रन्थः परिपूर्णो भवति तदैव सर्वेभ्यो ग्राहकेभ्यो दीयते । नियतग्राहकेभ्य आनन्दाश्रमस्थमुद्रितशतपृष्ठानां मूल्यं द्वादशाणका गृह्यन्ते । तेषां पुस्तकप्रेषणाद्यर्थं धनव्ययो नैव भवति । अनियतग्राहकेभ्यस्तु शतपृष्ठानां मूल्यमेको रूपकः । पुस्तकप्रेषणाद्यर्थं धनं च गृह्यते । पुस्तकमूल्यग्रहणं पुस्तकप्रेषणात्पूर्वं पश्चाद्वा न, किंतु पुस्तकप्रापणसमय एव । नियतानियतग्राहकेभ्यः पुस्तकानि व्हालुपेबलपोष्टमार्गेण प्रेष्यन्ते ।

केवलदशोपनिषदां पुस्तकान्यपि सदैवास्माभिर्दीयन्ते, तेषां मूल्यं सार्धैकविंशतिरूपकाः सन्ति, तथा दशोपनिषदः, अधिकरणमालासमेतशारीरशांकरभाष्यं चेति प्रस्थानद्वयमपि सदैव दीयते तस्य मूल्यं त्रयस्त्रिंशद्रूपकाः । पुस्तकप्रेषणार्थं धनं तु ग्राहकसकाशादेव गृह्यते । पुस्तकानि व्हालुपेबलपोष्टमार्गेण प्रेष्यन्ते । तस्य धनव्ययोऽपि ग्राहकसकाशादेव गृह्यते ।

एतद्ग्रन्थावलीगतपुस्तकग्रहणेच्छुभिः पुण्यपत्तनस्थानन्दाश्रममुद्रणालये, अथवा मुंबापुर्यां श्री० रा०रा० 'महादेव चिमणाजी आपटे' इत्येतेषां गृहे तथा तत्रैव मुंबापुर्यां 'ज्येष्ठाराम मुकुंदजी' इत्येतेषां रामवाडीसंज्ञकचतुष्पथस्थितपुस्तकविक्रयणालये पत्रं प्रेषणीयम् । परं च केवलदशोपनिषत्पुस्तकग्रहणेच्छुभिः प्रस्थानद्वयग्रहणेच्छुभिश्च, आनन्दाश्रममुद्रणालये वाऽस्मद्गृह एव पत्रं प्रेषणीयम् । ग्राहकाणां पत्रप्रापणसमय एवाविलम्बेन पुस्तकक्रयणनियुक्तजनेभ्यः पुस्तकप्रेषणं भविष्यति ।

महादेव चिमणाजी आपटे,
बी. ए. एल्. एल्. बी.,
मुंबई युनिव्हर्सिटीचे फेलो, व मुंबई हायकोर्टाचे वकील.

---






ॐ तत्सद्ब्रह्मणे नमः ।

महामुनिश्रीमद्व्यासप्रणीतं

# पद्मपुराणम् ।

( तत्र तृतीयं ब्रह्मखण्डं चतुर्थं पातालखण्डं चेत्येतद्द्वयरूपो द्वितीयो भागः )

एतत्पुस्तकं कै० श्री० रावसाहेब मण्डलीकेत्युपनामधारिभिः
विश्वनाथ नारायण इत्येतैः
महता परिश्रमेण बहुतराणि पुस्तकानि मेलयित्वा
सपाठान्तरनिर्देशं संशोधितम् ।

तच्च
महादेव चिमणाजी आपटे
इत्यनेन
पुण्याख्यपत्तने
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।


शालिवाहनशकाब्दाः १८१५
खिस्ताब्दाः १८९४



( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः )


मूल्यं समग्रग्रन्थस्य चतुर्विंशतिरूपकाः ।

# अथ पद्मपुराणान्तर्गताध्यायविषयानुक्रमः ।

## तत्र तृतीयं ब्रह्मखण्डम् ।

---

# अथ चतुर्थं पातालखण्डम्।

॥ श्रीः ॥

महामुनिश्रीव्यासप्रणीतं

# पद्मपुराणम् ।

## तत्र तृतीयं ब्रह्मखण्डम् ।

अथ प्रथमोऽध्यायः ।

शौनक उवाच—

कलौ समागते सूत प्राणिनां केन कर्मणा । उद्धारो वै भवेत्तस्मात्कथयस्व ममाग्रतः ॥

सूत उवाच—

साधु साधु मुनिश्रेष्ठ पुण्यात्मनां वरो भवान् । सर्वेषां च जनानां च शुभवाञ्छो निरन्तरम् ॥ २

एतद्व्यासः पुरा विप्रः सर्वज्ञः सर्वपूजितः । पृष्टो जैमिनिना तं स यदाह शृणु वैष्णव ॥ ३

दण्डवत्प्रणिपत्यासौ व्यासं सर्वार्थपारगम् । गुरुं सत्यवतीसूनुं पप्रच्छ मुनिपुङ्गवः ॥ ४

जैमिनिरुवाच—

कलौ नृणां भवेत्केन मोक्षो वै कथयस्व मे । अल्पेनापि च पुण्येन मर्त्याश्चाल्पायुषो यतः ॥ ५

व्यास उवाच—

साधुसङ्गाद्भवेद्विप्र शास्त्राणां श्रवणं प्रभो । हरिभक्तिर्भवेत्तस्मात्ततो ज्ञानं ततो गतिः ॥ ६

न रोचते कथा भूमौ पापिष्ठाय जनाय वै । वैष्णवी स तु विज्ञेयः पापिष्ठप्रवरो द्विजः ॥ ७

श्रीकृष्णस्य कथां श्रुत्वाऽऽनन्दी भवति वैष्णवः । असत्यां[1] तां तु यो ब्रूयाज्ज्ञेयः स पापिनां गुरुः

यस्मिन्यस्मिन्स्थले विप्र कृष्णस्य वर्तते कथा । तस्मात्तस्माज्जगन्नाथो याति त्यक्त्वा न कर्हिचित्

कृष्णस्य यः कथारम्भे कुर्याद्विघ्नं नराधमः । नरकान्निष्कृतिर्नास्ति मन्वन्तरशतावधि ॥ १०

ये पुराणकथां श्रुत्वा निन्दन्त्युपहसन्ति वै । तेषां करस्था नरका बहुक्लेशकराः सदा ॥ ११

जन्मान्तरार्जितं पापं तत्क्षणादेव नश्यति । श्रीकृष्णचरितं यो वै श्रोतुमिच्छां करोत्यपि ॥ १२

भक्त्या यो वै नरः[3] कुर्याच्छ्रीकृष्णचरितं तथा । न जाने श्रवणे तस्य का गतिर्वा भविष्यति १३

ब्रह्महत्यादिकं पापं परस्त्रीहरणं तथा । सुरापानं तथा स्तेयं सर्वं नश्यति पापिनः ॥ १४

पापं कृत्वा तु यो मर्त्यः पश्चात्पापं निवर्तयेत् । तस्य पापं व्रजेन्नाशमग्निना तूलराशिवत् ॥ १५

श्रीकृष्णचरितं विप्र तिष्ठेद्वै पुस्तकं[4] गृहे । तस्य गृहसमीपं हि नाऽऽयान्ति यमकिंकराः ॥ १६

जैमिनिरुवाच—

वदन्ति वैष्णवान्कांश्च वाञ्छा ब्रूहि गुरो मम । इदानीं तान्समाज्ञातुं तेषां माहात्म्यमुत्तमम् ॥ १७

व्यास उवाच—

यो नरो मस्तके भक्त्या वैष्णवाङ्घ्रिजलं द्विज । करोति सेचनं[5] पापी तीर्थस्नानेन तस्य किम् १८

---

१ झ. पुण्यज्ञानव॰ । २ ज. ॰सद्वार्ता तु ३ झ. ॰पं पुराणं नाशयेत्तथा । ४ ज. पुस्तके । ५ ख. ज. झ. सेवनं ।

साधुसङ्गं तु यः कुर्यात्क्षणं वाऽर्धक्षणं द्विज । तस्य नश्यन्ति पापानि ब्रह्महत्यामुखानि च ॥ १९
यत्र यत्र कुले चैव एको भवति वैष्णवः । कुलं तस्य यदा पापैर्युक्तं तन्मोक्षगामि वै ॥ २०
हिंसादम्भकामक्रोधैर्वर्जिताश्चैव ये नराः । लोभमोहपरित्यक्ता ज्ञेयास्ते वैष्णवा द्विज ॥ २१
पितृभक्ता दयायुक्ताः सर्वप्राणिहिते रताः ॥ अमत्सरा वैष्णवा ये विज्ञेयाः सत्यभाषिणः २२
विप्रभक्तिरता ये च परस्त्रीषु नपुंसकाः । [*एकादशीव्रतरता विज्ञेयास्ते च वैष्णवाः] ॥ २३
[†गायन्ति हरिनामानि तुलसीमाल्यधारकाः]। हर्यङ्घ्रिसलिलैः सिक्ता विज्ञेयास्ते च वैष्णवाः २४
श्रोत्रयोर्मस्तके येषां तुलस्याः पर्णमुत्तमम् । कर्हिचिद्दृश्यते विप्र विज्ञेयास्ते च वैष्णवाः ॥ २५
पाखण्डसङ्गरहिता विप्रद्वेषविवर्जिताः । सिञ्चेयुस्तुलसीं ये च ज्ञातव्या वैष्णवा नराः ॥ २६
पूजयन्ति हरिं ये च तुलसीं चार्चयन्ति ये । कन्यादानरता ये च ये वै ह्यतिथिपूजकाः ॥ २७
शृण्वन्ति विष्णुचरितं विज्ञेया वैष्णवा नराः । यस्य गृहे सुप्रतिष्ठेच्छालग्रामशिलाऽपि च ॥ २८
मार्जयन्ति हरेः स्थानं पितृयज्ञप्रवर्तकाः । जने दीने दयायुक्ता विज्ञेयास्ते च वैष्णवाः ॥ २९
परस्वं ब्राह्मणद्रव्यं पश्यन्ति विषवच्च ये । हरिनैवेद्यमश्नन्ति विज्ञेया वैष्णवा जनाः ॥ ३०
वेदशास्त्रानुरक्ता ये तुलसीवनपालकाः । राधाष्टमीव्रतरता विज्ञेयास्ते च वैष्णवाः ॥ ३१
श्रीकृष्णपुरतो ये च दीपं यच्छन्ति श्रद्धया । परनिन्दां न कुर्वन्ति विज्ञेयास्ते च वैष्णवाः ॥ ३२

सूत उवाच—

पृष्टो जैमिनिना व्यास इत्युक्तः स यथाक्रमम् । मयेदं कथ्यते ब्रह्मन्यत्प्रसङ्गाद्गुरुश्रुतम् ॥ ३३
अध्यायं श्रद्धया युक्ता ये शृण्वन्ति नरोत्तमाः । सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम् ३४

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे व्यासजैमिनिसंवादे प्रथमोऽध्यायः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८३४

---

अथ द्वितीयोऽध्यायः ।

---

सूत उवाच—

शृणु शौनक वक्ष्यामि चान्यधर्मं पुरातनम् । व्यासजैमिनिसंवादं श्रोतॄणां पापनाशनम् ॥ १

जैमिनिरुवाच—

कर्मणा हि गुरो केन मन्दिरं जगतीपतेः । याति तत्कथयस्वाद्य नरः पापी च मे प्रभो ॥ २

व्यास उवाच—

श्रीकृष्णमन्दिरे यो वै लेपनं कुरुते नरः । सर्वपापविनिर्मुक्तश्चान्ते याति हरेर्गृहम् ॥ ३
यश्चाम्बुलेपनं कुर्यात्संज्ञया शृणु जैमिने । तस्य पुण्यमहं वच्मि मन्दिरे जगतीपतेः ॥ ४
तत्र यावन्ति पश्यन्ति रजांसि च द्विजोत्तम । तावत्कल्पसहस्राणि स वसेद्विष्णुमन्दिरे ॥ ५
पुराऽऽसीद्दण्डको नाम्ना चौरो लोकभयप्रदः । ब्रह्मस्वहारी मित्रघ्नो युगे द्वापरसंज्ञके ॥ ६
असत्यभाषी क्रूरश्च परस्त्रीगमने रतः । गोमांसाशी सुरापश्च पाखण्डजनसङ्गभाक् ॥ ७

---

* एतच्चिह्नान्तर्गतः पाठो ज. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः च. ज. ढ. पुस्तकस्थः ।

---

१ ढ. °लस्याश्च दलैर्द्विज । क° । २ ज. ढ. °श्चानुले° । ३ ङ. ढ. यानि न प° ।

वृत्तिच्छेदी द्विजातीनां न्यासापहारकस्तथा । शरणागतहन्ता च वेश्याविभ्रमलोलुपः ॥ ८
[*एकदा स द्विजश्रेष्ठ कस्यचिद्विष्णुमन्दिरम् । जगाम हरणार्थाय विष्णोर्द्रव्यं स मूढधीः ॥ ९
अथ द्वारि प्रविश्यासावङ्घ्रिकर्दमसंयुतम्] । प्रोज्झयामास वै निम्ने भूमौ देवगृहस्य च ॥ १०
तेनैव कर्मणा भूमिर्निम्नरिक्ता बभूव ह । लोहस्य च शलाकाभ्यामुद्धाट्यं त्वरं मुदा ॥ ११
प्रविवेश हरेर्गेहं वितानवरशोभितम् । रत्नकाञ्चनदीपालिपरिध्वस्तमहत्तमम् ॥ १२
नानापुष्पसुगन्धाढ्यं नानापत्रसमाकुलम् । सुवासितस्य तैलस्य गन्धेन परिपूरितम् ॥ १३
अनेन हारकेणाथ पर्यङ्के सुमनोहरे । शायितो राधया सार्धं दृष्टः पीताम्बरोऽच्युतः ॥ १४
प्रणम्य राधिकानाथं निष्पापः सोऽभवत्तदा । नेष्याम्यथ न नेष्यामि अनेन किं भवेन्मम १५
सेवां कर्तुमशक्तोऽहं यतश्चोरोऽस्मि सर्वदा । द्रव्येण कार्यमस्तीति तन्नेतुं कृतवान्मनः ॥ १६
पातयित्वांऽशुकं भूमौ कौशेयं कमलापतेः । बबन्ध वस्तुजातं च पाणौ कृत्वा स कम्पितः ॥ १७
विष्णोर्मायापतेश्चाथ तानि सर्वाणि जैमिने । कृत्वा शब्दं सुघोरं च पतितान्यथ भूतले ॥ १८
परित्यज्य सुनिद्रां च धावन्त इति किमहो । आगता बहुशो लोकाश्चौरो द्रव्यं जवेन च ॥ १९
त्यक्त्वा धनं च चौरोऽपि त्रस्तः किंचिज्जगाम ह । दंशितः कालसर्पेण मृतोऽसौ गतकिल्बिषः २०
यमाज्ञया तस्य दूताः पाशमुद्गरपाणयः । आगतास्तं समानेतुं दंष्ट्रिणश्चर्मवाससः ॥ २१
बबन्धुश्चर्मपाशेन निन्युर्दुर्गमवर्त्मना । दृष्ट्वा तं शमनः क्रुद्धः पप्रच्छ सचिवं प्रति ॥ २२

यम उवाच—

अनेन किं कृतं कर्म पापं वा पुण्यमेव वा । समूलं वद हे प्राज्ञ चित्रगुप्त ममाग्रतः ॥ २३

चित्रगुप्त उवाच—

सृष्टानि यानि पापानि विधात्रा पृथिवीतले । कृतान्यनेन मूढेन सत्यमेतन्मयोदितम् ॥ २४
किंत्वाकर्णय लोकेश सुकृतं चास्य वर्तते । मन्येऽहं यमुनाभ्रातः सर्वपापविलोपि तत् ॥ २५

धर्मराज उवाच—

किं पुण्यं वर्ततेऽमात्य वद सारं ममान्तिके । श्रुत्वैवं तद्विधास्यामि यत्र योग्यो भवेदसौ ॥ २६
यमस्य वचनं श्रुत्वा संभयश्चित्रगुप्तकः । कृत्वा हस्ताञ्जलिं प्राह चाऽऽत्मनः स्वामिने द्विज॥२७

चित्रगुप्त उवाच—

हरणार्थं हरेर्द्रव्यं गतोऽसौ पापिनां वरः । प्रोज्झितः कर्दमो राजन्पादयोर्द्वारतो हरेः ॥ २८
बभूव लिप्ता सा भूमिर्बिलच्छिद्रविवर्जिता । तेन पुण्यप्रभावेन निर्गतं पातकं महत् ॥
वैकुण्ठं प्रति योग्योऽसौ निर्गतस्तत्र दण्डतः ॥ २९

व्यास उवाच—

श्रुत्वा स वचनं तस्य पीठं कनकनिर्मितम् । ददौ तस्मै चोपविष्टस्तत्र पूज्यो यमेन सः ॥
ननाम शिरसा तं वै प्रोवाच विनयान्वितः ॥ ३०

यम उवाच—

पवित्रं मन्दिरं मेऽद्य पादयोस्त्वाद्धि रेणुभिः । कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि न संशयः

* एतच्चिह्नान्तर्गतः पाठः च. ज. ढ. पुस्तकस्थः ।

१ क. च. कृतिच्छेदी । २ ङ. °व्य स रहो मु° । ढ. °व्य सोऽररं मु° । ३ ज. °ज्य तु नि° । ४ ङ. °नं वनं चापि । ५ झ. सर्वे । ६ झ. सभायां चित्र° ।

इदानीं गच्छ भोः साधो हरेर्मन्दिरमुत्तमम् । नानाभोगसमायुक्तं जन्ममृत्युनिवारणम् ॥ ३२

व्यास उवाच—

इत्युक्त्वा धर्मराजोऽसौ स्यन्दने स्वर्णनिर्मिते । राजहंसयुते दिव्ये तमारोप्य गतैनसम् ॥ ३३

समस्तसुखदं स्थानं प्रेषयामास चक्रिणः । एवं प्रविष्टो वैकुण्ठे तत्र तस्थौ सुखं चिरम् ॥ ३४

लेपनं ये प्रकुर्वन्ति भक्त्या तु हरिमन्दिरे । तेषां किं वा भविष्यति न जानेऽहं द्विजोत्तम ॥ ३५

य इदं शृणुयाद्भक्त्या पठेद्यो वा समाहितः । कोटिजन्मार्जितं पापं नश्यते न च संशयः ॥ ३६

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे हरिमन्दिरलेपनमाहात्म्यवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९८७०

---

## अथ तृतीयोऽध्यायः ।

---

शौनक उवाच—

कार्तिकस्य च माहात्म्यं ब्रूहि सूत ममाग्रतः । तद्व्रतस्य फलं किं वा दोषः किं तदकुर्वतः ॥ १

सूत उवाच—

पुरैकदा मुनिश्रेष्ठ व्यासं सत्यवतीसुतम् । जैमिनिः पृष्टवानेतदारम्भे कथितं मुनिः ॥ २

व्यास उवाच—

[1]तिलतैलं मैथुनं यः शुभदे कार्तिके त्यजेत् । बहुजन्मकृतैः पापैर्मुक्तो याति हरेर्गृहम् ॥ ३

मत्स्यं च मैथुनं यो वै कार्तिके न परित्यजेत् । प्रतिजन्मनि संमूढः शूकरश्च भवेद्ध्रुवम् ॥ ४

कार्तिके तुलसीपत्रैः पूजयेद्वै जनार्दनम् । पत्रे पत्रेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥ ५

कार्तिके मुनिपुष्पैर्यः पूजयेन्मधुसूदनम् । देवानां दुर्लभं मोक्षं प्राप्नोति[2] कृपया हरेः ॥ ६

कार्तिके मुनिशाकं वै योऽश्नाति च नरोत्तमः । संवत्सरकृतं पापं शाकेनैकेन नश्यति ॥ ७

फलं तस्य नरोऽश्नाति चोर्जे यो वै हरिप्रिये । प्रदाय तु हरेर्ब्रह्मन्त्यजिनं कोटिजन्मजम् ॥ ८

सुरसं सर्पिषा युक्तं दद्याद्यो हरयेऽपि च । सर्वपापैर्विनिर्मुक्तः स गच्छेद्धरिमन्दिरम् ॥ ९

कार्तिके यो नरो दद्यादेकपत्रं हरावपि । अन्ते विष्णुपदं गच्छेत्सर्वपापविवर्जितः ॥ १०

प्रातःस्नानं नरो यो वै कार्तिके श्रीहरिप्रिये । करोति सर्वतीर्थेषु यः स्नात्वा तत्फलं लभेत् ११

कार्तिके यो नरो दद्यात्प्रदीपं नभसि द्विजः । विप्रहत्यादिभिः पापैर्मुक्तो गच्छेद्धरेर्गृहम् ॥ १२

मुहूर्तमपि यो दद्यात्कार्तिके प्रीतये हरेः । दीपं नभसि विप्रेन्द्र तस्मिंस्तुष्टः सदा हरिः ॥ १३

यो दद्याच्च गृहे दीपं कृष्णस्य सघृतं द्विज । कार्तिके चाश्वमेधस्य फलं स्याद्वै दिने दिने ॥ १४

प्रदीपस्य च माहात्म्यं विशेषमुच्यते मया । निशामय द्विजश्रेष्ठ सेतिहासं समाहितः ॥ १५

पूर्वं त्रेतायुगे विप्रो वैकुण्ठो नामतः शुचिः । यस्य सङ्गप्रभावेन मुक्तो भवति पातकी ॥ १६

एकदा कार्तिके सोऽपि प्रदीपं पुरतो हरेः । दत्त्वा गृहं गतो विप्रो घृतपूर्णं द्विजर्षभ ॥ १७

सर्पिस्तत्खादितुं चाऽऽखुरागतोऽपि प्रदीपतः । यावत्खादितुमारेभे बोधितोऽसौ प्रदीपकः ॥
मूषकोऽग्निभयात्तत्र वेगेनापि पलायितः ॥ १८

आखोश्च सकलं पापं विनष्टं कृपया हरेः । सर्पेण दंशितश्चाऽऽखुः प्राणत्यागं चकार ह ॥ १९

---

१ ज. मत्स्यतैलं । च. ट. मत्स्यं तैलं । २ ढ. °पं क्षणेनै° ।

ततो यमाज्ञया दूताः पाशमुद्गरपाणयः । आगतास्तं समानेतुं बबन्धुश्चर्मरज्जुभिः ॥ २०
यावन्नेतुं मनश्चक्रुः शङ्खचक्रगदाधराः । आगता गरुडारूढा विष्णुदूताश्चतुर्भुजाः ॥ २१
विमानं गगने चैव राजहंसयुतं शुभम् । निर्मितं कनकैः शुद्धैः कामगं कृपया हरेः ॥ २२
पाशं छित्त्वा ततो दूताः प्रोचुस्ते यमकिङ्करान् । विष्णुभक्तोऽप्यसौ मूढा व्यर्थं तु बन्धनं कृतम्॥
गच्छध्वं शमनमेष्या यदि वाञ्छाऽस्ति जीवितुम् । श्रुत्वा प्रकम्पितास्ते वै पृच्छन्ति विनयान्विताः
केन पुण्यप्रभावेन युष्माभिर्नीयते पुरम् । असौ विष्णोर्महापापी यूयं तद्वक्तुमर्हथ ॥ २५

विष्णुदूता ऊचुः—

पुरतो वासुदेवस्य प्रदीपबोधनं कृतम् । तेनैव कर्मणा दूता नयामो विष्णुमन्दिरम् ॥ २६
अनिच्छयाऽपि यः कुर्याद्विष्णोर्दीपस्य बोधनम् । कोटिजन्मार्जितं पापं त्यक्त्वा याति हरेर्गृहम्॥
भक्त्या प्रदीपं यो दद्यात्कार्तिके तु हरेर्दिने । तस्य पुण्यं समाख्यातुं न शक्तो हरिणा विना२८
घृतपूर्णप्रदीपं यो भक्त्या दद्याद्धरेर्गृहे । अश्वमेधसहस्रेण तस्य किंवा प्रयोजनम् ॥ २९
अश्वमेधप्रकर्ता यः स्वर्गं याति हरेर्दिने । कार्तिके दीपदाता च स गच्छेद्धरिमन्दिरम् ॥ ३०

व्यास उवाच—

इति श्रुत्वा ततो दूता गतास्ते वै यथाऽऽगताः । विष्णुदूता रथे कृत्वा गतास्तं विष्णुमन्दिरम्॥
विष्णुसांनिध्य एवास्य मन्वन्तरशतं गतम् । ततो मर्त्ये राजकन्या बभूव कृपया हरेः ॥ ३२
पुत्रपौत्रसमायुक्ता चिरं भोगं चकार सा । ईतः पुनर्गता सा तु गोलोकं हरिसेवया ॥[1] ३३

सूत उवाच—

भक्त्या शृणोति यो मर्त्यो दीपमाहात्म्यमुत्तमम् । सर्वपापविनिर्मुक्तः स याति विष्णुमन्दिरम् ॥

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे दीपदानमाहात्म्यं नाम तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९९०४

---

अथ चतुर्थोऽध्यायः ।

---

शौनक उवाच—

जयन्त्याः सूत माहात्म्यं कदा सा क्रियते जनैः । कथयस्व मम त्वं वै[2] पोतः संसारसागरे ॥ १

सूत उवाच—

शृणु विप्र प्रवक्ष्यामि यत्पृष्टो मुनिसत्तम । पुरा ब्रह्मा नारदेन पृष्ट एतत्सुरालये ॥ २

नारद उवाच—

जयन्त्याश्चैव माहात्म्यं कथयस्व पितामह । यच्छ्रुत्वाऽहं गमिष्यामि तद्विष्णोः परमं पदम् ॥ ३

ब्रह्मोवाच—

शृणुष्वावहितो विप्र तवाग्रे कथयाम्यहम् । जयन्त्या उपवासेन विष्णुलोकं स गच्छति ॥ ४
स्मरणात्कीर्तनात्पापं सप्तजन्मार्जितं मुने । जयन्ती दहते चैव किं पुनः सोपवासकृत् ॥ ५
जन्माष्टमी च नवमी चैत्रे मासि सिता शुभा । कृष्णा चतुर्दशी कुम्भे मेषे शुक्ला चतुर्दशी ॥ ६
दुर्गाष्टम्याश्विने शुक्ला द्वादशी श्रवणान्विता । महापुण्या च शुभदा जयन्त्यः षट्प्रकीर्तिताः ॥ ७

---

१ ङ. ञ. इतिस्मरा गता साध्वी गो° । २ झ. वै यतः संसारशोषणम् । सू° ।

कृष्णजन्माष्टमी पूर्वा प्रसिद्धा पापनाशिनी । क्रतुकोटिसमा ह्येषा तीर्थानामयुतैः समा ॥ ८
कर्ता गवां सहस्रं तु यो ददाति दिने दिने । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥ ९
हेमभारसहस्रं तु कुरुक्षेत्रे रविग्रहे । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥ १०
कृष्णाजिनसहस्राणि तिलधेनुशतानि च । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥ ११
ससागरामिमां पृथ्वीं दत्त्वा यल्लभते फलम् । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥ १२
कन्याकोटिसहस्राणां दाने भवति यत्फलम् । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥ १३
वापीकूपतडागादि कर्तव्यं देवतालये । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥ १४
मातापित्रोर्गुरूणां च भक्तियुक्तं करोति यः । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥ १५
आपदाहरणार्थाय तीर्थसेवा कृतात्मनाम् । सत्यव्रतानां यत्पुण्यं जयन्त्यां समुपोषणे ॥ १६
गङ्गायां नर्मदायां यत्पुण्ये सारस्वते जले । स्नात्वा पुण्यमवाप्नोति जयन्त्यां समुपोषणे ॥ १७
यत्पुण्यं श्राद्धकर्तॄणां पितॄणामिन्दुसंक्षये । तत्फलं समवाप्नोति जयन्त्यां समुपोषणे ॥

नारद उवाच—

केन केन कृता पूर्वं कथयस्व पितामह ॥ १८

ब्रह्मोवाच—

कार्तवीर्येण कर्णेन कुमारेण च धीमता । सगरेण दिलीपेन काकुत्स्थेन कृता पुरा ॥ १९
गौतमेन च गार्ग्येण[3] जामदग्न्येन धीमता । वाल्मीकिना कृता पूर्वं द्रौपदेयेन साधुना ॥ २०
ददाति वाञ्छितान्कामान्भाद्रपं(क)स्य सिताऽष्टमी । [*प्राजापत्यर्क्षसंयुक्ता विशेषेण मताऽष्टमी ]
वर्षे वर्षे प्रकर्तव्या प्रीत्यर्थं चक्रपाणिनः । कोटिजन्मार्जितं पापं मुहूर्तेन विलीयते ॥ २२
रात्रौ जागरणं कृत्वा निष्ठापूर्वं जितेन्द्रियः । गन्धपुष्पादिनैवेद्यैः पूजनीयः पृथक्पृथक् ॥ २३
एवं यः कुरुते विप्र जयन्तीसमुपोषणम् । कोटिजन्मार्जितं पापं ज्ञानतोऽज्ञानतः कृतम् ॥
प्रसादाद्देवकीसूनोर्यामार्धेन विलीयते ॥ २४
जयन्तीतिथिसंप्राप्ते भुञ्जते ये नराधमाः । त्रैलोक्यसंभवं पापं भुञ्जते ते न संशयः ॥ २५
सागराद्यानि पुण्यानि मुक्तिस्थानानि सर्वशः । गृहे तिष्ठन्ति सर्वाङ्गे जयन्तीव्रतकारिणः ॥ २६
तस्य सर्वाणि तीर्थानि देहे तिष्ठन्ति देवताः । करोति यो नरो भक्त्या जयन्तीं कृष्णवल्लभाम् ॥
न वेदेन पुराणेन मया दृष्टं महामुने । तत्समं नाधिकं वाऽपि कृष्णराधाष्टमीव्रतम् ॥
न करोति नरो भक्त्या स भवेत्क्रूरराक्षसः ॥ २८
यो नरोऽश्नाति मूढात्मा जयन्तीवासरे द्विज । महानरकमश्नाति यथा च हरिवासरे ॥ २९
अतीतमागतं यस्तु(त्तु) कुलमेकोत्तरं शतम् । पतेत्तु नरके घोरे जयन्त्यां भोजनेन वै ॥ ३०
जयन्ती बुधवारे च रोहिण्या सहिता यदा । भवेच्च मुनिशार्दूल किं कृतैर्व्र(त्यं व्रत)तकोटिभिः ॥
कृते त्रेतायुगे चैव द्वापरे च कलौ युगे । कृता सम्यग्विधानेन जयन्ती पापनाशिनी ॥ ३२
जागरे पद्मनाभस्य पुराणं पाठयेत्तु यः । आजन्मोपार्जितं पापं दहते तूलराशिवत् ॥ ३३
यः शृणोति नरो भक्त्या पुराणं हरिवासरे । कोटिजन्मार्जितं तस्य पापं नश्यति तत्क्षणात् ॥ ३४

* एतच्चिह्नान्तर्गतः पाठः च. ज. ढ. पुस्तकस्थः ।

१ ढ. °मा । अष्टापदस° । २ क. च. ज. झ. गौतमेन । ३ म. गर्गेण । ४ च. °पस्यासि° । ५ च. °षेणासिताऽ° । ६ ढ. °णासिताऽष्ट° । ७ ज. °नोः क्षणार्धे° ।

वासरे पद्मनाभस्य पूजयेद्वाचकं मुने । कुलकोटिं समुद्धृत्य विष्णुलोके स पूज्यते ॥ ३५
जयन्त्यामुपवासे च यो नरोऽत्र पराङ्मुखः । सर्वधर्मविनिर्मुक्तो यात्यसौ नरकं ध्रुवम् ॥ ३६
गन्धपुष्पैश्च धूपैश्च घृतपूर्णप्रदीपकैः । पूजयेद्भक्तिभावैश्च दद्याद्विप्राय दक्षिणाम् ॥ ३७
विधिनाऽनेन यो विप्र जयन्तीं प्रकरोति च । नरो वै तारयेद्भक्त्या पुरुषानेकविंशतिम् ॥ ३८
न दौर्भाग्यं न वैधव्यं न भवेत्कलहो गृहे । संततेर्न विरोधं च न पश्यति धनक्षयम् ॥ ३९
यान्यांश्चिकीर्षते कामाञ्जयन्तीसमुपोषकः । तांस्तान्प्राप्नोति सकलान्विष्णुलोकं च गच्छति ॥ ४०
विष्णुभक्तिपरा नित्यं जयन्तीव्रतमानसाः । ते धन्यास्ते कुलीनास्त ईश्वरास्ते च पण्डिताः ॥४१
यानि कानि च तीर्थानि व्रतानि नियमानि च । जयन्तीवासरस्यैव कलां नार्हन्ति षोडशीम् ॥
भाद्रे वै चोभये पक्षे यः करोति सभार्यकः । राधाकृष्णाष्टमीं वत्स प्राप्नोति हरिसंनिधिम् ॥४३
व्रतं च पुण्यकारं च यः करोति सदा हरेः । स याति विष्णोर्वैकुण्ठं जयन्तीसमुपोषकः ॥ ४४
आचारहीनं कुलभ्रष्टं कीर्तिहीनं कुयोनिजम् । नाशयत्याशु पापं च जयन्ती हरिवल्लभा ॥ ४५
मेरुतुल्यानि पापानि ब्रह्महत्यादिकानि च । स निर्दहति सर्वाणि जयत्यां समुपोषकः ॥ ४६
[*पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् । मोक्षार्थी लभते मोक्षं जयन्त्यां समुपोषकः] ॥ ४७
जयन्तीकरणे चित्तं येषां भवति तत्परम् । यमोऽपि शङ्कते नित्यं ते यान्ति परमां गतिम् ॥ ४८

सूत उवाच—

कथयित्वा नारदं तु ययौ स च यथाऽऽगतः । मयाऽपि कथितं ब्रह्मन्यत्पृष्टोऽहं त्वया मुने ॥४९
माहात्म्यं च जयन्त्या ये शृण्वन्ति भक्तिभावतः । तेऽपि यान्ति परं धाम विमुक्ताः सर्वपातकैः ५०
पुराणवाचकं ब्रह्मञ्जयन्तीव्रतिनं तथा । ये पश्यन्ति नराः पापास्ते यान्ति परमं पदम् ॥ ५१

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे ब्रह्मनारदसंवादे जयन्तीव्रतमाहात्म्यं नाम चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९९५५

---

अथ पञ्चमोऽध्यायः ।

---

शौनक उवाच—

कथयस्व महाप्राज्ञ पुत्रहीनो जनो भवेत् । कर्मणा केन वै सूत पुत्रो भवति केन च ॥ १

सूत उवाच—

एतत्पृष्टः पुरा ब्रह्मा नारदेन महात्मना । स यदाह तदा तं च शृणुष्व मुनिपुङ्गव ॥ २

नारद उवाच—

पितामह महाप्राज्ञ सर्वतत्त्वार्थपारग । अपुत्रो वै भवेन्मर्त्यः कर्मणा केन पद्मज ॥ ३
वन्ध्या स्त्री वा भवेत्केन वृजिनेन ममाग्रतः । कथय शृण्वतो वै मे सर्वप्राणिहिते रत ॥ ४
दुहिता जायते केन कर्मणा वा नपुंसकः । मृतवत्सो भवेत्केन मृतवत्साऽतिदुःखिता ॥
केन पुण्येन भो ब्रह्मन्पुनः पुत्रो भवेद्वद ॥ ५

---

* एतच्चिह्नान्तर्गतः पाठः च. ज. ट. पुस्तकस्थः ।

---

१ ट. 'कं विप्र जय' ।

ब्रह्मोवाच—

कथयामि समासेन सावधानेन तच्छृणु । वृत्तान्तं पृच्छसि त्वं वै शृण्वतां विस्मयप्रदम् ॥ ६
पूर्वजन्मनि [*यो मर्त्यो वर्तनं ब्राह्मणस्य च । हरेद्वा हारयेदत्र पुत्रहीनो भवेत्किल ॥ ७
इह जन्मनि ] यो मर्त्यः पुराणश्रवणं हि च । भूमिं ससस्यां दानं च दद्याद्वै श्रवणान्वितः ॥ ८
धेनुं बहुगुणां हैमीं बहुदुग्धां सदक्षिणाम् । सुवर्णप्रतिमां चैव तस्य पुत्रो भवेद्ध्रुवम् ॥ ९
पूर्वजन्मनि या नारी परबालकघातनम् । करोति कपटेनैव बालहीना भवेद्ध्रुवम् ॥ १०
सौवर्णप्रतिमादानं या नारी श्रद्धयाऽन्विता । कुर्यात्पानं ब्राह्मणस्य भक्त्या वै चरणोदकम् ॥ ११
पुराणश्रवणे चैव दद्याद्वै बहुदक्षिणाम् । बहपत्या जीववत्सा भवेन्नास्त्यत्र संशयः ॥ १२
जले निमग्नं बालं यो दृष्ट्वा या न समुद्धरेत् । इह जन्मन्यपुत्रो वै साऽपुत्री च भवेद्ध्रुवम् ॥ १३
वृषभं चैव कूष्माण्डं ससुवर्णं सवस्त्रकम् । दद्याद्दानं ब्राह्मणस्य कुर्याद्बालव्रतं तथा ॥ १४
गौरीं कन्यां तथा कुर्यात्पुराणश्रवणं हि यः[1] । पुत्रो वै जायते तस्य सर्वपातकनाशनम् ॥ १५
पूर्वजन्मनि यो मर्त्यो निराशं चातिथिं द्विज । कुर्यात्क्रोधेन दण्डं च पुत्रहीनो भवेद्ध्रुवम् ॥ १६
ब्राह्मणं चातिथिं चैव कुर्याद्भक्त्या प्रपूजनम् । अन्नदानं जलं चैव तथा देवालयं शुभम् ॥ १७
पूर्वजन्मनि या नारी भ्रूणहत्यां च यो नरः । कुर्यात्सा मृतवत्सा च मृतवत्सो भवेद्ध्रुवम् ॥ १८
या नारी स्वामिसहिता कुर्याच्च हरिवासरम् । सुपुत्रा भर्तृसुभगा भवेत्सा प्रतिजन्मनि ॥ १९
यो नरो गोदमं[2] कुर्याच्छूद्रः कुर्याद्विमोहितः । ब्राह्मणीहरणं वाऽपि कर्मणा स नपुंसकः ॥ २०
इदं तु वृजिनं कुर्यात्पश्चात्पुण्यं करोति यः । इह पुण्यप्रभावेन दुहिता जायते द्विज ॥ २१
आसीत्त्रेतायुगे राजा श्रीधरो नामतो द्विज । अपुत्रो धनवांस्तस्य जाया हेमप्रभावती ॥ २२
व्यासं सकलशास्त्रज्ञं सर्वलोकहितैषिणम् । आगतं चैव पप्रच्छ चापुत्रोऽहं कथं वद ॥ २३
उवाच नृपतेः श्रुत्वा वचनं विनयान्वितम् । राज्ञा दत्ते च पीठे च निर्मिते कनकादिभिः ॥ २४
राजा राज्ञी तस्य पादौ धौतं कृत्वा तु हर्षितौ । पीत्वा पादोदकं द्वौ च सर्वपातकनाशनम् ॥ २५

व्यास उवाच—

राजञ्शृणुष्व यत्पृष्टमपुत्रो येन कर्मणा । तवेयं राज्ञी चापुत्री चैकपत्नीव्रतस्तथा[3] ॥ २६
पूर्वजन्मनि चन्द्रस्त्वं नाम्ना वरतनुः स्मृतः । भार्या तवापि शुभ्राङ्गी नाम्ना वै शंकरी स्मृता २७
एकदा पथि यातौ च नीचपुत्रं जलेऽपि च । मग्नं दृष्ट्वा हेलया च गतौ च (स) पञ्चतां गतः २८
बहुपुण्यप्रभावेन राज्ञी राजा च तौ युवाम् । तेन कर्मविपाकेन युवयोर्न भवेत्सुतः ॥ २९

राजोवाच—

इदानीं केन पुण्येन सुतो वै जायते प्रभो । अपुत्रस्य मनुष्याणां जीवनं हि निरर्थकम् ॥ ३०

व्यास उवाच—

सवस्त्रं चैव कूष्माण्डं वृषभं ससुवर्णकम् । देहि दानं ब्राह्मणस्य कुरु बालव्रतं तथा ॥ ३१
गौरीं कन्यां तथा देहि पुराणश्रवणं कुरु । पुत्रो वै जायते तत्र सर्वपातकनाशनम् ॥ ३२

ब्रह्मोवाच—

इति श्रुत्वा ततो राजा व्यासोक्तं दानमुत्तमम् । पुराणश्रवणं चैव चकार गतकिल्बिषः ॥ ३३

* एतच्चिह्नान्तर्गतः पाठः च. ज. पुस्तकस्थः ।

१ ङ. म. यः । कुर्यात्क्रोधेन दण्डस्य । २ ङ. म. गोधनं । ३ ज. °व्रतं तव । पू° ।

ततः पुत्रो वर्षमध्ये बभूव सर्वपूजितः । अभूद्राजा सार्वभौमः सुन्दरः कुलनायकः ॥ ३४

सूत उवाच—

य इदं शृणुयाद्भक्त्या करोति दानमुत्तमम् । अपुत्रा लभते पुत्रं संक्षेपात्कथितं मया ॥ ३५
भक्त्या श्रुत्वा तु या नारी कुर्याद्ब्राह्मणपूजनम् । सुपुत्रा सा भवेन्नित्यं शास्त्रोक्तविधिना द्विज ३६
सुवर्णं रजतं वस्त्रं पुष्पमाल्यं च चन्दनम् । यो दद्यात्पुस्तके भक्त्या सर्वपापप्रणाशनम् ॥ ३७
पूर्वजन्मनि यो मूढो ब्रह्मबालकघातकः । तस्य क्रूरो भवेत्पुत्रः सप्तजन्मान्तरैर्द्विज ॥ ३८

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे ब्रह्मनारदसंवादे कर्मविपाककथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—९९९३

---

अथ षष्ठोऽध्यायः ।

---

शौनक उवाच—

केन पुण्येन भोः सूत वैकुण्ठं समवाप्यते । तद्वदस्व शृण्वतो मे पोतो हि भवसागरे ॥ १

सूत उवाच—

साधु साधु मुनिश्रेष्ठ सर्वमङ्गलकारक । कथयामि समासेन शृण्वतां पापनाशनम् ॥ २
विष्णवे ब्राह्मणायैव मृदा वेश्म विनिर्मितम् । यो वै दद्याद्द्विजश्रेष्ठ तस्य पुण्यं निशामय ॥ ३
विष्णुलोके च स विप्रः सर्वपापविवर्जितः । सौधवासी भवेन्नित्यं विष्णुलोके प्रपूज्यते ॥ ४
विष्णवे सौधगेहं यो दद्याद्वै ब्राह्मणाय च । हरेर्निकेतनं प्राप्य स्वर्गवासी भवेद्ध्रुवम् ॥ ५
अन्ते विष्णुपुरं गत्वा युक्तः कोटिकुलैर्द्विज । स्वर्णसौधे गृहे स्थित्वा कुर्याद्भोगं यथासुखम् ॥ ६
ब्राह्मणस्थापने पुण्यं यद्वै भवति भो मुने । संख्यां कर्तुमशक्तस्तद्वे(स्य वे)धाः सर्वकारकः ॥ ७
गण्यन्ते रेणवश्चैव गण्यन्ते वृष्टिबिन्दवः । न गण्यते विधात्राऽपि ब्रह्मसंस्थापने फलम् ॥ ८
नारदेन पुरा ब्रह्मा पृष्टः संसारसंभवः । वेधास्तं कथयामास तच्छृणुष्व महामुने ॥ ९
पुराऽऽसीद्द्वापरे ब्रह्मन्वारनारी सुशोभना । सुकेशी हरिणीनेत्रा सुमध्या चारुहासिनी ॥ १०
नाम्ना सा चञ्चलापाङ्गी ययौ देशान्तरं कदा । सर्वपापसमायुक्ता नरकेऽपातयत्तथा ॥ ११
सङ्गेन सा धनाकाङ्क्षी जनान्देवालयं गता । तत्र क्षणं सोपविष्टा ताम्बूलभक्षणं कृतम् ॥ १२
शेषं चूर्णं सौधभित्तौ ददौ निम्ने कुतूहलात् । ततो गता जारकाङ्क्षी धनार्थं नगरं प्रति ॥ १३
जारेण केनचित्सार्धं संकेतः सहसा कृतः । संकेतं तु गता वेश्या वनं रात्रौ विमोहिता ॥ १४
संकेतं नाऽऽगतो वैश्यो व्यशङ्किष्ट विलोकिता । कथं कान्तो नाऽऽगतो मे सर्पव्याघ्रैश्च भक्षितः ॥
संकेतनं कथं हित्वा गतः किं कामविह्वलः । अन्यया ज्ञातया सार्धमभिलाषी भवेत्किमु ॥ १६
परामृश्येति हृद्यन्तः कोटपालभयाद्द्विज । नगरं नाऽऽगता सा हि रुद्धे लोकपथे तमैः ॥ १७
एतस्मिन्नन्तरे व्याघ्रः कामरूपी बलात्क्षुधी । प्रेषितः कालदेवेनाग्रसदागत्य तां द्विज ॥ १८
ततस्तु यमुनाभ्रातुर्दूतास्ते भीमवर्ष्मिणः । [*आगता गिरिकूटाङ्गा नेतुं तां पापकर्मणा ॥ १९
वक्रपादा वक्रमुखा उग्रासा बृहद्दंष्ट्रिणः] । चर्मरज्जुं मुद्गरांश्च गृहीत्वा पांसुलां द्विज ॥ २०
बन्धयामासुरुन्मत्ता गणिकां चर्मरज्जुभिः । शङ्खचक्रगदापद्मधारिणो वनमालिनः ॥ २१

---

* एतच्चिह्नान्तर्गतः पाठः च. ज. ढ. पुस्तकस्थः ।

प्रेषिता देवदेवेन तद्भक्तवत्सलेन च । कृष्णजीमूतसंकाशाः स्फुरद्वदनपङ्कजाः ॥ २२
श्रेणीधराश्चारुनासा दिव्यकुण्डलभूषिताः । ददृशुः पथि गच्छन्तो विष्णोर्दूता महात्मनः ॥ २३

विष्णुदूता ऊचुः—

के यूयं विकृताकारा लक्ष्यध्वे कर्बुरा इव । इमां विष्णोः प्रियतमां नीत्वा क्व व्रजथोत्तमाम् ॥ २४
इदं वचनमाकर्ण्य तेषां ते तु द्रुतं ययुः । अथ ते क्रोधसंपन्ना विष्णोर्दूता महाबलाः ॥ २५
जघ्नुस्ते संदेशहरान्यमस्य जगतः प्रभोः । चक्रादिशस्त्रसंघैश्च सूर्यकोटिसमप्रभैः ॥ २६
कृतान्तस्य भटाः सर्वे रुदन्तस्ते पलायिताः । यमं प्रोचुः सुभीताश्च वृत्तान्तं सकलं द्विज ॥ २७
यमोऽपि तत्कथां श्रुत्वा चित्रगुप्तमुवाच ह ॥ २८

धर्मराज उवाच—

केन पुण्येन भो मन्त्रिन्वेश्या विमुक्तिमागता । एतन्मे पृच्छतः सर्वं कथयस्व यथार्थतः ॥ २९

चित्रगुप्त उवाच—

तया पापान्यर्जितानि जन्मतः सुबहून्यपि । किं त्वाकर्णय लोकेश यदस्याः पुण्यमस्ति तत् ॥ ३०
गणिकैकदा धर्मराज सर्वालंकारभूषिता । कांचित्पुरीं जगामाऽऽशु जारकाङ्क्षी धनार्थिनी ॥ ३१
तत्र देवालये तस्मिन्स्थिता ताम्बूलभक्षणम् । कृत्वा तच्छेषचूर्णं तु ददौ भित्तौ तु कौतुकात् ॥ ३२
तेन पुण्यप्रभावेन गणिका गतपातका । वैकुण्ठं प्रति सा याति निर्गता तव दण्डतः ॥ ३३

सूत उवाच—

इति श्रुत्वा ततो दूता यमोऽपि वचनं द्विज । व्यापारे चान्यतश्चितं दधुः सा गणिकाऽपि च ३४
आरूढा स्यन्दने दिव्ये राजहंसयुते तथा । विष्णुलोकं ययौ सा च वेष्टिता विष्णुकिङ्करैः ॥ ३५
श्रीविष्णोराज्ञया साऽथ कुलकोटियुताऽपि च । तस्थौ सौधगृहे विप्र नानाभोगं चकार ह ॥ ३६
भक्त्या यो वै हरेर्गेहे दद्याच्चूर्णं प्रयत्नतः । पुण्यं किं वा भवेत्तस्य न जाने द्विजपुङ्गव ॥ ३७
भक्त्याऽध्यायं पठेद्यो वै शृणोति सादरं स च । सर्वपापविनिर्मुक्तो यात्यसौ हरिमन्दिरम् ॥ ३८

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे मन्दिरचूर्णलेपदानमाहात्म्यं नाम षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१००३१

---

## अथ सप्तमोऽध्यायः ।

---

शौनक उवाच—

कथयस्व महाप्राज्ञ गोलोकं याति कर्मणा । सुमते दुस्तरात्केन जनः संसारसागरात् ॥
राधायाश्चाष्टमी सूत तस्या माहात्म्यमुत्तमम् ॥ १

सूत उवाच—

ब्रह्माणं नारदोऽपृच्छत्पुरा चैतन्महामते । तच्छृणुष्व समासेन पृष्टवान्स इति द्विज ॥ २

नारद उवाच—

पितामह महाप्राज्ञ सर्वशास्त्रविदां वर । राधाजन्माष्टमीं तात कथयस्व ममाग्रतः ॥ ३
तस्याः पुण्यफलं किं वा कृतं केन पुरा विभो । अकुर्वतां जनानां हि किल्बिषं किं भवेद्द्विज ॥ ४
केनैव तु विधानेन कर्तव्यं तद्व्रतं कदा । कस्माज्जाता च सा राधा तन्मे कथय मूलतः ॥ ५

ब्रह्मोवाच—
राधाजन्माष्टमीं वत्स शृणुष्व सुसमाहितः । कथयामि समासेन समग्रं हरिणा विना ॥
कथितुं तत्फलं पुण्यं न शक्नोत्यपि नारद ॥ ६
कोटिजन्मार्जितं पापं ब्रह्महत्यादिकं महत् । कुर्वन्ति ये सकृद्भक्त्या तेषां नश्यति तत्क्षणात् ॥७
एकादश्याः सहस्रेण यत्फलं लभते नरः । राधाजन्माष्टमीपुण्यं तस्माच्छतगुणाधिकम् ॥ ८
मेरुतुल्यसुवर्णानि दत्त्वा यत्फलमाप्यते । सकृद्राधाष्टमीं कृत्वा तस्माच्छतगुणाधिकम् ॥ ९
कन्यादानसहस्रेण यत्पुण्यं प्राप्यते जनैः । वृषभानुसुताष्टम्या तत्फलं प्राप्यते जनैः ॥ १०
गङ्गादिषु च तीर्थेषु स्नात्वा तु यत्फलं लभेत् । कृष्णप्राणप्रियाष्टम्या फलं प्राप्नोति मानवः ११
एतद्व्रतं तु यः पापी हेलया श्रद्धयाऽपि वा । करोति विष्णुसदनं गच्छेत्कोटिकुलान्वितः १२
पुरा कृतयुगे वत्स वारनारी सुशोभना । सुमध्या हरिणीनेत्रा शुभाङ्गी चारुहासिनी ॥ १३
सुकेशी चारुकर्णी च नाम्ना लीलावती स्मृता । तया बहूनि पापानि कृतानि सुदृढानि च १४
एकदा सा धनाकाङ्क्षी निःसृत्य पुरतः स्थिता । गताऽन्यनगरं तत्र ददर्श च जनान्बहून् ॥१५
राधाष्टमीव्रतपरान्सुन्दरे देवतालये । गन्धपुष्पैर्धूपदीपैर्वस्त्रैर्नानाविधैः फलैः ॥ १६
भक्तिभावैः पूजयतो राधाया मूर्तिमुत्तमाम् । केचिद्गायन्ति नृत्यन्ति पठन्ति स्तवमुत्तमम् ॥ १७
तालवेणुमृदङ्गांश्च वादयन्ति च के मुदा । तांस्तांस्तथाविधान्दृष्ट्वा कौतूहलसमन्विता ॥
जगाम तत्समीपं सा पप्रच्छ विनयान्विता ॥ १८
[*भो भोः पुण्यात्मानो यूयं किं कुर्वन्तो मुदाऽन्विताः।कथयध्वं पुण्यवन्तो मां चैव विनयान्विताम्]
तस्यास्तु वचनं श्रुत्वा परकार्यहिते रताः । आरेभिरे तत्प्रवक्तुं वैष्णवा व्रततत्पराः ॥ २०

राधाव्रतिन ऊचुः—
भाद्रे मासि सिताष्टम्यां जाता श्रीराधिका यतः। अष्टमी साऽद्य संप्राप्ता तां कुर्वा(र्या)म प्रयत्नतः
गोघातजनितं पापं स्तेयजं ब्रह्मघातजम् । परस्त्रीहरणाच्चैव तथा च गुरुतल्पजम् ॥ २२
विश्वासघातजं चैव स्त्रीहत्याजनितं तथा । एतानि नाशत्याशु कृता या चाष्टमी नृणाम् ॥ २३
तेषां च वचनं श्रुत्वा सर्वपातकनाशनम् । करिष्याम्यहमित्येवं परामृश्य पुनः पुनः ॥ २४
तत्रैव व्रतिभिः सार्धं कृत्वा व्रतमनुत्तमम् । दैवात्सा पञ्चतां याता सर्पघातेन निर्मला ॥ २५
ततो यमाज्ञया दूताः पाशमुद्गरपाणयः । आगतास्तां समानेतुं बद्ध्वा[1]ऽतिकृच्छ्रतः ॥ २६
यदा नेतुं मनश्चक्रुर्यमस्य सदनं प्रति । तदाऽऽगता विष्णुदूताः शङ्खचक्रगदाधराः ॥ २७
हिरण्मयं विमानं च राजहंसयुतं शुभम् । छेदनं चक्रधाराभिः पाशं(शे) कृत्वा त्वरान्विताः॥२८
रथे चाऽऽरोपयामासुस्तां नारीं गतकिल्बिषाम् । निन्युर्विष्णुपुरं ते च गोलोकाख्यं मनोहरम् ॥
कृष्णेन राधया तत्र स्थिता व्रतप्रसादतः । राधाष्टमीव्रतं तात यो न कुर्याच्च मूढधीः ॥ ३०
नरकान्निष्कृतिर्नास्ति कोटिकल्पशतैरपि । स्त्रियश्च या न कुर्वन्ति व्रतमेतच्छुभप्रदम् ॥ ३१
राधाविष्णोः प्रीतिकरं सर्वपापप्रणाशनम् । अन्ते यमपुरं गत्वा पतन्ति नरके चिरम् ॥
कदाचिज्जन्म चाऽऽसाद्य पृथिव्यां विधवा ध्रुवम् ॥ ३२
एकदा पृथिवी वत्स दुष्टसंघैश्च तोडिता[2] । गौर्भूत्वा च भृशं दीनाऽत्राऽऽययौ सा ममान्तिकम् ॥

*एतच्चिह्नान्तर्गतः पाठः च. ठ. पुस्तकस्थः ।

१ ठ. 'बन्धुः क्रुद्धया धिया । य' । २ ज. पीडिता ।

निवेदयामास दुःखं रुदन्ती च पुनः पुनः। तद्वाक्यं च समाकर्ण्य गतोऽहं विष्णुसंनिधिम् ॥ ३४
कृष्णे निवेदितं चाऽऽशु पृथिव्या दुःखसंचयः। तेनोक्तं गच्छ भो ब्रह्मन्देवैः सार्धं च भूतलम् ३५
अहं तत्रापि गच्छामि पश्चान्मम गणैः सह। तच्छ्रुत्वा सहितो देवै रागतः पृथिवीतलम् ॥ ३६
[*ततः कृष्णः समाहूय राधां प्राणगरीयसीम्। उवाच वचनं देवि गच्छेऽहं पृथिवीतलम् ३७
पृथिवीभारनाशाय गच्छ त्वं मर्त्यमण्डलम् ]। इति श्रुत्वाऽपि सा राधाऽप्यागता पृथिवीं ततः
भाद्रे मासि सिते पक्षे अष्टमीसंज्ञके तिथौ। वृषभानोर्यज्ञभूमौ जाता सा राधिका दिवा ॥ ३९
यज्ञार्थं शोधनं चक्रुर्यदा सा दिव्यरूपिणी। राजाऽऽनन्दमना भूत्वा तां प्राप्य निजमन्दिरम् ॥
दत्तवान्महिषीं नीत्वा सा च तां पर्यपालयत्। इति ते कथितं वत्स त्वया पृष्टं च यद्वचः ॥
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥ ४१

सूत उवाच—

य इदं शृणुयाद्भक्त्या चतुर्वर्गफलप्रदम्। सर्वपापविनिर्मुक्तश्चान्ते याति हरेर्गृहम् ॥ ४२

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे ब्रह्मनारदसंवादे श्रीराधाष्टमीमाहात्म्यं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१००७३

---

अथाष्टमोऽध्यायः।

---

शौनक उवाच—

समुद्रमथनं सूत पुरा कस्मात्कृतं गुरो। हृदये कौतुकं जातं श्रोतुं मे वद चामरैः ॥ १

सूत उवाच—

ब्रह्मन्वच्मि समासेन सिन्धोर्मथनकारणम्। दुर्वाससेन्द्रसंवादमितिहासं शृणुष्व तत् ॥ २
महातपा महातेजा दुर्वासा ईश्वरांशजः। ब्रह्मर्षिः प्रययौ स्वर्गमिन्द्रं द्रष्टुं स चैकदा ॥ ३
तस्मिन्ददर्श काले तं गजारूढं शचीपतिम्। दृष्ट्वा स्रजं पारिजातां ददौ तस्मै महामुनिः ॥ ४
गृहीत्वा तां स्रजं चेन्द्रो विन्यस्य गजमूर्धनि। देवराट्प्रययौ ब्रह्मन्ससैन्यो नन्दनं प्रति ॥ ५
हस्ती चाऽऽदाय तां मालां छित्त्वा तु धरणीतले। चिक्षेप च महाक्रुद्धस्तमित्याह महामुनिः ॥६
त्रैलोक्यैकश्रिया युक्तो यस्मात्त्वमवमन्यसे। तव त्रैलोक्यश्रीर्नष्टा भवत्येव न संशयः ॥ ७
ततः शक्रो जगामाऽऽशु शप्तश्च स्वपुरं पुनः। ददर्श जगतां माता चान्तर्धानं गता स्वयम् ॥ ८
नष्टमन्वर्धानवत्यां तदा तस्यां जगत्त्रयम्। क्षुत्पिपासान्विताः सर्वे चुक्रुशुर्वै निरन्तरम् ॥ ९
न ववर्षुर्वारिवाहाः शुष्काश्चैव जलाशयाः। सर्वे ते शाखिनः शुष्काः फलपुष्पविवर्जिताः ॥ १०
क्षुत्पिपासार्दिताः सर्वे ब्रह्मणः संनिधिं ययुः। तं सर्वं कथयामासुः दुःखशोकं पितामहम् ॥ ११
देवानां वचनं श्रुत्वा धाता देवगणैः सह। भृग्वादिमुनिभिश्चैव प्रययौ क्षीरसागरम् ॥ १२
विष्णुं समर्चयामास क्षीराब्धेरुत्तरे तटे। मन्त्रमष्टाक्षरं वे[+धा जपन्ध्यायञ्जगत्पतिम् ॥ १३
ततः प्रसन्नो भगवान्सर्वेषां च दिवौकसाम्। वैनतेयं समारुह्य चाऽऽगतः सदयः प्रभुः ॥ १४
पीतवस्त्रं चतुर्बाहुं शङ्खचक्रगदाधरम्। दृष्ट्वा तं जगतामीशं पुण्डरीकनिभेक्षणम् ॥ ] १५

---

* एतच्चिह्नान्तर्गतः पाठः च. ढ. पुस्तकस्थः। + एतच्चिह्नान्तर्गतः पाठः क. ख. च. ज. झ. ढ. पुस्तकस्थः।

---

१ ज. हस्ते। २ ज. सुरैः। ३ ज. सत्वरम्।

विष्णुं भवोदधेः पोतं वनमालाविभूषितम् । श्रीवत्सकौस्तुभोरस्कमानन्दाश्रुपरिप्लुताः ॥
तुष्टुवुर्जयशब्देन नमश्चक्रुर्निरन्तरम् ॥ १६

श्रीभगवानुवाच—

[*वरं वृणीध्वं भो देवाः कस्माद्यूयं समागताः । वरदोऽस्मि तद्वदत वो ददामि च नान्यथा१७

देवा ऊचुः—

कृपालो ब्रह्मशापेन संपद्धीनं जगत्त्रयम् । क्षुत्पिपासार्दितं नाथ सदेवासुरमानुषम् ॥
रक्ष सर्वानिमाँल्लोकान्याताः स्म शरणं तव ॥ १८

श्रीभगवानुवाच—]

इन्दिरा ब्रह्मशापेन चान्तर्धानं गता शुभा । यस्याः कटाक्षमात्रेण जगदैश्वर्यसंयुतम् ॥ १९
तदा यूयं सुराः सर्वे चोत्पाट्य स्वर्णपर्वतम् । मन्दरं घर्घरं कृत्वा सर्पराजेन वेष्टितम् ॥ २०
कुरुध्वं मन्थनं देवाः सदैत्याः क्षीरसागरम्(रे) । तस्मादुत्पत्स्यते लक्ष्मीर्जगन्माता च भोः सुराः
तया दृष्टा महाभागा भविष्यथ न संशयः । धारयाम्यहमेवाद्रिं कूर्मरूपेण सर्वतः ॥ २२
इत्युक्त्वा भगवान्विष्णुरन्तर्धानं जगाम सः । जग्मुः सुरासुराः सर्वे समुद्रमथनं द्विज ॥ २३

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे समुद्रमथनं नामाष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१००९६

---

अथ नवमोऽध्यायः ।

---

सूत उवाच—

ततोऽमरगणास्ते तु सगन्धर्वाः सदानवाः । उत्पाट्य मन्दरं शैलं चिक्षिपुः पयसां निधौ ॥ १
ततः सनातनः श्रीमान्दयालुर्जगदीश्वरः । अधारयद्गिरेर्मूलं कूर्मरूपेण पृष्ठतः ॥ २
अनन्तं तत्र संवेष्ट्य ममन्थुर्दुग्धसागरम् । एकादश्यां मथ्यमाने चोद्धृतं प्रथमं द्विज ॥ ३
कालकूटविषं ते तु दृष्ट्वा सर्वे प्रदुद्रुवुः । ततस्तान्विद्रुतान्दृष्ट्वा शंकरश्चोक्तवानिदम् ॥ ४
भो भोऽमरगणा यूयं विषं कुरुत मे करे । वारयिष्याम्यहं तूर्णं कालकूटं महाविषम् ॥ ५
इत्युक्त्वा पार्वतीनाथो ध्यायन्नारायणं हृदि । महामन्त्रं समुच्चार्य विषमादद्भयंकरम् ॥ ६
महामन्त्रप्रभावेण विषं जीर्णं गतं महत् । अच्युतानन्तगोविन्द इति नामत्रयं हरेः ॥ ७
यो जपेत्प्रयतो भक्त्या प्रणवाद्यं नमोन्तिकम् । विषभोगाग्निजं तस्य नास्ति मृत्योर्भयं तथा ॥
ततो दृष्टा मुदा देवा ममन्थुः क्षीरसागरम् ॥ ८
ततोऽलक्ष्मीः समुत्पन्ना कालास्या रक्तलोचना । रूक्षपिङ्गलकेशा च जरन्ती बिभ्रती तनुम् ॥ ९
सा च ज्येष्ठाऽब्रवीद्देवान्किं कर्तव्यं मयेति वै । देवास्तथाऽब्रुवंस्तां च देवीं दुःखस्य भाजनम् ॥
येषां नृणां गृहे देवि कलहः संप्रवर्तते । तत्र स्थानं प्रयच्छामो वस ज्येष्ठे शुभान्विता ॥ ११
निष्ठुरं वचनं ये च वदन्ति येऽनृतं नराः । संध्यायां ये हि चाश्नन्ति दुःखदा तिष्ठ तद्गृहे १२

* एतच्चिह्नान्तर्गतः पाठः, च. ज. पुस्तकस्थः । †संधिरार्षः ।

१ ज. ढ. सुराः । २ ढ. दृष्टा । ३ ङ. झ. °त मा दरम् । वा° । ४ ज. °रे । धार° ।

Harishchandrapur VIDHYA ... MALDA

कपालकेशभस्मास्थितुषाङ्गाराणि यत्र तु । स्थानं ज्येष्ठे तत्र तव भविष्यति न संशयः ॥ १३
अकृत्वा पादयोर्धौतं ये चाश्नन्ति नराधमाः । तद्गृहे सर्वदा तिष्ठ [*दुःखदारिद्र्यदायिनी ॥१४
वालुकालवणाङ्गारैः कुर्वन्ति दन्तधावनम् । तेषां गृहे सदा तिष्ठ ] दुःखदा कलिना सह ॥ १५
छत्राकं श्रीफलं शिष्टे ये खादन्ति नराधमाः । गेहे तेषां तव स्थानं ज्येष्ठे कलुषदायिनि ॥ १६
तिलपिष्टमलाबुं ये गृञ्जनं पोतिकादलम् । कलम्बुकं पलाण्डुं ये चाश्नन्ति पापबुद्धयः ॥
तेषां गृहे तव स्थानं भविष्यति न संशयः ॥ १७
गुरुदेवातिथीनां च यज्ञदानविवर्जितम् । यत्र वेदध्वनिर्नास्ति तत्र तिष्ठ सदा शुभे ॥ १८
[†दंपत्योः कलहो यत्र पितृदेवार्चनं न वै । दुरोदररता यत्र तत्र तिष्ठ सदा शुभे ] ॥ १९
परदाररता यत्र परद्रव्यापहारिणः । विप्रसज्जनवृद्धानां यत्र पूजा न विद्यते ॥
तत्र स्थाने सदा तिष्ठ पापदारिद्र्यदायिनी ॥ २०
इत्यादिश्य सुरा ज्येष्ठां सर्वे तां कालवल्लभाम् । क्षीराब्धिमथनं चक्रुः पुनस्ते सुसमाहिताः॥२१

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे समुद्रमथनं नाम नवमोऽध्यायः ॥ ९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०११७

अथ दशमोऽध्यायः ।

सूत उवाच—

ऐरावतस्ततो जज्ञे तथैवोच्चैःश्रवा हयः । धन्वन्तरिः पारिजातः सुरभिश्चाप्सरोदयः ॥ १
ततः प्रभातसमये द्वादश्यामुदिते रवौ । उत्पन्ना श्रीमहालक्ष्मीः सर्वलक्षणशोभिता ॥ २
ददृशुस्तां महादेवीं मातरं धर्मदेवताः । प्रहृष्ट(ष्टाः)सर्वजन्तूनां श्रीकृष्णहृदयालयाम् ॥ ३
लक्ष्मीभ्राता शीतरश्मिर्जातश्च सुधया ततः । उत्पन्ना सा हरेर्जाया तुलसी लोकपावनी ॥ ४
तं शैलं पूर्ववत्स्थाप्य परिपूर्णमनोरथाः । समेत्य मातरं स्तुत्वा जेपुः श्रीसूक्तमुत्तमम् ॥ ५
ततः प्रसन्ना सा देवी सर्वान्देवानुवाच ह । वरं वृणीध्वं भद्रं वो वरदाऽहं सुरोत्तमाः ॥ ६

देवा ऊचुः—

प्रसीद कमले देवि सर्वमातर्हरिप्रिये । त्वया विना जगच्छून्यं कुरु प्राणप्ररक्षणम् ॥ ७
इत्युक्ता सा महालक्ष्मीः प्राह नारायणप्रिया । इदानीं सर्वजन्तूनां प्राणरक्षां करोम्यहम् ॥ ८
ततो नारायणः श्रीमाञ्शङ्खचक्रगदाधरः । आविर्बभूव सहसा दयालुर्जगदीश्वरः ॥ ९
ततस्ते तुष्टुवुर्देवाः प्रणम्य जगतां पतिम् । कृताञ्जलिपुटाः प्रोचुर्हर्षगद्गदभाषिणः ॥ १०
गृहाण मातरं विष्णो महिषीं वल्लभां तव । संसाररक्षणार्थाय लक्ष्मीमनपगामिनीम् ॥
यावत्प्रतिज्ञां नो चक्रे तावत्प्राहेन्दिरा हरिम् ॥ ११

लक्ष्मीरुवाच—

अविवाह्य कथं ज्येष्ठामलक्ष्मीं मधुसूदन । तस्याः कनिष्ठां मां नाथ विवाहं कर्तुमिच्छसि ॥
ज्येष्ठायां च स्थितायां वै कनिष्ठा परिणीयते ॥ १२

---

* एतच्चिह्नान्तर्गतः पाठः, च. ज. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः, च. ज. पुस्तकस्थः ।

१ च. ज. ढ. कलिवल्लभाम् । २ ज. °र्वमङ्गलमङ्गला । द° ।

सूत उवाच—

इति श्रुत्वा ततो विष्णुर्ददौ चोद्दालकाय च । वेदवाक्यानुरूपेण ह्यलक्ष्मीं निर्जरैः सह ॥ १३
ततो नारायणः श्रीमाल्लँक्ष्मीमङ्गीचकार ह । ततः सुरगणाः सर्वे नमश्चक्रुः पुनः पुनः ॥ १४
अथ ते चासुरान्सर्वाञ्जघ्नुः सर्वे बलाधिकान् । सर्वे ते क्रन्दमानाश्च गताश्चैव दिशो दश ॥ १५
सुधां तत्खादितुं चक्रुर्देवाः पङ्क्तिं यथाक्रमम् । श्रीविष्णोराज्ञया सर्वे चोचुश्चैव परस्परम् ॥ १६
त्वं च देहि त्वं च देहि त्वं च देहीति चाब्रुवन् । न शक्तोऽस्मि न शक्तोऽस्मि न शक्तोऽस्मीति चाब्रुवन्
ततो विष्णुः समुत्तस्थौ स्त्रीरूपं च दधार ह । चकार स्वर्णपात्रे च पीयूषपरिवेषणम् ॥ १८
पीयूषभक्षणं राहुर्यावत्कुर्याद्द्विजोत्तम । चन्द्रसूर्यौ चोक्तवन्तौ राक्षसोऽसौ छलागतः ॥ १९
ततः क्रुद्धो जगन्नाथो जघान स्वर्णपात्रतः । शिरस्तस्य पपातोर्व्यां केतुर्नाम्ना बभूव ह ॥ २०
राहुकेतू ततस्तूर्णं गतौ तौ भयविह्वलौ । इदानीं तद्दिने प्राप्ते चन्द्रसूर्यौ स युध्यति ॥
कुर्याद्ग्रासं सैंहिकेयस्तत्क्षणं दुर्लभं भवेत् ॥ २१
सर्वं गङ्गासमं तोयं वेदव्याससमा द्विजाः । स्नानं वायसतीर्थे यो गङ्गास्नानफलं लभेत् ॥ २२
दानमक्षय्यपुण्यं स्यात्कोटिजन्मार्जितं तथा । पापं नश्येत्समूलं च किं पुनः क्रतुकोटिभिः ॥ २३
विद्यार्थी लभते विद्यां पुत्रार्थी पुत्रमाप्नुयात् । मोक्षार्थी लभते मोक्षं मन्त्रसिद्धिर्भवेद्ध्रुवम् ॥
इति ते कथितं विप्र समुद्रमथनं तु तत् ॥ २४

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे समुद्रमथनं नाम दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०१४१

---

अथैकादशोऽध्यायः ।

---

शौनक उवाच—

इदानीं श्रोतुमिच्छामि कथयस्व यथार्थतः । हरिस्वरूपिणा साक्षाद्वेदव्यासेन शासित ॥ १
निरहंकार हे सूत लोकानुग्रहकारक । केन स्यात्सुभगा नारी पापिनी च सुदुर्भगा ॥ २
अतिप्रियाऽङ्ग केन स्याद्रूपिता चक्षुषोः सुधा । केन वा जायते लक्ष्मीस्तन्मे ब्रूहि तपोधन ॥ ३

सूत उवाच—

यदि पुण्यमिदं विप्र वृत्तं परमदुर्लभम् । शृणुष्व भोः समासेन कथयामि विधानतः ॥ ४
आसीद्भद्रश्रवा राजा युगे द्वापरसंज्ञके । सौराष्ट्रदेशवासी च वेदवेदाङ्गपारगः ॥ ५
भार्या तस्य च संजाता नाम्ना सुरतिचन्द्रिका । तस्यां बभूवुः श्रीराज्ञः सप्त पुत्रा मनोरमाः ॥ ६
ततोऽपि जाता दुहिता सुन्दरी सत्यवादिनी । श्यामबाला च विप्रेन्द्र नाम्ना प्रीतिकरी पितुः ७
अथैकदा श्यामबाला सुवर्णसिकतासु च । गूढैर्मनोहरै रत्नैः सखीभिः क्रीडितुं मुदा ॥
जगाम नीपवृक्षस्य तलं परमदुर्लभम् ॥ ८
तस्मिन्नन्तरे विप्र लक्ष्मीः संसारतारिणी । लोकानां नीतिदा साऽथ समायाता स्वयं पुरः ॥ ९
धृत्वा च ब्राह्मणीरूपं पलिताङ्गी च भूसुर । अखिलानां च लोकानां शास्तृ राज्ञः क्षयं विना १०
एषां क्षुद्रतराणां हि गृहं गच्छामि सांप्रतम् । इति संचिन्त्य मनसा गता राजनिकेतनम् ११
स्वर्णभित्तिभिर्युक्तं पताकाभिरलंकृतम् । सिंहद्वारमभिक्रम्य प्राह दौवारिकीं ततः ॥ १२

---

१ ज. °ता च तत्पुरीम् । धृ° ।

द्वारं जहिहि भो द्वारनियुक्ते शुभलक्षणे । यामि वेगेन पश्यामि राज्ञीं सुरतिचन्द्रिकाम् ॥ १३
तच्छ्रुत्वा वचनं तस्या रत्नदण्डकरा च सा । कोकिलावाक्यवन्मुक्तं परमं हर्षमाययौ ॥ १४

द्वारनियुक्तोवाच—

किं नाम वहसे वृद्धे कः पतिस्तावकः पुनः । आगताऽसि कथं किं ते कार्यं राज्याश्च दर्शने ॥
कस्मात्किं ब्रूहि विप्रे त्वं श्रोतुं कौतूहलं हि मे ॥ १५

वृद्धोवाच—

शृणु पोष्ये महाराजपत्न्या दण्डकरे यदा । श्रोतुं कौतूहलं तेऽस्ति मदागमनकारणम् ॥ १६
प्रसिद्धा कमला नाम्ना चाहं प्राणेश्वरो मम । भुवनेश इति ख्यातो नाम्ना द्वारवती पुरी ॥ १७
तस्यां वै वर्तते पोष्ये मम प्राणेश्वरस्तथा । आगताऽहं रत्नवेत्रकरे शृणु सकौतुकम् ॥ १८
ममाऽऽगमनकार्यं हि वच्मीदानीं तवाग्रतः । पुराऽऽसीद्वैश्यकुलजा राज्ञी तव च दुःखिनी ॥ १९
एकस्मिन्दिवसे पोष्ये पतिना कलहः कृतः । तया नार्या च दुःखिन्या ततो वै भर्तृपीडिता ॥ २०
बहिर्भूय द्रुतं गेहाद्रुदन्ती च पुनः पुनः । तस्याश्च रोदनं श्रुत्वा चाऽऽगताऽहं समीपतः ॥ २१
पप्रच्छ सर्ववृत्तान्तं कथितो वै यथार्थतः । तया ततो व्रतवरमुपदेशं ददाम्यहम् ॥ २२
ममोपदेशतः सा वै चक्रे व्रतवरं मुदा । तस्य प्रसादाद्राज्ञो द्वाःस्थे संजाता सुखिता च सा ॥ २३
कदाचिद्वैश्यकुलजा पत्या मृत्योर्वशं गता । समानेतुं ततस्तौ तु विहिताखिलघातकौ ॥ २४
किंकरान्प्रेषयामास चण्डाद्यान्धर्मराट्प्रभुः । यमाज्ञया समायाता यमदूता भयंकराः ॥ २५
बद्ध्वा तौ चर्मपाशेन लोहमुद्गरपाणयः । उद्यमं चक्रिरे गन्तुं यमस्य शरणं प्रति ॥ २६
अत्रान्तरे च लक्ष्म्यास्तु दूता विष्णुपरायणाः । समानेतुं समायाताः शङ्खचक्रगदाधराः ॥ २७
दृष्ट्वा तथाविधांस्तांश्च यमदूताः पलायिताः । लक्ष्मीदूता महात्मानः स्वप्रकाशादयस्तथा ॥ २८
पाशं छित्त्वा समारोप्य राजहंसयुते रथे । जग्मुर्लक्ष्मीपुरं सर्वे सहसा कीर्तिवर्त्मना ॥ २९
यावद्वारं व्रतवरं वैश्या कृतवती च सा । तावत्कल्पसहस्राणि तस्थतुः कमलापुरे ॥ ३०
पुण्यशेषस्य भोगार्थं जातौ राजान्वयेऽधुना । व्रतं च विस्मृतौ द्वाःस्थे राजसंपत्तिगर्वितौ ॥
तस्माच्च तव तस्यापि चोपदेशार्थमागता ॥ ३१

द्वाःस्थोवाच—

केनैव तु विधानेन वृद्धे व्रतवरं कृतम् ॥ ३२
कस्मिन्मासे व्रतं श्रेष्ठं देवता का च पूज्यते । एतन्मे पृच्छतो(?)मातर्यथावद्वक्तुमर्हसि ॥ ३३

कमलोवाच—

कार्तिके च व्यतिक्रान्ते मार्गशीर्षे समागते । तस्मिन्मासे च भोः पोष्ये वासरे गुरुसंज्ञके ॥ ३४
ततः पूर्वाह्णसमये सकलव्रतिभिर्वृता । नारायणेन सहितां लक्ष्मीं संपूजयेत्ततः ॥ ३५
मिष्टैः पायसयुक्तैश्च भुंक्तैश्च खण्डमिश्रितैः । लक्ष्मीं संतोषयेत्पोष्ये ततः संप्रार्थयेदिदम् ॥ ३६
त्रैलोक्यपूजिते देवि कमले विष्णुवल्लभे । यथा त्वमचला कृष्णे तथा भव मयि स्थिता ॥ ३७
ईश्वरि कमले देवि शरणं च भवानघे । नानोपहारद्रव्यैश्च लक्ष्मीमाज्ञाप्य तोषयेत् ॥ ३८
शास्त्रैश्च पूजयेद्देवीं महोत्सवसमन्विताम् । ततो नैवेद्यशेषांश्च दत्त्वा ब्राह्मणसत्तमम् ॥ ३९

१ ज. °ते यो वै म° । २ ब. ज. तदा । ३ ब. ज. °राक्रमाः । स° । ४ ट. गुप्तैश्च ।

आत्मानं स्वपतिं पुत्रान्पोष्येऽन्यानपि सेवकान् । द्वितीये तु गुरोर्वारे विशेषं शृणु सुन्दरि ॥ ४०
चित्रधूलीमशस्तैश्च श्राष्ट्रैर्गोधूमनिर्मितैः । तोषणं कमलादेव्याः कुर्याद्वै भक्तिभावतः ॥ ४१
तृतीये खण्डसंयुक्तं दध्योदननिवेदनम् । श्यामाकशालिकासारैश्चतुर्थे पूजयेन्मुदा ॥ ४२
लक्ष्मीदेवीं प्रयत्नेन रत्नदण्डकरे ततः । लक्ष्मीदेवीप्रीतये तु ब्राह्मणान्पूजयेद्धनैः ॥
वस्त्रालंकारभोज्यैश्च फलैर्नानाविधैस्तथा ॥ ४३

पोष्योवाच—

अत्रैव तिष्ठ भो वृद्धे राज्ञीं सुरतिचन्द्रिकाम् । विज्ञाप्य त्वां नयिष्यामि मा क्रोधं कुरु सत्तमे ४४
इत्युक्त्वा सा तु चार्वङ्गी गता राज्ञीसमीपतः । शिरस्यञ्जलिमाधाय पोष्या ब्रह्मन्समूलतः ॥ ४५
आरभ्य साङ्गपर्यन्तं यदूचे कमलालया । तत्सर्वं कथयामास राज्ञीं सुरतिचान्द्रिकाम् ॥ ४६
द्वारपालीवचः श्रुत्वा राज्ञी सुरतिचन्द्रिका । जगाम ब्राह्मणीपार्श्वं सगर्वा प्राह सुन्दरी ॥ ४७

राज्युवाच—

वृद्धे ब्राह्मणि किं वृत्तं चोपदेशार्थमागता । कथयस्व चिरं मह्यं भयं त्यक्त्वा यथासुखम् ॥ ४८

ब्राह्मण्युवाच—

तवानीतिमहं दृष्ट्वा गन्तुमिच्छामि चञ्चला । कथयिष्यामि किं दुष्टे व्रतं परमदुर्लभम् ॥ ४९
इन्दिरावासरे चाद्य चाण्डाले न करोषि यत्[1] । तद्दृष्टं मयि का(म किं)दुष्टे त(त्व)द्गृहे गर्वितेऽधुना
तच्छ्रुत्वा ब्राह्मणीवाक्यं क्रोधसंरक्तलोचना । जरन्तीं ब्राह्मणीं चैव प्रहारं च चकार सा ॥ ५१
ततः सा कमला वृद्धा क्रन्दमाना पलायिता । क्रीडमाना ततः श्यामा ब्राह्मणीक्रन्दनध्वनिम् ॥
आगताऽस्याः समीपं तु श्रुत्वा बाला तपोधना ॥ ५२

श्यामबालो वाच—

वृद्धे व्यथेदृशी केन दत्ता तुभ्यं वदस्व मे । तस्या वचनमाकर्ण्य शोकगद्गदया गिरा ॥
कमलाकथितं सर्वं वृत्तान्तं द्विजसत्तम ॥ ५३
श्यामबाला ततः श्रुत्वा व्रतं परमदुर्लभम् । शास्त्रोक्तविधिना चक्रे सश्रद्धं च सुभक्तितः ॥ ५४
त्रिवारे परिपूर्णे तु तुर्यवारे समागते । विवाहकर्म संसिद्धं द्विज लक्ष्मीप्रसादतः ॥ ५५
श्रीसिद्धेश्वरदेवस्य नृपतेर्भूपतेजसः । मालाधरो नाम सुतो गृहीत्वा तां गृहं गतः ॥ ५६
अथ तस्यां गतायां तु ब्रह्मञ्शृणुष्व कौतुकम् । राज्ञीगृहे च सर्वाणि स्थितानि च बहूनि च ५७
द्रव्याणि केन नीतानि न ज्ञातान्यपि भूसुर । निर्वित्ता बुद्धिहीना[2] सा चान्नवस्त्रविवर्जिता ॥ ५८
उपविष्टा च केनापि गन्तुं च दुहितुर्गृहम् । प्रेषयामास भर्तारं किंचित्प्रार्थनहेतवे ॥ ५९
तस्य मालाधरस्यापि ग्रामे च सरसीतटे । [3]कालेन कियता विप्र प्रवेशं च चकार सः ॥ ६०
तस्माज्जलं समानेतुं तस्या दास्यः समागताः । तं दृष्ट्वा दुःखिनां श्रेष्ठं प्रपच्छुः सानुकम्पिताः ६१

दास्य ऊचुः—

कस्त्वं कुतः समायातो मांसरक्तविवर्जितः । रूक्षाङ्गो रूक्षकेशश्च तत्सर्वं कथयस्व नः ॥ ६२

दरिद्र उवाच—

श्यामबालापिता चाहं सौराष्ट्रनगरागतः । कथयध्वं च भो दास्यः श्यामबालासमीपतः ॥ ६३

---

१ ज. °त् । न दृष्टे चमदुष्टे त्वद्गृहेऽधुना । २ च. ज. पुत्रहीना । ३ च. ज. प्रविवेश च कष्टतः । तं ।

तच्छ्रुत्वा वचनं तस्य कौतूहलसमन्विताः । परस्परमुखाः सर्वा जहसुः स्वपुरं गताः ॥ ६४
श्यामबाला च कथितं सर्वं वृत्तं च भो द्विज । श्रुत्वा तद्वचनं तासां प्रेषयामास सेवकान् ॥ ६५
पुष्पतैलं द्विव्यवस्त्रं चन्दनं पर्णवीटिकाम् । घोटकं च तथा दत्त्वा पितरं प्रति सुन्दरी ॥ ६६
गत्वाऽथ सर्वे ते भृत्याः कृत्वाऽऽशु वेशमुत्तमम् । श्यामबालागृहं निन्युर्देवराजगृहोपमम् ॥ ६७
श्यामबाला ततश्चैव पितरं दुःखिनां वरम् । शाल्यन्नं सघृतं चैव भोजयामास यत्नतः ॥ ६८
तुर्येषु समतीतेषु दिवसेषु तपोधन । प्रेषयामास तं दत्त्वा गुप्तपात्रस्थितं धनम् ॥ ६९
ततः प्रविश्य स्वगृहे धनं पात्रान्तरस्थितम् । ददर्शाङ्गारनिचयं रुरोद भृशदुःखितः ॥ ७०
दुहितुः सदनं यातुं निससार गृहागतः । तत्रैव सरसीकुले प्रविवेश च दुःखिनी ॥ ७१
तथैनां च समानीतां यथाऽस्याः प्राणवल्लभा । तथैव पूजयामास मातृस्नेहात्पतिव्रता ॥ ७२
एतस्मिन्समये विप्र लक्ष्मीवासरमुत्तमम् । श्यामबाला कारयितुं मनश्चक्रे च मातरम् ॥ ७३
तस्या माता दरिद्राणि भुक्त्वा चैकान्तिकेऽपि च । [*शावकानां तु चोच्छिष्टं लक्ष्मीकोपसमन्विता
इन्दिरायास्तृतीयानि (?) वासराणि गत्या(ता)न्यपि] । चतुर्थवासरे तां तत्कारयामास सा दृढम् ॥
आगता नगरं सा वै राज्ञी सुरतिचन्द्रिका । दृष्ट्वा गृहं तथा दिव्यामिन्दिरायाः प्रसादतः ॥ ७६
श्यामबाला च विप्रेन्द्र कदाचित्समये पुनः । मातुर्गृहं गता चाथ ऐश्वर्यस्य दिदृक्षया ॥ ७७
श्यामबालां ततो दूराद्दृष्ट्वा संकुपिता च सा । न पश्यामि मुखं तस्या इत्युक्त्वाऽलक्षिता स्थिता ७८
गत्वा गृहान्तरालं च गृहीत्वा सैन्धवं च सा । आगता स्वगृहं किंचित्पूर्णं लक्ष्मीसमाश्रितम् ७९
[†राजा स्वामी च पप्रच्छ तां साध्वीं पतिदेवताम् । किमानीतं त्वया कान्ते कथयस्व ममाग्रतः ॥] ८०

कान्तोवाच—

राज्यसारं समानीतं दर्शयिष्यामि भोजने । इत्युक्त्वा सा तदा पाकं कृत्वा च लवणं विना ८१
अन्नादिकं ततो दत्त्वा मालाधराय भूभुजे । ततो मालाधरो राजा व्यञ्जनं लवणं विना ॥ ८२
भुक्त्वा वैगुण्यतां प्राप्तो राजसारं ददौ च सा । तदा हृष्टमना राजा भोजनं कृतवान्द्विज ॥
प्रशशंस च तां नारीं धन्या धन्या इति ब्रुवन् ॥ ८३
एतद्व्रतं च या नारी न करोति महादरात् । जन्मजन्मानि सा नारी दरिद्रा दुर्भगा भवेत् ८४
इदं या शृणुयाद्भक्त्या पठेद्यो वा समाहितः । सर्वपापैर्विनिर्मुक्तो लक्ष्मीलोकं लभेच्च सा ॥ ८५
इमां व्रतकथां या तु न श्रुत्वा कुरुते व्रतम् । तस्या व्रतफलं चैव नश्यत्येव न संशयः ॥ ८६

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवाद एकादशोऽध्यायः ॥ ११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०२२७

अथ द्वादशोऽध्यायः ।

शौनक उवाच—

केन पुण्येन भोः सूत चान्येन गतपातकः । नरो याति हरेः स्थानं तद्वदस्वानुकम्पया ॥

* एतच्चिह्नान्तर्गतः पाठः, च.ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः, च.ज. पुस्तकस्थः ।

१ रू. ञ. °नं दिव्यवाटि° । २ ज. °का । ददर्श च तथा द्रव्य° । ३ ढ. °न् । इमामर्चां च° ।

सूत उवाच—
ब्राह्मणस्य धनैः †प्राणान्प्राणैर्वाऽपि द्विजोत्तम । रक्षां करोति यो मर्त्यो विष्णुलोकं स गच्छति २
पुरा राजा दीननाथो द्वापरसंज्ञके युगे । आसीदपुत्रो बलवान्वैष्णवः स तु याजकः ॥ ३
एकदा गालवं राजा पप्रच्छ विनयान्वितः । केन पुण्येन जायेत पुत्रो वै करुणार्णव ॥ ४
वदस्व मुनिशार्दूल करिष्यामि तवाऽऽज्ञया । येषां नॄणां नास्ति सुतो जीवनं हि निरर्थकम् ॥ ५
गालव उवाच—
राजञ्शृणुष्वावहितो यत्पृष्टोऽस्मि तवाग्रतः । कथयामि समासेन पुत्रस्योद्भवकारणम् ॥ ६
क्रतुं च नरमेधाख्यं कुरुष्व राजसत्तम । तदा ते संततिः स्याद्वै सर्वलक्षणसंयुता ॥ ७
राजोवाच—
नरमेधं महायज्ञं यज्ञानां प्रवरं द्विज । कीदृशं नरमानीय करिष्यामि गुरो वद ॥ ८
गालव उवाच—
सुन्दराङ्गः सुवदनः समस्त[1]शास्त्रविद्भवेत् । सत्कुले यदि जातः स तदा यज्ञाय कल्पते ॥ ९
अङ्गहीनः कृष्णवर्णो मूर्खो योग्यो भवेन्न हि । इत्युक्ते गालवे विप्र स राजा मनुजेश्वरः ॥ १०
प्रेषयामास दूतांश्च कथयित्वा मुनेर्वचः । द्रविणं बहु दत्त्वा च गालवप्रमुखान्द्विजान् ॥ ११
यज्ञार्थे वरयामास समस्तशास्त्रपारगान् । ततो राजाज्ञया दूता देशं देशं मुदा गताः ॥ १२
ग्रामे ग्रामे द्विजश्रेष्ठ पत्तनेऽपि समाहिताः । कुत्रापि न प्राप्नवन्तो गता जनपदं ततः ॥ १३
नाम्ना दशपुरं विप्र [2]प्रकीर्णं गुणिभिर्द्विजैः । यत्र नारीः सुकेशीश्च मृगशावकचक्षुषः ॥ १४
दृष्ट्वा मुह्यन्ति पुरुषाश्चन्द्रमुख्यश्च ता यतः । तस्मिन्पुरे मनोरम्ये कृष्णदेव इति द्विजः ॥ १५
आसीत्पुत्रैस्त्रिभिः सार्धं भार्यया च सुशीलया । वैष्णवः प्रियवादी च विष्णुपूजारतः सदा॥१६
साग्निकः पितृभक्तश्च वैष्णवानां प्रियंकरः। प्रार्थनां चक्रुरथ ते राज्ञो दूता द्विजोत्तमम् ॥ १७
पुत्रं देहीति देहीति वद ब्राह्मणसत्तम । नास्ति राज्ञो द्विजश्रेष्ठ पुत्रः संतापनाशनः ॥ १८
तदर्थं नरमेधाख्ये यज्ञे भव सदीक्षितः । नेष्यामि तव पुत्रं वै बलिं दातुं महाक्रतौ ॥ १९
सुवर्णानां चतुर्लक्षं ब्रह्मन्नय समाहितः । सुखेन यदि दातव्यो नो पुत्रः पुत्रलालसात् ॥ २०
तदा बलेन नेष्यामो राजाज्ञाकारिणो वयम् । दूतानां वचनं श्रुत्वा ब्राह्मणौ शोकविह्वलौ ॥२१
अभूतां विगतप्राणाविव संशयमानसौ । किं धनेन सुवर्णेन जीवनेनापि सद्मना ॥
प्रोवाचेदं वचः [*सोऽपि ब्राह्मणो राजपूरुषान् ॥ २२
ब्राह्मण उवाच—
यदि दूताः समानेतुं पुत्रं शोकतमोपहम् । आगता निश्चितं यूयं शृणुध्वं वचनं मम ॥ २३
स्थित्वा पृथिव्यां को भ्रष्टां राजाज्ञां कर्तुमिच्छति । पुत्रं हित्वा किं तु यूयं वृद्धं मां नयथ द्विजम्
इति तस्य वचः ] श्रुत्वा दूताः क्रोधसमन्विताः । बलात्कारेण तद्गेहे सुवर्णानि च तत्यजुः॥ २५
यदा नेतुं मनश्चक्रुस्तं पुत्रं किल ते क्रुधा । बद्धाञ्जलिपुटो भूत्वा रुदन्प्रोवाच स द्विजः ॥ २६
पुत्राणां ज्येष्ठपुत्रं मे हित्वाऽन्यं पुत्रमुत्तमम् । नयतेति वचो वक्तुं वक्त्रे नाऽऽयाति हे जनाः २७

† षष्ठ्यर्थे द्वितीयाऽऽर्षी । * एतच्चिह्नान्तर्गतः पाठः, च. ज. ढ. पुस्तकस्थः ।

१ ज. °स्तशास्त्र° । २ ज. संकीर्णं ।

द्विजस्य वचनं श्रुत्वा ब्राह्मणीं रुदतीं तदा । प्रोचुर्दूताः कनीयासं पुत्रं देहीति सत्तम ॥ २८
तेषामिति वचः श्रुत्वा ब्राह्मणी भूमितस्तदा । पपात वात्यया सार्धं रम्भेव भृशदुःखिनी ॥ २९
मुद्गरं सा समादाय मौलौ चाताडयद्बलात् । कनिष्ठं मत्सुतं दूता नापि दास्यामि सर्वथा ॥ ३०
एतस्मिन्समये विप्र विप्रस्य मध्यमः सुतः । प्रोवाच विनयाविष्टः प्रणम्य पितरौ रुदन् ॥ ३१
माता यदि विषं दद्यात्पित्रा विक्रीयते सुतः । राजा हरति सर्वस्वं कस्तत्र पालको भवेत् ॥ ३२
इत्युक्त्वा तत्सुतो मूर्ध्ना प्रणम्य पितरौ सह । दूतैर्जगाम त्वरितै राज्ञोऽस्य दीक्षितस्य च ॥ ३३
अथ तौ ब्राह्मणौ पुत्रविच्छेदक्लिष्टमानसौ । रुदित्वा च रुदित्वा च अन्धभावं प्रजग्मतुः ॥ ३४
अथ ते पथ्यगच्छन्त विश्वामित्रमुनेः किल । आश्रमं शिष्ययुक्तं च सेवितं मृगशावकैः ॥ ३५
स मुनी राजपुरुषान्दृष्ट्वा पप्रच्छ सादरम् । के यूयं हो कुत्र गता यथा का वृत्तिरुच्यताम् ॥ ३६

राजदूता ऊचुः—

शृणुष्वावहितो विप्र राज्ञः पुत्रो न जायते । तदर्थं नरमेधाख्ये यज्ञे राजा सुदीक्षितः ॥ ३७
नयामस्तत्र बल्यर्थमिमं ब्राह्मणपुत्रकम् । इति तेषां वचः श्रुत्वा स विप्रः सदयोऽभवत् ॥ ३८
प्राणा ममापि गच्छन्तु सुखी भवतु बालकः । बालकार्थे द्विजार्थे च स्वाम्यर्थे ये जना इह ३९
त्यजन्ति तृणवत्प्राणांस्तेषां लोकाः सनातनाः । विमृश्येति मुनिः स्वान्ते स प्रोवाच द्विजर्षभः ४०
यज्ञे बलिं समादातुमिमं ब्राह्मणेमुत्तमम् । हित्वा मां नयथाथाऽऽशु ह्ययं बालक उत्तमः ॥ ४१
संसारे जन्म संप्राप्य न लब्धं सुखमत्र च ॥ ४२
अनेन बालकेनापि मरिष्यति कथं त्वयम् । आगतेऽस्मिन्गृहाद्दूताः पितरावस्य दुःखितौ ॥ ४३
हतभाग्यौ गतौ नूनं यमस्यैव गृहं प्रति । एवं तस्य वचः श्रुत्वा दूताः प्रोचुरथ द्विजम् ॥ ४४
भूपालस्य विनाऽऽज्ञां वै दीननाथस्य भूसुर । नेतुं त्वां पलितं प्राज्ञ नेष्यामो हि कथं वयम् ॥
एवमुक्त्वा च ते दूता जग्मू राज्ञः पुरीं तदा । मुनिः स दूतसंघैश्च गतवान्यज्ञमन्दिरम् ॥ ४६
राजानं कथयामासुर्दूता विप्रस्य चेष्टितम् । तच्छ्रुत्वा शङ्कितमनाः प्रोवाचेदं वचः स तम् ॥ ४७
मुने यद्यपि मे यज्ञे कृते पुत्रो भविष्यति । बलिं विनाऽपि भो ब्रह्मंस्तदा विप्र सुतं नय ॥ ४८

मुनिरुवाच—

यज्ञे त्वयि (या) कृते राजन्महापुत्रो भविष्यति[3] । अत्र ते संशयो मा भूदमोघमपि दर्शनम् ॥४९
इति तस्य वचः श्रुत्वा राजाऽत्यन्तसहर्षकः । चक्रे पूर्णाहुतिं यज्ञे समस्तैर्मुनिभिः सह ॥ ५०
अथातः स मुनिः श्रेष्ठो ब्राह्मणस्य सुतं च तम् । गृह्य दशपुरं नाम नगरं गतवांस्तदा ॥ ५१
भवनं तस्य गत्वा च उक्तवान्वचनं मुनिः । गृहे त्वं तिष्ठसे विप्र तिष्ठामि मृतवन्मुने ॥ ५२
राजा बलेन मे पुत्रं नीतवान्किं करोम्यहम् । पुत्रे गते च भो विप्र दंपत्योरावयोः पुनः ॥ ५३
गतानि चान्धभावं वै क्रन्दनैर्लोचनान्यपि । अथासौ मुनिशार्दूलः पुत्रं पश्य नयेति च ॥ ५४
उक्तवांस्तौ य(त)दा विप्र ब्राह्मणौ जातहर्षकौ । पुत्रायाऽऽकारणं कृत्वा गतावेतौ[5] बहिः क्षणात् ।
मुनेर्वचनसिद्धित्वात्तत्क्षणं लोचनं तयोः । आलोकं तु गतं तूर्णं पुत्रस्य दर्शनादपि ॥ ५६
पुत्रस्य मुखपद्मं तौ लोचनैरलिसंनिभैः । पतित्वा मुनिं चिरं तं च नमस्कृत्य पुनः पुनः ॥ ५७
प्रोचतुर्वचनं विप्र ब्राह्मणौ प्रियवादिनौ । अहो मुने जीवदानमावयोस्तु कृतं किल ॥ ५८

१ ज. °जा स दी° । २ ढ. °णबालकम् । ३ ङ. ञ. °ति । बलिं विनाऽपि भो ब्रह्मन्मो° । ४ ङ. ञ. गृहीत्व पितृपु° । ५ °ढ. °तौ ततः क्षणे । मु° ।

तयोरेवं वचः श्रुत्वा स मुनिः करुणार्णवः । दत्त्वाऽऽशिषं च तौ विप्र जगाम निजमाश्रमम् ॥५९
मुनिः करगतं चैव कृत्वा विष्णोः परं पदम् । तपस्तेपे महाभागो दैवतैरपि दुर्लभम् ॥ ६०
किंचित्काले गते विप्र तस्य राज्ञोऽभवत्सुतः । सुन्दरो राजयोग्यश्च इन्दुः क्षीरनिधाविव ॥ ६१
पुत्रोत्सवे सोऽपि विप्र राजा दत्त्वा धनानि वै । बुभुजे देववद्भूम्यां विशोको जातकौतुकः ॥६२
विप्रान्पालयते यस्तु प्राणान्दत्त्वा धनान्यपि । स याति विष्णुभवनं पुनरावृत्तिदुर्लभम् ॥ ६३
पठन्ति ये च भक्त्या च शृण्वन्ति विप्रतः कथाम्[२] । अर्धं वा श्लोकमेकं ते गच्छन्ति विष्णुमन्दिरम्

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे ब्राह्मणप्रतिपालनफलकथनं नाम द्वादशोऽध्यायः ॥ १२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०२९१

---

अथ त्रयोदशोऽध्यायः ।

---

शौनक उवाच—

कृष्णजन्माष्टमी सूत तस्या माहात्म्यमुत्तमम् । कथयस्व महाप्राज्ञ चोद्धरस्व महार्णवात् ॥ १

सूत उवाच—

कृष्णजन्माष्टमीं ब्रह्मन्भक्त्या करोति यो नरः । अन्ते विष्णुपुरं याति कुलकोटियुतो द्विज ॥ २
अष्टमी बुधवारे च सोमे चैव द्विजोत्तम । रोहिणीऋक्षसंयुक्ता कुलकोटिविमुक्तिदा ॥ ३
महापातकसंयुक्तः करोति व्रतमुत्तमम् । सर्वपापविनिर्मुक्तश्चान्ते याति हरेर्गृहम् ॥ ४
कृष्णजन्माष्टमीं ब्रह्मन्न करोति नराधमः । इह दुःखमवाप्नोति स प्रेत्य नरकं व्रजेत् ॥ ५
न करोति च या नारी कृष्णजन्माष्टमीव्रतम् । वर्षे वर्षे तु सा मूढा नरकं याति दारुणम् ॥ ६
जन्माष्टमीदिने यो वै नरोऽश्नाति विमूढधीः । महानरकमश्नाति सत्यं सत्यं वदाम्यहम् ॥ ७
दिलीपेन पुरा पृष्टो वसिष्ठो मुनिसत्तमः । तच्छृणुष्व महाप्राज्ञ सर्वपातकनाशनम् ॥ ८

दिलीप उवाच—

भाद्रे मासेऽसिताष्टम्यां[३] यस्यां जातो जनार्दनः । तदहं श्रोतुमिच्छामि कथयस्व महामुने ॥ ९
कथं वा भगवाञ्जातः शङ्खचक्रगदाधरः । देवकीजठरे विष्णुः किं कर्तुं केन हेतुना ॥ १०

वसिष्ठ उवाच—

शृणु राजन्प्रवक्ष्यामि यस्माज्जातो जनार्दनः । पृथिव्यां त्रिदिवं त्यक्त्वा भवते[५] कथयाम्यहम् ११
पुरा वसुंधरा ह्यासीत्कंसादिनृपपीडिता । स्वाधिकारप्रमत्तेन कंसदूतेन ताडिता[६] ॥ १२
क्रन्दन्ती क्रन्दन्ती[७] सा तु ययौ घूर्णितलोचना । यत्र तिष्ठति देवेश उमाकान्तो वृषध्वजः ॥ १३
कंसेन ताडिता नाथ इति तस्मै निवेदितुम् । बाष्पवारीणि वर्षन्ती विवर्णा साऽवमानिता ॥ १४
क्रन्दन्तीं तां समालोक्य कोपेन स्फुरिताधरः । उमया सहितः सर्वैर्देववृन्दैरनुद्रुतः ॥ १५
आजगाम महादेवो विधातृभवनं रुषा । गत्वा चोवाच ब्रह्माणं कंसध्वंसनहेतवे ॥ १६
उपायः सृज्यतां ब्रह्मन्भवता विष्णुना सह । ऐश्वरं तद्वचः श्रुत्वा[८] गन्तुं प्राह कृतात्मभूः ॥ १७
क्षीरोदे यत्र वैकुण्ठः सुप्तोऽस्ति भुजगोपरि । हंसपृष्ठं समारुह्य हरेरन्तिकमाययौ ॥ १८

---

१ ख. ज. ॰ष्णुभुव॰ । २ ङ. ॰म् । आख्यानं श्लो॰ । ३ ङ. ज. मासि सि॰ । ४ ज. ॰म्यां कस्माज्जातो । ५ ज. ॰तेऽहं यथातथम् । ६ ज. पीडिता । ७ ज. रुदती । ८ ज. ॰त्वा देववृन्दैर्हरादिभिः । क्षी॰ ।

तत्र गत्वा च तं धाता देववृन्दैर्हरादिभिः । संयुक्तः प्रास्तवीद्वाग्मी कोमलं वाग्विदां वरः ॥ १९
नमः कमलनेत्राय हरये परमात्मने । जगतः पालयित्रे च लक्ष्मीकान्त नमोऽस्तु ते ॥ २०
इति तेभ्यः स्तुतिं श्रुत्वा प्रत्युवाच जनार्दनः । देवान्क्लिष्टमुखान्सर्वान्भवद्भिरागतं कथम् ॥ २१

ब्रह्मोवाच—

शृणु देव जगन्नाथ यस्मादस्माकमागतम् । कथयामि सुरश्रेष्ठ तदहं लोकभावन ॥ २२
शूलिदत्तवरोन्मत्तः कंसो राजा दुरासदः । वसुधा ताडिता तेन करघातेन पीडिता ॥ २३
वरं दत्त्वा पुराऽप्यग्रे मायया तु प्रवञ्चितः । भागिनेयं विना शंभो मरणं भविता न मे ॥ २४
तस्माद्गच्छ स्वयं देव कंसं हन्तुं दुरासदम् । देवकीजठरे जन्म लब्ध्वा गत्वा च गोकुलम् ॥ २५
ब्रह्मणा प्रेरितो देवः प्रत्युवाच च शूलिनम् । पार्वतीं देहि देवेश अब्दं स्थित्वा गमिष्यति ॥ २६
उमया रक्षया सार्धं शङ्खचक्रगदाधरः । उद्दिश्य मथुरां चक्रे प्रयाणं कमलासनः ॥ २७
देवकीजठरे जन्म लेभे तत्र गदाधरः । यशोदाकुक्षिमध्यास्ते शर्वाणी मृगलोचना ॥ २८
नवमासांश्च विश्रम्य कुक्षौ नवदिनान्तकान् । भाद्रे मास्यसिते पक्षे चाष्टमीसंज्ञका तिथिः ॥ २९
रोहिणीतारकायुक्ता रजनी घनघोषिता । तस्यां जातो जगन्नाथः कंसारिर्वसुदेवजः ॥ ३०
वैराटी नन्दपत्नी च यशोदाऽजीजनत्सुताम् । पुत्रं पद्मकरं पद्मनाभं पद्मदलेक्षणम् ॥ ३१
तदा हर्षितुमारेभे दृष्ट्वा आनकदुन्दुभिः । कंसासुरभयत्रस्ता प्रोवाच देवकी तदा ॥ ३२
वैराटीं गच्छ भो नाथ सुतं प्रत्यर्पितुं किल । पुत्रं दत्त्वा यशोदायै सुतां तस्याः समानय ॥ ३३
तस्या वचः समाकर्ण्य वसुदेवोऽपि दुःखितः । अङ्के कुमारमादाय वैराट्यभिमुखं ययौ ॥ ३४
यमुना जलसंपूर्णा तत्पथे मध्यवर्तिनी । आसीद्घोरा महादीर्घा गम्भीरोदकपूरभाक् ॥ ३५
एवं दृष्ट्वा तटे स्थित्वा यमुनामवलोकयन् । वसुदेवोऽपि दुःखार्तो विललापातिचिन्तया ॥ ३६
किं करोमि क्व गच्छामि विधिनाऽपि हि वञ्चितः । कथमत्र गमिष्यामि वैराटीं नन्दमन्दिरम् ३७
हरिणा तत्र सानन्दं मायया वञ्चितः पिता । क्षणमात्रं तटे स्थित्वा यमुनामवलोकयन् ॥ ३८
तेन दृष्टा पुनः साऽपि क्षणाज्जानुवहाऽभवत् । [*तां दृष्ट्वा हृष्ट उत्तस्थौ प्रस्थानमकरोद्यथा ॥
मायां कृत्वा जगन्नाथः पितुरङ्काज्जलेऽपतत्] ॥ ३९
तं पुत्रं पतितं दृष्ट्वा हाहा कृत्वा सुदुःखितः । महापापं पुनः कर्तुं विधिना तेन वञ्चितः ॥ ४०
त्राहि मां जगतां नाथ सुतं रक्ष सुरोत्तम । जनकक्रन्दितं दृष्ट्वा कंसारिः कृपया मुहुः ॥ ४१
जलक्रीडां समाचर्य पितुः क्रोडमगात्पुनः । यथा तेन यदुश्रेष्ठो जगाम नन्दमन्दिरम् ॥ ४२
सुतं दत्त्वा यशोदायै सुतां तस्याः समानयत् । निजागारं ततः प्राप्य पत्न्यै प्रत्यर्पिता सुता ४३
देवकी च प्रसूतेति वार्तां श्रुत्वा सुरारिणा । आनेतुं प्रस्थिता दूताः सुतं दुहितरं तदा ॥ ४४
आगत्य कंसदूतास्ते सुतां नेतुं प्रचक्रमुः । बलादेनां समाकृष्य देवकीवसुदेवयोः ॥ ४५
कंसदूतैर्गृहीत्वा सा अर्पिता तु सुरारिणे(रये) । स धृत्वा तां महाराजः सभयोऽभूद्दुरासदः ॥ ४६
शुद्धकाञ्चनवर्णाभां पूर्णेन्दुसदृशाननाम् । कंसो हसति तां दृष्ट्वा विद्युत्स्फुरितलोचनाम् ॥ ४७
आदिदेशासुरश्रेष्ठो जहि नीत्वा शिलोपरि । आज्ञां लब्ध्वाऽसुरास्ते वै निष्पेष्टुं तां प्रवर्तिताः ॥
विद्युच्छीघ्रतरा गौरी जगाम सहसाऽम्बरम् ॥ ४८

* एतच्चिह्नान्तर्गतः पाठः, च. ज. ड. पुस्तकस्थः ।

१ ड. भ. सद्योपायं । २ ड. म शंकरान्तिकम् ।

गौर्युवाच—

शृणु राजन्प्रवक्ष्यामि यत्राऽऽस्ते शत्रुरुत्तमः । नन्दस्य निलये गुप्तस्तव हन्ताऽसुरोत्तम ॥ ४९

वसिष्ठ उवाच—

एवमुक्त्वा तु सा देवी जगाम निजमन्दिरम् । [*श्रुत्वा वाक्यं ततो देव्याः कंसो राजा सुदुःखितः
भगिनीं पूतनामाह गच्छ त्वं नन्दमन्दिरम् ] ॥ ५०
छद्मना तत्सुतं हत्वाऽऽगच्छ ते वाञ्छितं बहु । दास्यामि शत्रुं हन्तुं मे व्रज शीघ्रतरं शुभे ॥ ५१
आज्ञां प्राप्य राक्षसी सा गोकुलाभिमुखं गता । मायया सुन्दरीरूपा प्रविष्टा तत्र गोकुले ॥ ५२
पयोधरे गरं सा तु धृत्वा हन्तुमुपागता । पशुपानां गृहद्वारि प्रविष्टाऽलक्षितेति च ॥ ५३
[†गत्वाऽन्तरुत्थाप्य शिशुं स्तनं दत्त्वाऽऽप सद्गतिम् । ततस्तु शकटं क्षिप्त्वा तृणावर्तादिमर्दनम् ]
कालीयमर्दनं कृत्वा गतो मधुपुरीं ततः । गत्वा कंसो हतः क्रूरः कंसमल्लानजीजयत् ॥ ५५
एतत्ते कथितं राजन्विष्णोर्जन्मदिनव्रतम् । श्रुत्वा पापानि नश्यन्ति कुर्यात्किं वा भविष्यति ५६
य इदं कुरुते मर्त्यो या च नारी हरेर्व्रतम् । ऐश्वर्यमतुलं प्राप्य जन्मन्यत्र यथेप्सितम् ॥ ५७
पूर्वविद्धा न कर्तव्या तृतीया षष्ठिरे(कै)व च । अष्टम्येकादशी भूता धर्मकामार्थवाञ्छिभिः ॥५८
वर्जयित्वा प्रयत्नेन सप्तमीसंयुताष्टमीम् । विना ऋक्षं प्रकर्तव्या नवमीसंयुताऽष्टमी ॥ ५९
उदये चाष्टमी किंचित्सकला नवमी यदि । मुहूर्तरोहिणीयुक्ता संपूर्णा चाष्टमी भवेत् ॥ ६०
अष्टमी बुधवारेण रोहिणीसहिता यदि । सोमेनैव भवेद्राजन्किं कृतैर्व्रतकोटिभिः ॥ ६१
नवम्यामुदयात्किंचित्सोमे साऽपि बुधेऽपि च । अपि वर्षशतेनापि लभ्यते वा न लभ्यते ॥६२
विना ऋक्षं न कर्तव्या नवमीसंयुता न हि । [+कार्या विद्धाऽपि सप्तम्या रोहिणीसंयुताऽष्टमी ६३
कलाकाष्ठामुहूर्तेऽपि यदा कृष्णाष्टमी तिथिः । नवम्यां सैव या ग्राह्या सप्तमीसंयुता न हि॥]६४
किं पुनर्बुधवारेण सोमेनापि विशेषतः । किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥ ६५
पलवेधेन राजेन्द्र सप्तम्यामष्टमीं त्यजेत् । सुराया बिन्दुना स्पृष्टं गङ्गाम्भःकलशं यथा ॥ ६६

दिलीप उवाच—

केन चाऽऽदौ कृतं चेदं केन वा तत्प्रकाशितम् । किं पुण्यं किं फलं चैव कथयस्व महामुने ॥६७

वसिष्ठ उवाच—

चित्रसेनो महाराजा महापापपरो महान् । अगम्यागमनं कृत्वा स्वर्णस्तेयं द्विजस्य च ॥
सुरायां च सदा तृप्तो वृथामांसे सदा रतः ॥ ६८
एवं पापसमायुक्तो नित्यं प्राणिवधे रतः । चाण्डालैः पतितैः सार्धमालापं सर्वदाऽकरोत् ॥ ६९
एतदे(कदे)वंविधो राजा मृगयायां मनो दधे । अरण्ये द्वीपिनं ज्ञात्वा वेष्टयित्वा च सर्वतः॥ ७०
सावधानं भटान्सर्वान्वाक्यमेतदुवाच ह । [*अहमेव निहन्म्येनं योऽन्योऽस्मिन्प्रहरिष्यति]॥७१
स वध्यो नात्र संदेहो व्याघ्रो राज्ञः पथा ययौ । सलज्जोऽपि ततो राजा व्याघ्रं पश्चाज्जगाम ह
अनेकक्लेशदुःखेन व्याघ्रं हन्तुं समाहितः । क्षुत्पिपासाकुलक्लेशः संध्यायां यमुनातटे ॥ ७३

* एतच्चिह्नान्तर्गतः पाठो ज. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठो ज. पुस्तकस्थः ।
+ एतच्चिह्नान्तर्गतः पाठः च. ज. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठो ज. पुस्तकस्थः ।

१ ढ. °ताऽष्टमी । किं । २ ज. एकदा मृगयां यातो दृष्ट्वा व्याघ्रं वने नृपः । सा° । ३ ज. °तः । समीपस्थान्भटा° ।

अष्टमी रोहिणीयुक्ता तद्दिनं जन्मवासरम् । ¹ःकन्या यमुनायां वै व्रतं चक्रुर्नराधिप ॥ ७४
नानोपहारैर्द्रव्यैश्च धूपदीपैः सुशोभनैः । गन्धपुष्पं तथा द्रव्यं कङ्कुमादि मनोहरम् ॥
अन्नं बहुगुणं दृष्ट्वा भक्तं तन्मानसं कृतम् ॥ ७५

राजोवाच—

अन्नाभावान्ममाद्याऽसु प्राणा यास्यन्ति निश्चयः ॥ ७६

स्त्रिय ऊचुः—

जन्माष्टम्यां हरेरद्य न भोक्तव्यं त्वयाऽनघ । गृध्रमांसं खरं काकं गोमांसमन्नमेव च ॥ ७७
भुक्तवानत्र संदेहो यो भुङ्क्ते कृष्णजन्मनि । किं किं छिद्रं न संजातं संसारे वसतां नृणाम् ७८
येन देहे स्थिते प्राणे जयन्ती न कृता नृप । तत्राकृतोपवासस्य शासनं यममन्दिरम् ॥ ७९
यद्दत्तं पितरो नित्यं न गृह्णन्ति यथाविधि । पितरः पातिताः सर्वे जयन्त्यां भोजने कृते ॥ ८०
इति श्रुत्वा ततो राजा व्रतं चक्रे नराधिप । किंचित्पुष्पं कियद्गन्धं वस्त्रं चाऽऽनीय हर्षितः॥८१
[*व्रतस्यास्य प्रभावेण चित्रसेनो हरेर्गृहम् । दिव्यं विमानमारुह्य गतवान्पितृभिः सह] ॥ ८२
[+यत्फलं मथुरां गत्वा दृष्ट्वा कृष्णमुखाम्बुजम् । तत्फलं प्राप्यते पुंसा कृष्णजन्माष्टमीव्रतात् ]॥
यत्फलं द्वारकां गत्वा दृष्टे विश्वेश्वरे हरौ । तत्फलं प्राप्यते दीनैः कृत्वा जन्माष्टमीव्रतम् ॥ ८४

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे हरिजन्माष्टमीव्रतमाहात्म्यं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०३७५

---

अथ चतुर्दशोऽध्यायः ।

---

शौनक उवाच—

कथयस्व महाप्राज्ञ ब्राह्मणस्य कृपार्णव । माहात्म्यं सर्ववर्णानां श्रेष्ठस्य कृपया च मे ॥ १

सूत उवाच—

ब्राह्मणः सर्ववर्णानां गुरुरेव द्विजोत्तम । सर्वामराश्रयो ज्ञेयः साक्षान्नारायणः प्रभुः ॥ २
कुर्यात्प्रणामं यो विप्रं(प्रे) हरिबुद्ध्या तु भूसुर । भक्त्या तस्य द्विजश्रेष्ठ वर्धते संपदादिकम् ॥ ३
न नमेद्ब्राह्मणं दृष्ट्वा हेलयाऽपि च गर्वितः । छेदनं तस्य शिरसः कर्तुमिच्छेत्सदा हरिः ॥ ४
कृतापराधं विप्रं ये द्विषन्ति पापबुद्धयः । हरिद्विषो हि ते ज्ञेया निरयं यान्ति दारुणम् ॥ ५
यः कर्तुं प्रार्थनां विप्रं पश्येत्क्रोधेन चाऽऽगतम् । कृतान्तश्चक्षुषोस्तस्य तप्तसूचीं ददाति वै ॥ ६
कुरुते भूसुरं मूढो भर्त्सनं यो नराधमः । यमदूता मुखे तस्य तप्तलोहं ददति च ॥ ७
येषां निकेतने भुङ्क्ते क्ष्मासुरो वै तपोधनः । सुपर्वाणैः(र्वभिः) स्वयं कृष्णो भुङ्क्ते तेषां निकेतने ८
नश्यन्ति सर्वपापानि द्विजहत्यादिकानि च । कणमात्रं लिहेद्यस्तु विप्राङ्घ्रिसलिलं नरः ॥ ९
यो नरश्चरणं धौतं कुर्याद्धस्तेन भक्तितः । द्विजातेर्वच्मि सत्यं ते स मुक्तः सर्वपातकैः ॥ १०
पुत्रहीना च या नारी मृतवत्सा च याऽङ्गना । सपुत्रा जीववत्सा सा द्विजपादाङ्घ्रिसेवनात् ११

---

* एतच्चिह्नान्तर्गतः पाठो ज. पुस्तकस्थः । +एतच्चिह्नान्तर्गतः पाठः, च. ज. ढ. पुस्तकस्थः ।

---

१ ङ. भ. 'म् । स्वक' । २ ज. तपोधम । ३ ङ. भ. 'त्रं भवे(जे)त्तस्य त्रि' ।

ब्रह्माण्डे यानि तीर्थानि [*तानि तीर्थानि सागरे। उदधौ यानि तीर्थानि] तिष्ठन्ति द्विजपादयोः
द्विजाङ्घ्रिसलिलैर्युक्तं सेचनं यस्य मस्तके । स स्नातः सर्वतीर्थेषु स मुक्तः सर्वपातकैः　१३
शृणु शौनक वक्ष्यामि माहात्म्यं पापनाशनम् । विप्रपादोदकस्याहमितिहासं तपोधन ॥　१४
आसीत्पुरा द्विजश्रेष्ठ वैश्यवृत्तिपरायणः । शूद्रो भीमो द्वापरे च ब्रह्महत्यासहस्रकृत् ॥　१५
निष्ठुरः सर्वदाऽतुष्टः स महावैश्यया पुनः । शूद्राचारपरिभ्रष्टो भीमोऽसौ गुरुतल्पगः ॥　१६
प्रत्येकं वच्मि किं तस्य दस्योः संख्या न विद्यते। पापानां मुनिशार्दूल भीमस्य दुष्टचेतसः॥ १७
एकदा स गतः कश्चिद्ब्राह्मणस्य निवेशनम् । गत्वा तं तस्य गेहात्तु द्रव्यं नेतुं मनोदधे ॥　१८
तत्रोवास ब्राह्मणस्य बहिर्द्वारसमीपतः । दैन्ययुक्तं वचः प्राह क्ष्मासुरं स तपोधनम् ॥　१९
भोः स्वामिञ्शृणु मे वाक्यं दयालुरिव मन्यते(से)। क्षुधार्तोऽहं देहि चान्नं प्राणा यास्यन्ति मे द्रुतम्॥

ब्राह्मण उवाच—

क्षुधार्त शृणु मे कश्चिद्वाक्यं कर्तुं न विद्यते । पाकं मे तण्डुलान्नित्यं नीत्वा भुङ्क्ष्व यथासुखम् २१
नास्ति मे जनको माता नास्ति सूनुः सहोदरः । नास्ति जाया मातृबन्धुर्मृताः सर्वे विहाय माम्॥
तिष्ठाम्येको गृहेऽकर्मा भाग्यहीनोऽतिथे हरिः। एको मे वसतश्चास्ति न जाने तद्विना किल॥२३

भीम उवाच—

मम कश्चिद्द्विजश्रेष्ठ नास्ति सेवां तवापि च। शूद्रोऽहं निलये[1] जात्या कृत्वा स्थास्यामि ते सदा॥

सूत उवाच—

इति तस्य वचः श्रुत्वा सानन्दः क्ष्मासुरस्तदा । पाकं विधाय तूर्णं स ददावन्नं तपोधन ॥　२५
सोऽपि हर्षसमायुक्तस्तस्थौ तत्र द्विजालये । सेवां कुर्वन्स्नेहयुक्तां भूसुरस्य मनोहराम् ॥　२६
अद्य श्वो वा हरिष्यामि द्रव्यमस्य ममापि च । नेतुं यदा करिष्यामि नेष्यामि नात्र संशयः॥२७
परामृश्य च हृद्यन्तः कृत्वा तस्य क्रियां वदेत् । पादधौतादिकं चासौ शिरसा गतपातकः ॥
आचम्याङ्घ्रिजलं दध्रे छद्मना प्रत्यहं द्विज ॥　२८
एकदा हारकः कश्चिद्द्रव्यं नेतुं समागतः । उद्घाट्य रात्रावररं गतोऽसौ तद्गृहान्तरम् ॥　२९
दृष्ट्वा भीमः प्रहारार्थं दण्डहस्तं समागतः । हारको मस्तकं तस्य च्छित्त्वा तूर्णं पलायितः ॥ ३०
अथ तस्य भटा विष्णोः शङ्खचक्रगदाधराः। समायातास्तथा नेतुं भीमं तं वीतकिल्बिषम् ॥ ३१
स्यन्दनं चाऽऽगतं दिव्यं राजहंसयुतं द्विज । तत्राऽऽरूढो ययौ विष्णोर्भवनं दुर्लभं किल ॥ ३२
माहात्म्यं भूमिदेवस्य मया ते तत्प्रकीर्तितम् । शृणुयाद्यो नरो भक्त्या तस्य पातकनाशनम्॥३३

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे ब्राह्मणमाहात्म्यकथनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०४०८

---

अथ पञ्चदशोऽध्यायः ।

---

शौनक उवाच—

कथयस्व महाभाग माहात्म्यं पापनाशनम्। एकादश्याः फलं किंवा किल्बिषं स्यादकुर्वतः॥ १

---

* एतच्चिह्नान्तर्गतः पाठः, च. ट. पुस्तकस्थः ।

१ ज. सेवको ।

सूत उवाच—

एकादश्यास्तु माहात्म्यं किमहं वच्मि सांप्रतम् । श्रुत्वा चैकादशीनाम यमदूताश्च शङ्किताः ॥
भवन्ति नात्र संदेहः सर्वप्राणिभयंकराः ॥ २
व्रतानां चैव सर्वेषां श्रेष्ठां चैकादशीं शुभाम् । उपोष्य जागृयाद्विष्णोः कुर्याच्च मण्डनं महत् ॥ ३
तुलसीदलैस्तु यो मर्त्यो हरिपूजां करोति वै । दलेनैकेन लभते कोटियज्ञफलं द्विज ॥ ४
अगम्यागमने चैव यत्पापं समुदाहृतम् । तत्पापं याति विलयं चैकादश्यामुपोषणात् ॥ ५
घृतपूर्णं प्रदीपं यो दद्याद्विष्णुदिने द्विज । अन्ते विष्णुपरं याति तमो हत्वा स्वतेजसा ॥ ६
धन्या जनपदास्ते वै धन्यः स च महीपतिः । हरेर्दिने यस्य राज्ये चैकादश्यां महोत्सवः ॥ ७
नारायणस्य शयने पार्श्वस्य परिवर्तने । विशेषेण प्रबोधिन्यां निराहारा भवन्ति ये ॥ ८
मदन्तिकं नाऽऽनयध्वं प्राणिनः पुण्यभागिनः । अहर्निशं पितृपतिः समादिशति दूतकान् ॥ ९
एकादशी जगन्नाथवल्लभा पुण्यवर्धिनी । विष्णुर्देहं दहत्येव तस्यामन्नस्य भक्षणे ॥ १०
तेषां धिग्जीवनं पुंसां धिक्सौन्दर्यं (च) वर्तिताम् । येऽन्नमश्नन्ति पापिष्ठाश्चैकादश्यां हि विड्भुजः
एकादश्यां द्विजश्रेष्ठ भुक्तिमाश्रित्य केवलम् । बहूनि विविधान्येव तिष्ठन्ति दुरितानि च ॥ १२
अमावास्यां(?) यथा स्त्रीणां संगमे कलुषं महत् । एकादश्यां तथैवान्नभक्षणे वृजिनं भवेत् ॥ १३
रोगिणश्च तथा खञ्जकाससोदर[1][2]कुष्ठकाः । भवन्ति प्राणिनस्ते वै तस्यामन्नस्य भक्षणे ॥ १४
ग्रामशूकरतां यान्ति दारिद्र्यं च प्रयान्ति वै । राजबद्धा द्विजश्रेष्ठ तस्यामन्नस्य भक्षणे ॥ १५
संसारे यानि पापानि तानि विप्र हरेर्दिने[3] । भुक्तिमाश्रित्य तिष्ठन्ति जलभक्षणमाज्ञया ॥ १६
कुर्वतां सर्वपापानि नरकान्निष्कृतिर्भवेत् । न निष्कृतिर्भवेन्नॄणां भुञ्जतां च हरेर्दिने ॥ १७
[*नरा यावन्ति चान्नानि भुञ्जते च हरेर्दिने] । [+प्रत्यन्नं च ब्रह्महत्याकोटिजं वृजिनं भवेत् ॥
पुनर्वच्मि पुनर्वच्मि श्रूयतां श्रूयतां नराः । न भोक्तव्यं न भोक्तव्यं न भोक्तव्यं हरेर्दिने] ॥१९
गङ्गादिषु च तीर्थेषु स्नात्वा यत्फलमाप्यते । चन्द्रसूर्योपरागे च चैकादश्यामुपोषणात् ॥ २०
अर्चित्वोत्पलमालाभिस्तस्यां च कमलापतिम् । विधिवत्पारणं कृत्वा न मातुर्गर्भभाजनम् ॥ २१
एकादश्यां हरेर्गेहे करोति मण्डनं द्विज । परमां गतिमासाद्य तिष्ठेद्विष्णुनिकेतने ॥ २२
एकादशीं समासाद्य निराहारा भवन्ति ये । तेषां विष्णुपुरे शश्वत्स्थानमेव न संशयः ॥ २३
तुलसीभक्तिसंलीनं मनो येषां विराजते । तेषां विष्णुपुरे शश्वत्स्थानमेव न संशयः ॥ २४
परद्रव्येष्वभिरुचिर्येषां चैव न विद्यते । संतुष्टमनसो येऽपि तेषां विष्णुपुरं ध्रुवम् ॥ २५
दुर्भिक्षकालमासाद्य प्राणिभ्यो ये नरोत्तमाः । ददत्यन्नं हरेः सद्म तेषां चैव न संशयः ॥ २६
गवां द्विजानां त्राणाय स्वामिनो योषितस्तथा । प्राणान्मुञ्चन्ति ये मर्त्यास्तेषां विष्णुपुरं ध्रुवम्॥
प्राणिभिर्दशमीविद्धा न चोपोष्या कदाचन । परिहार्या द्विजश्रेष्ठ दुर्जनस्यान्तिकं यथा ॥ २८
अरुणोदयवेलायां दशमी संगता यदि । तत्रोपोष्या द्वादशी स्यात्त्रयो[*दश्यां तु पारणम् ॥२९
दशमीशेषसंयुक्तो यदि स्यादरुणोदयः । वैष्णवेन न कर्तव्यं] तद्दिनैकादशीव्रतम् ॥ ३०
चतस्रो घटिकाः प्रातररुणोदय उच्यते । यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ॥ ३१

* एतच्चिह्नान्तर्गतः पाठः, च. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः, च. ज. ड. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः, च. ज. ड. पुस्तकस्थः ।

१ ड. °रकूर्चकाः । २ ड. ञ. °कुक्षिकाः । ३ ज. ड. °ने । भक्तमा° ।

अरुणोदयकाले तु दशमी यदि दृश्यते । न तत्रैकादशी कार्या धर्मकामार्थनाशिनी ॥ ३२
स्वल्पां च दशमीविद्धां त्यजेदेकादशीं बुधः । सुराबिन्दुसुसंपर्काद्घृतकुम्भं त्यजेद्यथा ॥ ३३
संपूर्णैकादशी यत्र द्वादश्यां पुनरेव सा । उत्तरा यतिभिः कार्या पूर्वामुपवसेद्गृही ॥ ३४
एकादशीकला यत्र द्वादशी परतो न चेत् । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणा ॥ ३५
एकादशी विलुप्ता चेत्परतो द्वादशीयुता । उपोष्या द्वादशी पूर्णा यदीच्छेत्परमां गतिम् ॥ ३६
संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि ॥ ३७
एकाशीव्रते येषां मनः संलीयते नृणाम् । तेषां स्वर्गो हि वासोऽथ यान्ति ते सदनं हरेः ३८
एकादश्याः परं नास्ति परलोकस्य साधनम् । बहुपापसमायुक्तः करोति हरिवासरम् ॥
[*सर्वपापविनिर्मुक्तः स याति हरिमन्दिरम् ॥ ३९
पतिसहिता या योषित्करोति हरिवासरम् । ] सुपुत्रा स्वामिसुभगा याति प्रेत्य हरेर्गृहम् ॥ ४०
यो यच्छति हरेरग्रे प्रदीपं भक्तिभावतः । हरेर्दिने द्विजश्रेष्ठ पुण्यसंख्या न विद्यते ॥ ४१
याऽङ्गना भर्तृसहिता कुरुते जागरं हरेः । हरेर्निकेतने तिष्ठेच्चिरं पत्या सह द्विज ॥ ४२
यत्किंचिद्धरये वस्तु भक्त्या यच्छति यो द्विज । हरेर्दिने तस्य पुण्यमक्षयं चैव सर्वदा ॥ ४३
पुराऽऽसीद्वल्लभो नाम्ना नगरे काञ्चनाह्वये । धनेन पुष्कलेनापि राजते स धनेश्वरः ॥ ४४
तस्य प्रिया महारूपा नाम्ना हेमप्रभा द्विज। गरीयान्मुखरस्तत्र बाधते च कलेर्गुणः ॥ ४५
सा सदा कलहं कुर्यात्पत्या सह तपोधन । शश्वद्गुरुजनान्कामं भर्त्सनां नीचभाषया ॥ ४६
पाकपात्रे सदाऽश्नीयाद्गुप्ता सैकान्तिके मला । उच्छिष्टं गुरुजनेभ्यश्च दद्याद्वै प्रतिवासरम् ॥ ४७
जारे सदा स्थितं चित्तमहं साध्वीति सा वदेत् । स्वामिनः कलहैर्ब्रह्मन्मनोद्वेगकरा सदा ॥ ४८
एकदा चाऽऽगतां दृष्ट्वा चकार भर्त्सनां च ताम् । भर्ता तस्याः प्रहारं च सर्वपापयुतां द्विजः ४९
सैव रोषसमायुक्ता गता शून्यगृहे तु वै । सुप्ताऽज्ञाता स्थिता कस्मिञ्जलान्नं न चखाद ह ॥ ५०
दैवात्तत्र दिने विष्णोः पार्श्वस्य परिवर्तनम् । एकादशीव्रतं विप्र सर्वपापप्रणाशनम् ॥ ५१
ततः प्रभाते रजनी द्वादशी श्रवणान्विता । आगता तत्र सा नारी रोषनिर्भरमानसा ॥ ५२
निराहारकृताद्वै च निर्मला सा बभूव ह । रात्रौ च पञ्चतां याता जयन्तीवासरे द्विज ॥ ५३
यमाज्ञया ततो दूता आगतास्तां तथाविधाम् । नेतुं भयंकरास्ते च पाशमुद्गरपाणयः ॥ ५४
बद्ध्वा नेतुं मनश्चक्रुः कृतान्तसदनं यदा । तदाऽऽगता विष्णुदूताः शङ्खचक्रगदाधराः ॥ ५५
छित्त्वा पाशं ततो दिव्ये स्यन्दने तां गतैनसम्। ते वै चाऽऽरोहयामासुर्निर्मलां भवनं हरेः ॥ ५६
गता तैर्वेष्टिता साऽथ दुर्लभं निर्जरैः शुभम् । विष्णोर्दिवसमाहात्म्यं कथितं ते द्विजर्षभ ॥ ५७
अनिच्छयाऽपि यः कुर्यात्स याति हरिमन्दिरम् । एकादश्या दिने मर्त्यो दीपं दातुं हरेर्गृहे ॥
[†गच्छेत्प्रतिपदं सोऽपि चाश्वमेधफलाधिकम् ॥ ५८
शृण्वन्ति च पुराणादि पठन्ति च हरेर्दिने] । प्रत्यक्षरं लभन्ते ते कपिलादानजं फलम् ॥ ५९

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे हरिवासरमाहात्म्यं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०४६७

---

* एतच्चिह्नान्तर्गतः पाठः, च. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः, च. ज. ढ. पुस्तकस्थः ।

अथ षोडशोऽध्यायः ।

शौनक उवाच—

कर्मणा केन भोः सूत चैनसां संक्षयो भवेत् । श्रीहरेश्च कृपा भूयात्तद्वदस्वानुकम्पया ॥ १

सूत उवाच—

शृणु शौनक वक्ष्यामि शृण्वतां पापनाशनम् । येन विष्णोः कृपा स्याद्वै वृजिनक्षयकारिणी ॥ २
पौर्णमास्यां तु यो विप्र भक्तिभावसमन्वितः । कुर्यान्नानाविधानेन सपर्यां श्रीजगद्विभोः ॥ ३
कलुषं तस्य नश्येत कोटिजन्मार्जितं मुने । तस्मिञ्श्रीरमणस्यास्य कृपा जाता भवेद्ध्रुवम् ॥ ४
द्वादश्यामन्नदानं यो भक्त्या कुर्याद्द्विजातये । तस्य नश्यन्ति पापानि तमांसीवारुणोदये ॥ ५
यो नरः श्रीहरेः कुर्यात्स्नपनं पयसा द्विज । तत्प्रीतिः श्रीहरेः सद्यो द्वादश्यां शर्करादिभिः ॥ ६
मन्त्रं विना तु यो विप्र दद्याच्छ्रीहरये किल । पाषाणसदृशं पुण्यं [*दाता याति अधोगतिम् ॥ ७
क्ष्मासुराय च मूर्खाय पाषाणसदृशं तु यत् । दद्याद्दानं नरो यो वै ] तस्य पुण्यं न विद्यते ॥ ८
विद्याहीनो द्विजो मोहाद्दानं गृह्णाति मूढधीः । कालानलं यथा जीर्णं तेन स निरयं व्रजेत् ॥ ९
यथा दारुमयो हस्ती मृगश्चित्रमयो यथा । विद्याहीनो द्विजो विप्र त्रयस्ते नामधारकाः ॥ १०
यथाऽध्वनि स्थितं वारि पवनार्केण शुध्यति । भक्त्या तु पार्षदं दृष्ट्वा तस्य नश्यति कल्मषम् ॥
यो नरश्चाऽऽश्विने मासि सघृतां पूर्णिमादिने । दद्याच्छ्रीहरये लाजां क्रीडार्थं तु वराटिकाम् ॥ १२
भक्त्या याति हरेः स्थानं पुनरावृत्तिवर्जितः । न दद्याद्यो नरो मोहात्तस्मिन्न तुष्टिदो हरिः ॥ १३
वराटिकां यावतीं यो हरये पूर्णिमादिने । तावद्दिनं हरेः स्थानं चाऽऽश्विने स वसेद्ध्रुवम् ॥ १४
करवीरपुरे ह्यासीत्पुरा शूद्रोऽपि निर्दयः । कालद्विजो द्विजश्रेष्ठ नाम्ना पापी भयंकरः ॥ १५
[+स्वकार्यनिरतः सोऽपि स्वामिकार्यप्रणाशकः । एकदा पञ्चतां यातो यमदूता भयंकराः] ॥ १६
आगतास्तं समानेतुं यमस्य तु निकेतनम् । बद्ध्वा निन्युश्च तं दृष्ट्वा पृष्टवान्सचिवं यमः ॥ १७

यम उवाच—

अस्य किं विद्यतेऽमात्य कर्मापि च शुभाशुभम् । कथयस्व समूलं तु चित्रगुप्त विचक्षण ॥ १८

चित्रगुप्त उवाच—

असौ पापी दुराचारः स्वामिकार्यप्रणाशकः । नास्ति पुण्यं चाणुमात्रं नरके परिपच्यताम् ॥ १९
शतमन्वन्तरं राजन्नागयोनौ च निष्ठुरः । पाषाणगृहमासाद्य गूढश्चास्तु निरन्तरम् ॥ २०

सूत उवाच—

तावत्कालं ततो विप्र निरये स पपात ह ॥ ततोऽप्यश्मगृहे नागयोनौ जातः सुदुःखितः ॥ २१
एकदा चाऽऽश्विने मासि पौर्णमासीदिने द्विज । लाजा वराटिका नागो बिलात्प्राक्षेपयद्बहिः ॥ २२
पतिता सा हरेरग्रे पापमस्य स्वयं हरिः । तूर्णं तु नाशयामास दयालुर्दुःखनाशकः ॥ २३
कदाचित्प्राप्तकालस्तु पञ्चत्वं स जगाम ह । यमदूताः समानेतुमागता बहुशो द्विज ॥ २४
बद्ध्वा नेतुं यदा चक्रुर्यमस्य सदनं प्रति । तदाऽऽगता विष्णुदूताः शङ्खचक्रगदाधराः ॥ २५
पाशं छित्त्वा रथे दिव्ये तमाशु गतकिल्बिषम् । तत्र चाऽऽरोपयामासुर्यमदूताः पलायिताः ॥ २६

* एतच्चिह्नान्तर्गतः पाठः, च. ज. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः, च ज. ढ. पुस्तकस्थः ।

१ ज. °पादद्भिर्भवे° । २ ङ. °णाणे जन्म चाऽऽसाद्य गृहे स्थातुं नि° ।

ततो निकेतनं विष्णोर्नागस्तैर्वेष्टितो ययौ । तत्र तस्थौ हरेरग्रे पुनरावृत्तिवर्जितः ॥ २७
भक्त्या यो हरये दद्याल्लाजां च सघृतां द्विज । वराटिकां तस्य पुण्यं न जाने किं भवेद्ध्रुवम् ॥
य इमं शृणुयाद्विप्र चाध्यायं पापनाशनम् । तस्य नश्यन्ति पापानि श्रीहरेः कृपयाऽपि च ॥ २९

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे षोडशोऽध्यायः ॥ १६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०४९९

---

अथ सप्तदशोऽध्यायः ।

---

शौनक उवाच—

विष्णुपादोदकस्यापि माहात्म्यं पापनाशनम् । कथयस्व महाप्राज्ञ समूलं मे कृपार्णव ॥ १

सूत उवाच—

समस्तपातकध्वंसि विष्णुपादोदकं शुभम् । कणमात्रं वहेद्यस्तु सर्वतीर्थफलं लभेत् ॥ २
विष्णुपादोदकं पापी यः पिबेत्तस्य कल्मषम् । शरीरस्थं क्षयं याति कृतं ब्रह्मन्न संशयः ॥ ३
[*विष्णुपादोदकं ब्रह्मन्स्पर्शनात्पापनाशनम् । अकालमरणं नास्ति गङ्गास्नानफलं लभेत् ]॥ ४
तुलसीपर्णसंयुक्तं विष्णुपादोदकं द्विज । यो वहेच्छिरसा भक्त्या चान्ते याति हरेर्गृहम् ॥ ५
मेरुतुल्यसुवर्णानि दत्त्वा यत्फलमाप्यते । हरिपादोदकं स्पृष्ट्वा प्राप्यते तत्फलं नरैः ॥ ६
धेनुकोटिसहस्राणि यत्फलं लभते नरैः । दत्त्वा पादोदकं स्पृष्ट्वा तत्फलं प्राप्यते ध्रुवम् ॥ ७
यज्ञकोटिसहस्राणि कृत्वा यत्फलमाप्यते । हरिपादोदकं स्पृष्ट्वा तस्मात्कोटिगुणं नरैः ॥ ८
कोटिकन्याप्रदानेन यत्फलं लभ्यते जनैः । विष्णुपादोदकं स्पृष्ट्वा फलं तस्माद्द्विजाधिकम् ॥ ९
दन्तिकोटिप्रदानेन सप्तकोटिप्रदानतः । यत्फलं लभते मर्त्यः स्पृष्ट्वा पादोदकं हरेः ॥ १०
दत्त्वा मर्त्यः सप्तद्वीपां ससस्यां यत्फलं लभेत् । विष्णुपादोदकं स्पृष्ट्वा तस्माद्विप्राधिकं लभेत्॥ ११
शृणु विप्र प्रवक्ष्यामि संक्षेपादधिकं किमु । विष्णुपादोदकं स्पृष्ट्वा पापी याति हरेर्गृहम् ॥ १२

शौनक उवाच—

स्पृष्ट्वा पीत्वा पुरा केन प्राणिनाऽप्रापि वै गृहम् । कथयस्व हरेः सूत मम त्वं चानुकम्पया ॥ १३

सूत उवाच—

पुरा त्रेतायुगे पापी नाम्ना विप्रः सुदर्शनः । जनार्दनदिने नित्यमश्नीयात्स द्विजोत्तम ॥ १४
शास्त्रनिन्दाकरो नित्यं व्रतनिन्दाकरः सदा । असावन्यन्न जानाति केवलं स्वोदरं विना ॥ १५
एकदा प्राप्तकालस्तु निधनं प्राप्तवान्द्विज । यमदूताः समायाता बद्ध्वा नीतो यमालयम् ॥ १६
तं दृष्ट्वा यमुनाभ्राता पप्रच्छ सचिवं रुषा । भोऽमात्य चास्य यत्पुण्यं पापं वद समूलतः ॥
असौ विप्रो महापापी क्रूरकर्मेव दृश्यते ॥ १७

चित्रगुप्त उवाच—

आकर्णय चास्य पापं पुण्यं नास्त्यणुमात्रकम् । वासरेऽपि हरेर्नित्यमकरोद्भोजनं विभो ॥ १८
वासरे कमलाभर्तुश्चाश्नीयाद्यो नराधमः । पुरीषं सोऽश्नीयाद्राजन्निरयं याति दारुणम् ॥ १९
मन्वन्तरशतं देहि स्थानं तु निरयेऽप्यमुम् । ग्रामक्रोडस्य योनौ हि ततो जन्म भविष्यति ॥ २०

---

* एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः ।

सूत उवाच—

यमाज्ञया ततो विप्र तस्य दूतैर्भयंकरैः । पातितस्तु पुरीषे वै मन्वंतरशताधिकम् ॥ २१
ततो मुक्तोऽभवच्चासौ पृथिव्यां ग्रामसूकरः । चिरं नरकभक्षोऽभूद्धरिवासरभोजनात् ॥ २२
ततो विप्र प्राप्तकालः पञ्चत्वं स जगाम ह । काकयोनौ पुनर्जन्म लेभेऽसौ विड्भुजः सदा ॥ २३
एकस्मिन्दिवसे विप्र श्रीहरेश्चरणोदकम् । द्वारदेशे स्थितं पीत्वा सर्वपापविवर्जितः ॥ २४
तस्मिन्नेव दिने काकः पतितः शबरस्य च । काले मृत्युदशां प्राप्तो व्याधेन वायसोऽपि च ॥ २५
आगते स्यन्दने दिव्ये राजहंसयुते शुभे । आरुह्य बलिभुग्विप्र ययौ स हरिमन्दिरम् ॥ २६
पादोदकस्य माहात्म्यं कथितं पापनाशनम् । यः शृणोति नरः पापी तस्य पापं विनश्यति ॥ २७

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे विष्णुचरणोदकमाहात्म्यं नाम सप्तदशोऽध्यायः ॥ १७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०५२२

---

अथाष्टादशोऽध्यायः ।

---

शौनक उवाच—

अगम्यागमनं सूत कुर्याद्यो वै विमोहितः । तस्य शुद्धिर्भवेत्केन कथयस्व समूलतः ॥ १

सूत उवाच—

अभिगच्छति चाण्डालीं श्वपाकीं यो द्विजोत्तम । [*उपवासत्रयं कुर्यात्प्राजापत्यं चरेत्ततः ॥ २
सशिखं वपनं चैव दद्याद्गोद्वयमेव च । यथार्थदक्षिणां दत्त्वा शुद्धिं प्राप्नोति स द्विजः ] ॥ ३
क्षत्रियो वाऽपि चाण्डालीं वैश्यो वा यदि गच्छति । प्राजापत्यं सकृच्छ्रं च दद्याद्गोमिथुनद्वयम् ॥
अनुगच्छति शूद्रो हि श्वपाकीं च तपोधन । चतुर्गोमिथुनं दद्यात्प्राजापत्यव्रतं चरेत् ॥ ५
मातरं यदि वा गच्छेद्भगिनीं स्वसुतामपि । वधूं च मोहितो गच्छंस्त्रीणि कृच्छ्राण्यथाऽऽचरेत् ॥ ६
चान्द्रायणत्रयं कृत्वा दद्याद्गोमिथुनत्रयम् । सशिखं वपनं कृत्वा पञ्चगव्यं पिबेत्ततः ॥ ७
हुते ह्यग्नौ तथाऽप्यत्र शुध्यत्येवं तपोधन । पितृदारान्द्विजश्रेष्ठ मातुश्च भगिनीं तथा ॥ ८
गुरुपत्नीं मातुलानीं भ्रातृभार्यां स्वगोत्रजाम् । यदि गच्छति मोहेन प्राजापत्यद्वयं चरेत् ॥ ९
चान्द्रायणत्रयं ब्रह्मन्पञ्च गोमिथुनानि च । विप्रेभ्यो दक्षिणां दद्याच्छुध्यते नात्र संशयः ॥ १०
[†गां च गच्छति यो मूढ उपवासत्रयं चरेत् । धेनुं दद्यात्तथा चान्नं शुध्यत्येवं न संशयः ] ॥ ११
वेश्यां खरीं शूकरीं च वानरीं महिषीं द्विज । आकण्ठतः समाक्षिप्य गोमयोदककर्दमे ॥
तत्र तिष्ठेन्निराहारस्त्रिरात्रेणैव शुध्यति ॥ १२
सशिखं वपनं कृत्वा त्र्यहं चोपवसेत्पुनः । एकरात्रं जले स्थित्वा शुध्यत्येव न संशयः ॥ १३
ब्राह्मणीं तु यदा गच्छेद्यो नरः काममोहितः । प्राजापत्यत्रयं कुर्याच्चान्द्रायणत्रयं तथा ॥ १४
गोत्रयं तु तथा दद्याच्छुध्यते च तपोधन । ब्राह्मणी पञ्चगव्यं तु पञ्चरात्रं पिबेद्द्विज ॥
गोद्वयं दक्षिणां दद्याच्छुध्यत्यत्र न संशयः ॥ १५
पराङ्गनां यदा गच्छेत्कृच्छ्रं सांतपनं चरेत् । यथाऽर्गला तथा योषित्तस्मात्तां परिवर्जयेत् ॥ १६

---

* एतच्चिह्नान्तर्गतः पाठो ड.पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः, च. ज. ड. पुस्तकस्थः ।

---

१ ज. °तः । द्रुतं ह्यग्नौ क्षिपेदात्र शु° । २ ग. हुतं । ३ क. ब्राह्मणीं । ४ ज. यथा गौश्च त° । ड. यथा मलं त° ।

वर्णधाणां तथा नीचामनुगच्छेत्सकृन्नरः । पाजापत्यं चरेत्कृच्छ्रं शुध्यत्येवं न संशयः ॥ १७
अङ्गारसदृशी योषित्सर्पिःकुम्भसमः पुमान् । तस्याः परिसरे ब्रह्मन्स्थातव्यं न कदाचन ॥ १८
जारेण जनयेद्गर्भं या च नारी कुलान्तका । त्याज्या सा सर्वथा ब्रह्मंस्तत्र दोषो न विद्यते १९
या च नारी गृहाद्गच्छेत्त्यक्त्वा बन्धून्स्वकानपि । नष्टा सा च कुलभ्रष्टा न तस्याः संगमः पुनः
या तु नारी यदा गच्छेन्मोहिता परपूरुषम् । प्राजापत्यं चरेत्कृच्छ्रं पञ्चगव्यं पिबेत्तथा ॥
गोद्वयं तु तदा दद्याच्छुध्यत्येवं न संशयः ॥ २१
ब्राह्मणी बालिशा ब्रह्मन्मोहिता परपूरुषम् । यदा गच्छेत्तदा त्याज्या जनैर्दोषो न विद्यते २२
यो गच्छेद्ब्राह्मणीं विप्र भूसुरः काममोहितः । गोतिलांश्च तथा दद्याच्छुध्यत्यत्र न संशयः ॥ २३

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादेऽष्टादशोऽध्यायः ॥ १८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०५४५

---

अथैकोनविंशतितमोऽध्यायः ।

---

सूत उवाच—

[*अज्ञानात्प्राश्य विण्मूत्रं सुरां संस्पृश्य वै पुनः । यथा शुद्धिर्भवेत्तेषां कथयामि शृणु द्विज]॥१
प्राजापत्यद्वयं कुर्यात्तीर्थाभिगमनं मुने । वृषैकादशदानं च सशिखं वपनं ततः ॥ २
गत्वा चतुष्पथं सर्वं प्राजापत्यव्रतं तथा । गोद्वयं तु ततो दद्यात्पञ्चगव्यं पिबेत्ततः ॥ ३
ब्राह्मणान्भोजयित्वा तु शुध्यत्यत्र न संशयः । चाण्डालान्नं जलं चैव ज्ञानतोऽपि विपत्तिषु ॥४
यदि भुङ्क्ते नरः कश्चित्कृच्छ्रं चान्द्रायणं चरेत् । सशिखं वपनं कृत्वा पञ्चगव्यं ततः पिबेत् ॥ ५
एकद्वित्रिचतुर्गावो देया विप्रेष्वनुक्रमात् । वृषलान्नं सूतकान्नमभोज्यान्नं जलं च वै ॥ ६
शूद्रोच्छिष्टं यदा भुङ्क्ते ज्ञानतो वा विपत्तिषु । प्राजापत्यद्वयं कुर्याच्चान्द्रायणत्रयं तथा ॥ ७
गोद्वयं तु ततो दद्यात्पञ्चगव्यं पिबेद्द्विज । [†हुत्वा ह्यग्नौ बहून्विप्रान्भोज्य शुद्धो भवेद्ध्रुवम्॥ ८
आखुनकुलमार्जारैरन्नं चेद्भक्षितं द्विज ] । तिलदर्भोदकैः प्रोक्ष्य शुध्यते च न संशयः ॥ ९
पलाण्डुं लशुनं शिग्रुमलाबुं गृञ्जनं पलम् । भुङ्क्ते यो वै नरो ब्रह्मन्व्रतं चान्द्रायणं चरेत् ॥ १०
मद्यमांसप्रियं शूद्रं नीचकर्मानुवर्तनैः । तं शूद्रं वर्जयेद्विप्र श्वपाकमिव दूरतः ॥ ११
द्विजसेवानुरक्ता ये मद्यमांसविवर्जिताः । दानस्वकर्मनिरतास्ते ज्ञेया वृषलोत्तमाः ॥ १२
अज्ञानाद्भुञ्जते विप्र सूतके मृतके यदि । गायत्री(त्र्या) दशभिर्विप्रः सहस्रैश्च शुचिर्भवेत् ॥ १३
सहस्रैः क्षत्रियश्चैव वैश्यः पञ्चसहस्रकैः । पञ्चगव्यैर्भवेच्छुद्धो वृषलोऽपि तपोधन ॥ १४
आज्यं तु तोयं नीचस्य भाण्डस्थं दधि यैः पिबेत् । अज्ञानतोऽपि यो वर्णः प्राजापत्यव्रतं चरेत्
दानं बहुतरं दद्याच्छुद्धो ह्यग्नौ यथाविधि । शूद्राणां नोपवासोऽपि दानेनैव विशुध्यति ॥ १६
सशिखं वपनं कुर्यादहोरात्रोपवासतः । नीचैर्दण्डादिभिश्चैव ताडितो यो नरो द्विज ॥ १७
प्राजापत्यं व्रतं कुर्याच्चान्द्रायणव्रतं तु वा । सशिखं वपनं चैव पञ्चगव्यं पिबेत्ततः ॥ १८

* एतच्चिह्नान्तर्गतः पाठश्च ज. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः, च. ज. पुस्तकस्थः ।

१ च. ज. ढ. °व तपोधन । भ° । २ च. ज. °स्तदा । गो° । ३ च. ज. ढ. °व महामुने । ब्रा° । ४ च. चैवान्नं° । ५ च. ज. पयः ।

गोद्वयं तु ततो दद्याद्यग्नौ चाज्यादिकं हुतम् । मद्यपानं गृहे विप्र ज्ञानतोऽपि यदृच्छया ॥ १९
यदि भुङ्क्ते नरः कश्चित्पात्यः सोऽपि कुलाधरः । गोबीजहन्ता यो विप्र च्छेदकश्च दलस्य च ॥
स्वर्णस्तेयी भवेत्कृच्छ्रप्राजापत्यत्रयं चरेत् । सशिखं वपनं कृत्वा पञ्चगव्यं तथा पिबेत् ॥ २१
यथाविधि हुतं चाग्नौ दद्याद्धेनुत्रयं तथा । तस्य भुक्तं जलं चैव ग्राह्यं स्याद्वै तपोधन ॥ २२
प्रातस्त्र्यहं तु चाश्नीयात्त्र्यहं सायमयाचितम् । त्र्यहं चैव तु नाश्नीयात्प्राजापत्यमिदं व्रतम् ॥२३
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । दिनद्वयं पिबेद्विप्र चैकरात्रमुपोषितः ॥
सर्वपापहरं कृच्छ्रं मुने सांतपनं स्मृतम् ॥ २४
ग्रासं त्र्यहं तु चैकैकं प्रातः सायमयाचितम् । अद्यात्त्र्यहं चोपवसेदतिकृच्छ्रमिदं स्मृतम् ॥ २५
[*प्रतित्र्यहं पिबेदुष्णं जलक्षीरं घृतं द्विज ] । सकृत्स्नायी तप्तकृच्छ्रं स्मृतं पापहरं मुने ॥ २६
अभोजनं द्वादशाहं कृच्छ्रोऽयं पापनाशनः । पराको नाम विज्ञेयः प्रसिद्धश्च तपोधन ॥ २७
एकैकं वर्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् । इन्दुक्षये न भुञ्जीत चान्द्रायणव्रतं स्मृतम् ॥ २८
अश्नीयाच्चतुरः प्रातः पिण्डान्विप्र समाहितः । चतुरोऽस्तमिते चार्के शिशुचान्द्रायणं स्मृतम्॥२९
कूष्माण्डघातिनी नारी पञ्चगव्यं पिबेत्त्र्यहम् । कूष्माण्डपञ्चकं दद्यात्ससुवर्णं सवस्त्रकम् ॥
तस्या वारि तथा भक्तं स्याद्वै ग्राह्यं तपोधन ॥ ३०

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवाद एकोनविंशोऽध्यायः ॥ १९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०५७५

---

अथ विंशोऽध्यायः ।

---

शौनक उवाच—

सुकृतं किं तथा प्राह(हुः) कृत्वा संसारसागरात् । तरिष्यन्ति कलौ सूत तमोन्धकूपमण्डुकाः ॥१

सूत उवाच—

राधाकृष्णप्रिये चोर्जे प्रातः स्नानं समाचरेत् । राधादामोदरं भक्त्या कुर्यात्पूजां समाहिता २
त्यक्त्वाऽऽमिषादिकं ब्रह्मन्पतिसेवापरायणा । सा याति श्रीहरेः स्थानं गोलोकाख्यं सुदुर्लभम् ३
राधादामोदराभ्यां या धूपदीपं तु कार्तिके । दद्यात्सा भवनं विष्णोर्याति वै त्यक्तपातका ॥ ४
योषिद्या कार्तिके विप्र दद्याद्वस्त्रं निकेतने । राधादामोदराभ्यां तु वसेत्सा श्रीहरेश्चिरम् ॥ ५
राधादामोदराभ्यां या पुष्पं माल्यं सुवासितम् । कार्तिके मासि सा दद्याद्याति वैकुण्ठमन्दिरम् ६
[ +गन्धं या चापि नैवेद्यं दद्याद्वै शर्करादिकम् । राधादामोदराभ्यां सा गच्छेद्वै विष्णुमन्दिरम् ॥७
यत्किंचिद्यच्छति ब्रह्मन्कार्तिके च द्विजातये । राधादामोदरप्रीत्यै तस्याः पुण्याक्षयं भवेत् ॥ ८
या नारी कार्तिके भक्त्या राधादामोदरं द्विज । प्रातः सपर्यां सा याति न कुर्यान्निरयं चिरम् ९
कदाचिज्जन्मभूमौ सा विधवा प्रतिजन्मनि । भवेन्नाऽऽसाद्य पूर्वं वै चाप्रिया स्वामिनोऽपि च १०
पुरा त्रेतायुगे विप्र वृषलो नाम शंकरः । सौराष्ट्रदेशवासी च तस्य जाया कलिप्रिया ॥ ११
जाराकाङ्क्षी सदा नाम्ना तृणवन्मन्यते पतिम् । असौ पतिर्न मे योग्यो मे स्वामी परपूरुषः ॥
इति मत्वा सदा तस्मै चोच्छिष्टं तु ददाति वै । नीचसङ्गान्महामूढा मद्यमांसं चखाद ह ॥ १३

---

* एतच्चिह्नान्तर्गतः पाठो ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः, पाठः च. ज. ढ. पुस्तकस्थः ।

स्वामिनो भर्त्सनां नित्यं कुर्यात्कामं तु निष्ठुरा । पादरज्जुर्भवेद्यासौ कस्माद्वै न मृतोऽपि च १४
मृते तस्मिन्नहं भोगं करिष्यामि यदृच्छया । विचार्येति हृदा मूढा जारेणैकेन सा तदा ॥ १५
अन्यदेशं गमिष्यावः सङ्केतमकरोद्द्विज । सुप्तस्य स्वामिनो रात्रावसिना तु शिरो द्विज ॥ १६
छित्त्वा जारकृते साऽपि सङ्केतस्य स्थलं गता । आगतं जारपुरुषं द्वीपिना भक्षितं द्विज ॥ १७
दृष्ट्वा सा रोदनं कृत्वा मूर्छिता निपपात ह । चिरादाश्वस्य सा मूढा करुणं विललाप ह ॥ १८

कलिप्रियोवाच—

स्वकीयं स्वामिनं हत्वा चाऽऽगता परपूरुषम् । तं जारं स्वामिनं दैवाच्छार्दूलोऽभक्षयन्मम ॥
किं करोमि क्व गच्छामि विधात्रा वञ्चिताऽस्म्यहम् ॥ १९

सूत उवाच—

ततः कलिप्रिया भ्रमन्नागता स्वगृहं प्रति । लपने स्वामिनो दत्त्वा मुखं च विललाप सा ॥ २०

कलिप्रियोवाच—

हा नाथ किं कृतं कर्म मया हन्तातिदारुणम् । कं लोकं वा गमिष्यामि वद स्वामिन्मनाग्गिरम् ॥
भर्त्सनां तु यथाकामं कुर्यां चाहं सुनिन्दिता । किंचिन्न वदसि स्वामिन्नेनो यन्मे न विद्यते॥२२

सूत उवाच—

ननाम चरणे तस्य गताऽन्यनगरं प्रति । तत्र प्रविष्टा सा योषिद्दृष्ट्वा पुण्यजनान्बहून् ॥ २३
ऊर्जे स्नानपरान्प्रातर्नर्मदायां च वैष्णवान् । तत्र नद्यां स्त्रियश्चापि राधादामोदरं द्विज ॥ २४
सपर्यां च कृतां चैव शङ्खनादैर्महोत्सवैः । गन्धपुष्पैर्धूपदीपैर्वस्त्रैर्नानाविधैः फलैः ॥ २५
मुखवासैर्भक्तियुक्ता दृष्ट्वा सा विनयान्विता । पप्रच्छ सूत यूयं मे किमेतत्क्रियते स्त्रियः ॥ २६

स्त्रिय ऊचुः—

सर्वमासोत्तमे चोर्जे राधादामोदरौ शुभौ । पूजयामो वयं मातः सर्वपापहरौ शुभौ ॥ २७
कोटिजन्मार्जितं पापं नष्टं प्राप्तं निकेतनम् । सपर्यामामिषं त्यक्त्वा कृत्वा सा च हरेर्दिने ॥ २८
निधनत्वं (नं च) पौर्णमास्यां गता सा निर्मला द्विज। किंकराश्चाऽऽगतास्तूर्णं यमस्य निलयं प्रति
नेतुं तां क्रोधसंयुक्ता बबन्धुश्चर्मरज्जुभिः । तदाऽऽगता विष्णुदूता विमानं स्वर्णनिर्मितम् ॥ ३०
शङ्खचक्रगदापद्मधारिणो वनमालिनः । निजघ्नुश्चक्रधाराभिर्यमदूताः पलायिताः ॥ ३१
राजहंसयुते विप्र विमाने स्वर्णनिर्मिते । आरूढा सा गता तैस्तु वेष्टिता विष्णुमन्दिरम् ॥ ३२
तत्र तस्थौ चिरं भोगं कृत्वा सा वै यथेप्सितम् । या कुर्यात्कार्तिके विप्र राधादामोदरार्चनम् ॥
याति पूजां त्यक्तपापा गोलोकाख्यं मनोहरम् ॥ ३३
य इदं शृणुयाद्भक्त्या या च नारी समाहिता । कोटिजन्मार्जितं पापं तस्य तस्या विनश्यति॥३४

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे राधादामोदरपूजनमाहात्म्यकथनं नाम विंशतितमोऽध्यायः ॥ २० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०६०९

---

अथैकविंशतितमोऽध्यायः ।

---

शौनक उवाच—

कथयस्वाधुना सूत सर्वमासोत्तमस्य च ॥ कार्तिकस्य विधिं सम्यङ्नियमान्वक्तुमर्हसि ॥ १

---

१ ङ. 'न्ना हा हताऽ' ।

सूत उवाच—
आश्विनस्य द्विजश्रेष्ठ पौर्णमास्यां समाहितः । कार्तिकस्य व्रतं कुर्याद्यावदुद्बोधिनी भवेत् ॥ २
दिवा विप्र नरः कुर्यान्मलमूत्रमुदङ्मुखः । [*भवेन्मौनी च सर्वत्र रात्रौ चेद्दक्षिणामुखः ॥] ३
पथ्यम्भसि च गोष्ठेषु श्मशाने वल्मिके द्विज । कुर्यादुत्सर्जनं नैव व्रती मूत्रपुरीषयोः ॥
शुद्धां मृदं गृहीत्वाऽथ वामं प्रक्षालयेत्करम् ॥ ४
अद्भिर्मृदाऽपि शुद्ध्यर्थं पूर्वं विंशतिसंख्यया । उभौ च दशसंख्याभिः पादौ चैव त्रिभिस्त्रिभिः ५
मुखशुद्धिं ततः कुर्यात्संकल्पं स्नपनस्य च । हृदि दामोदरं ध्यात्वा इमं मन्त्रं ततो वदेत् ॥ ६
कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन । दामोदरस्य प्रीत्यर्थं[+राधायाः पापनाशनम् ॥ ७
नमः पङ्कजनाभाय कृष्णाय जलशायिने । नमस्ते राधया सार्धं] गृहाणार्घं(र्घ्यं) प्रसीद मे ॥ ८
स्नानं कुर्यात्ततो विप्र तिलकं तु यथाविधि । ऊर्ध्वपुण्ड्रविहीनस्तु किंचित्कर्म करोति यः ॥
निष्फलं कर्म तत्सर्वं सत्यमेतन्मयोच्यते ॥ ९
यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रविना कृतम् । तद्दर्शनं न कर्तव्यं दृष्ट्वा सूर्यं निरीक्षयेत् ॥ १०
उर्ध्वपुण्ड्रं मृदा शुभ्रं ललाटे यस्य दृश्यते । चाण्डालोऽपि विशुद्धात्मा पूज्य एव न संशयः ॥११
अच्छिद्रमूर्ध्वपुण्ड्रं तु ये कुर्वन्ति नराधमाः । तेषां ललाटे सततं शुनः पादो न संशयः ॥ १२
प्रातःकालोदितं कर्म समाप्य हरिवल्लभाम् । पूजयेद्भक्तितो विप्र तुलसीं पापनाशिनीम् ॥ १३
पौराणीं तु कथां श्रुत्वा श्रीहरेः स्थिरमानसः । ततो विप्रं व्रती भक्त्या पूजयेत्तं यथाविधि ॥ १४
परासनं परान्नं च परशय्यां पराङ्गनाम् । सर्वदा वर्जयेद्विप्र कार्तिके च विशेषतः ॥ १५
सौवीरकं तथा माषानामिषं च तथा मधु । राजमाषादिकं नित्यं वर्जयेत्कार्तिके व्रती ॥ १६
जम्बीरमामिषं चूर्णमन्नं पर्युषितं द्विज । धान्ये मसूरिका प्रोक्ता गवां दुग्धमनामिषम् ॥ १७
लवणं भूमिजं विप्र प्राण्यङ्गमामिषं खलु । द्विजक्रीता रसाः सर्वे जलं चाल्पसरःस्थितम् ॥ १८
ब्रह्मचर्यं तुर्यकाले पत्रावल्यां च भोजनम् । कुर्याद्वै द्विजशार्दूल तैलाभ्यङ्गं च वर्जयेत् ॥ १९
छत्राकं नालिकं हिङ्गुं पलाण्डुं पूतिकादलम् । लशुनं मूलकं शिम्बुं तथैव तुम्बिकाफलम् ॥ २०
कपित्थं चैव वृन्ताकं कृष्माण्डं कांस्यभोजनम् । द्विपाचितं सूतकान्नं मत्स्यं शय्यां रजस्वलाम्२१
द्विस्त्रिश्चान्नं स्त्रियः सङ्गं वर्जयेद्वैष्णवव्रती । धात्रीफलं गृही विप्र रवौ तत्सर्वदा त्यजेत् ॥ २२
कूष्माण्डे धनहानिः स्याद्बृहत्यां न स्मरेद्धरिम् । पटोले तु न वृद्धिः स्याद्बलहानिश्च मूलके २३
कलङ्की जायते बिल्वे तिर्यग्योनिश्च निम्बुके । ताले शरीरनाशः स्यान्नारिकेले च मूर्खता ॥ २४
तुम्बी गोमांसतुल्या स्याद्गोवधं(धः) स्यात्कलिन्दके । शिम्बी पापकरा प्रोक्ता पूतिका ब्रह्मघातिका॥
वृन्ताक्यां सुतनाशः स्याच्चिररोगी च माषके । मांसे च बहुपापं स्याद्वर्जयेत्प्रतिपदादिषु ॥ २६
यत्किंचिद्वर्जयेद्द्रव्यं श्रीहरेः प्रीतये द्विज । तत्पुनर्भूसुरे दत्त्वा व्रतान्ते तस्य भोजनम् ॥ २७
कार्तिकव्रतिनं विप्र यथोक्तकारिणं नरम् । यमदूताः पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥ २८
श्रेष्ठं विष्णुव्रतं विप्र तत्तुल्या न शतं मखाः । कृत्वा क्रतुं व्रजेत्स्वर्गं वैकुण्ठं कार्तिकव्रती ॥ २९
यत्किंचिद्दुष्कृतं विप्र मनोवाक्कायकर्मजम् । दृष्ट्वा तु विलयं याति कार्तिकव्रतिनं क्षणात् ॥ ३०
कार्तिकव्रतिनः पुण्यं ब्रह्मा चैव चतुर्मुखः । न समर्थो भवेद्वक्तुं यथोक्तव्रतकारिणः ॥ ३१

* एतच्चिह्नान्तर्गतः पाठः, ख. ज. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः, ख. ज. पुस्तकस्थः ।

१ ङ. 'प्रं हरेर्भक्त्या । २ ज. 'ण्यर्धमा' । ३ ङ. धृतहीना । ४ ङ. सूतिकान्नं । ५ ङ. भार्या ।

यत्कृत्वा कलुषं सर्वं व्रजेद्विप्र दिशो दश । क्व गच्छामि क्व तिष्ठामि कार्तिकव्रतिनो भयात् ॥ १२
पौर्णमास्यां यथाशक्ति चान्नवस्त्रादिकं द्विज । दद्याद्वै श्रीहरेः प्रीत्यै ब्राह्मणानपि भोजयेत् ॥ १३
रात्रौ जागरणं कुर्यान्नृत्यगीतादिभिर्व्रती । य इदं शृणुयाद्भक्त्या तस्य पापं प्रणश्यति ॥ १४

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे कार्तिकमाहात्म्य एकविंशोऽध्यायः ॥ २१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०६४३

---

अथ द्वाविंशोऽध्यायः ।

---

शौनक उवाच—

माहात्म्यं ब्रूहि सर्वज्ञ शृण्वतां पापनाशनम् । सर्वप्राणिहितार्थाय तुलस्या अनुकम्पया ॥ १

सूत उवाच—

तुलस्याः परिसरे यस्य काननं तिष्ठति द्विज । गृहस्य तीर्थरूपत्वान्नाऽऽयान्ति यमकिंकराः ॥ २
तुलस्याः काननं [*विप्र सर्वपापहरं शुभम् । रूपयन्ति नराः श्रेष्ठास्ते न पश्यन्ति भास्करिम् ३
रोपणं पालनं सेवां दर्शनं] स्पर्शनं तु यः । कुर्यात्तस्य प्रनष्टं स्यात्सर्वपापं द्विजोत्तम ॥ ४
कोमलैस्तुलसीपत्रैरर्चयन्ति हरिं तु ये । कालस्य सदनं विप्र ते न यान्ति महाशयाः ॥ ५
गङ्गाद्याः सरितः सर्वा ब्रह्मविष्णुमहेश्वराः । देवैस्तीर्थैः पुष्कराद्यैस्तिष्ठन्ति तुलसीदले ॥ ६
यो युक्तस्तुलसीपत्रैः पापी प्राणान्विमुञ्चति । विष्णोर्निकेतनं याति सत्यमेतन्मयोदितम् ॥ ७
तुलसीमृत्तिकालिप्तो युक्तः पापशतैरपि । विमुञ्चति नरः प्राणान्स याति हरिमन्दिरम् ॥ ८
यो नरो धारयेद्विप्र तुलसीकाष्ठचन्दनम् । तस्याङ्गं न स्पृशेत्पापं स याति परमं पदम् ॥ ९
तुलसीकाष्ठमालां तु कण्ठस्थां वहते तु यः । अप्यशौचोऽप्यनाचारो भक्त्या याति हरेर्गृहम् १०
धात्रीफलकृता माला तुलसीकाष्ठसंभवा । दृश्यते यस्य देहे तु स वै भागवतो नरः ॥ ११
तुलसीदलजां मालां कण्ठस्थां वहते तु यः । विष्णूच्छिष्टां विशेषेण स नमस्यो दिवौकसाम् १२
यः पुनस्तुलसीमालां कण्ठे कृत्वा जनार्दनम् । पूजयेत्पुण्यमाप्नोति प्रतिपुष्पं गवायुतम् ॥ १३
धारयन्ति न ये मालां हैतुकाः पापबुद्धयः । नरकान्न निवर्तन्ते दग्धाः कोपाग्निना हरेः ॥ १४
न जह्यात्तुलसीमालां धात्रीमालां विशेषतः । महापातकसंहर्त्रीं धर्मकामार्थदायिनीम् ॥ १५
स्पृशेच्च यानि(यावन्ति)लोमानि धात्रीमाला कलौ नृणाम् । तावद्वर्षसहस्राणि वसते केशवालये॥
निवेद्य केशवे मालां तुलसीकाष्ठसंभवाम् । वहते यो नरो भक्त्या तस्य वै नास्ति पातकम् ॥ १७
तुलसीकाष्ठमालां तु प्रेतराजस्य दूतकाः । दृष्ट्वा नश्यन्ति दूरेण वातोद्धूतं यथा दलम् ॥ १८
तुलस्या विपिने धात्र्याश्छायासु यो नरोत्तमः । पिण्डं ददाति पितरो मुक्तिं यान्ति द्विजोत्तम ॥
पाणौ मूर्ध्नि गले चैव कर्णयोश्च मुखे द्विज । धात्रीफलं यस्तु धत्ते स विज्ञेयो हरिः स्वयम् ॥ २०
धात्रीपत्रैः फलैर्विप्र श्रीहरिं चार्चयेद्द्विज । कोटिजन्मार्जितं पापं पूजया नश्यति सकृत् ॥ २१
ब्रह्मा देवाश्च मुनयस्तीर्थानि कार्तिके द्विज । धात्रीव्रतं समाश्रित्य तिष्ठन्ति कार्तिके सदा ॥ २२
धात्रीपत्रं कार्तिके च द्वादश्यां तुलसीदलम् । चिनोति यो नरो गच्छेन्निरयं यातनामयम् ॥ २३

---

*एतच्चिह्नान्तर्गतः पाठः, च ज. ढ. पुस्तकस्थः ।

---

१ ज. ढ. यं चातिदारुणम् ।

धात्रीछायासु यो विप्र चान्नं भुनक्ति कार्तिके । अन्नसंसर्गजं पापमावर्षं तस्य नश्यति ॥ २४
तुलसीवनमध्ये च धात्रीमूले च कार्तिके । कुर्याद्धर्यर्चनं विप्र वैकुण्ठं याति स ध्रुवम् ॥ २५
तुलसीमूलदेशेऽपि स्थितं वारि द्विजोत्तम । गृह्णाति मस्तके भक्त्या पापी याति हरेर्गृहम् ॥ २६
तुलसीपत्रगलितं यस्तोयं शिरसा वहेत् । सर्वतीर्थेषु स स्नातश्चान्ते याति हरेर्गृहम् ॥ २७
पुरा कश्चिद्द्विजश्रेष्ठो द्वापरेऽभून्महामुने । स्नात्वैकदा तुलस्यै स वनं दत्त्वा गृहं गतः ॥ २८
आदित्यो वर्चसा नाम्ना मार्तण्ड इव पुण्यतः । तृषार्तो भेषकः कश्चिदागतो बहुकल्मषः ॥ २९
तुलस्या मूलतस्तोयं पीत्वा चासौ हतांहसः । त्वरयाऽप्यागतो व्याधो नाम्नो यशासिमर्दनः ३०
उवाच भुक्तं चान्नं च भुक्त्वा भेग्नं गतः किमु । कृत्वा मे पाकभाण्डस्थं चाऽऽगतो हिंसकस्य ते ३१
विव्याध तं गतप्राणं नेतुं वै शमनाज्ञया । आगताः किंकराः क्रुद्धाः पाशमुद्गरपाणयः ॥ ३२
बद्ध्वा नेतुं मनश्चक्रुरागता विष्णुकिंकराः । तदा छित्त्वा चर्मपाशं स्यन्दने तं मनोहरे ॥ ३३
तूर्णमारोहयामासुः पप्रच्छुर्विनयान्विताः । तेऽपि पुण्येन भोः सन्तः केन वै नीयतेऽप्यसौ ॥ ३४
ऊचुस्तेऽसौ पुरा राजा पुण्यं बहुतरं कृतम् । अकरोद्धरणं कांचित्सुन्दरीं चाङ्गनामयम् ॥ ३५
अनेन चांहसा राजा गतो वै शमनक्षयम् । तत्र क्लेशस्तु युष्माभिर्दत्तो वै शमनाज्ञया ॥ ३६
ताम्रमय्या स्त्रिया सार्धं क्रीडां सुप्त्वा चकार सः । तप्तायां लोहशय्यायां वैकल्यं कर्मणा नृप ॥
तप्तायोभीषणं तप्तं लोहस्तम्भं यमाज्ञया । ततः स्थितः समालिङ्ग्य भुक्त्वा दुःखं चिरं नृपः ३८
सिक्तः क्षाराम्बुधाराभिरन्यैर्वै शमनालये । ततो नरकशेषे च पापयोनौ मुहुर्मुहुः ॥ ३९
जन्माऽऽसाद्य चिरं दुःखमनुभूतं स्वकर्मणा । तुलसीमूलकं(गं) वारि पीत्वा याति हरेर्गृहम् ॥ ४०
इदानीं तद्वचः श्रुत्वा गता दूता यथाऽऽगताः । तेन सार्धं विष्णुदूता गता वैकुण्ठमन्दिरम् ॥ ४१
माहात्म्यं कथितं ब्रह्मंस्तुलस्याः पापनाशनम् । कुर्वन्ति सेवां ये भक्त्या न जाने किं भवेन्मुने ४२

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे तुलस्या माहात्म्यं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०६८५

---

अथ त्रयोविंशोऽध्यायः ।

---

शौनक उवाच—

कथयस्व मुने सूत माहात्म्यं कलुषक्षयम् । शेषपञ्चदिनस्यापि कार्तिकस्यानुकम्पया ॥ १

सूत उवाच—

शृणु शौनक यत्पृष्टं माहात्म्यं पापनाशनम् । वक्ष्याम्यहं वै चोर्जस्य शेषपञ्चदिनस्य च ॥ २
व्रतानां मुनिशार्दूल प्रवरं विष्णुपञ्चकम् । तस्मिन्यः पूजयेद्भक्त्या श्रीहरिं राधया सह ॥ ३
गन्धपुष्पैर्धूपदीपैर्वस्त्रैर्नानाविधैः फलैः । स याति विष्णुसदनं सर्वपापविवर्जितः ॥ ४
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः । न प्राप्नोति परं स्थानमकृत्वा विष्णुपञ्चकम् ॥ ५
सर्वपापहरं पुण्यं विख्यातं विष्णुपञ्चकम् । तत्र स्नानं तु यः कुर्यात्सर्वतीर्थफलं लभेत् ॥ ६
श्रीहरेः पुरतो विप्र तुलस्याश्च समीपतः । प्रदीपं सर्पिषा पूर्णं दद्याद्यो भक्तिभावतः ॥ ७

---

१ ढ. °हाव्रने । २ ज. भिक्षुकः । क. भक्षकः । ३ ज. भाग्नं । ४ ज. °स्थं तत्राऽऽगत्य ददर्श च । वि° । ५ ज. °नालये । ता° ।

नभसि श्रीहरेः प्रीत्यै याति स विष्णुमन्दिरम् । पापी याति हरेर्धाम सत्यमेतन्मयोदितम् ॥ ८
स्नापयेच्चाच्युतं भक्त्या मधुक्षीरघृतादिभिः । नो दद्यात्किं हरिः प्रीतस्तस्मै साधुजनाय वै ॥ ९
नैवेद्यं देवदेवेशं(शे) पैरमान्नं निवेदयेत् । तस्य पुण्यं प्रसंख्यातुं न शक्तो वै चतुर्मुखः ॥ १०
अर्चयित्वा हृषीकेशमेकादश्यां समाहितः । निष्पाप्य गोमयं सम्यञ्चन्त्रवत्समुपासते ॥ ११
गोमूत्रं मन्त्रवद्भूयो द्वादश्यां प्राशयेद्व्रती । क्षीरं तथा त्रयोदश्यां चतुर्दश्यां तथा दधि ॥ १२
संप्राप्य पापशुद्ध्यर्थं लङ्घयित्वा चैतुर्दिनम् । पञ्चमे तु दिने स्नात्वा विधिवत्पूज्य केशवम् १३
भोजयेद्ब्राह्मणान्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् । ततो नक्तं समश्नीयात्पञ्चगव्यं सुमश्रितम् ॥
एवं कर्तुमशक्तो यः फलमूलं च भोजनम् । कुर्याद्धविष्यं वा विप्र यथोक्तविधिना हं वै ॥ १५
श्रीहरेः पञ्चकं विप्र कुर्याद्यस्तुलसीदलैः । पूजयेत्तं स विज्ञेयः स्वयं नारायणः प्रभुः ॥ १६
पुरा त्रेतायुगे शूद्रो दस्युवृत्तिपरायणः । नाम्ना दण्डकरो नित्यं धर्मनिन्दां करोति यः ॥ १७
असत्यभाषी मित्रघ्नो वेश्याविभ्रमलोलुपः । ब्रह्मस्वहारी क्रूरश्च परस्त्रीगमने रतः ॥ १८
शरणागतहन्ता च पाखण्डजनसङ्गभाक् । गोमांसाशी सुरापश्च परनिन्दाकरः सदा ॥
विश्वासघाती ज्ञातीनां वृत्तिच्छेदी द्विजोत्तम ॥ १९
दृष्टं सर्वे समालोक्य तादृशं तद्गृहं द्विज । आगता ज्ञातयः क्रुद्धास्तस्य पापपरायणम् ॥ २०

ज्ञातय ऊचुः—

रे रे मूढ दूराचार विनाशं प्रति नीयते । या प्रतिष्ठाऽर्जिता पूर्वैरस्माकं निर्मलेऽन्वये ॥ २१
इति क्रुद्धा द्विजश्रेष्ठ अपकीर्तिभयादपि । पापिनां प्रवरं सर्वे तत्यजुस्तं कुलादरम् ॥ २२
ततो गतो महारण्यं विनष्टाखिलवैभवः । कुर्यात्स दस्युभिः सार्धं दस्युकर्म निरन्तरम् ॥ २३
पथि प्रगच्छतां तेषां भयाद्विप्र न खादितुम् । प्राप्तं किंचित्क्षुधार्तास्ते गताश्चान्यस्थलं प्रति २४
तत्र प्रविष्टास्ते सर्वे दृष्ट्वा पुण्यजनान्बहून् । धात्रीमूले स्थितान्ब्रह्मन्वैष्णवान्द्विजसत्तमान् ॥ २५
सर्वे ते दस्यवो विप्र गता दण्डकरोऽपि सः । तेषां परिसरं गत्वा प्रणामं वै चकार सः ॥ २६

दण्डकर उवाच—

क्षुधार्तोऽहं द्विजश्रेष्ठाः प्राणा यास्यन्ति मे ध्रुवम् । ददध्वं खादितुं किंचिद्युष्माकं शरणागतः ॥
आकर्ण्य वचनं तस्य प्रोचुस्ते धर्मतत्पराः । सर्वपापहरे त्वं च विख्याते विष्णुपञ्चके ॥ २८
कथमन्नं खादितुं ते वाञ्छा त्वद्य हरेर्दिने । विशेषं ते ब्रूहि संज्ञा का ते भवति सांप्रतम् । २९
स उवाच मुदा विप्रा नाम्ना दण्डकरोऽप्यहम् । सर्वपापसमायुक्तश्चोद्धारो मे कथं भवेत् ॥ ३०
ऊचुस्ते वै व्रतं श्रेष्ठं कुरुष्व विष्णुपञ्चकम् । विप्राणामाज्ञया विप्र चकार विष्णुपञ्चकम् ॥ ३१
प्रेत्य च हरेः स्थानमारुह्य स्यन्दने वरे । आसाद्य श्रीहरे रूपं तस्थौ जन्मविवर्जितः ॥ ३२
इदं शृणुयाद्भक्त्या चाऽऽख्यानं पापनाशनम् । कोटिजन्मार्जितं पापं तस्य नश्यति तत्क्षणात्

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे विष्णुपञ्चकमाहात्म्यं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०७१८

---

१ ढ. °स्यै प्रयाते विष्णुपञ्चके । पा° । २ अ. यो । ३ ढ. परमान्तं । ४ ज° ढ. च तद्दिन° । ५ ज. हरेत् । श्री° । ढ. °ञ्छा गर्मा ह° ।

अथ चतुर्विंशोऽध्यायः ।

शौनक उवाच—

विदुषां वर तत्त्वज्ञ कथयस्व महामते । इदानीं मम दानानां माहात्म्यं क्रमतो मुने ॥ १

सूत उवाच—

क्षितिदानं मुनिश्रेष्ठ दानानामुत्तमं मतम् । येन चैतत्कृतं दानं सर्वदानफलं मतम् ॥ २
क्षितिं ससस्यां यो दद्याद्ब्राह्मणाय द्विजोत्तम । विष्णुलोके सुखं भुङ्क्ते यावदिन्द्राश्चतुर्दश ॥ ३
पृथिव्यां जन्म चाऽऽसाद्य सार्वभौमस्ततो नृप । महीं सर्वां चिरं भुक्त्वा व्रजेद्वै श्रीहरेर्गृहम् ॥ ४
गोचर्ममात्रां भूमिं यः प्रयच्छति द्विजातये । स गच्छति हरेर्गेहं सर्वपापविवर्जितः ॥ ५
शतं गावो वृषश्चैको यत्र तिष्ठन्त्ययन्त्रिताः । गोचर्ममात्रां तां भूमिं प्रवदन्ति महर्षयः ॥ ६
भूमिनेता भूमिदाता द्वौ चापि स्वर्गगामिनौ । ग्राह्या भूमिर्द्विजैः प्राज्ञैस्त्यक्त्वा दानशतान्यपि ॥ ७
अज्ञानी भूसुरो यस्तु त्यजेद्भूमिं विमोहितः । प्रतिजन्मन्यसौ विप्रो भवेच्चात्यन्तदुःखभाक् ॥ ८
अन्यतो यः समासाद्य दद्याद्भूमिं द्विजातये । तस्मै विप्र जगन्नाथो ददाति परमं पदम् ॥ ९
स्वदत्तां परदत्तां च मेदिनीं यो हरेद्द्विज । युक्तः कोटिकुलैर्याति नरकं चातिदारुणम् ॥ १०
हरेद्यो वै महीं विप्र देवब्राह्मणयोरपि । न दृष्टा निष्कृतिस्तस्य कल्पकोटिशतैर्मुने ॥ ११
भूमिं योऽपरदत्तां च रक्षति क्ष्मापतिर्द्विज । पुण्यं कोटिगुणं स्याद्वै तस्य दानं(तृ)जनादपि ॥ १२
सप्तद्वीपां महीं दत्त्वा यत्पुण्यं प्राप्यते द्विज । तत्पुण्यं प्राप्नुयान्मर्त्यो धेनुं यच्छन्द्विजातये ॥ १३
ददाति वृषभं यस्तु दरिद्राय कुटुम्बिने । सर्वपापविनिर्मुक्तः शिवलोकं स गच्छति ॥ १४
तिलप्रमाणं स्वर्णं यो ब्राह्मणाय प्रयच्छति । [*हरेर्निकेतनं याति युक्तः कोटिकुलैरपि ॥ १५
यो दद्याद्रजतं विप्र साधवे भूसुराय वै ] । [+प्राप्नोति चन्द्रलोकं च पिबेत्तत्रामृतं सदा ॥ १६
प्रवालं मौक्तिकं चैव हीरकं च मणिं तथा । यो ददाति द्विजश्रेष्ठ स्वर्गलोकं स गच्छति ] १७
तुलापुरुषदानेन यत्पुण्यं लभते जनः । शालग्रामशिलां दत्त्वा तस्मात्कोटिगुणं लभेत् ॥ १८
सप्तद्वीपां क्षितिं दत्त्वा सशैलवनकाननाम् । यत्पुण्यं लभते तद्वै शालग्रामशिलाप्रदः ॥ १९
शालग्रामशिलां यो वै दद्याद्भूमिसुराय च । तेन विप्र प्रदत्तानि भुवनानि चतुर्दश ॥ २०
तुलापुरुषदानं यः करोति द्विजपुङ्गव । जनन्याश्चोदरे तस्य पुनर्जन्म न विद्यते ॥ २१
[*सालंकारां द्विजश्रेष्ठ कन्यां यच्छति यो नरः । स गच्छेद्ब्रह्मसदनं पुनर्जन्म न विद्यते] ॥ २२
कन्याविक्रयिणो नास्ति नरकान्निष्कृतिः पुनः । कन्यादानकृतो नास्ति स्वर्गादागमनं पुनः २३
उपानहौ चाऽऽतपत्रं यो ददाति द्विजातये । प्रेत्य चेन्द्रपुरं गत्वा [+वसेत्कल्पचतुष्टयम् ॥ २४
वस्त्रं यच्छति यो दिव्यं] साधवे वै द्विजातये । स्वर्गे दिव्याम्बरधरश्चिरं तिष्ठेद्द्विजोत्तम ॥ २५
धेनुं पुरातनीं यच्छेद्वस्त्रं च जरितं द्विजः । नूनं रजोव(जस्व)तीं कन्यां स गच्छेन्निरयं तथा ॥ २६
कन्याविक्रयिणो ब्रह्मन्न पश्येद्वदनं बुधः । दृष्ट्वा चाज्ञानतो वाऽपि कुर्यान्मार्तण्डदर्शनम् ॥ २७
फलदाता नरो गच्छेत्त्रिदिवं च द्विजोत्तम । भुङ्क्ते कल्पसहस्राणि फलं तत्रामृतोपमम् ॥ २८

* एतच्चिह्नान्तर्गतः पाठः, च. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः, च. ज. ढ. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः, च. ज. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः, ख. ज. पुस्तकस्थः ।

१ ज. ममाग्रतः । इ° । २ ज. °नीं सर्वदा° । ३ ज. बुध । ४ इ. ञ. °श्येत्पल्लवं बु° । ढ. °श्येल्लपनं ।

शाकं यच्छति यो मर्त्यः शिवस्य भवनं द्विज । याति कल्पद्वयं भुङ्क्ते दुर्लभं[1] पायसं सुरैः ॥ २९
घृतदो दधिदश्चैव तक्रदो दुग्धदस्तथा । विष्णोर्निकेतनं गत्वा सुधापानं करोति सः ॥ ३०
गन्धदः पुष्पदश्चैव मर्त्यो याति सुरालयम् । तिष्ठेद्युगसहस्राणि गन्धपुष्पविभूषितः ॥ ३१
शय्यादानं दानसारं ब्राह्मणाय ददाति यः । स याति ब्रह्मसदनं पर्यङ्के शेर(ष्य)ते चिरम् ॥ ३२
पीठदाता दीपदाता सर्वदुष्कृतवर्जितः । स्वर्गे सिंहासने तिष्ठेज्ज्वलद्दीपावलीवृतः ॥ ३३
ताम्बूलं यो नरो दद्याद्भूमिं भुङ्क्तेऽखिलां सुखम् । स्वर्गे देवाङ्गनाक्रोडे सुप्तस्ताम्बूलमत्ति वै ॥ ३४
विद्यादानं दानवरं करोति यो नरोत्तमः । प्रेत्य स संनिधिं विष्णोस्तिष्ठेद्युगशतत्रयम् ॥ ३५
प्राप्य ज्ञानं ततस्तत्र दुर्लभं वै द्विजर्षभ । दुर्लभं मोक्षमाप्नोति श्रीहरेः कृपया द्विज ॥ ३६
अनाथं दुःखिनं विप्रं पाठयेद्वै नरोत्तमः । श्रीहरेर्भवनं याति पुनर्जन्मविवर्जितः ॥ ३७
यो नरः पुस्तकं दद्याद्भक्तिश्रद्धासमन्वितः । प्रतिवर्णं लभेत्पुण्यं कपिलाकोटिदानजम् ॥ ३८
मधुदो गुडदश्चैव मर्त्यो यातीक्षुसागरम् । लवणं प्रददद्याति वारुणं लोकमेव च ॥ ३९
सर्वेषामेव दानानामन्नं वारि द्विजोत्तम । तत्त्वज्ञैर्मुनिभिः सर्वैः प्रवरं वै प्रकीर्तितम् ॥ ४०
अन्नं वारि द्विजश्रेष्ठ येन दत्तं महीतले । तेन दत्तानि दानानि सर्वाणि च द्विजर्षभ ॥ ४१
अन्नदो यो नरो विप्र प्राणदश्च प्रकीर्तितः । तस्मात्समस्तदानानामन्नदो लभते फलम् ॥ ४२
यथा चान्नं तथा वारि द्वे तुल्ये च प्रकीर्तिते । वारिणा च विना चान्नं सिद्धं न स्याद्द्विजोत्तम ॥
क्षुधा तृषा द्विजव्याघ्र द्वे च तुल्ये प्रकीर्तिते । अतश्चान्नं च तोयं च श्रेष्ठं प्रोक्तं बुधैरपि ॥ ४४
अन्नदानं क्षितौ ब्रह्मन्ये कुर्वन्ति नरोत्तमाः । सर्वपापविनिर्मुक्ता गच्छन्ति हरिमन्दिरम् ॥ ४५
यावन्त्यन्नानि भो विप्र यच्छति क्षितिमण्डले । ब्रह्महत्यानि तावन्ति नश्यन्त्येव तपोधन ॥ ४६
यच्छतां चान्नदानानि शरीराणि च पातकम् । गात्राणि गृह्णतां त्यक्त्वा सहसा यान्ति शौनक ॥
अतः पापिष्ठजान्नानि न गृह्णन्ति मनीषिणः । गृह्णन्ति मोहाद्ये मूढा भवन्ति पापभागिनः ॥ ४८
कुर्याद्भूमिष्ठमुदकं चैकं भो द्विजसत्तम । सर्वपापैर्विनिर्मुक्तो व्रजेत्स हरिमन्दिरम् ॥ ४९
प्रयत्नेन द्विजश्रेष्ठ कर्तव्यो धनसंचयः । संचितं च धनं ब्रह्मन्दानकर्मणि निक्षिपेत् ॥ ५०
रक्षन्ति ये च कार्पण्याद्धनं ते चातिदुःखिनः । अन्ते सर्वधनं त्यक्त्वा निःस्वा गच्छन्ति भो मुने
मानवा ये सदा दानं दत्त्वा दत्त्वा दरिद्रति । दरिद्रास्ते न विज्ञेया नरलोके महेश्वराः ॥ ५२
परलोके द्विजव्याघ्र साधुसंयमवर्जिते ॥ निर्दये बन्धुहीने च न दत्तं नोपतिष्ठते ॥ ५३
स्थिते धने नरो यो वै नाश्नाति न ददाति सः । दरिद्र इव विज्ञेयः प्रेत्य निश्वासमुत्सृजेत् ५४
तपसोऽपि परं दानं प्रोक्तं च तत्त्वदर्शिभिः । अतो यत्नाद्द्विजश्रेष्ठ दानकर्म समाचरेत् ॥ ५५
दाता दानं न दद्याद्वै समुत्सृज्य द्विजातये । स याति निरयं घोरं सर्वजन्तुभयावहम् ॥ ५६
दानं दाता प्रतिग्राही न स्मरेच्च न याचते । निरये चोभयोर्वासो[2] यावच्चन्द्रदिवाकरौ ॥ ५७
ब्रह्महत्यादिपापानि यानि वै द्विजसत्तम । तानि दानेन हन्यन्ते तस्माद्दानं समाचरेत् ॥ ५८

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०७७६

१ अ. °भं प्रायशोऽमरैः । २ अ. °भये वासो ।

अथ पञ्चविंशोऽध्यायः ।

शौनक उवाच—

श्रीप्रदं विष्णुचरितं सर्वोपद्रवनाशनम् । सर्वपापक्षयकरं दुष्टग्रहनिवारणम् ॥ १
विष्णुसांनिध्यदं चैव चतुर्वर्गफलप्रदम् । यः शृणोति नरो भक्त्या चान्ते याति हरेर्गृहम् ॥ २
[*नामोच्चारणमाहात्म्यं श्रूयते महदद्भुतम् । यदुच्चारणमात्रेण नरो यायात्परं पदम् ॥
तद्वदस्वाधुना सूत विधानं नामकीर्तने ॥ ३

सूत उवाच—

शृणु शौनक वक्ष्यामि संवादं मोक्षसाधनम् । नारदः पृष्टवान्पूर्वं कुमारं तद्वदामि ते ॥ ४
एकदा यमुनातीरे निविष्टं शान्तमानसम् । सनत्कुमारं पप्रच्छ नारदो रचिताञ्जलिः ॥ ५
श्रुत्वा नानाविधान्धर्मान्धर्मव्यतिकरांस्तथा ॥ ६

श्रीनारद उवाच—

योऽसौ भगवता प्रोक्तो धर्मव्यतिकरो नृणाम् । कथं तस्य विनाशः स्यादुच्यतां भगवत्प्रिय ॥ ७

श्रीसनत्कुमार उवाच—

शृणु नारद गोविन्दप्रिय गोविन्दधर्मवित् । यत्पृष्टं लोकनिर्मुक्तिकारणं तमसः परम् ॥ ८

सर्वाचारविवर्जिताः शठधियो व्रात्या जगद्वञ्चका
दम्भाहंकृतिपानपैशुनपराः पापा[श्च ये] निष्ठुराः ।
ये चान्ये धनदारपुत्रनिरताः सर्वेऽधमास्तेऽपि हि
श्रीगोविन्दपदारविन्दशरणाः शुद्धा भवन्ति द्विज ॥ ९

तमपि देवकरं करुणाकरस्थविरजङ्गममुक्तिकरं परम् ॥
अतिचरन्त्यपराधपरा जना य इह तान्वपति ध्रुवनाम हि(?)॥ १०
सर्वापराधकृदपि मुच्यते हरिसंश्रयः । हरेरप्यपराधान्यः कुर्याद्द्विपदपांसनः ॥ ११
नामाश्रयः कदाचित्स्यात्तरत्येव स नामतः । नाम्नो हि सर्वसुहृदोऽह्यपराधात्पतत्यधः ॥ १२

श्रीनारद उवाच—

के तेऽपराधा विप्रेन्द्र नाम्नो भगवतः कृताः । विनिघ्नन्ति नृणां कृत्यं प्राकृतं ह्यानयन्ति च ॥ १३

श्रीसनत्कुमार उवाच—

सतां निन्दा नाम्नः परममपराधं वितनुते
यतः ख्यातिं यान्तं कथमु सहते तद्विगर्हाम्(?)।
शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं
धिया भिन्नं पश्येत्स खलु हरिनामाहितकरः ॥ १४
गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं तथाऽर्थवादो हरिनाम्नि कल्पनम् ।
नाम्ना(मा) वला(परा)धस्य (?)हि पापबुद्धि(द्धे)र्न विद्यते तस्य यमैर्हि शुद्धिः ॥ १५
धर्मव्रतत्यागहुतादिसर्वशुभक्रियासाम्यमपि प्रमादः ।
अश्रद्दधानो विमुखोऽप्यशृण्वन्यश्चोपदेशः(शं)शिवनामापराधः(?)॥ १६

* एतच्चिह्नान्तर्गतः पाठः, ज. पुस्तकस्थः ।

श्रुत्वाऽपि नाममाहात्म्यं यः प्रीतिरहितोऽधमः । अहंममादिपरमो नाम्नि सोऽप्यपराधकृत् ॥ १७

एवं नारद शंकरेण कृपया मह्यं मुनीनां परं
प्रोक्तं नाम सुखावहं भगवतो वर्ज्यं सदा यत्नतः ॥
ये ज्ञात्वाऽपि न वर्जयन्ति सहसा नाम्नोऽपराधान्दश
क्रुद्धा मातरमप्यभोजनपराः खिद्यन्ति ते बालवत् ॥ १८

अपराधविमुक्तो हि नाम्नि जप्तं सदाऽऽचर । नाम्नैव तव देवर्षे सर्वं सेत्स्यति नान्यतः ॥ १९

श्रीनारद उवाच—

सनत्कुमार प्रियसाहसानां विवेकवैराग्यविवर्जितानाम् ।
देहप्रियार्थात्मपरायणानां मुक्तापराधाः प्रभवन्ति नो (नः) कथम् ॥ २०

श्रीसनत्कुमार उवाच—

जाते नामापराधे तु प्रमादे तु(दात्तु) कथंचन । सदा संकीर्तयन्नाम तदेकशरणो भवेत् ॥ २१
नामापराधयुक्तानि(नां)नामान्येव हरन्त्यघम् । अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि यत् ॥ २२

नामैकं यस्य चिह्नं स्मरणपथगतं श्रोत्रमूलं गतं वा
शुद्धं वाऽशुद्धवर्णं व्यवहितरहितं तारयत्येव सत्यम् ।
तच्चेद्देहद्रविणजनितालोभपाखण्डमध्ये
निक्षिप्तं स्यान्न फलजनकं शीघ्रमेवात्र विप्र ॥ २३

इदं रहस्यं परमं पुरा नारद शंकरात् । श्रुतं सर्वाशुभहरमपराधनिवारकम् ॥ २४
विदुर्विष्णवभिधानं ये ह्यपरा[धपरा] नराः । तेषामपि भवेन्मुक्तिः पठनादेव नारद ॥ २५
नाम्नो माहात्म्यमखिलं पुराणे परिगीयते । ततः पुराणमखिलं श्रोतुमर्हसि मानद ॥ २६
पुराणश्रवणे श्रद्धा यस्य स्याद्भ्रातरन्वहम् । तस्य सा[क्षा]त्प्रसन्नः स्याच्छिवो विष्णुश्च सानुगः]
यत्स्नात्वा पुष्करे तीर्थे प्रयागे सिन्धुसंगमे । तत्फलं द्विगुणं तस्य श्रद्धया वै शृणोति यः ॥ २८
ये पठन्ति पुराणानि शृण्वन्ति च समाहिताः । प्रत्यक्षरं लभन्त्येते कपिलादानजं फलम् ॥ २९
अपुत्रो लभते पुत्रं धनार्थी लभते धनम् । विद्यार्थी लभते विद्यां मोक्षार्थी मोक्षमाप्नुयात् ॥ ३०
ये शृण्वन्ति पुराणानि कोटिजन्मार्जितं खलु । पापजालं तु ते हित्वा गच्छन्ति हरिमन्दिरम् ३१
पुराणवाचकं विप्रं पूजयेद्भक्तिभावतः । गोभूहिरण्यवस्त्रैश्च गन्धपुष्पादिभिर्मुने ॥ ३२
कांस्यैर्विनिर्मितं पात्रं जलपात्रं मुदाऽन्वितः । कर्णकुण्डलकं चैव मुद्रिकां स्वर्णनिर्मिताम् ॥ ३३
आसनं तु तथा दद्यात्पुष्पं माल्यं तपोधन । वित्तशाठ्यं न कुर्वीत दानं हीनफलं यतः ॥ ३४
पुराणं वाचयेद्विप्र सर्वकामार्थसिद्धये । सुवर्णं रजतं वस्त्रं पुष्पमाल्यं तु चन्दनम् ॥
दद्याद्यः पुस्तकं भक्त्या स गच्छेद्धरिमन्दिरम् ॥ ३५
कुर्वन्ति विधिनाऽनेन संपूर्णं पुस्तकं च ये । तेषां नामानि लिम्पेत चित्रगुप्तोऽर्चनाद्द्विज ॥ ३६

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे पञ्चविंशतितमोऽध्यायः ॥ २५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०८१२

अथ षड्विंशोऽध्यायः ।

---

शौनक उवाच—

श्रोतुमिच्छामि ते प्राज्ञ कथयस्व समूलकम् । प्रतिज्ञापालने पुण्यं खण्डने किंच किल्बिषम् ॥ १

अनृते शपथे किं वा सत्ये किंचिद्भवेन्मुने । दक्षिणं किं करं दत्त्वा कृपां कृत्वा कृपार्णव ॥ २

सूत उवाच—

शृणुष्व मुनिशार्दूल कथयामि समूलतः । वैष्णवानां त्वमग्र्योऽसि सर्वलोकहिते रतः ॥ ३

धेनूनां तु शतं दत्त्वा यत्फलं लभते नरः । तस्मात्पुण्यं कोटिगुणं प्रतिज्ञापालने द्विज ॥ ४

प्रतिज्ञाखण्डनान्मूढो निरयं याति दारुणम् । शतमन्वन्तरं यावत्पच्यते नात्र संशयः ॥ ५

ततोऽत्र जन्म चाऽऽसाद्य निर्धनस्य निकेतने । अन्नवस्त्रविहीनः स्यात्क्लेशी चापि स्वकर्मणा ॥ ६

सत्येन शपथं कुर्याद्देवाग्निगुरुसंनिधौ । तावद्दहति वै गात्रं विष्णोर्वे(र्वं)शो न लुप्यते ॥ ७

मिथ्यायां(तु) शपथे विप्र किमहं वच्मि सांप्रतम् । सत्ये चैवं भवेत्पापमनृते शपथे किमु ॥ ८

सत्येन श्रीहरेर्गात्रं स्पृष्ट्वा यात्यतिदारुणम् । शतमन्वन्तरं विप्र निरयं मिथ्यया किमु ॥ ९

निर्माल्यं श्रीहरेः स्पृष्ट्वा सत्येन मुनिपुङ्गव । गृहीत्वा पुरुषान्सप्त पच्यते निरये चिरम् ॥ १०

कदाचिज्जन्म संप्राप्य कुष्ठी च प्रतिजन्मनि । सत्येनैवं भवेद्विप्र अनृते वै किमुच्यते ॥ ११

यो मर्त्यो दक्षिणं दत्त्वा करं तत्प्रतिपालयेत् । तस्य प्राप्तिर्भ(प्तो भ)वेत्कृष्णः सत्यं सत्यं वदाम्यहम् १२

करं दत्त्वा तु यो मर्त्यो वचनस्य च पालनम् । यावन्न कुर्यात्पितरः प्राप्नुवन्ति च यातनाम् ॥ १३

स्वयं तु मुनिशार्दूल निरयं याति दारुणम् । उद्धारं कोटिकल्पान्ते मृतो याति न संशयः ॥ १४

शौनक उवाच—

कृष्णप्राप्तिः पुरा कस्य करस्य प्रतिपालनात् । दक्षिणस्य मुने ब्रूहि श्रोतुमिच्छामि सादरात् १५

सूत उवाच—

पुरा त्रि(का)श्चिपुरे शूद्रो नाम्नाऽऽसीद्वीरविक्रमः । बह्वाशी पृथुलाङ्गश्च बहुवक्ताऽतिसुन्दरः १६

धनवान्पुत्रवान्सभ्यो विद्वान्सर्वजनप्रियः । विप्राणामतिथीनां च पूजकः सर्वदैव तु ॥ १७

पितृभक्तो द्विजश्रेष्ठ प्रतिज्ञापालकः सदा । वाचां गुरुजनानां च पालको हरिसेवकः ॥ १८

एकदा सुन्दरो गेहं श्वपचस्तस्य च्छद्मना । प्राप्तो धृत्वा ब्राह्मणस्य रूपं वै तरुणः सुधीः ॥ १९

ब्राह्मण उवाच—

शृणु मे वचनं धीर मम जाया मृता शुभा । किं करोमि क्व गच्छामि कथयाद्यानुकम्पया ॥ २०

विवाहं यो जनः कुर्याद्ब्राह्मणस्य विशेषतः । किंच दानैः किंच तीर्थैः किं यज्ञैर्व्रतकोटिभिः २१

इति श्रुत्वा त्वसौ विप्रं चोक्तवान्वीरविक्रमः । शृणु मे वचनं ब्रह्मन्बालाऽस्ति मम कन्यका ॥ २२

यदीच्छा ते भवेद्विप्र दास्यामि विधिपूर्वकम् । नय मे दक्षिणं हस्तं दास्यामि चान्यथा न हि २३

तस्यैतद्वचनं श्रुत्वा जग्राह दक्षिणं करम् । श्वपचो हर्ष युक्तो वै प्रोवाच वचनं त्विति ॥ २४

ब्राह्मण उवाच—

कृत्वाऽऽशु भक्षणं मह्यं देहि कन्यां शुभान्विताम् । विलम्बे बहुविघ्नं स्यादिति शास्त्रेषु निश्चितम् ॥

---

१ ज. गोत्रं । २ च. छ. याति हरेर्गृहम् । ३ झ. ञ. °टिपुरुषैर्मृतो ४ ज. °वान्वाग्मी वि° ।

वीरविक्रम उवाच—

तुभ्यं श्वः कन्यकां ब्रह्मन्दास्यामि नास्ति चान्यथा। दक्षिणं स्वकरं दत्त्वा न कुर्यात्पुरुषाधमः॥

सूत उवाच—

ब्राह्मणं कृष्णशर्माणं चाऽऽहूयाकथयन्मुने । पुरोहितमिदं सर्वं प्रोवाच संविदं द्विज ॥ २७
कथं प्रियाय ते कन्यां शूद्राय दातुमिच्छसि । अज्ञातायाकुलीनाय न ददस्व विशेषतः ॥ २८
ऊचुस्तज्ज्ञातयः सर्वे जनकाद्यास्तपोधन । अस्माकं वचनं तात शृणुष्व वीरविक्रम ॥ २९
न ज्ञायते कुलं यस्य देशगोत्रधनं तथा । शीलं वयस्तस्य कन्या स्वजनैर्न च दीयते ॥ ३०
स उवाच द्विजश्रेष्ठ दत्तं मे दक्षिणं करम् । कदाचिदन्यथा कर्तुं न शक्नोमि च सर्वथा ॥ ३१
इत्युक्त्वा तान्स विप्राय कन्यां दातुं प्रचक्रमे । दृष्ट्वेति ज्ञातयः सर्वे विस्मयमद्भुतं ययुः ॥ ३२
सत्यं तद्वचनं श्रुत्वा शङ्खचक्रगदाधरः । आविर्बभूव सहसा चाऽऽरुह्य गरुडं मुने ॥ ३३

श्रीभगवानुवाच—

धन्यं ते च कुलं धर्मो धन्यस्ते जननी पिता । धन्यं ते वचनं सत्यं धन्यं ते दक्षिणं करम् ॥ ३४
धन्यं कर्म च ते जन्म त्रैलोक्ये नैव विद्यते । एवं ते कर्मणा साधो चोद्धारं कुरुषे कुलम् ॥ ३५

सूत उवाच—

एवं ब्रुवति श्रीकृष्णे विमानं स्वर्णनिर्मितम् । आगतं हरिगणैर्युक्तं सर्वत्र गरुडध्वजम् ॥ ३६
सर्वं तस्य कुलं ब्रह्मन्सश्वपाकपुरोहितम् । रथे चाऽऽरोपयामास शङ्खपद्मधरः स्वयम् ॥ ३७
गृहीत्वा तान्हरिः सर्वान्गतो वैकुण्ठमन्दिरम् । तत्र तस्थुश्चिरं ते च कृत्वा भोगं सुदुर्लभम्॥ ३८
वचनं लङ्घयेद्यस्तु यस्तु वा दक्षिणं करम् । सकुलो निरयं याति सत्यं सत्यं वदाम्यहम्॥ ३९
तस्यान्नं सलिलं ब्रह्मन्नग्राह्यं पितृदैवतैः । त्यक्त्वा धर्मो गृहं तस्य भीत्या याति द्विजोत्तम ॥ ४०
दत्त्वाऽऽशां यो जनः कुर्यान्नैराश्यं चैव मूढधीः । स स्वकान्कोटिपुरुषान्गृहीत्वा नरकं व्रजेत्॥ ४१
वचनं लङ्घयेद्यस्तु धर्मस्तेषां(स्तस्य) विलङ्घति । नृपाश्रितस्करैर्विप्र सत्यं सत्यं सुनिश्चितम्॥ ४२
[*स्वर्गोत्तरमिमं सम्यक्श्रुत्वा स्वर्गोत्तरं व्रजेत् । जीवन्मुक्तास्त्विहामुत्र कृष्णाख्यं धाम चोत्तमम्॥]

इति श्रीमहापुराणे पाद्मे ब्रह्मखण्डे सूतशौनकसंवादे षड्विंशतितमोऽध्यायः ॥ २६ ॥

इति श्रीमहामुनिव्यासप्रणीते महापुराणे पाद्मे तृतीयं स्वर्गखण्डापरनामधेयं ब्रह्मखण्डं समाप्तम् ।

आदितः श्लोकानां समष्ट्यङ्काः—१०८५५

---

अध्यायानामादितः समष्ट्यङ्काः—१५१

---

* एतच्चिह्नान्तर्गतः, पाठः च. पुस्तकस्तः ।

१ म. विप्राय । २ ढ. °लं च वयसा हीनं सजनेन न दी° । ३ ज. भ्रातरं । ४ ज. धर्मं तेषां ।

॥ श्रीः ॥

महामुनिश्रीव्यासप्रणीतं

# पद्मपुराणम् ।

## तत्र चतुर्थं पातालखण्डम् ।

अथ प्रथमोऽध्यायः ।

[*नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ] ॥ १

ऋषय ऊचुः—

श्रुतं सर्वं महाभाग स्वर्गखण्डं मनोहरम् । त्वत्तोऽधुना वदाऽऽयुष्मञ्श्रीरामचरितं हि नः ॥ २

सूत उवाच[1]—

अथैकदा धराधारं पृष्टवान्भुजगेश्वरम् । वात्स्यायनो मुनिवरः कथामेतां सुनिर्मलाम् ॥ ३

श्रीवात्स्यायन उवाच—

शेषाशेषकथास्त्वत्तो जगत्सर्गलयादिकाः । भूगोलश्च खगोलश्च ज्योतिश्चक्रविनिर्णयः ॥ ४

महत्तत्त्वादिसृष्टीनां पृथक्तत्त्वविनिर्णयः । नानाराजचरित्राणि कथितानि त्वयाऽनघ ॥ ५

सूर्यवंशभवानां च राज्ञां चारित्रमद्भुतम् । तत्रानेकमहापापहरा रामकथा कृता ॥ ६

तस्य वीरस्य रामस्य हयमेधकथा श्रु[2]ता । संक्षेपतो मया त्वत्तस्तामिच्छामि सविस्तरम् ॥ ७

या श्रुता संस्मृता चोक्ता महापातकहारिणी । चिन्तितार्थप्रदात्री च भक्तचित्त[3]प्रसादिका ॥ ८

शेष उवाच—

धन्योऽसि द्विजवर्यस्त्वं यस्य ते मतिरीदृशी । रघुवीरपदद्वंद्वमकरन्दस्पृहावती ॥ ९

वदन्ति मुनयः सर्वे साधूनां संगमं वरम् । यस्मात्पापक्षयकरी रघुनाथकथा भवेत् ॥ १०

त्वया मेऽनुग्रहः सृष्टो यद्रामः स्मारितः पुनः । सुरासुरकिरीटौघमणिनीराजिताङ्घ्रिकः ॥ ११

रावणारिकथावार्धौ मशको मादृशः कियान् । यत्र ब्रह्मादयो देवा मोहिता न विदन्त्यपि॥ १२

तथाऽपि भो मया तुभ्यं वक्तव्यं स्वीयशक्तितः । पक्षिणः स्वगतिप्रायं खे गच्छन्ति सुविस्तरे ॥

चरितं रघुनाथस्य शतकोटिसुविस्तरम् । येषां वै यादृशी बुद्धिस्ते वदन्त्येव तादृशम् ॥ १४

रघुनाथसतीकी(स्य सत्की)र्तिर्मद्बुद्धिं निर्मलीमसाम् । करिष्यतेऽग्निसंपर्कात्कनकं त्वमलं यथा १५

सूत उवाच—

एवमुक्त्वा मुनिवरं ध्यानस्तिमितलोचनः । ज्ञानेनाऽऽलोकयांचक्रे कथां लोकोत्तरां शुभाम् १६

गद्गदस्वरसंयुक्[4]तो महाहर्षाङ्किताङ्गकः । कथयामास विशदां कथां दाशरथेः पुनः ॥ १७

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

---

१ क. ख. ग. छ. ज. ठ. ण. त. थ. द. ध. °च—ततः परं ध° । २ ण. शुभा । ३ क. °प्रतोषिका । ख. ग. छ. ठ. ड. त. थ. द. ध. °प्रतोषदा । शे° । ज. °प्रहर्षदा । शे° । ४ ग. छ. ड. °क्तो रोमह° ।

शेष उवाच—

लङ्केश्वरे विनिहते देवदानवदुःखदे । अप्सरोगणवक्त्राब्जचन्द्रमःकान्तिहर्तरि ॥ १८
सुराः सर्वे सुखं प्रापुरिन्द्रप्रभृतयस्तदा । सुखं प्राप्ताः स्तुतिं चक्रुर्दासवत्प्रणतिं गताः ॥ १९
लङ्कायां च प्रतिष्ठाप्य धर्मयुक्तं बिभीषणम् । सीतया सहितो रामः पुष्पकं समुपाश्रितः ॥ २०
सुग्रीवहनुमत्सीतालक्ष्मणैः संयुतस्तदा । बिभीषणोऽपि सचिवैरन्वगाद्दिरहोत्सुकः ॥ २१
लङ्कां स पश्यन्बहुधा भग्नप्राकारतोरणाम् । दृष्ट्वाऽशोकवनं तत्र सीतास्थानं मुमूर्छ ह ॥ २२
शिंशिपां तत्र वृक्षांश्च पुष्पितान्कोरकैर्युतान् । राक्षसीभिः समाकीर्णान्मृताभिर्हनुमद्भयात् ॥ २३
इत्थं सर्वं विलोक्याऽऽशु रामः प्रायात्पुरीं प्रति । ब्रह्मादिदेवैः सहितः स्वीयस्वीयविमानगैः ॥
देवदुन्दुभिनिर्घोषाञ्शृण्वञ्श्रोत्रसुखावहान् । तथैवाप्सरसां नृत्यैः पूज्यमानो रघूत्तमः ॥ २५
सीतायै दर्शयन्मार्गे तीर्थान्याश्रमवन्ति च । मुनींश्च मुनिपुत्रांश्च मुनिपत्नीः पतिव्रताः ॥ २६
यत्र यत्र कृता वासाः पूर्वं रामेण धीमता । तत्सर्वं दर्शयामास लक्ष्मणेन समन्वितः ॥ २७
इत्येवं दर्शयंस्तस्यै रामोऽद्राक्षीत्स्वकां पुरीम् । तस्याः पुनः समीपे तु नन्दिग्रामं ददर्श ह ॥ २८
यत्र वै भरतो राजा पालयन्धर्ममास्थितः । भ्रातुर्वियोगजनितं दुःखचिह्नं वहन्बहु ॥ २९
गर्तशायी ब्रह्मचारी जटावल्कलसंयुतः । कृशाङ्गयष्टिर्दुःखार्तः कुर्वन्रामकथां मुहुः ॥ ३०
यवान्नमपि नो भुङ्क्ते जलं पिबति नो मुहुः । उद्यन्तं यः सवितारं नमस्कृत्य ब्रवीति च ॥ ३१
जगन्नेत्र सुरस्वामिन्हर मे दुष्कृतं महत् । मदर्थे रामचन्द्रोऽपि जगत्पूज्यो वनं ययौ ॥ ३२
सीतया सुकुमाराङ्ग्या सेव्यमानोऽटवीं गतः । या सीतापुष्पपर्यङ्के दुन्तमासाद्य दुःखिता ॥ ३३
या सीता रविसंतापं कदाऽपि प्राप नो सती । मदर्थे जानकी सा च प्रत्यरण्यं भ्रमत्यहो ॥ ३४
या सीता राजवृन्दैश्च न दृष्टा नयनैः कदा । सा सीता दृश्यते नूनं किरातैः कालरूपिभिः ॥ ३५
या सीता मधुरं त्वन्नं भोजिता न बुभुक्षति । सा सीताऽद्य वनस्थानि फलानि प्रार्थयत्यहो ३६
इत्येवमन्वहं सूर्यमुपस्थाय वदत्यदः । प्रातः प्रातर्महाराजो भरतो रामवत्सलः ॥ ३७
यश्चोच्यमानः सचिवैः समदुःखसुखैर्बुधैः । नीतिज्ञैः शास्त्रनिपुणैरिति प्रोवाच तान्नृपः ॥ ३८
अमात्या दुर्भगं मां किं प्रब्रूत पुरुषाधमम् । यदर्थमग्रजो रामो वनं प्राप्यावसीदति ॥ ३९
दुर्भगस्य मम प्राप्तं स्वाघमार्जनमादरात् । करोमि रामचन्द्राङ्घ्रिं स्मारं स्मारं सुमन्त्रिणः ॥ ४०
धन्या सुमित्रा सुतरां वीरसूः स्वपतिप्रिया । यस्यास्तनूजो रामस्य चरणौ सेवतेऽन्वहम् ॥ ४१
यत्र ग्रामे स्थितो नूनं भरतो भ्रातृवत्सलः । विलापं प्रकरोत्युच्चैस्तं ग्रामं स ददर्श ह ॥ ४२

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रघुनाथस्य भरतावासनन्दिग्रामदर्शनं नाम प्रथमोऽध्यायः ॥ १ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०८९७

---

अथ द्वितीयोऽध्यायः ।

---

शेष उवाच—

अथ तद्दर्शनोत्कण्ठाविह्वलीकृतचेतसा । पुनः पुनः स्मृतो भ्राता भरतो धार्मिकाग्रणीः ॥ १

---

१ क. ख. ण. त. °न्द्रमः कान्तिधर्तं° । द. °न्द्रमाः कान्तिवर्धनः । सु° । २ क. घ. ङ. च. झ. ञ. ट. ठ. °र्गे सतीर्थान्याश्रमाणि च । ३ ण. °हातेजो । ४ द. °वल्लभ । य° ।

उवाच हनुमन्तं च बलवन्तं समीरजम् । प्रस्फुरद्दशनच्याजचन्द्रकान्तिहतान्धकः ॥ २
शृणु वीर हनूमंस्त्वं मद्गिरं भ्रातृनोदिताम् । चिरंतनवियोगेन गद्गदीकृतविग्रहम्* ॥ ३
गच्छ त्वं भ्रातरं वीर समीरणतनूद्भव । मद्वियोगकृशां यष्टिं वपुषो बिभ्रतं हठात् ॥ ४
यो वल्कलं परिधत्ते जटां धत्ते शिरोरुहे । फलानां भक्षणमपि न कुर्याद्विरहात्ततः ॥ ५
परस्त्री यस्य मातेव लोष्टवत्काञ्चनं पुनः । प्रजाः पुत्रानिवेक्षेद्यो बान्धवो मम धर्मवित् ॥ ६
मद्वियोगजदुःखाग्निज्वालादग्धकलेवरम् । मदागमनसंदेशपयोवृष्ट्याऽऽशु सिञ्च तम् ॥ ७
सीतया सहितं रामं लक्ष्मणेन समन्वितम् । सुग्रीवादिकपीन्द्रैश्च रक्षोभिः सबिभीषणैः ॥ ८
प्राप्तं निवेदयै सुखात्पुष्पकासनसंस्थितम् । येन मे सोऽनुजः शीघ्रं सुखमेति मदागमात् ॥ ९
इति श्रुत्वा ततो वाक्यं रघुवीरस्य धीमतः । जगाम भरतावासं नन्दिग्रामं निदेशकृत् ॥ १०
गत्वा स नन्दिग्रामं तं मन्त्रिवृद्धैः सुसंयुतम् । भरतं भ्रातृविरहाक्लिष्टं धीमान्ददर्श ह ॥ ११
कथयन्तं मन्त्रिवृद्धान्रामचन्द्रकथानकम् । तदीयपदपाथोजमकरन्दसुनिर्भरम् ॥ १२
नमश्चकार भरतं धर्मं मूर्तियुतं किल । विधात्रा सकलांशेन सत्त्वेनेव विनिर्मितम् ॥ १३
तं दृष्ट्वा भरतः शीघ्रं प्रत्युत्थाय कृताञ्जलिः । स्वागतं चेति होवाच रामस्य कुशलं वद ॥ १४
इत्येवं वदतस्तस्य भुजो दक्षिणतोऽस्फुरत् । हृदयाच्च गतः शोको हर्षास्रैः पूरिताननः ॥ १५
विलोक्य तादृशं भूतं प्रत्युवाच कपीश्वरः । निकटे हि पुरः प्राप्तं विद्धि रामं सलक्ष्मणम् ॥ १६
रामागमनसंदेशामृतसिक्तकलेवरः । प्राप यद्ध(यं ह)र्षपूरं हि (द्वि)सहस्राक्षो न वेद्म्यहम् ॥ १७
जगाद मम तन्नास्ति यत्तुभ्यं दीयते मया । दासोऽस्मि जन्मपर्यन्तं रामसंदेशहारक ॥ १८
वसिष्ठोऽपि गृहीत्वाऽर्घ्यं मन्त्रिवृद्धाः सुहर्षिताः । जग्मुस्ते रामवर्त्मानं हनुमद्दर्शिताध्वना ॥ १९
दृष्ट्वा दूरात्समायान्तं रामचन्द्रं मनोरमम् । पुष्पकासनमध्यस्थं ससीतं सहलक्ष्मणम् ॥ २०
रामोऽपि दृष्ट्वा भरतं पादचारेण संगतम् । जटावल्कलकौपीनपरिधानसमन्वितम् ॥ २१
अमात्यान्भ्रातृवेशेन समवेषाञ्जटाधरान् । नित्यं तपःक्लिष्टतया कृशरूपान्ददर्श ह ॥ २२
रामोऽपि चिन्तयामास दृष्ट्वा चैतादृशं नृपम् । अहो दशरथस्यायं राजराजस्य धीमतः ॥ २३
पुत्रः पदातिरायाति जटावल्कलवेषधृक् । न दुःखं तादृशं मह्यं वनमध्यगतस्य भोः ॥ २४
यादृशं मद्वियोगेन चैतस्य परिवर्तते । अहो पश्यत मे भ्राता प्राणात्प्रियतमः सुहृत् ॥ २५
श्रुत्वा मां निकटे प्राप्तं मन्त्रिवृद्धैः सुहर्षितैः । द्रष्टुं मां भरतोऽभ्येति वसिष्ठेन समन्वितः ॥ २६
इति ब्रुवन्नरपतिः पुष्पकान्नभसोऽङ्गणात् । विभीषणहनूमद्भ्यां लक्ष्मणेन कृतादरः ॥ २७
यानादवततराऽऽशु विरहक्लिन्नमानसः । भ्रातर्भ्रातः पुनर्भ्रातर्भ्रातर्भ्रातर्वदन्मुहुः ॥ २८
दृष्ट्वा समुत्तीर्णमिमं रामचन्द्रं स तैर्युतम् । हर्षाश्रूणि प्रमुञ्चंश्च दण्डवत्प्रणनाम ह ॥ २९
रघुनाथोऽपि तं दृष्ट्वा दण्डवद्भुवि संस्थितम् । उत्थाप्य जगृहे दोर्भ्यां हर्षालोकसमन्वितः ॥ ३०
उत्थापितोऽपि च भृशं नोदतिष्ठद्रुदन्मुहुः । रामचन्द्रपदाम्भोजग्रहणैासक्तबाहुभृत् ॥ ३१

---

* ङ. पुस्तकातिरिक्तपुस्तकेषु 'विह्वलाम्' इति पाठोऽस्ति।

---

१ ण. थ. वीरं । त. शीघ्रं । २ क. ख. ग. ज. ठ. ण. त. थ. द. ध. प्रजाः पुत्रानिवोद्रक्षेद्धान्ध° । ङ. प्रजाश्च पुत्रवद्रक्षेद्धान्ध° । ३ ङ. °च मुख्या° । ४ ख. ग. छ. ज. ठ. ड. त. थ. ध. कृतानतिः । ५ क. ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. °न्द्रं सुरैर्यु° । ६ ग. छ. ज. ड. थ. हर्षशोक° । ७ क. घ. ङ. च. छ. झ. ञ. ट. ड. ढ. ण. °णाशक्त° ।

भरत उवाच—

दुराचारस्य दुष्टस्य पापिनो मे कृपां कुरु। रामचन्द्र महाबाहो कारुण्यात्करुणानिधे॥ ३२
यस्ते विदेहजापाणिस्पर्शे क्रूरममन्यत। स एव चरणो राम वने बभ्राम मत्कृते॥ ३३
इत्युक्त्वाऽश्रुमुखो दीनः परिरभ्य पुनः पुनः। प्राञ्जलिः पुरतस्तस्थौ हर्षविह्वलिताननः॥ ३४
रघुनाथस्तमनुजं परिष्वज्य कृपानिधिः। प्रणम्य च महामन्त्रिमुख्यान्पप्रच्छ सादरम्॥ ३५
भरतेन समं भ्रात्रा पुष्पकासनमास्थितः। सीतां ददर्श भरतो भ्रातृपत्नीमनिन्दिताम्॥ ३६
अनसूयामिवात्रेः किं लोपामुद्रां घटोद्भवः। पतिव्रतां जनकजाममन्यत ननाम च॥ ३७
मातः क्षमस्व यदघं मया कृतमबुद्धिना। त्वत्सदृश्यः पतिपराः सर्वेषां साधुकारिकाः॥ ३८
जानक्यपि महाभागा देवरं वीक्ष्य सादरम्। आशीर्भिरभियुज्याथ पर्यपृच्छदनामयम्॥ ३९
विमानवरमारूढास्ते सर्वे नभसोऽङ्गणे। क्षणादालोकयां चक्रे निकटे स्वपितुः पुरीम्॥ ४०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामराजधानीदर्शनं नाम द्वितीयोऽध्यायः॥ २॥

आदितः श्लोकानां समष्ट्यङ्काः—१०९३७

---

अथ तृतीयोऽध्यायः।

---

शेष उवाच—

दृष्ट्वा रामो राजधानीं निजलोकनिवासिताम्। जहर्ष मतिमान्वीरश्चिराद्दर्शनलालसः॥ १
भरतोऽपि स्वकं मित्रं सुमुखं नगरं प्रति। प्रेषयामास सचिवं नगरोत्सवसिद्धये॥ २

भरत उवाच—

कुर्वन्तु लोकास्त्वरितं रघुनाथागमोत्सवम्। मन्दिरे मन्दिरे रम्यं कृतकौतुकचित्रकम्॥ ३
विपांसुका राजमार्गाश्चन्दनद्रवसेचिताः। प्रसूनभरसंक्लृप्ता हृष्टपुष्टजनावृताः॥ ४
विचित्रवर्णध्वजभाचित्रिताखिलस्वाङ्गणाः। मेघागमे धनुरिव पश्यन्त्येव बलीमुखाः॥ ५
प्रतिगेहं च लोकानां कारयन्त्वगुरूक्षणम्। यद्धूमं वीक्ष्य शिखिनो नृत्यं कुर्वन्तु लीलया॥ ६
हस्तिनो मम शैलाभानाधोरणसुयन्त्रितान्। विचित्रयन्तु बहुशो गैरिकादिकधातुभिः॥ ७
वाजिनश्च चित्रयन्तु शीलयन्तु मनोजवाः। यद्वेगवीक्षणादेव गर्वं त्यजन्तु स्वर्हयाः॥ ८
कन्याः सहस्रशो रम्याः सर्वाभरणभूषिताः। गजोपरि समारूढा मुक्ताभिर्विकिरन्तु च॥ ९
ब्राह्मण्यः पात्रहस्ताश्च दूर्वाहारिद्रसंयुताः। सुवासिन्यो महाराजं रामं नीराजयन्तु ताः॥ १०
कौशल्या पुत्रसंयोगसंदेशविधुरा सती। हर्षं प्राप्नोतु सुकृशा तदीक्षणसुलालसा॥ ११
इत्येवमादिरचनां पुरशोभाविधायिकाम्। प्रकुर्वन्तु जना दृष्ट्वा रामस्याऽऽगमनं प्रति॥ १२

शेष उवाच—

इति श्रुत्वा ततो वाक्यं सुमुखो मन्त्रवित्तमः। प्रययौ नगरीं कर्तुं बहुकौतुकतोरणाम्॥ १३
गत्वाऽथ नगरीं तां वै मन्त्री तु सुमुखाभिधः। ख्यापयामास लोकानां रामागममहोत्सवम्॥ १४
लोकाः श्रुत्वा पुरीं प्राप्तं रघुनाथं सुहर्षिताः। पूर्वं तदीयविरहात्त्यक्तभोगसुखादयः॥ १५
ब्राह्मणा वेदसंपन्नाः पवित्रा दर्भपाणयः। धौतोत्तरीयवलिता जग्मुः श्रीरघुनायकम्॥ १६
क्षत्रिया ये शूरतमा धनुर्बाणधरा वराः। संग्रामे बहुशो वीराञ्जेतारो ययुरप्यमुम्॥ १७

वैश्या धनसमृद्धाश्च मुद्राशोभितपाणयः । शुभवस्त्रपरीधाना अभिजग्मुर्नरेश्वरम् ॥ १८
शूद्रा द्विजेषु ये भक्ताः स्वीयाचारसुनिष्ठिताः । वेदाचाररता ये वै तेऽपि जग्मुः पुरीपतिम्[1] १९
ये ये वृत्तिकरा लोकाः स्वे स्वे कर्मण्यधिष्ठिताः । स्वकं वस्तु समादाय ययुः श्रीरामभूपतिम् २०
इत्थं भूपतिसंदेशात्प्रमोदाप्लवसंप्लुताः[2] । नानाकौतुकसंयुक्ता आजग्मुर्मानवेश्वरम् ॥ २१
रघुनाथोऽपि सकलैर्दैवतैः स्वस्वयानगैः । परीतः प्रविवेशोच्चैः पुरीं रचितमोहनाम् ॥ २२
प्लवंगाः प्लवनैर्युक्ता आकाशपथचारिणः । स्वस्वशोभापरीताङ्गाश्चानुजग्मुः पुरोत्तमम् ॥ २३
पुष्पकादवरुह्याऽऽशु नरयानमुपारुहत् । सीतया सहितो रामः परिवारसमावृतः ॥ २४
[*अयोध्यां प्रविवेशाथ कृतकौतुकतोरणाम् । हृष्टपुष्टजनाकीर्णामुत्सवैः परिभूषिताम् ] ॥ २५
वीणापणवभेर्यादिवादित्रैराहतैर्भृशम् । शोभमानः स्तूयमानः सूतमागधबन्दिभिः ॥ २६
जय राघव रामेति जय सूर्यकुलाङ्गद । जय दाशरथे देव जयताल्लोकनायक ॥ २७
इति शृण्वञ्शुभा वाचः पौराणां हर्षिताङ्गिनाम् । रामदर्शनसंजातपुलकोद्भेदशोभिनाम् ॥ २८
प्रविवेश वरं मार्गं रथ्याचत्वरभूषितम् । चन्दनोदकसंसिक्तं पुष्पपल्लवसंयुतम् ॥ २९
तदा पौराङ्गनाः काश्चिद्गवाक्षवलभिश्रिताः । रघुनाथस्वरूपेक्षाजातकामा अथाब्रुवन् ॥ ३०

पौराङ्गना ऊचुः—

धन्या अभूवन्बत भिल्लकन्या वनेषु या राममुखारविन्दम् ।
स्वलोचनेन्दीवरकैरथापिबन्स्वभाग्यसंजातमहोदया इमाः ॥ ३१
धन्या मुखं पश्यत वीरधाम्नः श्रीरामदेवस्य पयोजनेत्रम् ।
यद्दर्शनं धातृमुखाः सुरा अपि नाऽऽपुर्महाभाग्ययुता वयं त्वहो ॥ ३२
एतन्मुखं पश्यत चारुहासं किरीटसंशोभिनिजोत्तमाङ्गम् ।
बन्धूकधिक्कारलसच्छविमद्[3] दन्तच्छदं बिभ्रतमुच्चनासम् ॥ ३३
इति गदितवतीस्ताः स्नेहभारेण रामा नलिनदलसदृक्षैर्नेत्रपातैः प्रसाद्य ।
निखिलगुरुरनूनप्रेमभारं नृलोकं जननिगृहमियेषं प्रोषितोऽथो निवेष्टुम्[4] ॥ ३४

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रघुनाथस्य पुरप्रवेशनं नाम तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१०९७१

---

अथ चतुर्थोऽध्यायः ।

---

वात्स्यायन उवाच—

भुजगाधीश्वर गुरो धराभरधरक्षम । शृण्वेकं संशयं मह्यं कृपया कथयस्व तम् ॥ १
रघुनाथस्य गमनं वनं प्रति यदा ह्यभूत् । तदाप्रभृति देहेन स्थिता शून्येन चेतसा ॥ २
तद्वियोगविधुरा कृशदेहाऽतिदुःखिता । सुमुखान्मन्त्रिणः श्रुत्वा रघुनाथं समागतम् ॥ ३

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ट. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

---

१ क. छ. झ. ड. ण. त. थ. पुरीं प्रति । ये । २ ङ. °मोदोत्सवसंयुताः । ३ ग. घ. ङ. च. झ. ट. ड. ढ. °कच्छर्णे विलसच्छिच्छवम्र° । ४ क. ख. ग. ज. झ. ठ. ण. थ. द. ध. °ष प्रोषितःक्षेन हृष्टः । इ° । त. °ष प्रेयरागेण हृष्टः । इ° ।

कथं जहर्ष किमभूत्कीदृशं तत्र चिह्नितम् । रामचन्द्रस्य संदेशहर्तारं किमुवाच सा ॥ ४
एतं वै संशयं धीमन्रघुनाथगुणोदयम् । यथावच्छृण्वते मह्यं कथयस्व प्रसादतः ॥ ५
शेष उवाच—
साधु पृष्टं महाभाग द्विजवर्यपुरस्कृत । तन्मे निगदतः साक्षाच्छृणुष्वैकमनाः किल ॥ ६
[*सा वै तद्वदनाम्भोजच्युतं रामागमामृतम् । पीत्वा पीत्वा बभूवाहो स्थगिताङ्गेन विह्वला ] ७
किं मे स्वप्नो विमूढायाः किं वा भ्रमकरं वचः । मम वै मन्दभाग्यायाः कथं रामेक्षणं पुनः ॥ ८
बहुना तपसा कृत्वा प्राप्तोऽयं वै सुतः शिशुः । केनाचिन्मम पापेन विप्रयोगं गतः पुनः ॥ ९
सुमन्त्रिन्कुशली रामः सीतालक्ष्मणसंयुतः । कथं मां स्मरते वीरो वनेचारी सुदुःखिताम् ॥ १०
इति सा विललापोच्चै रघुनाथस्मृतिं गता । न विवेद निजं किंचित्परकीयं विमोहिता ॥ ११
सुमुखोऽपि तदा दृष्ट्वा दुःखितां मातरं भृशम् । [+वीजयामास वासोग्रैः संज्ञामाप च सा पुनः॥
उवाच जननीं सौम्यं वचो हर्षकरं मुहुः] । रघुनाथागमस्मारहृष्टां तां स व्यधात्पुनः ॥ १३
मातर्विद्धि गृहं प्राप्तं रघुनाथं सलक्ष्मणम् । सीतया सहितं पश्य चाऽऽशीभिरभियुङ्क्ष्व च ॥१४
इति तथ्यं वचः श्रुत्वा सुमुखेन प्रभाषितम् । यादृशं हर्षमापेदे तादृशं वेद्मि नो ह्यहम् ॥ १५
उत्थाय चाजिरे प्राप्ता रोमाञ्चिततनूरुहा । हर्षविह्वलिताङ्ग्यश्रु मुञ्चन्ती राममैक्षत ॥ १६
तावत्स रामो राजेन्द्रो नरयानमधिश्रितः । प्राप्तः स्वमातुर्भवनं कैकेय्याः सुनयः पुरः ॥ १७
कैकेय्यपि त्रपाभारनम्रा रामं पुरः स्थितम् । नोवाच किंचिन्महतीं चिन्तां प्राप्तवती मुहुः ॥ १८
सूर्यवंशध्वजो रामो मातरं वीक्ष्य लज्जिताम् । उवाच सान्त्वयंस्तां च वाक्यैर्विनयमिश्रितैः १९
श्रीराम उवाच—
मातर्मया वनं गत्वा सर्वमाचरितं तथा । अधुना करवै किं वा त्वदाज्ञातो जनन्यहो ॥ २०
मया न्यूनं कृतं नास्ति कथं मां नेक्षसे पुनः । आशीर्भिरभिनन्द्यैनं भरतं मां च वीक्षय ॥ २१
इति श्रुत्वाऽपि तद्वाक्यं सा नम्रवदनाऽनघ । शनैः शनैः प्रत्युवाच राम गच्छ स्वमालयम् ॥२२
रामोऽप्याकर्ण्य वचनं जनन्याः पुरुषोत्तमः । नमस्कृत्य ययौ गेहं सुमित्रायाः कृपानिधिः ॥२३
सुमित्रा पुत्रसहितं रामं दृष्ट्वा महामनाः । चिरं जीव चिरं जीव ह्याशीर्भिरिति चाभ्यधात् २४
मातुश्च रामभद्रोऽपि चरणौ प्रणिपत्य च । परिष्वज्य मुदा युक्तो जगाद वचनं पुनः ॥ २५
[*रत्नगर्भे मम भ्रात्रा केनाऽपि न कृतं तथा । यथाऽयमकरोद्धीमान्मम दुःखापनोदनः ॥ २६
रावणेन हृता सीता मया यत्प्राप्यते पुनः] । मातस्तत्सर्वमाविद्धि लक्ष्मणस्य विचेष्टितम् ॥ २७
दत्तामाशिषमाघ्राय शिरसाऽयं सुमित्रया । मातुर्निजाया भवनं प्रययौ विबुधैर्युतः ॥ २८
मातरं वीक्ष्य हृषितां निजदर्शनलालसाम् । स्वयानादवरुह्याऽऽशु चरणावग्रहीद्धरिः ॥ २९
माता तद्दर्शनोत्कण्ठाविह्वलीकृतमानसा । परिष्वज्य परिष्वज्य रामं मुदमवाप सा ॥ ३०
शरीरे रोमहर्षोऽभूद्गद्गदा वागभूत्तदा । हर्षाश्रूणि तु सोष्णानि प्रवाहं प्रापुरापदम् ॥ ३१

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज झ. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।
+ एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थ. ।
* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ द. °र्वं छिन्धि रघु° । २ थ. सुदुःखिता । ३ क. ख. ग. छ. ज. ठ. ण. त. थ. ध. °त्रा लक्ष्मणेन । ४ ण. °रोच्छ्रीमा° । ५ छ. ड. द. परां ।

जननीं वीक्ष्य विनयी ताटङ्कद्वयवर्जिताम् । कराकल्पपदाकल्परहितां बिभ्रतीं तनुम् ॥ ३२
किंचित्स्वदर्शनाद्धृष्टां कृशाङ्गीं तां स शोकभाक् । दुःखस्य समयो नायमिति मत्वा जगाद ताम् ३३

श्रीराम उवाच—

मातर्मया त्वच्चरणौ चिरकालं न सेवितौ । तत्क्षमस्वापराधं वै भाग्यहीनस्य मामकम् ॥ ३४
ये पुत्रा मातापित्रोर्हि न शुश्रूषासमुत्सुकाः । ते मन्तव्या नरा मातः कीटका रेतसो भवाः॥ ३५
किं कुर्वे जनकाज्ञातो गतो वै दण्डकं वनम् । तत्रापि त्वत्कृपापाङ्गाद्दुःखं तीर्णोऽस्मि दुस्तरम् ॥ ३६
रावणेन हृता सीता लङ्कायां गमिता पुनः । त्वत्कृपातो मया लब्धा तं हत्वा राक्षसेश्वरम् ॥ ३७
सीतेयं त्वच्चरणयोः पतिता वै पतिव्रता । संभावयाऽऽशु चकितां त्वत्पादार्पितमानसाम् ॥ ३८
इति श्रुत्वा तु तद्वाक्यं पादयोः पतितां स्नुषाम् । आशीर्भिरभियुज्यैनां बभाषे तां पतिव्रताम् ॥ ३९
सीते स्वपतिना सार्धं चिरं विलस भामिनि । पुत्रौ प्रसूय च कुलं स्वकं पावय पावने ॥ ४०
त्वत्सदृश्यः पतिपराः पतिदुःखसुखानुगाः । भवन्ति दुःखभागिन्यो न हि सत्यं जगत्त्रये ॥ ४१
किं चित्रं यत्पुमांसस्तु वैरिकोटिप्रभञ्जनाः । येषां गेहे सती भार्या स्वपतिप्रियवाञ्छिका ॥ ४२
विदेहपुत्रि स्वकुलं त्वया पावितमात्मना । रामपादाब्जयुगलमनुयान्त्या महात्मनः ॥ ४३
इत्युक्त्वा रघुनाथस्य भार्यामश्रितलोचनाम् । तूष्णीं बभूव हृष्टा सा समुद्गततनूरुहा ॥ ४४
अथ भ्राताऽस्य भरतः पितृदत्तं निजं महत् । राज्यं निवेदयामास रामचन्द्राय धीमते ॥ ४५
मन्त्रिणस्ते प्रहृष्टाङ्गा दैवज्ञान्मन्त्रकोविदान् । आहूय मुहूर्तं[2] पप्रच्छुः पदस्य परमेष्ठिनः ॥ ४६
शुभे मुहूर्ते सुदिने शुभनक्षत्रसंयुते । अभिषेकं मुदा राज्ञः कारयामासुरुद्यताः ॥ ४७
सप्तद्वीपवतीं पृथ्वीं व्याघ्रचर्मणि सुन्दरे । लिखित्वोपरि राजेन्द्रो महाराजोऽधितस्थिवान् ॥ ४८
तद्दिनादेव साधूनां मनांसि प्रमुदं ययुः । दुष्टानां चेतसो ग्लानिरभवत्परितापिनाम् ॥ ४९
स्त्रियस्तु पतिभक्त्या च पतिव्रतपरायणाः । मनसाऽपि कदा पापं नाऽऽचरन्ति जना मुने ॥ ५०
दैत्या देवास्तथा नागा यक्षासुरमहोरगाः । सर्वे न्यायपथे स्थित्वा रामाज्ञां शिरसा दधुः ॥ ५१
परोपकारणे युक्ताः स्वधर्मसुखनिर्वृताः । विद्याविनोदगमिता दिनरात्रिशुभेक्षणाः ॥ ५२
वातोऽपि मार्गसंस्थानां चलन्नाऽऽहरते महान् । वासांस्यपि तु सूक्ष्माणि तत्र चौरकथा न हि ५३
धनदो ह्यर्थिनां रामः करुणस्तु कृपानिधिः । भ्रातृभिः सहितो नित्यं गुरुदेवस्तुतिं व्यधात् ॥ ५४

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रघुनाथराज्याभिषेको नाम चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११०२९

---

अथ पञ्चमोऽध्यायः ।

---

शेष उवाच—

अथाभिषिक्तं रामं तु तुष्टुवुः प्रणताः सुराः । रावणाभिधदैत्येन्द्रवधहर्षितमानसाः ॥ १

देवा ऊचुः—

जय दाशरथे सुरार्तिहञ्जयतादानववंशदाहक ।
जय देववराङ्गनागणव्यपकर्षादिकरारिदारक ॥ २

---

१ ग. छ. ठ. ड. ढ. ध. महावनम् । २ क. ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. °र्तं महाराज्ये का° । ३ त. °नादिकदे° ।

तव यद्दनुजेन्द्रनाशनं कवयस्तत्कथयन्तु चोत्सुकाः ।
प्रलये जगतां ततीः पुनर्ग्रससे त्वं भुवनेश लीलया ॥ ३
जय जन्मजरादिदुःखकैः परिमुक्त प्रबलोद्धरोद्धर ।
जय धर्मकरान्वयाम्बुधौ कृतजन्मन्नजरामराच्युत ॥ ४
तव देववरस्य नामभिर्बहुपापाश्च गताः पवित्रताम् ।
किमु साधुद्विजवर्यपूर्वकाः सुतनुं मानुषतामुपागताः ॥ ५
हरविरिञ्चिनुतं तव पादयोर्युगलमीप्सितकामसमृद्धिदम् ।
हृदि पवित्रयवादिकचिह्नितैः सुरचितं मनसा स्पृहयाम ते ॥ ६
यदि भवान्न दधात्यभयं भुवो मदनमूर्तितिरस्करकान्तिभृत् ।
सुरगणाश्च कथं सुखिनः पुनर्ननु भवन्ति घृणामय पावन ॥ ७
यदा यदाऽस्मान्दनुजा हि दुःखदास्तदा तदा त्वं भुवि जन्मभाग्भव ।
अजोऽव्ययोऽपि प्रवरोऽपि सन्विभो स्वभावमास्थाय निजं निजार्चितः ॥ ८
मृतसुधासदृशैरघनाशनैः सुचरितैरवकीर्य महीतलम् ।
अमनुजैर्गुणशंसिभिरीडितस्त्वमत आशु पुनः प्रविशेः पदम् ॥ ९
अनादिराद्योऽजररूपधारी हारी किरीटी मकरध्वजाभः ।
जयं करोतु प्रसभं हतारिः स्मरारिसंसेवितपादपद्मः ॥ ०१
इत्युक्त्वा ते सुराः सर्वे ब्रह्मेन्द्रप्रमुखा मुहुः । प्रणेमुररिनाशेन प्रणता रघुनायकम् ॥ ११
इति स्तुत्याऽतिसंहृष्टो रघुनाथो महायशाः । प्रोवाच तान्सुरान्वीक्ष्य प्रणतान्नतकन्धरान् ॥ १२

श्रीराम उवाच—

सुरा वृणुत मे यूयं वरं कंचित्सुदुर्लभम् । यं कोऽपि देवो दनुजो न यक्षः प्राप सोदरः ॥ १३

सुरा ऊचुः—

स्वामिन्भगवतः सर्वं प्राप्तमस्माभिरुत्तमम् । यदयं निहतः शत्रुरस्माकं तु दशाननः ॥ १४
यदा यदाऽसुरोऽस्माकं बाधां परिदधाति भोः । तदा तदैव कर्तव्यमेतावद्वैरिनाशनम् ॥ १५
तथेत्युक्त्वा पुनर्वीरः प्रोवाच रघुनन्दनः ।

श्रीराम उवाच—

सुराः शृणुत मद्वाक्यमादरेण समन्विताः ॥ १६
भवत्कृतं मदीयैर्वै गुणैर्ग्रथितमद्भुतम् । स्तोत्रं पठिष्यति मुहुः प्रातर्निशि सकृन्नरः ॥ १७
तस्य वैरिपराभूतिर्न भविष्यति दारुणा । न च दारिद्र्यसंयोगो न च व्याधिपराभवः ॥ १८
मदीयचरणद्वंद्वे भक्तिस्तेषां तु भूयसी । भविष्यति मुदा युक्ते स्वान्ते पुंसां तु पाठतः ॥ १९
इत्युक्त्वा सोऽभवत्तूष्णीं नरदेवशिरोमणिः । सुराः सर्वे प्रहृष्टास्ते ययुर्लोकं स्वकं स्वकम् ॥ २०
रघुनाथोऽपि भ्रातृंस्तान्पालयंस्तातवद्बुधान् । प्रजाः पुत्रानिव स्वीयाल्लँालयल्लँोकनायकः ॥ २१
यस्मिञ्शासति लोकानां नाकालमरणं नृणाम् । न रोगादिपराभूतिर्गृहेषु च महीयसी ॥ २२
नेतिः कदाऽपि दृश्येत वैरिजं भयमेव च । वृक्षाः सदैव फलिनो मही भूयिष्ठधान्यका ॥ २३
पुत्रपौत्रपरीवारसनाथीकृतजीविताः । कान्तसंयोगजसुखैर्निरस्तविरहक्लमाः ॥ २४

१ क. ख. ग. छ. ज. झ. ठ. ढ. ण. त. थ. द. ध. 'वयो वर्णयितुं समुत्सु' ।

नित्यं श्रीरघुनाथस्य पादपद्मकथोत्सुकाः । कदाऽपि परनिन्दासु वाचस्तेषां भवन्ति न ॥ २५
कारवोऽपि कदा पापं नाऽऽचरन्ति मनस्यहो । रघुनाथकराघातदुःखशङ्काभिशंसिनः ॥ २६
सीतापतिमुखालोकनिश्चलीभूतलोचनाः । लोका बभूवुः सततं कारुण्यपरिपूरिताः ॥ २७
राज्यं प्राप्तमसापत्नं समृद्धबलवाहनम् । ऋषिभिर्हृष्टपुष्टैश्च रम्यहाटकभूषणैः ॥ २८
संपुष्टमिष्टापूर्तानां धर्माणां नित्यकर्तृभिः । सदा संपन्नसस्यं च सुचारक्षेत्रसंकुलम् ॥ २९
सुदेशं सुप्रजं स्वस्थं सुतृणं बहुगोधनम् । देवतायतनानां च राजिभिः परिराजितम् ॥ ३०
सुपूर्णा यत्र वै ग्रामाः सुवित्तर्द्धिविराजिताः । सुपुष्पकृत्रिमोद्यानाः सुस्वादुफलपादपाः ॥ ३१
सपद्मिनीककासारा यत्र राजन्ति भूमयः । सदम्भा निम्नगा यत्र न यत्र जनता क्वचित् ॥ ३२
कुलान्येव कुलीनानि वर्णानां न धनानि च । विभ्रमो यत्र नारीषु न विद्वत्सु च कर्हिचित् ३३
नद्यः कुटिलगामिन्यो न यत्र विषये प्रजाः । तमोयुक्ताः क्षपा यत्र बहुलेषु न मानवाः ॥ ३४
रजोयुजः स्त्रियो यत्र ना(न) धर्मबहुला नराः । धनैरनन्धो यत्रास्ति जनो नैव च भोजनम् ३५
अनयः स्यन्दनं यत्र न च वै राजपूरुषः । दण्डः परशुकुद्दालवालव्यजनराजिषु ॥ ३६
आतपत्रेषु नान्यत्र क्वचित्क्रोधोपरोधजः । अन्यत्राऽऽक्षिकवृन्देभ्यः क्वचिन्न परिदेवनम् ॥ ३७
आक्षिका एव दृश्यन्ते यत्र पाशकपाणयः । जाड्यवार्ता जलेष्वेव स्त्रीमध्या एव दुर्बलाः ॥ ३८
कठोरहृदया यत्र सीमन्तिन्यो न मानवाः । ओषधीष्वेव यत्रास्ति कुष्ठयोगो न मानवे ॥ ३९
वेधो यत्र सुरत्नेषु शूलं मूर्तिकरेषु वै । कम्पः सात्त्विकभावोत्थो न भयात्कापि कस्यचित् ॥ ४०
संज्वरः कामजो यत्र दारिद्र्यं कलुषस्य च । दुर्लभत्वं सदैवस्य सुकृते न च वस्तुनः ॥ ४१
इभा एव प्रमत्ता वै युद्धे वीच्यो जलाशये । दानहानिर्गजेष्वेव तीक्ष्णा एव हि कण्टकाः ॥ ४२
बाणेषु गुणविश्लेषो बन्धोक्तिः पुस्तके दृढा । स्नेहत्यागः खलेष्वेव न च वै स्वजने जने ॥ ४३
तं देशं पालयामास लालयल्लँलिताः प्रजाः । धर्मं संस्थापयन्देशे दुष्टे धण्डधरो यमः ॥ ४४
इत्थं पालर्यतस्तस्य धर्मेण धरणीतलम् । सहस्राणि व्यतीयुर्वै वर्षाण्येकादश प्रभोः ॥ ४५
तत्र नीचजनाच्छ्रुत्वा सीताया अपमानताम् । स्ववनितां रजकोक्त्या तां तत्याज रघूद्वहः ॥ ४६
पृथ्वीं पालयमानस्य धर्मेण नृपतेस्तदा । सीताविरहितामेकां निदेशेन सुरक्षिताम् ॥ ४७
कदाचित्संसदो मध्ये ह्यासीनस्य महामतेः । आजगाम मुनिश्रेष्ठः कुम्भोत्पत्तिर्मुनिर्महान् ॥ ४८
गृहीत्वाऽर्घं समुत्तस्थौ वसिष्ठेन समन्वितः । जनताभिर्महाराजो वार्धिशोषकमद्भुतम् ॥ ४९
स्वागतेन स संभाव्य पप्रच्छ तमनामयम् । सुखोपविष्टं विश्रान्तं बभाषे रघुनन्दनः ॥ ५०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधेऽगस्तिसमागमो नाम पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११०७५

---

अथ षष्ठोऽध्यायः ।

---

शेष उवाच—

इत्थं स्वागतसंतुष्टं ब्रह्मचर्यतपोनिधिम् । उवाच मतिमान्वीरः सर्वलोकगुरुर्मुनिम् ॥ १

---

१ छ. ड. प्राप्याथ संपन्नं स° । द. प्राप्य सुसंपन्नं स° । २ क. ख. छ. ज. ञ. ठ. ड. ध. सुयूपा । ग. घ. ङ. च. झ. ट. ढ. ण. द. सुपद्या । त. थ. सप्रजा । ३ क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. सुसदाफ° । ४ ग. छ. ठ. ड. ध. °यतो देशं धर्मेण धरणीपतेः । स° । ५ ड. °भू । स्वां निन्दां रजकोक्त्या वै तां ।

स्वागतं ते महाभाग कुम्भभूते तपोनिधे । त्वद्दर्शनेन सर्वे वै पाविताः सकुटुम्बकाः ॥ २
कच्चिन्मतिस्ते वेदेषु शास्त्रेषु परिवर्तते । त्वत्तपोविघ्नकर्ता वै नास्ति भूमण्डले क्वचित् ॥ ३
लोपामुद्रा महाभाग या च ते धर्मचारिणी । यस्याः पतिव्रताधर्मात्सर्वं भवति शोभनम् ॥ ४
अपि शंस महाभाग धर्ममूर्ते कृपानिधे । अलोलुपस्य किं कार्यं करवाणि मुनीश्वर ॥ ५
त्वत्तपोयोगतः सर्वं भवति स्वेच्छया बहु । तथाऽपि मयि कृत्वैव कृपां शंस महामुने ॥ ६

शेष उवाच—

इत्युक्तो लोकगुरुणा राजराजेन धीमता । उवाच रामं लोकेशं विनीततरभाषया ॥ ७

अगस्त्य उवाच—

स्वामिंस्तव सुदुर्दर्शं दर्शनं दैवतैरपि । कृत्वा समागतं विद्धि राजराज कृपानिधे ॥ ८
हतस्त्वया रावणाख्यस्त्वसुरो लोककण्टकः । दिष्ट्याऽद्य देवाः सुखिनो दिष्ट्या राजा विभीषणः
राम त्वद्दर्शनान्मेऽद्य गतं वै दुष्कृतं किल । संपूर्णो मे मनःकोशो हतं सर्वं सुदुष्कृतम् ॥ १०
इत्युक्त्वाऽपि बभूवाऽऽशु तूष्णीं कुम्भसमुद्भवः । रामसंदर्शनाह्लादविह्वलीकृतमानसः ॥ ११
रामः पप्रच्छ तं भूयो मुनिं ज्ञानविशारदम् । लोकातीतं भवद्भावि सर्वं ज्ञातारमिङ्गितम् ॥ १२
मुने कथय मे सर्वं पृच्छतो हि सविस्तरम् । कोऽसौ मया हतो यो हि रावणो विबुधार्दनः १३
कुम्भकर्णोऽपि कस्त्वेष का ज्ञातिर्वै दुरात्मनः । देवो दैत्यः पिशाचो वा मानवो वा महामुने ॥
सर्वमाख्याहि सर्वज्ञ सर्वं जानासि विस्तरात् । तथा कुरु मदादेशं कृपां कृत्वा ममोपरि ॥ १५
इति श्रुत्वा ततो वाक्यं कुम्भजन्मा तपोनिधिः । यत्पृष्टं रघुराजेन प्रवक्तुं तत्प्रचक्रमे ॥ १६
राजन्सृष्टिकरो ब्रह्मा पुलस्त्यस्तत्सुतोऽभवत् । ततस्तु विश्रवा जज्ञे वेदविद्याविशारदः ॥ १७
तस्य पत्नीद्वयं जातं पातिव्रत्यचरित्रभृत् । एका मन्दाकिनीनाम्नी द्वितीया कैकसी स्मृता ॥ १८
पूर्वस्यां धनदो जज्ञे लोकपालविलासधृक् । योऽसौ शिवप्रसादेन लङ्कावासमचीकरत् ॥ १९
विद्युन्मालीसुतायां तु पुत्रत्रयमभून्महत् । रावणः कुम्भकर्णश्च तथा पुण्यो विभीषणः ॥ २०
राक्षस्युदरजन्मत्वात्संध्यासमयसंभवात् । द्वयोरधर्मनिपुणा मतिरासीन्महामते ॥ २१
एकदा तु विमानेन पुष्पकेण सुशोभिना । काञ्चनीयोपभूषेण किङ्किणीजालमालिना ॥ २२
आरुह्य पितरौ द्रष्टुं ययौ शोभासमन्वितः । स्वगणैः संस्तुतो भूत्वा नानारत्नविभूषणैः ॥ २३
आगत्य पित्रोश्चरणे पतित्वा चिरमात्मजः । हर्षविह्वलितात्मा च रोमाञ्चिततनूरुहः ॥ २४
उवाच मेऽद्य सुदिनं महाभाग्यफलोदयम् । यन्मे युष्मत्पदौ दृष्टौ महापुण्यदर्शनौ[3] ॥ २५
इत्यादिभिः स्तुतिपदैः स्तुत्वाऽगात्स्वकमन्दिरम् । पितरावपि संहृष्टौ पुत्रस्नेहाद्बभूवतुः ॥ २६
तं दृष्ट्वा रावणो धीमाञ्जगाद निजमातरम् । कोऽयं पुमान्सुरो वाऽथ यक्षो वाऽथ नरोत्तमः २७
योऽसौ मम पितुः पादौ संनिषेव्य गतः पुनः । महाभाग्यनिधिः स्वीयैर्गणैः सपरिवारितः २८
केनेदं तपसा लब्धं विमानं वायुवेगधृक् । उद्यानाराममलीलादिविलासस्थानमुत्तमम् ॥ २९

शेष उवाच—

इति वाक्यं समाकर्ण्य जननी रोषविक्लवा । उवाच पुत्रं विमनाः किंचिन्नेत्रविकारिणी ॥ ३०
रे पुत्र शृणु मद्वाक्यं बहुशिक्षासमन्वितम् । एतस्य जन्मकर्मादि विचारचतुराधिकम् ॥ ३१

---

१ क. ख. ग. छ. ज. अ. ठ. ड. ण. त थ. ध. °भागा या । २ क. ख. ज. अ. ण. भूमा । ग. छ. ठ. ध. भूमाभ्राना° । ड. द. भूमभ्राना° । त. थ. भूमौ । ३ छ. ड. °स्नेहवशं गतौ । तं ।

सपत्न्या मम कुक्षिस्थं निधानं समुपस्थितम् । येन स्वमातुर्विमलं कुलमुज्ज्वलितं महत् ॥ ३२
त्वं तु मत्कुक्षिगः कीटः स्वोदरस्य प्रपूरकः । यथा खरः स्वकं भारं जानाति न च तद्गुणम् ३३
तथा त्वं लक्ष्यसेऽज्ञानी शयनाशनभोगवान् । सुप्तो गतः क्वचिद्दृष्ट इत्येव तव संभवः ॥ ३४
अनेन तपसा लब्धं शिवसंतोषकारिणा । लङ्कावासो मनोवेगं विमानं राज्यसंपदः ॥ ३५
सुधन्या जननी तस्य सुभाग्या सुमनोदया । यस्याः पुत्रो निजगुणैर्लब्धवान्महतां पदम् ॥ ३६
इति क्रुधा भाषितमार्तया तया मात्रा स्वयाऽऽकर्ण्य दुरात्मसत्तमः ॥
शेषं विधायाऽऽत्मगतं पुनर्वचो जगाद तां निश्चयभृत्तपः प्रति ॥ ३७

रावण उवाच—

जनन्याकर्णय वचो मम गर्वसमन्वितम् । रत्नगर्भा त्वमेवासि यस्याः पुत्रास्त्रयो वयम् ॥ ३८
कोऽसौ कीटः स धनदः क्व तपः स्वल्पकं पुनः । का लङ्का किं तु तद्राज्यं स्वल्पसेवकसंयुतम् ॥
मातः शृणु ममोत्साहात्प्रतिज्ञां करुणान्विते । न केनापि कृतां कर्त्रा महाभाग्ये हि कैकसि ॥४०
यद्यहं भुवनं सर्वं वशे न स्थापयामि वै । तपोभिर्दुष्करैः कृत्वा ब्रह्मसंतोषकारकैः ॥ ४१
अम्बोदके सदा त्यक्त्वा निद्रां क्रीडां तथा पुनः । चेत्तदा पितृलोकस्य घातात्पापं भवेन्मम ४२
कुम्भकर्णोऽपि कृतवान्बिभीषणसमन्वितः । रावणोऽथ सह भ्रात्रेत्युक्त्वाऽगाद्गिरिकाननम् ॥४३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रावणोत्पत्तिर्नाम षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११११८

---

अथ सप्तमोऽध्यायः ।

---

अगस्त्य उवाच—

अथोग्रं स तपो दैत्यो दशवर्षसहस्रकम् । चकार भानुमक्ष्णा च पश्यन्नूर्ध्वं पदे स्थितः ॥ १
कुम्भकर्णोऽपि कृतवांस्तपः परमदुश्चरम् । बिभीषणस्तु धर्मात्मा चचार परमं तपः ॥ २
तदा प्रसन्नो भगवान्देवदेवः प्रजापतिः । देवदानवयक्षादिमुकुटैः परिसेवितः ॥ ३
ददौ राज्यं च सुमहद्भुवनत्रयभास्वरम् । वपुश्च कृतवांस्त्र्यमर्त्यं देवदानवसेवितम् ॥ ४
तदा संतापितो भ्राता धनदो धर्मबुद्धिमान् । विमानं तु ततो नीतं लङ्का च नगरी हठात् ॥ ५
भुवनं तापितं सर्वं देवाश्चैव दिवो गताः । हतवान्ब्राह्मणकुलं मुनीनां मूलकृन्तनः ॥ ६
तदाऽतिदुःखिता देवाः सेन्द्रा ब्रह्माणमाययुः । स्तुतिं चक्रुर्महात्मानो दण्डवत्प्रणतिं गताः ॥ ७
ते तुष्टुवुः सुराः सर्वे वाग्भिरिष्टाभिरादृताः । ततः प्रसन्नो भगवान्किं करोमीति चाब्रवीत् ॥ ८
ततो निवेदयांचक्रुर्ब्रह्मणे विबुधाः पुरा । दशग्रीवाच्च संकष्टं तथा निजपराभवम् ॥ ९
क्षणं ध्यात्वा ययौ ब्रह्मा कैलासं त्रिदशैः सह । तस्य शैलस्य पार्श्वे तु वैचित्र्येण समाकुलाः ॥
स्थिताः संतुष्टुवुर्देवाः शंभुं शक्रपुरोगमाः ॥ १०
नमो भवाय शर्वाय नीलग्रीवाय ते नमः । नमः स्थूलाय सूक्ष्माय बहुरूपाय ते नमः ॥ ११
इति सर्वमुखेनोक्तां वाणीमाकर्ण्य शंकरः । प्रोवाच नन्दिनं देवानानयेति ममान्तिकम् ॥ १२
एतस्मिन्नन्तरे देवा आहूता नन्दिना ध्रुवम् । प्रविश्यान्तःपुरे देव ददृशुर्विस्मितेक्षणाः ॥ १३

---

१ क. द. कारणान्विताम् । २ छ. ड. भ्रात्रा विचार्याप्याद्वनं प्रति । इ° । ३ छ. ड. °मदारुणम् । ४ छ. द. °वान्धातृ दे° । ५ ग. °र्म्यं यक्षदा° । ६ ड. लङ्कां च नगरीं त्वगात् । ७ क. ग. ठ. थ. ध. °गिभरर्थ्याभि° ।

ब्रह्माऽऽगत्य ददर्शाथ शंकरं लोकशंकरम् । गणकोटिसहस्रैस्तु सेवितं मोदशालिभिः ॥ १४
नग्नैर्विरूपैः कुटिलैर्धूसरैर्विकटैस्तथा । प्रणिपत्याग्रतः स्थित्वा सह देवैः पितामहः ॥ १५
उवाच देवदेवेशं पश्यावस्थां दिवौकसाम् । कृपां कुरु महादेव शरणागतवत्सल ॥ १६
दुष्टदैत्यवधार्थे च समुद्योग्यं विधेयतः । सोऽपि तद्वचनं श्रुत्वा दैन्यशोकसमन्वितम् ॥ १७
त्रिदशैः सहितः सर्वैराजगाम हरेः पदम् । तुष्टुवुर्मुनयः सर्वे सप्तुरोरगकिंनराः ॥ १८
जय माधव देवेश जय भक्तजनार्तिहन् । कृपां कुरु महादेव विलोकय स्वसेवकान् ॥
इत्युच्चैर्जगदुः सर्वे देवाः शर्वपुरोगमाः ॥ १९

इत्युक्तमाकर्ण्य सुराधिनाथो दुष्टां सुरार्तिं परिचिन्त्य विष्णुः ॥
जगाद देवाञ्जलदोच्चया गिरा दुःखं तु तेषां प्रशमं नयन्निव ॥ २०
भो ब्रह्मशर्वेन्द्रपुरोगमामराः शृण्वन्तु वाचं भवतां हिते रताम् ॥
जाने दशग्रीवभयं कृतं वस्तन्नाशयाम्यद्य कृतावतारः ॥ २१
पुरी त्वयोध्या रविवंशजातैर्नृपैर्महादानमखादिसत्क्रियैः ॥
प्रपालिता भूतलमण्डला(ना)लया विराजते राजतभूमिभागैः ॥ २२

तस्यां दशरथो राजा निरपत्यः श्रियाऽन्वितः । पालयत्यधुना राज्यं दिक्चक्रं जयवान्विभुः॥ २३
स तु वन्ध्यादृष्यशृङ्गात्प्रार्थितात्पुत्रकाम्यया । पुत्रेष्ट्यां विधिना यज्वा महाबलसमन्वितः ॥ २४
ततोऽहं प्रार्थितः पूर्वं तपसा तेन भोः सुराः । पत्नीषु भूत्वा तिसृषु चतुर्धाऽपि भवत्कृते ॥ २५
रामलक्ष्मणशत्रुघ्नभरताख्यासमन्वितः । कर्ताऽस्मि रावणोद्धारं समूलबलवाहनम् ॥ २६
भवन्तोऽपि स्वकैरंशैरवतीर्य चरन्त्विह । ऋक्षवानररूपेण सर्वत्र पृथिवीतले ॥ २७
इत्युक्त्वा विररामाऽऽशु नभसीरितवाङ्मुने । देवाः श्रुत्वा महद्वाक्यं सर्वे वै हृष्टमानसाः ॥ २८
प्रचक्रुर्गदितं यादृग्देवदेवेन धीमता । स्वैः स्वैरंशैर्मही पूर्णा ऋक्षवानररूपिभिः ॥ २९
योऽसौ विष्णुर्महादेवो देवानां दुःखनाशनः । स त्वमेव महाराज भगवान्कृतविग्रहः ॥ ३०
भरतोऽयं लक्ष्मणश्च शत्रुघ्नश्च महामते । तावकांशो दशग्रीवो निहतश्च सुरार्तिदः ॥ ३१
पूर्ववैरानुबन्धेन जानकीं हृतवान्पुनः । स त्वया निहतो दैत्यो ब्रह्मराक्षसजातिमान् ॥ ३२
ब्राह्मणानां सुखं तद्वन्मुनीनां तापसं बलम् । शिवानि सर्वतीर्थानि सर्वे यज्ञाः सुसंहिताः ॥ ३३
पुलस्त्यपुत्रो दैत्येन्द्रः सर्वलोकैककण्टकः । पातितः पृथिवी सर्वा सुखमाप महेश्वर ॥ ३४
त्वयि राज्ञि जगत्सर्वं सदेवासुरमानुषम् । सुखं प्रपेदे विश्वात्मञ्जगद्योने नरोत्तम ॥ ३५
[*एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वयाऽनघ । उत्पत्तिश्च विपत्तिश्च मया मत्यनुसारतः] ॥ ३६

इत्थं निशम्य दितिजेन्द्रकुलानुकारिवार्तां महापुरुष ईश्वर ईशिता च ॥
संरुद्धबाष्पगलदश्रुमुखारविन्दो भूमौ पपात सदसि प्रथितप्रभावः ॥ ३७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रावणोत्पत्तिविपत्तिकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११२९९

---

अथाष्टमोऽध्यायः ।

---

शेष उवाच—
वात्स्यायन मुनिश्रेष्ठ कथा पापप्रणाशिनी । ब्रह्मण्य देव देवस्य सर्वधर्मैकरक्षितुः ॥ १

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

राजानं मूर्छितं दृष्ट्वा कुम्भजन्मा तपोनिधिः । शनैः शनैः करेणाऽऽशु पस्पर्शाशु जगाद च ॥ २
भो रामाऽऽश्वसिहि क्षिप्रं किमर्थमवसीदसि । भवान्दैत्यकुलच्छेत्ता महाविष्णुः सनातनः ॥ ३
भूतं भव्यं भवच्चैव जगत्स्थास्नु चरिष्णु च । त्वदृते नास्ति संचारि किमर्थमिह मूर्छितः ॥ ४
श्रुत्वा वाक्यं महाराजः कुम्भजन्मसमीरितम् । उत्तस्थौ विगलन्नेत्रबाष्पपूरितसन्मुखः ॥ ५
उवाच दीनदीनं च विस्पष्टाक्षरविस्तरम् । त्रपाभरनमन्मूर्धा ब्रह्मद्रोहपराङ्मुखः ॥ ६

श्रीराम उवाच—

अहो मे पश्यताज्ञानं विमूढस्य दुरात्मनः । यद्ब्राह्मणकुले रूढं हतवान्काममलोलुपः ॥ ७
महिलार्थे त्वहं विप्र वेदशास्त्रविवेकवान् । हतवान्वाडवकुलं बुद्धिहीनोऽतिदुर्मतिः ॥ ८
इक्ष्वाकूणां कुले जातु ब्राह्मणो न दुरुक्तिभाक् । ईदृशं कुर्वता कर्म मयैतत्सुकलङ्कितम् ॥ ९
ये ब्राह्मणास्तु पूजार्हा दानसंमानभोजनैः । ते मया निहता विप्राः शरसंघातसंहितैः ॥ १०
कांस्तु लोकान्गमिष्यामि कुम्भीपाकोऽपि दुःसहः । नेदृशं तीर्थमप्यस्ति यन्मां पावयितुं क्षमम् ११
न यज्ञो न तपो दानं न देवप्रतिमादिकम् । यत्तु वै ब्राह्मणद्रोग्धुर्मम पावनतारकम् ॥ १२
यैः कोपितं ब्रह्मकुलं नरैर्निरयगामिभिः । ते नरा बहुशो दुःखं भोक्ष्यन्ति निरयं गताः ॥ १३
वेदा मूलं तु धर्माणां वर्णाश्रमविवेकिनाम् । तन्मूलं ब्राह्मणकुलं सर्ववेदैकशाखिनः ॥ १४
मूलच्छेत्तुर्ममौद्धत्यात्को लोको नु भविष्यति । किं मया करणीयं वै येन मे हि शिवं भवेत् १५

शेष उवाच—

विलपन्तं भृशं रामं राजेन्द्रं रघुपुंगवम् । मायामनुष्यवपुषं कुम्भजन्माऽब्रवीद्वचः ॥ १६

अगस्त्य उवाच—

मा विषादं महाधीर कुरु राजन्महामते । न ते ब्राह्मणहत्या स्याद्दुष्टानां नाशमिच्छतः ॥ १७
त्वं पुमान्पुरुषः साक्षादीश्वरः प्रकृतेः परः । कर्ता हर्ताऽविता साक्षान्निर्गुणः स्वेच्छया गुणी १८
सुरापो ब्रह्महत्याकृत्स्वर्णस्तेयी महाघकृत् । सर्वे त्वन्नामवादेन पूताः शीघ्रं भवन्ति हि ॥ १९
इयं देवी जनकजा महाविद्या महामते । यस्याः स्मरणमात्रेण मुक्ता यास्यन्ति सद्गतिम् ॥ २०
रावणोऽपि न वा दैत्यो वैकुण्ठे तव सेवकः । ऋषीणां शापतोऽवाप्तं दैत्यत्वं दनुजान्तक ॥ २१
तस्यानुग्रहकर्ता त्वं न तु हन्ता द्विजन्मनः । एवं संचिन्त्य मा भूयो निजं शोचितुमर्हसि ॥ २२
इति श्रुत्वा ततो वाक्यं रामः परपुरंजयः । उवाच परमं वाक्यं गद्गदस्वरभाषितम् ॥ २३

राम उवाच—

पातकं द्विविधं प्रोक्तं ज्ञाताज्ञातविभेदतः । ज्ञातं यद्बुद्धिपूर्वं हि ह्यज्ञातं तद्विवर्जितम् ॥ २४
बुद्धिपूर्वं कृतं कर्म भोगेनैव विनश्यति । नश्येदनुशयादन्यादिदं शास्त्रविनिश्चितम् ॥ २५
[*कुर्वतो बुद्धिपूर्वं मे ब्रह्महत्यां सुनिन्दिताम् । न मे दुःखापनोदाय साधुवादः सुसंमतः]॥ २६
प्रब्रूहि तादृशं मह्यं यादृशं पापदाहकम् । व्रतं दानं मखं किंचित्तीर्थमाराधनं महत् ॥ २७
येन मे विमला कीर्तिर्लोकान्वै पावयिष्यति । पापाचारात्मकालुष्यान्ब्रह्महत्याहतप्रभान् ॥ २८

शेष उवाच—

इत्युक्तवन्तं तं रामं जगाद स तपोनिधिः । सुरासुरनमन्मौलिमणिनीराजिताङ्घ्रिकम् ॥ २९

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

शृणु राम महावीर लोकानुग्रहकारक । विप्रहत्यापनोदाय तव यद्वचनं ब्रुवे ॥ ३०
सर्वं स पापं तरति योऽश्वमेधं यजेत वै । तस्मात्त्वं यज विश्वात्मन्वाजिमेधेन शोभिना ॥ ३१
सप्ततन्तुर्महीभर्त्रा त्वया साध्यो मनीषिणा । महासमृद्धियुक्तेन महाबलसुशालिना ॥ ३२
स वाजिमेधो विप्राणां हत्यायाः पापनोदनः । कृतवान्यं महाराजो दिलीपस्तव पूर्वजः ॥ ३३
शतक्रतुः शतं कृत्वा क्रतूनां पुरुषर्षभः । पदमापामरावत्यां देवदैत्यप्रसेवितम् ॥ ३४
मनुश्च सगरो राजा मरुत्तो नहुषात्मजः । एते ते पूर्वजाः सर्वे यज्ञं कृत्वा पदं गताः ॥ ३५
तस्मात्त्वं कुरु राजेन्द्र समर्थोऽसि समन्ततः । भ्रातरो लोकपालाभा वर्न्तते तव भावुकाः ॥ ३६
इत्युक्तमाकर्ण्य मुनेः स भाग्यवान्रघूत्तमो ब्राह्मणवाक्यभीतः ।
पप्रच्छ यागे सुमतिं चिकीर्षन्विधिं पुरावित्परिगीयमानः ॥ ३७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रघुनाथस्यागस्त्योपदेशो नामाष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११९९२

अथ नवमोऽध्यायः ।

श्रीराम उवाच—

कीदृशोऽश्वस्तत्र भाव्यः को विधिस्तत्र पूजने । कथं वा शक्यते कर्तुं के जेयास्तत्र वैरिणः ॥१

अगस्त्य उवाच—

गङ्गाजलसमानेन वर्णेन वपुषा शुभः । कर्णे श्यामो मुखे रक्तः पीतः पुच्छे सुलक्षितः ॥ २
मनोवेगः सर्वगतिरुच्चैश्रवःसमप्रभः । वाजिमेधे हयः प्रोक्तः शुभलक्षणलक्षितः ॥ ३
वैशाखपौर्णमास्यां तु पूजयित्वा यथाविधि । पत्रं लिखित्वा भाले तु स्वनामबलचिह्नितम् ॥ ४
मोचनीयः प्रयत्नेन रक्षकैः परिरक्षितः । यत्र गच्छति यज्ञाश्वस्तत्र गच्छन्ति रक्षकाः ॥ ५
यस्तं बलान्निबध्नाति स्ववीर्यबलदर्पितः । तस्मात्प्रसभमानेयः परिरक्षाकरैर्हयः ॥ ६
कर्त्रा तावत्सुविधिना स्थातव्यं नियमादिह । मृगशृङ्गधरो भूत्वा ब्रह्मचर्यसमन्वितः ॥ ७
व्रतं पालयमानश्च यावद्वर्षं व्यतिक्रमेत् । तावद्दीनान्धकृपणाः परितोष्या धनादिभिः ॥ ८
अन्नं तु बहुशो देयं धनं वा भूरि मारिष । यद्यत्प्रार्थयते धीमांस्तत्तदेव ददाति हि ॥ ९
एवं प्रकुर्वतः कर्म यज्ञः संपूर्णतां गतः । करोति सर्वपापानां नाशनं रिपुनाशन ॥ १०
तस्माद्भवान्समर्थोऽस्ति करणे पालनेऽर्चने । कृत्वा कीर्तिं सुविपुलां पावयान्याञ्जनान्नृप ॥ ११

श्रीराम उवाच—

विलोकय द्विजश्रेष्ठ वाजिशालां ममाधुना । तादृशाः सन्ति नो वाऽश्वाः शुभलक्षणलक्षिताः १२
इति श्रुत्वाऽपि तद्वाक्यमगस्त्यः करुणाकरः । उत्तस्थौ वीक्षमाणोऽयं यागार्हान्वाजिनः शुभान्॥
गत्वाऽथ तत्र शालायां रामचन्द्रसमन्वितः । ददर्शाश्वान्विचित्राङ्गान्मनोवेगान्महाबलान् ॥ १४
अवनितलगताः किं वाजिराजस्य वंश्याः किमथ रघुपतीनामेकतः कीर्तिपिण्डाः ।
किमिदममृतराशिर्वाहरूपेण सिन्धोर्मुनिरिति मनसोऽन्तर्विस्मयं प्राप पश्यन् ॥ १५
एकतः शोणदेहानां वाजिनां पङ्क्तिरुत्तमा । एकतः श्यामकर्णानां कस्तूरीकान्तिसप्रभाः ॥ १६

---

१ ग. छ. ठ. ड. ध. °त्तातापा° । २ क. ख. ग. ज. भ. ठ. ड. ण. त. थ. ध. °मानम् । इ° । ३ छ. ड. सिद्धो मुनि° । ४ छ. ड. °प्रवर्णा° ।

एकतः कनकाभाश्च त्वन्यतो नीलवर्णिनः । एकतः शबलैर्वर्णैर्विशिष्टैर्वाजिभिर्वृताः ॥ १७
एवं पश्यन्मुनिः सर्वान्कौतुकाविष्टमानसः । ययावन्यत्र तान्द्रष्टुं यागयोग्यान्हयान्मुनिः ॥ १८
ददर्श तत्र शतशो बद्धांस्तादृशवर्णकान् । [ *दृष्ट्वा विस्मयमापेदे विस्मयाद्धर्षिताङ्गकः ॥ १९
एकतः श्यामवर्णांश्च सर्वाङ्गेषु पयःप्रभान् ] । पीतपुच्छान्मुखे रक्ताञ्शुभलक्षणलक्षितान् ॥ २०

निरीक्ष्य परितोऽनघान्विमलनीरधारानिभान् ।
प्रभञ्जनमनोजवान्विमलकीर्तिपुञ्जप्रभान् ॥
पयोनिधिविशोषको मुनिरुवाच सीतापतिम् ।
विचित्रहयदर्शनाद्धृषितनेत्रवक्त्रप्रभः ॥ २१

अगस्त्य उवाच—

हयमेधक्रतोर्योग्यान्वाहांस्ते बहुशः शुभान् । पश्यतो नेत्रयोर्मेऽद्य तृप्तिर्नास्ति रघूत्तम ॥ २२
रामचन्द्र महाभाग सुरासुरनमस्कृत । यज्ञं कुरु महाराज हयमेधं सुविस्तरम् ॥ २३

सुरपतिरिव सर्वान्यज्ञसंघान्करिष्यं-
स्तपन इव सुपर्वारातितोयं विशोष्यन् ।
हतरिपुगणमुख्यं सांपरायं विजित्य
क्षितितलसुखभोगं कुर्विदं भूरिभोग ॥ २४

इत्येवं वाक्यनादेन परितुष्टाखिलेन्द्रियः । सर्वान्वै यज्ञसंभारानाजहार मनोहरान् ॥ २५
मुन्यन्वितो महाराजः सरयूतीरमागतः । सुवर्णलाङ्गलैर्भूमिं विचकर्ष महीयसीम् ॥ २६
विलिख्य भूमिं बहुशश्चतुर्योजनसंमिताम् । मण्डपान्रचयामास यज्ञार्थं स नरोत्तमः ॥ २७
कुण्डं तु विधिवत्कृत्वा योनिमेखलयाऽन्वितम् । अनेकरत्नरचितं सर्वशोभासमन्वितम् ॥ २८
मुनीश्वरो महाभागो वसिष्ठः सुमहातपाः । सर्वं तत्कारयामास वेदशास्त्रविधिश्रितम् ॥ २९
प्रेषितास्तेन मुनिना शिष्या मुनिवराश्रमान् । कथयामासुरुद्युक्तं हयमेधे रघूत्तमम् ॥ ३०
आकारितास्तदा सर्व ऋषयस्तपतां वराः । आजग्मुः परमेशस्य दर्शने त्वतिलालसाः ॥ ३१
नारदोऽसितनामा च पर्वतः कपिलो मुनिः । जातूकर्ण्योऽङ्गिरा व्यास आर्ष्टिषेणोऽत्रिगौतमौ ३२
हारीतो याज्ञवल्क्यश्च संवर्तः शुकसंज्ञकः । इत्येवमादयो रामहयमेधवरं ययुः ॥ ३३
तान्सर्वान्पूजयामास रघुराजो महामुदा । प्रत्युत्थानाभिवादाभ्यामर्घविष्टरकासनैः ॥ ३४
गां हिरण्यं ददौ तेभ्यः प्रायशो दृष्टविक्रमः । महद्भाग्यं त्वद्य मेऽस्ति यद्यूयं दर्शनं गताः ॥ ३५

शेष उवाच—

एवं समाकुले ब्रह्मन्नृषिवर्यसमागमे । धर्मवार्ता बभूवाहो वर्णाश्रमसुसंमता ॥ ३६

वात्स्यायन उवाच—

का धर्मवार्ता तत्राऽऽसीत्किं वा कथितमद्भुतम् । साधवः सर्वलोकानां कारुण्यात्किमुताब्रुवन् ॥

शेष उवाच—

तान्समेतान्मुनीन्दृष्ट्वा रामो दाशरथिर्महान् । पप्रच्छ सर्वधर्मांश्चसर्ववर्णाश्रमोचितान् ॥ ३८

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

---

१ ख. 'कतो धवलै' । २ झ. 'तो यज्ञ' । ३ क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. महामनाः

ते तु पृष्टा हि रामेण धर्मान्प्रोचुर्महागुणान् । तान्प्रवक्ष्यामि ते सर्वान्यथाविधि शृणुष्व तान् ३९

ऋषय ऊचुः—

ब्राह्मणेन सदा कार्यं यजनाध्यापनादिकम् । वेदान्पठित्वा विरजेन्नो वा गार्हस्थ्यमाविशेत् ४०
[*ब्राह्मणेन सदा त्याज्यं नीचसेवानुजीवनम् । आपद्गतोऽपि जीवेत न श्ववृत्त्या कदाचन] ४१
ऋतुकालाभिगमनं धर्मोऽयं गृहिणः परः । स्त्रीणां वरमनुस्मृत्यापत्यकामोऽथवा भवेत् ॥ ४२
दिवाभिगमनं पुंसामनायुष्यकरं मतम् । श्राद्धाहः सर्वपर्वाणि यतस्त्याज्यानि धीमता ॥ ४३
तत्र गच्छन्स्त्रियं मोहाद्धर्मात्प्रच्यवते परात् । ऋतुकालाभिगामी यः स्वदारनिरतश्च यः ॥ ४४
स सदा ब्रह्मचारीह विज्ञेयः सद्गृहाश्रमी । ऋतुः षोडशयामिन्यश्चतस्रस्तासु गर्हिताः ॥ ४५
पुत्रदास्तासु या युग्मा अयुग्माः कन्यकाप्रदाः । त्यक्त्वा चन्द्रमसं दुष्टं मघां मूलं विहाय च ४६
शुचिः सन्निविशेत्पत्नीं पुन्नामर्क्षे विशेषतः । शुचिं पुत्रं प्रसूयेत पुरुषार्थप्रसाधनम् ॥ ४७
आर्षे विवाहे गोद्वंद्वं यदुक्तं तत्प्रशस्यते । शुल्कमण्वपि कन्यायाः कन्याविक्रेतृपापकृत् ॥ ४८
वाणिज्यं नृपतेः सेवा वेदानध्ययनं तथा । कुविवाहः क्रियालोपः कुलपातनहेतवः ॥ ४९
अन्नोदकपयोमूलफलैर्वाऽपि गृहाश्रमी । गोदानेन तु यत्पुण्यं पात्राय विधिपूर्वकम् ॥ ५०
अनर्चितोऽतिथिर्गेहाद्भग्नाशो यस्य गच्छति । आजन्मसंचितात्पुण्यात्क्षणात्स हि बहिर्भवेत् ॥ ५१
पितृदेवमनुष्येभ्यो दत्त्वाऽश्नीतामृतं गृही[2] । स्वार्थं परमघं भुङ्क्ते केवलं स्वोदरंभरिः ॥ ५२
षष्ठ्यष्टम्योर्विशेत्पापं तैले मांसे सदैव हि । चतुर्दश्यां तथाऽमायां त्यजेत क्षुरमङ्गनाम् ॥ ५३
रजस्वलां न सेवेत नाश्नीयात्सह भार्यया । एकवासा न भुञ्जीत न भुञ्जीतोत्कटासने ॥ ५४
नाश्नतीं स्त्रीं समीक्षेत तेजःकामो नरोत्तमः । मुखेनोपधमेन्नाग्निं नग्नां नेक्षेत योषितम् ॥ ५५
नाऽऽचक्षीत धयन्तीं गां नेन्द्रचापं प्रदर्शयेत् । न दिवोद्धृतसारं च भक्षयेद्दधि नो निशि ॥ ५६
नाङ्घ्री प्रतापयेदग्नौ न वस्त्वशुचि निक्षिपेत् । प्राणिहिंसां न कुर्वीत नाश्नीयात्संध्ययोर्द्वयोः ५७
स्त्रीधर्मिणीं नाभिवादेन्नाघ्रायादातृप्ति रात्रिषु । तौर्यत्रिकप्रियो न स्यात्कांस्ये पादौ न धावयेत् ५८
न धारयेदन्यभुक्तं वासश्चोपानहावपि । नभिन्नभाजनेऽश्नीयान्नाश्नीतान्यविदूषिते ॥ ५९
संविशेन्नाऽऽर्द्रचरणो नोच्छिष्टः क्वचिदाव्रजेत् । शयानो वा न चाश्नीयान्नोच्छिष्टः संस्पृशेच्छिरः
न मनुष्यस्तुतिं कुर्यान्नाऽऽत्मानमवमानयेत् । अभ्युद्यन्तं न प्रणमेत्परमर्माणि[3] नो वदेत् ॥ ६१
एवं गार्हस्थ्यमाश्रित्य वानप्रस्थाश्रमं व्रजेत् । सस्त्रीको विगतस्त्रीको विरजेत ततः परम् ॥ ६२
इत्येवमादयो धर्मा गदिता ऋषिभिस्तदा । श्रुता रामेण महता सर्वलोकहितैषिणा ॥ ६३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सर्वधर्मनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११२९९

अथ दशमोऽध्यायः ।

शेष उवाच—

इत्थं संशृण्वतो धर्मान्वसन्तः समुपस्थितः । यत्र यज्ञक्रियादीनां प्रारम्भः सुमहात्मनाम् ॥ १

* एतच्चिह्नान्तर्गतः पाठो ग. छ. ड. द. पुस्तकस्थः ।

१ ड. 'द्वार्हस' । २ क. ख. ग. ज. म. त. ध. द्वि । पञ्चदश्यां चतुर्दश्यां तथैव च भगे क्षुरे । र° । थ. द्वि । पञ्चदश्यां चतुर्दश्यां तथैव च क्षुरक्रियाम् । र° । ३ छ. ठ. ड. ध. थ. °जे स्कृष्टमानसः । इ° ।

दृष्ट्वा तं समयं धीमान्वसिष्ठः कलशोद्भवः । रामं लोकमहाराजं प्रत्युवाच यथोचितम् ॥ २
वसिष्ठ उवाच—
रामचन्द्र महाबाहो समयः पर्यभूत्तव । हयो यत्र प्रमुच्येत यज्ञार्थं परिपूजितः ॥ ३
सामग्री क्रियतां तत्र आहूयन्तां द्विजोत्तमाः । करोतु पूजां भगवान्ब्राह्मणानां यथोचिताम् ४
दीनान्धकृपणानां च दानं स्वान्तसमुद्गतम् । ददातु विधिवत्तेषां प्रतिपूज्याधिवासनैः ॥ ५
भवान्कनकसत्पत्न्या दीक्षितोऽत्र व्रतं चर । भूमिशायी ब्रह्मचारी वसुभोगविवर्जितः ॥ ६
मृगशृङ्गधरः कव्यां मेखलाजिनदण्डभृत् । करोतु सर्वसंभारः सर्वद्रव्यसमन्वितः ॥ ७
इति श्रुत्वा महद्वाक्यं वसिष्ठस्य यथार्थकम् । उवाच लक्ष्मणं धीमान्नानार्थपरिबृंहितम् ॥ ८
श्रीराम उवाच—
शृणु लक्ष्मण मद्वाक्यं श्रुत्वा तत्कुरु सत्वरम् । हयमानय यत्नेन वाजिमेधक्रियोचितम् ॥ ९
शेष उवाच—
श्रुत्वा वाक्यं रघुपतेः शत्रुजिल्लक्ष्मणस्तदा । सेनापतिमुवाचेदं वचो विविधवर्णनम् ॥ १०
लक्ष्मण उवाच—

वीराऽऽकर्णय मे वचः सुमधुरं श्रुत्वा त्वरातः पुनः
कुर्वन्तु क्षितिपालमौलिमुकुटप्रेङ्खां हि रामाज्ञया ।
सेनां कालबलप्रघातनबलप्रोग्रत्समर्थाङ्गिनीं
सज्जां सद्रथहस्तिपत्तिहयिनीमाराद्विधेह्यन्वितः ॥ ११

सज्जीकृता वायुजवास्तुरङ्गास्तरङ्गमालाललिताङ्घ्रिपाताः ।
सदश्वचारैर्बहुशस्त्रधारिभिः संरोहिता वैरिबलप्रहारिभिः ॥ १२
संलक्ष्यन्तां हस्तिनः पर्वताभा आधोरणैः प्रासकुन्ताग्रहस्तैः ।
शूरैः स्वंसङ्गूरिदानोपहाराः क्षीवाणास्ते सर्वशस्त्रास्त्रपूर्णाः ॥ १३
विततबहुसमृद्धिभ्राजमाना रथा मे पवनजवनवेगैर्वाजिभिर्युक्तदेहाः ।
विबुधरिपुविनाशस्मारकैरायुधास्त्रैर्भृतवलभिविभागा नीयतां ( ? )सूतवृन्दैः ॥ १४

पत्तयः शतशो मह्यमायान्त्वत्रास्त्रपाणयः । हयमेधार्हवाहस्य रक्षणे विततोद्यमाः ॥ १५
इत्याकर्ण्य वचस्तस्य लक्ष्मणस्य महात्मनः । सेनानीः कालजिन्नामा कारयामास सज्जितम् १६

दशध्रुवकमण्डितो लघुसुरोमशोभान्वितो
विविक्तगलशुक्तिभृद्विततकण्ठकोशे मणिः ।
मुखे विशदकान्तिधृक्शितिसुहस्वकर्णद्वयो
व्यराजत तदा हयो धृतनराग्र्यरश्मिच्छटः ॥ १७

कवलाशोभितमुखः स्फुरद्रत्नविशोभितः । मुक्ताफलानां मालाभिः शोभितो निर्ययौ हयः ॥ १८
श्वेतातपत्ररचितः सितचामरशोभितः । बहुशोभापरीताङ्गो निर्ययौ हरिराट् ततः ॥ १९
अग्रतो मध्यतश्चैके पृष्ठतः सैनिकास्तथा । देवा हरिं यथापूर्वं सेवन्ते सेवनोचितम् ॥ २०
अथ सैन्यं समाहूय सर्वमाज्ञापयत्तदा । हस्त्यश्वरथपत्तीनां वृन्दैः सुबहुसंकुलम् ॥ २१
ततस्ततः समेतानां सैन्यानां श्रूयते ध्वनिः । ततो दुन्दुभिनादोऽभूत्तस्मिन्पुरवरे तदा ॥ २२

तन्निनादेन शूराणां मियेण महता तदा । कम्पन्ते गिरयस्तुङ्गाः प्रासादा विचलन्ति च ॥ २३
हेषारवो महानासीद्वाजिनां मुञ्चतां नृप । रथाङ्गव्रातसंघुष्टा धरा संचलतीव सा ॥ २४
चलितैर्गजयूथैश्च पृथ्वी रुद्धा समन्ततः । रजस्तु प्रचलत्तत्र जनान्तर्धानमादधात् ॥ २५
निर्जगाम महासैन्यं छत्रैः संछाद्य भास्करम् । सेनान्या कालजिन्नाम्ना प्रेरितं जनसंकुलम् ॥२६
गर्जन्तस्तत्र वीराग्र्याः कुर्वन्तो रणसंभ्रमम् । रघुनाथस्य यागाय सज्जास्ते प्रययुर्मुदा ॥ २७

मृगमदमयमङ्गेष्वङ्गरागं दधानाः
कुसुमविमलमालाशोभिनश्चोत्तमाङ्गाः ।
मुकुटकटकभूषाभूषिताङ्गाः समस्ता
ययुरवनिपतेस्ते त्वाज्ञया चापि सर्वे ॥ २८

इत्येवं ते महाराजं ययुः सेनाचरास्त्वराः । धनुर्धराः पाशधराः खड्गधराः स्फुटक्रमाः ॥ २९
एवं शनैः शनैः प्राप्तो मण्डपं यागचिह्नितम् । हयः खुरक्षततलां भूमिं कुर्वन्नभः प्लुवन् ॥ ३०
रामो दृष्ट्वा हरिं प्राप्तं बहुसंतुष्टमानसः । वसिष्ठं प्रेरयामास क्रियाकर्तव्यतां प्रति ॥ ३१
वसिष्ठो राममाहूय स्वर्णपत्नीसमन्वितम् । प्रयोगं कारयामास[+ब्रह्महत्यापनोदनम् ॥ ३२
ब्रह्मचर्यव्रतधरो मृगशृङ्गपरिग्रहः । तत्कर्म कारयामास] रामः परपुरंजयः ॥ ३३
प्रारेभे यागकर्मार्थं कुण्डं मण्डपसंमितम् । तत्राऽऽचार्योऽभवद्धीमान्वेदशास्त्रविचारवित् ॥ ३४
वसिष्ठो रघुनाथस्य कुलपूर्वगुरुर्मुनिः । ब्रह्मंस्तत्राऽऽचरद्ब्राह्म्यं कर्मागस्त्यस्तपोनिधिः ॥ ३५
वाल्मीकिर्मुनिरध्वर्युर्मुनिः कण्वस्तु द्वारपः । अष्टौ द्वाराणि तत्राऽऽसन्सतोरणशुभानि वै ॥ ३६
द्वारि द्वारि द्वयं विप्र ब्राह्मणस्याधिमन्त्रवित् । पूर्वद्वारे मुनिश्रेष्ठौ देवलासितसंज्ञितौ ॥ ३७
दक्षिणद्वारि भूमानौ कश्यपात्री तपोनिधी । पश्चिमद्वारि ऋषभौ जातूकर्ण्योऽथ जाजलिः ॥
उत्तरद्वारि मुनी द्वौ द्वितीकैकततापसौ ॥ ३८
एवं द्वारविधिं कृत्वा वसिष्ठः कुम्भसंभवः । हयवर्यस्य सत्पूजां कर्तुमारभत द्विज ॥ ३९
सुवासिन्यस्त्रियस्तत्र वासोलंकारशोभिताः । हरिद्राक्षतगन्धाद्यैः पूजयामासुरर्चितम् ॥ ४०
नीराजनं ततः कृत्वा धूपयित्वाऽगरूक्षणैः । वर्धापनं जना वेश्याश्चक्रुस्ता वाडवाज्ञया ॥ ४१
एवं संपूज्य विमले भाले चन्दनचर्चिते । कुङ्कुमादिकगन्धाढ्ये सर्वशोभासमन्विते ॥ ४२
बबन्ध भास्वरं पत्रं तप्तहाटकनिर्मितम् । तत्रालिखद्दाशरथेः प्रतापबलमूर्जितम् ॥ ४३
सूर्यवंशध्वजो धन्वी धनुर्दीक्षागुरोर्गुरुः । यं देवाः सासुराः सर्वे नमन्ति मणिमौलिभिः ॥ ४४
तस्याऽऽत्मजो वीरबलदर्पहारी रघूद्वहः । रामचन्द्रो महाभागः सर्वशूरशिरोमणिः ॥ ४५
तन्माता कोशलनृपपत्नीगर्भसमुद्भवा । तस्याः कुक्षिभवं रत्नं रामः शत्रुक्षयंकरः ॥ ४६
करोति हयमेधं वै ब्राह्मणेन सुशिक्षितः । रावणाभिधविप्रेन्द्रवधपापापनुत्तये ॥ ४७
मोचितस्तेन वाहानां मुख्योऽसौ वाजिनां वरः । महाबलपरीवारपरिखाभिः सुरक्षितः ॥ ४८
तद्रक्षकोऽस्ति तद्भ्राता शत्रुघ्नो लवणान्तकः । हस्त्यश्वरथपादातसंघसेनासमन्वितः ॥ ४९

+ एतच्चिह्नान्तर्गतः पाठः, ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ घ. ङ. च. ठ. ड. °स्तुङ्गा नागाद्या वि° । २ क. ग. घ. ङ. च. छ. ज. झ. म. ट. ठ. ड. ण. त. थ. द. ध. °व्रात° । ३ क. ख. ग. छ. ज. म. ठ. ड. त. थ. ध. जाबालिः । ण. जाबालिः । ४ छ. ज. ड. °रि सुतपी द्वौ । ५ छ. ड. °त्वा पूजयि° । ६ ग. °धेः सुनामव° ।

यस्य राज्ञ इति श्रेष्ठो मानः स्यात्स्वबलोन्मदात् । शूरा वयं धनुर्धारिश्रेष्ठा वयमिहोत्कटाः ॥५०
ते गृह्णन्तु बलाद्वाहं रत्नमालाविभूषितम् । मनोवेगं कामजवं सर्वगत्याऽधिभास्वरम् ॥ ५१
ततो मोचयिता भ्राता शत्रुघ्नो लीलया हठात् । शरासनविनिर्मुक्तवत्सदन्तैस्तु तत्परः ॥ ५२

इत्येवमादि च विलिख्य महामुनीन्द्रः श्रीरामचन्द्रभुजवीर्यलसत्प्रतापम् ।
शोभानिधानमनिलोपमवीर्यवेगं पातालभूतलविशेषगतिं मुमोच ॥ ५३

शत्रुघ्नमादिदेशाथ रामः शस्त्रभृतां वरः । याहि वाहस्य रक्षार्थं पृष्ठतः स्वेच्छया गतेः ॥ ५४
शत्रुघ्न गच्छ वाहस्य मार्गे भद्रं भवेत्तव । भवेतां शत्रुविजयौ रिपुकर्षण ते भुजौ ॥ ५५

ये योद्धारः प्रतिरणगतास्ते त्वया वारणीया
वाहं रक्ष स्वकगुणगणैः संयुतः सन्महोर्व्याम् ॥
सुप्तान्भ्रष्टान्विगतवसनान्भीतभीतान्प्रणम्रा-
न्मा हन्यास्तान्सुकृतिकृतिनो ये न शंसन्ति कर्म ॥ ५६

विरथान्रथसंस्थस्त्वं ये वदन्ति वयं तव । ते त्वया न निहन्तव्याः शत्रुघ्न सुकृतैषिणा ॥ ५७
यो हन्याद्विमदं मत्तं सुप्तं भग्नभयातुरम् । तावकोऽहं ब्रुवाणं च स व्रजत्यधमां गतिम् ॥ ५८
परस्वे चित्तवृत्तिं त्वं मा कृथाः परदारके । नीचे रतिं मा विदध्याः सर्वसद्गुणपूरितः॥ ५९
पूर्वं प्रहारं वृद्धानां मा कुर्वीथा धरिंजय । पूज्यपूजाव्यतिक्रामं मा विधेहि दयान्वितः ॥ ६०
गां विप्रं त्वं नमस्कुर्या वैष्णवं धर्मसंयुतम् । अभिवाद्य यतो गच्छेत्तत्र सिद्धिमवाप्नुयात् ॥ ६१
विष्णुः सर्वेश्वरः साक्षी सर्वव्यापकदेहभृत् । ये तदीया महाबाहो तद्रूपा विचरन्ति हि ॥ ६२
ये स्मरन्ति महाविष्णुं सर्वभूतहृदि स्थितम् । ते मन्तव्या महाविष्णुसमरूपा रघूत्तम ॥ ६३
यस्य स्वीयो न पारक्यो यस्य मित्रसमो रिपुः । ते वैष्णवाः क्षणादेव पापिनं पावयन्ति हि॥६४
येषां प्रियं भागवतं तेषां वै ब्राह्मणाः प्रियाः । वैकुण्ठात्प्रेषितास्तेऽत्र लोकपावनहेतवे ॥ ६५
येषां मुखे हरेर्नाम हृदि विष्णुः सनातनः । उदरे विष्णुनैवेद्यं स श्वपाकोऽपि वैष्णवः ॥ ६६
येषां वेदाः प्रियतमा न च संसारजं सुखम् । स्वधर्मनिरता येऽत्र तान्नमस्कुर्विहान्वितान् ॥ ६७
शिवे विष्णौ न वो भेदो न च ब्रह्ममहेशयोः । तेषां पादरजः पूतं वहाम्यघविनाशनम् ॥ ६८
गौरी गङ्गा महालक्ष्मीर्यस्य नास्ति पृथक्तया । ते मन्तव्या नराः सर्वे स्वर्गलोकादिहामराः॥६९
शरणागतरक्षी च महादानपरायणः । यथाशक्ति हरेः प्रीत्यै स ज्ञेयो वैष्णवोत्तमः ॥ ७०
यस्य नाम महापापराशिं दहति सत्वरम् । तदीयचरणद्वंद्वे भक्तिर्यस्य स वैष्णवः ॥ ७१
इन्द्रियाणि वशे येषां मनोऽपि हरिचिन्तकम् । तान्नमस्कृत्य पूयात्स आजन्ममरणान्तकम् ॥ ७२

परस्त्रियं त्वं करवालवश्यजन्मवेर्यशोभूषणभूतभूमिः ॥
एवं ममाऽऽदेशमथाऽऽचरंश्च लभेः परं धाम सुयोगमीड्यम् ॥ ७३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्नशिक्षाकथनं नाम दशमोऽध्यायः ॥ १० ॥

आदितः श्लोकानां समष्ट्यङ्काः—११३२८

---

१ झ. धनंजय । ड. रणंजय । २ झ. वा धर्मभेदो म॰ । ३ ग. छ. ठ. ड. ण. त. ॰दो न ब्राह्मणम॰ । ४ ज. ठ. द. ध. ॰हाऽऽगताः । श॰ । ५ क. ख. ग. छ. ज. म. ठ. ड. ण. थ. ध. सुयाग॰ ।

अथैकादशोऽध्यायः ।

---

शेष उवाच—

एवमाज्ञाप्य भगवान्रामश्चामित्रकर्षणः । वीरानालोकयन्भूयो जगाद शुभया गिरा ॥ १
शत्रुघ्नस्य मम भ्रातुर्वाजिरक्षाकरस्य वै । को गन्ता पृष्ठतो रक्षंस्तन्निदेशप्रपालकः ॥ २

यः सर्ववीरान्प्रति मुख्यमागतान्विनिर्जयेन्मर्मभिदस्त्रसंघैः ।
गृह्णात्वसौ मे करवीटकं तद्भूमौ यशः संप्रथयन्सुविस्तरम् ॥ ३

इत्युक्तवति रामे तु पुष्कलो भरतात्मजः । जग्राह वीटकं तस्माद्रघुराजकराम्बुजात् ॥ ४
स्वामिन्गच्छामि शत्रुघ्नपृष्ठरक्षां करोम्यहम् । संनद्धः सर्वतः शस्त्रचापबाणधरः प्रभो ॥ ५
सर्वमद्य क्षितितलं त्वत्प्रतापो विजेष्यते । एते निमित्तभूता वै रामचन्द्र महामते ॥ ६
भवत्कृपातः सकलं ससुरासुरमानुषम् । उपस्थितं प्रयुद्धार्थं निवारणक्षमो ह्यहम् ॥ ७
सर्वं स्वामी ज्ञास्यति यन्मम विक्रमदर्शनात् । एष गन्तास्मि शत्रुघ्नपृष्ठरक्षाप्रकारकः ॥ ८

एवं ब्रुवन्तं भरतात्मजं स प्रस्तूय साध्वित्यनुमोदमानः ।
शशंस सर्वान्कपिवीरमुख्यान्प्रभञ्जनोद्भूतमुखान्हरिः प्रभुः ॥ ९

भो हनूमन्महावीर शृणु मद्वाक्यमादृतः । त्वत्प्रसादान्मया प्राप्तमिदं राज्यमकण्टकम् ॥ १०
सीताया मम संयोगो योऽभवज्जलधिर्नरैः । तारितस्तद्बलं वेद्मि सर्वं तव कपीश्वर ॥ ११
त्वं गच्छ मम सैन्यस्य पालकस्त्वन्ममाज्ञया । शत्रुघ्नः सोदरो मह्यं पालनीयस्त्वहं यथा ॥ १२
यत्र यत्र मतिभ्रंशः शत्रुघ्नस्य प्रजायते । तत्र तत्र प्रबोद्धव्यो भ्राता मम महामते ॥ १३
इति श्रुत्वा महद्वाक्यं रामचन्द्रस्य धीमतः । शिरसा तत्समादाय प्रणाममकरोत्तदा ॥ १४
अथाऽऽदिशन्महाराजो जाम्बवन्तं कपीश्वरम् । रघुनाथस्य सेवायै कपीश्वरमजः प्रभुः ॥ १५
अङ्गदो गवयो मैन्दस्तथा दधिमुखः कपिः । सुग्रीवः प्लवगाधीशः शतवल्यक्षिकौ कपी ॥ १६
नीलो नलो मनोवेगोऽधिगन्ता वानराङ्गजः । इत्येवमादयो यूयं सज्जीभूता भवन्तु भोः ॥ १७
सर्वे रथैः सदश्वैश्च तप्तहाटकभूषणैः । कवचेन शिरस्त्राणैर्भूषिता यान्तु सत्वराः ॥ १८

शेष उवाच—

सुमन्त्रमाहूय सुमन्त्रिणं तदा जगाद रामो बलवीर्यशोभितः ।
अमात्यमौले वद केऽत्र योज्या नरा हयं पालयितुं समर्थाः ॥ १९

तदुक्तमेवमाकर्ण्य जगाद परवीरहा । हयस्य रक्षणे योग्यान्बलिनोऽत्र नराधिपान् ॥ २०
रघुनाथ शृणुष्वेतांस्तव वीरान्सुसंहितान् । धनुर्धरान्महाविद्यान्सर्वशस्त्रास्त्रकोविदान् ॥ २१
प्रतापाग्र्यं नीलरत्नं तथा लक्ष्मीनिधिं नृपम् । रिपुतापं चोग्रहयं तथा शस्त्रविदं नृपम् ॥ २२
राजन्योऽसौ नीलरत्नो महावीरो रथाग्रणीः । स एव लक्षं रक्षेत लक्षं युध्येत निर्भयः ॥ २३
अक्षौहिणीभिर्दशभिर्यातु वाहस्य रक्षणे । दंशितैः सशिरस्त्राणैर्महाबाहुभिरुद्धतैः ॥ २४
प्रतापाग्र्यो यो हि जिह्मं रिपुवर्गमशातयत् । सव्यापसव्यबाणानां मोक्ता सर्वास्त्रवित्तमः ॥२५

---

१ क. °यद्वै रिपुमन्त्र° । झ. ञ. °येद्वै मृदुशस्त्र° । २ ग. छ. ड. °र्वशस्त्रास्त्र° । ३ त. °दयः शीघ्रं स° । ४ द. सर्वैर्गजैः स° । ५ च. °था शास्त्र°

[*एषोऽक्षौहिणीविंशत्या यातु यज्ञहयावने । संनद्धो रिपुनाशाय युक्तः कोदण्डदण्डभृत् ॥ २६
तथा लक्ष्मीनिधिस्त्वेष यातु राजन्यसत्तमः ।] यस्तपोभिः शतधृतिं प्रसाद्यास्त्राणि चाभ्यसत् ॥
ब्रह्मास्त्रं पशुपत्यस्त्रं गारुडं नागसंज्ञितम् । मायूरं नाकुलं रौद्रं वैष्णवं मेघसंभवम् ॥ २८
वज्रं पार्वतसंज्ञं च तथा वायव्यसंज्ञितम् । इत्यादिकानामस्त्राणां संप्रयोगविसर्गवित् ॥ २९
स एष निजसैन्यानामक्षौहिण्यैकया युतः । यातु शूराग्र्यमुकुटः सर्ववैरिप्रभञ्जनः ॥ ३०
रिपुतापोऽयमेवाद्य गच्छत्वग्र्यो धनुर्भृताम् । सर्वशस्त्रास्त्रकुशलो रिपुवंशदवानलः ॥ ३१
गच्छतात्सेनया त्वद्य चतुरङ्गसमेतया । शत्रुघ्नाज्ञां शिरस्येते दधत्वद्य बलोत्कटाः ॥ ३२
उग्राश्वोऽपि महाराजस्तथा शस्त्रविदेष च । सर्वे यान्तु सुसंनद्धास्तव वाहस्य पालकाः ॥ ३३
इति भाषितमाकर्ण्य मन्त्रिणः प्रजहर्ष च । आज्ञापयामास स तान्सुमन्त्रिकथितान्भटान् ॥ ३४
तेऽनुज्ञां रघुनाथस्य प्राप्य मोदं प्रपेदिरे । चिरकालं सांपरायं वाञ्छन्तो युद्धदुर्मदाः ॥ ३५
संनद्धाः कवचाद्यैश्च तथा शस्त्रास्त्रवर्तनैः । ययुः शत्रुघ्नसंवासं सीतापतिप्रणोदिताः ॥ ३६

शेष उवाच—

अथोक्त ऋषिणा रामो विधिनाऽपूजयत्स ह । आचार्यादीनृषीन्सर्वान्यथोक्तवरदक्षिणैः ॥ ३७
आचार्याय ददौ रामो हस्तिनं षष्टिहायनम् । हयमेकं मनोवेगं रत्नमालाभिभूषितम् ॥ ३८
पौरटं रथमेकं च मणिरत्नविभूषितम् । चतुर्भिर्वाजिभिर्युक्तं सर्वोपस्करसंयुतम् ॥ ३९
मणिलक्षं तु प्रत्यक्षं मुक्ताफलतुलाशतम् । विद्रुमस्य तुलानां तु सहस्रं स्फुटतेजसाम् ॥ ४०
ग्राममेकं सुसंपन्नं नानाजनसमाकुलम् । विचित्रसस्यनिष्पन्नं विविधैर्मन्दिरैर्वृतम् ॥ ४१
ब्रह्मणोऽपि तथैवादाद्धोत्रेऽप्यध्वर्यवे स्मृतम् । ऋत्विग्भ्यो भूरिशो दत्त्वा प्रणनाम रघूत्तमः॥४२
सर्वे तेऽवर्धयन्वाग्भिराशीर्भिरभिपूजिताः । चिरं जीव महाराज रामचन्द्र रघूद्वह ॥ ४३
कन्यादानं भूमिदानं गजदानं तथैव च । अश्वदानं स्वर्णदानं तिलदानं समौक्तिकम् ॥ ४४
अन्नदानं पयोदानमभयदानमेव च । रत्नदानानि सर्वाणि विप्रेभ्यश्चादिशन्महान् ॥ ४५
देहि देहि धनं देहि मा नेति ब्रूहि कस्यचित् । ददात्वन्नं ददात्वन्नं सर्वभोगसमन्वितम् ॥ ४६
इत्थं प्रावर्तत मखो रघुनाथस्य धीमतः । सदक्षिणैर्द्विजवरैः पूर्णः सर्वशुभक्रियः ॥ ४७
अथ रामानुजो गत्वा मातरं प्रणनाम ह । आज्ञापयस्व रक्षार्थमेष गच्छामि शोभने ॥ ४८
त्वत्कृपातो रिपुकुलं जित्वा शोभासमन्वितः । आयास्यामि महाराजैर्हयवर्यसमन्वितः ॥ ४९

मातोवाच—

पुत्र गच्छ महावीर शिवाः पन्थान एव ते । सर्वान्रिपुगणाञ्जित्वा पुनरागच्छ सन्मते ॥ ५०
पुष्कलं पालय निजभ्रातृजं धर्मवित्तमम् । महाबलिनमद्यापि बालकं लीलया युतम् ॥ ५१
पुत्राऽऽगच्छसि चेद्युक्तः पुष्कलेन शुभान्वितः । तदा मम प्रमोदः स्यात्त्वन्यथा शोकभागिनी ५२
इति संभाषमाणां स्वां मातरं प्रत्युवाच सः । पुष्कलं पालयित्वाऽहं निजाङ्गमिव शोभने ॥ ५३
स्वनामसदृशं कृत्वा पुनरेष्यामि मोदवान् । त्वदीयचरणद्वंद्वं स्मरन्प्राप्स्यामि शोभनम् ॥ ५४

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध पुस्तकस्थः ।

---

१ ग. छ. ठ. ड. ण. थ. द. ध. बह्व्यां । २ क. घ. ङ.झ.ञ. ट. ढ. °सं सतां प° । ३ ण. °नं च गोदा° । ४ छ. ड. स्यान्नान्यथा शोभनं भवेत् । इ° ।

इत्युक्त्वा प्रययौ वीरो रामं स मखमण्डपे । आसीनं मुनिवर्याढ्यैर्मुनिवेषधरं वरम् ॥ ५५
उवाच मतिमान्वीरः सर्वशोभासमन्वितः । रामाऽऽज्ञापय रक्षार्थं हयस्यानुज्ञया तव ॥ ५६
रघुनाथोऽपि तच्छ्रुत्वा भद्रमस्त्विवति चाब्रवीत् । बालं स्त्रियं प्रमत्तं त्वं मा हन्याः शस्त्रवर्जितम्॥
तदा लक्ष्मीनिधिर्भ्राता जानक्या जनकात्मजः । प्रहस्य किंचिन्नयने नर्तयन्राममब्रवीत् ॥ ५८

लक्ष्मीनिधिरुवाच—

रामचन्द्र महाबाहो सर्वधर्मपरायण । शत्रुघ्नं शिक्षय तथा यथा लोकोत्तरो भवेत् ॥ ५९
कुलोचितं कर्म कुर्वन्नग्रजाचरितं तथा । गच्छेत्स परमं धाम तेजोबलसमन्वितम् ॥ ६०
त्वया प्रोक्तं महाराज ब्राह्मणं नावमानयेत् । पित्रा तव हतो विप्रः पितृभक्तिपरायणः ॥ ६१
त्वयाऽपि सुमहत्कर्म श्रुतं लोके विगर्हितम् । अवध्यां महिलां यस्त्वं हतवानिति तं ततः ॥ ६२
अग्रजोऽस्य महाराज कृतवान्यं पराक्रमम् । स न केन कृतः पूर्वं राक्षस्याः कर्णकर्तनम् ॥ ६३
एवं करिष्यति नृप शत्रुघ्नः शिक्षया तव । यदि नायं तथा कुर्यात्कुलस्यासदृशो भवेत् ॥ ६४
इत्युक्तवन्तं तं रामः प्रत्युवाच हसन्निव । मेघगम्भीरया वाचा सर्ववाक्यविशारदः ॥ ६५
यूयं तु योगिनः शान्ताः समदुःखसुखाः पुनः । जानन्त्यपारसंसारनिस्तारतरणादिकम् ॥ ६६
ये शूराः सुमहेष्वासाः सर्वशस्त्रास्त्रकोविदाः । ते जानन्ति नियुद्धस्य वार्तां न तु भवादृशाः॥६७
परोपतापिनो ये वै ये चोत्पथविसारिणः । ते हन्तव्या नृपैः सर्वैः सर्वलोकहितैषिभिः ॥ ६८

इत्युक्तमाकर्ण्य सभासदस्ते सर्वे स्मितं चक्रुररिंदमस्य ।
कुम्भोद्भवः पूजितमेनमश्वं विमोचयामास सुशोभितं हि ॥ ६९

इमं मन्त्रं समुच्चार्य वसिष्ठः कलशोद्भवः । कराब्जेन स्पृशन्नश्वं मुमोच जयकाङ्क्षया ॥ ७०
वाजिन्गच्छ यथालीलं सर्वत्र धरणीतले । यागार्थं मोचितो येन पुनरागच्छ सत्वरः ॥ ७१
अश्वस्तु मोचितः सर्वैर्भटैः शस्त्रास्त्रकोविदैः । परितः प्रययौ प्राचीं दिशं वायुजवान्वितः ॥ ७२
प्रचचाल बलं सर्वं कम्पयद्धरणीतलम् । शेषोऽपि किंचिन्नतया फणया धृतवान्भुवम् ॥ ७३
दिशः प्रसेदुः परितः क्ष्मातलं शोभयाऽन्वितम् । वायवस्तं तु शत्रुघ्नं पृष्ठतो मन्दगामिनः ॥ ७४
शत्रुघ्नस्य प्रयाणायाभ्युद्यतस्य भुजोऽस्फुरत् । दक्षिणः शुभमाशंसी जयाय च बभूव ह ॥ ७५
पुष्कलः स्वगृहं रम्यं प्रविवेश समृद्धिमत् । वितर्दिभिर्वलभीभिः शोभितं रत्नवेदिकम् ॥ ७६
तत्रापश्यत्प्रियां भार्यां पतिव्रतपरायणाम् । किंचित्स्वदर्शनाद्धृष्टां भर्तृदर्शनलालसाम् ॥ ७७

मुखारविन्देन च नागवल्लीदलं सकर्पूरकमत्र चर्वती* ।
नासाफलं तोयभवं महाधनं बाह्वोर्मृणालीसदृशोः सुकङ्कणे ॥ ७८
कुचौ तु मालूरफलोपमौ वरौ नितम्बबिम्बं वरनीविशोभितम् ।
पादौ तुलाकोटिधरौ सुकोमलौ दधत्यहोऽवैक्षत सा पतिं स्वकम् ॥ ७९

परिरभ्य प्रियां धीरो गद्गदस्वरभाषिणीम् । तदुरोजपरीरम्भनिर्भरीकृतदेहकाम् ॥ ८०
उवाच भद्रे गच्छामि शत्रुघ्नपृष्ठरक्षकः । रामाज्ञया यज्ञमश्वं पालयन्रथसंयुतः ॥ ८१
त्वया मे मातरः पूज्याः पादसंवाहनादिभिः । तदुच्छिष्टं हि भुञ्जाना तत्कर्मकरणादरा ॥ ८२

*आर्षो नुमभावः ।

१ क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. °र्म्यैर्यज्ञवे° ।

सर्वाः पतिव्रता नार्यो लोपामुद्रादिकाः शुभाः। नावमान्यास्त्वया भीरु स्वतपोबलशोभिताः ॥८३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे हयमोचनं नामैकादशोऽध्यायः ॥ ११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११४११

---

अथ द्वादशोऽध्यायः ।

---

शेष उवाच—

इत्युक्तवन्तं स्वपतिं वीक्ष्य प्रेम्णा सुनिर्भरा । प्रत्युवाच हसन्तीव किंचिद्गद्गदभाषिणी ॥ १
नाथ ते विजयो भूयात्सर्वत्र रणमण्डले । शत्रुघ्नाज्ञा प्रकर्तव्या हयरक्षा यथा भवेत् ॥ २
स्मरणीया हि सर्वत्र सेविका त्वत्पदानुगा । कदाऽपि मानसं नाथ त्वत्तो नान्यत्र गच्छति ॥ ३
परमायोधने कान्त स्मर्तव्याऽहं न जातुचित् । सत्यां मयि तव स्वान्ते युद्धे विजयसंशयः ॥ ४
पद्मनेत्र तथा कार्यमूर्मिलाया यथा मम । हास्यं नैव प्रकुर्वन्ति मामीक्ष्य करताडनैः ॥ ५
इयं पत्नी महाभीरोः संग्रामे प्रपलायितुः । कातरा यर्हि युध्यन्ति शूराणां समयः कुतः ॥ ६
इत्येवं न हसन्त्युच्चैर्यथा मे देवराङ्गनाः । तथा कार्यं महाबाहो रामस्य हयरक्षणे ॥ ७
योद्धा त्वमादौ सर्वत्र परे ये तव पृष्ठतः । धनुष्टङ्कारबधिराः क्रियन्तां बलिनः परे ॥ ८
तव प्रोद्यत्कराम्भोजकरवालभिया बलम् । परेषां भवतात्क्षिप्रमन्योन्यभयमाकुलम् ॥ ९
कुलं महत्स्वलं कार्यं परान्विजयता त्वया । गच्छ स्वामिन्महाबाहो तत्र श्रेयो भवत्विह ॥ १०
इदं धनुर्गृहाणाऽऽशु महद्गुणविभूषितम् । यस्य गर्जितमाकर्ण्य वैरिवृन्दं भयातुरम् ॥ ११
इमौ ते त्विषुधी वीर बध्येतां शं यथा भवेत् । वैरिकोटिविनिष्पेषबाणकोटिसुपूरितम् ॥ १२
कवचं त्विदमाधेहि शरीरे कामसुन्दरे । वज्रप्रभामहादीप्तिहतसंतमसं दृढम् ॥ १३
शिरस्त्राणं निजोत्तंसे कुरु कान्त मनोरमम् । इमे वतंसे विशदे मणिरत्नविभूषिते ॥ १४

इति सुविमलवाचं वीरपुत्रीं प्रपश्य-
नयनकमलदृष्ट्या वीक्षमाणस्तदा ताम् ।
अधिगतपरिमोदो भारतिः शत्रुजेता
रणकरणसमर्थस्तां जगादाभिवीरः ॥ १५

पुष्कल उवाच—

कान्ते यथा त्वं वदसि तथा सर्वं चराम्यहम् । वीरपत्नि भवेत्कीर्तिस्तव कान्तिमतीप्सिता १६
इति कान्तिमतीदत्तं कवचं मुकुटं वरम् । धनुर्महेषुधी वीरः सर्वं जग्राह वीर्यवान् ॥ १७
परिधाय च तत्सर्वं बभौ शोभासमन्वितः । शुशुभेऽतीव सुभटः सर्वशस्त्रास्त्रकोविदः ॥ १८
तमस्त्रशस्त्रशोभाढ्यं वीरमालाविभूषितम् । कुङ्कुमागरुकस्तूरीचन्दनादिकचर्चितम् ॥ १९
नानाकुसुममालाभिराजानुपरिशोभितम् । नीराजयामास मुहुस्तत्र कान्तिमती सती ॥ २०
नीराजयित्वा बहुशः किरन्ती मौक्तिकैर्मुहुः । गलदश्रुजला चैव परिरेभे पतिं निजम् ॥ २१
दृढं स परिरभ्यैनां चिरमाश्वासयत्तदा । वीरपत्नि कान्तिमति विरहं मा कृथा मम ॥ २२
एष गच्छामि सविधे तव भामे पतिव्रते । इत्युक्त्वा तां निजां पत्नीं रथमारुरुहे वरम् ॥ २३

---

१ ग. छ. ड. ॰तिं निजप्रेम्णा सुनिर्भरम् । प्र॰ । २ छ. ड. द. खड्गे । ३ झ. ॰रुह हे व॰ ।

तं प्रयान्तं पतिश्रेष्ठं नयनैर्निमिषोज्झितैः । विलोकयामास तदा [*पतिव्रतपरायणा ॥ २४
स ययौ जनकं द्रष्टुं जननीं प्रेमविह्वलाम् । गत्वा पितरमम्बां च ववन्दे शिरसा मुदा ॥ २५
माता पुत्रं परिष्वज्य स्वाङ्के चाऽऽरोपयत्तदा ।] मुञ्चन्ती बाष्पनिचयं स्वस्त्यस्तु निजगाद सा॥
पितरं प्राह भरतं रामो यज्ञकरः परः । पालनीयो लक्ष्मणेन भवद्भिश्च महात्मभिः ॥ २७
आज्ञप्तोऽसौ जनन्या च पित्रा संहर्षिताङ्गकः । ययौ शत्रुघ्नकटकं महावीरविभूषितम् ॥ २८
रथिभिः पत्तिभिः शूरैः सदश्वैः सादिभिर्वृतम् । ययौ मुदा रघूत्तंसमहायज्ञहयाग्रणीः ॥
गच्छन्पाञ्चालदेशांश्च कुरूंश्चैवोत्तरान्कुरून् ॥ २९
दशार्णाञ्श्रीविशालांश्च सर्वशोभासमन्वितः । तत्र तत्रोपशृण्वानो रघुवीरयशोऽखिलम् ॥ ३०
रावणासुरघातेन भक्तरक्षाविधायकम् । पुनश्च हयमेधादिकार्यमारभ्य पावनम् ॥ ३१
यशो वितन्वन्भुवने लोकान्रामोऽविता भयात् । तेभ्यस्तुष्टो ददौ हारान्रत्नानि विविधानि च॥
महाधनानि वासांसि शत्रुघ्नः प्रवरो महान् । सुमतिर्नाम तेजस्वी सर्वविद्याविशारदः ॥ ३३
रघुनाथस्य सचिवः शत्रुघ्नानुचरो वरः । ययौ तेन महाधीरो ग्रामाञ्जनपदान्बहून् ॥ ३४
रघुनाथप्रतापेन न कोऽपि हृतवान्हयम् । देशाधिपा ये बहवो महाबलविभूषिताः ॥ ३५
हस्त्यश्वरथपादातचतुरङ्गसमन्विताः । संपदो बहुशो नीत्वा मुक्ता माणिक्यसंयुताः ॥ ३६
शत्रुघ्नं हयरक्षायामागतं प्रणता मुहुः । इदं राज्यं धनं सर्वं सपुत्रपशुबान्धवम् ॥
रामचन्द्रस्य सर्वं हि न मदीयं रघूद्वह ॥ ३७
एवं तदुक्तमाकर्ण्य शत्रुघ्नः परवीरहा । आज्ञां स्वां तत्र संज्ञाप्य ययौ तैः सहितः पथि ॥ ३८
एवं क्रमेण संप्राप्तः शत्रुघ्नो हयसंयुतः । अहिच्छत्रां पुरीं ब्रह्मज्ञानाजनसमाकुलाम् ॥ ३९
ब्रह्मद्विजसमाकीर्णां नानारत्नविभूषिताम् । सौवर्णैः स्फाटिकैर्हैर्म्यैर्गोपुरैः समलंकृताम् ॥ ४०
यत्र रम्भातिरस्कारकारिण्यः कमलाननाः । दृश्यन्ते सर्वहर्म्येषु ललना लीलयाऽन्विताः ॥ ४१
यत्र स्वाचारललिताः सर्वभोगैकभोगिनः । धनदानुचरा यद्वत्तथा लीलासमन्विताः ॥ ४२
यत्र वीरा धनुर्हस्ताः शरसंधानकोविदाः । कुर्वन्ति तं सुराजानं सुहृष्टं सुमदाभिधम् ॥ ४३
एवंविधं ददर्शासौ नगरं दूरतः प्रभुः । पार्श्वे तस्य पुरश्रेष्ठमुद्यानं शोभयाऽन्वितम् ॥ ४४
पुंनागैर्नागचम्पैश्च तिलकैर्देवदारुभिः । अशोकैः पाटलैश्चूतैर्मन्दारैः कोविदारकैः ॥ ४५
आम्रजम्बूकदम्बैश्च प्रियालपनसैस्तथा । शालैस्तालैस्तमालैश्च मल्लिकाजातियूथिभिः ॥ ४६
नीपैः कदम्बैर्बकुलैश्चम्पकैर्मदनाभिधैः । शोभितं स ददर्शाथ शत्रुघ्नः परवीरहा ॥ ४७
हयो गतस्तद्वनमध्यदेशे तमालतालादिसुशोभिते वै ॥
ययौ ततः पृष्ठत एव वीरो धनुर्धरैः सेवितपादपद्मः ॥ ४८
ददर्श तत्र रचितं देवायतनमद्भुतम् । इन्द्रनीलैश्च वैडूर्यैस्तथा मारकतैरपि ॥ ४९
शोभितं सुरसेवार्हं कैलासप्रस्थसंनिभम् । जातरूपमयस्तम्भैः शोभितं सद्मनां वरम् ॥ ५०
[+दृष्ट्वा तद्रघुनाथस्य भ्राता देवालयं वरम् । पप्रच्छ सुमतिं स्वीयं मन्त्रिणं वदतां वरम् ॥] ५१

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।
\+ एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ. ड ण. त. थ. द. ध.पुस्तकस्थः ।

१ झ. म. महान् । १ ग. छ. ड. ण. थ. °न्वितान् । त° ।

शत्रुघ्न उवाच—

वदामात्यवरेदं किं कस्य देवस्य केतनम् । का देवता पूज्यतेऽत्र कस्य हेतोः स्थिताऽनघ ॥ ५२
एवमाकर्ण्य सर्वज्ञो मन्त्रविभिजगाद ह । शृणुष्वैकमना वीर यथावदिह सर्वशः ॥ ५३
कामाक्षायाः परं स्थानं विद्धि विश्वैकशर्मदम् । यस्या दर्शनमात्रेण सर्वसिद्धिः प्रजायते ॥ ५४
देवासुराश्च यां स्तुत्वा नत्वा प्राप्ताखिलां श्रियम् । धर्मकामार्थमोक्षाणां दात्री भक्तानुकम्पिनी ५५
याचिता सुमदेनात्राहिच्छत्रापतिना पुरा । स्थिता करोति सकलं भक्तानां दुःखहारिणी ॥ ५६
तां नमस्कुरु शत्रुघ्न सर्ववीरशिरोमणे । नत्वा सुसिद्धिं प्राप्नोषि ससुरासुरदुर्लभाम् ॥ ५७
इति श्रुत्वाऽथ तद्वाक्यं शत्रुघ्नः शत्रुतापनः । पप्रच्छ सकलां वार्तां भवान्याः पुरुषर्षभः ॥ ५८

शत्रुघ्न उवाच—

कोऽहिच्छत्रापती राजा सुमदः किं तपः कृतम् । येनेयं सर्वलोकानां माता तुष्टाऽत्र संस्थिता ५९
वद सर्वं महामात्य नानार्थपरिबृंहितम् । यथावत्त्वं हि जानासि तस्माद्वद महामते ॥ ६०

सुमतिरुवाच—

हेमकूटो गिरिः पूतः सर्वदेवोपशोभितः । तत्रास्ति तीर्थं विमलमृषिवृन्दसुसेवितम् ॥ ६१
सुमदो हि तपस्तेपे हतमातृपितृप्रजः । अरिभिः सर्वसामन्तैर्जगाम तपसे हितम् ॥ ६२
वर्षाणि त्रीणि स पदा त्वेकेन मनसा स्मरन् । जगतां मातरं दध्यौ नासाग्रस्तिमितेक्षणः ॥ ६३
वर्षाणि त्रीणि शुष्काणां पर्णानां भक्षणं चरन् । चकार परमुग्रं स तपः परमदुश्चरम् ॥ ६४
वर्षाणि त्रीणि सलिले शीतकाले ममज्ज सः । ग्रीष्मे चचार पञ्चाग्नीन्प्रावृट्सु जलदोन्मुखः ॥ ६५
त्रीणि वर्षाणि पवनं संरुध्य स्वान्तगोचरम् । भवानीं स स्मरन्धीरो न च किंचन पश्यति ॥ ६६
वर्षे तु द्वादशेऽतीते दृष्ट्वैतत्परमं तपः । विभाव्य मनसाऽतीव शक्रः पस्पर्ध तं भयात् ॥ ६७
आदिदेश स कामं तु परिवारसमावृतम् । अप्सरोभिः सुसंयुक्तं ब्रह्मेन्द्रविजयोद्यतम् ॥ ६८
गच्छ काम सखे मह्यं प्रियमाचर मोहन । सुमदस्य तपोविघ्नं समाचर यथा भवेत् ॥ ६९
इति श्रुत्वा महद्वाक्यं तुरासाहः स्वयं प्रभुः । उवाच विश्वविजये प्रौढगर्वो रघूद्वह ॥ ७०

काम उवाच—

स्वामिन्कोऽसौ हि सुमदः किं तपः स्वल्पकं पुनः । ब्रह्मादीनां तपो भग्नं करोम्यस्य तु का कथा ७१
मद्बाणबलनिर्भिन्नश्चन्द्रस्तारां गतः पुरा । त्वमप्यहल्यां गतवान्विश्वामित्रस्तथोर्वशीम् ॥ ७२
चिन्तां मा कुरु देवेन्द्र सेवके मयि संस्थिते । एष गच्छामि सुमदं देवान्पालय मारिष ॥ ७३
एवमुक्त्वा कामदेवो हेमकूटं गिरिं ययौ । वसन्तेन युतः सख्या तथैवाप्सरसां गणैः ॥ ७४
वसन्तस्तत्र सकलान्वृक्षान्पुष्पफलैर्युतान् । कोकिलाषट्पदश्रेण्या घुष्टानाशु चकार सः ॥ ७५
वायुः सुशीतलो वाति दक्षिणां दिशमाश्रितः । कृतमालासरित्तीरे लवङ्गकुसुमान्वितः ॥ ७६
एवंविधे वने वृत्ते रम्भा नामाप्सरोवरा । सखीभिः संवृता तत्र जगाम सुमदान्तिकम् ॥ ७७
तत्राऽऽरभत गानं सा किंनरस्वरशोभना । मृदङ्गपणवानेकवाद्यभेदविशारदा ॥ ७८

तद्गानमाकर्ण्य नराधिपोऽसौ वसन्तमालोक्य मनोहरं च ।
तथाऽन्यपुष्टारटितं मनोरमं चकार चक्षुःपरिवर्तनं बुधः ॥ ७९

---

१ ग. छ. ड. पूर्वे । २ ड. °क्रः सुखसमृद्धिमान् । आ° ।

तं प्रबुद्धं नृपं वीक्ष्य कामः पुष्पायुधस्त्वरन् । चकार सज्जं स तदा धनुस्तत्पृष्ठतोऽनघ ॥ ८०
एकाऽप्सरा तत्र नृपस्य पादयोः संवाहनं नर्तितनेत्रपल्लवा ।
चकार चान्या तु कटाक्षमोक्षणं चकार काचिन्मृशमङ्गचेष्टितम् ॥ ८१
अप्सरोभिस्तथाऽऽकीर्णः कामविह्वलमानसः । चिन्तयामास मतिमाञ्जितेन्द्रियशिरोमणिः ॥८२
एता मे तपसो विघ्नकारिण्योऽप्सरसां वराः । शक्रेण प्रेषिताः सर्वाः करिष्यन्ति यथातथम् ८३
इति संचिन्त्य सुतपास्ता उवाच वराङ्गनाः । का यूयं कुत्र संस्थाः किं भवतीनां चिकीर्षितम्८४
अत्यद्भुतं जातमहो यद्भवत्योऽक्षिगोचराः । यास्तपोभिः सुदुष्प्रापास्ता मे तपस आगताः॥८५

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे कामाक्षोपाख्यानं नाम द्वादशोऽध्यायः ॥१२॥

आदितः श्लोकानां समष्ट्यङ्काः—११४९६

---

अथ त्रयोदशोऽध्यायः ।

---

शेष उवाच—

इति वाक्यं समाकर्ण्य सुमदस्य तपोनिधेः । जगदुः कामसेनास्तं रम्भाद्यप्सरसो मुदा ॥ १
त्वत्तपोभिर्वयं कान्त प्राप्ताः सर्वा वराङ्गनाः । तासां यौवनसर्वस्वं भुङ्क्ष्व त्यज तपःफलम् ॥२
इयं घृताची सुभगा चम्पकाभशरीभृत् । कर्पूरगन्धललिता भुनक्तु त्वन्मुखामृतम् ॥ ३
एतां महाभाग सुशोभिविभ्रमां मनोहराङ्गीं घनपीनसत्कुचाम् ।
कान्तोपभुङ्क्ष्वाऽऽशु निजोग्रपुण्यतः प्राप्तां पुनस्त्वं त्यज दुःखसागरम् ॥ ४
मामप्यनर्घ्याभरणोपशोभितां मन्दारमालापरिशोभिवक्षसम् ।
नानारताख्यानविचारचञ्चुरां दृढं यथा स्यात्परिरम्भणं कुरु ॥ ५
पिबामृतं मामकवक्त्रनिर्गतं विमानमारुह्य वरं मया सह ।
सुमेरुशृङ्गं बहुपुण्यसेवितं संप्राप्य भोगं कुरु सत्तपःफलम् ॥ ६
तिलोत्तमा यौवनरूपशोभिता गृह्णातु ते मूर्धनि तापवारणे ।
सुचामरौ संततधारयाऽङ्कितौ गङ्गाप्रवाहाविव सुन्दरोत्तम ॥ ७
शृणुष्व भोः कामकथा मनोहराः पिबामृतं देवगणादिवाञ्छितम् ।
उद्यानमासाद्य च नन्दनाभिधं वराङ्गनाभिर्विहरं कुरु प्रभो ॥ ८
इत्युक्तमाकर्ण्य महामतिर्नृपो विचारयामास कुतो ह्युपस्थितः ।
मया सुसृष्टात्तपसः सुराङ्गनाप्रत्यूह एवात्र विधेयमेष किम् ॥ ९
इतिचिन्तातुरो राजा स्वान्ते संचिन्त्य धीरधीः । जगाद मतिमान्वीरः सुमदो देवताङ्गनाः॥१०
यूयं तु मम चित्तस्था जगन्मातृस्वरूपकाः । मया संचिन्त्यते या हि साऽपि त्वद्रूपिणी मता ११
इदं तुच्छं स्वर्गसुखं त्वयोक्तं सविकल्पकम् । मत्स्वामिनी मया भक्त्या सेविता दास्यते वरम् १२
यत्कृपातो विधिः सत्यलोकं प्राप्तो महानभूत् । सा मे दास्यति सर्वं हि भक्तदुःखान्तकारिणी॥
किं नन्दनं किं तु गिरिः कनकेन सुमण्डितः । किं सुधा स्वल्पपुण्येन प्राप्या दानवदुःखिता १४
इति वाक्यं समाकर्ण्य कामस्तु विविधैः शरैः । प्राहरन्नरदेवस्य कर्तुं किंचिन्न वै प्रभुः ॥ १५

१ छ. ड. °नं तूर्णं च ध° । २ ड. °र्वाप्सरा° । ३ ग. छ. ड. थ. °खं प्रासव्यं त्वत्र स्वल्प° ।

कटाक्षैर्नूपुरारावैः परिरम्भैर्विलोकितैः । न तस्य चित्तविश्रान्तिं कर्तुं शक्ता वराङ्गनाः ॥ १६
गता यथागतं शक्रं जगदुर्धीरधीर्नृपः । तच्छ्रुत्वा मघवा भीतो मोघमारम्भमात्मनः ॥ १७
अथ निश्चितमालोक्य स्वपदाब्जेऽस्य चाम्बिका । जितेन्द्रियं महाराजं प्रत्यक्षाऽभूत्सुयोगिनी ॥
पञ्चास्यपृष्ठललिता पाशाङ्कुशधरा वरा । धनुर्बाणधरा माता जगत्पावनपावनी ॥ १९
तां वीक्ष्य मातरं धीमान्सूर्यकोटिसमप्रभाम् । धनुर्बाणसृणीपाशान्दधानां हर्षमाप्तवान् ॥ २०
शिरसा बहुशो नत्वा मातरं भक्तिभाविताम् । हसन्तीं निजदेहे तु स्पृशन्तीं पाणिना मुहुः ॥२१
तुष्टाव भक्त्युत्कलितचित्तवृत्तिर्महामतिः । गद्गदस्वरसंयुक्तः कण्टकाङ्गोपशोभितः ॥ २२
जय देवि महादेवि भक्तवृन्दैकसेविते । ब्रह्मरुद्रादिदेवेन्द्रसेविताङ्घ्रियुगेऽनघे ॥ २३
मातस्तव कलाविद्धमेतद्भाति चराचरम् । त्वदृते नास्ति सर्वं तन्मातर्भद्रे नमोऽस्तु ते ॥ २४
मही त्वयाऽऽधारशक्त्या स्थापिता चलतीह न । सपर्वतवनोद्यानदिग्गजैरुपशोभिता ॥ २५
सूर्यस्तपति खे तीक्ष्णैरंशुभिः प्रतपन्महीम् । त्वच्छक्त्या वसुधासंस्थं रसं गृह्णन्विमुञ्चति ॥ २६
अन्तर्बहिःस्थितो वह्निर्लोकानां प्रकरोति शम् । त्वत्प्रतापान्महादेवि सुरासुरनमस्कृते ॥ २७
त्वं विद्या त्वं महामाया विष्णोर्लोकैकपावनी । त्वं शक्त्या सृजसीदं त्वं पालयस्यपि मोहिनी॥
त्वत्तः सर्वे सुराः प्राप्य सिद्धिं सुखमयन्ति वै । मां पालय कृपानाथे वन्दिते भक्तवल्लभे ॥ २९
रक्ष मां सेवकं मातस्त्वदीयचरणाम्बुजे । कुरु मे वाञ्छितां सिद्धिं महापुरुषपूर्वजे ॥ ३०

सुमतिरुवाच—

एवं तुष्टा जगन्माता वृणीष्व वरमुत्तमम् । उवाच भक्तं सुमदं तपसा कृशदेहिनम् ॥ ३१
इत्येतद्वाक्यमाकर्ण्य प्रहृष्टः सुमदो नृपः । वव्रे निजं हृतं राज्यं हतदुर्जनकण्टकम् ॥ ३२
महेशीचरणद्वंद्वे भक्तिमव्यभिचारिणीम् । प्रान्ते मुक्तिं तु संसारवारिधेस्तरणीं पुनः ॥ ३३

कामाक्षोवाच—

राज्यं प्राप्नुहि सुमद सर्वत्र हतकण्टकम् । महिलारत्नसंजुष्टपादपद्मद्वयो भव ॥ ३४
तव वैरिपराभूतिर्मा भूयात्सुमदाभिध । यदा तु रावणं हत्वा रघुनाथो महायशाः ॥ ३५
करिष्यत्यश्वयज्ञं हि सर्वभारोपशोभितम् । तस्य भ्राता महावीरः शत्रुघ्नः परवीरहा ॥ ३६
पालयन्हयमायास्यत्यत्र वीरादिभिर्वृतः । तस्मै सर्वं समर्प्य त्वं राज्यमृद्धिधनादिकम् ॥ ३७
पालयिष्यसि योधैः स्वैर्धनुर्धारिभिरुद्भटैः । ततः पृथिव्यां सर्वत्र भ्रमिष्यसि महामते ॥ ३८
ततो रामं नमस्कृत्य ब्रह्मेन्द्रेशादिसेवितम् । मुक्तिं प्राप्स्यसि दुष्प्रापां योगिभिर्यमसाधनैः॥ ३९
तावत्कालमिह स्थाता यावद्रामहयागमः । पश्चात्त्वां तु समुद्धृत्य गन्ताऽस्मि परमं पदम् ॥ ४०
इत्युक्त्वाऽन्तर्दधे देवी सुरासुरनमस्कृता । सुमदोऽप्यहिच्छत्रायां शत्रून्हत्वा नृपोऽभवत् ॥ ४१
एष राजा समर्थोऽपि बलवाहनसंयुतः । न ग्रहीष्यति ते वाहं महामायासुशिक्षितः ॥ ४२
श्रुत्वा प्राप्तं पुरीपार्श्वे हयमेधहयोत्तमम् । त्वां च सर्वमहाराजैः सेविताङ्घ्रिं महामतिः ॥ ४३
सर्वं दास्यति सर्वज्ञ राजा सुमदनामधृक् । अधुना तन्महाराज रामचन्द्रप्रतापतः ॥ ४४

शेष उवाच—

इति वृत्तं समाकर्ण्य सुमदस्य महायशाः । साधु साध्विति चोवाच जहर्ष मतिमान्बली ॥ ४५

---

१ क. ख. ग. छ. ज. झ. ठ ड. ण. त. थ. द. °स्तुतोषिता । प° । २ क. ख. ञ. ट. ण. °पालिनः। त्वं । ग. च. छ. ज. ड. त. थ. द. °पालिनी । त्वं । ३ क. ख. ग. घ. ङ. च. ज. झ. म. ट. ड. ण. त. थ. °णारणम् । कु° ।

अहिच्छत्रापतिः सर्वैः स्वगणैः परिवारितः । सभायां सुखमास्ते यो बहुराजन्यसेवितः ॥ ४६
ब्राह्मणा वेदविदुषो वैश्या धनसमृद्धयः । राजानं पर्युपासन्ते सुमदं शोभयाऽन्वितम् ॥ ४७
वेदविद्याविनोदेन न्यायिनो ब्राह्मणा वराः । वदन्ति चाऽऽशिषं भूपं सर्वलोकैकरक्षकम् ॥ ४८
एतस्मिन्समये कश्चिदागत्य नृपतिं जगौ । स्वामिन्न जाने कस्यास्ति हयः पत्रधरोऽन्तिके ॥४९
तच्छ्रुत्वा सेवकं श्रेष्ठं प्रेषयामास सत्वरः । जानीहि कस्य राज्ञोऽयमश्वो मम पुरान्तिके ॥ ५०
गत्वाऽथ सेवकस्तत्र ज्ञात्वा वृत्तान्तमादितः । निवेदयामास नृपं महाराजन्यसेवितम् ॥ ५१
स श्रुत्वा रघुनाथस्य हयं चिरमनुस्मरन् । आज्ञापयामास जनं सर्वं राजा विशारदः ॥ ५२
लोका मदीयाः सर्वे ये धनधान्यसमाकुलाः । तोरणादीनि गेहेषु मङ्गलानि सृजन्त्विह ॥ ५३
कन्याः सहस्रशो रम्या रम्याभरणभूषिताः । गजोपरि समारूढा यान्तु शत्रुघ्नसंमुखम् ॥ ५४
इत्यादि सर्वमाज्ञाप्य ययौ राजा स्वयं ततः । पुत्रपौत्रमहिष्यादिपरिवारसमावृतः ॥ ५५
शत्रुघ्नः सुमहामात्यैः सुभटैः पुष्कलादिकैः । संयुतो भूपतिं वीरं ददर्श सुमदाभिधम् ॥ ५६
हस्तिभिः सादिसंयुक्तैः पत्तिभिः परतापनैः । वाजिभिर्भूषितैर्वीरैः संयुतं वीरशोभितम् ॥ ५७
अथाऽऽगत्य महाराजं शत्रुघ्नं नतवान्मुदा । धन्योऽस्मि कृतकृत्योऽस्मि सत्कृतं च कृतं वपुः ५८
इदं राज्यं गृहाणाऽऽशु महाराजोपशोभितम् । महामाणिक्यमुक्तादिमहाधनसुपूरितम् ॥ ५९
स्वामिंश्चिरं प्रतीक्षेऽहं हयस्याऽऽगमनं प्रति । कामाक्षाकथितं पूर्वं जातं संप्रति तन्महत् ॥ ६०
विलोकय पुरीं मह्यं कृतार्थीकुरु मानवान् । पावयास्मत्कुलं सर्वं रामानुज महीपते ॥ ६१
इत्युक्त्वाऽऽरोपयामास कुञ्जरं चन्द्रसुप्रभम् । पुष्कलं च महावीरं तथा स्वयमथाऽऽरुहत् ॥ ६२
भेरीपणवतूर्याणां वीणादीनां स्वनस्तदा । व्याप्नोति स्म महाराज सुमदेन प्रणोदितः ॥ ६३

कन्याः समागत्य महानरेन्द्रं शत्रुघ्नमिन्द्रादिकसेविताङ्घ्रिम् ।
करिस्थिता मौक्तिकवृन्दसंघैर्वर्धापयामासुरिनप्रयुक्ताः ॥ ६४

शनैः शनैः समागत्य पुरीमध्ये जनैर्मुदा । वर्धापितो गृहं प्राप तोरणादिकभूषितम् ॥ ६५
हयरत्नेन संयुक्तस्तथा वीरैः सुशोभितः । राज्ञा पुरस्कृतो राजा शत्रुघ्नः प्राप मन्दिरम् ॥ ६६
अर्घ्यादिभिः पूजयित्वा रघुनाथानुजं मुदा । सर्वं समर्पयामास रामचन्द्राय धीमते ॥ ६७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्नाहिच्छत्रापुरीप्रवेशो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११५६३

---

अथ चतुर्दशोऽध्यायः ।

---

शेष उवाच—

अथ स्वागतसंतुष्टं शत्रुघ्नं प्राह भूमिपः । रघुनाथकथां श्रेष्ठां शुश्रूषुः पुरुषर्षभः ॥ १

सुमद उवाच—

कच्चिदास्ते सुखं रामः सर्वलोकशिरोमणिः । भक्तरक्षावतारोऽयं ममानुग्रहकारकः ॥ २
धन्या लोका इमे पुर्यां रघुनाथमुखाम्बुजम् । येऽनिशं पपुरेवाक्ष्णां पुटकैः परिमोदिताः ॥ ३

---

१ ख. ग. छ. ठ. ड. ण ब. द. ध.सुभटैः । २ क. ख. ग. च. छ. ज. झ. ञ. ट. ठ. ड. ढ. ण. त. थ. द. ध. °राः । आशीर्वदन्ति तं भू° । ३ क. ज. °रं स तथाऽश्रम° । ४ त. °रीमृदङ्गतू° ।

अथ जातं मदीयं च नितरां पुरुषर्षभ । कृतार्थं कुलभूम्यादिवस्तुजातं महामते ॥ ४
कामाक्षया प्रसादो मे कृतः पूर्वं दयार्द्रया । रघुनाथमुखाम्भोजं द्रक्ष्येऽद्य सकुटुम्बकः ॥ ५
इत्युक्तवति वीरे तु सुमदे पार्थिवोत्तमे । सर्वं तत्कथयामास रघुनाथगुणोदयम् ॥ ६
त्रिरात्रं तत्र वै स्थित्वा रघुनाथानुजः परम् । गन्तुं चकार धिषणां राज्ञा सह महामतिः ७
तज्ज्ञात्वा सुमदः शीघ्रं पुत्रं राज्येऽभ्यषेचयत् । शत्रुघ्नेन महाराज्ञा पुष्कलेनानुमोदितः ॥ ८
वासांसि बहुरत्नानि धनानि विविधानि च । शत्रुघ्नसेवकेभ्योऽसौ प्रादात्तत्र महामतिः ॥ ९
ततो गमनमारेभे मन्त्रिभिर्बहुविसमैः । पत्तिभिर्वाजिभिर्नागैः सदश्वै रथकोटिभिः ॥ १०
शत्रुघ्नः सहितस्तेन सुमदेन धनुर्भृता । जगाम मार्गे विहसन्रघुनाथप्रतापभृत् ॥ ११
पयोष्णीतीरमासाद्य जगाम सहसोत्तमः । पृष्ठतोऽनुययुः[2] सर्वे योधा वैरिप्रहारिणः ॥ १२
आश्रमान्विविधान्पश्यन्नृषीणां सुतपोभृताम् । तत्र तत्र विशृण्वानो रघुनाथगुणोदयम् ॥ १३
एष धीमान्हरिर्याति हरिणा परिरक्षितः । हरिभिर्हरिभिक्तैश्च हरिवर्यानुगैर्मुहुः[3] ॥ १४
इति शृण्वञ्शुभा वाचो मुनीनां परितः प्रभुः । तुतोष भक्त्युत्कलितचित्तवृत्तिभृतां महान्॥ १५
ददर्श चाऽऽश्रमं शुद्धं द्विजजन्तुसमाकुलम् । वेदध्वनिहताशेषामङ्गलं शृण्वतां नृणाम् ॥ १६
अग्निहोत्रहविर्धूमपवित्रितनभोखिलम् । मुनिवर्यकृतानेकयागयूपसुशोभितम् ॥ १७
यत्र गावस्तु हरिणा पाल्यन्ते पालनोचिताः । मूषका न खनन्त्यस्मिन्बिडालस्याभयाद्बिलम् १८
मयूरैर्नकुलैः सार्धं क्रीडन्ति फणिनोऽनिशम् । गजैः सिंहैर्नित्यमत्र स्थीयते मित्रतां गतैः ॥ १९
एणास्तत्रत्यनीवारभक्षणेषु कृतादराः । न भयं कुर्वते कालाद्रक्षिता मुनिवृन्दकैः ॥ २०
गावः कुम्भसमोधस्का नन्दिनीसमविग्रहाः । कुर्वन्ति चरणोत्थेन रजसेलां पवित्रिताम् ॥ २१
मुनिवर्यैः समित्पाणिपद्मैर्धर्मक्रियोचिताम् । दृष्ट्वा पप्रच्छ सुमतिं सर्वज्ञं राममन्त्रिणम् ॥ २२

शत्रुघ्न उवाच—

सुमते कस्य संस्थानं मुनेर्भाति पुरोगतम् । निर्वैरजन्तुसंसेव्यं मुनिवृन्दसमाकुलम् ॥ २३
श्रोष्यामि मुनिवार्तां च विदधामि पवित्रितम् । निजं वपुस्तदीयाभिर्वार्ताभिर्वर्णनादिभिः॥ २४
इति श्रुत्वा महद्वाक्यं शत्रुघ्नस्य महात्मनः । कथयामास सचिवो रघुनाथस्य धीमतः ॥ २५

सुमतिरुवाच—

च्यवनस्याऽऽश्रमं विद्धि महातापसशोभितम् । निर्वैरजन्तुसंकीर्णं मुनिपत्नीभिरावृतम् ॥ २६
योऽसौ महामुनिः स्वर्गवैद्ययोर्भागमादधात् । स्वायंभुवमहायज्ञे शक्रमानाविभेदनः ॥ २७
महामुनेः प्रभावोऽयं न केनापि समाप्यते । तपोबलसमृद्धस्य वेदमूर्तिधरस्य तु ॥ २८
श्रुत्वा रामानुजो वार्तां च्यवनस्य[5] महात्मनः । सर्वं पप्रच्छ सुमतिं शक्रमानादिभञ्जनम् ॥ २९

शत्रुघ्न उवाच—

कदाऽसौ दस्रयोर्भागं चकार सुरपङ्क्तिषु । किं कृतं देवराजेन स्वायंभुवमहामखे ॥ ३०

सुमतिरुवाच—

ब्रह्मवंशेऽतिविख्यातो मुनिर्भृगुरिति श्रुतः । कदाचिद्गतवान्सायं समिदाहरणं प्रति ॥ ३१

---

१ ज. द. °अर्थजा° । २ क. ख. ग. छ. ज. ञ. ठ. ड. ण त थ. ध. विचक्षणो । ३ क. ख. ग. छ. ज. म. ठ. ण. ध. °र्मोक्षैर्मु° । ४ ग. छ. ठ. ड. ध. °दर्शाऽऽश्रममुद्धर्ष जनज° । ख. ज. ण. °दर्शाऽऽश्रमं शुद्धार्षंजनज° । ५ ख. ग. छ. ज. ट. ण. त. थ. ध. °भिमानना° ।

तदा मखविनाशाय दमनो राक्षसो बली । आगत्योच्चैर्जगादेदं महाभयकरं वचः ॥ ३२
कुत्रास्ति मुनिबन्धुः स कुत्र तन्महिलाऽनघा । पुनः पुनरुवाचेदं वचो रोषसमाकुलः ॥ ३३
तदा हुतवहो ज्ञात्वा राक्षसाद्भयमागतम् । दर्शयामास तज्जायामन्तर्वत्नीमनिन्दिताम् ॥ ३४
जग्राह राक्षसस्तां तु रुदतीं कुररीमिव । भृगो रक्ष पते रक्ष रक्ष नाथ तपोनिधे ॥ ३५
एवं वदन्तीमार्तां स गृहीत्वा निरगाद्बहिः । दुष्टवाक्यप्रवादेन धर्षयन्स भृगोः सतीम् ॥ ३६
ततो महाभयत्रस्तो गर्भश्चोदरमध्यतः । पपात प्रज्वलन्नेत्रो वैश्वानर इवाङ्गजः ॥ ३७
तेनोक्तं मा व्रजस्वाऽऽशु त्वं भस्मीभव दुर्मते । न हि साध्वीपरामर्शं कृत्वा श्रेयोऽभियास्यसि ३८
इत्युक्तः स पपाताऽऽशु भस्मीभूतकलेवरः । माता तदाऽर्भकं नीत्वा जगामाऽऽश्रममुन्मनाः ॥ ३९
भृगुर्वह्निकृतं सर्वं ज्ञात्वा कोपसमाकुलः । शशाप सर्वभक्षस्त्वं भव दुष्टारिसूचक ॥ ४०
तदा शप्तोऽतिदुःखार्तो जग्राहाङ्घ्र्याशु*शुक्षणिः । कुरु मेऽनुग्रहं स्वामिन्कृपार्णव महामते ॥ ४१
मयाऽनृतवचोभीत्या कथितं न गुरुद्रुहा । तस्मान्ममोपरि कृपां कुरु धर्मिशिरोमणे ॥ ४२
तदाऽनुग्रहमाधत्त सर्वभक्ष्यो भवाञ्शुचिः । इत्युक्तवान्हुतभुजं दयार्द्रो मुनितापसः ॥ ४३
गर्भाच्च्युतस्य पुत्रस्य जातकर्मादिकं शुचिः । चकार विधिवद्विप्रो दर्भपाणिः सुमङ्गलः ॥ ४४
च्यवनाच्च्यवनं प्राहुः सर्वे तत्र तपस्विनः । शनैः शनैः स ववृधे शुक्लप्रतिपदिन्दुवत् ॥ ४५
स जगाम तपः कर्तुं रेवां लोकैकपावनीम् । शिष्यैः परिवृतः सर्वैस्तपोबलसमन्वितैः ॥ ४६
गत्वा तत्र तपस्तेपे वर्षाणामयुतं महान् । अंसयोः किंशुकौ जातौ वल्मीकोपरि शोभितौ ॥ ४७
मृगा आगत्य तस्याङ्गे कण्डूं विदधुरुत्सुकाः । न किंचित्स ह जानाति दुर्निवारतया दृढः ॥ ४८
कदाचिन्मनुरुद्युक्तस्तीर्थयात्रां प्रति प्रभुः । सकुटुम्बो ययौ रेवां महाबलसमावृतः ॥ ४९
तत्र स्नात्वा महानद्यां संतर्प्य पितृदेवताः । दानानि वाडवेभ्यश्च प्रादाद्विष्णुप्रतुष्टये ॥ ५०
तत्कन्या विचरन्ती सा वनमध्य इतस्ततः । सखिभिः सहिता रम्या तप्तहाटकभूषणा ॥ ५१
तत्र दृष्ट्वाऽथ वल्मीकं महा तरुसुशोभितम् । निमेषोन्मेषरहितं तेजः किंतु ददर्श सा ॥ ५२
गत्वा तत्र शलाकाभिरतुदद्रुधिरं स्रवत् । दृष्ट्वा राज्ञोऽङ्गजा खेदं प्राप्तवत्यथ दुःखिता ॥ ५३
न जनन्यै तथा पित्रे शशंसाघेन विप्लुता । स्वयमेवाऽऽत्मनाऽऽत्मानं शुशोच सा भयातुरा ५४
तदा भूश्चलिता राजन्दिवश्चोल्का पपात ह । धूम्रा दिशोऽभवन्सर्वाः सूर्यश्च परिवेषितः ॥ ५५
तदा राज्ञो हया नष्टा हस्तिनो बहवो मृताः । धनं रत्नयुतं नष्टं कलहोऽभून्मिथस्तदा ॥ ५६
तदालोक्य नृपो भीतः किंचिदुद्विग्नमानसः । जनानपृच्छत्केनापि मुनये त्वपराधितम् ॥ ५७
पारंपर्येण तज्ज्ञात्वा स्वपुत्र्याः परिचेष्टितम् । ययौ स दुःखितस्तत्र समृद्धबलवाहनः ॥ ५८
तं वै तपोनिधिं वीक्ष्य महता तपसा युतम् । स्तुत्वा प्रसादयामास मुनिवर्य दयां कुरु ॥ ५९
तस्मै तुष्टो जगादार्यं मुनिवर्यो महातपाः । तवाऽऽत्मजाकृतं सर्वमुत्पाताद्यमवेहि तत् ॥ ६०
तव पुत्र्या महाराज चक्षुर्विस्फोटनं कृतम् । बहु सुस्राव रुधिरं जानती त्वामुवाच न ॥ ६१
तस्मादियं महाभूप मह्यं देया यथाविधि । ततश्चोत्पातशमनं भविष्यति सुरार्चित ॥ ६२
तच्छ्रुत्वा दुःखितो राजा प्रज्ञाचक्षुष आत्मजाम् । ददौ कुलवयोरूपशीललक्षणसंयुताम् ॥ ६३

* संधिरार्षः ।

१ ख. ग. छ. ठ. ड. त. थ. द. ध. °प्रहारेण ध° । २ क. ख. ग. छ. ज. ठ. ड. ण. त. थ. ध. °योऽधिगच्छति । इ° । म. द. °योऽधिगच्छसि । ३ ग. ड. महत् ।

दत्ता यदा नृपेणैवं कन्या कमललोचना । तदोत्पाताः शमं याताः सर्वे मुनिरुषोद्गताः ॥ ६४
राजा दत्त्वाऽऽत्मजां तस्मै मुनये तपसां निधे । प्राप स्वां नगरीं भूयो दुःखितो दयया पुनः ६५

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे च्यवनोपाख्यानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११६२८

---

अथ पञ्चदशोऽध्यायः ।

---

सुमतिरुवाच—

अथर्षिः स्वाश्रमगतो मानव्या सह भार्यया । मुदं प्राप हताशेषपातको योगयुक्तया ॥ १

सा मानवी तं वरमात्मनः पतिं नेत्रेण हीनं जरसा गतौजसम्[१] ।
सिषेव एनं हरिमेधसोत्तमं निजेष्टदात्रीं कुलदेवतां यथा[२] ॥ २

*शुश्रूषती तं पतिमिङ्गितज्ञा महानुभावं तपसां निधिं प्रियम् ।
परां मुदं प्राप सती मनोहरा शची यथा शक्रनिषेवणोद्यता ॥ ३

चरणौ सेवते तन्वी सर्वलक्षणलक्षिता । राजपुत्री सुन्दराङ्गी फलमूलोदकाशना ॥ ४
नित्यं तद्वाक्यकरणे तत्परा पूजने रता । कालक्षेपं च कुरुते सर्वभूतहिते रता ॥ ५
विसृज्य कामदम्भं च द्वेषं लोभं भयं मदम् । अप्रमत्तोद्यता नित्यं च्यवनं समतोषयत् ॥ ६
एवं तस्य प्रकुर्वाणा सेवां वाक्कायकर्मभिः । सहस्राब्दं महाराज सा च कामं मनस्यधात् ॥ ७
कदाचिद्देवभिषजावागतावाश्रमे मुनेः । स्वागतेन सुसंभाव्य तयोः पूजां चकार सा ॥ ८

शर्यातिकन्याकृतपूजनार्घपाद्यादिना तोषितचित्तवृत्ती ।
तावूचतुः स्नेहवशेन सुन्दरौ वरं वृणीष्वेति मनोहराङ्गीम् ॥ ९

तुष्टौ तौ वीक्ष्य भिषजौ देवानां वरयाचने । मतिं चकार नृपतेः पुत्री मतिमतां वरा ॥ १०
पत्यभिप्रायमालक्ष्य तावुवाच नृपात्मजा । दत्तं मे चक्षुषी पत्युर्यदि तुष्टौ युवां सुरौ ॥ ११
इत्येतद्वचनं श्रुत्वा सुकन्याया मनोहरम् । सतीत्वं च विलोक्येदमूचतुर्भिषजां वरौ ॥ १२
त्वत्पतिर्यदि देवानां भागं यज्ञे दधात्यसौ । आवयोरधुना कुर्वेश्चक्षुषोः स्फुटदर्शनम् ॥ १३
च्यवनोऽप्योमिति प्राह भागदाने वरौजसोः । तदा त्वहृष्टावश्विनौ तमूचतुस्तपतां वरम् ॥ १४
निमज्जतां भवानस्मिन्ह्रदे सिद्धविनिर्मिते । इत्युक्तो जरया ग्रस्तदेहो धमनिसंततः ॥ १५
ह्रदं प्रवेशितोऽश्विभ्यां स्वयं चामज्जतां ह्रदे । पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ॥ १६
रुक्मस्रजः कुण्डलिनस्तुल्यरूपाः सुवाससः । तान्निरीक्ष्य वरारोहा सुरूपान्सूर्यवर्चसः ॥ १७
अजानती पतिं साध्वी ह्यश्विनौ शरणं ययौ । दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ॥ १८
ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् । यक्ष्यमाणे क्रतौ स्वीयभागकार्याशया युतौ ॥ १९
कालेन भूयसा क्षामां कर्शितां व्रतचर्यया । प्रेमगद्गदया वाचा पीडितः कृपयाऽब्रवीत् ॥ २०

तुष्टोऽहमद्य तव मानिनि मानदायाः शुश्रूषया परमया हृदि चैकभक्त्या ।
यो देहिनामयमतीव सुहृत्सुदेहो नाऽऽवेक्षितः समुचितः क्षपितुं मदर्थे ॥ २१

---

* शुश्रूषमाणेति तु युक्तम् ।

---

१ म. 'मेधितौजसं नि' । २ क. ख. ग. छ. ज. ञ. ट. ड. ण. त. थ. ध. निजं पतिं मङ्गलदेवता य' ।

ये मे स्वधर्मनिरतस्य तपःसमाधिविद्यात्मयोगविजिता भगवत्प्रसादाः ।
तानेव ते मदनुसेवनयाऽविरुद्धान्दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ २२
अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भविस्रंसितार्थरचिताः किमुरुक्रमस्य ।
सिद्धाऽसि भुङ्क्ष्व विभवाभिजधर्मदोहान्दिव्यान्नरानधिगमान्नृपविक्रियाभिः २३
एवं ब्रुवाणमबलाऽखिलयोगमाया विद्याविचक्षणमवेक्ष्य गताधिरासीत् ।
संप्रश्रयप्रणयविह्वलया गिरेषद्व्रीडावलोकविलसद्धसिता तमाह ॥ २४

सुकन्योवाच—

राद्धं बत द्विजवृषैतदमोघयोगमायाधिपे त्वयि विभो तदवैमि भर्तः ।
यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो भूयाद्गरीयसि गुणप्रसवः सतीनाम् ॥ २५
तत्रेति कृत्यमुपशिक्ष्य यथोपदेशं येनैष कर्शिततमोऽतिरिरंसयाऽऽत्मा ।
सिध्येत ते कृतमनोभवधर्षिताया दीनस्तदीश भवनं सदृशं विचक्ष्व ॥ २६

सुमतिरुवाच—

प्रियायाः प्रियमन्विच्छंश्च्यवनो योगमास्थितः । विमानं कामदं राजंस्तर्ह्येवाऽऽविरचीकरत् ॥ २७
सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् । सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ २८
दिव्योपस्तरणोपेतं सर्वकालसुखावहम् । पट्टिकाभिः पताकाभिर्विचित्राभिरलंकृतम् ॥ २९
स्रग्भिर्विचित्रमालाभिर्मञ्जुसिञ्जत्षडङ्घ्रिभिः । दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ ३०
[*उपर्युपरि विन्यस्तनिलयेषु पृथक्पृथक् । क्लृप्तैः कशिपुभिः क्रान्तं पर्यङ्कव्यजनादिभिः] ॥ ३१
तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् । महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ ३२
द्वाःसु विद्रुमदेहल्या भातं वज्रकपाटिकम् । शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिश्रितम् ॥ ३३
चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः । जुष्टं विचित्रवैतानैर्मुक्ताहारावलम्बितैः ॥ ३४
हंसपारावतव्रातैस्तत्र तत्र विकूजितम् । कृत्रिमान्मन्यमानैस्तानधिरुह्यावरुह्य च ॥ ३५
विहारस्थानविश्रामसंवेशप्राङ्गणाजिरैः । यथोपजोषं रचितैर्विस्मापनमिवाऽऽत्मनः ॥ ३६
ईदृग्गृहं प्रपश्यन्तीं नातिप्रीतेन चेतसा । सर्वभूताशयाभिज्ञः प्रोवाच वचनं स्वयम् ॥ ३७
निमज्ज्यास्मिन्ह्रदे भीरु विमानमिदमारुह । [†सा तु भर्तुः समादाय वचः कुवलयेक्षणा ॥ ३८
सरजो बिभ्रती वासो वेणीभूतांश्च मूर्धजान् । ] अङ्गं च मलपङ्केन संछन्नं शबलस्तनम् ॥ ३९
आविवेश सरस्तत्र मुदा शिवजलाशयम् । साऽन्तःसरसि वेश्मस्थाः शतानि दश कन्यकाः ४०
सर्वाः किशोरवयसो ददर्शोत्पलगन्धयः । ता दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः ॥ ४१
वयं कर्मकरास्तुभ्यं शाधि नः करवाम किम् । स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ॥ ४२
दुकूले निर्मले नूत्ने ददुरस्यै च मानद । भूषणानि पेराध्र्यानि वरीयांसि द्युमन्ति च ॥ ४३
अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् । अथाऽऽदर्शे स्वमात्मानं स्रग्विणं विरजोम्बरम् ॥ ४४
ताभिः कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् । हारेण च महार्हेण रुचकेन विभूषितम् ॥ ४५
निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम् । श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया ॥ ४६

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।
† एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ ड. त. °न्तीं नीतिं° । २ ग. द. पराध्र्याणि ।

सुभ्रुवा सुदता शुक्लस्निग्धापाङ्गेन चक्षुषा । पद्मकोशस्पृधा(द्वा?)लीनैरलकैश्च लसन्मुखम् ॥ ४७
यदा सस्मार दयितमृषीणां वल्लभं पतिम् । तत्र चाऽऽस्ते सह स्त्रीभिर्यत्राऽऽस्ते स मुनीश्वरः ४८
भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा । निशम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ४९
स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत् । आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ५०
विद्याधरीसहस्रेण सेव्यमानां सुवाससम् । जातभावो विमानं तदारोपयदमित्रहन् ॥ ५१

तस्मिन्नलुप्तमहिमा प्रियया ऽऽनुषक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने ॥
बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृत इवोडुपतिर्नभस्थः ॥ ५२
तेनाष्टलोकपविहारकुलाचलेन्द्रद्रोणीष्वनङ्गसखमारुतसौभगासु ।
सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरुथी ॥ ५३

वैश्रम्भके सुरवने नन्दने पुष्पभद्रके । मानसे चैत्ररथ्ये च स रेमे रामया रतः ॥ ५४

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे च्यवनस्य तपोभोगवर्णनं नाम पञ्चदशोऽध्यायः॥१५॥

आदितः श्लोकानां समष्ट्यङ्काः—११६८२

---

अथ षोडशोऽध्यायः ।

---

सुमतिरुवाच[1]—

एवं तया क्रीडमानः सर्वत्र धरणीतले । नाबुध्यत गतानब्दाञ्शतसंख्यापरिमितान् ॥ १
ततो ज्ञात्वाऽथ तद्विप्रः स्वकालपरिवर्तिनीम् । मनोरथेन पूर्णां च स्वस्य प्रियतमां वराम् ॥ २
न्यवर्तताऽऽश्रमं श्रेष्ठं पयोष्ण्यास्तीरसंस्थितम् । निर्वैरजन्तुजनतासंकुलं मृगसेवितम् ॥ ३
तत्रावसत्स सुतपाः शिष्यैर्वेदसमन्वितैः । सेविताङ्घ्रियुगो नित्यं ततापं परमं तपः ॥ ४
कदाचिदथ शर्यातिर्यष्टुमैच्छत देवताः । तदा च्यवनमानेतुं प्रेषयामास सेवकान् ॥ ५
तैराहूतो द्विजवरस्तदाऽगच्छन्महातपाः । सुकन्यया धर्मपत्न्या स्वाचारपरिनिष्ठया ॥ ६
आगतं तं मुनिवरं पत्न्या[2] सह महायशाः । ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ ७
राजा दुहितरं प्राह कृतपादाभिवन्दनाम् । आशिषो न प्रयुञ्जानो नातिप्रीतमना इव ॥ ८

चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो लोकनमस्कृतो मुनिः ।
या त्वं जराग्रस्तमसंमतं पतिं विहाय जारं भजसेऽमुमध्वगम् ॥ ९
कथं मतिस्तेऽवगताऽन्यथा सतां कुलप्रसूतेः कुलदूषणं त्विदम् ।
बिभर्षि जारं यदपत्रपा कुलं पितुः स्वभर्तुश्च नयस्यधस्तमाम् ॥ १०

एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता । उवाच तात जामाता तवैष भृगुनन्दनः ॥ ११
शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम् । विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥ १२
सोमेनायाजयद्वीरं ग्रहं सोमस्य चाग्रहीत् । असोमपोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥ १३
ग्रहं तु ग्राहयामास तपोबलसमन्वितः । वज्रं गृहीत्वा शक्रस्तु हन्तुं ब्राह्मणसत्तमम् ॥ १४
अपङ्क्तिपावनौ देवौ कुर्वाणं पङ्क्तिगोचरौ । शक्रं वज्रधरं दृष्ट्वा मुनिः स्वहननोद्यतम् ॥ १५
हुंकारमकरोद्धीमान्स्तम्भयामास तद्भुजम् । इन्द्रस्तब्धभुजस्तत्र दृष्टः सर्वैश्च मानवैः ॥ १६

---

१ क. ख. ग. छ. झ. ठ. ड. त. थ. ध. °त्कटकु° । २ क. ख. ज. ञ. ण. त. थ. द. शेष उवाच । ३ ञ. पुत्र्या ।

कोपेन श्वसमानोऽहिर्यथा मन्त्रनियन्त्रितः। तुष्टाव स मुनिं शक्रः स्तब्धबाहुस्तपोनिधिम् ॥ १७
अश्विभ्यां भागमादानं कुर्वन्तं निर्भयान्तरम्। कथयामास भोः स्वामिन्दीयतामश्विनोर्बलिः ॥
मया न वार्यते तात क्षमस्वाघं मया कृतम्। इत्युक्तः स मुनिः कोपं जहौ तूर्णं कृपानिधिः ॥१९
इन्द्रो मुक्तभुजस्त्वासीत्तदानीं पुरुषर्षभ। एतद्वीक्ष्य जनाः सर्वे कौतुकाविष्टमानसाः ॥ २०
शशंसुर्ब्राह्मणानां तु बलं देवादिदुर्लभम्। ततो राजा बहुधनं ब्राह्मणेभ्यो ददन्महान् ॥ २१
चक्रे चावभृथस्नानं यागान्ते शत्रुतापनः। त्वया पृष्टं यदाचक्ष्व च्यवनस्य महोदयम् ॥ २२
स मया कथितः सर्वस्तपोयोगसमन्वितः। नमस्कृत्वा तपोमूर्तिमेनं प्राप्य जयाशिषः ॥ २३
प्रेषय त्वं सपत्नीकं रामयज्ञे मनोरमे ॥ २४

शेष उवाच—

एवं तु कुर्वतो वार्ता हयः प्रापाऽऽश्रमं प्रति। विदधद्वायुवेगेन पृथ्वीं खुरविलक्षिताम् ॥ २५
दूर्वाङ्कुरान्मुखाग्रेण चरंस्तत्र महाश्रमे। मुनयो यावदादाय दर्भान्स्नातुं गता नदीम् ॥ २६
शत्रुघ्नः शत्रुसेनायास्तापनः शूरसंमतः। तावत्प्राप मुनेर्वासं च्यवनस्याधिशोभितम् ॥ २७
गत्वा तदाश्रमे वीरो ददर्श च्यवनं मुनिम्। सुकन्यायाः समीपस्थं तपोमूर्तिमिव स्थिम् ॥ २८
ववन्दे चरणौ तस्य स्वाभिधां समुदाहरन्। शत्रुघ्नोऽहं रघुपतेर्भ्राता वाहस्य पालकः ॥ २९
नमस्करोमि युष्मभ्यं महापापोपशान्तये। इति वाक्यं समाकर्ण्य जगाद मुनिसत्तमः ॥ ३०
शत्रुघ्न तव कल्याणं भूयान्नरवरर्षभ। यज्ञं पालयमानस्य कीर्तिस्ते विपुला भवेत् ॥ ३१
चित्रं पश्यत भो विप्रा रामोऽपि मखकारकः। यन्नामस्मरणादीनि कुर्वन्ति पापनाशनम् ॥ ३२
महापातकसंयुक्ताः परदाररता नराः। यन्नामस्मरणे युक्ता मुदा यान्ति परां गतिम् ॥ ३३
पादपद्मसमुत्थेन रेणुना ग्रावमूर्तिभृत्। तत्क्षणाद्गौतमार्धाङ्गी जाता मोहनरूपधृत् ॥ ३४
मामकी यस्य रूपस्य ध्यानेन प्रेमनिर्भरा। सर्वपातकराशिं सा दग्ध्वा प्राप्ता स्वरूपताम् ॥ ३५
दैत्या यस्य मनोहारि रूपं प्रधनमण्डले। पश्यन्तः प्रापुरेतस्य रूपं विकृतिवर्जितम् ॥ ३६
योगिनो ध्याननिष्ठासु यं ध्यात्वा योगमास्थिताः। संसारभयनिर्मुक्ताः प्रयाताः परमं पदम् ३७
धन्योऽहमद्य रामस्य मुखं द्रक्ष्यामि शोभनम्। पयोदजलनेत्रान्तं सुनासं सुभ्रु संनतम् ॥ ३८
सा जिह्वा रघुनाथस्य नामकीर्तनमादरात्। करोति विपरीता या फणिनो रसनासमा ॥ ३९
अद्य प्राप्तं तपःपुण्यमद्य पूर्णा मनोरथाः। यद्द्रक्ष्ये रामचन्द्रस्य मुखं ब्रह्मादिदुर्लभम् ॥ ४०
तत्पादरेणुना स्वाङ्गं पवित्रं विदधाम्यहम्। विचित्रतरवार्ताभिः पावये रसनां स्वकाम् ॥ ४१
इत्यादि रामचरणस्मरणप्रबुद्धप्रेमप्रजप्रसृतगद्गदवागुदश्रु।
श्रीरामचन्द्र रघुपुंगव धर्ममूर्ते भक्तानुकम्पक समुद्धर संसृतेर्माम् ॥ ४२
जल्पन्नश्रुकलापूर्णो मुनीनां पुरतस्तदा। नाऽऽज्ञासीत्तत्र पारक्यं निजध्यानेन संस्थितः ॥ ४३
शत्रुघ्नस्तं मुनिं प्राह स्वामिन्नो मखसत्तमः। क्रियतां भवता पादरजसा सुपवित्रितः ॥ ४४
महद्भाग्यं रघुपतेर्यद्युष्मन्मानसान्तरे। तिष्ठत्यसौ महाबाहुः सर्वलोकैकपूजितः ॥ ४५
इत्युक्तः सपरीवारः सर्वाग्निपरिसंवृतः। जगाम च्यवनस्तत्र प्रमोदप्लवसंप्लुतः ॥ ४६
हनूमांस्तं पदा यान्तं रामभक्तमवेक्ष्य च। शत्रुघ्नं निजगादासौ वचो विनयसंयुतः ॥ ४७

१ द. °नोग्रहः। म° । २ क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. ध. °रवैरिणाम्। ता° । ३ क. ख. ग. च. छ. ज. झ. ठ. ड. ढ. ण त. थ. द. ध. °रणोद्युक्ता।

स्वामिन्कथयसि त्वं चेन्महापुरुषसुन्दरम् । रामभक्तं मुनिवरं नयामि स्वपुरीमहम् ॥ ४८
इति श्रुत्वा महद्वाक्यं कपिवीरस्य शत्रुहा । आदिदेश हनूमन्तं गच्छ प्रापय तं मुनिम् ॥ ४९
हनूमांस्तं मुनिं स्वीये पृष्ठ आरोप्य वेगवान् । सकुटुम्बं निनायाऽऽशु वायुः ख इव सर्वगः ॥ ५०
आगतं तं मुनिं दृष्ट्वा रामो मतिमतां वरः । अर्घ्यपाद्यादिकं चक्रे प्रीतः प्रणयविह्वलः ॥ ५१
धन्योऽस्मि मुनिवर्यस्य दर्शनेन तवाधुना । पवित्रितो मखो मह्यं सर्वसंभारसंवृतः ॥ ५२
इति वाक्यं समाकर्ण्य च्यवनो मुनिसत्तमः । उवाच प्रेमनिर्भिन्नपुलकाङ्गोऽतिनिर्वृतः ॥ ५३
स्वामिन्ब्रह्मण्यदेवस्य तव वाडवपूजनम् । युक्तमेव महाराज धर्ममार्गप्ररक्षितुः ॥ ५४

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे च्यवनस्याऽऽश्रमे हयागमनं नाम षोडशोऽध्यायः ॥ १६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११७३६

---

अथ सप्तदशोऽध्यायः ।

---

शेष उवाच—

शत्रुघ्नश्च्यवनस्याथ दृष्ट्वाऽचिन्त्यं तपोबलम् । प्रशशंस तपो ब्राह्मं सर्वलोकैकवन्दितम् ॥ १
अहो पश्यत योगस्य सिद्धिर्ब्राह्मणसत्तमे । यः क्षणादेव दुष्प्रापं सुविमानमचीकरत् ॥ २
क्व भोगसिद्धिर्महती मुनीनाममलात्मनाम् । क्व तपोबलहीनानां भोगेच्छा मनुजात्मनाम् ॥ ३
इति स्वगतमाशंसञ्शत्रुघ्नश्च्यवनाश्रमे । क्षणं स्थित्वा जलं पीत्वा सुखसंभोगमाप्तवान् ॥ ४
हयस्तस्याः पयोष्ण्याख्यनद्याः पुण्यजलात्मनः । पयः पीत्वा ययौ मार्गे वायुवेगं पदं दधत् ॥ ५
योधास्तन्निर्गमं दृष्ट्वा पृष्ठतोऽनुययुस्तदा । हस्तिभिः पत्तिभिः केचिद्रथैः केचन वाजिभिः ॥ ६
शत्रुघ्नोऽमात्यवर्येण सुमत्याह्वेन संयुतः। पृष्ठतोऽनुजगामाऽऽशु रथेन हयशोभिना ॥ ७
गच्छन्वाजी पुरं [*प्राप्तो विमलाख्यस्य भूपतेः । रत्नातटाख्यं जनताहृष्टपुष्टसमाकुलम् ॥ ८
स सेवकादुपश्रुत्य रघुनाथहयोत्तमम् । पुरान्तिके हि सं]प्राप्तं सर्वयोधसमन्वितम् ॥ ९
तदा गजानां सप्तत्या चन्द्रवर्णसमानया । अश्वानामयुतैः सार्धं रथानां काञ्चनत्विषाम् ॥ १०
सहस्रेण च संयुक्तः शत्रुघ्नं प्रति जग्मिवान् । शत्रुघ्नं स नमस्कृत्य सर्वं प्रादान्महानृपः ॥ ११
वसुकोशं धनं सर्वं राज्यं तस्मै निवेद्य च । किं करोमीति राजानं जगाद पुरतः स्थितः ॥ १२
राजाऽपि तं स्वीयपदे प्रणम्रं दोर्भ्यां दृढं तं परिषस्वजे महान् ।
जगाम साकं तनये स्वराज्यं निक्षिप्य सर्वं बहुधन्विभिर्वृतः ॥ १३
रामचन्द्राभिधां श्रुत्वा सर्वश्रुतिमनोहराम् । सर्वे प्रणम्य तं वाहं ददुर्वसु महाधनम् ॥ १४
एवं स गच्छंस्तन्मार्गे पर्वताग्र्यं ददर्श ह । स्फाटिकैः कानकै रौप्यै राजितं प्रस्थराजिभिः॥ १५
जलनिर्झरसंह्रादनानाधातुकभूतलम् । गैरिकादिकसद्धातुराशिरङ्गविराजितम् ॥ १६
वीणारणद्धंसशुककणसुन्दरशोभितम् । यत्र सिद्धाङ्गनाः सिद्धैः क्रीडन्त्यप्यकुतोभयाः ॥ १७
गन्धर्वाप्सरसो नागा यत्र क्रीडन्ति लीलया । गङ्गातरङ्गसंस्पर्शशीतवायुनिषेवितम् ॥ १८
पर्वतं वीक्ष्य शत्रुघ्न उवाच सुमतिं त्विदम् । तद्दर्शनसमुद्भूतविस्मयाविष्टमानसः ॥ १९

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. थ. द. ध. पुस्तकस्थः ।

---

१ ग. ठ. ध. °गोऽस्मीति । २ द. °तुलाङ्गर° ।

कोऽयं गिरिर्महामन्त्रिन्विस्माययति मे मनः । महारजतप्रस्थाढ्यो मार्गे राजति मेऽद्भुतः ॥ २०
अत्र किं देवतावासो देवानां क्रीडनस्थलम् । यदेतन्मनसः क्षोभं करोति श्रीसमुच्चयैः ॥ २१
इति वाक्यं समाकर्ण्य जगाद सुमतिस्तदा । वक्ष्यमाणगुणागाररामचन्द्रपदाब्जधीः ॥ २२
नीलोऽयं पर्वतो राजन्पुरतो भाति भूमिप । महाशृङ्गैर्मनोहारैः स्फाटिकाद्यैः समन्ततः ॥ २३
एनं पश्यन्ति नो पापाः परदाररता नराः । विष्णोर्गुणगणान्ये वै न मन्यन्ते नराधमाः ॥ २४
श्रुतिस्मृतिसमुत्थं ये धर्मं सद्भिः सुसाधितम् । न मन्यन्ते स्वबुद्धिस्थहेतुवादविचारिणः ॥ २५
नीलीविक्रयकर्तारो लाक्षाविक्रयकारकाः । यो ब्राह्मणो घृतादीनि विक्रीणाति सुरापकः ॥२६
कन्यां रूपेण संपन्नां न दद्यात्कुलशालिने । विक्रीणाति द्रव्यलोभात्पिता पापविमोहितः ॥ २७
सतीं दूषयते यस्तु कुलशीलवतीं नरः । स्वयमेवात्ति मधुरं बन्धुभ्यो न ददाति यः ॥ २८
मायावी ब्राह्मणार्थे च पाकभेदं करोति यः । कृशरां पायसं वाऽपि निजार्थे पाचयेत्कुधीः ॥२९
अतिथीनवमन्यन्ते सूर्योढान्सुक्षुधार्दितान् । अन्तरिक्षभुजो ये च ये च विश्वासघातकाः ॥ ३०
न पश्यन्ति महाराज रघुनाथपराङ्मुखाः । असौ पुण्यो गिरिवरः पुरुषोत्तमशोभितः ॥ ३१
पवित्रयति सर्वाञ्जो दर्शनेन मनोहरः । अत्र तिष्ठति देवानां मुकुटैरर्चिताङ्घ्रिकः ॥ ३२
पुण्यवद्भिः सुदर्शार्हः पुण्यदः पुरुषोत्तमः । श्रुतयो नेति नेतीति ब्रुवाणा न विदन्ति यम् ॥ ३३
यत्पादरज इन्द्रादिदेवैर्मृग्यं सुदुर्लभम् । वेदान्तादिभिरन्यूनैर्वाक्यैर्विदन्ति यं बुधाः ॥ ३४
सोऽत्र श्रीमान्महाशैले वसते पुरुषोत्तमः । आरुह्य तं नमस्कृत्य संपूज्य सुकृतादिना ॥ ३५
नैवेद्यं भक्षयित्वा वै भूप भूयाच्चतुर्भुजः । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ ३६
तं शृणुष्व महाराज सर्वाश्चर्यसमन्वितम् । रत्नग्रीवस्य नृपतेर्यद्वृत्तं सकुटुम्बिनः ॥ ३७
चतुर्भुजादिकं प्राप्तं देवदानवदुर्लभम् । आसीत्काञ्ची महाराज पुरी लोकेषु विश्रुता ॥ ३८
महाजनपरीवारसमृद्धबलवाहना । यस्यां वसन्ति विप्राग्र्याः षट्कर्मनिरता भृशम् ॥ ३९
सर्वभूतहिते युक्ता रामभक्तिषु लालसाः । क्षत्रिया रणकर्तारः संग्रामेऽप्यपलायिनः ॥ ४०
परदारपरद्रव्यपरद्रोहपराङ्मुखाः । वैश्याः कुसीदकृष्यादिवाणिज्यशुभवृत्तयः ॥ ४१
कुर्वन्ति रघुनाथस्य पादाम्भोजे रतिं सदा । शूद्रा ब्राह्मणसेवाभिर्गतरात्रिदिना नराः ॥ ४२
कुर्वन्ति कथनं रामरामेति रसनाग्रतः । प्राकृताः केऽपि नो पापं कुर्वन्ति मनसाऽत्र वै ॥ ४३
दानं दया दमः सत्यं तत्र तिष्ठति नित्यशः । वदते न पराबाधं वाक्यं कोऽपि नरोऽनघ ॥ ४४
न पारक्ये धने लोभं कुर्वन्ति न हि पातकम् । एवं प्रजा महाराज रत्नग्रीवेण पाल्यते ॥ ४५
षष्ठांशं तत्र गृह्णाति नान्यं लोभविवर्जितः । एवं पालयमानस्य प्रजा धर्मेण भूपतेः ॥ ४६
गतानि बहुवर्षाणि सर्वभोगविलासिनः । विशालाक्षीं महाराज एकदा सूचिवानिदम् ॥ ४७
पतिव्रतां धर्मपत्नीं पतिव्रतपरायणाम् । पुत्रा जाता विशालाक्षि प्रजारक्षाधुरंधराः ॥ ४८
परिवारो महान्मह्यं [*वर्तते विगतज्वरः । हस्तिनो मम शैलाभा वाजिनः पवनोपमाः ॥ ४९
रथाश्च सुहयैर्युक्ता वर्तन्ते मम नित्यशः । महाविष्णुप्रसादेन किंचिन्न्यूनं ममास्ति न ॥ ५०

* एतच्चिह्नान्तर्गतः पाठः ख. ग. छ. ज झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ ग. छ. ठ. ड. ध. अमायां । द. भोजने । २ द. °पि नार्थिनं दापये° । ३ ग. छ. ड. °विदितमद्भुतम् । सो° । ४ क. ख. ग. छ. ज. ञ. ठ. ण. त. थ. ध. °हाराजो व° । ५ ग. छ. ठ. ड. ध. °तं जीवता देव° । ६ ठ. ध. °हाराजन्परां° । द. °हाराजप° । ७ क. ग. च. ज. ञ. ठ. ण. त. थ. द. ध. °नघः । न । ८ ग. एताः । द. एषा । ९ ग. पालिताः ।

परं मनोरथस्त्वेकस्तिष्ठते मानसे मम । परं तीर्थं मया नाथ ] कृतं परमशोभनम् ॥ ५१
गर्भवासविरामाय क्षमं गोविन्दशोभितम् । वृद्धो जातोऽस्म्यहं तावद्वलीपलितदेहवान् ॥ ५२
करिष्यामि मनोहारितीर्थसेवनमादृतः । यो नरो जन्मपर्यन्तं स्वोदरस्य प्रपूरकः ॥ ५३
न करोति हरेः पूजां स नरो गोवृषः स्मृतः । तस्माद्गच्छामि भो भद्रे तीर्थयात्रां प्रति प्रिये ५४
सकुटुम्बः सुते न्यस्य धुरं राज्यस्य निर्भृताम् । इति व्यवस्य संध्यायां हरिं ध्यायन्निशान्तरे ५५
अद्राक्षीत्स्वप्नमप्येकं ब्राह्मणं तापसं वरम् । प्रातरुत्थाय राजाऽसौ कृत्वा संध्यादिकाः क्रियाः॥
सभां मन्त्रिजनैः सार्धं सुखमासेदिवान्महान् । तावद्विप्रं ददर्शाथ तापसं कृशदेहिनम् ॥ ५७
जटावल्कलकौपीनधारिणं दण्डपाणिनम् । अनेकतीर्थसेवाभिः कृतपुण्यकलेवरम् ॥ ५८
राजा तं वीक्ष्य शिरसा प्रणनाम महाभुजः । अर्घ्यपाद्यादिकं चक्रे महृष्टात्मा महीपतिः ॥ ५९
सुखोपविष्टं विश्रान्तं पप्रच्छ विदितं द्विजम् । स्वामिंस्त्वद्दर्शनान्मेऽद्य गतं देहस्य पातकम् ॥ ६०
महान्तः कृपणान्पातुं यान्ति तद्गेहमादरात् । तस्मात्कथय भो विप्र वृद्धस्य मम संप्रति ॥ ६१
को देवो गर्भवाराय किं तीर्थं वा क्षमं भवेत् । यूयं सर्वगतिश्रेष्ठाः समाधिध्यानतत्पराः ॥ ६२
सर्वतीर्थावगाहेन कृतपुण्यात्मानोऽमलाः । यथावच्छृण्वते मह्यं श्रद्दधानाय विस्तरात् ॥
कथयस्व प्रसादेन सर्वतीर्थविचक्षण ॥ ६३

ब्राह्मण उवाच—

शृणु राजेन्द्र वक्ष्यामि यत्पृष्टं तीर्थसेवनम् । कस्य देवस्य कृपया गर्भस्य वारणं भवेत् ॥ ६४
सेव्यः श्रीरामचन्द्रोऽसौ संसारज्वरनाशकः । पूज्यः स एव भगवान्पुरुषोत्तमसंज्ञितः ॥ ६५
पुर्यो नाना मया दृष्टाः सर्वपापक्षयावहाः । अयोध्या सरयूस्तापी तथा द्वारं हरेः परम् ॥ ६६
अवन्ती विमला काञ्ची रेवा[3] सागरगामिनी । गोकर्णं हाटकाख्यं च हत्याकोटिविनाशनम्॥ ६७
मल्लिकाख्यो महाशैलो मोक्षदः पश्यतां नृणाम् । यत्राङ्घ्रेषु नृणां तोयं श्यामं वा निर्मलं भवेत् ॥
पातकस्यापहारीदं मया दृष्टं तु तीर्थकम् । मया द्वारवती दृष्टा सुरासुरनिषेविता ॥ ६९
गोमती यत्र वहति साक्षाद्ब्रह्मजला शुभा । यत्र स्नापो लयः प्रोक्तो मृतिर्मोक्ष इति श्रुतिः ॥७०
यस्यां संवसतां नृणां न कलिः प्रभवेत्क्वचित् । चक्राङ्का यत्र पाषाणा मानवा अपि चक्रिणः ॥
पशवः कीटपक्ष्याद्याः सर्वे चक्रशरीरिणः । त्रिविक्रमो वसेद्यस्यां सर्वलोकैकपालकः ॥ ७२
सा पुरी तु महापुण्यैर्मया दृग्गोचरीकृता । कुरुक्षेत्रं मया दृष्टं सर्वहत्यापनोदनम् ॥ ७३
स्यमन्तपञ्चकं यत्र महापातकनाशनम् । वाराणसी मया दृष्टा विश्वनाथकृतालया ॥
यत्रोपदिशते मन्त्रं तारकं ब्रह्मसंज्ञितम् । ७४

यस्यां मृताः कीटपतङ्गभृङ्गाः पश्वादयो वाऽसुरयोनयो वा ।
स्वकर्मसंभोगसुखं विहाय गच्छन्ति कैलासमतीतदुःखाः ॥ ७५

मणिकर्णी यत्र तीर्थं यस्यामुत्तरवाहिनी । करोति संसृतेर्बन्धच्छेदं पापकृतामपि ॥ ७६
कपर्दिनः कुण्डलिनः सर्पभूषाधरा वराः । गजचर्मपरीधाना वसन्ति गतदुःखकाः ॥ ७७
कालभैरवनामाऽत्र करोति यमशासनम् । न करोति नृणां वार्तां यमो दण्डधरः प्रभुः ॥ ७८
एतादृशी मया दृष्टा काशी विश्वेश्वराङ्किता । अनेकान्यपि तीर्थानि मया दृष्टानि भूमिप ॥ ७९

---

१ छ. झ. महामतिः । २ क. ख. छ. ज. ञ ठ. ड. ण. त. थ. ध. °द्य कृतं देहस्य पावनम् । ३ क. ख. छ. ञ. ठ. ड. त. थ. द. ध. कान्ती ।

परमकं महच्चित्रं यद्दृष्टं नीलपर्वते । पुरुषोत्तमसांनिध्ये तत्र काप्यक्षिगोचरम् ॥ ८०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे ब्राह्मणसमागमनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११८१६

---

अथाष्टादशोऽध्यायः ।

---

ब्राह्मण उवाच—

राजंस्त्वं शृणु यद्वृत्तं नीले पर्वतसत्तमे । यच्छ्रद्दधानाः पुरुषा यान्ति ब्रह्म सनातनम् ॥ १
मया पर्यटता तत्र गतं नीलाभिधे गिरौ । गङ्गासागरतोयेन क्षालितप्राङ्गणे मुहुः ॥ २
तत्र भिल्ला मया दृष्टाः पर्वताग्रे धनुर्भृतः । चतुर्भुजा मूलफलैर्भक्ष्यैर्निर्वाहितक्रमाः ॥ ३
तदा मे मनसि क्षिप्रं संशयः सुमहानभूत् । चतुर्भुजाः किमेते वै धनुर्बाणधरा नराः ॥ ४
वैकुण्ठवासिनां रूपं दृश्यते विजितात्मनाम् । कथमेतैरुपालब्धं ब्रह्माद्यैरपि दुर्लभम् ॥ ५
शङ्खचक्रगदाशार्ङ्गपद्मोल्लसितपाणयः । वनमालापरीताङ्गा विष्णुभक्ता इवान्तिके ॥ ६
संशयाविष्टचित्तेन मया पृष्टं तदा नृप । यूयं के बत युष्माभिर्लब्धं चातुर्भुजं कथम् ॥ ७
तदा तैर्बहु हास्यं तु कृत्वा मां प्रति भाषितम् । ब्राह्मणोऽयं न जानाति पिण्डमाहात्म्यमद्भुतम्॥
इति श्रुत्वाऽवदं चाहं कः पिण्डः कस्य दीयते । तन्मम ब्रूत धर्मिष्ठाश्चतुर्भुजशरीरिणः ॥ ९
तदा मद्वाक्यमाकर्ण्य कथितं तैर्महात्मभिः । सर्वं तत्र तु यद्वृत्तं चतुर्भुजभवादिकम् ॥ १०

किराता ऊचुः—

शृणु ब्राह्मण वृत्तान्तमस्माकं पृथुकः शिशुः । नित्यं जम्बूफलादीनि भक्षयन्क्रीडया चरन् ॥११
एकदा रममाणस्तु गिरिशृङ्गं मनोरमम् । समारुरोह शिशुभिः समन्तात्परिवारितः ॥ १२
तदा तत्र ददर्शाथ देवायतनमद्भुतम् । गारुत्मतादिमणिभिः खचितं स्वर्णभित्तिकम् ॥ १३
सुकान्त्या तिमिरश्रेणीं दारयद्रविवद्भृशम् । दृष्ट्वा विस्मयमापेदे किमिदं कस्य वै गृहम् ॥ १४
गत्वा विलोकयामीति किमिदं महतां पदम् । इति संचिन्त्य गेहान्तर्जगाम बहुभाग्यतः ॥ १५
ददर्श तत्र देवेशं सुरासुरनमस्कृतम् । किरीटहारकेयूरग्रैवेयाद्यैर्विराजितम् ॥ १६
अवतंसे मनोज्ञे तु धारयन्तं सुनिर्मले । पादपद्मे तुलसिकागन्धमत्तषडङ्घ्रिके ॥ १७
शङ्खचक्रगदाशार्ङ्गपद्माद्यैर्मूर्तिसंयुतैः । उपासिताङ्घ्रिं श्रीमूर्तिं नारदाद्यैः सुसेवितम् ॥ १८
केचिद्गायन्ति नृत्यन्ति हसन्ति परमाद्भुतम् । प्रीणयन्ति महाराजं सर्वलोकैकवन्दितम् ॥ १९
हरिं वीक्ष्य मदीयोऽर्भस्तत्र संजग्मिवान्मुने । देवास्तत्र विधायोच्चैः पूजां धूपादिकं पुनः ॥ २०
नैवेद्यं श्रीप्रियस्यार्थे कृत्वा नीराजनं ततः । जग्मुः स्वं स्वं महाराज कृपां पश्यन्त आदरात् ॥ २१
महाभाग्यवशात्तेन प्राप्तं नैवेद्यसिक्थकम् । पतितं तत्र देवादिदुर्लभं त्वतिमानुषम् ॥ २२
तद्भक्षणं च कृत्वाऽथो श्रीमूर्तिमवलोक्य च । चतुर्भुजत्वमाप्तं वै पृथुकेन सुशोभिना ॥ २३
तदाऽस्माभिर्गृहं प्राप्तो बालको वीक्षितो मुहुः । चतुर्भुजादिकं प्राप्तः शङ्खचक्रादिधारकः ॥ २४
अस्माभिः पृष्टमेतस्य किमेतज्जातमद्भुतम् । तदा प्रोवाच नः सर्वान्बालकः परमाद्भुतम् ॥ २५
[*शिखराग्रे गतः पूर्वं तत्र दृष्टः सुरेश्वरः । तत्र नैवेद्यसिक्थं तु मया प्राप्तं मनोहरम् ॥ २६

---

* एतच्चिह्नान्तर्गतः पाठः, क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

तस्य भक्षणमात्रेण कारणेन तु सांप्रतम् ]। चतुर्भुजत्वं संप्राप्तो विस्मयेन समन्वितः ॥ २७
तच्छ्रुत्वा तु वचस्तस्य सद्यः संप्राप्तविस्मयैः। अस्माभिरप्यसौ दृष्टो देवः परमदुर्लभः ॥ २८
अन्नादिकं तत्र भुक्तं सर्वस्वादसमन्वितम् । वयं चतुर्भुजा जाता देवस्य कृपया पुनः ॥ २९
गत्वा त्वमपि देवस्य दर्शनं कुरु सत्तम । भुक्त्वा तत्रान्नसिक्थं तु भव विप्र चतुर्भुजः ॥
त्वया पृष्टं यदाचक्ष्व तदुक्तं वाडवर्षभ ॥ ३०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे ब्राह्मणोपदेशकथनं नामाष्टादशोऽध्यायः ॥ १८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—११८४६

---

अथैकोनविंशोऽध्यायः ।

---

ब्राह्मण उवाच—

इति श्रुत्वा तु तद्वाक्यं भिल्लानामहमद्भुतम् । अत्याश्चर्यमिदं मत्वा प्रहृष्टोऽभवमित्युत ॥ १
गङ्गासागरसंयोगे स्नात्वा पुण्यकलेवरः । शृङ्गमारुरुहे तत्र मणिमाणिक्यचित्रितम् ॥ २
तत्रापश्यं महाराज देवं देवादिवन्दितम् । नमस्कृत्वा कृतार्थोऽहं जातोऽन्नप्राशनेन च ॥ ३
चतुर्भुजत्वं संप्राप्तः शङ्खचक्रादिचिह्नितम् । पुरुषोत्तमदर्शनेन न पुनर्गर्भमाविशम् ॥ ४
राजंस्त्वमेव तत्राऽऽशु गच्छ नीलाभिधं गिरिम् । कृतार्थं कुरु चाऽऽत्मानं गर्भदुःखविवर्जितम् ५
इत्याकर्ण्य वचस्तस्य वाडवाग्र्यस्य धीमतः । पप्रच्छ हृष्टगात्रस्तु तीर्थयात्राविधिं मुनिम् ॥ ६

राजोवाच—

साधु विप्राग्र्य हे साधो त्वया प्रोक्तं ममानघ। पुरुषोत्तममाहात्म्यं शृण्वतां पापनाशनम् ॥ ७
ब्रूहि तत्तीर्थयात्रायां विधिं श्रुतिसमन्वितम् । विधिना केन संपूर्णफलप्राप्तिर्नृणां भवेत् ॥ ८

ब्राह्मण उवाच—

शृणु राजन्प्रवक्ष्यामि तीर्थयात्राविधिं शुभम् । येन संप्राप्यते देवः सुरासुरनमस्कृतः ॥ ९
वलीपलितदेहो वा यौवनेनान्वितोऽपि वा । ज्ञात्वा मृत्युमनिस्तीर्यं हरिं शरणमाव्रजेत् ॥ १०
तत्कीर्तने तच्छ्रवणे वन्दने तस्य पूजने । मतिरेव प्रकर्तव्या नान्यत्र वनितादिषु ॥ ११
सर्वं नश्वरमालोक्य क्षणस्थायि सुदुःखदम्* । जन्मदुःखजरातीतं भक्तिवल्लभमच्युतम् ॥ १२
क्रोधात्कामाद्भयाद्द्वेषाल्लोभाद्दम्भान्नरः पुनः । यथाकथंचिद्विभजन्स दुःखं समश्नुते ॥ १३
स हरिर्ज्ञायते साधुसंगमात्पापवर्जितात् । येषां कृपातः पुरुषा भवन्त्यसुखवर्जिताः ॥ १४
ते साधवः शान्तरागाः कामलोभविवर्जिताः । ब्रुवन्ति यन्महाराज तत्संसारनिवर्तकम् ॥ १५
तीर्थेषु लभ्यते साधू रामचन्द्रपरायणः । यद्दर्शनं नृणां पापराशिदाहाशुशुक्षणिः ॥ १६
तस्मात्तीर्थेषु गन्तव्यं नरैः संसारभीरुभिः । पुण्योदकेषु सततं साधुश्रेणिविराजिषु ॥ १७
तानि तीर्थानि विधिना दृष्टानि प्रहरन्त्यघम् । तं विधिं नृपशार्दूल कुरुष्व श्रुतिगोचरम् ॥ १८
विरागं जनयेत्पूर्वं कलत्रादिकुटुम्बके । असत्यभूतं तज्ज्ञात्वा हरिं तु मनसा स्मरेत् ॥ १९

---

* एतदग्रे छ. ड. पुस्तकयोः 'जन्मदुःखं जरादुःखं नित्यदुःखं नरोऽश्नुते' इत्यर्धमधिकं दृश्यते ।

---

१ ग. छ. ड. °स्मयप्रापकं महत् । त° । २ ड. °स्य तत्र प्राप्ता वयं त्वहो । अ° । ३ ग. छ. ड. सुमतिरुवाच । ४ द. °स्त्वमपि त° । ५ ग. ततः । छ. ड. नृप । ६ द. °न्ममृत्युज° । ७ ज. ण. त. थ. भक्तव° । ८ झ. °ष्व नृप गो° ।

क्रोशमात्रं ततो गत्वा राम रामेति च ब्रुवन् । तत्र तीर्थादिषु स्नात्वा क्षौरं कुर्याद्विधानवित् ॥ २०
मनुष्याणां च पापानि तीर्थानि प्रतिगच्छताम् । केशमाश्रित्य तिष्ठन्ति तस्मात्तद्वपनं चरेत् ॥ २१
ततो दण्डं तु निर्ग्रन्थिं कमण्डलुमथाजिनम् । बिभृयाल्लोभनिर्मुक्तस्तीर्थवेषधरो नरः ॥ २२
विधिना गच्छतां नृणां फलावाप्तिर्विशेषतः । तस्मात्सर्वप्रयत्नेन तीर्थयात्राविधिं चरेत् ॥ २३
यस्य हस्तौ च पादौ च मनश्चैव सुसंहितम् । विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ २४
हरे कृष्ण हरे कृष्ण भक्तवत्सल गोपते । शरण्य भगवन्विष्णो मां पाहि बहुसंसृतेः ॥ २५
इति ब्रुवन्रसनया मनसा च हरिं स्मरन् । पादचारी गतिं कुर्यात्तीर्थं प्रति महोदयम्[1] ॥ २६
यानेन गच्छन्पुरुषः समभागफलं लभेत् । उपानद्भ्यां चतुर्थांशं गोयाने गोवधादिकम् ॥ २७
[*व्यवहारात्तृतीयांशं सेवयाऽष्टमभागभाक् । अनिच्छया व्रजंस्तत्र तीर्थमर्धफलं भवेत् ॥ २८
यथायथं प्रकर्तव्या तीर्थानामभियात्रिका ] । पापक्षयो भवत्येव विधिदृष्ट्या विशेषतः ॥ २९
तत्र साधून्नमस्कुर्यात्पादवन्दनसेवनैः[3] । तद्द्वारा हरिभक्तिर्हि प्राप्यते पुरुषोत्तमे ॥ ३०
इति तीर्थविधिः प्रोक्तः समासेन न विस्तरात् । एवं विधिं समाश्रित्य गच्छ त्वं पुरुषोत्तमम् ॥ ३१
तुभ्यं तुष्टो महाराज दास्यते भक्तिमच्युतः । यथा[4] संसारनिर्वाहः क्षणादेव भविष्यति ॥ ३२
तीर्थयात्राविधिं श्रुत्वा सर्वपातकनाशनम् । मुच्यते सर्वपापेभ्य उग्रेभ्यः पुरुषर्षभ ॥ ३३

सुमतिरुवाच—

इति वाचं समाकर्ण्य ववन्दे चरणौ महान् । तत्तीर्थदर्शनौत्सुक्यविह्वलीकृतमानसः ॥ ३४
आदिदेश निजामात्यं मन्त्रवित्तमपुत्तमम् । तीर्थयात्रेच्छया सर्वान्सह नेतुं मनो दधत् ॥ ३५
मन्त्रिन्पौरजनान्सर्वानादिश त्वं ममाऽऽज्ञया । पुरुषोत्तमपादाब्जदर्शनप्रतिहेतवे ॥ ३६
ये मदीये पुरे लोका ये च मद्वाक्यकारकाः । सर्वे निर्यान्तु मे पुर्या मया सह नरोत्तमाः ॥ ३७
ये तु मद्वाक्यमुल्लङ्घ्य स्थास्यन्ति पुरुषा गृहे । ते दण्ड्या यमदण्डेन पापिनोऽधर्महेतवः ॥ ३८
किं तेन सुतवृन्देन बान्धवैः किं सुहृन्नयैः । यैर्न दृष्टोऽत्र चक्षुर्भ्यां पुण्यदः पुरुषोत्तमः ॥ ३९
शूकरीयूथवत्तेषां प्रसूतिर्विट्प्रभक्षिका । येषां पुत्राश्च पौत्रा वा हरिं न शरणं गताः ॥ ४०
यो देवो नाममात्रेण सर्वान्पावयितुं क्षमः । तं नमस्कुरुत क्षिप्रं मदीयप्रकृतिप्रजाः ॥ ४१
इति वाक्यं मनोहारि भगवद्गुणगुम्फितम् । प्रजहर्ष महामात्य उत्तमः सत्यनामधृत् ॥ ४२
हस्तिनं वरमारुह्य पटहेन व्यघोषयत् । यदादिष्टं नृपेणेह तीर्थयात्रां समिच्छता ॥ ४३
गच्छन्तु त्वरिता लोका राज्ञा सह महागिरिम् । दृश्यतां पापसंहारी पुरुषोत्तमनामधृत् ॥ ४४
क्रियतां सर्वसंसारसागरो गोष्पदं पुनः । भूष्यतां शङ्खचक्रादिचिह्नैः स्वस्वतनुर्नरैः ॥ ४५
इत्यादि घोषयामास राज्ञाऽऽदिष्टं यदद्भुतम् । सचिवो रघुनाथाङ्घ्रिध्याननिर्वारितश्रमः ॥ ४६
तच्छ्रुत्वा ताः प्रजाः सर्वा आनन्दरससंप्लुताः । मनो दधुः स्वनिस्तारे पुरुषोत्तमदर्शनात् ॥ ४७
निर्ययुर्ब्राह्मणास्तत्र शिष्यैः सह सुवेषिणः । आशिषो वरदानाढ्या ददतो भूपतिं प्रति ॥ ४८
क्षत्रिया धन्विनो वीरा वैश्या वस्तुक्रियान्विताः । शूद्राः संसारनिस्तारहर्षितस्वीयविग्रहाः ॥ ४९

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ क. ख. ग. छ. ज. झ. ठ. ण. त. थ. द. ध. महोदयः । २ द. °वहतो ततो° । ३ क. ज. झ. ठ. ण. त. थ. ध. °नरोत्तमैः । ४ ख. ग. ज. ठ. ण. ध. यया । ५ क. ख. छ. ज. ट. ठ. त. थ. ध. °नं नरमारोप्य प° । ण. द. °नं नरमारोप्य प° ।

रजकाश्चर्मकाः क्षौद्राः किराता भित्तिकारकाः। सूचीवृत्त्या च जीवन्तस्ताम्बूलक्रयकारकाः॥५०
तालवाद्यधरा ये च ये च रङ्गोपजीविनः। तैलविक्रयिणश्चैव वस्त्रविक्रयिणस्तथा ॥ ५१
सूता वदन्तः [1]पौराणां वार्तां हर्षसमन्विताः। मागधा बन्दिनस्तत्र निर्गता भूमिपाज्ञया ॥ ५२
भिषग्वृत्त्या च जीवन्तस्तथा पाशककोविदाः। पाकस्वादुरसाभिज्ञा हास्यवाक्यानुरञ्जकाः ॥
ऐन्द्रजालिकविद्याढ्यास्तथा वार्तासु कोविदाः। प्रशंसन्तो महाराजं निर्ययुः पुरमध्यतः ॥ ५४
राजाऽपि तत्र निर्वृत्य प्रातःसंध्यादिकाः क्रियाः। ब्राह्मणं तापसश्रेष्ठमानिनाय सुनिर्मलम् ॥५५
तदाज्ञया महाराजो निर्जगाम पुराद्बहिः। लोकैरनुगतो राजा बभौ चन्द्र इवोडुभिः ॥ ५६
क्रोशमात्रं स गत्वाऽथ क्षौरं कृत्वा विधानतः। दण्डं कमण्डलुं बिभ्रन्मृगचर्म तथा शुभम् ॥५७
शुभवेषेण संयुक्तो हरिध्यानपरायणः। कामक्रोधादिरहितं मनो बिभ्रन्महायशाः ॥ ५८
तदा दुन्दुभयो भेर्य आनकाः पणवास्तथा। शङ्खवीणादिकाश्चैवाऽऽध्माताास्तद्वादकैर्मुहुः ॥ ५९
जय देवेश दुःखघ्न पुरुषोत्तमसंज्ञित। दर्शयस्व तनुं मह्यं वदन्तो निर्ययुर्जनाः ॥ ६०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे रत्नग्रीवस्य तीर्थप्रयाणं नामैकोनविंशोऽध्यायः ॥१९॥

आदितः श्लोकानां समष्ट्यङ्काः—११९०६

---

अथ विंशोऽध्यायः ।

---

सुमतिरुवाच—

अथ प्रयाते भूपाले सर्वलोकसमन्विते। महाभा[3]ग्यैर्वैष्णवैश्च गायद्भिः कृष्णकीर्तनम् ॥ १
शुश्रावासौ महाराज मार्गे गोविन्दकीर्तनम्। जय माधव भक्तानां शरण्य पुरुषोत्तम ॥ २
पथि तीर्थान्यनेकानि कुर्वन्पश्यन्महोदयम्। तापसब्राह्मणात्तेषां महिमानमथाशृणोत् ॥ ३
विचित्रविष्णुवार्ताभिर्विनोदितमना नृपः। मार्गे मार्गे महाविष्णुं गोपयामास गायकैः ॥ ४
दीनान्धकृपणानां च पङ्गूनां वासनोचितम्। दानं ददौ महाराजो बुद्धिमान्विजितेन्द्रियः ॥ ५
अनेकतीर्थविरजमात्मानं भव्यतां गतम्। कुर्वन्ययौ स्वकैर्लोकैर्हरिध्यानपरायणः ॥ ६
नृपो गच्छन्ददर्शाग्रे नदीं पापप्रणाशिनीम्। चक्राङ्कितग्रावयुतां मुनिमानसनिर्मलाम् ॥ ७
अनेकमुनिवृन्दानां बहुश्रेणिविराजिताम्। सारसादिपतत्रीणां कूजितैरुपशोभिताम् ॥ ८
दृष्ट्वा पप्रच्छ विप्राग्र्यं तापसं धर्मकोविदम्। अनेकतीर्थमाहात्म्यविशेषज्ञानजृम्भितम् ॥ ९
स्वामिन्केयं नदी पुण्या मुनिवृन्दनिषेविता। करोति मम चित्तस्य प्रमोद[6]भरनिर्भरम् ॥ १०
इति श्रुत्वा वचस्तस्य राजराजस्य धीमतः। वक्तुं प्रचक्रमे विद्वांस्तीर्थमाहात्म्यमद्भुतम् ॥ ११

ब्राह्मण उवाच—

गण्डकीयं नदी राजन्सुरासुरनिषेविता। पुण्योदकपरीवाहहतपातकसंचया ॥ १२
दर्शनान्मानसं पापं स्पर्शनात्कर्मजं दहेत्। वाचिकं स्वीयतोयस्य पानतः पापसंचयम् ॥ १३
पुरा दृष्ट्वा प्रजानाथः प्रजाः सर्वा विपापिनीः। स्वगण्डविप्रुषोऽनेकपापघ्नीं सृष्टवानिमाम् ॥ १४
एतां नदीं ये पुण्योदां स्पृशन्ति सुतरङ्गिणीम्। ते गर्भभाजो नैव स्युरपि पापकृतो नराः ॥ १५

---

१ ख. ग. ज. ठ. ण. द. ध. पौराणीं। २ त. पटहास्त । ३ क. ख. ग. छ. ज. ञ. ठ. ण. त. थ. ध. भाग्यवशात्तैश्च। ४ ग. नां वासरोचि । ङ. नां चाशनो । ५ घ. ङ. च. झ. ट. ढ. सं प्रक्रमो । ६ ख. दप्रेमनि ।

अस्यां भवा ये चाश्मानश्चक्रचिह्नैरलंकृताः । ते साक्षाद्भगवन्तो हि स्वस्वरूपधराः पराः ॥ १६
शिलां संपूजयेद्यस्तु नित्यं चक्रयुतां नरः । न जातु स जनन्या वै जठरं समुपाविशेत् ॥ १७
पूजयेद्यो नरो धीमाञ्शालग्रामशिलां वराम् । तेनाऽऽचारवता भाव्यं दम्भलोभवियोगिना ॥ १८
परदारपरद्रव्यविमुखेन नरेण च । पूजनीयः प्रयत्नेन शालग्रामः सचक्रकः ॥ १९
द्वारवत्यां भवं चक्रं शिला वै गण्डकी भवा । पुंसां क्षणाद्धरत्येत्र पापं जन्मशतार्जितम् ॥ २०
अपि पापसहस्राणां कर्ता तावन्नरो भवेत् । शालग्रामशिलापाथः पीत्वा पूयेत तत्क्षणात् ॥ २१
[*ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वेदपथि स्थितः । शालग्रामं पूजयित्वा गृहस्थो मोक्षमाप्नुयात् ॥
न जातु वै स्त्रिया कार्यं शालग्रामस्य पूजनम् । भर्तृहीनाऽथ सुभगा स्वर्गलोकहितैषिणी ॥ २३
मोहात्स्पृष्ट्वाऽथ महिला जन्मशीलगुणान्विता । हित्वा पुण्यसमूहं तु सत्वरं नरकं व्रजेत् ॥ २४
स्त्रीपाणिमुक्तपुष्पाणि शालग्रामशिलोपरि । सर्वाभ्यधिकपापानि वदन्ति ब्राह्मणोत्तमाः ॥ २५
चन्दनं विषपङ्काभं कुङ्कुमं वज्रसंनिभम् । नैवेद्यं कालकूटाभं भवेद्भगवतः कृतम् ॥ २६
तस्मात्सर्वात्मना त्याज्यः स्त्रिया स्पर्शः शिलोपरि । कुर्वती याति नरकं यावदिन्द्राश्चतुर्दश ॥ २७
अपि पापसमाचारो ब्रह्महत्यायुतोऽपि वा । शालग्रामशिलातोयं पीत्वा याति परां गतिम् ॥ २८
तुलसी चन्दनं वारि शङ्खो घण्टाऽथ चक्रकम् । शिला ताम्रस्य पात्रं तु विष्णोर्नाम पदामृतम् ॥
पदामृतं तु नवभिः पापराशिप्रदाहकम् । वदन्ति मुनयः शान्ताः सर्वशास्त्रार्थकोविदाः ॥ ३०
सर्वतीर्थपरिस्नानात्सर्वक्रतुसमर्चनात् । पुण्यं भवति यद्राजन्बिन्दौ बिन्दौ तदद्भुतम् ॥ ३१
शालग्रामशिला यत्र पूज्यते पुरुषोत्तमैः । तत्र योजनमात्रं तु तीर्थकोटिसमन्वितम् ॥ ३२
शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि । विषमा एव पूज्यन्ते विषमेषु त्रयं न हि ॥ ३३
द्वारावतीभवं चक्रं तथा वै गण्डकीभवम् । उभयोः संगमो यत्र तत्र गङ्गा समुद्रगा ॥ ३४
रूक्षाः कुर्वन्ति पुरुषानायुःश्रीकीर्तिवर्जितान् । तस्मात्स्निग्धा मनोहारिरूपिणो ददति श्रियम् ३५
आयुष्कामो नरो यस्तु धनकामोऽपि यः पुमान् । पूजयन्सर्वमाप्नोति पारलौकिकमैहिकम् ॥ ३६
प्राणान्तकाले पुंसस्तु भवेद्भाग्यवतो नृप । वाचि नाम हरेः पुण्यं शिला हृदि तदन्तिके ॥ ३७
गच्छत्सु प्राणमार्गेषु यस्य विस्रम्भतोऽपि चेत् । शालग्रामशिलास्फूर्तिस्तस्य मुक्तिर्न संशयः ॥ ३८
पुरा भगवता प्रोक्तमम्बरीषाय धीमते । ब्राह्मणा न्यासिनः स्निग्धाः शालग्रामशिलास्तथा ३९
स्वरूपत्रितयं मह्यमेतद्धि क्षितिमण्डले । पापिनां पापनिर्णाशं कर्तुं धृतमुदश्वता ॥ ४०
निन्दन्ति पापिनो ये वा शालग्रामशिलां सकृत् । कुम्भीपाके प्रपाच्यास्ते यावदाभूतसंप्लवम् ४१
पूजां समुद्यतं कर्तुं यो वारयति मूढधीः । तस्य माता पिता बन्धुवर्गो नरकभागिनः ॥ ४२
यो वै कथयति प्रेष्ठं शालग्रामार्चनं कुरु । स कृतार्थो नयत्याशु वैकुण्ठं स्वीयपूर्वजान् ॥ ४३
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । मुनयो वीतरागाश्च कामक्रोधविवर्जिताः ॥ ४४
पुरा कीकटसंज्ञे वै देशे धर्मविवर्जिते । आसीत्पुल्कसजातीयो नरः शबरसंज्ञितः ॥ ४५
नित्यं जन्तुवधोद्युक्तः शरासनधरो मुहुः । तीर्थं प्रति यियासूनां बलाद्धरति जीवितम् ॥ ४६
अनेकप्राणिहत्याकृत्परस्वनिरतः सदा । सदा रागादिसंयुक्तः कामक्रोधादिसंयुतः ॥ ४७

* एतच्चिह्नान्तर्गतः पाठः ख. ग. घ. छ. ज ठ. ण. त. थ. द. ध. पुस्तकस्थः ।

१ द. °रि । पवेरधिकपातानि । ठ. ध. °रि । अपरेऽधि° । २ ग. छ. ड. द. कुसुमं । ३ थ. °टिफलप्रदम् । ४ ज. विजृम्भ° ।

विचरत्यनिशं भीमे वने प्राणिवधंकरः । विषसंसक्तबाणाग्ररूढचापगुणोद्धुरः ॥ ४८
स कदा पर्यटन्व्याधः प्राणिमात्रभयंकरः । कालं प्राप्तं न जानाति समीपे मुग्धमानसः ॥ ४९
यमदूतास्तु संप्राप्ताः पाशमुद्गरपाणयः । ताम्रकेशा दीर्घनखा लम्बदंष्ट्रा भयानकाः ॥ ५०
श्यामा लोहस्य निगडान्बिभ्रतो मोहकारकाः । बध्नन्तु पापिनं ह्येनं प्राणिमात्रभयंकरम् ॥ ५१
एतस्य जिह्वां बृहतीमहं निष्कासयाम्यतः । एको वदति चैतस्य चक्षुरुत्पाटयाम्यहम् ॥ ५२
एको वदति चैतस्य करौ कृन्तामि पापिनः । अन्यो वदत्यहं कर्णौ कर्तयामि दुरात्मनः ॥ ५३
कदाचिन्मनसा नायं प्राणिमात्रोपकारकः । परदारपरद्रव्यपरद्रोहपरायणः ॥ ५४
एवं वदन्तः सुभृशं दन्तैर्दन्तनिपीडकाः । आगत्य तं दुरात्मानं सायुधास्तस्थुरुन्मदाः ॥ ५५
एको दूतस्तदा सर्परूपं धृत्वाऽदशत्पदे । स दष्टमात्रः सहसा गतासुः पर्यजायत ॥ ५६
तदा तं लोहपाशेन बद्ध्वा शमनकिंकराः । कशाभिस्ताडयामासुर्मुद्गरैः प्राहरंस्तथा ॥ ५७
अहो दुष्ट दुरात्मंस्त्वं कदाचिन्नाऽऽचरः शुभम् । मनसाऽपि यतस्त्वां वै क्षेप्स्यामो रौरवेषु च ५८
त्वन्मांसं वायसा रौद्रा भक्षयिष्यन्ति वै क्षुधा । आ जन्मतस्तु भवता न कृतं हरिसेवनम् ॥ ५९
त्वया पुत्रकलत्राद्या द्रोहं कृत्वा सुपोषिताः । न कदाचित्स्मृतो देवः पापहारी जनार्दनः ॥ ६०
तस्मात्त्वां लोहशङ्कौ वा कुम्भीपाकेऽतिरौरवे । धर्मराजाज्ञया सर्वे नेष्यामो बहुताडनैः ॥ ६१
एवमुक्त्वा यदा नेतुं समैच्छन्यमकिंकराः । तावत्प्राप्तो महाविष्णुचरणाब्जपरायणः ॥ ६२
यमदूतास्तदा दृष्टा वैष्णवेन महात्मना । पाशमुद्गरदण्डादिदुष्टायुधधरा गणाः ॥ ६३
पुल्कसं लोहनिगडैर्बद्ध्वा गन्तुं समुद्यताः । बन्ध बन्ध ग्रस च्छिन्धि भिन्धि भिन्धीति वादिनः ॥
तदा कृपालुस्तं प्रेक्ष्य पद्मनाभपरायणः । अत्यन्तकृपया युक्तं चेतस्तत्र तदाऽकरोत् ॥ ६५
असौ महादुष्टपीडां मा यातु मम संनिधौ । मोचयाम्यहमद्यैव यमदूतेभ्य एव च ॥ ६६
इति कृत्वा मतिं तस्मै कृपायुक्तो मुनीश्वरः । शालग्रामशिलां हस्ते गृहीत्वाऽस्य गतोऽन्तिके ६७
तस्य पादोदकं पुण्यं तुलसीदलमिश्रितम् । मुखे विनिक्षिपन्कर्णे रामनाम जजाप ह ॥ ६८
तुलसीं मस्तके तस्य धारयामास वैष्णवः । शिलां हृदि महाविष्णोर्धृत्वा प्राह स वैष्णवः ६९
गच्छन्तु यमदूता वै यातनासु परायणाः । शालग्रामशिलास्पर्शो दहतात्पातकं महत् ॥ ७०
इत्युक्तवति तस्मिन्वै गणा विष्णोर्महाद्भुताः । आययुस्तस्य संविधे शिलास्पर्शहतांहसः ॥ ७१
पीतवस्त्राः शङ्खचक्रगदापद्मविराजिताः* । आगत्य मोचयामासुर्लोहपाशाद्दुरासदात् ॥ ७२
मोचयित्वा महापापकारकं पुष्क(ल्क)सं नरम् । ऊचुः किमर्थं बद्धोऽयं वैष्णवः पूज्यदेहभृत् ७३
कस्याऽऽज्ञाकारका यूयं यदधर्मप्रकारकाः । इति वाक्यं समाकर्ण्य जगदुर्यमकिंकराः ॥ ७४
धर्मराजाज्ञया प्राप्ता नेतुं पापिनमुद्यताः । नासौ कदाचिन्मनसा प्राणिमात्रोपकारकः ॥ ७५
प्राणिहत्यामहापापकारी दुष्टशरीरभृत् । बहुशस्तीर्थयात्रायां गच्छतोऽसौ व्यलुण्ठयत् ॥ ७६
परदाररतो नित्यं सर्वपापाधिकारकः । तस्मान्नेतुं वयं प्राप्ताः पापिनं पुष्क(ल्क)सं नरम् ॥ ७७
भवद्भिर्मोचितः कस्मादकस्मादागतैरिह ॥ ७८

---

* एतदग्रे 'ऊचुस्ते वैष्णवा याम्यान्किमर्थं विधृतो ह्ययम्' इत्यर्धमधिकं ङ. पुस्तके ।

---

१ द. 'पेऽप्युग्रमा' । २ द. 'था । नारे दुष्ट दुरात्मा त्वं कदाचिद्धर्ममाचरः । म' । ३ छ. ङ. भक्षिष्यन्ति क्षुध २ न्विताः । आ । ४ थ. 'तु यमसं' । ५ द. गण्डक्याः ।

विष्णुदूता ऊचुः—

ब्रह्महत्यादिकं पापं प्राणिकोटिवधोद्भवम् । शालग्रामशिलास्पर्शः सर्वं दहति तत्क्षणात् ॥ ७९
रामेति नाम यच्छ्रोत्रे विश्रम्भादागतं यदि । करोति पापसंदाहं तूलं वह्निकणो यथा ॥ ८०
तुलसी मस्तके यस्य शिला हृदि मनोहरा । मुखे कर्णेऽथवा रामनाम मुक्तस्तदैव सः ॥ ८१
तस्मादनेन तुलसी मस्तके विधृता पुरा । श्रावितं रामनामाऽऽशु शिला हृदि सुधारिता ॥ ८२
तस्मात्पापसमूहोऽस्य दग्धः पुण्यकलेवरः । यास्यते परमं स्थानं [*पापिनां यत्सुदुर्लभम् ॥ ८३
वर्षायुतं तत्र भुक्त्वा भोगान्सर्वमनोहरान् । काश्यां जन्म समासाद्याऽऽराध्य तं च जगद्गुरुम् ॥
प्राप्स्यते परमं स्थानं ] सुरासुरसुदुर्लभम् । न ज्ञातो महिमा सम्यक्शिलायाः परमेष्ठिनः ॥ ८५
दृष्टा स्पृष्टाऽर्चिता वाऽपि सर्वपापहरा क्षणात् । इत्युक्त्वा विरताः सर्वे महाविष्णोर्गणा मुदा ॥
याम्यास्ते किंकरा राज्ञे कथयामासुरद्भुतम् । वैष्णवो हर्षमापेदे रघुनाथपरायणः ॥ ८७
मुक्तोऽसौ यमपाशाच्च गमिष्यति परं पदम् । तदाऽऽजगाम विमलं किङ्किणीजालमण्डितम् ॥ ८८
विमानं देवलोकात्तु मनोहारि महाद्भुतम् । तत्राऽऽरुह्य गतः स्वर्गं महापुण्यनिषेवितम् ॥ ८९
भोगान्भुक्त्वा सुविपुलानाजगाम महीतलम् । काश्यां जन्म समासाद्य शुचिवाडवसत्कुले ॥ ९०
आराध्य जगतामीशं गतवान्परमं पदम् । स पापी साधुसंगत्या शालग्रामशिलां स्पृशन् ॥ ९१
महापीडाविनिर्मुक्तो गतवान्परमं पदम् । मया तेऽभिहितं राजञ्शालग्रामशिलार्चनम् ॥
श्रुत्वा विमुच्यते पापैर्भुक्तिं मुक्तिं च विन्दति ॥ ९२

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे गण्डकीमाहात्म्यं नाम विंशोऽध्यायः ॥ २० ॥

आदितः श्लोकानां समष्ट्यङ्काः—११९९८

---

अथैकविंशतितमोऽध्यायः ।

---

सुमतिरुवाच—

एतन्माहात्म्यमतुलं गण्डक्याः कर्णगोचरम् । कृत्वा कृतार्थमात्मानममन्यत नृपोत्तमः ॥ १
स्नात्वा तीर्थे पितॄन्सर्वान्संतर्प्य जहृषे महान् । शालग्रामशिलापूजां कुर्वन्वाडववाक्यतः ॥ २
चतुर्विंशच्छिलास्तत्र गृहीत्वा स नृपोत्तमः । पूजयामास च प्रेम्णा चन्दनाद्युपचारकैः ॥ ३
तत्र दानानि दत्त्वा च दीनान्धेभ्यो विशेषतः । गन्तुं प्रचक्रमे राजा पुरुषोत्तममन्दिरम् ॥ ४
एवं क्रमेण संप्राप्तो गङ्गासागरसंगमम् । कृत्वाऽक्षिगोचरं तं च ब्राह्मणं पृष्टवान्मुदा ॥ ५
स्वामिन्वद कियद्दूरे नीलाख्यः पर्वतो महान् । पुरुषोत्तमसंवासः सुरासुरनमस्कृतः ॥ ६
तदा श्रुत्वा महद्वाक्यं रत्नग्रीवस्य भूपतेः । उवाच विस्मयाविष्टो राजानं प्रति सादरम् ॥ ७
राजन्नेतत्स्थलं नीलपर्वतस्य नमस्कृतम् । किमर्थं दृश्यते नैव महापुण्यफलप्रदम् ॥ ८
पुनः पुनरुवाचेदं स्थलं नीलस्य भूभृतः । कथं न दृश्यते राजन्पुरुषोत्तमवासभृत् ॥ ९
अत्र स्नातं मया सम्यगत्र +भिल्लाक्षिगोचराः । अनेनैव पथा राजन्नारूढः पर्वतोपरि ॥ १०

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः । + संधिरार्षः ।

---

१ द. °न् । भारते जन्मसंप्राप्याऽऽरा° । २ ग. ज. ठ. ण. त. थ. ध. °अन्गण्डकी चरितं महत् । श्रु° । छ. ड. °अन्गण्डकीचेष्टितं महत् । श्रु° ।

इति वाक्यं समाकर्ण्य विव्यथे मानसे नृपः । नीलभूधरदर्शाय कुर्वन्नुत्कण्ठितं मनः ॥ ११
उवाच च कथं विप्र दृश्येत पुरुषोत्तमः । कथं वा दृश्यते नीलस्तमुपायं वदस्व नः ॥ १२
तदा वाक्यं समाकर्ण्य रत्नग्रीवस्य भूपतेः । तापसब्राह्मणो वाक्यमुवाच नृप विस्मितः ॥ १३
गङ्गासागरसंयोगे स्नात्वाऽस्माभिर्महीपते । स्थातव्यं तावदेवात्र यावन्नीलो न दृश्यते ॥ १४
गीयते पापहा देवः पुरुषोत्तमसंज्ञितः । करिष्यते कृपामाशु भक्तवत्सलनामधृत् ॥ १५
त्यजत्यसौ न वा भक्तान्देवदेवशिरोमणिः । अनेके रक्षिता भक्तास्तद्ध्यायस्व महामते ॥ १६
इति वाक्यं समाकर्ण्य राजा व्यथितचेतसा । स्नात्वा गङ्गाब्धिसंयोगे ततोऽनशनमादधात् ॥ १७
करिष्यति कृपां यर्हि दर्शने पुरुषोत्तमः । पूजां कृत्वाऽशनं कुर्यामन्यथाऽनशनं व्रतम् ॥ १८
इति कृत्वा स नियमं गङ्गासागररोधसि । गायन्हरिगुणग्राममुपवासमथाऽऽचरत् ॥ १९

राजोवाच—

जय दीन दयाकर प्रभो जय दुःखापह मङ्गलाह्वय ॥
जय भक्तजनार्तिनाशककृतवर्ष्मञ्जय दुष्टघातक ॥ २०
अम्बरीषमथ वीक्ष्य दुःखितं विप्रशापहतसर्वमङ्गलम्[2] ॥
धारयन्निजकरे सुदर्शनं स्वं ररक्ष जठराधिवासैतः[3] ॥ २१
दैत्यराजपितृकारितव्यथः शूलपाशजलवह्निपातनैः ॥
श्रीनृसिंहतनुधारिणा त्वया रक्षितः सपदि पश्यतः पितुः ॥ २२
ग्राहवक्त्रपतिताङ्घ्रिमुद्भटं वारणेन्द्रमतिदुःखपीडितम् ।
वीक्ष्य साधु करुणार्द्रमानसस्त्वं गरुत्मति कृतारुहक्रियः ॥ २३
त्यक्तपक्षिपतिरात्तचक्रको वेगकम्पयुतमालिकाम्बरः ।
गीयसेऽसुभिरमुष्य नक्रतो मोचकः सपदि तद्विनाशकः ॥ २४
यत्र यत्र तव सेवकार्दनं तत्र तत्र बत देहधारिणा ।
पाल्यते[4]ऽत्र भवता त्वया निजः पापहारिचरितैर्मनोहरैः ॥ २५
दीननाथ सुरमौलिहीरकोद्धृष्टपादतल भक्तवल्लभ ।
पापकोटिपरदाहक प्रभो दर्शयस्व[5] मम पादपङ्कजम् ॥ २६
पापकृद्यदि जनोऽहमागतो मानसे तव तथा हि दर्शय ।
तावका वयमघौघनाशन विस्मृतं न हि सुरासुरार्चित ॥ २७
ये वदन्ति तव नाम निर्मलं ते तरन्ति सकलाघसागरम् ।
सत्स्तुतिर्यदि कृता तदा मया प्राप्यतां सकलदुःखहारक ॥ २८

सुमतिरुवाच—

एवं गायन्गुणान्रात्रौ दिवाऽपि च महीपतिः । क्षणमात्रं न विश्रान्तो निद्रामाप न वै सुखम् २९
गायन्गच्छन्पूर्णंस्तिष्ठन्वदत्येतदहर्निशम् । दर्शयस्व कृपानाथ स्वतनुं पुरुषोत्तम ॥ ३०
एवं राज्ञः पञ्चदिनं गतं गङ्गाब्धिसंगमे । तदा कृपाब्धिः कृपया चिन्तयामास गोपतिः ॥ ३१
असौ राजा मदीयेन गानेन विगताघकः । पश्यतान्मामकीं श्रेष्ठां सुरासुरनमस्कृताम् ॥ ३२

१ ण. ब. °र्महामते । २ ख. ग. छ. ज. ठ. ण. त. ध. °र्वसत्प्रभम् । ३ अ. °सनः । दै° । ४ ङ. °ते स्वपदसेवकस्त्वया पा° । ५ झ. °स्व निजदर्शनं मम । पा° ।

इति संचिन्त्य भगवान्कृपापूरितमानसः । संन्यासिवेषमास्थाय ययौ राज्ञोऽन्तिकं विभुः ॥ ३३
तत्र गत्वा महाराज त्रिदण्डी यतिवेषधृक् । भक्तानुकम्पया प्राप्तो वीक्षितस्तापसेन हि ॥ ३४
ओं नमो विष्णवेत्युक्त्वा नमश्चक्रे नृपोत्तमः । अर्घ्यैः पाद्यासनैः पूजां चकार हरिमानसः ॥ ३५
उवाच भाग्यमतुलं यद्भवानक्षिगोचरः । अतः परं दास्यते मे गोविन्दो निजदर्शनम् ॥ ३६
इति श्रुत्वा तु तद्वाक्यं संन्यासी निजगाद तम् । राजञ्शृणुष्व कथितं मम वाक्यं विनिःसृतम्॥
अहं ज्ञानेन जानामि भूतं भव्यं भवच्च यत् । तस्मादहं ब्रुवे किंचिच्छृणुष्वैकाग्रमानसः ॥ ३८
श्वो मध्याह्ने हरिर्दाता दर्शनं ब्रह्मदुर्लभम् । पञ्चभिः स्वजनैः सार्कं यास्यसे परमं पदम् ॥ ३९
त्वममात्यश्च महिला तव तापसवाडवः । पुरे तव करम्बाख्यः साधुश्च तन्तुवायकः ॥ ४०
एतैस्त्वं पञ्चभिस्तस्मिन्नीले पर्वतसत्तमे । यास्यसे ब्रह्मदेवेन्द्रवन्दिते सुरपूजिते ॥ ४१
इत्युक्त्वाऽदृश्यतां प्राप्तो यतिः क्वापि न दृश्यते । तदाकर्ण्य नृपो हर्षं प्राप चाऽऽशु सविस्मयम्

राजोवाच—

स्वामिन्कोऽसौ समागत्य संन्यासी मां यदूचिवान् । न दृश्यते पुनः कुत्र गतोऽसौ चित्तहर्षदः॥

तापस उवाच—

राजंस्तव महाप्रेम्णाऽऽकृष्टचित्तः समभ्यगात् । पुरुषोत्तमनामाऽयं सर्वपापप्रणाशनः ॥ ४४
श्वो मध्याह्ने पुरो भावी भविष्यति महागिरिः । तमारुह्य हरिं दृष्ट्वा कृतार्थस्त्वं भविष्यसि ॥४५
इति वाक्यसुधापूरनाशितस्वान्तसंज्वरः । हर्षं यमाप स नृपो ब्रह्मापि न हि वेत्ति तम् ॥ ४६
तदा दुन्दुभयो नेदुर्वीणापणवगोमुखाः । महानन्दस्तदा ह्यासीद्राजराजस्य चेतसि ॥ ४७
गायन्हरिं क्षणं तिष्ठन्नृत्यञ्जल्पन्हसन्ब्रुवन् । आनन्दं प्राप सुघनं सर्वसंतापनाशनम् ॥ ४८

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे संन्यासिदर्शनं नामैकविंशोऽध्यायः ॥ २१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२०४६

---

अथ द्वाविंशोऽध्यायः ।

---

सुमतिरुवाच—

अथ सर्वदिनं नीत्वा हरिस्मरणकीर्तनैः । रात्रौ सुष्वाप गङ्गाया रोधस्युरुफलप्रदे ॥ १
ददर्श स्वप्नमध्ये तु स स्वात्मानं चतुर्भुजम् । शङ्खचक्रगदापद्मशार्ङ्गकोदण्डधारिणम् ॥ २

नृत्यन्तं पुरुषोत्तमस्य पुरतः शर्वादिदेवैः सह
श्रीमद्भिः स्वतनूयुतैररिगदाम्बुत्थाब्जहेत्यादिभिः[2] ॥
विष्वक्सेनवरैर्गणैः स्वतनुभिः श्रीशं सदोपासितं
दृष्ट्वा विस्मयमाप लोकविषयं हर्षं तथाऽत्यद्भुतम् ॥ ३

ददतं मनसोऽभीष्टं पुरुषोत्तमसंज्ञितम् । आत्मानं च कृपापात्रममन्यत महामतिः ॥ ४
इत्येवं स्वप्नविषये ददर्श नृपसत्तमः । प्रातः प्रबुद्धो विप्राय जगाद स्वप्नमीक्षितम् ॥ ५

---

* संधिरार्षः ।

---

१ क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. ध. °धासिन्धुना° । २क. ख. ज. झ. थ. °भिः । गोत्तादिप्रव° । ग. छ. ठ. ध. °भिः । मोदादिप्रव° ।

तच्छ्रुत्वा बाडवो धीमान्कथयामास विस्मितः । राजंस्त्वयाऽसौ दृष्टो यः पुरुषोत्तमसंज्ञितः ॥६
दास्यते शङ्खचक्रादिचिह्नितां स्वतनुं हरिः । इति श्रुत्वा तु तद्वाक्यं रत्नग्रीवो महामनाः ॥ ७
दापयामास दानानि दीनानां मानसोचितम् । स्नात्वा गङ्गाब्धिसंयोगे तर्पयित्वा पितॄन्सुरान्
गायन्हरिगुणग्रामं प्रत्यैक्षत च दर्शनम् । ततो मध्याह्नसमये दिवि दुन्दुभयो मुहुः ॥ ९
जघ्नुः सुरकराघातबहुशब्दसुशब्दिताः । अकस्मात्पुष्पवृष्टिश्च बभूव नृपमस्तके ॥ १०
धन्योऽसि नृपवर्यस्त्वं नीलं पश्यासि गोचरम् । शृणोतीति यदा वाक्यं नृपो देवप्रणोदितम् ११
तदा स सूर्यकोटीनामधिकान्तिधरोऽद्भुतः । राज्ञोऽक्षिगोचरो जातो नीलनामा महागिरिः १२
राजतैः काञ्चनैः शृङ्गैः समन्तात्परिराजितः । किमग्निः प्रज्वलत्येष द्वितीयः किमु भास्करः १३
किमयं वैद्युतः पुञ्जो ह्यकस्मात्स्थिरकान्तिधृत् । तापसब्राह्मणो दृष्ट्वा नीलप्रस्थं सुशोभितम् १४
राज्ञे निवेदयामास एष पुण्यो महागिरिः । तच्छ्रुत्वा नृपतिश्रेष्ठः शिरसा प्रणनाम ह ॥ १५
धन्योऽस्मि कृतकृत्योऽस्मि नीलो मे दृष्टिगोचरः । अमात्यो राजपत्नी च करम्बस्तन्तुवायकः॥
नीलदर्शनसंहृष्टा बभूवुः पुरुषर्षभ । पञ्चैते विजये काले नीलपर्वतमारुहन् ॥ १७
महादुन्दुभिनिर्घोषाञ्शृण्वन्तो ह्यमरैः कृतान् । तस्योपरितने शृङ्गे चित्रपादपराजिते ॥ १८
ददर्श हाटकाबद्धं देवालयमनुत्तमम्[1] । ब्रह्माऽऽगत्य सदा पूजां करोति परमेष्ठिनः ॥ १९
नैवेद्यं कुरुते यत्र हरिसंतोषकारकम् । दृष्ट्वाऽथ तत्र विमलं देवायतनमद्भुतम् ॥ २०
प्रविवेश परीवारैः पञ्चभिः सह संवृतः । तत्र दृष्ट्वा जातरूपे महामणिविचित्रिते ॥ २१
सिंहासने विराजन्तं चतुर्भुजमनोहरम् । चण्डप्रचण्डविजयजयादिभिरुपासितम् ॥ २२
प्रणनाम सपत्नीको राजा सेवकसंयुतः । प्रणम्य परमात्मानं महाराजं नृपोत्तमः ॥ २३
स्नापयामास विधिवद्वेदोक्तैः स्नानमन्त्रकैः । अर्घ्यपाद्यादिकं चक्रे प्रीतेन मनसा नृपः ॥ २४
चन्दनेन विलिप्यैनं वस्त्रे च विनिवेद्य च । [ *धूपमारार्तिकं कृत्वा सर्वस्वादुमनोहरम् ॥ २५
नैवेद्यं भगवन्मूर्त्यै न्यवेदयदथो नृपः । प्रणम्य च स्तुतिं चक्रे तापसब्राह्मणेन च ] ॥ २६
यथामति गुणग्रामगुम्फितस्तोत्रसंचयैः ॥ २७

राजोवाच—

एकस्त्वं पुरुषः साक्षाद्भगवान्प्रकृतेः परः । कार्यकारणतो भिन्नो महत्तत्त्वादिपूजितः ॥ २८
त्वन्नाभिकमलाज्जज्ञे [ +ब्रह्मा सृष्टिविचक्षणः । तथा संहारकर्ता च ] रुद्रस्त्वन्नेत्रसंभवः ॥
त्वयाऽऽज्ञप्तः करोत्यस्य विश्वस्य परिचेष्टितम् ॥ २९
त्वत्तो जातं पुराणाद्यं जगत्स्थास्नु चरिष्णु च । चेतनाशक्तिमाविश्य त्वमेनं चेतयस्यहो ॥ ३०
तव जन्म तु नास्त्येव नान्तस्तव जगत्पते । वृद्धिक्षयपरीणामास्त्वयि सन्त्येव नो विभो ॥ ३१
तथाऽपि भक्तरक्षार्थं धर्मस्थापनहेतवे । करोषि जन्मकर्माणि ह्यनुरूपगुणानि च ॥ ३२
त्वया मात्स्यं वपुर्धृत्वा शङ्खस्तु निहतोऽसुरः । वेदाः सुरक्षिता ब्रह्मन्महापुरुष पूर्वज ॥ ३३
शेषो न वेत्ति मह ते भारत्यपि महेश्वरी । किमुतान्ये महाविष्णो मादृशास्तु कुबुद्धयः ॥ ३४
मनसा त्वां न चाऽऽप्नोति वागियं परमेश्वरी । तस्मादहं कथं त्वां वै स्तोतुं स्यामीश्वरः प्रभो ३५
इति स्तुत्वा स शिरसा प्रणाममकरोन्मुहुः । गद्गदस्वरसंयुक्तो रोमहर्षाङ्किताङ्गकः ॥ ३६

* एतच्चिह्नान्तर्गतः पाठः क. ख.ग.च.छ.भ.ठ.ड.ण.त.थ.द.ध. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठो द. पुस्तकस्थः ।

[1] द. °नमुत्तमम् ।

इति स्तुत्या प्रहृष्टात्मा भगवान्पुरुषोत्तमः । उवाच वचनं सत्यं राजानं प्रति सार्थकम् ॥ ३७
श्रीभगवानुवाच —
तव स्तुत्याऽतिहर्षोऽभून्मम राजन्महामते । जानीहि त्वं महाराज मां च प्रकृतितः परम् ॥ ३८
नैवेद्यभक्षणं त्वं हि शीघ्रं कुरु मनोहरम् । चतुर्भुजत्वं प्राप्तः सन्गन्तासि परमं पदम् ॥ ३९
त्वत्कृतस्तुतिरत्नेन यो मां स्तोष्यति मानवः । तस्यापि दर्शनं दास्ये भुक्तिमुक्तिप्रदं परम् ४०
इत्येवं वचनं राजा श्रुत्वा भगवतोदितम् । नैवेद्यभक्षणं चक्रे चतुर्भिः सह सेवकैः ॥ ४१
ततो विमानं संप्राप्तं किङ्किणीजालमण्डितम् । अप्सरोवृन्दसंसेव्यं सर्वभोगसमन्वितम् ॥ ४२
पुरुषोत्तमसंज्ञं च पश्यन्राजा स धार्मिकः । ववन्दे चरणौ तस्य कृपापात्रकृतात्मकः ॥ ४३
तदाज्ञया विमाने स आरुह्य महिलायुतः । जगाम पश्यतस्तस्य दिवि वैकुण्ठमद्भुतम् ॥ ४४
मन्त्री धर्मपरो राज्ञः सर्वधर्मविदुत्तमः । ययौ साकं विमानेन ललनावृन्दसेवितः ॥ ४५
तापसब्राह्मणस्तत्र सर्वतीर्थावगाहकः । चतुर्भुजत्वं संप्राप्तो ययौ देवैर्विमानिभिः ॥ ४६
करम्बोऽपि महाराज गानपुण्येन दर्शनम् । प्राप्तो ययौ सुरावासं सर्वदेवादिदुर्लभम् ॥ ४७
सर्वे प्रचलिता विष्णुलोकं परममद्भुतम् । चतुर्भुजाः शङ्खचक्रगदापाथोजधारिणः ॥ ४८
सर्वे मेघश्रियः शुद्धा लसदम्भोजपाणयः । हारकेयूरकटकैर्भूषिताङ्गा ययुर्दिवम् ॥ ४९
तद्विमानावलीर्दृष्ट्वा लोकैः प्रकृतिभिस्तदा । दुन्दुभीनां तु निर्घोषस्तैः कृतः कर्णगोचरः ॥ ५०
तदैको ब्राह्मणो ह्यासीद्विष्णुपादाब्जवल्लभः । गतस्तद्विरहाकृष्टचेता जातश्चतुर्भुजः ॥ ५१
तच्चित्रं वीक्ष्य ते लोकाः प्रशंसन्तो महोदयम् । गङ्गासागरसंयोगे स्नात्वाऽगुस्तं पुरं प्रति ॥ ५२
अहो भाग्यं भूमिपते रत्नग्रीवस्य सन्मतेः । जगामानेन देहेन तद्विष्णोः परमं पदम् ॥ ५३
राजन्नसौ नीलगिरिः पुरुषोत्तमसत्कृतः । यं वीक्ष्यैव व्रजन्त्यद्धा वैकुण्ठं परमायनम् ॥ ५४
एतन्नीलस्य माहात्म्यं यः शृणोति सुभाग्यवान् । यः श्रावयति लोकान्वै तौ गच्छेतां परं पदम् ५५
एतच्छ्रुत्वा तु दुःस्वप्नो नश्यति स्मृतिमात्रतः । प्रान्ते संसारनिस्तारं ददाति पुरुषोत्तमः ॥ ५६
योऽसौ नीलाधिवासी च स रामः पुरुषोत्तमः । सीता साक्षान्महालक्ष्मीः सर्वकारणकारणम् ५७
हयमेधं चरित्वा स लोकान्वै पावयिष्यति । यन्नाम ब्रह्महत्यायाः प्रायश्चित्ते प्रदिश्यते ॥ ५८
इदानीं त्वद्धयः प्राप्तो नीले पर्वतसत्तमे । पुरुषोत्तमदेवं त्वं नमस्कुरु महामते ॥ ५९
तत्र निष्पापिनो भूत्वा यास्यामः परमं पदम् । यस्य प्रसादाद्बहवो निस्तीर्णा भवसागरात् ६०
एवं प्रवदतस्तस्य प्राप्तोऽश्वो नीलपर्वतम् । वायुवेगेन पृथिवीं कुर्वन्संक्षुण्णमण्डलाम् ॥ ६१
तदा राजाऽपि तत्पृष्ठचारी नीलाभिधं गिरिम् । प्राप्तो गङ्गाब्धिसंयोगे स्नात्वाऽगात्पुरुषोत्तमम् ॥
स्तुत्वा नत्वा च तं देवं सुरासुरनमस्कृतम् । जातं कृतार्थमात्मानममन्यत स शत्रुहा ॥ ६३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे नीलगिरिमहिमवर्णनं नाम द्वाविंशोऽध्यायः ॥२२॥

आदितः श्लोकानां समष्ट्यङ्काः—१२१०९

---

अथ त्रयोविंशोऽध्यायः ।

---

शेष उवाच—
क्षणं स्थित्वा तृणान्यत्त्वा ययौ वाजी मनोजवः । वीरश्रेणीवृतः पत्रं भाले धृत्वा सचामरः १

१ द. °त्वाऽत्र लो°। २ ड. °गे पुण्यस्थाने शुभप्रदे । स्तु°।

शत्रुघ्नेन सुवीरेण लक्ष्मीनिधिनृपेण च । पुष्कलेनोग्रवाहेण प्रतापाग्र्येण रक्षितः ॥ २
ययौ पुरीं स चक्राङ्कां सुबाहुपरिरक्षिताम् । अनेकवीरकोटीभी रक्षितोऽनुगतः प्रभो ॥ ३
तदा पुत्रोऽस्य दमनो मृगयामास्थितो महान् । ददर्शाश्वं भालपत्रं चन्दनादिकचर्चितम् ॥ ४
विलोक्य सेवकं प्राह कस्याश्वो मेऽक्षिगोचरः । भाले पत्रं धृतं किं नु चामरं किं तु शोभनम् ॥ ५
इति राज्ञो वचः श्रुत्वा सेवकः प्रययौ ततः । यत्रासौ वर्तते वाजी भालपत्रसुशोभनः ॥ ६
गृहीत्वा तं केशसंघे रत्नमालाविभूषितम् । निनाय पार्श्वे भूपस्य सुबाहुकुलधारिणः ॥ ७
स पत्रं वाचयामास सुन्दराक्षरशोभनम् । अयोध्याधिपतिश्चाऽऽसीद्राजा दशरथो बली ॥ ८
तस्याऽऽत्मजो रामभद्रः सर्वशूरशिरोमणिः । नान्योऽस्ति तत्समः पृथ्व्यां धनुर्धरणविक्रमः ॥ ९
तेनासौ मोचितो वाजी चन्दनादिकचर्चितः । तं पालयति धर्मात्मा शत्रुघ्नः सर्ववीरहा ॥ १०
यस्य शूरा वयं वीरा धनुर्हस्ता वयं त्विति । ते गृह्णन्तु बलाद्वाहं रत्नमालाविभूषितम् ॥ ११
मोचयिष्यति शत्रुघ्नः सर्ववीरशिरोमणिः । अन्यथा पादयोस्तस्य प्रणतिं यान्तु धन्विनः ॥ १२
इत्यभिप्रायमालोक्य जगाद नृपनन्दनः । राम एव धनुर्धारी न वयं क्षत्रियाः स्मृताः ॥ १३
ताते मम स्थिते पृथ्व्यां कोऽयं गर्वो महान्भुवि । प्राप्नोतु गर्वस्य फलं मम निर्मुक्तसायकैः ॥ १४
अद्य मे निशिता बाणाः शत्रुघ्नं किंशुकं यथा । पुष्पितं विदधत्वद्धा क्षतावृतशरीरकम् ॥ १५
दारयन्तु कपोलांश्च सायका मम दन्तिनाम् । अश्वान्पश्यन्तु शतशो रुधिरौघपरिप्लुतान् ॥ १६
पिबन्तु योगिनीसंघा रुधिराणि नृमस्तकैः । शिवा भवन्तु संतुष्टा मद्वैरिक्रव्यभक्षणैः ॥ १७
पश्यन्तु सुभटास्तस्य मम बाहुबलं महत् । कोदण्डदण्डनिर्मुक्ताः शरकोटीर्विमुञ्चतः ॥ १८
इत्थमुक्त्वा महीपस्य तनुजो दमनाभिधः । स्वपुरं प्रेषयित्वा तं प्रहृष्टोऽभवदुद्भटः ॥ १९
सेनापतिमुवाचेदं सज्जीकुरु महामते । सेनां परिमितां मह्यं वैरिवृन्दनिवारणे ॥ २०
सज्जां सेनां विधायाऽऽशु संमुखो रणमण्डले । स्थितवान्यावदत्युग्रस्तावत्प्राप्ता हयानुगाः ॥ २१
क्वासौ हयो महाराज्ञो भालपत्रेण चिह्नितः । पप्रच्छुस्ते तु चान्योन्यमतिव्याकुलिता मुहुः ॥ २२
तावद्ददर्श पुरतः प्रतापाग्र्यः परंतपः । सज्जीभूतं तु कटकं वीरशब्दनिनादितम् ॥ २३
तत्रावदन्भटाः केचिन्नीतोऽश्वोऽनेन भूपते । अन्यथा संमुखस्तिष्ठेत्कथं वीरो बलानुगः ॥ २४
इत्याकर्ण्य प्रतापाग्र्यः प्रेषयामास सेवकम् । स गत्वा तत्र पप्रच्छ कुत्राश्वो रामभूपतेः ॥ २५
केन नीतः कुतो नीतो रामं जानाति नो कुधीः । यं शक्रप्रमुखा देवा बलिमादाय संनताः ॥ २६
तस्य वै धर्मराजस्य कुपितं तु बलं महत् । सर्वथा हि ग्रसिष्येत प्रणतिं चेन्न यास्यति ॥ २७
इत्थमुक्तं समाकर्ण्य तदा राजसुतो बली । तं वै धिक्कारयामास वाचां जालेन दुर्मनाः ॥ २८
मया नीतो यज्ञहयः पत्रचिह्नाद्यलंकृतः । ये शूरास्ते तु मां जित्वा मोचयन्तु बलादिह ॥ २९
सेवकस्तद्वचः श्रुत्वा रोषपूर्णो हसन्ययौ । राज्ञे निवेदयामास यथावदुपवर्णितम् ॥ ३०
तच्छ्रुत्वा रोषताम्राक्षः प्रतापाग्र्यो महाबलः । ययौ योद्धुं राजपुत्रं महावीरपुरस्कृतम् ॥ ३१
रथेन कनकाङ्गेन चतुर्वाजिसुशोभिना । सुकूबरेण सर्वास्त्रपूरितेन ययौ बली ॥ ३२
धनुष्टङ्कारयामास महाबलसमन्वितः । पुनः पुनर्जहासोच्चैः कोपादुद्भ्रमिताश्रुकः ॥ ३३
अश्वचारा गजारूढाः खड्गोल्लसितपाणयः । अन्वयुस्ते प्रतापाग्र्यं रोषपूर्णाकुलेक्षणम् ॥ ३४

---

१ ख. ग. छ. ज. ट. ड. ण. त. थ. द. ध. °घ्नः परवी° ।

हस्तिनः पत्तयश्चैव कोटिशः प्रधनोद्यताः । चिरकालमभीप्सन्तो रणं वीरेण कारितम् ॥ ३५
तदोद्यतं समाज्ञाय रिपुसैन्यं नृपात्मजः । प्रत्युज्जगाम वीराग्र्यो महाबलपरिवृतः ॥ ३६
संनद्धः कवची खड्गी शरासनधरो युवा । लीलयैव ययौ योद्धुं मृगराड्गजयूथकम् ॥ ३७
तदा योधाः प्रकुपिताः परस्परवधैषिणः । छिन्धि भिन्धीति भाषन्तो रणकार्यविशारदाः ॥ ३८
पत्तयः पत्तिसंघेन गजारूढाश्च सादिभिः । रथारूढा रथस्थैश्च वाहारूढाश्व+संस्थितैः ॥ ३९
गजा भिन्ना द्विधा जाता हयाश्च द्विदलीकृताः । अनेकैरक्तधाराभिर्मेदिनी पूरिता ह्यभूत् ॥ ४०
तदा प्रकुपितो राजा प्रताग्र्यो महाबलः । स्वसैन्यकदनोद्युक्तं राजपुत्रं समीक्ष्य च ॥ ४१
उवाच सारथिं तत्र प्रापयाश्वान्यतो मम । सैन्यस्य कदनासक्तो राजपुत्रो महाबलः[२] ॥ ४२
अथ वीरशिरोरत्ननमिताङ्घ्रिर्नृपात्मजः । ययौ संमुखमेवास्य प्रतापाग्र्यस्य वीर्यवान् ॥ ४३
सारथिः प्रापयामास प्रतापाग्र्यस्य वाजिनः । यत्रासौ दमनो वीरः सर्वशूरशिरोमणिः ॥ ४४
गत्वा तमाह्वयामास राजपुत्रं रणोद्यतम्[३] । रथे पुरटनिर्णिक्ते तिष्ठन्कोदण्डदण्डभृत् ॥ ४५
रे राजपुत्रक शिशो त्वया बद्धोऽश्वसत्तमः । न ज्ञातोऽस्ति महाराजः सर्ववीरेन्द्रसेवितः ॥ ४६
यस्य प्रतापं दैत्येन्द्रो न शक्तः सोढुमद्भुतम् । तस्य त्वं वाजिनं नीत्वाऽगमयः पुटभेदनम् ॥ ४७
मां जानीहि पुरः प्राप्तं कालरूपं तु [४]वैरिणम् । मुञ्चाश्वमर्भ गच्छाऽऽशु बालक्रीडनकं कुरु ॥ ४८
कस्याऽऽत्मजस्त्वं कुत्रत्यः कथं नोऽदीर्घदर्शिना । धृतोऽश्वस्त्वथ संजाता घृणा मम शिशो त्वयि ॥
इत्थमाकर्ण्य दमनः स्मितं चक्रे महामनाः । उवाच च प्रतापाग्र्यं तृणीकुर्वंश्च तद्बलम् ॥ ५०

दमन उवाच—

मया बद्धो बलादश्वो नीतश्च पुटभेदनम् । नार्पयिष्येऽद्य सप्राणः कुरु युद्धं महाबल ॥ ५१
त्वया यदुक्तं बालस्त्वं गत्वा क्रीडनकं कुरु । तन्मे पश्य महाराज क्रीडनं रणमूर्धनि ॥ ५२

शेष उवाच—

इत्युक्त्वा सगुणं चापं विधाय सुभुजाङ्गजः । शराणां शतमाधत्त प्रतापाग्र्यस्य वक्षसि ॥ ५३
संधाय बाणशतकं शङ्खं दध्मौ प्रतापवान् । तेन शङ्खनिनादेन कातराणां भयं त्वभूत् ॥ ५४
ताडयामास हृदये बाणानां शतकेन सः । प्रतापाग्र्यः प्रचिच्छेद लघुहस्तः सुपर्वणः ॥ ५५
स बाणच्छेदनं दृष्ट्वा कुपितो व्यसृजच्छरान् । कङ्कपक्षान्वितांस्तीक्ष्णान्भल्लान्राजात्मजो बली ॥
आकाशे भुवि मध्ये च बाणा ददृशिरेऽश्रितः[६] । स्वनामचिह्नितास्तीक्ष्णा धारापातसुशोभिताः ॥
शरास्ते बाहुहृदये[८] लग्ना वह्निकणान्बहून् । सृजन्तः कुर्वते सैन्यदाहनं तदभून्महत् ॥ ५८
प्रतापाग्र्यः प्रकुपितस्तिष्ठ तिष्ठेति च ब्रुवन् । शरेण दशसंख्येन ताडयामास मूर्धनि ॥ ५९
ते बाणा राजपुत्रस्य ललाटे परिनिष्ठिताः । विराजन्ते स्म च मुने दश शाखास्तरोरिव ॥ ६०
तेन बाणप्रहारेण विव्यथे न महामनाः । यष्टिकाप्रहतो यद्वत्कुञ्जरः सप्तवर्षकः ॥ ६१
बाणान्धनुषि संधाय मुमोच त्रिशताञ्शुभान् । सुवर्णपुङ्खरचितान्महाकालानलोपमान् ॥ ६२
ते बाणास्तु प्रतापाग्र्यवक्षो भित्त्वा गता ह्यधः । शोणिताक्ता यथा रामचन्द्रभक्तिपराङ्मुखाः ॥

---

\+ संधिरार्षः ।

---

१ द. °कनरमस्तिष्कैर्मे° । २ क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. ध. °लः । महाबलो वीराशिरोमणिभूतो नृपा° । ३ त. रणोद्यतः । ४ ग. छ. ठ. ड. थ. ध. वैरिणाम् । ५ क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. ध. °णां मनोऽपहृत् । ६ घ. ङ. झ. ट. ढ. °ताः । सुना° । ७ ङ. °राशत° । ८ ड. °हृजठरे ल° ।

प्रतापाग्र्यः प्रकुपितः शरान्मुञ्चन्सहस्रशः । [*अकरोद्विरथं सूनुं सुबाहोस्तत्क्षणाद्द्भुतम् ॥ ६४
चतुर्भिश्चतुरो वाहान्द्वाभ्यां ध्वजमशातयत् ] । एकेन सारथेः कायाच्छिरो मन्नामपातयत् ॥ ६५
चतुर्भिस्ताडयामास तं सूनुं नृपतेः पुनः । तत्क्षणाच्चापमेकेन गुणयुक्तं समच्छिनत् ॥ ६६
सोऽन्यं रथं समारुह्य हयरत्नसुशोभितम् । धनुः करे समादाय सज्जं चक्रे महामनाः ॥ ६७
प्रतापाग्र्यं प्रत्युवाच त्वया विक्रान्तमद्भुतम् । पश्येदानीं पराक्रान्तं धनुषो मम सङ्कट ॥ ६८
एवमुक्त्वा स दमनो बाणान्दश समाददे । चतुर्भिश्चतुरो वाहान्निनाय यमसादनम् ॥ ६९
चतुर्भिस्तिलशः कृत्तो रथश्चक्रसमन्वितः । एकेन हृदि विव्याध बाणेनैकेन सारथिम् ॥ ७०
जगर्ज शङ्खमापूर्य शङ्खशब्दसमन्वितः । तत्कर्म पूजयामास साधु वीर महाबल ॥ ७१
इति विक्रान्तमालोक्य प्रतापाग्र्यो रुषाऽन्वितः । अन्यं रथं समास्थाय ययौ योद्धुं नृपात्मजम् ७२
उवाच वीर पश्य त्वं मम विक्रान्तमद्भुतम् । इत्युक्त्वाऽऽशु मुमोचौघाञ्शराणां शितपर्वणाम् ७३
शराः सर्वत्र दृश्यन्ते कुञ्जरेषु हयेषु च । परब्रह्मेव सर्वत्र व्याप्ताश्चान्तरगोचराः ॥ ७४

तं राजपुत्रं शितबाणकोटिभिर्व्याप्तं विधायाऽऽशु जगर्ज विक्रमी ॥
संहर्षयन्स्वीयगणान्परान्महान्कुर्वन्हृदा शून्यतमान्गतासुकान् ॥ ७५
स राजपुत्रः शितसायकव्रजैः संपूर्णमात्मानमवेक्ष्य रोषितः ॥
जग्राह शस्त्राणि दुरन्तविक्रमो धनुश्च धुन्वन्भुजदण्डयोर्महान्[2] ॥ ७६

चकर्त सर्वाण्यस्त्राणि शस्त्राणि च महाबलः । एष ताम्रेक्षणो मुञ्चञ्शरान्वैरिविदारिणः ॥ ७७
तच्छस्त्रजालं निर्धूय राजपुत्रो जगाद तम् । क्षमस्वैकं प्रहारं मे यदि शूरोऽसि मारिष ॥ ७८
यद्यनेन भवन्तं वै रथाच्च पातयामि न । प्रतिज्ञां शृणु मे वीर मम गर्वेण निर्मिताम् ॥ ७९
वेदं निन्दन्ति ये मत्ता हेतुवादविचक्षणाः । तेषां पापं ममैवास्तु नरकार्णवमज्जकम् ॥ ८०
इत्युक्त्वा बाणमाधत्त कोदण्डे कालसंनिभम् । ज्वालामालाकुलं तीक्ष्णं निषङ्गादुद्धृतं वरम् ॥ ८१
स मुक्तो नृपवर्येण हृदि लक्षीकृतः(ते) शरः । जगाम तरसा तं वै कालानलसमप्रभः ॥ ८२
प्रतापाग्र्यः शरं दृष्ट्वा स्वपातनसमुद्यतम् । बाणान्धनुष्यथाऽऽधत्त शरच्छेदाय वै शितान् ॥ ८३
स बाणः सर्वबाणांस्तांश्छिन्दन्मध्यत एव हि । जगामैव प्रतापाग्र्यहृदयं धैर्यसंयुतम् ॥ ८४
स लग्नो हृदि नालीको विवेश तदनन्तरम् । राजा कृतप्रहारस्तु पपात पृथिवीतले ॥ ८५
मूर्छितं चेतनाहीनं रथोपस्थाद्गतं भुवि । सारथिस्तं समादायापोवाह रणमण्डलात् ॥ ८६
हाहाकारो महानासीद्बलं भग्नं गतं ततः । यत्र शत्रुघ्ननामाऽसौ वीरकोटिपरिवृतः ॥ ८७
राजात्मजो जयं प्राप्य प्रतापाग्र्यं विजित्य सः । प्रतीक्षां तु चकारास्य शत्रुघ्नस्य च भूपतेः ८८

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे राजपुत्रयुद्धकथनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२१९७

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थ. ।

---

१ ड. °क्त्वा स मु° । २ ग. ठ. ड. ध. °र्महत् । च° । ३ ग. छ. ड. °गाम तूर्णमेवास्य हृ° । ४ च. झ. ण. द. चमूप° ।

अथ चतुर्विंशोऽध्यायः ।

शेष उवाच—

शत्रुघ्नस्तु क्रुधाऽऽविष्टो दन्तान्दन्तैर्विनिष्पिषन् । हस्तौ धुन्वँल्लिहानोऽयमधरं जिह्वयाऽसकृत् ॥ १
पुनः पुनस्तान्पप्रच्छ केनाश्वो नीयते मम । प्रतापाग्र्यः केन जितः सर्वशूरशिरोमणिः ॥ २
सेवकास्ते तदा प्रोचुर्दमनो नाम शत्रुहन् । सुबाहुजः प्रतापाग्र्यं जितवान्हयमाहरत् ॥ ३
इति श्रुत्वा हयं नीतं दमनेन स्ववैरिणा । आजगाम स वेगेन यत्राभूद्रणमण्डलम् ॥ ४
तत्रापश्यत्स शत्रुघ्नो गजान्दीर्णकपोलकान् । पर्वतानिव रक्तोदे मज्जमानान्मदोद्धतान् ॥ ५
हयास्तत्र निजारोहकर्तृभिः सहिताः क्षताः । मृता वीरेण दद्दशिरे शत्रुघ्नेन सुकोपिना ॥ ६
नराश्रथान्गजान्भग्नान्वीक्षमाणः स शत्रुहा । अतीव चुक्षुभे यद्वत्प्रलये प्रलयार्णवः ॥ ७
पुरतो दमनं वीक्ष्य हयनेतारमुद्भटम् । प्रतापाग्र्यस्य जेतारं तृणीकृत्य निजं बलम् ॥ ८
तदा राजा प्रत्युवाच योधान्कोपाकुलेक्षणः । कोऽसौ दमनजेताऽत्र सर्वशस्त्रास्त्रधारकः ॥ ९
यो वै राजसुतं वीरं रणकर्मविशारदम् । जेष्यत्यस्त्रेण निर्भीतिः सज्जीभूतो भवत्वयम् ॥ १०
इति वाक्यं समाकर्ण्य पुष्कलः परवीरहा । दमनं जेतुमुद्युक्तो जगाद वचनं त्विदम् ॥ ११
स्वामिन्कायं दमनकः क्व तेऽपरिमितं बलम् । जेष्येऽहं त्वत्प्रतापेन गच्छाम्येष महामते ॥ १२
सेवके मयि युद्धाय स्थिते कैर्नीयते हयः । रघुनाथप्रतापोऽयं सर्वं कृत्यं करिष्यति ॥ १३
स्वामिञ्शृणु प्रतिज्ञां मे तव मोदप्रदायिनीम् । विजेष्ये दमनं युद्धे रणकर्मविचक्षणम् ॥ १४
रामचन्द्रपदाम्भोजमध्वास्वादवियोगिनाम् । यदघं तु भवेत्तन्मे दमनं न जये यदि ॥ १५
पुत्रो यो मातृपादान्यत्तीर्थं मत्वा तया सह । विरुध्येत्तत्तमो मह्यं न जये दमनं यदि ॥ १६
अद्य मद्बाणनिर्भिन्नमहोरस्को नृपाङ्गजः । अलंकरोतु प्रधने भूतलं शयनेन हि ॥ १७

शेष उवाच—

इति प्रतिज्ञामाकर्ण्य पुष्कलस्य रघूद्वहः । जहर्ष चित्ते तेजस्वी निदिदेश रणं प्रति ॥ १८
आज्ञप्तोऽसौ ययौ सैन्यैर्बहुभिः परिवारितः । यत्राऽऽस्ते दमनो राजपुत्रः शूरकुलोद्भवः ॥ १९
दमनोऽपि तमाज्ञाय ह्यागतं रणमण्डले । प्रत्युज्जगाम वीराग्र्यः स्वसैन्यपरिवारितः ॥ २०
अन्योन्यं तौ संमिलितौ रथस्थौ रथशोभिनौ । समरे शक्रदैत्यौ किं युद्धार्थं रणमागतौ ॥ २१
उवाच पुष्कलस्तं वै राजपुत्रं महाबलम् । राजपुत्र दमनक मां जानीहि समागतम् ॥ २२
सप्रतिज्ञं तु युद्धाय भरतात्मजमुद्भटम् । पुष्कलेन स्वनाम्ना च लक्षितं विद्धि सत्तम ॥ २३
रघुनाथपदाम्भोजनित्यसेवामधुव्रतम् । त्वां जेष्ये शस्त्रसंधेन सज्जीभव महामते ॥ २४
इति वाक्यं समाकर्ण्य दमनः परवीरहा । प्रत्युवाच हसन्वाग्ग्मी निर्भयो दृष्टविक्रमः ॥ २५
सुबाहुपुत्रं दमनं पितृभक्तिहृताघकम् । विद्धि मामश्वनेतारं शत्रुघ्नस्य महीपतेः ॥ २६
जयो दैवविसृष्टोऽयं यस्य चालंकरिष्यति । स प्राप्नोति निरीक्षस्व बलं मे रणमूर्धनि ॥ २७
इत्युक्त्वा सशरं चापं विधायाऽऽकर्णपूरितम् । मुमोच बाणान्निशितान्वैरिप्राणापहारिणः ॥ २८
ते बाणास्त्वावलीभूताश्छादयामासुरम्बरम् । सूर्यभानुप्रभा यत्र बाणच्छायानिवारिता ॥ २९

---

१ ख. द. क्षित्तौ । २ ङ. °यानलः । पु° । ३ क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. द. °म् । सैनिकैः सह स्याता° । ४ थ. °क्तिपरायणम् । ५ ख. ग. छ. ज. ठ. ड. ण. ध. °णास्तु खिली° ।

गजानां कटभित्तिषु लग्ना सायकसंततिः । अलंकरोति धातूनां रागा इव विचित्रिताः ॥ ३०
पतितास्तत्र दृश्यन्ते नरा वाहा गजा रथाः । शरव्रातेन नृपतेः सुतेन परिताडिताः ॥ ३१
तद्विक्रान्तं समालोक्य पुष्कलः परवीरहा । शराणां छायया व्याप्तं रणमण्डलमीक्ष्य+ च ॥ ३२
शरासने समाधत्त बाणं वह्न्यभिमन्त्रितम् । आचम्य सम्यग्विधिवन्मोचयामास सायकम् ॥३३
ततोऽग्निः प्रादुरभवत्तत्र संग्राममूर्धनि । ज्वालाभिर्विलिहन्व्योम प्रलयार्चिरिवोत्थितः ॥ ३४
ततोऽस्य सैन्यं निर्दग्धं त्रासं प्राप्तं रणाङ्गणे । पलायनपरं जातं वह्निज्वालाभिपीडितम् ॥ ३५
छत्राणि संप्रदग्धानि चन्द्राकाराणि भूभृताम् । दृश्यन्ते जातरूपस्य कान्तिधारीणि तत्र ह ॥३६
हया दग्धाः पलायन्ते केसरेषु तु वैरिणाम् । रथा अपि गदा(ता)दाहं सुकूबरसमन्विताः ॥ ३७
मणिमाणिक्यरत्नानि वहन्तः करभास्ततः । पलायन्ते च दहनज्वालामालाभिपीडिताः ॥ ३८
कुत्रचिद्दन्तिनो नष्टाः कुत्रचिद्धयसादिनः । कुत्रचित्पत्तयो नष्टा वह्निदग्धकलेवराः ॥ ३९
शराः सर्वे नृपसुतप्रमुक्ताः प्रलयं गताः । आशुशुक्षणिकीलाभिर्भस्मीभूताः समन्ततः ॥ ४०
तदा स्वसैन्ये दग्धे च दमनो रोषपूरितः । तच्छान्त्यर्थं च सर्वास्त्रविद्वारुणमथाऽऽददे ॥ ४१
वारुणं वह्निशान्त्यर्थं मुक्तं तेन महीभृता । आप्लावयद्बलं तस्य रथवाजिसमाकुलम् ॥ ४२
रथा विप्लाविता येन दृश्यन्ते परिपन्थिनाम् । गजाश्चापि परिप्लुष्टाः स्वीयाः शान्तिमुपागताः ४३
वह्निश्च शान्तिमगमदग्न्यस्त्रपरिमोचितः । शान्तिमाप बलं स्वीयं वह्निज्वालाभिपीडितम् ॥ ४४
कम्पिताः शीततोयेन शीत्कुर्वन्ति च वैरिणः । करकावृष्टिभिः क्षिप्ता वायुना च प्रपीडिताः॥४५
तदा स्वबलमालोक्य तोयपूरप्रपीडितम् । कम्पितं क्षुभितं नष्टमग्न्यस्त्रं वारुणाहतम् ॥ ४६
तदाऽतिकोपताम्राक्षः पुष्कलो भरतात्मजः । वायव्यास्त्रं समाधत्त धनुष्येकं महाशरम् ॥ ४७
ततो वायुर्महानासीद्वायव्यास्त्रप्रचोदितः । नाशयामास वेगेन घनानीकमुपस्थितम् ॥ ४८
[ *वायुनाऽऽस्फालिता नागाः परस्परसमाहताः । अश्वाश्च संहतान्योन्यं स्वस्वारोहसमन्विताः॥
नराः प्रभञ्जनोद्धूता मुक्तकेशा निरौजसः । पतन्तोऽत्र समीक्ष्यन्ते वेताला इव भूगताः] ॥ ५०
वायुना स्वबलं सर्वं परिभूतं विलोक्य सः । राजपुत्रः पर्वतास्त्रं धनुष्युच्चैः समादधे ॥ ५१
तदा तु पर्वताः पेतुर्मस्तकोपरि युध्यताम् । वायुः संछादितस्तैस्तु न प्रचक्राम कुत्रचित् ॥ ५२
पुष्कलो वज्रसंज्ञं तु समाधत्त शरासने । वज्रेण कृत्तास्ते सर्वे जाताश्च तिलशः क्षणात् ॥ ५३
वज्रं नगान्रजःशेषान्कृत्वा बाणेऽभिमन्त्रितम् । राजपुत्रोरसि प्रोच्चैः पपात विनदन्भृशम् ॥ ५४
स त्वाकुलितचेतस्को हृदि विद्धः क्षतो भृशम् । विव्यथे बलवान्वीरः कश्मलं परमाप सः ॥५५
तं वै कश्मलितं दृष्ट्वा सारथिर्नयकोविदः । अपोवाह रणात्तस्मात्क्रोशमात्रं नरेन्द्रजम् ॥ ५६
ततो योधा राजसूनोः प्रनष्टाः प्रपलायिताः । गत्वा पुरीं समाचख्युः कश्मलस्थं नृपात्मजम्५७
पुष्कलो जयमाप्यैवं रणमूर्धनि धर्मवित् । न प्रहर्तुं पुनः शक्तो रघुनाथवचः स्मरन् ॥ ५८
ततो दुन्दुभिनिर्घोषो जयशब्दो महानभूत् । साधु साध्विति वाचश्च प्रावर्तन्त मनोहराः ॥ ५९
हर्षं प्राप स शत्रुघ्नो जयिनं वीक्ष्य पुष्कलम् । प्रशशंस सुमत्यादिमन्त्रिभिः परिवारितः ॥ ६०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे पुष्कलविजयो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२२५७

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. द. ध. पुस्तकस्थः । + आर्षत्वात्साधु ।

१ छ. ड. °रिवारिताः । २ क. ख. ग. छ. ज. झ. ठ. ड. ण. ध. °त नगवद्धृ° ।

अथ पञ्चविंशोऽध्यायः ।

---

शेष उवाच—

अथ वीक्ष्य भटाग्निजान्नृपो रुधिरौघेन परिप्लुताङ्गकान् ।
शमयन्निव तच्छुचोऽथ तान्परिपप्रच्छ सुतस्य चेष्टितम् ॥ १
गदताखिलकर्म तस्य वै स कथं चाहरदश्ववर्यकम् ।
कथयन्तु पुनः कियद्बलं बत वीराः कति युद्धलालसाः ॥ २
अथ शत्रुबलोन्मुखः कथं मम वीरो दमनो रणं व्यधात् ।
विजयं च विधाय दुर्जयं किल वीरं बत कोऽप्यशातयत् ॥ ३
इत्याकर्ण्य वचो राज्ञः प्रत्यूचुस्तेऽस्य सेवकाः । क्षतजेन परिक्लिन्नगात्रवस्त्रादिधारिणः ॥ ४
राजश्वं समालोक्य पत्रचिह्नाद्यलंकृतम् । ग्राहयामास गर्वेण तृणीकृत्य रघूद्वहम् ॥ ५
ततो हयानुगः प्राप्तः स्वल्पसैन्यसमावृतः । तेन साकमभूद्युद्धं सुमहल्लोमहर्षणम् ॥ ६
तं मूर्छितं ततः कृत्वा तव पुत्रः स्वसायकैः । यावत्तिष्ठत्यथाऽऽयातः शत्रुघ्नः स्वबलैर्वृतः ॥ ७
ततो युद्धं महदभूच्छस्त्रास्त्रपरिबृंहितम् । बहुशो जयमापेदे तव पुत्रो महाबलः ॥ ८
इदानीं मुक्तमस्त्रं तु शत्रुघ्नभ्रातृसूनुना । मूर्छितः प्रधने राजन्कृतो वीर सुतस्तव ॥ ९
इति वाक्यं समाकर्ण्य रोषशोकपरिप्लुतः । स्थगिताङ्ग इवाऽऽसीत्स समुद्र इव पर्वणि ॥ १०
उवाच सेनाधिपतिं रोषप्रस्फुरिताधरः । दन्तैर्दन्तांल्लिहन्नोष्ठं जिह्वया शोककर्शितः ॥ ११
सेनापते कुरुष्वाऽऽरान्मम सेनां तु सज्जिताम् । योत्स्ये रामस्य सुभटैर्मम पुत्रोपघातकैः ॥ १२
अद्याहं मम पुत्रस्य दुःखदं निशितैः शरैः । भेदयामि यदि ह्येनं रक्षिताऽपि महेश्वरः ॥ १३
सेनापतिरिदं वाक्यं प्रोक्तं सुभुजभूपतेः । निशम्य च तथा कृत्वा सज्जीभूतोऽभवत्स्वयम् ॥१४
राज्ञे निवेदयामास सज्जां स चतुरङ्गिणीम् । सेनां कालबलप्रख्यां हतदुर्जनकोटिकाम् ॥ १५
श्रुत्वा सेनापतेर्वाक्यं सुबाहुः परवीरहा । निर्जगाम ततो यत्र शत्रुघ्नः स्वसुतार्दनः ॥ १६
कुञ्जरैश्च मदोन्मत्तैर्हयैश्चापि मनोजवैः । नरैश्च सर्वशस्त्रास्त्रपूरितै रिपुजेतृभिः ॥ १७
भूश्चकम्पे तदा तत्र सैन्यभारेण पीडिता । संमर्दः सुमहानासीत्तत्र सैन्ये विसर्पति ॥ १८
राजानं निर्गतं दृष्ट्वा रथेन कनकाङ्गिना । शत्रुघ्नसैन्यमुद्युक्तं सर्ववैरिप्रहारकम् ॥ १९
सुकेतुस्तस्य वै भ्राता गदायुद्धविशारदः । रथेनाऽऽशु जगामार्यं सर्वशस्त्रास्त्रपूरितः ॥ २०
चित्राङ्गस्तु सुतो राज्ञः सर्वयुद्धविचक्षणः । जगाम स्वरथेनाऽऽशु शत्रुघ्नबलमुन्मदम् ॥ २१
तस्यानुजो विचित्राख्यो विचित्ररणकोविदः । ययौ रथेन हैमेन भ्रातुर्दुःखेन पीडितः ॥ २२
अन्ये शूरा महेष्वासाः सर्वशस्त्रास्त्रकोविदाः । ययुर्नृपसमादिष्टाः प्रधनं वीरपूरितम् ॥ २३
राजा सुबाहुः संरोषादागतः प्रधनाङ्गणे । विलोकयामास सुतं मूर्छितं शरपीडितम् ॥ २४

---

१ ख. ग. ज. ठ. ण. त. थ. द. ध. °न् । सुखमाप न वै शुशोच ता° । २ ख. द. °ति योद्धुमागताः । अ° । ३ द
°त्रुघ्नभ्रातृपुत्रकः । त° । ४ ग. छ. ठ. ध. °दानीं तेन मुक्ताश्चक्षतहृन्नृपतेः सुतः । अलं करोति प्रधनं सर्ववीरैः सुसेवि
तम् । इ° । क. ख. ञ. ड. ण. त. थ. °दानीं तेन मुक्ताश्चक्षतहृन्नृपते सुतः । अकरोत्प्रधनं राजन्सर्ववीरैः सुसेवितम्
इ° । ५ ड. °ने तेन कृतो । ६ छ. ड. ण. °ष्वाद्य मम । ७ ड. °नकण्टका° । ८ द. रथैश्च । ९ छ. ड. ता महायु

रथोपस्थस्थितं मूढं स्वसुतं दमनाभिधम् । वीक्ष्य दुःखं मुहुः प्राप वीजयामास पल्लवैः ॥ २५
जलेन सिक्तः संस्पृष्टो राज्ञा कोमलपाणिना । संज्ञामाप शनैर्वीरो दमनः परमास्त्रवित् ॥ २६
उत्थितः क्व धनुर्मेऽस्ति क्व पुष्कल इतो गतः । संसज्य समरं त्यक्त्वा महाबाणव्रणपीडितः ॥ २७
इति वाक्यं समाकर्ण्य सुबाहुः पुत्रभाषितम् । परमं हर्षमापेदे परिरभ्य सुतं स्वकम् ॥ २८
दमनो वीक्ष्य जनकं त्रपानम्रशिरोधरः । पपात पादयोर्भक्त्या क्षतदेहोऽस्त्रराजिभिः ॥ २९
स्वसुतं रथसंस्थं तु विधाय नृपतिः पुनः । जगाद सेनाधिपतिं रणकर्मविशारदः ॥ ३०
व्यूहं रचय संग्रामे क्रौञ्चाख्यं रिपुदुर्जयम् । यमाविश्य जये सैन्यं शत्रुघ्नस्य महीपतेः ॥ ३१
तद्वाक्यमाकर्ण्य सुबाहुभूपतेः क्रौञ्चाख्यसुव्यूहविशेषमादधात् ॥
यं नो विशन्ते सहसा रिपोर्गणा महाबलाः शस्त्रसमूहधारिणः ॥ ३२
मुखे सुकेतुस्तस्याऽऽसीद्गले चित्राङ्गसंज्ञकः । पक्षयो राजपुत्रौ द्वौ पुच्छे राजा प्रतिष्ठितः ॥ ३३
मध्ये सैन्यं महत्तस्य चतुरङ्गसुशोभितम् । कृत्वा न्यवेदयद्राज्ञे क्रौञ्चव्यूहं विचित्रितम् ॥ ३४
दृष्ट्वा राजा सुसंनद्धं क्रौञ्चव्यूहं विनिर्मितम् । रणाय स्वमतिं चक्रे शत्रुघ्नकटके स्थितैः ॥ ३५

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सुबाहुसैन्यसमागमो नाम पञ्चविंशोऽध्यायः ॥२५॥

आदितः श्लोकानां समष्ट्यङ्काः—१२२९२

---

अथ षड्विंशोऽध्यायः ।

---

शेष उवाच—

शत्रुघ्नस्तद्बलं दृष्ट्वा भीषणाकृति मेघवत् । हस्त्यश्वरथपादातैर्बहुभिः परिवारितम् ॥ १
सुमतिं प्रत्युवाचेदं वचो गम्भीरशब्दयुक् । नानावाक्यविचारज्ञैः पण्डितैः परिसेवितः ॥ २

शत्रुघ्न उवाच—

सुमते कस्य नगरं प्राप्तो मे हयसत्तमः । बलमेतन्निरीक्ष्येत पयोदधितरङ्गवत् ॥ ३
कस्यैतद्बलमुद्धर्षं चतुरङ्गसमन्वितम् । पुरतो भाति युद्धाय समुपस्थितमादरात् ॥ ४
एतत्सर्वं समाचक्ष्व यथावत्पृच्छतो मम । यज्ज्ञात्वा युद्धसंस्थायै निर्दिशामि स्वकान्भटान् ॥ ५
इति वाक्यं समाकर्ण्य सुमतिः शुभबुद्धिमान् । उवाच वचनं प्रीतः शत्रुघ्नं वैरितापनम् ॥ ६

सुमतिरुवाच—

चक्राङ्का नगरी राजन्वर्तते सविधे शुभा । यस्यां सन्ति नराः पापरहिता विष्णुभक्तितः ॥ ७
तस्याः पुर्याः पतिरयं सुबाहुर्धर्मवित्तमः । तवायं पुरतो भाति पुत्रपौत्रसमावृतः ॥ ८
स्वदारनिरतो नित्यं परदारपराङ्मुखः । विष्णोः कथाऽस्य कर्णस्था न चान्यार्थप्रकाशिनी ॥ ९
परस्वं न समादत्ते षष्ठांशादधिकं नृपः । ब्राह्मणा विष्णुभक्त्यैव पूज्यन्ते तेन धर्मिणा ॥ १०
नित्यं सेवारतो विष्णुपादपद्ममधुव्रतः । एष स्वधर्मनिरतः परधर्मपराङ्मुखः ॥ ११
एतस्य बलतुल्यं हि न वीराणां बलं क्वचित् । पुत्रस्य पतनं श्रुत्वा रोषशोकसमाकुलः ॥ १२

---

१ क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. इतः स्मृतः । २ क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. ध. °तः । क गतः स° । ३ ख. ग. छ. ण. त. थ. द. °व्रजपी° । ४ ज. त. थ. °रदम् । व्यू° । ५ क. ख. ज. ञ. °केऽमितैः । ग. छ. ठ. ड. ण. ध. °केऽमिते । ६° ।

चतु [illegible] युद्धाय समुपस्थितः । तत्रापि वीरा बहवो लक्ष्मीनिधिमुखा अमून् ॥ १३
जेत [illegible] शस्त्रसंघेन निर्दिशाऽऽशु परं हितान् । शत्रुघ्नस्तद्वचः श्रुत्वा प्रोवाच सुभटान्वरान् ॥ १४
रण[illegible]भिभवोद्धर्षपूरपूरितमानसान् । क्रौञ्चव्यूहोऽद्य रचितः सुबाहुपरिसैनिकैः ॥ १५
मुखपक्षस्थिता योधास्तान्को भेत्स्यति शस्त्रवित् । यस्य भेदे निजा शक्तिर्यो वीरविजयोद्यतः ॥ १६
स गृह्णातु मदीयाद्धि पाणिपद्माच्च वीटकम् । तदा लक्ष्मीनिधिर्वीरो जग्राह क्रौञ्चभेदने ॥ १७
[*सर्वशस्त्रास्त्रविद्वीरैर्बहुभिः परिवारितः । उवाच वचनं राजन्यास्येऽहं क्रौञ्चभेदने ॥ १८
भार्गवः पूर्वमेवाऽऽसीत्क्रौञ्चभेत्ता तथा ह्यहम् । तथाऽन्यवीरमावोचत्कोऽस्य सार्धं गमिष्यति १९
पुष्कलः पृष्ठतो यस्य गन्तुं चक्रे मतिं ततः । रिपुतापो नीलरत्न उग्रास्यो वीरमर्दनः ॥ २०
सर्वे शत्रुघ्ननिदेशाद्ययुस्ते क्रौञ्चभेदने । शत्रुघ्नोऽपि रथे संस्थः सर्वायुधधरः परः ॥ २१
पृष्ठतोऽस्य परीयाय बहुभिः सैनिकैर्वृतः । तदा प्रचलितौ दृष्टावन्योन्यबलवारिधी ॥ २२
प्रलयं कर्तुमुद्युक्तौ जगतः सुतरङ्गिणौ । तदा भेर्यः समाजघ्नुरुभयोः सेनयोर्दृढाः ॥ २३
रणभेर्यः शङ्खनादाः श्रूयन्ते तत्र तत्र ह । हेषन्ते वाजिनस्तत्र गर्जन्ति द्विरदा भृशम् ॥ २४
हुंहुं कुर्वन्ति वीराग्र्या नदन्ति रथनेमयः । तत्र वीराः प्रकुपिताः सुबाहुबलदर्पिताः ॥ २५
छिन्धि भिन्धीति भाषन्तो दृश्यन्ते बहवो रणे । एवंभूते रणोद्युक्ते सैन्ये शत्रुघ्नवैरिणोः ॥ २६
मुखसंस्थं सुकेतुं तं लक्ष्मीनिधिरुवाच ह ॥ २७

लक्ष्मीनिधिरुवाच—

जनकस्य सुतं विद्धि लक्ष्मीनिधिरिति स्मृतम् । सर्वशस्त्रास्त्रकुशलं सर्वयुद्धविशारदम् ॥ २८
मुञ्चाश्वं रामचन्द्रस्य सर्वदानवदंशितुः । नो चेन्मद्बाणनिर्भिन्नो यास्यसे यमसादनम् ॥ २९
इति ब्रुवन्तं वीराग्र्यं सुकेतुस्तरसा बली । सज्जं चापं विधायाऽऽशु बाणान्मुञ्चन्रणेऽभवत् ॥ ३०
ते बाणाः शितपर्वाणः स्वर्णपुङ्खाः समन्ततः । दृश्यन्ते व्यापिनस्तत्र रणमध्ये सुदुर्भराः ॥ ३१
तद्बाणजालं तरसा निहत्य लक्ष्मीनिधिश्चापमथाऽऽततज्यम् ॥
विधाय तस्योरसि बाणषट्कं मुमोच तीक्ष्णं शितपर्वशोभितम् ॥ ३२
ते बाणाः सुभुजभ्रातुर्हृदयं संविदार्य च । गतास्तु भुवि दृश्यन्ते रुधिराक्तमलीमसाः ॥ ३३
तद्बाणभिन्नहृदयः सुकेतुः कोपपूरितः । जघान शरविंशत्या तीक्ष्णया नतपर्वया ॥ ३४
उभौ बाणविभिन्नाङ्गावुभौ क्षतजविप्लुतौ । सैनिकैः परिदृश्यन्ते किंशुकाविव पुष्पितौ ॥ ३५
मुञ्चन्तौ बाणकोटीश्च दधतौ तरसा शरान् । केनापि न विलक्ष्येते लघुहस्तौ महाबलौ ॥ ३६
कुण्डलीकृतसच्चापौ वर्षन्तौ बाणधारया । नवाम्बुदाविव दिवि शक्रनिर्देशकारिणौ ॥ ३७
तयोर्बाणा गजान्वाहान्नराञ्शूरान्विमस्तकान् । कुर्वन्तः केवलं दृष्टा न च संधानमोक्षणे ॥ ३८
पृथिवी सुभटैः पूर्णा सकिरीटैः सकुण्डलैः । धनुर्बाणकरै रोषसंदष्टाधरयुग्मकैः ॥ ३९
तयोः प्रयुध्यतोर्दर्पात्सर्वशस्त्रास्त्रवेदिनोः । युद्धं समभवद्धोरं देवविस्मापनं महत् ॥ ४०
संमर्दोऽभवदत्यन्तं वीरकोटिविघातनः । न केनचित्क्वचिद्दृष्टं शरजालान्तरेऽम्बरम् ॥ ४१
तस्मिंस्तु समये लक्ष्मीनिधिर्वीरोऽरिमर्दनः । बाणांश्चापे समाधत्त वसुसंख्यान्दृढाञ्शितान् ॥ ४२
चतुर्भिस्तुरगान्वीरः सुकेतोरनयत्क्षयम् । एकेन ध्वजमत्युग्रं चिच्छेद तरसा हसन् ॥ ४३

* एतच्चिह्नान्तर्गतः पाठः, ग. छ. ड. द. पुस्तकस्थः ।

एकेन सारथेः कायाच्छिरो भूमावपातयत् । एकेन चापं सगुणमच्छिनद्रोषपूरितः ॥ ४४
एकेन हृदि विव्याध सुकेतोर्वेगवान्नृपः । तत्कर्माद्भुतमुद्वीक्ष्य वीरा विस्मयमाययुः ॥ ४५
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः । महतीं स गदां नीत्वा योद्धुकामोऽभ्युपेयिवान् ॥ ४६
तमायान्तं समालक्ष्य गदायुद्धविशारदम् । महत्या गदया युक्तं रथादवततार सः ॥ ४७
गदामादाय महतीं सर्वायसविनिर्मिताम् । जातरूपविचित्राङ्गीं सर्वशोभापुरस्कृताम् ॥ ४८
लक्ष्मीनिधिर्भृशं क्रुद्धः सुकेतोर्वक्षसि त्वरन् । ताडयामास सुदृढं गदां वज्राग्निसंनिभाम् ॥ ४९
गदया ताडितो वीरो नाकम्पत महामुने । मदोन्मत्तो यथा दन्ती बालेनैव स्रजा हतः ॥ ५०
कथयामास वीराग्र्यो नृपं लक्ष्मीनिधिं तदा । सहस्वैकं प्रहारं मे यदि शूरः परंतपः ॥ ५१
इत्युक्त्वा ताडयामास ललाटे गदया भृशम् । गदया ताडितो भालेऽसृग्वमन्कुपितो भृशम् ॥ ५२
मूर्ध्नि तं ताडयामास गदया कालरूपया । सुकेतुरपि तं स्कन्धे ताडयामास धर्मवित् ॥ ५३
एवं भृशं सुकुपितौ गदायुद्धविशारदौ । गदायुद्धं प्रकुर्वाते परस्परजयैषिणौ ॥ ५४
अन्योन्यघातविमतौ परस्परवधोद्यतौ । न कोऽपि तत्र हीयेत न को जीयेत संयुगे ॥ ५५
मूर्ध्नि भाले तथा स्कन्धे हृदि गात्रेषु सर्वतः । रुधिरौघपरिक्लिन्नौ महाबलपराक्रमौ ॥ ५६
तदा लक्ष्मीनिधिः क्रुद्धो गदामुद्यम्य वेगवान् । जगाम प्रबलं हन्तुं हृदि राजानुजं बली ॥ ५७
तमायान्तमथाऽऽलोक्य स्वगदां महतीं दधत् । ययौ तं तरसा हन्तुं राजभ्राता बलाद्बलम् ॥ ५८
गदां तेन विनिक्षिप्तां स्वकरे धृतवानयम् । तयैव गदया तस्य हृदि जघ्ने महाबलः ॥ ५९
स्वगदां तेन वै नीतां दृष्ट्वा लक्ष्मीनिधिर्नृपः । बाहुयुद्धेन तं योद्धुमियेष बलवत्तरम् ॥ ६०
तदा राजानुजः क्रुद्धो बाहुभ्यामुपगृह्य तम् । युयुधे सर्वयुद्धस्य ज्ञाता वीरेषु सत्तमः ॥ ६१
तदा लक्ष्मीनिधिस्तस्य हृदि जघ्ने स्वमुष्टिना । तदा सोऽपि शिरस्येनं मुष्टिमुद्यम्य चाहनत् ॥ ६२
मुष्टिभिर्वज्रसंकाशैस्तलस्फोटैश्च दारुणैः । अन्योन्यं जघ्नतुः क्रुद्धौ संदष्टाधरपल्लवौ ॥ ६३
मुष्टीमुष्टि दन्तादन्ति कचाकचि नखानखि । उभयोरभवद्युद्धं तुमुलं रोमहर्षणम् ॥ ६४
तदा प्रकुपितो भ्राता नृपतेश्चरणे नृपम् । गृहीत्वा भ्रामयित्वाऽथ पातयामास भूतले ॥ ६५
लक्ष्मीनिधिः करे गृह्य तं नृपानुजमुच्चकैः । भ्रामयित्वा शतगुणं गजोपस्थे जघान तम् ॥ ६६
स तदा पतितो भूमौ संज्ञां प्राप्य क्षणादनु । तथैव भ्रामयामास व्योम्नि वेगेन विक्रमी ॥ ६७
एवं प्रयुध्यमानौ तौ बाहुयुद्धं गतौ पुनः । पादे पादं करे पाणिं हृदि हृदं(च) मुखे मुखम् ॥ ६८
एवं परस्परं श्लिष्टौ परस्परवधैषिणौ । उभावपि बलाक्रान्तावुभौ मूर्छामपीयतुः ॥ ६९
तद्दृष्ट्वा विस्मयं प्राप्ताः प्रशशंसुः सहस्रशः । धन्यो लक्ष्मीनिधिर्भूपो धन्यो राजानुजो बली ॥ ७०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे गदायुद्धं नाम षड्विंशोऽध्यायः ॥ २६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२३६२

---

अथ सप्तविंशोऽध्यायः ।

---

शेष उवाच—

चित्राङ्गः क्रौञ्चकण्ठस्थो रथस्थो वीरशोभितः । गाहयामास तत्सैन्यं वाराह इव वारिधिम् ॥ १

१ क. °ज्ञाप्रसं° । २ ङ. प्रहारतः । ३ ज. °स्येकं मु° ।

धनुर्विस्फार्य सुदृढं मेघनादनिनादि तत् । मुमोच बाणान्सुशितान्वैरिकोटिविदाहकान् ॥ २
तद्बाणभिन्नसर्वाङ्गाः शेरते सुभटा भृशम् । सकिरीटतनुत्राणाः संदष्टदशनच्छदाः ॥ ३
एवं प्रवृत्ते संग्रामे ययौ योद्धुं तु पुष्कलः । मणिचित्रितमादाय चापं वैरिप्रतापनम् ॥ ४
तयोः संगतयो रूपं दृश्यतेऽतिमनोहरम् । पुरा तारकसंयोगे स्कन्दतारकयोर्यथा ॥ ५
विस्फारयन्धनुः शीघ्रं सव्यसाची तु पुष्कलः । ताडयामास तं क्षिप्रं शरैः संनतपर्वभिः ॥ ६
चित्राङ्गोऽपि रुषा क्रान्तः शरासन इषून्शितान् । दधन्मुमुचे बहुशो रणमण्डलमूर्धनि ॥ ७
नाऽऽदानं न च संधानं न मोचनमथापि वा । दृष्टं तावेव संदृष्टौ कुण्डलीकृतचापिनौ ॥ ८
तदाऽसौ पुष्कलः क्रुद्धः शराणां शतकेन तम् । विव्याध वक्षःस्थलके महायोद्धारमुद्भटम् ॥ ९
चित्राङ्गस्ताञ्शरान्सर्वांश्चिच्छेद तिलशः क्षणात् । ताडयामास चाङ्गेषु पुष्कलं शितसायकैः॥१०
पुष्कलस्तद्रथं दिव्यं भ्रामकास्त्रेण शोभिना । नभसि भ्रामयामास तदद्भुतमिवाभवत् ॥ ११
भ्रान्त्वा मुहूर्तमात्रं तु तद्रथो हयसंयुतः । स्थितिं लेभेऽतिकष्टेन संधृतो रणमण्डले ॥ १२
स चास्य विक्रमं दृष्ट्वा चित्राङ्गः कुपितो भृशम् । उवाच पुष्कलं धीमान्सर्वास्त्रेषु विशारदः॥ १३

चित्राङ्ग उवाच—

त्वया साधु कृतं कर्म सुभटैर्युधि संमतम् । मद्रथो वाजिसंयुक्तो भ्रामितो नभसि क्षणम् ॥ १४
पराक्रमं समीक्षस्व ममापि सुभटेडितम् । आकाशचारी तु भवान्भवत्वमरपूजितः ॥ १५
इत्युक्त्वा स मुमोचास्त्रं रणे परमदारुणम् । धनुषा परमास्त्रज्ञः सर्वधर्मविदुत्तमः ॥ १६
तेन बाणेन संबद्धः खे बभ्राम पतङ्गवत् । सरथः सहयः संख्ये सध्वजश्च ससारथिः ॥ १७
भ्रान्तः स रथवर्यस्तु नभसि त्वरयाऽन्वितः । यावत्स्थितिं न लभते तावन्मुक्तोऽपरः शरः॥१८
पुनश्च परिबभ्राम रथः सूतसमन्वितः । तत्कर्म वीक्ष्य पुत्रस्य राज्ञो विस्मयमाप सः ॥ १९
कथंचित्स्थितिमप्याप पुष्कलः परवीरहा । रथं जघान बाणैश्च ससूतहयमस्य च ॥ २०
स भग्नः स्यन्दनो वीरः पुनरन्यं समाश्रितः । सोऽपि भग्नः शरैराशु पुष्कलेन रणाङ्गणे ॥ २१
पुनरन्यं समास्थाय यावदायाति संमुखम् । तावद्बभञ्ज निशितैः सायकैस्तद्रथं पुनः ॥ २२
एवं दश रथा भग्ना नृपतेरात्मजस्य हि । पुष्कलेन तु वीरेण महासंयुगशालिना ॥ २३
तदा चित्राङ्गकः संख्ये रथे स्थित्वा विचित्रिते । आजगाम ह वेगेन योद्धुं पुष्कलकेन तु ॥ २४
पुष्कलं पञ्चभिर्बाणैस्ताडयामास संयुगे । तैर्बाणैर्निहतोऽत्यन्तं विव्यथे भरतात्मजः ॥ २५
स क्रुद्धश्चापमुद्यम्य बाणान्दश शितान्महान् । मुमोच हृदये तस्य स्वर्णपुङ्खसुशोभितान् ॥ २६
ते बाणाः पपुरेतस्य रुधिरं बहुदारुणाः । पीत्वा पेतुः क्षितौ कूटसाक्षिणः पूर्वजा इव ॥ २७
तदा चित्राङ्गकः क्रुद्धो भल्लान्पञ्च समाददे । मुमोच भाले पुत्रस्य भरतस्य महौजसः ॥ २८
तैर्भल्लैराहतः क्रुद्धः शरासनवरे शरम् । दधत्प्रतिज्ञामकरोच्चित्राङ्गनिधनं प्रति ॥ २९
शृणु वीर मम क्षिप्रं प्रतिज्ञां त्वद्वधाश्रिताम् । तज्ज्ञात्वा सावधानेन योद्धव्यं च त्वयाऽत्र हि ३०
बाणेनानेन चेत्त्वां वै न कुर्यां प्राणवर्जितम् । सतीं संदूष्य वनितां शीलाचारसुशोभिताम् ॥३१
लोको यः प्राप्यते लोकैर्यमस्य वशवर्तिभिः । स लोको मम वै भूयात्सत्यं मम प्रतिश्रुतम् ॥ ३२
इति श्रेष्ठं वचः श्रुत्वा जहास परवीरहा । उवाच मतिमान्वीरः पुष्कलं वचनं शुभम् ॥ ३३

१ क. ख. ग. छ. ज. ञ. ड. ण. त. थ. °रीटा विचित्राङ्गाः सं° । २ क. ख. ग. छ. ज. ञ. ड. ण. त. थ. °न स रथः खे । ३ क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. स ।

मृत्युर्वै प्राणिनां भाव्यः सर्वत्रैव च सर्वदा । तस्मान्मे निधने दुःखं नास्ति शूरशिरोमणे ॥ ३४
प्रतिज्ञा या कृता वीर त्वया वीरेण शोभिना । सा सत्यैव पुनर्मेऽद्य श्रूयतां व्याहृतं महत् ॥३५
तव बाणं वधोद्युक्तं मम न च्छेद्मि चेदहम् । तदा प्रतिज्ञां शृणु मे सर्ववीराभिमानिनः ॥ ३६
तीर्थं जिगमिषोर्यो वै कुर्यात्स्वान्तविखण्डनम् । एकादशीव्रतादन्यज्जानाति व्रतमुत्तमैः ॥ ३७
तस्य पापं ममैवास्तु प्रतिज्ञापरिघातिनः । इति वाक्यमुदीर्यैव तूष्णींभूतो धनुर्दधे ॥ ३८
तदा तेन निषङ्गात्स्वादुद्धृत्य सायकं वरम् । कथितं तत्र विशदं वाक्यं शत्रुवधावहम् ॥ ३९

पुष्कल उवाच—

यदि रामाङ्घ्रियुगलं निष्कापट्येन चेतसा । उपासितं मया तर्हि मम वाक्यं भवत्वृतम् ॥ ४०
यदि स्वमहिलां भुक्त्वा नान्यां जानामि चेतसा । तेन सत्येन मे वाक्यं सत्यं भवतु संगरे ४१
इति वाक्यमुदीर्याऽऽशु बाणं धनुषि संधितम् । कालानलोपमं वीरशिरश्छेदनमाक्षिपत् ॥ ४२
तं बाणं मुक्तमालोक्य स तु राजसुतो बली । बाणं शरासनेऽधत्त तीक्ष्णं कालानलोपमम् ॥४३
तेन बाणेन संछिन्नो बाणः स्ववध उद्यतः । हाहाकारो महानासीच्छिन्ने तस्मिञ्शरे तदा ॥ ४४
परार्धे पतितं भूमौ पूर्वार्धे फलसंयुतम् । शिरोधरां चकर्ताऽऽशु पद्मनालमिव क्षणात् ॥ ४५
तदा भूमौ पतन्तं तु ददृशुः सर्वसैनिकाः । हाहा कृत्वा भृशं सर्वे पलायनपरा गताः ॥ ४६
पृथिव्यां मस्तकं श्रेष्ठं सकिरीटं सकुण्डलम् । शुशुभेऽतीव पतितं चन्द्रबिम्बं दिवो यथा ॥ ४७
तं वीक्ष्य पतितं वीरः पुष्कलो भरतात्मजः । व्यगाहत व्यूहमिमं सर्ववीरैकशोभितम् ॥ ४८

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे चित्राङ्गवधनिरूपणं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२४१०

---

अथाष्टाविंशोऽध्यायः ।

---

शेष उवाच—

अथ पुत्रं समालोक्य पतितं व्यसुमुद्धतम् । विललाप भृशं राजा सुतदुःखेन दुःखितः ॥ १
मूर्ध्नि संताडयामास पाणिभ्यामतिदुःखितः । कम्पमानो भृशं चाश्रूण्यमुञ्चन्नयनाब्जयोः ॥ २
गृहीत्वा पतितं वक्त्रं चन्द्रबिम्बमनोरमम् । पुष्कलेषुक्षतासृग्भिश्छन्नं कुण्डलशोभितम् ॥ ३
कुटिलभ्रूयुगश्रेष्ठं संदष्टाधरपल्लवम् । संचुम्ब्य मुखपद्मेन विलपन्निदमब्रवीत् ॥ ४

हा पुत्र वीर कथमुत्सुकचेतसं मां किं नेक्षसे विशदनेत्रयुगेन शूर ।
किं मद्विनोदकतया रहितस्त्वमेव रोषोदधिप्लुतमनाः किल लक्ष्यसे च ॥ ५

वद पुत्र कथं मां त्वं प्रब्रूषे न हसन्पुनः । अमृतैर्मधुरास्वादैर्विनोदयसि पुत्रक ॥ ६
शत्रुघ्नाश्वं गृहाण त्वं सितचामरशोभितम् । सुवर्णपत्रशोभाढ्यं त्यक्त्वा निद्रां महामते ॥ ७
एष प्रतापविशदः प्रतापाग्र्यः परंतपः । धनुर्बिभ्रत्पुरो भाति पुष्कलः परवीरहा ॥ ८
एनं वारय सत्तीक्ष्णैर्बाणैः कोदण्डनिर्गतैः । कथं त्वं रणमध्ये वै शेषे वीर विमोहितः ॥ ९
हस्तिनः पत्तयश्चैव रथारूढा भयार्दिताः । शरणं त्वां समायान्ति तानीक्षस्व महामते ॥ १०

---

१ ख. °त् । त्वद्बाणं मद्वधोद्युक्तं न च्छिन्द्यां यदि चे° । २ ग. छ. ठ. ड. द. ध. °सन्निभः क्षिप्तं । ३ ख. ग. छ. ठ. ड. द. ध. °कथया । ४ ग. °बे शरवि° । ५ क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ द. ध. शरण्यं ।

पुत्र त्वया विना सोढुं कथं शक्तो रणाङ्गणे । शत्रुघ्नसायकांस्तीक्ष्णांश्चण्डकोदण्डनिर्गतान् ॥ ११
अतो मां तु त्वया हीनं को वा पालयितुं क्षमः । यदि त्वक्ष्यसि निद्रां त्वं जयायाहं क्षमस्तदा ॥
इत्थं विलप्य सुभृशं तताड हृदयं स्वकम् । बहुशः पाणिना राजा पुत्रदुःखेन दुःखितः ॥ १३
तदा विचित्रदमनौ स्वस्वस्यन्दनसंस्थितौ । पितुश्चरणयोर्नत्वा ऊचतुः समयोचितम् ॥ १४
राजन्नसमत्सु जीवत्सु किं दुःखं हृदि तेऽनघ । वीराणां प्रधने मृत्युर्वाञ्छितो जायते महान् १५
धन्योऽयं बत चित्राङ्गो यो वीरभुवि शोभते । सकिरीटस्तु संदष्टदन्तच्छदयुगः प्रभुः ॥ १६
कथयाऽऽशु किमद्यैव कुर्वस्ते कार्यमीप्सितम् । शत्रुघ्नवाहिनीं सर्वामावां हन्वः प्रमाथिनीम् ॥१७
अद्यैव पुष्कलं भ्रातुर्वधकारिणमाहवे । पातयावो रथाच्छित्त्वा शिरो मुकुटमण्डितम् ॥ १८
त्यज शोकं सुदुःखार्तः कथं भासि महामते । आज्ञापयाऽऽवां मानार्ह कुरु युद्धे मतिं तथा ॥१९
इति वाक्यं समाकर्ण्य पुत्रयोर्वीरमानिनोः । शोकं त्यक्त्वा महाराजो युद्धाय मतिमादधात् २०
तावपि प्रतियोद्धारं वाञ्छन्तौ रणदुर्मदौ । जग्मतुः कटके शत्रोरनन्तभटपूरिते ॥ २१
रिपुतापेन दमनो नीलरत्नेन चेतरः । युयुधाते रणे वीरौ प्रावृषीव बलाहकौ ॥ २२
राजा कनकसंनद्धे रथे मणिविचित्रिते । रत्नकूबरशोभाढ्ये तिष्ठंश्चापधरो बली ॥ २३
ययौ योद्धुं तु शत्रुघ्नं वीरकोटीभिरावृतम् । तृणीकुर्वन्महावीरान्धनुर्विद्याविशारदान् ॥ २४
तं योद्धुमागतं दृष्ट्वा सुबाहुं रोषपूरितम् । पुत्रनाशेन कुर्वन्तं सर्वसैन्यवधादिकम् ॥ २५
शत्रुघ्नपार्श्वसंचारी हनूमांस्तमुपाद्रवत् । नखायुधो महानादं कुर्वन्मेघ इवाऽऽहवे ॥ २६
सुबाहुस्तं हनूमन्तमागच्छन्तं महारवम् । उवाच प्रहसन्वाक्यं रोषपूरितलोचनः ॥ २७
क्व गतः पुष्कलो हत्वा मत्पुत्रं रणमण्डले । पातयाम्यद्य तस्याऽऽशु शिरो ज्वलितकुण्डलम् ॥ २८
क्व शत्रुघ्नो वाहपालः क्व च रामः कुतो भटाः । प्राणहन्तारमायान्तं पश्यन्तु प्रधने तु माम् ॥२९
इति तद्वाक्यमाकर्ण्य हनूमान्निजगाद तम् । शत्रुघ्नो लवणच्छेत्ता वर्तते सैन्यपालकः ॥ ३०
स कथं प्रधने युध्येत्सेवकेऽग्रस्थिते नृप । मां विजित्य रणे तं च त्वं गन्तासि नरर्षभ ॥ ३१
इत्युक्तवन्तं तरसा विव्याध दशसायकैः । हृदि तं वीरमत्युग्रं पर्वताग्र्यमिव स्थितम् ॥ ३२
ते बाणा आगतास्तेन गृहीताः करकुड्मले । चूर्णयामास तिलशः शितान्वैरिविदारणान् ॥ ३३
चूर्णयित्वा शरांस्तांस्तांन्निनदन्घनगर्जितैः । पुच्छेनाऽऽवेष्ट्य वेगेन रथं निन्ये महाबलः ॥ ३४
तं यान्तं नृपवर्योऽसावाकाशे स्थित एव सः । लाङ्गूलं ताडयामास शिताग्रैः सायकैर्मुहुः ॥ ३५
स ताडितस्तु पुच्छाग्रे शरैः संनतपर्वभिः । मुमोच तद्रथं दिव्यं कनकेन विचित्रितम् ॥ ३६
स मुक्तस्तेन तरसा शरैस्तीक्ष्णैर्जघान तम् । हनूमन्तं कपिवरं रोषसंपूरितेक्षणः ॥ ३७
हनूमान्बाणसंछिन्नः सर्वत्र रुधिराप्लुतः । महारोषं समाधत्त नृपोपरि कपीश्वरः ॥ ३८
गृहीत्वा तस्य दंष्ट्राभी रथं हयसमन्वितम् । चूर्णयामास वेगेन तदद्भुतमिवाभवत् ॥ ३९
स्वरथं भज्यमानं तु दृष्ट्वा राजा त्वरन्बली । अन्यं रथं समास्थाय युयुधे तं महाबलम् ॥ ४०
पुच्छे मुखेऽथ हृदये बाह्वोश्चरणयोर्नृपः । जघान शरसंधानकोविदः परमास्त्रवित् ॥ ४१

१ क. ख. ग. ज. ञ. ठ. ण. त. द. ध. °शं ताडयन्स्वकरेण हृत् । ब° । २ क. ख. ग. ज. ञ. ठ. ण. त. थ. द. ध. °हुशो विललापायं पु° । ३ क. ख. ग. छ. ज. ञ. ठ. ण. त. थ. ध. °मादरात् । पा° । ४ क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. ध. रणे तस्य शि° । ५ क. ख. ग. ज. ञ. ठ. ण. त. थ. ध. °यास्मानाज्ञार्हान्कुरु । ६ क. ख. ग. छ. ज. ञ. ठ. ण त. थ. ध. रथी । ७ क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. ध. °नेऽद्भुतम् । ८ ड. °के सुस्थि° ।

तदा क्रुद्धः कपिवरस्ताडयामास वक्षसि । पादेनोत्प्लुत्य वेगेन राज्ञः सुभटशोभिनः ॥ ४२
स पदा प्रहतो भूमौ पपात किल मूर्छितः । मुखाद्वमन्नसृक्कोष्णं श्वासपूरप्रवेपितः ॥ ४३
तदा प्रकुपितोऽत्यन्तं हनूमान्प्रधनाङ्गणे । अश्वान्गजान्रथान्वीरांश्चूर्णयामास वेगतः ॥ ४४
तदा सुकेतुस्तद्भ्राता तथा लक्ष्मीनिधिर्नृपः । उभावपि सुसंनद्धौ युद्धाय समुपस्थितौ ॥ ४५
राजानं मूर्छितं दृष्ट्वा प्रपलाय्य गता नराः । इतस्ततो बाणसंघैः क्षताः पुष्कलवर्षितैः ॥ ४६
भज्यमानं स्वबलं वीक्ष्य राजात्मजो बली । दमनः स्तम्भयामास सेतुर्वाधिमिवोद्बलम् ॥ ४७
तदा तु मूर्छितो राजा स्वप्नमेकं ददर्श ह । रणमध्ये कपिवरप्रपदाघातपीडितः ॥ ४८
रामचन्द्रस्त्वयोध्यायां शरयूतीरमण्डले । ब्राह्मणैर्याज्ञिकश्रेष्ठैर्बहुभिः परिवारितः ॥ ४९
तत्र ब्रह्मादयो देवास्तत्र ब्रह्माण्डकोटयः । कृतप्राञ्जलयस्तं वै स्तुवन्ति स्तुतिभिर्मुहुः ॥ ५०
रामं श्यामं सुनयनं मृगशृङ्गपरिग्रहम् । गायन्ति नारदाद्याश्च वीणोल्लसितपाणयः ॥ ५१
नृत्यन्त्यप्सरसस्तत्र घृताचीमेनकादयः । वेदा मूर्तिधरा भूत्वा ह्युपतिष्ठन्ति राघवम् ॥ ५२
यच्च किंचिद्वस्तुजातं सर्वशोभासमन्वितम् । तस्य दातारमखिलं भक्तानां भोगदायकम् ॥ ५३
इत्येवमादि संपश्यञ्जाग्रत्संज्ञामवाप्य सः । ब्रह्मशापहतज्ञानः किं दृष्टमिति वै वदन् ॥ ५४
गन्तुं प्रवृत्तोऽसौ पद्भ्यां शत्रुघ्नचरणं प्रति । भृत्यकोटिपरीवारो रथकोटिसमावृतः ॥ ५५
सुकेतुं स समाहूय विचित्रं दमनं तथा । युद्धं कर्तुं समुद्युक्तान्वारयामास धर्मवित् ॥ ५६
उवाच तान्महाराजो धर्मात्मा धर्मसंयुतः । भ्रातः पुत्रौ शृणुत मे वाक्यं धर्मसमन्वितम् ॥ ५७
मा युद्धं कुरुत क्षिप्रमनयस्तु महानभूत् । यद्रामचन्द्रवाहं त्वमगृह्णा दमनोर्जितम् ॥ ५८
एष रामः परं ब्रह्म कार्यकारणगतः परम् । चराचरजगत्स्वामी न मानुषवपुर्धरः ॥ ५९
एतद्धि ब्रह्मविज्ञानमधुना ज्ञातवानहम् । पुराऽसिताङ्गशापेन हृतज्ञानधनोऽनघाः ॥ ६०
अहं पुरा तीर्थयात्रां गतस्तत्त्वविवित्सया । तत्रानेके मया दृष्टा मुनयो धर्मवित्तमाः ॥ ६१
असिताङ्गं मुनिमहं गतवाञ्ज्ञातुमिच्छया । तदा प्रोवाच मां विप्रः कृपां कृत्वा ममोपरि ॥ ६२
योऽसावयोध्याधिपतिः स परं (र)ब्रह्मशब्दितः । तस्य या जानकी देवी सा साक्षाच्चिन्मयी स्मृता
एनं तु योगिनः साक्षादुपासते यमादिभिः । दुस्तरापारसंसारवारिधिं संतितीर्षवः ॥ ६४
स्मृतमात्रो महापापहारी स गरुडध्वजः । य एनं सेवते विद्वान्स संसारं तरिष्यति ॥ ६५
तदाऽहमहसं विप्रं कोऽयं रामस्तु मानुषः । केयं सा जानकी देवी हर्षशोकसमाकुला ॥ ६६
अजन्मनः कथं जन्म अकर्तुः कृत्यमत्र किम् । जन्मदुःखजरातीतं कथय त्वं मुने मम ॥ ६७
इत्युक्तवन्तं मां मोज्ञः शशाप स मुनीश्वरः । अज्ञात्वा तत्स्वरूपं त्वं प्रतिब्रूषे ममाधम ॥ ६८
एनं निन्दसि रामं त्वं मानुषोऽयमिदं हसन् । तस्मात्त्वं तत्त्वसंमूढो भविष्यस्युदरंभरिः ॥ ६९
तदाऽहं तस्य चरणौ गृहीत्वा दयया युतम् । कृतवान्स पुनर्मां तु प्रोवाच करुणानिधिः ॥ ७०
त्वं रामस्य मखे विघ्नं करिष्यसि यदा नृप । पदा तदा हनूमांस्त्वां ताडयिष्यति वेगतः ॥ ७१
तदा तं ज्ञास्यसे राजन्नान्यथा स्वमनीषया । पुराऽहमुक्तस्तेनैव तद्दृष्टमधुना मया ॥ ७२
यदा मां हनुमान्क्रुद्धस्ताडयामास वक्षसि । तदाऽदर्शं रमानाथं पूर्णब्रह्मस्वरूपिणम् ॥ ७३
तस्मादश्वं तु शोभाढ्यमानयन्तु महाबलाः । धनानि चैव वासांसि राज्यं चेदं समर्पये ॥ ७४

१ क. ख. ग. छ. झ. ञ. ठ. ण. त. थ. ध. °त्वैरिणा । त° । २ ग. °मुंदा । रा° । ३ ग. मृगाजिनप° । ४ क. [illegible] ग. छ. ज. ठ. ड. ण. त. थ. ध. °गसंयुतम् । ५ ग. छ ठ. ड. द. ध. क्रुद्धः ।

रामं दृष्ट्वा कृतार्थः स्यामहं यज्ञेऽतिपुण्यदे । इति वै सहयं मह्यं रोचते तु तदर्पणम् ॥ ७९

इति श्रीमहापुराणे पाद्मे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्नविजयो नामाष्टाविंशोऽध्यायः ॥ २८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२४८९

---

अथैकोनत्रिंशोऽध्यायः ।

---

शेष उवाच—

ते तु तातवचः श्रुत्वा हर्षिताः सत्प्रहारिणः । तथेत्यूचुर्महाराजं रामदर्शनलालसम् ॥ १

पुत्रावूचतुः—

राजन्भवत्पदादन्यन्न जानीम परंतप । तस्मात्वद्धृदि यज्जातं तद्भवत्वद्य वेगतः ॥ २

अश्वोऽयं नीयतां तत्र सितचामरभूषितः । रत्नमालादिशोभाढ्यश्चन्दनादिकचर्चितः ॥ ३

राज्यमाज्ञाफलं स्वामिन्कोशा बहुसमृद्धयः । [*चन्दनं चन्द्रकं चैव वाजिनः सुमनोहराः ॥ ४

हस्तिनस्तु मदोद्धता रथाः काञ्चनकूबराः । ] वासांसि सुमहार्हाणि सूक्ष्माणि सुगुणानि च॥५

विचित्रतरवर्णानि नानाभरणभूषिताः । दास्यः शतसहस्रं च दासाश्च सुमनोरमाः ॥ ६

मणयः सूर्यसंकाशा रत्नानि विविधानि च । मुक्ताफलानि शुभ्राणि गजकुम्भभवानि च ॥ ७

विद्रुमाः शतसाहस्रा यद्यद्वस्तु महोदयम् । तत्सर्वं रामचन्द्राय देहि राजन्महामते ॥ ८

सुतानस्मान्किंकरांश्च सर्वानर्पय भूपते । कथं न कुरुषे राजंस्त्वदधीनं नृपासनम् ॥ ९

शेष उवाच—

इति पुत्रवचः श्रुत्वा हर्षितोऽभून्महीपतिः । उवाच स्वसुतान्वीरान्स्ववाक्यकरणोद्यतान् ॥ १०

राजोवाच—

आनयन्तु हयं सर्वे संनद्धाः शस्त्रपाणयः । नानारथपरीवारास्ततो यास्ये नृपं प्रति ॥ ११

शेष उवाच—

इति राज्ञो वचः श्रुत्वा विचित्रो दमनस्तथा । सुकेतुश्चापरे शूरा जग्मुस्तस्याऽऽज्ञयोद्यताः ॥ १२

ते गत्वाऽथ पुरीं शूरा वाजिनं सुमनोहरम् । सितचामरसंयुक्तं स्वर्णपत्राद्यलंकृतम् ॥ १३

रत्नमालाविभूषाढ्यं चित्रपत्रेण शोभितम् । विचित्रमणिभूषाढ्यं मुक्ताजालस्वलंकृतम् ॥ १४

रज्ज्वा धृतं महावीरैः पूर्वतः पृष्ठतो भटैः । महाशस्त्रास्त्रसंयुक्तैः सर्वशोभासमन्वितैः ॥ १५

सितातपत्रमस्योच्चैर्भाति मूर्धनि वाजिनः । चामरद्वयके तस्य ध्रियेते पुरतो मुहुः ॥ १६

कृष्णागर्वादिधूपैश्च धूपितं वायुवेगिनम् । राज्ञः पुरो निनायाश्वं हयमेधस्य सत्क्रतोः ॥ १७

तमानीतं हयं दृष्ट्वा रत्नमालाविभूषितम् । मनोजवं कामरूपं जहर्ष मतिमान्नृपः ॥ १८

जगाम पद्भ्यां शत्रुघ्नं राजचिह्नाद्यलंकृतम् । स्वपुत्रपौत्रैः संयुक्तो राजा परमधार्मिकम् ॥ १९

ययौ कर्तुं धनानां च सद्व्ययं चलगामिनाम् । एतद्धि नैश्वरं मत्वा दुःखदं सक्तचेतसाम् ॥ २०

शत्रुघ्नं स ददर्शाथ सितच्छत्रेण शोभितम् । चामरैर्वीज्यमानं च सेवकैः पुरतः स्थितैः ॥ २१

सुमतिं परिपृच्छन्तं रामचन्द्रकथानकम् । भयवार्ताविनिर्मुक्तं वीरशोभास्वलंकृतम् ॥ २२

---

* एतच्चिह्नान्तर्गतः पाठः ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

---

१ म. ताराणि । २ ख. ग. ज. ठ. ण. त. द. ध. °कृतः । स्व° । ३ द. भरं ।

वीरकोटिभिराकीर्णं नेत्रपाताभिकाङ्क्षकैः । वानराणां सहस्रैश्च समन्तात्परिवारितम् ॥ २३
दृष्ट्वा शत्रुघ्नचरणौ प्रणनाम सपुत्रकः । धन्योऽहमिति संहृष्टो वदन्रामैकमानसः ॥ २४
शत्रुघ्नस्तं प्रणयिनं दृष्ट्वा राजानमुद्भटम् । उत्थायाऽऽसनतः सर्वैर्दोर्भ्यां च परिषस्वजे ॥ २५
इत्थं संपूज्य राजा तं शत्रुघ्नं परवीरहा । उवाच हर्षमापन्नो गद्गदस्वरभूषितः ॥ २६

सुबाहुरुवाच—

अद्य धन्योऽस्मि ससुतः सकुटुम्बः सवाहनः । यद्युष्मच्चरणौ द्रक्ष्ये नृपकोटिभिरीडितौ ॥ २७
अज्ञानिना सुतेनायं गृहीतो वाजिनां वरः । दमनेनाऽऽनयं त्वस्य क्षमस्व करुणानिधे ॥ २८
न जानाति रघूत्तंसं सर्वदेवाधिदैवतम् । लीलया विश्वस्रष्टारं हन्तारमपि पालकम् ॥ २९
इदं राज्यं समृद्धाङ्गं समृद्धबलवाहनम् । इमे कोशा धनैः पूर्णा इमे पुत्रा इमे वयम् ॥ ३०
सर्वे वयं रामनाथास्त्वदाज्ञाप्रतिपालकाः । गृहाण सर्वं सफलं न मेऽस्ति कचिदुन्मतम् ॥ ३१
क्वासौ हनूमान्रामस्य चरणाम्भोजषट्पदः । यत्प्रसादादहं प्राप्स्ये राजराजस्य दर्शनम् ॥ ३२
साधूनां संगमे किं किं प्राप्यते न महीतले । यत्प्रसादादहं मूढो ब्रह्मशापमतीतरम् ॥ ३३
दृष्ट्वा त्वद्य महाराजं पद्मपत्रनिभेक्षणम् । प्राप्स्यामि जन्मनः सर्वं फलं दुर्लभमत्र च ॥ ३४
मम तावद्गतं चाऽऽयुर्बहु रामवियोगिनः । स्वल्पपुर्वरितं तत्र कथं द्रक्ष्ये रघूत्तमम् ॥ ३५
मह्यं दर्शय तं रामं यज्ञकर्मविचक्षणम् । यदङ्घ्रिरजसा पूता शिला[3] भूता मुनिप्रिया ॥ ३६
काकः परं पदं प्राप्तो यद्बाणस्पर्शनात्खगः । अनेके यस्य वक्त्राब्जं वीक्ष्य संख्ये पदं गताः ॥
ये त्वस्य रघुनाथस्य नाम गृह्णन्ति सादराः । ते यान्ति परमं स्थानं योगिभिर्यद्विचिन्त्यते ॥ ३८
धन्याऽयोध्याभवा लोका ये राममुखपङ्कजम् । स्वलोचनपुटैः पीत्वा सुखं यान्ति महोदयम् ॥ ३९
[*इति संभाष्य नृपतिं वाहं राज्यं धनानि च । सर्वं समर्प्य चावोचत्किंकरोऽस्मि महीपते ]॥ ४०
इति वाक्यं समाकर्ण्य राज्ञः परपुरंजयः । प्रत्यूचे विनतं भूपं वाग्ग्मी वाक्यविशारदः ॥ ४१

शत्रुघ्न उवाच—

कथं राजन्निदं ब्रूषे त्वं वृद्धो मम पूजितः । सर्वं त्वदीयं त्वद्राज्यं दमनो विदधात्वयम् ॥ ४२
क्षत्रियाणामिदं कृत्यं यत्संग्रामविधायकम् । सर्वं राज्यं धनं चेदं प्रतियातु ममाऽऽज्ञया ॥ ४३
यथा मे रघुनाथस्तु पूज्यो वाङ्मनसा सदा । तथा त्वमपि मत्पूज्यो भविष्यसि महीपते ॥ ४४
भवान्सज्जो भवत्वस्य हयस्यानुगमं प्रति । संनद्धः कवची खड्गी रथयूथपसंयुतः ॥ ४५
इति वाक्यं समाकर्ण्य शत्रुघ्नस्य महामतेः[6] । पुत्रं राज्येऽभिषिच्यैव शत्रुघ्नेन सुपूजितः ॥ ४६
महारथैः परिवृतो निजं पुत्रं रणाङ्गणे । पुष्कलेन हतं भूयः संस्कृत्य विधिपूर्वकम् ॥ ४७
क्षणं शुशोच तत्त्वज्ञो लोकदृष्ट्या महारथः । ज्ञानेनाशमयच्छोकं रघुनाथमनुस्मरन् ॥ ४८
सज्जीभूतो रथे तिष्ठन्महासैन्यसमावृतः । आजगाम स शत्रुघ्नं महारथिपुरस्कृतः ॥ ४९
राजा तमागतं दृष्ट्वा सर्वसैन्यसमन्वितम् । गन्तुं चकार धिषणां हयवर्यस्य पालने ॥ ५०
सोऽश्वो विमोचितस्तेन भाले पत्रेण चिह्नितः । वामावर्तं भ्रमन्प्रायात्[7]पौर्वाञ्जनपदान्बहून् ॥ ५१

† संधिरार्षः । * एतच्चिह्नान्तर्गतः पाठो ग. छ. ज. झ. ण. द. ध. पुस्तकस्थः ।

१ द. °रया गिरा । सु° । २ क. ख. ग. छ. ज. झ. ठ. ड. ण. ढ. ण. त. थ. द. ध °रः । बालिशेनानयं स्पष्टं क्ष° । ३ ग. °ला जाता गताघिनी । का° । छ. झ. °ला जाता विपापिनी । का° । ४ द. °त्वद्य ह° । ५ द. °दृगी गजाश्वरथसं° । ६ ग. छ. ठ. ड. ध. महामतिः । द. महीपतिः । ७ छ. ड. °न्प्राप्य ययौ जन° ।

तत्र तत्र च भूपालैर्महाशूराभिपूजितैः। प्रणतिः क्रियते तस्य न कोऽपि तमगृह्णत ॥ ६२
केचिद्वासांसि चित्राणि केचिद्राज्यं स्वकं महत्। केचिद्धनानि वा किंचिदानीय प्रणमन्ति तम् ॥

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्नसुबाहुभूपयोः परस्परसंयोगो नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२९१८

---

अथ त्रिंशोऽध्यायः।

---

शेष उवाच—

अथ तेजःपुरं प्राप्तस्तुरगः पत्रशोभितः। यस्यां पालयते राजा प्रजाः सत्येन सत्यवान् ॥ १
अथ कोटिपरीवारो रघुनाथानुजस्ततः। हयानुगो ययौ तस्य पुरतः पुरधर्षणः ॥ २
तद्दृष्ट्वा नगरं रम्यं चित्रप्राकारशोभितम्। काञ्चनैः कलशैस्तत्र परितः प्रतिभासितम् ॥ ३
देवायतनसाहस्रैः सर्वतश्च विराजितम्। यतीनां तु मठास्तत्र शोभन्ते यतिपूरिताः ॥ ४
वहत्यत्र महादेवी शिखिलोचनमूर्धगा। हंसकारण्डवाकीर्णा मुनिवृन्दनिषेविता ॥ ५
ब्राह्मणानां प्रत्यगारमग्निहोत्रभवः पुनः। धूमस्तत्र पुनात्यङ्ग पातकाप्लुतमानसान् ॥ ६
उवाच सुमतिं राजा शत्रुघ्नः शत्रुतापनः। तत्पुरप्रेक्षणोद्भूतहर्षविस्मितमानसः ॥ ७

शत्रुघ्न उवाच—

मन्त्रिन्कथय कस्येदं पुरं मे दृष्टिगोचरम्। करोति मानसाह्लादं धर्मेण प्रतिपालितम् ॥ ८

शेष उवाच—

इति वाक्यं समाकर्ण्य शत्रुघ्नस्य महीपतेः। उवाच सुमतिः सर्वं यथातथमनुद्धतम् ॥ ९

सुमतिरुवाच—

शृणुष्वावहितः स्वामिन्वैष्णवस्य कथाः शुभाः। याः श्रुत्वा मुच्यते पापाद्ब्रह्महत्यासमादपि १०
जीवन्मुक्तो वरीवर्ति रामाङ्घ्र्यम्बुजषट्पदः। सत्यवान्यज्ञयज्ञाङ्गज्ञाता कर्ताऽविता महान् ॥ ११
धेनुं प्रसाद्य बहुभिर्व्रतैर्यं प्राप तत्पिता। ऋतंभराख्यो जगति ख्यातः परमधार्मिकः ॥ १२
गौः प्रसन्ना ददौ पुत्रमनेकगुणसंस्कृतम्। सत्यवान्नाम शोभाढ्यं तं जानीहि नृपोत्तमम् ॥ १३

शत्रुघ्न उवाच—

को वा ऋतंभरो राजा किमर्थं धेनुपूजनम्। कथं प्राप्तः सुतस्तेन वैष्णवो विष्णुसेवकः ॥ १४
सर्वमेतत्समाचक्ष्व वैष्णवस्य कथानकम्। श्रुतं हरति जन्तूनां महापातकपर्वतम् ॥ १५

शेष उवाच—

इति वाक्यं समाकर्ण्य शत्रुघ्नस्य महार्थकम्। कथयामास विशदं तदुत्पत्तिकथानकम् ॥ १६
ऋतंभरोऽत्र नृपतिरनपत्यः पुराऽभवत्। कलत्राणि बहून्यस्य न पुत्रं प्राप तेषु वै ॥ १७
तदा जाबालिनामानं मुनिं दैवादुपागतम्। पप्रच्छ कुशलोद्युक्तः स पुत्रोत्पत्तिकारणम् ॥ १८

ऋतंभर उवाच—

स्वामिन्वन्ध्यस्य मे ब्रूहि पुत्रोत्पत्तिकरं वचः। यत्कृत्वा जायतेऽपत्यं मम वंशधरं वरम् ॥ १९

---

१ छ. ड. पुरचारिणः। २ झ. 'सव्रतं सुतो'।

तज्ज्ञात्वा भवतो भव्यं प्रकुर्यां निश्चितं वचः । दानं व्रतं वा तीर्थं वा मखं वा मुनिसत्तम ॥२०
इति राज्ञो वचः श्रुत्वा जगाद मुनिसत्तमः । सुतोत्पत्तिकरं वाक्यं प्रणतस्य सुतार्थिनः ॥ २१
अपत्यप्राप्तिकामस्य सन्त्युपायास्त्रयः प्रभो । विष्णोः प्रसादो गोश्चापि शिवस्याप्यथवा पुनः २२
तस्मात्त्वं कुरु वै पूजां धेनोर्दैवतनोर्नृप । यस्याः पुच्छे मुखे शृङ्गे पृष्ठे देवाः प्रतिष्ठिताः ॥ २३
सा तुष्टा दास्यति क्षिप्रं वाञ्छितं धर्मसंयुतम् । एवं विदित्वा गोपूजां विधेहि त्वमृतम्भर ॥२४
यो वै नित्यं पूजयति गां गेहे यवसादिभिः । तस्य देवाश्च पितरो नित्यं तृप्ता भवन्ति हि २५
यो वै गवाह्निकं दद्यान्नियमेन शुभव्रतः । तेन सत्येन तस्य स्युः सर्वे पूर्णा मनोरथाः ॥ २६
तृषिता गौर्गृह बद्धा गेहे कन्या रजस्वला । देवताश्च सनिर्माल्या हन्ति पुण्यं पुराकृतम् ॥ २७
यो वै गां प्रतिषिध्येत चरन्तीं स्वं तृणं नरः । तस्य पूर्वे च पितरः कम्पन्ते पतनोन्मुखाः ॥ २८
यो वै ताडयते यष्ट्या धेनुं मर्त्यो विमूढधीः । धर्मराजस्य नगरे स याति करवर्जितः ॥ २९
यो वै दंशान्वारयति तस्य पूर्वे कृतार्थकाः । नृत्यन्त्यत्युत्सवादस्मांस्तारयिष्यति भाग्यवान् ३०
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । जनकस्य पुरावृत्तं धर्मराजपुरेऽद्भुतम् ॥ ३१
एकदा जनको राजा योगेन तनुमत्यजत् । तदा विमानं संप्राप्तं किङ्किणीजालभूषितम् ॥ ३
तदारुह्य गतो राजा सेवकैरूढदेहवान् । मार्गे जगाम धर्मस्य संयमिन्याः पुरोऽन्तिके ॥ ३
तदा नरककोटीषु पीड्यन्ते पापकारिणः । जनकस्याङ्गपवनं प्राप्य सौख्यं प्रपेदिरे ॥ ३
निरये दाहजा पीडा जातैषां सुखकारिणी । महद्दुःखं तदा नष्टं जनकस्याङ्गवायुना ॥ ३
तदा तं निर्गतं दृष्ट्वा जन्तवः पापपीडिताः । अत्यन्तं चुक्रुशुर्भीतास्तद्वियोगमनिच्छवः ॥ ३
उचुस्ते करुणां वाचं मा गच्छ सुकृतिन्नतः । त्वदङ्गवायुसंस्पर्शात्सुखिनः स्याम पीडिताः ॥ ३
इति वाक्यं समाकर्ण्य राजा परमधार्मिकः । मानसे चिन्तयामास करुणापूरपूरिते ॥ ३
चेन्मत्तः प्राणिनां सौख्यं भवेदिह तदा पुनः । अत्रैव च पुरे स्थास्ये स्वर्ग एष मनोरमः ॥ ३
एवं कृत्वा नृपस्तस्थौ तत्रैव निरयाग्रतः । विदधत्प्राणिनां सौख्यमनुकम्पितमानसः ॥ ४
तत्र धर्मस्तु संप्राप्तो निरयद्वारि दुःखदे । कारयन्यातनास्तीव्रा नानापातककारिणाम् ॥ ४
स तं ददर्श राजानं जनकं द्वारसंस्थितम् । विमानेन महापुण्यकारिणं दयया युतम् ॥ ४
तमुवाच प्रेतपतिर्जनकं स हसन्गिरा । राजन्कुतस्त्वं संप्राप्तः सर्वधर्मशिरोमणिः ॥ ४
एतत्स्थानं त्वघवतां दुष्टानां प्राणघातिनाम् । नाऽऽयान्ति पुरुषा भूप त्वादृशाः पुण्यकारिणः
अत्राऽऽयान्ति नरास्ते वै ये परद्रोहतत्पराः । परापवादनिरताः परद्रव्यपरायणाः ॥ ४
यो वै कलत्रं धर्मिष्ठं निजसेवापरायणम् । अपराधादृते जह्यात्स नरोऽत्र समाव्रजेत् ॥ ४
मित्रं वञ्चयते यस्तु धनलोभेन लोभितः । आगत्यात्र नरः पीडां मत्तः प्राप्नोति दारुणाम् ॥४
यो रामं मनसा वाचा कर्मणा दम्भतोऽपि वा । द्वेषाद्वा चोपहासाद्वा न स्मरत्येव मूढधीः ॥४
तं बध्नामि पुनस्त्वेषु निक्षिप्य श्रपयामि च । यैः स्मृतो वै रमानाथो नरकक्लेशवारकः ॥

१ अ. °त्वा कथयाऽऽशु त्वं यत्कुर्यां । २ अ. प्रेष्ठं । ३ ग. छ. ड. ण. पद्भ्यां । ४ द. °वैं ह्यधोगताः । नृ° । ५ ङ. ज. झ. ठ. ण. त. थ. ध. गतार्थका । ६ क. ख. ग. छ ज. ञ. ठ. ड. ण. त. थ. ध. जाता शीतलका° । ७ क. घ. ङ. च. ज. झ. ञ. ट. ड. ढ. ग. थ. एव । ८ क. ख. घ. ङ. च. ज. झ. ञ. ट. ड. ढ. त. थ. द. °रये पापिदुः द. °रये पापिदुःखदः । का° । ९ ख. ग. छ. ज. ड. ण. त. थ. द. °क्षिपामि प्रमामि ।

[*ते मत्स्थानं विहायाऽऽशु वैकुण्ठाख्यं प्रयान्त्यहो ] । तावत्पापं मनुष्याणामङ्गेषु नृप तिष्ठति
यावद्रामं रसनया न गृह्णाति सुदुर्मतिः । महापापकरा राजन्ये भवन्ति महामते ॥ ५१
तानानयन्ति मद्भृत्यास्त्वादृशान्द्रष्टुमक्षमाः । तस्माद्गच्छ महाराज भुङ्क्ष्व भोगाननेकशः ॥ ५२
विमानवरमारुह्य भुङ्क्ष्व पुण्यमुपार्जितम् । इति वाक्यं समाकर्ण्य धर्मराजस्य तत्पतेः ॥
उवाच धर्मराजानं करुणापूरपूरितः ॥ ५३

जनक उवाच—

अहं गच्छामि नो नाथ जीवानामनुकम्पकः । मदङ्गवायुना ह्येते सुखं प्राप्ताः स्म संस्थिताः ॥ ५४
एतान्मुञ्चसि चेद्राजन्सर्वान्वै निरयस्थितान् । ततो गच्छामि सुखितः स्वर्गं पुण्यजनाश्रितम् ५५

जाबालिरुवाच—

इति वाक्यमथाऽऽश्रुत्य जनकं प्रत्युवाच सः । प्रत्येकं निर्दिशञ्जीवान्निरयस्थाननेकशः ॥ ५६

धर्मराज उवाच—

अयं मित्रकलत्रं वै विश्वस्तमनुजग्मिवान् । तस्मादेनं लोहशङ्कौ वर्षायुतमपीपचम् ॥ ५७
पश्चादेनं शूकराणां योनौ निक्षिप्य दोषिणम् । मानुषेष्ववतार्योऽयं षण्ढचिह्नेन चिह्नितः ॥ ५८
अनेन परदाराश्च बलादालिङ्गिता मुहुः । तस्मादयं पच्यतेऽत्र रौरवे शतहायनम् ॥ ५९
अयं तु परकीयं स्वं मुषित्वा बुभुजे कुधीः । तस्मादस्य करौ छित्त्वा पचेयं पूयशोणिते ॥ ६०
अयं सायंतनं प्राप्तमतिथिं क्षुधयाऽर्दितम् । वाण्याऽपि नाकरोत्तस्य पूजनं स्वागतं न च ॥ ६१
तस्मादयं पातनीयस्तामिस्रेऽन्धेन पूरिते । भ्रमरैः पीडितो यातु यातनां शतहायनाम् ॥ ६२
अयं तावत्परस्योच्चैर्निन्दां कुर्वन्न लज्जितः । अयमप्यशृणोत्कर्णौ प्रेरयन्बहुशस्तु ताम् ॥ ६३
तस्मादिमावन्धकूपे पतितौ दुःखदुःखितौ । अयं मित्रध्रुगुद्विग्नः पच्यते रौरवे भृशम् ॥ ६४
तस्मादेतान्पापभोगान्कारयित्वा विमोचये । त्वं गच्छ नरशार्दूल पुण्यराशिविधायकः ॥ ६५

जाबालिरुवाच—

एवं स निर्दिशञ्जीवांस्तूष्णीमासाघकारिणः । प्रोवाच रामभक्तोऽसौ करुणापूरितेक्षणः ॥ ६६

जनक उवाच—

कथं निरयनिर्मुक्तिर्जीवानां दुःखिनां भवेत् । तदत्र कथय त्वं वै यत्कृत्वा सुखमाप्नुयुः ॥ ६७

धर्मराज उवाच—

नैभिराराधितो विष्णुर्नैभिस्तस्य कथा श्रुता । कथं निरयनिर्मुक्तिर्भवेद्वै पापकारिणाम् ॥ ६८
यदि त्वं मोचयस्येतान्महापापकरानपि । तदर्पय महाराज पुण्यं तत्कथयाम्यतः ॥ ६९
एकदा प्रातरुत्थाय शुद्धभावेन चेतसा । [+ध्यातः श्रीरघुनाथोऽसौ महापापहराभिधः ] ॥ ७०
राम रामेति वै प्रोक्तं त्वयाऽकस्मान्नरोत्तम । तत्पुण्यमर्पयैतेभ्यो येन स्यान्निरयाच्च्युतिः ॥ ७१

---

* एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठो ग. छ. ठ. ङ. द. ध. पुस्तकस्थः ।

---

१ क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. शेष उवाच । २ द. °यं खङ्गाचि° । ३ झ. °पि नो सत्कार प्रभुवन्स्वागतं वचः । त° । ४ क. ख. ग. छ. ज. झ. ठ. ण. त थ. ध शेष उवाच । ५ ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. तदा क° । ६ क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. °या शुद्धेन चेतसा । त° ।

जाबालि रुवाच—

एतच्छ्रुत्वा वचस्तस्य धर्मराजस्य धीमतः । पुण्यं ददौ महाराज आजन्मसमुपार्जितम् ॥ ७२

[*मदाजन्मकृतैः पुण्यै रघुनाथार्चनोद्भवैः । एतेषां निरयान्मुक्तिर्भवत्वत्र मनोरमा]॥ ७३

एवं कथयतस्तस्य जीवा निरयसंस्थिताः । तत्क्षणान्निरयान्मुक्ता जाता दिव्यवपुर्धराः ॥ ७४

ऊचुस्ते जनकं राजंस्त्वत्प्रसादाद्वयं क्षणात् । दुःखदान्निरयान्मुक्ता यामो वै परमं पदम् ॥ ७५

तान्दृष्ट्वा सूर्यसंकाशान्नरान्निरयनिःसृतान् । तुतोष चित्ते सुभृशं सर्वभूतदयारतः ॥ ७६

ते सर्वे प्रययुर्लोकं दिव्यं देवैरलंकृतम् । जनकं तु प्रशंसन्तो महाराजं दयानिधिम् ॥ ७७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सत्यवदाख्यानं नाम त्रिंशोऽध्यायः ॥ ३० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२५९५

---

अथैकत्रिंशोऽध्यायः ।

---

जाबालिरुवाच—

अथ तेषु प्रयातेषु नरकस्थेषु वै नृषु । राजा पप्रच्छ कीनाशं सर्वधर्मविदां वरम् ॥ १

राजोवाच—

धर्मराज त्वया प्रोक्तं यत्पातककरा नराः । आयान्ति तत्र संस्थानं न च धर्मकथारताः ॥ २

मदागमनमत्राभूत्केन पापेन धार्मिक । तद्वै कथय सर्वं मे पापकारणमादितः ॥ ३

इति श्रुत्वा तु तद्वाक्यं धर्मराजः परंतपः । कथयामास तस्यैवं यमपुर्यागमं तदा ॥ ४

धर्मराज उवाच—

राजंस्तव महत्पुण्यं नैतादृक्कस्य भूतले । रघुनाथपदद्वंद्वमकरन्दमधुव्रत ॥ ५

त्वत्कीर्तिस्वर्धुनी सर्वान्पापिनो मलसंयुतान् । पुनाति परमाह्लादकारिणी दुष्टतारिणी ॥ ६

तथाऽपि पापलेशस्ते वर्तते नृपसत्तम । येन संयमिनीपार्श्वमागतः पुण्यपूरितः ॥ ७

एकदा तु चरन्तीं गां वारयामास वै भवान् । तेन पापविपाकेन निरयद्वारदर्शनम् ॥ ८

इदानीं पापनिर्मुक्तो बहुपुण्यसमन्वितः । भुङ्क्ष्व भोगान्सुविपुलान्निजपुण्यार्जितान्बहून् ॥ ९

एतेषां करुणावार्धी रघुनाथोऽसुखं हरन् । संयमिन्या महामार्गे प्रेरयामास वैष्णवम् ॥ १०

नाऽऽगमिष्यो यदि त्वं वै मार्गेणानेन सुव्रत । अभविष्यत्कथं त्वेषां निरयात्परिमोचनम् ॥ ११

त्वादृशाः परदुःखेन दुःखिताः करुणालयाः । प्राणिनां दुःखविच्छेदं कुर्वन्त्येव महामते ॥ १२

जाबालिरुवाच—

एवं वदन्तं शमनं प्रणम्य स दिवं गतः । दिव्येन सुविमानेन अप्सरोगणशोभिना ॥ १३

तस्माद्गावोऽनिशं पूज्या मनसाऽपि न गर्हयेत् । गर्हयन्निरयं याति यावदिन्द्राश्चतुर्दश ॥ १४

तस्मात्त्वं नृपतिश्रेष्ठ गोपूजां वै समाचर । सा तुष्टा दास्यति क्षिप्रं पुत्रं धर्मपरायणम् ॥ १५

सुमतिरुवाच—

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

---

१ क. ख. ग. छ. ञ. ट. ठ. ण. त. थ. ध. शेष उवाच । २ ङ. प्रभो । ३ क. ख. ज ञ. ड. ण. थ. शेष उवाच । ४ ख. ग. ज. ड. ण. त. थ. °कार्यं यथातथम् । इ° । ५ क. ख. छ. ज. ञ. ठ. ड. ण. त. थ. ध. कथयामास ।

तच्छ्रुत्वा धेनुपूजां स पप्रच्छ कथमादरात् । पूजनीया प्रयत्नेन कीदृशं कुरुते नरम् ॥ १६
जाबालिः कथयामास धेनुपूजां यथाविधि । प्रत्यहं विपिनं गच्छेच्चारणाय व्रती तु गोः ॥ १७
गवे यवांस्तु संभोज्य गोमयस्थान्समाहरेत् । भक्षणीया यवास्ते तु पुत्रकामेन भूपते ॥ १८
सा यदा पिबते तोयं तदा पेयं जलं शुचि । सोच्चस्थाने यदा तिष्ठेत्तदा नीचासनस्थितः ॥ १९
दंशान्निवारयेन्नित्यं यवसं स्वयमाहरेत् । एवं प्रकुर्वतः पुत्रं दास्यते धर्मतत्परम् ॥ २०

सुमतिरुवाच—

इति वाक्यं समाकर्ण्य पुत्रकाम ऋतम्भरः । व्रतं चकार धर्मात्मा धेनुपूजां समाचरन् ॥ २१
प्रत्यहं कुरुते गां च यवसाद्येन तोषिताम् । दंशाद्यवारयद्धीमान्यवभक्षकृतादरः ॥ २२
एवं धेनुं पूजयतो गतास्तु दिवसा घनाः । वनमध्ये तृणादींश्च चरन्तीमकुतोभयाम् ॥ २३
एकदा नृपतिस्तस्य वनस्य श्रीनिरीक्षणे । न्यस्तदृष्टिः स परितो बभ्राम सुकुतूहली ॥ २४
तदाऽऽगत्याहनद्गां वै पञ्चास्यः काननान्तरात् । क्रोशन्तीं बहुधा दीनां हम्भारावेण दुःखिताम् ॥
तदा नृपः समागत्य विलोक्य निजमातरम् । सिंहेन निहतां पश्यन्नरोदातीव विह्वलः ॥ २६
स दुःखितः समागत्य जाबालिं मुनिसत्तमम् । निष्कृतिं तस्य पप्रच्छ गोवधस्य प्रमादतः ॥ २७

[*ऋतम्भर उवाच—

स्वामिंस्त्वदाज्ञया धेनुं पालयन्वनमास्थितः । कुतोऽप्यागत्य तां सिंहो जघानादृष्टिगोचरः ॥ २८
तस्य पापस्य निष्कृत्यै किं करोमि त्वदाज्ञया । कथं वा व्रतसंपूर्तिर्मम पुत्रप्रदायिनी ॥ २९
इत्युक्तवन्तं तं भूपं जगाद मुनिसत्तमः । सन्त्युपाया महीपाल पापराश्यपनुत्तये ॥ ३०
ब्रह्मघ्नस्य कृतघ्नस्य सुरापस्य महामते । प्रायश्चित्तानि वर्तन्ते सर्वपापहराणि च ॥ ३१
कृच्छ्रैश्चान्द्रायणैर्दानैर्व्रतैः सनियमैर्महत् । पापं तु प्रलयं याति नियमादनुतिष्ठतः ॥ ३२
द्वयोर्वै निष्कृतिर्नास्ति पापपुञ्जकृतोस्तयोः । मत्या गोवधकर्तुश्च नारायणविनिन्दितुः ॥ ३३
गवां यो मनसा दुःखं वाञ्छत्यधमसत्तमः । स याति निरयस्थानं यावदिन्द्राश्चतुर्दश ॥ ३४
योऽपि देवं हरिं निन्देत्सकृद्दुर्भाग्यवान्नरः । स चापि नरकं गच्छेत्पुत्रपौत्रपरिवृतः ॥ ३५
तस्माज्ज्ञात्वा हरिं निन्दन्गोषु दुःखं समाचरन् । कदाऽपि नरकान्मुक्तिं न प्राप्नोति नरेश्वर ३६
अज्ञानप्राप्तगोहत्याप्रायश्चित्तं तु विद्यते । रामभक्तं तु धीमन्तं याहि त्वमृतुपर्णकम् ॥ ३७
स वै समदृशा सर्वाञ्शत्रून्मित्रान्समं चरन् । तुभ्यं वदिष्यति क्षिप्रं गोवधस्यास्य निष्कृतिम् ३८
तस्य देशांस्त्वमाक्रामंस्तेन निर्वासितः पुरा । वैरिभावं परित्यज्य गच्छ त्वमृतुपर्णकम् ॥ ३९
स यद्वदिष्यति क्षिप्रं तत्कुरुष्व समाहितः । यथा त्वत्कृतपापस्य निष्कृतिर्हि भविष्यति ॥ ४०
स तु तद्वचनं श्रुत्वा जगाम ऋतुपर्णकम् । रामभक्तं रिपौ मित्रे समदृष्ट्या समञ्जसम् ॥ ४१
स तस्मै कथयामास यज्जातं गोवधादिकम् । तस्य पापस्य निष्कृत्यै ह्यायातं स्वान्तमुक्तवान् ४२
तदा प्रोवाच तं राजा ऋतुपर्णः प्रतापवान् । उवाच च हसन्वाक्यं बुद्धिमान्धर्मकोविदः ॥ ४३
कोऽहं स्वामिन्मुनीनां वै पुरतः शास्त्रवेदिनाम् । तान्हित्वा किंतु मां प्राप्तो मूर्ख पण्डितमानिनम्

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. घ. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ ञ. °सायनाः । २ ड. °जधेनुकाम् । ३ ञ. कृतघ्नस्य । ४ द °मैर्यमैः । पा° । ५ च. ड. द °त्यै ह्युपायं सोऽप्यचिन्तयत् । क्षणं ध्यात्वाऽथ तं राजा ऋतुपर्ण ऋतम्भरम् । त° । ६ च. ड. °दः । कथं त्वं स्वरिपुं राजन्संप्राप्तः शास्त्रवेदिनः । हित्वा मां स्वहितं प्रष्टुं मु° ।

मयि ते यस्ति चेच्छ्रद्धा तदा किंचिद्ब्रवीम्यहम् । शृणुष्व नरशार्दूल गदितं मम सादरः ॥ ४५
भज श्रीरघुनाथं त्वं कर्मणा मनसा गिरा । नै(नि?)ष्कापट्येन लोकेशं तोषयस्व महामते ॥ ४६
संतुष्टो दास्यते सर्वं तव हृत्स्थं मनोरथम् । अज्ञानकृतगोहत्यापापनाशं करिष्यति ॥ ४७
रामस्मरणपूतात्मा धेनुं ब्राह्मणसत्तमे । दत्त्वा यथोक्तं कनकं पापनिष्कृतिमाप्स्यसि ॥ ४८

सुमतिरुवाच—

एतच्छ्रुत्वा तु तद्वाक्यमृतम्भरनृपस्तथा । विधाय रामस्मरणं पूतात्मा व्रतमाचरत् ॥ ४९
पूर्ववत्पालयन्धेनुं जगाम विपिनं महत् । रामनाम स्मरन्नित्यं सर्वभूतहिते रतः ॥ ५०
तस्मै तुष्टा तु सुरभिः प्रोवाच परितोषिता । राजन्वरय मत्तो वै वरं हृत्स्थं मनोरमम् ॥ ५१
तदा प्रोवाच वै राजा पुत्रं देहि मनोरमम् । रामभक्तं पितुर्भक्तं स्वधर्मप्रतिपालकम् ॥ ५२
तुष्टा दत्त्वा वरं साऽपि तस्मै राज्ञे सुतार्थिने । जगामादर्शनं देवी कामधेनुः कृपावती ॥ ५३
स काले प्राप्तवान्पुत्रं वैष्णवं रामसेवकम् । सत्यवत्संज्ञया युक्तमकरोन्नाम तत्पिता ॥ ५४
सत्यवन्तं सुतं लब्ध्वा पितृभक्तमृतम्भरः । परमं हर्षमापेदे शक्रतुल्यपराक्रमम् ॥ ५५
स राजा धार्मिकं पुत्रं दृष्ट्वा हर्षेण निर्वृतः । राज्यं तस्मिन्महत्न्यस्य जगाम तपसे वनम् ॥ ५६
तत्राऽऽराध्य हृषीकेशं भक्तियुक्तेन चेतसा । निर्धूतपापैःसतनुरगाद्धरिपदं नृपः ॥ ५७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सत्यवदाख्यानं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२६५२

---

अथ द्वात्रिंशोऽध्यायः ।

---

सुमतिरुवाच—

असावपि नृपः सौम्य सत्यवान्नाम विश्रुतः । निजधर्मेण लोकेशं रघुनाथमतोषयत् ॥ १
अस्मै तुष्टो रमानाथो ददौ भक्तिमचञ्चलाम् । निजाङ्घ्रिपद्मे यजतां दुर्लभां पुण्यकोटिभिः ॥ २
नित्यं श्रीरघुनाथस्य कथानकमनातुरः । कुरुते सर्वलोकानां पावनं कृपया युतः ॥ ३
यो न पूजयते देवं रघुनाथं रमापतिम् । स तेन ताड्यते दण्डैर्यमस्यापि भयावहैः ॥ ४
अष्टमाद्वत्सरादूर्ध्वमशीतिर्वत्सरो भवेत् । तावदेकादशी सर्वैर्मानुषैः कारिताऽमुना ॥ ५
तुलसी वल्लभा यस्य कदाचिद्यच्छिरोधराम् । न मुञ्चति रमानाथपादपद्मस्रगुत्तमा ॥ ६
ऋषीणामपि पूज्योऽयमितरेषां कथं न हि । रघुनाथस्मृतिप्रीतिधूतपापो हताशुभः ॥ ७
ज्ञात्वाऽयं रामचन्द्रस्य वाजिनं परमाद्भुतम् । आगत्य तुभ्यं संदास्यत्येतद्राज्यमकण्टकम् ॥ ८
यत्त्वयाऽभिहितं राजंस्तत्ते कथितमुत्तमम् । पुनः किं पृच्छसे स्वामिन्नाज्ञापय करोमि तत् ॥ ९

---

१ च. द. रामं स्मरंस्त्वं धर्मात्मन्धेनुं पालय सत्तम । दत्त्वा द्विजाय क° । २ ङ. °नुं पालय सत्तम । दत्त्वा विप्राय-क° । ३ क. ख. ग. छ. ज. ञ. ण. त. थ °पः स्वजनैर° । ४ क. ख. ण ज ञ. ठ. ण त. थ. ध. शेष उवाच । ५ ञ. °च—एतद्राष्ट्राधिपः । ६ छ. ङ.भक्तिं सुनिर्मलाम् । ७ क. ख. ग. छ. ज ञ. ठ. ण. त. थ. °षै रामसेवकः । तु° । ८ ङ. °ताऽऽदरात् । तु° । ९ थ. °स्य रामस्याऽऽनन्दमूर्तिनः । तस्यास्तु स्पर्शनादेव मुक्तिभागी भवेन्नरः । ऋ° ।

शेष उवाच—

यतोऽश्वस्तत्पुरान्तस्तु नानाश्चर्यसमन्वितः । तं दृष्ट्वा जनताः सर्वा राज्ञे गत्वा न्यवेदयन् ॥ १०

जनता ऊचुः—

कोऽप्यश्वः सितवर्णेन गङ्गाजलसमेन वै । भाले सौवर्णपत्रेण राजमानः समागतः ॥ ११
तच्छ्रुत्वा वचनं रम्यं जनानां हृद्यमीरितम् । ताश्च मत्वाह वै भूपो ज्ञायतां कस्य वै हयः ॥ १२
ताश्चैतं कथयामासुः शत्रुघ्नेन प्रपालितः । आयात्यश्वो महीभर्तू रामस्य पुरमध्यतः ॥ १३
रामस्य नाम स श्रुत्वा द्व्यक्षरं सुमनोरमम् । जहर्ष चित्ते च भृशं गद्गदस्वरचिह्नितः ॥ १४
मया यो धार्यते नित्यं यो रामश्चिन्त्यते हृदि । तस्याश्वः सहशत्रुघ्नः समायातः पुरे मम ॥ १५
हनूमांस्तत्र रामाङ्घ्रिसेवाकर्ता भविष्यति । कदाचिदपि यो रामं न विस्मरति मानसे ॥ १६
गच्छामि यत्र शत्रुघ्नो यत्र मारुतनन्दनः । अन्येऽपि यत्र पुरुषा रामपादाब्जसेवकाः ॥ १७
अमात्यमादिदेशाथ सर्वराज्यं धनं महत् । गृहीत्वा तु मया सार्धमागच्छ त्वरया युतः ॥ १८
यास्येऽहं रघुनाथस्य हयं पालयितुं वरम् । कर्तुं वा रामपादाब्जपरिचर्यां सुदुर्लभाम् ॥ १९
इत्युक्त्वा निर्जगामाथ शत्रुघ्नं प्रति सैनिकैः । तावत्पुरीमथ प्राप्तो रामभ्राता ससैनिकः ॥ २०
वीरा गर्जन्ति प्रबला रथाः सुनिनदन्ति च । जयशङ्खस्य नादाश्च वीणानादाश्च सर्वतः ॥ २१
आगत्य सत्यवान्राजा मन्त्रिभिः सुसमन्वितः । चरणे प्रणिपत्यास्मै राज्यं प्रादान्महाधनम् ॥ २२
शत्रुघ्नस्तं तु राजानं ज्ञात्वा राममनुव्रतम् । तद्राज्यं तस्य पुत्राय रुक्मनाम्ने ददौ महत् ॥ २३
हनूमन्तं परिरभ्य सुबाहुं रामसेवकम् । अन्यान्वै रामभक्तांश्च परिरभ्य महानृपः ॥ २४
कृतार्थमेवमात्मानं मेने सत्यसमन्वितः । ननन्द चेतसि तदा शत्रुघ्नेन समन्वितः ॥ २५
हयस्तावद्गतो दूरं वीरैः सुपरिरक्षितः । शत्रुघ्नस्तेन भूपेन ययौ वीरसमन्वितः ॥ २६

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सत्यवत्समागमो नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२६७८

---

अथ त्रयस्त्रिंशोऽध्यायः ।

---

शेष उवाच—

गच्छत्सु रथिवर्येषु शत्रुघ्नादिषु भूरिषु । महाराजेषु सर्वेषु रथकोटियुतेषु च ॥
अकस्मादभवन्मार्गे तमः परमदारुणम् । यस्मिन्स्वीयो न पारक्यो लक्ष्यते ज्ञानिभिर्नरैः ॥
रजसा व्यापितं व्योम विद्युत्स्तनितसंकुलम् । एतादृशे तु संमर्दे महाभयकरे ततः ॥
मेघा वर्षन्ति रुधिरं पूयामेध्यादिकं बहु । अत्याकुला बभूवुस्ते वीराः परमवैरिणः ॥
आकुलीकृतलोके तु किमिदं किमिति स्थितम् । तमोव्याप्तानि लोकानां चक्षूंषि प्रथितौजसाम्
जहाराश्वं रावणस्य सुहृत्पातालसंस्थितः । विद्युन्मालीति विख्यातो राक्षसश्रेणिसंवृतः ॥
कामगे सुविमाने तु सर्वायसानिषोत्रोणि । आरूढोऽश्वं तु वीराणां भयं कुर्वञ्जहार ह ॥
मुहूर्तात्तत्तमो नष्टमाकाशं विमलं बभौ । वीराः शत्रुघ्नमुख्यास्तु प्रोचुः कुत्र हयोऽस्ति सः ॥
ते सर्वे हयराजं तु लोकयन्तः परस्परम् । ददृशुर्न यदा वाहं हाहाकारस्तदाऽभवत् ॥

---

१ झ. म. ट. यो मां तु न । २ द. °श्व वेणुना° । ३ ग. छ. ज. ठ. ड. ण. त. थ. ध. महामनाः । द. महाय ाः

कुत्राश्वो हयमेधस्य केन नीतः कुबुद्धिना । इति वाचमवोचुस्ते तावत्स दनुजेश्वरः ॥ १०
ददृशे सुभटैः सर्वै रथस्थैः शौर्यशोभितैः । विमानवरमारूढो राक्षसाग्र्यैः समावृतः ॥ ११
दुर्मुखा विकरालास्या लम्बदंष्ट्रा भयानकाः । राक्षसास्तत्र दृश्यन्ते सैन्यग्रासाय चोद्यताः ॥ १२
तदा तं वेदयामासुः शत्रुघ्नं नृवरोत्तमम् । हयो नीतो न जानीमः खे विमानविलासिना ॥ १३
तमसा व्याकुलान्कृत्वा वीरानस्मान्स मायया । जग्राह नृपशार्दूल हयं कुरु यथोचितम् ॥ १४
शत्रुघ्नस्तद्वचः श्रुत्वा महारोषसमावृतः । कोऽस्त्येष राक्षसो यो मे हयं जग्राह वीर्यवान् ॥ १५
विमानं तत्पतत्वद्य मद्बाणव्रजनिर्धुतम् । पतत्वद्य शिरस्तस्य क्षुरप्रैर्मम वैरिणः ॥ १६
सज्जीयन्तां रथाः सर्वे महाशस्त्रास्त्रपूरिताः । यान्तु तं प्रति संहर्तुं योद्धारो वाजिहारिणम् ॥ १७
इत्युक्त्वा रोषताम्राक्ष उवाच निजमन्त्रिणम् । नयानयविदं शूरं युद्धकार्यविशारदम् ॥ १८

शत्रुघ्न उवाच—

मन्त्रिन्कथय के योज्या राक्षसस्य वधोद्यताः । महाशूरा महाशस्त्राः परमास्त्रविदुत्तमाः ॥ १९
कथयाऽऽशु विचार्यैवं तत्करोमि भवद्वचः । वीरान्कथय तस्यैवं योग्यान्सर्वास्त्रकोविदान् ॥ २०
एतच्छ्रुत्वाऽथ सचिवः प्राह वाक्यं यथोचितम् । रणे वीरवरान्योग्यान्निर्दिशंस्तरसाऽन्वितान् २१

सुमतिरुवाच—

जेतुं गच्छतु तद्रक्षः समरे विजयोद्यतः । महाञ्शस्त्रास्त्रसंयुक्तः पुष्कलः परतापनः ॥ २२
तथा लक्ष्मीनिधिर्यातु शस्त्रसंघसमन्वितः । करोतु तस्य यानस्य भङ्गं तीक्ष्णैः स्वसायकैः ॥ २३
हनूमान्दृष्टकर्माऽत्र राक्षसायोधनक्षमः । करोतु मुखपुच्छाभ्यां ताडनं रक्षसां प्रभो ॥ २४
वानरा अपि ये वीरा रणकर्मविशारदाः । गच्छन्तु तेऽखिला योद्धुं तव वाक्यप्रणोदिताः ॥२५
सुमदश्च सुबाहुश्च प्रतापाग्र्यश्च सत्तमाः । गच्छन्तु सायकैस्तीक्ष्णैस्तान्योद्धुं राक्षसाधमान् ॥ २६
भवानपि महाशस्त्रपरीवारो रथे स्थितः । करोतु विजयं युद्धे राक्षसं हन्तुमुद्यतः ॥ २७
एतन्मम मतं राजन्ये योधास्तत्प्रमर्दनाः । ते गच्छन्तु रणे शूराः किमन्यैर्बहुभिर्भटैः ॥ २८
इत्युक्तवति वीराग्र्येऽमात्ये सुमतिसंज्ञके । शत्रुघ्नः कथयामास वीरान्संग्रामकोविदान् ॥ २९
ये वीराः पुष्कलाद्यास्तु सर्वशस्त्रास्त्रकोविदाः । ते वदन्तु प्रतिज्ञां वै मत्पुरो राक्षसार्दने ॥ ३०
कृत्वा प्रतिज्ञां विपुलां स्वपराक्रमशोभिनीम् । गच्छन्तु रणमध्ये हि यूयं बलसमन्विताः ॥ ३१
इति वाक्यं समाकर्ण्य शत्रुघ्नस्य महाबलाः । स्वां स्वां प्रतिज्ञां महतीं चक्रुस्तेजःसमन्विताः ३२
तत्राऽऽदौ पुष्कलो वीरः श्रुत्वा वाक्यं महीपतेः । परमोत्साहसंपन्नः प्रतिज्ञामूचिवानिमाम् ३३

पुष्कल उवाच—

शृणुष्व नृपशार्दूल मत्प्रतिज्ञां पराक्रमात् । विहितां सर्वलोकानां शृण्वतां परमाद्भुताम् ॥ ३४
चेन्न कुर्यां क्षुरप्राग्र्यैस्तीक्ष्णैः कोदण्डनिर्गतैः । दैत्यं मूर्छासमाक्रान्तं कीर्णकेशाकुलाननम् ॥ ३५
कन्यास्वभोक्तुर्यत्पापं यत्पापं देवनिन्दने । तत्पापं मम वै भूयाच्चेत्कुर्यां स्ववचोऽनृतम् ॥ ३६
यदि मद्बाणनिर्भिन्नाः सैनिकाः सुमहाबलाः । न पतन्ति महाराज प्रतिज्ञां तत्र मे शृणु ॥ ३७
विष्णवीशयोर्विभेदं यः शिवशक्त्योः करोत्यपि । तत्पापं मम वै भूयाच्चेन्न कुर्यामृतं वचः ॥ ३८

१ क. ख. ग. छ. ज. ञ. ड. ण. त. थ. °न्ते हयग्राहकरोद्य° । २ क. ख. ग. छ. ञ. ठ. ड. ण. त थ. द. घ. °निर्हत° । ३ क. ख. ग. छ. ज. ञ. ण त. थ. °प्रैर्मे महीतले । स° ४ ञ. शस्त्रास्त्रौघ° । । ५ द. °मान्दृष्ट° । ६ ञ. °नं राक्षसाशनम् । वा । ७ क. ख. ग.छ. ञ. ठ. ड. ण. त. थ. ध. °चिवस्तिदा । पु° । ८ °म संभयाद्यदि कुर्वेऽनृतं वचः । य°!

सर्वं मद्वाक्यमित्युक्तं रघुनाथपदाम्बुजे । भक्तिर्मे निश्चला याऽस्ति सैव सत्यं करिष्यति ॥ ३९
पुष्कलस्य प्रतिज्ञां तां श्रुत्वा लक्ष्मीनिधिर्नृपः । प्रतिज्ञां व्यदधात्सत्यां स्वपराक्रमशोभिताम् ४०

लक्ष्मीनिधिरुवाच—

वेदानां निन्दनं श्रुत्वा आस्ते यो मौनिवन्नरः । मानसे रोचयेद्यस्तु सर्वधर्मबहिष्कृतः ॥ ४१
ब्राह्मणो यो दुराचारो रसलाक्षादिविक्रयी । विक्रीणाति च गां मूढो धनलोभेन मोहितः ॥४२
म्लेच्छकूपोदकं पीत्वा प्रायश्चित्तं तु नाऽऽचरेत् । तत्पापं मम वै भूयाद्विमुखश्चेद्भवाम्यहम् ॥ ४३
तत्प्रतिज्ञामथाऽऽश्रुत्य हनूमान्रणकोविदः । रामाङ्घ्रिस्मरणं कृत्वा प्रोवाच वचनं शुभम् ॥ ४४
मत्स्वामी हृदये नित्यं ध्येयो वै योगिभिर्मुहुः । यं देवाः सासुराः सर्वे नमन्ति मणिमौलिभिः ॥
रामः श्रीमानयोध्यायाः पतिर्लोकेशपूजितः । तं स्मृत्वा यद्ब्रुवे वाक्यं तद्वै सत्यं भविष्यति ॥४६
राजन्कोऽयं लघुर्दैत्यो दुर्बलः कामगे स्थितः । कथयाऽऽशु मया कार्यमेकेनैव विनिपातनम् ॥ ४७
मेरुं देवेन्द्रसहितं लाङ्गूलाग्रेण तोलये । जलधिं शोषये सर्वं सांवर्तं वा पिबाम्यहम् ॥ ४८
राज्ञः श्रीरघुनाथस्य जानक्याः कृपया मम । तन्नास्ति भूतले राजन्यदसाध्यं कदा भवेत् ॥ ४९
एतद्वाक्यं मया प्रोक्तमनृतं स्याद्यदि प्रभो । तदैव रघुनाथस्य भक्तिदूरो भवाम्यहम् ॥ ५०
यः शूद्रः कपिलां गां वै पयोबुद्ध्याऽनुपालयेत् । तस्य पापं ममैवास्तु चेत्कुर्यामनृतं वचः ॥ ५१
[*ब्राह्मणीं गच्छते मोहाच्छूद्रः कामविमोहितः । तस्य पापं ममैवास्तु चेत्कुर्यामनृतं वचः ॥५२
यद्घ्राणान्नरकं गच्छेत्स्पर्शनाच्चापि रौरवम् । तां पिबन्मदिरां यो वा जिह्वास्वादेन लोलुपः ५३
तस्य यज्जायते पापं तन्ममैवास्तु निश्चितम् । चेन्न कुर्यां प्रतिज्ञां स्वां सत्यां रामकृपाबलात् ॥५४
एवमुक्ते महावीरा योद्धारस्तरसा युताः । चक्रुः प्रतिज्ञां महतीं स्वपराक्रमशालिनीम् ॥ ५५
शत्रुघ्नोऽपि व्यधात्तत्र प्रतिज्ञां पश्यतां नृणाम् । साधु साधु प्रशंसंश्च तान्वीरान्युद्धकोविदान् ॥
कथयामि पुरो वः स्वां प्रतिज्ञां सत्त्वशोभिताम् । तच्छृण्वन्तु महाभागा युद्धोत्साहसमन्विताः ॥
चेत्तस्य शिर आहृत्य पातयामि न सायकैः । विमानाच्च कबन्धाच्च भिन्नं छिन्नं च भूतले ॥ ५८
यत्पापं कूटसाक्ष्येण यत्पापं स्वर्णचौर्यतः । यत्पापं ब्रह्मनिन्दायां तन्ममास्त्वद्य निश्चयात् ॥५९
इति [illegible]वाक्यं श्रुत्वा ते वीरपूजिताः । धन्योऽसि राघवभ्रातः कस्त्वदन्योऽपरो भवेत् ॥६०
[illegible] ... ६१
त्वया विनिहतो दैत्यो देवदानवदुःखदः । लवणो नाम लोकेश मधुपुत्रो महाबलः ॥
कोऽयं वै राक्षसो दुष्टः क चास्य बलमल्पकम् । करिष्यसि क्षणादेव तस्यापायं महामते ॥ ६२
इत्युक्त्वा ते महावीराः सज्जीभूता रणाङ्गणे । प्रतिज्ञां स्वामृतां कर्तुं ययुस्ते राक्षसं मुदा ॥ ६३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे वीराणां प्रतिज्ञाकथनं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥

आदितः श्लोकानां समष्ट्यङ्काः—१२७४१

---

अथ चतुस्त्रिंशोऽध्यायः ।

---

शेष उवाच—

रथैः सदश्वैः शोभाढ्यैः सर्वशस्त्रास्त्रपूरितैः । नानारत्नसमायुक्तैर्ययुस्ते राक्षसाधमम् ॥

---

* एतच्चिह्नान्तर्गतः पाठः, क. ख. ग. छ. ज. ञ. ण. त. थ. पुस्तकस्थः ।

१ क. ख. ग. छ. ज. ञ. ड. ण. त. थ. 'ला कार्यं करिष्यति मनीषितम् । पु° । २ ङ. °ति तिलान्मूढो । ३ ख. घ. ङ. च. झ. ञ. ट. ठ. ड. ण. द. ध. °न किमसाध्यकम् ।

तान्दृष्ट्वा कामगे याने स्थितः प्रोवाच राक्षसः । मेघगम्भीरया वाचा तर्जयन्निव भूरिशः ॥ २
मा यान्तु सुभटा योद्धुं गच्छन्तु निजमन्दिरम् । मा त्यजन्तु स्वकात्प्राणान्न मोक्ष्ये वाजिनं वरम् ३
विद्युन्मालीति विख्यातो रावणस्य सुहृत्सखा । मत्सख्युः प्रेतभूतस्य निष्कृतिं कर्तुमेयिवान् ॥ ४
क्वासौ रामो ममाऽऽहृत्य सखायं रावणं गतः । तस्य भ्राताऽपि कुत्राऽऽस्ते सर्वशूरशिरोमणिः ॥ ५
तं हत्वा निष्कृतिं तस्य प्राप्स्ये रामस्य चानुजम् । पिबन्रुधिरमुद्भूतं कण्ठनालस्य बुद्बुदैः ॥ ६
इति वाक्यं समाकर्ण्य योधानां प्रवरो महान् । पुष्कलो निजगादेनं वीर्यशौर्यसमन्वितम् ॥ ७

पुष्कल उवाच—

विकत्थनं न कुर्वन्ति संग्रामे सुभटा नराः । पराक्रमं दर्शयन्ति निजशस्त्रास्त्रवर्षणैः ॥ ८
रावणो निहतो येन ससुहृद्बलवाहनः । तस्य वाजिनमाहृत्य कुत्र गन्तासि दुर्मते ॥ ९
पतिष्यसि त्वं शत्रुघ्नबाणैः कोदण्डनिर्गतैः । त्वामत्स्यन्ति शिवा भूमौ पतितं प्राणवर्जितम् ॥ १०
मा गर्ज दुष्ट रामस्य सेवके मयि सुस्थिते । गर्जन्ति सुभटा युद्धे शत्रूञ्जित्वा महोदयान् ॥ ११

शेष उवाच—

एवं ब्रुवन्तं तं वीरं पुष्कलं रणदुर्मदम् । जघान शक्त्या सुभृशं हृदि राक्षससत्तमः ॥ १२
आयान्तीं तां महाशक्तिमायसीं काञ्चनाश्रिताम् । चिच्छेद त्रिभिरत्युग्रैः शितैर्बाणैः स पुष्कलः ॥
सा त्रिधा व्यपतद्भूमौ विशिखैर्निष्प्रभीकृता । पतन्ती विरराजासौ विष्णोः शक्तित्रयीव किम् १४
तां छिन्नां शक्तिकां दृष्ट्वा राक्षसः परतापनः । शूलं जग्राह तरसा त्रिशिखं लोहनिर्मितम् ॥ १५
तीक्ष्णाग्रं ज्वलनप्रख्यं राक्षसेन्द्रो व्यमोचयत् । आयान्तं तिलशश्चक्रे बाणैः पुष्कलसंज्ञितः ॥ १६
छित्त्वा त्रिशूलं तरसा राघवस्य हि सेवकः । पुष्कलश्चाप आधत्त बाणांस्तीक्ष्णान्मनोजवान् १७
ते बाणा हृदि तस्याऽऽशु लग्ना रागं बतासृजन् । वैष्णवस्य यथा स्वान्ते गुणा विष्णोर्मनोहराः १८
तद्बाणवेधदुःखार्तो विद्युन्माली सुमर्दनः । जग्राह मुद्गरं घोरं पुष्कलं हन्तुमुद्यतः ॥ १९
मुद्गरः प्रहितस्तेन विद्युन्माल्यभिधेन हि । हृदि लग्नोऽसृज(भव)च्छीघ्रं कश्मलं तदकारयत् ॥ २०
मुद्गरप्रहतो वीरः कम्पमानः सवेपथुः । पपात स्यन्दनोपस्थे पुष्कलः शत्रुतापनः ॥ २१
उग्रदंष्ट्रोऽथ तद्भ्राता लक्ष्मीनिधिमयोधयत् । शस्त्रास्त्रैर्बहुधा मुक्तैर्वीरप्राणाहृतिंकरैः ॥ २२
पुष्कलस्तत्क्षणात्प्राप्य संज्ञां राक्षसमब्रवीत् । धन्योऽसि राक्षसश्रेष्ठ महीयांस्ते पराक्रमः ॥ २३
पश्येदानीं ममाप्युच्चैः प्रतिज्ञां शूरमानिताम् । विमानात्पातयाम्यद्य भूमौ त्वां शितसायकैः ॥ २४
इत्युक्त्वा निशितं बाणं समगृह्णाद्दुरासदम् । ज्वलन्तममितेजस्कं महोदार्यसमन्वितम् ॥ २५
स यावत्तं प्रतीकर्तुं विधत्ते स्वपराक्रमम् । तावद्धृदि [3]ततो लग्नस्तीक्ष्णवक्त्रः स सायकः ॥ २६
तेन बाणेन विभ्रान्तो भ्रमच्चित्तः स राक्षसः । पपात कामगोपस्थाद्भूमौ विगतचेतनः ॥ २७
उग्रदंष्ट्रेण वै दृष्टः पतमानो निजाग्रजः । गृहीत्वा तं विमानान्तर्निनाय रिपुशङ्कितः ॥ २८
प्राह चारिं महारोषात्पुष्कलं बलिनां वरम् । मद्भ्रातरं पातयित्वा कुत्र यास्यसि दुर्मते ॥ २९
मां वै युधि विनिर्जित्य गन्तासि जयमुत्तमम् । स्थिते मयि तव स्वान्ते जयाशा विनिवर्तताम् ३०
एवं ब्रुवन्तं तरसा जघान दशभिः शरैः । हृदये तस्य दुष्टस्य रोषपूरितलोचनः ॥ ३१
स ताडितो दशशरैः पुष्कलेन महात्मना । चुक्रोध हृदि दुर्बुद्धिस्तं हन्तुं तु प्रचक्रमे ॥ ३२

---

१ क. ख. ग. छ. ज. झ. ठ. ण. त. थ. द. ध. °हृत्स्वजनैर्वृतः । त° । २ ग. छ. ठ. ड. थ. द. भ सुदुर्मदः ।
३ द. °तोऽस्युग्रस्तीक्ष्णधारः स । ४ भ. °मानं तु निना° ।

दन्तान्निष्पीड्य सक्रोधं मुष्टिमुद्यम्य चोरसि । व्यहनद्वज्रनिर्घातपातशङ्कां सृजन्हृदि ॥ ३३
मुष्टिनाऽभिहतो वीरः पुष्कलः परमास्त्रवित् । नाकम्पत विनिष्पेषं वाञ्छंस्तस्य दुरात्मनः ॥ ३४
वत्सदन्तान्महातीक्ष्णान्मुमोच हृदये ततः । तैर्बाणैर्व्यथितो दैत्यस्त्रिशूलं तु समाददे ॥ ३५
जाज्वल्यमानं त्रिशिखं ज्वालामालातिभीषणम् । लग्नं हृदि महावीरपुष्कलस्य सुदारुणम् ॥ ३६
मूर्छितस्तेन शूलेन निहतो धन्विसत्तमः । कश्मलं परमं प्राप्तः पपात स्यन्दनोपरि ॥ ३७
मूर्छाप्राप्तं समाज्ञाय हनुमान्पवनात्मजः । कोपव्याकुलितः स्वान्ते बभाषे तं तु राक्षसम् ॥ ३८
कुत्र गच्छसि दुर्बुद्धे मयि योद्धरि सुस्थिते । त्वां हन्मि चरणाघातैर्वाजिहर्तारमागतम् ॥ ३९
एवमुक्त्वा महादैत्याञ्जघान परसैनिकान् । विमानस्थान्नखाग्रेण दारयन्नभसि स्थितः ॥ ४०
लाङ्गूलेनाऽऽहताः केचित्केचित्पादतलाहताः । बाहुभ्यां दारिताः केचित्पवनस्य तनूभुवा ॥ ४१
नश्यन्ति केचिन्निहताः केचिन्मूर्छन्ति संहताः । पलायन्ते तदाघातभयपीडाहतास्ततः ॥ ४२
अनेके निहतास्तत्र राक्षसाश्चातिदारुणाः । छिन्ना भिन्ना द्विधा जाताः पवनस्य सुतेन वै ॥ ४३
कामगं तु विमानं तद्भिन्नप्राकारतोरणम् । हाहाकुर्वद्भिरसुरैः समन्तात्परिवारितम् ॥ ४४
हनूमति महाशूरे क्षणं भूमौ क्षणं दिवि । इतस्ततः प्रदृश्येत कामयानं दुरासदम् ॥ ४५
यत्र यत्र विमानं तत्तत्र तत्र समीरजः । प्रहरन्नेव दृश्येत कामरूपधरः कपिः ॥ ४६
एवं तदाऽऽकुलीभूते विमानस्थे महाजने । उग्रदंष्ट्रस्तु दैत्येन्द्रो हनूमन्तमुपेयिवान् ॥ ४७
कपे त्वया महत्कृत्यं कृतं यद्भटपातनम् । क्षणं तिष्ठसि चेत्कुर्वे तव प्राणवियोजनम् ॥ ४८
एवमुक्त्वा हनूमन्तं प्रजहार स दुर्मतिः । त्रिशूलेन सुतीक्ष्णेन ज्वलत्पावककान्तिना ॥ ४९
तदाऽऽगतं त्रिशूलं च मुखे जग्राह वीर्यवान् । चूर्णयामास सकलं सर्वलोहविनिर्मितम् ॥ ५०
चूर्णयित्वा त्रिशूलं तदायसं दैत्यमोचितम् । जघान तं चपेटाभिर्बह्वीभिर्हनुमान्बली ॥ ५१
स आहतः कपीन्द्रेण चपेटाभिरितस्ततः । व्यथितो व्यसृजन्मायां सर्वलोकभयंकरीम् ॥ ५२
तदा तमोऽभवत्तीव्रं यत्र को वा न लक्ष्यते । यत्र स्वीयो न पारक्यो विदामास जनान्बहून् ५३
शिलाः पर्वतशृङ्गाभाः पतन्ति सुभटोपरि । ताभिर्हतास्तु ते सर्वे व्याकुला अथ जज्ञिरे ॥ ५४
विद्युतो विलसन्त्यत्र गर्जन्ति जलदा घनम् । वर्षन्ति पूयरुधिरं मुञ्चन्ति समलं जलम् ॥ ५५
आकाशात्पतमानानि कबन्धानि बहूनि च । दृश्यन्ते छिन्नशीर्षाणि सकुण्डलयुतानि च ॥ ५६
नग्ना विरूपाः सुभृशं कीर्णकेशाः सुदुर्मुखाः । दृश्यन्ते सर्वतो दैत्या दारुणा भयकारिणः ॥ ५७
तदा व्याकुलितो लोकः परस्परभयाकुलः । पलायनपरो जातो महोत्पातममन्यत ॥ ५८
तदा शत्रुघ्न आयातो रथे स्थित्वा महायशाः । श्रीरामस्मरणं कृत्वा चापे संधाय सायकान् ५९
तां मायां स विधूयाथ मोहनास्त्रेण वीर्यवान् । शरधाराः किरन्व्योम्नि ववर्ष समरेऽसुरम् ६०
तदा दिशः प्रसेदुःस्ता रविस्त्वपरिवेषवान् । मेघा यथागतं याता विद्युतः शान्तिमागताः ॥ ६१
तदा विमानं पुरतो दृश्यते राक्षसैर्युतम् । छिन्धि भिन्धीतिभाषाभिर्व्याकुलं सुतरां महत् ॥ ६२
बाणाश्च शतसाहस्राः स्वर्णपुङ्खैः सुशोभिताः । पेतुर्विमाने नभसि स्थिते कामगमे मुहुः ॥ ६३
तदा भग्नं विमानं हि दृश्यतेऽपतदुच्चकैः । स्वपुरीखण्डमेकत्र भग्नाङ्गमिव भूतले ॥ ६४
तदा प्रकुपितो दैत्यो बाणान्धनुषि संदधे । तैर्बाणैर्विकिरन्रामभ्रातारमभिगर्जितः ॥ ६५

१ प. °लितस्वान्तो ब° । २ ग. छ. ड. ण द °दैत्यं जघा° । ३ छ. ड. °डायुता° । ४ छ. ड °रुणाः पापका° ।
५ क. ख. घ. ङ. च. छ. ज. झ. म. ट. ठ. ड. ढ. त. थ. भ. °रे पुर° ।

ते बाणाः शतशस्तस्य लग्ना वपुषि भूरिशः । शोभामापुः शोणितौघान्वहन्तस्तीक्ष्णवक्त्रिणः ६६
शत्रुघ्नः परया शक्त्या संयुक्तो वायुदैवतम् । अस्त्रं धनुषि चाऽऽधत्त राक्षसानां प्रकम्पनम् ॥ ६७
तेनास्त्रेण विमानात्खात्पतन्तो मुक्तमूर्धजाः । दृश्यन्ते भूतवेतालसंघा इव नभश्चराः ॥ ६८
तदस्त्रं रघुनाथस्य भ्रातृमुक्तं विलोक्य सः । अस्त्रं वै पाशुपत्यं स्वचापेऽधाद्दनुजात्मजः ॥ ६९
ततः प्रवृत्ता वेताला भूतप्रेतनिशाचराः । कपालकर्तरीयुक्ताः पिबन्तः शोणितं बहु ॥ ७०
ते वै शत्रुघ्नवीराणां रुधिराणि पपुर्मुदा । जीवतामपि दुर्वाराः कर्तरीपाणिशोभिताः ॥ ७१
तदस्त्रं व्याप्नुवद्दृष्ट्वा सर्ववीरप्रभञ्जनम् । मुमोच तन्निवाराय नारायणमथास्त्रकम् ॥ ७२
नारायणास्त्रं तान्सर्वान्वारयामास तत्क्षणात् । ते सर्वे विलयं प्रापुर्निशाचरप्रणोदिताः ॥ ७३
तदा क्रुद्धो निशाचारी विद्युन्माली समाददे । त्रिशूलं निशितं घोरं शत्रुघ्नं हन्तुमुल्बणम् ॥ ७४
शूलहस्तं समायान्तं विद्युन्मालिनमाहवे । सायकैः प्राहरत्तस्य भुजे त्वर्धशशिप्रभैः ॥ ७५
तैर्बाणैश्छिन्नहस्तः स शिरसा हन्तुमुद्यतः । हतोऽसि याहि शत्रुघ्न कस्त्वां त्राता भविष्यति ७६
इति ब्रुवाणं तरसा चिच्छेद शितसायकैः । मस्तकं तस्य बलिनः शूरस्य सहकुण्डलम् ॥ ७७
तं छिन्नशिरसं दृष्ट्वा उग्रदंष्ट्रः प्रतापवान् । मुष्टिना हन्तुमारेभे शत्रुघ्नं शूरसेवितम् ॥ ७८
शत्रुघ्नस्तं(स्तु) क्षुरप्रेण सायकेनाच्छिनच्छिरः । प्रधावतो रणे वीरान्सर्वशस्त्रास्त्रकोविदान् ॥ ७९
हतशेषा ययुः सर्वे राक्षसा नाथवर्जिताः । शत्रुघ्नं प्रणिपत्याथ ददुर्वाजिनमाहृतम् ॥ ८०
ततो वीणानिनादाश्च शङ्खनादाः समन्ततः । श्रूयन्ते शूरवीराणां जयनादा मनोहराः ॥ ८१

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे विद्युन्मालिराक्षसपराजयकथनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२८२२

---

अथ पञ्चत्रिंशोऽध्यायः ।

---

शेष उवाच—

प्राप्य तं वाजिनं राजा शत्रुघ्नो राक्षसैर्हृतम् । अत्यन्तं हर्षमापेदे पुष्कलेन समन्वितः ॥ १
रुधिरैः सिक्तगात्रास्ते योधा लक्ष्मीनिधिस्तथा । रणोत्साहेन संयुक्ताः प्रशशंसुर्महानृपम् ॥ २
हते तस्मिन्महादैत्ये विद्युन्मालिनि दुर्जये । सुराः सर्वे भयं त्यक्त्वा सुखमापुर्मुने महत् ॥ ३
नद्यस्तु विमला जाता रविस्तु विमलोऽभवत् । वाता ववुः सुगन्धोदसिक्ता विमलशुष्मिणः ॥ ४
संनद्धास्ते महावीरा रथस्था विमलाङ्कुकाः । राजानमूचुस्ते सर्वे जयलक्ष्म्या समन्विताः ॥ ५

वीरा ऊचुः—

[*दिष्ट्या हतस्त्वया दैत्यो विद्युन्माली महाबलः । यद्भयात्त्रासमापन्नाः सुराः स्वर्गान्निराकृताः]
दिष्ट्या प्राप्तो महावाजी रघुनाथस्य शोभनः । दिष्ट्या गन्तासि सर्वत्र जयं तु क्षितिमण्डले ॥ ७
स्वामी मुञ्च त्विमं वाहं मनोवेगं मनोरमम् । समयस्य विलम्बो मा भवत्वत्र महामते ॥ ८

शेष उवाच—

---

* एतच्चिह्नान्तर्गतः पाठः ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

---

१ ठ. ध. °तपिशाचकाः । क° । २ झ. म. मुद्गरं । ३ ड. शस्त्रहस्तं । ४ ड. °तोऽसीत्याह शत्रुघ्नः क° । ५ ड. °बाण- । ६ द. महामते ।

इति श्रुत्वा तु तद्वाक्यं वीराणां समयोचितम् । साधु साधु प्रशस्यैतन्मुमोच हयमुत्तमम् ॥ ९
स मुक्तश्चोत्तरामाशां बभ्राम रथिरक्षितः । रथपत्तिहयश्रेष्ठैः सर्वशस्त्रास्त्रकोविदैः ॥ १०
तत्र यद्वृत्तमेतस्य शत्रुघ्नस्य मनोहरम् । वात्स्यायन शृणुष्वैतत्पापराशिप्रदाहकम् ॥ ११
रेवातीरमथ प्राप्तो मुनिवृन्दनिषेवितम् । नीलरत्नसमूहस्य रसः किंतु(नु) पयोमिषात् ॥ १२
तांस्तान्मुनिवरान्सर्वान्प्रणमञ्शूरसेवितः । जगाम हयरत्नस्य पृष्ठतः कामगामिनः ॥ १३
गच्छंस्तत्राऽऽश्रमं जीर्णं पलाशपर्णनिर्मितम् । रेवाया जलकल्लोलैः सिक्तं पापहराश्रयम् ॥ १४
तं दृष्ट्वा सुमतिं प्राह सर्वज्ञं नयकोविदम् । शत्रुघ्नः सर्वधर्मार्थकर्मकर्तव्यकोविदः ॥ १५

राजोवाच—

मन्त्रिन्कथय कस्यायमाश्रमः पुण्यदर्शनः । विचारचतुरश्रेष्ठ वदैतन्मम पृच्छतः ॥ १६

शेष उवाच—

इति वाक्यं समाकर्ण्य सुमतिः प्राह तं नृपम् । विशदस्मेरया वाचा दर्शयन्नात्मसौहृदम् ॥ १७

सुमतिरुवाच—

एनं दृष्ट्वा महाराज धूतपापा वयं महत् । भविष्यामो मुनिश्रेष्ठं सर्वशास्त्रपरायणम् ॥ १८
तस्मान्नत्वा तमापृच्छ सर्वं ते कथयिष्यति । रघुनाथपदाम्भोजमरन्दास्वादलोलुपः ॥ १९
नाम्ना त्वारण्यकं ख्यातं रघुनाथाङ्घ्रिसेवकम् । अत्युग्रतपसा पूर्णं सर्वशास्त्रार्थकोविदम् ॥ २०
इति श्रुत्वाऽथ तद्वाक्यं धर्मार्थपरिबृंहितम् । जगाम तमथो द्रष्टुं स्वल्पसेवकसंयुतः ॥ २१
हनूमान्पुष्कलो वीरः सुमतिर्मन्त्रिसत्तमः । लक्ष्मीनिधिः प्रतापाग्र्यः सुबाहुसुमदौ तथा ॥ २२
एतैः परिवृतो राजा शत्रुघ्नः प्रापदाश्रमम् । नमस्कर्तुं द्विजवरमारण्यकमुदारधीः ॥ २३
गत्वा तं तापसश्रेष्ठं नमस्कारमथाकरोत् । सर्वैस्तैः सहितो वीरैर्विनयानतकंधरैः ॥ २४
तान्दृष्ट्वा संनतान्सर्वाञ्शत्रुघ्नप्रमुखान्नृपान् । अर्घ्यपाद्यादिकं चक्रे फलमूलादिभिस्तदा ॥ २५
उवाच तान्नृपान्सर्वान्भवन्तः कुत्र संगताः । कथमत्र समायातास्तत्सर्वं वदतानघाः ॥ २६
तच्छ्रुत्वा वाक्यमेतस्य मुनिवर्यस्य वाडव । सुमतिः कथयामास वाक्यवादविचक्षणः ॥ २७

सुमतिरुवाच—

रघुवंशनृपस्यायमश्वो वै पाल्यतेऽखिलैः । यागं करिष्यते वीरः सर्वसंभारसंभृतम् ॥ २८
तच्छ्रुत्वा वचनं तेषां जगाद मुनिसत्तमः । दन्तकान्त्याऽखिलं घोरं तमो निर्वारयन्निव ॥ २९

आरण्यक उवाच—

किं यागैर्विविधै रम्यैः सर्वसंभारसंभृतैः । स्वल्पपुण्यप्रदैर्नूनं[3] क्षयिष्णुपददातृकैः ॥ ३०
मूढो लोको हरिं त्यक्त्वा करोत्यन्यसमर्चनम् । रघुवीरं रमानाथं स्थिरैश्वर्यपदप्रदम् ॥ ३१
यो नरैः स्मृतमात्रोऽसौ हरते पापपर्वतम् । तं मुक्त्वा क्लिश्यते मूढो योगयागव्रतादिभिः ॥ ३२
अहो पश्यत मूढत्वं लोकानामतिवञ्चितम् । सुलभं रामभजनं मुक्त्वा दुर्लभमाचरेत् ॥ ३३
सकामैर्योगिभिर्वाऽपि चिन्त्यते कामवर्जितैः । अपवर्गप्रदं नृणां स्मृतमात्राखिलाघहम् ॥ ३४
पुराऽहं तत्त्ववित्सायां[4] ज्ञानिनं सुविचारयन् । अगमं बहुतीर्थानि न कोऽपि मम तत्त्वदः ॥ ३५
तदैकदा हि मद्भाग्यात्प्राप्तं वै लोमशं मुनिम् । स्वर्गलोकात्समायान्तं तीर्थयात्राचिकीर्षया ॥ ३६

---

१ ग. पश्चिमगाश्रयम् । २ ग. °ष्ठं ससखे° । ३ ग. °दैर्घोरैः क्ष° । ४ ङ. °विन्मायां । ५ ग. द. °दा महद्भा° ।

तमहं प्रणिपत्याथ पर्यपृच्छं महामुनिम् । महायुषं महायोगिसंसेवितपदद्वयम् ॥ ३७
स्वामिन्मयाऽद्य मानुष्यं प्राप्य दुर्लभमद्भुतम् । संसारघोरजलधिं किं कर्तव्यं तितीर्षुणा ॥ ३८
विचार्य कथय त्वं तद्व्रतं दानं जपं मखम् । देवो वा विद्यते यो वै संसृताम्भोधितारकः ॥ ३९
यज्ज्ञात्वा संसृतिं घोरां तरामि त्वत्कृपा[1]न्वितः । तन्मे कथय योगेश सर्वशास्त्रार्थपारग ॥ ४०
इति मद्वाक्यमाकर्ण्य जगाद मुनिसत्तमः । शृणुष्वैकमना विप्र श्रद्धया परया वृतः ॥ ४१
सन्ति दानानि तीर्थानि व्रतानि नियमा यमाः । योग[2]यज्ञास्तथाऽनेके वर्तन्ते स्वर्गदायकाः ४२
परं गुह्यं प्रवक्ष्यामि सर्वपापप्रणाशनम् । तच्छृणुष्व महाभाग संसाराम्भोधितारकम् ॥ ४३
नास्तिकाय न वक्तव्यं न चाश्रद्धालवे पुनः । निन्दकाय शठायापि न देयं भक्तिवैरिणे ॥४४
रामभक्ताय शान्ताय कामक्रोधवियोगिने । वक्तव्यं सर्वदुःखस्य नाशकारकमुत्तमम् ॥ ४५
रामान्नास्ति परो देवो रामान्नास्ति परं व्रतम् । न हि रामात्परो योगो न हि रामात्परो मखः ॥
तं स्मृत्वा चैव जप्त्वा च पूजयित्वा नरः परम् । प्राप्नोति परमामृद्धिमैहिकामुष्मिकीं तथा ४७
संस्मृतो मनसा ध्यातः सर्वकामफलप्रदः । ददाति परमां भक्तिं संसाराम्भोधितारिणीम् ॥ ४८
श्वपाकोऽपि हि संस्मृत्य रामं याति परां गतिम् । ये वेदशास्त्रनिरतास्त्वादृशास्तत्र किं पुनः ४९
सर्वेषां वेदशास्त्राणां रहस्यं ते प्रकाशितम् । समाचर तथा त्वं वै यथा स्यात्ते मनीषितम् ॥ ५०
एको देवो रामचन्द्रो व्रतमेकं तदर्चनम् । मन्त्रोऽप्येकश्च तन्नाम शास्त्रं तद्ध्येव [3]तत्स्तुतिः ॥ ५१
तस्मात्सर्वात्मना रामचन्द्रं भज मनोहरम् । यथा गोष्पदवत्तुच्छो भवेत्संसारसागरः ॥ ५२
श्रुत्वा मया तु तद्वाक्यं पुनः प्रश्नमकारिषम् । कथं वा ध्यायते देवः कथं वा पूज्यते नरैः ॥५३
कथयस्व महाबुद्धे सर्वज्ञ मम विस्तरात् । यज्ज्ञात्वाऽहं कृतार्थः स्यां त्रिलोक्यां मुनिसत्तम ५४
एतच्छ्रुत्वा तु मद्वाक्यं[4] मुनिवर्यः स लोमशः । कथयामास मे सर्वं रामध्यानपुरःसरम् ॥ ५५
शृणु विप्रेन्द्र वक्ष्यामि यत्पृष्टं तु त्वयाऽनघ । यथा तुष्येद्रमानाथः संसारज्वरदारकः ॥ ५६
अयोध्यानगरे रम्ये चित्रमण्डपशोभिते । ध्यायेत्कल्पतरोर्मूले सर्वकामसमृ[5]द्धिदम् ॥
महामरकतस्वर्णनीलरत्नादिशोभितम् ॥ ५७
सिंहासनं चित्तहरं कान्त्या तामिस्रनाशनम् । तत्रोपरि समासीनं रघुराजं मनोरमम् ॥ ५८
दूर्वादलश्यामतनुं देवं देवेन्द्रपूजितम् । राकायां पूर्णसीतांशुकान्तिधिक्कारिवक्त्रिणम् ॥ ५९
अष्टमीचन्द्रशकलसमभालाधिधारिणम् । नीलकुन्तलशोभाढ्यं किरीटमणिरञ्जितम् ॥ ६०
मकराकारसौन्दर्यकुण्डलाभ्यां विराजितम् । विद्रुमप्रभसत्कान्तिरदच्छदविराजितम् ॥ ६१
तारापतिकराकारद्विजराजिसुशोभितम् । जपापुष्पाभयामाढ्या जिह्वया शोभिताननम् ॥ ६२
यस्यां वसन्ति निगमा ऋगाद्याः शास्त्रसंयुताः । कम्बुकान्तिधरग्रीवाशोभया समलंकृतम् ॥ ६३
सिंहवदुच्चकौ स्कन्धौ मांसलौ बिभ्रतं वरम् । बाहू दधानं दीर्घाङ्गौ केयूरकटकाङ्कितौ ॥ ६४
मुद्रिकाहीरशोभाभिर्भूषितौ जानुलम्बिनौ । वक्षो दधानं विपुलं लक्ष्मीवासेन शोभितम् ॥ ६५
श्रीवत्सादिविचित्राङ्कैरङ्कितं सुमनोहरम् । महोदरं महानाभिं शुभकट्या विराजितम् ॥ ६६
काञ्च्या वै मणिमय्या च विशेषेण श्रियाऽन्वितम् । ऊरुभ्यां विमलाभ्यां च जानुभ्यां शोभितं श्रिया
चरणाभ्यां वज्ररेखायवाङ्कुशसुरेखया । युताभ्यां योगिध्येयाभ्यां कोमलाभ्यां विराजितम् ६८

---

१ ग. छ. ड. त. थ °पान्वितः । २ ख. ग. छ. ज. ठ. ङ. ण. थ. द. ध. योगा य° । ३ ग. छ. ड. तत्स्मृतिः ।
४ द. °कथ्य विचार्य स तु लो° । ५ ण. °मृद्धये म° ।

ध्यात्वा स्मृत्वा च संसारसागरं त्वं तरिष्यसि । तमेव पूजयन्नित्यं चन्दनादिभिरिच्छया ॥६९
प्राप्नोति परमामृद्धिमैहिकामुष्मिकीं पराम् । त्वया पृष्टं महाराज रामस्य ध्यानमुत्तमम् ॥
तत्ते कथितमेतद्वै संसारजलधिं तर ॥ ७०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेध आरण्यकोपाख्यानं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१२८९२

---

अथ षट्त्रिंशोऽध्यायः ।

---

शेष उवाच—

एतच्छ्रुत्वा तु विप्रेन्द्रो लोमशात्परमं महत् । पुनः प्रपच्छ तमृषिं सर्वज्ञं योगिनां वरम् ॥ १

आरण्यक उवाच—

मुनिश्रेष्ठ वदैतन्मे पृच्छामि त्वां महामते । गुरवः कृपया युक्ता भाषन्ते सेवकेऽखिलम् ॥ २
कोऽसौ रामो महाभाग यो नित्यं ध्यायते त्वया । तस्य कानि चरित्राणि वदस्व त्वं द्विजर्षभ ३
किमर्थमवतीर्णोऽसौ कस्मान्मानुषतां गतः । तत्सर्वं कथयाऽऽशु त्वं मम संशयनुत्तये ॥ ४

शेष उवाच—

इति वाक्यं समाकर्ण्य मुनेः परमशोभनम् । लोमशः कथयामास रामचारित्रमद्भुतम् ॥ ५
लोकान्निरयसंमग्नाञ्ज्ञात्वा योगेश्वरेश्वरः । कीर्तिं प्रथयितुं लोके यया घोरं तरिष्यति ॥ ६
एवं ज्ञात्वा दयावार्धिः परमेशो मनोहरः । अवतारं चकारात्र चतुर्धा स श्रियाऽन्वितः ॥ ७
पुरा त्रेतायुगे प्राप्ते पूर्णांशो रघुनन्दनः । सूर्यवंशसमुत्पन्नो रामो राजीवलोचनः ॥ ८
स रामो लक्ष्मणसखः काकपक्षधरो युवा । तातस्य वचनात्तौ तु विश्वामित्रमनुव्रतौ ॥ ९
यज्ञसंरक्षणार्थाय राज्ञा दत्तौ कुमारकौ । दान्तौ धनुर्धरौ वीरौ विश्वामित्रमनुव्रतौ ॥ १०
पथि प्रव्रजतोस्तावत्ताडका नाम राक्षसी । संगता च वने घोरे तयोर्वै विघ्नकारणात् ॥ ११
ऋषेरनुज्ञया रामस्ताडकां यमयातनाम् । प्रावेशयद्धनुर्वेदविद्याभ्यासेन राघवः ॥ १२
यस्य पादतलस्पर्शाच्छिला वासवयोगजा । अहल्या गौतमवधूः पुनर्जाता स्वरूपिणी ॥ १३
विश्वामित्रस्य यज्ञे तु सुप्रवृत्ते रघूत्तमः । मारीचं च सुबाहुं च जघान परमेषुभिः ॥ १४
ईश्वरस्य धनुर्भग्नं जनकस्य गृहे स्थितम् । रामः पञ्चदशे वर्षे षड्वर्षामथ मैथिलीम् ॥ १५
उपयेमे विवाहेन रम्यां सीतामयोनिजाम् । कृतकृत्यस्तदा जातः सीतां संप्राप्य राघवः ॥ १६
ततो द्वादशवर्षाणि रेमे रामस्तया सह । सप्तविंशतिमे वर्षे यौवराज्यमकल्पयत् ॥ १७
राजानमथ कैकेयी वरद्वयमयाचत । तयोरेकेन रामस्तु ससीतः सहलक्ष्मणः ॥ १८
जटाधरः प्रव्रजतां [*वर्षाणीह चतुर्दश । भरतस्तु द्वितीयेन यौवराज्याधिपोऽस्तु मे ॥ १९
जानकीलक्ष्मणसखं रामं प्राव्राजयन्नृपः । त्रिरात्रमुदकाहारश्चतुर्थे] हि फलाशनः ॥ २०
पञ्चमे चित्रकूटे तु रामः स्थानमकल्पयत् । अथ त्रयोदशे वर्षे पञ्चवट्यां महामुने ॥ २१
रामो विरूपयामास शूर्पणखां निशाचरीम् । वने विचरतस्तस्य जानक्या सहितस्य च ॥ २२

---

* एतच्चिह्नान्तर्गत पाठः ख. क. ग. छ. झ. ठ. ड. ण. त थ. द ध. पुस्तकस्थः ।

आगतो राक्षसस्तां वै हर्तुं पापविपाकतः । ततो माघासिताष्टम्यां मुहूर्ते वृन्दसंज्ञके ॥ २३
राघवाभ्यां विना सीतां जहार दशकंधरः । तेनैवं ह्रियमाणा सा चक्रन्द कुररी यथा ॥ २४
राम रामेति मां रक्ष रक्ष मां रक्षसा हृताम् । यथा श्येनः क्षुधा क्रान्तः क्रन्दन्तीं वर्तिकां नयेत्
तथा कामवशं प्राप्तो रावणो जनकात्मजाम् । नयत्येवं जनकजां जटायुः पक्षिराट् तदा ॥ २६
युयुधे राक्षसेन्द्रेण स रावणहतोऽपतत् । मार्गशुक्लनवम्यां तु वसन्तीं रावणालये ॥ २७
संपातिर्दशमे मास आचख्यौ वानरेषु ताम् । एकादश्यां महेन्द्राद्रेः पुप्लुवे शतयोजनम् ॥ २८
हनूमान्निशि तस्यां तु लङ्कायां पर्यकालयत् । तद्रात्रिशेषे सीताया दर्शनं हि हनूमतः ॥ २९
द्वादश्यां शिंशपावृक्षे हनूमान्पर्यवस्थितः । तस्यां निशायां जानक्या विश्वासाय च संकथा॥ ३०
अक्षादिभिस्त्रयोदश्यां ततो युद्धमवर्तत । ब्रह्मास्त्रेण चतुर्दश्यां बद्धः शक्रजिता कपिः ॥ ३१
वह्निना पुच्छयुक्तेन लङ्काया दहनं कृतम् । पौर्णमास्यां महेन्द्राद्रौ पुनरागमनं कपेः ॥ ३२
मार्गासितप्रतिपदः पञ्चभिः पथि वासरैः । पुनरागत्य षष्ठेऽह्नि ध्वस्तं मधुवनं किल ॥ ३३
सप्तम्यां प्रत्यभिज्ञानदानं सर्वनिवेदनम् । अष्टम्युत्तरफल्गुन्यां मुहूर्ते विजयाभिधे ॥ ३४
मध्यं प्राप्ते सहस्रांशौ प्रस्थानं राघवस्य च । रामः कृत्वा प्रतिज्ञां तु प्रयातो दक्षिणां दिशम् ३५
तीर्त्वाऽहं सागरमपि हनिष्ये राक्षसेश्वरम् । दक्षिणाशां प्रयातस्य सुग्रीवोऽप्यभवत्सखा ॥ ३६
वासरैः सप्तभिः सिन्धोः स्कन्धावारनिवेशनम् । पौषशुक्ले प्रतिपदस्तृतीया यावदम्बुधेः ॥ ३७
उपस्थानं ससैन्यस्य राघवस्य बभूव ह । बिभीषणश्चतुर्थ्यां तु रामेण सह संगतः ॥ ३८
समुद्रतरणार्थाय पञ्चम्यां मन्त्र उद्यतः । प्रायोपवेशनं चक्रे रामो दिनचतुष्टयम् ॥ ३९
समुद्राद्वरलाभश्च सहोपायप्रदर्शनम् । ततो दशम्यामारम्भस्त्रयोदश्यां समापनम् ॥ ४०
चतुर्दश्यां सुवेलाद्रौ रामः सैन्यं न्यवेशयत् । पौर्णमास्या द्वितीयान्तं त्रिदिनैः सैन्यतारणम् ४१
तीर्त्वा तोयनिधिं रामो वानरेश्वरसैन्यवान् । रुरोध च पुरीं लङ्कां सीतार्थं सहलक्ष्मणः ॥ ४२
तृतीयादिदशम्यन्तं निवेशश्च दिनाष्टकम् । शुकसारणयोस्तत्र प्राप्तिरेकादशीदिने ॥ ४३
पौषासिताख्यद्वादश्यां सैन्यसंख्यानमेव च । शार्दूलेन कपीन्द्राणां सह सारोपवर्णनम् ॥ ४४
त्रयोदश्या अमावास्यां लङ्कायां दिवसैस्त्रिभिः । रावणः सैन्यसंख्यानां रणोत्साहं तदाऽकरोत् ४५
प्रययावङ्गदो दौत्ये माघशुक्लाद्यवासरे । सीतायाश्च ततो भर्तुर्मायामूर्धादिदर्शनम् ॥ ४६
माघद्वितीयादिदिनैः सप्तभिर्यावदष्टमी । रक्षसां वानराणां च युद्धमासीच्च संकुलम् ॥ ४७
माघशुक्लनवम्यां तु रात्राविन्द्रजिता रणे । रामलक्ष्मणयोर्नागपाशबन्धः कृतः किल ॥ ४८
आकुलेषु कपीन्द्रेषु निरुत्साहेषु सर्वशः । नागपाशविनाशार्थं दशम्यां पवनोऽजपत् ॥ ४९
कर्णे स्वरूपं रामस्य गरुडागमनं ततः । एकादश्यां च द्वादश्यां धूम्राक्षस्य वधः कृतः ॥ ५०
त्रयोदश्यां तु तेनैव निहतः कम्पनो रणे । माघशुक्लचतुर्दश्यां यावत्कृष्णादिवासरम् ॥ ५१
त्रिदिने तु प्रहस्तस्य नीलेन विहितो वधः । माघकृष्णद्वितीयायाश्चतुर्थ्यन्तं त्रिभिर्दिनैः ॥ ५२
रामेण तुमुले युद्धे रावणो द्रावितो रणात् । पञ्चम्या अष्टमी यावद्रावणेन प्रबोधितः ॥ ५३
कुम्भकर्णस्तदा चक्रेऽभ्यवहारं चतुर्दिने । कुम्भकर्णो दिनैः षड्भिर्नवम्यास्तु चतुर्दशीम् ॥ ५४
रामेण निहतो युद्धे बहुवानरभक्षकः । अमावास्यादिने शोकादवहारो बभूव ह ॥ ५५

१ ग. छ. ञ. ठ. ड. द ध. वेदसंज्ञिते । २ ण. पर्यकाशयत् । ३ छ. ड. 'द्राद्रलला' । ४ क. घ. ङ. च. झ. ञ. ट. ड. त. द. 'प्रतर्दन' । ५ ग. 'रोषव' ।

फाल्गुनादिप्रतिपदश्चतुर्थ्यन्तचतुर्दिनैः । *बिसतन्तुप्रभृतयो निहताः पञ्च राक्षसाः ॥ ५६
पञ्चम्याः सप्तमी यावदतिकायवधस्तथा । अष्टम्या द्वादशी यावन्निहतौ दिनपञ्चकात् ॥ ५७
निकुम्भकुम्भावूर्ध्वं तु मकराक्षस्त्रिभिर्दिनैः । फाल्गुनासितद्वितीयायां दिने शक्रजिता जितम् ५८
तृतीयादिसप्तम्यन्तं दिनपञ्चकमेव च । ओषध्यानयनव्यग्रादवहारो बभूव ह ॥ ५९
ततस्त्रयोदशी यावद्दिनैः पञ्चभिरिन्द्रजित् । लक्ष्मणेन हतो युद्धे प्रख्यातबलपौरुषः ॥ ६०
चतुर्दश्यां दशग्रीवो दीक्षां प्रापावहारतः । अमावास्यादिने मायायुद्धाय दशकंधरः ॥ ६१
चैत्रशुक्लप्रतिपदः पञ्चमी दिनपञ्चकैः । रावणे युध्यमाने तु प्रचुरो रक्षसां वधः ॥ ६२
चैत्रषष्ठ्या अष्टमी यावन्महापार्श्वादिमारणम् । चैत्रशुक्लनवम्यां तु सौमित्रेः शक्तिभेदनम् ॥ ६३
कोपाविष्टेन रामेण द्रावितो दशकंधरः । द्रोणाद्रिराञ्जनेयेन लक्ष्मणार्थमुपाहृतः ॥ ६४
दशम्यामवहारोऽभूद्रामयुद्धे तु रक्षसाम् । एकादश्यां तु रामाय रथं मातलिसारथिः ॥ ६५
प्रेरितो वासवेनाऽऽजावर्पयामास भक्तितः । कोपवानथ द्वादश्या यावत्कृष्णचतुर्दशी ॥ ६६
अष्टादशदिने रामो रावणं द्वैरथेऽवधीत् । सङ्ग्रामे तुमुले जाते रामो जयमवाप्तवान् ॥ ६७
माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्दशी । सप्ताशीतिदिनान्येव मध्ये पञ्चदशाहकम् ॥ ६८
युद्धावहारः संग्रामो द्वासप्ततिदिनान्यभूत् । संस्कारो रावणादीनाममावास्यादिनेऽभवत् ॥ ६९
वैशाखादितिथौ राम उवास रणभूमिषु । अभिषिक्तो द्वितीयायां लङ्काराज्ये विभीषणः ॥ ७०
सीताशुद्धिस्तृतीयायां देवेभ्यो वरलम्भनम् । हत्वाऽचिरेण लङ्केशं लक्ष्मणाग्रज एव सः ॥ ७१
गृहीत्वा जानकीं पुण्यां दुःखितां राक्षसेन तु । आदाय परया प्रीत्या जानकीं स न्यवर्तत ॥ ७२
वैशाखस्य चतुर्थ्यां तु रामः पुष्पकमाश्रितः । विहायसा निवृत्तस्तु भूयोऽयोध्यां पुरीं प्रति ॥ ७३
पूर्णे चतुर्दशे वर्षे पञ्चम्यां माधवस्य तु । भारद्वाजाश्रमे रामः सगणः समुपाविशत् ॥ ७४
नन्दिग्रामे तु षष्ठ्यां स भरतेन समागतः । सप्तम्यामभिषिक्तोऽसौ भूयोऽयोध्यां रघूद्वहः ॥ ७५
दशैकाधिकमासांश्चतुर्दशाहानि मैथिली । उवास रामरहिता रावणस्य निवेशने ॥ ७६
द्विचत्वारिंशवर्षे तु रामो राज्यमकारयत् । सीतायाश्च त्रयस्त्रिंशद्वत्सराणि तदाऽभवन् ॥ ७७
स चतुर्दशवर्षान्ते प्रविश्य स्वां पुरीं प्रभुः । अयोध्यायां समुदितो रामो रावणहारणः ॥ ७८
भ्रातृभिः सहितस्तत्र रामो राज्यमथाकरोत् । राज्यं प्रकुर्वतस्तस्य पुरोधा वदतां वरः ॥ ७९
अगस्त्यः कुम्भसंभूतिस्तमागन्ता रघोः पतिम् । तद्वाक्याद्रघुनाथोऽसौ करिष्यति हयक्रतुम् ॥ ८०
तस्याऽऽगमिष्यति हय आश्रमे तव सुव्रत । तस्य योधाः प्रमुदिता आयास्यन्ति तवाऽऽश्रमे ॥ ८१
तेषामग्रे रामकथाः करिष्यसि मनोहराः । तैः साकं त्वमयोध्यायां गन्तासि त्वं द्विजर्षभ ॥ ८२
दृष्ट्वा राममयोध्यायां पद्मपत्रनिभेक्षणम् । तत्क्षणादेव संसारवार्धिनिस्तारवान्भव ॥ ८३
इत्युक्त्वा मां मुनिवरो लोमशः सर्वबुद्धिमान् । उवाच ते किं प्रष्टव्यं तदहमवदं हितम् ॥ ८४
ज्ञातं त्वत्कृपया सर्वं रामचारित्रमद्भुतम् । त्वत्प्रसादादवाप्स्येऽहं रामस्य चरणाम्बुजम् ॥ ८५
मया नमस्कृतः पश्चाज्जगाम स मुनीश्वरः । तत्प्रसादान्मया प्राप्तं रामस्य चरणार्चनम् ॥ ८६

---

* क. ख. च. ज. ञ. ठ ण. त. थ. द. ध. पुस्तकेषु "बिसतन्तुप्रभृतयः" इत्यत्र 'इन्द्रजित्प्रभृतिस्तत्र' इति पाठो वर्तते ।

---

१ थ. प्राप ह्यधः स्थितः । २ ङ. थ. °वर्चया° । ३ क. ख. ग. घ. ङ. च. छ. ज झ. ञ. ट. ठ. ड. ढ. ण. त. थ. ध °शुक्लटती° ।

सोऽहं स्मरामि रामस्य चरणावन्वहं मुहुः । गायामि तस्य चारित्रं मुहुर्मुहुरतन्द्रितः ॥ ८७
पावयामि जनानन्यान्गानेन स्वान्तहारिणा । हृष्यामि तन्मुनेर्वाक्यं स्मारं स्मारं तदीक्षया ॥ ८८
धन्योऽहं कृतकृत्योऽहं सभाग्योऽहं महीतले । रामचन्द्रपदाम्भोजदिदृक्षा मे भविष्यति ॥ ८९
तस्मात्सर्वात्मना रामो भजनीयो मनोहरः । वन्दनीयो हि सर्वेषां संसाराब्धितितीर्षया ॥ ९०
तस्माद्यूयं किमर्थं वै माप्ताः को वा नराधिपः । यागं करोति धर्मात्मा हयमेधं महाक्रतुम् ॥ ९१
तत्सर्वं कथयन्त्वत्र यान्तु वाहस्य पालने । स्मरन्तु रघुनाथाङ्घ्रिं स्मृत्वा स्मृत्वा पुनः पुनः॥९२
इति वाक्यं समाकर्ण्य मुनेर्विस्मयमागताः । रघुनाथं स्मरन्तस्ते प्रोचुरारण्यकं मुनिम् ॥ ९३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे श्रीरामचरित्रकथनं नाम षट्त्रिंशोऽध्यायः ॥३६॥

आदितः श्लोकानां समष्ट्यङ्काः—१२९८५

---

अथ सप्तत्रिंशोऽध्यायः ।

---

शेष उवाच—

ते पृष्टा मुनिवर्येण रामचारित्रमुत्तमम् । धन्यं सभाग्यं मन्वानाः प्रोचुरात्मानमादरात् ॥ १

जना ऊचुः—

पवित्रिता वयं सर्वे दर्शनेन तवाधुना । यद्रामकथयाऽस्मान्वै पावयस्यधुना जनान् ॥ २
शृणुष्व वचनं तथ्यं भवन्ब्रह्मर्षिसत्तम । त्वया पृष्टं यदस्मभ्यं सर्वं तत्कथयाम वै ॥ ३
अगस्त्यवाक्याच्छ्रीरामो विप्रहत्यापनुत्तये । यागं करोति सुमहान्सर्वसंभारसंभृतम् ॥ ४
तं पालयानाः सर्वे वै त्वदाश्रममुपागताः । अश्वेन सहिता विप्र तज्जानीहि महामते ॥ ५
इति वाक्यं समाकर्ण्य मनोहारि रसायनम् । अत्यन्तं हर्षमापेदे ब्राह्मणो रामभक्तिमान् ॥ ६
अद्य मे फलितो वृक्षो मनोरथश्रियाऽन्वितः । अद्य मे जननी मां यत्सुषुवे तदभूद्दतम् ॥ ७
अद्य राज्यं मया प्राप्तं कण्टकैश्च विवर्जितम् । अद्य कोशाः सुसंपन्ना अद्य देवाः सुतोषिताः॥ ८
अग्निहोत्रफलं त्वद्य प्राप्तं मे हविषा हुतम् । यद्द्रक्ष्ये रामचन्द्रस्य चरणाम्भोरुहोर्युगम्॥ ९
यो नित्यं ध्यायते स्वान्ते अयोध्यायाः पतिः प्रभुः । स मे दृग्गोचरो नूनं भविष्यति मनोहरः॥
हनूमान्मां समालिङ्ग्य प्रक्ष्यते कुशलं मम । भक्तिं मे महतीं दृष्ट्वा तोषं प्राप्स्यति सत्तमः ॥ ११
इति वाक्यं समाकर्ण्य हनूमान्कपिसत्तमः । जग्राह पादयुगलं मुनेरारण्यकस्य ह ॥ १२
स्वामिन्हनूमान्विप्रर्षे सेवकोऽहं पुरः स्थितः । जानीहि रामदासस्य रेणुकल्पं मुनीश्वर ॥ १३
इत्युक्तवति तस्मिन्वै मुनिः परमहर्षितः । आलिलिङ्ग हनूमन्तं रामभक्त्या सुशोभितम् ॥ १४
उभौ प्रेमविनिर्भिन्नावुभावपि सुधाप्लुतौ । स्थगितौ चित्रलिखिताविव तत्र बभूवतुः ॥ १५
उपविष्टौ कथास्तस्य चक्रतुः सुमनोहराः । रघुनाथपदाम्भोजप्रीतिनिर्भरमानसौ ॥ १६
हनूमांस्तमुवाचेदं वचो विविधशोभनम् । आरण्यकं मुनिवरं रामाङ्घ्रिध्याननिर्भृतम् ॥ १७
स्वामिन्नयं दशरथकुलहीराङ्कुरो महान् । रामभ्राता महाशूरः शत्रुघ्नः प्रणमत्यसौ ॥ १८
लवणो येन निहतः सर्वलोकभयंकरः । कृताश्च सुखिनः सर्वे मुनयः सुतपोधनाः ॥ १९
एष पुष्कलनामा त्वां नमत्युद्भटसेवितः । येनाधुना महावीरा जिताः समरमण्डले ॥ २०

---

१ ङ. ज. वेदाः । २ ग. छ. ठ. ड. द. ध. स्तत्र च । ३ द. लदीपाङ्कु ।

जानीह्येतं बहुगुणं रामामात्यं महाबलम् । प्राणप्रियं रघुपतेः सर्वज्ञं धर्मकोविदम् ॥ २१
सुबाहुरयमत्युग्रो वैरिवंशदवानलः । रामपादाब्जरोलम्बो नमति त्वां महायशाः ॥ २२
सुमदोऽप्येष पार्वत्या दत्तरामाङ्घ्रिसेवया । प्राप्तोऽधुना स्वसंसारवार्धिनिस्तरणं महान् ॥ २३
सत्यवान्राममश्वं यः प्राप्तमाश्रुत्य सेवकात् । राज्यं निवेदयामास स त्वां प्रणमति क्षितौ ॥ २४
इति वाक्यं समाकर्ण्य समालिङ्गनमादारत् । चकाराऽऽरण्यक ऋषिः स्वागतं फलकादिना २५
ते हृष्टास्तत्र वसतिं चक्रुर्मुनिवराश्रमे । प्रातर्नित्यक्रियां कृत्वा रेवायां ते महोद्यमाः ॥ २६
नरयानमथाऽऽरोप्य सेवकैः सहितं मुनिम् । शत्रुघ्नः प्रापयामासायोध्यां रामकृतालयाम् ॥ २७
स दूरां नगरीं दृष्ट्वा सूर्यवंशनृपोषिताम् । पदातिरभवद्वेगाद्रघुनाथदिदृक्षया ॥ २८
संप्राप्य नगरीं रम्यामयोध्यां जनशोभिताम् । मनोरथसहस्रेण संरूढो रामदर्शने ॥ २९
ददर्श तत्र सरयूतीरे मण्डपशोभिते । रामं दूर्वादलश्यामं कञ्जकान्तिविलोचनम् ॥ ३०
मृगशृङ्गं कटौ रम्यं धारयन्तं श्रियाऽन्वितम् । ऋषिवृन्दैर्व्यासमुख्यैर्वृतं शूरैः सुसेवितम् ॥ ३१
भरतेन सुमित्रायास्तनुजेन परिवृतम् । ददतं दीनसंघेभ्यो दानानि प्रार्थितानि तम् ॥ ३२
विलोक्याऽऽरण्यकाह्वोऽसौ कृतार्थ इत्यमन्यत । मल्लोचने पद्मदलसमाने रामलोकके ॥ ३३
अद्य मे सर्वशास्त्रस्य ज्ञातृत्वं बहु सार्थकम् । येन श्रीराममाज्ञाय प्राप्तोऽयोध्यां पुरीमिमाम् ॥ ३४

इत्येवमादिवचनानि बहूनि हृष्टो रामाङ्घ्रिदर्शनमुहर्षितगात्रशोभी ॥
प्रायाद्रमेश्वरसमीपमगम्यमन्यैर्योगेश्वरैरपि विचारपरैः सुदूरम् ॥ ३५

धन्योऽहमद्य रामस्य चरणावक्षिगोचरौ । करिष्यामि वचो रम्यं वदन्राममवेक्षयन् ॥ ३६
रामोऽपि वाडवश्रेष्ठं ज्वलन्तं स्वेन तेजसा । तपोमूर्तिधरं वीक्ष्य प्रत्युत्थानमथाकरोत् ॥ ३७
रामचन्द्रस्तस्य पादौ सुचिरं नतवान्महान् । ब्रह्मण्यदेव पावित्र्यं कृतमद्य तनोर्मम ॥ ३८
इति वाक्यं वदंस्तस्य पादयोः पतितः प्रभुः । सुरासुरनमन्मौलिमणिनीराजिताङ्घ्रिकः ॥ ३९
प्रणतं तं नृपश्रेष्ठं वाडवेन्द्रो महातपाः । गृहीत्वा भुजयोर्मध्यमालिलिङ्ग प्रियं प्रभुम् ॥ ४०
कौशल्यातनयस्तं वा उच्चैर्मणिमयासने । संस्थाप्य च पदोर्युग्मं जलेनाक्षालयत्प्रभुः ॥ ४१
पादावनेजनोदं तु मस्तकेऽधाद्धरिः स्वयम् । पवित्रितोऽद्य सगणः सकुटुम्ब इति ब्रुवन् ॥ ४२
चन्दनेन विलिप्याथ गां च प्रादात्पयस्विनीम् । उवाच च वचो रम्यं देवदेवेन्द्रसेवितः ॥ ४३
स्वामिन्मखो मया वाजिमेधसंज्ञः क्रियेत ह । सोऽयं त्वच्चरणायानादद्य पूर्णो भविष्यति ॥ ४४
अद्य मे ब्रह्महत्योत्थपापहानिं करिष्यति । अश्वमेधक्रतुर्युष्मच्चरणेन पवित्रितः ॥ ४५
इति वाक्यं ब्रुवाणं तं राजराजेन्द्रसेवितम् । आरण्यक उवाचेदं हसन्माध्व्या गिरा मुनिः ॥ ४६
स्वामिंस्तव तु युक्तं हि वचो ब्रह्मण्य भूमिप । त्वन्मूर्तयो महाराज ब्राह्मणा वेदपारगाः ॥ ४७
त्वं चेद्ब्राह्मणपूजादिकर्मकार्यं करिष्यसि । ततोऽखिला नृपा विप्रान्पूजयिष्यन्ति भूमिप ॥ ४८
त्वयोक्तं यन्महाराज विप्रहत्यापनुत्तये । यागं करोमि विमलं तत्तु हास्यकरं वचः ॥ ४९
त्वन्नामस्मरणान्मूढः सर्वशास्त्रविवर्जितः । सर्वपापाब्धिमुत्तीर्य स गच्छेत्परमं पदम् ॥ ५०
सर्ववेदेतिहासानां सारार्थोऽयमिति स्फुटम् । यद्रामनामस्मरणं क्रियते पापतारकम् ॥ ५१
तावद्गर्जन्ति पापानि ब्रह्महत्यासमानि च । न यावत्प्रोच्यते नाम रामचन्द्र तव स्फुटम् ॥ ५२
[*त्वन्नामगर्जनं श्रुत्वा महापातककुञ्जराः ] । पलायन्ते महाराज कुत्रचित्स्थानलिप्सया ॥५३

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

तस्मात्तव कथं हत्वा महापुण्यददर्शन । राम त्वत्सुकथां श्रुत्वा पूतः सर्वो भविष्यति ॥ ५४
मया पूर्वं कृतयुगे गङ्गायास्तीरवासिनाम् । ऋषीणां मुखतो वाक्यं श्रुतमस्ति पुराविदाम् ॥ ५५
तावत्पापभियः पुंसां कातराणां सुपापिनाम् । यावन्न वदते वाचा रामनाम मनोहरम् ॥ ५६
तस्माद्धन्योऽहमधुना मम संसृतिनाशनम् । सांप्रतं सुलभं रामचन्द्र त्वद्दर्शनादभूत् ॥ ५७
इत्युक्तवन्तं स मुनिं पूजयामास तत्र वै । सर्वे मुनिजनाः साधु साधु वाक्यमिति *ब्रुवन् ॥ ५८

शेष उवाच—

अत्राऽऽश्चर्यमभूद्यत्तु तन्मे निगदतः शृणु । वात्स्यायन मुनिश्रेष्ठ रामभक्तिपरायणः ॥ ५९
रामं दृष्ट्वा महाराजं यादृशं ध्यानगोचरम् । अत्यन्तं हर्षमापन्नो जगाद स मुनीश्वरान् ॥ ६०
मुनीश्वराः शृणुत भो मद्वाक्यं सुमनोरमम् । मादृशः को नु भूलोके भविष्यति सुभाग्यवान् ॥ ६१
नास्ति मम समः कोऽपि न जातो न भविष्यति । यद्रामभद्रो नत्वा मां स्वागतं परिपृष्टवान् ६२
यत्पादपङ्कजरजः श्रुतिमृग्यं सदैव हि । सोऽद्य मत्पादयोः पाथः पीत्वा पूतममन्यत ॥ ६३
एवं प्रवदतस्तस्य ब्रह्मस्फोटोऽभवत्तदा । [+निर्गतं तद्भवत्तेजो विवेश रघुनन्दने ॥ ६४
पश्यतां सर्वलोकानां सरयूतीरमण्डपे ] । सायुज्यमुक्तिं संप्राप दुर्लभां योगिभिर्जनैः ॥ ६५
दिवि तूर्यनिनादोऽभूद्वीणानादोऽभवत्तदा । पुष्पवृष्टिः पपाताग्रे पश्यतां चित्रमद्भुतम् ॥ ६६
मुनयोऽप्येतदीक्षित्वा प्रशंसन्तो मुनीश्वरम् । कृतार्थोऽयं मुनिश्रेष्ठो यद्रामवपुरीक्षितः ॥ ६७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेध आरण्यकमुनेः सायुज्यमुक्तिकथनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३०५२

---

अथाष्टत्रिंशोऽध्यायः ।

---

व्यास उवाच—

एतदाख्यानकं श्रुत्वा वात्स्यायन उदारधीः । परमं हर्षमापेदे जगाद च फणीश्वरम् ॥ १

वात्स्यायन उवाच—

कथां संशृण्वतो मह्यं तृप्तिर्नास्ति फणीश्वर । रघुनाथस्य भक्तार्तिहारिकीर्तिकरस्य वै ॥ २
धन्य आरण्यको नाम मुनिर्वेदधरः परः । रघुनाथं समालोक्य देहं तत्याज नश्वरम् ॥ ३
ततो राज्ञो हयः कुत्र गतः केन नियन्त्रितः । कथं तत्र रमानाथकीर्तिर्जाता फणीश्वर ॥ ४
सर्वं कथय मे तथ्यं सर्वज्ञोऽस्ति यतो भवान् । धराधरवपुर्धारी साक्षात्तस्य स्वरूपधृत् ॥ ५

व्यास उवाच—

इति वाक्यं समाकर्ण्य प्रहृष्टेनान्तरात्मना । उवाच रामचारित्रं तत्तद्गुणकथोदयम् ॥ ६

शेष उवाच—

साधु पृच्छसि विप्रर्षे रघुनाथगुणान्मुहुः । श्रुतानश्रुतवत्कृत्वा तेषु लोलुपतां दधत् ॥ ७
ततो निरगमद्वाहः सैनिकैर्बहुभिर्वृतः । रेवातीरे मनोहारे मुनिवृन्दनिषेविते ॥ ८

---

* अडभाव आर्षः । + एतच्चिह्नान्तर्गतः पाठो ग. छ. ङ. द. पुस्तकस्थः ।

---

१ द. अत्याश्च ।

सेनाचरास्ततः सर्वे यत्र वाहस्ततस्ततः । प्रसर्पन्ति निरीक्षन्तस्तन्मार्गं रणकोविदाः ॥ ९
वाजी गतोऽथ रेवाया ह्रदेऽगाधजलान्विते । भाले स्वर्णभवं पत्रं धारयन्पूजिताङ्गकः ॥ १०
ततो जले ममज्जासौ रामचन्द्रहयो वरः । तदा सर्वे महाशूरास्तत्र विस्मयमागताः ॥ ११
तैः परस्परमेवोच कथं हयसमागमः । कोऽत्र गन्ता जले वाहमानेतुं तं महोदयम् ॥ १२
इति यावत्समुद्दिश्य मन्त्रयन्ते परस्परम् । तावद्वीरशतैः सार्धमाजगाम रघोः पतिः ॥ १३
तान्सर्वान्विमनस्कान्स दृष्ट्वा शत्रुघ्नसंज्ञितः । पप्रच्छ मेघगम्भीरवाचा वीरशिरोमणिः ॥ १४
किं स्थितं निखिलैरत्र युष्माभिः संघशो जले । कुत्राश्वो रघुनाथस्य स्वर्णपत्रेण शोभितः॥ १५
जले किं निममज्जासौ हृतो वा केन मानिना । तन्मे कथयत क्षिप्रं कथं यूयं विमोहिताः ॥ १६

शेष उवाच—

इति वाक्यं समाकर्ण्य राज्ञो रघुवरस्य ते । कथयामासुस्तं सर्वे वीराः शूरशिरोमणिम् ॥ १७

जना ऊचुः—

स्वामिन्वयं न जानीमो मुहूर्तमभवज्जले । निममज्ज ततो नाऽऽयाद्धयस्तत्र मनोहरः ॥ १८
त्वमेव तत्र गत्वेमं वाहमानय वेगतः । अस्माभिस्तत्र गन्तव्यं त्वया सार्धं महामते ॥ १९
इति श्रुत्वा वचस्तेषां सैनिकानां रघूद्वहः । खेदं प्राप्य जनान्पश्यञ्जलसंतरणोद्यतान् ॥ २०
उवाच मन्त्रिमुख्यं स किं कर्तव्यमतः परम् । कथं वाहस्य संप्राप्तिर्भविष्यति तथा वद ॥ २१
के तत्र शूराः संयोज्या जलेऽन्वेषयितुं हयम् । को वाऽऽनयिष्यते वाहं केनोपायेन तद्वद ॥ २२
इति राज्ञो वचः श्रुत्वा सुमतिर्मन्त्रिसत्तमः । उवाच समये योग्यं शत्रुघ्नं हर्षयन्निव ॥ २३

सुमतिरुवाच—

स्वामिन्नस्ति तव श्रीपञ्चशक्तिरद्भुतकर्मणः । पातालगमने शक्तिर्जलमध्यादिह स्फुटम् ॥ २४
अन्यच्च पुष्कलस्यापि शक्तिरस्ति महात्मनः । हनूमतोऽपि रामस्य पादसेवापरस्य च ॥ २५
तस्माद्यूयं तत्र गत्वा हयमानयत ध्रुवम् । यतो भवेद्वाहमेधो रघुनाथस्य धीमतः ॥ २६

शेष उवाच—

इति वाक्यं समाश्रुत्य शत्रुघ्नः परवीरहा । स्वयं विवेश तोयान्तर्हनूमत्पुष्कलान्वितः ॥ २७
यावज्जलं विवेशासौ तावत्पुरमदृश्यत । अनेकोद्यानशोभाढ्यममेयं पुटभेदनम् ॥ २८
तत्र माणिक्यखचिते स्तम्भे स्वर्णमये हयम् । बद्धं ददर्श रामस्य स्वर्णपत्रसुशोभितम् ॥ २९
स्त्रियस्तत्र मनोहारिरूपधारिण्य उत्तमाः । सेवन्ते सुन्दरीमेकां पर्यङ्के सुखमास्थिताम् ॥ ३०
तान्दृष्ट्वा ताः स्त्रियः सर्वाः प्रावोचन्स्वामिनीं प्रति । [*एते पीवरवर्ष्माणो मांसपुष्टकलेवराः ३१
भविष्यन्ति तव श्रेष्ठमाहारस्य फलं महत् । ] एतेषां शोणितं स्वादु पुरुषाणां गतायुषाम् ॥ ३२
एतद्वचः समाकर्ण्य सेवकीनां वराऽङ्गना । जहास किंचिद्वदनं नर्तयन्ती भ्रुवाऽनघा ॥ ३३
तावत्त्रयस्ते संप्राप्ताः संनाहश्रीविशोभिताः । शिरस्त्राणानि दधतः शौर्यवीर्यसमन्विताः ॥ ३४
ता दृष्ट्वा महिलास्तत्र सौन्दर्यश्रीसमन्विताः । प्रोचुस्ते विस्मयं विप्र किमिदं दृश्यते महत् ॥ ३५
नमश्चक्रुर्महात्मानः सर्वे देववराङ्गनाः । किरीटमणिविद्योतद्योतिताङ्घ्रियुतास्ततः ॥ ३६

* एतच्चिह्नान्तर्गतः पाठः क. ग. छ. ज. ठ. ड. ण त. थ. द. ध. पुस्तकस्थः ।

१ झ. अ. जलान्तर्वै वाहं ने । २ द °रथ यु° । ३ झ. शीघ्रं । ४ क. ख. घ. ङ. च. छ. म. ट. ठ. ड. ढ. ण. त. थ. ध. मणिमये । ग. भर्ममये । ५ द. °तेऽल्पवर्ष्मवयसो मां° ।

सा तान्पप्रच्छ पुरुषान्सर्वश्रेष्ठा सुभामिनी । के यूयमत्र संप्राप्ताः कथं चापधरा नराः ॥ ३७
मत्स्थलं सर्वदेवानामगम्यं मोहनं महत् । अत्र प्राप्तस्य तु क्वापि निवृत्तिर्न भवेत्पुनः ॥ ३८
अश्वोऽयं कस्य राज्ञो वै कथं चामरवीजनः । स्वर्णपत्रेण शोभाढ्यः कथयन्तु ममाग्रतः ॥ ३९

शेष उवाच—

इति तस्या वचः श्रुत्वा मोहनाक्षरसंयुतम् । हनूमांस्तां प्रत्युवाच गतभीः प्रहसन्निव ॥ ४०
वयं वै किंकरा राज्ञस्त्रैलोक्यस्य शिखामणेः । त्रिलोकी यं प्रणमते सर्वदेवशिरोमणिम् ॥ ४१
रामभद्रस्य जानीध्वं हयमेधप्रवर्तितुः । मुञ्चन्तु वाहमस्माकं कथं बद्धो वराङ्गने ॥ ४२
वयं सर्वास्त्रकुशलाः सर्वशस्त्रास्त्रकोविदाः । नयिष्यामो बलाद्वाहं [*हत्वा तत्प्रतिरोधकान् ॥ ४३
इति वाक्यं समाकर्ण्य प्लवङ्गस्य वराङ्गना । ] विवरस्था प्रत्युवाच हसन्ती वाक्यकोविदा ॥ ४४
मयाऽऽनीतमिमं वाहं न को मोचयितुं क्षमः । [1]वर्षायुतेन निशितैर्बाणैः कोटिभिरुच्छ्रिखैः ॥ ४५
परं रामस्य पादाब्जसेवकीकर्मकारिणी । न ग्रहीष्यामि तद्वाहं राजराजस्य धीमतः ॥ ४६
महानविनयो जातो मम नेत्र्याः सुवाजिनः । क्षमताद्रामचन्द्रस्तच्छरण्यो भक्तवत्सलः ॥ ४७
यूयं क्लिष्टास्तत्पुरुषा हयार्थे तस्य रक्षितुः । याचध्वं वरमप्राप्यं देवानामपि सत्तमाः ॥ ४८
यथा मेऽमीवमत्युग्रं क्षमेत पुरुषोत्तमः । व्रीडां त्यक्त्वाऽखिलां सर्वे वृणवन्तु वरमुत्तमम् ॥ ४९
तस्या वचः परं श्रुत्वा हनूमानभिजगाद ताम् । रघुनाथप्रसादेन सर्वमस्माकमूर्जितम् ॥ ५०

तथाऽपि याचे वरमेकमुत्तमं विधेहि तन्मे मनसः समीहितम् ।
भवे भवे नो रघुनाथकः पतिर्वयं च तत्कर्मकराश्च किंकराः ॥ ५१

एतद्वचः समाकर्ण्य प्लवङ्गस्य तदाऽङ्गना । उवाच वाक्यं मधुरं प्रहस्य गुणपूजितम् ॥ ५२
भवद्भिः प्रार्थितं यत्तु दुर्लभं सर्वदैवतैः । तद्भविष्यत्यसंदेहः सेवकास्तद्द्रघोः पतेः ॥ ५३
अथापि वरमेकं वै दास्यामि कृतहेलना । रघुनाथस्य तुष्ट्यर्थं तद्दत्तं मे भविष्यति ॥ ५४
अग्रे वीरमणिर्भूपो महाबलसमन्वितः । ग्रहीष्यति भवद्वाहं शिवेन परिरक्षितः ॥ ५५
तज्जयार्थं महास्त्रं मे गृह्णीत सुमहाबलाः । द्वैरथे स तु योद्धव्यः शत्रुघ्नेन त्वया महान् ॥ ५६
इदमस्त्रं यदा त्वं तु क्षेपयिष्यसि संगरे । अनेन पूतो रामस्य स्वरूपं ज्ञास्यते पुनः ॥ ५७
ज्ञात्वा तं वाजिनं दत्त्वा चरणे प्रपतिष्यति । तस्माद्गृह्णीत चास्त्रं तन्मम वैरिविदारणम् ॥ ५८
तच्छ्रुत्वा रघुनाथस्य भ्राता जग्राह चास्त्रकम् । उदङ्मुखः पवित्राङ्गो योगिन्या दत्तमद्भुतम् ॥ ५९
तत्प्राप्यास्त्रं महातेजा बभूव रिपुकर्शनः । दुष्प्रधृष्यो दुराराध्यो वैरिवारणसच्छृणिः ॥ ६०
तां नत्वा राघवश्रेष्ठः शत्रुघ्नो हयसत्तमम् । गृहीत्वाऽगाज्जलात्तस्माद्देवातीरे सुखोचिते ॥ ६१
तं दृष्ट्वा सैनिकाः सर्वे प्रहृष्टाङ्गा मुदाऽन्विताः । साधु साधु प्रशंसन्तः पप्रच्छुर्हयनिर्गमम् ॥ ६२
हनूमान्कथयामास हयस्याऽऽगमनं महत् । वरप्राप्तिं च तेभ्यो वै तेऽपि श्रुत्वा मुदं गताः ॥ ६३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे जलमध्याद्वाहप्राप्तिर्नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३११८

---

*एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. ञ. ठ. ड. त. थ. द. ध. पुस्तकस्थः ।

---

1 द. 'हावीरस' ।

अथैकोनचत्वारिंशोऽध्यायः ।

शेष उवाच—
निनदत्सु मृदङ्गेषु वीणानादेन सर्वतः । मुक्तो वाहस्ततो देवपुरं देवविनिर्मितम् ॥ १
यत्र स्फाटिककुड्यानां रचनाभिर्गृहा नृणाम् । हसन्ति विन्ध्यं विमलं पर्वतं नागसेवितम् ॥ २
राजतानि गृहाण्यत्र दृश्यन्ते प्रकृतेरपि । विचित्रमणिसंनद्धा नानामाणिक्यगोपुराः ॥ ३
पद्मिन्यो यत्र लोकानां गेहे गेहे मनोहराः । हरन्ति चित्तानि नृणां मुखपद्मकलक्षिताः ॥ ४
पद्मरागमणिर्यत्र गेहे गेहे सुभूमिषु । बद्धः संलक्ष्यते विप्र तदोष्ठस्पर्धया नु किम् ॥ ५
क्रीडाशैलाः प्रत्यगारं नीलरत्नविनिर्मिताः । कुर्वन्ति शङ्कां मेघस्य मयूराणां कलापिनाम् ॥ ६
हंसा यत्र नृणां गेहे स्फाटिकेषु नियन्त्रिताः । कुर्वन्ति मेघाम्भो भीतिं मानसं न स्मरन्ति च ॥ ७
निरन्तरं शिवस्थाने ध्वस्तं चन्द्रिकया तमः । शुक्लकृष्णविभेदो न पक्षयोस्तत्र वै नृणाम् ॥ ८
तत्र वीरमणी राजा धार्मिकेष्वग्रणीर्महान् । राज्यं करोति विपुलं सर्वभोगसमन्वितम् ॥ ९
तस्य पुत्रो महाशूरो नाम्ना रुक्माङ्गदो बली । वनिताभिर्गतो रम्यदेहाभिः क्रीडितुं वनम् ॥ १०
तासां मञ्जीरसंरावः कङ्कणानां रवस्तथा । मनो हरति कामस्य किमन्यस्य कथा प्रभो ॥ ११
वनं जगाम सुमहत्सुपुष्पनगसंयुतम् । सदाशिवकृतावासमृतुषट्कैर्विराजितम् ॥ १२
चम्पका यत्र बहुशः फुल्लकोरकशोभिताः । कुर्वन्ति कामिनां तत्र त्वच्छयार्तिं विलोकिताः ॥ १३
चूताः फलादिभिर्नम्रा मञ्जरीकोटिसंयुताः । नागाः पुन्नागवृक्षाश्च शालास्तालास्तमालकाः १४
कोकिलानां समारावा यत्र च श्रुतिगोचराः । सदा मधुपझङ्कारगतनिद्राः सुमल्लिकाः ॥ १५
दाडिमानां समूहाश्च कर्णिकारैः समन्विताः । केतकीकानकीवन्यवृक्षराजिविराजिताः ॥ १६

तस्मिन्वने प्रमदसंयुतचित्तवृत्ति-
र्गायन्कलं मधुरवाग्विचिकीर्षयोच्चैः ।
उद्यत्कुचाभिरभितो वनिताभिरागा-
च्छोभानिधानवपुरुज्झितभीविशेषः ॥ १७

काश्चित्तं नृत्यविद्याभिस्तोषयन्ति स्म शोभनम् । काश्चिद्गानकलाभिश्च काश्चिद्वाक्चतुरोचितैः ॥
भ्रूसंज्ञयाऽपराः काश्चित्तोषयामासुरुन्मदाः । परिरम्भणचातुर्यैस्तं हृष्टं विदधुः स्त्रियः ॥ १९
ताभिः पुष्पोच्चयं कृत्वा भूषयामास ताः स्त्रियः । वाण्या कोमलया शंसन्रेमे कामवपुर्धरः ॥ २०
एवं प्रवृत्ते समये राजराजस्य धीमतः । प्रायात्तद्वनदेशं स हयः परमशोभनः ॥ २१

तं स्वर्णपत्ररचितैकललाटदेशं
गङ्गासमं घुसृणकुङ्कुमपिञ्जराङ्गम् ।
गत्वा(त्या) समं पवनवेगतिरस्करिण्या
दृष्ट्वा स्त्रियः परमकौतुकधामदेहम् ॥ २२

---

* आर्ष इडागमः ।

---

१ द. °मधुर° । २ थ. कोकिलानां । ३ त. °कीचम्पद्° । द. °कीकल्पद्° ।

ऊचुः पार्तिं कमलमध्यपिशङ्गवर्णा-
स्ताम्राधरमतिभयाहतविद्रुमाभाः ।
दन्तव्रजर्ममितहास्यसुशोभिवक्त्राः
कामस्य बाणनयनादिविमोहनाभाः ॥ २३

स्त्रिय ऊचुः—

कान्त कोऽयं महानर्वा स्वर्णपत्रैकशोभितः । कस्य वा भाति शोभाढ्यो गृहाण स्वबलादिमम् ॥

शेष उवाच—

तदुक्तं वच आकर्ण्य लीलाललितलोचनः । जग्राह हयमेकेन करपद्मेन लीलया ॥ २५

वाचयित्वा भालपत्रं स्पष्टवर्णसमन्वितम् । जहास महिलामध्ये जगाद वचनं पुनः ॥ २६

रुक्माङ्गद उवाच—

पृथिव्यां नास्ति मे पित्रा समः शौर्येण च श्रिया । तस्मिन्राज्ञि कथं धत्त उत्सेकं रामभूमिपः २७

यस्य रक्षां प्रकुरुते सदा रुद्रः पिनाकधृत् । यं देवा दानवा यक्षा नमन्ति मणिमौलिभिः ॥ २८

कुरुताद्वाजिमेधं वै जनको मे महाबलः । यात्वेष वाजिशालायां बध्नन्तु मम उद्भटाः ॥ २९

इति वाक्यं समाकर्ण्य महिलास्ता मनोहराः । प्रहर्षवदना जाताः कान्तं तु परिरेभिरे ॥ ३०

गृहीत्वा तं हयं पुत्रो राज्ञो वीरमणेर्महान् । पुरं पत्नीसमायुक्तो महोत्साहमवीविशत् ॥ ३१

मृदङ्गध्वनिषु प्रोच्चैराहतेषु समन्ततः । बन्दिभिः संस्तुतः प्रागात्स्वपितुर्मन्दिरं महत् ॥ ३२

तस्मै स कथयामास हयं नीतं रघोः पतेः । वाजिमेधाय निर्मुक्तं स्वच्छन्दगतिमद्भुतम् ॥ ३३

रक्षितं शत्रुसूदेन महाबलसमेतिना । तच्छ्रुत्वा वचनं तस्य नृपो वीरमणिर्महान् ॥ ३४

नातिप्रशंसयामास तत्कर्म सुमहामतिः । नीत्वा पुनः समायातं चौरस्येव विचेष्टितम् ॥ ३५

कथयामास जामात्रे शिवायाद्भुतकर्मणे । रुक्माङ्गदधरायाङ्गभूषाय चन्द्रशोभिने ॥ ३६

तेन संमन्त्रयामास नृपो वीरमणिर्महान् । पुत्रसृष्टं महत्कर्म विनिन्द्यं महतां मतम् ॥ ३७

शिव उवाच—

राजन्पुत्रेण भवतः कृतं कर्म महाद्भुतम् । योऽजीहरन्महावाहं रामचन्द्रस्य धीमतः ॥ ३८

अद्य युद्धं महद्भाति सुरासुरविमोहनम् । शत्रुघ्नेन महाराज्ञा वीरकोट्येकरक्षितुः ॥ ३९

मया यो धीयते स्वान्ते जिह्वया प्रोच्यते हि यः । तस्य रामस्य यज्ञाङ्गं जहार तव पुत्रकः ॥४०

परमत्र महालाभो भविष्यति रणाङ्गणे । यद्रामचरणाम्भोजं द्रक्ष्यामः स्वीयसेवितम् ॥ ४१

अत्र यत्नो महान्कार्यो हयस्य परिरक्षणे । नयिष्यन्ते बलाद्वाहं मया रक्षितमप्यमुम् ॥ ४२

तस्मादिमं महाराज राज्येन सह संनतः । वाजिनं शोभनं दत्त्वा प्रेक्षस्वाङ्घ्रियुगं ततः ॥ ४३

इति वाक्यं समाकर्ण्य शिवस्य स नृपोत्तमः । उवाच तं सुरेन्द्रादिवन्द्यपादाम्बुजद्वयम् ॥ ४४

वीरमणिरुवाच—

क्षत्रियाणामयं धर्मो यत्प्रतापस्य रक्षणम् । तदसौ क्रान्तुमुद्युक्तः क्रतुना हयसंज्ञिना ॥ ४५

तस्माद्रक्ष्यः स्वप्रतापो येन केनापि मानिना । यावच्छक्यं कर्म कृत्वा शरीरव्ययकारकम् ॥ ४६

सर्वं कृतं सुतेनेदं गृहीतोऽश्वः पुनर्यतः । कोपितं रामभूपालं समयार्हं कुरु प्रभो ॥ ४७

क्षत्रियाणामिदं कर्म कर्तव्यार्हं भवेन्न हि । यदकस्माद्रिपोः पादौ प्रणमेद्भयविह्वलः ॥ ४८

१ ग. छ. ड. °प्रभित° । २ ग. °णे । अङ्गनार्धध° । द. °णे । अर्धाङ्गनाध° । ३ छ. ड. °नर्महान् । को° ।

रिपवो विहसन्त्येनं कातरोऽयं नृपाधमः । क्षुद्रः प्राकृतवन्नीचो नतवान्भयविह्वलः ॥ ४९
तस्माद्भवान्यथायोग्यं योद्धव्ये समुपस्थिते । यद्विधेयं विचार्यैवं कर्तव्यं भक्तरक्षणम् ॥ ५०

शेष उवाच—

[*इति वाक्यं समाकर्ण्य चन्द्रचूडोऽवदद्वचः । प्रहसन्मेघगम्भीरवाण्या संमोहयन्मनः ॥ ५१
यदि देवास्त्रयस्त्रिंशत्कोटयः समुपस्थिताः । तथाऽपि त्वत्तः केनाश्वो गृह्यते मम रक्षितुः ॥ ५२
यदि रामः समागत्य स्वात्मानं दर्शयिष्यति । तदाऽहं चरणौ तस्य प्रणमामि सुकोमलौ ॥ ५३
स्वामिना सह योद्धव्यं महाननय उच्यते । अन्ये वीरास्तृणप्रायाः किंचित्कर्तुं न वै क्षमाः ॥ ५४
तस्माद्युध्यस्व राजेन्द्र रक्षके मयि संस्थिते । को गृह्णाति बलाद्वाहं त्रिलोकी यदि संगता ]॥ ५५

शेष उवाच—

एतद्वचः परं श्रुत्वा चन्द्रचूडस्य भूमिपः । जहर्ष मानसेऽत्यन्तं युद्धकर्मणि कौतुकी ॥ ५६

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे हयग्रहणं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३१७१

---

अथ चत्वारिंशोऽध्यायः ।

---

शेष उवाच—

सेनाचरा महाराज्ञो महाबलसमेतिनः । समागतं तं पश्यन्तो हयं रामस्य भूपतेः ॥ १
कोऽसावश्वः केन नीतः कथं वा दृश्यते न सः । को गन्ता यमपुर्यां वै वाहं हृत्वा सुमन्दधीः ॥ २
विलोकयन्तस्तन्मार्गं यावत्सेनाचरा रघोः । तावत्प्राप्तो महाराजो महासैन्यपरिवृतः ॥ ३
पप्रच्छ सेवकान्सर्वान्कुत्राश्वो मम सांप्रतम् । न दृश्यते कथं वाहः स्वर्णपत्रसुशोभितः ॥ ४
इति तद्वचनं श्रुत्वा सेवकास्ते हयानुगाः । प्रोचुर्नाथ मनोवेगो वाहः केनापि कानने ॥ ५
हृतो न लक्ष्यते तस्मादस्माभिर्मार्गकोविदैः । तदत्र यत्नः कर्तव्यो हयप्राप्तिं प्रति प्रभो ॥ ६
तेषां वचनमाकर्ण्य पप्रच्छ सुमतिं नृपः । शत्रुघ्नः शत्रुसंहारकारी मोहनरूपधृत् ॥ ७

शत्रुघ्न उवाच—

कोऽत्र राजा निवसति कथं वाहस्य संगमः । कियद्बलं भूमिपतेर्येन मेऽद्य हृतो हयः ॥ ८

सुमतिरुवाच—

राजन्देवपुरं ह्येतद्देवेनैव विनिर्मितम् । कैलासमिव दुर्गम्यं वैरिसंघैः सुसंहतैः ॥ ९
अस्मिन्वीरमणी राजा महाशूरः प्रतापवान् । राज्यं करोति धर्मेण शिवेन परिरक्षितः ॥ १०
योऽसौ प्रलयकारी स आस्ते भक्त्या वशीकृतः । चन्द्रचूडस्य(डः स्व) भक्तस्य पक्षपातं सृजन्सदा
तस्मात्तत्र महद्युद्धं गृहीतश्चेद्भविष्यति । यत्ताः सन्तः प्रकुर्वन्तु रक्षणं कटकस्य हि ॥ १२
एवं श्रुत्वा स शत्रुघ्नः सर्वभूपशिरोमणिः । सैन्यव्यूहं रचित्वाऽसौ तिष्ठति स्म महायशाः ॥ १३
अथ तं सुखमासीनं मन्त्रयन्तं सुमन्त्रिणा । आजगाम स देवर्षिर्युद्धकौतुकसंयुतः ॥ १४
तमागतं मुनिं दृष्ट्वा शत्रुघ्नस्तपसां निधिम् । अभ्युत्थायाऽऽसने स्थाप्य मधुपर्कमथाऽऽचरत् १५
स्वागतेन च संतुष्टं नारदं मुनिसत्तमम् । उवाच प्रीणयन्वाचा वाक्यवादविशारदः ॥ १६

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

शत्रुघ्न उवाच—

मदीयोऽश्वः कुत्र विप्र कथयस्व महामते । न लक्ष्यते गतिस्तस्य सेवकैर्मम कोविदैः ॥ १७
शंस तं येन वा नीतं क्षत्रियेण च मानिना । कथं तत्र हयप्राप्तिर्भविष्यति तपोधन ॥ १८
इति वाक्यं समाकर्ण्य शत्रुघ्नस्य स नारदः । उवाच वीणां रणयन्गायन्रामकथां मुहुः ॥ १९

नारद उवाच—

एतद्देवपुरे राजन्भूपो वीरमणिर्महान् । तत्पुत्रेण वनस्थेन गृहीतस्तव वाजिराट् ॥ २०
तत्र युद्धं महत्तेऽद्य भविष्यति सुदारुणम् । अत्र वीराः पतिष्यन्ति बलशौर्यसमन्विताः ॥ २१
तस्मादत्र महायत्नात्स्थातव्यं ते महाबल । रचय व्यूहरचनां दुर्गमां परसैनिकैः ॥ २२
जयस्ते भविता राजन्कृच्छ्रेण तु नृपोत्तमात् । रामं को नु पराजीयाद्भुवने सकले ह्यपि ॥ २३
इत्युक्त्वाऽन्तर्दधे विप्रो नभसि स्थितवांस्ततः । युद्धं सुदारुणं द्रक्ष्यन्देवदानवयोरिव ॥ २४

शेष उवाच—

अथ राजा वीरमणिः सर्वशूरशिरोमणिः । पटहं घोषितुं स्वीये पुरमध्ये महारवम् ॥ २५
आह्वयामास सेनान्यं रिपुवारं महोन्मदम् । कथयामास च क्षिप्रं मेघगम्भीरया गिरा ॥ २६

वीरमणिरुवाच—

[*सेनानीः पटहस्याऽऽज्ञां देहि मे शोभने पुरे । यच्छ्रुत्वा मे सुसंनद्धाः शत्रुघ्नं प्रति यान्ति ते] २७
इति वाक्यं समाकर्ण्य राज्ञो वीरमणेस्तदा । [†कारयामास पटहं महारवनिनादितम् ] ॥ २८
गेहे गेहे च रथ्यायां[1] श्रूयते पटहध्वनिः । शत्रुघ्नं यान्तु ये सर्वे वीरा राजपुरे स्थिताः ॥ २९
यो(ये) वै राज्ञः समुल्लङ्घ्य शासनं वीरमानिनः। पुत्रा वा भ्रातरो वाऽपि ते वधार्हा नृपाज्ञया ३०
शृण्वन्तु वीराः पुनरप्याहते पटहे रवम् । श्रुत्वा विधीयतामाशु कर्तव्यं मा विलम्बितम् ॥ ३१

शेष उवाच—

इति पटहरवं स्वकर्णगोचरं नरवरवीरवरा ययुर्नृपोत्तमम् ॥
ते च कवचपरिभूषितस्वदेहाः समरमहोत्सवहृष्टचित्तकोशाः ॥ ३२

केचिद्ययुः शिरस्त्राणं धृत्वा शिरसि शोभने[2] । कवचेन सुशोभाढ्याः शतकोटिसुशोभनाः ॥ ३३
रथेन हययुग्मेन मणिकाञ्चनशोभिना । [*ययुस्ते राजसंदेशाद्भूपाला[3] युद्धदुर्मदाः ॥ ३४
केचिन्मतङ्गजैर्मत्तैः केचिद्वाहैः सुशोभितैः । ययुर्नृपगृहं सर्वे राजसंदेशहारकाः ॥ ३५
विविक्तस्वर्णकवचाः शिरस्त्राणेन शोभिताः] । रुक्माङ्गदोऽपि च निजे रथे तिष्ठन्मनोजवे ॥ ३६
शुभाङ्गदोऽनुजस्तस्य महारत्नमयं दधत् । कवचं वपुषि श्रेष्ठे निजं प्रागाद्रणोत्सवे ॥ ३७
राजभ्राता वीरसिंहः सर्वशस्त्रास्त्रकोविदः । ययौ नृपाज्ञया तत्र शासनं भूमिपस्य हि ॥ ३८
जामेयस्तस्य राज्ञोऽपि बलमित्र इति स्मृतः। संनद्धः कवची खड्गी जगाम नृपमन्दिरम् ॥ ३९
सेनानी रिपुवारोऽपि सेनां तां चतुरङ्गिणीम् । सज्जां विधाय भूपाय न्यवेदयदथो महान् ॥ ४०

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ ड. ण. त. थ. द. ध. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः । * एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ. ड. ण. थ. द. ध. पुस्तकस्थः ।

---

१ छ. ड. राजपथे । २ ण. द. शोभनम् । ३ ड. °शाश्रृपाज्ञाकारिणो नृपाः । के° ।

अथ राजा वीरमणिः सर्वशस्त्रास्त्रपूरितम् । मणिस्पृष्टोच्चचक्रोच्चमारोहत्स्यन्दनोत्तमम् ॥ ४१
ततो वीरारवः शङ्खनिनादश्च समन्ततः । श्रूयते कातरान्वीरान्प्रेरयन्निव संगरे ॥ ४२
भेर्यः समन्ततो जघ्नुः शुभवादकवादिताः । अनीकान्यत्र तस्याऽऽसन्संग्रामाय प्रतस्थुषः ॥ ४३
सर्वे कृतस्वस्त्ययनाः सर्वाभरणभूषिताः । सर्वशस्त्रास्त्रसंपूर्णा ययुः समरमण्डलम् ॥ ४४
भेरीशङ्खनिनादेन पूरिताश्च नगा गुहाः । आकारितुं गतः किंतु तद्रवः स्वर्गसंस्थितान् ॥ ४५
तस्मिन्कोलाहले वृत्ते राजा वीरमणिर्महान् । रणोत्साहेन संयुक्तो ययौ प्रधनमण्डलम् ॥ ४६
आगत्य संस्थितं तावद्रथपत्तिसमाकुलम् । समुद्र इव तत्स्थानात्प्लावितुं पुरुषानयात् ॥ ४७
तदागतं बलं दृष्ट्वा रथिभिः शस्त्रकोविदैः । कोलाहलीकृतं सर्वमुवाच सुमतिं नृपः ॥ ४८

शत्रुघ्न उवाच—

समागतो वीरमणिर्मम वाजिधरो बली । योद्धुं मां महता भूपः सैन्येन चतुरङ्गिणा ॥ ४९
कथं युद्धं प्रकर्तव्यं के योत्स्यन्ति बलोत्कटाः । तान्सर्वादिश मे वीरान्यथा स्याज्जय ईप्सितः ५०

सुमतिरुवाच—

स्वामिन्नसौ महाराजो महासैन्यपरिवृतः । समागतः स युद्धार्थे शिवभक्तिसमन्वितः ॥ ५१
सांप्रतं युध्यतां वीरः पुष्कलः परमास्त्रवित् । अन्येऽपि नीलरत्नाद्या योद्धारो युद्धकोविदाः ५२
शिवेन सह योद्धव्यं राज्ञा वा भवताऽनघ । द्वंद्वयुद्धेन जेतव्यो महाबलपराक्रमः ॥ ५३
अनेन विधिना राजञ्जयस्तेऽत्र भविष्यति । पश्चाद्यद्रोचते स्वामिंस्तत्कुरुष्व महामते ॥ ५४

शेष उवाच—

इति वाक्यं समाकर्ण्य शत्रुघ्नः परवीरहा । सुभटानादिदेशाथ युद्धाय कृतनिश्चयः ॥ ५५
सर्वैः ससैन्यैर्युद्धार्थं राजभिः शस्त्रकोविदैः । यथा स्यान्मे जयः क्षिप्रं यतितव्यं तथा पुनः ५६
रणार्थं राघवस्यैवं श्रुत्वा ते रणकोविदाः । महोत्साहेन संयुक्ता ययुर्योद्धुं तु सैनिकैः ॥ ५७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे युद्धनिश्चयो नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३२२८

अथैकचत्वारिंशोऽध्यायः ।

शेष उवाच—

युद्धाय ते सुसंनद्धाः शत्रुघ्नस्य महाबलाः । ययुर्वीरमणेः सैन्यमध्ये शौर्यसमन्विताः ॥ १
शरान्विमुञ्चमानास्ते भिन्दन्तः सैनिकान्बहून् । व्यदृश्यन्त रणान्तस्ते शरासनधरा नराः ॥ २
अनेके निहतास्तत्र गजा मणिमया रथाः । भग्ना वाहसमेताश्च दृश्यन्ते रणमण्डले ॥ ३
विहितं कदनं तेषां श्रुत्वा रुक्माङ्गदो बली । रथे मणिमये तिष्ठन्ययौ योद्धुं तु सैनिकान् ॥ ४
शरासने शरान्धास्यन्निषुधी अक्षयौ दधत् । शोणनेत्रान्तरो भीमो महाकोपसमन्वितः ॥ ५
अनेकबाणसंविग्नान्कुर्वन्वीरान्सहस्रशः । हाहाकारं कारयंस्तद्ययौ रुक्माङ्गदो बली ॥ ६
राजपुत्रः स्वसदृशं बलेन यशसा श्रिया । आह्वयामास शत्रुघ्नं भारतं पुष्कलं बली ॥ ७

१ द. जयार्थं ।

रुक्माङ्गद उवाच—

आगच्छ वीरकमणे महाबलपराक्रम । मया योद्धुं तु बलिना राजपुत्रेण भास्वता ॥ ८
किमन्यैस्त्रासितैर्वीर निहतैः कोटिभिर्नरैः । मया समं महायुद्धं विधाय जयमाप्नुहि ॥ ९
इत्युक्तवन्तं तरसा प्रहसन्पुष्कलो बली । जघान विपुले मध्ये वक्षसस्तीक्ष्णपर्वभिः ॥ १०
तदमृष्यन्राजपुत्रो महाचापे दधच्छरान् । जघान दशभिर्वीरं पुष्कलं वक्षसोऽन्तरे ॥ ११
उभौ समरसंरब्धावुभावपि जयैषिणौ । रेजाते संगरे तौ हि कुमारस्तारको यथा ॥ १२
बाणान्धनुषि संधाय दशसंख्यान्महाशितान् । अकरोत्पुष्कलो वीरो विरथं राजपुत्रकम् ॥ १३
चतुर्भिश्चतुरो वाहान्द्वाभ्यां सूतमपातयत् । एकेन ध्वजमेतस्य द्वाभ्यां स्यन्दनरक्षकौ ॥ १४
एकेन हृदि विव्याध राजपुत्रस्य वेगवान् । तदद्भुतं कर्म सर्वे दृष्ट्वा वीराः प्रतोषिताः ॥ १५
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः । अत्यन्तकोपमापन्नः स्यन्दनं परमाविशत् ॥ १६
स स्थित्वा स्यन्दनवरे हयरत्नेन भूषिते । शरासनं महद्धृत्वा सुदृढं गुणपूरितम् ॥ १७
उवाच पुष्कलं वीरं रुक्माङ्गद इदं वचः । महापराक्रमं कृत्वा क्व यास्यसि परंतप ॥ १८
पश्य मेऽद्य पराक्रान्ति यद्बलेन विनिर्मिताम् । यत्नात्तिष्ठस्व भो वीर नयामि त्वद्रथं नभः ॥ १९
इत्युक्त्वा शरमत्युग्रं दधार स्वशरासने । मन्त्रयित्वा मुमोचास्त्रं भ्रामकं पौष्कले रथे ॥ २०
मुमोच निशितं बाणं स्वर्णपुङ्खैकशोभितम् । तेन बाणेन नीतोऽस्य रथो योजनमात्रकम् ॥ २१
धृतः कृच्छ्रेण सूतेन रथो बभ्राम भूतले । कृच्छ्रेण प्राप्य तत्स्थानं पुष्कलः परमास्त्रवित् ॥ २२
जगाद वचनं तं वै बाणं बिभ्रच्छरासने । स्वर्गं प्राप्नुहि वीराद्य सर्वदेवैकशोभितम् ॥ २३
त्वादृशाः पृथिवीयोग्या न भवन्ति नृपोत्तम । शतक्रतुसभायोग्यास्तद्गच्छस्व सुरालयम् ॥ २४
इत्युक्त्वा स मुमोचास्त्रमाकाशमापकं महत् । तेन बाणेन स रथो ययौ खमनुलोमतः ॥ २५
सर्वाँल्लोकानतिक्रम्य ययौ सूर्यस्य मण्डलम् । तज्ज्वालया रथो दग्धो हयसूतसमन्वितः ॥ २६
तत्करैर्दग्धभूयिष्ठकलेवरः सुदुःखितः । पपात चन्द्रचूडं स धृत्वा हृद्यसुखार्दनम् ॥ २७
भूमौ निपतितस्तत्र करदग्धकलेवरः । अत्यन्तदुःखमापन्नो मुमूर्छ रणमण्डले ॥ २८
तस्मिन्निपतिते भूमौ मूर्छिते राजपुत्रके । हाहाकारो महानासीत्तत्र संग्राममूर्धनि ॥ २९
वैरिणो जयलक्ष्मीं ते संप्राप्ताः पुष्कलोन्मुखाः । पलायनपरा जाता वैरिणो हयरक्षकाः ॥ ३०
तदा पुत्रस्य वै मूर्छां दृष्ट्वा वीरमणिर्नृपः । प्रायात्समरमध्यस्थं पुष्कलं कोपपूरितः ॥ ३१
तदा भूमिश्चचालेयं सपर्वतवनोत्तमा । शूरा वै हर्षमापन्नाः कातरा भयपीडिताः ॥ ३२
चापं महद्दधानः स इषुधी अक्षयावपि । रोषान्निश्वासमामुञ्चन्नाह्वयामास वैरिणम् ॥ ३३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे पुष्कलविजयो नामैकचत्वारिंशोऽध्यायः ॥४१॥

आदितः श्लोकानां समष्ट्यङ्काः—१३२६१

---

अथ द्विचत्वारिंशोऽध्यायः ।

---

शेष उवाच—

आह्वयन्तं महासैन्यवारिधौ पुष्कलं नृपम् । समालक्ष्य कपीन्द्रोऽपि हनूमांस्तमधावत ॥

---

१ ख. ग. छ. ज. ङ. ण. त. ध. 'कसेवित' । २ द. 'त्स रथम' ।

लाङ्गूलमुद्यम्य विशालदेहं संरावमातत्य पयोदघोषम् ।
रणस्थितान्वीरवरान्कपीन्द्रो जगाम तं वीरमणिं नरेन्द्रम् ॥ २
आयान्तं च हनूमन्तं वीक्ष्य पुष्कल उद्भटः । विलोकयामास दृशा वैरक्रोधसुशोणया ॥ ३
जगाद तं हनूमन्तं पुष्कलः परमास्त्रवित् । मेघगम्भीरया वाचा नादयन्रणमण्डलम् ॥ ४

पुष्कल उवाच—

कथं त्वं समरे योद्धुमागतोऽसि महाकपे । कियद्बलं स्वल्पमेतद्राज्ञो वीरमणेर्महत्(न) ॥ ५
यत्र त्रिजगती सर्वा संमुखं समुपागता । तत्र त्वं लीलया योद्धुं यातुमिच्छसि वा न वा ॥ ६
कोऽयं राजा वीरमणिः कियद्बलमथाल्पकम् । अत्राऽऽगमनमत्युग्रं तव वीर न भाव्यते ॥ ७
रघुनाथकृपापाङ्गादहं निस्तीर्य दुस्तरम् । क्षणान्निर्यामि कीशेन्द्र मा चिन्तां कुरु संगरे(रम्) ॥८
त्वया राक्षसपाथोधिस्तीर्णो रामकृपात्रजात् । तथाऽहं रामं संस्मृत्य निस्तरिष्यामि दुस्तरम् ॥९
ये केचिद्दुस्तरं प्राप्य रघुनाथं स्मरन्ति च । तेषां दुःखोदधिः शुष्को भविष्यति न संशयः ॥१०
तस्माद्व्रज महावीर शत्रुघ्नसविधे बलिन् । एष आयामि निर्जित्य भूपं वीरमणिं क्षणात् ॥ ११

शेष उवाच—

इति धीरां समाकर्ण्य वाणीं पुष्कलभाषिताम् । जगाद वचनं भूयः पुष्कलं परवीरहा ॥ १२

हनूमानुवाच—

पुत्र मा साहसं कार्षीर्भूपं वीरमणिं प्रति । एष दाता शरण्यश्च बलशौर्यसुशोभितः ॥ १३
त्वं बालः स्थविरो भूपोऽखिलशस्त्रास्त्रवित्तमः । अनेके विजिताः संख्ये वीराः शौर्यसुशोभिताः
जानीहि पार्श्वे एतस्य रक्षितारं सदाशिवम् । भक्त्या वशीकृतं स्थाणुं सोमं चैतत्पुरीस्थितम् १५
[ *तस्मादहमनेनैव योत्स्ये भूपेन पुष्कल । अन्यान्वीरान्विजित्याऽऽशु कीर्तिमाप्नुहि पुष्कलाम् ]

पुष्कल उवाच—

शिवो भक्त्या वशीकृत्य स्वपुरे स्थापितोऽमुना । परमस्याऽऽशु हृदये न तिष्ठति महेश्वरः ॥१७
सदाशिवो यमाराध्य परमं स्थानमागतः । स रामो मन्मनस्त्यक्त्वा न क्वापि परिगच्छति ॥१८
यत्र रामस्तत्र विश्वं सर्वं स्थास्नु चरिष्णु च । तस्मादहं +जयिष्यामि रणे वीरमणिं नृपम् ॥ १९
व्रज त्वं समरे योद्धुमन्यान्मानिवरान्नृपान् । वीरसिंहमुखान्कीश मच्चिन्तां मा कुरु प्रभो ॥ २०
वाचमित्थं समाकर्ण्य हनूमान्धीरतेरिताम् । जगाम संगरे योद्धुं वीरसिंहं नृपानुजम् ॥ २१
लक्ष्मीनिधिः सुतेनास्य शुभाङ्गदसुसंज्ञिना । द्वैरथेन प्रयुयुधे महाशस्त्रास्त्रवेदिना ॥ २२
बलपु(मि)त्रेण [1]सुमदः स्वप्रतापबलोर्जितः । योद्धुं शस्त्रास्त्रसंग्रामविचारचतुरो नृपः ॥ २३
आह्वयन्तं नृपं दृष्ट्वा द्वैरथे युद्धकोविदः । पुष्कलो भर्मखचिते रथे तिष्ठन्ययौ हि तम् ॥ २४
राजा तमागतं दृष्ट्वा पुष्कलं युद्धकोविदम् । उवाच निर्भिया वाण्या रणमध्ये सुभाषितः ॥ २५

वीरमणिरुवाच—

बाल मा याहि मां क्रुद्धं संग्रामे चण्डकोपनम् । गच्छ प्राणपरीप्सायै मा युद्धं कुरु मे सह ॥२६
त्वादृशान्बालकान्भूपा मादृशाः कृपयन्ति वै । प्रहरन्ति न चैतान्वै तस्माद्गच्छ रणाद्बहिः ॥ २७

* एतच्चिह्नान्तर्गतः पाठः ग. छ. ठ. ड. द. ध. पुस्तकस्थः । + आर्ष इडागमः ।

1 अ. सुदमः ।

यावत्त्वं न मया दृष्टश्चक्षुर्भ्यां तावदुन्मनाः । सांप्रतं त्वां प्रहर्तुं न मनः समभिकाङ्क्षति ॥ २८
[ *यस्त्वया मत्सुतो बाणैर्भिन्नो मूर्छीकृतः पुनः । सर्वं मया क्षान्तमद्य तव बालधियो महत् ]॥
इति वाक्यं समाकर्ण्य पुष्कलो निजगाद तम् ॥ ३०

पुष्कल उवाच—

बालोऽहं त्वं महावृद्धः सर्वशस्त्रास्त्रकोविदः । क्षत्रियाणां मते ये तु बलाधिक्येन संयुताः ३१
त एव वृद्धा भूपाग्र्य न वयोवृद्धतां गताः । मया ते मूर्छितः पुत्रः स्वशौर्यबलदर्पितः ॥ ३२
इदानीं त्वामहं शस्त्रैः पातयिष्यामि संगरे । तस्मात्त्वं यत्नतस्तिष्ठ राजन्संग्राममूर्धनि ॥ ३३
रामभक्तं न मां कश्चिज्जयतीन्द्रपदे स्थितः । इत्थं भाषितमाश्रुत्य पुष्कलस्य नृपाग्रणीः ॥ ३४
जहास बालं संवीक्ष्य कोपं च व्यदधात्पुनः । तं वै कोपितमालक्ष्य भरतात्मज उन्मदः ॥ ३५
जघान शरविंशत्या राजानं हृदि तीक्ष्णया । राजा तानागतान्दृष्ट्वा बाणांस्तेन विमोचितान् ३६
चिच्छेद परमक्रुद्धः शरैस्तीक्ष्णैरनेकधा । तद्बाणच्छेदनं दृष्ट्वा भारतिः परवीरहा ॥ ३७
चुकोप हृदयेऽत्यन्तं राजानं च त्रिभिः शरैः । विव्याध भाले भूपालपुत्रः पुष्कलसंज्ञितः ३८
तत्र लग्ना विरेजुस्ते त्रिकूटाशिखराणि किम् । तैर्बाणैर्व्यथितो राजा जघान नवभिः शरैः ॥ ३९
हृदये पुष्कलं वीरं महाकोपसमन्वितः । तैर्वेत्सदन्तैर्बहस्रं पीतं रामानुजाङ्गजम् ॥ ४०
सर्पा आशीविषा यद्वत्क्रुद्धास्तद्वपुषि स्थिताः । परमं कोपमापन्नः पुष्कलो भूमिपं पुनः ॥ ४१
बाणानां शतकेनाऽऽशु बिभेद शितपर्वणा । तैर्बाणैः कवचं भिन्नं किरीटः सशिरस्त्रकः ॥ ४२
रथो धनुर्महत्सज्यं छिन्नं कोपपरिप्लवात् । क्षतजेन परिप्लुष्टो बाणभिन्नकलेवरः ॥ ४३
अन्यं स्यन्दनमारुह्य जगाम भरतात्मजम् । धन्योऽसि वीर रामस्य चरणाब्जमधुव्रत ॥ ४४
महत्कृतं कर्म तेऽद्य यदहं विरथीकृतः । प्राणान्रक्षस्व भो वीर सांप्रतं मयि युध्यति ॥ ४५
सुलभा न तव प्राणाः कालरूपे मयि स्थिते । इत्युक्त्वा व्यहनद्बाणैरसंख्यैरस्त्रकोविदः ॥ ४६
भूमौ दिशि च तद्बाणान्न्यदृश्येत तत्र ह । अनेके गजसाहस्रा भिन्ना अश्वाः समन्ततः ॥ ४७
रथा रथियुतास्तेन च्छिन्ना भिन्ना द्विधाकृताः । शोणितौघा सरित्तत्र प्रसुस्राव रणाङ्गणे ॥ ४८
यत्रोन्मदा हि मातङ्गा दृश्यन्ते शैलशृङ्गवत् । केशाः शैवालवल्लक्ष्या मुहुः प्राणिशिरस्थिताः ४९
अनेके पाणयश्छिन्ना वीराणां मुद्रिकाश्रयाः । दृश्यन्ते अहिवत्तत्र चन्दनादिकरूषिताः ॥ ५०
शिरांसि च भटाग्र्याणां कच्छपाभां वहन्ति वै । मांसानि पङ्का यत्राऽऽसन्वीराणां महतां ततः
एवं व्यतिकरे वृत्ते योगिन्यः शतशो रणे । पपुः पात्रेण रुधिरं प्राणिनां रणपातिनाम् ॥ ५२
मांसानि बुभुजुस्ता वै हर्षकौतुकसंयुताः । पीत्वा तु शोणितं तत्र भक्षित्वा मांसकं मुदा ॥ ५३
ननृतुर्जहसुः प्रोच्चैरुज्जगुः प्रधनाङ्गणे । पिशाचास्तत्र समरे प्राणिनां मस्तकानि वै ॥ ५४
धृत्वा कराभ्यां मत्ताङ्गास्तालवद्वादनोद्यताः । शिवास्तत्र महामांसं पतितानां रणाङ्गणे ॥ ५५
भक्षित्वा व्यनदन्मत्ताः कातराणां भयप्रदम् । कातरास्तत्र संत्रस्ता गताः कुञ्जरकोटरे ॥ ५६
भक्षिता योगिनीभिस्ते पापिनां क्वापि न स्थितिः । एतत्कदनमालक्ष्य स्वसैन्यस्य रथाग्रणीः ५७
पुष्कलोऽपि चकारात्र कदनं रणमण्डले । भिद्यन्ते गजशीर्षाणि पतन्ति मौक्तिकानि तु ॥ ५८

* एतच्चिह्नान्तर्गतः पाठः ख. ग. छ. ज. ठ. ण. त. थ. द. ध पुस्तकस्थः ।

१ झ. म. तीक्ष्णैः । २ झ. म. बलेन । ३ नतपर्वणा । ४ द. °संख्यैः शस्त्र° । ५ ग. लब्धा । झ. म. उष्ट्राः । ६ झ. °कश्चिदः । इ° । ७ क. ख. ग. छ. ञ. म. त. थ द °समुन्मदाः । न° ।

दृश्यन्ते लोमभिः पूर्णास्ताम्रपर्णीव तन्न(ते न)दी। पुष्कलप्रहिता बाणा नृणामङ्गेषु संगताः॥५९
कुर्वन्ति प्राणविच्छेदं वीराणामपि सर्वतः। सर्वे रुधिरसिक्ताङ्गाः सर्वे छिन्ननिजाङ्गकाः॥ ६०
दृश्यन्ते किंशुका यद्वत्सुभटाः प्रधनाङ्गणे। एतस्मिन्समये क्रुद्धः समाभाष्य महीपतिम्॥ ६१
जघान दशबाणैस्तं रोषपूरपरिप्लुतः। तद्बाणवेधभिन्नाङ्गो विशीर्णकवचो नृपः॥ ६२
महाबलं तं मन्वानः प्राहरच्छरकोटिभिः। तैर्बाणैः कवचान्मुक्तं स्रवद्बहुसुशोणितम्॥ ६३
वपुर्बभूव रुचिरं शरपञ्जरगोचरम्। शरपञ्जरमध्यस्थो विह्वलीकृतमानसः॥ ६४
शराञ्छेतुं च संधातुं न चशाम स भारतिः। रामं स्मृत्वा धनुर्धृत्वा करे सज्यं महद्भटः॥ ६५
मुमोच बाणान्निशितान्वैरिवृन्दनिवारणान्। तैर्बाणैः शरजालं तद्विधूय द्विजपुंगव॥
शङ्खं प्रध्माय समरे जगाद गतभीर्नृपम्॥ ६६

पुष्कल उवाच—

त्वया कृतं महत्कर्म यन्मां बाणस्य पञ्जरे। गोचरं कृतवान्वीर वीरतापनमुल्बटम्॥ ६७
हृद्दत्वान्मम मान्योऽसि सांप्रतं रणमण्डले। पश्य मेऽद्य पराक्रान्तं राजन्वीरमणे महत्॥ ६८
बाणत्रयेण भो वीर मूर्छितं करवै न हि। तर्हि प्रतिज्ञां शृणु मे सर्ववीरविमोहिनीम्॥ ६९
गङ्गां प्राप्यापि यो वै तां निन्दित्वा पापहारिणीम्। न मज्जति महापापो महामूढविचेष्टितम्॥७०
तस्य पापं ममैवास्तु चेन्न त्वां रणमण्डले। पतितं मूर्छया [*नैवं करिष्ये तीक्ष्णसायकैः॥ ७१
सांप्रतं वीरबुद्ध्या त्वं] संनद्धो भव भूपते। इति वाक्यं समाकर्ण्य पुष्कलस्य नृपोत्तमः॥
चुकोप भृशमुद्विग्नः संदधे निशिताञ्शरान्॥ ७३
ते शरा हृदयं भित्त्वा गतास्ते भारतेर्महत्। पेतुः क्षितावधो यद्वद्रामभक्तिपराङ्मुखाः॥ ७४
ततः शरं मुमोचास्मै निशितं वह्निसमप्रभम्। लक्षीकृत्य महद्वक्षः कपाटतटविस्तृतम्॥ ७५
स बाणो भूमिपतनाद्द्विधा छिन्नः शरेण हि। पपात रथमध्येऽपि भूमण्डलमिव ज्वलन्॥ ७६
अपरं बाणमाधत्त मातृभक्तिभवं ततः। निधाय पुण्यं सोऽप्येष चिच्छेद महता पुनः॥ ७७
तदा खिन्नः स हृदये किं कर्तव्यमिति स्मरन्। रामं हृदि निजार्तिघ्नं मुमोच परमास्त्रवित्॥७८
स बाणस्तस्य हृदये लग्न आशीविषोपमः। मूर्छामप्रापयत्तं वै ज्वलन्सूर्यसमप्रभः॥ ७९
ततो हाहाकृतं सर्वं पलायनपरायणम्। राज्ञि संमूर्छिते जाते पुष्कलो जयमाप्तवान्॥ ८०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे पुष्कलविजयो नाम द्विचत्वारिंशोऽध्यायः॥४२॥

आदितः श्लोकानां समष्ट्यङ्काः—१३३४१

---

अथ त्रिचत्वारिंशोऽध्यायः।

---

शेष उवाच—

हनूमान्वीरसिंहं तु समागत्याब्रवीद्वचः। तिष्ठ यासि कुतो वीर जेष्यामि त्वां क्षणादिह॥ १
एवमुक्तं समाकर्ण्य प्लवङ्गस्य वचो महत्। कोपपूरपरिप्लुष्टः कार्मुकं जलदस्वनम्॥ २
विनद्य घोरान्निशितान्बाणान्मुञ्चन्बभौ रणे। आषाढे जलदस्येव धारासारो मनोहरः॥ ३

---

* एतच्चिह्नान्तर्गतः पाठो ङ. पुस्तकस्थः।

---

१ ग. ङ. द. °हृदृढम्। मुं°। २ ङ. विंदित्वा। ३ द. °पि रविमण्डलवज्ज्वल°।

तान्दृष्ट्वा निशितान्बाणान्स्ववपुष्के विलग्नकान् । चुकोप हृदयेऽत्यन्तं तं हन्तुं मन आदधे ॥ ४
मुष्टिना ताडया मास हृदये वज्रसारिणा । स मुष्टिना हतो वीरः पपात धरणीतले ॥ ५
मूर्छितं तं समालोक्य पितृव्यं स शुभाङ्गदः । रुक्माङ्गदोऽपि संमूर्छां त्यक्त्वाऽगाद्रणमण्डलम् ॥ ६
बाणान्समभिवर्षन्तौ मेघाविव महास्वनौ । कुर्वन्तौ कदनं घोरं प्लवङ्गं प्रति जग्मतुः ॥ ७
तौ दृष्ट्वा समरे वीरौ समायातौ कपीश्वरः । लाङ्गूलेन च संवेष्ट्य सरथौ चापधारकौ ॥ ८
स्फोटयामास भूदेशे तत्क्षणान्मूर्छिताबुभौ । निश्चेष्टौ समभूतां तौ रुधिराक्रान्तदेहकौ ॥ ९
बलमित्रश्चिरं युद्धं विधाय सुमदेन हि । मूर्छामप्रापयंत्तं वै बाणैः सुशितपर्वभिः ॥ १०
पुष्कलेन क्षणान्नीतो मूर्छां चैतन्यवर्जिताम् । जयमाप्तं तु कटकं शत्रुघ्नस्य भटार्दनम् ॥ ११
एतस्मिन्समये शर्वः स्यन्दनं वरमास्थितः । विस्फारयन्धनुर्दिव्यमुपाधावद्भटानिमान् ॥ १२
जटाजूटान्तरगतां चन्द्रलेखां वहन्महान् । सर्पाभूषां मनःस्पृश्यां दधदाजगवं धनुः ॥ १३
संमूर्छिताञ्जनान्दृष्ट्वा भक्तार्तिघ्नो महेश्वरः । योद्धुं मायान्महत्सैन्ये शत्रुघ्नस्य भटानिमान् ॥ १४
सगणः सपरीवारः कम्पयन्पृथिवीतलम् । भक्तरक्षार्थमागच्छंस्त्रिपुरं च यथा पुरा ॥ १५
कोपाच्छोणतरे नेत्रे वहन्प्रलयकारकः । पश्यन्वीरान्बहुमतीन्पिनाकी देववन्दितः ॥ १६
तमागतं महेशानं वीक्ष्य रामानुजो बली । जगाम समरे योद्धुं सर्वदेवशिरोमणिम् ॥ १७
अथाऽऽगतं तु शत्रुघ्नं रुद्रो वीक्ष्य पिनाकभृत् । उवाच परमापन्नः कोपं सगुणचापभृत् ॥ १८
पुष्कलेन महत्कर्म कृतं रामाङ्घ्रिसेविना । मद्भक्तं यो रणे हत्वा गतः समरमण्डलम् ॥ १९
अद्य क्वास्ति परो वीरः पुष्कलः परमास्त्रवित् । तं हत्वा सुखमाप्स्यामि समरे भक्तपीडनम् २०

शेष उवाच—

इत्युक्त्वा वीरभद्रं स प्रेषयामास पुष्कलम् । याहि त्वं समरे योद्धुं पुष्कलं सेवकार्दनम् ॥ २१
नन्दिनं प्रेषयामास हनूमन्तं महाबलम् । कुशध्वजं प्रचण्डं तु भृङ्गिणं च सुबाहुकम् ॥ २२
सुमदं चण्डनामानं गणं स्वीयं समादिशत् । पुष्कलस्तु समायान्तं वीरभद्रं महागणम् ॥ २३
महारुद्रस्य संवीक्ष्य योद्धुं प्रायान्महामनाः । पुष्कलः पञ्चभिर्बाणैस्ताडयामास संयुगे ॥ २४
तैर्बाणैः क्षतगात्रस्तु त्रिशूलं स समाददे । स त्रिशूलं क्षणाच्छित्त्वा व्यगर्जत महाबलः ॥ २५
छिन्नं स्वीयं त्रिशूलं वै वीक्ष्य रुद्रानुगो बली । खट्वाङ्गेन जघानाऽऽशु मस्तके भारतिं द्विज॥ २६
खट्वाङ्गाभिहतः सोऽथ मुमूर्छ क्षणमुद्भटः । विहाय मूर्छां सद्वीरः पुष्कलः परमास्त्रवित् ॥ २७
[illegible]च्छेद खट्वाङ्गमपि करस्थं तस्य तत्क्षणात् । वीरभद्रः स्वके छिन्ने खट्वाङ्गे करसंस्थिते॥ २८
[illegible]ां क्रुधमापन्नो बभञ्ज रथिनो रथम् । भङ्क्त्वा रथं तु वीरस्य पदातिं च विधाय सः ॥ २९
[illegible]युद्धेन युयुधे पुष्कलेन महात्मना । स पुष्कलो रथं त्यक्त्वा चूर्णितं तेन वेगतः ॥ ३०
[illegible]ना ताडयामास वीरभद्रं महाबलः । अन्योन्यं मुष्टिभिर्घ्नन्तावूरुभिर्जानुभिस्तथा[1] ॥ ३१
[illegible]परवधोद्युक्तौ परस्परजयैषिणौ । एवं चतुर्दिनमभूद्रात्रिंदिवमपीशयोः ॥ ३२
[illegible]ोऽपि तत्र हीयेत न जीयेत महाबलः । पञ्चमे तु दिने वृत्ते वीरभद्रो महाबलः ॥ ३३
[illegible]त्वा नभ उड्डीनो महावीरं तु पुष्कलम् । तत्र युद्धं तयोरासीद्देवासुरविमोहनम् ॥ ३४
[illegible]ना चरणाघातैर्बाहुभिः सुखुरैर्महत् । तदाऽत्यन्तं प्रकुपितः पुष्कलो वीरभद्रकम् ॥ ३५

१ ङ. °घ्नन्तौ बाहुभि° ।

गृहीत्वा कण्ठदेशे तु ताडयामास भूतले । तत्प्रहारेण व्यथितो वीरभद्रो महाबलः ॥ ३६
गृहीत्वा पुष्कलं पादे जघानाऽऽस्फालयन्मुहुः । ताडयित्वा महीदेशे पुष्कलं सुमहाबलम् ॥ ३७
[*त्रिशूलेन चकर्ताऽऽशु शिरो ज्वलितकुण्डलम् । जगर्ज पुष्कलं हत्वा वीरभद्रो महाबलः॥]३८
गर्जता तेन शार्वेण प्रापितास्त्रासमुद्भटाः । हाहाकारो महानासीत्पुष्कले पतिते रणे ॥ ३९
त्रासं प्रापुर्जनाः सर्वे रणमध्ये सुकोविदाः । ते शशंसुश्च शत्रुघ्नं पुष्कलं पातितं रणे ॥ ४०
वीरभद्रेण वीरेण महेश्वरगणेन वै । इत्याश्रुत्य महावीरः पुष्कलस्य वधं तदा ॥ ४१
दुःखं प्राप्तो रणेऽत्यन्तं कम्पमानः शुचा महान् । तं दुःखितं च शत्रुघ्नं ज्ञात्वा रुद्रोऽब्रवीद्वचः ॥
शत्रुघ्नं समरे वीरं शोचन्तं पुष्कले हते । रे शत्रुघ्न रणे शोकं मा कृथाः सुमहाबल ॥ ४३
वीराणां रणमध्ये तु पातनं कीर्तये स्मृतम् । धन्यो वीरः पुष्कलाख्यो यश्च वै दिनपञ्चकम्॥४४
युयुधे वीरभद्रेण महाप्रलयकारिणा । येन क्षणाद्विनिहतो दक्षो मदपमानकृत् ॥ ४५
क्षणाद्विनिहता येन दैत्यास्त्रिपुरसैनिकाः । तस्माद्युध्यस्व राजेन्द्र शोकं त्यक्त्वा महाबल ॥ ४६
यत्नात्तिष्ठाद्य वीराग्र्य मयि योद्धरि संस्थिते । शोकं तत्याज शत्रुघ्नो वीरश्चुक्रोध शंकरम्॥४७
आत्तसज्यधनुर्बाणैः प्राहरत्स महेश्वरम् । ते बाणाः सुरशीर्षण्यवपुषं क्षतविक्षतम् ॥ ४८
अकुर्वंस्तन्महच्चित्रं भक्तरक्षार्थमागतम् । ते बाणाः शंकरस्यापि बाणा नभसि संस्थिताः ॥ ४९
व्याप्यैतत्सकलं विश्वं चित्रकारि मुनेरपि । तद्बाणयोर्युद्धबलं वीक्ष्य सर्वत्र मेनिरे ॥ ५०
प्रलयं लोकसंहारकारकं सर्वमोहकम् । आकाशे तु विमानानि संश्रित्य स्वपुरस्थिताः ॥ ५१
विलोकयितुमागत्य प्रशंसन्ति तयोर्भृशम् । अयं लोकत्रयस्यापि प्रलयोत्पत्तिकारकः ॥ ५२
असावपि महाराजरामचन्द्रस्य चानुजः । किमिदं भविता को वा जेष्यति क्षितिमण्डले ॥ ५३
पराजयं वा को वीरः प्राप्स्यते रणमूर्धनि । एवमेकादशाहानि वृत्तं युद्धं परस्परम् ॥ ५४
द्वादशे दिवसे प्राप्ते मुमोचास्त्रं नराधिपः । ब्रह्मसंज्ञं महादेवं हन्तुं क्रोधसमन्वितः ॥ ५५
स विज्ञाय महास्त्रं तन्मुक्तं शत्रुघ्नवैरिणा । हसन्नप्यपिबत्तेन मुक्तं ब्रह्मशिरो महत् ॥ ५६
अत्यन्तं विस्मयं प्राप्य किं कर्तव्यमतः परम् । एवं विचारयुक्तस्य हृदये ज्वलनोपमम् ॥ ५७
शरं वै निचखानाऽऽशु देवदेवशिरोमणिः । तेन बाणेन शत्रुघ्नो मूर्छितो रणमण्डले ॥ ५८
हाहाभूतमभूत्सर्वं कटकं भटसेवितम् । सर्वे रुद्रगणैर्वीराः पातिताः पृथिवीतले ॥ ५९
सुबाहुसुमदमुख्याः स्वबाहुबलदर्पिताः । पतितं मूर्छया वीक्ष्य शत्रुघ्नं शरपीडितम् ॥ ६०
पुष्कलं तु रथे स्थाप्य सेवकैः परिरक्षितम् । हनूमानागतो योद्धुं शिवं संहारकारकम् ॥ ६१
श्रीरामस्मरणाद्योधान्स्वीयानपि प्रहर्षितान् । प्रकुर्वन्नोषतस्तीव्रं लाङ्गूलं च प्रकम्पयन् ॥ ६२

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्नपराजयो नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३४०३

---

अथ चतुश्चत्वारिंशोऽध्यायः ।

---

शेष उवाच—

आगत्य सविधे रुद्रं समराङ्गणमूर्धनि । जगाद हनुमान्वीरः संजिहीर्षुः सुराधिपम् ॥ १

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ. ण. ढ. ध. पुस्तकस्थः ।

हनूमानुवाच—

त्वं यदाचरसे रुद्र धर्मस्य प्रतिकूलनम् । तस्मात्त्वां शास्तुमिच्छामि रामभक्तवधोद्यतम् ॥ २
मया श्रुतं पुरा वेदऋषिभिर्बहुधोदितम् । रघुनाथपदस्मारी नित्यं रुद्रः पिनाकभृत् ॥ ३
तत्सर्वं तु मृषा जातं शत्रुघ्नं प्रति युध्यता । पुष्कलो मे हतः शूरः शत्रुघ्नोऽपि विमूर्छितः ॥ ४
तस्मात्त्वां पातयाम्यद्य त्रैलोक्यप्रलयोद्यतम् । यत्नमातिष्ठ भोः शर्व रामभक्तिपराङ्मुख ॥ ५

शेष उवाच—

इत्युक्तवन्तं प्लवगं प्रोवाच स महेश्वरः । धन्योऽसि वीरवर्यस्त्वं भवान्वदति नो मृषा ॥ ६
मत्स्वामी रामचन्द्रोऽयं सुरासुरनमस्कृतः । तदश्वमानयामास शत्रुघ्नः परवीरहा ॥ ७
तद्रक्षार्थं समायातस्तद्भक्त्या तु वशीकृतः । यथाकथंचिद्भक्तोऽसौ रक्ष्यः स्वात्मा इति स्थितिः
रघुनाथः कृपां कृत्वा विलोकयतु निस्त्रपम् । मां स्वभक्तं सुदुःखेन किंचित्कोपं दधन्महान् ॥ ९

शेष उवाच—

एवं वदति चण्डीशे हनूमान्कुपितो भृशम् । शिलामादाय महतीं ताडयामास तद्रथम् ॥ १०
शिलया ताडितस्तस्य रथः शकलतां गतः । ससूतः सहयः केतुपताकाभिः समन्वितः ॥ ११
नभस्था देवताः सर्वाः प्रशशंसुः कपीश्वरम् । धन्योऽसि प्लवगाधीश महत्कर्म त्वया कृतम् ॥ १२
श्रीशिवं विरथं दृष्ट्वा नन्दी तं समुपाद्रवत् । उवाच श्रीमहादेवं मे पृष्ठं गम्यतामिति ॥ १३
वृषस्थितं तु भूतेशं हनूमान्कुपितो भृशम् । शालमुत्पाट्य तरसा प्राहनद्धृदये तदा ॥ १४
तदाहतो भूतपतिः शूलं तीक्ष्णं समाददे । जाज्वल्यमानं त्रिशिखं वह्निज्वालासमप्रभम् ॥ १५
आयान्तं तन्महद्दृष्ट्वा शूलं प्रज्वलनप्रभम् । हस्ते गृहीत्वा तरसा बभञ्ज तिलशः क्षणात् ॥ १६
भग्ने त्रिशूले तरसा कपीन्द्रेण क्षणाद्भवः । शक्तिं करे समाधत्त सर्वलोहविनिर्मिताम् ॥ १७
सा शक्तिः शिवनिर्मुक्ता हृदये तस्य धीमतः । लग्ना क्षणादभूत्तत्र विक्लवः प्लवगाधिपः ॥ १८
क्षणाच्च तद्व्यथां नीत्वा गृहीत्वा वृक्षमुल्बणम् । ताडयामास हृदये महाव्यालविभूषिते ॥ १९
ताडितास्तेन वीरेण फणीन्द्रास्त्रासमागताः । इतस्ततस्ते तं मुक्त्वा गताः पातालमुज्ज्वलाः ॥ २०
शिवस्तच्छिवनागमुक्ते वक्षसि स्वे निरीक्ष्य ह । कुपितोऽदधाद्घोरं स्वे मुशलं करयुग्मके ॥ २१
हतोऽसि गच्छ संग्रामात्पलाय प्लवगाधम । एष ते प्राणहन्ताऽहं मुशलेन क्षणादिह ॥ २२
मुशलं वीक्ष्य निर्मुक्तं शिवेन कुपितेन वै । कीशस्तद्वञ्चयामास महावेगो हरिं स्मरन् ॥ २३
मुशलं तत्पपाताधः शिवमुक्तं महायसम् । विदार्य पृथिवीं सर्वां जगाम च रसातलम् ॥ २४
तदा प्रकुपितोऽत्यन्तं हनूमान्रामसेवकः । गृहीत्वा पर्वतं हस्ते ताडयामास वक्षसि ॥ २५
स यावत्पर्वतं छेत्तुं मतिं चक्रे सतीपतिः । तावद्धतः कपीन्द्रेण शालेन बहुशाखिना ॥ २६
तमपि च्छेत्तुमुद्युक्तो यावत्तावच्छिलाहतः । शिलास्ता भेदितुं स्वान्तं चकार मृड उद्यतः ॥ २७
तावद्वृष्टिं चकारायं शिलाभिर्नगपर्वतैः । लाङ्गूलेन च संवेष्ट्य ताडयत्येष भूतपम् ॥ २८
शिलाभिः पर्वतैर्वृक्षैः पुच्छास्फोटेन भूरिशः । नन्दी प्राप्तो महात्रास चन्द्रोऽपि शकलीकृतः २९
अत्यन्तं विह्वलो जातो महेशानः प्रकोपनः । क्षणे क्षणे प्रहारेण विह्वलं कुर्वन्तं भृशम् ॥ ३०
जगाद प्लवगाधीशं धन्योऽसि रघुपानुग । महत्कर्म कृतं तेऽद्य यत्तेऽहं सुप्रतोषितः ॥ ३१

---

१ छ. ज °णाधीतद्व° । २ थ. °पि विकली° ।

न दानेन न यज्ञेन नाल्पेन तपसा ह्यहम् । सुलभोऽस्मि महावेग तस्मात्प्रार्थय मे वरम् ॥ ३२

शेष उवाच—

एवं ब्रुवन्तं तं दृष्ट्वा हनूमान्निजगाद तम् । प्रहसन्निर्भिया वाचा महेशानं तु तोषितम् ॥ ३३

हनूमानुवाच—

रघुनाथप्रसादेन सर्वं मेऽस्ति महेश्वर । तथाऽपि याचे हि वरं त्वत्तः समरतोषितात् ॥ ३४

एष पुष्कलसंज्ञो नः समरे पतितो हतः । तथा च रामावरजः शत्रुघ्नो मूर्छितो रणे ॥ ३५

अन्ये च वीरा बहवः पतिताः शरविक्षताः । मूर्छिताः पतिताः केचित्तान्रक्षस्व गणैः सह ॥ ३६

यथा चैतान्महाभूता वेतालाश्च पिशाचकाः । न हरन्ति न खादन्ति च सृगालादयस्तथा ॥ ३७

एतेषां वपुषो भेदो न भवेत्त्वं तथाऽऽचर । यावदिन्द्रं रणे जित्वाऽऽनयामि द्रोणपर्वतम् ॥ ३८

तत्रस्था औषधीर्वाऽपि नीत्वा संस्थापितान्भटान् । जीवयामि बलात्सर्वांस्तावत्त्वं रक्ष सर्वशः ३९

एष गच्छामि तं नेतुं द्रोणं पर्वतसत्तमम् । यस्मिन्वसन्त्यौषधयः प्राणिसंजीवनंकराः ॥ ४०

एतद्वचः समाकर्ण्य तथेति निजगाद तम् । [*याहि शीघ्रं नगं नेतुं रक्षामि त्वद्भटान्मृतान् ४१

तच्छ्रुत्वा वाक्यमीशस्य जगाम द्रोणपर्वतम्] । द्वीपान्सर्वानतिक्रामञ्जगाम क्षीरसागरम् ॥ ४२

अत्र तु स्वगणैः सार्कं रक्षति स्म शिवो महान् । श्मशानं तद्गणैः स्वीयैर्महाबलपराक्रमैः ॥ ४३

हनूमान्द्रोणमासाद्य द्रोणं नाम महागिरिम् । लाङ्गूले तं निधायाऽऽशु प्रतस्थे रणमण्डलम् ४४

तं नेतुमुद्यते विप्र चकम्पे स च पर्वतः । कम्पमानं तु तं दृष्ट्वा तत्पाला देवतागणाः ॥ ४५

हाहेति कृत्वा प्रोचुस्ते किमिदं भविता गिरौ । को ह्येनं नयते वीरो महाबलपराक्रमः ॥ ४६

एवं कृत्वा सुराः सर्वे संहता ददृशुः कपिम् । मुञ्चैनमिति ते प्रोच्य जघ्नुः शस्त्रास्त्रकोटिभिः॥४७

तान्सर्वान्निघ्नतो दृष्ट्वा हनूमान्कुपितो भृशम् । जघान तान्क्षणाद्वीरः शक्रः सर्वासुरान्यथा ॥ ४८

केचित्पादाहतास्तत्र केचित्करविमर्दिताः । लाङ्गूलनिहताः केचित्केचिच्छृङ्गेण चाऽऽहताः ४९

सर्वे ते नाशमापन्नाः क्षणात्कीशेशताडिताः । केचिन्निपतिता भूमौ रुधिरेण परिप्लुताः ॥ ५०

केचित्कीशभयात्त्रस्ता जग्मुः शक्रं सुराधिपम् । क्षतेन च परिप्लुष्टा रुधिरक्षतदेहिनः ॥ ५१

तान्दृष्ट्वा भयसंविग्नान्रुधिरेण परिप्लुतान् । सुराञ्जगाद विमनाः शक्रः सर्वसुरोत्तमः ॥ ५२

कथं यूयं भयत्रस्ताः कथं रुधिरविप्लुताः । केन दैत्येन निहता राक्षसेनाधमेन वा ॥ ५३

सर्वं शंसत मे तथ्यं यथा ज्ञात्वा व्रजामि तम् । निहत्य बद्ध्वा चाऽऽयामि युष्मद्घातकमुन्मदम्

इति वाक्यं समाकर्ण्य तुरासाहं सुरोत्तमाः । जगदुर्दीनया वाचा सुरासुरनमस्कृतम् ॥ ५५

देवा ऊचुः—

इहाऽऽगत्य न जानीमः कश्चिद्वानररूपधृत् । नेतुं द्रोणं समुद्युक्तो लाङ्गूलावेष्टितं गिरिम् ॥ ५६

गन्तुं कृतमतिस्तावद्वयं सर्वे सुसंहताः । युद्धं चक्रुः सु(क्रम) संनद्धाः सर्वशस्त्रास्त्रवर्षिणः ॥ ५७

तेन सर्वे वयं युद्धे निर्जिता बलशालिना । अनेके निहतास्तत्र भूमौ पेतुः सुरोत्तमाः ॥ ५८

वयं तु बहुभिः पुण्यैर्जीविता इह चाऽऽगताः । शोणितेन सुषिक्ताङ्गाः क्षतपीडासमन्विताः ५९

एतद्वाक्यं समाकर्ण्य सुराणां स पुरंदरः । आदिदेश सुरान्सर्वान्महाबलसमन्वितान् ॥ ६०

यात महाद्रोणगिरिं कपिं बद्धुं महाबलम् । बद्ध्वाऽऽनयत यूयं वै सुराणां रणपातकम् ॥ ६१

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

इत्याज्ञप्ता ययुस्ते वै द्रोणं पर्वतमुत्तमम् । यत्राऽऽस्ते बलवान्वीरो हनूमान्कपिसत्तमः ॥ ६२
गत्वा ते प्राहरन्सर्वे हनूमन्तं महाबलम् । हनूमता ते निहता मुष्टिभिः [1]खरताडनैः ॥ ६३
पतितास्ते क्षणात्तत्र रुधिरक्षतविग्रहाः । अन्ये पलायनपरा जग्मुस्तं त्रिदिवेश्वरम् ॥ ६४
तच्छ्रुत्वा कुपितः शक्रः सर्वानमरसत्तमान् । आदिदेश महावीरं वानरेन्द्रं सुरोत्तमः ॥ ६५
तदाज्ञप्ता ययुस्ते वै यत्र कीशेश्वरो बली । तान्सर्वानागतान्दृष्ट्वा जगाद कपिसत्तम ॥ ६६
माऽऽयान्तु वीराः समरे संहन्तारं हि मां बलात् । नेष्यामि युष्मानधुना संयमिन्याः पुरोऽन्तिके
इत्युक्ता अपि ते सर्वे संनद्धाः प्राहरन्कपिम् । शस्त्रास्त्रैर्बहुधा मुक्तैर्महाबलसमन्विताः ॥ ६८
केचिच्छूलैः परशुभिः केचित्खड्गैश्च पट्टिशैः । मुशलैः शक्तिभिः केचित्क्रोधेन कलुषीकृताः ॥६९
स आहतोऽमरवरैर्विविधैरायुधैर्बली । शिलाभिस्ताञ्जघानाऽऽशु सर्वानमरसत्तमान् ॥ ७०
केचित्पलाय्य आहुस्ते गताः शक्रसमीपकम् । तदुक्तं वाक्यमाकर्ण्य भयं प्राप सुराधिपः॥ ७१
बृहस्पतिं सुराध्यक्षं मन्त्रिणं स्वर्गवासिनाम् । पप्रच्छ सविघ्ने गत्वा नत्वा सुरगुरुं तदा ॥ ७२

इन्द्र उवाच—

कोऽसौ यो वानरो द्रोणं नेतुं स्वामिन्समागतः । येन मे निहता वीरा अमराः शस्त्रधारिणः ७३

शेष उवाच—

एतच्छ्रुत्वा तु तद्वाक्यमुक्तमाङ्गिरसो महान् । जगाद भयसंविग्नं तुरासाहं सुराधिपम् ॥ ७४

बृहस्पतिरुवाच—

यो रावणमहत्सं(हासं)ख्ये कुम्भकर्णमदीदहत् । येन ते वैरिणः सर्वे हतास्तस्य हि सेवकः॥७५
येन लङ्का सत्रिकूटा निर्दग्धा पुच्छवह्निना । अक्षश्च निहतो येन हनूमन्तमवेहि तम् ॥ ७६
तेन सर्वे विनिहता द्रोणार्थमयमुद्यतः । हयमेधं [4]महाराज करोति बलिसत्तमः ॥ ७७
तस्याश्वं शिवभक्तस्तु नृपो वीरमणिर्महान् । जहार तत्र समभूद्रणं सुरविमोहनम् ॥ ७८
शिवेन निहताः संख्ये वीरा रामस्य भूरिशः । तान्वै जीवयितुं द्रोणं नेष्यत्येव महाबलः ॥ ७९
नायं वर्षशतैर्जेयो भवता बलसंयुतः । तस्मात्प्रसादय कपिं देहि तत्रत्यमौषधम् ॥ ८०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे देवयुद्धं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३४८३

---

अथ पञ्चचत्वारिंशोऽध्यायः ।

---

शेष उवाच—

गुरुभाषितमाकर्ण्य वृषपर्वरिपुः स्वराट् । ज्ञात्वा रामस्य कार्यार्थमागतं पवनात्मजम् ॥ १
भयं तत्याज मनसि वानरात्समुपस्थितम् । जहर्ष चित्ते स भृशं वाचस्पतिमुवाच ह ॥ २

इन्द्र उवाच—

कथं कार्यं सुराधीश द्रोणोऽयं नेष्यते यदि । देवानां जीवितं भूयः कथं स्यादिति मे वद ॥ ३
इदानीं पवनोद्भूतं प्रसादय यथाकथम् । रामः प्रीतिं परां याति देवानां च सुखं भवेत् ॥ ४

---

१ थ. पादताडनैः । द. करताडनैः । २ ग. छ. ठ. ड. ध. भटाः । ३ ड. ङ. द नरम् । ४ ज. ण. त.थ. द. महाराजः ।

देवाधिपस्य वचनं श्रुत्वा वाचस्पतिस्तदा । शक्रं तु पुरतः कृत्वा सर्वदेवैः परिवृतम् ॥ ५
जगाम तत्र यत्राऽऽस्ते हनूमान्निर्भयः कपिः । गर्जति प्रसभं जित्वा सुरान्सर्वान्मुखासनः ॥ ६
ते गत्वा सविधे तस्य बृहस्पतिपुरोगमाः । पेतुस्ते चरणौ नत्वा समीरतनुजस्य हि ॥ ७
बृहस्पतिस्तु तं वीरं जगाद प्रेरितो मुदा । सुराधीशेन लोकस्य गुरुणा वदतां वरः ॥ ८

बृहस्पतिरुवाच—

अजानद्भिः कृतं कर्म देवैस्तव पराक्रमम् । रामस्य चरणयोस्त्वं सेवकोऽसि महामते ॥ ९
किमर्थमयमारम्भः कथमत्र समागमः । तत्करिष्यामहे सर्वे संनतास्तव भाषितम् ॥ १०
रोषं त्यक्त्वा कृपां कृत्वा देवाधीशं विलोकय । पवनात्मज दैत्यानां भयंकरवपुर्दधत् ॥ ११

शेष उवाच—

इत्थं भाषितमाकर्ण्य देवानां स गुरोर्वचः । उवाच देवान्सकलान्गुरुं चैव महायशाः ॥ १२
राज्ञो वीरमणेः संख्ये हताः शर्वेण भूरिशः । भटास्तान्वै जीवयितुं द्रोणं नेष्यामि पर्वतम् ॥ १३
[*तं ये निवारयिष्यन्ति स्ववीर्यबलदर्पिताः । तान्नेष्यामि क्षणादेव यमस्य सदनं प्रति ] ॥ १४
तस्माद्ददतु मे यूयं द्रोणं वाऽथ तदौषधम् । येन संजीवयिष्यामि मृतान्वीरान्रणाङ्गणे ॥ १५

शेष उवाच—

इति वाक्यं समाकर्ण्य पवनस्य सुतस्य ह । ते सर्वे प्रणतिं गत्वा ददुः संजीवनौषधम् ॥ १६
ते प्रहृष्टा भयं त्यक्त्वा सुराः स्वर्गौकसः समम् । ययुः सुरपतिं कृत्वा पुरः सौख्यसमन्विताः ॥
हनूमान्भेषजं तत्तु समादाय गतो रणम् । स्तुतः सर्वैः सुरगणैर्महाकर्मसमुत्सुकैः ॥ १८
तमागतं हनूमन्तं वीक्ष्य सर्वेऽपि वैरिणः । साधुसाधुप्रशंसन्तो अद्भुतं मेनिरे कपिम् ॥ १९

कपिः समागत्य महामुदा युतः पुरो भटं पुष्कलमागतं मृतम् ।
शिवेन संरक्षितमुग्रमण्डले श्रीरामचित्तं सविधे जगाम ह ॥ २०

सुमतिं च समाहूय मन्त्रिणं महतां मतम् । उवाच जीवयाम्यद्य सर्वान्वीरान्रणे मृतान् ॥ २१
एव मुक्त्वा भेषजं तत्पुष्कलस्य महोरसि । शिरः कायेन संधाय जगाद वचनं शुभम् ॥ २२
यद्यहं मनसा वाचा कर्मणा राघवं पतिम् । जानामि तर्हि ह्येतेन भेषजेनाऽऽशु जीवतु ॥ २३
इति वाक्यं यदा वक्ति तावत्पुष्कल उत्थितः । रणाङ्गणेऽदशद्रोषाद्धन्तान्वीरशिरोमणिः ॥ २४
क्व गतो वीरभद्रोऽसौ मां संमूर्छ्य रणाङ्गणे । सद्योऽहं पातयाम्येनं क्वास्ति मे धनुरुत्तमम् ॥ २५
इति तं भाषमाणं वै प्राह वीरं कपीन्द्रकः । धन्योऽसि वीर यद्भूयो वदस्येनं रणाङ्गणे ॥ २६
त्वं हतो वीरभद्रेण रघुनाथप्रसादतः । पुनः संजीवितोऽस्येहि शत्रुघ्नं याम मूर्छितम् ॥ २७
इत्युक्त्वा प्रययौ तत्र संग्रामवरमूर्धनि । श्वसन्नास्ते स शत्रुघ्नः शिवबाणप्रपीडितः ॥ २८
तत्र गत्वा समीपं तच्छत्रुघ्नस्य महात्मनः । निधाय भेषजं तस्य वक्षसि श्वासमागते ॥ २९
उवाच हनुमांस्तं वै जीव शत्रुघ्न सत्तम । मूर्छितोऽसि रणे कस्मान्महाबलपराक्रमः ॥ ३०
यद्यहं ब्रह्मचर्यं च जन्मपर्यन्तमुद्यतः । पालयामि तदा वीरः शत्रुघ्नो जीवतात्क्षणात् ॥ ३१
उक्तमात्रेण तेनेदं जीवितः क्षणमात्रतः । क्व शिवः क्व शिवो यातो विहाय रणमण्डलम् ॥ ३२
अनेके निहताः संख्ये श्रीरुद्रेण पिनाकिना । ते सर्वे जीविता वीरा२ः कपीन्द्रेण महात्मना ॥ ३३

* एतच्चिह्नान्तर्गतः पाठः ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. °तोऽमुना । मु° । २ ख. ज. त. थ. °राः साङ्गोपाङ्ग महाबलाः । त° । ड. °राः पुनः सङ्ग्राममूर्धनि । त° ।

तदा सर्वे सुसंनद्धा रोषपूरितमानसाः । स्वे स्वे रथे स्थिताः शत्रून्प्रययुः क्षतविग्रहाः ॥ ३४
पुष्कलो वीरभद्रं तु चण्डं चैव कुशध्वजः । नन्दिनं हनुमान्वीरः शत्रुघ्नः संगरे शिवम् ॥ ३५
धनुर्विस्फारयन्तं तं शत्रुघ्नं बलिनां वरम् । संग्रामे शिवमाहूय तिष्ठन्तं प्रययौ नृपः ॥ ३६
राजा वीरमणिर्वीरः शत्रुघ्नः समरे बली । अन्योन्यं चक्रतुर्युद्धं मुनिविस्मयकारकम् ॥ ३७
राज्ञा वै वीरमणिना रथा भग्नाः शताधिकाः । शत्रुघ्नस्य नरेन्द्रस्य तिलशः क्षणतो द्विज ॥ ३८
तदा प्रकुपितोऽत्यन्तं शत्रुघ्नो रणमण्डले । आग्नेयास्त्रं मुमोचास्मै दग्धं सैन्यं समन्वितम् ॥ ३९
दाहकं तन्महद्दृष्ट्वा महास्त्रं शत्रुमोचितम् । अत्यन्तं कुपितो राजा वारुणास्त्रमथाऽऽददे ॥ ४०
वारुणास्त्रेण [1]शीतार्तं वीक्ष्य रामानुजो बली । वायव्यास्त्रं मुमोचास्मै तेन वायुर्महानभूत् ॥ ४१
वायुना संहता मेघा ययुस्ते सर्वतोदिशम् । इतस्ततो गताः सर्वे सैन्यं तत्सुखितं बभौ ॥ ४२
सैन्ये पवनपीडार्ते नृपो वीरमणिर्महान् । पर्वतास्त्रं रिपूद्धारि जग्राह च शरासने ॥ ४३
पर्वतैः स्तम्भितो वायुर्न प्रसर्पति सङ्गरे । तद्वीक्ष्य रामावरजो वज्रास्त्रं तु समाददे ॥ ४४
वज्रास्त्रेण हताः सर्वे नगास्तु तिलशः कृताः । चूर्णतां प्रापुरेतस्मिन्रणे वीरवरार्चिते ॥ ४५
वज्रास्त्रेण विदीर्णाङ्गा वीराः शोणितशोभिताः । बभूवुः समरप्रान्ते चित्रं समभवद्रणम् ॥ ४६
तदा प्रकुपितोऽत्यन्तं राजा वीरमणिर्महान् । ब्रह्मास्त्रं चाप आधत्त वैरिदाहकमद्भुतम्[2] ॥ ४७
ब्रह्मास्त्रे संधि(हि)ते सोऽपि सस्मार सुमनोहरम् । शरं तद्योगिनीदत्तं सर्ववैरिविमोहनम्[3] ॥ ४८
ब्रह्मास्त्रं तत्करभ्रष्टमागच्छद्वैरिणं प्रति । तावच्छत्रुघ्ननाम्ना तु मुक्तं तन्मोहनास्त्रकम् ॥ ४९
मोहनास्त्रेण तद्ब्राह्मं द्विधा छिन्नं क्षणादिह । लग्नं राज्ञो हृदि क्षिप्रं मूर्छामप्रापयन्नृपम् ॥ ५०
ते बाणाः शतशो मुक्ताः शत्रुघ्नेन महीभृता । सर्वेऽपि मूर्छिता वीरा गणा रुद्रस्य ये पुनः ॥ ५१
[4]शिवस्य चरणोपस्थे मूढाः पेतुर्महीतले । तदा शिवः प्रकुपितो रथे तिष्ठन्ययौ नृपम् ॥ ५२
शिवेन सहसा योद्धुं समायातो रणाङ्गणे । शत्रुघ्नः सज्यमात्तज्यं धनुः कृत्वा व्ययुध्यत ॥ ५३
तयोः समभवद्घोरं रणं वैरिविदारणम् । शस्त्रास्त्रैर्बहुधा[5]मुक्तैरादीपितदिगन्तरम् ॥ ५४
अस्त्रप्रत्यस्त्रसंघातैस्ताडनप्रतिताडनैः । देवानामपि यद्दैन्यं तदभूद्रणमण्डले ॥ ५५
तदा व्याकुलितोऽत्यन्तं शत्रुघ्नः शिवसंगरे । सस्मार स्वामिनं तत्र पार्[6]श्वनेरुपदेशतः ॥ ५६
हा नाथ भ्रातरत्युग्रः शिवः प्राणापहारणम् । करोति धनुरुन्नम्य त्रायस्व रणमण्डले ॥ ५७
[*अनेके दुःखपाथोधिं तीर्णा राम तवाँऽऽ[7]ख्यया । मामप्युद्धर दुःखस्थं राम राम कृपानिधे ५८
इत्थं वक्ति यदा तावद्दीक्षितो रणमण्डले ] । नीलोत्पलदलश्यामो रामो राजीवलोचनः ॥ ५९
मृगशृङ्गं[8] करे धृत्वा दीक्षितं वपुरुद्वहन् । तं दृष्ट्वा विस्मयं प्राप शत्रुघ्नः समराङ्गणे ॥ ६०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे श्रीरामसमागमो नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥



आदितः श्लोकानां समष्ट्यङ्काः—१३५४२

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण त. थ. द. ध. पुस्तकस्थः ।

---

१ द. शीतार्तिं । २ द. °म् । शत्रुघ्नः शरमादाय स° । ३ छ. ड. °र्ववीरवि° । ४ ग. छ. ड. शिवं विना र° । ५ द. °पि दैत्यानां नैतादृग्रण° । ६ क. ख. ङ. च. छ. झ. ञ. ट. ड. ढ. त. °वनं रूप° । ७ ण. थ. °वाऽऽज्ञया । ८ ग. छ. ठ. ण. द. ध. कटी ।

अथ षट्चत्वारिंशोऽध्यायः ।

शेष उवाच—

आगतं वीक्ष्य श्रीरामं शत्रुघ्नः प्रणतार्तिहम् । भ्रातरं सकलाद्दुःखान्मुक्तोऽभूद्द्विजसत्तम ॥ १
हनूमान्वीक्ष्य विश्रान्तो रामस्य चरणौ मुदा । ववन्दे भक्तरक्षार्थमागतं निजगाद ह ॥ २
स्वामिंस्तवैतद्युक्तं तु स्वभक्तपरिपालनम् । यत्सङ्ग्रामे जितं शर्वपाशबन्धममोचयः ॥ ३
वयं धन्या इदानीं वै यद्द्रक्ष्यामो भवत्पदे । जेष्यामोऽरीन्क्षणादेव त्वत्कृपातो रघूद्वह ॥ ४

शेष उवाच—

स्थाणुस्तदाऽऽगतं रामं योगिनां ध्यानगोचरम् । पतित्वा पादयोर्विप्र जगाद प्रणताभयम् ॥ ५
एकस्त्वं पुरुषः साक्षात्प्रकृतेः पर ईर्यसे[1] । यः स्वांशकलया विश्वं सृजत्यवति हन्ति च ॥ ६
अरूपस्त्वमशेषस्य जगतः कारणं परम् । एक एव त्रिधा रूपं गृह्णासि कुहकान्वितः ॥ ७
सृष्टौ विधातृरूपस्त्वं पालने स्वप्रभामयः । प्रलये जगतः साक्षादहं शर्वाख्यतां गतः ॥ ८
तव यत्परमेशस्य हयमेधक्रतुक्रिया । ब्रह्महत्यापनोदाय तद्विडम्बनमद्भुतम् ॥ ९
यत्पादशौचममलं गङ्गाख्यं शिरसोऽन्तरा । वहामि पापशान्त्यर्थं तस्य ते पातकं कुतः ॥ १०
मया वत्सोपकाराय[3] कृतं कर्म तव स्फुटम् । क्षम्यतां तत्कृपालो हि भवतो व्यवधायकम्[4] ॥ ११
किं करोमि मया सत्यपालनार्थमिदं कृतम् । जानन्प्रभावं भवतो भक्तरक्षार्थमागतः ॥ १२
असौ पुरा उज्जयिन्यां महाकालनिकेतने । स्नात्वा क्षिप्राख्यसरिति तपस्तेपे महाद्भुतम् ॥ १३
ततः प्रसन्नोऽहमहो जगाद भूमिपं प्रति । याचयस्व[2] महाराज स वव्रे राज्यमद्भुतम् ॥ १४
मया प्रोक्तं देवपुरे तव राज्यं भविष्यति । यावद्रामहयः पुरीमागमिष्यति याज्ञिकः ॥ १५
तावत्प्रभृत्यहं स्थाने[5] तव रक्षार्थमुद्यतः । एतद्दत्तवरो राम किं करोमि च सत्यतः ॥ १६
घृणितोऽस्म्यधुना राजा सपुत्रपशुबान्धवः । हयं समर्प्य भवते पादसेवां विधास्यति ॥ १७

शेष उवाच—

इति वाक्यं समाकर्ण्य महेशस्य रघूत्तमः । उवाच धीरया वाण्या कृपया[6] पूर्णलोचनः ॥ १८

श्रीराम उवाच—

देवानामयमेवास्ति धर्मो भक्तस्य पालनम् । त्वया साधु कृतं कर्म यद्भक्तो रक्षितोऽधुना ॥ १९
ममास्ति हृदये शर्वो भवतो हृदये त्वहम् । आवयोरन्तरं नास्ति मूढाः पश्यन्ति दुर्धियः ॥ २०
ये भेदं विदधत्यद्धा आवयोरेकरूपयोः । कुम्भीपाकेषु पच्यन्ते नराः कल्पसहस्रकम् ॥ २१
ये त्वद्भक्ताः सदाऽऽसंस्ते मद्भक्ता धर्मसंयुताः । मद्भक्ता अपि भूयस्या भक्त्या तव नतिंकराः

शेष उवाच—

इत्थं भाषितमाकर्ण्य शर्वो वीरमणिं नृपम् । मूर्छितं जीवयामास करस्पर्शादिना प्रभुः ॥ २३
अन्यानपि सुतानस्य मूर्छिताञ्शरपीडितान् । जीवयामास स मृडः समर्थः प्रभुरीश्वरः ॥ २४
सज्जं विधाय तं भूपं श्रीरामपदयोर्नतम् । कारयामास भूतेशः पुत्रपौत्रपरिवृतम् ॥ २५
धन्यो राजा वीरमणिर्यो ददर्श रघूत्तमम् । योगिभिर्योगनिष्ठाभिर्दुष्प्राप्यमयुतायुतैः ॥ २६

१ ङ. °से । यस्त्वं स क° । २ झ. म. स्वयमास च । प्र° । ३ क. ख. म. भक्तोपकाराय । ग. छ. ज. ठ. ड. त. थ. ध. बद्धोपकाराय । द. बद्धपकाराय । ४ ग. छ. ठ. ड. द. ध. °तोऽप्यविधा° । ५ ग. द. स्थास्ये । ६ झ. म. कृपाकर्बुरलो° ।

ते नत्वा रघुनाथं तं कृतार्थीकृतविग्रहाः । ब्रह्मादिभिः पूज्यतमा अभूवन्द्विजसत्तम ॥ २७
शत्रुघ्नहनुमद्भ्यां च पुष्कलादिभिरुद्भटैः । परिष्टुताय रामाय ददौ राजा हयोत्तमम् ॥ २८
राज्येन सहितं सर्वं सपुत्रपशुबान्धवम् । शर्वेण प्रेरितः प्रादान्नृपो वीरमणिस्तदा ॥ २९
ततो रामो नुतः सर्वैर्वैरिभिर्निजसेवकैः । शत्रुघ्नादिभिरत्यन्तमुत्सुकैश्च विशेषतः ॥ ३०
रथे मणिमये तिष्ठन्बभूव स तिरोहितः । अन्तर्हिते रामभद्रे सर्वे प्रापुः सुविस्मयम् ॥ ३१
मा जानीहि मनुष्यं त्वं रामं लोकैकवन्दितम् । जले स्थले च सर्वत्र वर्ततेऽन्तस्थितः सदा ॥ ३२
ततो वीरा अलं हृष्टा अन्योन्यं परिरेभिरे । तूर्यमङ्गलवादित्रैर्बहुरुत्सवकोऽभवत् ॥ ३३
ततो मुक्तो हयः सर्वैर्वीरैः शस्त्रास्त्रकोविदैः । सर्वैरनुगतः प्रीतैर्विस्मयेन समन्वितैः ॥ ३४
शर्वः सत्यप्रतिज्ञश्च तमनुज्ञाप्य सेवकम् । प्रोच्य श्रीरामशरणं याहि लोकसुदुर्लभम् ॥ ३५
स्वयमन्तर्हितस्तत्र प्रलयोत्पत्तिकारकः । कैलासमगमत्सर्वैः सेवकैः परिशोभितः ॥ ३६
भूपो वीरमणिर्ध्यायञ्श्रीरामचरणोदजम् । जगाम साकं शत्रुघ्नबलिना बलसंयुतः ॥ ३७
एतद्रामस्य चरितं ये शृण्वन्ति नरोत्तमाः । तेषां संसारजं दुःखं न भविष्यति कर्हिचित् ॥ ३८

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे हयप्रस्थानं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३५८०

---

अथ सप्तचत्वारिंशोऽध्यायः ।

---

शेष उवाच—

हयो गतो हेमकूटं भारतान्ते द्विजोत्तम । अनेकभटसाहस्रै रक्षितो बद्धचामरः ॥ १
यो वै विस्तारतो दैर्घ्याद्योजनानां समन्ततः । [*अयुतेन सुशृङ्गैश्च राजतैः काञ्चनादिभिः ॥ २
तत्रोद्यानं महच्छ्रेष्ठं पादपैः परिशोभितम् । शालैस्तालैस्तमालैश्च कर्णिकारैः समन्ततः ] ॥ ३
हिन्तालैर्नागपुंनागैः कोविदारैः सबिल्वकैः । चम्पकैर्बकुलैर्मेध्यैर्मदनैः कुटजादिभिः ॥ ४
जातिकाभिर्यूथिकाभिर्नवमालिकया तथा । आम्रैर्माधवैर्वदक्षैश्च दाडिमैः शोभितं वरम् ॥ ५
अनेकपक्षिसंघुष्टं भ्रमरैर्निनदीकृतम् । मयूरकेकारवितं सर्वर्तुसुखदं हयः ॥ ६
प्रविवेश सशत्रुघ्नो मनोवेगसमन्वितः । स्वर्णपत्रं विशाले स्वे भाले बिभ्रन्मनोरमम् ॥ ७
गच्छतस्तस्य वाहस्य हयमेधक्रतोस्तदा । अकस्मादभवच्चित्रं तच्छृणुष्व द्विजोत्तम ॥ ८
गात्रस्तम्भोऽभवत्तस्य न चचाल पथि स्थितः । हेमकूट इवाचाल्यो बभूव हयसत्तमः ॥ ९
[+तदा तद्रक्षकाः सर्वे कशाघातान्वितेनिरे । तदा हतोऽपि न ययौ स्तब्धगात्रो हयोत्तमः]॥१०
शत्रुघ्नसविधे गत्वा चुक्रुशुर्वाहरक्षकाः । स्वामिन्वयं न जानीमः किमभूद्धयसत्तमे ॥ ११
गच्छतो वाहवर्यस्य मनोवेगस्य भूपते । आकस्मिकोऽभवत्तस्य गात्रस्तम्भो महामते ॥ १२
कशाभिस्ताडितोऽस्माभिः परं तत्र चचाल न । एवं विचार्य यत्कार्यं तत्कुरुष्व नृपोत्तम ॥ १३

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

---

१ ड. ढ. °वैर्वीरैश्च नि° । २ क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. लोकैकदु° । ३ ख. कुरजादिभिः । ठ. ध. कुब्जकादिभिः । ४ द °वद्राक्षाभिर्दाडि° ।

तदा विस्मयमापन्नो भूपतिः सह सैनिकैः । जगाम सहितः सर्वैर्हयस्य महतोऽन्तिके ॥ १४
पुष्कलो बाहुना धृत्वा चरणौ तस्य भूतलात् । उत्पाटयामास तदा परं नो चेलतुस्ततः ॥ १५
बलेन बलिनाऽऽक्रान्तो नाकम्पत हयस्तदा । हनूमांस्तं समुद्धर्तुं मतिं चक्रे महामनाः ॥ १६
लाङ्गूलेन समावेष्ट्य बलेन बलिनां वरः । आचकर्ष बलाद्वाहं न चचाल तथाऽपि सः ॥ १७
तदोवाच कपिश्रेष्ठो हनूमान्विस्मयावृतः । [*शत्रुघ्नं बलिनां श्रेष्ठं वीराणां परिशृण्वताम् ॥ १८
मया द्रोणो लाङ्गूलेन लीलयोत्पाटितोऽधुना । परमत्र महाश्चर्यं कम्पते न हयोऽल्पकः ॥ १९
दिष्टमत्र निदानं हि वीरैर्बलिभिरुद्धतैः । आकृष्टोऽपि न च स्थानाच्चचाल तिलमात्रतः ॥ २०
कपिभाषितमाकर्ण्य शत्रुघ्नो विस्मयान्वितः ] । सुमतिं मन्त्रिणां श्रेष्ठमुवाच वदतां वरः ॥ २१

शत्रुघ्न उवाच—

मन्त्रिन्किमभवद्वाहे स्तम्भनं वपुषोऽनघ । कोऽत्रोपायो विधेयः स्याद्येन वाहगतिर्भवेत् ॥ २२

सुमतिरुवाच—

स्वामिन्कश्चिन्मुनिर्मृग्योऽखिलज्ञानविचक्षणः । देशोद्भवमहं जाने प्रत्यक्षं न परोक्षजम् ॥ २३

शेष उवाच—

इति वाक्यं समाकर्ण्य सुमतेर्धर्मकोविदः । अन्वेषयामास मुनिं सेवकैः सह शोभितम्(तः) ॥ २४
ते सर्वे सर्वतो गत्वा मुनिं धर्मविदं भटाः । विलोकयन्तः सर्वत्र न चापश्यन्नृषीश्वरम् ॥ २५
एकस्त्वनुचरो विप्र गतो योजनमात्रतः । पूर्वस्यां दिशि चोद्युक्तः पश्यति स्म महाश्रमम् ॥ २६
यत्र निर्वैरिणः सर्वे पशवो जनतास्तथा । गङ्गास्नानहताशेषकिल्बिषाः सुमनोहराः ॥ २७
यत्र केचित्तपः श्रेष्ठं कुर्वन्ति सुहुताशनैः । धूमैरधोमुखाः केचिद्वायुभिः स्वोदरंभराः ॥ २८
यत्राग्निहोत्रजो धूमः पवित्रयति सर्वदा । अनेकमुनिसंजुष्टो मुक्तपत्रलतोत्तमः ॥ २९
तमाश्रमं मुनेर्ज्ञात्वा शौनकस्य मनोहरम् । न्यवेदयन्नृपायासौ विस्मयाविष्टचेतसा ॥ ३०
तच्छ्रुत्वा हर्षितोऽत्यन्तं शत्रुघ्नः सह सेवकैः । हनूमत्पुष्कलाद्यैश्च संयुतोऽगात्तदाश्रमम् ॥ ३१
तत्र वीक्ष्य मुनिश्रेष्ठं सम्यग्धुतहुताशनम् । प्रणम्य दण्डवत्तस्य चरणौ पापहारिणौ ॥ ३२
तमायान्तं नृपं ज्ञात्वा शत्रुघ्नं बलिनां वरम् । अर्घ्यपाद्यादिकं चक्रे प्रीतस्तद्दर्शनादभूत् ॥ ३३
सुखोपविष्टं विश्रान्तं नृपं प्राह मुनीश्वरः । किमर्थमटनं तेऽत्र महत्पर्यटनं तव ॥ ३४
त्वादृशाः पृथिवीं सर्वां नृपा वै न भ्रमन्ति चेत् । तदा दुष्टा जनाः साधून्बाधन्ते विगतज्वरान्
कथयस्व महीपाल शत्रुघ्न बलिनां वर । सर्वं शुभाय नो भूयात्तव पर्यटनादिकम् ॥ ३६

शेष उवाच—

इत्युक्तवन्तं भूदेवं प्रत्युवाच महीश्वरः । गद्गदस्वरया वाचा हर्षितस्त्वीयविग्रहः ॥ ३७

शत्रुघ्न उवाच—

अकस्मादभवच्चित्रं रामाश्वस्य मनोहृतः । नातिदूरे त्वदावासात्तच्छृणुष्व विदां वर ॥ ३८
उद्याने पुष्पशोभाढ्ये यदृच्छातो हयो गतः । तत्प्रान्ते तस्य वाहस्य गात्रस्तम्भोऽभवत्क्षणात् ३९
तदा मे बलिनो वीराः पुष्कलाद्या महोत्कटाः । बलादाचकृषुर्वाहं न चचाल तथाऽप्यसौ ४०

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ ग. छ. ठ. ड. ध. श्रेष्ठो । २ ग. छ. ठ. ड. द. ध. °खाः पत्रैर्वायु° । ३ ग. छ. ठ. द. ध. °नं देव म° ।

अस्मानपारदुःखाब्धौ मग्नान्प्रति तरिः स्मृतः। दैवाद्दृष्टः सुभाग्यैस्त्वं कथयस्व निदानकम् ॥४१

शेष उवाच—

एवं पृष्टो मुनिवरः क्षणं दध्यौ महामतिः । ततः कारणसंयुक्तं विचारेण दधद्धयम् ॥ ४२
क्षणात्तज्ज्ञानतां प्राप्य विस्मयोत्फुल्ललोचनः । जगाद स महीपालं दुःखितं संशयान्वितम् ॥४३

शौनक उवाच—

शृणु राजन्प्रवक्ष्यामि हयस्तम्भस्य कारणम् । यच्छ्रुत्वा मुच्यते दुःखादतिचित्रं कथानकम् ॥४४
गौडदेशे महारम्ये कावेरीतीरभूषिते । वाडवः सात्त्विको नाम्ना चचार परमं तपः ॥ ४५
एकाहं पयसः प्राशी दिनैकं वायुभक्षकः । दिनैकं तु निराहार एवं त्रिदिनमुन्नयेत् ॥ ४६
एवं व्रते प्रवृत्तस्य कालः सर्वक्षयंकरः[1] । जग्राह स्वकदंष्ट्रायां मृतिं प्राप महाव्रती ॥ ४७
विमाने सर्वशोभाढ्ये सर्वरत्नविभूषिते[2]। वाडवः सात्त्विको नाम्ना ययौ मेरोः शिखास्थितः ४८
जम्बू नाम महावृक्षस्तत्र सेव्यस्ततोऽभवत्। नदी जाम्बुवतीसंज्ञा स्वर्णद्रवसमन्विता ॥ ४९
[+तस्यां[3] मुनयोऽप्सरोभिः क्रीडन्ते कुतुकान्विताः। अनेकतपसा पुण्याः सर्वसौख्यसमन्विताः५०
तत्रासौ स्वेच्छया क्रीडन्नप्सरोभिर्मुदाऽन्वितः ।] प्रतीपमाचरत्तेषां स्वाभिमानमदोद्धतः ॥ ५१
ततस्तु शप्तो मुनिभी राक्षसो भव दुर्मुखः । ततोऽतिदुःखितः प्राह मुनीन्विख्यातपोधनान् ॥ ५२
अनुगृह्णन्तु मां सर्वे विप्रा यूयं कृपालवः । तदा तैरनुगृहीतो यदा रामहयं भवान् ॥ ५३
स्तम्भयिष्यति वेगेन ततो रामकथाश्रुतिः । पश्चान्मुक्तिर्भवित्री ते शापादस्मात्सुदारुणात् ॥ ५४
स प्रोक्तो मुनिभिर्देवो राक्षसत्वमितः प्रभो । स्तम्भयामास रामाश्वं मोचयानघ कीर्तनैः ॥ ५५

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शापकीर्तनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३६३५

---

अथाष्टचत्वारिंशोऽध्यायः ।

---

शेष उवाच—

इति प्रोक्तं तु मुनिना संश्रुत्य परवीरहा । विस्मयं मानयामास हृदि शौनकमब्रवीत् ॥ १

शत्रुघ्न उवाच—

कर्मणो गहना वार्ता यया सात्त्विकनामधृत् । दिवं प्राप्तोऽपि महता कर्मणा राक्षसीकृतः ॥ २
स्वामिन्वद महर्षे त्वं कर्मणां स्वगतिर्यथा । येन कर्मविपाकेन यादृशं नरकं भवेत् ॥ ३

शौनक उवाच—

धन्योऽसि राघवश्रेष्ठ यत्ते मतिरियं सदा[4] । जानन्नपि हितार्थाय लोकानां त्वं ब्रवीषि भोः ४
कथयामि विचित्राणां कर्मणां विविधां गतिम् । तां शृणुष्व महाराज यच्छ्रुत्वा मोक्षमाप्नुयात् ५
परवित्तं परापत्यं कलत्रं पारकं च यः । बलात्कारेण गृह्णाति भोगबुद्ध्या तु दुर्मतिः ॥ ६

---

+ एताच्चिह्नान्तर्गतः पाठः, ठ. पुस्तकस्थः ।

---

१ ङ. °प्रानुद्धर त्वं प्रभो । दै° । २ क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. थ. द. ध. °ते । अप्सरोभिः सह क्रीडन्ययौ । ३ थ. °स्यां तु मुनयः सर्वे तपोध्यानसमन्वि° । ४ ग. छ. द. °मय इच्छाभिः । ५ क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. शुभा ।

कालपाशेन संबद्धो यमदूतैर्महाबलैः । तामिस्रे पात्यते तावद्यावद्वर्षसहस्रकम् ॥ ७
तत्र ताडनमुद्धताः कुर्वन्ति यमकिंकराः । पापभोगेन संतप्तस्ततो योनिं तु शौकरीम् ॥ ८
तत्र भुक्त्वा महादुःखं मानुषत्वं गमिष्यति । रोगादिचिह्नितं तत्र दुर्यशोज्ञापकं स्वकम् ॥ ९
भूतद्रोहं विधायैव केवलं स्वकुटुम्बकम् । पुष्णाति पापनिरतः सोऽन्धतामिस्रके पतेत् ॥ १०
ये नरा इह जन्तूनां वधं कुर्वन्ति वै मृषा । ते रौरवे निपात्यन्ते भिद्यन्ते रुरुभी रुषा ॥ ११
यः स्वोदरार्थं भूतानां वधमाचरति स्फुटम् । महारौरवसंज्ञे तु पात्यते च यमाज्ञया ॥ १२
यो वै निजं तु जनकं ब्राह्मणं द्वेष्टि पापकृत् । कालसूत्रे महादुःखे योजनायुतविस्तृते ॥ १३
यावन्ति पशुरोमाणि गवां द्वेषं करोति यः । तावद्वर्षसहस्राणि पच्यते यमकिंकरैः ॥ १४
यो भूमौ भूपतिर्भूत्वा दण्डायोग्यं तु दण्डयेत् । करोति ब्राह्मणस्यापि देहदण्डं च लोलुपः॥ १५
स शूकरमुखैर्दुष्टैः पीड्यते यमकिंकरैः । पश्चाद्दुष्टासु योनीषु जायते पापमुक्तये ॥ १६
ब्राह्मणानां गवां ये तु द्रव्यं वृत्तं तथाऽल्पकम् । वृत्तिं वा गृह्णते मोहाल्लुम्पन्ति स्वबलान्नराः ॥
ते परत्रान्धकूपे च पात्यन्ते च महार्दिताः । योऽन्नं स्वयमुपाहृत्य मधुरं चात्ति लोलुपः ॥ १८
न देवाय न सुहृदे ददाति रसनातुरः । स पतत्येव नरके कृमिभोजनसंज्ञके ॥ १९
अनापदि नरो यस्तु हिरण्यादीन्यपाहरेत् । ब्रह्मस्वं वा महादुष्टे संदंशे नरके पतेत् ॥ २०
यः स्वदेहं प्रपुष्णाति नान्यं जानाति मूढधीः । स पात्यते तैलतप्ते कुम्भीपाकेऽतिदारुणे ॥ २१
यो नाऽगम्यां स्त्रियं मोहाद्योषिन्नावाच्च कामयेत् । तं तया किंकराः सूर्म्या परिरम्भं च कुर्वते २२
ये बलाद्वेदमर्यादां लुम्पन्ति स्वबलोद्धताः । ते वैतरिण्यां पतिता मांसशोणितभक्षकाः ॥ २३
वृषलीं यः स्त्रियं कृत्वा तया गार्हस्थ्यमाचरेत् । पूयोदे निपतत्येव महादुःखसमन्वितः ॥ २४
ये दम्भानाश्रयन्ते वै धूर्ता लोकस्य वञ्चने । वैशसे नरके मूढाः पतन्ति यमताडिताः ॥ २५
ये सवर्णां स्त्रियं मूढाः पातयन्ति स्वरेतसः । रेतःकुल्यासु ते पात्या रेतःपानेषु तत्पराः ॥ २६
ये चौरा वह्निदा दुष्टा गरदा ग्रामलुण्ठकाः । सारमेयादने ते वै पात्यन्ते पातकान्विताः ॥ २७
कूटसाक्ष्यं वदत्यद्धा पुरुषः पापसंभृतः । परकीयं तु द्रव्यं यो हरति प्रसभं बली ॥ २८
सोऽवीचिनरके पापी ह्यवाग्वक्त्रः पतत्यधः । तत्र दुःखं महद्भुक्त्वा पापिष्ठां योनिमाव्रजेत्॥ २९
यो नरो रसनास्वादात्सुरां पिबति मूढधीः । तं पाययन्ति लोहस्य रसं धर्मस्य किंकराः ॥ ३०
यो गुरूनवमन्येत स्वविद्याचारदर्पितः । स मृतः पात्यते क्षारनरकेऽधोमुखः पुमान् ॥ ३१
विश्वासघातं कुर्वन्ति ये नरा धर्मनिष्कृताः । शूलप्रोते तु नरके पात्यन्ते बहुयातने ॥ ३२
पिशुनो यो नरान्सर्वानुद्वेजयति वाक्यतः । दन्दशूके च पतितो दन्दशूकैः स दश्यते ॥ ३३
एवं राजन्ननेके वै नरकाः पापकारिणाम् । पापं कृत्वा प्रयान्त्येते पीडां यान्ति सुदारुणाम् ॥ ३४
यैर्न श्रुता रामकथा न परोपकृतिः कृता । तेषां सर्वाणि दुःखानि भवन्ति नरकान्तरे ॥ ३५
अत्र यस्य सुखं भूयस्तस्य स्वर्ग इतीर्यते । ये दुःखिनो रोगयुता नरकस्था महीपते ॥ ३६

शेष उवाच—

एतच्छ्रुत्वा महीपालः कम्पमानः क्षणे क्षणे । पप्रच्छ भूयस्तं विप्रं सर्वसंशयनुत्तये ॥ ३७

१ थ. संयुक्तस्त॰ । २ ड. ॰शोजनकं । ३ ड. ॰न्ते यमदूतैर्भयंकरैः। यः । ४ क. ख. ग. च. छ. ज. झ. ठ. ढ. ण. त. थ. द. ध. ॰हादुष्टे यो॰ । ५ क. ख. ग. च. छ. ज. झ. ठ. ण. त. द. वित्तं । ६ द. मूढा रेतः स्वं पाययन्ति च । रे॰ । ७ ड. द. पापा । ८ क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. ट. ठ. ड. ढ. ण. त. थ. ध. रक्षति । ९ द. ॰रकर्दमेऽधो॰ ।

तत्तत्पापस्य चिह्नानि कथय त्वं महामुने । केन पापेन किं चिह्नं भूर्लोक उपजायते ॥ ३८
इति श्रुत्वा तु तद्वाक्यं मुनिः प्रोवाच भूमिपम् । शृणु राजन्प्रवक्ष्यामि चिह्नानि पापकारिणाम् ॥

शौनक उवाच—

सुरापः श्यामदन्तः स्यान्नरकान्ते प्रजायते । अभक्ष्यभक्ष्यकारी तु जायते गुल्मकोदरः ॥ ४०
उदक्या वीक्षितं भुक्त्वा जायते क्रमिलोदरः । श्वमार्जारादिसंस्पृष्टं भुक्त्वा दुर्गन्धवान्भवेत् ॥ ४१
अनिवेद्य सुरादिभ्यो भुञ्जानो जायते नरः । उदरे रोगवान्दुःखी महारोगप्रपीडितः ॥ ४२
परान्नविघ्नकरणादजीर्णमभिजायते । मन्दोदराग्निर्भवति सति द्रव्ये कदन्नदः ॥ ४३
विषदश्छर्दिरोगी स्यान्मार्गहा पादरोगवान् । पिशुनो नरकस्यान्ते जायते कासश्वासवान् ॥ ४४
धूर्तोऽपस्माररोगी स्याच्छूली च परतापकृत् । दावाग्निदायकश्चैव रक्तातिसारवान्भवेत् ॥ ४५
सुरालयं जलं वाऽपि शकृद्दुष्टं करोति यः । गुदरोगो भवेत्तस्य पापरूपः सुदारुणः ॥ ४६
गर्भपातनजा रोगा[1] यकृत्प्लीहजलोदराः । प्रतिमाभङ्गकारी च अप्रतिष्ठश्च जायते ॥ ४७
दुष्टवादी खण्डितः स्यात्खल्वाटः परनिन्दकः । सभायां पक्षपाती च जायते पक्षघातवान् ॥ ४८
परोक्तहास्यकृत्काणः कुनखी विप्रहेमहृत् । तुन्दी वरीताम्रचौरः कांस्यहृत्पुण्डरीकिकः ॥ ४९
त्रपुहारी च पुरुषो जायते पिङ्गमूर्धजः । शीसहारी च पुरुषो [*जायते शीर्षरोगवान् ॥ ५०
घृतहारी च पुरुषो जायते नेत्ररोगवान्[2] । त्वचहारी च पुरुषो जायते मेदसा वृतः ॥ ५१
मधुचौरस्तु पुरुषो ] जायते बस्तिगन्धवान्[3] । लोहहारी च पुरुषो बर्बराङ्गः प्रजायते ॥ ५२
तैलचौर्येण भवति नरः कण्ड्वाऽतिपीडितः । आमान्नहरणाच्चैव दन्तहीनः प्रजायते ॥ ५३
पक्वान्नहरणाच्चैव जिह्वारोगयुतो भवेत् । मातृगामी च पुरुषो जायते लिङ्गवर्जितः ॥ ५४
गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते । स्वसुतागमने चैव रक्तकुष्ठः प्रजायते ॥ ५५
भगिनीगमने चैव पीतकुष्ठः प्रजायते । भ्रातृभार्याभिगमने गुल्मकुष्ठः प्रजायते ॥ ५६
स्वामिगम्यादिगमने जायते दद्रुमण्डलम् । विश्वस्तभार्यागमने गजचर्मा प्रजायते ॥ ५७
पितृष्वस्रभिगमने दक्षिणाङ्गे व्रणी भवेत् । मातुलान्यास्तु गमने वामाङ्गे व्रणवान्भवेत् ॥ ५८
पितृव्यपत्नीगमने कटौ कुष्ठः प्रजायते । मित्रभार्याभिगमने मृतभार्यः प्रजायते ॥ ५९
स्वगोत्रस्त्रीप्रसङ्गेन जायते च भगंदरः । तपस्विनीप्रसङ्गेन प्रमेहो जायते नरे ॥ ६०
श्रोत्रियस्त्रीप्रसङ्गेन जायते नासिकाव्रणी । दीक्षितस्त्रीप्रसङ्गेन जायते दुष्टरक्तसृक् ॥ ६१
स्वजातिजायागमने जायते हृदयव्रणी । जात्युन्नतस्त्रीगमने जायते मस्तकव्रणी ॥ ६२
पशुयोनौ च गमनान्मूत्रघातः प्रजायते । एते दोषा नराणां स्युर्नरकान्ते न संशयः ॥ ६३
स्त्रीणामपि भवन्त्येते तत्तत्पुरुषसंगमात् । एवं राजन्हि चिह्नानि कीर्तितानि सुपापिनाम् ॥ ६४
दानपुण्यप्रसङ्गेन तीर्थादिक्रियया तथा । रामचारित्रसंश्रुत्या तपसा वा क्षयं व्रजेत् ॥ ६५
सर्वेषामप्युपायानां हरिकीर्तिधुनी[6] नृणाम् । क्षालयेत्पापिनां पङ्कं नात्र कार्या विचारणा ॥ ६६
यश्चावमन्येत हरिं तं गङ्गा न पुनाति हि । तीर्थान्यपि सुपुण्यानि पवितुं न क्षमाणि तम् ॥ ६७

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ञ. ड. ण. त. थ. द. पुस्तकस्थः ।

१ द. रोगाः क्षयमेह° । २ ग. बस्तिगन्धवान् । ३ ग. °न् । जलहा° । ४ ग. नेत्ररोगवान् । ५ द. °ते गण्डम° ।
६ क. घ. ङ. ध. झ. ञ. ट. ड. ढ. °तिध्वनिर्नृणा° ।

हसते कीर्त्यमानं यश्चरित्रं ज्ञानदुर्बलः । न तस्य नरकान्मुक्तिः कल्पान्तेऽपि भविष्यति ॥ ६८
याहि राजन्विमोक्षार्थं हयस्यानुचरैः सह । श्रावय श्रीशचरितं यतो वाहगतिर्भवेत् ॥ ६९

शेष उवाच—

इति श्रुत्वा प्रहृष्टोऽभूच्छत्रुघ्नः परवीरहा । प्रणम्य तं परिक्रम्य ययौ सेवकसंयुतः ॥ ७०
तत्र गत्वा स हनुमान्हयवर्यस्य पार्श्वतः । उवाच रामचरितं महादुर्गतिनाशनम् ॥ ७१
याहि देव विमानं स्वं रामकीर्तनपुण्यतः । स्वैरं चर स्वलोके त्वं मुक्तो भव कुयोनितः ॥ ७२
इति वाक्यं समाकर्ण्य शत्रुघ्नो यावदास्थितः । तावद्ददर्श विमलं देवं वैमानिकं वरम् ॥ ७३
स उवाच ह पूतोऽहं रामकीर्तनसंश्रुतेः । यामि स्वं भवनं राजन्नाज्ञापय महामते ॥ ७४
इत्युक्त्वा प्रययौ देवो विमाने स्वे परिस्थितः । तदा विस्मयमापुस्ते शत्रुघ्नेन सहानुगाः ॥ ७५
ततो वाहो विनिर्मुक्तो भूतलाद्गात्रस्तम्भनात् । ययौ तद्विपिनं सर्वं भ्रमन्पक्षिसमाकुलम् ॥ ७६

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे हयमुक्तिर्नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३७११

---

अथैकोनपञ्चाशत्तमोऽध्यायः ।

---

शेष उवाच—

मासाः सप्ताभवंस्तस्य हयवर्यस्य हेलया । चरतो भारतं वर्षमेनकनृपपूरितम् ॥ १
स पूजितो भूपवरैः परीत्य वरभारतम् । परिवृतो वीरवरैः शत्रुघ्नादिभिरुद्भटैः ॥ २
स बभ्राम बहून्देशान्हिमालयसमीपतः । न कोऽपि तं निजग्राह हयं रामबलं स्मरन् ॥ ३
अङ्गवङ्गकलिङ्गानां राजभिः संस्तुतो हयः । जगाम नगरे राज्ञः सुरथस्य मनोहरे ॥ ४
कुण्डलं नाम नगरमदितेर्यत्र कुण्डलम् । कर्णयोः पतितं भूमौ हर्षभयसुकम्पयोः ॥ ५
यत्र धर्मव्यतिक्रान्तिं न करोति कदाऽपि ना । श्रीरामस्मरणं प्रेम्णा करोति जनताऽन्वहम् ॥ ६
अश्वत्थानां तु यत्रार्चा तुलस्याः प्रत्यहं नृभिः । क्रियते रघुनाथस्य सेवकैः पापवर्जितैः ॥ ७
यत्र देवालया रम्या राघवप्रतिमायुताः । पूज्यन्ते प्रत्यहं शुद्धचित्तैः कपटवर्जितैः ॥ ८
वाचि नाम हरेर्यत्र न वै कलहसंकथा । हृदि ध्यानं तु तस्यैव न च कामफलस्मृतिः ॥ ९
देवनं यत्र रामस्य वार्ताभिः पूतदेहिनाम् । न जातुचिन्नृणामस्ति सप्तव्यसनमोचिनाम् ॥ १०
यस्मिन्वसति धर्मात्मा सुरथः सत्यवान्बली । रघुनाथपदस्मारहृष्टचित्तः परोन्मदः ॥ ११
किं वर्णयामि रामस्य सेवकं सुरथं नरम् । यस्याशेषगुणा भूमौ विस्तृताः पावयन्त्यघम् ॥ १२
सेवकास्तस्य भूपस्य पर्यटन्तः कदाचन । अपश्यन्हयमेधस्य हयं चन्दनचर्चितम् ॥ १३
ते दृष्ट्वा विस्मयं प्राप्ता हयपत्रमलोकयन् । स्पष्टाक्षरसमायुक्तं चन्दनादिकचर्चितम् ॥ १४
ज्ञात्वा रामेण संमुक्तं हयं नेत्रमनोहरम् । हृष्टा राज्ञे सभास्थाय कथयामासुरुत्सुकाः ॥ १५
स्वामिन्नयोध्या नगरी पतिस्तस्यास्तु राघवः । हयमेधक्रतौ योग्यो हयो मुक्तः परिभ्रमन् ॥ १६
स ते पुरस्य निकटे प्राप्तः सेवकसंयुतः । गृहाण त्वं महाराज हयं तं सुमनोहरम् ॥ १७

शेष उवाच—

इति श्रुत्वा निजप्रोक्तं वाक्यं हर्षपरिप्लुतः । उवाच नृपतिर्वीरान्मेघगम्भीरया गिरा ॥ १८

---

१ ग. ज. त. थ. परावृतो । २ ग. छ. ठ. ड. थ. °च वीरान्बलिनो मेघ° ।

सुरथ उवाच—

धन्या वयं राममुखं पश्यामः ससेवकाः । ग्रहीष्यामि हयं तस्य भटकोटिपरिवृतम् ॥ १९
तदा मोक्ष्यामि वाहं तं यदा रामः समाव्रजेत् । कृपार्थं मम भक्तस्य चिरं ध्यानरतस्य वै ॥ २०

शेष उवाच—

इत्थमुक्त्वा महीपालः सेवकान्स्वयमादिशत् । गृह्णन्तु वाहं प्रसभं न मोच्योऽश्वोऽक्षिगोचरः ॥
अनेन सुमहालाभो भविष्यति तु मे मतम् । यद्रामचरणौ प्रेक्षे(क्ष्ये) ब्रह्मशक्रादिदुर्लभौ ॥ २२
स एव धन्यः स्वजनः पुत्रो वा बान्धवोऽथ वा । पशुर्वा वाहनं वाऽपि रामाप्तिर्येन संभवेत् २३
तस्माद्गृहीत्वा क्रत्वश्वं स्वर्णपत्रेण शोभितम् । बध्नन्तु वाजिशालायां कामवेगं मनोरमम् ॥ २४
इत्युक्तास्ते ततो गत्वा वाहं रामस्य शोभिनम् । गृहीत्वा तरसा राज्ञे ददुः सर्वशुभाङ्गिनम् २५
राजा प्राप्य महानश्वं रामस्य दनुजार्दिनः । सेवकान्प्राह बलिनो धर्मकृत्यविचक्षणः ॥ २६
वात्स्यायन महाबुद्धे शृणुष्वैकाग्रमानसः । न तस्य विषये कश्चित्परदाररतो नरः ॥ २७
न परद्रव्यनिरतो न कामेषु च लम्पटः । न जिह्वाभिरनुन्मार्गे कीर्तयेद्रामकीर्तनात् ॥ २८
यः सेवकान्नृपो वक्ति यूयं सेवार्थमागताः । [*कथयन्तु भवच्चेष्टां धर्मकर्मविशारदाः ॥ २९
एकपत्नीव्रतधरा न परद्रव्यलोलुपाः । परापवादनिरता न च वेदोत्पथं गताः] ॥ ३०
श्रीरामस्मरणादीनि कुर्वन्ति प्रत्यहं भटाः । तानहं मम सेवार्थं रक्षाम्यन्तिकशोभनान् ॥ ३१
एतद्विरुद्धधर्माणो ये नराः पापसंयुताः । तानहं विषये मह्यं वासयामि न दुर्मतीन् ॥
तस्य देशे न पापिष्ठाः पापं कुर्वन्ति मानसे । हरिध्यानहताशेषपातका मोदसंयुताः ॥ ३२
यदैवमभवद्देशे राजा धर्मेण संयुतः । तदा तत्स्था नराः सर्वे मृता गच्छन्ति निर्वृतिम् ॥ ३३
यमानुचरनिर्वेशो नाभवत्सौरथे पुरे । तदा यमो मुने रूपं धृत्वा प्रागान्महीश्वरम् ॥ ३४
वल्कलाम्बरधारी च जटाशोभितशीर्षकः । सुरथं च सदो मध्ये ददर्श हरिसेवकम् ॥ ३५
तुलसी मस्तके यस्य वाचि नाम हरेः परम् । धर्मकर्मरतां वार्तां श्रावयन्तं निजान्भटान् ॥ ३६
तदा मुनिं नृपो दृष्ट्वा तपोमूर्तिमिव स्थितम् । ववन्दे चरणौ तस्य पाद्यादिकमथाकरोत् ॥ ३७
सुखोपविष्टं विश्रान्तं मुनिं प्राह नृपाग्रणीः । धन्यमद्य जनुर्मह्यं धन्यमद्य गृहं मम ॥ ३८
कथाः कथयतान्मह्यं रामस्य विविधा वराः । याः शृण्वतां पापहानिर्भविष्यति पदे पदे ॥ ३९
इत्थमुक्तं समाकर्ण्य जहास स मुनिर्भृशम् । दन्तान्प्रदर्शयन्सर्वांस्तालस्फालितपाणिकः ॥ ४०
हसन्तं तं मुनिं प्राह हसने कारणं किमु । कथयस्व प्रसादेन यथा स्यान्मनसः सुखम् ॥ ४१
ततो मुनिर्नृपं प्राह शृणु राजन्धिया युतः । यदहं तेऽभिधास्यामि स्मिते कारणमुत्तमम् ॥ ४२
त्वया प्रोक्तं हरेः कीर्तिं कथयस्व ममाग्रतः । को हरिः कस्य का कीर्तिः सर्वे कर्मवशा नराः ४३
कर्मणा प्राप्यते स्वर्गः कर्मणा नरकं व्रजेत् । कर्मणेह भवेत्सर्वं पुत्रपौत्रादिकं बहु ॥ ४४
शक्रः शतं क्रतूनां तु कृत्वाऽगात्परमं पदम् । ब्रह्माऽपि कर्मणा लोकं प्राप सत्याख्यमद्भुतम् ॥ ४५
अनेके कर्मणा सिद्धा मरुदादय ईशिनः । कुर्वन्ति भोगसौख्यं च अप्सरोगणसेविताः ॥ ४६

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. ण त. थ. द. ध. पुस्तकस्थः ।

---

१ द. °क्ष्ये शिवब्रह्मादि° २ द. °प्य मुदा चाश्वं । ३ ग. छ. ठ. भ. °क्षणान् । वा° ।

तस्मात्कुरुष्व यज्ञादीन्यजस्व किल देवताः । यथा ते विमला कीर्तिर्भविष्यति महीतले ॥ ४७
इति श्रुत्वा तु तद्वाक्यं कोपक्षुभितमानसः । उवाच रामैकमना विप्रं कर्मविशारदम् ॥ ४८
मा ब्रूहि कर्मणो वार्ता क्षयिष्णुफलदायिनीम् । गच्छ मन्नगरप्रान्ताद्बहिर्लोकविगर्हितः ॥ ४९
इन्द्रः पतिष्यति क्षिप्रं पतिष्यत्यपि पद्मजः । न पतिष्यन्ति मनुजा रामस्य निजसेवकाः ॥ ५०
पश्य ध्रुवं च प्रह्लादं बिभीषणमथाद्भुतम् । ये चान्ये रामभक्ता वै कदाऽपि न पतन्ति ते ॥ ५१
ये रामनिन्दका दुष्टास्तानिमे यमकिंकराः । ताडयिष्यन्ति लोहस्य मुद्गरैः पाशबन्धनैः ॥ ५२
ब्राह्मणत्वाद्देहदण्डं न कुर्यां ते द्विजाधम । गच्छ गच्छ मदालोकात्ताडयिष्यामि चान्यथा ॥ ५३
इत्थमुक्तवति श्रेष्ठे भूपे सुरथसंज्ञिते । सेवका बाहुना धृत्वा निष्कासयितुमुद्यताः ॥ ५४
तदा यमो निजं रूपं धृत्वा लोकैकवन्दितम् । प्राह भूपं प्रतुष्टोऽस्मि याचस्व हरिसेवक ॥ ५५
मया प्रलोभितो वाग्भिर्बह्वीभिरपि सुव्रत । चलितोऽसि न रामस्य सेवायाः साधुसेवकः ॥ ५६
तदा प्रोवाच भूमीशो यमं दृष्ट्वा सुतोषितम् । उवाच यदि तुष्टोऽसि देहि मे वरमुत्तमम् ॥ ५७
तावन्मम न वै मृत्युर्यावद्रामसमागमः । न भयं मे भवत्तो हि कदाचन हि धर्मराट् ॥ ५८
तदोवाच यमो भूपमिदं तव भविष्यति । सर्वं त्वदीप्सितं तथ्यं करिष्यति रघोः पतिः ॥ ५९
इत्युक्त्वाऽन्तर्हितो धर्मो जगाम स्वपुरं प्रति । प्रशस्य तस्य चरितं हरिभक्तिपरात्मनः ॥ ६०
स राजा धार्मिको रामसेवकः परया मुदा । [*गृहीत्वाऽश्वं प्रत्युवाच सेवकान्हरिसेवकान् ॥ ६१
मया गृहीतो वाहोऽसौ राघवस्य महीपतेः । सज्जीभवन्तु सर्वत्र यूयं रणविशारदाः ] ॥ ६२
इति प्रोक्तास्तु ते सर्वे भटा राज्ञो महाबलाः । सज्जीभूताः क्षणादेव सभायां जग्मुरुज्जवाः ॥ ६३
राज्ञो वीरा दश सुताश्चम्पको मोहकस्तथा । रिपुंजयस्तु दुर्वारः प्रतापी बलमोदकः ॥ ६४
हर्यक्षः सहदेवश्च भूरिदेवोऽसुतापनः । इति राज्ञो दश सुताः सज्जीभूता रणाङ्गणे ॥ ६५
यातुमिच्छामकुर्वंस्ते महोत्साहसमन्विताः । राजाऽपि स्वरथं चित्रं हेमशोभाविनिर्मितम् ॥ ६६
आह्वयामास सुजवैर्वाजिभिः समलंकृतम् । रणोत्साहेन संयुक्तः सर्वसैन्यपरिवृतः ॥
सभायां सेवकान्सर्वान्दिशन्नास्ते महीपतिः ॥ ६७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे हयग्रहणं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३७१९

---

अथ पञ्चाशत्तमोऽध्यायः ।

---

शेष उवाच—
अथ रामानुजो वेगात्समागत्य स्वसेवकान् । पप्रच्छ कुत्र वाहोऽसौ याज्ञिकः सुमनोहरः ॥ १
तदा ते वचनं प्रोचुः शत्रुघ्नं सुमहाबलम् । न जानीमो भटाः केचिद्धयं नीत्वा गताः पुरे ॥ २
वयं च धिक्कृताः सर्वे बलिभी राजसेवकैः । अत्र प्रमाणं भगवानितिकर्तव्यतां प्रति ॥ ३
तच्छ्रुत्वा वचनं तेषां शत्रुघ्नः कोपितो भृशम् । दशन्नोष्ठपुटं स्वदशनाञ्जिह्वया लेलिहन्मुहुः ॥ ४
उवाच वीरो मद्वाहं हृत्वा कुत्र गमिष्यति । इदानीं पातये बाणैः पुरं जनसमन्वितम् ॥ ५
इत्युक्त्वा सुमतिं प्राह कस्येदं पुटभेदनम् । को वर्ततेऽस्याधिपतिर्यो मे वाहमजीहरत् ॥ ६

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. °सेवितः । त° । २ द. °रुत्सुकाः । रा° ।

शेष उवाच—

इति वाक्यं समाकर्ण्य [*भूपतेः कोपसंयुतम् । जगाद मन्त्री सुगिरा स्फुटाक्षरसमन्वितम् ॥ ७
विद्धीदं कुण्डलं नाम नगरं सुमनोहरम् । अस्मिन्वसति धर्मात्मा ] सुरथः क्षत्रियो बली ॥ ८
नित्यं धर्मपरो रामचरणद्वंद्वसेवकः । मनसा कर्मणा वाचा हनूमानिव सेवकः ॥ ९
चरितान्यस्य शतशो वर्तन्ते धर्मकारिणः । महाबलपरीवारः सुरथः सर्वशोभनः ॥ १०
महद्युद्धं भवेत्तत्र हृतश्चेद्वाहसत्तमः । अनेके प्रयतिष्यन्ति वीरा रणविशारदाः ॥ ११
एवमुक्तं समाश्रुत्य शत्रुघ्नः सचिवं प्रति । उवाच पुनरप्येवं वचनं वदतां वरः ॥ १२

शत्रुघ्न उवाच—

कथमत्र प्रकर्तव्यं रामाश्वोऽनेन चेद्धृतः । नाऽऽयाति योद्धुं प्रबलं कटकं वीरसेवितम् ॥ १३

सुमतिरुवाच—

दूतः प्रेष्यो महाराज राजानं प्रति वाग्मिकः । यद्वाक्येन समायाति बलेन बलिनां वरः ॥ १४
न चेदज्ञानतो वाहो धृतः केनापि मानिना । अर्पयिष्यति नः साधुमश्वं क्रतुवरं शुभम् ॥ १५
इति श्रुत्वा तु तद्वाक्यं शत्रुघ्नो बलिनां बली । अङ्गदं प्रत्युवाचेदं वचनं विनयान्वितम् ॥ १६

शत्रुघ्न उवाच—

याहि त्वं निकटस्थे वै सुरथस्य महापुरे । दूतत्वेन ततो गत्वा प्रब्रूहि नृपतिं प्रति ॥ १७
त्वया धृतो रामवाहो ज्ञानतोऽज्ञानतोऽपि वा । अर्पयतु न वाऽऽयातु प्रधनं वीरसंयुतम् ॥ १८
रामस्य दौत्यं लङ्कायां रावणं प्रति यत्कृतम् । तथैव कुरु भूयिष्ठबलसंयुत बुद्धिमान् ॥ १९

शेष उवाच—

एतच्छ्रुत्वाऽङ्गदो वीर ओमिति प्रोच्य भूमिपम् । जगाम संसदो मध्ये वीरश्रेणिसमन्वितम्॥ २०
ददर्श सुरथं भूपं तुलसीमञ्जरीधरम् । रामभद्रं रसनया ब्रुवन्तं सेवकान्निजान् ॥ २१
राजाऽपि दृष्ट्वा प्लवगं मनोहरवपुर्धरम् । शत्रुघ्नदूतं मत्वाऽपि वालिजं प्रत्यभाष्यत ॥ २२

सुरथ उवाच—

प्लवङ्गाधिपं कस्मात्त्वमागतोऽत्र कथं भवान् । ब्रूहि मे कारणं सर्वं यथा ज्ञात्वा करोमि तत् ॥ २३

शेष उवाच—

इति संभाषमाणं तं प्रत्युवाच कपीश्वरः । विस्मयंश्चेतसि भृशं रामसेवाकरं नृपम् ॥ २४
जानीहि मां नृपश्रेष्ठ वालिपुत्रं हरीश्वरम् । शत्रुघ्नेन च दूतत्वे प्रेषितो भवतोऽन्तिके ॥ २५
सेवकैः कैश्चिदागत्य धृतोऽश्वो मम सांप्रतम् । अज्ञानतो महान्यायं कुर्वद्भिः सहसा नृप ॥ २६
तमश्वं सह राज्येन सह पुत्रैर्मुदाऽन्वितः । शत्रुघ्नं याहि चरणे पतित्वाऽऽशु प्रदेहि च ॥ २७
नो चेच्छत्रुघ्ननिर्मुक्तनाराचैः क्षतविग्रहः । पृथ्वीतलमलंकुर्वञ्शायिष्यासि विशीर्षकः ॥ २८
येन लङ्कापतिर्नाशं प्रापितो लीलया क्षणात् । तस्याश्वं यागयोग्यं तु हृत्वा कुत्र गमिष्यसि २९

शेष उवाच—

इत्यादि भाषमाणं तं प्रत्युवाच महीश्वरः । सर्वं तथ्यं ब्रवीषि त्वं नानृतं तव भाषितम् ॥ ३०

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ ख. नः शीघ्रम् । २ क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. °घ्नो बुद्धिमान्बली । ३ झ. ञ. °प कुत्र त्वमा° ।

परं शृणुष्व मद्वाक्यं शत्रुघ्नपदसेवक । मया धृतो महानश्वो रामभद्रस्य धीमतः ॥ ३१
न मोक्ष्ये सर्वथा वाहं शत्रुघ्नादिभयादहम् । चेद्रामः स्वयमागत्य दर्शनं दास्यते मम ॥ ३२
तदाऽहं चरणौ नत्वा दास्यामि सुतसंयुतः । सर्वं राज्यं कुटुम्बं च धनं धान्यं बलं बहु ॥ ३३
क्षत्रियाणामयं धर्मः स्वामिनाऽपि विरुध्यते । धर्मेण युद्धं तत्रापि रामदर्शनमिच्छता ॥ ३४
शत्रुघ्नादिप्रवीरांस्तानधुनाऽहं क्षणादपि । जित्वा बध्नामि मद्गेहे नो चेद्रामः समाव्रजेत् ॥ ३५

शेष उवाच—

इति श्रुत्वाऽङ्गदो धीमाञ्जहास नृपतिं तदा । उवाच च महावाक्यं महाधैर्यसमन्वितम् ॥ ३६

अङ्गद उवाच—

बुद्धिहीनः प्रवदसि वृद्धत्वात्सा गता तव । यस्त्वं शत्रुघ्ननृपतिं धिक्करोषि धिया बली ॥ ३७
यो मांधातृरिपुं दैत्यं लवणं लीलयाऽवधीत् । येनानेन जिताः संख्ये वैरिणः प्रबलोद्धुराः[१]॥ ३८
विद्युन्माली हतो येन राक्षसः कामगे स्थितः । तं त्वं बध्नासि वीरेन्द्रं मतिहीनः प्रभासि मे ३९
भ्रातृजो यस्य सुबली पुष्कलः परमास्त्रवित् । येन रुद्रगणः संख्ये वीरभद्रः सुतोषितः ॥ ४०
वर्णयामि किमेतस्य पराक्रान्तिं बलोर्जिताम् । येन नास्ति समः पृथ्व्यां बलेन यशसा श्रिया ४१
हनूमानस्य निकटे रघुनाथपदाब्जधीः । यस्यानेकानि कर्माणि भविष्यन्ति श्रुतानि ते ॥ ४२
सत्रिकूटा राक्षसपूर्दग्धा येनक्षणाद्बलात् । अक्षो येन हतः पुत्रो राक्षसेन्द्रस्य दुर्मतेः[२] ॥ ४३
द्रोणो नाम गिरिर्येन पुच्छाग्रेण सदैवतः । आनीतो जीवनार्थं तु सैनिकानां मुहुर्मुहुः ॥ ४४
जानाति रामैश्चारित्रं[३] नान्यो जानाति मूढधीः । यं कपीद्रं मनाक्स्वान्तान्न विस्मरति सेवकम् ॥
सुग्रीवाद्याः कपीन्द्रा ये पृथ्वीं सर्वां ग्रसन्ति ये । ते शत्रुघ्नं नृपं सर्वे सेवन्ते प्रेक्षणोत्सुकाः ॥ ४६
कुशध्वजो नीलरत्नो रिपुतापो महास्त्रवित् । प्रतापाग्र्यः सुबाहुश्च विमलः सुमदस्तथा ॥ ४७
राजा वीरमणिः सत्ययुतो रामस्य सेवकः । एतेऽन्येऽपि नृपा भूमेः पतयः पर्युपासते ॥ ४८
तत्र त्वं[४] वीरजलधौ मशकः को भवानिति । तज्ज्ञात्वाऽऽगच्छ शत्रुघ्नं कृपालुं पुत्रकैर्युतः ॥ ४९
वाहं समर्प्य गन्तासि रामं राजीवलोचनम् । दृष्ट्वा कृतार्थी कुरुषे स्वाङ्गानि जनुषा सह ॥ ५०

शेष उवाच—

राजा प्रोवाच तं दूतं प्रब्रुवन्तमनेकधा । एतान्दर्शयसि क्षिप्रं सर्वे न मम गोचराः ॥ ५१
यादृशं मद्बलं दूत तादृशं न हनूमतः । यो रामं पृष्ठतः कृत्वा प्रागाद्यागस्य पालने ॥ ५२
यद्यहं मनसा वाचा कर्मणा कुतुकान्वितः । भजामि रामं तर्ह्याशु दर्शयिष्यति स्वां तनुम् ॥ ५३
अन्यथा हनुमन्मुख्या वीरा बध्नन्तु मां बलात् । गृह्णन्तु वाहं तरसा रामभक्तिसमन्विताः ॥ ५४
गच्छ त्वं नृपशत्रुघ्नं कथयस्व ममोदितम् । सज्जीभवन्तु सुभटा एष यामि रणे बली ॥ ५५
स विचार्य यथायुक्तं करिष्यति रणाङ्गणे । मोचयन्तु महावाहं न वा मामाददन्तु ते ॥ ५६

शेष उवाच—

इति श्रुत्वा स्मितं कृत्वा ययौ वीरो यतो नृपः । गत्वा निवेदयामास यथोक्तं सुरथेन वै ॥ ५७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधेऽङ्गददूतत्वं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३७७६

१ द. °लोद्धताः । वि° । २ क. ख. ञ. ठ. ण. द. ध. दुर्मते । ३ ग. ङ. थ. °मचारि° । ४ क. ख. ग. छ. ज. झ. ढ. ड. ण. त. थ. द. ध. °स्त्वं क्षीर° ।

अथैकपञ्चाशत्तमोऽध्यायः ।

---

शेष उवाच—

तच्छ्रुत्वा भाषितं तस्य सुरथस्याङ्गदाननात् । सज्जीभूता रणे सर्वे रथस्था रणकोविदाः ॥ १
पटहानां निनादोऽभूद्भेरीनादस्तथैव च । वीराणां गर्जनानादाः प्रादुर्भूता रणाङ्गणे ॥ २
रथचीत्कारशब्देन गजानां बृंहितेन च । व्याप्तं तत्सकलं विश्वं दिवं यातो महारवः ॥ ३
रणोत्साहेन संयुक्ता वीरा रणविशारदाः । कुर्वन्ति विविधान्नादान्कातरस्य भयंकरान् ॥ ४
एवं कोलाहले वृत्ते सुरथो नाम भूमिपः । स्वसुतैः सैनिकैश्चाथ वृतः प्रायाद्रणाङ्गणम् ॥ ५
गजै रथैर्हयैः पत्तिव्रजैः पूर्णां तु मेदिनीम् । कुर्वन्समुद्र इव तां प्लावयन्ददृशे भटैः ॥ ६
शङ्खनादेन संघुष्टं जयनादैस्तथैव च । वीक्ष्य तं प्रधनोद्युक्तं सुमतिं प्राह भूमिपः ॥ ७

शत्रुघ्न उवाच—

एष राजा समायातो महासैन्यपरिवृतः । अत्र यत्कृत्यमस्माकं तद्वदस्व महामते ॥ ८

सुमतिरुवाच—

योद्धव्यमत्र बहुभिर्वीरै रणविशारदैः । पुष्कलादिभिरत्युग्रैः सर्व शस्त्रास्त्रकोविदैः ॥ ९
राज्ञा सह समीरस्य पुत्रः परमशौर्यवान् । युद्धं करोतु सुबलः परयुद्धविशारदः ॥ १०

शेष उवाच—

इति ब्रूते महामात्यो यावत्तावन्नृपात्मजाः । रणाङ्गणे धनूंष्युद्धा स्फारयामासुरुद्धताः ॥ ११
तान्वीक्ष्य योधाः सुबलाः पुष्कलाद्या बलोत्कटाः । अभिजग्मुः स्यन्दनैः स्वैर्धनूंषि दधतो मताः
चम्पकेन समं वीरः पुष्कलः परमास्त्रवित् । द्वैरथेनैव युयुधे महावीरेण पालितः ॥ १३
मोहकं योधयामास जानकिः सकुशध्वजः । रिपुंजयेन विमलो दुर्वारेण सुबाहुकः ॥ १४
प्रतापिना प्रतापाग्र्यो बलमोदेन चाङ्गदः । हर्यक्षेण नीलरत्नः सहदेवेन सत्यवान् ॥ १५
राजा वीरमणिर्भूरिदेवेन युयुधे बली । असुतापेन चोग्राश्वो युयुधे बलसंयुतः ॥ १६
द्वैरथेन महद्युद्धमकुर्वन्युद्धकोविदाः । सर्वशस्त्रास्त्रकुशलाः सर्वे बुद्धिविशारदाः ॥ १७
एवं प्रवृत्ते संग्रामे सुरथस्य सुतैस्तदा । अत्यन्तं कदनं तत्र बभूव मुनिसत्तम ॥ १८
पुष्कलश्चम्पकं प्राह किंनामाऽसि नृपात्मज । धन्योऽसि यो मया सार्धं रणमध्यमुपेयिवान् ॥१९
इदानीं तिष्ठ किं यासि कथं ते जीवितं भवेत् । एहि युद्धं मया सार्धं सर्वशस्त्रास्त्रकोविद ॥ २०
इत्यभिव्याहृतं तस्य श्रुत्वा राजात्मजो बली । जगाद पुष्कलं वीरो मेघगम्भीरया गिरा ॥ २१

चम्पक उवाच—

न च नाम्ना कुलेनेदं युद्धमत्र भविष्यति । तथाऽपि तव वक्ष्येऽहं स्वनाम बलपूर्वकम् ॥ २२
मम माता रघोर्नाथो मत्पिता राघवः स्मृतः । मम बन्धू रामभद्रः स्वजनो मम राघवः ॥ २३
मन्नाम रामदासोऽस्मि सदा रामस्य सेवकः । तारयिष्यति मां युद्धे रामो भक्तकृपाकरः ॥ २४
लोकानां मतमास्थाय प्रब्रवीमि तवाधुना । सुरथस्य राज्ञः सुतो माता वीरवती मम ॥ २५
मन्नामा यो मधौ सर्वाङ्गशोभनान्विदधाति यः । मधुपा यं र(यद्र)सावासं त्यजन्ति मधुमोहिताः॥
वर्णेन स्वर्णसदृशो मध्ये लिङ्गवपुर्धरः । तदाख्ययाऽभिधां वीर जानीहि मम मोहिनीम् ॥ २७

---

१ क. ख. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. शालिना । २ त. थ. द. °वैं युद्धवि° ।

युध्यस्व बाणैः प्रधने न को जेतुं हि मां क्षमः । इदानीं दर्शयिष्यामि स्वपराक्रममद्भुतम् ॥ २८

शेष उवाच—

इति श्रुत्वा महद्वाक्यं पुष्कलो हृदि तोषितः । तं दुर्जयं मन्यमानः शरान्मुञ्चन्रणेऽभवत् ॥ २९
शरसंघं प्रमुञ्चंस्तं कोटिधा पुष्कलो बली । चम्पकः कोपसंयुक्तो धनुः सज्जमथाकरोत् ॥ ३०
मुमोच निशितान्बाणान्वैरिवृन्दविदारणान् । स्वनामचिह्नितान्स्वर्णपुङ्खभागसमन्वितान् ॥ ३१
तांश्चिच्छेद महावीरः पुष्कलः प्रधनाङ्गणे । शरान्धकारं सर्वत्र मुञ्चन्बाणाञ्शिलाशितान् ॥ ३२
स्वबाणच्छेदनं दृष्ट्वा कृतं वीरेण चम्पकः । आह्वयामास बलिनं पुष्कलं कोपपूरितः ॥ ३३
मा प्रयाहि रणं त्यक्त्वेति ब्रुवन्स पुनः पुनः । पुष्कलं हृदये बाणैर्विव्याध दशभिस्त्वरन् ॥ ३४
ते बाणाः पुष्कलस्याहो हृदये तीव्रगामिनः । आगत्य हृदये लग्नाः शोणितं पपुरूर्जितम् ॥ ३५
तैर्बाणैर्व्यथितो वीरः शरान्पञ्च समाददे । सुतीक्ष्णाग्रान्महाकोपाद्दारयन्पर्वतानिव ॥ ३६
ते बाणास्तस्य बाणाश्च परस्परमथोर्जिताः । आकाशे रचिताश्छिन्नाः शतधा राजसूनुना ॥ ३७
छित्त्वा बाणान्सुतीक्ष्णाग्रान्सुरथाङ्गोद्भवो बली । बाणाञ्शतं समाधत्त पुष्कलं ताडितुं हृदि॥३८
ते बाणाः शतधा छिन्नाः पुष्कलेन महात्मना । अपतन्समरोपान्ते शरबाधाप्रपीडिताः ॥ ३९
तदा तत्सुमहत्कर्म दृष्ट्वा राज्ञः सुतो बली । सहस्रेण शराणां च(चा) ताडयन्व(द्व)क्षसि स्फुटम्॥
तानप्याशु प्रचिच्छेद पुष्कलः परमास्त्रवित् । [*पुनरप्याशु स्वे चापे समाधत्तायुतं शरान् ॥४१
तानप्याशु प्रचिच्छेद पुष्कलः परमास्त्रवित् ] । ततोऽत्यन्तं प्रकुपितः शरवृष्टिमथाकरोत् ॥ ४२
शरवृष्टिं समायान्तीं मत्वा चम्पकवीरहा । साधुसाधुप्रशंसंस्तं पुष्कलं समताडयत् ॥ ४३
पुष्कलश्चम्पकं दृष्ट्वा महावीर्यसमन्वितम् । ब्रह्मणोऽस्त्रं समाधत्त स्वचापे सर्वशास्त्रवित् ॥ ४४
तेन मुक्तं महास्त्रं तत्प्रजज्वाल दिशो दश । खं रोदसी व्याप्य विश्वं प्रलयं कर्तुमुद्यतम् ॥ ४५
चम्पको मुक्तमस्त्रं तद्दृष्ट्वा सर्वास्त्रकोविदः । तत्संहर्तुं तदेवास्त्रं मुमोच रिपुमुद्यतम् ॥ ४६
द्वयोरेकतमं तेजः प्रलयं मेनिरे जनाः । संजहार तदाऽस्त्रास्त्रमेकीभूतं परास्त्रकम् ॥ ४७
तत्कर्म चाद्भुतं दृष्ट्वा पुष्कलस्तिष्ठ तिष्ठ च । ब्रुवञ्शरानमेयांस्तु चम्पकं स क्रुधाऽहनत् ॥ ४८
चम्पकस्ताञ्शरान्मुक्तानगणय्य+ महामनाः । रामास्त्रं प्रमुमोचाथ पुष्कलं प्रति दारुणम् ॥ ४९
तन्मुक्तमस्त्रमालोक्य चम्पकेन महात्मना । [*छेत्तुं यावन्मनश्चक्रे तावद्ग्रस्तः शरेण सः ॥ ५०
बद्धश्चम्पकवीरेण रथे स्वे स्थापितः पुनः । पुरं प्रेषयितुं तावन्मनश्चक्रे महामनाः] ॥ ५१
हाहाकारो महानासीद्बद्धे पुष्कलसंज्ञके । शत्रुघ्नं प्रययुर्योधाः पलायनपरायणाः ॥ ५२
भग्नांस्तान्वीक्ष्य शत्रुघ्नो हनूमन्तमुवाच ह । केन वीरेण मे भग्नं बलं वीरैरलंकृतम् ॥ ५३
तदोवाच महीनाथः पुष्कलं परवीरहा । बद्ध्वा नयति वीरोऽसौ चम्पकः स्वपदोद्धुरः ॥ ५४
तस्येदृग्वाक्यमाकर्ण्य शत्रुघ्नः कोपसंयुतः । उवाच पवनोद्भूतं मोचयाऽऽशु नृपात्मजात् ॥ ५५
महाबलः सुतश्चास्य बद्ध्वा यः पुष्कलं भटम् । तस्मान्मोचय वीराग्र्य कथं तिष्ठसि चाऽऽहवे॥
एतद्वाक्यं समाकर्ण्य हनूमानोमिति ब्रुवन् । जगाम तं मोचयितुं पुष्कलं चम्पकाद्भटात् ॥ ५७
हनूमन्तमथाऽऽलोक्य तं मोचयितुमागतम् । बाणैः शतैश्च साहस्रैर्जघान परकोपनः ॥ ५८

* एतच्चिह्नान्तर्गतः पाठो ग. ठ. ड. द. ध. पुस्तकस्थः । + आर्षो ल्यप् । * एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. रथी ।

बाणांस्तान्स बभञ्जाऽऽशु मुक्तांस्तेन महाबलः । पुनरप्येवमेवाऽऽशु बाणान्मुञ्चन्महानभूत् ५९
तान्सर्वांश्चूर्णयामास नाराचान्वैरिमोचितान् । शालं करे समाधृत्य जघान नृपनन्दनम् ॥ ६०
शालं तेन विनिर्मुक्तं तिलशः कृतवान्बली । गजो हनूमता मुक्तो नृपनन्दनमस्तके ॥ ६१
सोऽ(योऽ)प्याहतश्चम्पकेन मृतो भूमौ पपात सः । शिलाः स मोचयामास हनूमान्परमास्त्रवित् ॥
चम्पकस्ताः शिलाः सर्वाः क्षणाच्चूर्णितवान्भृशम् । बाणयन्त्रिकया ब्रह्मन्महच्चित्रमभूदिदम् ॥ ६३
स्वमुक्तास्ताः शिलाः सर्वाश्चूर्णिता वीक्ष्य मारुतिः । चुकोप हृदयेऽत्यन्तं बहुवीर्यमिति स्मरन् ॥
आगत्य च करे धृत्वा नभस्युत्पतितः कपिः । तावद्ययौ नेत्रपथादुपरि क्षिप्रवेगवान् ॥ ६५
चम्पकस्तं हनूमन्तं युयुधे नभसि स्थितः । बाहुयुद्धेन महता ताडितः कपिपुंगवः ॥ ६६
चुकोप मानसे वीरो गर्वपर्वतदारुणः । पदा धृत्वा चम्पकं तं ताडयामास भूतले ॥ ६७
ताडितोऽसौ कपीन्द्रेण क्षणादुत्थाय वेगवान् । हनूमन्तं तु लाङ्गूले धृत्वा बभ्राम सर्वतः ॥ ६८
कपीन्द्रस्तद्बलं वीक्ष्य हसन्पादेऽग्रहीत्पुनः । भ्रामयित्वा शतगुणं गजोपस्थे ह्यपातयत् ॥ ६९
पपात भूमौ सुबलो राजसूनुः स चम्पकः । मूर्छितो वीरभूषाढ्यमलंकुर्वन्रणाङ्गणम् ॥ ७०
तदा हाहेति वै लोकाश्चुक्रुशुश्चम्पकानुगाः । पुष्कलं मोचयामास बद्धं चम्पकपाशतः ॥ ७१

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे पुष्कलमोचनं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३८४७

---

अथ द्विपञ्चाशत्तमोऽध्यायः ।

---

शेष उवाच—

चम्पकं पतितं दृष्ट्वा सुरथः क्षत्रियो बली । पुत्रदुःखपरीताङ्गो जगाम स्यन्दनस्थितः ॥ १
कपीन्द्रमाजुहावाथ सुरथः कोपसंयुतः । निश्वासांश्च बहून्मुञ्चन्महाबलसमन्वितः ॥ २
आह्वयानं नृपं दृष्ट्वा निजं वीरः कपीश्वरः । जगाम तं महावीरो महावेगसमन्वितः ॥ ३
तमागतं हनूमन्तं तृणीकुर्वन्तमुद्भटान् । उवाच सुरथो राजा मेघगम्भीरसुस्वरः ॥ ४

सुरथ उवाच—

धन्योऽसि कपिवर्य त्वं महाबलपराक्रम । येन राममहत्कृ(हाकृ)त्यं कृतं राक्षसके पुरे ॥ ५
त्वं रामचरणस्यासि सेवको भक्तिसंयुतः । त्वया वीरेण मत्पुत्रः पातितश्चम्पको बली ॥ ६
इदानीं त्वां तु संबध्य गन्तास्मि नगरे मम । यत्नात्तिष्ठ कपीश त्वं सत्यमुक्तं मया स्मृतम् ॥ ७
इति भाषितमाकर्ण्य सुरथस्य कपीश्वरः । उवाच धीरया वाण्या रणे वीरैकभूषिते ॥ ८

हनूमानुवाच—

त्वं रामचरणस्मारी वयं रामस्य सेवकाः । बध्नासि चेन्मां प्रसभं मोचयिष्यति मत्प्रभुः ॥ ९
कुरु वीर भवत्स्वान्तस्थितं सत्यं प्रतिश्रुतम् । रामं स्मरन्न वै दुःखं याति वेदा वदन्त्यदः ॥ १०

शेष उवाच

इति ब्रुवन्तं सुरथः प्रशस्य पवनात्मजम् । विव्याध बाणैर्बहुभिः शितैः शाणेन दारुणैः ॥ ११
तान्मुक्तानगणय्याथ बाणाञ्शोणितपातिनः । करे जग्राह कोदण्डं सज्जं शरसमन्वितम् ॥ १२

---

१ ग. छ. ठ. ड. द. ध. महात्मना ।

गृहीत्वा करयोश्चापं बभञ्ज कुपितः कपिः । चीत्कुर्वंस्त्रासयन्वीरान्नखैर्दीर्णान्सृजन्भटान् ॥ १३
तेन भग्नं धनुर्दृष्ट्वा स्वकीयं गुणसंयुतम् । अपरं धनुरादत्त महद्गुणविभूषितम् ॥ १४
तच्चापि जगृहे रोषात्कपिश्चापं बभञ्ज तत् । अन्यच्चापं समादत्त तद्बभञ्ज महाबलः ॥ १५
तस्मिंश्चापे प्रभग्नेऽपि सोऽन्यद्धनुरुपाददत् । सोऽपि चापं बभञ्जाऽऽशु महावेगसमन्वितः ॥ १६
एवं राज्ञस्तु चापानामशीतिर्द्विदलीकृता । क्षणे क्षणे महारोषात्कुर्वन्नादाननेकशः ॥ १७
तदाऽत्यन्तं प्रकुपितः शक्तिमुग्रामथाऽऽददे । शक्त्या स ताडितो वीरः पपात क्षणमुत्सुकः॥१८
उत्थाय स्यन्दनं राज्ञो जग्राह कुपितो भृशम् । । उड्डीनस्तं गृहीत्वा तु समुद्रमतिवेगतः ॥ १९
तमुड्डीनं समालक्ष्य सुरथः परवीरहा । ताडयामास परिघैर्हृदि मारुतमुद्यतम् ॥ २०
मुक्तस्तेन रथो दूराच्चूर्णीभूतोऽभवत्क्षणात् । सोऽन्यं रथं समारुह्य ययौ वेगात्समीरजम् ॥ २१
[*हनूमांस्तद्रथं पुच्छे संवेष्ट्य प्रधनाङ्गणे । हयसारथिसंयुक्तं बभञ्ज स पताकिनम् ॥ २२
अन्यं रथं समास्थाय ययौ राजा महाबलः ] । बभञ्ज तं रथं वेगान्मारुतिः कुपिताङ्गकः ॥ २३
भग्नं तं स्यदनं वीक्ष्य सुरथोऽन्यं समाश्रितः । भग्नः स तेन सहसा हयसारथिसंयुतः ॥ २४
एवमेकोनपञ्चाशद्रथा भग्ना हनूमता । तत्कर्म वीक्ष्य राजाऽपि विसिष्मिये ससैनिकः ॥ २५
कुपितः प्राह कीशेन्द्रं धन्योऽसि पवनात्मज । पराक्रममिदं कर्म न कर्ता न करिष्यति ॥ २६
क्षणमेकं प्रतीक्षस्व यावत्सज्जं धनुस्त्वहम् । करोमि पवनोद्भूत रामपादाब्जषट्पद ॥ २७
इत्युक्त्वा चापमासज्जं कृत्वा रोषपरिप्लुतः । अस्त्रं पाशुपतं नाम संदधे शर उल्बणे ॥ २८
ततो भूताश्च वेतालाः पिशाचा योगिनीमुखाः । प्रादुर्बभूवुः सहसा भीषयन्तः समीरजम् ॥ २९
कपिः पाशुपतैरस्त्रैर्बद्धो लोकैरभीक्षितः । हाहेति च वदन्त्येते यावत्तावत्समीरजः ॥ ३०
स्मृत्वा रामं स मनसा त्रोटयामास तत्क्षणात् । स मुक्तगात्रः सहसा युयुधे सुरथं नृपम् ॥ ३१
स मुक्तगात्रं तं वीक्ष्य सुरथः परमास्त्रवित् । महाबलं मन्यमानो ब्राह्ममस्त्रं समाददे ॥ ३२
मारुतिर्ब्राह्ममस्त्रं तु निजगाल हसन्बली । तन्निगीर्णं नृपो दृष्ट्वा रामं सस्मार भूमिपः ॥ ३३
स्मृत्वा दाशरथिं रामं रामास्त्रं स्वशरासने । संधाय तं जगादेदं बद्धोऽसि कपिपुंगव ॥ ३४
श्रुत्वा तत्प्रक्रमेद्यावत्तावद्बद्धो रणाङ्गणे । राज्ञा रामास्त्रतो वीरो हनूमान्रामसेवकः ॥ ३५
उवाच भूपं हनुमान्किं करोमि महीभुज । मत्स्वाम्यस्त्रेण संबद्धो नान्येन प्राकृतेन वै ॥ ३६
तन्मानयामि भूपाल नयस्व स्वपुरं प्रति । मोचयिष्यति मत्स्वामी ह्यागत्य स दयानिधिः ॥ ३७
बद्धे समीरजे क्रुद्धः पुष्कलो भूमिपं ययौ । तं पुष्कलं समायान्तं विव्याध वसुभिः शरैः ॥ ३८
अनेकबाणसाहस्रैर्निजघान नृपं बली । राज्ञाऽनेके शरास्तस्य च्छिन्नाः प्रधनमण्डले ॥ ३९
एवं समरसंक्रुद्धे सुरथे पुष्कले तथा । बाणैर्व्याप्तं जगत्सर्वं स्थास्नु भूयश्चरिष्णु च ॥ ४०
तेषां रणोद्यमं वीक्ष्य मुमुहुः सुरसैनिकाः । मानवानां तु का वार्ता क्षणात्त्रासं समीयुपाम् ॥४१
अस्त्रप्रत्यस्त्रविगमैर्महामन्त्रपरिप्लुतैः । बभूव तुमुलं युद्धं वीराणां रोमहर्षणम् ॥ ४२
तदा प्रकुपितो राजा नाराचं तु समाददे । [+छिन्नः स तु क्रुधा मुक्तैर्वत्सदन्तैः स भारतेः ४३
छिन्ने तस्मिञ्शरे राजा कोपादन्यं समाददे ] । छिनत्ति यावत्स शरं तावद्भग्नो हृदि क्षतः॥४४

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः ख. ग. छ. ज. ठ. ड. ण. त. थ. ध. पुस्तकस्थः ।

१ ग. छ. ठ. ड. ध. 'मुद्रत' । २ थ. बहुभिः । ३ छ. ठ. ड. ध. 'रिष्कृतैः ।

मूर्छां प्राप महातेजाः पुष्कलो महदद्भुतम् । युद्धं विधाय सुमहात्राज्ञा सह महामतिः ॥ ४५
पुष्कले पतिते राजा शत्रुघ्नः शत्रुतापनः । सुरथं प्रति संक्रुद्धो जगाम स्यन्दनस्थितः ॥ ४६
उवाच सुरथं भूपं रामभ्राता महाबलः । त्वया महत्कृतं कर्म यद्बद्धः पवनात्मजः ॥ ४७
पुष्कलोऽपि महावीरस्तथाऽन्ये मम सैनिकाः । पातिताः प्रधने घोरे महाबलपराक्रमाः ॥ ४८
इदानीं तिष्ठ मद्वीरान्पातयित्वा रणाङ्गणे । कुत्र यास्यसि भूमीश सहस्व मम सायकान् ॥ ४९
इत्थमाश्रुत्य वीरस्य भाषितं सुरथो बली । जगाद रामपादाब्जं दधच्चेतसि शोभनम् ॥ ५०
मया ते पातिताः संख्ये वीरा मारुतजोन्मुखाः । इदानीं पातयिष्यामि त्वामपि प्रधनाङ्गणे॥ ५१
स्मरस्व रामं यो वीरस्त्वामागत्य प्ररक्षति । अन्यथा जीवितं नास्ति मत्पुरः शत्रुतापन ॥ ५२
इत्युक्त्वा बाणसाहस्रैस्तं जघान महीपतिः । शत्रुघ्नं शरसंघातपञ्जरे न्यदधात्परम् ॥ ५३
शत्रुघ्नः शरसंघातं मुञ्चन्तं वह्निदैवतम् । अस्त्रं मुमोच दाहार्थं शराणां नतपर्वणाम् ॥ ५४
तदस्त्रं मुक्तमालोक्य राजा वै सुरथो महान् । वारुणास्त्रेण शमयन्विव्याध शरकोटिभिः ॥ ५५
तदा तद्योगिनीदत्तमस्त्रं [*धनुषि संदधे । मोहनं सर्ववीराणां निद्राप्रापकमद्भुतम् ॥ ५६
तन्मोहनं महास्त्रं स] वीक्ष्य राजा हरिं स्मरन् । जगाद शत्रुमभयं सर्वशस्त्रास्त्रकोविदः ॥ ५७
मोहितस्य मम श्रीमद्रामस्य स्मरणेन ह । नान्यन्मोहनमाभाति[2] मायाऽपि भयमाप मे ॥ ५८
इत्युक्तवति वीरेऽपि मुमोच स महास्त्रकम् । तेन बाणेन संछिन्नं पपात रणमण्डले ॥ ५९
तन्मोहनं महास्त्रं तु निष्फलं वीक्ष्य भूमिपे । अत्यन्तं विस्मयं प्राप बाणं धनुषि संदधे ॥ ६०
लवणो येन निहतो महासुरविमर्दनः । तं बाणं चाप आधत्त घोरकालानलप्रभम् ॥ ६१
तं वीक्ष्य राजा प्रोवाच बाणोऽयमसतां हृदि । लगते रामभक्तस्य संमुखोऽपि न भात्यसौ ॥ ६२
इत्येवं भाषमाणं तु बाणेनानेन शत्रुहा । विव्याध हृदये क्षिप्रं वह्निज्वालासमप्रभम् ॥ ६३
तेन बाणेन दुःखार्तो महापीडासमन्वितः । रथोपस्थे क्षणं मूर्छामवाप परतापनः ॥ ६४
स क्षणात्तां व्यथां नीत्वा जगाद रिपुमग्रतः । सहस्वैकं प्रहारं मे कुत्र यासि ममाग्रतः ॥ ६५
एवमुक्त्वा महासंख्ये बाणमाधत्त साय(चाप)के । ज्वालामालापरीताङ्गं स्वर्णपुङ्खसमन्वितम्॥ ६६
स बाणो धनुषो मुक्तः शत्रुघ्नेन पथि स्थितः । छिन्नोऽप्यग्रफलेनाऽऽशु हृदये समपद्यत ॥ ६७
तेन बाणेन संमूर्छ्य पपात स्यन्दनोपरि । ततो हाहाकृतं सर्वं सैन्यं भग्नं पराद्रवत् ॥ ६८
सुरथो जयमापेदे संग्रामे रामसेवकः । दश वीरा दशसुतैर्मूर्छिताः पतिताः क्वचित् ॥ ६९

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सुरथविजयो नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३९१६

---

अथ त्रिपञ्चाशत्तमोऽध्यायः ।

---

शेष उवाच—

सुग्रीवस्तत्र कटकं नष्टं वीक्ष्य रणाङ्गणे । स्वामिनं मूर्छितं चापि ययौ योद्धुं[3] नृपं प्रति ॥ १
आगच्छ भूप सर्वान्नो मूर्छयित्वा कुतो भवान् । गच्छति क्षिप्रं मां देहि युद्धं रणविशारद ॥ २

---

* एतच्चिह्नान्तर्गतः पाठः, छ. ड. द. पुस्तकस्थः ।

१ ख. ग. छ. ज. ठ. ण. त. थ. ध. °हदुद्भटः । यु° । २ द. °ति ममापि भयतापदम् । इ° । ३ थ. °द्धुं रणाङ्गणे । आ° ।

एवमुक्त्वा नगं कंचिद्विशालं शाखया युतम् । उत्पाट्य माहरत्तस्य मस्तके बलसंयुतः ॥
तेन प्रहारेण महाबलो नृपः संवीक्ष्य सुग्रीवमथो स्वचापे ।
बाणान्समाधाय शितान्स रोषाज्जघान वक्षस्यतिपौरुषो बली ॥ ४
तान्बाणान्व्यधमत्सर्वान्सुग्रीवः सहसा हसन् । ताडयामास हृदये सुरथं सुमहाबलः ॥ ५
पर्वतैः शिखरैश्चैव नगैर्द्विरदवर्षिभिः । वेगात्स ताडयामास दारयन्सुरथं नखैः ॥ ६
तमप्याशु बबन्धास्त्राद्रामसंज्ञात्सुदारुणात् । बद्धः कपिवरो मेने सुरथं रामसेवकम् ॥ ७
गजो यथाऽऽयसमयीं शृङ्खलां पादलम्बिताम् । प्राप्य किंचिन्न वै कर्तुं शक्नोति स तथा ह्यभूत् ॥ ८
जितं तेन महाराज्ञा सुरथेन सुपत्रिणा । सर्वान्वीरात्रथे स्थाप्य ययौ स्वनगरं प्रति ॥ ९
गत्वा सभायां सुमहान्बद्धं मारुतिमब्रवीत् । स्मर श्रीरघुनाथं त्वं दयालुं भक्तपालकम् ॥ १०
यथा त्वां बन्धनात्सद्यो मोचयिष्यति तुष्टधीः । अन्यथाऽयुतवर्षेण मोचयिष्यामि बन्धनात् ॥ ११
इत्युक्तमाकर्ण्य समीरजस्तदा सुबद्धमात्मानमवेक्ष्य वीरान् ।
संमूर्छिताञ्शत्रुशराविघातपीडायुतान्बन्धनमुक्तयेऽस्मरत् ॥ १२
श्रीरामचन्द्रं रघुवंशजातं सीतापतिं पङ्कजपत्रनेत्रम् ।
स्वमुक्तये बन्धनतः कृपालुं सस्मार सर्वैः करणैर्विशोकैः ॥ १३

हनूमानुवाच—

हा नाथ हा नरवरोत्तम हा दयालो सीतापते रुचिरकुण्डलशोभिवक्त्र ।
भक्तार्तिदाहक मनोहररूपधारिन्मां बन्धनात्सपदि मोचय माविलम्बम् ॥ १४
संमोचितास्तु भवता गजपुङ्गवाद्या देवाश्च दानवकुलाग्निसुदह्यमानाः ।
तत्सुन्दरीशिरसि संस्थितकेशबन्धसंमोचिताऽसि करुणालय मां स्मरस्व ॥ १५
त्वं यागकर्मनिरतोऽसि मुनीश्वरेन्द्रैर्धर्मं विचारयसि भूमिपतीड्यपाद ।
अत्राहमद्य सुरथेन विगाढपाशबद्धोऽस्मि मोचय महापुरुषाऽऽशु देव ॥ १६
नो मोचयस्यथ यदि स्मरणातिरेकात्त्वं सर्वदेववरपूजितपादपद्म ।
लोको भवन्तमिद(प्र)मुल्लसितोऽहसिष्य(?)त्तस्माद्विलम्बमिह माऽऽचर मोचयाऽऽशु १७
इति श्रुत्वा जगन्नाथो रघुवीरः कृपानिधिः । भक्तं मोचयितुं प्रागात्पुष्पकेणाऽऽशु वेगिना ॥ १८
लक्ष्मणेनानुगेनाथ भरतेन सुशोभितम् । मुनि वृन्दैर्व्यासमुख्यैः समेतं ददृशे कपिः ॥ १९
तमागतं निजं नाथं वीक्ष्य भूपं समब्रवीत् । पश्य राजन्निजं मोक्तुमायातं कृपया हरिम् ॥ २०
अनेके मोचिताः पूर्वं स्मरणात्सेवका निजाः । तथो मां पाशतो बद्धं संमोचयितुमागतः ॥ २१
श्रीरामभद्रमायातं वीक्ष्यासौ सुरथः क्षणात् । नतयः(तीस्तु) शतशश्चक्रे भक्तिपूरपरिप्लुतः ॥ २२
श्रीरामस्तं निजैर्दोर्भिः परिरेभे चतुर्भुजः । मूर्ध्नि सिञ्चन्नश्रुजलैर्हर्षाद्व्यक्तं स्वकं पुनः ॥ २३
उवाच धन्यदेहोऽसि महत्कर्म कृतं त्वया । कपीश्वरस्त्वया बद्धो हनूमान्सर्वतोबलः ॥ २४
श्रीरामः कपिवर्यं तं मोचयामास बन्धनात् । मूर्छितांस्तान्भटान्सर्वान्वीक्ष्य दृष्ट्या स्वजीवयत् २५
ते मूर्छां तत्यजुर्दृष्टा रामेणासुरघातिना । उत्थिता ददृशुः श्रीमद्रामचन्द्रं मनोहरम् ॥ २६
ते प्रणम्रा रघुपतिं तेन पृष्टा अनामयम् । सुखीभूता नृपं प्रोचुः सर्वं स्वकुशलं नृपाः ॥ २७
सुरथो वीक्ष्य श्रीरामं कृपार्थं सेवकात्मनः । आगतं सकलं राज्यं सहयं सुमुदाऽऽर्पयत् ॥ २८

---

१ झ. म. 'कुन्तल' । २ ङ. 'था श्रुत्वा च मां व' ।

अनेकवरिवस्याभिः श्रीरामं समतोषयत् । कथयामास मेऽन्याय्यं कृतं ते क्षम राघव ॥ २९

श्रीराम उवाच—

क्षत्रियाणामयं धर्मः स्वामिना सह युध्यते । त्वया साधु कृतं कर्म रणे वीराः प्रतोषिताः ॥ ३०
इत्युक्तवन्तं नृहरिं पूजयन्ससुतोऽभवत् । श्रीरामस्त्रिदिनं स्थित्वा ययौ तमनुमन्त्र्य च ॥ ३१
कामगेन विमानेन मुनिभिः सहितो महान् । तं दृष्ट्वा विस्मितास्तस्य कथाश्चक्रुर्मनोहराः ॥ ३२
चम्पकं स्वपुरे स्थाप्य सुरथः क्षत्रियो बली । शत्रुघ्नेन समं यातुं मनश्चक्रे महाबलः ॥ ३३
शत्रुघ्नः स्वहयं प्राप्य भेरीनादानकारयत् । शङ्खनादान्बहुविधान्सर्वत्र समवादयत् ॥ ३४
सुरथेन समं वीरो यज्ञवाहममूमुचत् । स बभ्राम परान्देशा[*न्न कैश्चिज्जगृहे बली ॥ ३५
यत्र यत्र गतो वाहः पुरदेशान्परिभ्रमन् । तत्र शत्रुघ्न आयातः ] सुरथेन महाबलः ॥ ३६
कदाचिज्जाह्नवीतीरे वाल्मीकेराश्रमं वरम् । गतो मुनिवरैर्जुष्टं प्रातर्धूमेन चिह्नितम् ॥ ३७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे रघुनाथसमागमो नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१३९८३

---

अथ चतुष्पञ्चाशत्तमोऽध्यायः ।

---

शेष उवाच—

गतः प्रातः क्रियां कर्तुं समिधस्तत्क्रियार्हकाः । आनेतुं जानकीसुनुर्वृतो मुनिसुतैर्लवः ॥ १
ददर्श तत्र यज्ञाश्वं स्वर्णपत्रेण चिह्नितम् । कुङ्कुमागरुकस्तूरीदिव्यगन्धेन वासितम् ॥ २
विलोक्य जातकुतुको मुनिपुत्रानुवाच सः । अर्वा कस्य मनोवेगः प्राप्तो दैवान्मदाश्रमम् ॥ ३
आगच्छन्तु मया सार्धं प्रेक्षन्तां मा भयं कृथाः । इत्युक्त्वा स लवस्तूर्णं वाहस्य निकटे गतः॥४
स रराज समीपस्थो वाहस्य रघुवंशजः । धनुर्बाणधरः स्कन्धे जयन्त इव दुर्जयः ॥ ५
गत्वा मुनिसुतैः सार्धं वाचयामास पत्रकम् । भालस्थितं स्पष्टवर्णराजिराजितमुत्तमम् ॥ ६
विवस्वतो महान्वंशः सर्वलोकेषु विश्रुतः । यत्र कोऽपि पराबाधी न परद्रव्यलम्पटः ॥ ७
सूर्यवंशध्वजो धन्वी धनुर्दीक्षागुरुर्गुरुः । यं देवाः सासुराः सर्वे नमन्ति मणिमौलिभिः ॥ ८
तस्याऽऽत्मजो वीरबलदर्पहारी रघूद्वहः । रामचन्द्रो महाभागः सर्वशूरशिरोमणिः ॥ ९
तन्माता कोशलनृपपुत्रीरत्नसमुद्भवा । तस्याः कुक्षिभवं रत्नं रामः शत्रुक्षयंकरः ॥ १०
करोति हयमेधं स ब्राह्मणैश्च सुशिक्षितः । रावणाभिधविप्रेन्द्रवधपापापनुत्तये ॥ ११
मोचितस्तेन वाहानां मुख्योऽसौ यज्ञमुक्तिमान् । महाबलपरीवारैपरिखाभिः सुरक्षितः ॥ १२
तद्रक्षकोऽस्ति मद्भ्राता शत्रुघ्नो लवणान्तकः । हस्त्यश्वरथपादातसंघसेनासमन्वितः ॥ १३
यस्य राज्ञ इति श्रेष्ठो मानो जायेत स्वान्मदात् । शूरा वयं धनुर्धारिश्रेष्ठा वयमिहोत्कटाः ॥ १४
ते गृह्णन्तु बलाद्वाहं रत्नमालाविभूषितम् । मनोवेगं कामजवं सर्वगत्याऽधिभास्करम् ॥ १५
ततो मोचयिता भ्राता शत्रुघ्नो लीलया हठात् । शरासनविनिर्मुक्तवत्सदन्तगतव्यथात् ॥ १६

---

* एतच्चिह्नान्तर्गतः, पाठः छ. झ. द. पुस्तकस्थः ।

---

१ झ. °वस्तुजातीभिः । २ द. वाहस्तत्र तत्र परि° । ३ द. °न् । सैन्येन महता या° । ४ झ. °रपार्षद्भिश्च मु° । द. °वारो महाबलसु° ।

ये क्षत्रियाः क्षत्रियकन्यकासु जाताश्च सत्क्षेत्रकुलेषु सत्सु ।
गृह्णन्तु ते तद्विपरीतदेहा नमन्तु राज्यं रघवे निवेद्य ॥ १७
इति संवाच्य कुपितो लवः शस्त्रधनुर्धरः । उवाच मुनिपुत्रांस्तान्रोषगद्गदभाषितः ॥ १८
पश्यत क्षिप्रमेतस्य धृष्टत्वं क्षत्रियस्य वै । लिलेख यो भालपत्रे स्वप्रतापबलं नृपः ॥ १९
कोऽसौ रामः कः शत्रुघ्नः कीटाः स्वल्पबलाश्रिताः । क्षत्रियाणां कुले जाता एते न वयमुत्तमाः
एतस्य वीरसूर्माता जानकी न कुशप्रसूः । या रत्नं कुशसंज्ञं तु दधाराग्निमिवारणिः ॥ २१
इदानीं क्षत्रियत्वादि दर्शयिष्यामि सर्वतः । यदि क्षत्रियभूरेष भविष्यति च शत्रुहा ॥ २२
ग्रहीष्यति मया बद्धं वाहं यज्ञक्रियोचितम् । नो चेदुत्सेकमुन्मुच्य कुशस्य चरणार्चकः ॥ २३
अधुना मे धनुर्मुक्तशरैः सुप्तो भविष्यति । अन्येऽपि ये महावीरा रणमण्डलभूषणाः ॥ २४
इत्यादि वाक्यमुच्चार्य लवो जग्राह तं हयम् । तृणीकृत्य नृपान्सर्वाश्चापबाणधरो वरः ॥ २५
तदा मुनिसुताः प्रोचुर्लवं हयजिहीर्षुकम् । अयोध्यानृपती रामो महाबलपराक्रमः ॥ २६
तस्य वाहं न गृह्णाति शक्रोऽपि स्वबलोद्धुरः । मा गृहाण शृणुष्वेदं मद्वाक्यं हितसंयुतम् ॥ २७
इत्युक्तं स श्रुतौ धृत्वा जगाद स द्विजात्मजान् । यूयं बलं न जानीथ क्षत्रियाणां द्विजात्मजाः॥
क्षत्रिया वीर्यशौण्डीर्या द्विजा भोजनशालिनः । तस्माद्यूयं गृहे गत्वा भुञ्जन्तु जननीहृतम् ॥२९
इत्युक्तास्तेऽभवंस्तूष्णीं प्रेक्षिष्यन्तः पराक्रमम् । लवस्य मुनिपुत्रास्ते संतस्थुर्दूरतो बहिः ॥ ३०
एवं व्यतिकरे वृत्ते सेवकास्तस्य भूपतेः । आयातास्तं हयं बद्धं दृष्ट्वा प्रोचुस्तदा लवम् ॥ ३१
बबन्ध को हयमहो रुष्टः कस्य च धर्मराट् । को बाणव्रजमध्यस्थः प्राप्स्यते परमां व्यथाम्॥३२
तदा लवो जगादाऽऽशु मया बद्धोऽश्व उत्तमः । यो मोचयति तस्याऽऽशु रुष्टो भ्राता कुशो महान्॥
यमः करिष्यति कथमागतोऽपि स्वयं प्रभुः । नत्वा गमिष्यति क्षिप्रं शरवृष्ट्या सुतोषितः ॥ ३४

शेष उवाच—

एतद्वाक्यं समाकर्ण्य बालोऽयमिति तेऽब्रुवन् । समागता मोचयितुं हयं बद्धं तु ये हरेः ॥ ३५
तान्वै मोचयितुं याताञ्शत्रुघ्नस्य च सेवकान् । कोदण्डं करयोर्धृत्वा क्षुरप्रान्समवमुचत् ॥ ३६
ते छिन्नबाहवः शोकाच्छत्रुघ्नं प्रति संगताः । पृष्टास्ते जगदुः सर्वे लवात्स्वभुजकृन्तनम् ॥ ३७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे लवेन हयबन्धनं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥५४॥

आदितः श्लोकानां समष्ट्यङ्काः—१३९९०

---

अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

---

व्यास उवाच—

एतां श्रुत्वा कथां रम्यां लवस्य बलिनो मुनिः । संशयानः पर्यपृच्छन्नागं दशशताननम् ॥ १

वात्स्यायन उवाच—

त्वयोक्तं तु पुरा रामः सीतामेकाकिनीं वने । रजकस्य दुरुक्त्याऽसौ तत्याज महिलोलुपः ॥ २
जानक्यां क्व सुतौ जातौ क्व धनुर्धरतां गतौ । कथं वा शिक्षिता विद्या यो रामहयमाहरत् ॥ ३

---

१ ङ. °घ्नः के ये स्व° । २ द. चेत्क्षत्रुत्वमु° । ३ ङ. °नीर्कर: । इ° । ४ ग. छ. ठ. ध. हयं मत्तो रु° ।

व्यास उवाच—
इति श्रुत्वा मुनेर्वाक्यं शेषनागो महामतिः । प्रशस्य विप्रं जगदे रामचारित्रमद्भुतम् ॥ ४
शेष उवाच—
रामो राज्यमयोध्यायां भ्रातृभिः सहितोऽन्वभूत् । धर्मेण पालयन्सर्वं क्षितिखण्डं स्वया श्रिया ॥
सीता दधार तद्वीर्यं मासाः पञ्चाभवंस्तदा । अत्यन्तं शुशुभे देवी त्रयीव पुरुषंधरा ॥ ६
कदाचित्समये रामः पप्रच्छ च विदेहजाम् । कीदृशो दोहदः साध्वि मया ते साध्यते हि सः॥
रहस्येव तु सा पृष्टा त्रपमाणा रघोः पतिम् । लज्जागद्गदवाग्रामं निजगाद वचोमृतम् ॥ ८
सीतोवाच—
त्वत्कृपातो मया सर्वं भुक्तं भोक्ष्यामि शोभनम् । न कश्चिन्मानसे कान्त विषयो ह्यतिरिच्यते ९
यस्या भवादृशः स्वामी देवसंस्तुतसत्पदः । तस्याः सर्वं वरीवर्ति न किंचिदपि शिष्यते ॥ १०
त्वमाग्रहात्पृच्छसि मां दोहदं मनसि स्थितम् । प्रब्रवीमि पुरः सत्यं तव स्वामिन्मनोरमम् ॥ ११
चिरं जातं मया सत्यो लोपामुद्रादिकाः स्त्रियः । दृष्टाः स्वामिन्मनो द्रष्टुं ता उत्सुकति सुन्दरीः
राज्यं प्राप्ता त्वया सार्धमनेकसुखमास्थिता । कृतघ्नाऽहं (न) कदाऽपीह ता नमस्कर्तुमानसा॥ १३
तत्र गत्वा तपःकोशान्वस्त्राद्यैः परिपूजये । रत्नानि चैव भास्वन्ति भूषा अपि समर्पये ॥ १४
यथा मे तोषिताः सत्यो ददत्याशीर्मनोहराः । एष मे दोहदः कान्त परिपूरय मानसे ॥ १५
इत्थमाकर्ण्य वचनं सीतायाः सुमनोहरम् । जगाद परमप्रीतो रामचन्द्रः प्रियां प्रति ॥ १६
धन्याऽसि जानकी प्रातर्गमिष्यसि तपोधनाः । प्रेक्ष्य तास्तु कृतार्था त्वमागमिष्यसि मेऽन्तिकम्
इति रामवचः श्रुत्वा परमां प्रीतिमाप सा । प्रातर्मम भवत्यद्धा तापसीनां समीक्षणम् ॥ १८
अथ तन्निशि रामस्य चराः कीर्तिं निजां श्रुताम् । प्रेक्षितुं प्रेषितास्ते तु [*निशीथे व्यगमञ्शनैः
ते प्रत्यहं रामकथाः शृण्वन्तः सुमनोहराः । तद्दिने गतवन्तस्तु धनाढ्यस्य गृहं महत् ॥ २०
दीपं वीक्ष्य प्रज्वलन्तं] वचनं वीक्ष्य मानुषम् । स्थितास्तत्र क्षणं चाराः समशृण्वन्यशो भृशम् २१
तत्र काचन वामाक्षी बालकं प्रति हर्षिता । स्तनं धयन्तं निजगौ वाक्यं तु सुमनोहरम् ॥ २२
पिब पुत्र यथेष्टं त्वं स्तन्यं मम मनोहरम् । पश्चात्तत्र सुदुष्प्राप्यं भविष्यति ममाऽऽत्मज ॥ २३
एतत्पुर्याः पती रामो नीलोत्पलदलप्रभः । तत्पुरीस्थजनानां तु न भविष्यति वै जनुः ॥ २४
जन्माभावात्कथं पानं स्तन्यस्य भुवि जायते । तस्मात्पिब मुहुः स्तन्यं दुर्लभं मम पुत्रक ॥ २५
ये श्रीरामं स्मरिष्यन्ति ध्यास्यन्ति च वदन्ति ये । तेषामपि पयःपानं न भविष्यति जातुचित् २६
इत्यादि वाक्यं संश्रुत्य श्रीरामयशसोऽमृतम् । हर्षितः प्रययौ गेहमन्यद्भाग्यवतो महत् ॥ २७
तावदन्यश्चरस्तत्र मनोरममिदं गृहम् । मत्वा तिष्ठन्हि रामस्य क्षणं शुश्रूपया यशः ॥ २८
तत्र कान्ता निजं कान्तं पर्यङ्कोपरि सुस्थितम् । ताम्बूलं चर्वती दत्तं भर्त्रा स्नेहेन सुन्दरी॥ २९
कङ्कणस्वर्णशोभाढ्या कर्पूरागरुधूपिता । कान्तं वीक्ष्य लसन्नेत्रा कामरूपमवोचत ॥ ३०
नाथ त्वं तादृशो मह्यं भासि यादृग्रघोः पतिः । अत्यन्तसुन्दरतरं वपुर्बिभ्रत्सुकोमलम् ॥ ३१
पद्मप्रान्तं नेत्रयुग्मं वक्षो मोहनविस्तृतम् । भुजौ च साङ्गदौ बिभ्रत्साक्षाद्राम इवासि मे ॥ ३२
इति वाक्यं समाकर्ण्य कान्तायाः सुमनोहरम् । उवाच नेत्रयोः प्रान्तं नर्तयन्कामसुन्दरः ॥ ३३

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ द. °णा पतिं सती । ल° ।

शृणु कान्ते त्वया प्रोक्तं साध्व्या तु सुमनोहरम् । पतिव्रतानां तद्योग्यं स्वकान्तो राम एव हि ३४
परं काहं मन्दभाग्यः क रामो भाग्यवान्महान् । काहं कीटकवत्तुच्छः क ब्रह्मादिसुरार्चितः ३५
खद्योतः क नभोरत्नं शलभः क नु पामरः । गजारिः क मृगेन्द्रोऽसौ शशकः क नु मन्दधीः ३६
क च सा जाह्नवी देवी क रथ्याजलमुत्पथम् । क मेरुः सुरसंवासः क गुञ्जापुञ्जकोऽल्पकः ३७
तथाऽहं क क रामोऽसौ यत्पादरजसाऽङ्गना । शिलीभूता क्षणाज्जाता ब्रह्ममोहनरूपधृत् ॥ ३८
इति वाक्यं प्रब्रुवाणं परिरेभे निजं पतिम् । जाता कामाहतप्रेम्णा नर्तितभ्रूधनुर्धरा ॥ ३९
इत्यादि वाक्यं संश्रुत्य गतश्चारोऽन्यवेशनम् । तावदन्यश्चरो वाक्यं शुश्राव यशसाऽर्चितम् ॥४०
काचित्पुष्पमयीं शय्यां चन्दनं सहचन्द्रकम् । सर्वं विधाय कामार्हं जगाद वचनं पतिम् ॥ ४१
एहि कुरुष्व भोगार्हं शयनं पुष्पशायके । चन्दनादिकलेपं च तथा भोगमनेकधा ॥ ४२
त्वादृशा एव भोगार्हा न च रामपराङ्मुखाः । सर्वं रामकृपाप्राप्तमुपभुङ्क्ष्व यथातथम् ॥ ४३
मत्सदृशी कामिनी ते चन्दनं तापहारकम् । पर्यङ्कः पुष्परचितः सर्वं रामकृपाभवम् ॥ ४४
ये रामं न भजिष्यन्ति ते नरा जठरं स्वकम् । न भर्तुं शक्नुवन्त्येते वस्त्रभोगादिवर्जिताः ॥ ४५
इति ब्रुवतीं महिलां हर्षितः पतिरब्रवीत् । सर्वं तथ्यं ब्रवीषि त्वं मम रामकृपाभवम् ॥ ४६
इत्येवं रामभद्रस्य यशः श्रुत्वा गतश्चरः । तावदन्यस्य वेश्मस्थं चरोऽन्यः शुश्रुवे वचः ॥ ४७
काचित्कान्तेन पर्यङ्के वीणावादनतत्परा । कान्तेन रामसत्कीर्तिं गायमाना पतिं जगौ ॥ ४८
स्वामिन्वयं धन्यतमा येषां पुर्याः पतिः प्रभुः । श्रीरामः स्वप्रजाः पुत्रान्यद्वत्पाति च रक्षकः ४९
यो महत्कर्म दुःसाध्यं कृतवान्सुलभं न तत् । समुद्रं यो निजग्राह सेतुं तत्र बबन्ध च ॥ ५०
रावणं यो रिपुं हत्वा लङ्कां संभज्य वानरैः । जानकीमाजहारात्र महदाचारमाचरत् ॥ ५१
इति प्रोक्तं समाकर्ण्य वचः सुमधुराक्षरम् । पतिः स्मितं चकारेमां वाक्यं पुनरथाब्रवीत् ॥ ५२
मुग्धे नेदं महत्कर्म रामचन्द्रस्य भामिनि । दशाननवधादीनि समुद्रदमनानि च ॥ ५३
लीलया योऽवनिं प्राप्तो ब्रह्मादिप्रार्थितो महान् । करोति सच्चरित्राणि महापापहराणि च ॥५४
मा जानीहि नरं रामं कौशल्यानन्दवर्धनम् । सृजत्यवति हन्त्येतद्विश्वं लीलात्तमानुषः ॥ ५५
धन्या वयं ये रामस्य पश्यामो मुखपङ्कजम् । ब्रह्मादिसुरदुर्दर्शं महत्पुण्यकृतो वयम् ॥ ५६
इत्यादि वाक्यं शुश्राव चारो द्वारि स्थितो मुहुः । अशृणोद्रामचन्द्रस्य चरित्रं श्रुतिसौख्यदम् ५७
अन्यो ह्यन्यगृहं गत्वा तस्थौ श्रोतुं हरेर्यशः । तत्रापि रामभद्रस्य यशः शुश्राव शोभनम् ॥ ५८
खेलन्ती स्वामिना साकं द्यूतेन सुमनोहरा । उवाच वाक्यं मधुरं कङ्कणे नृत्यतीव च ॥ ५९

जितं मया कान्त जवेन सर्वं[3] धनं त्वदीयं ग्लहरूपितं यत्[4] ।
[*इत्यादि वाक्यं परिहासपूर्वकं कृत्वा स्वकान्तं परिषस्वजे मुदा ॥ ] ६०

उवाच कान्तश्चार्वङ्गि जितमेव सुशोभने । रामं मे स्मरतो नित्यं न कुत्रापि पराजयः ॥ ६१
इदानीं त्वां तु जेष्यामि रामं स्मृत्वा मनोहरम् । देवा यथा पुरा स्मृत्वा दितिजानजयन्क्षणात् ॥६२
एवमुक्त्वा पाशकानां परिवर्तनमाकरोत् । तावज्जयं प्रपेदे स हर्षितो वाक्यमब्रवीत् ॥ ६३

* एतच्चिह्नान्तर्गतः पाठो ग. छ. ड. द. पुस्तकस्थः ।

१ ड. °अगोलकः । २ ग. छ. ठ. ड. द. ध. पते । ३ द. °र्वं करिष्यसि त्वं किमु हारिमानसः । इ° । ४ ख. त् । भवानिदानीं वदतात्पुनर्मे ग्लहं करिष्यत्यथ किं नु का[म]म् । उ° । ज. त. थ. °त् । श्रिया यथा क्षत्रधनं विवाहे करिष्यसि त्वं मम किं नु मानात् । उ° । ण. °त् । जितोऽसि त्वं चापि ममानुवृत्तिं करिष्यमाणस्तमुदारमानसः । उ° ।

मम प्रोक्तमृतं जातं जिता त्वं नवयौवना । रामस्मारी कदाऽप्येव न भवेद्रिपुतो भयी ॥ ६४
इत्येवं तौ वदन्तौ च परस्परमथोत्सुकौ । परिरभ्य दृढं प्रेम्णा ततश्चारो गतो गृहम् ॥ ६५
एवं पञ्च महाचारा राज्ञः संश्रुत्य वै यशः । परस्परं प्रशंसन्तो गेहं स्वं स्वं ययुर्मुदा ॥ ६६
एकः षष्ठश्चरः कारुगेहमालोक्य तत्र ह । जगाम श्रोतुकामोऽसौ यशो राज्ञो महीपतेः ॥ ६७
रजकः क्रोधसंक्रुष्टो भार्यामन्यगृहोषिताम् । पदा संताडयामास धिक्कुर्वञ्शोणनेत्रवान् ॥ ६८
गच्छ त्वं मद्गृहात्तस्य गेहं यत्रोषिता दिनम् । नाहं गृह्णामि भवतीं दुष्टां वचनलङ्घिनीम् ॥ ६९
तदाऽस्य माता प्रोवाच मा त्यजैनां गृहागताम् । अपराधेन रहितां दुष्टकर्मविवर्जिताम् ॥ ७०
मातरं प्रत्युवाचाथ रजकः क्रोधसंयुतः । नाहं राम इव प्रेष्ठां गृह्णाम्यन्यगृहोषिताम् ॥ ७१
स राजा यत्करोत्येव तत्सर्वं नीतिमद्भवेत् । अहं गृह्णामि नो भार्यां परवेश्मनि संस्थिताम् ॥ ७२
पुनः पुनरुवाचेदं रामो नाहं महीश्वरः । यः परस्य गृहे संस्थां जानकीं वै ररक्ष सः ॥ ७३
इति वाक्यं समाश्रुत्य चारः कोपपरिप्लुतः । खड्गं गृहीत्वा स्वकरे तं हन्तुं विदधे मनः ॥ ७४
स रामोक्तं च सस्मार न वध्यः कोऽपि मे जनः । इति ज्ञात्वा स्वरोषं तु संजहार महामनाः ॥ ७५
तदा श्रुत्वा सुदुःखार्तः पञ्च चारा यतः स्थिताः । ततो गतः प्रकुपितो निश्वसन्मुहुरुच्छ्वसन् ॥ ७६
ते वै परस्परं तत्र मिलिताः सममब्रुवन् । स्वश्रुतं रामचरितं सर्वलोकैकपूजितम् ॥ ७७
ते तद्भाषितमाकर्ण्य परस्परममन्त्रयन् । न वाच्यं रघुनाथाय वचो दुष्टजनोदितम् ॥ ७८
इति संमन्त्र्य ते गेहं गत्वा सुषुपुरुत्सुकाः । प्राता राज्ञे प्रशंसाम इतिबुद्ध्या व्यवस्थिताः ॥ ७९

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे चारनिरीक्षणं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४०६९

---

अथ षट्पञ्चाशत्तमोऽध्यायः ।

---

शेष उवाच—

प्रातर्नित्यं विधायासौ ब्राह्मणान्वेदवित्तमान् । हिरण्यदानैः संतर्प्य विधिवत्संसदं ययौ ॥ १
लोकाः सर्वे नमस्कर्तुं रघुनाथं महीपतिम् । पुत्रवत्स्वप्रजाः सर्वाः पालयन्तं ययुः सभाम् ॥ २
लक्ष्मणेनाऽऽतपत्रं तु धृतं मूर्धनि भूपतेः । तदा भरतशत्रुघ्नौ चामरद्वंद्वधारिणौ ॥ ३
वसिष्ठप्रमुखास्तत्र मुनयः पर्युपासते । सुमन्त्रप्रमुखास्तत्र मन्त्रिणो न्यायकर्तृकाः ॥ ४
एवं प्रवृत्ते समये षट्चारास्ते स्वलंकृताः । समाजग्मुर्नरपतिं नमस्कर्तुं सभास्थितम् ॥ ५
तान्वक्तुकामान्संवीक्ष्य चारान्नृपतिसत्तमः । सभायामन्तरावेश्म रहः प्राविशदुत्सुकः ॥ ६
एकान्ते तांश्चरान्सर्वान्पप्रच्छ सुमतिर्नृपः । कथयन्तु चरा मह्यं यथातथ्यमरिंदमाः ॥ ७
लोका ब्रुवन्ति मां कीदृग्भार्यायाः मम कीदृशम् । मन्त्रिणां कीदृशं लोका वदन्ति चरितं कथम् ॥ ८
इति वाक्यं समाकर्ण्य चरा राममथाब्रुवन् । मेघगम्भीरया वाण्या पृच्छन्तं रघुनायकम् ॥ ९

चारा ऊचुः—

नाथ कीर्तिर्जनान्सर्वान्पावयत्यधुना भुवि । गृहे गृहे श्रुताऽस्माभिः पुरुषस्त्रीभिरीडिता ॥ १०
विवस्वतो महावंशं भवता परमेष्ठिना । अलंकर्तुं गतं भूमौ कीर्तिर्विस्तारिता बहुः ॥ ११

---

१ झ. °वेद्रीयुतो । २ क. ख. ग. च. छ. ज. झ. ठ. ड. ण. स. ध. द. थ. भुवि ।

अनेके सगराद्याश्च कृतार्थाः पूर्वजा नृप । अभवंस्तादृशी कीर्तिस्तेषां नाभूद्यथेदृशी ॥ १२
त्वया नाथेन सकलाः कृतार्थ्यन्ते प्रजा नृप । यासां नाकालमरणं न च रोगाद्युपद्रुतिः ॥ १३
यादृशश्चन्द्रमा लोके यादृशी जाह्नवी सरित् । तादृशी तव सत्कीर्तिः प्रकाशयति भूतलम् ॥१४
ब्रह्मादिका भवत्कीर्तिमाकर्ण्य त्रपिता भृशम् । नाथ सर्वत्र ते कीर्तिः पावयत्यधुना जनान्॥१५
वयं धन्यतमाः सर्वे ये चारास्तव भूपते । क्षणे क्षणे तव मुखं लोकयामो मनोहरम् ॥ १६
इत्यादि वाक्यं चाराणां पश्चानां वीक्ष्य राघवः । षष्ठं पप्रच्छ चारं तं विलक्षणमुखाङ्कितम्॥१७

राम उवाच—

सत्यं वद महाबुद्धे यच्छ्रुतं लोकसंकरे । तादृशं शंस मह्यं त्वमन्यथा पातकादिकृत् ॥ १८
पुनः पुनश्चरं रामः पप्रच्छ श्रुतिविश्रुतम् । तदाऽपि न ब्रवीत्येव रामं लोकैकभाषि(वि)तम्॥१९
तदा रामः प्रत्यवोचच्चरं मुखविलक्षितम् । शपामि त्वां तु सत्येन शंस सर्वं यथातथम् ॥ २०
तदा रामं प्रत्युवाच चरो वाक्यं शनैः शनैः । अकथ्यमपि ते वाच्यं वाक्यं कारुजनोदितम् २१

चर उवाच—

स्वामिन्सर्वत्र ते कीर्तिर्दशाननवधादिका । अन्यत्र राक्षसगृहे स्थितायास्ते स्त्रिया अहो ॥ २२
कारुरेकस्तु रजको निशीथे महिलां स्वकाम् । अन्यगेहोषितां दुष्टो धिक्कुर्वन्समताडयत् ॥ २३
तन्माता प्रत्युवाचेमां कथं ताडयसेऽनघाम् । गृहाण मा कृथा निन्दां स्त्रियं मद्वाक्यमाचर ॥२४
तदाऽवोचत्स रजको नाहं रामो महीपतिः । यद्राक्षसगृहेऽध्युष्टां सीतामङ्गीचकार सः ॥ २५
सर्वं राज्ञः कृतं कर्म नीतिमद्भवति प्रभोः । अन्येषां पुण्यकर्तॄणामपि कृत्यमनीतिमत् ॥ २६
पुनः पुनरुवाचासौ नाहं रामो महीपतिः । चुक्रुधे समये राजन्मया वाक्यं तव स्मृतम् ॥ २७
तदानीं शिर आच्छिद्य पातयामि महीतले । पुनर्विचारयामास रामः क्व रजकः क्व नु ॥ २८
अयं दुष्टोऽनृतं वक्ति न हीदं तथ्यमुच्यते । आज्ञापयसि चेद्राम सांप्रतं पातयामि तम् ॥ २९
अवाच्यमपि ते प्रोक्तं त्वदाग्रहत उन्नयम् । राजा प्रमाणमत्रेदं विचारयतु संगतम् ॥ ३०

शेष उवाच—

इति वाक्यं समाकर्ण्य महावज्रनिभाक्षरम् । निश्वसन्मुहुरुच्छ्वासमाचरन्मूर्छितोऽपतत् ॥ ३१
तं मूर्छितं नृपं दृष्ट्वा चारा दुःखसमन्विताः । वीजयामासुर्वासोग्रैर्दुःखापनयहेतवे ॥ ३२
स लब्धसंज्ञो नृपतिर्मुहूर्तेन जगाद तान् । गच्छन्तु भरतं गेहे प्रेषयन्तु च मां प्रति ॥ ३३
ते दुःखिताश्चरास्तूर्णं भरतस्य गृहं गताः । कथयामासू रामस्य संदेशं नृपहा(चा)रकाः ॥ ३४
भरतो रामसंदेशं श्रुत्वा धीमान्ययौ सदः । रामं प्रति रहःसंस्थं श्रुत्वा तं त्वरया युतः ॥ ३५
आगत्य तं प्रतीहारं प्रत्युवाच महामनाः । कुत्राऽऽस्ते रामभद्रोऽसौ मम भ्राता कृपानिधिः ३६
तन्निर्दिष्टं गृहं वीरो ययौ रत्नमनोहरम् । रामं विलोक्य विक्रान्तं भयमाप स मानसे ॥ ३७
किं वाऽसौ कुपितो रामः किं वा दुःखमिदं विभोः । तदा प्रोवाच नृपतिं निश्वसन्तं मुहुर्मुहुः ३८
स्वामिन्सुखसमाराध्यं वक्त्रं ते कथमानतम् । अश्रुभिर्लक्ष्यते राहुग्रस्तदेहः शशीव ते ॥ ३९
सर्वं मे कारणं तथ्यं ब्रूहि मां किं करोमि ते । त्यज दुःखं महाराज कथं दुःखस्य भाजनम् ४०
एवं भ्रात्रा प्रोच्यमानो गद्गदस्वरया गिरा । प्रोवाच भ्रातरं वीरो रामचन्द्रः स धार्मिकः ॥४१

१ छ. ड. °श्च भरतप्रमुखा नृपाः । अ° । द. °श्च कीर्तिमन्तो महाबलाः । अ° । २ क. ख. ग. ज. झ. ठ. ण. ध. °प्रच्छ श्रुतविस्तरम् । द. °प्रच्छाऽऽशु सविस्तरम् । ३ द. दृष्ट्वा । ४ द. शीघ्रं ।

शृणु भ्रातर्वचो मह्यं मम दुःखस्य कारणम् । तन्मार्जनं कुरुष्वाद्य भ्रातर्भ्रातर्महामते ॥ ४२
वंशे वैवस्वते राजा न कश्चिदयशःक्षतः । मत्कीर्तिरद्य कलुषा गङ्गा यमुनया गता ॥ ४३
येषां यशो नृणां भूमौ तेषामेव सुजीवितम् । अपकीर्तिक्षतानां तु जीवितं मृतकैः समम् ॥ ४४
येषां यशो भवेद्भूमौ तेषां लोकाः सनातनाः । अपकीर्त्युरगीदष्टास्तेषां भूयादधोगतिः ॥ ४५
अद्य मे कलुषा कीर्तिस्वर्धुनी लोकविस्तृता[1] । तच्छृणुष्व वचो मेऽद्य रजकस्य यथोदितम् ॥ ४६
अस्मिन्पुरेऽद्य रजक उक्तवाञ्जानकीभवम् । किंचिद्वाच्यं ततो भ्रातः किं करिष्यामि भूतले ४७
किमात्मानं जहाम्यद्य किमेतां जानकीं स्त्रियम् । उभयोः किं मया कार्यं तत्तथ्यं ब्रूहि त्वं मम ४८
इत्युक्त्वा निर्गलद्बाष्पो वेपथुक्षुभिताङ्गकः । पपात भूमौ विरजो धार्मिकाणां शिरोमणिः ॥ ४९
भ्रातरं पतितं दृष्ट्वा भरतो दुःखसंयुतः । संवीक्ष्य शनकै रामं संज्ञामाप्तं चकार सः ॥ ५०
संज्ञां प्राप्तं तु संवीक्ष्य रामचन्द्रं सुदुःखितम् । उवाच दुःखनाशाय स वाक्यं सुमनोहरम् ॥ ५१

भरत उवाच—

कोऽयं वै रजकः किं तु वाच्यं वाक्यकथायुतः । जिह्वाछेदं करिष्यामि जानकीवाच्यकारिणः ५२
तदा रामोऽब्रवीद्वाक्यं रजकस्य मुखोद्गतम् । श्रुतं चारेण तत्सर्वं भरताय महात्मने ॥ ५३
तच्छ्रुत्वा भरतः प्राह भ्रातरं दुःखशोकिनम् । जानकी वह्निशुद्धाऽभूल्लङ्कायां वीरपूजिता ॥ ५४
ब्रह्माऽब्रवीदियं शुद्धा पिता दशरथस्तव । कथं सा रजकोक्तित्वाद्धातव्या लोकपूजिता ॥ ५५
ब्रह्मादिसंस्तुता कीर्तिस्तव लोकान्पुनाति हि । सा कथं रजकोक्त्या वै कलुषाऽद्य भविष्यति ॥
तस्मात्त्यज महादुःखं सीतावाच्यसमुद्भवम् । कुरु राज्यं तया सार्धमन्तर्वत्न्या सुभाग्यया॥ ५७
त्वं कथं स्वशरीरं तु हातुमिच्छसि शोभनम् । वयं हताः स्म सर्वेऽद्य त्वां विना दुःखनाशकम्
क्षणं सीता न जीवेत त्वां विना सुमहोदया । तस्मात्पतिव्रता साकं भुनक्तु विपुलां श्रियम् ॥
इति वाक्यं समाकर्ण्य भरतस्य सुधार्मिकः । पुनरेव जगादेमं वाक्यं वाक्यविदां वरः ॥ ६०
यत्त्वं कथयसि भ्रातस्तत्र धर्मसमं युतम् । परं यद्वच्म्यहं वाक्यं तत्कुरुष्व ममाऽऽज्ञया ॥ ६१
जानाम्येनां वह्निशुद्धां पवित्रां लोकपूजिताम् । लोकापवादाद्भीतोऽहं त्यजामि स्वां तु जानकीम्
तस्मात्करे शितं धृत्वा करवालं सुदारुणम् । शिरश्छिन्ध्यथवा जायां जानकीं मुञ्च वै वने॥ ६३
इति वाक्यं समाकर्ण्य रामस्य भरतोऽपतत् । मूर्छितः सन्क्षितौ देहे कम्पयुक्तः सबाष्पकः॥ ६४

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे भरतवाक्यं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४१३३

---

अथ सप्तपञ्चाशत्तमोऽध्यायः ।

---

वात्स्यायन उवाच—

जगत्पवित्रसत्कीर्तिजानक्या[3] वाच्यवाचनम्[2] । कथं समकरोत्स्वामिंस्तन्मे कथय सुव्रत ॥ १
यथा मे मनसः सौख्यं भविष्यति सुशोभनम् । तथा कुरुष्व शेषाद्य त्वन्मुखान्निसृतामृतम् २
पिबतस्तृप्तिरेव स्याद्यथा संसृतिकृन्तनम् ॥ ३

---

१ ठ. ढ. घ. लोकविश्रुता । २ ड. स वाक्यतः । इ° । ३ ञ. °तिर्जान° ।

शेष उवाच—

मिथिलायां महापुर्यां जनको नाम भूपतिः। तस्यां करोति सद्राज्यं धर्मेणाऽऽराधयन्प्रजाः॥ ४
तस्य संकर्षतो भूमिं सीतया दीर्घमुख्यया। सीरध्वजस्य निरगात्कुमारी रतिसुन्दरी॥ ५
तदाऽत्यन्तं मुदं प्राप्तः सीरकेतुर्महीपतिः। सीतानामाकरोत्तस्या मोहिन्या जगतः श्रियाः॥ ६
सैकदोद्यानविपिने खेलन्ती सुमनोहरा। अपश्यत्स्वमनःकान्तं शुकशुक्योर्युगं वदत्॥ ७
अत्यन्तं हर्षमापन्नमत्यन्तं कामलोलुपम्। परस्परं भाषमाणं स्नेहेन शुभया गिरा॥ ८
रममाणं तदा युग्मं नभसि क्षिप्रवेगतः। समुत्पतन्नगोपस्थे स्थितं शब्दं चकार तत्॥ ९
रामो महीपतिर्भूमौ भविष्यति मनोहरः। तस्य सीतेति नाम्ना तु भविष्यति महेलिका॥ १०
स तया सह वर्षाणां सहस्राण्येकयुग्दश। राज्यं करिष्यते धीमान्कर्षन्भूमिपतीन्बली॥ ११
धन्या सा जानकी देवी धन्योऽसौ रामसंज्ञितः। यौ परस्परमापन्नौ पृथिव्यां रमतो मुदा॥१२
इति संभाषमाणं तु शुकयुग्मं तु मैथिली। ज्ञात्वेदं देवतायुग्मं वाणीं तस्य विलोक्य च॥ १३
मदीयास्तु कथा रम्याः कुरुते शुकयोर्युगम्। एतद्गृहीत्वा पृच्छामि सर्वं वाक्यं गतार्थकम्॥१४
एवं विचार्य सा स्वीयाः सखीः प्रति जगाद सा(च)। गृह्णन्तु शनकैरेतत्पक्षियुग्मं मनोहरम्१५
सख्यस्तास्तद्गिरिं गत्वाऽगृह्णन्पक्षियुगं वरम्। निवेदयामासुरिदं स्वसख्याः प्रियकाम्यया॥ १६
बहुधा विविधाञ्शब्दान्कुर्वद्वीक्ष्य मनोहरम्। आश्वासयामास तदा पप्रच्छ तादिदं वचः॥ १७

सीतोवाच—

मा भैषातां(थां) युवां रम्यौ कौ वा कुत्र समागतौ। को रामः का च सा सीता तज्ज्ञानं तु कुतः स्मृतम्
तत्सर्वं शंसतं क्षिप्रं मत्तावाव्येतु यद्भ(त्तो नो भवतोर्भ)यम्। इति पृष्टं तया पक्षियुगं सर्वमशंसत

पक्षियुग्ममुवाच—

वाल्मीकिरास्ते सुमहानृषिर्धर्मविदुत्तमः। आवां तदाश्रमस्थानौ सर्वदासुमनोहरम्॥ २०
स शिष्यान्गापयामास भावि रामायणं मुनिः। प्रत्यहं तत्पदस्मारी सर्वभूतहिते रतः॥ २१
तदावाभ्यां श्रुतं सर्वं भावि रामायणं महत्। मुहुर्मुहुर्गीयमानमायातं परिपाठतः॥ २२
शृण्वावां तेऽभिधास्यावो यो रामो या च जानकी। यद्यद्भविष्यते तस्या रामेण क्रीडितात्मनः
ऋष्यशृङ्गकृतेष्ट्या च चतुर्धात्वं गतो हरिः। प्रादुर्भविष्यति श्रीमान्सुरस्त्रीगीतसत्कथः॥ २४
स कौशिकेन मिथिलां प्राप्स्यते भ्रातृसंयुतः। धनुष्पाणिस्तदा दृष्ट्वा दुर्ग्राह्यमन्यभूभुजाम्॥ २५
धनुर्भङ्क्त्वा जनकजां प्राप्स्यते सुमनोहराम्। तया सह महद्राज्यं करिष्यति श्रुतं वरे॥ २६
एतदन्यच्च तत्रस्थैः श्रुतमस्माभिरुद्रुतैः। कथितं तव चार्वङ्गि मुञ्चाऽऽवां गन्तुकामुकौ॥ २७
इति वाक्यं तयोर्धृत्वा श्रोत्रयोः सुमनोहरम्। पुनरेव जगादेदं वाक्यं पक्षियुगं प्रति॥ २८
स रामः कुत्र वर्तेत कस्य पुत्रः कथं तु ताम्। परिग्रहीष्यति वरः कीदृग्रूपधरो नरः॥ २९
मया पृष्टमिदं सर्वं कथयन्तु(तं)यथातथम्। पश्चात्सर्वं करिष्यामि प्रियं युष्मन्मनोहरम्॥ ३०
तच्छ्रुत्वा तां तु कामेन पीडितां वीक्ष्य सा शुकी। जानकीं हृदि [illegible]त्वा च पपात पुरतस्ततः३१
सूर्यवंशध्वजो नाम राजा पङ्क्तिरथो बली। यं देवाः श्रित्य सर्वा[illegible]जेष्यन्ते च सर्वतः॥ ३२
तस्य भार्यात्रयं भावि शक्रमोहनरूपधृत्। तस्या(तासा)मपत्यचातुष्कं भविष्यति बलोन्नतम्॥३३
सर्वेषामग्रजो रामो भरतस्तदनु स्मृतः। लक्ष्मणस्तदनु श्रीमाञ्शत्रुघ्नः सर्वतोबलः॥ ३४

१ झ. ऋषिशृङ्ग°। २ क. ग. ज. °तोवरः। र°।

रघुनाथ इति वाक्यं गमिष्यति महामनाः। तेषामनन्तनामानि रामस्य बलिनः सखि ॥ ३५
पद्मकोश इव शोभनं मुखं पङ्कजाभनयने सुदीर्घके।
उन्नतापृथुमनोहरानसं वल्गुसंगतमनोहरे भ्रुवौ ॥ ३६
जानुलम्बितमनोहरौ भुजौ कम्बुशोभिगलक्रोडहस्वकः।
सत्कपाटतलविस्र(स्तृ)तश्रिकं वक्ष एतदमलं सलक्ष्मकम् ॥ ३७
शोभनोरुकटिशोभया युतं जानुयुग्ममलं स्वसेवितम्।
पादपद्ममखिलैर्निजैः सदा सेवितं रघुपतेः सुशोभनम् ॥ ३८
एतद्रूपधरो रामो मया किं तु स वर्ण्यते। शताननोऽपि नो याति पक्षिणः किमु मादृशाः ॥३९
यद्रूपं वीक्ष्य ललिता मनोहरवपुर्धरा। लक्ष्मीर्मुमोह भुवि का वर्तते या न मोहति ॥ ४०
महाबलो महावीर्यो महामोहनरूपधृत्। किं वर्णयामि श्रीरामं सर्वैश्वर्यगुणान्वितम् ॥ ४१
धन्या सा जानकी देवी महामोहनरूपधृत्। रंस्यते येन सहिता वर्षाणामयुतं मुदा ॥ ४२
त्वं का सा किं तु नामासि(स्ति)तव सुन्दरि यत्तु माम्। परिपृच्छसि वैदग्ध्याद्रामकीर्तनमादरात् ॥
एतद्वाक्यं समाकर्ण्य जानकी पक्षिणोर्युगम्। उवाच जन्म ललितं शंसन्ती स्वस्य मोहनम्॥ ४४
या त्वया जानकी प्रोक्ता साऽहं जनकपुत्रिका। स रामो मां यदाऽऽगत्य प्राप्स्यते सुमनोहरः॥
तदा वां मोचयाम्यद्धा नान्यथा वाक्यलोभितौ। लीलया च सुखेनाऽऽस्तां मद्गृहे मधुरादकौ॥
इत्युक्तं तत्समाकर्ण्य पक्षिणौ भयतां गतौ। परस्परं प्रक्षुभितौ जानकीं प्रत्यवोचताम् ॥ ४७
वयं वै पक्षिणः साध्वि वनस्था वृक्षगोचराः। परिभ्रमामः सर्वत्र नो सुखं नो भवेद्गृहे ॥ ४८
अन्तर्वत्नी स्वके स्थाने गत्वा संसूय पुत्रकान्। त्वत्स्थानमागमिष्यामि सत्यं मे ह्युदितं वचः ॥
एवं प्रोक्ता तया सा तु न मुमोच शिशुः स्वयम्। तदा पतिस्तां प्रोवाच विनीतवदनोत्सुकः५०
सीते मुञ्च कथं भार्यां रक्षसे मे मनोहराम्। आवां गच्छाव विपिने विचरावः सुखं वने ॥ ५१
अन्तर्वत्नी तु वर्तेत भार्या मम मनोगमा। तस्याः प्रसूतिं कृत्वा त्वामागमिष्यामि शोभने॥ ५२
इत्युक्ता निजगादेमं सुखं गच्छ महामते। एतां रक्षामि सुखितां मत्पार्श्वे प्रियकारिणीम् ॥५३
इत्युक्तो दुःखितः पक्षी तामूचे करुणान्वितः। योगिभिः प्रोच्यते यद्वै तद्वचस्तथ्यमेव हि ॥५४
न वक्तव्यं न वक्तव्यं मौनमाश्रित्य तिष्ठतु। नो चेत्स वाक्यदोषेण प्राप्नोत्यालानमुन्मदः ॥५५
वयं चेदत्र वाक्यं नाकरिष्याम नगोपरि। बन्धनं कथमावां(त्तं) स्यात्तस्मान्मौनं समाचरेत् ॥५६
इत्युक्त्वा तां प्रत्युवाच नाहं जीवामि सुन्दरि। एतया भार्यया सीते तस्मान्मुञ्च मनोहरे ॥५७
अनेकविधवाक्यैः सा बोधिता नामुचत्तदा। कुपिता दुःखिता भार्या शशाप जनकात्मजाम् ५८
यथा त्वं पतिना सार्धं वियोजयसि मामितः। तथा त्वमपि रामेण विमुक्ता भव गर्भिणी ॥५९
इत्युक्तवत्यां तस्यां तु दुःखितायां पुनः पुनः। प्राणा निरगमन्दुःखात्पतिदुःखेन पूरितात् ॥६०
रामंरामंस्मरन्त्याश्च वदन्त्याश्च पुनः पुनः। विमानमागतं सुष्ठु पक्षिणी स्वर्गता बभौ ॥ ६१
तस्यां मृतायां दुःखार्तो भर्ता तस्याः स पक्षिराट्। परमं क्रोधमापन्नो जाह्नव्यां दुःखितोऽपतत्
तथा भवामि रामस्य नगरे जनपूरिते। मद्वाक्यादियमुद्विग्ना वियोगेन सुदुःखिता ॥ ६३
इत्युक्त्वा स पपातोदे जाह्नव्या भ्रमशोभिते। दुःखितः कुपितो भीतस्तद्वियोगेन कम्पितः॥६४
क्रुद्धत्वाद्दुःखितत्वाच्च सीताया अपमाननात्। अन्त्यजत्वं परं प्राप्तो रजकः क्रोधनाभिधः ॥६५

---

१ ख. ग. छ. ड. द. ह्याति। २ छ. ड. द. °ता। लालयामि सु°। ३ झ. ञ. °र्ण्य वेपतुर्भय°।

यः क्रोधाच्च स्वकान्प्राणान्महतां दुष्टमाचरन् । संत्यजेत्स मृतो याति अन्त्यजत्वं द्विजोत्तमः॥६६
तज्जातं रजकोक्त्याऽसौ निन्दिता च वियोगिता। रजकस्य च शापेन वियुक्ता सा वनं गता॥६७
एतत्ते कथितं विप्र यत्ते पृष्टं विदेहजाम् । पुनरत्र परं वृत्तं शृणुष्व निगदामि तत् ॥ ६८

इति श्रीमहापुराणे पाद्मे शेषवात्स्यायनसंवादे रामाश्वमेधे रजकप्राग्जन्मकथनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७॥

आदितः श्लोकानां समष्ट्यङ्काः—१४२०१

---

अथाष्टपञ्चाशत्तमोऽध्यायः ।

---

शेष उवाच—

भरतं मूर्छितं दृष्ट्वा रघुनाथः सुदुःखितः । प्रतीहारमुवाचेदं शत्रुघ्नं प्रापयाऽऽशु माम् ॥ १
तद्वाक्यं प्रोक्तमाकर्ण्य क्षणाच्छत्रुघ्नमानयत् । यत्र रामो निजभ्राता भरतेन सह स्थितः ॥ २
भरतं मूर्छितं दृष्ट्वा रघुनाथं च दुःखितम् । प्रणम्य दुःखितोऽवोचत्किमिदं दारुणं महत् ॥ ३
तदा रामोऽन्त्यजप्रोक्तं वाक्यं लोकविगर्हितम् । तं प्रत्युवाच रामोऽसौ शत्रुघ्नं पदसेवकम् ॥ ४
अधोमुखो दीनरवो गद्गदस्वरवेपथुः । शृणु भ्रातर्वचो मेऽद्य कुरु तत्क्षिप्रमादरात् ॥ ५
यथा स्याद्विमला कीर्तिर्गङ्गेव पृथिवीं गता । सीताया वाच्यमतुलं लोके श्रुत्वाऽन्त्यजोदितम् ॥६
हातुमिच्छामि देहं स्वमेनां वा किल जानकीम्। इति वाक्यं समाकर्ण्य रामस्य किल शत्रुहा॥७
सवेपथुः पपातोर्व्यां दुःखितः परदारणः । संज्ञां प्राप्य मुहूर्तेन रघुनाथमवोचत ॥ ८

शत्रुघ्न उवाच—

किमेतदुच्यते स्वामिञ्जानकीं प्रति दारुणम् । पाखण्डैर्दुष्टचित्तैश्च सर्वधर्मबहिष्कृतैः ॥ ९
निन्दिता श्रुतिरग्राह्या भवति त्वग्र्यजन्मना । जाह्नवी सर्वलोकानां पापघ्नी दुरितापहा ॥ १०
निस्पृष्टा पापिभिः पुम्भिः सा स्पर्शे नार्हिता सताम् । सूर्यो जगत्प्रकाशाय समुदेति जगत्यहो॥
उलूकानां रुचिकरो न भवेत्तत्र का क्षतिः । तस्मात्त्वमेनां गृह्णीष्व मा त्यजानिन्दितां स्त्रियम्१२
श्रीरामभद्र कृपया कुरुष्व वचनं मम । एतच्छ्रुत्वा वचस्तस्य शत्रुघ्नस्य महात्मनः ॥ १३
पुनः पुनर्जगादेमं यदुक्तं भरतं प्रति । तन्निशम्य वचो भ्रातुर्दुःखपूरपरिप्लुतः ॥ १४
पपात मूर्छितो भूमौ छिन्नमूल इव द्रुमः । भ्रातरं पतितं वीक्ष्य शत्रुघ्नं दुःखितो भृशम् ॥ १५
प्रतिहारमुवाचेदं लक्ष्मणं त्वानयान्तिकम् । स लक्ष्मणगृहे गत्वा न्यवेदयदिदं वचः॥ १६

प्रतिहार उवाच—

स्वामिन्रामो भवन्तं तु समाह्वयति वेगतः । स तच्छ्रुत्वा समाह्वानं रामचन्द्रेण वेगतः ॥ १७
जगाम तरसा तत्र यत्र सभ्रातृकोऽनघः । भरतं मूर्छितं दृष्ट्वा शत्रुघ्नमपि मूर्छितम् ॥ १८
श्रीरामचन्द्रं दुःखार्तं दुःखितो वाक्यमब्रवीत् । किमेतद्दारुणं राजन्दृश्यते मूर्छनादिकम् ॥ १९
तदाशु शंस सर्वं मे कारणं मुख्यतोऽनघ । एवं वदन्तं नृपतिर्वृत्तान्तं सर्वमादितः ॥ २०
शशंस लक्ष्मणं क्षिप्रं दुःखपूरपरिप्लुतम् । लक्ष्मणस्तद्वचः श्रुत्वा सीतायास्त्यागसंभवम् ॥ २१
निश्वसन्मुहुरुच्छ्वसंस्तब्धगात्र इवाभवत् । भ्रातरं स्तब्धगात्रं च कम्पमानं मुहुर्मुहुः ॥ २२
न किंचन वदन्तं तं वीक्ष्य शोकार्दितोऽब्रवीत् । किं करिष्याम्यहं भूमौ स्थित्वा दुर्यशसाऽङ्कितः

---

१ छ. ज. झ. ॰प्लुतः । ल॰ ।

त्यजामि स्वं वपुः श्रीमल्लोकभीत्या च शोकवान् । सर्वदा भ्रातरो मह्यं वाक्यंकरा विचक्षणाः ॥
इदानीं तेऽपि दैवेन प्रतिकूलवचःकराः । कुत्र गच्छामि किं यामि हसिष्यन्ति नृपा भुवि ॥ २५
दुर्यशोलाञ्छितं वै मां कुष्ठिनं रूपवन्नराः । मनोर्वंशे पुरा भूपा जाता जाता गुणाधिकाः ॥ २६
इदानीं मयि जाते तु विपरीतं बभूव तत् । इति संभाषमाणं तं रामभद्रं समीक्ष्य सः ॥ २७
संस्तभ्याश्रूणि विपुलान्युवाच विकलस्वरः । स्वामिन्विषादं मा कार्षीः कथं तव मतिर्हृता ॥२८
सीतामनिन्दितां को नु त्यजति श्रुतवान्भवान् । आकारयामि रजकं परिपृच्छामि तं प्रति ॥२९
कथं त्वया निन्दिता सा जानकी योषितां वरा । तव देशे बलात्कश्चिद्बाध्यते न जनोऽल्पकः ॥
तस्मात्तस्य यथा स्वान्ते प्रतीतिः स्यात्तथाऽऽचर । किमर्थं त्यज्यते भीरुः पतिव्रतपरायणा ॥३१
मनसा वचसा नान्यं जानाति जनकात्मजा । तस्मादेनां गृहाण त्वमेतां मा त्यज जानकीम् ॥३२
ममोपरि कृपां कृत्वा मदुक्तं संश्रयाऽऽशु तत् । एवं वदन्तं प्रत्यूचे रामः शोकेन कर्षितः ॥
लक्ष्मणं धर्मवाक्येन बोधयंस्त्यजनोद्यमः ॥ ३३

श्रीराम उवाच—

कथं तु मां ब्रवीषि त्वं मा त्यजैनामनिन्दिताम् । लोकापवादात्त्यक्ष्येऽहं जानन्नपि विपापिनीम् ३४
स्वयशःकारणेऽहं स्वं देहं त्यक्ष्यामि शोभनम् । त्वामपि भ्रातरं त्यक्ष्ये लोकवादाद्विगर्हितम् ३५
किमुतान्ये गृहाः पुत्रा मित्राणि वसु शोभनम् । स्वयशःकारणे सर्वं त्यजामि किमु मैथिलीम् ३६
न तथा मे प्रियो भ्राता न कलत्रं न बान्धवाः । यथा मे विमला कीर्तिर्वल्लभा लोकविश्रुता ३७
इदानीं रजको नाद्य प्रष्टव्यो भवति ध्रुवम् । कालेन सर्वं भविता लोकचित्तस्य रञ्जनम् ॥ ३८
आमयो यद्वदामस्तु न चिकित्स्यो भवेत्क्षितौ । स कालेन परीपाकाद्भेषजादेव नश्यति ॥ ३९
तथा कालेन संभावि सांप्रतं मा विलङ्घय । त्यजैनां विपिने साध्वीं मां वा खड्गेन घातय ॥४०
इत्युक्तं वाक्यमाकर्ण्य दुःखितोऽभूत्क्षणं तदा । चिन्तयामास च स्वान्ते लक्ष्मणः शोककर्षितः ॥
पित्राज्ञातो जामदग्न्यो मातरं घातयन्नभूत् । गुरोराज्ञा न वै लङ्घ्या युक्ताऽयुक्ताऽपि सर्वथा ४२
तस्मादेनां त्यजाम्येव रामस्य प्रियकाम्यया । इति संचिन्त्य मनसि भ्रातरं प्रत्युवाच सः ॥ ४३

लक्ष्मण उवाच—

अकृत्यमपि कार्यं वै गुर्वाज्ञां नैव लङ्घयेत् । तस्मात्कुर्वे भवद्वाक्यं यत्त्वं वदसि सुव्रत ॥ ४४
इत्येवं भाषमाणं च लक्ष्मणं प्रत्युवाच सः । साधु साधु महाप्राज्ञ त्वया मे तोषितं मनः ॥ ४५
अद्यैव रात्रौ जानक्या दोहदस्तापसीक्षणे । तन्मिषेण रथे स्थाप्य मोचयैनां महामते ॥ ४६
इत्थं भाषितमाकर्ण्य विक्षुब्ध्यद्वदनोऽभितः । रुदन्बाष्पकला मुञ्चञ्जगाम स्वनिवेशनम् ॥ ४७
सुमन्त्रं तु समाहूय वचनं तमथाब्रवीत् । रथं मे कुरु सज्जं वै सदश्वाम्बरभूषितम् ॥ ४८
स तद्वाक्यं समाकर्ण्य रथमानीतवांस्तदा । आनीतं तं रथं दृष्ट्वा लक्ष्मणः शोककर्षितः ॥ ४९
परमं दुःखमापन्नः संरुह्य स्यन्दनं वरम् । निश्वसञ्जानकीगेहं प्रतस्थे भ्रातृसेवकः ॥ ५०
गत्वा चान्तःपुरे भ्राता रामस्य मिथिलात्मजाम् । प्रत्यूचे निश्वसन्वाक्यं दुःखपूरपरिप्लुतः ५१

लक्ष्मण उवाच—

मातर्जानकि रामेण प्रेषितो भवनं तव । तापसीः प्रति याहि त्वं दोहदप्राप्तिहेतवे ॥ ५२

१ ङ. °न् । शोकवन्तो भ्रातरो मे कर्तव्ये मूढचेतसः । इ° । २ झ.ञ. °न्युद्गतवि° । ३ ङ. °णि सुहृदस्तथा । स्व° ।
४ ख. ग. छ. ञ. ठ. ड. ण. त. थ. द. ध. विलम्बय । ५ ङ. °र्णं शुष्यद्वदनपङ्कजः । रु° ।

इति वाक्यं समाकर्ण्य लक्ष्मणस्य विदेहजा । परमं हर्षमापन्ना लक्ष्मणं प्रत्यभाषत ॥ ५३

जानक्युवाच—

धन्याऽहं मैथिली राज्ञी रामस्य चरणस्मरा । यस्या दोहदपूर्त्यर्थं प्रेषयामास लक्ष्मणम् ॥ ५४
अद्याहं ता वनचरीस्तापसीः पतिदेवताः । नमस्कुर्यां च वासोभिः पूजयामि मनोहराः ॥ ५५
इत्युक्त्वा रम्यवस्त्राणि महार्हाभरणानि च । मणीन्विमलमुक्ताश्च कर्पूरादि सुगन्धवत् ॥ ५६
चन्दनादिकवस्तूनि विचित्राणि सहस्रधा । जग्राह रघुनाथस्य पत्नी प्रियकरी वरा ॥ ५७
सीता गृहीत्वा सर्वाणि दासीनां करयोर्मुहुः । लक्ष्मणं प्रतिगच्छन्ती देहल्यां चास्खलत्तदा॥५८
अविचार्य तदौत्सुक्याल्लक्ष्मणं प्रियकारिणम् । उवाच कुत्र स रथो येन मां प्रापयिष्यसि॥ ५९
स निश्वसन्रथं[*हैमं जानक्या सह निर्विशन् । सुमन्त्रं प्रत्युवाचासौ चालयाश्वान्मनोहरान् ६०
स तु युक्तं रथं] वाक्याल्लक्ष्मणस्य सुचालयन् । अश्रुपूर्णमुखं वीरं लक्ष्मणं समलोकयत् ॥ ६१
आहतास्तेन कशया वाहास्तस्यापतन्पथि । न चलन्ति यदा वाहास्तदा लक्ष्मणमब्रवीत् ॥ ६२

सुमन्त्र उवाच—

स्वामिंश्चलन्ति नो वाहा यत्नेन परिचालिताः । किं करोमि न जानेऽत्र कारणं वाहपातने ६३
एवं ब्रुवन्तं प्रत्यूचे लक्ष्मणो गद्गदस्वरः । सारथिं धैर्यमास्थाय ताडयैतान्कशादिभिः ॥ ६४
एतच्छ्रुत्वोदितं यन्ता कथंचिच्चालयन्नभूत् । तदाऽस्फुरद्दक्षनेत्रं जानक्या दुःखशंसकम् ॥ ६५
तदैव हृदये शोकः समभूद्दुःखशंसकः । तदैव पक्षिणः पुण्याः कुर्वन्ति परिवर्तनम् ॥ ६६
एवं वीक्ष्यैव वैदेही प्रत्युवाचाथ देवरम् । कथं मे तापसीर्द्रष्टुं वै यातुमिच्छोरघंकरम् ॥ ६७
रामे भूयाद्धि कल्याणं भरते वा तवानुजे । तत्प्रजासु च सर्वत्र मा भवन्तु विपर्ययाः ॥ ६८
एवं ब्रुवतीं संवीक्ष्य जानकीं स तु लक्ष्मणः । न किंचिदुक्तवान्रुद्धकण्ठो बाष्पप्रपूरितः ॥ ६९
सा गच्छन्ती मृगान्वामपरिवर्तनकारकान् । अपश्यद्दुःखसंघातकारकान्समभाषत ॥ ७०

जानक्युवाच—

अद्य यन्मे मृगा वामं वर्तयन्ति तदीक्ष्यते । श्रीरामचरणौ मुक्त्वा गच्छन्त्या युक्तमेव तत् ॥ ७१
महिलानां परो धर्मः स्वभर्तृचरणार्चनम् । तन्मुक्त्वाऽन्यत्र यान्त्या मे यद्भवेद्युक्तमेव तत् ॥ ७२
एवं पथि विचारं तु कुर्वत्या परमार्थतः । जाह्नवी ददृशे देव्या मुनिवृन्दैकसेविता ॥ ७३
यस्यां जलस्य कल्लोला दृश्यन्ते दुग्धसंनिभाः । तरङ्गो दृश्यते यत्र स्वर्गसोपानमूर्तिभृत् ॥ ७४
यस्या वारिकणस्पर्शान्महापातकसंचयः । पलायते न कुत्रापि स्थानमीक्षन्समन्ततः ॥ ७५
गङ्गां प्राप्याथ सौमित्रिर्जानकीं स्यन्दनस्थिताम् । उवाच निर्गलद्बाष्प एहि सीते तरोर्मिलाम् (रथाद्भुवि)
सीता तद्वाक्यमाकर्ण्य क्षणादवततार सा । लक्ष्मणेन धृता बाहौ स्खलन्ती पथि कण्टकैः ॥ ७७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे जानक्या गङ्गादर्शनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥५८॥

आदितः श्लोकानां समष्ट्यङ्काः—१४२७८

---

* एतच्चिह्नान्तर्गतः पाठः ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

---

१ द. न. ल्लीं स्वप्रियकाम्यया । सीं । २ म. तदिष्य ।

अथैकोनषष्टितमोऽध्यायः ।

शेष उवाच—

अथ नावा समुत्तीर्य जाह्नवीं लक्ष्मणस्तदा । जानकीं परतस्तीरे हस्ते धृत्वा ययौ वनम् ॥ १
सा चलन्ती पथि तदा शुष्यद्वदनलक्षिता । कण्टकक्षतसत्पादा स्खलन्ती च[1] पदे पदे ॥ २
लक्ष्मणस्तां महाघोरे विपिने दुःखदायिनि । प्रवेशयामास तदा राघवाज्ञाविशारदः ॥ ३
यत्र वृक्षा महाघोरा बुब्बूराः खदिरा धवाः[2] । श्लेष्मातका[3]श्विणीकाश्च शुष्का दावेन वह्निना ॥ ४
कोटरस्था महासर्पाः फूत्कुर्वन्ति सुकोपिताः । [*घूका घूत्कुर्वते यत्र लोकचित्तभयंकराः ॥ ५
व्याघ्राः सिंहाः शृगालाश्च द्वीपिनोऽतिभयंकराः । दृश्यन्ते [4]यत्रासहना मनुष्यादाः सुकोपनाः ]
महिषाः शूकरा दुष्टा दंष्ट्राद्वयविलक्षिताः । कुर्वन्ति प्राणिनां तापं मानसस्य मदोत्कुराः ॥ ७
ईदृग्वनं प्रपश्यन्ती भयेनोपगतज्वरा । कण्टकादष्टचरणा लक्ष्मणं वाक्यमब्रवीत् ॥ ८

जानक्युवाच—

वरर्षिमुनिसंसेव्यानाश्रमान्नेत्रसौख्यदान् । नाहं पश्यामि नो तेषां पत्नीश्च सुतपोधनाः ॥ ९
[†पश्यामि केवलं घोरान्पक्षिणः शुष्कवृक्षकान् । दावानलेन सर्वत्र दह्यमानमिदं वनम् ॥] १०
त्वां च पश्यामि दुःखार्तमश्रुपूर्णाकुलेक्षणम् । शकुनेतरसाहस्रं भवेन्मम पदे पदे ॥ ११
तन्मे कथय वीराद्य कथं मुक्ता महात्मना । रामेण दुष्टहृदया क्षिप्रं कथय मे हि तत् ॥ १२
इति वाक्यं समाकर्ण्य लक्ष्मणः शोककर्शितः । संरुद्धबाष्पनयनो न किंचित्प्रोक्तवांस्तदा ॥ १३
तदैवं विपिनं घोरं गच्छन्ती लक्ष्मणान्विता । पुनरप्याह तं वीरं [6]दुःखार्ते +पश्यती [7]मुखम् ॥ १४
तदाऽपि स न तां वक्ति किमपि प्रेक्षयन्स्थितः । तदाऽसावतिनिर्बन्धं चकार परि[8]पृच्छती ॥ १५
आग्रहेण यदा पृष्टो लक्ष्मणः सीतया तदा । रुद्धकण्ठो मुहुः शोचन्नवदत्त्यागसंभवम् ॥ १६
तद्वाक्यं पविना तुल्यं निशम्य मुनिसत्तम । सुलता कृत्तमूलेव बभूवाऽऽकल्पवर्जिता ॥ १७
तदैव पृथिवी तां न जग्राह तनयामिमाम् । रामो विपापिनीं सीतां न जह्यादितिशङ्किनी ॥ १८
पतितां तां तु वैदेहीं दृष्ट्वा सौमित्रिरुत्सुकः । पल्लवाग्रसमीरेण संज्ञितां तु चकार सः ॥ १९
संज्ञां प्राप्ता प्रत्युवाच मा[9] हास्यं कुरु देवर । कथं मां पापरहितां त्यजते स रघूद्वहः ॥ २०
एवं बहु विलप्याथ लक्ष्मणं दुःखसंयुतम् । संवीक्ष्य मूर्छिता भूमौ पपात परिदुःखिता ॥ २१
मुहूर्तेनापि संज्ञां सा प्राप्य दुःखपरिप्लुता । जगाद रामचरणौ स्मरन्ती शोकविक्षता ॥ २२

जानक्युवाच—

रघुनाथो महाबुद्धिस्त्यजते मां कथं महान् । यो मदर्थे पयोराशिं बद्धवान्वानरैर्युतः ॥ २३
स कथं मां महावीरो निष्पापां रजकोक्तितः । त्यजिष्यति ममैवात्र दैवं तु प्रतिकूलितम् ॥ २४
एवं वदन्ती पुनरपि मूर्छां प्राप्ता विदेहजा । मूर्छितां तां समीक्ष्यायं रुरोद विकृतस्वरः ॥ २५

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. न. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः ख. ग. छ. ज. ठ. ड. ण. त. थ. द. ध. न. पुस्तकस्थः । + नुमभाव आर्षः ।

१ द. न. °विधायकः । य° । २ द. न. घनाः । ३ क. ख. ग. ज. झ. ठ. त. थ. द. ध. न. °श्विश्विणीकाः शु° । ४ ङ. ञ. यत्र सरला म° । ५ क. ख. ग. च. ज. ञ. ठ. ण. त. द. ध. न. °त् । वीरार्षे° । थ. °त् । वीरात्र मु° । ६ ङ. ञ. दुःखार्ता । ७ ङ. ञ. महत् । ८ न °रिमूर्छिता । आ° । ९ ञ. °हात्म्यं कु° ।

पुनः संज्ञामवाप्यैवं सौमित्रिं निजगाद सा । दुःखातुरं वीक्षमाणा रुद्धकण्ठं सुदुःखिता ॥ २६
सौमित्रे गच्छ रामं त्वं धर्ममूर्तिं यशोनिधिम् । मद्वाक्यमेकमाब्रूयाः समक्षं तपसां निधेः ॥ २७
मां तत्याज भवान्यद्वै जानन्नपि विपापिनीम् । कुलस्य सदृशं किंवा शास्त्रज्ञानस्य तत्फलम् २८
नित्यं तव पदे रक्तां त्वदुच्छिष्टभुजं हि माम् । भवांस्तत्याज तत्सर्वं मम दैवं तु कारणम् ॥ २९
कल्याणं तव सर्वत्र भूयाद्वीरवरोत्तम । अहं तावद्वने त्वां हि स्मरन्ती प्राणधारिका ॥ ३०
मनसा कर्मणा वाचा भवानेव ममोत्तमः । अन्ये तुच्छीकृताः सर्वे मनसा रघुवंशज ॥ ३१
भवे भवे भवानेव पतिर्भूयान्महेश्वर । त्वत्पादस्मरणानेकहतपापा सतीश्वरी ॥ ३२
[*श्वश्रूजनं वदेः सर्वं मत्संदेशं रघूत्तम । त्यक्ता वने महाघोरे रामेण निरघा सती ] ॥ ३३
स्मरामि चरणौ युष्मद्वने मृगगणैर्युते । अन्तर्वत्नी वने त्यक्ता रामेण सुमहात्मना ॥ ३४
सौमित्रे शृणु मद्वाक्यं भद्रं भूयाद्रघूत्तमे । इदानीं संत्यजे प्राणान्रामवीर्यं सुरक्षती ॥ ३५
त्वं रामवचनं तथ्यं यत्करोषि शुभं तव । परतन्त्रेण तत्कार्यं रामपादाब्जसेविना ॥ ३६
गच्छ त्वं रामसविधे शिवाः पन्थान एव ते । ममोपरि कृपा कार्या स्मर्तव्याऽहं कदा कदा ३७
इत्युक्त्वा मूर्छिता भूमौ पपात पुरतस्ततः । लक्ष्मणो दुःखमापेदे वीक्ष्य मूर्छितजानकीम् ॥ ३८
वीजयामास वासोग्रैः संज्ञां प्राप्तां प्रेकृत्य च । सौमित्रिः सान्त्वयामास वचनैर्मधुरैर्मुहुः ॥ ३९

लक्ष्मण उवाच—

एष गच्छामि रामं वै गत्वा शंसामि सर्वशः । समीपे ते मुनेरस्ति वाल्मीकेराश्रमो महान् ॥ ४०
इत्युक्त्वा तां परिक्रम्य दुःखितो बाष्पपूरितः । मुञ्चन्नश्रुकला दुःखाद्ययौ रामं महीपतिम् ॥ ४१
जानकी देवरं यातं वीक्ष्य विस्मितलोचना । हसत्ययं महाभागो लक्ष्मणो देवरो मम ॥ ४२
कथं मां प्राणतः प्रेष्ठां विपापां राघवस्त्यजेत् । इति संचिन्तयन्ती सा तमैक्षदनिमेषणा ॥ ४३
जाह्नवीं सर्वथोत्तीर्णां ज्ञात्वा सत्यं स्वहापनम् । पतिता प्राणसंदेहं प्राप्ता मूर्छाऽपि तां तदा ॥ ४४
तदा हंसाः स्वपक्षाभ्यां जलमानीय सर्वतः । सिषिचुर्मधुरो वायुर्ववौ पुष्पसुगन्धवान् ॥ ४५
करिणः पुष्करैः स्वीयैर्जलपूर्णैः समन्ततः । व्याप्तं शरीरं रजसा क्षालयन्त इवाऽऽगताः ॥ ४६
मृगास्तदन्तिकं प्राप्य संतस्थुर्विस्मितेक्षणाः । नगाः पुष्पयुता आसंस्तत्कालं मधुना विना ४७
एतस्मिन्समये वृत्ते संज्ञां प्राप्य तदा सती । विललाप मुहुर्दुःखाद्राम रामेति जल्पती ॥ ४८
हा नाथ दीनबन्धो हे करुणापयसां निधे । अपराधादृते मां त्वं कथं त्यजसि वै वने ॥ ४९
इत्येवमादि भाषन्ती विलपन्ती मुहुर्मुहुः । इतस्ततः प्रपश्यन्ती संमूर्छन्ती पुनः पुनः ॥ ५०
तदा स्वशिष्यैर्भगवान्वाल्मीकिः संगतो वनम् । शुश्राव रुदितं तत्र करुणास्वरभाषितम् ॥ ५१
शिष्यान्प्रति जगादाथ पश्यन्तु वनमध्यतः । को रोदिति महाघोरे विपिने दुःखितस्वरः ॥ ५२
ते प्रयुक्तास्तु मुनिना संजग्मुर्यत्र जानकी । राम रामेति भाषन्ती बाष्पपूरपरिप्लुता ॥ ५३
तां दृष्ट्वा स्त्रियमौत्सुक्याद्वाल्मीकिं प्रत्यगुर्मुनिम् । श्रुत्वा तदीरितं वाक्यं जगामासौ ततो मुनिम्
दृष्ट्वाऽऽसौ तपसां राशिं जानकी पतिदेवता । नमोऽस्तु मुनये वेदमूर्तये व्रतवार्धये ॥ ५५
इत्युक्तवतीं वै सीतामाशीर्भिरभ्यनन्दयत् । भर्त्रा सह चिरं जीव पुत्रौ प्राप्नुहि शोभनौ ॥ ५६
काऽसि त्वं किं वने घोरे संगताऽसि किमीदृशी । सर्वं मे शंस जानीयां तव दुःखस्य कारणम् ५७

* एतच्चिह्नान्तर्गतः पाठः, छ. झ. द. न. पुस्तकस्थः ।

१ क. ख. ग. घ. छ. म, ठ. ड. ण. द. ध. °न्महीश्व° । २ द. न. प्रणम्य ।

तदा सा प्रत्युवाचेमं रामस्य महिला मुनिम् । निश्वसती करुणया गिरा संजातवेपथुः ॥ ५८
शृणु मे वाक्यमर्थोक्तं सर्वदुःखस्य कारणम् । जानीहि मां भूमिपते रघुनाथस्य सेविकाम् ५९
अपराधं विना त्यक्तां न जाने तत्र कारणम् । लक्ष्मणो मां विमुच्यात्र गतवान्राघवाज्ञया ॥ ६०
इत्युक्त्वाऽश्रुकलापूर्णं बिभ्रतीं मुखपङ्कजम् । वाल्मीकिः सान्त्वयन्प्राह जानकीं कमलेक्षणाम् ६१

वाल्मीकिरुवाच—

वाल्मीकिं मां विजानीहि पितुस्तव गुरुं मुनिम् । दुःखं मा कुरु वैदेहि ह्यागच्छ मम चाऽऽश्रमम्
भिन्नस्थाने पितुर्गेहं जानीहि पतिदेवते । ईदृशे कर्मणि मम रोषोऽस्त्येव महीपतेः ॥ ६३
एवं वचनमाकर्ण्य जानकी पतिदेवता । दुःखपूर्णाश्रुवदना किंचित्सुखमवाप सा ॥ ६४

शेष उवाच—

वाल्मीकिः सान्त्वयित्वैनां दुःखपूर्णाकुलेक्षणाम् । निनाय चाऽऽश्रमं पुण्यं तापसीवृन्दपूरितम् ६५
सा गच्छन्ती पृष्ठतोऽस्य वाल्मीकेस्तपसां निधेः । रराजेन्दोः पृष्ठतो वै तारेव सुमनोहरा ॥ ६६
वाल्मीकिः प्राप्य च स्वीयमाश्रमं मुनिपूरितम् । तापसीः प्रति संचख्यौ जानकीं स्वाश्रमं गताम्
वैदेही तापसीः सर्वा नमश्चक्रे महामनाः । परस्परं प्रहृष्य ताः परिरम्भं समाचरन् ॥ ६८
वाल्मीकिर्निजशिष्यांस्तु प्रत्युवाच तपोनिधिः । रच्यतां बत जानक्याः पर्णशाला मनोरमा ॥ ६९
इत्युक्तं वाक्यमाकर्ण्य वाल्मीकेः सुमनोरमम् । व्यरचन्पत्रकैः शालां दारुभिः सुमनोरमाम् ॥ ७०
तत्रावसद्विदेहोत्थाः पतिव्रतपरायणा । वाल्मीकेः परिचर्यां च कुर्वती फलभक्षिका ॥ ७१
रामरामजपन्त्याशु मनसा वचसा स्वयम् । निनाय दिवसांस्तत्र जानकी पतिदेवता ॥ ७२
काले साऽसूत पुत्रौ द्वौ मनोहरवपुर्धरौ । रामचन्द्रप्रतिनिधी ह्यश्विनाविव जानकी ॥ ७३
तच्छ्रुत्वा तु मुनिर्हृष्यञ्जानक्याः पुत्रसंभवम् । चकार जातकर्मादिसंस्कारान्मन्त्रवित्तमः ॥ ७४
कुशैर्लवैश्च वाल्मीकिर्मुनिः कर्माणि चाऽऽचरत् । तन्नाम्ना पुत्रयोराख्या कुशो लव इति स्फुटा ॥
वाल्मीकिर्यत्र विरजा मङ्गलं तदथाऽऽचरत् । अत्यन्तहृष्टचेतस्का बभूव सुमुखेक्षणा ॥ ७६
तद्दिने लवणं हत्वा शत्रुघ्नः स्वल्पसैनिकः । आगमच्चाऽऽश्रमे चास्य वाल्मीकेर्निशि शोभने ॥ ७७
तदा वाल्मीकिना शिष्टः शत्रुघ्नो रघुनायकम् । मा शंस जानकीपुत्रौ कथयिष्याम्यहं पुरः ॥ ७८
जानकीपुत्रकौ तत्र ववृधाते मनोरमौ । कन्दमूलफलैः पुष्टौ व्यदधादुन्मन्दौ वरौ ॥ ७९
शुक्लप्रतिपदायाश्च शशीव सुमनोहरौ । कालेन संस्कृतौ जातावुपनीतौ मनोहरौ ॥ ८०
उपनीय मुनिर्वेदं साङ्गमध्यापयत्सुतौ । सरहस्यं धनुर्वेदं रामायणमपाठयत् ॥ ८१
वाल्मीकिना च धनुषी दत्ते स्वर्णसुभूषिते । अभेद्ये सुगुणे श्रेष्ठे वैरिवृन्दसुदारुणे ॥ ८२
इषुधी बाणसंपूर्णे अक्षये करवालके । चर्माण्यभेद्यानि ददौ जानक्यात्मजयोस्तदा ॥ ८३
धनुर्धरौ धनुर्वेदपारगावाश्रमे मुदा । चरन्तौ तत्र रेजाते ह्यश्विनाविव शोभनौ ॥ ८४
जानकी वीक्ष्य पुत्रौ द्वौ खड्गचर्मधरौ वरौ । परमं हर्षमापन्ना विरहोद्भवमत्यजत् ॥ ८५
एष ते कथितो विप्र जानक्याः पुत्रसंभवः । अतः शृणुष्व यद्वृत्तं वीरबाहुविकृन्तनात् ॥ ८६

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे कुशलवोत्पत्तिर्नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४३६४

१ ण. भिन्नस्थाने । २ ङ. ज. °पवीतादिना मुने । उ° । ३ छ. ड. °ष्ठे वीरवृ° ।

अथ षष्टितमोऽध्यायः ।

शेष उवाच—

शत्रुघ्नो निजवीराणां भुजाः कृत्तान्निरीक्षयन् । उवाच तान्सुकुपितो रोषसंदंशिताधरः ॥ १
केन वीरेण वो बाहुकृन्तनं समकारि भोः । तस्याहं बाहू कृन्तामि देवगुप्तस्य वै भटाः ॥ २
न जानाति महामूढो रामचन्द्रबलं महत् । इदानीं दर्शयिष्यामि पराक्रान्त्या बलं स्वकम् ॥ ३
स कुत्र वर्तते वीरो हयः कुत्र मनोरमः । को वाऽगृह्णात्सुमसर्पान्मूढोऽज्ञात्वा पराक्रमम् ॥ ४
इति ते कथिता वीरा विस्मिता दुःखिता भृशम् । रामचन्द्रप्रतिनिधिं बालकं समशंसत ॥ ५
स श्रुत्वा रोषताम्राक्षो बालकेन हयं हृतम् । सेनान्यं वै कालजितमाज्ञापयद्युयुत्सुकः ॥ ६

शत्रुघ्न उवाच—

सेनानीः सकलां सेनां व्यूहयस्व ममाऽऽज्ञया । रिपुः संप्रति गन्तव्यो महाबलपराक्रमः ॥ ७
नायं बालो हरिर्नूनं भविष्यति हयंधरः । अथवा त्रिपुरारिः स्यान्नान्यथा मद्धयापहृत् ॥ ८
अवश्यं कदनं भावि सैन्यस्य बलिनो महत् । स्वच्छन्दचरितैः खेलन्नास्ते निर्भयधीः शिशुः॥९
तत्र गन्तव्यमस्माभिः संनद्धै रिपुदुर्जयैः । एतन्निशम्य वचनं शत्रुघ्नस्य स सैन्यपः ॥ १०
सज्जीचकार सेनां तां दुर्व्यूढां चतुरङ्गिणीम् । सज्जां च शत्रुजिद्दृष्ट्वा चतुरङ्गयुतां वराम् ॥ ११
आज्ञापयत्ततो गन्तुं यत्र बालो हयंधरः । सा चचाल तदा सेना चतुरङ्गसमन्विता ॥ १२
कम्पयन्ती महीभागं[1] त्रासयन्ती रिपून्बलात् । सेनानीस्तं ददर्शाथ बालकं रामरूपिणम् ॥ १३
विचार्य रामप्रतिममब्रवीद्वचनं हितम् । बाल मुञ्च हयं श्रेष्ठं रामस्य बलशालिनः ॥ १४
सेनानीः कालजिन्नाम तस्य भूपस्य दुर्मदः । त्वां रामप्रतिमं दृष्ट्वा कृपा मे जायते हृदि ॥ १५
अन्यथा तत्र मे दौस्थ्याज्जीवितं न भविष्यति । एतद्वाक्यं समाकर्ण्य शत्रुघ्नस्य भटस्य हि ॥१६
जहास किंचिदाकोपादुवाच च वचोऽद्भुतम् । गच्छ मुक्तोऽसि तं रामं कथयस्व हयग्रहम् ॥१७
त्वत्तो बिभेमि नो शूर वाक्येन नयशालिना । ममात्र गणना नास्ति त्वादृशाः कोटयो यदि१८
मातृपादप्रसादेन तूलीभूता न संशयः । कालजित्तव यन्नाम मात्राऽकारि मनोज्ञया(कम्)॥ १९
पक्वबिम्बफलस्येव वर्णतो न च वीर्यतः । दर्शयस्वाधुना वीर्यं स्वनामबलचिह्नितः ॥
मां कालं तव संजित्य सत्यनामा भविष्यसि ॥ २०

शेष उवाच—

स वाक्यैः पविना तुल्यैर्भिन्नः सुभटशेखरः । चुकोप हृदयेऽत्यन्तं जगाद वचनं पुनः ॥ २१

कालजिदुवाच—

कस्मिन्कुले समुत्पत्तिः किंनामाऽसि च बालक । त्वन्नाम नाभिजानामि कुलं शीलं वयस्तथा २२
पादचारं रथस्थोऽहमधर्मेण कथं जये । तदाऽत्यन्तं प्रकुपितो जगाद वचनं पुनः ॥ २३

लव उवाच—

कुलेन किं च शीलेन नाम्ना च[2] वयसा भट । लवोऽहं लवतः सर्वाञ्जेष्यामि रिपुसैन्यकान्॥२४
इदानीं त्वामपि भटं करिष्ये पादचारिणम् । इत्थमुक्त्वा धनुः सज्जं चकार स लवो बली॥२५

---

१ क. ख. घ. ङ. च. छ. झ. ञ. ट. ठ. ड ढ त. थ. द. ध. म. महीपालं । ग. ण. महीतलं । ज. क्षितितलं ।
२ झ. ञ. च सुमनोहृदा । लं° । न. च किं विधीयताम् । लं° ।

टङ्कारयामास तदा वीरानाकम्पयन्हृदि । वाल्मीकिं प्रथमं स्मृत्वा जानकीं मातरं लवः ॥ २६
मुमोच बाणान्निशितान्सद्यःप्राणापहारिणः । कालजित्स्वधनुः कृत्वा सज्जं कोपसमन्वितः॥ २७
ताडयामास जवनो लवं रणविशारदः । तद्बाणाञ्शतधा छित्त्वा क्षणाद्वेगात्कुशानुगः ॥ २८
सेनान्यं विरथं चक्रे वसुभिर्बाणसंचयैः । विरथो गजमानीतमारुरोह भटैर्निजैः ॥ २९
मदोन्मत्तं महावेगं सप्तधाप्रस्रवान्वितम् । गजारूढं तु तं दृष्ट्वा दशभिर्धनुषो गतैः ॥ ३०
बाणैर्विव्याध विहसन्सर्वान्रिपुगणाञ्जयी । कालजित्तस्य वीर्यं तु दृष्ट्वा विस्मितमानसः ॥ ३१
गदां मुमोच महतीं महायसविनिर्मिताम् । आपतन्तीं गदां वेगाद्भारायुतविनिर्मिताम् ॥ ३२
त्रिधा चिच्छेद तरसा क्षुरप्रैः स कुशानुजः । परिघं निशितं घोरं वैरिप्राणहरोदितम् ॥ ३३
मुक्तं पुनस्तेन लवश्चिच्छेद तरसाऽन्वितः । छित्त्वा तत्परिघं घोरं कोपादारक्तलोचनः ॥ ३४
गजोपस्थे समारूढं मन्यमानश्चुकोप ह । तत्क्षणादच्छिनत्तस्य शुण्डां खड्गेन दन्तिनः ॥ ३५
दन्तयोश्चरणौ धृत्वाऽऽरुरोह गजमस्तके । मुकुटं शतधा कृत्वा कवचं तु सहस्रधा ॥ ३६
केशेष्वाकृष्य सेनान्यं पातयामास भूतले । पातितः स गजोपस्थात्सेनानीः कुपितः पुनः ॥ ३७
हृदये ताडयामास मुष्टिना वज्रमुष्टिना । स आहतो मुष्टिभिस्तु क्षुरप्रान्निशिताञ्शरान् ॥ ३८
मुमोच हृदये क्षिप्रं कुण्डलीकृतधन्ववान् । स रराज रणोपान्ते कुण्डलीकृतचापवान् ॥ ३९
शिरस्त्रं कवचं बिभ्रदभेद्यं शरकोटिभिः । स विद्धः सायकैस्तीक्ष्णैस्तं हन्तुं खड्गमाददे ॥ ४०
दशन्रोषात्स्वदशनान्निश्वसन्नुच्छ्वसन्मुहुः । खड्गहस्तं समायान्तं शूरं सेनापतिं लवः ॥ ४१
चिच्छेद भुजमध्यं च सखड्गः पाणिरापतत् । छिन्नं खड्गधरं हस्तं वीक्ष्य कोपाच्चमूपतिः ॥ ४२
वामेन गदया हन्तुं प्रचक्राम भुजेन तम् । सोऽपि च्छिन्नो भुजस्तस्य साङ्गदस्तीक्ष्णसायकैः ४३
तदा प्रकुपितो वीरः पादाभ्यामहनल्लवम् । लवः पादाहतस्तस्य न चचाल रणाङ्गणे ॥ ४४
स्रजा हतो द्विप इव चरणच्छेदनं व्यधात् । तदाऽपि तं मौलिनाऽसौ प्रहर्तुं तु प्रचक्रमे ॥ ४५
तदा लवश्चमूनाथं मन्यमानोऽधिपौरुषम् । करवालं समादाय करे कालानलोपमम् ॥ ४६
अच्छिनच्छिर एतस्य महामुकुटशोभितम् । हाहाकारो महानासीच्चमूनाथे निपातिते ॥ ४७
सैनिकाः परमं क्रुद्धा लवं हन्तुमगुः क्षणात् । [*लवस्तान्स्वशराघातैः पलायनपरान्व्यधात् ४८
छिन्ना भिन्नाङ्गकाः केचिद्गताः केचिद्रणाङ्गणात्]।स निवार्याखिलान्योधान्विजगाह चमूं मुदा ४९
वाराह इव निश्वस्य प्रलयेषु महार्णवम् । गजा भिन्ना द्विधा जाता मौक्तिकैः पूरिता मही॥ ५०
दुर्गमाऽभूद्धटाग्र्याणां पर्वतैर्व्यापृता यथा । अश्वाः कनकपल्याणा रुचिरा रत्नराजिताः ॥ ५१
अपतन्रुधिरक्लिष्टे ह्रदे बलसुशोभिताः । रथिनः करमध्यस्थधनुर्दण्डसुशोभिताः ॥ ५२
रथोपस्थे निपतिताः स्वर्गगा इव वै सुराः । संदष्टौष्ठपुटा वक्त्रभ्रमल्लक्ष्मीविलक्षिताः ॥ ५३
पतितास्तत्र दृश्यन्ते वीरा रणविशारदाः । सुस्राव शोणितसरिद्धयमस्तककच्छपा ॥ ५४
महाप्रवाहलसिता वैरिणां भयकारिका । केषांचिद्बाहवश्छिन्नाः केषां पादा निकर्तिताः ॥ ५५
केषां कर्णश्च नासाश्च केषां कवचकुण्डले । एवं तु कदनं जातं सेनान्यां पतिते रणे ॥ ५६
सर्वेऽपि पतिता वीरा न केचिज्जीवितास्ततः । लवो रणे जयं प्राप्य वैरिवृन्दं विजित्य च॥ ५७

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ञ. ठ. ड. ण. त. थ. द. ध. न. पुस्तकस्थः ।

१ थ. °क्रे बहुभि° । २ द. न. °सुभिः स्वशरोत्तमैः । वि° । ३ झ. बद्धः ।

अन्यागमनशङ्कायां मनः कुर्वन्नवैक्षत । केचिदुर्वरिता युद्धाद्भाग्येन न रणे मृताः ॥ ५८
शत्रुघ्नसंनिधौ जग्मुः शंसितुं वृत्तमद्भुतम् । गत्वा ते कथयामासुर्यथा वृत्तं रणाङ्गणे ॥ ५९
कालजिन्निधनं बालाच्चित्रकारिरणोद्यमम् । तच्छ्रुत्वा विस्मयं प्राप्तः शत्रुघ्नस्तानुवाच ह ॥ ६०
हसन्रोषाद्दशन्दन्तान्बालग्राहहयं स्मरन् । रे वीराः किं मदोन्मत्ता यूयं किंवा छलग्रहाः ॥ ६१
किं वा वैकल्यमायातं कालजिन्मरणं कथम् । यः संख्ये वैरिवृन्दानां दारुणः सम(मि)तिंजयः ६२
तं कथं बालको जीयाद्यमस्यापि दुरासदम् । शत्रुघ्नवाक्यं संश्रुत्य वीराः प्रोचुरसृक्प्लुताः ॥ ६३
नास्माकं मदमत्तादि न च्छलो न च देवनम् । कालजिन्मरणं सत्यं लवाज्जानीहि भूपते ॥ ६४
बलं च कृत्स्नं मथितं बालेनातुलशौण्डिना । अतः परं तु यत्कार्यं ये प्रेष्या नृवरोत्तमाः ॥ ६५
बालं ज्ञात्वा भवान्नात्र करोतु बलसाहसम् । इति श्रुत्वा वचस्तेषां वीराणां शत्रुहा तदा ॥
सुमतिं च मतिश्रेष्ठमुवाच रणकारणे ॥ ६६

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्नस्य कालजित्सेनानीमरणं नाम षष्टितमोऽध्यायः ॥ ६० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४४३०

---

अथैकषष्टितमोऽध्यायः ।

---

शत्रुघ्न उवाच—

जानासि किं महामन्त्रिन्को बालो हयमाहरत् । येन मे क्षपितं सर्वं बलं वारिधिसंनिभम् ॥ १

सुमतिरुवाच—

स्वामिन्नयं मुनिश्रेष्ठवाल्मीकेराश्रमो महान् । क्षत्रियाणामत्र वासो नास्त्येव परतापन ॥ २
इन्द्रो भविष्यति परमहर्षी हयमाहरत् । पुरारिर्वाऽन्यथा वाहं तव कः समुपाहरेत् ॥ ३
कालजिद्येन नाशं वै प्राप्तः परमदारुणः । तं प्रति श्रीमहाराज गन्ता कः पुष्कलोऽन्यतः ॥ ४
त्वं च वीरैर्भटैः सर्वै राजिभिः परिवारितः । तत्र गच्छ स्वसैन्येन महता शत्रुकृन्तनः ॥ ५
गत्वा सजीवितं वीरं बद्ध्वा तु कुतुकार्थिने । दर्शयिष्यामि रामाय मतं मे त्विदमादृतम् ॥ ६
इति वाक्यं समाकर्ण्य वीरान्सर्वान्समादिशत् । सैन्येन महता यात यूयमायामि पृष्ठतः ॥ ७
निर्दिष्टास्ते क्षणाद्वीरा जग्मुर्यत्र लवो बली । धनुर्विस्फारयंस्तत्र सुदृढं गुणपूरितम् ॥ ८
आयातं तं महद्दृष्ट्वा बलं वीरप्रपूरितम् । न किंचिन्मनसा बिभ्ये लवेन बलशालिना ॥ ९
लवः सिंह इवोत्तस्थौ मृगान्मत्वाऽखिलान्भटान् । धनुर्विस्फारयन्रोषाच्छरान्मुञ्चन्सहस्रशः १०
ते शरैः पीड्यमानास्तु महारोषप्रपूरिताः । वीरं बालं मन्यमानाः संमुखं प्राद्रवंस्तदा ॥ ११
वीरान्सहस्रशो दृष्ट्वा भ्रमिभिः पर्यवस्थितान् । लवो जवेन संधाय शरान्रोषप्रपूरितः ॥ १२
भ्रमिराद्या सहस्रेण द्वितीयाऽयुतसंख्यया । तृतीयाऽयुतयुग्मेन तुरीयाऽयुतपञ्चभिः ॥ १३
पञ्चमी लक्षयोधानां षष्ठी योधायुताधिकैः । सप्तमी लक्षयुग्मेन सप्तभिर्भ्रमिभिर्युतः ॥ १४
मध्ये लवो भ्रमिव्याप्तः संचरन्वह्निवत्तदा । दाहयामास सर्वान्वै सैनिकान्भ्रमिकारकान् ॥ १५

१ न. °ठात्प्राप्तो रणविशारदः । त° । २ क. ख. ग. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. न. दारुणः । ३ ङ °सान्वितः । ४ ण. द. न. तैः । ५ न. भ्रमन्संख्ये संजवन्व° ।

केचित्खड्गैः शरैः केचित्केचित्प्रासैश्च कुन्तकैः । पट्टिशैः परिघैः सर्वा भ्रमिर्भग्ना महात्मना १६
सप्तभिर्भ्रमिभिर्मुक्तो रराज स कुशानुगः । मेघवृन्दविनिर्मुक्तः शशीव शरदागमे ॥ १७
प्राहरत्सर्वथा योधान्भिन्दन्गजकरान्बहून् । छिन्दञ्शिरांसि वीराणां चक्रेणातिमहान्ति च ॥१८
अनेके पतिता वीरा लवबाणप्रपीडिताः । मुमुहुः समरेऽथान्ये नष्टा अन्ये सुकातराः ॥ १९
पलायनपरं सैन्यं लवबाणप्रपीडितम् । वीक्ष्य वीरो रणे योद्धुं प्रायात्पुष्कलसंज्ञकः ॥ २०
तिष्ठ तिष्ठेति च वदन्रोषपूरितलोचनः । रथे सुहयशोभाढ्ये तिष्ठन्प्रायाल्लवं बली ॥ २१
लवं प्रति प्रत्युवाच पुष्कलः परमास्त्रवित् । तिष्ठ दत्ते मया संख्ये रथे सुहयशोभने ॥ २२
पदातिना त्वया युद्धं करोमि कथमाहवे । तस्मात्तिष्ठ रथे पश्चाद्युध्यामि भवता सह ॥ २३
एतद्वाक्यं निशम्यासौ लवः पुष्कलमब्रवीत् । त्वया दत्ते रथे स्थित्वा युद्धं कुर्यामहं रणे ॥ २४
तदा मे पापमेव स्याज्जयः संदिग्ध एव हि । न वयं ब्राह्मणा वीर प्रतिग्रहपरायणाः ॥ २५
वयं तु क्षत्रिया नित्यं दानकर्मक्रियारताः । इदानीं त्वद्रथं कोपाद्भनज्मि प्रत्यहं भवान् ॥ २६
पादचारी भवत्येव पश्चाद्युद्धं करिष्यति । पुष्कलो वाक्यमाकर्ण्य धर्मधैर्यसमन्वितम् ॥ २७
विसिष्मिये चिरं चित्ते धनुः सज्यमथाकरोत् । तमात्तधनुषं दृष्ट्वा लवः कोपसमन्वितः ॥ २८
चापं चिच्छेद पाणिस्थं शरसंधानमाचरन् । स यावत्सगुणं चापं कुरुते तावदुद्धतः ॥ २९
रथभङ्गं चकारास्य समरे प्रहसन्बली । भग्नं रथं स्वकं वीक्ष्य धनुश्छिन्नं महात्मना ॥ ३०
महावीरं मन्यमानः पदातिः प्राद्रवद्रणे । उभौ धनुर्धरौ वीरावुभावपि शरोद्धतौ ॥ ३१
उभौ क्षतजविप्लुष्टौ छिन्नसंनाहितावुभौ । परस्परं बाणघातविशीर्णवपुलक्षितौ ॥ ३२
जयाकाङ्क्षां विकुर्वाणौ परस्परवधैषिणौ । जयन्तकार्तिकेयौ वा पुरारिः पुरभिद्यथा ॥ ३३
एवं परस्परं युद्धं प्रकुर्वाणौ रणाङ्गणे । पुष्कलः प्रत्युवाचाथ लव शूरशिरोमणे ॥ ३४
त्वादृशो न मया दृष्टः कश्चिद्वीरशिरोमणिः । शिरस्ते पातयाम्यद्य बाणैः शितसुपर्वभिः ॥ ३५
मा पलायस्व समरे प्राणान्रक्षस्व संयतः । एवमुक्त्वा लवं वीरं चकार शरपञ्जरे ॥ ३६
पुष्कलस्य शरा भूमौ नभसि व्याप्य संस्थिताः । शरपञ्जरमध्यस्थो लवः पुष्कलमब्रवीत् ॥ ३७

लव उवाच—

महत्कर्म कृतं वीर यन्मां बाणैरपीडयत् (यः) । इत्युक्त्वा बाणसंघातं प्रच्छिद्य वचनं पुनः ३८
जगाद पुष्कलं वीरं शरसंधानकोविदः । पालयाऽऽत्मानमाजिस्थं मच्छराघातपीडितः ॥ ३९
पतिष्यसि महीपृष्ठे रुधिरेण परिप्लुतः । एवमुक्तं समाकर्ण्य पुष्कलः कोपसंयुतः ॥ ४०
रणे संयोधयामास लवं[2] वीरं महाबलम् । लवः प्रकुपितो बाणं तीक्ष्णं वैरिविदारणम् ॥ ४१
जग्राह लवतः कोशादाशीविषमिव क्रुधा । जाज्वल्यमानश्च शरश्चापमुक्तो लवस्य च ॥ ४२
हृदयं भेत्तुमुद्युक्तश्छिन्नो भारतिनाऽऽशु सः । छिन्नो(न्ने) भारतिना संख्ये शरेण प्राणहारिणा॥
अत्यन्तं कुपितो घोरं शरमन्यं समाददे । आकर्णकृष्टचापेन स मुक्तो निशितः शरः ॥ ४४
बिभेद हृदयं तस्य पुष्कलस्य महारणे । भिन्ने वक्षसि वीरेण सायकेनाऽऽशुगामिना ॥ ४५
पपात धरणीपृष्ठे महाशूरशिरोमणिः । पतितं तु समालोक्य पुष्कलं पवनात्मजः ॥ ४६
गृहीत्वा राघवभ्रात्रे ददौ मूर्छासमन्वितम् । मूर्छितं तं समालक्ष्य शोकविह्वलमानसः ॥ ४७

---

१ ग. ज. ठ. ण. त. थ. महतः । २ न. ं वं शूरविचक्षणम् ।

हनुमन्तं लवं हन्तुं निदिदेश क्रुधाऽन्वितः । हनूमान्कोपसंसृष्टो लवं संख्ये महाबलम् ॥ ४८
विजेतुं तरसा चागाद्वृक्षमुद्यम्य शाल्मलम् । वृक्षेण हतवान्मूर्ध्नि लवस्य हनुमान्बली ॥ ४९
तमापतन्तं तरसा चिच्छेद शतधा लवः । छिन्ने नगे पुनः कोपाद्वृक्षानुत्पाट्य मूलतः ॥ ५०
ताडयामास हृदये मस्तके च महाबलः । यान्यान्वृक्षान्समादत्ते ताडनाय समीरजः ॥ ५१
तांस्तांश्चिच्छेद तरसा बलवाञ्शितपर्वभिः । तदा शिलाः समुत्पाट्य गण्डशैलोपमाः कपिः ५२
पातयामास शिरसि क्षिप्रं वेगेन मारुतिः । स आहतः शिलासंघैः संख्ये कोदण्डमुन्नयन् ॥ ५३
बाणैस्ताश्चूर्णयामास सुयन्त्रिभिर्यथा कणाः । तदाऽत्यन्तं प्रकुपितो मारुतिः पुच्छवेष्टनम् ॥ ५४
चकार समरोपान्ते लवस्य बलिनः कृती । स पुच्छेन समाविद्धं वीक्ष्य स्वाम्बां हृदि स्मरन् ५५
मुष्टिना ताडयामास लाङ्गूलं मारुतेर्बली । तन्मुष्टिघातव्यथितो मारुतिस्तममूमुचत् ॥ ५६
स मुक्तः पुच्छतो युद्धे शरान्मुञ्चन्नभूद्बली । स शराघातदुर्बाधसंपीडिततनुः कपिः ॥ ५७
बाणवर्षं मन्यमानो दुःसहं समरे बहु । किं कर्तव्यमितोऽस्माभिः पलाय्य यदि गम्यते ॥ ५८
तदा मे स्वामिनो लज्जा ताडयेद्बालकोऽत्र माम् । ब्रह्मदत्तवरत्वान्मे मूर्छा न मरणं न हि॥ ५९
दुःसहा बाणपीडाऽत्र किं कर्तव्यं मयाऽधुना । शत्रुघ्नः समरे गत्वा जयं प्राप्नोतु बालकात् ॥६०
अहं तावज्जयाकाङ्क्षी शये कपटमूर्छया । इत्येवं मानसे कृत्वा प्रापतद्रणमण्डले ॥ ६१
पश्यतां सर्ववीराणां कपटेन विमूर्छितः । तमाज्ञाय हनूमन्तं महाबलपराक्रमम् ॥
जघान सर्वान्नृपतीञ्शरमोक्षविचक्षणः ॥ ६२

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे हनूमत्पतनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४४९२

---

अथ द्विषष्टितमोऽध्यायः ।

---

शेष उवाच—

मारुतिं मूर्छितं श्रुत्वा शत्रुघ्नः शोकमाप वै । किं कर्तव्यं मया संख्ये बालकोऽयं महाबलः ॥ १
स्वयं रथे हेममये तिष्ठन्वीरवरैः सह । योद्धुं प्रागाल्लवो यत्र विचित्ररणकोविदः ॥ २
लवं ददर्श शिशुतां प्राप्तं राममिव क्षितौ । धनुर्बाणकरं वीरान्क्षिपन्तं रणमूर्धनि ॥ ३
विचारयामास तदा कोऽयं रामस्वरूपधृत् । नीलोत्पलदलश्यामं वपुर्बिभ्रन्मनोरमम् ॥ ४
एष विदेहतनुजासुतो भवति नान्यथा । अस्मान्विजित्य समरे योऽस्यते मृगराडिव ॥ ५
अस्माकं न जयो भव्यः शक्त्या विरहितात्मनाम् । अशक्ताः किं करिष्यामः समरे रणकोविदाः
इत्येवं स विचार्यान्तर्बालकं तु वचोऽब्रवीत् । रणे कुतुककर्तारं वीरकोटिनिपातकम् ॥ ७

शत्रुघ्न उवाच—

कस्त्वं बाल रणेऽस्माकं वीरान्पातयसि क्षितौ । न जानीषे बलं राज्ञो रामस्य दनुजार्दिनः ॥ ८
का ते माता पिता कस्ते सभाग्यो जयमाप्तवान् । नाम किं विश्रुतं लोके जानीयां ते महाबल ९
मुञ्च वाहं कथं बद्धः शिशुत्वात्तत्क्षमामि ते । आयाहि रामं वीक्षस्व दास्यते बहुलं तव ॥ १०

---

१ °ली । दुर्वारशरघातेन सं° । २ ह. न. °लकोत्तमः । प्र° । ३ थ. न. °तः । तं मूर्छितं समाज्ञाय हनूमन्तं महाबलम् । ४ ह. दृश्यते ।

इत्युक्तो बालको वीरो वचः शत्रुघ्नमावदत् । किं ते नाम्नाऽथ पित्रा वा कुलेन वयसा तथा॥११
युध्यस्व समरे वीर चेत्त्वं बलयुतो भवेः । कुशं वीरं नमस्कृत्य पादयोर्याहि नान्यथा ॥ १२
भ्राता रामस्य वीरोऽभूर्नाऽऽवयोर्बलिनां वरः । वाहं विमोचय बलाच्छक्तिस्ते विद्यते यदि॥१३
इत्युक्त्वा शरसंघातं कृत्वा प्राहरदुद्भटः । हृदये मस्तके चैव भुजयो रणमण्डले ॥ १४
तदा प्रकुपितो राजा धनुः सज्जमथाकरोत् । नादयन्मेघगम्भीरं त्रासयन्निव बालकम् ॥ १५
बाणानपरिसंख्याकान्मुमोच बलिनां वरः । बालो बलेन चिच्छेद सर्वांस्तान्सायकव्रजान् ॥१६
लवस्य कोटिधा मुक्तैर्बाणैर्व्याप्तं महीतलम् । व्यतीपाते प्रदत्तस्य दानस्येवाक्षयं गताः ॥ १७
ते बाणा व्योम सकलं व्याप्नुवँल्लवसंधिताः । सूर्यमण्डलमासाद्य प्रवर्तन्ते समन्ततः ॥ १८
मारुतो नाविशद्यत्र बाणपञ्जरगोचरे । मनुष्याणां तु का वार्ता क्षणजीवितशंसिनाम् ॥ १९
तद्बाणान्व्यापृतान्दृष्ट्वा शत्रुघ्नो विस्मयं गतः । अच्छिनच्छतसाहस्रं बाणमोचनकोविदः ॥ २०
तांश्छिन्नान्सायकान्सर्वान्स्वीयान्दृष्ट्वा कुशानुगः । धनुश्चिच्छेद तरसा शत्रुघ्नस्य महीपतेः ॥ २१
सोऽन्यद्धनुरुपादाय यावन्मुञ्चति सायकान् । तावद्बभञ्ज स रथं सायकैः शितपर्वभिः ॥ २२
करस्थमच्छिनच्चापं सुदृढं गुणपूरितम् । तत्कर्मापूजयन्वीरा रणमण्डलवर्तिनः ॥ २३
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः । अन्यं रथं समास्थाय ययौ योद्धुं लवं बलात्२४
अनेकबाणनिर्भिन्नस्रवद्रक्तकलेवरः । शुशुभे रणमध्यस्थः किंशुकश्चैव पुष्पितः ॥ २५
शत्रुघ्नबाणप्रहतः परं कोपमुपागमत् । बाणसंधानचतुरः कुण्डलीकृतचापवान् ॥ २६
विशीर्णकवचं देहं शिरोमुकुटवर्जितम् । स्रवद्रक्तपरिप्लुष्टं शत्रुघ्नस्य चकार सः ॥ २७
तदा रामानुजः क्रुद्धो दश बाणाञ्शिताग्रकान् । मुमोच प्राणसंहारकारकान्कुपितो भृशम् ॥ २८
स तांस्तांस्तिलशः कृत्वा बाणैर्निशितपर्वभिः । ताडयामास हृदये शत्रुघ्नस्य शराष्टभिः ॥ २९
अत्यन्तबाणपीडार्तो लवं बलमनुस्मरन् । दुःसहं मन्यमानस्तं शरान्मुञ्चन्नभूत्तदा ॥ ३०
तदा लवेन तीक्ष्णेन हृदि भिन्नो विशालके । अर्धचन्द्रसमानेन तीक्ष्णपर्वसुशोभिना ॥ ३१
स विद्धो हृदि बाणेन पीडां प्राप्तः सुदारुणाम् । पपात स्यन्दनोपस्थे धनुष्पाणिः सुशोभितः३२
शत्रुघ्नं मूर्छितं दृष्ट्वा नृपाः सुरथसंमुखाः । दुद्रुवुर्लवमुद्युक्ता जयप्राप्त्यै रणे तदा ॥ ३३
सुरथो विमलो वीरो राजा वीरमणिस्तदा । सुमदो रिपुतापाद्याः परिवव्रुश्च संयुगे ॥ ३४
केचित्क्षुरप्रैर्मुसलैः केचिद्बाणैः सुदारुणैः । प्रासैः कुन्तैः परशुभिः सर्वतः प्राहरन्नृपाः ॥ ३५
तानधर्षान्युद्धोक्तान्दृष्ट्वा वीरशिरोमणिः । दशभिर्दशभिर्बाणैस्ताडयामास संयुगे ॥ ३६
ते बाणवर्षविहता रणमध्ये सुकोपनाः । केचित्पलायिताः केचिन्मुमुहुर्युद्धमण्डले ॥ ३७
तावत्स राजा शत्रुघ्नो मूर्छां संत्यज्य सङ्गरे । लवं प्रायान्महावीरं योद्धुं बलसमन्वितः ॥ ३८
आगत्य तं लवं प्राह धन्योऽसि शिशुसंनिभः । न बालस्त्वं सुरः कश्चिच्छलितुं मां समागतः३९
केनापि न हि वीरेण पातितो रणमण्डले । त्वयाऽहं पातितो मूर्छां समक्षं मम पश्यतः ॥ ४०
इदानीं पश्य मे वीर्यं त्वां संख्ये पातयाम्यहम् । सहस्व बाणमेकं त्वं मा पलायस्व बालक ४१
इत्युक्त्वा समरे बालं शरमेकं समाददे । यमवक्त्रसमं घोरं लवणो येन घातितः ॥ ४२
संधाय बाणं निशितं हृदि भेत्तुं मनो दधत् । लवं वीरं (वाद्वीर)सहस्राणां वह्निवत्सर्वदाहकम् ॥
तं बाणं प्रज्वलन्तं स द्योतयन्तं दिशो दश । दृष्ट्वा सस्मार बलिनं कुशं वैरिनिपातिनम् ॥ ४५

१ न. °र्ता दीनानां क्षणजीविना° ।

यद्यस्मिन्समये वीरो भ्राता स्याद्बलवान्मम । तदा शत्रुघ्नवशता न मे स्याद्भयमुल्बणम् ॥ ४५
एवं विचार्यमाण(णेऽ)स्य लवस्य च महात्मनः । हृदि लग्नो महाबाणो घोरः कालानलोपमः ॥४६
मूर्छां प्राप तदा वीरो भूपसायकसंहतः । संगरे सर्ववीराणां शिरोभिः समलंकृते ॥ ४७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे लवमूर्छनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४५३९

---

अथ त्रिषष्टितमोऽध्यायः ।

---

शेष उवाच—

लवं विमूर्छितं दृष्ट्वा बलिवैरिविदारणम् । शत्रुघ्नो जयमापेदे रणमूर्ध्नि महाबलः ॥ १
लवं बालं रथे स्थाप्य शिरस्त्राणाद्यलंकृतम् । रामप्रतिनिधिं मूर्त्या ततो गन्तुमियेष सः ॥ २
स्वमित्रं शत्रुणा ग्रस्तमिति दुःखसमन्विताः । बाला मात्रेऽस्य सीतायै त्वरिताः संन्यवेदयन् ३

बाला ऊचुः—

मातर्जानकि ते पुत्रो बलाद्वाहमपाहरत् । कस्यचिद्भूपवर्यस्य बलयुक्तस्य मानिनः ॥ ४
ततो युद्धमभूद्धोरं तस्य सैन्येन जानकि । तदा वीरेण पुत्रेण तव सर्वं निपातितम् ॥ ५
पश्चादपि जयं प्राप्तः सुतस्तव मनोहरः । तं भूपं मूर्छितं कृत्वा जयमाप रणाङ्गणे ॥ ६
ततो मूर्छां विहायैष राजा परमदारुणः । संकुप्य पातयामास तव पुत्रं रणाङ्गणे ॥ ७
अस्माभिर्वारितः पूर्वं मा गृहाण हयोत्तमम् । अस्मान्सर्वांश्च धिक्कृत्य ब्राह्मणान्वेदपारगान् ॥ ८
इति वाक्यं शिशूनां सा समाकर्ण्य सुदारुणम् । पपात भूतलोपस्थे दुःखयुक्ता रुरोद ह ॥ ९

सीतोवाच—

कथं नृपो दयाहीनो बालेन सह युध्यति । अधर्मकृतदु(र्बुद्धि)र्यो मद्बालं न्यपातयत् ॥ १०
लव वीर भवान्कुत्र वर्ततेऽतिबलान्वितः । कथं त्वं निष्कृपस्याहो राज्ञोऽहार्षीर्हयोत्तमम् ॥ ११
त्वं बालस्ते दुराक्रान्ताः सर्वशस्त्रविशारदाः । रथस्था विरथस्त्वं वै कथं युद्धं समं भवेत् ॥ १२
ताताहं तु त्वया सार्धं रामत्यागासुखं जहौ । इदानीं रहिता युष्मत्कथं जीवामि कानने ॥ १३
एहि मां मुञ्च यज्ञाश्वं गच्छत्वेष महीपतिः । मद्दुःखं नाभिजानासि मम दुःखाश्रुमार्जकः ॥ १४
कुशो यद्यभविष्यत्स रणे वीरशिरोमणिः । अमोचयिष्यदधुना भवन्तं भूपपार्श्वतः ॥ १५
सोऽपि मद्दैवतो नास्ति समीपे किं करोम्यतः । दैवमेव ममाप्यत्र कारणं दुःखसंभवे ॥ १६
एवमादि बहु श्रीमत्येषा वै विललाप ह । पादाङ्गुष्ठेन लिखती भूमिं नेत्रद्वयाश्रुतिः(भिः) ॥ १७
बालान्प्रति जगादासौ पृथुकाः स चमूपतिः । कथं मत्सुतमापात्य रणे कुत्र गमिष्यति ॥ १८
इति वाक्यं वदत्येषा जानकी पतिदेवता । तावत्कुशस्तु संप्राप्त उज्जयिन्यां महर्षिभिः ॥ १९
माघासितचतुर्दश्यां महाकालं समर्च्य च । प्राप्य भूरिवरांस्तस्मादागमन्मातृसंनिधौ ॥ २०
जानकीं विह्वलां दृष्ट्वा नेत्रोद्भूताश्रुविह्वलाम् । शोकविह्वलदीनाङ्गीं बभाषे यावदुत्सुकः ॥ २१
तदा स्वबाहुरवदत्स्फुरन्युद्धाभिशंसनः । हृदये च रणोत्साहो बभूवातिरथस्य हि ॥ २२
स प्रत्युवाच जननीं दीनगद्गदभाषिणीम् । मातस्तव कथं दुःखं मयि पुत्र उपस्थिते ॥ २३
मयि जीवति ते नेत्रादश्रूणि भुवि नोऽपतन् । प्रसूमुवाचाश्रुखिन्नां दीनगद्गदभाषिणीम् ॥ २४

कुशो दुःखमितः सद्यो दुःखितां धीरमानसः । मम भ्राता लवः कुत्र वर्तते वैरिमर्दनः ॥ २५
सदा मामागतं ज्ञात्वा महर्षेन्संनिधावियात् । न दृश्यते कथं वीरः कुत्र रन्तुं गतो बली ॥ २६
केन वा सह बालत्वाद्गतो मां वै निरीक्षितुम् । किं त्वं रोदिषि मे मातर्लवः कुत्र स वर्तते ॥२७
तन्मे कथय सर्वं तत्त्व दुःखस्य कारणम् । तच्छ्रुत्वा दुःखवाक्यं सा दुःखिता कुशमब्रवीत् ॥२८

जानक्युवाच—

लवो धृतो नृपेणात्र केनचिद्धयरक्षिणा । बबन्ध बालको मेऽत्र हयं यागक्रियोचितम् ॥ २९
तद्रक्षकान्बहूञ्जित्य एकोऽनेकान्रिपूंन्बली । राजा तं मूर्छितं कृत्वा बबन्ध रणमूर्धनि ॥ ३०
बालका इति मामूचुः सह गन्तार एव हि । ततोऽहं दुःखिता जाता निशम्य लवमाधृतम् ॥ ३१
त्वं मोचय बलात्तस्मात्काले प्राप्तो नृपोत्तमात् । निशम्य मातुर्वचनं कुशः कोपसमन्वितः ॥ ३२
जगाद तां दशन्नोष्ठं दन्तान्दन्तैर्विनिष्पिषन् ॥ ३३

कुश उवाच—

मातर्जानीहि तं मुक्तं लवं पाशस्य बन्धनात् । इदानीं हन्मि तं बाणैः समग्रबलवाहनम् ॥ ३४
यदि देवोऽमरो वाऽपि यदि शर्वः समागतः । तथाऽपि मोचये तस्माद्बाणैर्निशितपर्वभिः ॥ ३५
मा रोदिषि मातरिह वीराणां रणमूर्छितम् । कीर्तयेऽत्र भवत्येव पलायनमकीर्तये ॥ ३६
देहि मे कवचं दिव्यं धनुर्गुणसमन्वितम् । मम मातः करवालं शिरस्त्राणं तथा शितम् ॥ ३७
इदानीं यामि समरे पातयामि बलं महत् । मोचयामि भ्रातरं स्वं रणमध्याद्विमूर्छितम् ॥ ३८
न मोचयाम्यद्य पुत्रं तव मातर्महारणात् । तदा मम भवत्पादौ संरुष्टौ भवतां क्षितौ ॥ ३९

शेष उवाच—

इतिवाक्येन संतुष्टा जानकी शुभलक्षणा । सर्वं प्रादात्स्वच्छन्दं जयाशीर्भिर्नियुज्य च ॥ ४०
प्रयाहि पुत्र संग्रामं लवं मोचय मूर्छितम् । इत्याज्ञप्तः कुशः संख्ये कवची कुण्डली बली ॥ ४१
मुकुटी करवाली च चर्मधारी धनुर्धरः । अक्षयाविषुधी धृत्वा स्कन्धयोः सिंहवीर्ययोः ॥ ४२
जगाम तरसा नत्वा मातृपादौ रथाग्रणीः । वेगेन यावद्युद्धाय गच्छति क्षिप्रमाहवे ॥ ४३
तावद्ददर्श स लवं वैरिवृन्दनिपातितम् । आयान्तं तं कुशं वीरा ददृशुः समरोद्धताः ॥ ४४
कृतान्तमिव संहर्तुं सर्वं विश्वमुपस्थितम् । लवो महाबलं दृष्ट्वा कुशं भ्रातरमागतम् ॥ ४५
अत्यन्तं वह्निवद्युद्धे दिदीपे वायुना समम् । रथादुन्मुच्य चाऽऽत्मानं युद्धाय स विनिर्गतः॥ ४६
कुशः सर्वान्रणस्थान्वै वीरान्पूर्वदिशि क्षिपन् । पश्चिमस्यां दिशि लवः कोपात्सर्वान्समैरयत् ४७
कुशबाणव्यथाव्याप्ता लवसायकपीडिताः । सैन्ये जना मुने सर्वे उत्कल्लोलाम्बुधिभ्रमाः ॥ ४८
कुशेन च लवेनाथ शरव्रातैः प्रपीडितम् । न शर्म लेभे सकलं सैन्यं वीरेण पूरितम् ॥ ४९
इतस्ततः प्रभग्नं तद्बलं त्रस्तं पुनः पुनः । न कुत्रचिद्रणे स्थित्वा युद्धमैच्छद्बलान्वितः ॥ ५०
एतस्मिन्समये राजा शत्रुघ्नः परतापनः । कुशं वीरं ययौ योद्धुं तादृशं लवसंनिभम् ॥ ५१
कुशं दृष्ट्वा बलाक्रान्तं राममूर्तिसमप्रभम् । रथे तिष्ठन्हेममये जगाद परवीरहा ॥ ५२

शत्रुघ्न उवाच—

कोऽसि त्वं संनिभो भ्रात्रा लवेन सुमहाबलः । किंनामाऽसि महावीर कस्ते तातः क ते प्रसूः ॥ ५३

१ क. ख. ग. च छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. न. पुत्रवाक्यं । २ थ. °पूरणे । रा° । ३ क ख. ग. च. छ. ज. ञ. ठ. ड. ण. त. थ. द. ध. न °निपातकम् ।

कथं वने द्विजैर्जुष्टे तिष्ठसि त्वं नरर्षभ । सर्वं शंस यथा युध्ये त्वया सह महाबल ॥ ५४
इति वाक्यं समाकर्ण्य कुशः प्रोवाच भूमिपम् । मेघगम्भीरया वाचा नादयन्रणमण्डलम् ॥ ५५
कुश उवाच—
केवलं सुषुवे सीता पतिव्रतपरायणा । वने वसावो वाल्मीकेश्चरणार्चनतत्परौ ॥ ५६
मातृसेवासमुद्युक्तौ सर्वविद्याविशारदौ । कुशो लव इति प्रख्यामागतौ भूपतेऽनघ ॥ ५७
कस्त्वं वीरो रणश्लाघी किमर्थं हयसत्तमः । मुक्तोऽस्ति समरे त्वद्य जेताऽसि बलसंयुतः ॥ ५८
युध्यस्व त्वं मया सार्धं यदि वीरोऽसि भूमिप । इदानीं पातयिष्यामि भवन्तं रणमूर्धनि ॥ ५९
शत्रुघ्नस्तं सुतं ज्ञात्वा सीताया रामसंभवम् । विसिष्मिये स्वयं चित्ते कोपाद्धनुरुपाददत् ॥ ६०
तमात्तधनुषं दृष्ट्वा कुशः कोपसमन्वितः । विस्फारयामास धनुः स्वीयं सुदृढमुत्तमम्॥ ६१
मुमोच बाणान्निशिताञ्शत्रुघ्नः सर्वशस्त्रवित् । तांश्चिच्छेद कुशः सर्वाँल्लीलया प्रहसन्रणे ॥ ६२
बाणाश्च शतसाहस्राः कुशस्य च नृपस्य च । भुवनं व्याप्नुवन्सर्वं तच्चित्रमभवन्मुने ॥ ६३
अग्न्यस्त्रेण कुशः सर्वान्ददाह तरसा बली । [ *शमयामास तं भूपः पर्जन्यास्त्रेण वीर्यवान् ॥ ]
शमयामास तं भूपो वायव्येनातिविक्रमः । [+ तदा वायुरभूत्तीव्रः सर्वतो रणमण्डले ] ॥ ६५
पर्वतास्त्रेण वायुं तं क्षोभयन्तं समावृणोत् । वज्रास्त्रेण नृपः संख्ये चिच्छेद स नगोपलान् ॥ ६६
तदा नारायणास्त्रं स मुमोच कुश उद्भटः । नारायणं तदा भूपं नाशकत्परिबाधितुम् ॥ ६७
तदा प्रकुपितोऽत्यन्तं कुशः कोपपरायणः । उवाच भूपं शत्रुघ्नं महाबलपराक्रमम् ॥ ६८
जानामि त्वां महावीरं संग्रामे जयकारकम् । यत्त्वां नारायणं मेऽस्त्रं न बबाधे भयानकम् ॥ ६९
इदानीं पातयाम्यद्य भूमौ त्वां नृपते शरैः । त्रिभिश्चेन्न करोम्येतत्प्रतिज्ञां तर्हि मे शृणु ॥ ७०
यो मनुष्यवपुः प्राप्य दुर्लभं पुण्यकोटिभिः । तन्नाऽऽद्रियेत संमोहात्तस्य मेऽस्त्वत्र पातकम् ॥ ७१
सावधानो भवानत्र भवतु प्रधनाङ्गणे । पातयामि क्षितौ सद्य इत्युक्त्वा स्वशरासने ॥ ७२
शरं संरोपयामास घोरं कालानलोपमम् । लक्षीकृत्य रिपोर्वक्षो विपुलं कठिनं महत् ॥ ७३
तं संधितं शरं दृष्ट्वा शत्रुघ्नः कोपपूरितः । मुमोच बाणान्निशितान्कुशत्वग्भेदकारकान् ॥ ७४
स बाणो हृदयं तस्य भेत्तुं तत्प्रचचाल वै । घोररूपो वह्निसम आशीविषवदुच्छ्वसन् ॥ ७५
स बाणो नृपवर्येण रामं स्मृत्वाऽऽशु लक्षितः । चिच्छेद कुशमुक्तं च सायकं शितपर्वकम् ॥ ७६
तदाऽत्यन्तं प्रकुपितः कुशो बाणस्य कृन्तनात् । अपरं सायकं चापे दधार शितपर्वकम् ॥ ७७
स यावत्तुरो भेत्तुं करोति च बलोत्कुरः । स तावदच्छिनत्तस्य शरं कालानलप्रभम् ॥ ७८
तदा कुशो मातृपादौ स्मृत्वा रोषसमन्वितः । तृतीयं चापके स्वीये दधार शरमुत्तमम् ॥ ७९
शत्रुघ्नस्तमपि क्षिप्रं क्षेप्तुं बाणं समाददे । तावद्विद्धः शरेणासौ पपात धरणीतले ॥ ८०
हाहाकारो महानासीच्छत्रुघ्ने विनिपातिते । जयमाप कुशस्तत्र स्वबाहुबलदर्पितः ॥ ८१

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रुघ्नमूर्छनावृत्तं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४६२०

---

* एतच्चिह्नान्तर्गतः पाठो द. न. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठो द. पुस्तकस्थः ।

---

१ ग. ज. ठ. ण. त. थ. द. पातयिष्यामि २ ख. छ. ड. परमास्त्रवित् । ३ द. न °रमद्भुतम् ।

अथ चतुःषष्टितमोऽध्यायः ।

शेष उवाच—

शत्रुघ्नं पतितं वीक्ष्य सुरथः प्रवरो नृपः । प्रययौ मणिना सृष्टे रथे तिष्ठन्महाद्भुते ॥ १
पुष्कलस्तु रणे पूर्वं पातितः स विचारयन् । लवं ययौ तदा योद्धुं महावीरबलोन्नतम् ॥ २
सुरथः कुशमासाद्य बाणान्मुञ्चन्ननेकधा । व्यथयामास समरे महावीरशिरोमणिः ॥ ३
सुरथं विरथं चक्रे बाणैर्दशभिरुच्छ्रितैः । धनुश्चिच्छेद तरसा सुदृढं गुणपूरितम् ॥ ४
अस्त्रप्रत्यस्त्रसंहारैः क्षेपणैः प्रतिक्षेपणैः । अभवत्तुमुलं युद्धं वीराणां रोमहर्षणम् ॥ ५
अत्यन्तं समरोद्युक्ते सुरथे दुर्जये नृपे । कुशः संचिन्तयामास किं कर्तव्यं रणे मया ॥ ६
विचार्य निशितं घोरं सायकं समुपाददे । हननाय नृपस्यास्य महाबलसमन्वितः ॥ ७
तमागतं शरं दृष्ट्वा कालानलसमप्रभम् । भेत्तुं मतिं चकाराऽऽशु तावल्लग्नो महाशरः ॥ ८
मुमूर्छ समरे वीरो महावीरबलस्ततः । पपात स्यन्दनोपस्थे सारथिस्तमुपाहरत् ॥ ९
सुरथे पतिते दृष्ट्वा कुशं जयसमन्वितम् । त्रासयन्तं वीरगणानियाय पवनात्मजः ॥ १०
समीरसूनुं प्रबलमायान्तं वीक्ष्य वानरम् । जहास दर्शयन्दन्तान्कोपयन्निव तं क्रुधा ॥ ११
उवाच च हनूमन्तमेहि त्वं मम संमुखम् । भेत्स्ये बाणसहस्रेण मृतो यास्यसि यामिनीम् ॥ १२
इत्युक्तो हनुमाञ्ज्ञात्वा रामसूनुं महाबलम् । स्वामिकार्यं प्रकर्तव्यमिति कृत्वा प्रधावितः ॥ १३
शालमुत्पाट्य तरसा विशालं शतशाखिनम् । कुशं वक्षसि संलक्ष्य ययौ योद्धुं महाबलः ॥ १४
शालहस्तं समायान्तं हनुमन्तं महाबलम् । त्रिभिः क्षुरप्रैर्विव्याध सोऽर्धचन्द्रोपमैर्बली ॥ १५
स बाणविद्धस्तरसा कुशेन बलशालिना । शालेन हृदि संजघ्ने दन्तान्निष्पिष्य मारुतिः ॥ १६
शालाहतस्तदा बालः किंचिन्नाकम्पत स्मयात् । तदा वीराः प्रशंसां तु प्रचक्रुस्तस्य बाल्यतः ॥ १७
स शालेन हतो वीरः संहारास्त्रं समाददे । संहर्तुं वैरिणं कोपात्कुशः परममन्त्रवित् ॥ १८
संहारास्त्रं समालोक्य दुर्जयं कुशमोचितम् । दध्यौ रामं स्वमनसा भक्तविघ्नविनाशकम् ॥ १९
तदा मुक्तं कुशेनाऽऽशु तदस्त्रं हृदि मारुतेः । लग्नं महाव्यथाकारि तेन मूर्छामितः पुनः ॥ २०
मूर्छां प्राप्तं तु तं दृष्ट्वा प्लवगं बलसंयुतः । विव्याध सायकैस्तीक्ष्णैः सैन्यं तत्सकलं महत् ॥ २१
तस्य बाणायुतैर्भग्नं बलं सर्वं रणाङ्गणे । पलायनपरं जातं चतुरङ्गसमन्वितम् ॥ २२
तदा कपिपतिः कोपात्सुग्रीवो रक्षको महान् । अभ्यधावन्नगान्नैकानुत्पाट्य कुशमुद्भटम् ॥ २३
कुशः सर्वान्प्रचिच्छेद लीलया प्रहसन्नगान् । पुनरप्यागतान्वृक्षांश्चिच्छेद तरसा बली ॥ २४
अनेकबाणव्यथितः सुग्रीवः समराङ्गणे । जग्राह पर्वतं घोरं कुशमस्तकमध्यतः ॥ २५
कुशस्तं नगमायान्तं वीक्ष्य बाणैरनेकधा । निष्पिपेष चकाराऽऽशु महारुद्राङ्गयोग्यताम् ॥ २६
सुग्रीवस्तन्महत्कर्म दृष्ट्वा बालेन निर्मितम् । जयाशां प्रति निवृत्तो बभूव समराङ्गणे ॥ २७
रणमध्ये दुराक्रान्तं कुशं लाङ्गूलताडकम् । अत्यमर्षी रुषाऽऽक्रान्तस्तं हन्तुं नगमाददे ॥ २८
आत्मानं हन्तुमुद्युक्तं वीक्ष्य सुग्रीवमादरात् । ताडयामास बहुभिः सायकैः सर्वतः शितैः ॥ २९
स ताडितो बहुविधैः शरैः पीडासमन्वितः । कुशं हन्तुं समारब्धो ययौ शालं समाददे ॥ ३०
तदाऽपि च कुशो वीरो वारुणास्त्रं समाददे । बबन्ध तं च पाशेन दृढेन स लवाग्रजः ॥ ३१

१ थ. 'ध कुशो वज्रोप' । २ द. न 'शः स परमास्त्रवि' । ३ झ. निवृतो । म. निर्वृत्तो ।

स बद्धः पाशकैः स्निग्धैः कुशेन बलशालिना । पपात रणमध्ये वै महावीरैरलंकृते ॥ ३२
सुग्रीवं पतितं दृष्ट्वा वीराः सर्वत्र दुद्रुवुः । जयमाप लवभ्राता महावीरशिरोमणिः ॥ ३३
तावल्लवो भटाञ्जित्वा पुष्कलं चाङ्गदं तथा । प्रतापाग्र्यं वीरमणिं तथाऽन्यानपि भूभुजः ॥ ३४
जयं प्राप्य रणे वीरो लवो भ्रातरमागमत् । संग्रामे जयकर्तारं वैरिकोटिनिपातकम् ॥ ३५
परस्परं प्रहृषितौ परिरम्भं प्रकुर्वतः । जयं प्राप्तौ मुने तत्र वार्तां चक्रतुरुन्मदौ ॥ ३६

लव उवाच—

भ्रातस्तव प्रसादेन निस्तीर्णो रणतोयधिः । इदानीं वीर रणकं शोधयावः सुशोभितम् ॥ ३७
इत्युक्त्वा राजसविधे जगाम स लवः कुशः । राज्ञो मौलिमणिं चित्रं जग्राह कनकान्वितम्॥३८
पुष्कलस्य लवो वीरो जग्राह मुकुटं शुभम् । अङ्गदे च महानर्घे शत्रुघ्नस्यापरस्य च ॥ ३९
गृहीत्वा शस्त्रसंघातं हनूमन्तं कपीश्वरम् । सुग्रीवं सविधे गत्वा उभावपि बबन्धतुः ॥ ४०
पुच्छं वायुसुतस्यायं गृहीत्वा तु कुशानुजः । भ्रातरं प्रति प्रोवाच नेष्यामि स्वकमन्दिरम् ॥ ४१
आवयोर्जननीप्रीत्यै गृहीत्वा पुच्छके त्वहम् । क्रीडार्थं मुनिपुत्राणां कौतुकार्थं ममैव च ॥ ४२
एतच्छ्रुत्वा ततो वाक्यमुवाच च लवं कुशः । अहमेनं ग्रहीष्यामि वानरं बलिनं दृढम् ॥ ४३
इत्येवं भाषमाणौ तौ बद्ध्वा तौ बलिनां वरौ । पुच्छयोर्बलिनौ धृत्वा जग्मतुः स्वाश्रमं प्रति ॥
स्वाश्रमाय प्रगच्छन्तौ वीक्ष्य तौ कपिसत्तमौ । कम्पमानौ जगदतुरन्योन्यं भीतया गिरा ॥ ४५
हनुमान्कपिराजानं प्रत्युवाच भयार्द्रधीः । एतौ रामसुतावस्मान्नेष्यतः स्वाश्रमं प्रति ॥ ४६
मया पूर्वं कृतं कर्म जानकीं प्रति गच्छता । तत्र मे जानकी देवी संमुखाऽभून्मनोहरा ॥ ४७
सा मां द्रक्ष्यति वैदेही बद्धं पाशेन वैरिणा । तदा हसिष्यति वरा त्रपा मेऽत्र भविष्यति ॥ ४८
मया किमत्र कर्तव्यं प्राणत्यागो भविष्यति । महद्दुःखं चाऽऽपतितं स रामः किं करिष्यति ४९
सुग्रीवस्तद्वचः श्रुत्वा ममाप्येवं महाकपे । नेष्यते यदि मामेवं निधनं तु भविष्यति ॥ ५०
एवं कथयतोरेव ह्यन्योन्यं भयभीतयोः । कुशो लवश्च भवनं मातुः प्राप मनोहरौ ॥ ५१
तावायातौ समीक्ष्यैव जहर्ष जननी तयोः । अन्योन्यं परमप्रीत्या परिरेभे निजौ सुतौ ॥ ५२
ताभ्यां पुच्छगृहीतौ तौ वानरौ वीक्ष्य जानकी । हनूमन्तं च सुग्रीवं सर्ववीरकपीश्वरम् ॥ ५३
जहास पाशबद्धौ तौ वीक्षमाणा वराङ्गना । उवाच च विमोक्षार्थं वदन्ती वचनं वरम् ॥ ५४

जानक्युवाच—

पुत्रौ कपी मुञ्चतं तौ महावीरौ महाबलौ । द्रक्ष्यतो मां यदि स्फीतौ प्राणत्यागं करिष्यतः॥ ५५
अयं वै हनुमान्वीरो यो ददाह दनोः पुरीमु । अयमप्यृक्षराजो हि सर्ववानरभूमिपः ॥ ५६
किमर्थं विधृतौ कुत्र किं वा कृतमनादरात् । गृहीतौ येन वां पुच्छे तच्छंसास्मान्मनःस्थितम् ५७
इति मातुर्वचः श्लक्ष्णं वीक्ष्य तां पुत्रकौ तदा । ऊचतुर्विनयश्रेष्ठौ महाबलसमन्वितौ ॥ ५८

पुत्रावूचतुः—

मातः कश्चन भूपालो रामो दाशरथिर्बली । तेन मुक्तो हयः स्वर्णभालपत्रः सुशोभितः ॥ ५९
तत्रैवं लिखितं मातरेकवीरा प्रसूर्मम । ये क्षत्रियास्ते गृह्णन्तु नो चेत्पादतलार्चकाः ॥ ६०
तदा मया विचारो वै कृतः स्वान्ते पतिव्रते । भवती क्षत्रिया किं न वीरसूः किं न वा भवेत् ॥

१ घ. ङ. झ. ट. ढ 'हमु' । २ द. न. 'त् । पुच्छे युवाभ्यां विधृतौ स महान्विस्मयोऽस्ति मे । इ' ।

धार्ष्ट्यं तद्वीक्ष्य भूपस्य गृहीतोऽश्वो मया महान् । जितं कुशेन वीरेण सैन्यं तत्पातितं रणे ॥ ६२
मुकुटोऽयं भूमिपतेर्जानीहि पतिदेवते । अयमप्यन्यवीरस्य पुष्कलस्य महात्मनः ॥ ६३
जानीहि मुकुटं त्वन्यं मणिमुक्ताविराजितम् । अश्वोऽयं मे मनोहारी कामयानो हि भूपतेः ॥ ६४
आरोहणाय मद्भ्रातुर्जानीहि बलिनो वरे । इमौ कीशौ मया त्वानीतौ बलिनां वरौ ॥ ६५
कौतुकार्थं तवैवैतौ संग्रामे युद्धकारकौ । इति वाक्यं समाकर्ण्य जानकी पतिदेवता ॥ ६६
जगाद पुत्रौ तौ वीरौ मोचयन्ती(तं) पुनः पुनः ॥ ६७

सीतोवाच—

युवाभ्यामनयः सृष्टो हृतो रामहयो महान् । अनेके पातिता वीरा इमौ बद्धौ कपीश्वरौ ॥ ६८
पितुस्तव हयो वीरौ यागार्थं मोचितोऽमुना । तस्यापि हृतवन्तौ किं वाजिनं मखसत्तमे ॥ ६९
मुञ्चतं प्लवगावेतौ मुञ्चतं वाजिनां वरम् । क्षाम्यतां भूपतेर्भ्राता शत्रुघ्नः परकोपनः ॥ ७०
जनन्यास्तद्वचः श्रुत्वा ह्यूचतुस्तां बलान्वितौ । क्षात्रधर्मेण तं भूपं जितवन्तौ बलान्वितम् ॥ ७१
नास्माकमनयो भावी क्षात्रधर्मेण युध्यताम् । वाल्मीकिना पुरा प्रोक्तमस्माकं पठतां पुरः ॥ ७२
दुष्यन्तेन समं युद्धं भरतेन कृतं पुरा । कण्वस्य चाऽऽश्रमे वाहं धृत्वा यागक्रियोचितम् ॥ ७३
तस्मात्सुतः स्वपित्राऽपि युध्येद्भ्रात्राऽपि चानुजः । गुरुणा शिष्य एवापि तस्मान्नो पापसंभवः ॥
त्वदाज्ञातोऽधुना चाऽऽवां दास्यावो हयमुत्तमम् । मोक्ष्यावः कीशावेतौ हि वां सर्वं तत्कृतं वचः
इत्युक्त्वा मातरं वीरौ गतौ रणे कपीश्वरौ । अमुञ्चतां हयं वाऽपि हयमेधक्रियोचितम् ॥ ७६
सीतादेवी स्वपुत्राभ्यां श्रुत्वा सैन्यनिपातनम् । श्रीरामं मनसा ध्यात्वा भानुमैक्षत साक्षिणम् ॥
यद्यहं मनसा वाचा कर्मणा रघुनायकम् । भजामि नान्यं मनसा तर्हि जीवेदयं नृपः ॥ ७८
सैन्यं चापि महत्सर्वं यन्नाशितमिदं बलात् । पुत्राभ्यां तत्तु जीवेत मत्सत्याज्जगतां पतेः ॥ ७९
इति यावद्वचो ब्रूते जानकी पतिदेवता । तावत्सर्वं बलं नष्टं जीवितं रणमूर्धनि ॥ ८०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सैन्यजीवनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४७००

---

अथ पञ्चषष्टितमोऽध्यायः ।

---

शेष उवाच—

क्षणान्मूर्छां जहौ वीरः शत्रुघ्नः समराङ्गणे । अन्येऽपि वीरा बलिनो मूर्छां प्राप्ताः सुजीविताः ॥ १
शत्रुघ्नो वाजिनां श्रेष्ठं ददर्श पुरतः स्थितम् । आत्मानं च शिरस्त्राणरहितं सैन्यजीवितम् ॥ २
वीक्ष्य चित्रमिदं स्वान्ते चकार च जगाद च । सुमतिं मतिमच्छ्रेष्ठं मूर्छाविरहितं तदा ॥ ३
कृपां कृत्वा हयं प्रादाद्बालो यज्ञस्य पूर्तये । गच्छाम रामं तरसा हयागमनकाङ्क्षकम् ॥ ४
इत्युक्त्वा स्वरथे स्थित्वा हयमादाय वेगतः । ययौ तदाश्रमाद्दूरं भेरीशङ्खविवर्जितः ॥ ५
तत्पृष्ठतो महासैन्यं चतुरङ्गसमन्वितम् । चचाल कुर्वत्संभ्रमं स्वभारेण फणीश्वरम् ॥ ६
जवेन जाह्नवीं तीर्त्वा कल्लोलजलमालिनीम् । जगाम विषये स्वीये स्वकीयजनशोभिते ॥ ७
पुष्कलेन युतो राजा सुरथेन समन्वितः । रथे मणिमये तिष्ठन्महाकोदण्डधारकः ॥ ८

---

१ ङ. न. मन्त्रिणां श्रेष्ठं । २ थ. °नसेविते ।

हयं तं पुरतः कृत्वा रत्नमालाविभूषितम् । श्वेतातपत्रं तस्यैव मूर्ध्नि चामरभूषितः ॥ ९
अनेकरथसाहस्रैः परितो बलिभिर्नृपैः । उद्यत्कोदण्डललितैर्वीरनादविभूषितैः ॥ १०
क्रमेण नगरीं प्राप सूर्यवंशविभूषिताम् । अनेकैः केतुभिः श्रेष्ठैर्भूषितां दुर्गराजिताम् ॥ ११
रामः श्रुत्वा हयं प्राप्तं शत्रुघ्नेन महात्मना । पुष्कलेन च वीरेण ययौ हर्षमनेकधा ॥ १२
कटकं निर्दिदेशासौ चतुरङ्गं महाबलम् । लक्ष्मणं प्रेषयामास भ्रातरं बलिनां वरम् ॥ १३
लक्ष्मणः सैन्यसहितो गत्वा भ्रातरमागतम् । परिरेभे मुदा क्रान्तः क्षतशोभितगात्रकम् ॥ १४
कुशलं पृष्टवांस्तत्र वार्तां चात्र चकार सः । परमं हर्षमापन्नः शत्रुघ्नः संगतो मुदा ॥ १५
सौमित्रिः स्वरथे स्थित्वा भ्रात्रा सह महामनाः । सैन्येन महता वीरो ययौ स्वनगरीं प्रति॥१६
शरयूः पुण्यसलिला पवित्रितजगत्त्रया । रामपादरजःपूता शरच्चन्द्रनिभप्रभा ॥ १७
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता । विचित्रतरवर्णैश्च पक्षिभिर्नादिता भृशम् ॥ १८
मण्डपास्तत्र बहुशो रामचन्द्रेण कारिताः । ब्राह्मणानां वेदविदां पृथक्पाठनिनादकाः ॥ १९
क्षत्रियास्तत्र बहवो धनुष्पाणिसुशोभिनाः । ज्याटङ्कारेण बहुना नादयन्तो महीतलम् ॥ २०
भुञ्जते ब्राह्मणा यत्र विचित्रान्नैर्मनोहरैः । परस्परं प्रपश्यन्तो वार्तां चक्रुर्मनोहराम् ॥ २१
पयसाऽन्नानि सर्वाणि चन्द्रकान्तिसमानि च । क्षीराज्यमधुयुक्तानि शर्करामिश्रितानि च ॥२२
अपूपास्तत्र बहुलाश्चन्द्रबिम्बसमाः श्रिया । कर्पूरादिसुगन्धेन वासिताः सुमनोहराः ॥ २३
फेनिका वटकाः स्निग्धाः शतच्छिद्रा विरन्ध्रकाः । मण्डकाः शष्कुलीमृष्टा मधुरान्नसमन्विताः ॥
भक्ताः कुमुदसंकाशा मुद्गदालीविमिश्रिताः । सुगन्धेन समायुक्ता ह्यत्यन्तप्रीतिदायकाः ॥ २५
ओदनो *दधिना युक्तः कर्पूरेण समन्वितः । स्वादुपाककरैः सृष्टः पात्रे मुक्तः प्रवेशकैः ॥ २६
तत्र केचिद्द्विजाः पात्रे पतितं वीक्ष्य पायसम् । परस्परं ते प्रत्यूचुः किमिदं दृश्यते दृशा ॥ २७
किं चन्द्रबिम्बं नभसः पतितं तमसो भयात् । अमृतं सुभवत्यत्र मृत्युनाशकमद्भुतम् ॥ २८
तच्छ्रुत्वा रोषताम्राक्षः प्रोवाचान्यो द्विजोत्तमः । न भवत्येव चन्द्रस्य बिम्बं त्वमृतविप्लुतम्॥२९
एकमिन्दोर्वपुस्त्वेतद्दृश्यते सदृशं कथम् । ब्राह्मणानां सहस्रस्य पात्रे पात्रे पृथक्पृथक् ॥ ३०
ततो जानीहि कुमुदं कर्पूरं वा भविष्यति । मा जानीहि मृगाङ्कस्य बिम्बं शुभ्रश्रियाऽन्वितम् ॥
तावदन्यो रुषाऽऽक्रान्तो विधुन्वन्मस्तकं तदा । न जानन्ति द्विजा मूढाः स्वादुज्ञानविचक्षणाः॥
इदं तु क्षीरकन्दस्य रसेन परिपाचितम् । जानीहि शतपत्रस्य पुष्पाणि मधुराणि च ॥ ३३
एवं परस्परं विप्राः कन्दमूलफलाशिनः । तर्कयन्ति मुने प्रीता रसज्ञानेऽतिलोलुपाः ॥ ३४
तावदन्यो द्विजः प्राह क्षत्रियाणां वरं जनुः । भोक्ष्यन्ते तादृशं त्वन्नं महापुण्यैरुपस्कृतम् ॥ ३५
तदा तं प्राब्रवीद्विप्रो दत्तस्य फलमीदृशम् । ये ददत्यग्रजन्मभ्यः प्राप्नुवन्ति त ईप्सितम् ॥ ३६
यैरर्चितो नैव हरिर्नैवेद्यैर्विविधैर्मुहुः । तेषामेतादृशं भोज्यं न भवेदक्षिगोचरम् ॥ ३७
यैर्नरैरग्रजन्मानो भोजिता विविधै रसैः । भुञ्जते ते स्वादुरसं पापिनां चक्षुरुज्झितम् ॥ ३८
एवंविधै रसैर्मृष्टैर्भोजिता द्विजसत्तमाः । मण्डपे विपठन्त्येते शब्दब्रह्मविचक्षणाः ॥ ३९
नृत्यन्त्येके हसन्त्येके ददत्येके महार्थिनाम् । उत्सवो बहुरुद्भाति तत्र शत्रुघ्न आगमत् ॥ ४०

* आर्षत्वादनङ्भावः ।

१ ङ. ढ. न. °षितम् । अ° । २ द. न. महाबलः । ३ ग. ठ. ध. न. महामतिः । ४ क. ख. ग. च. छ. ज. झ. ठ.ड.ण.त.थ.द.ध.न. शुभ्राणि । ५ घ.ङ.झ.ट.ढ. °ताः । सुधापा° । ६ न. युक्तो भीमपाकस° । ७ द.न. °तेऽद्भुतम् । किं । ८ न. °सं कथं पापाः क्षुधाऽर्दिताः । ए° । ९ द. °के नदन्त्येके प्रहर्षिताः । उ° । न. °के ददत्येके प्रहर्षिताः । उ° ।

रामः शत्रुघ्नमायान्तं पुष्कलेन समन्वितम् । निरीक्ष्य मुदमुन्नूतां रक्षितुं नाशकत्तदा ॥ ४१
यावदुत्तिष्ठते रामो भ्रातरं हयपालकम् । तावद्रामपदे लग्नः शत्रुघ्नो भ्रातृवत्सलः ॥ ४२
पदे प्रपतितं वीक्ष्य भ्रातरं विनयान्वितम् । परिरेभे दृढं प्रीतः क्षतसंशोभिताङ्गकम् ॥ ४३
अश्रूणि बहुधा मुञ्चन्हर्षाच्छिरसि राघवः । अत्यन्तं(वाप) परमानन्दं मुदं वचनदूरगाम् ॥ ४४
पुष्कलं स्वीयपदयोर्नम्रं विनयविह्वलम् । सुदृढं भुजयोर्मध्ये विनीयापीडयत्कृशम् ॥ ४५
हनुमन्तं तथा वीरं सुग्रीवं चाङ्गदं तथा । लक्ष्मीनिधिं जनकजं प्रतापाग्र्यं रिपुंतपम् ॥ ४६
सुबाहुं सुमदं वीरं विमलं नीलरत्नकम् । सत्यवन्तं वीरमणिं सुरथं रामसेवकम् ॥ ४७
अन्यानपि महाभागान्रघुनाथः स्वयं ततः । परिरेभे दृढं स्निग्धान्पादयोः प्रणतान्नृपान् ॥ ४८
सुमतिः श्रीरघोर्नाथं भक्तानुग्रहकारकम् । परिरभ्य दृढं प्रीतः संमुखेऽतिष्ठदुन्नतः ॥ ४९
तदा रामो निजामात्यं वीक्ष्य संनिधिमागतम् । उवाच परमप्रीत्या मन्त्रिणं वदतां वरः ॥ ५०

श्रीराम उवाच—

सुमते मन्त्रिणां श्रेष्ठ शंस मे वाग्मिनां वर । क एते भूमिपाः सर्वे कथमत्र समागताः ॥ ५१
कुत्र कुत्र हयः प्राप्तः केन केन नियन्त्रितः । कथं वै मोचितो भ्रात्रा महाबलसुशालिना ॥ ५२

शेष उवाच—

इत्युक्तो मन्त्रिणां श्रेष्ठः सुमतिः प्राह राघवम् । [*मेघगम्भीरया वाण्या नादयंस्तन्महाबलम्] ५३

सुमतिरुवाच—

सर्वज्ञस्य पुरस्तेऽद्य मया कथमुदीर्यते । मां लोकरीत्या पृच्छसि सर्वं त्वं वेत्सि सर्वदृक् ॥ ५४
तथाऽपि तव निर्देशं शिरस्याधाय सर्वदा । ब्रवीमि तच्छृणुष्वाद्य सर्वराजशिरोमणे ॥ ५५
त्वत्प्रसादादहो स्वामिन्सर्वत्र जगतीतले । परिबभ्राम ते वाहो भालपत्रसुशोभितः ॥ ५६
न कश्चित्तं निजग्राह स्वमानबलदर्पितः । स्वं स्वं राज्यं समर्प्याथ प्रणेमुस्ते पदाम्बुजम् ॥ ५७
को वा रावणदैत्येन्द्रनिहन्तुर्वाजिसत्तमम् । गृह्णाति विजयाकाङ्क्षी जरामरणवर्जितः ॥ ५८
अहिच्छत्रां गतस्तावत्तव वाजी मनोहरः । तद्राजा सुमदः श्रुत्वा हयं प्राप्तं तव प्रभो ॥ ५९
सपुत्रः सबलः सर्वसैन्येन बलिना वृतः । सर्वं समर्पयामास राज्यं निहतकण्टकम् ॥ ६०
यो राजा जगतां नेत्रीं मातरं जगदम्बिकाम् । प्रसाद्य चिरमायुष्माँल्लेभे राज्यमकण्टकम् ॥ ६१
एष त्वां तु प्रणमति सुमदः प्रभुसेवितम् । तं गृहाण कृपादृष्ट्या चिरादर्शनकाङ्क्षकम् ॥ ६२
ततः सुबाहुभूपस्य नगरे बलपूरिते । दमनस्तस्य वै पुत्रः प्रजग्राह हयोत्तमम् ॥ ६३
तेन सार्कं महद्युद्धं बभूव दमनेन च । पुष्कलो जयमापेदे संमूर्छ्य सुभुजात्मजम् ॥ ६४
ततः सुबाहुः संक्रुद्धो रणे पवनजं बलात् । युयुधे तव पादाब्जसेवकं बलिनां वरम् ॥ ६५
तस्य पादाहतो ज्ञानं प्राप्य शापतिरस्कृतम् । तुभ्यं समर्प्य सकलं वाजिनः पालकोऽभवत् ॥ ६६
एष त्वां सुभुजो राजा प्रणमत्युन्नताङ्गकः । कृपादृष्ट्याऽभिषिञ्च त्वं सुबाहुं रणकोविदम् ॥ ६७
ततो मुक्तो हयो रेवाह्रदे स निममज्ज ह । तत्र प्राप्तं मोहनास्त्रं शत्रुघ्नेन बलीयसा ॥ ६८
ततो देवपुरे प्रागाच्छिववासविभूषिते । तत्रत्यं तु विजानासि यतस्त्वं तत्र चाऽऽगतः ॥ ६९

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण त. थ. द. ध. पुस्तकस्थः ।

१ न. परिरम्भितुम् । २ घ. ङ. झ. ट. ढ. °रं वि° । ३ द. न °म् । प्रहसन्मेघगम्भीरनादेन च सुबुद्धिमान् । सु° । ४ द. स्वनामव° । ५ घ. ङ. झ. ट. ढ. °णकाङ्क्षितः । ६ ग. ठ. द. ध. न. °हुं नयको° ।

विद्युन्माली हतो दैत्यः सत्यवान्संगतस्ततः । सुरथेन समं युद्धं जानासि त्वं महामते ॥ ७०
ततः कुण्डलकान्मुक्तो हयो बभ्राम सर्वतः । न कश्चित्तं निजग्राह स्ववीर्यबलदर्पितः ॥ ७१
वाल्मीकेराश्रमे रम्ये हयः प्राप्तो मनोरमः । तत्र यत्कौतुकं जातं तच्छृणुष्व नरोत्तम ॥ ७२
तत्रार्भस्तव सारूप्यं बिभ्रत्षोडशवार्षिकः । जग्राह वीक्ष्य पत्राङ्कं वाजिनं बलिसत्तमः ॥ ७३
तत्र कालजिता युद्धं महज्जातं नरोत्तम । निहतस्तेन वीरेण खड्गेन शितधारिणा ॥ ७४
अनेके निहताः संख्ये पुष्कलाद्या महाबलाः । मूर्छितं चापि शत्रुघ्नं चक्रे वीरशिरोमणिः ॥ ७५
तदा राजा महद्दुःखं विचार्य हृदि संयुगे । कोपेन मूर्छितं चक्रे वीरो हि बलिनां वरम् ॥ ७६
स यावन्मूर्छितो राज्ञा तावदन्यः समागतः । तेनैतेन च संजीव्य नाशितं कटकं तव ॥ ७७
सर्वेषां मूर्छितानां तु शस्त्राण्याभरणानि च । गृहीत्वा वानरौ बद्धौ जग्मतुः स्वाश्रमं प्रति ॥ ७८
कृपां कृत्वा पुनस्तेन दत्तोऽश्वो यज्ञियो महान् । जीवनं प्रापितं सर्वं कटकं नष्टजीवितम् ॥ ७९
वयं नीत्वा ततो वाहं प्राप्तास्तव समीपके । एतदेव मया ज्ञातं तदुक्तं ते पुरो वचः ॥ ८०

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे सुमतिनिवेदनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१४७८०

---

अथ षट्षष्टितमोऽध्यायः ।

---

शेष उवाच—
कथितौ वै सुमतिना वाल्मीकेराश्रमे शिशू । पुत्रौ स्वीयाविति ज्ञात्वा वाल्मीकिं प्रति संजगौ १
श्रीराम उवाच—
कौ शिशू मम सारूप्यधारकौ बलिनां वरौ । किमर्थं तिष्ठतस्तत्र धनुर्विद्याविशारदौ ॥ २
अमात्यकथितौ श्रुत्वा विस्मयो मम जायते । यौ शत्रुघ्नं हनूमन्तं लीलयाऽत्र बबन्धतुः ॥ ३
[*तस्माच्छंस मुने सर्वं बालयोश्च विचेष्टितम् । यथा मे परमा प्रीतिर्भवत्येवमभीप्सिता ॥ ४
इति तत्कथितं श्रुत्वा राजराजस्य धीमतः] । उवाच परमं वाक्यं स्पष्टाक्षरसमान्वितम् ॥ ५
वाल्मीकिरुवाच—
तवान्तर्यामिणो नृणां कथं ज्ञानं हि नो भवेत् । तथाऽपि कथयाम्यत्र तव संतोषहेतवे ॥ ६
राजन्यौ बालकौ मद्धमाश्रमे बलिनां वरौ । त्वत्सारूप्यधरौ स्वाङ्गमनोहरवपुर्धरौ ॥ ७
त्वया यदा वने त्यक्ता जानकी वै निरागसी । अन्तर्वत्नी वने घोरे विलपन्ती मुहुर्मुहुः ॥ ८
कुररीमिव दुःखार्ता वीक्ष्याहं तव मोहलाम् । जनकस्य सुतां पुण्यामाश्रमे त्वानयं तदा ॥ ९
तस्याः पर्णकुटी रम्या रचिता मुनिपुत्रकैः । तस्यामभूतां पुत्रौ द्वौ भासयन्तौ दिशो दश ॥ १०
तयोरकरवं नाम कुशो लव इति स्फुटम् । वव्रधातेऽनिशं तत्र शुक्लपक्षशशी यथा ॥ ११
कालेनोपनयाद्यानि कर्माणि कृतवानहम् । वेदान्साङ्गानहं सर्वान्ग्राहयामास भूपते ॥ १२
सर्वाणि स(च)रहस्यानि शृणुष्व मुखतो मम । आयुर्वेदं धनुर्विद्यां शस्त्रविद्यां तथैव च ॥ १३

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च छ. ज. झ. ठ. ड. ण. त. थ. द. ध. न. पुस्तकस्थः ।

---

१ न. °ष सर्वे वै ना° । २ न. °रौ तौ च बाली शूरवरौ प्रभो । त्व° । ३ न. °द्यां सरहस्यां त° ।

विद्यां जालंधरीं चाथ संगीतकुशलौ कृतौ । [*गङ्गाकूले गायमानौ लताकुञ्जवनेषु च ॥ १४
चञ्चलौ चलचित्तौ च सर्वविद्याविशारदौ । तदाऽहमतिसंतोषं प्राप्तः परमबालयोः] ॥ १५
दत्त्वा सर्वाणि शस्त्राणि मस्तके निहितः करः । अतीव गानकुशलौ दृष्ट्वा लोका †विसिष्मिरे ॥
षड्जमध्यमगान्धारस्वरविद्याविशारदौ । तथाविधौ विलोक्याहं गापयामि मनोहरम् ॥ १७
भविष्यज्ञानयोगाच्च कृतं रामायणं शुभम् । मृदङ्गपणवाद्यं च (द्यैश्च?) यन्त्रवीणाविशारदौ ॥ १८
वने वने च गायन्तौ मृगपक्षिविमोहकौ । अद्भुतं गीतमाधुर्यं तदा राम कुमारयोः ॥ १९
श्रोतुं तौ वरुणो बालावानिनाय विभावरीम् । मनोहारिवयोरूपौ गानविद्याब्धिपारगौ ॥ २०
कुमारौ जगतुस्तत्र लोकेशादेशतः कैलम् । परमं मधुरं रम्यं पवित्रं चरितं तव ॥ २१
शुश्राव वरुणः सार्धं कुटुम्बेन च गायकैः । शृण्वन्नैव गतस्तृप्तिं मित्रेण वरुणः सह ॥ २२
सुधातोऽपि रसस्वादु चरितं रघुनन्दन । गानानन्दमहालोभहृतप्राणेन्द्रियक्रियः ॥ २३
प्रत्यागन्तुं दिदेशासौ कुमारौ न हि तावकौ । रमणीयमहाभोगैर्लोभितावपि बालकौ ॥ २४
चालितौ न गुरोश्चाऽऽत्ममातुः पादाम्बुजस्मृतेः । अहं चापि गतः पश्चाद्वरुणालयमुत्तमम् ॥ २५
वरुणः प्रेमगलितः पूजां चक्रे मम प्रभो । पृच्छते जन्मकर्मादि सर्वज्ञायापि बालयोः ॥ २६
वरुणायाब्रुवं सर्वं जन्मविद्याद्युपागमम् । श्रुत्वा सीतासुतौ देवः स चक्रेऽम्बरभूषणैः ॥ २७
देवैर्दत्तमिति ग्राह्यमिति मद्वाक्यगौरवात् । आदत्तं राजपुत्राभ्यां यद्दत्तं वरुणेन तत् ॥ २८
प्रसन्नेन तयोर्वाद्यगानविद्यावयोगुणैः । ततो मामब्रवीत्सीतामुद्दिश्य वरुणः कृती ॥ २९
सीता पतिव्रताधुर्या शीलरूपवयोन्विता । वीरपुत्रा महाभागा त्यागं नार्हति कर्हिचित् ॥ ३०
महती हानिरेतस्यास्त्यागे हि रघुनन्दन । सिद्धीनां परमा सिद्धिरेषा ते ह्यनपायिनी ॥ ३१
पामरैर्महिमा नास्या ज्ञायते यदि दूषितैः । का हानिस्तावता राम पुण्यश्रवणकीर्तन ॥ ३२
अस्मत्साक्षिकमेवास्याः पावनं चरितं सदा । सद्यस्ते सिद्धिमायान्ति ये सीतापदचिन्तकाः ३३
यस्याः संकल्पमात्रेण जन्मस्थितिलयादिकाः । भवन्ति जगतां नित्यं व्यापारा ऐश्वरा अमी ३४
सीता मृत्युः सुधा चेयं तपत्येषा च वर्षति । स्वर्गो मोक्षस्तपो योगो दानं च तव जानकी ३५
ब्रह्माणं शिवमन्यांश्च लोकपालान्मदादिकान् । करोत्येषा करोत्येवं न च सीता तव प्रिया॥३६
त्वं पिता सर्वलोकानां सीता च जननीत्यतः । कुदृष्टिरत्र तु क्षेमयोग्या न तव कर्हिचित् ॥ ३७
वेत्ति सीतां सदाशुद्धां सर्वज्ञो भगवान्स्वयम् । भवानपि सुतां भूमेः प्राणादपि गरीयसीम्॥३८
आदर्तव्या त्वया तस्मात्प्रिया शुद्धेति जानकी । न च शापपराभूतिः सीतायां त्वयि वा विभो
इमानि मम वाक्यानि वाच्यानि जगतीपतिम् । रामं प्रति त्वया साक्षाद्वाल्मीके मुनिसत्तम॥४०
इत्युक्तो वरुणेनाहं सीतासंग्रहकारणात् । एवमेव हि सर्वैश्च लोकपालैरपि प्रभो ॥ ४१
श्रुतं रामायणोद्गानं पुत्राभ्यां ते सुरासुरैः । गन्धर्वैरपि सर्वैश्च कौतुकाविष्टमानसैः ॥ ४२
प्रसन्ना एव सर्वेऽपि प्रशशंसुः सुतौ च ते । त्रैलोक्यं मोहितं ताभ्यां रूपगानवयोगुणैः ॥ ४३
दत्तं यल्लोकपालैस्ते सुताभ्यां स्वीकृतं हि तत् । ऋषिभिश्च वरा आभ्यामन्येभ्यः कीर्तिरेव च ४४
एकरामं जगत्सर्वं पूर्वं मुनिविलोकितम् । त्रिराममधुना जातं सुताभ्यां तेऽखिलेक्षितम् ॥ ४५

* एतच्चिह्नान्तर्गतः पाठः क. ख. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. न. पुस्तकस्थः । † रे आदेश आर्षः ।

१ ख. छ. ज. ड. ण. त. थ. द. न. °रभेदवि° । २ न. किल । ३ द. न. °पि परं स्वा° । ४ न. °ववन्महतीं पूजां तयोर्मद्वा° । ५ न. °त्यं सथा लोकेश्च° । ६ द. न. °व नान्या सी° ।

[एकका]मपराभूतिर्लोके पूर्वमवेक्षिता । कामैश्चतुर्भिरध्यार्य जीयते च यतस्ततः ॥ ४६
[स]र्वत्रान्यत्र राजेन्द्र रामपुत्रौ कुशीलवौ । गी(ये)ते अत्र संकोचः किंकृतो विदुषि त्वयि ॥ ४७
[कृ]तेषु तव सर्वेषु श्रूयते महती स्तुतिः । त्यागादन्यत्र सीतायाः पुण्यश्लोकशिरोमणे ॥ ४८
[त्व]या त्रैलोक्यनाथेन गार्हस्थ्यमनुकुर्वता । अङ्गीकार्यौ सुतौ राम विद्याशीलगुणान्वितौ ॥ ४९
[न] तौ स्वां मातरं हित्वा स्थास्यतो भवदन्तिके । जनन्या सहितौ तस्मादाकार्यौ भवता सुतौ ५०
[ए]ष एव तया प्राणः सेनासंजीवनात्पुनः । प्रत्ययः सर्वलोकानां [*पावनः पततामपि ॥ ५१
[ज्ञा]ताज्ञातं ते न चास्माकं नामराणां च मानद । शुद्धौ तस्यास्तु लोकानां] यत्नष्टं तदिह ध्रुवम् ॥

शेष उवाच—

[इ]ति वाल्मीकिना रामः सर्वज्ञोऽप्यवबोधितः । स्तुत्वा नत्वा च वाल्मीकिं प्रत्युवाच स लक्ष्मणम् ५३
[ग]च्छ ताताधुना सीतामानेतुं धर्मचारिणीम् । सपुत्रां रथमास्थाय सुमित्रसहितः सखे ॥ ५४
श्रावयित्वा ममेमानि मुनेश्च वचनान्यपि । संबोध्य च पुरीमेतां सीतां प्रत्यानयाऽऽशु ताम् ॥

लक्ष्मण उवाच—

यास्यामि तत्र संदेशात्सर्वेषां वः प्रियाद्विभो । देव्यायास्यति चेद्देव यात्रा मे सफला ततः॥५६
मयि सा मा(सा)भ्यसूयैव पूर्वदोषवशात्सती । अनागता देव तस्याः क्षमस्वाऽऽगन्तुकं तु माम्५७
इत्युक्त्वा लक्ष्मणो रामं रथे स्थित्वा नृपाज्ञया । सुमित्रमुनिशिष्याभ्यां युतोऽगाद्वनिताश्रमम् ॥
कथं प्रसादनीया स्यात्सीता भगवती मया । पूर्वदोषं विजानाति रामाधीनस्य मे सदा ॥ ५९
एवं संचिन्तयन्नन्तर्हर्षसंकोचमध्यगः । लक्ष्मणः प्राप सीताया आश्रमं श्रमनाशनम् ॥ ६०
रथात्सोऽथावरुह्याऽऽरादश्रुरुद्धविलोचनः । आर्ये पूज्ये भगवति शुभे इति वदन्मुहुः ॥ ६१
पपात पादयोस्तस्या वेपमानाखिलाङ्गकः । उत्थापितस्तया देव्या प्रीतिविह्वलया स च ॥ ६२

सीतोवाच—

किमर्थमागतः सौम्य वनं मुनिजनप्रियम् । आस्ते स कुशली देवः कौशल्याशुक्तिमौक्तिकः॥६३
[2]अरोषो मयि कश्चित्स कीर्त्या केवलया हृतः । कीर्त्यते सर्वलोकैश्च कल्याणगुणसागरः ॥ ६४
अकीर्तिभीतिमापन्नो हन्तुं मां त्वां नियुक्तवान् । यदि ततोऽपि लोकेषु कीर्तिस्तस्यामला भवेत् ६५
मृत्वाऽपि पतिसत्कीर्तिं कुर्वत्या मे हि सुस्थिराम् । पतिसामीप्यमेवाऽऽशु भूयादेव हि देवर॥६६
त्यक्तयाऽपि मया तेन नासौ त्यक्तो मनागपि । फलं हि साधनायत्तं हेतुः फलवशो न तु॥६७
कौसल्या शल्यशून्याऽसौ कृपापूर्णा सदा मयि । आस्ते कुशलिनी यस्याः पुत्रस्त्रैलोक्यपालकः ६८
सर्वे कुशलिनः सन्ति भरताद्याश्च बान्धवाः । सुमित्रा च महाभागा यस्याः प्राणादहं प्रिया॥६९
मद्धर्त्कि त्वमपि त्यक्तः सर्वलोकेषु कीर्तये । राज्ञः किं दुस्त्यजं तस्य स्वात्माऽपि यस्य न प्रियः॥
इत्येवं बहुधा पृष्टस्तया रामानुजः स ताम् । उवाच कुशली देवः कुशलं त्वयि पृच्छति ॥ ७१
कौसल्या च सुमित्रा च याश्चान्या राजयोषितः । पप्रच्छुः कुशलं देवि प्रीत्या त्वामाशिषा सह ७२
कुशलप्रश्नपूर्वं हि तव पादाभिवन्दनम् । निवेदयामि शत्रुघ्नभरताभ्यां कृतं शुभे ॥ ७३
गुरुभिर्गुरुपत्नीभिः सर्वाभिरपि ते शुभे । दत्ताऽऽशीः कुशलप्रश्नः कृतश्च त्वयि जानकि ॥ ७४

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः ।

१ °तः । सामात्ये मय्यासूयां च पू° । २ द. न. अशेषो । ३ द. न. °पन्नस्त्यक्तुं मा त्वां ।

आकारयति देवस्त्वां निर्व्यलीकः कृतात्मवान् । अलब्धात्मरतिस्त्वत्तोऽन्यत्र सर्वत्र भामिनि ७५
शून्या एव दिशः सर्वास्त्वां विना जनकात्मजे । पश्यन्रोदिति नाथो नो रोदयन्नितरानपि ७६
यत्र देवि स्थिताऽसि त्वं नित्यं स्मरति राघवः । अशून्यं तु तमेवासौ मन्यमानो विदेहजे ॥ ७७
धन्योऽयमाश्रमो जातो वाल्मीकेर्यत्र जानकी । कालं क्षपति वार्ताभिर्मदीयाभिर्वदन्निति ॥ ७८
उक्तवान्यद्मुदन्किंचित्स्वामी नस्त्वयि तच्छृणु । व्यक्तीभवति वक्तुर्यद्धृद्गतं तदसंशयम् ॥ ७९
लोको वदति मामेव सर्वेषामीश्वरेश्वरम् । अहं त्वदृष्टमेवैषां स्वतन्त्रं कारणं ब्रुवे ॥ ८०
अदृष्टमेव कार्येषु सर्वेशोऽप्यनुगच्छति । ईशनीयाः कुतो नैतदन्वीयुः सुखदुःखयोः ॥ ८१
धनुर्भङ्गे मतेर्भ्रंशे कैकेय्या मरणे पितुः । अरण्यगमने तत्र हरणे तव वारिधेः ॥ ८२
तरणे रक्षसां भर्तुर्मारणेऽपि रणे रणे । सहायीभवने मह्यमृक्षवानररक्षसाम् ॥ ८३
लाभे तव प्रतिज्ञायाः सत्यत्वे च सतीमणे । पुनः स्वबन्धुसंबन्धे राज्यप्राप्तौ च भामिनि ॥ ८४
पुनः प्रियावियोगे च कारणं यदवारणम् । प्रसीदति तदेवाद्य संयोगे पुनरावयोः ॥ ८५
वेदोऽन्यथा कृतो येन लोकोत्पत्तिलयो यतः । लोकाननुगतस्तस्मात्कारणं प्रथमं त्वहम् ॥ ८६
अदृष्टमनुवर्तन्ते लोकाः संप्रतिबोधकाः । भोगेन जीर्यतेऽदृष्टं तत्तु भुक्तं त्वया वने ॥ ८७
स्नेहोऽकारणकः सीते वर्धमानो मम त्वयि । लोकादृष्टे तिरस्कृत्य त्वामाह्वयत आदरात् ॥ ८८
शङ्कितेनापि दोषेण स्नेहनैर्मल्यमज्जनम् । भवतीति स वै शुद्ध आस्वाद्यो विबुधैः सदा ॥ ८९
स्नेहशुद्धिरियं भद्रे कृता मे त्वयि नान्यथा । मन्तव्यं रक्षितोऽप्येष लोकः शिष्टानुवर्तिना ॥ ९०
आवयोर्निन्दया देवि सर्वावस्थासु शुद्धये । लोको नश्येद्धि संमूढश्चरितैर्महतामयम् ॥ ९१
आवयोरुज्ज्वला कीर्तिरावयोरुज्ज्वलो रसः । आवयोरुज्ज्वलौ वंशावावयोरुज्ज्वलाः क्रियाः ९२
भवेयुरावयोः कीर्तिगायका उज्ज्वला भुवि । आवयोर्भक्तिमन्तो ये ते यान्त्यन्तं भवाम्बुधेः ॥ ९३
इत्युक्ता भवती तेन प्रीयमाणेन ते गुणैः । पत्युः पादाम्बुज द्रष्टुं करोतु सदयं मनः ॥ ९४
वासांसि रमणीयानि भूषणानि महान्ति च । अङ्गरागास्तथा गन्धा मनोज्ञास्त्वयि योजिताः ९५
रथो दास्यश्च रामेण प्रेषिता उत्सवाय ते । छत्रं च चामरे शुभ्रे गजा अश्वाश्च शोभने ॥ ९६
स्तूयमाना द्विजश्रेष्ठैः सूतमागधबन्दिभिः । वन्द्यमाना पुरस्त्रीभिः सेव्यमाना च योद्धभिः ॥ ९७
[*पुष्पैः संछाद्यमाना च देवदेवाङ्गनादिभिः । धनादि ददती तेभ्यो द्विजादिभ्यो यथोचितम् ॥ ९८
गजारूढौ कुमारौ च पुरस्कृत्य जनेश्वरि । मयाऽनुगम्यमाना च गच्छायोध्यां निजां पुरीम् ॥ ९९
त्वयि तत्र गतायां तु संगतायां प्रियेण ते । सर्वासां राजनारीणामागतानां च सर्वतः ॥ १००
सर्वमहर्षिपत्नीनां कौशल्यानां तथा मखे । मङ्गलैर्वाद्यगीताद्यैर्भवत्वद्य महोत्सवः ॥ १०१

शेष उवाच—

इति विज्ञापनां देवी श्रुत्वा सीता तमाह च । नाहं कीर्तिकरी राज्ञो नापि कीर्तिः स्वयं त्वहम् ॥
किं मया तस्य साध्यं स्याद्धर्मकामार्थशून्यया । सत्येवं भवतां भूपे को विश्वासो निरङ्कुशे ॥ १०३
प्रत्यक्षा वा परोक्षा वा भर्तुर्दोषा मनःस्थिताः । न वाच्या जातु मादृश्या कल्याणकुलजातया ॥
पाणिग्रहणकाले मे यद्रूपो हृदये स्थितः । तद्रूपो हृदयाभासौ कदाचिदपसर्पति ॥ १०५
लक्ष्मणेमौ कुमारौ मे तत्तेजोंशसमुद्भवौ । वंशाङ्कुरौ महावीरौ धनुर्विद्याविशारदौ ॥ १०६

* एतच्चिन्हान्तर्गतः पाठः क. ख. च. छ. झ. ञ. ड. ण. त. थ. द. न. पुस्तकस्थः ।

१ ख. छ. ड. त. न. ध्रुवम् । २ द. न. °ज्ञो ज्ञापकी° । ३ ञ. लवाङ्कुशौ ।

नीत्वा पितुः समीपं तु लालनीयौ प्रयत्नतः। तपसाऽऽराधयिष्यामि रामं काममिह स्थिता१०७
वाच्यं त्वया महाभाग पूज्यपादाभिवन्दनम्। सर्वेभ्यः कुशलं चापि गत्वेतो मदपेक्षया ॥१०८
पुत्रौ समादिशत्सीता गच्छतं पितुरन्तिकम्। शुश्रूषणीय एवासौ भवद्भ्यां स्वपदप्रदः॥ १०९
आज्ञप्तावप्यनिच्छन्तौ तौ कुमारौ कुशीलवौ। वाल्मीकिवचनात्तत्र जग्मतुश्च सलक्ष्मणौ॥ ११०
वाल्मीकेरेव पादाब्जसमीपं तत्सुतौ गतौ। लक्ष्मणोऽपि ववन्दे तं गत्वा बालकसंयुतः॥ १११
वाल्मीकिर्लक्ष्मणस्तौ च कुमारौ मिलिता अमी। सभायां संस्थितं रामं ज्ञात्वा च जग्मुरुत्सुकाः
लक्ष्मणः प्रणिपत्याथ सीतावाक्यादि सर्वशः। कथयामास रामाय हर्षशोकयुतः सुधीः॥ ११३
सीतासंदेशवाक्येभ्यो रामो मूर्छां समन्वभूत्। संज्ञामवाप्य चोवाच लक्ष्मणं नयकोविदम्॥११४

श्रीराम उवाच—

गच्छ मित्र पुनस्तत्र यत्नेन महता च ताम्। शीघ्रमानय भद्रं ते मद्वाक्यानि निवेद्य च॥ ११५
अरण्ये किं तपस्यन्त्या गतिरन्या विचिन्तिता। श्रुता दृष्टाऽथवा मत्तो यस्माऽऽगच्छसि जानकि॥
त्वदिच्छया त्वमेवेतो गताऽरण्यं मुनिप्रियम्। पूजिता मुनिपत्न्यस्ता दृष्टा मुनिगणास्त्वया॥
पूर्णो मनोरथस्तेऽद्य किं नाऽऽगच्छसि भामिनि। न दोषं मयि पश्येस्त्वं स्वात्मेच्छाया विलोकनात्॥
गत्वा गत्वाऽथ वामोरु पतिरेव गतिः स्त्रियाः। निर्गुणोऽपि गुणाम्भोधिः किं पुनर्मनसेप्सितः॥
या या क्रिया कुलस्त्रीणां सा सा पत्युः प्रतुष्टये। पूर्वमेव प्रतुष्टोऽहमद्य तु सुतरां त्वयि॥ १२०
यागो जपस्तपो दानं व्रतं तीर्थं द(ग)यादिकम्। देवाश्च मयि संतुष्टे तुष्टमेतदसंशयम्॥ १२१

शेष उवाच—

इति संदेशमापीय सीतां प्रति जगत्पतेः। आह लक्ष्मण आत्मेशमानतः प्रणयाद्धरौ॥ १२२

लक्ष्मण उवाच—

सीतानयनमुद्दिश्य प्रसन्नस्त्वं यदूचिवान्। कथयिष्यामि त्वद्वाक्यं विनयेन समन्वितम्॥ १२३
इत्युक्त्वा पादयोर्नत्वा रघुनाथस्य लक्ष्मणः। जगाम त्वरितः सीतां रथे तिष्ठन्महाजवे॥ १२४
वाल्मीकिः श्रीयुतौ वीक्ष्य रामपुत्रौ महौजसौ। उवाच स्मितमाधाय मुखं कृत्वा मनोहरम्॥१२५

वाल्मीकिरुवाच—

युवां प्रगायतां पुत्रौ रामचारित्रमद्भुतम्। वीणां वै वादयन्तौ वां कलगानेन शोभितम्॥ १२६
इत्युक्तौ तौ सुतौ रामचरित्रं बहुपुण्यदम्। अगायतां महाभागौ सुवाक्यपदचित्रितम्॥ १२७
यस्मिन्धर्मविधिः साक्षात्पातिव्रत्यं तु यत्स्थितम्। भ्रातृस्नेहो महान्यत्र गुरुभक्तिस्तथैव च१२८
स्वामिसेवकयोर्यत्र नीतिर्मूर्तिमती किल। अधर्मैकरशास्तिव यत्र साक्षाद्रघूद्वहात्॥ १२९
तद्गानेन जगद्व्याप्तं दिवि देवा अपि स्मिताः। किंनरा अपि यद्गानं श्रुत्वा मूर्छामिताः क्षणात्॥
वीणाया रणितं श्रुत्वा तालमानेन शोभितम्। निखिला परिषत्तत्र शालभञ्जीव चित्रिता॥१३१
हर्षादश्रूणि मुञ्चन्ति रामाद्या भूमिपास्तदा। तद्गानपञ्चमालापमोहिताश्चित्रितोपमाः॥ १३२
तत्र रामः सुतौ दृष्ट्वा महागानविमोहकौ। अदात्ताभ्यां सुवर्णस्य लक्षं लक्षं पृथक्पृथक्॥ १३३
तदा दानपरं दृष्ट्वा वाल्मीकिं मुनिसत्तमम्। अब्रूतां प्रहसन्तौ तौ किंचिद्वक्रभ्रुवोर्धरौ॥ १३४

कुशलवावूचतुः—

मुने महानयोऽनेन क्रियते भूमिपेन वै। यदावाभ्यां सुवर्णानि दातुमिच्छति लोभयन्॥ १३५

१ न. °ह्मार्कि व°। २ क. ख. च. छ. ज. झ. त. थ. द. न. स्थिताः।

प्रतिग्रहो ब्राह्मणानां शस्यते नेतरेषु वै । प्रतिग्रहपरो राजा नरकायैव कल्पते ॥ १३६
आवयोः कृपया मुक्तं राज्यं भुङ्क्ते महीपतिः। कथं दातुं सुवर्णानि वाञ्छति श्रेयसाऽश्चितः॥१३७
इत्युक्तवन्तौ तौ दृष्ट्वा वाल्मीकिः कृपया युतः। अशंसद्युष्मत्पितरं जानीथा नीतिवित्तमौ॥ १३८
इति श्रुत्वा मुनेर्वाक्यं बालकौ पितृपादयोः । लग्नौ विनयसंयुक्तौ मातृभक्त्याऽतिनिर्मलौ॥१३९
रामो बालौ दृढं स्वाङ्गे परिरभ्य मुदाऽन्वितः। मेने स्वीयौ तदा धर्मौ मूर्तिमन्तावुपस्थितौ १४०
सभाऽपि रामसुतयोर्वीक्ष्य वक्त्रे मनोरमे । जानकीपतिभक्तित्वं सत्यं मेने मुनीश्वर ॥ १४१

व्यास उवाच—

इति शेषमुखप्रोक्तं श्रुत्वा वात्स्यायनोऽब्रवीत् । रामायणं श्रोतुमनाः सर्वधर्मसमन्वितम् ॥ १४२

वात्स्यायन उवाच—

कस्मिन्काले कृतं स्वामिन्रामायणमिदं महत् । कस्माच्चकार किं तत्र वर्णनं किं वदस्व तत्॥१४३

शेष उवाच—

एकदा गतवान्विप्रो वाल्मीकिर्विपिनं महत् । यत्र तालास्तमालाश्च किंशुका यत्र पुष्पिताः॥१४४
केतकी यत्र रजसा कुर्वती सौरभं वनम् । शशिप्रभेव महती दृश्यते शुभ्रवर्णभृत् ॥ १४५
चम्पको बकुलश्चापि कोविदारः कुरण्टकः । अनेके पुष्पिता यत्र पादपाः शोभने वने ॥ १४६
कोकिलानां विरावेण षट्पदानां च शब्दितैः । संघुष्टं सर्वतो रम्यं मनोहरवयोन्वितम् ॥ १४७
तत्र क्रौञ्चयुगं रम्यं कामबाणप्रपीडितम् । परस्परं प्रहर्षितं रेमे स्निग्धतया स्थितम् ॥ १४८
तदा व्याधः समागत्य तयोरेकं मनोहरम् । अवधीन्निर्दयः कश्चिन्मांसास्वादनलोलुपः ॥ १४९
तदा क्रौञ्ची व्याधहतं स्वपतिं वीक्ष्य दुःखिता । विललाप भृशं दुःखान्मुञ्चती रावमुच्चकैः १५०
तदा मुनिः प्रकुपितो निषादं क्रौञ्चघातकम् । शशाप वार्युपस्पृश्य सरितः पावनं शुभम् ॥ १५१
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चपक्षिणोरेकमवधीः काममोहितम्॥१५२
तदा प्रबन्धं श्लोकस्य जातं मत्वा ह्यनु द्विजाः । ऊचुर्मुनिं प्रहृष्टास्ते शंसन्तः साधु साध्विति ॥
स्वामिञ्शापोदिते वाक्ये भारती श्लोकमातनोत् । अत्यन्तं मोहनो जातः श्लोकोऽयं मुनिसत्तम
तदा मुनिः प्रहृष्टात्मा बभूव वाडवर्षभः । तस्मिन्काले समागत्य ब्रह्मा पुत्रैः समन्वितः ॥ १५५
वचो जगाद वाल्मीकिं धन्योऽसि त्वं मुनीश्वर। भारती त्वन्मुखे स्थित्वा [*श्लोकत्वं समपद्यत
तस्माद्रामायणं रम्यं कुरुष्व मधुराक्षरम् । येन ते विमला कीर्तिराकल्पान्तं भविष्यति ॥ १५७
धन्या सैव मुखे वाणी] रामनाम्ना समन्विता । अन्या कामकथा नृणां जनयत्येव सूतकम् १५८
तस्मात्कुरुष्व रामस्य चरितं लोकविश्रुतम् । येन स्यात्पापिनां पापहानिरेव पदे पदे ॥ १५९
इत्युक्त्वाऽन्तर्दधे स्रष्टा सर्वदेवैः समन्वितः । ततः स चिन्तयामास कथं रामायणं भवेत्॥ १६०
तदा ध्यानपरो जातो नद्यास्तीरे मनोरमे । तस्य चेतस्यसौ रामः प्रादुर्भूतो मनोहरः ॥ १६१
नीलोत्पलदलश्यामं रामं राजीवलोचनम् । निरीक्ष्य तस्य चरितं भूतं भावि भवच्च यत् ॥१६२
तदाऽत्यन्तं मुदं प्राप्तो रामायणमथासृजत् । मनोरमपदैर्युक्तं वृत्तैर्बहुविधैरपि ॥ १६३

* एतच्चिह्नान्तर्गतः पाठः क. ख. च. छ. ज. झ. ड. ण. त. थ. द. न. पुस्तकस्थः ।

१ क. च. ज. झ. ण. त. कुरम्बकः । ख. छ. कुरङ्गकः । २ ज. थ. प्रहर्षितं । ३ न. °प चाप्युप° । ४ क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. ट. ठ. ड. ढ. ण. त. थ. ध. °तः पुण्यपापहम् । ५ ग. घ. ङ. झ. ट. ठ. ढ. भ. °हितः । त° । ६ ख. ज. ण. त. थ. ध. द. न. वाडवर्षभ ।

षट्काण्डानि सुरम्याणि यत्र रामायणेऽनघ। बालमारण्यकं चान्यत्किष्किन्धा सुन्दरं तथा १६४
युद्धमुत्तरमन्यच्च *षडेतानि महामते। शृणुयाद्यो नरः पुण्यात्सर्वपापैः प्रमुच्यते ॥ १६५
तत्र बाले तु संतुष्टः पुत्रेष्ट्या चतुरः सुतान्। प्राप पङ्क्तिरथः साक्षाद्धरिं ब्रह्म सनातनम् ॥ १६६
स कौशिकमखं गत्वा सीतामुद्वाह्य भार्गवम्। आगत्य पुरमुत्कृष्टो यौवराज्यप्रकल्पनम् ॥ १६७
मातृवाक्याद्वनं प्रागाद्गङ्गामुत्तीर्य पर्वतम्। चित्रकूटं महिलया लक्ष्मणेन समन्वितः ॥ १६८
भरतस्तं वने श्रुत्वा जगाम भ्रातरं नयी। तमप्राप्य स्वयं नन्दिग्रामे वासमचीकरत् ॥ १६९
बालमेतच्छृणुष्वान्यदारण्यकसमुद्भवम्। मुनीनामाश्रमे वासस्तत्र तत्रोपवर्णनम् ॥ १७०
शूर्पणख्या नसश्छेदः खरदूषणनाशनम्। मायामारीचहननं दैत्याद्रामापहारणम् ॥ १७१
वने विरहिणा भ्रान्तं मनुष्यचरितं धृतम्। कबन्धप्रेक्षणं तत्र पम्पायां गमनं तथा ॥ १७२
हनूमता संगमनमित्येतद्वनसंज्ञितम्। अपरं च शृणु मुने संक्षिप्य कथयाम्यहम् ॥ १७३
सप्ततालप्रभेदश्च वालेर्मारणमद्भुतम्। सुग्रीवराज्यदानं च नगवर्णनमित्युत ॥ १७४
लक्ष्मणात्कर्मसंदेशः सुग्रीवस्य विवासनम्। तथा सैन्यसमुद्देशः सीतान्वेषणमप्युत ॥ १७५
संपातिप्रेक्षणं तत्र वारिधेर्लङ्घनं तथा। परतीरे कपिप्राप्तिः कैष्किन्धं काण्डमद्भुतम् ॥ १७६
सुन्दरं शृणु काण्डं वै यत्र रामकथाऽद्भुता। प्रतिगेहं परिभ्रान्तिः कपेश्चित्रस्य दर्शनम् ॥ १७७
सीतासंदर्शनं तत्र जानक्या भाषणं तथा। वनभङ्गः प्रकुपितैर्बन्धनं वानरस्य वै ॥ १७८
लङ्काप्रज्वलनं तत्र वानरैः संगतिस्ततः। रामाभिज्ञानददनं सैन्यप्रस्थानमेव च ॥ १७९
समुद्रे सेतुकरणं शुकसारणसंगतिः। इति सुन्दरमाख्यातं युद्धे सीतासमागमः ॥ १८०
उत्तरे त्वृषिसंवादो यज्ञप्रारम्भ एव च। तत्रानेका रामकथाः शृण्वतां पापनाशकाः ॥ १८१
इति षट्काण्डमाख्यातं ब्रह्महत्यापनोदनम्। संक्षेपतो मया तुभ्यमाख्यातं सुमनोहरम् ॥ १८२
चतुर्विंशतिसाहस्रं षट्काण्डपरिचिह्नितम्। तद्वै रामायणं प्रोक्तं महापातकनाशनम् ॥ १८३
तच्छ्रुत्वा राघवः प्रीतः पुत्रावाधाय चाऽऽसने। दृढं तौ परिरभ्याथ सीतां सस्मार वल्लभाम् १८४

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे रामायणगानं नाम षट्षष्ठितमोऽध्यायः ॥ ६६ ॥

आदितः श्लोकानां समष्ट्यङ्काः— १४९६४

---

अथ सप्तषष्ठितमोऽध्यायः ।

---

शेष उवाच—

अथ सौमित्रिरागत्य जानकीं नतवान्मुहुः। प्रेमगद्गदया शंसन्वाचं रामप्रणोदिताम् ॥ १
सीता समागतं दृष्ट्वा लक्ष्मणं विनयान्वितम्। तन्मुखाद्रामसंदेशं श्रुत्वोवाच विलज्जिता ॥ २

सीतोवाच—

सौमित्रे कथमागच्छे रामत्यक्ता महावने। तिष्ठामि रामं स्मरन्ती वाल्मीकेराश्रमे त्वहम् ॥ ३
तस्या मुखोदितं वाक्यं श्रुत्वा सौमित्रिरब्रवीत्। मातः पतिव्रते रामस्त्वामाकारयते मुहुः ॥ ४

---

* वाल्मीकिरामायणे सप्त काण्डानि वर्तन्तेऽत्र त्वयोध्याकाण्डं विहाय षट्काण्डानीति परिगणनं कृतम्।

---

१ न. °ले मुनिकृतपु°। २ न. °प्रगल्भकः। मा°।

पतिव्रता पतिकृतं दोषं नाऽऽनयते हृदि । तस्मादागच्छ हि मया स्थित्वा स्यन्दन उत्तमे ॥ ५
इत्यादि वचनं श्रुत्वा जानकी पतिदेवता । मनोरोषं परित्यज्य तस्थौ सौमित्रिणा रथे ॥ ६
तापसीः सकला नत्वा मुनींश्च निगमोद्धुरान् । रामं स्मरन्ती मनसा रथे स्थित्वाऽगमत्पुरीम् ७
क्रमेण नगरीं प्राप्ता महार्हाभरणान्विता । [*शरयूं सरितं प्राप यत्र रामः स्वयं स्थितः ॥ ८
रथादुत्तीर्य ललिता लक्ष्मणेन समन्विता । ] रामस्य पादयोर्लग्ना पतिव्रतपरायणा ॥ ९
रामस्तामागतां दृष्ट्वा जानकीं प्रेमविह्वलाम् । साध्वि त्वया सहेदानीं कुर्वे यज्ञसमापनम् ॥ १०
वाल्मीकिं सा नमस्कृत्य तथाऽन्यान्विप्रसत्तमान् । जगाम मातृपदयोः संनतिं कर्तुमुत्सुका ॥ ११
कौसल्या तामथाऽऽयान्तीं वीरसूं जानकीं प्रियाम् । आशीर्भिरभिसंयुज्य ययौ हर्षमनेकधा ॥ १२
कैकेयी पादयोर्नम्रां वीक्ष्य वैदेहपुत्रिकाम् । भर्त्रा सह चिरं जीव +सपुत्राऽऽशीरिति व्यधात् ॥
सुमित्रा स्वपदे नम्रां जानकीं वीक्ष्य पुत्रिणीम् । आशिषं व्यदधात्तस्याः पुत्रपौत्रप्रदायिनीम् १४
जानकी सर्वशो नत्वा रामभद्रप्रिया सती । परमं हर्षमापन्ना बभूव किल वाडव ॥ १५
समागतां वीक्ष्य पत्नीं रामचन्द्रस्य कुम्भजः । सुवर्णपत्नीं धिकृत्वा तामधाद्धर्मचारिणीम् ॥ १६
रामस्तदा यज्ञमध्ये शुशुभे सीतया सह । तारयाऽनुगतो यद्वच्छशीव स रघूत्तमः ॥ १७
प्रयोगमकरोत्तत्र काले प्राप्ते मनोरमे । वैदेह्या धर्मचारिण्या सर्वपापापनोदनम् ॥ १८
सीतया सहितं रामं प्रसक्तं यज्ञकर्मणि । निरीक्ष्य जहृषुस्तत्र कौतुकेन समन्विताः ॥ १९
वसिष्ठं प्राह सुमतिं रामस्तत्र क्रतौ वरे । किं कर्तव्यं मया स्वामिन्नतः परमवश्यकम् ॥ २०
रामस्य वचनं श्रुत्वा गुरुः प्राह महामतिः । ब्राह्मणानां प्रकर्तव्या पूजा संतोषकारिका ॥ २१
मरुत्तेन क्रतुः सृष्टः पूर्वं संभारसंभृतः । ब्राह्मणास्तत्र वित्ताद्यैस्तोषिता ह्यभवंस्तदा ॥ २२
अत्यन्तं वित्तसंभारं नेतुं विप्रा[तम]शकन्न हि । प्राक्षिपन्हिमवद्देशे वित्तभारासहा द्विजाः ॥ २३
तस्मात्त्वमपि राजाग्र्यो लक्ष्मीवान्नृपसत्तम । देहि दानादि विप्रेभ्यो यथा स्यात्प्रीतिरुत्तमा ॥ २४
एतच्छ्रुत्वा स राजाग्र्यः पूज्यं मत्वा घटोद्भवम् । प्रथमं पूजयामास ब्रह्मपुत्रं तपोनिधिम् ॥ २५
अनेकरत्नसंभारैः स्वर्णभारैरनेकधा । देशैर्जनैः परिपूर्णैरत्यन्तं प्रीतिदायकैः ॥ २६
अगस्त्यं पूजयामास सपत्नीकं मनोरमम् । तथैव रत्नैः स्वर्णैश्च देशैश्च विविधैरपि ॥ २७
व्यासं सत्यवतीपुत्रं तथैव समपूजयत् । च्यवनं भार्यया साकं सुरत्नैः समपूजयत् ॥ २८
अन्यानपि मुनीन्सर्वानृत्विजस्तपसां निधीन् । पूजयामास रत्नाद्यैः स्वर्णभारैरनेकधा ॥ २९
अदात्तदा क्रतौ रामो विप्रेभ्यो भूरिदक्षिणाम् । [†लक्षं लक्षं सुवर्णस्य प्रत्येकं त्वग्रजन्मने] ३०
दीनान्धकृपणेभ्यश्च ददौ दानमनेकधा । यथासंतोषविहितैर्वित्तै रत्नैर्मनोहरैः ॥ ३१
वासांसि च विचित्राणि भोजनानि मृदूनि च । तत्र प्रादाद्यथोशास्त्रं सर्वेषां प्रीतिकारकम् ॥ ३२
हृष्टपुष्टजनाकीर्णं सर्वसस्योपबृंहितम् । अत्यन्तमभवद्धृष्टं पुरं पुंस्त्रीसमावृतम् ॥ ३३
दानं ददतं सर्वेषां वीक्ष्य कुम्भोद्भवो मुनिः । अत्यन्तं परमप्रीतिं ययौ क्रतुवरे द्विजः ॥ ३४
तदा क्षालनतोयार्थं पानीयममृतोपमम् । आनेतुं च चतुःषष्टिनृपान्सस्त्रीन्समाह्वयत् ॥ ३५

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. छ. ज. ञ. ठ. ड. ण त. थ. ध. पुस्तकस्थः । + सपुत्रेत्याशिषमिति तु युक्तम् । † एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. ञ. ठ. ड. त. द. ध. न. पुस्तकस्थः ।

---

१ द. न. °म् । सीता ताः स° । २ ख. ग. छ. ज. ठ. ड. त. थ. ध. न. °था स्वान्तं स° । ३ ख. घ. ङ. झ. ट. ढ. ण. °वद्धृद्धं पु° । ४ न. °मादिशत् ।

रामस्तु सीतया साकमानेतुमुदकं ययौ । घटेन स्वर्णवर्णेन सर्वालंकारशोभया ॥ ३६
सौमित्रिरूर्मिलया च माण्डव्या भरतो नृपः । [*शत्रुघ्नः श्रुतकीर्त्या च कान्तिमत्या च पुष्कलः
सुबाहुः सत्यवत्या च सत्यवान्वीरभूषया । सुमदस्तत्र सत्कीर्त्या राज्या च विमलो नृपः]॥ ३८
राजा वीरमणिस्तत्र श्रुतवत्या मनोज्ञया । लक्ष्मीनिधिः कोमलया रिपुतापोऽङ्गसेनया ॥ ३९
बिभीषणो महामूर्त्या प्रतापाग्र्यः प्रतीतया । उग्राश्वः कामगमया नीलरत्नोऽधिरम्यया ॥ ४०
सुरथः सुमनोहार्या तथा मोहनया कपिः । इत्यादिनृपतीन्विप्रो वसिष्ठः प्राहिणोन्मुनिः ॥ ४१
वसिष्ठः शरयूं गत्वा शिवपुण्यजलाप्लुताम् । उदकं मन्त्रयामास वेदमन्त्रेण मन्त्रवित् ॥ ४२
पयः पुनीह्यमुं वाहमुदकेन मनोहृता । यज्ञार्थं रामचन्द्रस्य सर्वलोकैकरक्षितुः ॥ ४३
उदकं तन्मुनिस्पृष्टं सर्वे रामादयो नृपाः । आजह्रुर्मण्डपतले विप्रवर्यैरुपस्कृते ॥ ४४
पयोभिर्निर्मलैः स्नाप्य वाजिनं क्षीरसंनिभम् । मन्त्रेण मन्त्रयामास रामहस्तेन कुम्भजः ॥ ४५
पुनीहि मां महावाह अस्मिन्ब्रह्मसमाकुले । त्वन्मेधेनाखिला देवाः प्रीणन्तु परितोषिताः ॥ ४६
इत्युक्त्वा स नृपो रामः सीतया सममस्पृशत् । तदा सर्वे द्विजाश्चित्रममन्यन्त कुतूहलात् ॥ ४७
परस्परमवोचंस्ते यन्नामस्मरणान्नराः । महापापात्प्रमुच्यन्ते स रामः किं वदत्यहो ॥ ४८
इत्युक्तवति भूमीशे रामे कुम्भोद्भवो मुनिः । करवालं चाभिमन्त्र्य ददौ रामकरे मुनिः ॥ ४९
करवाले धृते स्पृष्टे रामेण स हयः क्रतौ । पशुत्वं तु विहायाऽऽशु दिव्यरूपमपद्यत ॥ ५०
विमानवरमारूढश्चाप्सरोभिः समन्वितः । चामरैर्वीज्यमानश्च वैजयन्त्या विभूषितः ॥ ५१
तदा तं वाजितां त्यक्त्वा दिव्यरूपधरं नरम् । वीक्ष्य लोकाः क्रतौ सर्वे विस्मयं प्रापुर्वस्तदा ५२
तदा रामः स्वयं जानञ्ज्ञापयन्सर्वतो नरान् । पप्रच्छ दिव्यरूपस्थं सुरं परमधार्मिकः ॥ ५३

श्रीराम उवाच—

कस्त्वं दिव्यवपुः प्राप्तः कस्मात्त्वं वाजितां गतः । कथं सुरस्त्रीसहितः किं चिकीर्षसि तद्वद ५४
रामस्य वचनं श्रुत्वा देवः प्रोवाच भूमिपम् । हसन्मेघरवां वाणीमवदत्सुमनोहराम् ॥ ५५

देव उवाच—

तवाज्ञातं न सर्वत्र बाह्याभ्यन्तरचारिणः । तथाऽपि पृच्छते तुभ्यं कथयामि यथातथम् ॥ ५६
अहं पुराभवे राम द्विजः परमधार्मिकः । चचार प्रतिकूलं तु देवस्य रिपुतापन ॥ ५७
कदाचिद्धूतपापायास्तीरेऽहं गतवान्पुरा । अनेकवृक्षललिते सर्वत्र सुमनोरमे ॥ ५८
तत्र स्नात्वा पितॄंस्तृप्त्वा दानं दत्त्वा यथाविधि । ध्यानं तव महाबाहो कृतवान्वेदसंमितम् ॥ ५९
[†तदा जनाः समायाता बहवस्तत्र भूपते । तेषां प्रवञ्चनार्थाय दम्भमेनमकारिषम् ॥ ६०
अनेकक्रतुसंभारैः पूर्णमजिरमुत्तमम्] । वासोभिश्छादितं रम्यं चषालादियुतं महत् ॥ ६१
अग्निहोत्रोद्भवो धूमः सर्वतो नभसोऽङ्गणम् । चकार रम्यमतुलं चित्रकारिवपुर्धरः ॥ ६२
अनेकतिलकश्रीभिः शोभिताङ्गो महातपाः । दर्भशोभी समित्पाणिर्दम्भो मूर्तिधरः किमु ॥ ६३
दुर्वासास्तत्र स्वच्छदं पर्यटञ्जगतीतलम् । प्राप तत्र महातेजा धूतपापः सरित्तटे ॥ ६४
ददर्श मां दम्भकरं मौनधारणमग्रतः । अनर्घ्यकरमुन्मत्तमस्वागतवचःकरम् ॥ ६५

* एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ठ. ड. ण. त. थ. द. ध. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ज. झ. ट. ड. ण. त. थ. द. ध. न. पुस्तकस्थः । + आर्षत्वात्साधु ।

१ ज. °व अहमहौ° । ध. °व महोत्साहं क्र° । २ न. °ह्यावान्वेदवावसमन्वितान् । त° ।

दृष्ट्वा तीव्रक्षुधाऽऽक्रान्तः समुद्र इव पर्वणि । शशापासौ मुनिस्तीव्रो दम्भिनं मां महामतिः ६६

दुर्वासा उवाच—

यदि त्वं शरयुतीरे करोषि दम्भमुग्रकम् । तस्मात्प्राप्नुहि निर्वाच्यं पशुत्वं तापसाधम ॥ ६७
शापं प्रदत्तं संश्रुत्य दुःखितोऽहं तदाऽभवम् । अग्रहीषं पदे तस्य मुनेर्दुर्वाससः किल ॥ ६८
तदा मे कृतवान्राम द्विजोऽनुग्रहमुत्तमम् । वाजितां प्राप्नुहि मखे राजराजस्य तापस ॥ ६९
पश्चात्तद्धस्तसंपर्काद्याहि तत्परमं पदम् । दिव्यं वपुर्मनोहारि धृत्वा दम्भविवर्जितम् ॥ ७०
तेन शापोऽपि संदिष्टो ममानुग्रहतां गतः । यदहं तव हस्तस्य स्पर्शं प्राप्तो मनोरमम् ॥ ७१
यदे(य ए)व राम देवादिदुर्लभं बहुजन्मभिः । तत्तेऽ(तं तेऽ)हं करजस्पर्शं प्राप्तवानतिदुर्लभम् ॥ ७२
आज्ञापय महाराज त्वत्प्रसादादहं महत् । गच्छामि शाश्वतं स्थानं तव दुःखादिवर्जितम् ॥ ७३
न यत्र शोको न जरा न मृत्युः कालविभ्रमः । तत्स्थानं देव गच्छामि त्वत्प्रसादान्नराधिप ७४
इत्युक्त्वा तं परिक्रम्य विमानवरमारुहत् । अनेकरत्नरचितं सर्वदेवाधिवन्दितम् ॥ ७५
गतोऽसौ शाश्वतं स्थानं रामपादप्रसादतः । पुनरावृत्तिरहितं शोकमोहविवर्जितम् ॥ ७६
तेन तत्कथितं श्रुत्वा रामं ज्ञात्वेतरे जनाः । विस्मयं प्रापिरे सर्वे परस्परमुदुन्मदाः ॥ ७७
शृणु द्विज महाबुद्धे दम्भेनापि स्मृतो हरिः । ददाति मोक्षं सुतरां किं पुनर्दम्भवर्जनात् ॥ ७८
यथाकथंचिद्रामस्य कर्तव्यं स्मरणं परम् । येन प्राप्नोति परमं पदं देवादिदुर्लभम् ॥ ७९
तच्चित्रं वीक्ष्य मुनयः कृतार्थं मेनिरे निजम् । यद्रामचरणप्रेक्षा[3]करस्पर्शपवित्रितम् ॥ ८०
गते तस्मिन्सुरे स्वर्गं हयरूपधरे पुरा । उवाच रामस्तपसां निधीन्वेदविदुत्तमान् ॥ ८१

श्रीराम उवाच—

किं कर्तव्यं मया ब्रह्मन्हयो नष्टो गतः सुखम् । होमः कथं पुरो भावी सर्वदैवततर्पकः ॥ ८२
यथा स्यात्सुरसंतृप्तिर्यथा मे मख उत्तमः । तथा कुर्वन्तु मुनयो यथा मे स्याद्विधिश्रुतम् ॥ ८३
इति वाक्यं समाश्रुत्य जगाद मुनिसत्तमः । वसिष्ठः सर्वदेवानां चित्ताभिज्ञानकोविदः ॥ ८४
कर्पूरमाहर क्षिप्रं येन देवाः स्वयं पुरः । प्राप्य हव्यं ग्रहीष्यन्ति मद्वाक्यप्रेरिताधुना* ॥ ८५
इति वाक्यं समाकर्ण्य रामः क्षिप्रमुपाहरत् । कर्पूरं बहु देवानां प्रीत्यर्थं बहुशोभनम् ॥ ८६
तदा मुनिः प्रहृष्टात्मा देवानाह्वयदद्भुतान् । ते सर्वे तत्क्षणात्प्राप्ताः स्वपरीवारसंवृताः ॥ ८७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे यज्ञप्रारम्भवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९०५१

---

अथाष्टषष्टितमोऽध्यायः ।

---

शेष उवाच—

इन्द्रस्तत्र हविर्मृष्टं रामचन्द्रेण वीक्षितम् । प[4]रिस्वादन्क्रतौ तृप्तिं न प्राप सुरसंयुतः ॥ १
नारायणो महादेवो ब्रह्मा तत्र चतुर्मुखः । वरुणश्च कुबेरश्च तथाऽन्ये लोकपालकाः ॥ २

---

* संधिरार्षः ।

---

१ द. न. °दृष्ट्वा तीव्र क्षु° । २ क. ख. ग. च. छ. झ. ठ. ड. ण. त. थ. द. ध. न. °वानिह दु° । ३ म °क्षापुरुषं कर्मयंत्रितम् । ४ क. ख. ज. ञ. ड. ण. ध °रिखाद° ।

तत्राऽऽस्वाद्य हविः स्निग्धं वसिष्ठेन परिष्कृतम् । तत्र पुनर्हि विप्रेन्द्राः क्षुधार्ता इव भोजनात् ३
सर्वान्देवांश्च संतर्प्य हविषा करुणानिधिः । वसिष्ठप्रेरितः सर्वमितिकर्तव्यमाचरत् ॥ ४
ब्राह्मणा दानसंतुष्टा हविस्तुष्टाः सुरा वराः । तृप्ताः सर्वे स्वकं भागं गृहीत्वा निलयं ययुः ॥ ५
ऋषिभ्यो होतृमुख्येभ्यः प्रादाद्राज्यं चतुर्दिशम् । संतुष्टास्ते द्विजा राममाशीर्भिरददुः शुभम् ॥ ६
पूर्णाहुतिं ततः कृत्वा वसिष्ठः प्राह सुस्त्रियः । वर्धापयन्तु भूमीशं यज्ञपूर्तिकरं परम् ॥ ७
तद्वाक्यं ताः स्त्रियः श्रुत्वा लाजैरवाकिरन्मुदा । लावण्यजितकन्दर्पं महाभूमीशपूजितम् ॥ ८
ततोऽवभृथस्नानार्थं प्रेरयामास भूमिपम् । ययौ रामः सह स्वीयैः शरयूतीरमुत्तमम् ॥ ९
अनेकराजकोटीभिः परितः पादचारिभिः । जगाम स सरिच्छ्रेष्ठां पक्षिवृन्दसमाकुलाम् ॥ १०
तारापतिरिव स्वाभिर्भार्याभिर्वृत उत्प्रभः । विरोचते यथा तद्वद्रामो राजगणैर्वृतः ॥ ११
तदुत्सवं समाज्ञाय ययुर्लोकास्त्वरायुताः । सीतापतिमुखालोकनिश्चलीभूतलोचनाः ॥ १२
राजेन्द्रं सीतया सार्कं गच्छन्तं सरितं प्रति । विलोक्य मुदिता लोकाश्चिरं दर्शनलालसाः १३
अनेकनटगन्धर्वा गायन्तो यश उज्ज्वलम् । अनुजग्मुर्महीशानं सर्वलोकनमस्कृतम् ॥ १४
नर्तक्यस्तत्र नृत्यन्त्यः क्षोभयन्त्यः पतेर्मनः । जलयन्त्रैश्च सिञ्चन्त्यो ययुः श्रीरामसेवनम् ॥ १५
महाराजं विलिम्पत्यो हरिद्राकुङ्कुमादिभिः । परस्परं विलिम्पत्यो मुदं प्रापुर्महत्तराम् ॥ १६
कुचयुग्मोपरिन्यस्तमुक्ताहारसुशोभिताः । श्रवणद्वंद्वसंमृष्टस्वर्णकुण्डललक्षिताः ॥ १७
अनेकनरनारीभिः संकीर्णं मार्गमाचरत् । यथावत्सरितं प्राप शिवपुण्यजलाप्लुताम् ॥ १८
तत्र गत्वा स वैदेह्या रामः कमललोचनः । प्रविवेश जलं पुण्यं वसिष्ठादिभिरन्वितः ॥ १९
अनुप्रविविशुः सर्वे राजानो जनतास्तथा । तत्पादरजसा पूतं जलं लोकैकवन्दितम् ॥ २०
परस्परं प्रसिञ्चन्तो जलयन्त्रैर्मनोरमैः । सुशोणनयनाः सर्वे हर्षं प्रापुर्मनोधिकम् ॥ २१
स रामः सीतया सार्धं चिरं पुण्यजलप्लवे । क्रीडित्वा जलकल्लोलैर्निरगाद्धर्मसंयुतः ॥ २२

दुकूलवासाः सकिरीटकुण्डलः केयूरशोभावरकङ्कणान्वितः ।
कंदर्पकोटिश्रियमुद्वहन्नृपो राजाग्र्यवर्यैरुपसंस्तुतो बभौ ॥ २३
स यागयूपं वरवर्णशोभितं कृत्वा सरित्तीरके महामनाः ।
त्रैलोक्यलोकाश्रियमाप ह्यद्भुतामन्यैर्दुरापां नृपतिर्भुजैर्वरैः[3] ॥ २४

एवं जनकपुत्र्याऽसौ हयमेधत्रयं चरन् । त्रैलोक्ये कीर्तिमतुलां प्रपेदे वै सुदुर्लभाम् ॥ २५
एवं ते वर्णितं तात यत्पृष्टो रामसत्कथाम् । विस्तृतः कथितो मेधो भूयः किं पृच्छसि द्विज ॥
यः शृणोति हरेर्भक्त्या रामचन्द्रस्य सन्मखम् । ब्रह्महत्यां क्षणात्तीर्त्वा ब्रह्मशाश्वतमाप्नुयात् २७
अपुत्रो लभते पुत्रान्निर्धनो धनमाप्नुयात् । रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ २८
यत्कथाश्रवणाद्दुष्टः श्वपचोऽपि परं पदम् । प्राप्नोति किमु विप्राग्र्यो रामभक्तिपरायणः ॥ २९
रामं स्मृत्वा महाभागं पापिनोऽपि परं पदम् । प्राप्नुयुः परमं स्वर्गं शक्रदेवादिदुर्लभम् ॥ ३०
ते धन्या मानवा लोके ये स्मरन्ति रघूद्वहम् । ते क्षणात्संसृतिं तीर्त्वा गच्छन्ति सुखमव्ययम् ३१
प्रत्येकमक्षरं ब्रह्महत्यावंशदवानलः । तं यः श्रावयते धीमांस्तं गुरुं संप्रपूजयेत् ॥ ३२
श्रुत्वा कथां वाचकाय गवां द्वंद्वं प्रदापयेत् । सपत्नीकाय संपूज्य वस्त्रालंकारभोजनैः ॥ ३३

१ द. न. °हामणिविभूषित° । २ म. °रकुङ्कुमान्वि° । ३ क. ख. च. छ. म. ड. ण. त. थ. द. न. °जैर्निजैः । ए° ।

कुण्डलाभ्यां विराजन्त्यौ मुद्रिकाभिरलंकृते । रामसीते स्वर्णमय्यौ प्रतिमे शोभने वरे ॥ ३४
कृत्वा तु वाचकायैव दीयेते हि द्विजोत्तम । तस्य देवाश्च पितरो वैकुण्ठं प्राप्नुयुस्तदा ॥ ३५
त्वया पृष्टा रामकथा मया ते कथिता पुरा । किमन्यत्कथ्यतां ब्रह्मन्पुरतस्तत्र धीमतः ॥ ३६
शृण्वन्ति ये कथामेतां ब्रह्महत्यौघनाशिनीम् । ते यान्ति परमं स्थानं सर्वदेवैः सुदुर्लभम् ॥ ३७
गोघ्नश्च तु सुतघ्नश्च सुरापो गुरुतल्पगः । क्षणात्पूतो भवत्येवमचिरेण द्विजर्षभ ॥ ३८

इति श्रीमहापुराणे पाद्मे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधवर्णनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५०८९

---

अथैकोनसप्ततितमोऽध्यायः ।

---

ऋषय ऊचुः—

सम्यक्श्रुतो महाराज त्वत्तो रामाश्वमेधकः । इदानीं वद माहात्म्यं श्रीकृष्णस्य महात्मनः ॥ १

सूत उवाच—

शृण्वन्तु मुनिशार्दूलाः श्रीकृष्णचरितामृतम् । शिवा पप्रच्छ भूतेशं यत्तद्वः कीर्तयाम्यहम् ॥ २
एकदा पार्वती देवी शिवसंस्निग्धमानसा । प्रणयेन नमस्कृत्य प्रोवाच वचनं त्विदम् ॥ ३

पार्वत्युवाच—

अनन्तकोटिब्रह्माण्डे तद्बाह्याभ्यन्तरस्थिते । विष्णोः स्थानं परं तेषां प्रधानं वरमुत्तमम् ॥ ४
यत्परं नास्ति कृष्णस्य प्रियं स्थानं मनोरमम् । तत्सर्वं श्रोतुमिच्छामि कथयस्व महाप्रभो ॥ ५

ईश्वर उवाच—

गुह्याद्गुह्यतरं पुण्यं परमानन्दकारकम् । अत्यद्भुतं रहःस्थानं रहस्यं परमं पदम् ॥ ६
दुर्लभानां च परमं दुर्लभं मोहनं परम् । सर्वशक्तिमिदं देवि सर्वस्थानेषु गोपितम् ॥ ७
सात्वतां स्थानमूर्धन्यं विष्णोरत्यन्तदुर्लभम् । नित्यं वृन्दावनं नाम ब्रह्माण्डोपरि संस्थितम् ॥ ८
पूर्णब्रह्मसुखैश्वर्यं नित्यमानन्दमव्ययम्[1] । वैकुण्ठादि तदंशांशं स्वयं वृन्दावनं भुवि ॥ ९
गोलोकैश्वर्यं यत्किंचिद्गोकुलं तत्प्रतिष्ठति । वैकुण्ठवैभवं यद्वै द्वारकायां प्रकाशितम्[2] ॥ १०
यद्ब्रह्मपरमैश्वर्यं नित्यं वृन्दावनाश्रयम् । कृष्णधाम परं तेषां वनमध्ये विशेषतः ॥ ११
तस्मात्त्रैलोक्यमध्ये तु पृथ्वी धन्येति विश्रुता । यस्मान्माथुरकं नाम[3] विष्णोरेकान्तवल्लभम् ॥ १२
स्वस्थानमधिकं नाम ध्येयं माथुरमण्डलम् । निगूढं[4] विविधं स्थानं पुर्यभ्यन्तरसंस्थितम् ॥ १३
सहस्रपत्रकमलाकारं माथुरमण्डलम् । विष्णुचक्रपरिमाणं धाम वैष्णवमद्भुतम् ॥ १४
कर्णिकापर्णविस्तारं[5] रहस्यं द्रुममीरितम् । प्रधानं द्वादशारण्यं माहात्म्यं कथितं क्रमात् ॥ १५
भद्रश्रीलोहभाण्डीरमहातालखदीरखाः[6] (?) । बकुलं कुमुदं काम्यं मधु वृन्दावनं तथा ॥ १६
[*द्वादशैतावती संख्या कालिन्द्याः सप्त पश्चिमे । पूर्वे पञ्चवनं प्रोक्तं तत्रास्ति गुह्यमुत्तमम् ॥ १७
महारण्यं गोकुलाख्यं मधु वृन्दावनं तथा ] । अन्यच्चोपवनं प्रोक्तं कृष्णक्रीडारसस्थलम् ॥ १८

---

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. पुस्तकस्थः ।

---

१ ङ. न. °व नात्र संशयितुं क्षमम् । इ° । २ म. °कुण्ठादिभवं यद्वद्द्वा° । ३ झ. °नं पूर्य° । म. °नं पुर्यभ्य° । ४ झ. म. °रिश्रामाद्धाम । ५ झ. °कापूरवि° । म. °कापूर्ण° । ६ झ. अ. °लकदी° ।

कदम्बखण्डकं नन्दं वनं नदी(न्दी)श्वरं तथा । नन्दनं वनखण्डं च पलाशाशोककेतकी ॥ १९
सुगन्धमानकंकैलममृतं भोजनस्थलम् । सुखप्रसाधनं वत्सहरणं शेषशायिकम् ॥ २०
श्यामपुर्योदधिग्रामश्चक्रभानुपुरं तथा । शं(सं)केतं द्विपदं चैव बालक्रीडनधूसरम् ॥ २१
केलिद्रुमं सुललितमुत्सुकं चापि काननम् । नानाविधरसक्रीडानानालीलारसस्थलम् ॥ २२
नगविस्तारविष्टम्भं रहस्यं द्रुममीरितम् । सहस्रपत्रकमलं गोकुलाख्यं महत्पदम् ॥ २३
कर्णिका तन्महद्धाम गोविन्दस्थानमुत्तमम् । तत्रोपरि स्वर्णपीठे मणिमण्डपमण्डितम् ॥ २४
कर्णिकायां क्रमाद्दिक्षु विदिक्षु दलमीरितम् । यद्दलं दक्षिणे प्रोक्तं परं गुह्योत्तमोत्तमम् ॥ २५
तस्मिन्दले महापीठं निगमागमदुर्गमम् । योगीन्द्रैरपि दुष्प्राप्यं सर्वात्मा यत्र गोकुलम् ॥ २६
द्वितीयं दलमाग्नेय्यां तद्रहस्यं दलं तथा । संकेतं द्विपदं चैव कुटी द्वौ तद्दले स्थितौ(?) ॥ २७
पूर्वे दलं तृतीयं यत्प्रधानस्थानमुत्तमम् । गङ्गादिसर्वतीर्थेभ्यः स्पर्शाच्छतगुणं स्मृतम् ॥ २८
चतुर्थं दलमैशान्यां सिद्धिपीठे तु तत्पदम् । कात्यायन्यर्चनाद्गोपी तत्र कृष्णं पतिं लभेत् ॥ २९
वस्त्रालंकारहरणं तद्दले समुदाहृतम् । उत्तरे पञ्चमं प्रोक्तं दलं सर्वदलोत्तमम् ॥ ३०
द्वादशादित्यमत्रैव दलं च कर्णिकासमम् । वायव्यां तु दलं षष्ठं तत्र कालीह्रदः स्मृतः ॥ ३१
दलोत्तमोत्तमं चैव प्रधानं स्थानमुच्यते । सर्वोत्तमदलं चैव पश्चिमे सप्तमं स्मृतम् ॥ ३२
यज्ञपत्नीगणानां च तदीप्सितवरप्रदम् । अत्रासुरोऽपि निर्वाणं प्राप त्रिदशदुर्लभम् ॥ ३३
ब्रह्ममोहनमत्रैव दलं ब्रह्महदाभिधम् । नैर्ऋत्यां तु दलं प्रोक्तमष्टमं व्योमघातनम् ॥ ३४
शङ्खचूडवधस्तत्र नानाकेलिरसस्थलम् । श्रुतमष्टदलं प्रोक्तं वृन्दारण्यान्तरास्थितम् ॥ ३५
श्रीमद्वृन्दावनं रम्यं यमुनायाः प्रदक्षिणम् । शिवलिङ्गमधिष्ठानं दृष्टं गोपीश्वराभिधम् ॥ ३६
तद्बाह्ये षोडशदलं श्रिया पूर्णं तमीश्वरम् । सर्वासु दिक्षु यत्प्रोक्तं प्रादक्षिण्याद्यथाक्रमम् ॥ ३७
महत्पदं महद्धाम स्वंधामाधावसंज्ञकम् । प्रथमैकदलं श्रेष्ठं माहात्म्यं कर्णिकासमम्(?) ॥ ३८
तत्र गोवर्धनगिरौ रम्ये नित्यरसाश्रये । कर्णिकायां महालीलातल्लीलारसगह्वरौ ॥ ३९
यत्र कृष्णो नित्यवृन्दाकाननस्य पतिर्भवेत् । कृष्णो गोविन्दतां प्राप्तः किमन्यैर्बहुभाषितैः ॥ ४०
दलं तृतीयमाख्यातं सर्वश्रेष्ठोत्तमोत्तमम् । चतुर्थं दलमाख्यातं महाद्भुतरसस्थलम् ॥ ४१
नन्दीश्वरवनं रम्यं तत्र नन्दालयः स्मृतः । कर्णिकादलमाहात्म्यं पञ्चमं दलमुच्यते ॥ ४२
अधिष्ठाताऽत्र गोपालो धेनुपालनतत्परः । दलं षष्ठं यदाख्यातं तत्र नन्दवनं स्मृतम् ॥ ४३
सप्तमं बकुलारण्यं दलं रम्यं प्रकीर्तितम् । तत्राष्टमं तालवनं तत्र धेनुवधः स्मृतः ॥ ४४
नवमं कुमुदारण्यं दलं रम्यं प्रकीर्तितम् । कामारण्यं च दशमं प्रधानं सर्वकारणम् ॥ ४५
ब्रह्मप्रसादनं तत्र विष्णुच्छद्मप्रदर्शनम् । [*कृष्णक्रीडारसस्थानं प्रधानं दलमुच्यते ॥ ४६
दलमेकादशं प्रोक्तं भक्तानुग्रहकारकम् । निर्माणं सेतुबन्धस्य नानावनमयस्थलम् ] ॥ ४७
भाण्डीरं द्वादशदलं वनं रम्यं मनोहरम् । कृष्णः क्रीडारतस्तत्र श्रीदामादिभिरावृतः ॥ ४८
त्रयोदशं दलं श्रेष्ठं तत्र भद्रवनं स्मृतम् । चतुर्दशदलं प्रोक्तं सर्वसिद्धिप्रदस्थलम् ॥ ४९

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. झ. ढ. पुस्तकस्थः ।

---

१ ख. °ग्रामो वृषभा° । २ ख. कलिद्रुमं । ३ क. °क्षु सुवर्णद° । ४ ख. °था । निकुञ्जककुटीवीरकु° । ङ. च. °था । निकुञ्जकदुकी वीरकु° । ५ झ. स्वाध्यायाधा° । ञ. स्वाधयाधा° । ६ झ ञ. °काश्रम° । ७ ख. ङ. °तिर्वसेत् । ८ झ. तत्राम° ।

श्रीवनं तत्र रुचिरं सर्वैश्वर्यस्य कारणम् । कृष्णक्रीडामयदलं श्रीकान्तिकीर्तिवर्धनम् ॥ ५०
पञ्चदशं दलं श्रेष्ठं तत्र लोहवनं स्मृतम् । कथितं षोडशदलं माहात्म्यं कर्णिकासमम् ॥ ५१
महावनं तत्र गीतं तत्रास्ति गुह्यमुत्तमम् । बालक्रीडारतस्तत्र वत्सपालैः समावृतः ॥ ५२
पूतनादिवधस्तत्र यमलार्जुनभञ्जनम् । अधिष्ठाता तु बालस्य गोपालः पञ्चमाब्दिकः ॥ ५३
नाम्ना दामोदरः प्रोक्तः प्रेमानन्दरसार्णवः । दलं प्रसिद्धमाख्यातं सर्वश्रेष्ठदलोत्तमम् ॥ ५४
कृष्णक्रीडा च किञ्जल्कीविहारदलमुच्यते । सिद्धप्रधानकिञ्जल्कं दलं च समुदाहृतम् ॥ ५५

पार्वत्युवाच—

वृन्दारण्यस्य माहात्म्यं रहस्यं वा किमद्भुतम् । तदहं श्रोतुमिच्छामि कथयस्व महाप्रभो ॥ ५६

ईश्वर उवाच—

कथितं ते प्रियतमं गुह्याद्गुह्योत्तमोत्तमम् । रहस्यानां रहस्यं यद्दुर्लभानां च दुर्लभम् ॥ ५७
त्रैलोक्यगोपितं देवि देवेश्वरसुपूजितम् । ब्रह्मादिवाञ्छितं स्थानं सुरसिद्धादिसेवितम् ॥ ५८
योगीन्द्रादिमुनीन्द्रादि सदा तद्ध्यानतत्परम् । अप्सरोभिश्च गन्धर्वैर्नृत्यगीतनिरन्तरम् ॥ ५९
श्रीमद्वृन्दावनं रम्यं पूर्णानन्दरसाश्रयम् । भूरिचिन्तामणिस्तोयममृतंरसपूरितम् (?) ॥ ६०
वृक्षं गुरुद्रुमं तत्र सुरभीवृन्दसेवितम् । स्त्रीं लक्ष्मीं पुरुषं विष्णुं तद्दशांशसमुद्भवम् ॥ ६१
तत्र कैशोरवयसं नित्यमानन्दविग्रहम् । गतिनाट्यकथालापं स्मितवक्त्रं निरन्तरम् ॥ ६२
शुद्धसत्त्वैः प्रेमपूर्णैर्वैष्णवैस्तद्गुनाश्रयम् । पूर्णब्रह्मसुखे मग्नं स्फुरत्तन्मूर्तितन्मयम् ॥ ६३
मत्तकोकिलभृङ्गाद्यैः कूजत्कलमनोहरम् । कपोतशुकसंगीतमुन्मत्तालिसहस्रकम् ॥ ६४
भुजंगशत्रुनृत्याढ्यं सकलामोदविभ्रमम् । नानावर्णैश्च कुसुमैस्तद्रेणुपरिपूरितम् ॥ ६५
पूर्णेन्दुनित्याभ्युदयं सूर्यमन्दांशुसेवितम् । अदुःखं दुःखविच्छेदं जरामरणवर्जितम् ॥ ६६
अक्रोधं गतमात्सर्यमभिन्नमनहंकृतम् । पूर्णानन्दामृतरसं पूर्णप्रेमसुखार्णवम् ॥ ६७
गुणातीतं महद्धाम पूर्णप्रेमस्वरूपकम् । यत्र वृक्षादिपुलकैः प्रेमानन्दाश्रु वर्षितम् ॥ ६८
किं पुनश्चेतनायुक्तैर्विष्णुभक्तैः किमुच्यते । गोविन्दाङ्घ्रिरजःस्पर्शान्नित्यवृन्दावनं भुवि ॥ ६९
सहस्रदलपद्मस्य वृन्दारण्यं वराटकम् । यस्य स्पर्शनमात्रेण पृथ्वी धन्या जगत्त्रये ॥ ७०
गुह्याद्गुह्यतमं रम्यं मध्यं वृन्दावनं भुवि । अक्षरं परमानन्दं गोविन्दस्थानमव्ययम् ॥ ७१
गोविन्ददेहतोऽभिन्नं पूर्णब्रह्मसुखाश्रयम् । मुक्तिस्तत्र रजःस्पर्शात्तन्माहात्म्यं किमुच्यते ॥ ७२
तस्मात्सर्वात्मना देवि हृदिस्थं तद्वनं कुरु । वृन्दावनविहारेषु कृष्णं कैशोरविग्रहम् ॥ ७३
कालिन्दी चाकरोद्यस्य कर्णिकायाः प्रदक्षिणम् । लीलानिर्वाणगम्भीरं जलं सौरभमोहनम् ७४
आनन्दामृततन्मि(संमि)श्रमकरन्दघनालयम् । पद्मोत्पलाद्यैः कुसुमैर्नानावर्णसमुज्ज्वलम् ॥ ७५
चक्रवाकादिविहगैर्मञ्जुनानाकलस्वनैः । शोभमानं जलं रम्यं तरङ्गातिमनोहरम् ॥ ७६
तस्योभयतटी रम्या शुद्धकाञ्चननिर्मिता । गङ्गाकोटिगुणः प्रोक्तो यत्र स्पर्शवराटकः ॥ ७७
कर्णिकायां कोटिगुणो यत्र क्रीडारतो हरिः । कालिन्दीकर्णिकां कृष्णमभिन्नमेकविग्रहम् ॥ ७८

पार्वत्युवाच—

गोविन्दस्य किमाश्चर्यं सौन्दर्याकृतिविग्रह । तदहं श्रोतुमिच्छामि कथयस्व दयानिधे ॥ ७९

---

१ म. °मणिस्तो° । २ ख. अपरं । क. अक्षय्यं । ३ म. रम्यां । ४ ख. म. °मिताम् । ग° । ५ ख. °तिकद्रूपः । त° ।

ईश्वर उवाच—

मध्ये वृन्दावने रम्ये मञ्जुमञ्जीरशोभिते । योजनाश्रितसद्वृक्षे शाखापल्लवमण्डिते ॥ ८०
तन्मध्ये मञ्जुभवने योगपीठं समुज्ज्वलम् । तदष्टकोणनिर्माणं नानादीप्तिमनोहरम् ॥ ८१
तस्योपरि च माणिक्यरत्नसिंहासनं शुभम् । तस्मिन्नष्टदलं पद्मं कर्णिकायां सुखाश्रयम् ॥ ८२
गोविन्दस्य परं स्थानं किमस्य महिमोच्यते । श्रीमद्गोविन्दमत्रस्थं वैष्णववृन्दसेवितम् ॥ ८३
दिव्यव्रजवयोरूपं कृष्णं वृन्दावनेश्वरम् । व्रजेन्द्रं संततैश्वर्यं व्रजबालैकवल्लभम् ॥ ८४
यौवनोद्भिन्नकैशोरं वयसाऽद्भुतविग्रहम् । अनादिमादिं सर्वेषां नन्दगोपप्रियात्मजम् ॥ ८५
श्रुतिमृग्यमजं नित्यं गोपीजनमनोहरम् । [*परं धाम परं रूपं द्विभुजं गोकुलेश्वरम् ॥ ८६
बल्लवीनन्दनं ध्यायेन्निर्गुणस्यैककारणम् । सुश्रीमन्तं नवं स्वच्छं श्यामधाममनोहरम् ॥ ८७
नवीननीरदश्रेणीसुस्निग्धमञ्जुकुण्डलम् । फुल्लेन्दीवरसत्कान्तिसुखस्पर्शं सुखावहम् ॥ ८८
दलिताञ्जनकुञ्जाभचिक्कणं श्याममोहनम् । सुस्निग्धनीलकुटिलाशेषसौरभकुन्तलम् ॥ ८९
तदूर्ध्वे दक्षिणे भाले श्यामचूडामनोहरम् ] । नानावर्णोज्ज्वलं राजच्छिखण्डिदलमण्डितम् ॥९०
मन्दारमञ्जुगोपुच्छचूडं चारुविभूषितम् । क्वचिद्बर्हदलश्रेणिमुकुटेनाभिमण्डितम् ॥ ९१
अनेकमणिमाणिक्यकिरीटभूषणं क्वचित् । लोलालकवृतं राजत्कोटीन्दुसदृशाननम् ॥ ९२
कस्तूरीतिलकं भ्राजन्मञ्जुगोरोचनान्वितम् । नीलेन्दीवरसुस्निग्धं सुदीर्घदललोचनम् ॥ ९३
आनृत्यद्भ्रूलताश्लेषस्मितं साचिनिरीक्षणम् । सुचारुभूतसौन्दर्यनासाग्रातिमनोहरम् ॥ ९४
नासाग्रगजमुक्तांशुमुग्धीकृतजगत्त्रयम् । सिन्दूरारुणसुस्निग्धाधरोष्ठसुमनोहरम् ॥ ९५
नानावर्णोल्लसत्स्वर्णमकराकृतिकुण्डलम् । तद्रश्मिमञ्जुसद्गण्डमुकुराभसमद्युतिम् ॥ ९६
कर्णोत्पलसुमन्दारमकरोत्तंसभूषितम् । श्रीवत्सकौस्तुभोरस्कं मुक्ताहारस्फुरद्गलम् ॥ ९७
विलसद्दिव्यमाणिक्यमञ्जुकाञ्चनमिश्रितम् । करकङ्कणकेयूरकिङ्किणीकटशोभितम् ॥ ९८
मञ्जुमञ्जीरसौन्दर्यश्रीमदङ्घ्रिविराजितम् । कर्पूरागरुकस्तूरीविलसच्चन्दनादिकम् ॥ ९९
गोरोचनादिसंमिश्रदिव्याङ्गरागचित्रितम् । स्निग्धपीतपटीराजत्प्रपदान्दोलिताञ्चनम् ॥ १००
गम्भीरनाभिकमलं रोमराजीनतस्रजम् । सुवृत्तजानुयुगलं पादपद्ममनोहरम् ॥ १०१
ध्वजवज्राङ्कुशाम्भोजकराङ्घ्रितलशोभितम् । नखेन्दुकिरणश्रेणीपूर्णं ब्रह्मैककारणम् ॥ १०२
केचिद्वदन्ति तस्यांशं ब्रह्म चिद्रूपमव्ययम् । तदंशांशं महाविष्णुं प्रवदन्ति मनीषिणः ॥ १०३
योगीन्द्रैः सनकाद्यैश्च तदेव हृदि चिन्त्यते । त्रिभङ्गं ललिताशेषनिर्माणसारनिर्मितम् ॥ १०४
तिर्यग्ग्रीवजितानन्तकोटिकंदर्पसुन्दरम् । वामांसार्पितसद्गण्डं स्फुरत्काञ्चनकुण्डलम् ॥ १०५
सापाङ्गेक्षणसस्मेरकोटिमन्मथसुन्दरम् । कुञ्चिताधरविन्यस्तवंशीमञ्जुकलस्वनैः ॥ १०६
जगत्त्रयं मोहयन्तं मग्नं प्रेमसुधार्णवे ॥ १०७

पार्वत्युवाच—

परमं कारणं कृष्णं गोविन्दाख्यं [+महत्पदम् । वृन्दावनेश्वरं नित्यं निर्गुणस्यैककारणम् ॥ १०८

* एतच्चिह्नान्तर्गतः पाठः ख. छ. च. ड. पुस्तकस्थः । † ख. ङ. व्यतिरिक्तपुस्तकेषु घटीति पाठो दृश्यते । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. ज. ढ. पुस्तकस्थः ।

१ ज. °मञ्जस्थं । २ झ. ञ. °ष्णवीवृ° । ३ क. ख. ङ. च ञ. ढ. °चारुभूत° । ४ झ. ञ. °त्पलं सु° । ५ झ. करेक° । ६ ञ. °भङ्गल° ।

तत्सद्रहस्यमाहात्म्यं किमैश्वर्यं च सुन्दरम् । तद्ब्रूहि देवदेवेश श्रोतुमिच्छाम्य]हं प्रभो ॥ १०९

ईश्वर उवाच—

यदङ्घ्रिनखचन्द्रांशुमहिमान्तो न विद्यते । तन्माहात्म्यं कियद्देवि प्रोच्यते त्वं मुदा शृणु ॥ ११०
अनन्तकोटिब्रह्माण्डे अनन्तात्रिगुणोच्छ्रये । तत्कलाकोटिकोट्यंशा ब्रह्मविष्णुमहेश्वराः ॥ १११
सृष्टिस्थित्यादिना युक्तास्तिष्ठन्ति तस्य वैभवाः । तद्रूपकोटिकोट्यंशाः कलाः कंदर्पविग्रहाः ११२
जगन्मोहं प्रकुर्वन्ति तदण्डान्तरसंस्थिताः । तद्देहविलसत्कान्तिकोटिकोट्यंशको [१]विभुः॥ ११३
तत्प्रकाशस्य कोट्यंशरश्मयो रविविग्रहाः । तस्य स्वदेहकिरणैः परानन्दरसामृतैः ॥ ११४
परमामोदचिद्रूपैर्निर्गुणस्यैककारणैः । तदंशकोटिकोट्यंशा जीवन्ति किरणात्मकाः ॥ ११५
तदङ्घ्रिपङ्कजद्वंद्वनखचन्द्रमणिप्रभाः । आहुः पूर्णब्रह्मणोऽपि कारणं वेददुर्गमम् ॥ ११६
तदंशसौरभानन्तकोट्यंशो विश्वमोहनः । तत्स्पर्शपुष्पगन्धादिनानासौरभसंभवः ॥ ११७
तत्प्रिया प्रकृतिस्त्वाद्या राधिका कृष्णवल्लभा । तत्कलाकोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिकाः ॥
तस्या अङ्घ्रिरजःस्पर्शात्कोटिविष्णुः प्रजायते ॥ ११८

इति श्रीमहापुराणे पाद्मे पातालखण्डे श्रीकृष्णचरिते वृन्दावनमाहात्म्य एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५२०७

---

अथ सप्ततितमोऽध्यायः ।

---

पार्वत्युवाच—

यदोकारणमेतस्य ये वा पारिषदाः प्रभोः । तदहं श्रोतुमिच्छामि कथयस्व दयानिधे ॥ १

ईश्वर उवाच—

राधया सह गोविन्दं स्वर्णसिंहासने स्थितम् । पूर्वोक्तरूपलावण्यं दिव्यभूषाम्बरस्रजम् ॥ २
त्रिभङ्गीमञ्जुसुस्निग्धं गोपीलोचनतारकम् । तद्बाह्ये योगपीठे च स्वर्णसिंहासनावृते ॥ ३
प्रत्यङ्गरभसावेशाः प्रधानाः कृष्णवल्लभाः । ललिताद्याः प्रकृत्यंशा मूलप्रकृती राधिका ॥ ४
संमुखे ललिता देवी श्यामला वायुकोणके । उत्तरे श्रीमती धन्या ऐशान्यां श्रीहरिप्रिया ॥ ५
विशाखा च तथा पूर्वे शैव्या चाग्नौ ततः परम् । पद्मा च दक्षिणे पश्चान्नैर्ऋते क्रमशः स्थिताः॥
योगपीठे केशराग्रे चारुचन्द्रावती प्रिया । अष्टौ प्रकृतयः पुण्याः प्रधानाः कृष्णवल्लभाः ॥ ७
[*प्रधानप्रकृतिस्त्वाद्या राधा चन्द्रावती समा । चन्द्रावली चित्ररेखा चन्द्रा मदनसुन्दरी ॥ ८
प्रिया च श्रीमधुमती चन्द्ररेखा हरिप्रिया । षोडशाऽऽद्याः प्रकृतयः प्रधानाः कृष्णवल्लभाः]॥९
वृन्दावनेश्वरी राधा तथा चन्द्रावली प्रिया । अभिन्नगुणलावण्यसौन्दर्यैश्वर्यलोचनाः ॥ १०
मनोहरा मुग्धवेषाः किशोरीवयसोज्ज्वलाः। अग्रे [†सरास्तथा चान्या गोपकन्याः सहस्रशः ॥
शुद्धकाञ्चनपुञ्जाभाः सुप्रसन्नाः सुलोचनाः । तद्रूपहृदयारूढास्तदाश्लेषसमुत्सुकाः ॥ १२
श्यामामृतरसे मग्नाः]स्फुरत्तद्भावमानसाः । नेत्रोत्पलार्चिते कृष्णपादाब्जेऽर्पितचेतसः ॥ १३

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. ड. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च छ. ञ. ड. पुस्तकस्थः ।

१ ङ. ञ. विदुः । २ ङ. °दाकर° । ३ ञ. °ङ्गभुजसु° । ४ ङ. केसरा° । ५ ङ. °वलिप्रि° । ६ क. °र्यांश्चारुलो° ।

श्रुतिकन्यास्ततो दक्षे सहस्रायुतसंयुताः । जगन्मुग्धीकृताकारा हृद्गतिंकृष्णलालसाः ॥ १४
नानासत्स्वरालापमुग्धीकृतजगत्त्रयाः । तभिगूढरहस्यानि गायन्त्यः प्रेमविह्वलाः ॥ १५
देवकन्यास्ततः सव्ये दिव्यवेषा रसोज्ज्वलाः । नानावैदग्ध्यनिपुणा दिव्यभावभरान्विताः ॥
सौन्दर्यातिशयाढ्याश्च कटाक्षातिमनोहराः । निर्लज्जास्तत्र गोविन्दे तदङ्गस्पर्शनोत्सुकाः ॥ १७
तद्भावमग्नमनसः स्मितसाचिनिरीक्षणाः । मन्दिरस्य ततो बाह्ये प्रियया विशदावृते(?) ॥ १८
समानवेषवयसः समानबलपौरुषाः । समानगुणकर्माणः समानाभरणाः प्रियाः ॥ १९
समानस्वरसंगीतवेणुवादनतत्पराः । श्रीदामा पश्चिमद्वारे वसुदामा तथोत्तरे ॥ २०
सुदामा च तथा पूर्वे किङ्किणी चापि दक्षिणे । तद्बाह्ये स्वर्णपीठे च सुवर्णमन्दिरावृते ॥ २१
स्वर्णवेद्यन्तरस्थे तु स्वर्णाभरणभूषिते । स्तोककृष्णांशुभद्राद्यैर्गोपालैरयुतायुतैः ॥ २२
शृङ्गवीणावेणुवेत्रवयोवेषाकृतिस्वरैः । तद्गुणध्यानसंयुक्तैर्गायद्भी रसविह्वलैः ॥ २३
चित्रार्पितैश्चित्ररूपैः सदाऽऽनन्दांशु(न्दाश्रु)वर्षिभिः । पुलकाकुलसर्वाङ्गैर्योगीन्द्रैरिव विस्मितैः २४
क्षरत्पयोभिर्गोवृन्दैरसंख्यातैरुपावृतम् । तद्बाह्ये स्वर्णप्राचीरे कोटिसूर्यसमुज्ज्वले ॥ २५
चतुर्दिक्षु महोद्यानमञ्जुसौरभमोहिते । पश्चिमे संमुखे श्रीमत्पारिजातद्रुमाश्रये ॥ २६
तत्राधस्तु स्वर्णपीठे स्वर्णमन्दिरमण्डिते । तन्मध्ये मणिमाणिक्यदिव्यसिंहासनोज्ज्वले ॥ २७
तत्रोपरि परानन्दं वासुदेवं जगत्प्रभुम् । त्रिगुणातीतचिद्रूपं सर्वकारणकारणम् ॥ २८
इन्द्रनीलघनश्यामं नीलकुञ्चितकुन्तलम् । पद्मपत्रविशालाक्षं मकराकृतिकुण्डलम् ॥ २९
चतुर्भुजं तु चक्रासिगदाशङ्खाम्बुजायुधम् । आद्यन्तरहितं नित्यं प्रधानं पुरुषोत्तमम् ॥ ३०
ज्योतीरूपं महद्धाम पुराणं वनमालिनम् । पीताम्बरधरं स्निग्धं दिव्यभूषणभूषितम् ॥ ३१
दिव्यानुलेपनं राजच्चित्रिताङ्गमनोहरम् । रुक्मिणी सत्यभामा च नाग्नजिती सुलक्षणा ॥ ३२
मित्रविन्दाऽनुविन्दा सुनन्दा जाम्बवती प्रिया । सुशीला चाष्ट महिला वासुदेवप्रियास्ततः॥३३
उद्धजित्योः पारिषदावृत्तयोर्भक्तितत्पराः(?) । उत्तरे सुमहोद्याने हरिचन्दनसंश्रये ॥ ३४
तत्राधस्तु स्वर्णपीठे मणिमण्डपमण्डिते । तन्मध्ये हेमनिर्माणदले सिंहासनोज्ज्वले ॥ ३५
तत्रैव सह रेवत्या संकर्षणहलायुधम् । ईश्वरस्य प्रियानन्तमभिन्नगुणरूपिणम् ॥ ३६
शुद्धस्फटिकसंकाशं रक्ताम्बुजदलेक्षणम् । नीलपट्टधरं स्निग्धं दिव्यभूषास्रगम्बरम् ॥ ३७
मधुपाने सदाऽऽसक्तं मधुघूर्णितलोचनम् । प्रवीरदक्षिणे भागे मञ्जुनाभ्यन्तरस्थिते ॥ ३८
संतानवृक्षमूले तु मणिमन्दिरमण्डितम् । तन्मध्ये मणिमाणिक्यदिव्यसिंहासनोज्ज्वले ॥ ३९
प्रद्युम्नं च रतीदेवं तत्रोपरि सुखस्थितम् । जगन्मोहनसौन्दर्यसारश्रेणीरसात्मकम् ॥ ४०
असिताम्भोजपुञ्जाभमरविन्ददलेक्षणम् । दिव्यालंकारभूषाभिर्दिगव्यन्धानुलेपनम् ॥ ४१
जगन्मुग्धीकृताशेषसौन्दर्याश्चर्यविग्रहम् । पूर्वोद्याने महारम्ये सुरद्रुमसमाश्रये ॥ ४२
तत्राधस्तु स्वर्णपीठे हेममण्डपमण्डिते । तस्य मध्यस्थिते राजद्दिव्यासिंहासनोज्ज्वले ॥ ४३
दिव्योषया समं श्रीमदनिरुद्धं जगत्पतिम् । सान्द्रानन्दघनश्यामं सुस्निग्धं नीलकुन्तलम् ॥ ४४
सुभ्रूनतलताभङ्गं सुकपोलं सुनासिकम् । सुग्रीवं सुन्दरं वक्षोमनोहरमनोहरम् ॥ ४५
किरीटिनं कुण्डलिनं कण्ठभूषाविभूषितम् । मञ्जुमञ्जीरमाधुर्याश्चर्यसौन्दर्यविग्रहम् ॥ ४६

१ ख. सव्यो । २ म. °ङ्गासुम° । ३ ख. नन्दपुत्रं । ४ ख. उद्धवत्योः । म. उद्भूवत्योः । ५ म. °वृतयो° । ६ म. °म् । पत्नी° । ७ ख. °धुर्यसौन्दर्य श्यामवि° ।

प्रियभृत्य गणाराध्यं यत्र संगीतकप्रियम् । पूर्णब्रह्म सदानन्दं शुद्धसत्त्वस्वरूपिणम् ॥ ४७
तस्योर्ध्वे चान्तरिक्षे च विष्णुं सर्वेश्वरेश्वरम् । अनादिमाद्यं चिद्रूपं चिदानन्दं परं विभुम् ॥४८
त्रिगुणातीतमव्यक्तं नित्यमक्षयमव्ययम् । समेघपुञ्जमाधुर्यसौन्दर्यश्यामविग्रहम् ॥ ४९
नीलकुञ्चितसुस्निग्धकेशपाशातिसुन्दरम्[1] । अरविन्ददलस्निग्धसुदीर्घचारुलोचनम् ॥ ५०
किरीटकुण्डलोद्दण्डं शुद्धसत्त्वात्मभिर्वृतम् । आत्मारामैश्च चिद्रूपैस्तन्मूर्तिध्यानतत्परैः ॥ ५१
हृदयारूढतद्ध्यानैर्नासाग्रन्यस्तलोचनैः । क्रियते हैतुकी मूर्तिर्हृद्[2]ग्रतिकायभाषितैः(?) ॥ ५२
तत्सव्ये यक्षगन्धर्वसिद्धविद्याधरादिभिः । सुकान्तैरप्सरःसंघैर्नृत्यसंगीततत्परैः ॥ ५३
[*तदङ्गभजनं कामं वाञ्छद्भिः कृष्णलालसैः । तदग्रे वैष्णवैः सर्वैश्चान्तरिक्षे सुखासने] ॥ ५४
प्रह्लादनारदाद्यैश्च कुमारशुकवैष्णवैः । जनकाद्यैर्लसद्भावैर्हृद्ब्राह्मस्फूर्तिततत्परैः ॥ ५५
पुलकाकुलसर्वाङ्गैः स्फुरत्प्रेमसमाकुलैः । रहस्यामृतसंसिक्तैरर्धयुग्माक्षरो मनुः ॥ ५६
मन्त्रचूडामणिः प्रोक्तः सर्वमन्त्रैककारणम्[3] । सर्वदेवस्य मन्त्राणां कैशोरमन्त्रैहैतुकम्[4](?) ॥ ५७
सर्वकैशोरमन्त्राणां हेतुश्चूडामणिर्मनुः । जपं कुर्वन्ति मनसा पूर्णप्रेमसुखाश्रयाः ॥ ५८
वाञ्छन्ति तत्पदाम्भोजे निश्चलं प्रेमसाधनम् । तद्बाह्ये[5] स्फटिकाद्युच्चप्राचीरे सुमनोहरे ॥ ५९
कुङ्कुमैः सितरक्ताद्यैश्चतुर्दिक्षु समुज्ज्वलैः । शुक्लं चतुर्भुजं विष्णुं पश्चिमे द्वारपालकम् ॥ ६०
शङ्खचक्रगदापद्मकिरीटादिविभूषितम् । रक्तं चतुर्भुजं पद्मशङ्खचक्रगदायुधम् ॥ ६१
किरीटकुण्डलोद्दीप्तं द्वारपालकमुत्तरे । गौरं चतुर्भुजं विष्णुं शङ्खचक्रगदायुधम् ॥ ६२
किरीटकुण्डलाद्यैश्च शोभितं वनमालिनम् । पूर्वद्वारे द्वारपालं गौरं विष्णुं प्रकीर्तितम् ॥ ६३
कृष्णवर्णं चतुर्बाहुं शङ्खचक्रादिभूषणम् । दक्षिणद्वारपालं तु श्रीविष्णुं कृष्णवर्णकम् ॥ ६४
श्रीकृष्णचरितं ह्येतद्यः पठेत्प्रयतः शुचिः । शृणुयाद्वाऽपि यो भक्त्या गोविन्दे लभते गतिम्[6] ६५

इति श्रीमहापुराणे पाद्मे पातालखण्डे श्रीकृष्णचरिते सप्ततितमोऽध्यायः ॥ ७० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५२७२

---

अथैकसप्ततितमोऽध्यायः ।

---

श्रीदेव्युवाच—

भगवन्सर्वभूतेश सर्वात्मन्सर्वसंभव । देवदेव महादेव सर्वज्ञ करुणाकर ॥ १
त्वयाऽनुकम्पितैवाहं +भूयोऽप्याहानुकम्पया । त्रैलोक्यमोहना मन्त्रास्त्वया मे कथिताः प्रभो २
तेन देवेन गोपीभिर्महामोहनरूपिणा । केन केन विशेषेण चिक्रीडे तद्वदस्व मे ॥ ३

महादेव उवाच—

एकदा वादयन्वीणां नारदो मुनिपुंगवः । कृष्णावतारमाज्ञाय प्रययौ नन्दगोकुलम् ॥ ४
गत्वा तत्र महायोगमायेशं विभुमच्युतम् । बालनाट्यधरं देवं ददर्श नन्दवेश्मनि ॥ ५
सुकोमलपटास्तीर्णहेमपर्यङ्ककोपरि । शयानं गोपकन्याभिः प्रेक्ष्यमाणं सदा मुदा ॥ ६

* एतच्चिह्नान्तर्गतः पाठः क.ख. ङ. छ. ज. झ ड. पुस्तकस्थः । + पुरुषव्यत्यय आर्षः ।

---

१ क. झ. °कुन्तलसु° । २ क. ख. ङ. च. छ. ड. °की भक्तिर्हृ° । ३ ख. °म् । देवस्य सर्वम° । ४ झ. °ग्रहेतु° । ५ झ. ञ. °ह्ये स्फुट° । ६ ख. ङ. च. छ. ड. रतिम् ।

अतीव सुकुमाराङ्गं मुग्धं मुग्धविलोकनम् । विस्रस्तनीलकुटिलकुन्तलावलिमण्डलम् ॥ ७
किंचित्स्मिताङ्कुरव्यञ्जदेकद्वरदकुड्मलम् । स्वप्रभाभिर्भासयन्तं समस्तभवनोदरम् ॥ ८
दिग्वाससं समालोक्य सोऽतिहर्षमवाप ह । संभाष्य गोपतिं नन्दमाह सर्वं प्रभुप्रियः ॥ ९
नारायणपराणां तु जीवनाद्यतिदुर्लभम् । अस्य प्रभावमतुलं न जानन्तीह केचन ॥ १०
भवब्रह्मादयोऽप्यस्मिन्रतिं वाञ्छन्ति शाश्वतीम् । चरितं चास्य बालस्य सर्वेषामेव हर्षणम् ११
मुदा गायन्ति शृण्वन्ति त्वभिनन्दन्ति तादृशाः । अस्मिंस्तव सुतेऽचिन्त्यप्रभावे स्निग्धमानसाः॥
तरिष्यन्ति न तेषां वै भवबाधा भविष्यति । मुञ्चेहपरलोकाशाः सर्वा बल्लवसत्तम ॥ १३
एकान्तेनैकभावेन बालेऽस्मिन्प्रीतिमाचर । इत्युक्त्वा नन्दभवनान्निष्क्रान्तो मुनिपुङ्गवः ॥ १४
तेनार्चितो विष्णुबुद्ध्या प्रणम्य च विसर्जितः । अथासौ चिन्तयामास महाभागवतो मुनिः ॥१५
अस्य कान्ता भगवती लक्ष्मीर्नारायणे हरौ । विधाय गोपिकारूपं क्रीडार्थं शार्ङ्गधन्वनः ॥ १६
अवश्यमवतीर्णा सा भविष्यति न संशयः । तामहं विचिनोम्यद्य गेहे गेहे व्रजौकसाम् ॥ १७
विमृश्यैवं मुनिवरो गेहानि व्रजवासिनाम् । प्रविवेशातिथिर्भूत्वा विष्णुबुद्ध्या सुपूजितः ॥ १८
सर्वेषां बल्लवादीनां रतिं नन्दसुते पराम् । दृष्ट्वा मुनिवरः सर्वान्मनसा प्रणनाम ह ॥ १९
गोपानां च गृहे बालां ददर्श श्वेतरूपिणीम् । स दृष्ट्वा तर्कयामास रमा एषा न संशयः ॥ २०
प्रविवेश ततो धीमान्नन्दसख्युर्महात्मनः । कस्यचिद्गोपवर्यस्य भानुनाम्नो गृहं महत् ॥ २१
आर्चितो विधिवत्तेन सोऽप्यपृच्छन्महामनाः । साधो त्वमसि विख्यातो धर्मनिष्ठतया भुवि ॥ २२
तवाहं धनधान्यादिसमृद्धिं संविभावये । कश्चित्ते योग्य पुत्रोऽस्ति कन्या वा शुभलक्षणा ॥ २३
यतस्ते कीर्तिरखिलं लोकं व्याप्य भविष्यति । इत्युक्तो मुनिवर्येण भानुरानीय पुत्रकम् ॥ २४
महातेजस्विनं दृप्तं नारदायाभ्यवादयत् । दृष्ट्वा मुनिवरस्तं तु रूपेणाप्रतिमं भुवि ॥ २५
पद्मपत्रविशालाक्षं सुग्रीवं सुन्दरभ्रुवम् । चारुदन्तं चारुकर्णं सर्वावयवसुन्दरम् ॥ २६
तं समाश्लिष्य बाहुभ्यां स्नेहाश्रूणि विमुच्य च । ततः सगद्गदं प्राह प्रणयेन महामुनिः ॥ २७

नारद उवाच—

अयं शिशुस्ते भविता सुसखा रामकृष्णयोः । विहरिष्यति ताभ्यां च रात्रिंदिन(व)मतन्द्रितः॥२८
तत आभाष्य तं गोपप्रवरं मुनिपुंगवः । यदा गन्तुं मनश्चक्रे तत्रैवं भानुरब्रवीत् ॥ २९

भानुरुवाच—

एकाऽस्ति पुत्रिका देव देवपत्न्युपमा मम । कनीयसी शिशोरस्य जडान्धबधिराकृतिः ॥ ३०
उत्साहाद्वृद्धये याचे त्वां वरं भगवत्तम । प्रसन्नदृष्टिमात्रेण सुस्थिरां कुरु बालिकाम् ॥ ३१
श्रुत्वैवं नारदो वाक्यं कौतुकाकृष्टमानसः । अथ प्रविश्य भवनं लुठन्तीं भूतले सुताम् ॥ ३२
उत्थाप्याङ्के वि(नि)धायातिस्नेहविह्वलमानसः । [*भानुरप्यायया भक्तिनम्रो मुनिवरान्तिकम् ३३
अथ भागवतश्रेष्ठः कृष्णस्यातिप्रियो मुनिः । दृष्ट्वा तस्याः परं रूपमदृष्टाश्रुतमद्भुतम् ] ॥ ३४
अभूतपूर्वसमं मुग्धो हरिप्रेमा महामुनिः । विगाह्य परमानन्दसिन्धुमेकरसायनम् ॥ ३५
मुहूर्तद्वितयं तत्र मुनिरासीच्छिलोपमः । मुनीन्द्रः प्रतिबुद्धस्तु शनैरुन्मील्य लोचने ॥ ३६

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ञ. ढ. पुस्तकस्थः ।

१ ङ. °मृ । सुप्र° । २ ङ. °स्तभुव° ।

महाविस्मयमापन्नस्तूष्णीमेव स्थितोऽभवत् । अन्तर्हृदि महाबुद्धिरेवमेवं व्यचिन्तयत् ॥ ३७
भ्रान्तं सर्वेषु लोकेषु मया स्वच्छन्दचारिणा । अस्या रूपेण सदृशी दृष्टा नैव च कुत्रचित् ॥ ३८
ब्रह्मलोके रुद्रलोक इन्द्रलोके च मे गतिः । न कोऽपि शोभाकोट्यंशः कुत्राप्यस्या विलोकितः ॥
महामाया भगवती दृष्टा शैलेन्द्रनन्दिनी । यस्या रूपेण सकलं मुह्यते सचराचरम् ॥ ४०
साऽप्यस्याः सुकुमाराङ्गी लक्ष्मीं नाऽऽप्नोति कर्हिचित् । लक्ष्मीः सरस्वती कान्तिर्विद्याद्याश्च वरस्त्रियः
छायामपि स्पृशन्त्यस्य कदाचिन्नैव(न्नेति) दृश्यते । विष्णोर्यन्मोहनं रूपं हरो येन विमोहितः ॥ ४२
मया दृष्टं च तदपि कुतोऽस्याः सदृशं भवेत् । ततोऽस्यास्तत्त्वमाज्ञातुं न मे शक्तिः कथंचन ४३
अन्ये चापि न जानन्ति मायेणैनां हरेः प्रियाम् । अस्याः संदर्शनादेव गोविन्दचरणाम्बुजे ॥ ४४
या प्रेमर्द्धिरभूत्सा मे भूतपूर्वा न कर्हिचित् । एकान्ते नौमि भवतीं दर्शयित्वाऽतिवैभवम् ॥ ४५
कृष्णस्य संभवत्यस्या रूपं परमतुष्टये । विमृश्यैवं मुनिर्गोपप्रवरं प्रेष्य कुत्रचित् ॥ ४६
निभृते परितुष्टाव बालिकां दिव्यरूपिणीम् । अपि देवि महायोगे मायेश्वरि महाप्रभे ॥ ४७
महामोहनदिव्याङ्गि महामाधुर्यवर्षिणि । महाद्भुतरसानन्दाशिथिलीकृतमानसे ॥ ४८
महाभाग्येन केनापि गताऽसि मम दृक्पथम् । नित्यमन्तःमुखा दृष्टिस्तव देवि विभाव्यते ॥ ४९
अन्तरेव महानन्दपरितृप्तेव लक्ष्यसे । प्रसन्नं मधुरं सौम्यमिदं ते मुखमण्डलम् ॥ ५०
व्यनक्ति परमाश्चर्यं कमप्यन्तःसुखोदयम् । रजःसंबन्धिकलिकाशक्तिस्तु त्वाऽतिशोभने(?) ॥ ५१
सृष्टिस्थितिसमाहाररूपिणी त्वमधिष्ठिता । तत्त्वं विशुद्धसत्त्वा सुशक्तिर्विद्यात्मिका परा ॥ ५२
परमानन्दसंदोहं दधती वैष्णवं परम् । कलयाऽऽश्चर्यविभवे ब्रह्मरुद्रादिदुर्गमे ॥ ५३
योगीन्द्राणां ध्यानपथं न त्वं स्पृशसि कर्हिचित् । इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिस्तवेशितुः ५४
तवांशमात्रमित्येवं मनीषा मे प्रवर्तते । मायाविभूतयोऽचिन्त्यास्तन्मायार्भकमायिनः ॥ ५५
परेशस्य महाविष्णोस्ताः सर्वास्ते कलाः कलाः । आनन्दरूपिणी शक्तिस्त्वमीश्वरी न संशयः ॥
त्वया च क्रीडते कृष्णो नूनं वृन्दावने वने । कौमारेणैव रूपेण त्वं विश्वस्य च मोहिनी ॥ ५७
तारुण्यवयसा स्पृष्टं कीदृक्ते रूपमद्भुतम् । कीदृशं तव लावण्यं लीलाहासेक्षणान्वितम् ॥ ५८
हरिमानुपलोभेन पराश्चर्यमयं भवेत् । द्रष्टुं तदहमिच्छामि रूपं ते हरिवल्लभम् ॥ ५९
येन नन्दसुतः कृष्णो मोहं समुपयास्यति । इदानीं मम कारुण्यान्निजरूपं महेश्वरि ॥ ६०
प्रणताय प्रपन्नाय प्रकाशयितुमर्हसि । इत्युक्त्वा मुनिवर्येण तदनुव्रतचेतसा ॥ ६१
महामायेश्वरीं नत्वा महानन्दमयीं पराम् । महाप्रेमंतरोत्कण्ठाव्याकुलाङ्गीं शुभेक्षणाम् ॥ ६२
ईक्षमाणेन गोविन्दमेवं वर्णयता स्थितम् । जय कृष्ण मनोहारिज(ञ्ज)य वृन्दावनप्रिय ॥ ६३
जय भ्रूभङ्गललित जय वेणुरवाकुल । जय बर्हकृतोत्तंस जय गोपीविमोहन ॥ ६४
जयकुङ्कुमलिप्ताङ्ग जय रत्नविभूषण । कदाऽहं त्वत्प्रसादेन त्वनया दिव्यरूपया ॥ ६५
सहितं नवतारुण्यमनोहरवपुःश्रिया । विलोकयिष्ये कैशोरमोहन त्वां जगत्पते ॥ ६६
एवं कीर्तयतस्तस्य तत्क्षणादेव सा पुनः । बभूव दधती दिव्यं रूपमत्यन्तमोहनम् ॥ ६७
चतुर्दशाब्दवयसा ललितं ललितं परम् । समानवयसश्चान्यास्तदैव व्रजबालिकाः ॥ ६८
आगत्य वेष्टयामासुर्दिव्यभूषाम्बरस्रजः । मुनीन्द्रः स्तुतिनिश्चेष्टो बभूवाऽऽश्चर्यमोहितः ॥ ६९

१ अ. °त्वा तु वै° । २ क. अ. °मानन्दं क° । ३ ख. °म् । का त्वयाऽऽ° । अ. °म् । कां त्व° । ४ क. अ. °कशायि° । ५ ह्म. म. °कलाक° । ६ क. ख. ङ. च. छ. अ. ड. हरिवल्लभे । ७ अ. °मकरो° । ८ ड. चलितं । ९ ह्म. अ. °स्रजम् । मु° ।

बालास्तास्तु वयस्यायाश्चरणाम्बुकणैर्मुनिम् । निषिच्य बोधयामासुरूचुश्च कृपयाऽन्विताः ॥ ७०

बाला ऊचुः—

मुनिवर्य महाभाग महायोगेश्वरेश्वर । त्वयैव परया भक्त्या भगवान्हरिरीश्वरः ॥ ७१
नूनमाराधितो देवो भक्तानां कामपूरकः । यदियं ब्रह्मरुद्राद्यैर्देवैः सिद्धमुनीश्वरैः ॥ ७२
महाभागवतैश्चान्यैर्दुर्दर्शा दुर्गमाऽपि च । अत्यद्भुतवयोरूपमोहिनी हरिवल्लभा ॥ ७३
केनाप्यचिन्त्यभाग्येन तव दृष्टिपथं गता । उत्तिष्ठोत्तिष्ठ विप्रर्षे धैर्यमालम्ब्य सत्वरम् ॥ ७४
एनां प्रदक्षिणीकृत्य नमस्कुरु पुनः पुनः । किं न पश्यसि चार्वङ्गीमत्यन्तव्याकुलामिव ॥ ७५
अस्मिन्नेव क्षणे नूनमन्तर्धानं गमिष्यति । नानया सह संलापः कथंचित्ते भविष्यति ॥ ७६
दर्शनं च पुनर्नास्याः प्राप्स्यसि ब्रह्मवित्तम । किंतु वृन्दावने वाऽपि भात्यशोकलता शुभा ७७
सर्वकालेऽपि पुष्पाढ्या सर्वदिग्व्यापिसौरभा । गोवर्धनाददूरेण कुसुमाख्यसरस्तटे ॥ ७८
तन्मूले ह्यर्धरात्रे तु द्रक्ष्यस्यस्मानशेषतः । श्रुत्वैवं वचनं तासां स्नेहविक्लवचेतसाम् ॥ ७९
यावत्प्रदक्षिणीकृत्य प्रणमेद्दण्डवन्मुनिः । मुहूर्तद्वितयं बालां नानानिर्माणशोभनाम् ॥ ८०
आहूय भानुं प्रोवाच नारदः सर्वशोभनाम् । एवंस्वभावा बालेयं न साध्या दैवतैरपि ॥ ८१
किं तु यद्गृहमेतस्याः पदचिह्नविभूषितम् । तत्र नारायणो देवः सर्वदेवगणैः सह ॥ ८२
लक्ष्मीश्च वसते नित्यं सर्वाभिश्चैव सिद्धिभिः । अद्य एनां वरारोहां सर्वभूषणभूषणाम् ॥ ८३
देवीमिव परां गेहे रक्ष यत्नेन सत्तम । इत्युक्त्वा मनसैवैनां महाभागवतोत्तमः ॥ ८४
तद्रूपमेव संस्मृत्य प्रविष्टो गहनं वनम् । अशोकलतिकामूलमासाद्य मुनिपुङ्गवः ॥ ८५
प्रतीक्षमाणो देवीं तां तत्रैवाऽऽगमनेन हि । स्थितोऽत्र प्रेमविकलश्चिन्तयन्कृष्णवल्लभाम् ॥ ८६
अथ मध्यनिशाभागे युवत्यः परमाद्भुताः । पूर्वदृष्टास्तथाऽन्याश्च विचित्राभरणस्रजः ॥ ८७
दृष्ट्वा मनसि संभ्रान्तो दण्डवत्पतितो भुवि । परिवार्य मुनिं सर्वास्तास्ताः प्रविविशुः शुभाः ८८
प्रष्टुकामोऽपि स मुनिः किंचित्स्वाभिमतं प्रियम् । नाशकत्प्रेमलावण्यप्रियभाषाप्रधर्षितः ॥ ८९
अथाऽऽगता मुनिश्रेष्ठं कृताञ्जलिमिव स्थितम् । भक्तिभारानतग्रीवं सविस्मयं ससंभ्रमम् ॥ ९०
सुविनीततमं प्राह तत्रैव करुणान्विता । अशोकमालिनी नाम्ना अशोकवनदेवता ॥ ९१

अशोकमालिन्युवाच—

अशोककलिकायां तु वसाम्यस्यां महामुने । रक्ताम्बरधरा नित्यं रक्तमाल्यानुलेपना ॥ ९२
रक्तसिन्दूरकलिका रक्तोत्पलवतंसिनी । रक्तमाणिक्यकेयूरमुकुटादिविभूषिता ॥ ९३
एकदा प्रियया सार्धं विहरन्त्यो मधूत्सवे । तत्रैव मिलिता गोपबालिकाश्चित्रवाससः ॥ ९४
अहं चाशोकमालाभिर्गोपवेषधरं हरिम् । रमारूपाश्च ताः सर्वा भक्त्या सम्यगपूजयम् ॥ ९५
ततः प्रभृति चैतासां मध्ये तिष्ठामि सर्वदा । भूषाभिर्विविधाभिश्च तोषयित्वा रमापतिम् ॥ ९६
परापरमहं सर्वं विजानामीह सर्वतः । गोगोपगोपिकादीनां रहस्यं चापि वेद्म्यहम् ॥ ९७
तव जिज्ञासितं चापि हृदि प्रतिविभावितम् । तां देवीमद्भुताकारामद्भुतानन्ददायिनीम् ॥ ९८
हरेः प्रियां हिरण्याभां हीरकोज्ज्वलमुद्रिकाम् । कथं पश्यामि लोलाक्षीं कथं वा तत्पदाम्बुजम् ॥
आराध्यतेऽतिभक्त्येति त्वया ब्रह्मन्विमर्शितम् । तत्र ते कथयिष्यामि वृत्तान्तं सुमहात्मनाम् १००

१ क. ख. ङ. च. छ. ञ. ढ. °विह्वलचे° । २ झ. ञ. °यमानं प्रो° । ३ झ. ञ. °मनं निशि । स्थि° । ४ ख. छ. ढ. °त्रैका क° । ५ क. ञ. °दा । भक्तिभि° ।

मानसे सरसि स्थित्वा तपस्तीव्रमुपेयुषाम् । जपतां सिद्धिमन्त्रांश्च ध्यायतां हरिमीश्वरम् ॥ १०१
मुनीनां काङ्क्षतां नित्यं तस्या एव पदाम्बुजम् । एकसप्ततिसाहस्रसंख्यातानां महौजसाम् ॥
तत्तेऽहं कथयाम्यद्य तद्रहस्यं परं वने ॥ १०२

इति श्रीमहापुराणे पाद्मे पातालखण्डे श्रीराधाकृष्णमाहात्म्यकथनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५३७४

---

अथ द्विसप्ततितमोऽध्यायः ।

---

ईश्वर उवाच—

तदेकाग्रमना भूत्वा शृणु देवि वरानने । आसीदुग्रतपा नाम मुनिरेको दृढव्रतः ॥ १
साग्निको ह्यग्निभक्षश्च चचारात्यद्भुतं तपः । जजाप परमं जाप्यं मन्त्रं पञ्चदशाक्षरम् ॥ २
काममन्त्रेण पुटितं कामं कामवरप्रदात् । कृष्णायेति पदं स्वाहासहितं सिद्धिदं परम् ॥ ३
दध्यौ च श्यामलं कृष्णं रासोन्मत्तं वरोत्सुकम् । पीतपट्टधरं वेणुं करेणाधरमर्पितम् ॥ ४
नवयौवनसंपन्नं कर्षन्तं पाणिना प्रियाम् । एवं ध्यानपरः कल्पशतान्ते देहमुत्सृजन् ॥ ५
सुनन्दनामगोपस्य कन्याऽभूत्स महामुनिः । सुनन्देति समाख्याता या वीणां बिभ्रति करे ॥ ६
मुनिरन्यः सत्यतपा इति ख्यातो महाव्रतः । स शुष्कपत्रभुक्कोये प्रजजाप परं मनुम् ॥ ७
रत्यन्तं कामबीजेन पुटितं च दशाक्षरम् । स प्रदध्यौ मुनिवरश्चित्रवेषधरं हरिम् ॥ ८
धृत्वा रमाया दोर्वल्लीद्वितयं कङ्कणोज्ज्वलम् । नृत्यन्तं तन्मुदं तं च संश्लिष्यन्तं मुहुर्मुहुः ॥ ९
हसन्तमुच्चैरानन्दतरङ्गं जठराम्बरे । दधतं वेणुमाजानुवैजयन्त्या विराजितम् ॥ १०
स्वेदाम्भःकणसंसिक्तललाटवनिताननम् । त्यक्त्वा त्यक्त्वा स वै देहं तपसा च महामुनिः॥ ११
दशकल्पान्तरे चायं जातो नन्दवनादिह । सुभद्रनाम्नो गोपस्य कन्या भद्रेति विश्रुता ॥ १२
यस्याः पृष्ठतले दिव्यं व्यजनं परिदृश्यते । हरिधामाभिधानस्तु कश्चिदासीन्महामुनिः ॥ १३
सोऽतप्यत तपः कृच्छ्रं नित्यं त्यक्त्वैव भोजनम् । आशुसिद्धिकरं मन्त्रं विंशत्यर्णं प्रजप्तवान्॥ १४
अनन्तरं कामबीजादध्यारूढं[3] तु दैवतम् । माया तत्पुरतो व्योमहंसासृग्द्युतिचन्द्रकम् ॥ १५
ततो दशाक्षरं पश्चान्नमोयुक्तं स्मरादिकम् । दध्यौ वृन्दावने रम्ये माधवीमण्डपे प्रभुम् ॥ १६
उत्तानशायिनं चारुपल्लवास्तरणोपरि । कदाचिदतिकामार्तवल्लव्या रक्तनेत्रया ॥ १७
वक्षोजयुगमाच्छाद्य विपुलोरःस्थलं मुहुः । संचुम्बमानं गण्डान्तैस्तप्यमानवदच्छदम् ॥ १८
कलयन्तं प्रियां दोर्भ्यां सहासं समुदाऽद्भुतम् । स मुनिश्च बहून्देहांस्त्यक्त्वा कल्पत्रयान्तरे॥ १९
सारङ्गनाम्नो गोपस्य कन्याऽभूच्छुभलक्षणा । रङ्गवेणीति विख्याता निपुणा चित्रकर्मणि ॥ २०
यस्या दन्तेषु दृश्यन्ते चित्रिताः शोणबिन्दवः । ब्रह्मवादी मुनिः कश्चिज्जाबालिरिति विश्रुतः ॥
स तपःसु रतो योगी विचरन्पृथिवीमिमाम् । स एकस्मिन्महारण्ये योजनायतविस्तृते ॥ २२
यदृच्छया गतोऽपश्यदेकां वापीं सुशोभनाम् । सर्वतः स्फटिकाबन्धतटां स्वादुजलान्विताम्॥ २३
विकासिकमलामोदवायुना परिशीलिताम् । तस्याः पश्चिमदिग्भागे मूले वटमहीरुहे ॥ २४
अपश्यत्तापसीं कांचित्कुर्वतीं दारुणं तपः । तारुण्यवयसा युक्तां रूपेणातिमनोहराम् ॥ २५

---

१ झ. सिद्धम° । २ झ. ञ. तटे । ३ झ. °ढं तदेव तु । मा° । ञ. °ढं तदेव तु । मा° । ४ ञ. °न्तस्तृप्य° ।

चन्द्रांशुसदृशाभासां सर्वावयवशोभनाम् । कृत्वा कटितटे वामपाणिं दक्षिणहस्ततः ॥ २६
ज्ञानमुद्रां च बिभ्राणामनिमेषितलोचनाम् । त्यक्त्वाऽऽहारं विहारं च सुनिश्चलतया स्थिताम् ॥
जिज्ञासुस्तां मुनिवरस्तस्थौ तत्र शतं समाः । तदन्ते तां समुत्थाप्य चलितां विनयान्मुनिः ॥२८
अपृच्छत्का त्वमाश्चर्यरूपे किं वाऽऽचरिष्यसि । यदि योग्यं भवेत्तर्हि कृपया वक्तुमर्हसि ॥ २९
अथाब्रवीच्छनैर्बाला तपसाऽतीव कर्शिता । ब्रह्मविद्याऽहमतुला योगीन्द्रैर्या च मृग्यते ॥ ३०
साऽहं हरिपदाम्भोजकाम्यया सुचिरं तपः । चराम्यस्मिन्वने घोरे ध्यायन्ती पुरुषोत्तमम् ॥३१
ब्रह्मानन्देन पूर्णाऽहं तेनाऽऽनन्देन तृप्तधीः । तथाऽपि शून्यमात्मानं मन्ये कृष्णरतिं विना ॥३२
इदानीमतिनिर्विण्णा देहस्यास्य विसर्जनम् । कर्तुमिच्छामि पुण्यायां वापिकायामिहैव तु ॥ ३३
तच्छ्रुत्वा वचनं तस्या मुनिरत्यन्तविस्मितः । पतित्वा चरणे तस्याः कृष्णोपासाविधिं शुभम् ॥
पप्रच्छ परमप्रीतस्त्यक्त्वाऽध्यात्मविरोचनम् । तयोक्तमन्त्रमाज्ञाय जगाम मानसं सरः ॥ ३५
ततोऽतिदुश्चरं चक्रे तपो विस्मयकारकम् । एकपादस्थितः सूर्यं निर्निमेषं विलोकयन् ॥ ३६
मन्त्रं जजाप परमं पञ्चविंशतिवर्णकम् । दध्यौ परमभावेन कृष्णमानन्दरूपिणम् ॥ ३७
चरन्तं व्रजवीथीषु विचित्रगतिलीलया । [*ललितैः पादविन्यासैः क्वणयन्तं च नूपुरम् ॥ ३८
चित्रकन्दर्पचेष्टाभिः सस्मितापाङ्गवीक्षितैः । संमोहिन्याख्यया वंश्या पञ्चम्याऽरुणचित्रया(?)]३९
बिम्बोष्ठपुटचुम्बिन्या कलालापैर्मनोज्ञया । हरन्तं व्रजरामाणां मनांसि च वपूंषि च ॥ ४०
श्लथन्नीविभिरागत्य सहसाऽऽलिङ्गिताङ्गकम् । दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम् ॥ ४१
श्यामलाङ्गं प्रभापूर्णं मोहयन्तं जगत्त्रयम् । स एवं बहुदेहेन समुपास्य जगत्पतिम् ॥ ४२
नवकल्पान्तरे जाता गोकुले दिव्यरूपिणी । कन्या प्रचण्डनाम्नस्तु गोपस्यातियशस्विनी ॥ ४३
[+चित्रगन्धेति विख्याता सुकुमारी शुभानना । निजाङ्गगन्धैर्विविधैर्मोदयन्ती दिशो दश ॥ ४४
तामेनां पश्य कल्याणीं वृन्दशो मधुपायिनीम् ] । अङ्केषु स्वपतिं कृत्वा रसावेशसमाकुलाम् ॥४५
अस्याः स्तनपरिष्वङ्गहारैः सर्वैर्विहन्यते । वक्षस्थलात्प्रच्यवद्भिश्चित्रगन्धादिसौरभैः ॥ ४६
अपरे मुनिवर्यास्तु सततं पूतमानसाः । वायुभक्षास्तपस्तेपुर्जपन्तः परमं मनुम् ॥ ४७
स्मरः कृष्णाय कामार्तिकलादिव्रतशालिने । अ(आ)प्रेयीसहितं कृत्वा मन्त्रं पञ्चदशाक्षरम् ॥४८
दध्युर्मुनिवराः कृष्णमूर्तिं दिव्यविभूषणाम् । दिव्यचित्रदुकूलेन पूर्णपीनकटिस्थलाम् ॥ ४९
मयूरपिच्छकैः क्लृप्तचूडामुज्ज्वलकुण्डलाम् । सव्यजङ्घान्त आदाय दक्षिणं चरणाम्बुजम् ॥ ५०
भ्रमन्तीं संपुटीकृत्य चारुहस्ताम्बुजद्वयम् । कक्षादेशविनिक्षिप्तवेणुं परिचलत्पुटीम् ॥ ५१
आनन्दयन्तीं गोपीनां नयनानि मनांसि च । परमाश्चर्यरूपेण प्रविष्टां रङ्गमण्डपे ॥ ५२
प्रसूनवर्षैर्गोपीभिः पूर्यमाणां च सर्वतः । अथ कल्पान्तरे देहं त्यक्त्वा जाता इहाधुना ॥ ५३
यासां कर्णेषु दृश्यन्ते ताटङ्का रत्ननिर्मिताः । रत्नमाल्यानि कण्ठेषु रत्नपुष्पाणि वेणिषु ॥ ५४
मुनिः शुचिश्रवा नाम सुवर्णो नाम चापरः । कुशध्वजस्य ब्रह्मर्षेः पुत्रौ तौ वेदपारगौ ॥ ५५
ऊर्ध्वपादौ तपो घोरं तेपतुस्त्र्यक्षरं मनुम् । ह्रीं हं सं इति कृत्वैव जपन्तौ यतमानसौ ॥ ५६

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. झ. ढ. पुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ज. झ. ढ. पुस्तकस्थः ।

१ ख. छ. ढ. चण्डांशु° । २ ख. ङ. च. छ. ढ. °ष्टिनः । चि° । ३ झ. कृष्णस्य । ४ ख. ङ. च. ढ. °दिव्यातिशा° । ५ झ. °प्रेयासं° । ६ क. झ. सुविश्रवा । ७ झ. °म् । ह्रं हं । ८ झ. °सामिति ।

ध्यायन्तौ गोकुले कृष्णं बालकं दशवार्षिकम् । कंदर्पसमरूपेण तारुण्यललितेन च ॥ ५७
पश्यन्तीर्व्रजबिम्बोष्ठीर्मोहयन्तमनारतम् । तौ कल्पान्ते तनुं त्यक्त्वा लब्धवन्तौ जनुर्व्रजे ॥ ५८
सुवीरनामगोपस्य सुते परमशोभने । ययोर्हस्ते प्रदृश्येते सारिके शुभराविणी ॥ ५९
जटिलो जङ्घपूतश्च घृताशी कर्बुरेव च । चत्वारो मुनयो धन्या इहामुत्र च निःस्पृहाः ॥ ६०
केवलेनैकभावेन प्रपन्ना बल्लवीपतिम् । तेपुस्ते सलिले मग्ना जपन्तो मनुमुत्तमम् ॥ ६१
रमाद्वयेण पुटितं स्मराद्यन्तदशाक्षरम् । दध्युश्च गाढभावेन बल्लवीभिर्वने वने ॥ ६२
भ्रमन्तं नृत्यगीताद्यैर्मानयन्तं मनोहरम् । चन्दनालिप्तसर्वाङ्गं जपापुष्पावतंसकम् ॥ ६३
कह्लारमालयाऽऽवीतं नीलपीतपटावृतम् । कल्पत्रयान्ते जातास्ते गोकुले शुभलक्षणाः ॥ ६४
इमास्ताः पुरतो रम्या उपविष्टा नतभ्रुवः । यासां भर्मकृतान्येव वलयानि प्रकोष्ठके ॥ ६५
विचित्राणि च रत्नाद्यैर्[1]रुयमुक्ताफलादिभिः । मुनिर्दीर्घतपा नाम व्यासोऽभूत्पूर्वकल्पके ॥ ६६
तत्पुत्रः शुक इत्येव ख्यातो मुनिवरः सुधीः । सोऽपि बालो महाप्राज्ञः सदैवानुस्मरन्पदम् ॥ ६७
विहाय पितृमात्रादि कृष्णं ध्यात्वा वनं गतः । स तत्र मानसैर्दिव्यैरुपचारैरहर्निशम् ॥ ६८
अनाहारोऽर्चयद्विष्णुं गोपरूपिणमीश्वरम् । रमया पुटितं मन्त्रं जपन्नष्टादशाक्षरम् ॥ ६९
दध्यौ परमभावेन हरिं हैमतरोरधः । हैममण्डपिकायां च हेमसिंहासनोपरि ॥ ७०
आसीनं हेमहस्ताग्रैर्दधानं हैमवंशिकाम् । दक्षिणेन भ्रामयन्तं पाणिना हेमपङ्कजम् ॥ ७१
हेमद्रवेण प्रियया परिक्लृप्ताङ्गचित्रकम् । हसन्तमतिहर्षेण पश्यन्तं च निजाश्रमम् ॥ ७२

हर्षाश्रुपूर्णः पुलकान्विताङ्गः प्रसीद नाथेति वदन्नथोच्चैः ।
दण्डप्रणामाय पपात भूमौ संवेपमानस्त्रिजगद्विधातुः ॥ ७३
तं भक्तिकामं पतितं धरण्यां मायासुतोऽस्मीति वदंस्तमुच्चैः ।
उत्थापयामास भुजौ गृहीत्वा पस्पर्श हर्षोपचितेक्षणेन ॥ ७४

उवाच च प्रियारूपं लब्धवन्तं शुकं हरिः । त्वं मे प्रियतमा भद्रे सदा तिष्ठ ममान्तिके ॥ ७५
मद्रूपं चिन्तयन्ती च प्रेमास्पदमुपागता । द्वे च मुख्यतमे गोप्यौ समानवयसी शुभे ॥ ७६
एकव्रते एकनिष्ठे एकनक्षत्रनामनी[1] । तप्तजाम्बूनदप्रख्या तत्रैकाऽन्या तडित्प्रभा ॥ ७७
एका निद्रायमाणाक्षी परा सौम्यायतेक्षणा । सोऽर्चयत्परया भक्त्या ते हरेः सव्यदक्षिणे ॥ ७८
स कल्पान्ते तनुं त्यक्त्वा गोकुलेऽभून्महात्मनः । उपनन्दस्य दुहिता नीलोत्पलदलच्छविः ॥ ७९
सेयं श्रीकृष्णवनिता पीतशाटीपरिच्छदा । रक्तचोलकया पूर्णशातकुम्भघटस्तनी ॥ ८०
दधार रक्तसिन्दूरं सर्वाङ्गस्यावगुण्ठिनी । स्वर्णकुण्डलविभ्राजद्गण्डदेशा सुशोभना ॥ ८१
स्वर्णपङ्कजमालाढ्या कुङ्कुमालिप्तसुस्तनी । यस्या हस्ते चर्वणीयं दृश्यते हरिणाऽर्पितम् ॥ ८२
वेणुवाद्यातिनिपुणा केशवस्याततोषिणी । कृष्णेन परितुष्टेन कदाचिद्दानकर्मणि ॥ ८३
विन्यस्ता कम्बुकण्ठेऽस्या भाति गुञ्जावलिः शुभा । परोक्षे चापि कृष्णस्य कृष्णकान्ता स्मरार्दिता
सखीभिर्वादयन्तीभिर्गायन्ती सुस्वरं परम् । नर्तयेत्प्रियवेषेण वेषयित्वा वधूमिमाम् ॥ ८५
वारं वारं च गोविन्दभावेनाऽऽलिङ्ग्य चुम्बति । प्रियाऽसौ सर्वगोपीनां कृष्णस्याप्यतिवल्लभा ॥
श्वेतकेतोः सुतः कश्चिद्वेदवेदाङ्गपारगः । सर्वमेव परित्यज्य प्रचण्डस्त(त)प आस्थितः ॥ ८७
मुरारिसेवितपदां सुधामधुरवादिनीम् । गोविन्दस्य प्रियां शक्तिं ब्रह्मरुद्रादिदुर्गमाम् ॥ ८८

---
१ प्र. °नामिनी । २ क. छ. प्र. ङ. °रत्नादि° ।

भजन्तीमेकभावेन श्रियमेव मनोहराम् । ध्यायञ्जजाप सततं मन्त्रमेकादशाक्षरम् ॥ ८९
हसितं सकलं कृत्वा बतमायेषु(?) योजयेत् । कान्त्यादिभिर्हसन्तीभिर्वासयत्यविभा(?)जगत् ॥
वसन्तेऽवमतेत्येवं मन्त्रार्थं चिन्तयेत्सदा । सोऽपि कल्पद्वयेनैव सिद्धोऽत्र जनिमासवान् ॥ ९१
सेयं बालाऽवनेः पुत्री कृशाङ्गी कुड्मलस्तनी । मुक्तावलिलसत्कण्ठी शुद्धकौशेयवासिनी ॥ ९२
मुक्ताच्छुरितमञ्जीरकङ्कणाङ्गदमुद्रिकाम् । बिभ्रती कुण्डले दिव्ये अमृतस्राविणी शुभे ॥ ९३
वृतकस्तूरिकावेणिमध्ये सिन्दूरबिन्दुवत्(कम्) । दधाना चित्रकं भाले सार्धं चन्दनचित्रकैः ॥९४
याऽसौ च दृश्यते शान्ता जपन्ती परमं पदम् । आसीच्चन्द्रप्रभो नाम राजर्षिः प्रियदर्शनः॥ ९५
तस्य कृष्णप्रसादेन पुत्रोऽभून्मधुराकृतिः । चित्रध्वज इति ख्यातः कौमारावधिवैष्णवः ॥ ९६
स राजा स्वसुतं सौम्यं सुस्थिरं द्वादशाब्दिकम् । अदीक्षयद्द्विजान्मन्त्रं परमष्टादशाक्षरम् ॥ ९७
अभिषिच्यमानः शिशुर्मन्त्रामृतमयैर्जलैः । तत्क्षणे भूपतिं प्रेम्णा नत्वोदश्रु प्रकल्पितः ॥ ९८
तस्मिन्दिने स वै बालः शुचिवस्त्रधरः शुचिः । हारनूपुरसूत्राद्यैर्ग्रैवेयाङ्गदकङ्कणैः ॥ ९९
विभूषितो हरेर्भक्तिमुपस्पृश्यामलाशयः । विष्णोरायतनं गत्वा स्थित्वैकाकी व्यचिन्तयत् ॥१००
कथं भजामि तं कृष्णं मोहनं गोपयोषिताम् । विक्रीडन्तं सदा ताभिः कालिन्दीपुलिने वने१०१
इत्थमत्याकुलमतिश्चिन्तयन्नेव बालकः । अवाप परमां निद्रां स्वप्नं च समपश्यत ॥ १०२
तस्मिन्नायतने आसीत्कृष्णप्रतिकृतिः शुभा । शिलामयी स्वर्णपीठे सर्वलक्षणलक्षिता ॥ १०३
साऽभूदिन्दीवरश्यामा स्निग्धा लावण्यशालिनी । त्रिभङ्गललिताकारा शिखण्डिपिच्छभूषणा ॥
कूजयन्ती मुदा वेणुं काञ्चनीमधरेऽर्पिताम् । दक्षसव्यगताभ्यां च सुन्दरीभ्यां निषेविता ॥१०५
वर्धयन्ती तयोः कामं चुम्बनाश्लेषणादिभिः । दृष्ट्वा चित्रध्वजः कृष्णं तादृग्वेपविलासिनम्१०६
अवनम्य शिरस्तस्मै पुरो लज्जितमानसः । अथोवाच हरिर्दक्षपार्श्वगां प्रेयसीं हसन् ॥ १०७
सलज्जां परमं चैनं स्वशरीरांशतां गतम् । निर्मायाऽऽत्मसमं दिव्यं युवतीरूपमद्भुतम् ॥ १०८
चिन्तयस्व शरीरेण ह्यभेदं मृगलोचने । अथो त्वदङ्गतेजोभिः स्पृष्टस्त्वद्रूपमाप्स्यति ॥ १०९
ततः सा पद्मपत्राक्षी गत्वा चित्रध्वजान्तिकम् । निजाङ्गैस्तदङ्गानामभेदं ध्यायती(न्ती) स्थिता॥
अथास्यास्त्वङ्गतेजांसि तदङ्गं पर्यपूरयन् । स्तनयोर्ज्योतिषा जातौ पीनौ चारुपयोधरौ ॥ १११
नितम्बज्योतिषा जातं श्रोणिबिम्बं मनोहरम् । कुन्तलज्योतिषा केशपाशोऽभूत्करयोः करौ११२
सर्वमेवं सुसंपन्नं भूषावासःस्रगादिकम् । कलासु कुशला जाता सौरभेनान्तरात्मनि ॥ ११३
दीपाद्दीपमिवाऽऽलोक्य सुभगां भुवि कन्यकाम् । चित्रध्वजां त्रपाभङ्गीं स्मितशोभां मनोहराम्॥
प्रेम्णा गृहीत्वा करयोः सा तामपहरन्मुदा । गोविन्दवामपार्श्वस्थां प्रेयसीं परिरभ्य च ॥ ११५
उवाच तव दासीयं नाम चास्याश्च कारय । सेवां चास्यै वद प्रीत्या यथाभिरुचितां प्रियाम्११६
अथ चित्रकलेत्येतत्तन्नामाऽऽत्ममतेन सा । चकार चाऽऽह सेवार्थं धृत्वा चापि विपञ्चिकाम्११७
सदा त्वं निकटे तिष्ठ गायस्व विविधैः स्वरैः । गुणान्मत्प्राणनाथस्य तवायं विहितो विधिः११८
अथ चित्रकला त्वाज्ञां गृहीत्वाऽऽनम्य माधवम् । तत्प्रेयस्याश्च चरणं गृहीत्वा पादयो रजः ॥
जगौ सुमधुरं गीतं तयोरानन्दकारणम् । अथ प्रीत्योपगूढा सा कृष्णेनाऽऽनन्दमूर्तिना ॥ १२०
यावत्सुखाम्बुधौ पूर्णा तावदेवाप्रबुध्यत । चित्रध्वजो महाप्रेमविकलः संस्मरन्परम् ॥ १२१

---

१ अ. °वमते° । २ ख. °भे । वनकस्तूरिकापत्रम्° । ३ झ. निषेव्यताम् ।

तमेव परमानन्दं मुक्तकण्ठो रुरोद ह । तदारभ्य रुदन्नेव मुक्ताहारविहारकम् ॥ १२२
आभाषितोऽपि पित्राद्यैर्नैव वक्त्युत्तरं क्वचित् । मासमात्रं गृहे स्थित्वा निशीथे कृष्णसंश्रयः १२३
निर्गत्यारण्यमचरत्तपो वै मुनिदुष्करम् । कल्पान्ते देहमुत्सृज्य तपसैव महामुनिः ॥ १२४
वीरगुप्ताभिधानस्य गोपस्य दुहिता शुभा । जाता चित्रकलेत्येव यस्याः स्कन्धे मनोहरा ॥१२५
विपञ्ची दृश्यते नित्यं सप्तस्वरविभूषिता । उपतिष्ठति वै वामे रत्नभृङ्गारमुत्तमम् ॥ १२६
दधाना दक्षिणे हस्ते सा वै रत्नपतद्ग्रहम् । अयमासीत्पुरा सर्वतापसैरभिवन्दितः ॥ १२७
मुनिः पुण्यश्रवा नाम कश्यपः सर्वधर्मवित् । पिता तस्याभवच्छैवः शतरुद्रीयमन्वहम्(न्वहैः)१२८
प्रस्तुवन्देवदेवेशं विश्वेशं भक्तवत्सलम् । तस्मै प्रसन्नो भगवान्पार्वत्या सह शंकरः ॥ १२९
चतुर्दश्यामर्धरात्रे प्रत्यक्षः प्रददौ वरम् । त्वत्पुत्रो भविता कृष्णे भक्तिमान्बाल एव हि ॥ १३०
उपनीयाष्टमे वर्षे तस्मै सिद्धमनुस्त्वयम् । उपदिष्टे(ष्टो)कविंशत्या यो मया ते निगद्यते ॥ १३१
विद्यागोपालनामाऽयं मन्त्रो वाक्सिद्धिदायकः । एतत्साधकजिह्वाग्रे लीलाचरितमद्भुताम्(ता) ॥
अनन्तमूर्तिरायाति स्वयमेव वरप्रदः(दा) । काममायारमाकण्ठसेन्द्रादामोक्षोज्ज्वलाः ॥ १३३
मध्ये दशाक्षरं प्रोच्य पुनस्ता एव निर्दिशेत् । दशाक्षरोक्तऋष्यादिध्यानं चास्य ब्रवीम्यहम् ॥१३४
पूर्णामृतनिधेर्मध्ये द्वीपं ज्योतिर्मयं स्मरेत् । कालिन्द्या वेष्टितं तत्र ध्याये वृ(वृ)न्दावनं वनम् १३५
सर्वर्तुकुसुमस्राविद्रुमवल्लीभिरावृतम् । नृत्यन्मत्तशिखिस्वानं गायत्कोकिलषट्पदम् ॥ १३६
तस्य मध्ये वसत्येकः पारिजाततरुर्महान् । शाखोपशाखाविस्तारैः शतयोजनमुच्छ्रितः ॥ १३७
तले तस्याथ विमले परितो धेनुमण्डलम् । तदन्तर्मण्डलं गोपबालानां वेणुशृङ्गिणाम् ॥ १३८
तदन्तरे तु रुचिरं मण्डलं व्रजसुभ्रुवाम् । नानोपायनपाणीनां मदविह्वलचेतसाम् ॥ १३९
कृताञ्जलिपुटानां च मण्डलं शुक्लवाससाम् । शुक्लाभरणभूषाणां प्रेमविह्वलितात्मनाम् ॥ १४०
चिन्तयेच्छ्रुतिकन्यानां गृह्णतीनां वचः प्रियम् । रत्नवेद्यां ततो ध्याये दु(दु)कूलावरणं हरिम् १४१
ऊरौ शयानं राधायाः कदलीकाण्डकोपरि । तद्वक्त्रं चन्द्रसुस्मेरं वीक्षमाणं मनोहरम् ॥ १४२
किंचित्कुञ्चितवामाङ्घ्रिवेणुयुक्तेन पाणिना । वामेनाऽऽलिङ्ग्य दयितां दक्षिणं चिबुकं स्पृशन् ॥
महामारकताभासं मौक्तिकच्छायमेव च । पुण्डरीकविशालाक्षं पीतनिर्मलवाससम् ॥ १४४
बर्हभारलसच्छीर्षं मुक्ताहारमनोहरम् । गण्डप्रान्तलसच्चारुमकराकृतिकुण्डलम् ॥ १४५
आपादतुलसीमालं कङ्कणाङ्गदभूषणम् । नूपुरैर्मुद्रिकाभिश्च काञ्च्या च परिमण्डितम् ॥ १४६
सुकुमारतनुं ध्यायेत्किशोरवयसाऽन्वितम् । पूजा दशाक्षरोक्तैव वेदलक्षं पुरस्क्रियाः ॥ १४७
इत्युक्त्वाऽन्तर्दधे देवो देवी च गिरिजा सती । मुनिरागत्य पुत्राय तथैवोपदिदेश ह ॥ १४८
पुण्यश्रवास्तु तन्मन्त्रग्रहणादेव केशवम् । वर्णयामास विविधैर्जित्वा सर्वान्मुनीन्स्वयम् ॥ १४९
रूपलावण्यवैदग्ध्यसौन्दर्याश्चर्यलक्षणम् । तदा हृष्टमना बालो निर्गत्य स्वगृहात्ततः ॥ १५०
वायुभक्षस्तपस्तेपे कल्पानामयुतत्रयम् । तदन्ते गोकुले जाता नन्दभ्रातुर्गृहे स्वयम् ॥ १५१
लवङ्गा इति तन्नाम कृष्णेङ्गितनिरीक्षणा । यस्या हस्ते प्रदृश्येत मुखमार्जनयन्त्रकम् ॥
इति ते कथिताः काश्चित्प्रधानाः कृष्णवल्लभाः ॥ १५२

---

१ ख. °कः । ज्ञात्वा साध° । २ ख. °म् । मुक्ताभ° । ३ ञ. °याम् । इ° । ४ झ. °ष्णे गीतिनि° ।

हरिविविधरसाद्यैर्युक्तमध्यायमेत-
द्व्र(तं व्र) जवरतनयाभिश्चारुहासेक्षणाभिः ।
पठति य इह भक्त्या पाठयेद्वा मनुष्यो
व्रजति भगवतः श्रीवासुदेवस्य धाम ॥ १५३ ॥

इति श्रीमहापुराणे पाद्मे पातालखण्डे श्रीकृष्णमाहात्म्ये द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५५२७

---

अथ त्रिसप्ततितमोऽध्यायः ।

---

ईश्वर उवाच—

यत्त्वया पृष्टमाश्चर्यं तन्मया भाषितं क्रमात् । यत्र मुह्यन्ति ब्रह्माद्यास्तत्र को वा न मुह्यति ॥ १
तथाऽपि ते प्रवक्ष्यामि यदुक्तं परमर्षिणा । महाराज्ञेऽम्बरीषाय विष्णुभक्त्याऽन्विताय च ॥ २
बदर्याश्रममासाद्य समासीनं जितेन्द्रियम् । राजा प्रणम्य तुष्टाव विष्णुधर्मविवित्सया ॥ ३
वेदव्यासं महाभागं सर्वज्ञं पुरुषोत्तमम् । मां त्वं संसारदुष्पारे परित्रातुमिहार्हसि ॥ ४
विषयेभ्यो विविक्तोऽस्मि नमस्तेभ्यो नमोऽखिलम् । यत्तत्पदमनुद्विग्नं सच्चिदानन्दविग्रहम् ॥ ५
परं ब्रह्मपराकाशमनाकाशमनामयम् । यत्साक्षात्कृत्य मुनयो भवाम्भोधिं तरन्ति हि ॥
तत्राहं मनसो नित्यं कथं गतिमवाप्नुयाम् ॥ ६

वेदव्यास उवाच—

अतिगोप्यं त्वया पृष्टं यन्मया न शुकं प्रति । गदितं स्वसुखं किंतु त्वां वक्ष्यामि हरिप्रिय ॥ ७
आसीदिदं परं विश्वं यद्रूपं यत्प्रतिष्ठितम् । अव्याकृतमव्ययितं तदीश्वरमयं शृणु ॥ ८
मया कृतं तपः पूर्वं बहुवर्षसहस्रकम् । फलमूलपलाशाम्बुवाय्वाहारनिषेविणा ॥ ९
ततो मामाह भगवान्स्वध्याननिरतं हरिः । कस्मिन्नर्थे चिकीर्षा ते विवित्सा वा महामते ॥ १०
प्रसन्नोऽस्मि वृणुष्व त्वं वरं च वरदर्षभात् । मद्दर्शनान्तः संसार इति सत्यं ब्रवीमि ते ॥ ११
ततोऽहमब्रवं कृष्णं पुलकोत्फुल्लविग्रहः । त्वामहं द्रष्टुमिच्छामि चक्षुर्भ्यां मधुसूदन ॥ १२
यत्तत्सत्यं परं ब्रह्म जगज्ज्योतिर्जगत्पतिः । वदन्ति वेदशिरसश्चाक्षुषं नाथ मेऽद्भुतम् ॥ १३

श्रीभगवानुवाच—

ब्रह्मणैवं पुरा पृष्टः प्रार्थितश्च यथा पुरा । यदवोचमहं तस्मै तत्तुभ्यमपि कथ्यते ॥ १४
मामेके प्रकृतिं प्राहुः पुरुषं च तथेश्वरम् । धर्ममेके धनं चैके मोक्षमेकेऽकुतोभयम् ॥ १५
शून्यमेके[1] भावमेके शिवमेके सदाशिवम् । अपरे वेदशिरसि स्थितमेकं सनातनम् ॥ १६
सद्भावं विक्रियाहीनं सच्चिदानन्दविग्रहम् । पश्याद्य दर्शयिष्यामि स्वरूपं वेदगोपितम् ॥ १७
ततोऽपश्यमहं भूप बालं कालाम्बुदप्रभम् । गोपकन्यावृतं गोपं हसन्तं गोपबालकैः ॥ १८
कदम्बमूल आसीनं पीतवाससमद्भुतम् । वनं वृन्दावनं नाम नवपल्लवमण्डितम् ॥ १९
कोकिलभ्रमरारावं मनोभवमनोहरम् । नदीमपश्यं कालिन्दीमिन्दीवरदलप्रभाम् ॥ २०
गोवर्धनं तथाऽपश्यं कृष्णरामकरोद्धृतम् । महेन्द्रदर्पनाशाय गोगोपालसुखावहम् ॥ २१

---

१ ख. 'के भव' ।

गोपालमबलासङ्गमुदितं वेणुवादिनम् । दृष्ट्वाऽतितृष्टो ह्यभवं सर्वभूषणभूषणम् ॥ २२
ततो मामाह भगवान्वृन्दावनचरः स्वयम् । यदिदं मे त्वया दृष्टं रूपं दिव्यं सनातनम् ॥ २३
निष्कलं निष्क्रियं शान्तं सच्चिदानन्दविग्रहम् । पूर्णं पद्मपलाशाक्षं नातः परतरं मम ॥ २४
इदमेव वदन्त्येते वेदाः कारणकारणम् । सत्यं चापि परानन्दं चिद्घनं शाश्वतं शिवम् ॥ २५
नित्यं मे मथुरां विद्धि वनं वृन्दावनं तथा । यमुनां गोपकन्याश्च तथा गोपालबालकाः ॥ २६
ममावतारो नित्योऽयमत्र मा संशयं कृथाः । ममेष्टा हि सदा राधा सर्वज्ञोऽहं परात्परः ॥ २७
सर्वकामश्च सर्वेशः सर्वान[illegible]ः परात्परः । मयि सर्वमिदं विश्वं भाति मायाविजृम्भितम् ॥ २८
ततोऽ[illegible]मब्र[illegible]वं देवं जगत्कारणकारणं । काश्च गोप[illegible] तु के गोपा वृक्षोऽयंकीदृशो मतः ॥ २९
वनं किं कोकिलाद्याश्च नदी केयं गिरिश्च कः । कोऽसौ वेणुर्महाभागो लोकानन्दैकभाजनम् ३०
भगवानाह मां प्रीतः प्रसन्नवदनाम्बु[illegible]ः । गोप्यस्तु श्रुतयो ज्ञेया ऋचो वै गोपकन्यकाः ॥ ३१
देवकन्याश्च राजेन्द्र तपोयुक्ता मुमु[illegible]वः । गोपा[illegible] मुनयः [illegible] वैकुण्ठानन्दमूर्तयः ॥ ३२
कल्पवृक्षः कदम्बोऽयं परानन्दैकभाजनम् । वनं नन्दनकाख्यं हि महापातकनाशनम् ॥ ३३
सिद्धाश्च साध्या ग[illegible]र्वाः कोकिलाद्या न सं[illegible]यः । केचिदानन्दहृदयं(?)साक्षाद्यमुनया तनुम्(?)
अनादिर्हरिदासोऽयं भूधरो नात्र संशयः । वेणुर्यः शृण तं विप्रे तवापि विदि[illegible] तथा ॥ ३५
द्विज आसीच्छान्तमनास्तपःसत्यपरायणः । नाम्ना देवव्रतो दान्तः कर्मकाण्डविशारदः ॥ ३६
स वैष्णवजनव्रातमध्यवर्ती क्रियापरः । स कदाचन शुश्राव यज्ञे सोऽस्तीति भूपते ॥ ३७
तस्य गेहमथाभ्यागाद्द्विजो मद्व्रतनिश्चयः । स मद्भक्तः क्वचित्पूजां तुलसीदलवारिणा ॥ ३८
कृतवांस्तद्गृहे किंचित्फलमूलं [illegible]यवेदयत् । स्नानवारिफलं किंचित्तस्मै प्रीत्या ददौ सुधीः ॥ ३९
अश्रद्धया स्मितं कृत्वा सोऽप्यगृह्णाद्द्विजन्मनः । तेन पापेन संजातं वेणुत्वमतिदारुणम् ॥ ४०
तेन पुण्येन तस्याथ मदीयप्रियतां गतः । अमुना सोऽपि राजेन्द्र केतुमानिव राजते ॥ ४१
युगान्ते तद्विष्णुपरो भूत्वा ब्रह्मसमाप्स्यसि ॥ ४२

अहो न जानन्ति नरा दुराशयाः पुरीं मदीयां परमां सनातनीम् ।
सुरेन्द्रनागेन्द्रमुनीन्द्रसंस्तुतां मनोरमां तां मथुरां सनातनीम् ॥ ४३
काश्यादयो यद्यपि सन्ति पुर्यस्तासां तु मध्ये मथुरैव धन्या ।
यज्जन्ममौञ्जीव्रतमृत्युदाहैर्नृणां चतुर्धा विदधाति मुक्तिम् ॥ ४४
यदा विशुद्धास्तपआदिना [illegible]ः शुभाशया ध्यानधना निरन्तरम् ।
तदैव पश्यन्ति ममोत्तमां पुरीं न चान्यथा कल्पशतैर्द्विजोत्तमाः ॥ ४५

मथुरावासिनो धन्या मान्या अपि दिवौकसाम् । अगण्यमहिमानस्ते सर्व एव चतुर्भुजाः ॥ ४६
मथुरावासिनां ये तु दोषा नश्यन्ति मानवाः । तेषु दोषं न पश्यन्ति जन्ममृत्युसहस्रजम् ॥ ४७
अधना अपि ते धन्या मथुरां ये स्मरन्ति ताम् । यत्र भूतेश्वरो देवो मोक्षदः पापिनामपि ॥४८
मम प्रियतमो नित्यं देवो भूतेश्वरः परः । यः कदाऽपि मम प्रीत्यै न संत्यजति तां पुरीम् ॥४९

भूतेश्वरं यो न नमेन्न पूजयेन्न वा स्मरेद्दुश्चरितो मनुष्यः ।
नैनां स पश्येन्मथुरां मदीयां स्वयंप्रकाशां परदेवताख्याम् ॥ ५०

---

१ अ. °णम् । क्वा° । २ क. ख. ड. च. छ. ङ °ज्ञेशोऽस्ती° । ३ ञ. °न्ति धुर्य° । ४ क. अधुना ।

न कथं मयि भक्तिं स लभते पापपूरुषः । यो मदीयं परं भक्तं शिवं संपूजयेन्न हि ॥ ५१
मन्मायामोहितधियः प्रायस्ते मानवाधमाः । भूतेश्वरं न नमन्ति न स्मरन्ति स्तुवन्ति ये ॥ ५२
बालकोऽपि ध्रुवो यत्र ममाऽऽराधनतत्परः । प्राप स्थानं परं शुद्धं यन्न युक्तं पितामहैः ॥ ५३
तां पुरीं प्राप्य मथुरां मदीयां सुरदुर्लभाम् । खञ्जो भूत्वाऽन्धको वाऽपि प्राणानेव परित्यजेत् ॥
वेदव्यास महाभाग मा कृथाः संशयं क्वचित् । रहस्यं वेदशिरसां यन्मया ते प्रकाशितम् ॥ ५५
इमं भगवता प्रोक्तमध्यायं यः पठेच्छुचिः । शृणुयाद्वाऽपि यो भक्त्या मुक्तिस्तस्यापि शाश्वती॥

इति श्रीमहापुराणे पाद्मे पातालखण्डे मथुरामाहात्म्यकथनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९५८३

---

अथ चतुःसप्ततितमोऽध्यायः ।

---

ईश्वर उवाच—

एकदा रहसि श्रीमानुद्धवो भगवत्प्रियः । सनत्कुमारमेकान्ते ह्यपृच्छत्पार्षदः प्रभोः ॥ १
यत्र क्रीडति गोविन्दो नित्यं नित्यसुरास्पदे । गोपाङ्गनाभिस्तत्स्थानं कुत्र वा कीदृशं परम् ॥ २
तत्तत्क्रीडनवृत्तान्तमन्यद्यद्यत्तदद्भुतम् । ज्ञातं चेत्तव तत्कथ्यं स्नेहो मे यदि वर्तते ॥ ३

सनत्कुमार उवाच—

कदाचिद्यमुनाकूले कस्यापि च तरोस्तले । सुव्रतेनोपविष्टेन भगवत्पार्षदेन वै ॥ ४
यं इहानुभवस्तस्य पार्थेनापि महात्मना । दृष्टं कृतं च यद्यत्तत्प्रसङ्गात्कथितं मयि ॥ ५
तत्तेऽहं कथयाम्येतच्छृणुष्वावहितः परम् । किं त्वेतद्यत्र कुत्रापि न प्रकाश्यं कदाचन ॥ ६

अर्जुन उवाच—

शंकराद्यैर्विरिञ्च्याद्यैरदृष्टमश्रुतं च यत् । सर्वमेतत्कृपाम्भोधे कृपया कथय प्रभो ॥ ७
किं त्वया कथितं पूर्वमाभीर्यस्तव वल्लभाः । तास्ताः कतिविधा देव कति वा संख्यया पुनः ८
नामानि कति वा तासां का वा कुत्र व्यवस्थिताः । तासां वा कति कर्माणि वयो वेषश्च कः प्रभो
काभिः सार्धं क्व वा देव विहरिष्यासि भो रहः । नित्ये नित्यसुखे नित्यविभवे च वने वने १०
तत्स्थानं कीदृशं कुत्र शाश्वतं परमं महत् । कृपा चेत्तादृशी तन्मे सर्वं वक्तुमिहार्हसि ॥ ११
यदपृष्टं मयाऽप्येवमज्ञातं यद्रहस्तव । आर्तार्तिघ्न महाभाग तत्सर्वं कथयिष्यसि ॥ १२

श्रीभगवानुवाच—

तत्स्थानं वल्लभास्ता मे विहारस्तादृशो मम । अपि प्राणसमानानां सत्यं पुंसामगोचरम्(रः)॥१३
कथिते द्रष्टुमुत्कण्ठा तव वत्स भविष्यति । ब्रह्मादीनामदृश्यं यत्किं तदन्यजनस्य वै ॥ १४
तस्माद्विरम वत्सैत(त्सास्मा)त्किं नु तेन विना तव । एवं भगवतस्तस्य श्रुत्वा वाक्यं सुदारुणम्॥
दीनः पादाम्बुजद्वंद्वे दण्डवत्पतितोऽर्जुनः । ततो विहस्य भगवान्दोर्भ्यामुत्थाप्य तं विभुः ॥ १६
उवाच परमप्रेम्णा भक्ताय भक्तवत्सलः । तत्किं तत्कथनेनात्र द्रष्टव्यं चेत्त्वया हि यत् ॥ १७
यस्यां सर्वं समुत्पन्नं यस्यामद्यापि तिष्ठति । लयमेष्यति तां देवीं श्रीमत्त्रिपुरसुन्दरीम् ॥ १८
आराध्य परया भक्त्या तस्यै स्वं च निवेदय । तां विनैतत्पदं दातुं न शक्नोमि कदाचन ॥ १९
श्रुत्वैतद्भगवद्वाक्यं पार्थो हर्षाकुलेक्षणः । श्रीमत्यास्त्रिपुरादेव्या ययौ श्रीपादुकातलम् ॥ २०

---

१ क, ङ. छ. ड. सुव्रतेनो॰ । २ ञ. य इहोऽनु॰ । ३ ङ. ॰त्र तत्रा॰ ।

तत्र गत्वा ददर्शैनां श्रीचिन्तामणिवेदिकाम् । नानारत्नैर्विरचितैः सोपानैरतिशोभिताम् ॥ २१
तत्र कल्पतरुं नानापुष्पैः फलभवैर्नतम् । सर्वर्तुकोमलदलैः स्रवन्माध्वीकशीकरैः ॥ २२
वर्षद्भिर्वायुना लोलैः पल्लवैरुज्ज्वलीकृतम् । शुकैश्च कोकिलैश्चैव सारिकाभिः कपोतकैः ॥ २३
लीलाचकोरकैं रम्यैः पक्षिभिश्च निनादितम् । [ *यत्र गुञ्जद्रुमद्भृङ्गकोलाहलसमाकुलम् ॥ २४
मणिभिर्भास्वरैरुद्यद्दीप्यमानं मनोहरम् । श्रीरत्नमन्दिरं दिव्यं तले तस्य महाद्भुतम् ] ॥ २५
रत्नसिंहासनं तत्र महाहैमाभिमोहनम् । तत्र बालार्कसंकाशां नानालंकारभूषिताम् ॥ २६
नवयौवनसंपन्नां सृणिपाशधनुःशरैः । राजच्चतुर्भुजलतां सुप्रसन्नां मनोहराम् ॥ २७
ब्रह्मविष्णुमहेशादिकिरीटमणिरश्मिभिः । विराजितपदाम्भोजामणिमादिभिरावृताम् ॥ २८
प्रसन्नवदनां देवीं वरदां भक्तवत्सलाम् । अर्जुनोऽहमिति ख्यातः प्रणम्य च पुनः पुनः ॥ २९
विहिताञ्जलिरेकान्ते स्थितो भक्तिभरान्वितः । सा तस्योपासितं ज्ञात्वा प्रसादं च कृपानिधेः ॥
उवाच कृपया देवी तत्तत्स्मरणविह्वला ॥ ३१

भगवत्युवाच—

किं वा दानं त्वया वत्स कृतं पात्राय दुर्लभम् । इष्टं यज्ञेन केनात्र तपो वा किमनुष्ठितम् ॥ ३२
भगवत्यमला भक्तिः का वा प्राक्समुपार्जिता । किं वाऽस्मिन्दुर्लभा लोके किं वा कर्म शुभं महत् ३३
प्रसादस्त्वयि येनायं प्रपन्ने च मुदा किल । गूढातिगूढश्चानन्यलभ्यो भगवता कृतः ॥ ३४
नैतादृङ्मर्त्यलोकानां न च भूतलवासिनाम् । स्वर्गिणां देवतादीनां तपस्वीश्वरयोगिनाम् ॥ ३५
भक्तानां नैव सर्वेषां नैव नैव च नैव च । प्रसादस्तु कृतो वत्स तव विश्वात्मना यथा ॥ ३६
तदेहि भज बुद्ध्वैव कुलकुण्डं सरो मम । सर्वकामप्रदा देवी त्वनया सह गम्यताम् ॥ ३७
तत्रैव विधिवत्स्नात्वा द्रुतमागम्यतामिह । तदैव तत्र गत्वाऽसौ स्नात्वा पार्थस्तथाऽऽगतः ॥ ३८
आगतं तं कृतस्नानं न्यासमुद्रार्पणादिकम् । कारयित्वा ततो देव्या तस्य वै दक्षिणश्रुतौ ॥ ३९
सद्यःसिद्धिकरी बाला विद्या निगदिता परा । हकारार्धपरार्धीयाऽद्वितीया[1] विश्वभूषिता ॥ ४०
अनुष्ठानं च पूजां च जपं च लक्षसंख्यकम् । कोरकैः करवीराणां प्रयोगं च यथातथम् ॥ ४१
निर्वर्त्य तमुवाचेदं कृपया परमेश्वरी । अनेनैव विधानेन क्रियतां मदुपासनम् ॥ ४२
ततो मयि प्रसन्नायां तवानुग्रहकारणात् । सद्यस्तु कृष्णलीलायामधिकारो भविष्यति ॥ ४३
इत्ययं नियमः पूर्वं स्वयं भगवता कृतः । श्रुत्वैवमर्जुनस्तेन वर्त्मना तां समर्चयत् ॥ ४४
ततः पूजां जपं चैव कृत्वा देवी प्रसादिता । कृत्वा ततः शुभं होमं स्नानं च विधिना ततः ४५
कृतकृत्यमिवाऽऽत्मानं प्राप्तप्रायमनोरथम् । करस्थां सर्वसिद्धिं च स पार्थः सममन्यत ॥ ४६
अस्मिन्नवसरे देवी तमागत्य स्मितानना । उवाच गच्छ वत्स त्वमधुना तद्गृहान्तरे ॥ ४७
ततः ससंभ्रमः पार्थः समुत्थाय मुदाऽन्वितः । असंख्यहर्षपूर्णात्मा दण्डवत्तां ननाम ह ॥ ४८
आज्ञप्तस्तु तया सार्धं देवी (देव्या) वयस्ययाऽर्जुनः । गतो राधापतिस्थानं यत्सिद्धैरप्यगोचरम् ॥
ततश्च सदुपादिष्टो गोलोकादुपरिस्थितम् । स्थिरं वायुधृतं नित्यं सत्यं सर्वसुखास्पदम् ॥ ५०
नित्यं वृन्दावनं नाम नित्यरासमहोत्सवम् । अपश्यत्परमं गुह्यं पूर्णप्रेमरसात्मकम् ॥ ५१

* एतच्चिह्नान्तर्गतः पाठः क. ख. घ. छ. ज. झ. ड. ण. त. थ. द. न. पुस्तकस्थः ।

[1] झ. °र्धयेरार्धयाद्वती° ।

तस्या हि वचनाद्दिव्यलोचनैर्वीक्ष्य तद्गृहः । विवशः पतितस्तत्र विबुद्धः प्रेमविह्वलः ॥ ५२
ततः कृच्छ्राल्लब्धसंज्ञो दोर्भ्यामुत्थापितस्तया । सान्त्वनैर्वचनैस्तस्याः कथंचित्स्थैर्यमागतः ५३
ततस्ततः किमन्यन्मे कर्तव्यं विद्यते वद । इति तद्दर्शनोत्कण्ठाभरेण तरलोऽभवत् ॥ ५४
ततस्तया करे तस्य धृत्वा तत्पददक्षिणे । प्रतिपेदे सुदेशेन गत्वा चोक्तमिदं वचः ॥ ५५
स्नानायैतच्छुभं पार्थ विश त्वं जलविस्तरम् । सहस्रदलपद्मस्य संस्थानं मध्यकोरकम् ॥ ५६
चतुःसरश्चतुर्द्वारमाश्चर्यकुलसंकुलम् । अस्यान्तरे प्रविश्याथ विशेषमिह पश्यसि ॥ ५७
एतस्य दक्षिणे देश एष चात्र सरोवरः । मधुमाध्वीकपानं यन्नाम्ना मलयनिर्झरः ॥ ५८
एतच्च फुल्लमुद्यानं वसन्ते मदनोत्सवम् । कुरुते यत्र गोविन्दो वसन्तकुसुमोचितम् ॥ ५९
यत्रावतारं कृष्णस्य स्तुवन्ते(न्त्ये)त्र दिवानिशम् । भवेद्यत्स्मरणादेव मुनेः स्वान्ते स्मराङ्कुरः[1] ॥
ततोऽस्मिन्सरसि स्नात्वा गत्वा पूर्वसरस्तटम् । उपस्पृश्य जलं तस्य साधयस्व मनोरथम् ॥ ६१
ततस्तद्वचनं श्रुत्वा तस्मिन्सरसि तज्जले । कह्लारकुमुदाम्भोजरक्तनीलोत्पलच्युतैः ॥ ६२
परागै रञ्जिते मञ्जुवासिते मधुबिन्दुभिः । तुन्दिले कलहंसादिनादैरान्दोलिते ततः ॥ ६३
रत्नाबद्धचतुस्तीरे मन्दानिलतरङ्गिते । मग्ने जलान्त(न्तः) पार्थे तु तत्रैवान्तर्दधेऽथ सा ॥ ६४
उत्थाय परितो वीक्ष्य संभ्रान्तां चासहायिनीम् । सद्यः शुद्धस्वर्णरश्मिगौरकान्ततनूलताम् ६५
स्फुरत्किशोरवयसीं शारदेन्दुनिभाननाम् । सुनीलकुटिलस्निग्धविलसद्रत्नकुण्डलाम् ॥ ६६
सिन्दूरबिन्दुकिरणप्रोज्ज्वलालकपट्टिकाम् । उन्मीलद्भ्रूलताभङ्गीजितस्मरशरासनाम्[2] ॥ ६७
घनश्यामलसल्लोलखेलल्लोचनखञ्जनाम् । मणिकुण्डलतेजोंशुविस्फुरद्गण्डमण्डलाम् ॥ ६८
मृणालकोमलभ्राजदाश्चर्यभुजवल्लरीम् । शरदम्बुरुहां सर्वश्रीचौरपाणिपल्लवाम् ॥ ६९
विदग्धरचितस्वर्णकटिसूत्रकृतान्तराम् । कूजत्काञ्चीकलापातिविभ्राजज्जघनस्थलाम् ॥ ७०
भ्राजद्दुकूलसंवीतनितम्बोरुसुमण्डलाम् । शिञ्जानमञ्जुमञ्जीरसुचारुपदपङ्कजाम् ॥ ७१
स्फुरद्विविधकंदर्पकलाकौशलशालिनीम् । सर्वलक्षणसंपन्नां सर्वाभरणभूषिताम् ॥ ७२
आश्चर्यललनाश्रेष्ठामात्मानं च व्यलोकयत् । विसस्मार च यत्किंचित्पूर्वदैहिकमेव च ॥ ७३
मायया गोपिकाप्राणनाथस्य तदनन्तरम् । इतिकर्तव्यतामूढा तस्थौ तत्र सुविस्मिता ॥ ७४
अत्रान्तरेऽम्बरे धीरो ध्वनिराकस्मिकोऽभवत् । अनेनैव पथा सुभ्रु गच्छ पूर्वसरोवरम् ॥ ७५
उपस्पृश्य जलं तस्य साधयस्व मनोरथम् । तत्र सन्ति हि सख्यस्ते मा सीद वरवर्णिनि ॥ ७६
ता हि संपादयिष्यन्ति तत्रैव वरमीप्सितम् । इति दैवीं गिरं श्रुत्वा गत्वा पूर्वसरोऽथ सा ॥ ७७
नानापूर्वप्रवाहं च नानापक्षिसमाकुलम् । स्फुरत्कैरवकह्लारकमलेन्दीवरादिभिः ॥ ७८
भ्राजितं पद्मरागैश्च पद्मसोपानसत्तटम् । विविधैः कुसुमोद्दामैर्मञ्जुकुञ्जलताद्रुमैः ॥ ७९
विराजितचतुस्तीरमुपस्पृश्य स्थिता क्षणम् । तत्रान्तरे क्वणत्काञ्चिमञ्जुमञ्जीररञ्जितम् ॥ ८०
कङ्कणानां झणत्कारं शुश्रावोत्कर्णसंपुटे । ततश्च प्रमदावृन्दमाश्चर्ययुतयौवनम् ॥ ८१
आश्चर्यालंकृतिन्यासमाश्चर्याकृतिभाषितम् । अद्भुताङ्गमपूर्वं सा पृथगाश्चर्यविभ्रमम् ॥ ८२
चित्रसंभाषणं चित्रहसितालोकनादिकम् । मधुराद्भुतलावण्यं सर्वमाधुर्यसेवितम्[3] ॥ ८३
चित्रलास्यगतानन्तमाश्चर्यकुलसुन्दरम् । आश्चर्यस्निग्धसौन्दर्यमाश्चर्यानुग्रहादिकम् ॥ ८४
सर्वाश्चर्यसमुदयमाश्चर्यालोकनादिकम् । दृष्ट्वा तत्परमाश्चर्यं चिन्तयन्ती हृदा कियत् ॥ ८५

---

१ झ. स्मरणाद्कु° । २ ञ. °भङ्गिजि° । ३ झ. °मन्दुराम् । ञ. °मन्दिराम् ।

पादाङ्गुष्ठेनाऽऽलिखन्ती भुवं नम्रानना स्थिता । ततस्तासां संभ्रमोऽभूद्दृष्टीनां च परस्परम् ८६
केयं मदीयजातीया चिरेण न्यस्तकौतुका । इति सर्वाः समालोक्य ज्ञातव्येयमिति क्षणम् ॥ ८७
आमन्त्र्य मन्त्रणाभिज्ञाः कौतुकाद्द्रष्टुमागताः । आगत्य तासामेकाऽथ नाम्ना प्रियमुदा मता ॥
गिरा मधुरया प्रीत्या तामुवाच मनस्विनी ॥ ८८

प्रियमुदोवाच—

काऽसि त्वं कस्य कन्याऽसि कस्य त्वं प्राणवल्लभा । जाता कुत्रासि केनास्मिन्नानीता वाऽऽगता स्वयम्
एतच्च सर्वमस्माकं कथ्यतां चिन्तया किमु । स्थानेऽस्मिन्परमानन्दे कस्यापि दुःखमस्ति किम् ९०
इति पृष्टा तया सा तु विनयावनतिं गता । उवाच सुस्वरं तासां मोहयन्ती मनांसि च ॥ ९१

अर्जुन उवाच—

का वाऽस्मि कस्य वा कन्या प्रजाता कस्य वल्लभा । आनीता केन वा चात्र किंवाऽथ स्वयमागता
एतत्किंचिन्न जानामि देवी जानाति तत्पुनः । कथितं श्रूयतां तन्मे मद्वाक्ये प्रत्ययो यदि ॥ ९३
अस्यैव दक्षिणे पार्श्वे एकमस्ति सरोवरम् । तत्राहं स्नातुमायाता जाता तत्रैव संस्थिता ॥ ९४
विषमोत्कण्ठिता पश्चात्पश्यन्ती परितो दिशम् । एकमाकाशसंभूतं ध्वनिमश्रौषमद्भुतम् ॥ ९५
अनेनैव पथा सुभ्रु गच्छ पूर्वसरोवरम् । उपस्पृश्य जलं तस्य साधयस्व मनोरथम् ॥ ९६
तत्र सन्ति हि सख्यस्ते मा सीद वरवर्णिनि । ता हि संपादयिष्यन्ति तत्र ते वरमीप्सितम् ॥ ९७
इत्याकर्ण्य वचस्तस्य तस्मादत्र समागता । विषादहर्षपूर्णात्मा चिन्ताकुलसमाकुला ॥ ९८
आगताऽस्य जलं स्पृष्ट्वा नानाविधशुभध्वनिम् । अश्रौषं च ततः पश्चादपश्यं भवतीः पराः ९९
एतन्मात्रं विजानामि कायेन मनसा गिरा । एतदेव मया देव्यः कथितं यदि रोचते ॥ १००
का यूयं तनुजाः केषां क जाताः कस्य वल्लभाः । तच्छ्रुत्वा वचनं तस्याः सा वै प्रियमुदाऽब्रवीत् १०१

प्रियमुदोवाच—

अस्त्वेवं प्राणसख्यः स्म तस्यैव च वयं शुभे । वृन्दावनकलानाथविहारदारिकाः शुभम् १०२
ता आत्ममुदितास्तेन व्रजबाला इहाऽऽगताः । एताः श्रुतिगणाः ख्याता एताश्च मुनयस्तथा १०३
वयं बल्लवबाला हि कथितास्ते स्वरूपतः । अत्र राधापतेरङ्गात्पूर्वा याः प्रेयसीतमाः ॥ १०४
नित्या नित्यविहारिण्यो नित्यकेलिभुवश्वराः । एषा पूर्णरसा देवी एषा च रसमन्थरा ॥ १०५
एषा रसालया नाम एषा च रसवल्लरी । रसपीयूषधारेयमेषा रसतरङ्गिणी ॥ १०६
रसकल्लोलिनी चैषा इयं च रसवापिका । अनङ्गसेना एषैव इयं चानङ्गमालिनी ॥ १०७
मदयन्ती हीयं बाला चैषा च रसविह्वला । इयं च ललिता नाम इयं ललितयौवना ॥ १०८
अनङ्गकुसुमा चैषा इयं मदनमञ्जरी । एषा कलावती नाम इयं रतिकला स्मृता ॥ १०९
इयं कामकला नाम त्वियं हि कामदायिनी । रतलोला त्वियं बाला चेयं बाला रतोत्सुका ११०
एषा च रतिसर्वस्वा रतिचिन्तामणिस्त्वसौ । नित्यानन्दा काचिदेषा नित्यप्रेमरसप्रदा ॥ १११
अतः परं श्रुतिगणास्तासां काश्चिदिमाः शृणु । उद्गीतैषा सुगीतेयं [*कलगीता त्वियं प्रिया ११२
एषा कलसुराख्याता बालेयं कलकण्ठिका । विपञ्चीयं क्रमपदा ह्येषा बहुहुता मता ॥ ११३

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ज. ङ. पुस्तकस्थः ।

१ ङ. °सख्यस्व स° । २ क. ख. ङ. च. छ. ञ. ङ. सुखम् । ३ ख. °लापहारतः । ए° ।

एषा बहुप्रयोगेयं ] ख्याता बहुकलाऽबला । इयं कलावती ख्याता मता चैषा क्रियावती ११४
अतः परं मुनिगणास्तासां कतिपया इह । इयमुग्रतपा नाम एषा बहुगुणा स्मृता ॥ ११५
एषा प्रियव्रता नाम सुव्रता च इयं मता । सुरेखेयं मता बाला सुपर्वेयं बहुप्रदा ॥ ११६
रत्नरेखा त्वियं ख्याता मणिग्रीवा ह्यसौ मता । सुपर्णा चेयमाकल्पा सुकल्पा रत्नमालिका ११७
इयं सौदामिनी सुभ्रु इयं च कामदायिनी । एषा च भोगदा ख्याता इयं विश्वमता सती ११८
एषा च धारिणी धात्री सुमेधा कान्तिरप्यसौ । अपर्णैषा सुपर्णेयं मतैषा च सुलक्षणा ॥ ११९
सुदतीयं गुणवती चैषा सौकलिनी मता । एषा सुलोचना ख्याता त्वियं च सुमनाः स्मृता १२०
अश्रुता च सुशीला च रतिसुखप्रदायिनी । अतः परं गोपबाला वयमत्राऽऽगतास्तु याः ॥ १२१
तासां च परिचीयन्तां काश्चिदम्बुरुहानने । असौ चन्द्रावली चन्द्रिकेयं चैषा शुभा मता ॥ १२२
एषा चन्द्रावली चन्द्ररेखेयं चन्द्रिकाऽप्यसौ । एषा ख्याता चन्द्रमाला मता चन्द्रावली त्वियम् ॥
एषा चन्द्रप्रभा चन्द्रकलेयमबला स्मृता । एषा वर्णावली वर्णमालेयं मणिमालिका ॥ १२४
मैत्रीयं नवमत्रीयमसौ सेफालिका शुभा । वर्णप्रभा समाख्याता सुप्रभेयं मणिप्रभा ॥ १२५
इयं हारावली तारामालिनीयं शुभा मता । मालतीयमियं यूथी वासन्ती नवमल्लिका ॥ १२६
सौगन्धिकेयं कस्तूरी पद्मिनीयं कुमुद्वती । एषैव हि रसोल्लासा चित्रवृन्दासमा त्वियम् ॥ १२७
रम्भेयमुर्वशी चैषा सुरेखा स्वर्णरेखिका । एषा काञ्चनमालेयं सततसंततिका परा ॥ १२८
एताः परिकृताः सर्वाः परिचेयाः परा अपि । सहिताऽस्माभिरेताभिर्विहरिष्यासि भामिनि ॥
एहि पूर्वसरस्तीरे तत्र त्वां विधिवत्सखि । स्नापयित्वाऽथ दास्यामि मन्त्रं सिद्धिप्रदायकम् १३०
इति तां सहसा नीत्वा स्नापयित्वा विधानतः । वृन्दावनकलानाथप्रेयस्या मन्त्रमुत्तमम् ॥ १३१
ग्राहयामास संक्षेपाद्दीक्षाविधिपुरःसरम् । परं वरुणबीजस्य वह्निबीजपुरस्कृतम् ॥ १३२
चतुर्थस्वरसंयुक्तं नादबिन्दुविभूषितम् । पुटितं प्रणवाभ्यां च त्रैलोक्ये चातिदुर्लभम् ॥ १३३
मन्त्रग्रहणमात्रेण सर्वसिद्धिः प्रजायते । पुरश्चर्याविधिर्ध्यानं होमं संख्यां जपस्य च ॥ १३४
तप्तकाञ्चनगौराङ्गीं नानालंकारभूषिताम् । आश्चर्यरूपलावण्यां सुप्रसन्नां वरप्रदाम् ॥ १३५
कह्लारैः करवीराद्यैश्चम्पकैः सरसीरुहैः । सुगन्धिकुसुमैरन्यैः सौगन्धिकसमन्वितैः ॥ १३६
पाद्यार्घ्याचमनीयैश्च धूपदीपैर्मनोहरैः । नैवेद्यैर्विविधैर्दिव्यैः सखिवृन्दाहृतैर्मुदा ॥ १३७
संपूज्य विधिवद्देवीं जप्त्वा लक्षमिदं ततः । हुत्वा च विधिना स्तुत्वा प्रणम्य दण्डवद्भुवि १३८
ततः सा संस्तुता देवी निमेषरहितान्तरा । परिकल्प्य निजां छायां मायया तत्समीहया ॥ १३९
पार्श्वेऽथ प्रेयसीं तत्र स्थापयित्वा बलादिव । सखीभिरावृता हृष्टा शुद्धैः पूजाजपादिभिः १४०
स्तवैर्भक्त्या प्रणामैश्च कृपयाऽऽविरभूत्तदा । हेमचम्पकवर्णाभा विचित्राभरणोज्ज्वला ॥ १४१
अङ्गप्रत्यङ्गलावण्यलालित्यमधुराकृतिः । निष्कलङ्कशरत्पूर्णकलानाथशुभानना ॥ १४२
स्निग्धमुग्धस्मितालोकजगत्त्रयमनोहरा । निजया प्रभयाऽत्यन्तं द्योतयन्ती दिशो दश ॥
अब्रवीदपि सा देवी वरदा भक्तवत्सला ॥ १४३

देव्युवाच—

मत्सखीनां वचः सत्यं तेन त्वं मे प्रिया सखि । समुत्तिष्ठ समागच्छ कार्यं ते साधयाम्यहम् १४४

---

१ ड. °मचला । २ क. ख. ङ. च. छ. ञ. ड. मल्लीयं नवमल्लीय° ।

अर्जुनी सा वचो देव्याः श्रुत्वा चाऽऽत्ममनीषितम् । पुलकाकुलमुग्धाङ्गी बाष्पाकुलविलोचना ॥
पपात चरणे देव्याः पुनश्च प्रेमविह्वला । ततः प्रियंवदां देवीं(वी) समुवाच सखीमिमाम् १४६

देव्युवाच—

पाणौ गृहीत्वा मत्सङ्गे समाश्वास्य समानय । ततः प्रियंवदा देव्या आज्ञया जातसंभ्रमा॥१४७
तां तथैव समादाय सङ्गे देव्या जगाम ह । गत्वोत्तरसरस्तीरे स्नापयित्वा विधानतः ॥ १४८
संकल्पादिकपूर्वं तु पूजयित्वा यथाविधि । श्रीगोकुलकलानाथं मन्त्रं तच्च सुसिद्धिदम् ॥ १४९
ग्राहयामास तां देवी कृपया हरिवल्लभा । व्रतं गोकुलनाथाख्यं पूर्वं मोहनभाषितम् ॥ १५०
सर्वसिद्धिप्रदं मन्त्रं सर्वतन्त्रेषु गोपितम् । गोविन्दगीतविज्ञाऽसौ ददौ भक्तिमचञ्चलाम् ॥ १५१
ध्यानं च कथितं तस्यै मन्त्रराजं च मोहनम् । उक्तं च मोहने तन्त्रे स्मृतिरप्यस्य सिद्धिदा १५२
नीलोत्पलदलश्यामं नानालंकारभूषितम् । कोटिकंदर्पलावण्यं ध्यायेद्रासरसाकुलम् ॥
प्रियंवदामुवाचेदं रहःसंपादनेच्छया ॥ १५३

राधिकोवाच—

अस्या यावद्भवेत्पूर्णं पुरश्चरणमुत्तमम् । तावद्धि पालयैनां त्वं सावधाना सहालिभिः ॥
इत्युक्त्वा सा ययौ कृष्णपादाम्बुरुहसंनिधिम् ॥ १५४
छायामात्मभवामात्मप्रेयसीनां निधाय च । तस्थौ तत्र यथापूर्वं राधिका कृष्णवल्लभा ॥ १५५
अत्र प्रियंवदादेशात्पद्ममष्टदलं शुभम् । गोरोचनाभिर्निर्माय कुङ्कुमेनापि चन्दनैः ॥ १५६
एभिर्नानाविधैर्द्रव्यैः संमिश्रैः सिद्धिदायकम् । लिखित्वा यन्त्रराजं च शुद्धं मन्त्रं तमद्भुतम् ॥
कृत्वा न्यासादिकं चार्घ्यं पाद्यं चापि यथाविधि । नानर्तुसंभवैः पुष्पैः कुङ्कुमैरपि चन्दनैः १५८
धूपदीपैश्च नैवेद्यैस्ताम्बूलैर्मुखवासनैः । वासोलंकारमाल्यैश्च संपूज्य नन्दनन्दनम् ॥ १५९
परिवारैः समं सर्वैः सायुधं च सवाहनम् । स्तुत्वा प्रणम्य विधिवच्चेतसा स्मरणं ययौ ॥ १६०
ततो भक्तिवशो देवो यशोदानन्दनः प्रभुः । स्मितावलोकितापाङ्गतरङ्गिततरेङ्गितम् ॥ १६१
उवाच राधिकां देवीं तामानय इहाऽऽशु च । आज्ञप्ता चैव सा देवी प्रस्थाप्य शारदां सखीम्॥
तामानिनाय सहसा पुरो वा सरसात्मनः । श्रीकृष्णस्य पुरस्तात्सा समेत्य प्रेमविह्वला ॥ १६३
पपात काञ्चनी भूत्वा पश्यन्ती सर्वमद्भुतम् । कृच्छ्रात्कथंचिदुत्थाय शनैरुन्मील्य लोचने १६४
स्वेदाश्रुपुलकोत्कम्पभावभाराकुला सती । ददर्श प्रथमं तत्र स्थलं चित्रं मनोरमम् ॥ १६५
ततः कल्पतरुस्तत्र लसन्मरकतच्छदः । प्रवालपल्लवैर्युक्तः कोमलो हेमदण्डकः ॥ १६६
स्फटिकप्रवालमूलश्च कामदः कामसंपदाम् । प्रार्थकाभीष्टफलदस्तस्याधो रत्नमन्दिरम् ॥ १६७
रत्नसिंहासनं तत्र तत्राष्टदलपद्मकम् । शङ्खपद्मनिधी तत्र सव्यापसव्यसंस्थितौ ॥ १६८
चतुर्दिक्षु यथास्थानं सहिता(संस्थिताः) कामधेनवः । परितो नन्दनोद्यानं मलयानिलसेवितम्॥
ऋतूनां चैव सर्वेषां कुसुमानां मनोहरैः । आमोदैर्वासितं सर्वं कालागुरुपराजितम् ॥ १७०
मकरन्दकणावृष्टिशीतलं सुमनोहरम् । मकरन्दरसास्वादमत्तानां भृङ्गयोषिताम् ॥ १७१
वृन्दशो झंकृतैः शश्वच्चैवं मुखरितान्तरम् । कलकण्ठीकपोतानां सारिकाशुकयोषिताम् ॥ १७२

---

१ च. छ. ड. °काङ्कुरम्°। २ ञ. °नाथम°। ३ क. ञ. °यकैः । लि° । ४ ख. ड. च. छ. ड. भूमौ । ५. ख. कामसंभवः ।

अन्यासां पत्रिकान्तानां कलनादैर्निनादितम् । नृत्यैर्मत्तमयूराणामाकुलं स्मरवर्धनम् ॥ १७३
रसाम्बुसेकसंसृष्टतमाञ्जनतनुद्युतिम् । सुस्निग्धनीलकुटिलकषायवासिकुन्तलम् ॥ १७४
मदमत्तमयूराद्यशिखण्डाबद्धचूडकम् । भृङ्गसेवितसव्योपक्रमपुष्पावतंसकम् ॥ १७५
लोलालकालिविलसत्कपोलादर्शकाशिनम् । विचित्रतिलकोद्दामभालशोभाविराजितम् ॥ १७६
तिलपुष्पपतङ्गेशचञ्चुमञ्जुलनासिकम् । चारुबिम्बाधरं मन्दस्मितदीपितमन्मथम् ॥ १७७
वन्यप्रसूनसंकाशं ग्रैवेयकमनोहरम् । मदोन्मत्तभ्रमद्भृङ्गीसहस्रकृतसेवया ॥ १७८
सुरद्रुमस्रजा राजन्मुग्धपीनांसकद्वयम् । मुक्ताहारस्फुरद्वक्षःस्थलकौस्तुभभूषितम् ॥ १७९
श्रीवत्सलक्षणं जानुलम्बिबाहुमनोहरम् । गम्भीरनाभिपश्वास्यमध्यमध्यातिसुन्दरम् ॥ १८०
सुजातद्रुमसद्वृत्तमदूरजानुमञ्जुलम् । कङ्कणाङ्गदमञ्जीरैर्भूषितं भूषणैः परैः ॥ १८१
पीतांशुकलयाऽऽविष्टनितम्बथ(त)टनायकम् । लावण्यैरपि सौन्दर्यैर्जितकोटिमनोभवम् ॥ १८२
वेणुप्रवर्तितैर्गीतरागैरपि मनोहरैः । मोहयन्तं सुखाम्भोधौ मज्जयन्तं जगत्रयम् ॥ १८३
प्रत्यङ्गमदनावेशधरं रासरसालसम् । चामरं व्यजनं माल्यं गन्धं चन्दनमेव च ॥ १८४
ताम्बूलं दर्पणं पानपात्रं चार्चितपात्रकम् । अन्यत्क्रीडाभवं यच्च तत्सर्वं च पृथक्पृथक् ॥ १८५
रसालं विविधं यत्रं कलयन्तीभिरादरात् । यथास्थाननियुक्ताभिः पश्यन्तीभिस्तदिङ्गितम् १८६
तन्मुखाम्भोजदत्ताक्षिचञ्चलाभिरनुक्रमात् । श्रीमत्या राधिकादेव्या वामभागे ससंभ्रमम् ॥१८७
आराधयन्त्या ताम्बूलमर्पयन्त्या शुचिस्मितम् । समालोक्याऽर्जुनी याऽसौ मदनावेशविह्वला १८८
ततस्तां च तथा ज्ञात्वा हृषीकेशोऽपि सर्ववित् । तस्याः पाणिं गृहीत्वैव सर्वक्रीडावनान्तरे १८९
यथाकामरहो रेमे महायोगेश्वरो विभुः । ततस्तस्याः स्कन्धदेशे मदत्तभुजपल्लवः ॥ १९०
आगत्य शारदां प्राह पश्चिमेऽस्मिन्सरोवरे । शीघ्रं स्नापय तन्वङ्गीं क्रीडाश्रान्तां मृदुस्मिताम् ॥
ततस्तां शारदादेवी तस्मिन्क्रीडासरोवरे । स्नानं कुर्वित्युवाचैनां सा च श्रान्ता तथाऽकरोत् ॥
जलाभ्यन्तरमाप्ताऽसौ पुनरर्जुनतां गतः । उत्तस्थौ यत्र देवेशः श्रीमद्वैकुण्ठनायकः ॥ १९३
दृष्ट्वा तमर्जुनं कृष्णो विषण्णं भग्नमानसम् । मायया पाणिना स्पृष्ट्वा प्रकृतं विदधे पुनः ॥ १९४

श्रीकृष्ण उवाच—

धनंजय त्वामाशंसे भवान्प्रियसखो मम । त्वत्समो नास्ति मे कोऽपि रहोविषु जगत्रये १९५
यद्रहस्यं त्वया पृष्टमनुभूतं च यत्पुनः । कथ्यते यदि तत्कस्मै शपसे मां तदाऽर्जुन ॥ १९६

सनत्कुमार उवाच—

इति प्रसादमासाद्य शपथैर्जातनिर्णयः । ययौ हृष्टमनास्तस्मात्स्वधामाद्भुतसंस्मृतिः ॥ १९७
इति ते कथितं सर्वं रहो यद्गोचरं मम । गोविन्दस्य तथा चा(न्य)स्मै कथने शपथस्तव ॥ १९८

ईश्वर उवाच—

इति श्रुत्वा वचस्तस्य सिद्धिमौपगविर्गतः । नरनारायणावासे वृन्दारण्यमुपाव्रजत् ॥ १९९
तत्राऽऽस्तेऽद्यापि कृष्णस्य नित्यलीलाविहारवित् । नारदेनापि पृष्टोऽहं नाब्रवं तद्रहस्यकम् २००
प्राप्तं तथाऽपि तेनेदं प्रकृतित्वमुपेत्य च । तुभ्यं यत्तु मया प्रोक्तं रहस्यं स्नेहकारणात् ॥ २०१

---

१ म. °काम्रप्रै° । २ म. °मण्डल° । ३ म. °त्रं चार्चितपा° । ४ झ. °नसः । मा° । ५ ख. घ. च. छ. ढ. °या रह° ।

तन्न कस्मैचिदाख्येयं त्वया भद्रे स्वयोनिवत् । इति श्रीभगवद्भक्तमहिमाध्यायमद्भुतम् ॥
यः पठेच्छृणुयाद्वाऽपि स रतिं विन्दते हरौ ॥ २०२

इति श्रीमहापुराणे पाद्मे पातालखण्डेऽर्जुन्यनुनयो नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९७८९

---

अथ पञ्चसप्ततितमोऽध्यायः ।

---

पार्वत्युवाच—

वृन्दावनरहस्यं च बहुधा कथितं प्रभो । केन पुण्यविशेषेण नारदः प्रकृतिं गतः ॥ १

ईश्वर उवाच—

एकदाऽऽश्चर्यवृत्तान्तं मया जिज्ञासितं पुरा । ब्रह्मणा कथितं गुह्यं श्रुतं कृष्णमुखाम्बुजात् ॥ २
नारदः पृष्टवान्मह्यं तदाऽहं प्रोक्तवानिदम् । अहं वक्तुं न शक्नोमि तन्माहात्म्यं कथंचन ॥ ३
किं कुर्वे शपनं तस्य स्मृत्वा सीदामि मानसे । इति श्रुत्वा वचो मह्यं दुर्मनाः सोऽभवद्यदा ॥ ४
तदा ब्रह्माणमाहूय ह्यहमादिष्टवान्प्रिये । त्वया यत्कथितं मह्यं नारदाय वदस्व तत् ॥ ५
ब्रह्मा तदा मम वचो निशम्य सहनारदः । जगाम कृष्णसविधं नत्वाऽपृच्छत्तदेव[1] तु ॥ ६

ब्रह्मोवाच—

किमिदं द्वात्रिंशद्वनं वृन्दारण्यं विशां पते । श्रोतुमिच्छामि भगवन्यदि योग्योऽस्मि मे वद ॥ ७

श्रीभगवानुवाच—

इदं वृन्दावनं रम्यं मम धामैककेवलम् । यत्र मे पशवः साक्षाद्वृक्षाः कीटा नरामराः ॥ ८
ये वसन्ति ममान्ते ते मृता यान्ति ममान्तिकम् । [*अत्र या गोपपत्न्यश्च निवसन्ति ममाऽऽलये
योगिन्यस्तास्तु एवं हि मम देवाः परायणाः । पञ्चयोजनमेवं हि वनं मे देवरूपकम्] ॥ १०
कालिन्दीयं सुषुम्ना या परमामृतवाहिनी । यत्र देवाश्च भूतानि वर्तन्ते सूक्ष्मरूपतः ॥ ११
सर्वतो व्यापकश्चाहं न त्यक्ष्यामि वनं क्वचित् । आविर्भावस्तिरोभावो भवेदत्र युगे युगे ॥ १२
तेजोमयमिदं स्थानमदृश्यं चर्मचक्षुषाम् । रहस्यं मे प्रभावस्य वृन्दावन(नं) युगे युगे ॥ १३
ब्रह्मादीनां सुराणां च न दृश्यं तत्कथंचन ॥ १४

ईश्वर उवाच—

तच्छ्रुत्वा नारदो नत्वा कृष्णं ब्रह्माणमेव च । आजगाम ह भूर्लोके मिश्रकं नैमिषं वनम् ॥ १५
तत्रासौ सत्कृतश्चापि शौनकाद्यैर्मुनीश्वरैः । पृष्टश्चाप्यागतो ब्रह्मन्कुतस्त्वमधुना वद ॥ १६
तच्छ्रुत्वा नारदः प्राह गोलोकादागतो ह्यहम् । श्रुत्वा कृष्णमुखाम्भोजाद्वृन्दावनरहस्यकम् ॥ १७

नारद उवाच—

तत्र नानाविधाः प्रश्नाः कृताश्चैव पुनः पुनः । समस्ता मनवस्तत्र यागाश्चैव श्रुता मया ॥ १८
तानेव कथयिष्यामि यथाप्रश्नं च तत्त्वतः ॥ १९

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ञ. ढ. पुस्तकस्थः ।

---

[1] ङ. °त्सदैव ।

शौनक उवाच—

वृन्दारण्यरहस्यं हि यदुक्तं ब्रह्मणा त्वयि । तदस्माकं समाचक्ष्व यद्यस्मासु कृपा तव ॥ २०

नारद उवाच—

कदाचिच्छरयूतीरे दृष्टोऽस्माभिश्च गौतमः । मनस्वी च महादुःखी चिन्ताकुलितचेतनः ॥ २१

मां दृष्ट्वा गौतमो देवः पपात धरणीतले । उत्तिष्ठ वत्स वत्सेति तमुवाचाहमेव हि ॥

कथं भवान्मनस्वीति प्रोच्यतां यदि रोचते ॥ २२

गौतम उवाच—

श्रुतं तव मुखादेव कृष्णतत्त्वं च तादृशम् । द्वारकाख्यं मथुराख्यं रहस्यं बहुशो मया ॥ २३

वृन्दावनरहस्यं तु न श्रुतं त्वन्मुखाम्बुजात् । यतो मे मनसः स्थैर्यं भविष्यति च संङ्कुरो ॥ २४

नारद उवाच—

इदं तु परमं गुह्यं रहस्यातिरहस्यकम् । पुरा मे ब्रह्मणा प्रोक्तं तादृग्वृन्दावनोद्भवम् ॥ २५

रहस्यं वद देवेश वृन्दारण्यस्य मे पितः । इति जिज्ञासितं श्रुत्वा क्षणं मौनी स चाभवत् २६

ततो माऽऽह महाविष्णुं गच्छ वत्स प्रभुं मम । मयाऽपि तत्र गन्तव्यं त्वया सह न संशयः २७

इत्युक्त्वा मां गृहीत्वा च गतो विष्णोश्च धामनि । महाविष्णौ च कथितं मयोक्तं यत्तदेव हि ॥

तच्छ्रुत्वा च महाविष्णुः स्वयंभुवमथाऽऽदिशत् । त्वमेवाऽऽदेशतो मह्यं नीत्वा वै नारदं मुनिम् ॥

स्नानायैव नियुङ्क्ष्वस्व सरस्यमृतसंज्ञके । महाविष्णुसमादिष्टः स्वयंभूर्मां तथाऽकरोत् ॥ ३०

तत्रामृतसरश्चाहं प्रविश्य स्नानमाचरम् । तत्क्षणात्तत्सरःपारे योषितां सन्निधेऽभवम् ॥ ३१

सर्वलक्षणसंपन्ना योषिद्रूपाऽतिविस्मिता । मां दृष्ट्वा ताः समायान्तीमपृच्छंश्च मुहुर्मुहुः ॥ ३२

स्त्रिय ऊचुः—

का त्वं कुतः समायाता कथयाऽऽत्मविचेष्टितम् । तासां प्रियकथाः श्रुत्वा मयोक्तं तन्निशामय ३३

कुतः कोऽयं समायातः कथं वा योषिदाकृतिः । स्वप्नवदृश्यते सर्वं किं वा मुग्धोऽस्मि भूतले ३४

तच्छ्रुत्वा मद्वचो देवी प्रोवाच मधुरस्वनैः । वृन्दानाम्नी पुरी चेयं कृष्णचन्द्रप्रिया सदा ॥ ३५

अहं सुललिता देवी तुर्यातीता च निष्कला । इत्युक्त्वा च महादेवी करुणासान्द्रमानसा ॥ ३६

मां प्रत्याह पुनर्देवी समागच्छ मया सह । अन्याश्च योषितः सर्वाः कृष्णपादपरायणाः ॥ ३७

ताश्च मां प्रवदन्त्येवं समागच्छानया सह । ततोऽनु कृष्णचन्द्रस्य चतुर्दशाक्षरो मनुः ॥ ३८

कृपया कथितस्तस्या देव्याश्चापि महात्मनः । तत्क्षणादेव तत्साम्यमलभं विविधोपमा ॥ ३९

ताभिः सह गतास्तत्र यत्र कृष्णः सनातनः । केवलं सच्चिदानन्दः स्वयं योषिन्मयः प्रभुः ॥ ४०

योषिदानन्दहृदयो दृष्ट्वा मामब्रवीन्मुहुः । समागच्छ प्रिये कान्ते भक्त्या मां परिरम्भय ॥ ४१

रेमे वर्षप्रमाणेन तत्र चैव द्विजोत्तम । तदोक्तरमणे शेषे देवीं तां राधिकां प्रति ॥ ४२

श्रीकृष्ण उवाच—

इयं मे प्रकृतिस्तत्र चाऽऽसीन्नारदरूपधृक् । नीत्वाऽमृतसरो रम्यं स्नानार्थं संनियोजय ॥ ४३

तया मे रमणस्यान्ते गदितं प्रियभाषितम् । अहं च ललिता देवी राधिका या च गीयते ॥ ४४

अहं च वासुदेवाख्यो नित्यं कामकलात्मकः । सत्यं योषित्स्वरूपोऽहं योषिच्चाहं सनातनी ॥ ४५

अहं च ललिता देवी पुंरूपा कृष्णविग्रहा । आवयोरन्तरं नास्ति सत्यं सत्यं हि नारद ॥ ४६

१ छ. ड. शौनकादय ऊचुः । २ ख. भवन्मनोदुःखी प्रो॰ । ३ ख. सद्गुरो । ४ झ. त्वया । ५ झ. ॰षित्वाहं ।

एवं यो वेत्ति मे तत्त्वं समयं च तथा मनुम् । ससमाचारसंकेतं ललितावत्स मे प्रियः ॥ ४७
इदं वृन्दावनं नाम रहस्यं मम वै गृहम् । न प्रकाश्यं कदा कुत्र न वक्तव्यं पशौ क्वचित् ॥ ४८
ततोऽनु राधिकादेवी मां नीत्वा तत्सरोवरे । स्थित्वा सा कृष्णचन्द्रस्य चरणान्ते गता पुनः ४९
ततो निमज्जनादेव नारदोऽहमुपागतः । वीणाहस्तो गानपरस्तद्रहस्यं मुहुर्मुदा ॥ ५०
स्वयंभुवं नमस्कृत्य तत्रागां विष्णुपार्षदम् । स्वयंभुवा तथा दृष्टं नोक्तं किंचित्तदा पुनः ॥ ५१
इति ते कथितं वत्स सुगोप्यं च मया त्वयि । त्वयाऽपि कृष्णचन्द्रस्य केवलं धाम चित्कलम् ॥
गोपनीयं प्रयत्नेन मातुर्जार इव प्रियः । यथा प्रोक्तं मया शिष्ये गौतमे सरहस्यकम् ॥ ५३
तथा भवत्सु कार्त्स्न्येन कथितं चापि गोपितम् । यदि कुत्र कदाचित्तु प्रकाश्यं मुनिपुंगवाः ५४
तदा शापो भवेद्विप्राः कृष्णचन्द्रस्य निश्चितम् । इमं कृष्णस्य लीलाभिर्युतमध्यायमुत्तमम् ॥
यः पठेच्छृणुयाद्वाऽपि स याति परमं पदम् ॥ ५५

इति श्रीमहापुराणे पाद्मे पातालखण्डे नारदीयानुनये पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५८४०

---

अथ षट्सप्ततितमोऽध्यायः ।

---

ईश्वर उवाच—

अत्र शिशुपालं निहतं श्रुत्वा दन्तवक्त्रः कृष्णेन योद्धुं मथुरामाजगाम ॥ १

कृष्णस्तु तच्छ्रुत्वा रथमारुह्य तेन सह मथुरामाययौ ॥ २

अथ तं हत्वा यमुनामुत्तीर्य नन्दव्रजं गत्वा पितरावभिवाद्याऽऽश्वास्य ताभ्यामालिङ्गितः सकलगोपवृद्धान्परिष्वज्य तानाश्वास्य बहुवस्त्राभरणादिभिस्तत्रस्थान्सर्वान्संतर्पयामास ॥ ३

कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमाकीर्णे गोपस्त्रीभिरहर्निशं क्रीडासुखेन त्रिरात्रं तत्र समुवास तत्र स्थले नन्दगोपादयः सर्वे जनाः पुत्रदारसहिताः पशुपक्षिमृगादयोऽपि वासुदेवप्रसादेन दिव्यरूपधरा विमानसमारूढाः परमं वैकुण्ठलोकमवापुः ॥ ४

श्रीकृष्णस्तु नन्दगोपव्रजौकसां सर्वेषां निरामयं स्वपदं दत्त्वा देवैर्देवगणैः स्तूयमानः श्रीमतीं द्वारवतीं विवेश ॥ ५

तत्र वसुदेवोग्रसेनसंकर्षणप्रद्युम्नानिरुद्धाक्रूरादिभिः प्रत्यहं संपूजितः षोडशसहस्राष्टाधिकमहिषीभिश्च विश्वरूपधरो दिव्यरत्नमयलतागृहान्तरेषु सुरतरुकुसुमाचितश्लक्ष्णतरपर्यङ्केषु रमयामास ॥ ६

एवं हितार्थाय सर्वदेवानां समस्तभूभारविनाशाय यदुवंशेऽवतीर्य सकलराक्षसविनाशं कृत्वा महान्तमुर्विभारं नाशयित्वा नन्दव्रजद्वारकावासिनः स्थावरजङ्गमान्भवबन्धनान्मोचयित्वा परमे शाश्वते योगिध्येये रम्ये धाम्नि संस्थाप्य नित्यं दिव्यमहिष्यादिभिः संसेव्यमानो वासुदेवोऽखिलेषूवाच ॥ ७

आसीदव्याकृतं ब्रह्म करकाघृतयोरिव । प्रकृतिरथो गुणान्भुक्त्वा द्रवीभूत्वा दिवं गतः ॥ ८

इति श्रीमहापुराणे पाद्मे पातालखण्डे पार्वतीशिवसंवादे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५८४८

---

१ ङ. 'त्व्यमती क' । २ ख. च. 'मुहुः । स्व' । ३ अ. प्रोक्तं । ४ ङ. 'दीसामुत्तयं प' ।

अथ सप्तसप्ततितमोऽध्यायः ।

---

पार्वत्युवाच—

विस्तरेण समाचक्ष्व मन्त्रार्थपदगौरवम् । ईश्वरस्य स्वरूपं च तत्स्थानानां विभूतयः ॥ १
तद्विष्णोः परमं धाम व्यूहभेदास्तथा हरेः । निर्वाणाख्या हि तत्त्वेन मम सर्वं सुरेश्वरम् ॥ २

ईश्वर उवाच—

सारे वृन्दावने कृष्णं गोपीकोटिभिरावृतम् । तत्र गङ्गा परा शक्तिस्तत्स्थमानन्दैकाननम् ॥ ३
नानासुकुसुमामोदसमीरसुरभीकृतम् । कलिन्दतनयादिव्यतरङ्गसङ्गशीतलम् ॥ ४
सनकाद्यैर्भागवतैः संस्पृष्टं मुनिपुंगवैः । आह्लादिमधुरारावैर्गोवृन्दैरभिमण्डितम् ॥ ५
रम्यस्रग्भूषणोपेतैर्नृत्यद्भिर्बालकैर्वृतम् । तत्र श्रीमान्कल्पतरुर्जाम्बूनदपरिच्छदः ॥ ६
नानारत्नप्रवालाढ्यो नानामणिफलोज्ज्वलः । तस्य मूले रत्नवेदी रत्नदीधितिदीपिता ॥ ७
तत्र त्रयीमयं रत्नसिंहासनमनुत्तमम् । तत्राऽऽसीनं जगन्नाथं त्रिगुणातीतमव्ययम् ॥ ८
कोटिचन्द्रप्रतीकाशं कोटिभास्करभास्वरम् । कोटिकंदर्पलावण्यं भासयन्तं दिशो दश ॥ ९
त्रिनेत्रं द्विभुजं गौरं तप्तजाम्बूनदप्रभम् । श्लिष्यमाणं चाङ्गनाभिः सुदामानं च सर्वशः ॥ १०
ब्रह्माद्यैः सनकाद्यैश्च ध्येयं भक्तवशीकृतम् । मुदा घूर्णितनेत्राभिर्नृत्यन्तीभिर्महोत्सवैः ॥ ११
चुम्बन्तीभिर्हसन्तीभिः श्लिष्यन्तीभिर्मुहुर्मुहुः । अवाप्तगोपीदेहाभिः श्रुतिभिः कोटिकोटिभिः १२
तत्पादाम्बुजमाध्वीकचिन्ताभिः परितो वृतम् । तासां तु मध्ये या देवी तप्तचामीकरप्रभा ॥ १३
द्योतमाना दिशः सर्वाः कुर्वती विद्युदुज्ज्वलाः । प्रधानं या भगवती यया सर्वमिदं ततम् ॥ १४
सृष्टिस्थित्यन्तरूपा या विद्याऽविद्या त्रयी परा । स्वरूपा शक्तिरूपा च मायारूपा च चिन्मयी ॥
ब्रह्मविष्णुशिवादीनां देहकारणकारणम् । चराचरं जगत्सर्वं यन्मायापरिरम्भितम् ॥ १६
वृन्दावनेश्वरी नाम्ना राधा धात्राऽनुकारणात् । तामालिङ्ग्य वसन्तं तं मुदा वृन्दावनेश्वरम् ॥ १७
अन्योन्यचुम्बनाश्लेषमदावेशविघूर्णितम् । ध्यायेदतद्विधं देवं स च सिद्धिमवाप्नुयात् ॥ १८
मन्त्रराजमिमं गुह्यं तस्य मन्त्रं च मन्त्रवित् । यो जपेच्छृणुयाच्चैव स महात्मा सुदुर्लभः ॥ १९
राधिका चित्ररेखा च चन्द्रा मदनसुन्दरी । प्रिया च श्रीमधुमती शशिरेखा हरिप्रिया ॥ २०
सुवर्णशोभा संमोहा प्रेमरोमाञ्चराञ्जिता । वैवर्ण्यस्वेदसंयुक्ता भावाशक्ता प्रियंवदा ॥ २१
सुवर्णमालिनी शान्ता सुरासरसिका तथा । सर्वस्त्रीजीवना दीनवत्सला विमलाशया ॥ २२
निपीतनामपीयूषा सा राधा परिकीर्तिता । सुदीर्घस्मितसंयुक्ता तप्तचामीकरप्रभा ॥ २३
मूर्छत्प्रेमनदी राधा चरणालोचनाञ्जना । मायामात्सर्यसंयुक्ता दानसाम्राज्यजीवना ॥ २४
सुरतोत्सवसंग्रामा चित्ररेखा प्रकीर्तिता । गौराङ्गी नातिदीर्घा च सदा वादनतत्परा ॥ २५
दैन्यानुरागनटना मूर्छारोमाञ्चविह्वला । हरेर्दक्षिणपार्श्वस्था सर्वमन्त्रप्रिया तथा ॥ २६
अनङ्गलोभमाधुर्या चन्द्रा सा परिकीर्तिता । सलीलमन्थरगतिर्मञ्जुमुद्रितलोचना ॥ २७
प्रेमधारोज्ज्वलाकीर्णा दलिताञ्जनशोभना । कृष्णानुरागरसिका रासध्वनिसमुत्सुका ॥ २८
अहंकारसमायुक्ता [*मुखनिन्दितचन्द्रमाः । मधुरालापचतुरा जितेन्द्रियशिरोमणिः ॥ २९

---

* एतच्चिह्नान्तर्गतः पाठः, म. पुस्तकस्थः ।

---

१ ख. म. °क्ष्व नाम्नाऽर्थं° । २ क. म. गोपको° । ३ म. °न्दविग्रहम् । ४ ख. °मा च र° । ५ ख. °शक्त्या प्रि° ।

सुन्दरस्मितसंयुक्ता ] सा वै मदनसुन्दरी । विविक्तरासरसिका श्यामा श्याममनोहरा ॥ ३०
प्रेम्णा प्रेमकटाक्षेण हरेश्चित्तविमोहिनी । जितेन्द्रिया जितक्रोधा सा प्रिया परिकीर्तिता ॥ ३१
सुतप्तस्वर्णगौराङ्गी लीलागमनसुन्दरी । स्मारं च (रसु) प्रेमरोमाञ्चवैचित्र्यमधुराकृतिः ॥ ३२
सुन्दरस्मितसंयुक्ता मुखनिन्दितचन्द्रमाः । मधुरालापचतुरा जितेन्द्रियशिरोमणिः ॥ ३३
कीर्तिता सा मधुमती प्रेमरोदनतत्परा । संमोहज्वररोमाञ्चप्रेमधारासमन्विता ॥ ३४
दानधूलिविनोदा च रासध्वनिमहानटी । शशिरेखा च विज्ञेया गोपालप्रेयसी सदा ॥ ३५
कृष्णात्मा सोत्तमा श्यामा मधुपिङ्गललोचना । तत्पादप्रेमसंमोहात्कचित्पुलकंचुम्बिता । ३६
शिवकुण्डे शिवानन्दा नन्दिनी देहिकातटे । रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने ॥ ३७
देवकी मथुरायां तु जाता मे परमेश्वरी । चन्द्रकूटे तथा सीता विन्ध्ये विन्ध्यनिवासिनी ॥ ३८
वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे । वृन्दावनाधिपत्यं च दत्तं तस्मै प्रसीदता ॥ ३९
कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने । नित्यानन्दतनुः शौरियोंऽशरीरीति भाष्यते ॥ ४०
वाय्वग्निनाकभूमीनामङ्गाधिष्ठितदेवता । निरूप्यते ब्रह्मणोऽपि तथा गोविन्दविग्रहः ॥ ४१
सेन्द्रियोऽपि यथा सूर्यस्तेजसा नोपलक्ष्यते । तथा कान्तियुतः कृष्णः कालं मोहयति ध्रुवम् ४२
न तस्य प्राकृती मूर्तिर्मेदोमांसास्थिसंभवा । योगी चैवेश्वरश्चान्यः सर्वात्मा नित्यविग्रहः ॥ ४३
काठिन्यं दैवयोगेन करकाघृतयोरिव । कृष्णस्यामिततत्त्वस्य पादपृष्ठं न देवता ॥ ४४
वृन्दावनरजो वन्दे तत्र स्युर्विष्णुकोटयः । आनन्दकिरणवृन्दव्याप्तविश्वकलानिधिः ॥ ४५
गुणामृतात्मनि यथा जीवास्तत्किरणाङ्ककाः । भुजद्वयवृतः कृष्णो न कदाचिच्चतुर्भुजः ॥ ४६
गोप्यैकया वृतस्तत्र परिक्रीडति सर्वदा । गोविन्द एव पुरुषो ब्रह्मा(द्याः) स्त्रिय एव च ॥ ४७
तत एवं स्वभावोऽयं प्रकृतेर्भाव ईश्वरः । पुरुषप्रकृती चाऽऽद्यौ राधावृन्दावनेश्वरौ ॥
प्रकृतेर्विकृतं सर्वं विना वृन्दावनेश्वरम् । ४८

समुद्भवेनैव समुद्भवेदिदं भेदं गतं तस्य विनाशने हि ।
स्वर्णस्य नाशो न हि विद्यते तथा मत्स्यादिनाशेऽपि न कृष्णविच्युतिः ॥ ४९

त्रिगुणादिप्रपञ्चोऽयं वृन्दावनविहारिणः । ऊर्मीवाब्धेस्तरङ्गस्य यथाऽब्धिर्नैव जायते ॥ ५०
न राधिकासमा नारी न कृष्णसदृशः पुमान् । वयः परं न कैशोरात्स्वभावः प्रकृतेः परः ॥ ५१
ध्येयं कैशोरकं ध्येयं वनं वृन्दावनं वनम् । श्याममेव परं रूपमादिदैवं परो रसः ॥ ५२
बाल्यं तु पञ्चमाब्दान्तं पौगण्डं दशमावधि । अष्टपञ्चककैशोरं सीमा पञ्चदशावधि ॥ ५३
यौवनोद्भिन्नकैशोरं नवयौवनमुच्यते । तद्वयस्तस्य सर्वस्वं प्रपञ्चमितरद्वयः ॥ ५४
बाल्यपौगण्डकैशोरं वयो वन्दे मनोहरम् । बालगोपालगोपालं स्मरगोपालरूपिणम् ॥ ५५
वन्दे मदनगोपालं कैशोराकारमद्भुतम् । यमाद्युयौवनोद्भिन्नश्रीमन्मदनमोहनम् ॥ ५६
अखण्डातुलपीयूषरसानन्दमहार्णवम् । जयति श्रीपतेर्गूढं वयः कैशोररूपिणः ॥ ५७
एकमप्यव्ययं पूर्वं बल्लवीवृन्दमध्यगम् । ध्यानगम्यं प्रपश्यन्ति रुचिभेदात्पृथग्धियः ॥ ५८
पद्मखेन्दुरुचिर्ब्रह्म ध्येयं ब्रह्मादिभिः सुरैः । गुणत्रयमतीतं तं वन्दे वृन्दावनेश्वरम् ॥ ५९
वृन्दावनपरित्यागो गोविन्दस्य न विद्यते । अन्यत्र यद्वपुस्तत्तु कृत्रिमं तत्र संशयः ॥ ६०

१ क. ञ. °कसंयुता । २ ख. देविका° । ३ झ. ञ. प्रभुमेता । ४ झ. ञ. मोदयति । ५ ञ. °जोद्वन्दे° । ६ झ. °स्तत्क्षीर° । ७ ख. °व सुभा° । ८ ञ. °रन्गोपा° । ९ ञ. रूपं । १० ख. °वे पद्म° । ११ ख. क. वृ.दे ।

सुलभं व्रजनारीणां दुर्लभं तन्मुमुक्षुणाम् । तं भजेन्नन्दसूनुं यन्नखतेजः परं मनुः ॥ ६१

पार्वत्युवाच—

भुक्तिमुक्तिस्पृहा यावत्पिशाची हृदि वर्तते । [*तावत्प्रेमसुखस्यात्र कथमभ्युदयो भवेत् ॥ ६२

ईश्वर उवाच—

साधु पृष्टं त्वया भद्रे यन्मे मनसि वर्तते । ] तत्सर्वं कथयिष्यामि सावधाना निशामय ॥ ६३

स्मृत्वा गुणान्स्मरन्नाम गानं वा मनरञ्जनम् । बोधयत्यात्मनाऽऽत्मानं सततं प्रेम्णि लीयते॥ ६४

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवपार्वतीसंवादे श्रीकृष्णरूपगुणवर्णनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५९१२

---

अथाष्टसप्ततितमोऽध्यायः ।

---

पार्वत्युवाच—

वैष्णवानां च यद्धर्मं सर्वं तथ्यं च मे वद । यत्कृत्वा मानवाः सर्वे भवाम्भोधिं तरन्ति हि ॥ १

ईश्वर उवाच—

अथ द्वादशशुद्धिं च वैष्णवानामिहोच्यते । गृहोपलेपनं चैव तथाऽनुगमनं हरेः ॥ २

भक्त्या प्रदक्षिणं चैव पादयोः शोधनं पुनः । पूजार्थं पत्रपुष्पाणां भक्त्यैवोच्चयनं हरेः ॥ ३

करयोः सर्वशुद्धीनामियं शुद्धिर्विशिष्यते । तन्नामकीर्तनं चैव गुणानामपि कीर्तनम् ॥ ४

भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते । तत्कथाश्रवणं चैव तस्योत्सवनिरीक्षणम् ॥ ५

श्रोत्रयोर्नेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते । पादोदकं च निर्माल्यं मालानामपि धारणम् ॥ ६

उच्यते शिरसः शुद्धिः प्रणतस्य हरेः पुरः । आघ्राणं तस्य पुष्पादेर्निर्माल्यस्य तथा प्रिये ॥ ७

विशुद्धिः स्यादन्तरस्य घ्राणस्यापि विधीयते । पत्रपुष्पादिकं यच्च कृष्णपादयुगार्पितम् ॥ ८

तदेकं पावनं लोके तद्धि सर्वं विशोधयेत् । पूजा च पञ्चधा प्रोक्ता तासां भेदाञ्शृणुष्व मे ॥ ९

अभिगमनमुपादानं योगः स्वाध्याय एव च । इज्या पञ्चप्रकाराऽर्चा क्रमेण कथयामि ते ॥ १०

तत्राभिगमनं नाम देवतास्थानमार्जनम् । उपलेपं च निर्माल्यदूरीकरणमेव च ॥ ११

उपादानं नाम गन्धपुष्पादिचयनं तथा । योगो नाम स्वदेवस्य स्वात्मनैवाऽऽत्मभावना ॥ १२

स्वाध्यायो नाम मन्त्रार्थसंधानपूर्वको जपः । सूक्तस्तोत्रादिपाठश्च हरेः संकीर्तनं तथा ॥ १३

तत्त्वादिशास्त्राभ्यासश्च स्वाध्यायः परिकीर्तितः । इज्या नाम स्वदेवस्य पूजनं च यथार्थतः॥१४

इति पञ्चप्रकाराऽर्चा कथिता तव सुव्रते । सार्ष्टिसामीप्यसालोक्यसायुज्यसारूप्यदा क्रमात् १५

प्रसङ्गात्कथयिष्यामि शालग्रामशिलार्चकम् । [†केशवादेश्चतुर्बाहोर्दक्षिणोर्ध्वकरक्रमात् ॥] १६

शङ्खचक्रगदापद्मी केशवाख्यो गदाधरः । [+नारायणः पद्मगदाचक्रशङ्खायुधः क्रमात् ॥ १७

माधवश्चक्रशङ्खाभ्यां पद्मेन गदया भवेत् ] । गदाब्जशङ्खी चक्री वा गोविन्दाख्यो गदाधरः॥ १८

पद्मशङ्खारिगदिने विष्णुरूपाय वै नमः । सशङ्खाब्जगदाचक्रमधुसूदनमूर्तये ॥ १९

---

* एतच्चिह्नान्तर्गतः पाठः क. ख. ड. च. छ. ज. ढ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठश्चपुस्तकस्थः । + एतच्चिह्नान्तर्गतः पाठश्चपुस्तकस्थः ।

---

१ ख. जनरञ्जनम् । ड. मनरञ्जिता ।

नमो गदारिशङ्खाब्जयुक्तत्रिविक्रमाय च । सारिकौमोदकीपद्मशङ्खवामनमूर्तये ॥ २०
चक्राब्जशङ्खगदिने नमः श्रीधरमूर्तये । हृषीकेश सारिगदाशङ्खपद्मिन्नमोऽस्तु ते ॥ २१
साब्जशङ्खगदाचक्रपद्मनाभस्वमूर्तये । दामोदर शङ्खगदाचक्रपद्मिन्नमोऽस्तु ते ॥ २२
शङ्खाब्जचक्रगदिने नमः संकर्षणाय च । सारिशङ्खगदाब्जाय वासुदेव नमोऽस्तु ते ॥ २३
शङ्खचक्रगदाब्जादिधृतप्रद्युम्नमूर्तये । नमोऽनिरुद्धाय गदाशङ्खाब्जारिविधारिणे ॥ २४
साब्जशङ्खगदाचक्रपुरुषोत्तममूर्तये । नमोऽधोक्षजरूपाय गदाशङ्खारिपद्मिने ॥ २५
नृसिंहमूर्तये पद्मगदाशङ्खारिधारिणे । पद्मारिशङ्खगदिने नमोऽस्त्वच्युतमूर्तये* ॥ २६
गदाब्जारिसशङ्खाय नमः श्रीकृष्णमूर्तये । शालग्रामशिलाद्वारगतलग्नद्विचक्रधृत् ॥ २७
शुक्लाभरेखः शोभाढ्यः स देवः श्रीगदाधरः । लग्नद्विचक्रो रक्ताभः पूर्वभागस्तु पुष्कलः ॥ २८
संकर्षणोऽथ प्रद्युम्नः सूक्ष्मचक्रस्तु पीतकः । सदीर्घसुषिराच्छिद्रो ह्यनिरुद्धस्तु वर्तुलः ॥ २९
नीलो द्वारे त्रिरेखश्च ह्यथ नारायणोऽसितः । मध्ये गदाकृती रेखा नाभिपद्मं महोन्नतम् ॥ ३०
पृथुचक्रो नृसिंहो यः कपिलोऽव्यात्त्रिबिन्दुकः । अथवा पञ्चबिन्दोस्तु पूजनं ब्रह्मचारिणः ३१
वाराहः सत्रिलिङ्गोऽव्याद्विषमद्वयचक्रकः । नालस्त्रिरेखः स्थूलोऽथ कूर्ममूर्तिः सबिन्दुकः ॥ ३२
कृष्णः सवर्तुलावर्तः पाण्डुरो धृतपृष्ठकः । श्रीधरः पञ्चरेखश्च वनमाली गदाङ्कितः ॥ ३३
वामनो वर्तुलो नाम मध्यचक्रः सनीलकः । नानावर्णानेकमूर्तिर्नागभोगी त्वनन्तकः ॥ ३४
स्थूलो दामोदरो नीलो मध्येचक्रः सनीलकः । संकर्षणद्वारकोऽव्यादथ ब्रह्मा सुलोहितः ॥ ३५
सदीर्घरेखासुषिर एकचक्राम्बुजः पृथुः । पृथुच्छिद्रः स्थूलचक्रः कृष्णोऽबिन्दुश्च बिन्दुमान् ॥ ३६
हयग्रीवोऽङ्कुशाकारः पञ्चरेखस्तु कौस्तुभः । वैकुण्ठोऽमलवद्भाति ह्येकचक्रमयोऽसितः ॥ ३७
मत्स्यो दीर्घाम्बुजाकारो हाररेखश्च पाण्डुरः । रामचन्द्रो दक्षरेखः श्यामोऽव्यात्तु त्रिविक्रमः ३८
शालग्रामद्वारकायां (?)स्थिताय गदिने नमः । एकेन लक्षतो योऽव्याद्गदाधारी सुदर्शनः ॥ ३९
लक्ष्मीनारायणो द्वाभ्यां त्रिभिश्चैव त्रिविक्रमः । चतुर्भिश्च चतुर्व्यूहो वासुदेवश्च पञ्चभिः ॥ ४०
प्रद्युम्नः षड्भिरेवाव्यात्संकर्षणश्च सप्तभिः । पुरुषोत्तमोऽष्टभिश्चास्या(व्या)न्नवव्यूहो नवो हितः ॥
दशावतारो दशभिरनिरुद्धोऽवतादथ । द्वादशात्मा द्वादशभिरत ऊर्ध्वं त्वनन्तकः ॥ ४२
ब्रह्मा चतुर्मुखो दण्डी कमण्डलुस्रुगुन्नतः । महेश्वरः पञ्चवक्त्रो दशबाहुर्वृषध्वजः ॥ ४३
यथायुधस्तथा गौरी चण्डिका च सरस्वती । महालक्ष्मीर्मातरश्च पद्महस्तो दिवाकरः ॥ ४४
गजास्यश्च गजस्कन्धः षण्मुखोऽनेकधा गणाः । एते स्थिताः स्थापिताः स्युः प्रासादे वाऽथ पूजिताः ॥
धर्मार्थकाममोक्षाद्याः प्राप्यन्ते पुरुषेण च ॥ ४५

इति श्रीमहापुराणे पाद्मे पातालखण्डे शालग्रामनिर्णयो नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१५९५७

अथैकोनाशीतितमोऽध्यायः ।

ईश्वर उवाच—
शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च । नित्यं तु श्रीहरेः पूजा केवले भवने न तु ॥ १

* मूर्तिवर्णनानुक्रमेणात्र सार्धः श्लोको भ्रष्ट इति भाति ।

१ ख. मनोगतम् । २ अ. पद्मरे' । ३ क. अ. 'कुण्डे बल' । ४ ख. 'देवोश्च । ५ क. अ 'थाशुद्धस्त' ।

गण्डक्यामेकदेशे तु शालग्रामस्थलं महत् । पाषाणं तद्भवं यत्तु शालग्राम इति स्मृतम् ॥ २
शालग्रामशिलास्पर्शात्कोटिजन्माघनाशनम् । किं पुनः पूजनं तत्र हरेः सांनिध्यकारणम् ॥ ३
शालग्रामैकयजनाच्छतलिङ्गफलं लभेत् । बहुभिर्जन्मभिः पुण्यैर्यदि कृष्णशिलां लभेत् ॥ ४
गोष्पदेन च चिह्नेन तेन समाप्यते जनुः । आदौ शिलां परीक्षेत स्निग्धां श्रेष्ठां च मेचकाम् ५
आकृष्णा मध्यमा प्रोक्ता मिश्रा मिश्रफलप्रदा । सदा काष्ठस्थितो वह्निर्मथनेन प्रकाशयेत् ॥ ६
यथा तथा हरिर्व्यापी शालग्रामे प्रकाशते । प्रत्यहं द्वादश शिलाः शालग्रामस्य योऽर्चयेत् ॥ ७
द्वारवत्याः शिला युक्ताः स वैकुण्ठे महीयते । शालग्रामशिलायां तु गह्वरं लक्षते नरः ॥ ८
पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पान्तकं दिवि । वैकुण्ठभवनं तत्र यत्र द्वारावतीशिला ॥ ९
मृतो विष्णुपुरं याति तत्तीर्थं[1] योजनत्रयम् । जपः पूजा च होमश्च सर्वं कोटिगुणं भवेत् ॥ १०
मनस्कामसमाभीष्टं क्रोशमात्रं न संशयः । कीटकोऽपि मृतं (तो) याति वैकुण्ठभवनं यतः ॥ ११
शालग्रामशिलायां यो मूल्यमुद्घाटयेन्नरः । विक्रेता चानुमन्ता च यः परीक्षानुमोदकः ॥ १२
सर्वे ते नरकं यान्ति यावत्सूर्यश्च संप्लवः । अतस्तद्वर्जयेद्देवि चक्रक्रयणविक्रयम् ॥ १३
शालग्रामोद्भवो देवो यो देवो द्वारकोद्भवः । उभयोः संगमो यत्र मुक्तिस्तत्र न संशयः ॥ १४
द्वारकोद्भवचक्राढ्यो बहुचक्रेण चिह्नितः । चक्रासनशिलाकारश्चित्स्वरूपो निरञ्जनः ॥ १५
नमोऽस्त्वोंकाररूपाय सदानन्दस्वरूपिणे । शालग्राम महाभाग भक्तस्यानुग्रहं कुरु ॥ १६
तवानुग्रहकामस्य ऋणग्रस्तस्य मे प्रभो । अतः परं प्रवक्ष्यामि तिलकस्य विधिं मुदा ॥ १७
यच्छ्रुत्वा मानवाः सर्वे विष्णुसारूप्यमाप्नुयुः । ललाटे केशवं विद्यात्कण्ठे श्रीपुरुषोत्तमम् ॥ १८
नाभौ नारायणं देवं वैकुण्ठं हृदये तथा । दामोदरं वामपार्श्वे दक्षिणे च त्रिविक्रमम् ॥ १९
मूर्ध्नि चैव हृषीकेशं पद्मनाभं च पृष्ठतः । कर्णयोर्यमुनां गङ्गां बाह्वोः कृष्णं हरिं तथा ॥ २०
यथास्थानेषु तुष्यन्ति देवता द्वादश स्मृताः । द्वादशैतानि नामानि कर्तव्ये तिलके पठेत् ॥ २१
सर्वपापविशुद्धात्मा विष्णुलोकं स गच्छति । ऊर्ध्वपुण्ड्रमूर्ध्वरेखं ललाटे यस्य दृश्यते ॥ २२
चण्डालोऽपि स शुद्धात्मा पूज्य एव न संशयः । यस्योर्ध्वपुण्ड्रं दृश्येत ललाटे न नरस्य हि २३
तद्दर्शनं न कर्तव्यं दृष्ट्वा सूर्यं निरीक्षयेत् । त्रिपुण्ड्रं यस्य विप्रस्य ऊर्ध्वपुण्ड्रं न दृश्यते ॥ २४
तं दृष्ट्वाऽप्यथवा स्पृष्ट्वा सचैलं स्नानमाचरेत् । सान्तरालं प्रकर्तव्यं पुण्ड्रं हरिपदाकृति ॥ २५
निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः । ललाटस्तस्य सततं शुनः पादो न संशयः ॥ २६
नासादिकेशपर्यन्तमूर्ध्वपुण्ड्रं सुशोभनम् । मध्ये छिद्रसमायुक्तं तं विद्याद्धरिमन्दिरम् ॥ २७
वामभागे स्थितो ब्रह्मा दक्षिणे तु सदाशिवः । मध्ये विष्णुं विजानीयात्तस्मान्मध्यं न लेपयेत् २८
वीक्ष्याऽऽदर्शे जले वाऽपि यो विदध्यात्प्रयत्नतः । ऊर्ध्वपुण्ड्रं महाभाग(ः) स याति परमां गतिम्
अग्निरापश्च वेदाश्च चन्द्रादित्यौ तथाऽनिलः । विप्राणां नित्यमेते हि कर्णे तिष्ठन्ति दक्षिणे॥ ३०
गङ्गा च दक्षिणे श्रोत्रे नासिकायां हुताशनः । उभयोरपि संस्पर्शात्तत्क्षणादेव शुध्यति ॥ ३१
कृत्वा वै चोदकं शङ्खे वैष्णवानां महात्मनाम् । तुलसीमिश्रितं दद्यात्पिबेन्मूर्ध्नाऽभिवन्दयेत् ३२
प्राश्नीयात्प्रोक्षयेद्देहं पुत्रमित्रपरिग्रहम् । विष्णोः पादोदकं पीतं कोटिजन्माघनाशनम् ॥ ३३
तदेवाष्टगुणं पापं भूमौ बिन्दुनिपातनात् । जलशङ्खं करे कृत्वा स्तुत्वा नत्वा प्रदक्षिणम् ॥ ३४
सततं धार्यते वारि तेनाऽऽप्तं जन्मनः फलम् । शङ्खो यस्य गृहे नास्ति घण्टा वा गरुडान्विता ३५

१ ख. छ. ज. °त्रं समन्ततः । की° ।

पुरतो वासुदेवस्य न स भागवतः कलौ । यानैर्वा पादुकाभिर्वा यानं भगवतो गृहे ॥ ३६
देवोत्सवेष्वसेवा च त्वप्रणामस्तदग्रतः । उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम् ॥ ३७
एकहस्तप्रणामश्च तत्पुरस्तात्प्रदक्षिणम् । पादप्रसारणं चाग्रे तथा पर्यङ्कसेवनम् ॥ ३८
शयनं भक्षणं चापि मिथ्याभाषणमेव च । उच्चैर्भाषा मिथोजल्पो रोदनानि च विग्रहः ॥ ३९
निग्रहानुग्रहौ चैव स्त्रीषु च क्रूरभाषणम् । कम्बलावरणं चैव परनिन्दा परस्तुतिः ॥ ४०
अश्लीलभाषणं चैव ह्यधोवायुविमोक्षणम् । शक्तौ गौणोपचारश्चाप्यनिवेदितभक्षणम् ॥ ४१
तत्तत्कालोद्भवानां च फलादीनामनर्पणम् । विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनस्य यत् ॥ ४२
स्पृष्टीकृत्याशनं चैव परनिन्दा परस्तुतिः । गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा ॥
[*अपराधास्तथा विष्णोर्द्वात्रिंशत्परिकीर्तिताः ॥ ४३
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । तवाहमिति मां मत्वा क्षमस्व मधुसूदन ॥ ४४
इति मन्त्रं समुच्चार्य प्रणमेद्दण्डवद्भुवि । अपराधसहस्राणि क्षमते सर्वदा हरिः ॥ ४५
सायंप्रातर्द्विजातीनां श्रुत्युक्तमशनं तथा ] । विष्णुभक्तावशिष्टस्य दिनपापात्प्रमुच्यते॥ ४६
अन्नं ब्रह्मरसो विष्णुः खादयन्मां समुच्चरन् । एवं ज्ञात्वा तु यो भुङ्क्ते सोऽन्नदोषैर्न लिप्यते॥
अलाबुं वर्तुलाकारं लसुनं च सवल्कलम् । तालं शुक्तं च वृन्ताकं न खादेद्वैष्णवो नरः ॥ ४८
वटाश्वत्थार्कपत्रेषु कुम्भीतिन्दुकपत्रयोः । कोविदारे कदम्बे च न खादेद्वैष्णवो नरः ॥ ४९
श्रावणे वर्जयेच्छाकं दधि भाद्रपदे त्यजेत् । दुग्धं तु चाऽऽश्विने मासि कार्तिके चाऽऽमिषं त्यजेत्
दग्धमन्नं तु जम्बीरं यद्विष्णोरनिवेदितम् । बीजपूरं च शाकं च प्रत्यक्षलवणं तथा ॥ ५१
यदि दैवाच्च भुञ्जीत तदा तन्नाम संस्मरेत् । हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ॥
कलायकङ्गुनीवाराः शाकं च हिलमोचिका । कालशाकं च वास्तूकं मूलकं केमुकेतरम् ॥ ५३
लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी । पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ॥ ५४
पिप्पली जीरकं चैव नागरङ्गकतिन्तिडी । कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ॥ ५५
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते । तुलसीपत्रपुष्पाद्यैर्माल्यं वहति यो नरः ॥ ५६
सोऽपि विष्णुर्विजानीयात्सत्यं सत्यं न संशयः । धात्रीवृक्षं समारोप्य विष्णुतुल्यो भवेन्नरः ५७
कुरुक्षेत्रं विजानीयात्सार्धहस्तशतत्रयम् । तुलसीकाष्ठघटितै रुद्राक्षाकारकारितैः ॥
निर्मितां मालिकां कण्ठे निधायार्चनमारभेत् ॥ ५८
तथाऽऽमलकमालां च सम्यक्पुष्करमालिकाम् । कण्ठे मालां च यत्नेन धारयेद्विष्णुपूजकः ॥५९
निर्माल्यं तुलसीमालां शिरस्यपि च धारयेत् । निर्माल्यचन्दनेनाङ्गमङ्कयेत्तस्य नामभिः ॥ ६०
ललाटे च गदा धार्या मूर्ध्नि चापं शरस्तथा । नन्दकं चैव हृन्मध्ये शङ्खं चक्रं भुजद्वये ॥ ६१
शङ्खचक्रान्वितो विप्रः श्मशाने म्रियते यदि । प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य निश्चिता
यो धृत्वा तुलसीपत्रं शिरसा विष्णुतत्परः । करोति सर्वकार्याणि फलमाप्नोति चाक्षयम् ॥ ६३
तुलसीकाष्ठमालाभिर्भूषितः कर्म ह्याचरेत् । पितॄणां देवतानां च कृतं कोटिगुणं भवेत् ॥ ६४
निवेद्य केशवे मालां तुलसीकाष्ठनिर्मिताम् । वहते यो नरो भक्त्या तस्य नश्यति पातकम् ॥
पाद्यादिभिस्तथाऽऽपूज्य चेमं मन्त्रमुदीरयेत् ॥ ६५

* एतच्चिह्नान्तर्गतः पाठः ख. छ. झ. पुस्तकस्थः ।

१ छ. झ. °दातव्यं जन° । २ क. ख. ङ. च. छ. ञ. झ. मसुरं । ३ क. शुष्कं । ञ. शुक्तं । ४ झ. ञ. प्रचक्ष्यते ।

या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुष्पावनी
रोगाणामभिवन्दिता निरसनी सिक्ताऽन्तकत्रासिनी ॥
प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता
न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥ ६६

इति श्रीमहापुराणे पाद्मे पातालखण्डे देवीश्वरसंवादे तिलकादिनियमो नाम नवसप्ततितमोऽध्यायः ॥ ७९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६०२३

---

अथाशीतितमोऽध्यायः ।

---

पार्वत्युवाच—
घोरे कलियुगे प्राप्ते विषयग्राहसंकुले । पुत्रदारधनाद्यार्तैस्तत्कथं धार्यते विभो ॥
तदुपायं महादेव कथयस्व कृपानिधे ॥ १
ईश्वर उवाच—
हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् । हरे राम हरे कृष्ण कृष्ण कृष्णेति मङ्गलम् ॥ २
एवं वदन्ति ये नित्यं न हि तान्बाधते कलिः । अत आन्तरकर्माणि कृत्वा नामानि च स्मरेत् ॥
कृष्ण कृष्णेति कृष्णेति कृष्णेत्याह पुनः पुनः । मन्नाम चैव त्वन्नाम यो जपित्वा व्यतिक्रमात् ॥
सोऽपि पापाद्विमुच्येत तूलराशेरिवानलः । जयाद्येतत्त्वयां वाऽप्यथवा श्रीशब्दपूर्वकम् ॥ ५
तच्च मे मङ्गलं नाम जपात्पापात्प्रमुच्यते । दिवा निशि च संध्यायां सर्वकालेषु संस्मरेत् ॥ ६
अहर्निशं स्मरन्नाम कृष्णं पश्यति चक्षुषा । अशुचिर्वा शुचिर्वाऽपि सर्वकालेषु सर्वदा ॥ ७
नामसंस्मरणादेव संसारान्मुच्यते क्षणात् । नानापराधयुक्तस्य नामापि च हरत्यघम् ॥ ८
यज्ञव्रततपोदानं साङ्गं नैव कलौ युगे । गङ्गास्नानं हरेर्नाम निरपायमिदं द्वयम् ॥ ९
हत्यायुतं पापसहस्रमुग्रं गुर्वङ्गनाकोटिनिषेवणं च ।
स्तेयान्यथान्यानि हरेः प्रियेण गोविन्दनाम्ना न च सन्ति भद्रे ॥ १०
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ११
नामसंस्मरणादेव तथा तत्पादचिन्तनात् । सौवर्णीं राजतीं वाऽपि तथा पैष्टीं स्रजाकृतिम् ॥ १२
पादयोश्चिह्नितां कृत्वा पूजां चैव समारभेत् । दक्षिणस्य पदाङ्गुष्ठमूले चक्रं बिभर्ति यः ॥ १३
तत्र नम्रजनस्यापि संसारच्छेदनाय च । मध्यमाङ्गुलिमूले तु धत्ते कमलमच्युतः ॥ १४
ध्यातुश्चित्तद्विरेफाणां लोभनायातिशोभनम् । पद्मस्याधो ध्वजं धत्ते सर्वानर्थजयध्वजम् ॥ १५
कनिष्ठामूलतो वज्रं भक्तपापौघभेदनम् । पार्श्वमध्येऽङ्कुशं भक्तचित्तेभदमकारणम् ॥ १६
भोगसंपन्म(न्म)यं धत्ते यवमङ्गुष्ठपर्वणि । मूले गदां च पापाद्रिभेदिनीं सर्वदेहिनाम् ॥ १७
सर्वविद्याप्रकाशाय धत्ते स भगवानजः । पद्मादीन्यपि चिह्नानि तत्र दक्षेण यत्पुनः ॥ १८
वामपादे वसेत्सोऽयं बिभर्ति करुणानिधिः । तस्माद्गोविन्दमाहात्म्यमानन्दरससुन्दरम् ॥ १९
शृणुयात्कीर्तयेन्नित्यं स निर्मुक्तो न संशयः । मासकृत्यं प्रवक्ष्यामि विष्णोः प्रीतिकरं पुनः ॥ २०
ज्येष्ठे तु स्नापनं कुर्याच्छ्रीविष्णोर्यत्नतः शुचिः । दैनंदिनं तु दुरितं पक्षमासर्तुवर्षजम् ॥ २१

---

१ अ. 'याद्येवाथ' । २ झ. 'च्युतम् । ध्या' ।

ब्रह्महत्यासहस्राणि ज्ञाताज्ञातकृतानि च । स्वर्णस्तेयं सुरापानगुरुतल्पायुतानि च ॥ २२
कोटिकोटिसहस्राणि ह्युपपापानि यानि च । सर्वाण्यपि प्रणश्यन्ति पौर्णमास्यां तु वासरे ॥ २३
आसिञ्चेदच्युतं मूर्ध्नि तदा तत्कलशोदकम् । पुरुषसूक्तेन मन्त्रेण पावमानीभिरेव च ॥ २४
नारिकेलोदकेनाथ तथा तालफलाम्बुना । रत्नोदकेन गन्धेन तथा पुष्पोदकेन च ॥ २५
पञ्चोपचारैराराध्य यथाविभवविस्तरैः । घं घण्टायै नम इति घण्टावाद्यं निवेदयेत् ॥ २६
पतितस्य महाध्वानन्यस्तपातकसंचये । पाहि मां पापिनं घोरं संसारार्णवपातिनम् ॥ २७
य एवं कुरुते विद्वान्ब्राह्मणः श्रोत्रियः शुचिः । सर्वपापैः प्रमुच्येत विष्णुलोकं स गच्छति ॥ २८
आषाढशुक्लैकादश्यां कुर्यात्स्वापमहोत्सवम् । आषाढे च रथं कुर्याच्छ्रावणे श्रवणाविधिः ॥ २९
भाद्रे च जन्मदिवस उपवासपरो भवेत् । प्रसुप्तस्य परीवर्तमाश्विने मासि कारयेत् ॥ ३०
उत्थानं श्रीहरेः कुर्यादन्यथा विष्णुद्रोहकृत् । शुभे चैवाऽऽश्विने मासि महामायां च पूजयेत् ॥
सौवर्णी राजतीं वाऽपि विष्णुरूपां बलिं विना । हिंसाद्वेषौ न कर्तव्यौ धर्मात्मा विष्णुपूजकः ॥
कार्तिके पुण्यमासे च कामतः पुण्यमाचरेत् । दामोदराय दीपं च प्रांशुस्थाने प्रदापयेत् ॥ ३३
सप्तवर्त्या प्रमाणेन दीपः स्याच्चतुरङ्गुलः । पक्षान्ते च प्रकर्तव्या दीपमालावलिः शुभा ॥ ३४
मार्गशीर्षे सिते पक्षे षष्ठ्यां च सितवस्त्रकैः । पूजयेज्जगदीशं च ब्रह्माणं च विशेषतः ॥ ३५
पौषे पुष्पाभिषेकं च वर्जयेच्चन्दनं श्लथम् । संक्रान्त्यां माघमासे च साधिवासिततण्डुलान् ॥ ३६
नैवेद्यं विष्णवे दद्यादिमं मन्त्रमुदीरयेत् । ब्राह्मणान्भोजयेद्भक्त्या देवदेवपुरस्थितान् ॥ ३७
अभ्यर्च्य भगवद्भक्तान्द्विजांश्च भगवद्धिया । एकस्मिन्भोजिते भक्ते कोटिर्भवति भोजिता ॥ ३८
विप्रभोजनमात्रेण व्यङ्गं साङ्गं भवेद्ध्रुवम् । पञ्चम्यां शुक्लपक्षे तु स्नापयित्वा च केशवम् ॥ ३९
पूजयित्वा[३] विधानेन चूतपल्लवसंयुतैः । फल्गुचूर्णैश्च विविधैर्वासितैः पटुसाधितैः ॥ ४०
काननं रमणीयं च प्रदीप्तदीपदीपितम् । द्राक्षेक्षुरम्भाजम्बीरनागरङ्गं च पूगकम् ॥ ४१
नारिकेलं च धात्रीं च पनसं च हरीतकीं । अन्यैश्च वृक्षखण्डैश्च सर्वर्तुकुसुमान्वितैः ॥ ४२
अन्यैश्च विविधैश्चैव फलपुष्पसमन्वितैः । वितानैः कुसुमोद्दामैर्वारिपूर्णघटैस्तथा ॥ ४३
चूतशाखोपशाखाभिः शोभितं छत्रचामरैः । जय कृष्णेति संस्मृत्य प्रदक्षिणपुरःसरम् ॥ ४४
विशेषतः कलियुगे दोलोत्सवो विधीयते । फाल्गुने च चतुर्दश्यामष्टमे यामसंज्ञके ॥ ४५
अथवा पूर्णमास्यां तु प्रतिपत्संधिसंज्ञके । पूजयेद्विधिवद्भक्त्या फल्गुचूर्णैश्चतुर्विधैः ॥ ४६
सितरक्तैर्गौरपीतैः कर्पूरादिविमिश्रितैः । हरिद्रारागयोगाच्च रङ्गरूपैर्मनोहरैः ॥ ४७
अन्यैर्वा रङ्गरूपैश्च प्रीणयेत्परमेश्वरम् । एकादश्यां समारभ्य पञ्चम्यन्तं समापयेत् ॥ ४८
पञ्चाहानि त्र्यहानि वा दोलोत्सवो विधीयते । दक्षिणाभिमुखं कृष्णं दोलमानं सकृन्नराः॥ ४९
दृष्ट्वाऽपराधानिचयैर्मुक्तास्ते नात्र संशयः । निक्षिप्य जलपात्रे च मासे माधवसंज्ञके ॥ ५०
सौवर्णपात्रे रौप्ये वा ताम्रे वा मृन्मयेऽपि वा । तोयस्थं योऽर्चयेद्देवं शालग्रामसमुद्भवम् ॥ ५१
प्रतिमां वा महाभागे तस्य पुण्यं न गण्यते । दमनारोपणं कृत्वा श्रीविष्णौ च समर्पयेत् ॥ ५२
वैशाखे श्रावणे भाद्रे कर्तव्यं वा तदर्पणम् । पूर्वे पूर्वे तु वातस्थे(?)द्दमनादिषु कर्मसु ॥ ५३
प्रकर्तव्यं विधानेन त्वन्यथा निष्फलं भवेत् । वैशाखे च तृतीयायां जलमध्ये विशेषतः ॥ ५४

---

१ ञ. चलं । २ क. ञ. °तपत्रकैः । ३ झ. °त्वाऽभिधा° । ४ झ. °मर्चये° । ५ झ. °वैतिका° ।

अथवा मण्डले कुर्यान्मण्डपे वा बृहद्वने । सुगन्धचन्दनेनाङ्गं सुपुष्टं च दिने दिने ॥ ५५
यथाप्रयत्नतः कुर्यात्कृशाङ्गस्यैव पुष्टितम् । चन्दनागरुह्रीवेरं कृष्णं कुङ्कुमरोचना ॥ ५६
जटामांसी मुरा चैव विष्णोर्गन्धाष्टकं विदुः । तैश्च गन्धयुतैश्चापि विष्णोरङ्गानि लेपयेत् ॥ ५७
घृष्टं च तुलसीकाष्ठं कर्पूरागरुयोगतः । अथवा केशरैर्योज्यं हरिचन्दनमच्युते ॥ ५८
यात्राकाले तु ये कृष्णं भक्त्या पश्यन्ति मानवाः । न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ ५९
सुगन्धमिश्रितैस्तोयैर्देवदेवं गलन्ति ये । अथवा पुष्पमध्ये तु स्थापयेज्जगदीश्वरम् ॥ ६०
वृन्दावनं तत्र गत्वा ह्युपस्कृत्य फलानि च । विष्णुभक्तेन योग्येन भोजयेत्तदशेषतः ॥ ६१
नारीकेलफलं बीजं कोशं चोद्धृत्य दापयेत् । घोण्टाफलं च पनसं कोशमुद्धृत्य दापयेत् ॥ ६२
दध्ना विमिश्रितं चान्नं घृतेनाऽऽप्लुत्य दापयेत् । [*पाचितं पिष्टकं पूपमष्टादशघृतेन च ॥ ६३
तिलैश्च तिलसंमिश्रैः फलं पक्वं प्रदापयेत्] । यद्यदेवाऽऽत्मनः प्रीतं तत्तदीशाय दापयेत् ॥ ६४
दत्त्वा नैवेद्यवस्त्रादि नाऽऽददीत कथंचन । त्यक्तं च विष्णुमुद्दिश्य तद्भक्तेभ्यो विशेषतः ॥ ६५
इति ते कथितं किंचित्समासेन महेश्वरि । गोप्तव्यं च प्रयत्नेन स्वयोनिरिव पार्वति ॥ ६६

श्रीकृष्णरूपगुणवर्णनशास्त्रवर्ग-
बोधाधिकार इह चेदलमन्यपाठैः ।
तत्प्रेमभावरसभक्तिविलासनाम-
हारेषु चेत्खलु मनः किमु कामिनीभिः ॥ ६७
तं चेतसा प्रभजतां व्रजबालकेन्द्रं
वृन्दावनं क्षितितलं यमुनाजलं च ।
तल्लोकनाथपदपङ्कजधूलिमिश्रे
लिप्तं वपुः किल वृथाऽगरुचन्दनाद्यैः ॥ ६८

इति श्रीमहापुराणे पाद्मे पातालखण्ड उमामहेश्वरसंवादे वृन्दावनमाहात्म्येऽशीतितमोऽध्यायः ॥ ८० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६०९१

---

अथैकाशीतितमोऽध्यायः ।

---

ऋषय ऊचुः—

सूत जीव चिरं साधो श्रीकृष्णचरितामृतम् । त्वया प्रकाशितं सर्वं भक्तानां भवतारणम् ॥ १
श्रीकृष्णलीलां निखिलां ब्रूहि दैनंदिनीं विभो । ययाऽऽकर्णितया साधो कृष्णे भक्तिर्विवर्धते २
गुरोः शिष्यस्य मन्त्रस्य विधानं लक्षणं पृथक् । वदास्माकं महाभाग त्वं हि नः परमः सुहृत् ३

सूत उवाच—

एकदा यमुनातीरे समासीनं जगद्गुरुम् । नारदः प्रणिपत्याऽऽह देवदेवं सदाशिवम् ॥ ४

नारद उवाच—

देवदेव महादेव सर्वज्ञ जगदीश्वर । भगवद्धर्मतत्त्वज्ञ कृष्णमन्त्रविदां वर ॥ ५
कृष्णमन्त्रा मया लब्धास्त्वत्तो ये च पितुः परे । ते सर्वे साधिता यत्नान्मन्त्रराजादयो मया ॥६

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ञ. ड. पुस्तकस्थः ।

बहुवर्षसहस्रैस्तु शाकमूलफलाशिना । शुष्कपर्णाम्बुवाँ*य्वादिभोजिना च निराशिना ॥ ७
स्त्रीणां संदर्शनालापवर्जिना भूमिशायिना । कामादि[1]षड्गणं जित्वा बाह्येन्द्रियं नियम्य च ॥ ८
एवं कृतेऽपि नैवाऽऽत्मा संतुष्टो मम शंकर । तद्ब्रूहि यत्प्रसिध्येत संस्काराद्यैर्विना प्रभो ॥ ९
सकृदुच्चारणात्पूर्णां ददाति फलमुत्तमम् । यदि योग्योऽस्मि देवेश तदा मे कृपया वद ॥ १०
शिव उवाच—
साधु पृष्टं महाभाग त्वया लोकहितैषिणा । सुगोप्यमपि वक्ष्यामि मन्त्रचिन्तामणिं तव ॥ ११
रहस्यानां रहस्यं यद्गुह्यानां गुह्यमुत्तमम् । न मया कथितं देव्यै नाग्रजेभ्यः पुरा तव ॥ १२
वक्ष्यामि युगलं तुभ्यं कृष्णमन्त्रमनुत्तमम् । मन्त्रचिन्तामणिर्नाम युगल(लं) द्वयमेव च ॥ १३
पर्याया अस्य मन्त्रस्य तथा पञ्चपदीति च । गोपीजनपदं वल्लभा[2]न्तं तु चरणानिति ॥ १४
शरणं च प्रपद्ये चे[3]त्येष पञ्चपदात्मकः । मन्त्रचिन्तामणिः प्रोक्तः षोडशा[4]र्णो महामनुः ॥ १५
नमो गोपीजनेत्युक्त्वा वल्लभाभ्यां वदेत्ततः । पदद्वयात्मको मन्त्रो दशार्णः खलु कथ्यते ॥ १६
एतां पञ्चपदीं जप्त्वा श्रद्धयाऽश्रद्धया सकृत् । कृष्णप्रियाणां सांनिध्यं गच्छत्येव न संशयः १७
न पुरश्चरणापेक्षा नास्य न्यासविधिक्रमः । न देशकालनियमो नारिमित्रादिशोधनम् ॥ १८
सर्वेऽधिकारिणश्चात्र चाण्डालान्ता मुनीश्वर । स्त्रियः शूद्रादयश्चापि जडमूकान्ध[5]पुङ्गवाः ॥ १९
अन्ये हूणाः किराताश्च पुलिन्दाः पुष्क(ल्क)सास्तथा । आभीरा यवनाः कङ्काः खशाद्याः पापयोनयः
दम्भाहंकारपरमाः पापाः पैशुन्यतत्पराः । गोब्राह्मणादिहन्तारो महोपपातकान्विताः ॥ २१
ज्ञानवैराग्यरहिताः श्रवणादिविवर्जिताः । एते चान्ये च सर्वे स्युर्मनोरस्याधिकारिणः ॥ २२
यदि भक्तिर्भवेदेषां कृष्णे सर्वेश्वरेश्वरे । तदाऽधिकारिणः सर्वे नान्यथा मुनिसत्तम ॥ २३
याज्ञिको दाननिरतः सर्वतन्त्रोपसेवकः । सत्यवादी यतिर्वाऽपि वेदवेदाङ्गपारगः ॥ २४
ब्रह्मनिष्ठः कुलीनो वा तपस्वी व्रततत्परः । अत्राधिकारी न भवेत्कृष्णभक्तिविवर्जितः ॥ २५
तस्माद्दुरावभक्ताय [+कृतघ्नाय न मानिने । न च श्रद्धाविहीनाय वक्तव्यं नास्तिकाय च २६
नाशुश्रूषुं प्रति ब्रूयान्नासंवत्सरसेविनम् । श्रीकृष्णेऽनन्यभक्ताय] दम्भलोभविवर्जिते ॥ २७
कामक्रोधविमुक्ताय देयमेतत्प्रयत्नतः । ऋषिश्चैवाहमेवास्य गायत्री छन्द उच्यते ॥ २८
देवता वल्लवीकान्तो मन्त्रस्य परिकीर्तितः । सप्रियस्य हरेर्दास्ये विनियोग उदाहृतः ॥ २९
आचक्राद्यैस्तथा मन्त्रैः पञ्चाङ्गानि प्रकल्पयेत् । अथवाऽपि स्वबीजेन कराङ्गन्यासकौ चरेत् ३०
मन्त्रस्य प्रथमो वर्णो बिन्दुना मूर्ध्नि भूषितः । गमित्येवं भवेद्बीजं नमः शक्तिरिहोदिता ॥ ३१
अन्तिमार्णैर्दशाङ्गानि तैरेव च तयाऽ(थाऽ)र्चनम् । गन्धपुष्पादिभिस्तच्च जलैरेवाप्यसंभवे ॥ ३२
न्यासपूर्वं विधानेन कर्तव्यं हरितुष्टये । अत एवास्य मन्त्रस्य न्यासाद्यन्ये वदन्ति च ॥ ३३
सकृदुच्चारणाच्चैव कृतकृत्यत्वदायिनः । तथाऽपि दशधा नित्यं जपाद्यर्थं प्रविन्यसेत् ॥ ३४
अथ ध्यानं प्रवक्ष्यामि मन्त्रस्यास्य द्विजोत्तम । पीताम्बरं घनश्यामं द्विभुजं वनमालिनम् ॥ ३५
बर्हिबर्हकृतापीडं शशिकोटिनिभाननम् । घूर्णायमाननयनं कर्णिकारावतंसिनम् ॥ ३६

---

* वाग्वादीति भाति । + एतच्चिह्नान्तर्गतः पाठः क. ख. ग. च. छ. ञ. ङ. पुस्तकस्थः ।

---

१ क. ख. घ. अ. °षड्गुणं ।२ झ. ञ. °भान्ते तु । ३ ञ. °द्येतेत्ये° । ४ ख. ङ. °शार्णं उदाहृतः । न° । ५ झ. ङ. °यावृन्दमध्यं ग° । ६ झ. °यपङ्गवाः । अ° ।

अभितश्चन्दनेनाथ मध्ये कुङ्कुमबिन्दुना। रचितं तिलकं भाले बिभ्रतं मण्डलाकृतिम् ॥ ३७
तरुणादित्यसंकाशं कुण्डलाभ्यां विराजितम्। घर्माम्बुकर्ण(णि)काराजद्दर्पणाभकपोलकम् ॥ ३८
प्रियास्यन्यस्तनयनं नी(ली)लया चोन्नतभ्रुवम्। अग्रभागन्यस्तमुक्ताविस्फुरत्प्रोच्चनासिकम्॥ ३९
दशनज्योत्स्नया राजत्पक्कबिम्बफलाधरम्। केयूराङ्गदसद्रत्नमुद्रिकाभिर्लसत्करम् ॥ ४०
बिभ्रतं मुरलीं वामे पाणौ पद्मं तथैव च। काञ्चीदामस्फुरन्मध्यं नूपुराभ्यां लसत्पदम् ॥ ४१
रतिकेलिरसावेशचपलं चपलेक्षणम्। हसन्तं प्रियया सार्धं हासयन्तं च तां मुहुः ॥ ४२
इत्थं कल्पतरोर्मूले रत्नसिंहासनोपरि। वृन्दारण्ये स्मरेत्कृष्णं संस्थितं प्रियया सह ॥ ४३
वामपार्श्वे स्थितां तस्य राधिकां च स्मरेत्ततः। नीलचोलकसंवीतां तप्तहेमसमप्रभाम् ॥ ४४
पट्टाञ्चलेनाऽऽवृतार्धसुस्मेराननपङ्कजाम्। कान्तवक्त्रे न्यस्तनेत्रां चकोरीव च(च)लेक्षणाम् ॥ ४५
अङ्गुष्ठतर्जनीभ्यां च निजप्रियमुखाम्बुजे। अर्पयन्तीं पूगफलीं पर्णचूर्णसमन्विताम् ॥ ४६
मुक्ताहारस्फुरच्चारुपीनोन्नतपयोधराम्। क्षीणमध्यां पृथुश्रोणीं किङ्किणीजालमण्डिताम् ॥ ४७
रत्नताटङ्ककेयूरमुद्रावलयधारिणीम्[1]। लसत्कटकमञ्जीररत्नपादाङ्गुलीयकाम् ॥ ४८
लावण्यसारमुग्धाङ्गीं सर्वावयवसुन्दरीम्। आनन्दरससंमग्नां प्रसन्नां नवयौवनाम् ॥ ४९
सख्यश्च तस्या विप्रेन्द्र तत्समानवयोगुणाः। तत्सेवनपरा भाव्याश्चामरव्यञ्ज(ज)नादिभिः॥५०
[*अथ तुभ्यं प्रवक्ष्यामि मन्त्रार्थं शृणु नारद। बहिरङ्गैः प्रपञ्चस्य स्वांशैर्मायादिशक्तिभिः]॥५१
अन्तरङ्गैस्तथा नित्यं विभूतैस्तैश्चिदादिभिः। गोपनादुच्यते गोपी राधिका कृष्णवल्लभा ॥ ५२
देवी कृष्णमयी प्रोक्ता राधिका परदेवता। सर्वलक्ष्मीस्वरूपा सा कृष्णाह्लादस्वरूपिणी ॥ ५३
ततः सा प्रोच्यते विप्र ह्लादिनीति मनीषिभिः। तत्कलाकोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिकाः॥
सा तु साक्षान्महालक्ष्मीः कृष्णो नारायणः प्रभुः। नैतयोर्विद्यते भेदः स्वल्पोऽपि मुनिसत्तम ॥
इयं दुर्गा हरी रुद्रः कृष्णः शक्र इयं शची। सावित्रीयं हरिर्ब्रह्मा धूमोर्णाऽसौ[2] यमो हरिः ॥ ५६
बहुना किं मुनिश्रेष्ठ विना ताभ्यां न किंचन। चिदचिल्लक्षणं सर्वं राधाकृष्णमयं जगत् ॥ ५७
इत्थं सर्वं तयोरेव विभूतिं विद्धि नारद। न शक्यते मया वक्तुं वर्षकोटिशतैरपि ॥ ५८
त्रैलोक्ये पृथिवी मान्या जम्बूद्वीपं ततो वरम्। तत्रापि भारतं वर्षं तत्रापि मथुरा पुरी ॥ ५९
तत्र वृन्दावनं नाम तत्र गोपीकदम्बकम्। तत्र राधासखीवर्गस्तत्रापि राधिका वरा ॥ ६०
सांनिध्याधिक्यतस्तस्या ह्याधिक्यं स्याद्यथोत्तरम्। पृथिवीप्रभृतीनां तु नान्यत्किंचिदिहोदितम्॥
सैषा हि राधिका गोपी जनस्तस्याः सखीगणः। तस्याः सखीसमूहस्य वल्लभौ प्राणनायकौ ६२
राधाकृष्णौ तयोः पादाः शरणं स्यादिहाऽऽश्रयम्। प्रपद्ये गतवानस्मि जीवोऽहं भृशदुःखितः॥
सोऽहं यः शरणं प्राप्तो मम तस्य यदस्ति च। सर्वं ताभ्यां तदर्थं हि तद्भोग्यं न ह्यहं मम॥ ६४
इत्यसौ कथितो विप्र मन्त्रस्यार्थः समासतः। युगलार्थस्तथा न्यासः प्रपत्तिः शरणागतिः ॥ ६५
आत्मार्पणमिमे पञ्च पर्यायास्ते मयोदिताः। अयमेव चिन्तनीयो दिवानक्तमतन्द्रितैः ॥ ६६

इति श्रीमहापुराणे पाद्मे पातालखण्डे वृन्दावनमाहात्म्यकथनं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६१५७

---

* धनुश्चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः।

---

१ क. ख. ङ. च. छ. ञ. ट. °मृ। रणत्क°। २ ञ. धूमौर्णाऽ°।

अथ त्र्यशीतितमोऽध्यायः ।

शिव उवाच—

अथ दीक्षाविधिं वक्ष्ये शृणु नारद तत्त्वतः । श्रवणादेव मुच्यन्ते विना तस्य विधानतः ॥ १
आविरञ्चाज्जगत्सर्वं विज्ञाय नश्वरं बुधः । आध्यात्मिकादित्रिविधदुःखमेवानुभूय च ॥ २
अनित्यत्वाच्च सर्वेषां सुखानां मुनिसत्तम । दुःखपक्षे विनिक्षिप्य तानि तेभ्यो विवर्जितैः (तः)॥
विरज्य संसृतेर्हानौ साधनानि विचिन्तयेत् । अनुत्तमसुखस्यापि संप्राप्तौ भृशनिर्वृतः ॥ ४
*संराणां दुष्करत्वं हि विज्ञाय च महामतिः । भृशमार्तस्ततो विप्रः श्रीगुरुं शरणं व्रजेत् ॥ ५
शान्तो विमत्सरः कृष्णे भक्तोऽनन्यप्रयोजनः । अनन्यसाधनः श्रीमान्क्रोधलोभविवर्जितः ॥ ६
श्रीकृष्णरसतत्त्वज्ञः कृष्णमन्त्रविदां वरः । कृष्णमन्त्राश्रयो नित्यं मन्त्रभक्तः सदा शुचिः ॥ ७
सद्धर्मशासको नित्यं सदाचारनियोजकः । संप्रदायी कृपापूर्णो विरागी गुरुरुच्यते ॥ ८
एवमादिगुणः प्रायः शुश्रूषुर्गुरुपादयोः । [†गुरौ नितान्तभक्तश्च मुमुक्षुः शिष्य उच्यते ॥ ९
यत्साक्षात्सेवनं तस्य प्रेम्णा भगवतो भवेत् । स मोक्षः प्रोच्यते प्राज्ञैर्वेदवेदाङ्गवेदिभिः ॥ १०
आश्रित्य च गुरोः पादौ निजवृत्तं निवेदयेत् । स संदेहानपाकृत्य बोधयित्वा पुनः पुनः ॥ ११
स्वपादप्रणतं शान्तं शुश्रूषुं निजपादयोः] । अतिहृष्टमनाः शिष्यं गुरुरध्यापयेन्मनुम् ॥ १२
चन्दनेन मृदा वाऽपि विलिखेद्बाहुमूलयोः । वामदक्षिणयोर्विप्र शङ्खचक्रे यथाक्रमम् ॥ १३
ऊर्ध्वपुण्ड्रं ततः कुर्याद्भालादिषु विधानतः । ततो मन्त्रद्वयं तस्य दक्षकर्णे विनिर्दिशेत् ॥ १४
मन्त्रार्थं च वदेत्तस्मै यथावदनुपूर्वशः । दासशब्दयुतं नाम धार्यं तस्य प्रयत्नतः ॥ १५
ततोऽतिभक्त्या सस्नेहं वैष्णवान्भोजयेद्बुधः । श्रीगुरुं पूजयेच्चापि वस्त्रालंकरणादिभिः ॥ १६
सर्वस्वं गुरवे दद्यात्तदर्धं वा महामुने । स्वदेहमपि निःक्षिप्य गुरौ स्थेयमकिंचनैः ॥ १७
य एतैः पञ्चभिर्विद्वान्संस्कारैः संस्कृतो भवेत् । दास्यभागी स कृष्णस्य नान्यथा कल्पकोटिभिः
[+अङ्कनं तूर्ध्वपुण्ड्रश्च मन्त्रो नामविधारणम् । पञ्चमो याग इत्युक्ताः संस्काराः पूर्वसूरिभिः] १९
अङ्कनं शङ्खचक्राद्यैः सच्छिद्रः पुण्ड्र उच्यते । दासशब्दयुतं नाम मन्त्रो युगलसंज्ञकः ॥ २०
गुरुवैष्णवयोः पूजा याग इत्यभिधीयते । एते परमसंस्कारा मया ते परिकीर्तिताः ॥ २१
अथ तुभ्यं प्रपन्नानां धर्मान्वक्ष्यामि नारद । यानास्थाय गमिष्यन्ति हरिधाम नराः कलौ २२
इत्थं गुरोर्लब्धमन्त्रो गुरुभक्तिपरायणः । सेवमानो गुरुं नित्यं [*तत्कृपां भावयेत्सुधीः ॥ २३
सतां धर्मास्ततः शिक्षेत्प्रपन्नानां विशेषतः । स्वेष्टदेवधिया नित्यं] वैष्णवान्परितोषयेत् ॥ २४
ताडनं भर्त्सनं कामी भोग्यत्वेन यथा स्त्रियः(याः) । गृह्णाति वैष्णवानां च तत्तद्ग्राह्यं तथा बुधैः
ऐहिकामुष्मिकी चिन्ता नैव कार्या कदाचन । ऐहिकं तु सदा भाव्यं पूर्वाचरितकर्मणा ॥ २६
आमुष्मिकं तथा कृष्णः स्वयमेव करिष्यति । अतो हि तत्कृते त्याज्यः प्रयत्नः सर्वथा नरैः:२७
सर्वोपायपरित्यागः कृष्णीयात्मतयाऽर्चनम् । सुचिरं प्रोषिते कान्ते यथा पतिपरायणा ॥ २८
प्रियानुरागिणी दीना तस्य सङ्गैककाङ्क्षिणी । तद्गुणान्भावयेन्नित्यं गायत्यभिशृणोति च ॥२९

* अत्र कर्मणामिति पाठोऽपेक्षित इति भाति । † धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ञ. ड. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ड. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ.च. छ.ञ.ड. पुस्तकस्थः ।

१ ञ. सराणां २ ञ. °क्रादि स° ।

श्रीकृष्णगुणलीलादेः स्मरणादि तथाऽऽचरेत् । न पुनः साधनत्वेन कार्यं तत्तु कदाचन ॥ ३०
चिरं प्रोष्याऽऽगतं कान्तं प्राप्य कान्ता धिया यथा। चुम्बन्ती चाऽऽश्लिष्यन्ती च नेत्रान्तेन पिबन्त्यपि
ब्रह्मानन्दे गते वाऽमुं सेवते परया मुदा। श्रीमदर्चावतारेण तथा परिचरेद्धरिम् ॥ ३२
अनन्यशरणो नित्यं तथैवानन्यसाधनः । अनन्यसाधनार्थी च स्यादनन्यप्रयोजनः ॥ ३३
नान्यं च पूजयेद्देवं न नमेत्तं स्मरेन्न च । न च पश्येन्न गायेच्च न च निन्देत्कदाचन ॥ ३४
नान्योच्छिष्टं च भुञ्जीत नान्यशेषं च धारयेत् । अवैष्णवानां संभाषावन्दनादि विवर्जयेत् ॥ ३५
शिवैष्णवयोर्निन्दां शृणुयान्न कदाचन । कर्णौ पिधाय गन्तव्यं शक्तो दण्डं समाचरेत् ॥ ३६
आश्रित्य चातकीं वृत्तिं देहपातावधि द्विज । द्वयस्यार्थे भावयित्वा स्थेयमित्येव मे मतिः ॥ ३७
सरःसमुद्रनद्यादीन्विहाय चातको यथा । तृषितो म्रियते चापि याचते वा पयोधरम् ॥ ३८
एवमेव प्रयत्नेन साधनानि विचिन्तयेत् । स्वेष्टदेवौ सदा याच्यौ गतिस्तौ मे भवेदिति ॥ ३९
स्वेष्टदेवतदीयानां गुरोरपि विशेषतः । आनुकूल्ये सदा स्थेयं प्रातिकूल्यं विवर्जयेत् ॥ ४०
सकृत्प्रपन्नो वक्ष्यामि कल्याणगुणतां तयोः । विचिन्त्य विश्वसेदेतौ मामिमावुद्धरिष्यतः ॥ ४१
संसारसागरान्नाथौ पुत्रमित्रगृहाकुलात् । गोप्तारौ मे युवामेव प्रपन्नभयभञ्जनौ ॥ ४२
योऽहं ममास्ति यत्किंचिदिह लोके परत्र च । तत्सर्वं भवतोरद्य चरणेषु समर्पितम् ॥ ४३
अहमस्म्यपराधानामालयस्त्यक्तसाधनः । अगतिश्च ततो नाथौ भवन्तावेव मे गतिः ॥ ४४
तवास्मि राधिकाकान्त कर्मणा मनसा गिरा । कृष्णकान्ते तवैवास्मि युवामेव गतिर्मम ॥ ४५
शरणं वां प्रपन्नोऽस्मि करुणानिकराकरौ । प्रसादं कुरुतं दास्यं मयि दुष्टेऽपराधिनि ॥ ४६
इत्येवं जपता नित्यं स्थातव्यं पद्य(द)पङ्कजम् । अचिरादेव तद्दास्यमिच्छता मुनिसत्तम ॥ ४७
बाह्यधर्मा मया ह्येते संक्षेपेणोपवर्णिताः । आन्तरः परमो धर्मः प्रपन्नानामथोच्यते ॥ ४८
कृष्णप्रियासखीभावं समाश्रित्य प्रयत्नतः । तयोः सेवां प्रकुर्वीत दिवानक्तमतन्द्रितः ॥ ४९
उक्तो मन्त्रस्तदङ्गानि तथा तस्याधिकारिणः । तद्धर्माश्च तथा तेभ्यः फलं मन्त्रस्य नारद ॥ ५०
अनुतिष्ठ त्वमप्येतत्तयोर्दास्यमवाप्स्यसि । स्वाधिकारक्षये विप्र संदेहो नात्र कश्चन ॥ ५१
सकृन्मात्रप्रपन्नाय तवास्मीत्यभियाचते । निजदास्यं हरिर्दद्यान्न मेऽत्रास्ति विचारणा ॥ ५२
अत्र ते वर्णयिष्यामि रहस्यं परमाद्भुतम् । श्रुतं पूर्वं मया कृष्णात्साक्षाद्भगवतः किल ॥ ५३
एष ते कथितो धर्मो ह्यान्तरो मुनिसत्तम । गुह्याद्गुह्यतमो ह्येष गोपनीयः प्रयत्नतः ॥ ५४
मन्त्ररत्नमहं पूर्वं जपन्कैलासमूर्धनि । ध्यायन्नारायणं देवमवसं गहने वने ॥ ५५
ततस्तु भगवांस्तुष्टः प्रादुरासीन्ममाग्रतः । व्रियतां वर इत्युक्ते मयाऽप्युद्घाट्य लोचने ॥ ५६
दृष्टो देवः प्रियासार्धं संस्थितो गरुडोपरि । प्रणिपत्य मुहुश्चैवमवदं च श्रियः पतिम् ॥ ५७
यद्रूपं ते कृपासिन्धो परमानन्ददायकम् । सर्वानन्दाश्रयं नित्यं मूर्तिमत्सर्वतोऽधिकम् ॥ ५८
निर्गुणं निष्क्रियं शान्तं तद्ब्रह्मेति विदुर्बुधाः । तदहं द्रष्टुमिच्छामि चक्षुर्भ्यां परमेश्वर ॥ ५९
ततो मामाह भगवान्प्रपन्नं कमलापतिः । तदद्य द्रक्ष्यसे रूपं यत्ते मनसि काङ्क्षितम् ॥ ६०
यमुनापश्चिमे कूले गच्छ वृन्दावनं मम । इत्युक्त्वाऽन्तर्दधे देवः प्रियासार्धं जगत्पतिः ॥ ६१
अहमप्यागतस्तर्हि यमुनायास्तटं शुभम् । तत्र कृष्णमपश्यं च सर्वदेवेश्वरेश्वरम् ॥ ६२
गोपवेषधरं कान्तं किशोरवयसाऽन्वितम् । प्रियास्कन्धे सुविन्यस्तवामहस्तमनोहरम् ॥ ६३

१ झ. म. वसते ।

हसन्तं तां हासयन्तं मध्ये गोपीकदम्बके । स्निग्धमेघसमाभासं कल्याणगुणमन्दिरम् ॥ ६४
प्रहस्य च ततः कृष्णो मामाहामृतभाषणः । अहं ते दर्शनं यातो ज्ञात्वा रुद्र तवेप्सितम् ॥ ६५
यदद्य मे त्वया दृष्टमिदं रूपमलौकिकम् । घनीभूतामलप्रेम सच्चिदानन्दविग्रहम् ॥ ६६
नीरूपं निर्गुणं व्यापि क्रियाहीनं परात्परम् । वदन्त्युपनिषत्संघा इदमेव ममानघ ॥ ६७
प्रकृत्युत्थगुणाभावादनन्तत्वात्तथेश्वरम् । असिद्धत्वान्मद्गुणानां निर्गुणं मां वदन्ति हि ॥ ६८
अदृश्यत्वान्ममैतस्य रूपस्य चर्मचक्षुषा । अरूपं मां वदन्त्येते वेदाः सर्वे महेश्वर ॥ ६९
व्यापकत्वाच्चिदंशेन ब्रह्मेति च विदुर्बुधाः । अकर्तृत्वात्प्रपञ्चस्य निष्क्रियं मां वदन्ति हि ॥ ७०
मायागुणैर्यतो मेंऽशाः कुर्वन्ति सर्जनादिकम् । न करोमि स्वयं किंचित्सृष्ट्यादिकमहं शिव ॥ ७१
अहमासां महादेव गोपीनां प्रेमविह्वलः । क्रियान्तरं न जानामि नाऽऽत्मानमपि नारद ॥ ७२
विहराम्यनया नित्यमस्याः प्रेमवशीकृतः । इमां तु मत्प्रियां विद्धि राधिकां परदेवताम् ॥ ७३
अस्याश्च परितः पश्चात्सख्यः शतसहस्रशः । नित्याः सर्वा इमा रुद्र यथाऽहं नित्यविग्रहः ॥ ७४
सखायः पितरो गोपा गावो वृन्दावनं मम । सर्वमेतन्नित्यमेव चिदानन्दरसात्मकम् ॥ ७५
इदमानन्दकन्दाख्यं विद्धि वृन्दावनं मम । यस्मिन्प्रवेशमात्रेण न पुनः संसृतिं विशेत् ॥ ७६
मद्वनं प्राप्य यो मूढः पुनरन्यत्र गच्छति । स आत्महा महादेव सत्यं सत्यं मयोदितम् ॥ ७७
वृन्दावनं परित्यज्य नैव गच्छाम्यहं क्वचित् । निवसाम्यनया सार्धमहमत्रैव सर्वदा ॥ ७८
इत्येवं सर्वमाख्यातं यत्ते रुद्र हृदि स्थितम् । कथयस्व ममेदानीं किमन्यच्छ्रोतुमिच्छसि ॥ ७९
ततस्तमब्रवं देवमहं च मुनिसत्तम । ईदृशस्त्वं कथं लभ्यस्तमुपायं वदस्व मे ॥ ८०
ततो मामाह भगवान्साधु रुद्र तवोदितम् । अतिगुह्यतमं ह्येतद्गोपनीयं प्रयत्नतः ॥ ८१
सकृदावां प्रपन्नो यस्त्यक्तोपाय *उपासते । गोपीभावेन देवेश स मामेति न चेतरः ॥ ८२
सकृदावां प्रपन्नो वा मत्प्रियामेकिकां सुत । सेवतेऽनन्यभावेन स मामेति न संशयः ॥ ८३
यो मामेव प्रपन्नश्च मत्प्रियां न महेश्वर । न कदाऽपि स चाऽऽप्नोति मामेवं ते मयोदितम् ॥ ८४
सकृदेव प्रपन्नो यस्तवास्मीति वदेदपि । साधनेन विनाऽप्येवमामाप्नोति न संशयः ॥ ८५
तस्मात्सर्वप्रयत्नेन मत्प्रियां शरणं व्रजेत् । आश्रित्य मत्प्रियां रुद्र मां वशीकर्तुमर्हसि ॥ ८६
इदं रहस्यं परमं मया ते परिकीर्तितम् । त्वयाऽप्येतन्महादेव गोपनीयं प्रयत्नतः ॥ ८७
त्वमप्येतां समाश्रित्य राधिकां मम वल्लभाम् । जपन्मे युगुलं मन्त्रं सदा तिष्ठ मदालये ॥ ८८

शिव उवाच—

इत्युक्त्वा दक्षिणे कर्णे मम कृष्णो दयानिधिः । उपदिश्य द्वयं ह्येतत्संस्कारांश्च[1] विधाय हि ॥ ८९
सगणोऽन्तर्दधे विप्र तत्रैव मम पश्यतः । अहमप्यत्र तिष्ठामि तदारभ्य निरन्तरम् ॥ ९०
सर्वमेतन्मया तुभ्यं साङ्गमेव प्रकीर्तितम् । अधुना वद विप्रेन्द्र किं भूयः श्रोतुमिच्छसि ॥ ९१

इति श्रीमहापुराणे पाद्मे पातालखण्डे वृन्दावनमाहात्म्ये द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६२४८

* गणकार्यस्यानित्यतया शब्लुकोऽभावः ।

१ ख. ङ. च. छ. ढ. पश्य सख्यः । २ ख. सर्वथा नात्र संशयः । द्वं ।

अथ त्र्यशीतितमोऽध्यायः ।

नारद उवाच—
भगवन्सर्वमाख्यातं यद्यत्पृष्टं मया गुरो । अधुना श्रोतुमिच्छामि भव मार्गमनुत्तमम् ॥ १
सदाशिव उवाच—
साधु पृष्टं त्वया विप्र सर्वलोकहितैषिणा । रहस्यमपि वक्ष्यामि तन्मे निगदतः शृणु ॥ २
दासाः सखायः पितरौ प्रेयस्यश्च हरेरिह । सर्वे नित्या मुनिश्रेष्ठ तत्तुल्या गुणशालिनः ॥ ३
यथा प्रकटलीलायां पुराणेषु प्रकीर्तिताः । तथा ते नित्यलीलायां सन्ति वृन्दावने भुवि ॥ ४
गमनागमने नित्यं करोति वनगोष्ठयोः । गोचारणं वयस्यैश्च विनाऽसुरविघातनम् ॥ ५
परकीयाभिमानिन्यस्तथा तस्य प्रिया जनाः । प्रच्छन्नेनैव भावेन रमयन्ति निजप्रियम् ॥ ६
आत्मानं चिन्तयेत्तत्र तासां मध्ये मनोरमाम् । रूपयौवनसंपन्नां किशोरीं प्रमदाकृतिम् ॥ ७
नानाशिल्पकलाभिज्ञां कृष्णभोगानुरूपिणीम् । प्रार्थितामपि कृष्णेन तत्र भोगपराङ्मुखीम् ॥ ८
राधिकानुचरीं नित्यं तत्सेवनपरायणाम् । कृष्णादप्यधिकं प्रेम राधिकायां प्रकुर्वतीम् ॥ ९
प्रीत्याऽनुदिवसं यत्नात्तयोः संगमकारिणीम् । तत्सेवनसुखाह्लादभावेनातिसुनिर्वृताम् ॥ १०
इत्यात्मानं विचिन्त्यैव तत्र सेवां समाचरेत् । ब्राह्मं मुहूर्तमारभ्य यावत्स्यात्तु महानिशा ॥ ११
नारद उवाच—
हरेर्दैनंदिनीं लीलां श्रोतुमिच्छामि तत्त्वतः । लीलामजानता सेव्यो मनसा तु कथं हरिः ॥ १२
श्रीसदाशिव उवाच—
नाहं जानामि तां लीलां हरेर्नारद तत्त्वतः । वृन्दादेवीमितो गच्छ सा ते लीलां प्रवक्ष्यति॥१३
अविदूर इतः स्थानात्केशी(शि?)तीर्थसमीपतः । सखीसंघवृता साऽऽस्ते गोविन्दपरिचारिका ॥
सूत उवाच—
इत्युक्तस्तं परिक्रम्य हृष्टो नत्वा पुनः पुनः । वृन्दाश्रमं जगामाथ नारदो मुनिसत्तमः ॥ १५
वृन्दाऽपि नारदं दृष्ट्वा प्रणम्य च पुनः पुनः । उवाच च मुनिश्रेष्ठ कथमत्राऽऽगतिस्तव ॥ १६
नारद उवाच—
त्वत्तो वेदितुमिच्छामि नैत्यकं चरितं हरेः । तदादितो मम ब्रूहि यदि योग्योऽस्मि शोभने ॥ १७
वृन्दोवाच—
रहस्यमपि वक्ष्यामि कृष्णभक्तोऽसि नारद । न प्रकाश्यं त्वया ह्येतद्गुह्याद्गुह्यतरं महत् ॥ १८
मध्यवृन्दावने रम्ये पञ्चाशत्कुञ्जमण्डिते । कल्पवृक्षनिकुञ्जे तु दिव्यरत्नमये गृहे ॥ १९
निद्रितौ तिष्ठतस्तल्पे निबिडालिङ्गितौ मिथः । मदाज्ञाकारिभिः पश्चात्पक्षिभिर्बोधितावपि ॥२०
गाढालिङ्गनजानन्दमाप्तौ तद्भङ्गकातरौ । नो मनः कुर्व(रु)तस्तल्पात्समुत्थातुं मनागपि ॥ २१
ततश्च सारिकासङ्घैः शुकाद्यैरपि तौ मुहुः । बोधितौ विविधैर्वाक्यैः स्वतल्पादुदतिष्ठताम् ॥ २२
उपविष्टौ ततो दृष्ट्वा सख्यस्तल्पे मुदाऽन्वितौ । प्रविश्य सेवां कुर्वन्ति तत्काले ह्युचितां तयोः२३
पुनश्च सारिकावाक्यैः स्वतल्पादुदतिष्ठताम् । गच्छतः स्वस्वभवनं भीत्युत्कण्ठाकुलौ ततः ॥ २४
प्रातश्च बोधितो मात्रा तल्पादुत्थाय सत्वरः । कृत्वा कृष्णो दन्तकाष्ठं बलदेवसमन्वितः ॥ २५

१ ङ. म. °नात्कीशी°।

मात्राऽनुमोदितो याति गोशालां सखिभिर्वृतः । राधाऽपि बोधिता विप्र वयस्याभिः स्वतल्पतः
उत्थाय दन्तकाष्ठादि कृत्वाऽभ्यङ्गं समाचरेत् । स्नानवेदिं ततो गत्वा स्नापिता सा निजालिभिः
भूषागृहं व्रजेत्तत्र वयस्या भूषयन्त्यपि । भूषणैर्विविधैर्दिव्यैर्गन्धमाल्यानुलेपनैः ॥ २८
ततः सखीजनैस्तस्याः श्वश्रूं संप्रार्थ्य यत्नतः । पक्तुमाहूयते स्वन्नं ससखी सा यशोदया ॥ २९

नारद उवाच—

कथमाहूयते देवी पाकार्थं तु यशोदया । सतीषु पाककर्त्रीषु रोहिणीप्रमुखास्वपि ॥ ३०

वृन्दोवाच—

पूर्वं दुर्वाससा दत्तो वरस्तस्यै महामुने । इति कात्यायनीवक्त्राच्छ्रुतमासीन्मया पुरा ॥ ३१
त्वया यत्पच्यते देवि तदन्नं मदनुग्रहात् । मिष्टं स्यादमृतस्पर्धि भोक्तुरायुष्करं तथा ॥ ३२
इत्याह्वयति तां नित्यं यशोदा पुत्रवत्सला । आयुष्मान्मे भवेत्पुत्रः स्वादुलोभात्तथा सती ॥ ३३
श्वश्र्वाऽनुमोदिता साऽपि हृष्टा नन्दालयं व्रजेत् । ससखीप्रकरा तत्र गत्वा पाकं करोति च ३४
कृष्णोऽपि दुग्ध्वा गाः काश्चिद्दोहयित्वा जनैःपराः । आगच्छति पितुर्वाक्यात्स्वगृहं सखिभिर्वृतः
अभ्यङ्गैर्मर्दनं कृत्वा दासैः संस्नापितो मुदा । धौतवस्त्रधरः स्रग्वी चन्दनाक्तकलेवरः ॥ ३६
[*द्विफालबद्धचिकुरैर्ग्रीवाभालोपरि स्फुरन् । चन्द्राकारस्फुरद्भालतिलकालकरञ्जितः ॥ ३७
कङ्कणाङ्गदकेयूररत्नमुद्रालसत्करः । ] मुक्ताहारस्फुरद्वक्षा मकराकृतिकुण्डलः ॥ ३८
मुहुराकारितो मात्रा प्रविशेद्भोजनालयम् । अवलम्ब्य करं सख्युर्बलदेवमनुव्रतः ॥ ३९
भुङ्क्तेऽथ विविधान्नानि भ्रात्रा च सखिभिर्वृतः । हासयन्विविधैर्हास्यैः सर्वांस्तैर्हसति स्वयम् ४०
इत्थं भुक्त्वा तथाऽऽचम्य दिव्यखट्वोपरि क्षणम् । विश्रम्य सेवकैर्दत्तं ताम्बूलं विभजन्नदन् ॥ ४१
गोपवेषधरः कृष्णो धेनुवृन्दपुरःसरः । व्रजवासिजनैः प्रीत्या सर्वैरनुगतः पथि ॥ ४२
पितरं मातरं नत्वा नेत्रान्तेनापि तं गणम् । यथायोग्यं तथा चान्यान्विनिवर्त्य वनं व्रजेत् ॥ ४३
वनं प्रविश्य सखिभिः क्रीडयित्वा क्षणं ततः । विहारैर्विविधैस्तत्र वने विक्रीडतो मुदा ॥ ४४
वञ्चयित्वा तु तान्सर्वान्द्वित्रैः प्रियसखैर्वृतः । संकेतकं व्रजेद्धर्षात्प्रियासंदर्शनोत्सुकः ॥ ४५
साऽपि कृष्णं च संयान्तं दृष्ट्वा स्वं गृहमागता । सूर्यादिपूजाव्याजेन कुसुमाहृतये तथा ॥ ४६
वञ्चयित्वा गुरून्याति प्रियसङ्गेच्छया वनम् । इत्थं तौ बहुयत्नेन मिलित्वा स्वगणैस्ततः ॥ ४७
वञ्चयित्वा च तान्सर्वान्वने विक्रीडतो मुदा । दोलां चैव समारूढौ सखिभिर्दोलितौ क्वचित् ४८
क्वचिद्वेणुं करस्रस्तं प्रियया४ऽपहृतं हरिः । अन्वेषयन्नुपालब्धो विप्रलब्धः प्रियागणैः ॥ ४९
हसितैर्बहुधा ताभिर्हासितस्तत्र तिष्ठति । वसन्तवायुना जुष्टं वनखण्डं क्वचिन्मुदा ॥ ५०
प्रविश्य चन्दनाम्भोभिः कुङ्कुमादिजलैरपि । निषिञ्चतो यन्त्रमुक्तैस्तत्पङ्कैर्लिम्पतो मिथः ॥ ५१
सख्योऽप्येवं निषिञ्चन्ति ताश्च तौ सिञ्चतः पुनः । वसन्तवायुजुष्टेषु वनखण्डेषु सर्वतः ॥ ५२
तत्तत्कालोचितैर्नानाविहारैः सगणौ द्विज । श्रान्तौ क्वचिद्वृक्षमूलमासाद्य मुनिसत्तम ॥ ५३

* एतच्चिह्नान्तर्गतः पाठः ख. ङ. च छ. ञ. ढ. पुस्तकस्थः ।

१ ञ. विबुधा° । २ ख. ङ. च. छ. ढ. °ष्णं वनं या° । ३ ख ङ. च. छ. ढ. °तः । विहारैर्विविधैस्तत्र वने । ४ञ. प्रियाय कुरुते हरिः । अ° । ५ ञ. °हृनुते ह° । ६ ख. °नः । मन्देन वायुना जुष्टौ क्रीडतो वनराजिषु । त° । ७ क. ञ. °गणैर्युतः । श्रा° ।

उपविश्याऽऽसने दिव्ये मधुपानं प्रचक्रतुः । ततो मधुमदोन्मत्तौ निद्रया मीलितेक्षणौ ॥ ५४
मिथः पाणी समालम्ब्य कामबाणवशं गतौ । रिरंसू विशतः कुञ्जं स्खलद्वाङ्मनसौ पथि ॥ ५५
क्रीडतश्च ततस्तत्र करिणीयूथपौ यथा । सख्योऽपि मधुभिर्मत्ता निद्रया पीडितेक्षणाः ॥ ५६
अभितो मञ्जुकुञ्जेषु सर्वा एवापि शिश्यिरे । पृथगेकेन वपुषा कृष्णोऽपि युगपद्विभुः ॥ ५७
सर्वासां संनिधिं गच्छेत्प्रियया प्रेरितो मुहुः । रमयित्वा च ताः सर्वाः करिणीर्गजराडिव ॥ ५८
प्रियया च तथा ताभिः क्रीडार्थं च सरो व्रजेत् । जलसेकैर्मिथस्तत्र क्रीडतः सगणौ ततः ॥ ५९
वासःस्रक्चन्दनैर्दिव्यैर्भूषणैरपि भूषितौ । तत्रैव सरसस्तीरे दिव्यरत्नमये गृहे ॥ ६०
प्रागेव फलमूलानि कल्पितानि मया मुने । हरिस्तु प्रथमं भुक्त्वा कान्तया परिवेष्टितः ॥ ६१
द्वित्राभिः सेवितो गच्छेच्छय्यां पुष्पविनिर्मिताम् । ताम्बूलैर्व्यजनैस्तत्र पादसंवाहनादिभिः ६२
सेव्यमानो हसंस्ताभिर्मोदते प्रेयसीं स्मरन् । राधिकाऽपि हरौ सुप्ते सगणा मुदितान्तरा ॥ ६३
अपि तत्र गतप्राणा तदुच्छिष्टं भुनक्ति च । किंचिदेव ततो भुक्त्वा व्रजेच्छय्यानिकेतने ॥ ६४
द्रष्टुं कान्तमुखाम्भोजं चकोरीव निशाकरम् । ताम्बूलचर्वितं तस्य तत्रत्याभिर्निवेदितम् ॥ ६५
ताम्बूलान्यपि चाश्नाति विभजन्ती प्रियालिषु । कृष्णोऽपि तासां शुश्रूषुः स्वच्छन्दं भाषितं मिथः
प्राप्तनिद्र इवाऽऽभाति विनिद्रोऽपि पटावृतः । ताश्च क्ष्वेलां क्षणं कृत्वा कुतश्चिदनुमानतः ॥ ६७
व्युदस्य रसनां दद्भिः पश्यन्त्योऽन्योन्यमाननम् । लीना इव लज्जया स्युः क्षणमूचुर्न किंचन ६८
क्षणादेव ततो वस्त्रं दूरीकृत्य तदङ्गतः । साधु निद्रां गतोऽसीति हासयन्त्यो हसन्ति च ॥ ६९
एवं तौ विविधैर्हास्यै रममाणौ गणैः सह । अनुभूय क्षणं निद्रासुखं च मुनिसत्तम ॥ ७०
उपविश्याऽऽसने दिव्ये सगणौ विस्तृते मुदा । पणीकृत्य मिथो हारचुम्बाश्लेषपरिच्छदान् ॥ ७१
अक्षैर्विक्रीडतः प्रेम्णा नर्मालापपुरःसरम् । पराजितोऽपि प्रियया जितोऽहमिति वै ब्रुवन् ॥ ७२
हारादिग्रहणे तस्याः प्रवृत्तस्ताड्यते तया । तयैवं ताडितः कृष्णः करेणाऽऽस्यसरोरुहे ॥ ७३
विषण्णमानसो भूत्वा गन्तुं च कुरुते मतिम् । जितोऽस्मि चेत्त्वया देवि गृह्यतां यत्पणीकृतम् ७४
चुम्बनादि मया दत्तमित्युक्त्वा सा तथाऽऽचरेत् । कौटिल्यं तद्भ्रुवोर्द्रष्टुं श्रोतुं तद्भर्त्सनं वचः ॥
ततः सारिशुकानां च श्रुत्वा वागाहवं मिथः । निर्गच्छतस्ततः स्थानाद्गन्तुकामौ गृहं प्रति ७६
कृष्णः कान्तामनुज्ञाप्य गवामभिमुखं व्रजेत् । सा तु सूर्यगृहं गच्छेत्सखीमण्डलसंयुता ॥ ७७
कियद्दूरं ततो गत्वा परावृत्य हरिः पुनः । विप्रवेषं समास्थाय याति सूर्यगृहं प्रति ॥ ७८
सूर्यं प्रपूजयेत्तत्र प्रार्थितस्तत्सखीजनैः । तदैव कल्पितैर्वेदैः परिहासैर्विगर्भितैः ॥ ७९
ततस्ता ज्ञापितं कान्तं परिज्ञाय विचक्षणाः । आनन्दसागरे लीना न विदुः स्वं न चापरम् ॥ ८०
विहारैर्विविधैरेवं सार्धयामद्वयं मुने । नीत्वा गृहान्व्रजेयुस्ताः स च कृष्णो गवां व्रजेत् ॥ ८१
संगम्य स्वसखीन्कृष्णो गृहीत्वा गाः समन्ततः । आगच्छति व्रजं हर्षाद्वादयन्मुरलीं मुने ॥ ८२
ततो नन्दादयः सर्वे श्रुत्वा वेणुरवं हरेः । गोधूलिपटलव्याप्तं दृष्ट्वा चापि नभस्तलम् ॥ ८३
विसृज्य सर्वकर्माणि स्त्रियो बालादयोऽपि च । कृष्णस्याभिमुखं यान्ति तद्दर्शनसमुत्सुकाः ॥ ८४
राजमार्गे व्रजद्वारि यत्र सर्वे व्रजौकसः । कृष्णोऽपि तान्समागम्य यथावदनुपूर्वशः ॥ ८५
दर्शनस्पर्शनैर्वाचा स्मितपूर्वावलोकनैः । गोपवृद्धान्नमस्कारैः कायिकैर्वाचिकैरपि ॥ ८६

१ ख. ताभिर्क्रीडाभिश्च स॰ । २ ख. अग्रतः । ३ झ. म. ॰र्व्यजनै॰ । ४ ख. यत् । ५ क. ॰समितैः शुभैः । त॰ । ६ झ. ॰गर्बितैः । म. ॰गर्हितैः ।

अष्टाङ्गपातैः पितरौ रोहिणीमपि नारद । नेत्रान्तसूचितेनैव विनयेन प्रियां तथा ॥ ८७
एवं तैस्तद्यथायोग्यं व्रजौकोभिः प्रपूजितः । गवालये तथा गाश्च संप्रवेश्य समन्ततः ॥ ८८
पितृभ्यामर्थितो याति भ्रात्रा सह निजालयम् । स्नात्वा पीत्वा तत्र किंचिद्भुक्त्वा मात्राऽनुमोदितः
गवालयं पुनर्याति दोग्धुकामो गवां पयः । ताश्च दुग्ध्वा दोहयित्वा पाययित्वा च काश्चन ९०
पित्रा सार्धं गृहं याति तत्र भावशतानुगः । तत्र पित्रा पितृव्यैश्च तत्पुत्रैश्च बलेन च ॥ ९१
भुनक्ति विविधान्नानि चर्व्यचोष्यादिकानि च । तन्मतिः प्रार्थनात्पूर्वं राधिकाऽपि तदैव हि ९२
प्रस्थापयेत्सखीद्वारा पक्वान्नानि तदालयम् । श्लाघयंश्च हरिस्तानि भुक्त्वा पित्रादिभिः सह॥ ९३
सभागृहं व्रजेत्तैश्च जुष्टं बन्दिजनादिभिः । पक्वान्नानि गृहीत्वा याः सख्यस्तत्र पुराऽऽगताः॥ ९४
बहूनि च पुनस्तानि प्रदत्तानि यशोदया । सख्यस्तत्र तया दत्तं कृष्णोच्छिष्टं नयन्ति च ॥ ९५
सर्वं ताभिः समानीय राधिकायै निवेद्यते । साऽपि भुक्त्वा सखीवर्गयुता तदनुपूर्वशः ॥ ९६
सखीभिर्मण्डिता तिष्ठेदभिसर्तुं समुद्यता । प्रस्थाप्यते मया काचिदित एव ततः सखी ॥ ९७
तयाऽभिसारिता साऽथ यमुनायाः समीपतः । कल्पवृक्षनिकुञ्जेऽस्मिन्दिव्यरत्नमये गृहे ॥ ९८
सितकृष्णनिशायोग्यवेषा याति सखीयुता । कृष्णोऽपि विविधं तत्र दृष्ट्वा कौतूहलं ततः ॥ ९९
कात्यायन्या मनोज्ञानि श्रुत्वा च गीतकान्यपि । धनधान्यादिभिस्ताश्च प्रीणयित्वा विधानतः ॥
जनैराराधितो मात्रा याति सख्या निकेतनम् । मातरि प्रस्थितायां च भोजयित्वा ततो गृहम् ॥
संकेतकं कान्तयाऽत्र समागच्छेदलक्षितः । मिलित्वा तावुभावत्र क्रीडतो वनराजिषु ॥ १०२
विहारैर्विविधैरेव लीलागीतपुरःसरैः । सार्धयामद्वयं नीत्वा रात्रेरेवं विहारतः ॥ १०३
सुषुप्सू विशतः कुञ्जं पक्षीशाभिरलक्षितौ । एकान्ते कुसुमैः क्लृप्ते केलितल्पे मनोहरे ॥ १०४
सुप्तावातिष्ठतस्तत्र सेव्यमानौ निजालिभिः । इति ते सर्वमाख्यातं नैत्यकं चरितं हरेः ॥
पापिनोऽपि विमुच्यन्ते श्रवणादस्य नारद ॥ १०५

नारद उवाच—

धन्योऽस्म्यनुगृहीतोऽस्मि त्वया देवि न संशयः । हरेर्दैनंदिनी लीला यतो मेऽद्य प्रकाशिता ॥

सूत उवाच—

इत्युक्त्वा तां परिक्रम्य तया चापि प्रपूजितः । अन्तर्धानं गतो ब्रह्मन्नारदो मुनिसत्तमः ॥ १०७
मयाऽप्येतद्वाऽऽनुपूर्व्यात्सर्वं ते परिकीर्तितम् । जपेन्नित्यं प्रयत्नेन मन्त्रयुग्ममनुत्तमम् ॥ १०८
कृष्णवक्त्रादिदं लब्धं पुरा रुद्रेण यत्नतः । तेनोक्तं नारदायापि नारदेन ममोदितम् ॥ १०९
संस्कारांश्च विधायैव मयाऽप्येतत्तवोदितम् । त्वयाऽप्येतद्गोपनीयं रहस्यं परमाद्भुतम् ॥ ११०

शौनक उवाच—

कृतकृत्योऽभवं साक्षात्त्वत्प्रसादादहं गुरो । रहस्यानां रहस्यं यत्त्वया मह्यं प्रकाशितम् ॥ १११

सूत उवाच—

धर्मानेतानुपातिष्ठ जल्पन्मन्त्रमहर्निशम् । अचिरादेव तद्दास्यमवाप्स्यसि न संशयः ॥ ११२
मयाऽपि गम्यते ब्रह्मन्नित्यमायतनं विभोः । गुरोर्गुरोर्भानुजायाः कूले गोपीश्वरस्य च ॥ ११३

---

१ अ. °नि प्रदत्तानि यशोदया । स° । २ अ. °नि भुक्त्वा पित्रादिभिः सह । स° । ३ क. अ. मया । ४ ख. ङ. च छ.ढ. °वै रासलास्यगी° । ५ ख. °ह्मन्गुरोरायतनं मम । गु° । ६ ख. °भोः । वृन्दारण्ये यत्र नित्यं गुरुर्मेऽस्ति सदाशिवः । इ

इदं चरित्रं परमं पवित्रं प्रोक्तं महेशेन महानुभावम् ॥
शृण्वन्ति ये भक्तियुता मनुष्यास्ते यान्ति नूनं पदमच्युतस्य ॥ ११४
न्यं यशस्यमायुष्यमारोग्याभीष्टसिद्धिदम् । स्वर्गापवर्गसंपत्तिकारणं पापनाशनम् ॥ ११५
क्त्या पठन्ति ये नित्यं मानवा विष्णुतत्पराः । न तेषां पुनरावृत्तिर्विष्णुलोकात्कथं चन ११६

इति श्रीमहापुराणे पाद्मे पातालखण्डे श्रीवृन्दावनमाहात्म्ये त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

समाप्तमिदं वृन्दावनमाहात्म्यम् ।

आदितः श्लोकानां समष्ट्यङ्काः—१६३६४

---

अथ चतुरशीतितमोऽध्यायः ।

---

ऋषय ऊचुः—
ूत सूत महाभाग लोमहर्षणनन्दन । कथा रम्या त्वया प्रोक्ता लोकस्याऽऽनन्ददायिनी ॥ १
श्रीकृष्णस्य महाभाग चरितं महदद्भुतम् । श्रुतं सर्वं त्वया प्रोक्तं निर्वृतिस्तेनै चाभवत् ॥ २
अहो श्रीकृष्णमाहात्म्यं भक्तानां गतिदायकम् । यतस्तेन महाभाग निवृत्तिं को न्ववाप्नुयात्॥ ३
तः पुनरपि श्रीमत्कृष्णस्य चरितं महत् । श्रोतुमिच्छामहे चान्यद्व्रतदानार्हणादिकम् ॥ ४
ानं वाऽपि महाभाग यथा येन कृतं पुरा । तत्सर्वं विस्तराद्ब्रूहि यथा नो निर्वृतिर्भवेत् ॥ ५

सूत उवाच—
ाधु पृष्टं द्विजश्रेष्ठा लोकानां तारणं परम् । यूयं कृतार्थाः कृष्णस्य भक्तानां पूर्णमानसाः ॥ ६
कृष्णस्य चरितं पुण्यं साधूनां हर्षदं परम् । प्रवक्ष्यामि द्विजश्रेष्ठा महदाख्यानमद्भुतम् ॥ ७
एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः । मथुरायामम्बरीषं कृष्णाराधनमानसम् ॥ ८
महाभागं व्रतपरं ददर्श मुनिसत्तमः । स आगतं मुनिवरं सत्कृत्य नृपसत्तमः ॥
भवन्त इव पप्रच्छ श्रद्धया हृष्टमानसः ॥ ९

अम्बरीष उवाच—
यन्मुने परमं ब्रह्म वेदवादिभिरुच्यते । स देवः पुण्डरीकाक्षः स्वयं नारायणः परः ॥ १०
यो मूर्तौ मूर्तिमानीशो व्यक्ताव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यो ध्यातव्यः स कथं हरिः॥ ११
यस्मिन्सर्वमिदं विश्वमोतप्रोतं प्रतिष्ठितम् । अव्यक्तमेकं परमं परमात्मेति विश्रुतम् ॥ १२
यतो जन्मादि जगतो यो निर्माय स्वयंभुवम् । ददौ तस्मै च निगमानात्मन्येव व्यवस्थितान्॥ १३
कथमाराध्यते सोऽयं समस्तपुरुषार्थदः । योगिनामपि दुर्गम्यस्तदेतत्कृपया वद ॥ १४
अनाराधितगोविन्दो न विन्दति यतोऽभयम् । न तपोयज्ञदानानां लभते फलमुत्तमम् ॥ १५
अनास्वादितगोविन्दपादाम्बुजरसो नरः । मनोरथकथानीतं कथमाकलयेत्फलम् ॥ १६
हरेराराधनं हित्वा दुरितौघनिवारणम् । नान्यत्पश्यामि जन्तूनां प्रायश्चित्तं परं मुने ॥ १७
यन्नूनर्तनवर्तिन्यः श्रूयन्ते सिद्धयोऽखिलाः । कथमाराध्यते सोऽयं केशवः क्लेशनाशनः ॥ १८
उपास्यते स भगवान्सर्वैराराध्यते कथम् । स्त्रीभिश्च सर्वमेतन्मे हिताय जगतो वद ॥ १९

---

१ म °तं को न्ववाप्नुयात् । श्रु° । २ ख. म. निवृत्तिस्ते° । ३ ख. °न नाभ° । ४ क. म. °मू । यतस्तेन म° । ५ ख. इति । ६ ख. यदेतत्पर° । ७ ख. °ति हितोदय° । ८ ख. ङ. च. छ. ड. °वान्कथं नारायणो नरैः । स्त्री° ।

भक्तप्रियोऽसौ भगवान्कया भक्त्या प्रसीदति । कथं भक्तिर्भवेदस्मिन्सर्वैराराध्यते कथम् ॥ २०
वैष्णवोऽसि हरेस्तस्य प्रियोऽसि परमार्थवित् । तेन त्वामेव पृच्छामि ब्रह्मन्ब्रह्मविदुत्तम ॥ २१
श्रोतारमथ वक्तारं प्रष्टारं पुरुषं हरेः । प्रश्नः पुनाति कृष्णस्य तदङ्घ्रिसलिलं यथा ॥ २२
दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः । तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २३
संसारेऽस्मिन्क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् । यस्मादवाप्यते सर्वं पुरुषार्थचतुष्टयम् ॥ २४
भगवन्भवतो यात्रा स्वस्तये सर्वदेहिनाम् । बालानां च यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ २५
[*भूतानां देवचरितं दुःखाय च सुखाय च । सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ २६
भजन्ति ये यथा देवान्देवा अपि तथैव तान् । छायेव कर्मसचिवाः साधवो दीनवत्सलाः ]॥ २७
तस्मात्त्वं भगवन्मह्यं वैष्णवं धर्ममादिश । यस्योपदेशदानेन लभते वेदजं फलम् ॥ २८

नारद उवाच—

साधु पृष्टं महीपाल विष्णुभक्तिमता त्वया । जानता परमं धर्ममेकं माधवसेवनम् ॥ २९
यस्मिन्नाराधिते विष्णौ विश्वमाराधितं भवेत् । तुष्टं च सकलं तुष्टे सर्वदेवमये हरौ ॥ ३०
यस्य स्मरणमात्रेण महापातकसंहतिः । तत्क्षणात्त्रासमायाति स सेव्यो रविरेव हि ॥ ३१
[+को नु राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम् । न भजेत्सर्वतोमृत्युरुपास्यममृषिदैवतैः ॥ ३२
श्रुतोऽनुपठितो ध्यात आदृतश्चानुमोदितः । सद्यः पुनाति सद्धर्मो वीरविश्वद्रुहोऽपि हि ] ॥ ३३
योऽयं कारणकार्यादिकारणस्यापि कारणम् । अनन्यकारणं योगी जगज्जीवो जगन्मयः ॥ ३४
अणुर्बृहत्कृशः स्थूलो निर्गुणो गुणभृन्महान् । अजो जन्मलयातीतो ध्यातव्यः स हरिः सदा ॥
सम्यगेतद्व्यवसितं भवता पुरुषर्षभ । यत्पृच्छसे भागवतान्धर्मांस्त्वं विश्वभावनान् ॥ ३६
प्रसङ्गेन सतामात्ममनःकर्णरसायनाः । भवन्ति कीर्तनीयस्य कथाः कृष्णस्य निर्मलाः ॥ ३७
भावसाध्यः स्वयं देवः स्वयं जानाति तद्भवान् । तथाऽपि वक्ष्ये जगतां हिताय तव गौरवात् ॥
यदाहुः परमं ब्रह्म प्रधानं पुरुषात्परम् । यन्मायया सर्वमिदं विश्वमस्तीति सोऽच्युतः ॥ ३९
पुत्रान्कलत्रं दीर्घायू राज्यं स्वर्गापवर्गकम् । स ददातीप्सितं सर्वं भक्त्या संपूजितोऽच्युतः ४०
कर्मणा मनसा वाचा तत्परा ये हि मानवाः । तेषां व्रतानि वक्ष्यामि प्रीतये तव भूपते ॥ ४१
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता । एतानि मानसान्याहुर्व्रतानि हरितुष्टये ॥ ४२
एकभुक्तं तथा नक्तमुपवासमयाचितम् । इत्येवं कायिकं पुंसां व्रतमुक्तं नरेश्वर ॥ ४३
वेदस्याध्ययनं विष्णोः कीर्तनं सत्यभाषणम् । अपैशुन्यमिदं राजन्वाचिकं व्रतमुच्यते ॥ ४४
चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । नाऽऽशौचं कीर्तने तस्य सदाशुद्धिविधायिनः ४५
वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्थाः सोऽयं तत्तोषकारणम् ॥ ४६
पतिरूपो हिताचारैर्मनोवाक्कायसंयमैः । व्रतैराराध्यते स्त्रीभिर्वासुदेवो दयानिधिः ॥ ४७
स्वागमोक्तेन मार्गेण स्त्रीशूद्रैरपि पूजनम् । *कर्तव्यं कृष्णचन्द्रस्य द्विजातिवरंरूपिणः ॥ ४८

---

* एतच्चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः । * एतदनन्तरं ख. पुस्तके " वेदोक्तेन च मार्गेण द्विजातीनां च पूजनम् । कर्तव्यं मद्धिया विष्णोश्चिन्तयैकः पतिर्हृदि " इतिश्लोकोऽधिको दृश्यते ।

---

१ ख. ङ. च. छ. ङ. भक्तिप्रि° । २ ख. °संततिः । ३ ख. °तिः । परमान्तमवाप्नोति स एको हरिरुच्यते । को । ४ ख. ङ. च. छ. ङ. °णान्नाशमा° । ५ ख. °नन्तका° । ६ ख. कोमलाः । ७ ख. विश्वं यच्छति । ८ ख. व्रतं भवति नान्यथा । वे° । ९ ख. पन्था नान्यत्तत्तो° । १० ङ. च. छ. ङ. °वदरू° ।

त्रयो वर्णास्तु वेदोक्तमार्गाराधनतत्पराः । स्त्रीशूद्रादय एव स्युर्नाम्नाऽऽराधनतत्पराः ॥ ४९
न पूजनैर्न यजनैर्न व्रतैरपि माधवः । तुष्यते केवलं भक्तिप्रियोऽसौ समुदाहृतः ॥ ५०
[*स्त्रीणां पतिव्रतानां तु पतिरेव हि दैवतम् । स तु पूज्यो विष्णुभक्त्या मनोवाक्कायकर्मभिः ५१
स्त्रीणामथाधिकतया विष्णोराराधनादिकम् । पतिप्रियरतानां च श्रुतिरेषा सनातनी ॥ ५२
शूद्राणां चैव भवति नाम्ना वै देवतार्चनम् । सर्वे चाऽऽगममार्गेण कुर्युर्वेदानुसारिणः ॥ ५३
पिण्डग्रहणधर्मेण यद्यस्य विहितं व्रतम् । तत्तदेवाऽऽचरेद्यस्तु तेन तुष्यति केशवः ] ॥ ५४
हविषाऽग्नौ जले पुष्पैर्ध्यानेन हृदये हरिम् । यजन्ति सूरयो नित्यं जपेन रविमण्डले ॥ ५५
अहिंसा प्रथमं पुष्पं द्वितीयं करणग्रहः । तृतीयकं भूतदया चतुर्थं क्षान्तिरेव च ॥ ५६
शमस्तु पञ्चमं पुष्पं ध्यानं †चैव तु सप्तमम् । सत्यं चैवाष्टमं पुष्पमेतैस्तुष्यति केशवः ॥ ५७
[+एतैरेवाष्टभिः पुष्पैस्तुष्यते चार्चितो हरिः ] । पुष्पान्तराणि सन्त्येव बाह्यानि नृपसत्तमे ॥ ५८
एतैरेव तु तुष्येत यतो भक्तिप्रियोऽच्युतः । वारुणं सलिलं पुष्पं सौम्यं घृतपयोदधि ॥ ५९
प्राजापत्यं तथाऽन्नादि त्वाग्नेयं धूपदीपकम् । फलपुष्पादिकं चैव वानस्पत्यं तु पञ्चमम् ॥ ६०
पार्थिवं कुशमूलाद्यं वायव्यं गन्धचन्दनम् । श्रद्धाख्यं विष्णुपुष्पं च वाद्यं विष्णुपदं स्मृतम् ॥ ६१
एभिस्तु पूजितः पुष्पैः सद्यो विष्णुः प्रसीदति । सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम्
भूरात्मा सर्वभूतानि पूजास्थानानि वै हरेः । वर्षे तु विद्यया त्रय्या हविषाऽग्नौ जपेत्तु तम् ॥ ६३
आतिथ्येन तु विप्राग्र्ये गोषु ग्रासरसादिना । वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ॥ ६४
वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरःसरैः । स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मना(नि)॥ ६५
क्षेत्रज्ञं सर्वभूतेषु समत्वेनार्चयेद्विभुम् । धिष्ण्येष्वेतेषु तद्रूपं शङ्खचक्रगदाम्बुजैः ॥ ६६
युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहितः । ब्राह्मणैः पूजितैरेव हरिः संपूजितो भवेत् ॥ ६७
निर्भर्त्सितैस्तु तैर्भूप भवेन्निर्भर्त्सितो विभुः । निगमो धर्मशास्त्रं च यदाधारेण वर्तते ॥
स द्विजो वैष्णवी मूर्ति[3]ः कीर्तितः पावनो नृणाम् ॥ ६८

सर्वं शुभं जगति धर्मत एव लभ्यं धर्मो गतिर्निगमतो नृप धर्मशास्त्रात् ॥
नूनं तयोरपि गतिर्भुवि भूमिदेवास्तैरर्चितैरिह जगत्पतिरर्चितः स्यात् ॥ ६९

न यज्ञदानैर्न तपोभिरुग्रैर्न योगयुक्त्या न समर्चनेन ॥
तथा हरिस्तुष्यति देवदेवो यथा महीदैवततोषणेन ॥ ७०

ब्रह्मण्यो ब्रह्मविद्ब्रह्मा ब्रह्मदेवप्रवर्तकः । ब्राह्मणैरेव तुष्येत तोषितैर्ब्रह्मदैवतम् ॥ ७१
नरकेऽपि चिरं मग्नाः पूर्वजा ये कुलद्वये । तदैव यान्ति ते स्वर्गं यदाऽर्चति सुतो हरिम् ॥ ७२
किं तेषां जीवितेनेह पशुवच्चेष्टितेन किम् । येषां न प्रवणं चित्तं वासुदेवे जगन्मये ॥ ७३
ध्यानं तस्य प्रवक्ष्यामि यन्न दृष्टं हि केनचित् । श्रूयतां भूप कैवल्यं नित्यं मलविवर्जितम् ॥ ७४
यथा दीपो निवातस्थो निश्चलो वह्निरूपधृक् । प्रज्वलन्नाशयेत्सर्वमन्धकारं नृपोत्तम ॥ ७५

* धनुश्चिह्नान्तर्गतः पाठः ख.ङ. पुस्तकस्थः । † अत्र चकारेणानुक्तं षष्ठं दमादिरूपं पुष्पं ग्राह्यमिति भाति । + धनुश्चिह्नान्तर्गतः पाठः ख. पुस्तकस्थः ।

१ ङ. च. छ. ड. °नैनैव जपैर्न । २ ख. °म । भक्त्याऽऽहृतानि यैर्विष्णुः पूजितः परितुष्यति । या° । ३ ख. °र्तिः पावनी परमा मता । स° । ४ ख. महामतः ।

तद्वद्दोषविहीनात्मा भवत्येव निरामयः । निराशो निश्चलो भूप वैरमैत्रीविवर्जितः ॥ ७६
शोकदुःखभयद्वेषलोभमोहभ्रमादिभिः । विषयैरिन्द्रियाणां च कृष्णध्यायी विमुच्यते ॥ ७७
यथा ज्वालाप्रसङ्गेन दीपस्तैलं प्रशोषयेत् । तथा ध्यानप्रसङ्गेन कर्मणोऽपि क्षयो भवेत् ॥ ७८
तद्ध्यानं द्विविधं तस्य प्रोक्तं शंकरपूर्वकैः । निर्गुणं सगुणं वाऽपि तत्राऽऽद्यं शृणु मानद ॥ ७९
केवलं ज्ञानदृष्टयाऽसौ दृश्यते योगयुक्तिभिः । परमात्मपरै राजन्सततं ध्यानतत्परैः ॥ ८०
हस्तपादविहीनश्च सर्वं गृह्णाति गच्छति । मुखनासाविहीनश्च भुङ्क्ते जिघ्रति भूपते ॥ ८१
अकर्णः शृणुते सर्वं सर्वसाक्षी जगत्पतिः । अरूपो रूपसंबद्धः पञ्चवर्गवशं गतः ॥ ८२
सर्वलोकस्य यः प्राणः पूज्यते सचराचरैः । अजिह्वो वदते सर्वं वेदशास्त्रानुगं तथा ॥ ८३
त्वग्विहीनः स्पृशेत्सर्वं शीतोष्णादि नराधिप । सदानन्दो विविक्ताक्ष एकरूपो निराश्रयः ॥ ८४
निर्गुणो निर्ममो व्यापी सगुणो निर्मलौजसः । अवश्यः सर्ववश्यात्मा सर्वदः सर्ववित्तमः ॥ ८५
तस्य माता च नैवास्ति स वै सर्वमयो विभुः । एवं सर्वमयं ध्यानं यश्च पश्यत्यनन्यधीः ॥ ८६
स याति परमं स्थानममूर्तममृतोपमम् । द्वितीयं तु प्रवक्ष्यामि तच्छृणुष्व महामते ॥ ८७
मूर्ताकारं तु साकारं निरालम्बं निरामयम् । यस्य वासनया सर्वं ब्रह्माण्डं वासितं नृप ॥ ८८
स तस्माद्वासुदेवे*ति प्रोच्यते विधिपूर्वकैः । स्निग्धप्रावृड्घनश्यामं सूर्यतेजःसमप्रभम् ॥ ८९
दक्षिणे शोभते शङ्खो महामणिविचित्रितः । कौमोदकी गदा चापि महासुरविमर्दिनी ॥ ९०
वामे च शोभते वीर पद्मं चक्रं जगत्पतेः । चतुर्बाहुं सुरेशानं शार्ङ्गिणं कमलापतिम् ॥ ९१
कम्बुग्रीवं सुवृत्तास्यं पद्मपत्रनिभेक्षणम् । राजमानं हृषीकेशं दशनैः कुन्दसंनिभैः ॥ ९२
गुडाकेशस्य नृपतेरधरो विद्रुमाकृतिः । शोभते पद्मनाभाख्यः किरीटेनातिभास्वता ॥ ९३
विलासी लक्ष्मलक्ष्मी च केशवः कौस्तुभाङ्कितः । जनार्दनः सूर्यतेजःकुण्डलाभ्यां विराजितः ९४
केयूरहारकटककटिसूत्राङ्गुलीयकैः । विराजते भ्राजमानो वपुषाऽलंकृतेन च ॥ ९५
वाससा हेमवर्णेन प्रावृतो गरुडासनः । ध्यातव्यः सगुणो राजन्भक्ताघौघहरो हरिः ॥ ९६

* संधिरार्षः ।

१ ख. °लो वीर न मित्रं न रिपुस्तथा । शोको हर्षो विस्मयो वा न लोभो मत्सरो भ्रमः । संभ्रमैर्लोभमोहैश्च सुखदुःखै-र्विमुच्यते । विषयैश्च च सर्वैश्च इन्द्रियाणां यदा नरः । तदा स केवलो ज्ञानी वैजल्पत्वं प्रपद्यते । ज्वालाकर्मप्रसङ्गेन दीपस्तैलं प्रशोषयेत् । वर्त्याधारेण राजेन्द्र निर्द्वंद्वो वायुवर्जितः । कज्जलं वमते पश्चात्तैलस्यापि महामते । स्वयमाकृष्य तत्तैलं तेजसा निर्मलो भवेत् । काये चान्तःस्थितस्तद्वत्कर्मतैलं प्रशोषयेत् । विषयान्कज्जलं कृत्वा प्रत्यक्षात्संप्रदर्शयेत् । ज्वालाया निर्मलो भूत्वा स्वयमेव प्रकाशते । क्रोधलोभादिसंज्ञैस्तैर्वायुभिः परिवर्जितः । निस्पृहो निश्चलो भूत्वा तेजो वीर्यं स्वयं ज्वलेत् । त्रैलोक्यं पश्यते सर्वं स्वस्थाने स्वस्वतेजसा । केवलज्ञानरूपोऽयं मया ते परिकीर्तितः । ध्यानं तस्य प्रवक्ष्यामि द्विविधं तस्य चक्रिणः । केवलज्ञानरूपेण दृश्यते परचक्षुषा । योगयुक्ता महात्मानं परमार्थपरायणाः । यं पश्यन्ति मुनीन्द्रास्तु सर्वज्ञं सर्वदर्शकम् । हस्तपादविहीनश्च सर्वत्र परिगच्छति । सर्वं गृह्णाति त्रैलोक्यं स्थावरं जङ्गमं पुनः । मुख° । २ झ. ञ. °र्मलौजसः । अ° । ३ ख. नृपनन्दन । ४ °कैः । वर्षमाणस्य मेघस्य यद्भासा तस्य तद्भवेत् । द° । °कैः । सूर्यतेजःप्रकाशश्च चतुर्बाहुश्चरेश्वरः । द° । ५ ख. °ङ्खो हेमरत्नविभूषितः ।
६ ख. विशालेनापि रूपेण केशवस्तु सुवक्षसा । कौस्तुभेनाङ्कितेनैव राजमानो जनार्दनः । सूर्यतेजःप्रतीकाशकुण्डलाभ्यां विभाति च । श्रीवत्साङ्केन पुण्येन सर्वदा राजते हरिः । के° । ७ ख. °यूरकङ्कणैर्हारैर्मौक्तिकैर्ऋक्षसंनिभैः । वपुषा भ्राजमानस्तु विजयो जयतां वरः । भ्राजते सोऽपि गोविन्दो हेमवर्णेन वाससा । मुद्रिकाभिश्च युक्ताभिरङ्गुलीभिर्विराजते । सर्वायुधैश्च संपूर्णैर्दिव्यैराभरणैर्हरिः । वैनतेयसमारूढो लोककर्ता जगत्पतिः । एवं यो ध्यायते नित्यमनन्यमनसा हरिम् । मुच्यते सर्वपापेभ्यो विष्णुलोकं ।

एवं ते ध्यानमुद्दिष्टं द्विविधं नृपसत्तम । यत्कृत्वा मुच्यते पापैर्मनोवाक्कायसंभवैः ॥ ९७
यं यं चाभिलषेत्कामं तं तं प्राप्नोति निश्चितम् । पूज्यते देववर्गैश्च विष्णुलोकं स गच्छति ॥ ९८

इति श्रीमहापुराणे पाद्मे पातालखण्डे नारदाम्बरीषसंवादे वैशाखमाहात्म्ये (वैष्णवधर्मकथने) चतुरशीतितमोऽध्यायः ॥८४॥

आदितः श्लोकानां समष्ट्यङ्काः—१६४६२

---

अथ पञ्चाशीतितमोऽध्यायः ।

---

अम्बरीष उवाच—

साधु साधु मुनिश्रेष्ठ लोकानुग्रहकारक । विष्णोर्ध्यानं त्वया प्रोक्तं सगुणं निर्गुणं च यत् ॥ १
अधुना लक्षणं ब्रूहि भक्तेः साधुकृपाकर । यादृशी क्रियते येन यथा यत्र यदा तथा ॥ २

सूत उवाच—

इत्युक्तमाकर्ण्य नृपोत्तमस्य मुनिः प्रहृष्टो निजगाद भूपम् ।
शृणुष्व राजन्नखिलाघहारिणीं भक्तिं हरेस्ते प्रददामि सम्यक् ॥ ३

त्रिविधा भक्तिरुद्दिष्टा मनोवाक्कायसंभवा । लौकिकी वैदिकी चापि भवेदाध्यात्मिकी तथा ॥४
ध्यानधारणया बुद्ध्या वेदानां स्मरणेन च । विष्णुप्रीतिकरी चैषा मानसी भक्तिरुच्यते ॥ ५
वेदमन्त्रसमुच्चारैरविश्रान्तं दिवानिशम् । जपैश्चाऽऽरण्यकैश्चैव वाचिकी भक्तिरिष्यते[2] ॥ ६
व्रतोपवासनियमैः पञ्चेन्द्रियजयेन च । कायिकी भक्तिरुद्दिष्टा सर्वसिद्धिविधायिनी ॥ ७
पाद्यार्घ्याद्युपचारैश्च नृत्यवादित्रगीतकैः । बलिभिर्जागरार्चाभिर्लौकिकी भक्तिरीरिता ॥ ८
ऋग्यजुःसामजप्यैश्च संहिताध्ययनादिभिः । हविर्होमक्रियाभिश्च या भक्तिः सा तु वैदिकी ॥ ९
दर्शश्च पौर्णमासश्च विषुवादिषु यः पुनः । यागः संकीर्तितो विज्ञैर्वैदिकीभक्तिसाधकः ॥ १०
चतुर्विंशतित(स्त)त्त्वानि प्रधानादीनि संख्यया । अचेतनानि राजेन्द्र पुरुषः पञ्चविंशकः ॥ ११
चेतनः स समुद्दिष्टः कर्ता भोक्ता च कर्मणाम् । आत्मा नित्यो ह्यसक्तश्च ह्यधिष्ठाता प्रयोजकः[3]॥१२
व्यक्तिस्थश्चेतनो नित्यः कारणानां च कारणम् । तत्त्वसर्गो भावसर्गो भूतसर्गश्च तत्त्वतः ॥ १३
संख्यायाश्च प्रसंख्यानं प्रधानं च गुणात्मकम् । ज्ञात्वा साधर्म्यवैधर्म्ये प्रधानस्य गुणात्मनः १४
कारणत्वं ब्रह्मणश्च साधर्म्यमिदमुच्यते । नानात्वं चात्र वैधर्म्यं प्रधानस्य विदुर्बुधाः ॥ १५
तत्त्वान्तरं च तत्त्वानां कार्यकारणमेव च । प्रयोजनं प्रयोज्यत्वं ज्ञात्वा तत्त्वप्रसंख्यया ॥ १६
संख्यानां प्रोच्यते प्राज्ञैः सर्वतत्त्वार्थचिन्तकैः । इति मत्वाऽस्य सद्भावं तत्त्वसंख्यां च तत्त्वतः १७
ब्रह्मतत्त्वाधिकं चापि ज्ञात्वा तत्त्वं विदुर्बुधाः । सांख्यैः कृता भक्तिरेषा प्रोच्यतेऽध्यात्मिकी नृप

---

१ ख नारद उवाच—एतत्ते सर्वमाख्यातं ध्यानभेदं जगत्पतेः । अथ भक्तिं प्रवक्ष्यामि विविधां पापनाशिनीम् । विवि° । २ ख. °नी । भूषणैर्हेमरत्नाढ्यैश्चित्राभिर्वाग्भिरेव च । वासः प्रतिसरैः सूत्रैः पविकव्यजनोत्थितैः । नृत्यवादित्रगीतैश्च सर्वबल्युपहारकैः । भक्ष्यभोज्यान्नपानैश्च या पूजा क्रियते नरैः । नारायणं समुद्दिश्य सा भक्तिर्लौकिकी मता । ऋग्यजुःसामजाप्यानि संहिताध्ययनानि च । क्रियते विष्णुमुद्दिश्य सा भक्तिर्वैदिकोच्यते ॥ वेदमन्त्रहविर्योगैर्या क्रिया वैदिकी स्मृता । दर्शे च पौर्णमास्यां च कर्तव्यं वाऽग्निहोत्रकम् ॥ प्राशनं दक्षिणादानं पुरोडाशं चरुक्रिया । इष्टिर्धृतिः सोमपानं याज्ञिकं कर्म सर्वशः ॥ अग्निर्भूम्यनिलाकाशजलशंकरभास्करम् । तमुद्दिश्य कृतं कर्म तत्सर्वं विश्वदैवतम् ॥ आध्यात्मिकीति विविधा ब्रह्मभक्तिः स्थिता नृप । सांख्याख्यां योगसंजातां शृणु भूप यथोदिताम् ॥ चतु° । ३ ख. °कः । पुरुषोऽव्यक्तनिरतः स्यात्कार° । ४ ख. °ख्यायाः परिसंख्यायाः प्र° । ५ ख. °धानं च विधार्मि च । का° ।

योगजामपि वक्ष्यामि भक्तिमाध्यात्मिकीं शृणु । प्राणायामपरो नित्यं ध्यानवान्नियतेन्द्रियः १९
भैक्ष्यभक्ष्यव्रती चापि विषयेभ्यो निवृत्तिमान् । पश्यन्नुद्योतितमुखं ब्रह्मसूत्रं कटीतटे ॥ २०
श्वेतवर्णं चतुर्बाहुं वरदाभयहस्तकम् । ध्यायमानः स्वहृदये योगयुक्तो महेश्वरम् ॥ २१
हृष्टं स्वचेतसा राजन्पीतवस्त्रं सुलोचनम् । [*योगजा मानसी सिद्धिर्विष्णुभक्तिः परा स्मृता ॥
ययैवं भक्तिमान्देव विष्णुभक्तः स उच्यते । एवं भक्तिः समुद्दिष्टा विविधा नृपनन्दन] ॥ २३
सात्त्विकी राजसी चैव तामसी भेदतस्त्विमाः । भक्तयो विविधा ज्ञेया विष्णोरमिततेजसः॥२४
यथाऽग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् । पापानि भगवद्भक्तिस्तथा दहति तत्क्षणात् २५

यावज्जनो न शृणुते भुवि विष्णुभक्तिं साक्षात्सुधारसमशेषरसैकसारम् ।
तावज्जरामरणजन्मशताभिघातदुःखानि तानि लभते बहुदेहजानि ॥ २६
संचिन्तितः कीर्तित एव नित्यं महानुभावो भगवाननन्तः ।
समन्ततोऽघं विनिहन्ति मेघं वायुर्यथा भानुरिवान्धकारम् ॥ २७
न भूप देवार्चनयज्ञतीर्थस्नानव्रताचारतपःक्रियाभिः ।
तथा विशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ २८
कथा विशुद्धा नरनाथ तथ्यास्ता एव पथ्या हरिभक्तकथ्याः ।
संकीर्त्यते यासु पवित्रकीर्तिर्विशुद्धमूर्तिर्निजदत्तभक्तिः ॥ २९
धन्योऽसि धीर धरणीधर धर्मधुर्य ध्यानैकतानहृदयः पुरुषोत्तमस्य ।
यन्नैष्ठिकी मतिरसौ तव सौभग श्रीः श्रीकृष्णचन्द्रसुकृतश्रवणे प्रवृत्ता ॥ ३०

अनाराध्य हरिं भक्त्या वरदं विष्णुमव्ययम् । कुतः श्रेयो[3] भवेद्भूप पुरुषस्याऽऽत्ममानिनः ॥३१
मायाजनिरमायोऽसौ भक्त्या राजन्य मायया । साध्यते साधुपुरुषैः स्वयं जानाति तद्भवान् ॥३२

न विद्यते ते नृप धर्मतत्त्वमज्ञातमेतद्विपुलं पुनर्माम् ।
यत्पृच्छसे तीर्थपदप्रसङ्गात्कथारसं वैष्णवगौरवेण ॥ ३३
नातः परं परमतोषविशेषपोषं पश्यामि पुण्यमुचितं च परस्परेण ॥
सन्तः प्रसज्य यदनन्तगुणाननन्तश्रेयोनिधीनधिकभावजुषो भजन्ति ॥ ३४

ब्राह्मणाः सुरभी सत्यं श्रद्धायागतपांसि च । श्रुतिस्मृतिदयादीक्षासंतोषास्तनवो हरेः ॥३५
आदित्यश्चन्द्रमा वायुर्भूमिरापोऽम्बरं दिशः । ब्रह्मा विष्णुश्च रुद्रश्च सर्वभूतमयो विभुः ॥ ३६
विश्वरूपः स्वयं शक्तो जगदेतच्चराचरम् । स्वयं ब्राह्मणमाविश्य सदैवान्नं भुनक्ति च ॥ ३७

ततस्तु तीर्थास्पदपादरेणून्धराधरात्मालयभूमिरेखान् ।
सभाज्य संपूजय पुण्यलक्ष्मीसर्वस्वभूतानखिलात्मभूतान् ॥ ३८

ब्राह्मणं विष्णुबुद्ध्या यो विद्वांसं साधु पश्यति । स एव वैष्णवो यश्च स्वस्य धर्मे समास्थितः ३९
एतत्ते सर्वमाख्यातं भक्तिलक्षणमर्थितम् । स्नातुं गच्छामि गङ्गायां न कथावसरोऽधिकः ॥ ४०
मासोऽयं माधवो मासो [†माधवस्यातिवल्लभः । तस्यापि सप्तमी शुक्ला गङ्गायामतिदुर्लभा ॥ ४१
वैशाखशुक्लसप्तम्यां जाह्नवी जह्नुना पुरा । क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥ ४२

* एतच्चिह्नान्तर्गतः पाठः, ठ. पुस्तकस्थः । † एतच्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ड. पुस्तकस्थः ।

१ ख. हृत्पद्मकर्णिकासीनपीत° । २ ख. श्रुतानुभावो । ३ ख. °यो लभेत्तावत्पुरुषः सुकृतिं विना । मा° । ४ ङ. ग. °षतोषं । ५ ङ. च. ड. शक्तो ।

तस्यां समर्चयेद्देवीं गङ्गां गगनमेखलाम् । स्नात्वा सम्यग्विधानेन स धन्यः सुकृती नरः ॥ ४३
तस्यां यस्तर्पयेद्देवान्पितॄन्मर्त्यो यथाविधि । साक्षात्पश्यति तं गङ्गा स्नातकं गतपातकम् ॥ ४४
न माधवसमो मासो] न गङ्गासदृशी नदी । दुर्लभः खलु योगोऽयं हरिभक्त्यैव लभ्यते ॥ ४५
विष्णुपादसमुद्भूता ब्रह्मलोकादुपागता । श्रीमहेशजटाजूटवासिनी दुःखनाशिनी ॥ ४६
त्रिभिः स्रोतोभिरश्रान्तं या पुनाति जगत्रयम् । स्वर्गारोहणनिश्रेणी सततानन्दकारिणी ॥ ४७
अनेकदुरितोद्धारहारिणी दुर्गतारिणी । भजमानजनस्यान्तःकान्तिकेलिविलासिनी ॥ ४८
सगरान्वयनिर्वाणकारिणी धर्मचारिणी । त्रिमार्गचारिणी देवी लोकालंकृतिकारिणी ॥ ४९
दर्शनस्पर्शनस्नानकीर्तनध्यानसेवनैः । (अ)पुण्यान्पुण्यपुरुषान्पावयन्ती सहस्रशः ॥ ५०
गङ्गा गङ्गेति गङ्गेति यैस्त्रिसंध्यं त्रिरीरितम् । सुदूरस्थैश्च तत्पापं हन्ति जन्मत्रयार्जितम् ॥ ५१
योजनानां सहस्रेषु गङ्गां यः स्मरते नरः । अपि दुष्कृतकर्माऽसौ लभते परमां गतिम् ॥ ५२
वैशाखशुक्लसप्तम्यां दुर्लभा सा विशेषतः । प्राप्यते जगतीपाल हरिविप्रप्रसादतः ॥ ५३
न माधवसमो मासो न माधवसमो विभुः । पोतो हि दुरिताम्भोधौ मज्जमानजनस्य यः ॥ ५४
दत्तं जप्तं हुतं स्नातं यद्भक्त्या मासि माधवे । तदक्षयं भवेद्भूप पुण्यं कोटिशताधिकम् ॥ ५५
यथा देवेषु विश्वात्मा देवो नारायणो विभुः । यथा जप्येषु गायत्री सरितां जाह्नवी तथा॥५६
यथोमा सर्वनारीणां तपतां भास्करो यथा । आरोग्यलाभो लाभानां द्विपदानां द्विजो यथा॥५७
परोपकारः पुण्यानां विद्यानां निगमो यथा । मन्त्राणां प्रणवो यद्वद्ध्यानानामात्मचिन्तनम्॥५८
सत्यं स्वधर्मवर्तित्वं तपसां च यथा वरम् । शौचानामात्मशुद्धिश्च दानानामभयं यथा ॥ ५९
गुणानां च यथा लोभक्षोभो मुख्यो गुणः स्मृतः । मासानां प्रवरो मासस्तथाऽसौ माधवो मतः॥
तत्र यत्क्रियते[3] दानं यज्ञः स्नानमुपोषणम् । तपोऽध्ययनपूजादि तदक्षयफलं स्मृतम् ॥ ६१
वैशाखान्तानि पापानि सूर्यान्तानि तमांसि च ॥ परोपकारपैशुन्यप्रान्तानि सुकृतानि च ॥ ६२
कार्तिके मासि यत्किंचित्तुलासंस्थे दिवाकरे । स्नानदानादिकं राजंस्तत्परार्धगुणं भवेत् ॥ ६३
तस्मात्सहस्रगुणतो माघे मकरगे रवौ । ततोऽपि शतसंख्याकं वैशाखे मेषगे रवौ ॥ ६४
ते धन्यास्ते सुकृतिनो नरा वैशाखमासि ये । प्रातः स्नात्वा विधानेन पूजयन्ति च माधवम्॥६५
प्रातःस्नानं च वैशाखे यज्ञदानमुपोषणम् । हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥ ६६
पुनः कलियुगे राजन्न तद्द्रोप्यं भविष्यति । अश्वमेधाधिकं यस्मान्माहात्म्यं माधवस्य यत् ॥६७
अश्वमेधमखः पुण्यः कलौ नैव प्रवर्तते । एष माधवमासस्य हयमेधसमो विधिः ॥ ६८
अश्वमेधस्य यत्पुण्यं स्वर्गमोक्षफलप्रदम् । न वेत्स्यन्ति कलौ पापा जना दुरितबुद्धयः ॥ ६९
तस्मिन्भवैर्नरैः पापैर्गन्तव्यं नरकार्णवे । अतस्तु विरलस्तस्य प्रचारो येन निर्मितः ॥ ७०

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६५३२

---

अथ षडशीतितमोऽध्यायः ।

---

सूत उवाच—

इति तस्य वचः श्रुत्वा नारदस्य महात्मनः । अम्बरीषस्तु राजर्षिर्विस्मितो वाक्यमब्रवीत् ॥ १

१ ख. °ति गङ्गायां स्नातको ग° । २ ख. माधवमासतः । ३ ख. °ते श्राद्धं यज्ञदान° । ४ ङ. म. एकमा° ।

अम्बरीष उवाच—

मार्गशीर्षादिकान्मासान्हित्वा पुण्यान्महामुने । सर्वमासाधिकं मासं वैशाखं किं प्रशंससि ॥ २
सर्वेभ्योऽप्यधिको यस्मान्माधवो माधवप्रियः । को विधिस्तत्र किं दानं किं तपः का च देवता ॥ ३
त(त्व)त्पदाम्भोजरजसा पावितस्य च मे मुने । उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ॥ ४
धर्मज्ञो धर्ममार्गाणामुपदेष्टाऽसि वै मुने । त्वमेकोऽखिलतत्त्वार्थं जानासि मुनिसत्तम ॥ ५
कर्तोपदेष्टा धर्माणामनुमन्ता प्रयोजकः । शास्त्रविद्भिर्मुनिवर स्मर्यन्ते समभागिनः ॥ ६
व्रतसत्रतपोदानैर्यत्फलं समवाप्यते । धर्मोपदेशदानेन तत्सर्वमुपलभ्यते ॥ ७
तीर्थस्नानं तपो यज्ञकर्म यत्कुरुते शुभम् । अपि तत्फलभागी स्याद्यः प्रवर्तयिता भवेत् ॥ ८
तदर्हसि भवान्पुण्यमुपदेष्टुं कृपानिधे । दुर्लभो गुरुसंबोधो देशकालोपपत्तयः ॥ ९
न केचन तथा भावाश्चेतः शीतलयन्ति नः । राज्यलाभादयोऽप्येते यथा तव समागमः ॥ १०

सूत उवाच—

अथ मन्दमृदुस्मेरस्फुरद्दन्तप्रभानुगः । अम्बरीषं प्रत्युवाच नारदो मुनिसत्तमः ॥ ११

नारद उवाच—

शृणु राजन्प्रवक्ष्यामि हिताय जगतस्तव । विधिं माधवमासस्य यः प्रोक्तो ब्रह्मणा पुरा ॥ १२
दुर्लभं भारते वर्षे जन्म तस्मान्मनुष्यता । मानुषे दुर्लभं चापि स्वस्वधर्मे प्रवर्ति(र्त)नम् ॥ १३
ततोऽपि भक्तिर्भूपाल वासुदेवे सुदुर्लभा । तत्रापि दुर्लभो मासो माधवो माधवप्रियः ॥ १४
तमवाप्य ततो मासं स्नानदानजपादिकम् । कुर्वन्ति विधिना ये तु धन्यास्ते कृतिनो नराः ॥ १५
तेषां दर्शनमात्रेण पापिनोऽपि विकल्मषाः । भवन्ति भगवद्भावभाविता धर्मकाङ्क्षिणः ॥ १६
माधवे मासि यैः स्नातं प्रातर्नियमसंयुतैः । ते कोटिवर्षपर्यन्तं क्रीडन्ते नन्दने वने ॥ १७
यथा न वारिधिसमो लोके कोऽपि जलाशयः । तथा मासो न वैशाखसदृशो माधवप्रियः ॥ १८
तावत्पापानि तिष्ठन्ति मनुष्याणां कलेवरे । यावत्किल मलध्वंसी मासो नाऽऽयाति माधवः ॥ १९
अवशिष्टदिनान्येव पञ्च मासस्य तस्य वै । एकादशीं समारभ्य सर्वमाससमानि वै ॥ २०
वैशाखे पूजितो देवो माधवो मधुहा तु यैः । नानोपचारै राजेन्द्र तैः प्राप्तं जन्मनः फलम् ॥ २१
किं किं न दुर्लभतरं प्राप्यते मासि माधवे । स्नानेन परमेशस्य पूजनेन यथाविधि ॥ २२
न दत्तं न हुतं जप्तं न तीर्थे मरणं कृतम् । यैर्हि नारायणो नैव ध्यातो निखिलपापहा ॥ २३
तेषां जन्म नृणां लोके ज्ञातव्यं निष्फलं नृप । द्रव्येषु विद्यमानेषु कृपणो यो भवेन्नरः ॥ २४
अदत्त्वा म्रियते यो हि तस्य द्रव्यं निरर्थकम् । तीर्थस्नानादितपसा सत्कुले जन्म लभ्यते २५
न दानेन विना भूप किंचिदप्युपतिष्ठति । वैशाखस्नानमाहात्म्यादपि पञ्चदिनात्मकात् ॥ २६
सत्कुले प्राप्यते जन्म वैभवं विविधं तथा । सुपुत्रः सुकुलं भूप धनधान्यं वरस्त्रियः ॥ २७
सुजन्म मरणं चापि सुभोगाः सुखमेव च । सदा दानेऽधिका प्रीतिरौदार्यं धैर्यमुत्तमम् ॥ २८
प्रसादात्तस्य देवस्य विष्णोश्चैव महात्मनः । नारायणस्य जायन्ते सिद्धयो भूप वाञ्छिताः ॥ २९
ऊर्जे मासि तपोमासि माधवे माधवप्रिये । स्नात्वा दामोदरं भक्त्या माधवं मधुसूदनम् ॥ ३०
विशेषेण समभ्यर्च्य दत्त्वा दानानि शक्तितः । ऐहिकं सुखमासाद्य नरो हरिपदं व्रजेत् ॥ ३१

---

१ म. स्मर्यते । २ ङ. च. छ झ. °संबन्धो दे° ।

अनेकजन्मार्जितपातकावली विलीयते माधवमज्जनेन ।
सूर्योदये भूप यथा तमिस्रं वचः स्वयंभूरिदमादिशन्मे ॥ ३२
चकार विष्णुर्विपुलप्रचारं मासस्य वै माधवसंज्ञकस्य ।
यमस्य गुप्तं वचसा विचिन्त्य मनुष्यलोकं गमितं चकार ॥ ३३
तस्मादस्मिन्समायाते माधवे मासि वैष्णवैः । स्नात्वा पुण्यजले तीर्थे गङ्गायाः पावने नृणाम् ॥
रेवाया वा महाराज यामुने सारदेऽथवा । प्रातस्त्वनुदिते भानौ विधानेन नृपोत्तम ॥ ३५
पूजयित्वा च देवेशं मुकुन्दं मधुसूदनम् । पुत्रपौत्रधनश्रेयोवाञ्छितानि सुखानि च ॥ ३६
अनुभूय तपस्त्वन्ते स्वर्गमक्षयमाप्नुयात् । एवं ज्ञात्वा महाभाग मधुसूदनमर्चय ॥ ३७
स्नात्वा सम्यग्विधानेन वैशाखे तु विशेषतः । देवमाराध्य गोविन्दं नारायणमनामयम् ॥ ३८
प्राप्स्यसि त्वं सुखं पुत्रं धनानि च हरेः पदम् । देवदेवं नमस्कृत्य माधवं पापनाशनम् ॥ ३९
प्रारभेत व्रतमिदं पौर्णमास्यां मधोर्नृप । यमैश्च नियमैर्युक्तः शक्त्या किंचित्प्रदाय च ॥ ४०
हविष्यभुग्भूमिशायी ब्रह्मचर्यव्रते स्थितः । कृच्छ्रादितपसा क्षामो ध्यायन्नारायणं हृदि ॥ ४१
एवं प्राप्य च वैशाखीं दद्यान्मधुतिलादिकम् । भोजनं द्विजमुख्येभ्यो भक्त्या धेनुं सदक्षिणाम्
अच्छिद्रं प्रार्थयेच्चापि तस्य स्नानस्य भूसुरान् । यथा लक्ष्मीः प्रिया भूप माधवस्य जगत्पतेः ४३
तथैव माधवो मासो मधुसूदनवल्लभः । एवंविधियुतो मर्त्यः स्नात्वा द्वादशवत्सरम् ॥ ४४
उद्यापनं चरेच्छक्त्या मधुसूदनतुष्टये । इदं माधवमासस्य माहात्म्यं कथितं तव ॥
यत्पुरा ब्रह्मणो वक्त्राच्छ्रुतमासीन्मया नृप ॥ ४५

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाससमाहात्म्ये षडशीतितमोऽध्यायः ॥ ८६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६५७६

---

अथ सप्ताशीतितमोऽध्यायः ।

---

सूत उवाच—
इति तस्य वचः श्रुत्वा नारदस्य स भूपतिः । प्रणम्य विस्मितः प्राह चिन्तयन्मनसा हरिम् ॥ १
अम्बरीष उवाच—
कथमेतद्विमुत्तामः स्वल्पायासेन यन्मुने । प्राप्यते स्नानमात्रेण फलं चैवातिदुर्लभम् ॥ २
नारद उवाच—
सत्यमुक्तं त्वया राजन्नल्पायासेन यन्महत् । फलं संप्राप्यते तत्र श्रद्धत्स्व विधिभाषितम् ॥ ३
धर्मस्य गतयः सूक्ष्मा दुर्ज्ञेया ह्रीश्वरैरपि । मुह्यन्ते चात्र विद्वांसोऽचिन्त्यशक्तिर्हरेः कृतौ ॥ ४
विश्वामित्रादयो राजन्धर्माधिक्येन बाहुजाः । ब्राह्मण्यं समुपायाताः सूक्ष्मा धर्मगतिस्त्वतः ॥ ५
अजामिलोऽपि भूपाल दासीपतिरिति श्रुतः । धर्मपत्नीपरित्यागी नित्यं पापपथि स्थितः ॥ ६
म्रियमाणः सुतस्नेहात्प्रोच्य नारायणेति च । तद्ध्याननामग्रहणात्पदं लेभे सुदुर्लभम् ॥ ७
अनिच्छयाऽपि दहति स्पृष्टो हुतवहो यथा । तथा दहति गोविन्दनाम व्याजादपीरितम् ॥ ८
कानीनस्य मुनेः पौत्रा भ्रातृजायाभिगामिनः । गोलकस्य च वै पण्डोः पुत्राः कुण्डाः स्वयं तथा

१ च. 'रस्त्वतेऽथ' । २ ङ. ब. दुर्गेया ।

ते पञ्चापि च भूपाल पाण्डवा द्रौपदीरताः । तेषां च पुण्यश्लोकत्वं सूक्ष्मा धर्मगतिस्त्वतः १०
विचित्राणि च कर्माणि विचित्रा भूतभावनाः । विचित्राणि च भूतानि विचित्राः कर्मशक्तयः ॥
कदाचित्सुकृतं कर्म कूटस्थं यदवस्थितम् । केनचित्कर्मणा भूप शुभेन परिवर्धते ॥ १२
फलं ददाति सुमहत्कस्मिन्नपि च जन्मनि । सूक्ष्मो धर्मोऽतिगहनो मीयते न यथा तथा ॥ १३
नैतस्य फलदानस्य श्रूयते भूप निश्चयः । यत्किंचित्सुकृतं कर्म च्छन्नं पापान्तरैरपि ॥ १४
तदागत्य कुतः क्वापि स्वं फलं च प्रयच्छति । कृतस्य स्ने(ने)[१] नाशोऽस्ति पुण्यस्य दुरितस्य च
तथाऽपि बहुभिः पुण्यैर्दुरितं याति दारुणम् । यदुक्तं भवता राजन्नायासाधिक्यतो भवेत् ॥१६
महत्पुण्यं च तत्रापि कारणं मे निशामय । स्वल्पायासमहायासौ यन्न्यल्पत्वमहत्त्वयोः ॥ १७
महापुण्यास्ततस्ते स्युः सततं कर्षकादयः । मन्त्रोच्चारं च(रश्च) सिंहादेरायासं(स) बहुलं(ल) त्वतः
पञ्चगव्यं प्रशस्तं वै व्रताङ्गत्वेन नो भवेत् । इतिकर्तव्यबाहुल्यं महत्त्वं च तदल्पता ॥ १९
जलाग्न्यादिप्रवेशस्य प्रसज्येत व्रतान्तरात् । इदमल्पं महच्चैतदिति नैव नियामकम् ॥ २०
फलं यच्चोदितं शास्त्रे तदेव स्यान्महन्नृप । यथाऽल्पनाशो महता महन्नाशस्तथाऽल्पतः ॥
किं त्वल्पविस्फुलिङ्गेन तृणराशिः प्रदह्यते ॥ २१

हत्यायुतं पापसहस्रमुग्रं गुर्वङ्गनाकोटिनिषेवणं च ।
स्तेयादिपापानि च कृष्णभक्तैरज्ञानजातानि लयं ह्रियन्ते ॥ २२

विष्णुभक्तिमता वीर यत्किंचित्क्रियतेऽल्पकम् । सुकृतं साधु विदुषा तदक्षयफलं भवेत् ॥ २३
संदेहो नात्र कर्तव्यो माधवे मासि माधवम् । समाराध्य नरो भक्त्या तत्तद्वाञ्छितमाप्नुयात् ॥ २४
अपत्यं द्रविणं रत्नं दारा हर्म्यं हया गजाः । सुखानि स्वर्गमोक्षौ च न दूरे हरिभक्तितः ॥ २५
एवं शास्त्रोक्तविधिना स्वल्पेनापि न संशयः[२] । पापस्य महतोऽपि स्यात्क्षयो वृद्धिः सुकर्मणः २६
फलाधिक्यं भवेद्भूप त्वाधिक्याद्भावकर्मणोः[३] । सूक्ष्मा धर्मस्य विज्ञेया गतिस्तु विविधैरपि ॥२७
प्रियो माधवमासोऽयं माधवस्य महात्मनः । एकोऽप्यनुष्ठितो लोकैः[४] समग्रेप्सितदायकः ॥ २८

पुण्येन गाङ्गेन जलेन काले देशे च यः स्नानपरोऽपि भूप ।
आजन्मतो भावहतोऽपि दाता न शुद्धिमेतीति मतं ममैतत् ॥ २९
गङ्गादितीर्थेषु वसन्ति जीवा देवालये पक्षिगणाश्च नित्यम् ।
विनाशमायान्ति कृतोपवासा भावोज्झिता नैव गतिं लभन्ते ॥ ३०
भावं ततो हृत्कमले निधाय श्रीमाधवं माधवमासि भक्त्या ।
यजेत यः स्नानपरो विशुद्धः पुण्यं न शक्ता वयमस्य वक्तुम् ॥ ३१
प्रज्वाल्य वह्निं घृततैलसिक्तं प्रदक्षिणावर्तशिखं स्वकाले ।
प्रविश्य दग्धः किल भावदुष्टो[५] न स्वर्गमाप्नोति फलं न चान्यत् ॥ ३२

श्रद्धत्स्व भूप तस्मात्त्वं माधवस्य फलं प्रति । स्वल्पं चापि शुभं कर्म विकर्मशतनाशनम् ॥ ३३

यथा हरेर्नामभयेन भूप नश्यन्ति सर्वे दुरितस्य वृन्दाः ।
नूनं रवौ मेषगते विभाते स्नानेन तीर्थे च हरिस्तवेन ॥ ३४

तेजसा वैनतेयस्य पाप्मानः पन्नगा इव । विद्रवन्ति च वैशाखस्नानेनोषसि निश्चितम् ॥ ३५

१ ङ. म. ॰हमासोऽयं पु॰ । २ ङ. म. ॰यः । वचः पापस्य महतः क्षयो । ३ घ. ञ. ॰द्भाविक॰ । ४ क. च. छ. ड. लोके । ५ ङ. म. भावयुक्तो ।

गङ्गायां नर्मदायां वा स्नात्वा मेषगते रवौ । पापप्रशमनं स्तोत्रं यः पठेद्भक्तिभावतः ॥ ३६
एककालं द्विकालं वा त्रिसंध्यमपि भूपते । स याति परमं स्थानं सर्वपापविवर्जितः ॥ ३७
एतत्ते सर्वमाख्यातमम्बरीष समासतः । वैशाखस्नानमाहात्म्यं किमन्यच्छ्रोतुमिच्छसि ॥ ३८

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६६१९

---

अथाष्टाशीतितमोऽध्यायः ।

---

अम्बरीष उवाच—

पापप्रशमनं स्तोत्रं श्रोतुमिच्छामि ते मुने । यस्य स्मरणमात्रेण पापराशिर्विलीयते ॥ १
धन्योऽस्म्यनुगृहीतोऽस्मि श्रावितोऽस्मि शुभं विधिम् । विकर्मोत्पतितं यस्य श्रवणादेव हीयते॥२
चित्रं किमत्र मधुसूदन दैवतस्य स्नानस्य पुण्यसवनैरिह माधवस्य ॥
स्नानैरवश्यविहितैरघराशिनाशः स्यादस्य नामपठनादपि तस्य लोकः ॥ ३
तदेव पुण्यं परमं पवित्रं हृद्यं च लोके सुकृतैकलभ्यम् ।
यदुच्यते केशवनामधेयं मन्ये मुने माधवमासि भव्यम् ॥ ४
धन्यास्तु ते माधवमासि नाम स्मरन्ति येऽहो मधुसूदनस्य ।
तस्यैव मे किंचिदतश्चरित्रं पुनः पवित्रं वद मन्यसे चेत् ॥ ५

सूत उवाच—

वचः समाकर्ण्य हरिप्रियस्य प्रीतो मुनिस्तस्य नृपोत्तमस्य ।
तन्माधवस्नानसमुत्सुकोऽपि कथा रसेनाऽऽह स माधवस्य ॥ ६

नारद उवाच—

मन्ये महीपाल मिथो मुकुन्दकथारसालापविधिर्विशुद्धः ॥
त्वया समो(मं) माधवमासधर्मस्नानाधिकोऽयं हरिदैवतस्य ॥ ७
जीवितं यस्य धर्मार्थे धर्मो हर्यर्थमेव च । अहोरात्राणि पुण्यार्थं तं मन्ये वैष्णवं भुवि ॥ ८
किंचिद्वक्ष्यामि ते राजन्वैशाखस्नानजं फलम् । अस्मत्पिताऽपि नो वक्तुमलं विस्तरतोऽखिलम्॥
यत्र मज्जनमात्रेण पापा मुक्तिमुपागताः । पुरा तीर्थप्रसङ्गेन भ्रमन्कोऽपि मुनीश्वरः ॥ १०
मुनिशर्मेति विख्यातो धर्मात्मा सत्यवाक्शुचिः। युक्तः शमदमाभ्यां च शान्तिधर्मेण संयुतः ११
युक्तश्च पितृकार्येषु श्रुतिस्मृतिविधानवित् । युक्तो मधुरवाक्येषु संयुक्तो हरिपूजने ॥ १२
युक्तो वैष्णवसंसर्गे त्रिकालज्ञानवान्मुनिः । दयालुरतितेजस्वी तत्त्वविद्ब्राह्मणप्रियः ॥ १३
माधवे मासि रेवायां स्नानार्थं प्रतिसंचरन् । अग्रतः पञ्च पुरुषान्ददर्शातीव दुर्गतान् ॥ १४
परस्परस्य संसर्गकारिणः कृष्णविग्रहान् । वटच्छायामुपाश्रित्य समासीनान्महीपते ॥ १५
ईक्षतो दिक्षु सर्वासु दुरितोद्विग्नचेतसः । तानालोक्य द्विजश्रेष्ठश्चिन्तयामास विस्मितः ॥ १६
कुतो ह्येते नरा भीमे विपिने दीनचेष्टिताः । चौरा वा विकृताकारा दृश्यन्ते पापभागिनः ॥ १७

---

१ क. च क्षान्तिरार्जवसं॰ । ङ. च. छ. ड. च क्षान्तिसंतोषसं॰ ।

परस्परं च भाषन्तो भिन्नाञ्जनचयोपमाः । यावदेवं स विप्राग्र्यो विचारयति धीरधीः ॥ १८
तावदागम्य ते प्रोचुर्बद्धाञ्जलिपुटा मुनिम् ॥ १९

पुरुषा ऊचुः—

भव्यं भवन्तं पुरुषोत्तमं वै मन्यामहे विप्रवर प्रसीद ॥
यदात्मदुःखं च वयं विचार्य विज्ञापयामः शृणु तद्द्विजेन्द्र ॥ २०

सन्तः प्रतिष्ठा दीनानां दैवादुद्भूतपाप्मनाम् । आर्तानामार्तिहन्तारो दर्शनादेव साधवः ॥ २१
अहं पञ्चालदेशीयः क्षत्रियो नरवाहनः । ब्राह्मणं हतवान्मोहाच्छरेणाध्वनि पापकृत् ॥ २२
शिखासूत्रविहीनश्च तिलकेन विवर्जितः । अटामि जगतीमेतां ब्रह्मघ्नोऽहमिति ब्रुवन् ॥ २३
ब्रह्मघ्नायातिपापाय भिक्षामन्नं (न्नं) प्रदीयताम् । एवं सर्वेषु तीर्थेषु भ्रमन्नत्रास्मि चाऽऽगतः २४
ब्रह्महत्या न मेऽद्यापि प्रयाति मुनिसत्तम । एवं मे वर्षमेकं हि व्यतीतं कुर्वतोऽनघ ॥ २५
दह्यमानस्य पापेन शोकाकुलितचेतसः । चन्द्रशर्माऽपरो विप्रो योऽयं संलक्ष्यते द्विज ॥ २६
गुरुघाती स तु ब्रह्मन्मोहाकुलितमानसः । निवसन्मागधे देशे संत्यक्तः स्वजनैस्ततः ॥ २७
दैवादसावपि मुने भ्रमन्निह समागतः । शिखासूत्रविहीनश्च विप्रलिङ्गविवर्जितः ॥ २८
पृष्टो मया तु वृत्तान्तं सत्यमेवावदद्द्विज । वसता यद्गुरोर्गेहे क्रोधाकुलितचेतसा ॥ २९
महामोहगतेनापि यथा वै घातितो गुरुः । तेन पापेन दग्धोऽसौ वर्तते शोकपीडितः ॥ ३०
तृतीयोऽयं पुनः स्वामिन्देवशर्मा श्रमार्दितः । सुरापो ब्राह्मणो जातो मोहाद्वेश्याप्रसङ्गतः ॥ ३१
पृष्टो मयाऽयमपि मे यथावृत्तं न्यवेदयत् । आत्मनश्चेष्टितं पूर्वमन्तस्तापेन पीडितः ॥ ३२
निरस्तः सर्वलोकैश्च भार्याबन्धुजनैरपि । तेन पापेन संयुक्तो भ्रमन्नत्रायमागतः ॥ ३३
चतुर्थो विधरो[1] नाम वैश्योऽयं गुरुतल्पगः । मोहान्मासत्रयं यावद्वेश्याभूतां च मातरम् ॥ ३४
बुभुजे स विदेहस्थां ज्ञाततत्त्वस्ततश्चरन् । दुःखितोऽभ्यागतश्चात्र भ्रममाणो महीं मुने ॥ ३५
पञ्चमोऽयं महापापी पापिसंसर्गकारकः । प्रत्यहं धनलोभेन चौर्यादि कृतवान्बहु ॥ ३६
वैश्योऽसौ पातकैः क्रान्तस्ततस्त्यक्तो जनैः स्वयम् । निर्विण्णमानसो दैवान्नन्दनामेह संगतः॥३७
एवं पञ्चापि पापिष्ठाः स्थानमेकमुपागताः । कः कस्यापि न संपर्के भोजनाच्छादनादपि ॥ ३८
करोति च महाभाग विना वार्तां द्विजोत्तम । विशन्त्येकासने नैव न स्वपन्त्येकसंस्तरे ॥ ३९
एवं दुःखसमाक्रान्ता नानातीर्थेषु वै गताः । नास्माकं पातकं घोरं प्रयाति मुनिसत्तम ॥ ४०
दृष्ट्वा भवन्तं दीप्यन्तं प्रसन्नानि मनांसि नः । वदन्ति दुरितप्रान्तं साधोस्ते पुण्यदर्शनात् ॥ ४१
उपायं वद नः स्वामिन्यथा पापक्षयो भवेत् । ज्ञायसे करुणोऽस्माभिस्त्वं तु वेदार्थवित्प्रभो॥४२
आर्तानां मार्गमाणानां दुःखच्छेदमुपागतः[2] । मोहादवाप्तपापानां त्वमुद्धर्ताऽसि निश्चितम् ॥ ४३

नारद उवाच—

तेषामेवं वचः श्रुत्वा मुनिशर्मा द्विजोत्तमः । इदमाह विचार्यैतान्करुणावरुणालयः ॥ ४४

मुनिशर्मोवाच—

यूयमज्ञानतः प्राप्ताः पापानि सत्यभाषिणः । अनुतापयुता यस्मादनुग्राह्या मया ततः ॥ ४५
शृणुध्वं मद्वचः सत्यमूर्ध्वबाहुर्वदाम्यहम् । [*यन्मयाऽङ्गिरसः पूर्वं श्रुतं मुनिसमागमे ॥ ४६

* धनुश्चिह्नान्तर्गतं झ. ञ. पुस्तकयोर्नास्ति ।

१ ङ. च. छ. ड. विधुरो । २ झ. ञ. °खच्छिद्रमु° ।

तद्दृष्टं वेदशास्त्रेषु सर्वेषां प्रत्ययावहम्] । विष्णुनाऽऽराधितेनाऽऽदौ स्वयमुक्तं च तत्त्वतः ॥ ४७
न तृप्तिरशनादन्या न गुरुर्जनकात्परः । न पात्रमन्यद्विप्रेभ्यो न देवः केशवात्परः ॥ ४८
न गङ्गया समं तीर्थं न दानं सुरभीसमम् । न गायत्र्या समं जाप्यं नैकादश्या समं व्रतम् ॥ ४९
न भार्यया समं मित्रं न च धर्मो दयासमः । न स्वातन्त्र्यसमं सौख्यं गार्हस्थ्यान्नाऽऽश्रमः परः
न सत्यात्पर आचारो न संतोषसमं सुखम् । न माधवसमो मासो महापापहरः परः ॥ ५१
विधिनाऽनुष्ठितो भक्त्या मधुसूदनवल्लभः । गङ्गादिषु च तीर्थेषु विशेषेण सुदुर्लभः ॥ ५२
प्रायश्चित्तानि सर्वाणि वाजिमेधमुखान्यपि । तावद्गर्जन्ति पापिष्ठा यावन्नाऽऽयाति माधवः ॥५३
वैशाखे खलखे(खले) मासि यः स्नायाद्धरितत्परः । हरिपादसमुद्भूते सलिले विमलाशयः ॥५४
स एव सर्वपापैस्तु मुक्तो यायात्परां गतिम् ॥ ५५
मासे तु वै माधवसंज्ञकेऽस्मिन्यः स्नाति पापैः स विमुच्यते हि ।
मेषस्थिते भास्वति नर्मदायाः शर्मप्रदे वारिणि वारिताघे ॥ ५६
दुर्लभा हि महानद्यो माधवे मासि सर्वतः । ततोऽपि दुर्लभा गङ्गा यमुना चापि नर्मदा ॥ ५७
पापास्त्वेतासु तिसृषु प्राप्यैकामपि सादरम् । यः स्नाति माधवे मासि विपापः स हरिं व्रजेत्५८
तस्मादहो सह मया सुकृतैकसारे वैशाखमासि च भवन्त उपेत्य रेवाम् ॥
मज्जन्तु पातककृतो मुनिवृन्दजुष्टे रेवाजले निखिलपापभयापहत्यै ॥ ५९
एवमुक्तास्ततः सर्वे मुदिता मुनिना सह । जग्मुस्ते पापिनो रेवां शंसन्तोऽद्भुतकारिणीम् ॥ ६०
द्विजस्तु नर्मदातीरं संप्राप्य हृष्टमानसः । सस्नौ वेदोक्तविधिना प्रातःकाले नराधिप ॥ ६१
ते पापिनः पञ्च यदैव रेवाजले निमग्ना वचसैव तस्य ।
श्रीमाधवे मासि विवर्णदेहाः सद्यः सुवर्णैकरुचो बभूवुः ॥ ६२
पापप्रशमनं स्तोत्रं श्राविता मुनिशर्मणा । समक्षं सर्वलोकानां जातास्ते वरकान्तयः ॥ ६३
तत्रस्था मानवास्तांस्तु विरजान्स्नानमात्रतः । न स्पृशन्ति च राजेन्द्र पापिसंसर्गशङ्कया ॥ ६४
मुनिशर्मानुरोधेन ततो धर्मप्रमाणतः । सद्यो दिव्याऽभवद्वाणी यदैते विगतैनसः ॥ ६५
स्नातानां माधवे मासि [*मुकुन्दहृदयात्मनाम् । पापप्रशमनं स्तोत्रं शृण्वतामिह सादरम् ॥ ६६
सर्वेषामेव पापानां प्रायश्चित्तमिदं परम् । यत्प्रातर्माधवे मासि] भक्त्या तीर्थावगाहनम् ॥ ६७
इत्येवमाकर्ण्य गिरं नभस्थामत्यद्भुतामाशु ततो मनुष्याः ।
शशंसुरेतानपि पञ्च पुण्यान्वैशाखमासं च मुनिं च रेवाम् ॥ ६८
अथाऽऽकर्णय भूपाल स्तवं दुरितनाशनम् । यमाकर्ण्य नरो भक्त्या मुच्यते पापराशिभिः ६९
यस्य स्मरणमात्रेण पापिनः शुद्धिमागताः । अन्येऽपि बहवो मुक्ताः पापादज्ञानसंभवात् ॥ ७०
परदारपरद्रव्यजीवहिंसादिके यदा । प्रवर्तते नृणां चित्तं प्रायश्चित्तं स्तुतिस्तदा ॥ ७१
विष्णवे विष्णवे नित्यं विष्णवे विष्णवे नमः । नमामि विष्णुं चित्तस्थमहंकारगतं हरिम् ॥ ७२
चित्तस्थमीशमव्यक्तमनन्तमपराजितम् । विष्णुमीड्यमशेषाणामनादिनिधनं हरिम् ॥ ७३
विष्णुश्चित्तगतो यन्मे विष्णुर्बुद्धिगतश्च यत् । योऽहंकारगतो विष्णुर्यो विष्णुर्मयि संस्थितः॥ ७४

---

* धनुश्चिह्नान्तर्गतः पाठो ङ. च. छ. ड. पुस्तकस्थः ।

---

१ ङ. च. छ. ड. °स्य श्रवण° ।

करोति कर्तृभूतोऽसौ स्थावरस्य चरस्य च । तत्पापं नाशमायाति तस्मिन्विष्णौ विचिन्तिते ७५
ध्यातो हरति यः पापं स्वप्ने दृष्टश्च पापिनाम् । तमुपेन्द्रमहं विष्णुं नमामि प्रणतप्रियम् ॥ ७६
जगत्यस्मिन्निरालम्बे ह्यजमक्षरमव्ययम् । हस्तावलम्बनं स्तोत्रं विष्णुं वन्दे सनातनम् ॥ ७७
सर्वेश्वरेश्वर विभो परमात्मन्नधोक्षज । हृषीकेश हृषीकेश हृषीकेश नमोऽस्तु ते ॥ ७८
नृसिंहानन्त गोविन्द भूतभावन केशव । दुरुक्तं दुष्कृतं ध्यातं शमयाऽऽशु जनार्दन ॥ ७९
यन्मया चिन्तितं दुष्टं स्वचित्तवशवर्तिना । आकर्णय महाबाहो तच्छमं नय केशव ॥ ८०
ब्रह्मण्य देव गोविन्द परमार्थपरायण । जगन्नाथ जगद्धातः पापं शमय मेऽच्युत ॥ ८१
यच्चापराह्ने सायाह्ने मध्याह्ने च तथा निशि । कायेन मनसा वाचा कृतं पापमजानता ॥ ८२
जानता च हृषीकेश पुण्डरीकाक्ष माधव । [*नामत्रयोच्चारणतः सर्वं यातु मम क्षयम् ॥ ८३
शारीरं मे हृषीकेश पुण्डरीकाक्ष मानसम् । पापं प्रशममायातु वाक्कृतं मम माधव] ॥ ८४
यद्भुञ्जानः पिबंस्तिष्ठन्स्वपञ्जाग्रन्यदा स्थितः । अकार्षं पापमर्थार्थं कायेन मनसा गिरा ॥ ८५
महदल्पं च यत्पापं दुर्योनिनरकावहम् । तत्सर्वं विलयं यातु वासुदेवस्य कीर्तनात् ॥ ८६
परं ब्रह्म परं धाम पवित्रं परमं च यत् । अस्मिन्संकीर्तिते विष्णौ यत्पापं तत्प्रणश्यतु ॥ ८७
यत्प्राप्य न निवर्तन्ते गन्धस्पर्शविवर्जितम् । सूरयस्तत्पदं विष्णोस्तत्सर्वं मे भवत्वलम् ॥ ८८
पापप्रशमनं स्तोत्रं यः पठेच्छृणुयान्नरः । शारीरैर्मानसैर्वाचा कृतैः पापैः प्रमुच्यते ॥ ८९
मुक्तः पापग्रहादिभ्यो याति विष्णोः परं पदम् । तस्मात्सर्वप्रयत्नेन स्तोत्रं सर्वाघनाशनम् ॥९०
प्रायश्चित्तमघौघानां पठितव्यं नरोत्तमैः । प्रायश्चित्तैः स्तोत्रजपैर्व्रतैर्नश्यति पातकम् ॥ ९१
ततः कार्याणि संसिद्ध्यै तानि वै भुक्तिमुक्तये । पूर्वजन्मार्जितं पापमैहिकं च नरेश्वर ॥ ९२
स्तोत्रस्य श्रवणादस्य सद्य एव विलीयते । पापद्रुमकुठारोऽयं पापेन्धनदवानलः ॥ ९३
पापराशितमस्तोमभानुरेष स्तवो नृप । मया प्रकाशितस्तुभ्यं तथा लोकानुकम्पया ॥ ९४
स्तवोऽयं यो मया प्राप्तो रहस्यं पितुरादरात् । इति ते यन्मया प्रोक्तं स्तोत्रं पापप्रणाशनम् ९५
अस्यापि पुण्यमाहात्म्यं वक्तुं शक्तः स्वयं हरिः । स्वस्ति तेऽस्तु गमिष्यामि गङ्गायामथ सत्वरम्
स्नातुं मासः समायातो मासानां माधवो महान् ॥ ९६

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्येऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६७११

---

अथैकोननवतितमोऽध्यायः ।

---

सूत उवाच—

गन्तुं समुद्यतं ज्ञात्वा मुनिं राजा ततो मुदा । विधिं पप्रच्छ संक्षिप्तं स्नानदानकथोचितम् ॥ १

अम्बरीष उवाच—

मुने वैशाखमासेऽस्मिन्को विधिः किं तपोऽधिकम् । किंच दानं कथं स्नानं कथं केशवपूजनम् ॥
कृपया वद विप्रर्षे सर्वज्ञस्त्वं हरिप्रियः । विशेषतोऽपि पूजाया विधिं तीर्थपदो वद ॥ ३

---

* धनुश्चिह्नान्तर्गतः पाठो ङ. च. छ. ड. पुस्तकस्थः ।

१ झ. °स्य श्राव° ।

नारद उवाच—
मेषसंक्रमणे भानोर्माधवे मासि सत्तम । महानद्यां नदीतीर्थे नदे सरसि निर्झरे ॥ ४
देवखाते तथा स्नायाद्यथाप्राप्ते जलाशये । दीर्घिकासु च कूपादौ नियमेन हरिं स्मरन् ॥ ५
मधुमासस्य शुक्लायामेकादश्यामुपोषयेत् । पञ्चदश्यां ततो धीरो मेषसंक्रमणेऽपि वा ॥ ६
वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया । मधुसूदनमभ्यर्च्य कुर्यात्सुस्नानपूर्वकम् ॥ ७
वैशाखमखिलं मासं मेषसंक्रमणे रवेः । प्रातः सनियमस्नानात्प्रीयतां मधुसूदनः ॥ ८
[*मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात् । निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् ॥ ९
माधवे मेषगे भानौ मुरारे मधुसूदन । ] प्रातःस्नानेन मे नाथ यथोक्तफलदो भव ॥ १०
यथा ते माधवो मासो वल्लभो मधुसूदन । प्रातःस्नानेन मे तस्मिन्फलदः पापहा भव ॥ ११
एवमुच्चार्य तत्तीर्थे पादौ प्रक्षाल्य वाग्यतः । स्मरन्नारायणं देवं स्नानं कुर्याद्विधानतः ॥ १२
तीर्थं प्रकल्पयेद्विद्वान्मूलमन्त्रमिमं पठन् । ॐनमो नारायणाय मूलमन्त्र उदाहृतः ॥ १३
दर्भपाणिस्तु विधिवदाचान्तः प्रणतो भुवि । चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः ॥ १४
प्रकल्प्याऽऽवाहयेद्गङ्गां मन्त्रेणानेन वै नरः । विष्णुपादप्रसूताऽसि वैष्णवी विष्णुदेवता ॥ १५
त्राहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात् । तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् ॥
दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि । नन्दिनीति च ते नाम वेदेषु नलिनीति च॥१७
दक्षा पृथ्वी वियद्गङ्गा विश्वकाया शिवाऽमृता । विद्याधरी महादेवी तथा लोकप्रसादिनी ॥ १८
क्षेमंकरी जाह्नवी च शान्ता शान्तिप्रदायिनी । एतानि पुण्यनामानि स्नानकाले प्रकीर्तयेत् ॥ १९
भवेत्संनिहिता तेन गङ्गा त्रिपथगामिनी । सप्तवाराभिजप्तेन करसंपुटयोजिता ॥ २०
मूर्ध्नि बद्धाञ्जलिर्भूत्वा चतुर्वा षट्च सप्त वा । स्नानं कृत्वा मृदा तद्वदामन्त्र्य तु विधानतः॥२१
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे । मृत्तिके हर मे पापं यन्मया पूर्वसंचितम् ॥ २२
उद्धृताऽसि वराहेण विष्णुना शतबाहुना । नमस्ते सर्वलोकानां प्रभवारणि सुव्रते ॥ २३
एवं स्नात्वा ततः पश्चादाचम्य तु विधानतः । उत्थाय वाससी शुक्ले शुद्धे तु परिधापयेत् ॥ २४
ततस्तु तर्पणं कुर्यात्त्रैलोक्याप्यायनाय वै । ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम् ॥ २५
देवान्यक्षांस्तथा नागान्गन्धर्वाप्सरसोऽसुरान् । क्रूरान्सर्पान्सुपर्णांश्च तरूंन्वै जन्तुकान्खगान् २६
विद्याधराञ्जलधरांस्तथैवाऽऽकाशगामिनः । निराधाराश्च ये जीवाः पापकर्मरताश्च ये ॥ २७
तेषामाप्यायनार्थाय दीयते सलिलं मया । कृत्वोपवीती(तं) देवेषु निवीती च भवेन्नरः ॥ २८
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा । सनकः सनन्दनश्चैव तृतीयश्च सनातनः ॥ २९
सनत्कुमारश्च तथा कपिलश्चाऽऽसुरिश्च वै । वोढुः पञ्चशिखस्तद्वन्मुख्या ऋषिसुता इमे ॥ ३०
सर्वेऽपि तृप्तिमायान्तु मया दत्तेन वारिणा । मरीच्य(चिम)त्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्॥३१
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च । देवब्रह्मऋषीन्सर्वांस्तर्पयेदक्षतोदकैः ॥ ३२
अपसव्यं ततः कुर्यात्सव्यं जान्वाच्य भूतले । अग्निष्वात्तास्तथा सौम्या हविष्मन्तस्ततोष्मपाः॥
कव्यानलान्बर्हिषदस्तथा मातामहानपि । संतर्प्य विधिवत्सर्वानिमं मन्त्रमुदीरयेत् ॥ ३४
येऽबान्धवा बान्धवा येऽप्यन्यजन्मनि बान्धवाः। ते तृप्तिमखिला यान्तु येऽस्मत्तस्तोयकाङ्क्षिणः

* धनुश्चिह्नान्तर्गतः पाठो ङ. च. छ. झ. पुस्तकस्थः ।

१ झ. °र्वा सप्त षड्वा । ञ. °र्वा सप्तषट्पदा । ज्ञा° । २ झ. ञ. °खिलां या° ।

आचम्य विधिवत्पश्चादालिखेत्पद्ममग्रतः । साक्षतैश्च सपुष्पैश्च सलिलारुणचन्दनैः ॥ ३६
अर्घ्यं दद्यात्प्रयत्नेन सूर्यनामानुकीर्तनैः । नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे ॥ ३७
सहस्ररश्मये नित्यं नमस्ते सर्वतेजसे । नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल ॥ ३८
पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदभूषित । नमस्ते सर्वलोकानां सुप्तानामुपबोधन ॥ ३९
सुकृतं दुष्कृतं चैव सर्वं पश्यसि सर्वदा । सत्यदेव नमस्तेऽस्तु प्रसीद मम भास्कर ॥ ४०
दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते । एवं सूर्यं नमस्कृत्य सप्तधा तु प्रदक्षिणम् ॥ ४१
द्विजं गां काञ्चनं स्पृष्ट्वा पश्चाच्च स्वगृहं व्रजेत् । आश्रमस्थांश्च संपूज्य प्रतिमां चापि पूजयेत् ॥ ४२
पूर्वं भक्त्या च गोविन्दं गृहे च नियतात्मवान् । पूजयेद्भक्तितो राजन्नुभयत्र यथाविधि ॥ ४३
विशेषादपि वैशाखे योऽर्चयेन्मधुसूदनम् । सर्वसंवत्सरं यावदर्चितस्तेन माधवः ॥ ४४
माधवे मासि संप्राप्ते मेषस्थे कर्मसाक्षिणि । केशवप्रीतये कुर्यात्केशवव्रतसंचयम् ॥ ४५
दद्यादनेकदानानि तिलाज्यप्रभृतीनि च । जन्मकोटिसमुद्भूतपातकान्तकराणि च ॥ ४६
जलान्नशर्कराधेनुतिलधेनुमुखानि च । वित्तशाठ्यविवर्ज्यानि दानानीप्सितसिद्धये ॥ ४७
वैशाखं सकलं मासं नित्यस्नायी जितेन्द्रियः । जपन्हविष्यं भुञ्जानः सर्वपापैः प्रमुच्यते ॥ ४८
एकभुक्तमथो नक्तमयाचितमतन्द्रितः । माधवे मासि यः कुर्यात्स लभेत्सर्वमीप्सितम् ॥ ४९
वैशाखे विधिवत्स्नानद्वयं नद्युदके बहिः । हविष्यं ब्रह्मचर्यं च भूशय्या नियमस्थितिः ॥ ५०
व्रतं दानं जपो होमो मधुसूदनपूजनम् । अपि जन्मसहस्रोत्थं पापं हरति दारुणम् ॥ ५१
यथैव माधवो ध्यातो विनाशयति किल्बिषम् । तथैव माधवे स्नानं नियमेन विनिर्मितम् ॥ ५२
तीर्थे चानुदिनं स्नानं तिलैश्च पितृतर्पणम् । दानं धर्मघटादीनां मधुसूदनपूजनम् ॥ ५३
माधवे मासि कुर्वीत मधुसूदनतुष्टिदम् । तिलोदकसुवर्णान्नशर्कराम्बररोहिणीः ॥ ५४
पादत्राणातपत्राब्जं कुम्भान्दद्याद्द्विजातिषु । त्रिसंध्यं पूजयेदीशं भक्त्या च मधुसूदनम् ॥ ५५
साक्षाद्विमलया लक्ष्म्या समुपेतं समाहितः । सुवर्णतिलपात्रैश्च ब्राह्मणाञ्शक्तितो बहून् ॥ ५६
तर्पयेद्दुग्धपात्रैर्यो ब्रह्महत्यां व्यपोहति । वैशाखे मासि यः स्नात्वा प्रातर्नद्यां समाहितः ॥ ५७
पूजयित्वा हरिं भक्त्या पुष्पैः कालोद्भवैः फलैः । पूजयेद्ब्राह्मणाञ्शक्त्या पाषण्डालापवर्जितः ५८
तर्पयेद्वस्त्रगोदानै रत्नाद्यैर्धनसंचयैः । यश्चापि निःस्वपुरुषो माधवे मासि माधवम् ॥ ५९
पुष्पार्चनविधानेन पूजयेन्मधुसूदनम् । सर्वपापविनिर्मुक्तो याति सोऽपि परं पदम् ॥ ६०
आज्यं वित्तं यथाशक्त्या स्तोकं स्तोकं समाचरेत् । स जन्मशतसाहस्रं न शोकफलभाग्भवेत् ६१
न च व्याधिभयं तस्य न दारिद्र्यं न बन्धनम् । स विष्णुभक्तो जायेत धन्यो जन्मनि जन्मनि ॥
यावद्युगसहस्राणि शतमष्टोत्तरं भवेत् । तावत्स्वर्गे वसेद्धीरो भूपतिश्च पुनर्भवेत् ॥ ६३
भूपतिर्विविधान्भोगान्भुक्त्वा चैव यथासुखम् । माधवस्य प्रसादेन माधवे लीयते ततः ॥ ६४

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्य एकोननवतितमोऽध्यायः ॥ ८९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६७७५

अथ नवतितमोऽध्यायः ।

नारद उवाच—

शृणु राजेन्द्र वक्ष्यामि समासान्माधवार्चनम् । वैदिकं तान्त्रिकं चापि मिश्रकं पापनाशनम् ॥ १

१ ख. ङ. च. छ. ड. °तोऽन्वहम् । त° ।

अनन्तानन्तपारस्य नान्तः पूजाविधेर्नृप । अथ संक्षिप्य चोच्येत यथावदनुपूर्वशः ॥ २
वैदिकस्तान्त्रिको मिश्रः श्रीविष्णोस्त्रिविधो मखः । त्रयाणामुदितेनैव विधिना हरिमर्चयेत् ॥ ३
वैदिको मिश्रको वाऽपि विप्रादीनामुदाहृतः । तान्त्रिको विष्णुभक्तस्य शूद्रस्यापि प्रकीर्तितः ॥ ४
यथास्वनिगमेनोक्तं विधित्वं प्राप्य पूरुषः । यजेत्तं विधिवद्विष्णुं ब्रह्मचारी समाहितः ॥ ५
अर्चयेत्स्थण्डिले वाऽग्नौ सूर्ये स्वहृदि वा द्विजे । द्रव्येण भक्तियुक्तोऽर्चेत्स्वगुरुं तदनुज्ञया ॥ ६
पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये । उभयो(यै)रपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना ॥ ७
संध्योपासनकर्माणि वेदतन्त्रोदितानि च । पूजान्ते कल्पयेत्सम्यक्संकल्पं कर्मपावनम् ॥ ८
[*शैली धातुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाऽष्टविधा मता ॥
चराऽचरेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ] ॥ ९
उद्वासावाहने न स्तः स्थिरायां केशवार्चने । अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वयम् १०
स्नापनं त्वविलेख्यायामन्यत्र परिमार्जनम् । द्रव्यैः प्रसिद्धैर्देवार्चा प्रतिमादिष्वमायया ॥ ११
भक्तस्य च यथालब्धैर्भक्तिभावेन चैव हि । स्नानालंकरणं चेष्टमर्चायामेव भूपते ॥ १२
श्रद्धयोपहृतं श्रेष्ठं कृष्णभक्तेन वार्यपि । गन्धो धूपं(पः) सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥१३
शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः । आसीनश्च उदग्वक्त्रो ह्यर्चायामथ संमुखः ॥ १४
कृतन्यासः कृतन्यासां हर्यर्चां पाणिना स्पृशेत् । कलशं प्रोक्षणीयं च यथावदुपसादयेत् ॥ १५
तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च । प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च सादयेत् ॥ १६
पाद्यार्घ्याचमनीयार्थे त्रीणि पात्राणि दापयेत् । हृतशीर्ष्णा च शिखया गायत्र्या चाभिमन्त्रयेत् १७
पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां विभो । अण्वीं जीवकलां ध्यायन्नादान्ते सिद्धभाविताम् ॥ १८
तयाऽऽत्मभूतैया पिण्डव्याप्ते संपूज्य तन्मयः । आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गां तां प्रपूजयेत् ॥१९
पाद्यार्घस्नानार्हणादीनुपचारान्प्रकल्पयेत् । धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं हरेः ॥ २०
पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् । उभाभ्यां वेदतन्त्राभ्यां हरेरुभयसिद्धये ॥ २१
सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् । मुसलं कौस्तुभं मालां श्रीवत्सं चापि पूजयेत् ॥ २२
नन्दोपनन्दं गरुडं प्रचण्डं चण्डमेव हि । बलं महाबलं चैव मुकुन्दं कुमुदेक्षणम् ॥ २३
दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून्सुरान् । स्वस्वस्थानेष्वभिमुखान्पूजयेत्प्रोक्षणादिभिः ॥२४
चन्दनोशीरकर्पूरकुङ्कुमागरुवासितैः । सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥ २५
स्वर्णघर्मानुवाकेन महापुरुषविद्यया । पौरुषेणापि सूक्तेन सामनीराजनादिभिः ॥ २६
वस्त्रोपवीताभरणस्रग्गन्धाद्यनुलेपनैः । अलं कुर्वीत सप्रेमविष्णुभक्तो यथोचितम् ॥ २७
पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान् । गन्धधूपोपहारांश्च दद्याद्वै श्रद्धयाऽर्चकः ॥ २८
गुडपायससर्पींषि शष्कुल्यपूपमोदकान् । नैवेद्यं दधिदुग्धानि नैकसंज्ञानि कल्पयेत् ॥ २९
अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् । अन्नाद्यं नृत्यगीतादि पर्वण्यप्यन्वहं नृप ॥ ३०
विधिना विहिते कुण्डे मेखलावर्तवेदिभिः । अग्निमाधाय परितः समूहेत्पाणिनोदकम् ॥ ३१
परिस्तीर्याथ पर्युक्ष्य दत्त्वेध्मं च यथाविधि । प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नावाज्यसेचनम् ३२
तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः । लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥ ३३

* धनुश्चिह्नान्तर्गतः पाठो ङ. च. छ. ड. पुस्तकस्थः ।

१ ङ. च. छ. ड. अतः । २ म. °मार्दन्ते । ३ ङ. म. °तपिण्डा ये व्या° । ४ ङ. च. छ. ड. कुमुदं ।

स्फुरत्किरीटकटककण्ठसूत्राङ्गुलीयकम् । श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ३४
ध्यायन्नभ्यर्च्य दारूणि हविषा सघृतानि च । प्रास्याऽऽज्यभागावाघारौ दत्त्वा चाऽऽज्यप्लुतं हविः
अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् । मुखवासं च सुरभि ताम्बूलं च उपाहरेत् ॥ ३६
उपयोगं गृणन्नित्यं कर्माण्यभिरवाक्षरैः । सत्कथां श्रावयञ्शृण्वन्मुहूर्तं क्षणिको भवेत् ॥ ३७
स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि । स्तुत्वा प्रसीद भगवन्नित्यं वन्देत दण्डवत् ॥ ३८
शिरस्तत्पादयोः कृत्वा बाहुभ्यां च परस्परम् । प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥ ३९
इति शेषां हरेर्दत्तां शिरस्याधाय सादरम् । उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि चाऽऽत्मनः ४०
अर्चादिषु पदं यत्र श्रद्धावांस्तत्र चार्चयेत् । सर्वभूतेष्वात्मनि च सर्वात्मानमवस्थितम् ॥ ४१
एवं क्रियायोगपथैः पुमान्वैदिकतान्त्रिकैः । सर्वतस्तु यतः सिद्धिं हरेर्विन्दत्यभीप्सिताम् ॥ ४२
विष्णवर्चां संप्रतिष्ठाप्य मन्दिरं कारयेद्दृढम् । पुष्पोद्यानानि रम्याणि पूजाकर्मोपसिद्धये ॥ ४३
पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् । क्षेत्रापणपुरग्रामान्दत्त्वा सायुज्यतामियात् ॥ ४४
प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् । पूजादिना ब्रह्मलोकं त्रिभिस्तत्साम्यतामियात् ॥ ४५
नाश्वमेधेन यज्ञेन भक्तियोगं तु विन्दति । भक्तियोगं स लभत एवं यः पूजयेद्धरिम् ॥ ४६

यत्कृष्णप्रणिपातधूलिधवलं तद्वर्ष्म तद्वच्छुभं
नेत्रे चेत्तपसोर्जिते सुरुचिरे याभ्यां हरिर्दृश्यते ॥
सा बुद्धिर्विमलेन्दुशङ्खधवला या माधवव्यापिनी
सा जिह्वा मृदुभाषिणी नृप मुहुर्या स्तौति नारायणम् ॥ ४७

मूलमन्त्रेण कर्तव्यं स्त्रीशूद्रैरपि पूजनम् । श्रद्धया गुरुमार्गेण तथाऽन्यैरपि वैष्णवैः ॥ ४८
एतत्ते सर्वमाख्यातं पावनं माधवार्चनम् । विशेषान्माधवे मासि त्वमेतत्कुरु भूपते ॥ ४९

सूत उवाच—

इत्येवमादिश्य मुनिर्नरेन्द्रमामन्त्र्य तं मन्त्रविदं सभार्यम् ।
स्नातुं ययौ माधवमासि गङ्गामभ्यर्चितस्तेन नृपेण विप्रः ॥ ५०
विधिं स राजाऽपि तथा चकार वैशाखमासस्य मुनिप्रणीतम् ।
पत्न्या समं पुण्यधिया तमेव स चिन्तयल्लोकपवित्रकीर्तिः ॥ ५१

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये नवतितमोऽध्यायः ॥ ९० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६८२६

---

अथैकनवतितमोऽध्यायः ।

---

ऋषय ऊचुः—

सूत सूत महाप्राज्ञ समाः संजीव शाश्वतीः । यद्वयं पुण्यसमयं श्राविता जगतो हितम् ॥ १
वद भूयोऽपि भूयिष्ठं पिबामस्तावकं वचः । पायं पायं न तृप्यामो वयं सूत तदुत्तमम् ॥ २

सूत उवाच—

अत्राप्युदाहरन्तीममितिहासं पुरातनम् । संवादमादिलोकस्य जगतां जगदीशितुः ॥ ३

---

१ क. ङ. च. छ. ड. °कटिसू° । २ क. ज. °ह्वा नधुभा° ।

षट्सहस्राणि चोच्छ्राये विस्तारे च पुनस्त्रयम् । एवं युगसहस्राणि योजनानां विधाय च ॥ ४
वामया दंष्ट्रयोद्धृत्य चोद्धृताऽसौ वसुंधरा । दिव्यं वर्षसहस्रं वै दंष्ट्रया धारिता मही ॥
धर्माख्यानप्रसङ्गेन सोवाच विनयाद्विभुम् ॥ ५

धरोवाच—

एते द्वादश मासा वै षष्टिर्दिनशतत्रयम् । तेषां किमुत्तमं पुण्यं प्रियं च तव केशव ॥ ६
पवित्रः कार्तिको मासस्तुलासंस्थे दिवाकरे । मेषस्थे माधवो मासो भास्करे पठ्यते बुधैः ॥ ७
मार्गशीर्षोऽपि मासानां पावनः परिकीर्तितः । एवं मासाः पवित्रास्ते वासराः केऽपि कीर्तिताः
युगादयो युगान्ताश्च तथा कल्पादयः परे । सर्वेभ्योऽप्यधिकं मासं मे तेभ्यो देव पावनम् ॥ ९
सर्वयज्ञमयं श्रीमन्नेकं निश्चित्य मे वद ॥ १०

श्रीवाराह उवाच—

विधिनाऽविधिना चैव ये यजन्ति नरा धरे । माधवे मासि मां भक्त्या तैस्तु पूज्योऽस्म्यहं सदा
हिरण्याक्षवरारोहे माधवे तु मधुर्हतः । आदिदैत्यावुभावेतौ हत्वा त्वं तु समुद्धृता ॥ १२
त्रेतायुगे त्रयीधर्मो ज्ञानवर्णव्यवस्थितिः । माधवे मासि संभूता तस्मान्मे माधवः प्रियः ॥ १३
तृतीयायां माधवे तु युगं त्रेताभिधं सिते । प्रवृत्तं च त्रयीधर्मः पवित्रस्तेन कीर्तितः ॥ १४
अक्षय्या सोच्यते लोके तृतीया हरिवल्लभा । स्नाने दानेऽर्चने श्राद्धे जपे पूर्वजतर्पणे ॥ १५
येऽर्चयन्ति च वै विष्णुं श्राद्धं कुर्वन्ति यत्नतः । तेषां ददाम्यहं सर्वं यन्ममोभीष्टमुत्तमम् ॥ १६
ये ददत्यपि दानानि धन्यास्ते धार्मिका नराः । ये यजन्ति हरिं नित्यमध्वरैर्विविधैरपि ॥ १७
माधवे यजते यो मां तेभ्यस्तस्याधिकं फलम् । स्नानं दानं जपो होमस्तपो यज्ञादिकं व्रतम् १८
वैशाखे यत्कृतं देवि तस्य पुण्यफलं शृणु । मन्वन्तराणां कोटीस्तु दश पञ्च च सप्त च ॥ १९
मत्सांनिध्यगतास्तेऽपि तिष्ठन्ति भयवर्जिताः । यद्यपि स्युर्ग्रहाः सर्वे क्रूरा जन्मव्ययाष्टकाः २०
प्रातःस्नानेन वैशाखे सर्वे सौम्या भवन्ति वै । वैशाखे मासि यो विप्रान्भोजयेद्भक्तितत्परः ॥
सिक्थे सिक्थे भवेत्तृप्तिः पितॄणां युगसंख्यया ॥ २१

यच्छन्ति तत्र मधुराधिकभोजनानि
विप्रेषु वै यवतिलोदकभोजनाश्च ।
छत्राम्बराणि पदरक्षणभूषणानि
धन्यास्त एव परितोषकरा हि विष्णोः ॥ २२

विशेषादिह दातव्यास्तिला मधुसमन्विताः । धर्माय बृहते दीर्घदुरितक्षयहेतवे ॥ २३
एवं कृतेन यत्पुण्यं प्राप्यते मनुजैश्च तैः । तत्कैर्गणयितुं शक्यं वर्षकोटिशतैरपि ॥ २४
पुत्रपौत्रादिसंपत्तिं दीर्घायुश्च यथेप्सितम् । इहाऽऽप्नोति परत्रापि मामेव प्रतिपद्यते ॥ २५
यः परित्यज्य वैशाखव्रतमन्यदुपाचरेत् । स करस्थं महारत्नं हित्वा लोष्टं हि याचते ॥ २६

सूत उवाच—

एवं स भगवान्पूर्वमादिदेवोऽवदद्विभुः । माधवं मासमुद्दिश्य जगत्यां जगतीधरः ॥ २७
किमत्र बहुनोक्तेन न तदस्ति महीसुराः । यदप्राप्यं भवेन्मासि माधवे माधवार्चनात् ॥ २८
शृणु विप्र पुरावृत्तमिहार्थे परमाद्भुतम् । ब्राह्मणस्य च संवादं यमस्य च महात्मनः ॥ २९

१ झ. म. पुनः पुनः । ए° । २ झ. म. °भ्यो वद पावन । स° । ३ क. च. छ. ङ °स्ते वै ति° ।

मध्यदेशे महद्ग्रामो ब्राह्मणानां बभूव ह । गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः ॥ ३०
विद्वांसस्तत्र भूयिष्ठा विद्वांसश्चावसंस्तदा । अथ प्राह यमः कंचित्पुरुषं कृष्णपिङ्गलम् ॥ ३१
रक्ताक्षमूर्ध्वचिकुरं काकजङ्घाल्पनासिकम् । गच्छ त्वं भो महद्ग्रामं ततो ब्राह्मणमानय ॥ ३२
वसिष्ठगोत्रसंभूतं नामतो यज्ञदत्तकम् । ग्रामे निविष्टं विद्वांसं यज्ञकर्मविशारदम् ॥ ३३
न चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः । संहितादिगुणस्तेन तुल्योऽध्ययनजन्मना ॥ ३४
आकृत्या च तथा चिह्नैः समस्तैरेव सत्तमः । तमानय यथोदिष्टा [*पूजा कार्या हि तस्य मे ३५
स गत्वा प्रतिकूलं तु चकार यमशासनम् । तमेव चाऽऽनयामास प्रतिषिद्धो यमेन यः ॥ ३६
तस्मै यमः समुत्थाय] पूजां कृत्वा च धर्मवित् । प्रोवाच नीयतामेष सोऽन्यत्राऽऽनीयतामिति ॥

सूत उवाच—

एवमुक्ते तु वचने धर्मराजेन स द्विजः । उवाच धर्मराजं तं निर्विण्णो गमनेन वै ॥ ३८

ब्राह्मण उवाच—

कस्मादहमिहाऽऽनीतः कस्मात्प्रेषयसे पुनः । गन्तुं नैवोत्सहे तत्र मर्त्यलोके पुनः प्रभो ॥ ३९

यम उवाच—

इह क्षीणायुषां पुंसां वासः पुण्यवतां भवेत् । अयं मे धर्मराजस्य लोके धर्मः प्रकीर्तितः ॥ ४०
सौख्यभूमिरियं स्वर्गे धर्मराजो महीश्वरः । पुण्यापुण्यानुसारेण जन्तूनां सुखदुःखतः ॥ ४१
पापिनां यमरूपोऽस्मि नृणां निरयदायकः । तथा पुण्यवतां सौख्यस्वर्गदो धर्ममूर्तिमान् ॥ ४२
गच्छ विप्र त्वमद्यैव निलयं स्वं यथाऽऽगतः । अद्यास्ति दश वर्षाणि ह्यायुस्ते परिकीर्तितम् ४३
क्षये तवाऽऽयुषः प्राप्तिर्लोकस्यास्य भविष्यति । प्रष्टव्यं चेत्त्वया ह्यन्यत्पृच्छस्व प्रब्रवीमि ते ॥

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्य एकनवतितमोऽध्यायः ॥ ९१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६८७०

---

अथ द्विनवतितमोऽध्यायः ।

---

ब्राह्मण उवाच—

यत्कृत्वा सुमहत्पुण्यं स्वर्गः स्याद्ब्रूहि तन्मम । सर्वस्य त्वं प्रमाणं च धर्माधर्मविनिश्चये ॥ १
यदि देव मया सम्यग्गन्तव्यं निजमन्दिरम् । तद्ब्रूहि कर्मणा केन पतन्ति नरके नराः ॥
व्रजन्ति केन च स्वर्गं तत्सर्वं कृपया वद ॥ २

यम उवाच—

कर्मणा मनसा वाचा ये धर्मविमुखा नराः । विष्णुभक्तिविहीना ये ते वै निरयगामिनः ॥ ३
पश्यन्ति भेदबुद्ध्या ये ब्रह्माणं शंकरं हरिम् । विरक्ता विष्णुविप्रासु नरा निरयगामिनः ॥ ४
क्षेत्रवृत्तिगृहच्छेदं प्रीतिच्छेदं च ये नराः । आशाच्छेदं च कुर्वन्ति ते नरा नरकौकसः ॥ ५
आगतान्भोजनार्थं वै ब्राह्मणान्वृत्तिकर्षितान् । यः परीक्षेत मूढात्मा स ज्ञेयो नरकातिथिः ॥ ६
अनाथं वैष्णवं दीनं रोगार्तं वृद्धमेव च । नानुकम्पयते मूढः स ज्ञेयो नरकातिथिः ॥ ७
नियमांस्तु समादाय यः पश्चादजितेन्द्रियः । विलोपयति मूढात्मा स वै निरयभाजनम् ॥ ८

---

* धनुश्चिह्नान्तर्गतः पाठो ङ. च. छ. ड. पुस्तकस्थः ।

शृणु विप्र यथा यान्ति नराः स्वर्गं दयालवः । समासेनैव वक्ष्यामि किंचित्ते गौरवादहम् ॥ ९
येऽर्चयन्ति हरिं देवं विष्णुं जिष्णुं सनातनम् । नारायणमजं देवं विष्णुरूपं चतुर्भुजम् ॥ १०
ध्यायन्ति पुरुषं दिव्यमच्युतं ये स्मरन्ति च । लभन्ते ते हरिस्थानं श्रुतिरेषा सनातनी ॥ ११
इदमेव हि माङ्गल्यमिदमेव धनार्जनम् । जीवितस्य फलं चैतद्यद्दामोदरकीर्तनम् ॥ १२
कीर्तनाद्देवदेवस्य विष्णोरमिततेजसः । दुरितानि विलीयन्ते तमांसीव दिनोदये ॥ १३
गाथां गायन्ति ये नित्यं वैष्णवीं श्रद्धयाऽन्विताः । स्वाध्यायनिरता नित्यं ते नराः स्वर्गगामिनः १४
वासुदेवजपासक्तानपि पापकृतो जनान् । नोपसर्पन्ति तान्विप्र यमदूताः सुदारुणाः ॥ १५
नान्यत्पश्यामि जन्तूनां विहाय हरिकीर्तनम् । सर्वपापप्रशमनं प्रायश्चित्तं द्विजोत्तम ॥ १६
ये याचिताः प्रहृष्यन्ति प्रियं दत्त्वा वदन्ति च । त्यक्तदानफला ये तु ते नराः स्वर्गगामिनः ॥
वर्जयन्ति दिवास्वापं नराः सर्वसहाश्च ये । पर्वण्याश्रयभूता ये ते मर्त्याः स्वर्गगामिनः ॥ १८
द्विषतामपि ये द्वेषान्न वदन्त्यहितं कदा । कीर्तयन्ति गुणांश्चैव ते नराः स्वर्गगामिनः ॥ १९
ये शान्ताः परदारेषु कर्मणा मनसा गिरा । रमयन्ति न सत्त्वस्थास्ते नराः स्वर्गगामिनः ॥ २०
यस्मिन्कस्मिन्कुले जाता दयावन्तो यशस्विनः । सानुक्रोशाः सदाचारास्ते नराः स्वर्गगामिनः २१
व्रतं रक्षन्ति ये कोपाच्छ्रियं रक्षन्ति मत्सरात् । विद्यां मानापमानाभ्यां ह्यात्मानं तु प्रमादतः २२
मतिं रक्षन्ति ये लोभान्मनो रक्षन्ति कामतः । धर्मं रक्षन्ति दुःसङ्गात्ते नराः स्वर्गगामिनः ॥ २३
एकादश्यां च विधिवदुपवासपरायणाः । शुक्ले कृष्णे च ये विप्र ते नराः स्वर्गगामिनः ॥ २४
मातेव सर्वबालानामौषधं रोगिणामिव । रक्षार्थं सर्वलोकानां निर्मितैकादशी तिथिः ॥ २५
एकादशीसमं किंचित्पापत्राणं न विद्यते । तामुपोष्य विधानेन ते नराः स्वर्गगामिनः ॥ २६

ये भक्तिमन्तो मधुसूदनस्य नारायणस्याखिलनायकस्य ।
सत्येन हीना रजसाऽपि युक्ता गच्छन्ति ते नाकमनन्तपुण्याः ॥ २७

वेतसीं यमुनां सीतां पुण्यां गोदावरीनदीम् । सेवन्ते ये शुभाचाराः स्नानदानपरायणाः ॥ २८
न ते पश्यन्ति पन्थानं नरकस्य कदाचन ॥ २९

ये नर्मदायामिह शर्मदायां मज्जन्ति तुष्यन्त्यपि दर्शनेन ।
विधूतपापाश्च महेशलोकं गच्छन्ति ते तत्र चिरं रमन्ते ॥ ३०

स्नाताश्चर्मण्वतीतीरे त्रिरात्रं नियता नराः । व्यासाश्रमे विशेषेण ते नरा नाकिनः स्मृताः ॥ ३१
गङ्गाजले प्रयागे च केदारे पुष्करेऽपि वा । व्यासाश्रमे प्रभासे च मृतास्ते विष्णुगामिनः ॥ ३२
द्वारावत्यां कुरुक्षेत्रे योगाभ्यासेन वा मृताः । हरिरित्यर्णयुगलं वक्त्रे येषां हरिप्रियाः ॥ ३३
त्रिरात्रमपि यो विप्र द्वारवत्यां पुरि स्थितः । एकादशेन्द्रियैः पापं यत्कृतं भवति द्विज ॥ ३४
नरो निर्धूय तत्सर्वं व्रजेत्स्वर्गमिति स्थितिः । अश्वमेधसहस्राणि राजसूयशतानि च ॥ ३५
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् । एकतः क्रतवः सर्वे सर्वतीर्थतपांसि च ॥ ३६
महादानानि च ब्रह्मन्व्रतं वैष्णवमेकतः । वैष्णवव्रतजो धर्मो धर्मो यज्ञादिसंभवः ॥ ३७
एकत्र तुलितौ धात्रा तत्र पूर्वोऽभवद्गुरुः । हरिवासरभक्तानामच्युताच्युतभाषिणाम् ॥ ३८
नाहं शास्ता विशेषेण तेभ्यो विप्र बिभेम्यहम् । येषां पुत्रश्च पौत्रश्च एकादश्यामुपोषितः ॥ ३९

१ ख. परिकीर्तनम् । २ झ. ञ. °दा फलदा ये । ३ झ. ञ. दुरास्वापं । ४ ञ. °ण्या सहधर्मा ये । झ. °ण्या सहभू° । ५ ख. चेतसीं । ६ क. ञ. °तः । अश्वमेधसहस्राणि ध° ।

सहाऽऽत्मना स पुरुषाञ्शतमुद्धरते बलात् । उपोषणं ततः कुर्यात्पक्षयोरुभयोरपि ॥ ४०
एकादश्यां स पुरुषो भुक्तिमुक्त्येकसाधनम् । जया च विजया चैव जयन्ती पापनाशिनी ॥ ४१
त्रिस्पृश्या वञ्जुली चान्या पक्षसंवर्धिनी परा । तिलदग्धाऽपरा ज्ञेयाऽप्यखण्डद्वादशी तथा ४२
मनोरथाख्या च परा भीमद्वादशिका परा । इत्येवमादयो भेदा द्वादश्यां सन्ति केशवे ॥ ४३
व्रतेष्वेतेषु ये शक्त्या(क्ता) ज्ञेयास्ते ब्रह्मणि स्थिताः । श्रोतारो धर्मशास्त्राणां धर्मप्रत्ययसंगताः॥
प्रियंकराश्च बालानां स्वर्गलोके व्रजन्ति ते ॥ ४४
मासि मास्येकदिवसे दर्शे श्राद्धव्रता नराः । तृप्यन्ति पितरो येषां ते धन्याः स्वर्गगामिनः॥४५
भोजनेषूपपन्नेषु भोज्यं यच्छन्ति सादरम् । अभिन्नमुखरागेण शिष्टास्ते स्वर्गगामिनः ॥ ४६
नरनारायणावासे त्रिरात्रं ये समाश्रिताः । मर्त्यलोके च नन्दायां धन्यास्ते केशवप्रियाः ॥ ४७
षण्मासमुषिता विप्र पुरुषोत्तमसंनिधौ । एते स्युरच्युतात्मानो दृष्टा अप्यघहारिणः ॥ ४८
अनेकजन्मार्जितपुण्यतो ये मज्जन्ति तोये मणिकर्णिकायाः ॥
नमन्ति विश्वेशमवाप्य काशीं ते वै मयाऽपीह भवन्ति वन्द्याः ॥ ४९
पूजयित्वा हरिं ये तु भूमौ दर्भतिलैः सह । तिलान्विकीर्य लोहं च दत्त्वा धेनुं पयस्विनीम् ॥
ये मृता विधिवद्विप्र ते नराः स्वर्गगामिनः ॥ ५०
[*उत्पाद्य पुत्रान्संस्थाप्य पितृपैतामहे पदे । निर्ममा निरहंकारा ये मृतास्तेऽपि नाकिनः ॥५१
स्तैन्यान्निवृत्ताः सततं संतुष्टाः स्वधनेन वा । स्वभाग्येनोपजीवन्ति ते नराः स्वर्गगामिनः॥]५२
श्लक्ष्णां वाणीं निराबाधां मधुरां पापवर्जिताम् । स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः ॥
शुभानामशुभानां च कर्मणां फलसंचये । विपाकज्ञाश्च ये केचित्ते नराः स्वर्गगामिनः ॥ ५४
दानधर्मप्रवृत्तानां धर्ममार्गानुयायिनाम् । प्रोत्साहं वर्धयन्ते ये ते मोदन्ते चिरं दिवि ॥ ५५
हेमन्ते दारुदो यश्च तथा ग्रीष्मे जलप्रदः । वर्षास्वाश्रमदाता च स्वर्गलोके महीयते ॥ ५६
पुण्यकालेषु सर्वेषु नित्यनैमित्तिकादिषु । भक्त्या यः कुरुते श्राद्धं स नूनं सुरलोकभाक् ॥ ५७
दानं दरिद्रस्य विभोः क्षमित्वं यूनां तपोज्ञानवतां च मौनम् ॥
इच्छानिवृत्तिश्च सुखोचितानां दया च भूतेषु दिवं नयन्ति ॥ ५८
द्विविधः कर्मसंबन्धः पापपुण्यसमुद्भवः । सत्यमेव समाश्रित्य क्रियते ह्यत्र निर्णयः ॥ ५९
तपो ध्यानसमायुक्तं तारणाय भवाम्बुधेः । पापं तु पतनायोक्तं सत्यमेव न संशयः ॥ ६०
बलेन परिवारेण शौर्येणाभियुतस्य च । पुण्यहीनस्य वै पुंसः पात एव विधीयते ॥ ६१
उन्नता गिरिदुर्गेषु वृक्षाश्चापि सुपुष्टकाः । पतन्ति वायुवेगेन समूलास्तु घना अपि ॥ ६२
सामान्यं सर्वजन्तूनां बलं धर्मस्तु केवलः । येन संतरते जन्तुरिह लोके परत्र च ॥ ६३
मया सर्वमिदं सम्यक्स्वर्गमार्गप्रदायकम् । समासेन समाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ६४

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये द्विनवतितमोऽध्यायः ॥ ९२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६९३४

* धनुश्चिह्नान्तर्गतः पाठः, छ. झ. पुस्तकस्थः ।

१ ग. त्रिस्पृशा । २ ख. ङ. च. छ. झ. °द्व्प्रदा न° ।

अथ त्रिनवतितमोऽध्यायः ।

ब्राह्मण उवाच—

एतन्मूर्खोऽपि जानाति शुभकर्मकरः पुमान् । न याति नरकं स्वर्गं तथा पापक्रियारतः ॥ १
क्रतुभिर्विविधैरिष्टैर्व्रतदानजपादिभिः । सत्येनाऽऽचारकुशलैः स्वर्गसौख्यमवाप्यते ॥ २
विद्याचारधनोपेतैर्ऋषिभिर्वेदपारगैः । प्राप्यते पुण्ययोगेन यज्ञैर्नाकस्ततः क्वचित् ॥ ३
वित्तेन च विना दानं बहु दातुं न शक्यते । विद्यमानधनेनापि कुटुम्बासक्तचेतसा ॥ ४
अग्निहोत्रादयो धर्मा विशेषेण कलौ युगे । दुष्करा दानधर्मोऽपि दुष्करो भगवन्मतः ॥ ५
अल्पायासेन धर्मेण लभ्यते धर्मसंचयः । तन्मे विशेषतो ब्रूहि धर्माधर्मप्रदर्शक ॥ ६
तदेकं कथ्यतां धर्मं सर्वधर्मोत्तमोत्तमम् । कृतेनैकेन येनेह सर्वपापक्षयो भवेत् ॥ ७
धनं धान्यं यशो धर्ममायुर्येनाभिवर्धते । मर्त्यलोकेऽपि सौख्यं स्यात्स्वर्गो येनाक्षयो भवेत् ॥ ८
साक्षान्नारायणो येन भक्तानामभयप्रदः । तुष्येदस्य प्रसादेन कामः करतले स्थितः ॥ ९
सर्वयज्ञतपोदानतीर्थसेवाधिकं फलम् । लभ्यते येन यद्यस्ति वैवस्वत तदादिश ॥ १०
अनुग्राह्यो ह्यहं देव यदि धर्मोपदेशतः । सर्वधर्मक्रियासारं तदेकं कृपया वद ॥ ११
पापानामनुरूपाणि प्रायश्चित्तानि यद्यथा । तथा तथैव संस्मृत्य कथितानि मनीषिभिः ॥ १२
कर्तुं तानि न शक्यन्ते देव प्रत्येकशो नरैः । सर्वपापहरं पुण्यमेकं चेदस्ति तद्वद ॥ १३

सूत उवाच—

इत्युक्त्वा ब्राह्मणश्रेष्ठो यमं धर्मस्वरूपिणम् । तुष्टाव प्रयतो भूत्वा सूक्ष्मधर्माभिकामुकः ॥ १४

ब्राह्मण उवाच—

नमस्ते सर्वशमन नमस्ते जगतां पते । नमोऽस्तु देवरूपाय स्वर्गमार्गप्रदायिने ॥ १५
धर्मशास्त्रस्वरूपाय धर्मराज नमोऽस्तु ते । त्वया भूः पाल्यते देवाप्यन्तरिक्षं च द्यौर्महः ॥ १६
जनस्तपस्तथा सत्यं सर्वस्वं पाल्यते त्वया । न त्वया रहितं किंचिज्जगत्स्थावरजङ्गमम् ॥ १७
विद्यते त्वद्गृहीतं तु सद्यो नश्यति वै जगत् । त्वमात्मा सर्वभूतानां सतां सत्त्वस्वरूपवान् ॥ १८
राजसानां रजस्त्वं च तामसानां तमस्तथा । चतुष्पदो भवान्देव चतुःशृङ्गस्त्रिलोचनः ॥ १९
सप्तहस्तस्त्रिधाबद्धो वृषरूप नमोऽस्तु ते । सर्वयज्ञमयो धर्मस्त्वयि विग्रहविग्रहः ॥ २०
साक्षाद्दृष्टोऽसि लोकेश देव तुभ्यं नमो नमः । हृदिस्थः सर्वभूतानां पुण्यपापेक्षिता भवान् २१
तेन शास्ता च भूतानां दाता देव प्रशासिता । प्रवर्तको हि धर्मस्य देव दण्डधरो भुवि ॥
सर्वधर्ममयं सारमेकं वद सुनिश्चितम् ॥ २२

यम उवाच—

परितुष्टोऽस्मि ते विप्र स्तोत्रेण च विशेषतः । तथाऽप्यागमधर्मेण मान्योऽसि मम सत्तम ॥ २३
यन्न कस्यचिदाख्यातं यद्गोप्यं परमं मम । सारमुद्धृत्य सर्वेषां यदेकं निश्चितं मया ॥ २४
महानिरयसंघातान्निर्वासनकरं परम् । अनाख्येयमपि ब्रह्मन्वक्ष्ये विनयतोषितः ॥ २५

स्युर्मोहाय चराचरस्य जगतस्ते ते पुराणागमा ।
स्तां तामेव हि देवतां परमिकां जल्पन्तु कल्पे विधौ ।
सिद्धान्ते पुनरेक एव भगवान्विष्णुः समस्तागम-
व्यापारेषु विवेकिनां व्यतिकरं नीतेषु निश्चीयते ॥ २६

भवो ब्रह्मा च विष्णुश्च त्रयमेव त्रयी मता । दीपोऽग्निर्वर्तिस्नेहैस्तु यथा विप्र तथा हरिः ॥ २७
अनाराध्य हरिं भक्त्या गोलोकान्प्राप्नुयाच्छुभान् । आराधिते हरौ कामाः सर्वे करतले स्थिताः २८
अनाराध्य हरिं लोकः सर्वदं सर्वदेहिनाम् । कोऽपि क्वापि किमप्यत्र न लभेतेति निश्चितम्॥२९
अपत्यं दूषणं दारान्ससर्ज परमेश्वरः । रजस्तमोभ्यां युक्तोऽभूद्रजः सत्त्वाधिकं विभुः ॥ ३०
ससर्ज नाभिकमले ब्रह्माणं कमलासनम् । रजसा तमसा जुष्टं स रुद्रमसृजत्प्रभुः ॥ ३१
सत्त्वं रजस्तमश्चैव त्रितयं चैतदुच्यते । सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् ॥ ३२
रजसा सत्त्वयुक्तेन भवेच्छ्रीमान्यशोधिकः । यद्वेदवाक्यं धर्मस्य तमुद्दिश्योपसेव्यते ॥ ३३
तद्रुद्रमिति विख्यातं कनिष्ठं गदितं नृणाम् । तेन राजा भवेल्लोके रजसा तमसा युतः ॥ ३४
यद्धीनं रजसा कर्म केवलं तामसं च यत् । तच्च दुर्गतिदं नृणामिह लोके परत्र च ॥ ३५
यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मा स स्वयं हरः । देवास्त्रयोऽपि यज्ञेऽस्मिन्निज्या देवेषु नित्यशः
यो भेदं कुरुते तेषां त्रयाणां द्विजसत्तम । स पापकारी पापात्मा ह्यनिष्टां गतिमाप्नुयात् ॥ ३७
विष्णुरेव परं ब्रह्म विष्णुरेव जगद्विज । तस्यायं माधवो मासः प्रियः सर्वेषु कर्मसु ॥ ३८
कीर्त्यते ह्यश्वमेधादिमहाक्रतुफलप्रदः । तीर्थस्नानतपोदानजपयज्ञफलाधिकः ॥ ३९

स्नानं प्रभाते नियमेन नद्यामनारतं मेषगते रवौ ये ।
कुर्वन्ति येऽस्मिन्नपि विप्र पूजां मद्दण्डभाजो हि न ते भवन्ति ॥ ४०

हत्वा हत्वा किंकरौघं पुरो मे पृष्ट्वा पृष्ट्वा चित्रगुप्तस्य लेख्यम् ।
स्नात्वा स्नात्वा माधवे मासि तीर्थे पूर्वान्पूर्वानुद्धरन्तीह पापात् ॥ ४१

इदं भवच्छेदकरं न तस्मात्प्रकाशनीयं परमं रहस्यम् ।
निर्वासहेतुर्नरकालयस्य ममाधिकारक्षयकारणं तत् ॥ ४२

भागीरथी नर्मदा च यमुना च सरस्वती । विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः ४३
गोदावरी भीमरथी तुङ्गभद्रा च वेदिका । तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥४४
द्वादशैता महानद्यो नित्यं तेनावगाहिताः । वैशाखे विधिना स्नानं नद्यां यः प्रातराचरेत् ॥४५
सर्वाः समुद्रगाः पुण्याः सर्वे पुण्या जलाशयाः । सर्वमायतनं पुण्यं सर्वे पुण्या वराश्रमाः ॥ ४६
तेनावगाहिता दृष्टाः प्रणता बहुसेविताः । स्नानमर्धोदिते सूर्ये वैशाखे नियतश्चरेत् ॥ ४७
तस्य पुण्यं महीदेव किंचिद्वक्तुं न शक्यते । यदि वक्त्रसहस्राणां सहस्राणि भवन्ति च ॥ ४८
आयुश्च ब्रह्मणा तुल्यं यदि स्याद्द्विजसत्तम । तदा माधवमासस्य फलं कथयितुं भवेत् ॥ ४९
महानिरयकर्षाग्निर्माधवो माधवो यथा । ब्रह्महत्यादिकं पापमगम्यागमनादिकम् ॥ ५०
कामाकामकृतं पापमतिपातकमेव च । उपपापं रहस्यं च संकरीकरणं परम् ॥ ५१
जातिभ्रंशकरं घोरं यच्छित्रीकरणं तथा । मलावहं प्रकीर्णं च वाङ्मनःकायसंभवम् ॥ ५२
माधवो निर्दहेन्मासो विधिना समुपासितः । कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥
वसेद्विष्णुपुरे श्रीमान्माधवे योऽर्चयेद्धरिम् ॥ ५३

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये त्रिनवतितमोऽध्यायः ॥ ९३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१६९८७

---

१ ज. निश्चितः । २ ख ङ च. छ. ड. शिलोच्चयाः । ३ क. ख. ङ. च. छ. ड. महादेव । ४ ङ. च. °टिश्च भूसुराः । व°।

अथ चतुर्नवतितमोऽध्यायः ।

सूत उवाच—

एतच्छ्रुत्वा वचस्तस्य धर्मराजस्य भूसुरः । पुनः पप्रच्छ मासस्य माधवस्य विधिं शुभम् ॥ १

ब्राह्मण उवाच—

धर्मराज महाभाग सम्यग्गुह्यं प्रकाशितम् । माधवस्नानजं पुण्यं नराणां मुक्तिदं परम् ॥ २

माधवं माधवे मासि स्नात्वा प्रातः समाहितः । कथं संपूजयेद्देवं कैः पुष्पैस्तद्विधिं वद ॥ ३

धर्मराज उवाच—

सर्वेषां पत्रजातीनां तुलसी केशवप्रिया । पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ॥ ४

वासुदेवादयो देवा वसन्ति तुलसीदले । सर्वदा सर्वकालेषु तुलसी विष्णुवल्लभा ॥ ५

त्यक्त्वा तु मालतीपुष्पं त्यक्त्वा चैव सरोरुहम् । गृहीत्वा तुलसीपत्रं भक्त्या माधवमर्चयेत् ॥६

तस्य पुण्यफलं वक्तुमलं शेषोऽपि नो भवेत् । अस्नात्वा तुलसीं छित्वा देवार्थं पितृकर्मणि ॥ ७

तत्सर्वं निष्फलं याति पञ्चगव्येन शुध्यति । दारिद्र्यदुःखभोगादिपापानि सुबहून्यपि ॥ ८

तुलसी हरते क्षिप्रं रोगानिव हरीतकी । तुलसी कृष्णगौराख्या तयाऽभ्यर्च्य मधुद्विषम् ॥ ९

विशेषेण हरेर्भक्तो नरो नारायणो भवेत् । माधवं सकलं मासं तुलस्या योऽर्चयेद्धरिम् ॥ १०

त्रिसंध्यं मधुहन्तारं नास्ति तस्य पुनर्भवः । अलाभे पुष्पपत्राणामन्नाद्येनापि पूजयेत् ॥ ११

शालिगोधूमतण्डुलयवैर्वाऽपि हरिं सदा । कुर्यात्प्रदक्षिणं तं तु सर्वदेवमयं ततः ॥ १२

पितृदेवमनुष्यांश्च तर्पयेत्सचराचरम् । योऽश्वत्थमर्चयेद्देवमुदकेन समन्ततः ॥ १३

कुलानामयुतं तेन तारितं स्यान्न संशयः । अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ॥ १४

अश्वत्थतर्पणात्तात सर्वदुःखं विनश्यति । तर्पिताः पितरस्तेन तेन विष्णुः समर्चितः ॥

योऽश्वत्थमर्चयेद्धीमान्ग्रहास्तेनैव पूजिताः ॥ १५

श्वेताश्वपुष्पाणि तथाऽक्षतांश्च हुताशनं चन्दनमर्कबिम्बम् ॥

अश्वत्थवृक्षं च समालभेत ततश्च कुर्यान्निजजातिधर्मान् ॥ १६

कृत्वाऽप्यष्टाङ्गयोगं तु स्नात्वा पिप्पलतर्पणम् । कृत्वा गोविन्दमभ्यर्च्य न स दुर्गतिमाप्नुयात् १७

त्रयोदश्यां चतुर्दश्यां वैशाख्यां च दिनत्रयम् । सर्वाशक्तोऽपि विधिना नारी वा पुरुषोऽपि वा

पूर्वोक्तनियमैर्युक्तः प्रातः स्नात्वा स भक्तितः । विमुक्तः पातकैः सर्वैः स्वर्गमक्षयमश्नुते ॥ १९

वैशाखमासे यो भक्त्या भोजयेद्ब्राह्मणान्मुदा । त्रिरात्रमुषसि स्नात्वा सकृष्ण प्रयतः शुचिः ॥२०

गौरान्वा यदि वा कृष्णांस्तिलक्षौ(लान्क्षौ)द्रेण संयुतान् । दत्त्वा द्वादशविप्रेभ्यस्तैरेव स्वस्ति वाचयेत्

प्रीयतां धर्मराजो मे पितृदेवांश्च तर्पयेत् । यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ २२

अयुतायुतं च तिष्ठेत्स स्वर्गलोके यथासुखम् । मामेव न तु पश्येत्स पूजितः सर्वदे(दै)वता:(तैः)॥

पक्वान्नमुदकं तानि पितृदैवततुष्टये । त्रयोदश्यां चतुर्दश्यां पूर्णिमायां दिनत्रयम् ॥ २४

यो दद्याच्छक्तितो विप्र सर्वपापैः प्रमुच्यते । सुवर्णतिलपात्रैस्तु ब्राह्मणं शक्तितोऽन्वहम् ॥ २५

तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति । वैशाखपूर्णिमायां च सृष्टाः कमलयोनिना ॥ २६

१ ङ. म. °म्यङ्मत्यं । २ ङ. म. °लकानी च । ३ ङ. °र्वासफो° । ४ ख. ङ. घ. छ. ढ. शाक्तितः । ५ म. °दकान्तानि ।

तिला देयाश्च भक्ष्याश्च श्रेयःसंततिहेतवे । इहार्थे च पुरावृत्तं तदाकर्णय सुव्रत ॥ २७
फलं माधवमासस्य पूर्णायां परमाद्भुतम् । मेषसंक्रममारभ्य तिथयस्त्रिंशदुत्तमाः ॥ २८
सर्वयज्ञाधिकाः पुण्याः पुराणेषु प्रकीर्तिताः । विशेषतोऽपि तास्तिस्रः पवित्राः पितृदुर्लभाः॥२९
ततोऽपि पूर्णिमा पुण्या माधवी माधवप्रिया । एवं वराहकल्पस्य तिथिराद्या महाफला ॥ ३०
पुरा नारायणेनास्यां दितिजौ द्वाविमौ हतौ । हिरण्याक्षमधू विप्र पृथिवी च समुद्धृता ॥ ३१
त्रयोदश्यां चतुर्दश्यां पूर्णिमायामयं विभुः । क्रमादेव त्रयं चक्रे शुक्लेऽस्मिन्मासि माधवे ॥ ३२
ततःप्रभृति विप्रेन्द्र विशेषादेव पूर्णिमा । कल्पादिपावनी ख्याता कर्मणः कल्पसाक्षिणी ॥ ३३
[*येन स्नातं न वैशाखे प्रातर्नियमशालिना । किं तस्य जन्मना विप्र नूनमात्मापहारिणा ॥३४
त्रयोदश्यां चतुर्दश्यां पौर्णमास्यां विशेषतः ।] अपि सम्यग्विधानेन नारी वा पुरुषोऽपि वा ३५
प्रातःस्नानं सनियमं सर्वपापैः प्रमुच्यते । स्नानदानार्चनश्राद्धक्रिया पुण्यविवर्जिता ॥ ३६
यस्यातीता च वैशाखी स नूनं निरयालयः । न वेदेन समं शास्त्रं न तीर्थं गङ्गया समम् ॥ ३७
न दानं जलगोतुल्यं न वैशाखीसमा तिथिः । जलधेनुं च यो दद्याद्वैशाख्यां विष्णुतत्परः ॥३८
त्रयाणामपि देवानां चतुर्थोऽयं विशेषतः । मातृहा पितृहा चैव भ्रूणहा गुरुतल्पगः ॥ ३९
जलधेनुं समालोक्य मुच्यते सर्वपातकैः । दश पूर्वान्परान्वंश्यान्नरकात्तारयन्ति ते ॥ ४०
जलधेनुं प्रयच्छन्ति वैशाख्यां विधिना दश । शर्कराफलताम्बूलमुपानत्करपत्रिकाः ॥ ४१
प्रयच्छन्ति द्विजाग्र्येभ्यो धन्यास्ते चात्र कीर्तिताः । मणिकोदककुम्भांश्च पक्वान्नं हेम दक्षिणाम्॥
यः प्रयच्छति वैशाख्यां सोऽश्वमेधफलं लभेत्+ । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ ४३
ब्राह्मणस्य च संवादं प्रेतैः सह महावने । ब्राह्मणो धनधर्माऽऽसीन्मध्यदेशेषु चानघः ॥ ४४
कुशाद्यर्थे वनं यातो ददर्शेदमथाद्भुतम् । भीतोऽपश्यन्महाप्रेतान्दुष्टांस्त्रीणे(न्स)तु दारुणान् ॥ ४५
ऊर्ध्वकेशान्सरक्ताक्षान्कृष्णदन्तान्कृशोदरान् । कुर्वतो विविधारावान्धावतोऽपि इतस्ततः ॥ ४६
तान्दृष्ट्वा भयवित्रस्तो ब्राह्मणो निर्गतो जवात् । क्रन्दमानास्ततस्तेऽपि तमेवानुययुस्तदा ॥
स गम्यमानस्तैः प्रेतैरुवाच मधुरं वचः । ४७

धनधर्मोवाच—

के यूयं च कुतोऽवस्था जातेति निरयोचिता । भयार्तमनुकम्प्यं मां दुःखितं त्रातुमर्हथ ॥
वैष्णवं बहुभृत्यं च निःस्वं विप्रं वनागतम् ॥ ४८
तत्र ता(युष्माक)मपि स श्रेयो नूनं दास्यति केशवः । ब्रह्मण्यो भगवान्विष्णुस्तुष्टो मय्यनुकम्पया
अतसीपुष्पसंकाशो विष्णुः पीताम्बरो हरिः । यस्य श्रवणमात्रेण सर्वपापक्षयो भवेत् ॥ ५०
अनादिनिधनो देवः शङ्खचक्रगदाधरः । अव्ययः पुण्डरीकाक्षः प्रेतमोक्षप्रदायकः ॥ ५१

यम उवाच—

नामश्रवणमात्रेण विष्णोस्ते परितोषिताः । पिशाचाः पुण्यभावस्था दयादाक्षिण्ययन्त्रिताः ॥५२
प्रीणितास्तस्य वचसा तदादिष्टेन चोदिताः । इदमूचुर्द्विजं प्रेताः क्षुत्तृष्णापरिपीडिताः ॥ ५३

प्रेता ऊचुः—

दर्शनेनैव ते विप्र नामश्रवणतो हरेः । भावमन्यमनुप्राप्ता वयं जाता दयालवः ॥ ५४

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ड. च. छ. ञ. ट. पुस्तकस्थः । + अत्र छ. ड. संज्ञकपुस्तकयोरध्यायसमाप्तिः ।

१ ख. वैशाख्या ।

अपाकरोति दुरितं श्रेयः संयोजयत्यपि । यशो विस्तारयत्याशु नूनं वैष्णवसंगमः ॥ ५५
रसायनोपमा शान्ता परमानन्ददायिनी । नाऽऽनन्दयति किं नाम वैष्णवी वास्तुचन्द्रिका ॥५६
अयं कृतघ्ननामाऽस्ति द्वितीयोऽयं विदैवतः । अवैशाखस्तृतीयोऽयं त्रयाणामपि पापकृत् ॥ ५७
सदैवानुष्ठिताऽनेन पापेनापि कृतघ्नता । तेनास्य कर्मजं नाम कृतघ्नाख्यं व्यवस्थितम् ॥ ५८
सुदास इति नाम्नाऽयं द्रोहोऽभूत्पूर्वजन्मनि । कृतघ्नस्तेन पापेन प्राप्तोऽवस्थामिमां द्विज ॥ ५९
अतिपापा(पि)नि धूर्ते च गुरुस्वाम्यहितेऽपि वा । निष्कृतिर्विद्यते विप्र कृतघ्ने नास्ति निष्कृतिः ॥
नानानिरयसंघातं शरीरैर्यातनाक्षमैः । अनुभूय तदा(याऽऽगतोऽ)वस्थामन्त्यामेतां द्विजोत्तम॥६१
अनेनान्नं सदा भुक्तमकृत्वा देवतार्चनम् । अदत्तं गुरुविप्रेभ्यस्तेनैवायं विदैवतः ॥ ६२
अयं दशसहस्राणां ग्रामाणामीश्वरो नृपः । हरिवीर इति ख्यातः स चाऽऽसीत्पूर्वजन्मनि ॥६३
रोषाहंकारनास्तिक्यैर्गुर्वाज्ञालङ्घनोद्यतः । अकृत्वैव महायज्ञान्भुक्तवान्विप्रनिन्दकः ॥ ६४
कर्मणा तेन पापेन महानरकसंकरम् । अनुभूय गतः प्रेतो जातो नाम्ना विदैवतः ॥ ६५
अवैशाखस्तृतीयोऽहं त्रयाणामपि पापकृत् । तेन मे कर्मणा नाम ब्राह्मणोऽहं व्यवस्थितः ॥ ६६
मध्यदेशे भवेन्नाम्ना गौतमो गोत्रतोऽप्यहम् । विप्रो वासपुरावासी यथाऽऽसं पूर्वजन्मनि ॥ ६७
मया केवलमेवैकश्रौतमार्गानुसारिणा । उद्दिश्य माधवं देवं न स्नातं मासि माधवे ॥ ६८
न दत्तं न हुतं किंचिद्वैशाखस्य विशेषतः । नार्चितो मधुहा तत्र तोषिता न मनीषिणः ॥ ६९
मणिकोदककुम्भैश्च न दानैर्नापि देवताः । तर्पिता न तिला दत्ताः सक्षौद्राः श्रोत्रियेषु च ॥७०
न पुष्पफलताम्बूलचन्दनं व्यञ्जनाम्बरैः । विद्वांसो नार्चितास्तत्र पितृदैवततृप्तये ॥ ७१
मया नैकाऽपि वैशाखी पूर्णा पूर्णफलप्रदा । स्नानदानक्रियापूजासुकृतैरपि पालिता ॥ ७२
तेन मे वैदिकं कर्म जातं सर्वं च निष्फलम् । ततोऽवैशाखनामाऽहं प्रेतो जातोऽस्मि सर्वतः ७३
एतत्ते सर्वमाख्यातं त्रयाणामपि कारणम् । त्वं नो भव समुद्धर्ता पापाद्विप्रोऽसि वै यतः ॥ ७४
अधिका विप्र तीर्थेभ्यो द्विजाः सुकृतसाधवः । तारयन्ति महापापान्निरयेभ्योऽपि संश्रितान् ७५
गङ्गादिसर्वतीर्थेषु यो नरः स्नाति सर्वदा । यः करोति सतां सङ्गं तयोः सत्संगमो वरः ॥ ७६
अथवा मम पुत्रोऽस्ति धनशर्मेति विश्रुतः । तं गत्वा बोधय स्वामिन्नस्मदर्थे कृतोद्यमः ॥ ७७
कार्ये समुद्यमं कृत्वा परेषां समुपस्थिते । पुष्कलं फलमाप्नोति यज्ञदानक्रियाधिकम् ॥ ७८

यम उवाच—

प्रेतवाक्यं समाकर्ण्य धनशर्माऽतिदुःखितः । स तं जनकमज्ञासीत्पतितं निरये निजम् ॥
आत्मानमभितो निन्दन्निदं वचनमब्रवीत् ॥ ७९

धनशर्मोवाच—

अहं तव सुतः स्वामिन्गौतमस्य निरर्थकः । यस्तु पुत्रो न निस्तारं पितुः कुर्यादतन्द्रितः ॥
आत्मानं पावयेन्नासौ पुमान्न द्रव्यवानिव ॥ ८०
धर्मो हि गहनो ज्ञेयः प्रयत्नेनापि धीमता । यथा मम पिता च त्वमिमां प्राप्तोऽसि दुर्गतिम् ८१
यदा च सुखसंतानं न मत्तः प्राप्तवानसि । लोकयोः सुखसंतानस्तथा स(न) तनयो मतः ॥ ८२
द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः । तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात् ॥ ८३

---

१ ख. °नातिक्र° । २ झ. ञ. °नि निर्धूते गु° । ३ ञ. °शाखं च वि° । ४ झ. °तानो नर्निमतं महानसि । ञ. °तानो न निर्मतं महानसि ।

किं करोमि क्क गच्छामि कथं तात गतिस्तव । धर्मतत्त्वं न जानामि संश्रयामि भवद्वचः ॥ ८४

प्रेत उवाच—

शृणु पुत्र प्रवक्ष्यामि भाविनोऽर्थस्य मे बलात् । अथ पुण्येन केनापि भवित्री सुगतिर्मम ॥ ८५
मया श्रौतानि कर्माणि कुर्वता किल गर्वतः । नैवाऽऽदृतं गुरुवचो गुरुस्तत्राप्यमानितः ॥ ८६
गुरूणामपमानेन प्रहर्षक्रोधविस्मयैः । पौराणिकविधानेन कर्म श्रौताविरोधि यत् ॥ ८७
वैदिकं केवलं कर्म कृतमज्ञानतो मया । पापेन्धनदवज्वालापापद्रुमकुठारिका ॥ ८८
कृता नैकाऽपि वैशाखी विधिना वत्स पूर्णिमा । अव्रता यस्य वैशाखी सोऽवैशाखो भवेन्नरः ॥
दश जन्मानि च ततस्तिर्यग्योनिषु जायते । चिरं भुक्त्वा दुःखमन्ते प्रेतः पर्यायतो भवेत् ॥ ९०
ततः कथंचिल्लभते मानुष्यमतिदुर्लभम् । उपायं तेऽभिधास्यामि प्रेतमोक्षकरं परम् ॥ ९१
श्रुतवान्यदहं पूर्वजन्मनि स्वगुरोर्मुखात् । गच्छ पुत्र गृहं स्नात्वा यमुनायां विधानतः ॥ ९२
अग्रतः सर्वगतिदा कल्पाद्या साऽप्युपागता । पञ्चमेऽहनि वैशाखी पितृदेवार्चने हिता ॥ ९३

पानीयमप्यत्र तिलैर्विमिश्रं सहोदकुम्भान्नफलानि भक्त्या ।
दद्यात्पितृभ्यो भवतीह दत्तं श्राद्धं मुदे तेन समाः सहस्रम् ॥ ९४

वैशाख्यां पौर्णमास्यां यो भोजयेद्भूमिदैवतान् । सिक्थे सिक्थे भवेत्प्रीतिः पितॄणां युगसंख्यया ॥
वैशाख्यां विधिवत्स्नात्वा भोजयन्ब्राह्मणान्दश । पायसं सर्वपापेभ्यो मुच्यते नात्र संशयः ९६
यस्तिलैर्यवसंमिश्रैः स्नाति सर्वाङ्गतस्तदा । तस्य ब्रह्मा च धर्मश्च ददाति वरमीप्सितम् ॥ ९७
प्रीतये धर्मराजस्य यो दद्यादुदकुम्भकान् । सप्त सप्त कुलं तेन तारितं स्यान्न संशयः ॥ ९८
त्रयोदश्यां चतुर्दश्यां पूर्णायां भक्तितत्परः । स्नात्वा जप्त्वा तथा दत्त्वा हुत्वा संपूज्य माधवम् ॥
यत्फलं जायते पुत्र तदस्माकं समर्पय । नैतौ परिचितौ प्रेतौ हित्वा स्वर्गतिमाश्रये ॥
एतयोरपि पापस्य प्रान्तोऽयं समुपस्थितः ॥ १००

यम उवाच—

तथेत्युक्त्वा स विप्राग्र्यो गृहं गत्वा तथाऽकरोत् । प्रीतः परमया भक्त्या वैशाखस्नानदानकृत् ॥
स्नात्वा स मुदितो भक्त्या प्राप्य माधवपूर्णिमाम् । दत्त्वा बहूनि दानानि तेभ्यः पुण्यं ददौ पृथक्
तत्क्षणादेव ते सर्वे विमानस्था दिवं ययुः । तत्पुण्यदानयोगेन मुदिता द्विजसत्तम ॥ १०३
धनशर्माऽपि विप्रेन्द्रः श्रुतिस्मृतिपुराणवित् । भुक्त्वा भोगांश्चिरं कालं ब्रह्मलोकमवाप्तवान् ॥ १०४
एषा पुण्यतमा तस्माद्वैशाखी विश्वपावनी । कथ्यते तु मया विप्र समासेनातिगौरवात् ॥ १०५

धन्यास्त एव कृतिनश्च त एव जाता
लोके त एव पुरुषाः पुरुषार्थभाजः ।
ये माधवे मधुनिषूदनमर्चयन्ति
प्रातर्निमज्ज्य नियमेन विशुद्धचित्ताः ॥ १०६

यो माधवे मासि नरः प्रभाते स्नात्वा समाराधयते रमेशम् ।
यमैरुपेतो नियमैरशेषैर्वृतोऽपि नूनं स निहन्ति पापम् ॥ १०७
तैरेव कालो विहितस्त एव नरेषु धन्या विगतैनसस्ते ।
प्रातः समुत्थाय निमज्ज्यते यैर्गाङ्गे मधुद्वेषिसमर्चनाय ॥ १०८

१ झ.ञ. पूर्वतः । २ क.ञ. °खी पितृदेवार्चने हिता । अ° । ३ झ.ञ. अनृता । ४ ञ. °झालीला° । ५ कः ञ. °तिविधानवि° ।

* अहोऽतिधन्यः सुकृतैकसारः सर्वाधिको माधवमास एषः ।
यस्मिन्कृतं विप्र कथंचिदल्पं पुण्यं पुनः स्यादिह कल्पतुल्यम् ॥ १०९
मज्जतो हि मनुजस्य माधवे माधवार्चनकृते दिनोदये ।
तामसोऽपि जलबिन्दुसंगमादङ्गमावहति पावनं यतः ॥ ११०
तानि देहमधिरुह्य देहिनस्तावदेव विचरन्त्यघानि च ।
यावदेति न च माधवाह्वयः श्रीरमारमणवल्लभो विराट् ॥ १११
स्नातुं पदानि मनुजो गमने विभाते तीर्थे ददाति मधुसूदनमासि युक्तः ।
भूयो भवन्ति हयमेधसमानि तानि श्रीमाधवस्मरणतो गदतोऽस्य नाम ॥ ११२
मेरुमन्दरतुल्यानि पापान्युग्राण्यनेकधा । दहते माधवो मासोऽनुष्ठितो हरिवल्लभः ॥ ११३
इदं संक्षेपतः प्रोक्तं मया तेऽनुग्रहाद्द्विज । वैशाखस्नानमाहात्म्यं शृणु पापक्षयं परम् ॥ ११४
यस्तु श्रोष्यति भक्त्येममितिहासं मयोदितम् । सोऽपि पापविनिर्मुक्तो न मम लोकमेष्यति॥११५
ब्रह्महत्यादिपापानि बहुशोऽपि कृतान्यपि । वैशाखस्य विधानेन तानि नश्यन्ति निश्चितम्११६
त्रिंशत्पूर्वान्परांस्त्रिंशत्पितॄन्संतारयेन्नरः । यतो भगवतस्तस्य हरेरक्लिष्टकर्मणः ॥ ११७
प्रियोऽसौ माधवो मासः स मासः प्रवरो यतः । संशयं मा विधेहीह महीदेव कथंचन ॥ ११८
वैशाखं प्रति मासं हि समासाद्यन्मयोदितम् । इहार्थे यत्पुरावृत्तं तदप्याकर्णयाद्भुतम् ॥
अनाख्येयमपीदं ते कथयिष्ये कथानकम् ॥ ११९

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७१०६

---

अथ पञ्चनवतितमोऽध्यायः ।

---

यम उवाच—

बभूव भूपतिः पूर्वं ख्यातो नाम्ना महीरथः । पूर्वपुण्यफलावाप्तप्रभूतैश्वर्यसंपदः[†] ॥ १
बभूव भूपतिः सर्वललनाललितस्थितः । तदेकव्यसनासक्तिर्न धर्मार्थव्यवस्थितः ॥ २
मन्त्रिविन्यस्तराज्यश्रीर्बुभुजे विषयान्नृपः । स कामिनीसहचरो राज्यकार्यपराङ्मुखः ॥ ३
न प्रजा न धनं धर्मं नार्थकार्यं स पश्यति । केवलं कामिनीकेलिकलनोचितवाङ्मनाः॥ ४
अथ कालेन महता पुरोधास्तस्य कश्यपः । वचः प्रोवाच तं धर्म्यमिति चेतसि चिन्तयन् ॥ ५
निवारयति नो मोहादधर्मान्नृपतिं गुरुः । सोऽपि तत्पापभाग्यस्माद्बोधनीयः पुरोधसा ॥ ६
[*बोधितोऽप्यवजानाति स चेद्वाक्यं पुरोधसः]। पुरोधास्तत्र निर्दोषो राजा स्यात्सर्वदोषभाक् ॥

कश्यप उवाच—

शृणु राजन्मम गुरोर्वचो धर्मार्थसंहितम् । अभिज्ञार्थमुपेतार्थमिच्छारागादिवर्जितम् ॥ ८
अयमेव परो धर्मो यद्गुरोर्वचसि स्थितः । गुर्वाज्ञाया लवो राज्ञामायुःश्रीसौख्यवर्धनः ॥ ९

---

* संधिरार्षः । + इत उत्तरं कपुस्तके 'केवलं कामनाः सर्वा मनोवाञ्छितमाप्नुयात्' इत्यर्धमधिकम् । † धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ढ. पुस्तकस्थः ।

---

१ क. °त्म्यं श्रुतं पा° । ख. ङ. च. छ. °त्म्यं श्रोतुः पा° । २ ख. ङ. च. छ. ढ. न मामप्रलोकयिष्य° ।

न विप्रास्तर्पिता दानैर्विष्णुर्नाऽऽराधितस्त्वया । न व्रतं न तपः किंचिन्न तीर्थं हि त्वया कृतम्
हरिनाम त्वया कामवशगेन न चिन्तितम् । [*हा त्वया भीरुसंगत्या न विद्वत्संगतिः कृता ११
स्मरावसरवाहिन्यो वल्लभाः कस्य न प्रियाः । किंतु ताः पवनाल्लोलकदलीदलसंनिभाः]॥ १२
तरङ्गतरलैरर्थैर्भोगैर्भ्रूभङ्गभङ्गुरैः । मुहूर्तपेयैस्तारुण्यैर्न नृत्यन्ते महाशयाः ॥ १३
किं विद्यया किं तपसा किं त्यागेन नयेन वा । किं विविक्तेन मनसा स्त्रीभिर्यस्य मनो हृतम् ॥
एको मुख्यो महाधर्मो निधनेष्वनुयाति यः । सर्वमन्यच्छरीरोपभोग्यं नाशं प्रयाति च ॥ १५
धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः । धर्मेण हि सहायेन नरस्तरति दुर्गतिम् ॥ १६
अनित्योल्लसितोत्तारजलकल्लोलचञ्चलम् । किं न जानासि राजेन्द्र नृणां जीवितविभ्रमम् ॥ १७
विनयोष्णीषमुकुटः सत्यधर्मौ च कुण्डले । त्यागश्च कङ्कणे येषां किं तेषां जडमण्डनैः ॥ १८
मृतं शरीरमुत्सृज्य लोष्टकाष्ठसमं भुवि । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ १९
गम्यमानेषु सर्वेषु क्षीयमाणे तथाऽऽयुषि । जीविते लुप्यमाने च किमुत्थाय न धावसि ॥ २०
कुटुम्बं पुत्रदारादि शरीरं द्रव्यसंचयः । पारक्यमध्रुवं किं तु स्वीयं सुकृतदुष्कृते ॥ २१
यदा सर्वं परित्यज्य गन्तव्यमवशेन ते । अनर्थे किं प्रसक्तस्त्वं स्वधर्मं नानुतिष्ठसि ॥ २२
अविश्राममभक्ष्याम्बुमपाथेयमदेशिकम् । मृतः कान्तारमध्वानं कथमेको गमिष्यसि ॥ २३
न हि त्वां प्रस्थितं किंचित्पृष्ठतोऽनुगमिष्यति । दुष्कृतं सुकृतं च त्वां यास्यन्तमनुयास्यति॥२४
श्रुतिस्मृत्युदितं कर्म कुलदेशोचितं हितम् । धर्ममूलं निषेवस्व सदाचारमतन्द्रितः ॥ २५
परित्यजेदर्थकामौ स्यातां चेद्धर्मवर्जितौ । धर्मेण प्राप्यते सर्वमर्थकामादिकं सुखम् ॥ २६
इन्द्रियाणां जयं योगं समातिष्ठेद्दिवानिशम् । जितेन्द्रियो हि शक्नोति पथि स्थापयितुं प्रजाः२७
अतिप्रगल्भललनाकटाक्षचपलाः श्रियः । विनयप्रणिधानेन चिरं तिष्ठन्ति भूभुजाम् ॥ २८
कामदर्पातिशीलानामविचारितकर्मणाम् । सहाऽऽयुषा प्रणश्यन्ति संपदो मूढचेतसाम् ॥ २९
विभूतिनष्टदृग्भिस्तु नृत्यन्ते न महायशाः(शयाः)। नागताभिर्न याताभिर्नदीभिश्चीयतेऽम्बुधिः३०
व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी नृपः ॥ ३१
व्यसनानि च दुःखानि कामजानि विशेषतः । त्यज स्मर महाराज कामं धर्मविरोधनम् ॥ ३२
जडानामविवेकाय सुराणां च दुरात्मनाम् । भाग्यभोग्यानि राजेन्द्र सन्ति नीतिमतामपि ॥ ३३
नैव स्थिराणि तानीह दुरितैरनुसेवितैः । विलीयन्ते यथा वह्निसंसर्गेणेन्धनानि च ॥ ३४
गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा । न विचारपरं चेतो यस्यासौ मृत एव सः॥ ३५
उपदेष्टा शतवतां गुरुरित्युच्यते यतः । किं तु त्वासन्नविपदामुपदेशाः शिरोरुहाः ॥ ३६
विषयज्वरमुत्सृज्य समया स्वस्थयामया । युक्त्या च व्यवहारिण्या स्वार्थः प्राज्ञेन साध्यते ३७
अशुभाचरितं याति शुभं तस्मादपीतरत् । जन्तोश्चित्तं च शिशुवत्तस्मात्तच्चालयेद्बलात् ॥ ३८
उपधार्य मतिं राजन्वृद्धानां धर्मदर्शिनाम् । नियच्छेत्परया बुद्ध्या चित्तमुत्पथगामि यत् ॥ ३९
न धर्माण्युपकुर्वन्ति न मित्राणि न बान्धवाः । न हस्तपादचलनं न देशान्तरसंगतम् ॥ ४०
न कायक्लेशवैधुर्यं न तीर्थायतनादयः । केवलं तन्मनस्कस्य जपेनाऽऽसाद्यते पदम् ॥ ४१
विषये वर्तमानस्य तस्माच्चित्तस्य संयमे । यत्नं कुर्याद्बुधो राज[+न्ध्रुवं यत्नेन वा जितम् ॥ ४२

* धनुश्चिह्नान्तर्गतः पाठः, छ. ड. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ड. पुस्तकस्थः ।

१ ङ. ञ. महायशाः । २ ख. °दर्पातिशी° ।

तत्तत्कर्मकृतो राज]न्भवताये(पे)न वञ्चितः । मुनिभिश्च फलैस्तैस्तैरतोऽप्याकर्णयाधुना ॥ ४३
मुद्यताऽपि मनुष्येण प्रष्टव्याः सुहृदो बुधाः । ते च पृष्टा वदन्ति स्म तत्कर्तव्यं यथोचितम् ४४
सर्वोपायेन कर्तव्यो निग्रहः कामकोपयोः । श्रेयोर्थिना यतस्तौ हि श्रेयोघातार्थमुद्यतौ ॥ ४५
कामो हि बलवान्राजञ्शरीरस्थो रिपुर्महान् ॥ न तस्य वशगो भूयाज्जनः श्रेयोभिलाष(षु)कः॥४६
यः कामो देवदेवेन पुरा तेनैव शूलिना । ललाटवह्निना दग्धः कृतोऽनङ्ग इति स्थितिः ॥ ४७
धर्म एव ततः श्रेयान्विधिना समनुष्ठितः । धैर्यमालम्ब्य च ततो धर्ममेव समाचर ॥ ४८

श्वास एष चपलः क्षणमध्ये यो गतागतशतानि विधत्ते ।
जीवितेऽपि तदधीनचेतसा कः समाचरति धर्मविलम्बम् ॥ ४९

दशमीमपि यातस्य चेतो नाद्यापि भूपते । विषयेभ्यो निषिद्धेभ्यो हा हा न विरमेदलम् ॥ ५०
तस्मात्सर्वं निष्फलत्वं प्रयातं कामकश्मलात् । वयस्तेऽप्यधुना भूप समाचर हितं निजम् ॥ ५१
वदाम्यहं तव नृप हितं सर्वोत्तमोत्तमम् । पुरोहितो यतस्तेऽहं सदसत्कर्मभागपि ॥ ५२
एकतः सर्वपुण्यानि पापनाशाय पापिनाम् । एकतो माधवो मासो माधवस्य प्रियः सदा ॥ ५३
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पापकान्येव कीर्तितानि मुनीश्वरैः ॥ ५४
तत्र यन्मनसा वाचा कायेनापि कृतं नरैः । नाशयेन्माधवो मासः सर्वं पापतमो महत् ॥ ५५
दिवाकर इव ध्वान्तं नाशयेन्नृप सर्वशः । तथा श्रीमाधवो मासस्तस्माच्चर विधानतः ॥ ५६

आ जन्मतोऽपि विहितानि महान्ति राज-
न्घोराणि तानि दुरितानि विहाय मर्त्यः ।
वैशाखमासविहिताचरणप्रभाव-
पुण्येन तेन हरिमन्दिरमेति चान्ते ॥ ५७

यद्येकमपि वैशाखमाचरन्ति विधानतः । भावतः पापिनोऽप्यन्ते प्रयान्ति हरिमन्दिरम् ॥ ५८
तस्मात्त्वमपि राजेन्द्र मासेऽस्मिन्माधवेऽधुना । प्रातः स्नात्वा विधानेन समर्चय मधुद्विषम् ॥ ५९
तण्डुलस्य यथा चर्म यथा ताम्रस्य कालिमा । नश्येत क्रियया राजंस्तथा पुंसो मलं महत् ॥ ६०
जीवस्य तण्डुलस्येव सहजोऽपि मलो महान् । नश्यते न च संदेहस्तस्मात्कर्मोदितं कुरु ॥ ६१

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७१६७

---

अथ षण्णवतितमोऽध्यायः ।

---

राजोवाच—

क्षीरोदभवतुल्याभिः शीतलामलवृष्टिभिः । कथाभिश्च विचित्राभिस्त्वयाऽहं तोषितो द्विज ॥ १
असागरोत्थं पीयूषमद्रव्यं व्यसनौषधम् । त्वयाऽहं पायितः सौम्य भवरोगनिवारणम् ॥ २
हर्षप्रदो नृणां पापहानिकृज्जीवनौषधम् । जरामृत्युहरो विप्र सद्भिः सह समागमः ॥ ३
यानि यानि दुरापानि वाञ्छितानि महीतले । प्राप्यन्ते तानि तान्येव साधुनाऽपीह संगमात् ४
यः स्नातः पापहरया साधुसंगमगङ्गया । किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥ ५
यो यो भावः पुरा ह्यासीत्कामैकसुखलोलुपः । दर्शनाद्वचनात्तेऽद्य विपरीतोऽभवद्विभो ॥ ६

एकजन्मसुखस्यार्थे सहस्राणि विलोपयेत् । प्राज्ञो जन्मसहस्राणि संचिनोत्येकजन्मतः ॥ ७
हा हा कामरसास्वादसुखलालसचेतसा । मया मूढेन न कृतं किंचिदात्महितं द्विज ॥ ८
अहो मे मनसो मोहो यदात्मा योषितां कृते । पातितो व्यसने घोरे दुःखोदर्के दुरत्यये ॥ ९
भगवन्परितुष्टेन बोधितो वचसा त्वया । उपदेशप्रदानेन त्वं मामुद्धर्तुमर्हसि ॥ १०
पुरा चरितपुण्योऽहं भवता बोधितोऽस्मि यत् । त्वत्पादरजसा वाऽपि विशेषादपि पावितः ११
विधिं माधवमासस्य ब्रूहि मे वदतां वर । सर्वपापक्षयकरो यस्त्वया परिकीर्तितः ॥ १२
कथं स्नानं च किं दानं को देवो नियमश्च कः । एतदाचक्ष्व विप्रर्षे दुरितोत्तारणाय मे ॥ १३

यम उवाच—

इत्येवमुक्तो भगवान्कश्यपः स दयानिधिः । प्रोवाच वचनं विप्र धर्म्यं विश्वहितं हि यत् ॥ १४

कश्यप उवाच—

पूर्वापरसमाधानक्षयबुद्ध्या च तन्द्रिते । पृष्टज्ञाने न वक्तव्यं वाऽधमे पातकाशये ॥ १५
पापवृत्तस्य तु तथा दत्त्वा भूप शुभां मतिम् । विद्यादानफलं सम्यक्प्राप्यते नात्र संशयः ॥ १६
नापृष्टः कस्य चिद्ब्रूयान्न चान्यायेन पृच्छतः । जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ १७
विदुषामथ शिष्याणां पुत्राणां च कृपावता । अपृष्टमपि वक्तव्यं श्रेयः श्रद्धावतां हितम् ॥ १८
सांप्रतं शुद्धहृदयो जातस्त्वं वचनान्मम । पुराचरितपुण्येन केनापि च महीपते ॥ १९
पापावस्थां शरीरं तद्गतं तव ममाऽऽश्रयात् । श्रवणाद्धर्मशास्त्रस्य धर्मावस्थं तु तेऽभवत् ॥ २०
पापावस्थमधर्माख्यं धर्मज्ञानविवर्जितम् । अपरं सद्व्रतं यद्धि विज्ञेयं तद्धि धार्मिकम् ॥ २१
धर्माधर्मोपभोगाय तत्तृतीयमतीन्द्रियम्[३] । तस्मात्रिभेदं देहं हि वेदविद्भिरिहोच्यते ॥ २२
यावन्न धर्मभोगश्च मुक्तिश्चैतत्रिभेदकम् । पापावस्थं शरीरं तत्पापसंज्ञं तदुच्यते ॥ २३
इदानीं गुरुभक्तिं च कुर्वतो वचनं मम । शृण्वतो धर्मरूपं तु शरीरं ते व्यवस्थितम् ॥ २४
तेनैव शुद्धिरमला जाता धर्मक्रियोचिता । दैवेन देहिनां नामचेतांसि चरितानि च ॥ २५
शरीराणि च पुष्यन्ते काले काले विपर्ययम् । सांप्रतं भवतो राजन्मनो धर्मे समास्थितम् ॥ २६
तेन त्वां कारयिष्यामि माधवस्नानमुत्तमम् ॥ २७

यम उवाच—

ततस्तु कारितस्तेन कश्यपेन पुरोधसा । स नृपो माधवे मासि स्नानं दानं च पूजनम् ॥ २८
यथादृष्टं पुरा शास्त्रे वैशाखस्नानजं विधिम्[४] । स मुनिः प्रत्युवाचास्मै भूपाय च यथोदितम् २९
शृण्वतः स्तोत्रसारं च कथनं हरिमेधसः । श्रुते यस्मिन्नधीते च स सम्यक्फलमाप्नुयात् ॥ ३०

स कारितस्तेन विधानभावो राजाऽपि चक्रे विधिवत्तदानीम् ।
श्रीमाधवे मासि विधानमीड्यं ततो यथाकर्णितमादरेण ॥ ३१

प्रातःस्नानं च पाद्यं च ह्यर्घ्यं च हरिपूजनम् । नैवेद्यं भक्तिभावेन चकार स नृपोत्तमः ॥ ३२

दानं यथानियमपालनमादरेण
वैशाखमासि विदधाति विधानमेवम् ।
यो भक्तितोऽन्वहमसौ प्रतिवर्षमेवं
कृत्वा प्रयाति हरिधाम महीसुराग्र्यः ॥ ३३

१ ख. °सा । माया° । २ क. °पशमप्र° । ३ अ. °मतन्द्रितम् । ४ क. अ. फलम् । ५ क. °नमित्थं त° ।

अथेतरेषु मासेषु कामिनीकुचकेलिवान् । भोगैकलालसो भूयो भवत्येव यथारुचि ॥ ३४
न धर्मनियमं राजकार्येषु न विचारणाम् । करोति कामवशगो हित्वा मासं च माधवम् ॥ ३५
महतामपि विप्राग्र्य दुर्निवार्यो मनोभवः । शरीरसहजो नूनमनादिर्वासनाक्रमः ॥ ३६
केशकज्जलशालिन्यो दुःस्पर्शा लोचनप्रियाः । यस्मादग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥ ३७
घोरः शत्रुः शरीरस्थः पुंसां कामो यथोचितः । मोहधूममयः पापो न केषामन्धकारकः ॥ ३८

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये षण्णवतितमोऽध्यायः ॥ ९६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७२०५

---

अथ सप्तनवतितमोऽध्यायः ।

---

यम उवाच—

अथ कालकटाक्षेण लक्षितो नृपतिस्तदा । मृतोऽतिरतिसेवोत्थक्षयक्षीणकलेवरः ॥ १
नीयमानो मम गणैस्ताड्यमानो मुहुर्मुहुः । क्रन्दमानो महारावान्संस्मरन्निजपातकम् ॥ २
विष्णुदूतैस्तदाऽऽगत्य तानधिक्षिप्य मेऽनुगान् । धर्मवानयमित्युक्त्वा ह्यारोप्य व्योमवाहनम् ३
नीतो हरिपुरं विप्र स्तूयमानोऽप्सरोगणैः । प्रातःस्नानेन वैशाखमासस्य क्षीणपातकः ॥ ४
अथ धर्मविहीनोऽयमिति मत्वा च तैः पुनः । देवदूतैरदूरेण नरकस्य च वर्त्मनः ॥ ५
आनीतो नृपतिर्विष्णोर्निदेशेऽतिविशारदैः । स गच्छन्नपि शुश्राव जीवानां क्रन्दतां पुनः ॥ ६
निरये पच्यमानानामारावं विविधं तदा । पापिनां कथ्यमानानामाक्रन्दमतिदारुणम् ॥ ७
श्रुत्वा विस्मयवान्विप्र राजाऽभूदतिदुःखितः । प्रोवाच दूतान्किमयमाक्रन्दो दारुणः श्रुतः ।
किमत्र कारणं तन्मे सर्वं वक्तुमिहार्हथ ॥ ८

दूता ऊचुः—

जन्तवस्त्यक्तमर्यादाः पापाः पुण्यविवर्जिताः । निरयेषु सुघोरेषु तामिस्रादिषु पातिताः ॥ ९
कृतपातकिनस्त्वत्र प्राणत्यागादनन्तरम् । याम्यं पन्थानमाश्रित्य दुःखमश्नन्ति दारुणम् ॥ १०
यमस्य पुरुषैर्घोरैः कृष्यमाणा इतस्ततः । अन्धकारे निपतिता भक्ष्यन्ते ह्यतिदारुणैः ॥ ११
श्वभिः शृगालैः क्रव्यादैः काककङ्कबकादिभिः । अग्नितुण्डैर्ह्रकव्याघ्रैर्भुजगैर्वृश्चिकादिभिः ॥ १२
अग्निना दह्यमानाश्च तुद्यमानाश्च कण्टकैः । क्रकचैः पाट्यमानाश्च पीड्यमानाश्च तृष्णया ॥ १३
क्षुधया बाध्यमानाश्च घोरैर्व्याधिगणैस्तथा । पूयशोणितगन्धेन मूर्छमानाः पुनः पुनः ॥ १४
क्वथ्यन्ते क्वथिते तैले ताड्यन्ते मुशलैः क्वचित् । आयसीषु प्रपच्यन्ते शिलासु क्वचिदेव च ॥ १५
क्वचिद्वान्तमथाश्नन्ति क्वचित्पूयमसृक्क्वचित् । केशशोणितमांसास्रग्वसास्थिनिकरेषु च ॥ १६
आस्थिताः कुणपाः पश्चात्कीर्णासु भूमिषु क्वचित् । शावदुर्गन्धनीरन्ध्रसंघद्रस(घाद्रिश)तकोटिषु॥
करपत्रशिलापातविनिष्टप्ततलेषु च । लोहतैलवसास्तम्भकूटशाल्मलिसद्मसु ॥ १८
क्षुरकण्टककीलोग्रज्वालाक्षुब्धविभीतिषु(?) । तप्तवैतरणीपूयपूरितेषु पृथक्पृथक् ॥ १९
असिपत्रवनोत्कृत्तनरनारीतनूषु च । घोरान्धकारदहनदारुणेषु मुहुर्मुहुः ॥ २०

---

१ क. °पि संप्राप्तो दु° । २ झ. ञ. °मयैः पा° । ङ. °मयैः पश्यो न । ३ झ. °सकले° । ञ. °सकुले° । ४ झ. ञ. °म्भकुटिशा° ।

पच्यमाना रुदन्तश्च दारुणं विविधैः स्वरैः । कण्ठेषु बद्धपाशाश्च भुजङ्गावेष्टिताः क्वचित् ॥ २१
कूटागारे भ्राम्यमाणाः शरीरैर्यातनोचितैः । पीड्यन्ते पापिनो राजन्क्रन्दन्तोऽमी विकर्मिणः ॥
सहितं विषयास्वादैः क्रन्दनं तैर्विधीयते । भुज्यते च कृतं पूर्वमेतत्सर्वैश्च जन्तुभिः ॥ २३
परस्त्रीषु कृतः सङ्गः प्रीतये दुःखदो हि सः । मुहूर्तविषयास्वादोऽनेककल्पान्तदुःखदः ॥ २४
वपुषस्तव राजेन्द्र प्रातःस्नातस्य माधवे । विधिना पावनस्यैते प्राप्य स्पर्शं च मा(भा)सता(ना)त्
लब्धसौख्याः क्षणं जाता महसाऽऽप्यायितास्तव । आक्रन्दरहिता जातास्तेनैते निरयं गताः ॥
नामापि पुण्यशीलानां श्रुतं सौख्याय कीर्तितम् । जायते तद्वपुःस्पर्शवायुः स्पर्शसुखावहः ॥ २७

यम उवाच—

इति दूतवचः श्रुत्वा स राजा करुणानिधिः । प्रत्युवाच ह तान्दूतान्विष्णोरद्भुतकर्मणः ॥ २८
कोमलं हृदयं नूनं साधूनां नवनीतवत् । वह्निसंतापसंतप्तं तद्यथा द्रवति स्फुटम् ॥ २९

राजोवाच—

नाऽऽर्तजन्तूनहं हित्वा पीडितो गन्तुमुत्सहे । स पापिष्ठो हि आर्तानां शोकं नापहरेत्क्षमः ॥ ३०
मदङ्गसंगमोत्सृष्टवायुस्पर्शेन ते यदि । जन्तवः सुखिनो जातास्तस्मात्तत्र नयन्तु माम् ॥ ३१
परतापच्छिदो ये तु चन्दना इव चन्दनाः । परोपकृतये ये तु पीड्यन्ते कृतिनो हि ते ॥ ३२
सन्तस्त एव ये लोके परदुःखविदारणाः । आर्तानामार्तिनाशार्थं प्राणा येषां तृणोपमाः ॥ ३३
तैरियं धार्यते भूमिर्नरैः परहितोद्यतैः । मनसो यत्सुखं नित्यं स स्वर्गो नरकोपमः ॥ ३४
तस्मात्परसुखेनैव साधवः सुखिनः सदा । वरं निरयपातोऽत्र वरं प्राणवियोजनम् ॥
न पुनः क्षणमार्तानामार्तिनाशमृते सुखम् ॥ ३५

दूता ऊचुः—

[*जन्तवो निरये घोरे पच्यन्ते तत्र पापिनः । स्वकर्मैवोपभुञ्जाना मोहस्थानं न विद्यते ॥ ३६
यैर्न दत्तं हुतं तीर्थे पुण्ये स्नानं न वा कृतम् । पुनर्नोपकृतं नृणां सुकृतं न कृतं परम् ॥ ३७
नेष्टं न तप्तं नो जप्तं यैर्न हृष्टतया नृप । परस्मिन्निह घोरेषु पच्यन्ते निरयेषु ते ॥ ३८
दुःशीला ये दुराचारा व्यवहारेषु निन्दिताः । परापकारिणः पापकारिणो दुर्विहारिणः ॥ ३९
एहि भूप महाभाग गच्छामो हरिमन्दिरम् । न ते पुण्यवतो युक्तमिह स्थातुमतः परम् ॥ ४०
विदारिणो हि मर्मोक्त्या पापाः परहृदां हि ये । निरयेष्वपि पच्यन्ते ये परस्त्रीविहारिणः ॥४१

राजोवाच—

यद्यहं सुकृती दूताः कस्मादस्मिन्महाभये । यातनामार्ग आनीतः किं मयाऽसुकृतं कृतम् ॥ ४२
मया न सुकृतं तादृक्कृतं वै कामशालिना । कथं हरिपुरं गन्ता संशयं छेत्तुमर्हथ ॥ ४३

दूता ऊचुः]—

सुकृतं न कृतं सत्यं त्वया कामवशात्मना । नेष्टं यज्ञैर्न वा यज्ञावशिष्टं भवताऽशितम् ॥ ४४
किं तु माधवमासे यद्विधिना वत्सरत्रयम् । प्रातः स्नातं गुरुवचःप्रेरितेन त्वया पुरा ॥ ४५
भक्त्या संपूजितो विष्णुर्विश्वेशो मधुसूदनः । महापापातिपापौघनिहन्ता भक्तवत्सलः ॥ ४६
सर्वैकसारेण पुनस्तेनैकेन नरेश्वर । नीयसे विष्णुभवनं पूज्यमानो मरुद्गणैः ॥ ४७

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ङ. पुस्तकस्थः ।

१ ख. ङ. °द्यमैः । म° । २ झ. ञ °स्मात्पूर्वेषु° ।

यथैव विस्फुलिङ्गेन ज्वाल्यते तृणसंचयः। प्रातःस्नानेन वैशाखे तथाऽघौघो नरेश्वर ॥ ४८
तावद्वपुषि पापानि प्रभवन्ति नरेश्वर। यावन्न माधवे मासे तीर्थे मज्जति चोषसि ॥ ४९
वैशाखे मासि यो युक्तो यथोक्तनियमैर्नरः। हरिभक्तोऽतिपापौघैर्मुक्तोऽच्युतपदं व्रजेत् ॥ ५०
आ जन्मतो न सुकृतं यत्त्वयाऽन्यत्पुरा कृतम्। तेन त्वं निरयस्थानमार्गं नीतो नरेश्वर ॥ ५१
अथ भूमिपते तूर्णमस्माभिश्च मरुद्गणैः। स्तूयमानो विमानेन गच्छ गोविन्दमन्दिरम् ॥ ५२

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्ये सप्तनवतितमोऽध्यायः ॥ ९७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७२५७

---

अथाऽष्टनवतितमोऽध्यायः।

---

यम उवाच—

ततस्तु करुणावार्धिस्तेषां शोकेन पीडितः। भूपतिः श्रीहरेर्दूतान्विनयेनाऽऽह वाडव ॥ १
ऐश्वर्यस्याभिजातस्य गुणानां सुकृतस्य च। सन्तः फलं हि मन्यन्ते ह्यार्तानां परिरक्षणम् ॥ २
यद्यस्ति सुकृतं किंचिन्मम तेनैव जन्तवः। स्वर्गं गच्छन्तु मुक्तागाः स्थाने चैषां वसाम्यहम् ॥ ३
एवं भूपवचः श्रुत्वा दूता विष्णोर्मनोहराः। औदार्यं सत्यमेतस्य ध्यायन्तो जगदुर्नृपम् ॥ ४

दूता ऊचुः—

अनेन तव कारुण्यधर्मेण वचसा नृप। बभूव वृद्धिर्धर्मस्य संचितस्य विशेषतः ॥ ५
स्नानं दानं जपो होमस्तपो देवार्चनादिकम्। कृतं यन्माधवे मासि[1] तदनन्तफलं ह्यभूत् ॥ ६
स्वर्गे यज्वा च दाता च क्रीडते त्रिदशैः सह। वापीषु हेमपद्मासु कल्पवृक्षयुतासु च ॥ ७
गीयमानो मुदं याति गीर्वाणरमणीगणैः। जलान्नदानतो लोकं लभते वारुणं शुभम् ॥ ८
कुलानि हेलया सप्त संतारयति गोप्रदः। हयं दत्त्वा रवेर्लोकं याति विद्याप्रदो नरः ॥ ९
ब्रह्मलोकं तथा हेमदानाद्याति सुरालयम्। याति देही दयाकन्यादानाद्यैर्देवलोकताम् ॥ १०
माधवे मासि यः स्नात्वा दत्त्वा संपूज्य माधवम्। अवाप्य सकलान्कामान्प्रयाति हरिमन्दिरम् ११
एकतोऽपि तपोदानक्रतुसुल्यादिकाः क्रियाः। एकतो विधिवन्मासो माधवश्चरितो महान् ॥ १२
तस्य माधवमासस्य दिनैकस्यापि भूपते। कृतं यत्सुकृतं तत्ते सर्वदानाधिकं परम् ॥ १३
कारुण्येन दिनैकस्य पुण्यं देहि धरापते। निरये पच्यमानेभ्यो दुःखितेभ्यो दयानिधे ॥ १४
न दयासदृशो धर्मो न दयासदृशं तपः। न दयासदृशं दानं न दयासदृशः सखा ॥ १५
पुण्यदः पुण्यमाप्नोति नरो लक्षगुणं सदा। कारुण्येन विशेषात्ते धर्मवृद्धिस्ततोऽभवत् ॥ १६
दुःखितानां हि भूतानां दुःखोद्धर्ता हि यो नरः। स एव सुकृती लोके ज्ञेयो नारायणांशजः १७
माधवे मासि पूर्णायां स्नानदानादिकं त्वया। यत्तीर्थे विहितं वीर सर्वाघविनिषूदनम् ॥ १८
तदेभ्यो देहि विधिवत्कृत्वा साक्ष्ये हरिं प्रभुम्। त्रिवाचिकं च निरयाद्येनामी स्वर्गमाप्नुयुः १९
कपोतार्थे स्वमांसानि कारुण्येन पुरा शिबिः। दत्त्वा दयानिधिः स्वर्गे स जातः कीर्तिवारिधिः २०
दधीचिरपि राजर्षिर्दत्त्वाऽस्थिचयमात्मनः। त्रैलोक्यकौमुदीं कीर्तिं लब्धवान्स्वर्गमक्षयम् ॥ २१
सहस्रजिच्च राजर्षिः प्राणानिष्टान्महायशाः। ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥ २२

---

१ क. °सि नाञ्छितं तत्फलं।

न स्वर्गे नापवर्गेऽपि तत्सुखं लभते नरः । यदार्तजन्तुनिर्वाणदानोत्थमिति नो मतिः ॥ २३
सर्वेषु दानजातेषु पुराजातेषु भूपते । कर्मणा तेन संख्यासु(तुं) धुरि धैर्यं नियोज्य च ॥ २४
दृष्ट्वा तव धियं सौम्य दयादानसुनिश्चलाम् । अस्माभिरपि तूत्साहः क्रियते वेदवादिभिः ॥२५
यदि ते रोचते राजन्नविलम्बतया ततः । तदेभ्यो देहि तत्पुण्यं यातनादुःखदाहकम् ॥ २६
इत्युक्तः स तदा देवं कृत्वा साक्ष्ये गदाधरम् । तेभ्यस्त्रिवाचिकं पुण्यं दयावान्विधिना ददौ २७
दत्ते माधवमासस्य तस्मिन्नेकदिनोद्भवे । सुकृते जन्तवो याम्ययातनादुःखवर्जिताः ॥ २८
विमानवरमारूढास्ते सर्वे त्रिदिवं ययुः । प्रणमन्तस्तुवन्तस्तं पश्यन्तः संप्रहर्षिताः ॥ २९

नृपेण दत्तं तदवाप्य पुण्यं वैशाखमासस्य दिनाभिजातम् ।
सर्वे ययुस्ते नरकाद्विमुक्ता दिवं विमानाधिगता विचित्रम् ॥ ३०
संस्तूयमानो मुनिदेवसंघैर्यत्तद्विशेषेण च लब्धपुण्यः ।
परं पदं योगिवरैरलभ्यं ययौ जगन्नाथगणाभिवन्द्यः ॥ ३१

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्येऽष्टनवतितमोऽध्यायः ॥ ९८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७२८८

---

अथ नवनवतितमोऽध्यायः ।

---

यम उवाच—

एतन्माधवमासस्य समासात्किंचिदीरितम् । माहात्म्यं पूर्णिमायाश्च विशेषाद्द्विजसत्तम ॥ १

वैशाखमासे मधुसूदनस्य प्रियं य एतत्पठतीतिहासम् ।
स याति कृष्णालयमाशु पूतः कल्पाननेकानिह मोदते च ॥ २

धन्यं यशस्यमायुष्यमिदं स्वस्त्ययनं महत् । स्वर्ग्यं श्रीदं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ३
इदं माधवमासस्य माहात्म्यं माधवप्रियम् । चरितं भूपतेस्तस्य संवादं चाऽऽवयोर्नृप[1] ॥ ४
श्रुत्वा पठित्वा विधिवदनुमोद्य मनःप्रियम् । लभेद्भक्तिं भगवति यया स्यात्क्लेशसंक्षयः ॥ ५
अथ गच्छ महाभाग देवलोकादितो भवान् । निपात्य भुवि ते देहं रुदन्त्यद्यापि बान्धवाः ॥ ६

विलप्यमानैरपि बन्धुभिस्ते न यावदग्नौ तव यच्छरीरम् ।
प्रक्षिप्यते हन्त जवेन तावद्याहि स्वयं सुप्त इव प्रबुद्धः ॥ ७
मम प्रसादादिह पुण्ययोगः श्रुतो यथावत्तमिमं विधेहि ॥
विधानतो वै समये समं ते समागमोऽन्ते भविता सुरैश्च ॥ ८

सूत उवाच—

इति देववचः श्रुत्वा नत्वा धर्माधिपं ततः । पुनः पपात स इह परितुष्टमना द्विजः ॥ ९
धर्मराजप्रसादेन ततस्तत्र महीतले । संसुप्त इव चोत्तस्थौ बन्धुवर्गसमन्वितः ॥ १०
विधिमेनं द्विजो भूमौ वर्षे वर्षे च स स्वयम् । चकार कारयामास माधवस्नपनं परात्(?)॥ ११
यमब्राह्मणसंवादो मयाऽयं बोधितो हि वः । तस्य माधवमासस्य पुण्यस्नानप्रसङ्गतः ॥ १२

---

१ क. °योरपि । श्रु° । ख. ङ. च. छ. ड. °योर्नरः । श्रु° । २ झ. ञ. यथा ।

वैशाखमासे सततं हरिप्रिये स्नानं विदध्याच्च ददाति भक्त्या ।
दानं च होमं सुकृतं तथा बुधो हरेः पदं तस्य न दुर्लभं कदा ॥ १३
यः शृणोत्येकचित्तेन माहात्म्यं मेषसूर्यजम् । सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ॥ १४

ऋषय ऊचुः—

सूत सूत महाभाग त्वयाऽतिकरुणात्मना । वैशाखमासमाहात्म्यं कीर्तितं पापनाशनम् ॥ १५
नियमा मधुहन्तुर्ये माधवे कथितास्त्वया । पूजनं स्नानदानाद्यं श्रौतस्मार्तविधानतः ॥ १६
यथा च माधवो देवः प्रीयते पापनाशनः । अधुना श्रोतुमिच्छामो ध्यानं तस्य महात्मनः ॥१७
कृष्णस्य भक्तवृन्दानां प्रियस्य भवतारणम् ॥ १८

सूत उवाच—

शृणुध्वं मुनयः सर्वे कृष्णस्य जगदात्मनः । गोगोपगोपीप्राणस्य वृन्दावनचरस्य च ॥ १९
एकदा नारदः पृष्टो गौतमेन द्विजोत्तमाः । स तस्मै प्राह यद्ध्यानं तद्वक्ष्ये पापनाशनम् ॥ २०

नारद उवाच—

सुमप्रकरसौरभोद्गलितमाध्विकाद्युल्लस-
त्सुशाखिनवपल्लवप्रकरनम्रशोभायुतम् ।
प्रफुल्लनवमञ्जरीललितवल्लरीवेष्टितं
स्मरेत सततं शिवं शितमतिः सुवृन्दावनम् ॥ २१
विकाशिसुमनोरसास्वदनमञ्जुलैः संचर-
च्छिलीमुखमुखोद्गतैर्मुखरितान्तरं झंकृतैः[२] ।
कपोतशुकसारिकापरभृतादिभिः पत्रिभि-
र्विराणितमितस्ततो भुजगशत्रुनृत्याकुलम् ॥ २२
कलिन्ददुहितुश्चलल्लहरिविप्रुषां वाहिभि-
र्विनिद्रसरसीरुहोदररजश्चयोद्धूसरैः ।
प्रदीपितमनोभवव्रजविलासिनीवाससां
विलोलनपरैर्निषेवितमनारतं मारुतैः ॥ २३
प्रवालनवपल्लवं मरकतच्छदं मौक्तिक-
प्रभाप्रकरकोरकं कमलरागनानाफलम् ।
स्थविष्ठमखिलर्तुभिः सततसेवितं कामदं
तदन्तरपि कल्पकाङ्घ्रिपमुदञ्चितं चिन्तयेत् ॥ २४
सुहेमशिखराचले उदितभानुवद्भासुरा-
मधोऽस्य कनकस्थलीममृतशीकरासारिणः ।
प्रदीप्तमणिकुट्टिमां कुसुमरेणुपुञ्जोज्ज्वलां
स्मरेत्पुनरतन्द्रितो विगतषट्तरङ्गां[३] बुधः ॥ २५
तद्रत्नकुट्टिमनिविष्टमहिष्ठयोगपीठेऽष्टपत्रमरुणं कमलं विचिन्त्य ।
उद्यद्विरोचनसरोचिरमुष्य मध्ये संचिन्तयेे सुखनिविष्टमथो मुकुन्दम् ॥ २६ ॥

---

१ क. °खस्नानमा° । २ ङ. म. हुंकृतैः । ३ ख. °तयङ्गर° । ङ. म. °तयदुर° । ड. °तयज्जर° ।

सुत्रामहेतिदलिताञ्जनमेघपुञ्जप्रत्यग्रनीलजलजन्मसमानभासम् ।
सुस्निग्धनीलघनकुञ्चितकेशजालं राजन्मनोज्ञशितिकण्ठशिखण्डचूडम् ॥ २७
रोलम्बलालितसुरद्रुमसूनुसंपद्युक्तं समुत्कचनवोत्पलकर्णपूरम् ।
लोलालिभिः स्फुरितभालतलप्रदीप्तगोरोचनातिलकमुज्ज्वलचिल्लिचापम् ॥ २८
आपूर्णशारदगताङ्कशशाङ्कबिम्बकान्ताननं कमलपत्रविशालनेत्रम् ।
रत्नस्फुरन्मकरकुण्डलरश्मिदीप्तगण्डस्थलीमुकुरमुन्नतचारुनासम् ॥ २९
सिन्दूरसुन्दरतराधरमिन्दुकुन्दमन्दारमन्दहसितद्युतिदीपिताशम् ।
वन्यप्रवालकुसुमप्रचयावक्लृप्तग्रैवेयकोज्ज्वलमनोहरकम्बुकण्ठम् ॥ ३०
मत्तभ्रमद्भ्रमरघुष्टविलम्बमानं संतानकप्रसरदामपरिष्कृतांसम् ।
हारावलीभगणराजितपीवरोरो व्योमस्थलीलसितकौस्तुभभानुमन्तम् । ३१
श्रीवत्सलक्षणसुलक्षितमुन्नतांसमाजानुपीनपरिवृत्तसुजातबाहुम् ।
आंबन्धुरोदरमुदारगभीरनाभिं भृङ्गाङ्गनानिकरमञ्जुलरोमराजिम् ॥ ३२
नानामणिप्रघटिताङ्गदकङ्कणोर्मिग्रैवेयसारसननूपुरतुन्दबन्धम् ।
दिव्याङ्गरागपरिपिञ्जरिताङ्गयष्टिमापीतवस्त्रपरिवीतनितम्बबिम्बम् ॥ ३३
चारूरुजानुमनुवृत्तमनोज्ञजङ्घं कान्तोन्नतप्रपदनिन्दितकूर्मकान्तिम् ।
माणिक्यदर्पणलसन्नखराजराजद्रक्ताङ्गुलिच्छदनसुन्दरपादपद्मम् ॥ ३४
मत्स्याङ्कुशारिदरकेतुयवाब्जवज्रैः संलक्षितारुणकराङ्घ्रितलाभिरामम् ।
लावण्यसारसमुदायविनिर्मिताङ्गं सौन्दर्यनिन्दितमनोभवदेहकान्तिम् ॥ ३५
आस्यारविन्दपरिपूरितवेणुरन्ध्रलोलत्कराङ्गुलिसमीरितदिव्यरागैः ।
शश्वद्द्रवैः कृतनिविष्टसमस्तजन्तुसंतानसंनतिमनन्तसुखाम्बुराशिम् ॥ ३६
गोभिर्मुखाम्बुजविलीनविलोचनाभिरूधोभरस्खलितमन्थरमन्दगाभिः ।
दन्ताग्रदष्टपरिशिष्टतृणाङ्कुराभिरालम्बिवालधिलताभिरथाभिवीतम् ॥ ३७
संप्रस्नुतस्तनविभूषणपूर्णनिश्चलास्याद्दृढक्षरितफेनिलदुग्धमुग्धैः ।
वेणुप्रवर्तितमनोहरमन्दगीतदत्तोच्चकर्णयुगलैरपि तर्णकैश्च ॥ ३८
प्रत्यग्रशृङ्गमृदुमस्तकसंप्रहारसंरम्भभावनविलोलखुराग्रपातैः ।
आमेदुरैर्बहुलसास्नगलैरुदग्रपुच्छैश्च वत्सतरवत्सतरीनिकायैः ॥ ३९
हम्भारवक्षुभितदिग्वलयैर्महद्भिरप्युक्षभिः पृथुककुद्भरभारखिन्नैः ।
उत्तम्भितश्रुतिपुटीपरिपीतवंशध्वानामृतोद्धतविकासिविशालघोणैः ॥ ४०
गोपैः समानगुणशीलवयोविलासवेशैश्च मूर्छितकलस्वनवेणुवीणैः ।
मन्दोच्चतारपटुगानपरैर्विलोलदोर्वल्लरीललितलास्यविधानदक्षैः ॥ ४१
जङ्घान्तपीवरकटीरतटीनिबद्धव्यालोलकिङ्किणिघटारणितैरटद्भिः ।
मुग्धैस्तरक्षुनखकल्पितकान्तभूषैरव्यक्तमञ्जुवचनैः पृथुकैः परीतम् ॥ ४२
अथ सुललितगोपसुन्दरीणां पृथुकबरीष(ष्ट)नितम्बमन्थराणाम् ।
गुरुकुचभरभङ्गुरावलग्नत्रिवलिविजृम्भितरोमराजिभाजाम् ॥ ४३

१ ङ. ञ. आवन्दरो° । २ ङ. ञ. °श्वद्रवीकृतविनिष्ट° । ३ क. °वीतैः । म° ।

तदतिरुचिरचारुवेणुवाद्यामृतरसपल्लविताङ्गजाङ्घ्रिपस्य ।
मुकुलविमलरम्यरूढरोमोद्गमसमलंकृतगात्रवल्लरीणाम् ॥ ४४
तदतिरुचिरमन्दहासचन्द्रातपपरिजृम्भितरागवारिराशेः ।
तरलतरतरङ्गभङ्गविप्रुट्प्रकरघनश्रमबिन्दुसंततानाम् ॥ ४५
तदतिललितमन्दचिल्लिचापच्युतनिशितेक्षणमारबाणवृष्ट्या ।
दलितसकलमर्मविह्वलाङ्गप्रविसृतदुःसहवेपथुव्यथानाम् ॥ ४६
तदतिरुचिरवेषरूपशोभामृतरसपानविधानलालसानाम् ।
प्रणयसलिलपूरवाहिनीनामलसविलोलविलोचनाम्बुजाभ्याम् ॥ ४७

विस्रंसत्कबरीकलापविगलत्फुल्लप्रसूनास्रव-
न्माध्वीलम्पटचञ्चरीकघटया संसेवितानां मुहुः ।
मारोन्मादमदस्खलन्मृदुगिरामालोलकाञ्च्युल्लस-
न्नीवीविश्लथमानचीनसिचयान्तार्चिनितम्बत्विषाम् ॥ ४८
स्खलितललितपादाम्भोजमन्दाभिघात-
च्छुरितमणितुलाकोट्याकुलाशामुखानाम् ।
चलदधरदलानां कुड्मल(?)पक्ष्मलाक्षि-
द्वयसरसिरुहाणामुल्लसत्कुण्डलानाम् ॥ ४९
द्राघिष्ठश्वसनसमीरणाभिताप-
प्रम्लानीभवदरुणौष्ठपल्लवानाम् ।
नानोपायनविलसत्कराम्बुजाना-
मालीभिः सततनिषेवितं समन्तात् ॥ ५०
तासामायतलोलनीलनयनव्याकोशलीनाम्बुज-
स्रग्भिः संपरिपूजिताखिलतनुं नानाविलासास्पदम् ।
तन्मुग्धाननपङ्कजप्रविगलन्माध्वीरसास्वादिनीं
बिभ्राणं प्रणयोन्मदाक्षिमधुहृन्मालां मनोहारिणीम् ॥ ५१

*गोपीगोपपशूनां बहिःस्मरेदग्रतोऽस्य गीर्वाणघटां वित्तार्थिनीं विरिञ्चित्रिनयनशतमन्युपूर्विकां स्तोत्रपराम् ॥ ५२
तद्वद्दक्षिणतो मुनिनिकरं दृढधर्मवाञ्छया समाम्नायपरम् ॥ ५३
योगीन्द्रानथ पृष्ठे मुमुक्षमाणान्समाधिना तु सनकाद्यान् ॥ ५४

सव्ये सकान्तानथ यक्षसिद्धगन्धर्वविद्याधरचारणांश्च ।
सकिंनरानप्सरसश्च मुख्याः कामार्थिनीर्नर्तनगीतवाद्यैः ॥ ५५
शङ्खेन्दुकुन्दधवलं सकलागमज्ञं सौदामिनीततिपिशङ्गजटाकलापम् ।
तत्पादपङ्कजगताममलां च भक्तिं वाञ्छन्तमुज्झिततरान्यसमस्तसङ्गम् ॥ ५६

* सर्वपुस्तकेष्वेतादृशोऽशुद्ध एव ।

नानाविधश्रुतिगुणान्वितसप्तरागग्रामत्रयीगतमनोहरमूर्छनाभिः ।
संप्रीणयन्तमुदिताभिरपि प्रभक्त्या संचिन्तयेन्नभसि *मां द्रुहिणप्रसूतम् ॥ ५७
इति ध्यात्वाऽऽत्मानं पटविशदधीर्नन्दतनयं
नरो बुद्ध्यै(बौद्धै)र्वाऽर्घ्यप्रभृतिभिरनिन्द्योपहृतिभिः ।
यजेद्भूयो भक्त्या स्ववपुषि बहिष्ठैश्च विभवै-
रिति प्रोक्तं सर्वं यदभिलषितं भूसुरवराः ॥ ५८

इति श्रीमहापुराणे पाद्मे पातालखण्डे वैशाखमाहात्म्य एकोनशततमोऽध्यायः ॥ ९९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७३४६

---

अथ शततमोऽध्यायः ।

---

ऋषय ऊचुः—
भूयो वद महाभाग रामचारित्रमद्भुतम् । राममाहात्म्यसर्वस्वं भक्तानां प्रीतिदायकम् ॥ १
अश्वमेधक्रतुवरं कृत्वा दाशरथिर्यथा । प्रवृत्तो लोककृत्येषु शास्त्रकृत्येषु कोविदः ॥ २
सूत उवाच—
अयोध्यां गन्तुकामेन शंकरेण महात्मना । पार्वत्या सह देवेन उषितं शरयूतटे ॥ ३
मुनयस्तं समभ्येत्य शंकरं विश्वरूपिणम् । कश्यपाद्या महात्मानः पप्रच्छुरमितौजसम् ॥ ४
स्वागतं ते मुनिश्रेष्ठ सभार्यः कुत आगतः । किमागमनकृत्यं ते कं देशं गन्तुमुद्यतः ॥ ५
शंकर उवाच—
अहं शंभुरिति ख्यातो विप्रो[१] हिमगिरिस्थितः । द्रष्टुं च राघवं गच्छे मम कार्यं महत्ततः ॥ ६
मामाह्वयति राजाऽसौ पुराणश्रवणे रतः । आगच्छन्तु भवन्तोऽपि राघवः परितुष्यति ॥ ७
ततः शिवस्ते मुनयो ययू रामदिदृक्षया । तानागतान्वसिष्ठस्तु ज्ञात्वा रामाय चोक्तवान् ॥ ८
[†ततः सत्वरमुत्थाय निर्ययौ सपुरोहितः । अर्घ्यपाद्यादिना सर्वान्पूजयामास तानृषीन्] ॥ ९
गृहरानं ततः सर्वान्प्रावेशयदरिंदमः । प्रत्येकमासनं दत्त्वा स्वागतोक्त्याऽऽसनस्थितान् ॥ १०
क्रमेण रघुशार्दूलः पूजयामास तानृषीन् । वाचा मधुरया प्रीणन्निदमाहाऽऽसनस्थितान् ॥ ११
श्रीराम उवाच—
अद्य मे सफलं जन्म प्राप्तमद्य तपःफलम् । अद्याभ्यासस्य विद्यानां फलकालोऽयमागतः ॥ १२
अद्य मे पितरस्तुष्टा राज्यं च सफलं मम । अद्य मे सफलं वृत्तमद्य मे सफलं श्रुतम् ॥ १३
एवं वदन्तं राजानं ब्राह्मणाः कश्यपादयः । ऊचुः प्रियतरं वाक्यं रामं राजीवलोचनम् ॥ १४
ऋषय ऊचुः—
अयं शंभुर्द्विजः प्राप्तः सर्वशास्त्रविशारदः । वेदवेदाङ्गतत्त्वज्ञः सर्वभूतहिते रतः ॥ १५
कैलासवासी सततं तपसे कृतनिश्चयः । ब्रह्मणा ब्रह्मवर्चस्के तुल्यो ब्रह्मविदां वरः ॥ १६

---

* मां नारदं प्रतीत्यर्थः । † धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ज. ड. पुस्तकस्थः ।

---

१ क. ख. ङ. छ. ड. 'तिगगा' । २ ख. महात्मानं । ३ ज. 'प्रो हेम' ।

हरिणा ब्रह्मवात्सल्ये प्रसादे शंकरोपमः। एवंविधो महातेजाः शंभुर्ब्राह्मणपुंगवः ॥ १७
अष्टादशपुराणज्ञो मीमांसान्यायकोविदः। त्वद्वाक्यगौरवादेव प्राप्तोऽयं मुनिपुंगवः ॥ १८
त्वयाऽऽहूतो मुनिवरः कैलासादागतः प्रभो। अतः पृच्छ महाभाग पुराणाख्यानमुत्तमम् ॥ १९
श्रोतुकामा वयं प्राप्तास्त्वामद्य रघुनन्दन। अन्तं गतस्य वेदानां सर्वशास्त्रार्थवेदिनः ॥ २०
पुंसोऽश्रुतपुराणस्य न सम्यग्गतिदर्शनम् ॥ २१

सूत उवाच—

एवमुक्तो रघुश्रेष्ठो मुनिभिस्तत्त्वदर्शिभिः। प्रहर्षमतुलं लेभे पुराणश्रवणोत्सुकः ॥ २२

श्रीराम उवाच—

लिङ्गार्चनप्रकारं च लिङ्गमाहात्म्यमेव च। [*महेशनाममाहात्म्यं पूजामाहात्म्यमेव च ॥ २३
नमस्कारस्य माहात्म्यं दृष्टिमाहात्म्यमेव च। जलदानस्य माहात्म्यं धूपदानस्य सत्तम ॥ २४
दीपगन्धादिदानस्य पुष्पमाहात्म्यमेव च ]। नानाख्यानेतिहासानां कथां पापप्रणाशिनीम् ॥ २५
धर्मार्थकाममोक्षांश्च तदुपायांश्च सुव्रत। तत्सर्वं श्रोतुमिच्छामि त्वत्तो मुनिवरोत्तम ॥ २६

श्रीशंभुरुवाच—

राम राम महाबाहो पुण्यवानसि राघव। राज्यासक्तस्य ते जाता पुराणश्रवणे रतिः ॥ २७
स्यान्महत्सेवया राम पुण्यतीर्थनिषेवणात्। सा जिह्वा या शिवं गायेत्तच्चित्तं यत्तदर्पितम् ॥ २८
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ। सुजन्मदेहमत्यर्थं तदेवाशेषजन्मसु ॥ २९
यदेव पुलकोद्भाति(सि) हरनामानुकीर्तनात्। कृतार्थोऽसि महाराज तत्प्रश्नानुमता मतिः ॥ ३०
अनन्तरं समाजग्मुर्जाङ्घिकाः सत्वरश्रमाः। तत्करात्पत्रिकां गृह्य+ पपाठ रघुसत्तमः ॥ ३१
मनसाऽचिन्तयद्रामः कथमेतदभूदिति। रामं शंभुस्तदा प्राह देव्या ब्राह्मणवेषवान् ॥ ३२

शंभुरुवाच—

किं चिन्तयसि काकुत्स्थ मुनिष्वग्रे वसत्स्वपि। तद्वाक्यं राघवः श्रुत्वा पप्रच्छ मुनिपुंगवान् ३३

श्रीराम उवाच—

विभीषणः कथमसौ बद्धः शृङ्खलया नृभिः। मत्स्थापितं शिवं लिङ्गं दृष्ट्वा रामेश्वरं त्वहो ॥ ३४
द्राविडैः कुटिलैर्दुष्टैरात्मना तद्विचार्यताम्। विचार्य मुनिवर्यास्ते नेशास्तज्ज्ञातुमल्पतः ॥ ३५
न जानीम इति प्राहू रामं रामस्तदाऽब्रवीत्। पुराणं वीक्ष्य विधिना तत्सर्वं ब्रूत सत्तमाः ॥ ३६
भवदज्ञानहेतुश्च विचार्यस्तदनन्तरम्। किं किं पुराणं प्रेक्ष्यं स्याद्वर्जनीयं तथैव किम् ॥ ३७
प्रशस्तः कीदृशः श्लोकस्तदन्यः कीदृशो भवेत्। कीदृशेषु च कार्येषु कीदृशः पूजकस्तथा ॥ ३८
पूजा च कीदृशैर्भक्तैः कार्या निर्णयदर्शने। इति रामस्य वचनं श्रुत्वा ते द्विजसत्तमाः ॥ ३९
प्रत्यूचुस्तं रघुश्रेष्ठं चिन्ताव्याकुलमानसम्। न वक्तारो वयं राम वीक्ष्यतां तु पुराणवित् ॥ ४०
तच्छ्रुत्वा राघवः शंभुं पप्रच्छ विनयान्वितः। सोऽपि तद्वाक्यमाकर्ण्य प्रत्युवाच महामतिः ॥ ४१

शंभुरुवाच—

पुराणजीवी पूजार्हः स्वशाखाध्ययनः शुचिः। मीमांसातत्त्वविज्ञानः श्रोत्रियोऽनृतदूषकः ॥ ४२

---

* धनुश्चिह्नान्तर्गतः पाठः, छ. ट. ड. पुस्तकस्थः। +आर्षो ल्यप्समासाभावेऽपि।

---

१ क. 'सादः क्रियतेऽधुना। ए'। २ ङ. म. हरिणा'।

देवेषु च समस्तेषु समदृष्टिः शिवे रतः । शतरुद्रीयजापी च साग्निकश्चातिवाचकः ॥ ४३
यजुर्वेदी विशेषेण पूजयेत्पुस्तकं सुधीः । श्रीतालपत्रलिखितं देवलिप्यन्वितं शुभम् ॥ ४४
बन्धार्[१]धंतिप्रचं[२]पट्टयुगलात्प्रणवाक्षरम् । प्रागूर्ध्वं रेखयोः प्रान्ते प्रणवस्याग्रयोजिका ॥ ४५
रेखैका तु भवेदेव मकारस्तस्य पार्श्वतः । शिरोभागमुपक्रम्य सकोणाधःप्रलम्बिनी ॥ ४६
आकारः स हि विज्ञेयः प[३]ट्टिकादक्षरेखया । वामे ष[४]ड्वक्रबिन्दू द्वाविकार इति कीर्तितः ॥ ४७
तस्य वामशिरोरेखालम्बिन्या ई उदाहृतः । सर्वाक्षरे शिरोरेखा अवक्रा प्रणवं विना ॥ ४८
तस्यां तु लम्बरेखा स्यात्तदन्ते च लवित्रवि(व)त् । उकारः स हि विख्यातो लवित्रद्वयतस्तदू ४९
एवमन्यानि सर्वाणि ह्यक्षराण्याह भारती । लिप्याऽनयैव लिखितं पुराणं तु प्रशस्यते ॥ ५०
ब्राह्मं पाद्मं वैष्णवं च मार्तण्डं नारदेरितम् । मार्कण्डेयमथाऽऽग्नेयं कौर्मं वामनमेव च ॥ ५१
गारुडं लैङ्गमाख्यातं स्कान्दं मात्स्यं नृसिंहकम् । तथैव गदितं राम पुराणं कापिलं तथा ॥ ५२
वाराहं ब्रह्मवैवर्तं शकुनेषु प्रशस्यते । शैवं भागवतं दौर्गं भविष्योत्तरमेव च ॥ ५३
भविष्यं चोपसंज्ञानि त्वन्यानि च विवर्जयेत् । विमुच्य पुस्तके रज्जुं पीठे निक्षिप्य संस्कृतम् ५४
धौतवस्त्रधरः स्नात्वा शुचिरक्रोधनो[५]ऽत्वरः । आदावात्मानमभ्यर्च्य कृत्वा संकल्पमेव च ॥ ५५
अङ्कुशं चाक्षसूत्रं च पाशं पुस्तकमेव च । धारयन्तीं सि[६]तां ध्यायेत्प्रसन्नास्यां सरस्वतीम् ॥ ५६
गोक्षीरसदृशाकारं त्रिनेत्रं वृषवाहनम् । सहासवदनं शान्तं शुक्लाम्बरधरं शिवम् ॥ ५७
हरिणं चाभयं चोर्ध्वबाहुयुग्मे किरीटिनम् । व्याख्यामुद्रा च दक्षेऽधो वामहस्ते(स्त) वरप्रदम् ॥
नानारत्नविभूषाढ्यं गिरिजार्धाम्बुजासनम् । बहुभि[७]र्मुनिमुख्यैस्तु ध्यायमानपदाम्बुजम् ॥ ५९
मूर्तिमद्भिस्तथा वेदैः स्तूयमानं पुराणकैः । अन्यैः समस्तलोकैश्च संसेवितपदाम्बुजम् ॥ ६०
ध्यात्वैवं पूजकः सम्यगादौ पूजां समाचरेत् । आपो वा इदमित्येतत्कलशस्याभिमन्त्रणम् ॥ ६१
तज्जलं तु गृहीत्वाऽथ पात्रस्थमभिमन्त्रयेत् । तत्सद्ब्रह्मेति मन्त्रेण प्रशस्य प्रणवेन तु ॥ ६२
आत्मानं सर्वपात्राणि तत आवाहयेदिति । यद्वागितित्र्यृचेनैव भारतीषोडशार्चनम् ॥ ६३
पुरुषसूक्तेन वा कुर्याद्गायत्र्या वा समर्चयेत् । ॐनमो भगवतेऽमुकपुराणायेति पुराणमर्चयेत् ६४
काण्डादिति हि मन्त्रेण दूर्वामानीय पूजयेत् । ॐनमो भगवत्यै दूर्वायै, इति ॥
सलोकपालपूजा स्यादथ कन्यार्चनं भवेत् ॥ ६५
वत्सरात्पञ्चकादूर्ध्वं दशवर्षादधः शुभा । अनुत्पन्नऋतुर्वाऽपि तां प्रयत्नेन पूजयेत् ॥ ६६
गन्धपुष्पाक्षतैर्धूपदीपताम्बूलभूषणैः । पाठयेदप्यमुं मन्त्रं पूजकः कन्यकामिमाम् ॥ ६७
सत्यं ब्रूहि प्रियं ब्रूहि भगवति सरस्वति नमस्ते नमस्त इति।गायत्रीयानुक्रमार्था[८]त्तु दूर्वायुग्मं तु कामयेत्
संनिधौ पुस्तकस्याधः सहस्रपरमेत्यृचा । दूर्वायुग्मत्रयं दद्यात्तस्या हस्ते विचक्षणः ॥ ६९
साऽपि क्षिपेत्पुस्तसंधौ [९]शलाकात्रयमन्वनु । विसृज्य [१०]तां पुनर्दद्याच्छिवाभ्यां नम इत्यथ ॥ ७०
पत्रयोर्मध्यमः श्लोकः कार्यसिद्धेर्हि सूचकः । पूर्वपत्रे समाप्तिः स्याच्छ्लोकस्य यदि राघव ७१
पत्रेऽपरे पठेच्छ्लोकं विविच्यार्थमुदीरयेत् । शनैः शनैः पठेत्प्राज्ञो व्याख्यास्येच्च शनैः शनैः ७२
त्वरेह न हि कर्तव्या कुप्यति त्वरया तु गीः । घटिकायास्तु पादं स्यादत्वरा स्यात्ततोऽधिका ॥
त्वरयेन्न च वक्तारं ज्ञातव्यांशमनु द्विजम् । विविच्य पाठं श्लोकस्य निश्चित्यार्थं च मानसे ॥ ७४

१ अ. °र्धं च प्रपंचन्द्रयु° । २ ख. °पट्टयु° । ३ ख. पट्टिकारक्ष° । ४ अ. षट्चक्र° । ५ अ. °नोऽज्वरः । ६ क. शिवं । ७ ख. °भिर्मनुमु° । ८ ख. °त्तु पूर्वायु° । ९ ख. शलका° । १० अ. ताः ।

प्रतीपं तं न(तन्न)वक्तव्यं विविच्य रघुनन्दन । यदि युक्तमयुक्तं वा श्लोकमन्यं पठेदसौ ॥ ७५
पुस्तकस्थं च हित्वैव पूजकः स द्विजो यदि । तत्तथैव हि विज्ञेयं विसंवादो न शस्यते ॥ ७६
दैवागतो हि स श्लोको दैवं हि बलवत्तरम् । उपश्रुतिषु यद्वच्च नापराधो द्विजस्य तु ॥ ७७
विस्मयो न च कर्तव्यो दैवस्य कुटिला गतिः । यत्तत्पदविपर्यासे पत्रे चोत्पन्नवारिणि ॥ ७८
तमादेशं तिरस्कृत्य द्वितीयं तु पठेदतः । ततस्तृतीयं पाठ्यं स्यात्ततः कार्यविवेचनम् ॥ ७९
अविसर्गान्तपूर्वास्ते (वस्तु) पवर्गेतरपञ्चमः । स्तुतिलिङ्गर्जितः श्लोकः शकुनेषु प्रशस्यते ॥ ८०
अध्यायादिः समाप्तिश्च वृथा पत्रं वृथा लिपिः । उक्तानुवचनं चैव ह्युपस्तुतमथैव च ॥ ८१
दग्धपत्रं नष्टलिपिः संद(दि)ग्धाक्षरमेव च । एतानि शकुने नित्यं वर्जनीयानि पण्डितैः ॥ ८२
प्रश्नो हि द्विविधो ज्ञेयो दीप्तशान्तप्रभेदतः । शान्तं च द्विविधं ज्ञेयमुत्पत्तिस्थितिवृद्धितः ॥ ८३
तत्र शान्तं प्रशस्यं स्याल्लक्षितं पूर्वलक्षणैः । कार्यभेदास्तु वर्ण्यन्ते केचिन्मर्त्योपयोगिनः ॥ ८४
कस्यचित्कार्यमादाय कश्चित्प्रष्टा भवत्यपि । स करोति तदा प्रश्नं समेत्य स्मरतेऽत्र किम् ॥ ८५
स पुनर्धार्ये पत्रं तत्तस्मिन्पत्रं प्रशस्यते । अथवा तत्क्षमोपेतं वैराग्यं परमेव च ॥ ८६
यतः कुतश्च दृष्टश्च स्तुतिपादकमेव(?) च । परिहृत्य परं चापि तस्मिन्नर्थे शुभप्रदः ॥ ८७
मृतो गृह्णाति वागर्थमिति प्रश्नः शुभप्रदः । विवादे विजयप्रश्ने जयद्योतकमिष्यते ॥ ८८
सृष्टिरप्यत्र शस्ता स्यात्क्रूरायां क्लेशतो जयः । प्रशान्तायामुपायैस्तु मिश्रायां विड्वरो भवेत् ८९
पुरादिवर्णनं यत्तु मध्यमं यदि चोत्तमम् । कलिसंभावनायास्तु शृङ्गारस्योपवर्णने ॥ ९०
राज्यनिर्वाहचिन्तायां राज्यलिङ्गं शुभावहम् । यस्यापि यादृशं योग्यं विचार्यं तादृशं बुधैः ॥ ९१
स्तुतिवैराग्ययोः कार्यविलयः परिकीर्तितः । कार्याल्पसिद्धिः स्खलिते न च निर्वाहमृच्छति ९२
तस्यान्यार्थस्यान्यभावो राम शान्तविचारणे । विसर्गान्तश्च पूर्वार्धविपर्यासौ भविष्यतः ॥ ९३
संकल्पितान्यथाभावो ह्यध्यायस्य समापने । काण्डादेस्तु समाप्तौ तु स्यात्तत्कार्यविनाशनम् ९४
तस्मादेतादृशे दोषे शकुनस्य विपर्ययः । क्षुते पुस्तकपाते च त्वाहते मस्तकादिषु ॥ ९५
वक्ता वैमाननं याति ततः शकुननाशनम् । तस्मादेतादृशे दोषे शकुनं परिवर्जयेत् ॥ ९६
उपमायां भवेद्राम कार्याभासो न वस्तुतः । संतानाम्भोन्यत्र चोक्ता सृष्टिर्मध्यफलप्रदा ॥ ९७
स्तुतिः प्रशस्ता कुत्रापि गुणवक्ताऽपि निर्णये । विवाहे चौषधे दाने व्यवहारे कृषौ तथा ॥ ९८
यथार्था च स्तुती राम निर्वाहेऽपि न दूषणम् । अयथार्था स्तुतिर्या हि तत्र कार्यं न सिध्यति ९९
अबुद्धार्थे तथा पद्ये पुराणादिहृदादृते(?) । पलायने देशभावे व्याधिसंभव एव च ॥ १००
चौराद्यभिभवे तस्मिन्घोरं कार्यविनाशनम् । शान्तः स्याद्यदि चेत्प्रश्न इति प्राहुः पुराविदः ॥

श्रीरामचन्द्र उवाच—

अबुद्धार्थं कथं पद्यं पुराणज्ञो वदिष्यति । अनुक्तो न श्रुतः सम्यक्श्रोतृणामिति निश्चयः ॥ १०२
तदुदाह्रियतां मह्यमर्थश्चापि विचार्यताम् । भागाबोधकमप्यत्र वक्तुमर्हसि पण्डित ॥ १०३

शंभुरुवाच—

मधूनि च मधून्यत्र मधुर्मधुभुजं मधुः । मधुनामधुनादर्थविषाणि च विषाणि च ॥ १०४

१ झ. °तद्द्वयवि° । २ झ. °रिणी । त° । ३ झ. °स्थितविद्धतः । ४ क. °तं प्रश्नल° । ५ झ. °गर्थ किमि° । ६ झ. प्रश्नोऽशु° । ७ ट. कार्ये । ८ ञ. °स्यानुभा° । ९ झ. पूर्वोर्धवि° । १० झ. ञ. °तानं भो° । ११ झ. स्तुतिप्र° । १२ ट. देव । १३ झ. °दिह्रिदा° । ञ. °दिह्रिताद° । १४ झ. °वेद्यस्मि° । १५ ञ. निश्चितः ।

ाबुद्धार्थस्त्वयं श्लोकः शकुने न हि शस्यते । रुते रुते रुते रोरौ रीरीरारंररीररम् ॥ १०५
वं करोति शुद्धात्मा ब्राह्मणो ब्रह्मतोऽतिथिः । भागाबुद्धस्त्वयं श्लोकः शकुने न प्रशस्यते १०६
वमादीनि पद्यानि पुराणेषु रघूत्तम । सन्ति तेषां न च व्याख्या तत्पाठस्तु परं भवेत् ॥ १०७
कुः श्रोतुरवैगुण्यं व्रतेषु नियमेषु च । वेदवच्च पुराणानि न चिन्त्यानि कथं त्विति ॥ १०८
प्ररुक्तादिवशादर्थधीरप्यस्तु विचारतः । श्लोकार्थं प्रक्रियाश्चैव विचार्य परमार्थतः ॥ १०९
लर्वास्तत्र हि श्लोकः प्रक्रियां तु ततो लघुः । वृथापत्रे वृथायासो दग्धपत्रे विनाशनम् ॥ ११०
यादन्तरितनिर्वाहपत्रे कार्यविसूत्रता । शीर्णपत्रे व्यय(यः) प्रोक्तः प्रनष्टलिपिके तु वा ॥ १११
थाक्षरे वृथायासः पुनरुक्ते विसंविदे । उपमाने तु कार्यं तत्सिध्यति वा न सिध्यति ॥ ११२
वेलम्बेनाथवा सिद्धिरस्पष्टे चाक्षरे पुनः । कार्यं संशयमाप्नोति निर्दिष्टदिवसेष्वपि ॥ ११३
प्रत्यहं निरीक्षेत पुराणशकुनं नृप । भुक्त्वोत्तिष्ठंस्तथा नैव निरीक्षेत पुराणकम् ॥ ११४
र्विस्य दिवसस्याथ रात्रौ पूजां विधाय च । प्रातःकाले परेद्युश्च शकुने रघुनन्दन ॥ ११५
श्चान्निरीक्षणं कार्यं सद्यःकालमथापि वा । प्रक्रियादिविशेषेण विशेषं शकुनं वदेत् ॥ ११६
ाुभकार्येषु सर्वेषु प्रेतश्राद्धादिवर्जनम् । दण्डप्रणयनं शापो देशानां च विपर्ययः ॥ ११७
क्षसां दुष्टसत्त्वानां शुद्धं प्राणि(ण)विहिंसनम् । दहनादेव निर्माणं वमनं करुणं हृदि ॥ ११८
ासो बीभत्सता दुःखदुःस्वप्नभ्रमपापकाः । पटादिपूर्णनं पीडा कलहो मरणं तथा ॥ ११९
क्रूराणामागमश्चापि महतां भयमेव च । एवमाद्यास्तथा चान्याः प्रक्रियास्तु विवर्जयेत् ॥ १२०
श्रियः प्राप्तिविचारे तु राजसृष्टिः सुखावहा । ग्रहाणामुदयो रोगशान्तिरप्यत्र शस्यते ॥ १२१
किमत्र बहुनोक्तेन तत्तद्योगं विचारयेत् । सर्वेषु च पुराणेषु स्कान्दमत्र प्रशस्यते ॥ १२२
वैष्णवं केचिदिच्छन्ति रामायणमथापरे । सत्यादिसर्वदोषाणां वैष्णवे नैव दोषता ॥ १२३
स्कान्दे रामायणे चैव दोषत्वमपि चाल्पता । किं तु पूजयितुं शक्यं वैष्णवं नैव केनचित् १२४
सदाचारविहीनेन पूजितं यदि चेद्भवेत् । तदाऽशुभमिवाऽऽयाति शकुनं नैव सिध्यति ॥ १२५
सर्वाचारसमोपेते शाखाबन्धे यथा नृपः ॥ १२६

सूत उवाच—

इत्थं शंभुद्विजेनाथ बोधितो राघवस्तदा । विभीषणपरीक्षायां शकुनायोपचक्रमे ॥ १२७
वसिष्ठं सर्वतत्त्वज्ञं पुराणेषु विशारदम् । बभाषे राघवो वाक्यं पुराणं वीक्ष्यतामिति ॥ १२८
वसिष्ठोऽप्याह रामं तं मुनेश्चामुष्य संनिधौ । वक्तुं निरीक्षितुं राम न शक्तिर्मम विद्यते ॥ १२९
शंभुं प्राह ततो रामो मुनिसंप्रेक्षिताननम् । भवन्तोऽपि हि तत्त्वज्ञाः पुराणेषु विशारदाः ॥१३०
तद्वदन्तु पुराणस्थं शकुनं मम कार्यतः । तथेति शंभुरुक्त्वा तु शुचिर्भूत्वाऽर्चकोऽभवत् ॥ १३१
स्कान्दमभ्यर्च्य विधिवत्प्रश्नं कृत्वेति तत्त्वतः । स किं शृङ्खलया बद्धो मम भक्तो विभीषणः ॥
अमी दृष्टास्तदा श्लोकास्त्रय आदेशकास्त्रिधा ॥ १३२

बद्ध्वा समुद्रं स तु राघवेन्द्रो रुरोध गुप्तां क्षणदाचरेन्द्रान् ।
योद्धुं समागत्य समाययुस्ते लङ्कापुरस्थास्त्वतिकायमुख्याः ॥ १३३

---

१ क. ञ. °ते रौरीरीरीरीरं रिरीरिरम् । २ ञ. परमार्थवित् । ३ झ. °यात्तु ल° । ४ ञ. °के तथा । मृ° । ५ ट. °नं रुदितस्तव । हा° । ख. ड. °नं वपनं हृदि । हा° । ६ ञ. °भमवाप्नोति । ७ ट. पुर्यो । ८ झ. ञ. °रक्ष्याप्यति° ।

अट्टशूला जनपदाः शिवशूला द्विजास्तथा । प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥१३४
एवं स्तुतो महेशस्तु देवताः प्राह वै शिवः । मोचयिष्ये भवत्पत्नीर्मल्लासुरनिरोधिताः ॥ १३५
श्लोकत्रयं निरीक्ष्याथ बन्धनिश्चयमुक्तवान् । मोचनं त्वरया राम भविष्यति न संशयः ॥ १३६
इति श्रुत्वा मुनेर्वाक्यं रामः समुनिवानरः । कर्तुं विनिर्ययौ शीघ्रं विभीषणगवेषणम् ॥ १३७
श्रीरङ्गनामनगरं त्वरया प्रविवेश ह । रामं ते पूजयामासुः पार्थिवास्तत्र ये स्थिताः ॥ १३८
पूजितस्तानुवाचाथ क्व स्थितोऽसौ विभीषणः । देव श्रीराम न वयं जानीमस्तु कथामिमाम् ॥
प्रेषयामास काकुत्स्थो वानरान्सर्वतोदिशम् । ततो गत्वा कपिवरा दृष्टवन्तो न वै बत ॥ १४०
अथ रामो मुनिं प्राह शंभुं पश्चाद्वदस्व मे । तथेति रामसहितो मुनिः शंभुर्द्विजान्वितः ॥ १४१
दर्शयेति तथैवेति विप्रघोषं जगाम सः । पृष्टास्तत्र द्विजास्तेऽपि दर्शयामासुरर्चिताः ॥ १४२
अन्तर्भूमिगृहे बद्धं राक्षसं बहुशृङ्खलैः । अथाऽऽह राघवो विप्राः किमनेन कृतं त्विति ॥ १४३
तैरुक्तं ब्रह्महत्येति वृद्धब्राह्मणसंज्ञितः । द्विजोऽतिधार्मिकः कश्चिदेकान्ते प्रवयाः कृशः ॥ १४४
ध्यानायोपवने तस्थौ तत्र गत्वा विभीषणः । पादेनाधर्षयद्विप्रं स विप्रोऽप्यतिचूर्णितः ॥ १४५
पदमेकमतो गन्तुं न शशाक विभीषणः । अस्माभिस्ताडितो दुष्टो न ममार वधैरपि ॥ १४६
अतो राम वधित्वैनं पापात्मानं वृषीभव । रामः संशयमापन्नो विप्रानिदमुवाच ह ॥ १४७

श्रीराम उवाच—

वरं ममैव मरणं मद्भक्तो हन्यते कथम् । राज्यमायुर्मया दत्तं तथैव स भविष्यति ॥ १४८
भृत्यापराधे सर्वत्र स्वामिनो दण्ड इष्यते । रामवाक्यं द्विजाः श्रुत्वा विस्मयादिदमब्रुवन् ॥१४९

द्विजा ऊचुः—

न *पट्ट(द)बद्धमरणं भो राम मुनिसंमतम् । वसिष्ठादिमुनीन्द्रैस्तैर्विचारं कुरु यद्धितम् ॥ १५०
रामपृष्टा मुनिवराः प्रायश्चित्तमथोचिरे । अज्ञानब्रह्महत्या तु प्रायश्चित्तैरपोह्यते ॥ १५१
इयमज्ञानतो हत्या प्रायश्चित्तमपेक्षते । गवां च त्रिशतं षष्टिं ददातु स विभीषणः ॥ १५२
बन्धकाश्चापि ते विप्रास्तथेत्यूचुः परस्परम् । मोचयिष्याम त(स्त)द्रक्षः प्रायश्चित्तं करोतु सः॥१५३
विमुच्य राक्षसं विप्रा राघवाय न्यवेदयन् । रामोऽपि नाभिभाषेत्तं प्रासङ्गिकमभाषत ॥ १५४
स्नात्वा पृष्ट्वा मुनीन्वृद्धान्प्रायश्चित्तमतः परम् । द्विजानुमतितः पापी मामुपैष्यतु राक्षसः ॥१५५
श्रुत्वेति राघववचो राक्षसः पापसंयुतः । प्रायश्चित्तमृषिप्रोक्तं कृत्वा राममथाभ्यगात् ॥ १५६
प्रायश्चित्तविशुद्धात्मा ननाम रघुनन्दनम् । रामस्तं प्रहसन्वाक्यमिदमाह सभान्तरे ॥ १५७

श्रीराम उवाच—

अद्यप्रभृति पौलस्त्य विमृश्य कुरु यद्धितम् । अस्माकं त्वत्कृते रक्षः प्रयासोऽयमभूद्यतः ॥ १५८
कृपालुर्भव सर्वत्र भृत्यो मम यतो भवान् । अथ ते मुनयः सर्वे निश्चितार्थे रघूत्तमे ॥
ऊचुरस्माकमज्ञानं कथं शीघ्रमुपागतम् ॥ १५९

श्रीशंभुरुवाच—

विप्रावज्ञानतो विप्रा अज्ञानं †ना समेष्यति ॥ १६०

---

* पदमिति क्वचित्पाठः । † नाशमेष्यतीति क्वचित्पाठः ।

ऋषय ऊचुः—

त्रेतायुगेऽभिरामोऽसौ पुराणानि च कृत्स्नशः । द्वापरान्ते भारतं च कथमेतद्धि युज्यते ॥ १६१

सूत उवाच—

पुराणानि तथाऽप्येवं सन्ति तन्नामकानि तु । व्यासेरितानि त्वद्यैव पुराणानि च नान्यथा ॥

अद्यापि च विधानं तत्पुराणश्रवणे फलम् । महाभारतमप्यत्र शकुनाय विशिष्यते ॥ १६३

आदिपर्वैकमभ्यर्च्य निरीक्षेत विनिश्चयम् । अथवा सर्वपर्वाणि प्रशस्तान्यर्थनिर्णये ॥ १६४

श्लोकादिलक्षणं सर्वं पूर्वोक्तं तदिहापि तु । श्लोकानामन्वयादेकस्तात्पर्यादथवाऽपरः ॥ १६५

अर्थः संप्रतिपद्येत तात्पर्यं तत्र गृह्यते । अर्थादेव हि सर्वत्र वस्त्वादेस्तु निरूपणम् ॥ १६६

यत्रार्थो दृश्यते तत्र स धातुः समुदाहृतः । अत्रार्थादेव शब्दानां *न मिथ्यैव निरूपणम् ॥

तस्मात्सर्वत्र तात्पर्यं ग्रहीतव्यं मनीषिभिः ॥ १६७

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे शततमोऽध्यायः ॥ १०० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७५१३

---

अथैकाधिकशततमोऽध्यायः ।

---

मुनय ऊचुः—

अतः परं महाभाग किं चकार स राघवः । मुनयस्ते महात्मानः किमकुर्वंस्ततः परम् ॥ १

सूत उवाच—

रामचन्द्रे सुखासीने विभीषणकपीश्वरे । शंभुमूचुर्मुनिवराः कथां पुण्यां वदस्व नः ॥ २

तेषामाकर्ण्य तद्वाक्यं पार्वतीमाह शंकरः । इदं कस्यापि विप्रस्य गृहं परमशोभनम् ॥ ३

रम्योपवनवापीभिर्वीरुद्भिरुपशोभितम् । कूजन्मधुकरश्रेण्या ह्याहूतकुसुमायुधम् ॥ ४

मध्याह्नसंध्यामारोढुमिव सूर्यः प्रवर्तते । गच्छ वापीजलस्नातौ परिधाय सुवाससी ॥ ५

मृगनाभिसमुद्घृष्टघनसारसुचन्दनम् । आलिप्य सल्लकीदामगूढधम्मिल्लसंयुतौ ॥ ६

अनल्पघनसारं तु ताम्बूलं प्रतिखादितम् । आस्वाद्य माद्यन्मुदितौ यत्र धारागृहे शुभे ॥ ७

मयूरनादबहुले बाहिर्मधुरगीतकैः । शय्यायामास्तृतायां च परस्परमु(सु)खस्थितौ ॥ ८

विशालस्मितरक्तौष्ठमाननं चुम्बितं यदि । संसारफलमाघ्रातमावयोस्तु भविष्यति ॥ ९

इतीरितमथ श्रुत्वा कुपिता मुनयस्तु तम् । उक्तं वा सुशुभं वाक्यमस्मासु किमिदं त्वया ॥ १०

+प्रबलायःप्रियाशक्तिः कृतो(?) नो मद्वचः कृतम् । अथ कोपपराच्छंभोराननात्परमाद्भुता ११

ज्वाला विनिर्गता साऽपि करालवदनाऽभवत् । कस्यचित्तु मुनेर्भार्यामाससादाथ सत्वरम् ॥ १२

पलायनपरा चाऽऽसीद्रामं दृष्ट्वा च बिभ्यती । रामोऽपि ब्राह्मणीं शुद्धां मोचयामीत्यभाषत॥ १३

जगाम पुष्पकेणैव ब्रुवन्मुक्तिं पुनः पुनः । बाणं च धनुषा योक्तुं न च सस्मार राघवः ॥ १४

शंभुरप्यतिपुण्यानि वनान्यायतनानि च । पुराणि च विचित्राणि दृष्ट्वा रामं न चास्मरत् ॥ १५

क्षणेन च तदा प्राप्तो लोकालोकं महागिरिम् । दृष्ट्वाऽथ राघवः शैलं गृहमार्गसमाकुलम् ॥ १६

---

* निर्मथ्येति क्वचित्पाठः । + प्रबला यत्र या शक्तिरिति क्वचित्पाठः ।

---

१ अ. पूज्यते । २ अ. श्रुत्वा ।

विप्रयोषिन्महाभागाः क गता वदत द्विजाः । इतो गतेति ते प्रोचुस्तमोभागं गिरेरिति ॥ १७
रामो विवर्णवदनः कष्टमित्यभिचिन्तयन् । अथ शंभुर्महातेजाः प्रकाशमतुलं ददौ ॥ १८
तत्प्रकाशप्रभावेन रामः कृत्वां ययावनु । तमोमयी महाभूमिः सर्वजन्तुविवर्जिता ॥ १९
आब्रह्माण्डकटाहान्ता शतयोजनकोटितः । महारजतभूमिश्च तमोमध्ये व्यवस्थिता ॥ २०
तत्र नारायणपुरं सूर्यकोटिसमप्रभम् । सराममुनिवर्यास्तु तं दृष्ट्वा विस्मयं ययुः ॥ २१
किमेतदिति चाऽऽचिन्त्य नः प्रवेशः कथं भवेत् । किमेष प्रलयाग्निः स्यान्मायया परमात्मनः २२
किं वा नो मरणं त्वद्य उत श्रेयो भविष्यति । इति चिन्ताकुलेष्वेव सरामेषु मुनिष्वथ ॥ २३
शंभुराह शृणुष्वाद्य राघवैतद्वदामि ते । प्रकल्पिता मया माया न कृत्या चैतदद्भुतम् ॥ २४
नारायणीयमेतत्तु परमं धाम भास्वतम् । उष्णशीताद्यविच्छेद्यं ज्ञानगम्यं न चाक्षुषम् ॥ २५
तत्तु पूजयतश्चोर्ध्वे पश्य ब्रह्मपुरोगमान् । दिक्षु सर्वासु च मुनीन्पश्य पूजयतोऽमलान् ॥ २६
चतुरः पश्य वेदांस्तु स्तुवतः परमं पदम् । योगिनः सनकाद्यास्तु योगमास्थाय यत्नतः ॥ २७
ध्यायन्ति परमं तेजस्तदिदं पश्य राघव । अमुं च रोमशं पश्य प्रदक्षिणनमस्क्रियाः ॥ २८
कुर्वाणं कोटिकोटीश्च वालखिल्यान्मुनीश्वरान् । लक्ष्म्यादिसर्ववनितापूज्यमानं परं पदम् ॥ २९
साकारं च निराकारं ब्रह्म यत्परिकीर्तितम् । अज्ञानिनो न पश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ ३०
शंभुवाक्यादतः सर्वे पूजयामासुरच्युतम् । गिरिकर्णी च तुलसीं शल्लकं मारुतं तथा ॥ ३१
नीलोत्पलैरम्बुजैश्च कृष्णास्फुटजलैरपि । पूजयन्तो महात्मानो महात्मानं जनार्दनम् ॥ ३२
नारदं खेऽथ ददृशुर्जटिलं सविपञ्चिकम् । नारायणपदाघोषं लम्बकूर्चोपवीतिनम् ॥ ३३
स चापि मनसा दध्यौ क एष इति नारदः । संप्राप्तः प्रभोः पादे शंभोरानन्दनिर्भरे ॥ ३४
शैवीं पञ्चाक्षरीं विद्यां जजाप मनसा मुनिः । धन्योऽस्म्यनुगृहीतोऽस्मि जन्माद्य सफलं मम ॥ ३५
ब्रह्मादिवन्द्यं चागम्यं ज्ञातवानास्मि ते पदम् । नारदं तमथ प्राह शंभुर्मैवं वदेति हि ॥ ३६
यथा च मां न जानन्ति तथा मे कुरु वर्तनम् । गच्छ शीघ्रं हरिं ब्रूहि ममाऽऽगमनमल्पतः ॥ ३७
अथ स त्वरया गत्वा सर्वं वाऽऽज्ञापयद्धरिम् । अथ स त्वरया विष्णुरादायार्घोदकं शुभम् ३८
कमलासहितो योगी(गि)कोटिकोटिसमावृतः । निर्ययौ नारदं हस्ते गृहीत्वा गरुडध्वजः ॥ ३९
नमो नमो नमोऽस्त्वस्मै शंकरायेत्युदीरयन् । अर्घपाद्यादिना सर्वान्पूजयामास केशवः ॥ ४०
प्रावेशयदमेयात्मा नारायणपुरं शुभम् । गृहराजे ततः स्थित्वा नारायण उवाच ह ॥ ४१

नारायण उवाच—

कथमेते समायाताः कोऽयं राजा महायशाः । अमानुषप्रवे(दे)शोऽयं ब्रह्मादेरप्यगोचरः ॥ ४२

शंभुरुवाच—

मुनिवेषा यथा प्राप्ता वयमेते नृपस्तथा । तवांशो नृपतिश्चायं रामचन्द्रः प्रतापवान् ॥ ४३
एनां संवीक्षितुं पत्नीं तव केशव का क्षतिः । नारायणस्तथेत्युक्त्वा प्रविशेत्याह राघवम् ॥ ४४
अथ प्रविश्य भवनं लक्ष्मीं वीक्ष्य नमस्य च । विनयावनतो भूत्वा वाक्यमाह सुचारिणीम् ४५

श्रीराम उवाच—

कृतार्थोऽस्मि न संदेहो वद त्वं किं तु मन्यसे ॥ ४६

---

१ क. शीघ्रतरं ब्रू° । २ ट. लक्ष्मीं । ३ म. °क्ष्य सनातनीम् । वि° ।

श्रीदेव्युवाच—

त्वं युवा कामकृष्टश्च रूपवानसि राघव । सीता सा चारुसर्वाङ्गी तव पत्नी तया भवान् ॥ ४७
वियुक्तोऽसि पुरा वाऽऽसीदतीव विरहाकुलः । ममापि वद सर्वं तदथवा न च लेप्स्यसि[1] ॥४८
सहासान्यथ वाक्यानि यूनां चित्तहराणि च । श्रुत्वा तु तानि सर्वाणि रामभद्रो यतात्मवान् ४९
निर्गन्तुं काङ्क्षते तत्र त्वानम्य तन्मुखाम्बुजम् । स्मरबाणेन पद्मेन संपीड्य रघुशेखरम् ॥ ५०
अन्वेव निर्ययौ देवी पद्मा पद्मवनप्रिया । एकपत्नीव्रतं ज्ञात्वा रामं ते समुपागमन् ॥ ५१
अथ वेपितसर्वाङ्गं स्खलत्पदगतिं नृपम् । शिवनारायणौ दृष्ट्वा विस्मयं परमं गतौ ॥ ५२
अहोऽस्य द्रढिमा चित्ते मायिनोऽप्यवशात्मनः । धैर्यं पश्येह नियतं तेन रामः सुकीर्तिमान् ॥ ५३
सर्वतः शिवमेवास्य नाशिवं विद्यते क्वचित् । अथ रामो वचः प्राह गच्छेऽहं भगवन्प्रभो ॥ ५४
अनुज्ञातोऽथ हरिणा पुष्पकेण स राघवः । समुनिः सहशंभुश्च सहनारायणो ययौ ॥ ५५
लोकालोकं गतः शीघ्रं ततः स्वादूदधिं गतः । ततो द्वीपसमुद्रांश्च जम्बूद्वीपं पुनर्गतः ॥ ५६
भरद्वाजाश्रमपदे तस्थिवान्गौतमीतटे । अथ स्नात्वा महानद्यां भरद्वाजो मुनीश्वरः ॥ ५७
शिष्यैः परिवृतः श्रीमान्पुष्पकं दृष्टवान्मुनिः । तत्र रामं महाबाहुं शिवनारायणावृषीन् ॥ ५८
यथावत्पूजयित्वा तु तानुवाच महामुनिः । ममाऽऽश्रमपदे यूयं भोक्तुमर्हथ सत्तमाः ॥ ५९
रामस्तु मुनिवाक्येन तथेत्याह कथंचन । अथ स्नात्वा महानद्यां कृत्वा देवादितर्पणम् ॥ ६०
भोक्तुकामं तथा रामं वसिष्ठो वाक्यमुक्तवान् । धर्मत्यागो भवेद्राम न श्राद्धं क्रियते यदि ॥ ६१

राम उवाच—

अमायां ग्रहणे तीर्थे व्यतीपाते च संक्रमे । व्यतीतं यदि चेच्छ्राद्धं भगवन्क्रियते पुनः ॥ ६२
नित्यश्राद्धं पुनर्नैव कुर्यादिति वचस्तव । यथा ममैव मातॄणां मरणे समुपस्थिते ॥ ६३
आशौचे च समायाते नित्यश्राद्धं न वै कृतम् । व्यतीपातादिकालेषु कृतं तु वचनात्तव ॥ ६४

वसिष्ठ उवाच—

एते हि मुनयः सर्वे तथा शंभुरयं द्विजः । एतन्मुखादशेषेण निर्णयस्तु भविष्यति ॥ ६५
सह सर्वे विनिश्चित्य मुनयः शंभुमब्रुवन् । वदास्माकमशेषं त्वं द्विजवर्य महानसि ॥ ६६

शंभुरुवाच—

त्यक्तव्यं यच्च वै श्राद्धं पुनः कार्यमथैव च । सूतके समनुप्राप्ते विघ्नेषु च वदाम्यहम् ॥ ६७
मासिकान्युदकुम्भानि श्राद्धानि प्रसवेषु च । प्रतिसंवत्सरं श्राद्धं सूतकानन्तरं विदुः ॥ ६८
त्यक्तान्यन्यानि यावन्ति सूतके विघ्नसंभवे । अनन्तरं हि कार्याणि सर्वाणि च न संशयः ॥ ६९
मासिकानि समस्तानि श्राद्धं प्रत्याब्दिकं तथा । सूतकानन्तरं कार्यं विघ्नेऽन्यस्मिन्यतोऽन्यथा ७०
एकादश्यां कृष्णपक्षे कर्तव्यं शुभमिच्छता । तत्र व्यतिक्रमे हेतावमायां क्रियते तु तत् ॥ ७१
यथोत्तरदिनेष्वेव कर्तव्यं यद्यविघ्नतः । कृष्णपक्षे त्वमायां तु कर्तव्यं राम नो कृतम् ॥ ७२
मृताहस्य यदा मासो न ज्ञायेत कथंचन । मार्गशीर्षेऽथवा माघे श्राद्धं तद्दिवसे स्मृतम् ॥ ७३
यदा तु वासराज्ञानं मासज्ञानमथैव च । अमायामेव तन्मासे श्राद्धं सांवत्सरं भवेत् ॥ ७४

---

१ अ. लिप्स्यसि । २ ङ. °सि । साहसा° । ३ ट. सदा । ४ ट. °णोऽव्ययः । लो° । ५ झ. ञ. °द्यां भरद्वाजो मुनीश्वरः । भो° । ६ झ. अ. यदि वि° । ७ झ. मासाज्ञा° ।

दिनमासापरिज्ञाने प्रोषितस्य मृतस्य च । तत्तिथ्यां तद्दिनं ग्राह्यं [*तत्राज्ञानं यदा भवेत् ॥ ७५
आश्विनामा च मार्गामा माघामा च दिनत्रयम् । तत्र वाऽन्यतमं ग्राह्यं] दिनमासाप्रतीतितः ॥ ७६
वृद्धीयं+ सेवैस्यमंत(?)प्रेतश्राद्धानुमासिकम् । नित्योदकुम्भश्राद्धं च मासे स्युरधिकेऽपि च ॥ ७७
ग्रहणे पुत्रजन्मादौ कर्मण्यपि च शान्तिके । संकल्पिते च सर्वस्मिन्नधिमासे(सो) न दुष्यति ७८
रोगी यदा मनुष्यः स्याच्छ्राद्धकर्मण्युपस्थिते । भार्यां वा भ्रातरं वाऽपि शिष्यं चापि नियोजयेत् ॥
तस्य भावे न हानिः स्यात्कर्मणः श्राद्धसंज्ञिनः । नित्यश्राद्धे यथाशक्ति भोक्तारं तु नियोजयेत् ॥
अमावास्यामासिकं च मृताहव्यतिरेकतः । स्वयं कर्मण्यशक्तश्चेत्सुतं विप्रं नियोजयेत् ॥ ८१
राजकार्येण युक्तस्य दास(स्य)ग्रहणवर्तिनः । व्यसनेषु समस्तेषु श्राद्धं विप्रेण कारयेत् ॥ ८२
प्रातःकाले तु न श्राद्धं प्रकुर्वन्ति द्विजोत्तमाः । नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः ८३
गृहादिव्यतिरिक्तस्य प्रक्रमः कुतपः स्मृतः । कुतपादथवाऽप्यर्वागासन्नकुतपो भवेत् ॥ ८४
मासे मासे यथा श्राद्धेऽपराह्णस्पृग्विधीयते । अपराह्णव्यापिनी स्यादुभयत्र यदा त्वमा ॥ ८५
क्षये पूर्वा तु कर्तव्या वृद्धौ साम्ये परा स्मृता । अमावास्या तु या हि स्यादपराह्णद्वये समा ॥ ८६
क्षये पूर्वा परा वृद्धे साम्येऽपि च परा भवेत् । क्षीणस्तु चन्द्रमा यत्र तत्र श्राद्धं तु पार्वणम् ॥ ८७
अमाष्टभागे सूक्ष्मोऽसौ भूताष्टांशे स नास्ति चेत् । मध्याह्नव्यापिनी या स्यादेकोद्दिष्टे तिथिर्भवेत्
सायाह्नव्यापिनी या स्यात्पार्वणे सा तिथिर्भवेत् । अल्पापराह्णगा याऽमा ग्राह्या श्राद्धादिके भवेत्
मृताहे त्रिमुहूर्ता च सायंकाले तिथिर्भवेत् । परे ह्यस्तं गता यत्र त्रिमुहूर्ते तु पूर्ववत् ॥ ९०
तत्रापरेद्युः श्राद्धं स्याज्ज्येष्ठपुत्रस्य नाशनम् । अमाश्राद्धं यथा कुर्यान्मृताहे समुपस्थिते ॥
मध्याह्नव्यापिनी तत्र ह्यद्विजस्य विधीयते ॥ ९१

श्रीराम उवाच—

श्राद्धक्रममशेषेण मर्त्यकर्मक्रमं तथा । प्रासङ्गिकानां धर्माणां निर्णयं वक्तुमर्हसि ॥ ९२

शंभुरुवाच—

श्राद्धस्य दिवसे प्राप्ते पूर्वेद्युर्नियमान्वितः । न्य(नि)मन्त्रयीत विप्रेन्द्रान्विप्रलक्षणसंयुतान् ॥ ९३
एकभुक्तं ब्रह्मचर्यमन्त्यजाद्यैरभाषणम् । दन्तधावनमभ्यङ्गनखकेशनिकृन्तनम् ॥ ९४
कर्ता कुर्वीत पूर्वेद्युस्त्यक्त्वा चैव परेऽहनि । गृह्णीत नियमानुक्तान्सर्वमेतत्परित्यजेत् ॥ ९५
त्रिकालं चैव पूजा चेत्प्रातर्देवं यजेत्स्वकम् । अरुणोदयवेलायां करोति यदि पूजनम् ॥ ९६
अधःशायी तथाभूतः प्रातरुत्थाय कर्मवित् । प्रातस्त्यमपि यत्कर्म तत्कृत्वा स्नानपूर्वकम् । ९७
ऋणत्रयविनिर्मुक्तो यास्यति ब्रह्म तत्परम् । सूर्यस्योदयवेलायां शिवपूजां करोति यः ॥ ९८
सूर्येण समतेजस्वी शिवलोके महीयते । उदिते भास्करे पश्चाद्घटिकान्तरपूजनम् ॥ ९९
रुद्रेण समतेजस्वी शिवलोके महीयते । द्वितीयघटिकायां तु यदि पूजनमीशितुः ॥ १००
वायुना समतेजस्वी शिवलोके महीयते । तृतीयघटिकायां तु शिवपूजां समाचरेत् ॥ १०१
कुबेरसमतेजस्वी शिवलोके महीयते । चतुर्थीपञ्चमीषष्ठीसप्तमीघटिकासु यः ॥ १०२

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. झ. ट. ड. पुस्तकस्थः । + सवश्यं मन्तेति क्वचित्पाठः ।

१ झ. °त्तिथिर्वा दिनं । अ. °त्तिथौ त° । २ अ. सव्यसंमं । ३ घ. °वस्यं मं° । ४ झ. अ. सर्वेऽस्मि° । ५ अ. तस्यामा° । ६ अ. °रेकि यत् । स्व° । ७ झ. दार्थप्र° । ८ ख. °ले यदा भवे° । ९ झ अ. एकभक्तं । १० अ. °यां करोति यदि पूजनम् । सू° । ११ ट. कुमार° ।

शिवं पूजयते भक्त्या शिवलोके महीयते¹ । तत्काल एव क्रियते पूजा यत्कालचोदिता ॥ १०३
यथाप्रतिज्ञमथ वा गृहीतनियमो यजेत् । उपचारेषु² शक्त्या वै नियमं परिपालयेत् ॥
नियमातिक्रमे वाऽपि योगश्च³ स्याद्विभो यदि ॥ १०४

राम उवाच—

क्व पूजा देवदेवस्य शंकरस्यामितौजसः । स्मरणात्पापनाशस्य स्मरणान्मोक्षदस्य च ॥ १०५
शिवस्य शिवरूपस्य शिवतत्त्वार्थवेदिनः । सोमस्य सोमभूपस्य सोमनेत्रस्य राजिसु(तुः) ॥ १०६
वेदमूर्तेरमूर्तेश्च वेदसारस्य वेदिनः । वेदवेदाङ्गविज्ञस्य वेद्यावेद्यस्य योगिनः ॥ १०७
गोक्षीरसमदेहस्य गोक्षीरस्नानमोदिनः । गोपत्रिणस्त्रिनेत्रस्यै⁴ त्रयीनेत्रस्य मायिनः ॥ १०८
प्रश्नमध्ये तथा रामं शिवज्ञानमथाऽऽविशत् । स्थाणुभूत इवाऽऽसीनो नासाग्रन्यस्तलोचनः १०९

आनन्दनिष्यन्दविलोचनाश्रुप्रवाहसंस्पृष्टकपोलदेशः ।
दधार देवं गिरिशं हृदम्बुजे गोक्षीरसुस्निग्धसुचारुगात्रम् ॥ ११०

प्रतिबिम्बमथो गात्रे रामस्य समदृश्यत । दृष्ट्वैव बिम्बितं शंभुं चतुर्बाहुं त्रिलोचनम् ॥ १११
विस्मयं परमं याताः सर्वे मुनिहरीश्वराः । शंभोर्वक्षःस्थितं रामं दृष्ट्वा दीप्ताकृतिं शुभम् ॥ ११२
तूष्णीं बभूवुर्यामार्धमथ राम उदैक्षत । स्वप्रश्नमनुसंधाय प्राह सर्वं वदेति च ॥ ११३

शंभुरुवाच—

अचले या सदा पूजा चले वाऽपि यथेच्छया । लिङ्गे संपूजनं मुख्यमलाभे प्रतिमादिषु ॥ ११४
अधिकारविशेषेण तत्र तत्रापि पूजनम् । विगुणं सगुणं वाऽपि सफलं लिङ्गपूजनम् ॥ ११५
प्रतिमादिकृता पूजा विगुणा सफला न हि । अचले वा चले वाऽपि पूजा लिङ्गे प्रशस्यते ११६
चलस्य पूजनं वक्ष्ये स्थापनोद्वासने तथा । ते उभे न विजानाति कश्चिन्मुनिरपि क्वचित् ॥ ११७
स्थापयन्ति हृदब्जे वै गोपयन्ति यजन्ति च । उद्वासयन्ति देवेशं शंकरं योगिनः⁵ सदा ॥ ११८
क्रिया चातीव होतॄणां वह्नौ देवं त्रियम्बकम् । पूजकानामशेषाणां शिवलिङ्गे महेश्वरम् ॥ ११९
लिङ्गस्य स्थापनं पूजाऽप्युद्वासनमथैव च । धारणं शंकरस्यैव लिङ्गमेव महेश्वरम् ॥ १२०
सज्जिकं⁶ परमोत्कृष्टं स्वर्णे चैव विनिर्मितम् । राजतैर्वा दलैः कार्यं राजतैर्वैणवैस्तु या(तथा) १२१
लतासूत्रैरथो वाऽपि रचितं दारुणाऽथवा । वस्त्रेण वाऽथ रचितं मृदा⁷ विरचितं भवेत् ॥ १२२
तत्र संवेष्ट्य वस्त्रेण सुगन्धेन समन्विते । धौतवस्त्रयुगे शुद्धे भद्रासनसमन्विते ॥ १२३
शीतोष्णरहिते पादचतुष्टयसमन्विते । प्रावृत्तिच्छेदनोपेते क्रिमिकीटविवर्जिते ॥ १२४
धौतेन मृदुवस्त्रेण सर्वतो वेष्ट्य तं शिवम् । विन्यस्य सज्जिकामध्ये प्रवृत्य च पुनर्विभुम् ॥ १२५
एषा हि सज्जिका राम देवस्याग्रेऽति कीर्तिता । तस्य च स्थापनं पाठो रहस्ये च महेशितुः ॥ १२६
अथवा भित्तिमूले स्याद्देववेद्यामथापि वा । सुरक्षिते तथा देशे रक्षकं च नियोजयेत् ॥ १२७
प्राणादेवाविनाभावं कुर्वीत नियमैः सह । एतद्धि राजसं प्रोक्तं स्थापनं परमात्मनः ॥ १२८
सात्त्विकं स्वसमीपस्थं धारणं तामसं पुनः । धारणं गात्रसंस्पर्शमथवा⁸ देहगोपनम् ॥ १२९
मस्तके धारणं मुख्यं ब्रह्मणा च तथा कृतम् । विन्यस्य मुकुटस्यान्ते धारणं शुभमुच्यते ॥ १३०
ललाटे धारणं शस्तं यथा लक्ष्म्या धृतं शुभम् । बाणेन च धृतं मूर्ध्नि दक्षिणोरसि वा पुनः ॥ १३१

---

१ ट. महीयते । २ ख. °पवासेषु । ३ अ. योगश्च । ४ ट. °स्य शुद्धने° । ५ अ. योगिनं । ६ अ. सांज्ञिकं । ७ अ. °दे मृद्दा° । ८ अ. °नर्भवम् । ९ अ. °मर्थकं दे° ।

कर्णे च हरिकर्णेन मुनिना परमर्षिणा । विनिर्भिद्य तथा गात्रं लोहस्थानं प्रकल्प्य च ॥ १३२
धारयन्ति तथा लिङ्गं राक्षसाः केचिदुत्तमाः। अनिकेतनमर्त्यानामशक्तानां शिरोदति(धृतिः)१३३
अधमाधममाख्यातं नीवीबन्धादिधारणम् । तेषु तूच्छिष्टसंप्राप्तौ मस्तके धारणं भवेत् ॥ १३४
अधमाधमवृत्तीनां सदा वै लिङ्गधारणम् । पापिनामपि चाऽऽश्चर्यं यमलोको न विद्यते ॥ १३५

श्रीराम उवाच—

चित्रगुप्तेन लिखिता ललाटे या लिपिर्दृढा । तया लिप्या तु नियतं नरकं कथमन्यथा ॥ १३६
करोति पूजनं शंभोः पापं नाशयते कथम् ॥ १३७

शंभुरुवाच—

पापं नाशयते कृत्स्नमपि जन्मशतार्जितम् । भस्मैनात्सर्वपापानां स्मरणाच्च महेशितुः ॥ १३८
भस्मेतीदृशमाख्यातं तस्य धारणमुत्तमे । यथाविधि ललाटे वै वह्निवीर्यप्रधारणात् ॥ १३९
नाशयेल्लिखितां यामीं पटस्थामिव हव्यभुक् । कर्णोपरि कृतं पापं नष्टं स्यान्मुखधारणात् ॥ १४०
कण्ठे च धारणात्कण्ठभोगादिकृतपातकम् । बाह्वोर्बाहुकृतं पापं वक्षसि मनसा कृतम् ॥ १४१
नाभ्यां शिश्नकृतं पापं पृष्ठे गुदकृतं तथा । पार्श्वयोर्धारणाद्राम परस्त्र्यालिङ्गनादिजम् ॥ १४२
तद्भस्मधारणं शस्तं सर्वत्रैव त्रिपुण्ड्रकम् । ब्रह्मविष्णुमहेशानां त्र्यग्नीनां च धारणम् ॥ १४३
गुप्त्यै लोकत्रयाणां च धारणं तेन वै कृतम् । धृतं पञ्चदशस्थाने शुद्धं भस्माभिमन्त्रितम् ॥ १४४
कोष्ठयुग्मे बाहुयुग्मे कोष्ठोपरि युगे तथा । धारणं सर्वदेहानां पूजायै धर्मसंमतम् ॥ १४५
भस्माशना भस्मशय्या भस्मोद्धूलितविग्रहाः । भस्मस्नानाः सदा पापैर्मुच्यन्ते नात्र संशयः ॥१४६
आदौ ब्राह्मणदीक्षायां त्रियायुषमिति स्मृतम् । प्रसवे च मनुष्याणां भूतावेशेऽपि रक्षकम् ॥ १४७
सर्पादिविषहान्यर्थं सर्वेषां साधनं त्विदम् । अपि वा वैष्णवो मर्त्य अपि वाऽपीतरो जनः ॥ १४८
भस्मस्नायी भस्मयुक्तः कर्मस्वधिकरोति वै ॥ १४९

राम उवाच—

भस्ममाहात्म्यमादौ मे भस्माऽऽयुष्यं हि कस्य वै । कथं हि रक्षते ह्येतत्सर्वमेतद्वदस्व मे ॥ १५०

शंभुरुवाच—

आयुष्यवर्धने हेतुस्त्रिविधस्यापि देहिनः । पापघ्नं शीतमुष्णं च स्पर्शाच्छिवपदप्रदम् ॥ १५१
तत्र ते कीर्तयिष्यामि चेतिहासं पुरातनम् । आसीद्वासिष्ठवंशस्तु धनंजय इति द्विजः ॥ १५२
तस्य भार्याशतं चाऽऽसीद्रूपलावण्यसंयुतम् । तासामेका तु सुषुवे शाभाका करुणं मुनिम् १५३
भार्याणां संख्यया राम सुताश्चाऽऽसंस्तपस्विनः । तेषां विभागः पित्रा च विषयः परिकल्पितः ॥
भ्रातॄणां च तथा ह्येव वैरबन्धो महानभूत् । ज्ञातित्वे चैकनाशित्वे वैरं नियतमेव तु ॥ १५५
अथासौ करुणो गत्वा भवनाशिनिकातटे । नानामुनिगणैः सार्धं नरसिंहदिदृक्षया ॥ १५६
नृसिंहदर्शनार्थं तु ब्राह्मणेन च केनचित् । उत्कृष्टफलजम्बीरमानीतं गन्धरूपवत् ॥ १५७
करुणस्तु तदादाय आजिघ्रत्फलमुत्तमम् । तत्र स्थिता द्विजगणाः शापेन तमयोजयन् ॥ १५८
मक्षिका भव पापात्मन्वर्षाणां शतमप्यतः । शापावसानं भविता दधीचेन महात्मना ॥ १५९
अथ मक्षिकतां प्राप्तो भार्यामिदमभाषत । मक्षिकात्वमहं प्राप्तो मां शुभे पालयस्व भोः ॥ १६०
इत्युक्त्वा स तथाभूतो बभ्राम च ततस्ततः । अथैवं विधमाज्ञाय ज्ञातयः पापनिश्चयाः ॥ १६१

१ म. रोदिति । २ छ. ड. शल्यका । म. ड. शामाका ।

तद्वधे यत्नमास्थाय तैलमध्ये ह्यपातयन् । मृतं पतिमथाऽऽदाय दुःखिता सा कृशोदरी ॥ १६२
तद्दुःखशमनार्थाय प्राह देवी त्वरुन्धती । अमुं संजीवयाम्यद्य भस्मनैव शुचिस्मिते ॥ १६३
अथाग्निहोत्रजं भस्म अरुन्धत्यै न्यवेदयत् । मृत्युंजयेन मन्त्रेण मृतजन्तौ तथाऽक्षिपत् ॥ १६४
मन्दवायुस्तदा जज्ञे व्यजनेन शुचिस्मिता । [*उदतिष्ठत्ततो जन्तुर्भस्मनोऽस्य प्रभावतः ॥ १६५
ततो वर्षशते पूर्णे ज्ञातिरेको ह्यमारयत् । मृते भर्तरि सा साध्वी दुःखिता च शुचिस्मिता] १६६
दधीचं नाम विप्रेन्द्रं महामाहेश्वरं मुनिम् । जगाम शरणं साध्वी मुनिः स ह तपोधनः ॥ १६७
त्रियायुषा विहीनं तु जमदग्निं तपोनिधिम् । भस्मैव जीवयामास कश्यपं च तथाविधम् ॥ १६८
देवानपि तथाभूतान्मामप्येतादृशं पुरा । तस्मात्तु भस्मना जन्तुं जीवयामि तवानघे ॥ १६९
इत्येवमुक्त्वा भगवान्दधीचो महेश्वरं वै शरणं जगाम ।
भस्माभिमन्त्र्याथ करे गृहीत्वा संजीवयामास धवं सुसाध्व्याः ॥ १७०
माहेशस्य करस्पर्शाद्विशापः करुणोऽभवत् । स्वरूपं च ततो गत्वा स्वमाश्रमपदं ययौ ॥ १७१
दधीचमपि सा साध्वी गृहमानीय भोजने । प्रार्थयामास विप्रर्षिमुक्तवानथ स द्विजः ॥ १७२
भुक्तवत्यथ विप्रेन्द्रे कोटिशिष्याः समागताः । अथ देवाः समायाता भस्मोद्धूलितविग्रहाः
नमस्कृत्वा दधीचं तु पप्रच्छुः शिवकाङ्क्षया ॥ १७३

देवा ऊचुः—

अस्माकं तु पुराज्ञानं नष्टमासीन्महामते । गौतमस्य च भार्यां वै दृष्ट्वा कामातुरा वयम् ॥ १७४
†तथा च धर्षिता देवी विवाहकृतमङ्गला । तां वै कामयमानानां नष्टं ज्ञानमभूच्च नः ॥ १७५
ततः सर्वे वयं भीता गता दुर्वाससं मुनिम् । स उवाचाधुना सर्वमपनेष्यामि वो मलम् ॥ १७६
शतरुद्रीयमन्त्रेण मन्त्रितं शंभुना स्वयम् । ममापि दत्तं तेनैव ब्रह्महत्यादिशान्तये ॥ १७७
इत्येवमुक्त्वा दुर्वासा दत्तवान्भस्म चोत्तमम् । अथ तद्वचनात्सर्वे वयं वैकृतचेतनाः ॥
शतरुद्रीयमन्त्रेण भस्मोद्धूलितविग्रहाः ॥ १७८
निर्धूतपातकाः सर्वे तत्क्षणाच्चैव हे मुने । आश्चर्यमेतज्जानीमो भस्मसामर्थ्यमीदृशम् ॥ १७९

दधीच उवाच—

शैवस्य भस्मनः शक्तिं संक्षेपेण वदामि वः । विस्तरेण न शक्यं वै वक्तुं वर्षशतैरपि ॥ १८०
अत्र वः कीर्तयिष्यामि पुरावृत्तं तु देवयोः । हरिशंकरयोः सर्वं ब्रह्महत्यादिनाशनम् ॥ १८१
पुरा चैकार्णवे घोरे ब्रह्मणः प्रलये सति । महाविष्णुस्तु भगवाञ्शयितो वै महाम्भसि ॥ १८२
तस्य पार्श्वद्वयं प्राप्य(प्तं) ब्रह्माण्डानां शतद्वयम् । विंशतिः पादयोः पार्श्वे विंशतिर्मस्तकान्तरे ॥
नासामौक्तिकभावेन ब्रह्माण्डमदधात्प्रभुः । तन्नाभिमण्डले केचिल्लोमशाद्या मुनीश्वराः ॥ १८४
तपस्तपन्तः सुमहदीश्वरं पर्युपासते । अथ विष्णुर्महातेजाश्चिन्तामाप सिसृक्षया ॥ १८५
ध्यानयोगपरो भूत्वा न किंचित्पर्यपश्यत । अथ दुःखेन महता रुरोदोच्चैः पुनः पुनः ॥ १८६
एतस्मिन्नन्तरे दीप्तिः काचिल्लोकविलक्षणा । दृष्ट्वा च हरिणा भीत्या लोचने च निमीलिते १८७
आगम्यमानो गोक्षीरसमतेजाः सुगात्रवान् । संग्रथ्य कोटिब्रह्माण्डदामयुग्मं करद्वये ॥ १८८

---

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. ञ. ट. ड. पुस्तकस्थः । † अ. पुस्तकातिरिक्तपुस्तकेषु तथा नेति पाठः ।

---

१ अ. मुनिराह । २ अ. °वमम्बिकाम् ।

दधानमुरसा धाम कोटिब्रह्माण्डकल्पितम् । ब्रह्माण्डमेकं न्यपतदुत्पतच्च करद्वये ॥ १८९
सर्वाभरणसंयुक्तं तथाभूतं तमव्ययम् । विष्णुस्तुष्टाव चादृष्ट्वा दर्शनाय च तस्य वै ॥ १९०

विष्णुरुवाच—

नमस्ते देवदेवेश नमस्ते शाश्वताव्यय । न जानेऽहं भवन्तं भोस्त्वं च वेत्सि नमो नमः ॥ १९१
जानामि न च ते भावं दुर्निरीक्ष्या च ते द्युतिः । माणिक्यकुण्डलं हेमदामजालविभूषितम् १९२
रत्नाङ्गुलीयं सुभगं बाहुकोष्ठसुभूषणम् । तनुरक्तोत्त(ष्ठ)माकर्णदीर्घायतविलोचनम् ॥ १९३
बाणलोचनसंकाशं भाललोचनमव्ययम् । कंदर्पकार्मुकभ्रान्तिजनकभ्रुवमीश्वरम् ॥ १९४
स्निग्धोन्नतसुचार्वङ्गनासमच्छकपोलकम् । मन्दस्मितं प्रसन्नास्यं बालेन्दुदर्शनं विभुम् ॥ १९५
विज्ञानरक्तवसनं वेदकल्पितभूषणम् । शरणं त्वां प्रपन्नोऽस्मि चक्षुर्मे दीयतां विभो ॥ १९६
दीनान्धकृपणाज्ञाननष्टस्य शरणं भव । अथ दिव्यं ददौ चक्षुः स्वात्मदर्शनशक्तिमत् ॥ १९७
अथ दृष्ट्वा हरिः शंभुं त्रिनेत्रं पुरतः स्थितम् । को भवानित्युवाचाथ न जाने त्वां महायशाः ॥
प्रणामं केवलं कर्तुं शक्तोऽस्मि न हि वेदितुम् ॥ १९९

सदाशिव उवाच—

तव ज्ञानं प्रदास्यामि कुरु स्नानं च वारुणम् । भस्मस्नानं ततः पश्चात्ततो ज्ञानं ददामि ते २००

भगवानुवाच—

मत्स्नानयोग्यं सलिलं न च तिष्ठति कुत्रचित् । इत्युक्तोऽथ निषण्णस्तु ब्रह्माण्डासक्तविग्रहः ॥
ऊरुदघ्नजले स्नानं न योग्यमभवद्धरेः । शंभुर्जहास स्नानाय जलमत्यधिकं लहो ॥ २०२

दधीच उवाच—

अथ देवः शिवो विष्णुं भालाक्षेण व्यलोकयत् । विलीनसूक्ष्मावयवं वामाक्षेण व्यलोकयत् २०३
ततः सूक्ष्मतनुर्विष्णुः शीतदेहश्च शंभुना । उक्तश्च स्नाहि भो विष्णो ह्रद एष विकल्पितः २०४
ततो ह्रदे हरिः स्नातुं हराङ्के कल्पिते तथा । प्रवेष्टुं न शशाकाथ गम्भीरे तद्ध्रदेऽस्य तु ॥ २०५
हरिराह च नो पन्था ह्रदस्यास्य प्रवेशने । मार्गो मे दीयतां देव ह्यथ शंभुस्तमब्रवीत् ॥ २०६

शंभुरुवाच—

कोटियोजनगम्भीरं जलमेतन्महत्पुरा । निविष्टस्यैव भवत ऊरुदघ्नं जलं विभो ॥ २०७
इदानीं तिष्ठतश्चापि न प्रवेशो ह्रदे कथम् । अष्टाङ्गुलप्रमाणोऽयमूरुस्तस्मिन्ह्रदे च मे ॥ २०८
पश्यामि प्रविश त्वं च पादस्पर्शं ददामि ते । वाक्यमेकं तु सोपानं वेदं मद्वाक्यनिःसृतम् ॥ २०९

हरिरुवाच—

शब्दारोहणसामर्थ्यं कस्यापीह न विद्यते । मूर्तस्याऽऽरोहणं शक्यं ग्रहणं वा कथं श्रुतेः ॥ २१०

शंभुरुवाच—

पुंसः शक्तिर्न वस्तूनां धारणारोहणादिषु । गृहाणेमं महावेदं जग्राह हरिरेप्यथ ॥ २११
नम्रकरश्चाशक्तेर्हि पतन्निव जनार्दनः । न च शक्यं मया धर्तुमिति प्राह शिवं हरिः ॥ २१२
शिवः प्रहस्य *निपतीपात्यतीव(?) महाह्रदे । तत्सोपानमथाऽऽरुह्य स्नातुमर्हसि केशव ॥ २१३

---

* निपत्तीपासतीवेति क्वचित्पाठः ।

---

१ छ. ट. ड. °तनूपुरम् । २ ख. °रव्ययः । न° । ड. °रव्ययम् । न° ।

दधीच उवाच—

वेदे सोपानभूते हि ऊरुदघ्नोपलब्धिनि । तत्र स्नात्वा स विधिना बहिरुत्तीर्य चोक्तवान् ॥ २१४
स्नातोऽस्मि किमतः कार्यं शंभुराह हरिं ततः । ध्यायसे हृदये किं त्वं न च किंचिद्वदस्व मे ॥
हरिर्न किंचिदित्याह त्वथ शंभुरुवाच ह । भस्मस्नानेन संशुद्धो वेत्स्यसे परमं शुभम् ॥
दीक्षितस्य हि तच्छस्तं तद्रक्षां करवाण्यहम् ॥ २१६

दधीच उवाच—

स्ववक्षःस्थितभस्मैकं नखेनाऽऽदाय शंकरः । प्रणवेनाभिमन्त्र्याथ गायत्र्या ब्रह्मभूतया ॥ २१७
अङ्गुलीभ्यामथो गृह्य शिवः पञ्चाक्षरेण वै । हरिमस्तकगात्रेषु सर्वेष्वपि समाक्षिपत् ॥ २१८
शान्तदृष्ट्या निरीक्ष्याथ जीवेत्याह हरिं हरः । ध्यायस्व किं ते हृदये स च ध्यानपरोऽभवत् ॥
अपश्यद्धृदये दीपं दीर्घाकारमतिप्रभम् । हरिराह शिवं साक्षाद्दीपो दृष्टो मयेति च ॥ २२०
शिवः प्राह न ते ज्ञानं परिपक्वमथो हरे । भस्म भक्षय ते ज्ञानं समग्रं संभविष्यति ॥ २२१

हरिरुवाच—

भक्षयिष्ये शुभं भस्म स्नातोऽहं भस्मना पुरा । दृष्ट्वेश्वरं भक्तिगम्यं भस्माभक्षयदच्युतः ॥ २२२
तत्राऽऽश्चर्यमतीवाऽऽसीत्पक्वबिम्बसमद्युतिः । वासुदेवः शुद्धमुक्ताफलवर्णोऽभवत्क्षणात् ॥ २२३
तदाप्रभृति शुक्लोऽसौ वासुदेवः प्रसन्नवान् । पुनर्ध्यानपरो भूत्वा दीपमध्ये च पूरुषम् ॥ २२४
शुद्धस्फटिकसंकाशं त्रिनेत्रं द्विभुजं शिवम् । वरदं दक्षिणे हस्ते वामे चाभयदं विभुम् ॥ २२५
पञ्चवर्षीयवपुषं शरच्चन्द्रायुतद्युतिम् । माणिक्यकुण्डलं हेमदामजालविभूषितम् ॥ २२६
रत्नाङ्गुलीयसुभगं बाहुकोष्ठसुभूषणम् । तनुरक्तौष्ठमाकर्णदीर्घायतविलोचनम् ॥ २२७
बाणलोचनसंकाशं भाललोचनमव्ययम् । कंदर्पकार्मुकभ्रान्तिजनकभ्रुवमीश्वरम् ॥ २२८
स्निग्धोन्नतसुचार्वङ्गनासमच्छकपोलकम् । मन्दस्मितं प्रसन्नास्यं बालेन्दुदर्शनं विभुम् ॥ २२९
विज्ञानरक्तवसनं वेदकल्पितनूपुरम् । वामाङ्गुलीयमध्यस्थमणिप्रणवमव्ययम् ॥ २३०
दृष्टवानथ तं विष्णुः कृतकृत्योऽभवत्तदा । अथाऽऽह शंभुर्भो विष्णो हृदि दृष्टं हि किं त्वया ॥
हरिराह पुरा दृष्टः पुरुषः शान्तविग्रहः । इत्युदीर्य महाविष्णुः शिवपादे पपात ह ॥ २३२

हरिरुवाच—

न शक्तिं भस्मनो जाने प्रभावं ते कुतो विभो । नमस्तेऽस्तु नमस्तेऽस्तु त्वामेव शरणं गतः २३३

सदाशिव उवाच—

वरं वृणु महाभाग मनसा यं त्वमिच्छसि । शिवेरितमथाऽऽकर्ण्य हरिर्वव्रे वरोत्तमम् ॥ २३४

हरिरुवाच—

त्वत्पादयुगले शंभो भक्तिरस्तु सदा मम । अथ दत्त्वा वरं शंभुरिदमाह वचो हरिम् ॥ २३५

शंभुरुवाच—

भस्मधारणसंपन्नो मम भक्तो भविष्यसि ॥ २३६

दधीच उवाच—

इत्थमुक्तं महाज्ञानं भस्मसंभवमादितः । तस्माद्यूयं सुराः सर्वे धारयध्वं तदादरात् ॥ २३७

विस्मयोत्फुल्लनयना देवाश्चाऽऽसंस्तदस्त्विति । य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम् ॥
विमुक्तः सर्वपापेभ्यो यात्यसौ शांकरं पदम् ॥ २३८

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे भस्ममाहात्म्य एकाधिकशततमोऽध्यायः ॥ १०१ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७७९१

---

अथ द्व्यधिकशततमोऽध्यायः ।

---

शुचिस्मितोवाच—

आयुष्यवर्धनं भस्माशनं दृष्टं महामुने । परलोकगतिं दातुं शक्तमेतं भवान्वद ॥ १

दधीच उवाच—

अत्र ते कथयिष्यामि इतिहासं पुरातनम् । चित्रगुप्तयमाभ्यां च ख्यातं च यद्बभूव च ॥ २
मिथिलायां पुरा कश्चिच्छुनः पर्यटते क्षुधा । पुरा जन्मशतात्पूर्वं ब्राह्मणः पापनिश्चयः ॥ ३
पूर्वे वयसि वेदाढ्यः शास्त्राढ्यश्च सुबुद्धिमान् । स स्नातुं जाह्नवीं गत्वा स्नानं कृत्वा पितॄनपि ४
देवानृषीन्समभ्यर्च्य ययौ प्रात्तालिकापुरम् । प्रतिश्रायमथो चक्रे ब्राह्मणस्य निवेशने ॥ ५
तत्रैका क्षत्रियसुता यौवनस्था हतप्रिया । प्रभ्रष्टराज्या षट्कोटिनिष्कद्रव्येण संयुता ॥ ६
भुक्त्वाऽथ शयितं विप्रं सर्वावयवसुन्दरम् । रात्रौ चन्द्रोदये शुद्धे ज्योत्स्नाहसितदिङ्मुखे ॥ ७
ब्राह्मणाभ्याशमागत्य मुद्वीक्ष्येदमथाब्रवीत् । कुतस्त्वमागतो विप्र कं वा देशं गमिष्यसि ॥ ८

ब्राह्मण उवाच—

अकालचर्या सर्वेषां शङ्कामुत्पादयेद्ध्रुवम् । वयःस्थयोर्मिथो वादो रहस्ये हास्यमन्दिरम् ॥ ९

क्षत्रियोवाच—

कथाप्रसङ्गे यात्रायां तीर्थे देशादिविप्लवे । दुर्भिक्षग्रामदहने रहोवादो न दूषितः ॥ १०
प्रतिश्रयस्तु मद्गेहे भवतैव कृतः पुरा । मद्गेहवासिनी चाहं न शङ्का त्विह कस्यचित् ॥ ११

ब्राह्मण उवाच—

तूष्णींभावो मया कार्यो गच्छ त्वं सद्म चाऽऽत्मनः । इत्युक्ता ब्राह्मणेनासौ मनसाऽचिन्तयच्चिदम् ॥
अनेन संगमो मह्यं यथा तत्त्वं तथाऽप्यहम् । रोदनं तु करिष्यामि तथा चाऽऽयाति सान्त्वितुम् ॥
मां च सान्त्वयितुं प्राप्तो मां समुत्थापयिष्यति । अहमुत्तिष्ठमानैव दोर्लताकण्ठसङ्गिनी ॥ १४
कुचयुग्मं हि तद्गात्रं स्पर्शयन्निव मूर्छिता । गतभानां हि मां दृष्ट्वा निषण्णः स्वयमेव सः ॥ १५
अङ्कयोर्मामकं देहं निधास्यति द्विजाग्रणीः । अचेतनेव वसनमपास्य रुदतीव च ॥ १६
सुस्निग्धं रोमरहितं पक्वाश्वत्थदलाकृति । दर्शयिष्यामि तत्स्थानं कामगेहं सुगन्धि च ॥ १७
मयैव विलुठन्त्याऽङ्के तस्य वस्त्रमपास्यते । लोलुप्य चित्तं तस्येत्थमात्माधीनं करोमि तम् ॥ १८
अदृष्टौ यादृशं चित्तं दृष्टौ नैतादृशं भवेत् । दर्शने यादृशं चित्तं संलापे नैव तादृशम् ॥ १९
संलापे यादृशं चित्तं हास्योक्तौ नैव तादृशम् । हास्योक्तौ यादृशं चित्तं स्पर्शने नैव तादृशम् ॥
स्पर्शने यादृशं चित्तं योनिदृष्टौ न तादृशम् । तद्दृष्टौ यादृशं चित्तं योनिस्पर्शे न तादृशम् ॥ २१
बाहुमूलकुचद्वंद्वस्वयोनिस्पर्शदर्शनात् । कस्य न स्खलते चित्तं रेतः स्कन्नं च नो भवेत् ॥ २२

---

१ ञ. °थौ मानलिका° । २ झ- ञ. देवं ।

दधीच उवाच—

इति संचिन्त्य मनसा क्षत्रिया गृहमभ्यगात् । स्वगृहद्वारमासाद्य मन्दपूर्वं रुरोद ह ॥
चिरं कालं च रुदिते ब्राह्मणः करुणानिधिः ॥ २३
स्त्रीबालवृद्धातुरराजयोगिनीविषाग्नितोयादिनिपातनानाम् ॥
दुःखस्य चैवोद्धरणं प्रशस्यते कूपस्य खातेन समं वदन्ति ॥ २४
इत्थं विचार्य विप्रोऽसौ शुचिभूतः प्रसन्नधीः । तस्याः समीपमगमत्तामुवाच ततो द्विजः ॥ २५
अलं शोकेन महता इहामुत्रविरोधिना । शरीरशोषणं ह्येतच्चित्तविध्वंसनं तथा ॥ २६
त्यज शोकमिमं बाले न चार्थः शोचितेन वै । शोकस्य कारणं किं वा येनेत्थं रुद्यते त्वया २७

दधीच उवाच—

एवमुक्ता द्विजेनाथ न च किंचिदुवाच ह । मूर्छितेवापतद्भूमौ तमदृष्ट्वेव* वीक्षती ॥ २८
तामथोत्थापयामास [+ब्राह्मणः परमार्थवित् । उत्थापिताऽपि तेनासौ निपपात पुनः पुनः २९
पतितां पतितां विप्रो निषिध्योत्थाप्य तां पुनः । अङ्कमारोपयामास] प्रममार्ज विलोचने ॥ ३०
अथ सा मूर्छितेवाऽऽशु वसनं परिमुच्य तम् । दर्शयन्ती स्तनौ गुह्यं बाहुमूले विलोचने ॥ ३१
आलम्ब्य कण्ठे बाहुभ्यां स्तनाभ्यामस्पृशद्द्विजम् । चन्द्रातपश्च विशदो मन्दमारुतसंभवः ॥ ३२
अथ चिन्तापरो विप्रो न च कार्यमिदं मम । पितुर्वा मातुरुचितं पत्युर्वाऽथ गुरोस्तथा ॥ ३३
असंबुद्धस्य मे सर्वं विपरीतं विभाति वै । अथ कामः समायातो रहस्ये स्थितयोस्तयोः ॥ ३४
विव्याध निशितैर्बाणैर्द्विजं कामो दुरात्मवान् । स्मरबाणातुरो विप्रश्चिन्तयामास कामुकः ॥ ३५
इयं सुचारुसर्वाङ्गी कामिनीव प्रदृश्यते । नो चेद्योनिमुखे ह्यस्या ध्रुवं नाऽऽपांसुनिर्गमः ॥ ३६
तदेतस्याः कुचस्पर्शात्सर्वं व्यक्तं भविष्यति । इति संचिन्त्य मनसा कुचौ योनिमथास्पृशत्॥ ३७
साऽपि मूर्छितरूपैव मन्दस्मितमुखाऽभवत् । आलिलिङ्गे द्विजं गाढमाननं च चुचुम्ब ह ॥ ३८
तयोरथ समायोगो वर्षाणां शतमप्यभूत् । गते वर्षशते पश्चादेकस्मिन्दिवसे द्विजः ॥ ३९
स्नातुं ययौ नदीं प्रातःस्नायिविप्रप्रसङ्गतः । स्नानं तत्र तथा चक्रे पुराणं श्रुतवानथ ॥ ४०
कौर्मं समस्तपापानां नाशनं शिवभक्तिदम् । इदं पद्यं च शुश्राव पुराणज्ञेन भाषितम् ॥ ४१
ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः । कौर्मं पुराणं श्रुत्वैव मुच्यते पातकात्ततः ॥ ४२
श्रुत्वैतद्वचनं विप्रः पौराणिकमभाषत । मया कृतानां पापानां न च संख्याऽस्ति काचन ॥ ४३
अशेषपापसंदोहनाशनं तदिहोच्यताम् ॥ ४४

पौराणिक उवाच—

आराधयस्व देवेशं शंकरं त्रिदशेश्वरम् । तस्य संपूजनाद्विप्र सर्वं पापं विनश्यति ॥ ४५
पापमेव तमः प्रोक्तं ज्ञानदीपेन नश्यति । अथवा पूजया विप्र समस्ताघविनाशनम् ॥ ४६
ज्ञानपूजाविहीनानां नरके पतनं ध्रुवम् ॥ ४७

दधीच उवाच—

अथ द्विजो ह्यभ्यगमच्छिवालयमनुत्तमम् । द्रोणपुष्पसहस्रेण पूजयामास शंकरम् ॥ ४८
गृहं जगाम च ततो भोजनं कृतवानथ । विहाय क्षत्रियां विप्रो जगामेष्टां भुवं ततः ॥ ४९

---

* आर्षत्वात्साधु । + धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ञ. ट. ड. पुस्तकस्थः ।

हविष्यमन्नमादाय भुक्त्यशक्तेः शिवालयम् । गत्वा दीपस्थिताज्येन भोजनं कृतवान्बहिः ॥५०
अथ मृत्युवशं प्राप्तो यमलोकं जगाम वै ॥ ५१

यम उवाच —

त्वया कृतानां पापानां फलं नरकपातनम् । वर्षकोटिद्वयं विप्र श्वानजन्मशतं पुनः ॥ ५२
शिवदीपाज्यहरणात्फलं नरकसेवनम् । नरके च स्थितिस्तस्य शतवर्षं सुभीषणम् ॥ ५३
कुम्भीपाके च काष्ठत्वं भस्म भूत्वा पुनः पुनः । वर्षाणां दशकं त्वेवं क्रिमिभुक्तिः परं दश॥५४
पुनश्च दीपवर्तित्वं वर्षाणां च तथा दश । श्लेष्मामेध्यपुरीषेषु मूत्ररेतोह्रदेषु च ॥ ५५
उन्मज्ज्य च निमज्ज्याथ श्लेष्मविण्मलभोजनम् । ततो नरकशेषेण श्वानजन्मशतं परम् ॥ ५६
यमवाक्यमिति श्रुत्वा ब्राह्मणो निपपात च । अथ तस्य प्रिया भार्या पतिचिन्तापराऽभवत् ५७
एतस्मिन्नन्तरे तस्याः समीपं नारदोऽभ्यगात् । नारदस्य पपातासौ पादयोरतिदुःखिता ॥ ५८
तामुत्थाप्य मुनिः शुद्धां गतायुषमभाषत । अयि मुग्धे विशालाक्षि भर्तारं गन्तुमर्हसि ॥ ५९
भर्ता ते हि विशालाक्षी मृतो बन्धुविवर्जितः । न रोदितव्यं ते भद्रे ज्वलनं प्रविशाव्यये ॥६०

ब्राह्मण्युवाच—

अशक्यं यदि वा शक्यं मया गन्तुं मुने वद । अग्निप्रवेशकालो वै व्यतीतो न भवेत्तथा ॥ ६१

नारद उवाच—

योजनानां शतं त्वेकमितः स्थानात्पुरं हि तत् । श्वो दाहः किल विप्रस्य भविता गन्तुमर्हसि ॥

अव्ययोवाच—

दूरस्थितं कायनाथं गन्तुमर्हामि हे मुने । तद्वचस्तु समाकर्ण्य नारदस्तामथाब्रवीत् ॥ ६३

नारद उवाच—

विपञ्चीनालसंस्था त्वं भव गच्छाम्यहं क्षणात् । इत्युदीर्य ततो गत्वा त्वरां चक्रे गतं च तम्॥
देशं नष्टद्विजस्थानं तामुवाचाव्ययां मुनिः । रोदनं नेह कर्तव्यं यदि तत्राग्निमेष्यसि ॥ ६५
पापं यदि कृतं भद्रे परपूरुषसेवनम् । एतद्विशुद्धये पुत्रि प्रायश्चित्तं समाचर ॥ ६६
तवोपपातकव्रातनाशो वह्निप्रवेशनात् । नान्यत्पश्यामि नारीणां सर्वपापोपशान्तये ॥ ६७
अग्निप्रवेशं मुक्त्वैकं प्रायश्चित्तं जगत्त्रये ॥ ६८

दधीच उवाच—

अथ नारदवाक्येन चोदितोवाच सा त्विदम् । आग्निप्रवेशे नारीणां किं कर्तव्यं महामुने ॥ ६९

नारद उवाच—

स्नानं मङ्गलसंस्कारो भूषणाञ्जनधारणम् । गन्धपुष्पं तथा धूपं हरिद्राक्षतधारणम् ॥ ७०
मङ्गलं च तथा सूत्रं पादालक्तकमेव च । शक्त्या दानं प्रियोक्तिश्च प्रसन्नास्यत्वमेव च ॥ ७१
नानामङ्गलवाद्यानां श्रवणं गीतकस्य च । व्यभिचारकृते पापे तत्पापस्य प्रशान्तये ॥ ७२
अतीतं पातकं पृष्ट्वा प्रायश्चित्तं तदीरितम् । कुर्यादथ स्वकां भूषां विप्राय प्रतिपादयेत् ॥ ७३
भूषाभावे स्वकीयेन प्रायश्चित्तं तु कारयेत् । नान्यथा तस्य पापस्य नाशनं वेति कुत्रचित्॥ ७४

अव्ययोवाच—

सर्वमेतत्करिष्यामि हरिद्रा मे न विद्यते । भूषणं किमु तद्ब्रह्मन्सर्वमेतत्प्रदीयताम् ॥ ७५

१ अ. ॅज्यमानस्य फलं ।

नारद उवाच—

नेहास्ति किंचित्सौभाग्यद्रव्यमन्यत्त्वपेक्षया(?) ॥ ७६

दधीच उवाच—

अथ क्षणेनाभ्यगमत्कैलासं शिवमन्दिरम् । गिरिजामथ दृष्ट्वाऽसौ प्रणिपत्येदमब्रवीत् ॥ ७७

हरिद्रा दीयतां मातर्भूषणानि च सूत्रकम् ॥ ७८

पार्वत्युवाच—

विधवायै मया किंचिद्भूषणं दीयते कथम् । मया दत्ते हि तस्मिंस्तु वैधव्यं नोपपद्यते ॥ ७९

नारद उवाच—

मातर्नो विधवा तावद्धवाङ्गं यावदस्ति वै । आ दाहात्सूतकं नास्ति तिष्ठेत्सौभाग्यमुत्तमम् ॥८०

पार्वत्युवाच—

न चान्यदेहो मञ्जूषां हरिद्रां धर्तुमर्हति । भूषणादौ मया दत्ते चिरं जीवितमिष्यते ॥ ८१

दीयते हि जयन्त्यैव सर्वमेतत्त्वयेरितम् । जयन्तीं स जगामाथ तया दत्तमथाऽऽहरत् ॥ ८२

स्नापयन्त्या (?)अव्ययायास्तु हरिद्रां दत्तवान्मुनिः । ततः सुसूक्ष्मवस्त्रं च भूषणं च ददौ मुनिः ॥

आह चैनां तवान्त्येष्टिं कः करोति नियुङ्क्ष्व तम् ॥ ८३

अव्ययोवाच—

त्वयै(मे)व मे समस्तानां क्रियाणां कारणं मुने । पिताऽसि सर्वं कुर्वेद्य(न्य)न्नमस्ते मुनिपुङ्गव॥ ८४

दधीच उवाच—

अथ तं ब्राह्मणं दग्ध्वा नारदस्तामुवाच ह । अव्यये गच्छ दहनं प्रविश त्वं यदिच्छसि ॥ ८५

अथ सा भूषिता साध्वी त्रिः प्रदक्षिणपूर्वकम् । नारदं तु नमस्कृत्य गौराङ्गीमर्पयन्मनः ॥ ८६

सुसूक्ष्मं मङ्गलं सूत्रं हरिद्रामक्षतांस्तथा । कुसुमानि च वासांसि कस्तूरीं चन्दनं तथा ॥ ८७

सौवर्णकङ्कतिकां च फलानि विविधानि च । स्वदक्षिणादिवस्त्रान्तं स्पर्शयित्वा पृथक्पृथक् ॥ ८८

पार्वतीप्रीतिकामा सा पुरन्ध्रीभ्योऽखिलं ददौ । ज्वालामालाभिराकाशं दहन्तमिव चानलम् ८९

त्रिः प्रदक्षिणमागत्य स्थित्वाऽग्नेः पुरतः सती । इदं त्वाह तदा वाक्यं प्राञ्जलिः प्रहसन्मुखी ९०

अव्ययोवाच—

इन्द्रादयो दिशां पाला मातर्मेदिनि भास्कर । धर्मादयः सुराः सर्वे शृणुध्वं मम भाषितम् ॥ ९१

पाणिपीडनमारभ्य चैतदन्तमहर्निशम् । वाङ्मनःकर्मभिर्भर्ता सेवितो यदि भक्तितः ॥ ९२

व्यभिचारो यथा न स्यादवस्थात्रितये मम । तेन सत्येन मे पत्या सार्धं यानं प्रयच्छत ॥ ९३

इत्युक्त्वा तु स्वहस्ताग्रपुष्पकं द्रुतमाक्षिपत् । प्रविष्टा ज्वलनं दीप्तमथापश्यद्विमानकम् ॥ ९४

सूर्येण सममुत्कृष्टमप्सरोगीतशोभितम् । आरुरोह विमानं सा भर्त्रा साकं दिवं ययौ ॥ ९५

यमः प्राहाथ संपूज्य वनितां तां पतिव्रताम् । अक्षयः स्वर्ग एवेह न च पापं तवास्ति वै ॥ ९६

कोटिद्वयसमास्तत्र नरके हन्त पातकम् । मृष्टमेव न संदेहः किं तु पातकमेव तु ॥ ९७

एकं शिवस्य दीपाज्यभक्षणेन न भर्जितम् । न चापि नरके पातः श्वानजन्मशतं भवेत् ॥ ९८

अव्ययोवाच—

अग्निप्रवेशशुद्धानां पुनश्च नरकः कथम् । अग्निप्रवेशात्सर्वेषां पापानां नाशनं भवेत् ॥ ९९

१ भ. °त्य सा गौरीम° । २ भ. च ।

यम उवाच—

शिवद्रव्यापहारस्य पातकं नैव नश्यति । इत्थमाह पुरा शंभुरन्येषां नाशनं भवेत् ॥ १००
अथ स श्वानतामाप्य शताब्दं स्यात्ततः परम् । दधीचमन्दिरं प्राप्तो मृत्योरास्यगतो हि सः ॥ १०१
तस्य भित्तिसमीपे तु भस्माऽऽस्ते ह्यभिमन्त्रितम् । भस्मनि श्वा पपातास्मिन्ममार च गतो यमम् ॥
यमः संपूज्यावनतो भवान्पुण्यतमो मुनिः । मद्गेहे भवतः स्थानं न योग्यं गम्यतां बहिः ॥ १०३
अथ गत्वा बहिस्तस्थौ सारमेयो यमोदितः । संतापावस्थितं तं च नारदो दृष्टवानमुम् ॥ १०४
पप्रच्छ च किमर्थं त्वमिह तिष्ठसि दीप्तिमान् । शिवभस्मस्थितमृतं शैवं जाने महामते ॥ १०५
शैवानां पापिनां चापि साहसेन तनुत्यजाम् । यमलोको न चास्तीति शिवाज्ञा शिवचोदिता १०६

दधीच उवाच—

इत्थमाभाष्य तं श्वानं कैलासमगमन्मुनिः । दण्डवत्प्रणिपत्येशं व्यज्ञापयदथो हरम् ॥ १०७
देव कश्चिद्यमपुराद्बहिरास्ते सुकुक्कुरः । भस्मन्येव मृतस्तस्माद्भवलोकं स चार्हति ॥ १०८
अथो मुख्यगणाविष्टो वीरभद्रः शिवेरितः । आनयामास तं श्वानं दिव्यरूपधरं तदा ॥ १०९
महेशपादप्रणतं देवायाथ व्यजिज्ञपत् । आह माहेश्वरो देवं कुरुष्वैनं गणं स्थितम् ॥
तथेति च शिवः प्राह गणः श्वानमुखोऽभवत् ॥ ११०

दधीच उवाच—

अतुलं भस्ममाहात्म्यं मयोक्तं ते शुचिस्मिते । इतः परं हि किं भूयः श्रोतुमिच्छसि सुव्रते ॥ १११

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे विभूतिमाहात्म्ये द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७८६२

---

अथ त्र्यधिकशततमोऽध्यायः ।

---

शुचिस्मितोवाच—

कश्यपं जमदग्निं च देवानां च पुरा कथम् । भस्म रक्षति च ब्रह्मंस्तन्ममाऽऽचक्ष्व भो मुने ॥ १

दधीच उवाच—

कश्यपादियुता देवाः पूर्वमभ्यगमन्गिरिम् । शौकरं नाम विख्यातमद्रिं(द्रि)मध्ये सुशोभनम् ॥ २
नानाविहंगसंकीर्णं नानामुनिगणाश्रयम् । वासुदेवाश्रयं रम्यमप्सरोगणसेवितम् ॥ ३
विचित्रवृक्षसंपन्नं सर्वर्तुकुसुमोज्ज्वलम् । तथाविधं प्रविश्यैते वयं गिरिमथापरे ॥ ४
स्तुवन्तः केशवं तत्र गताः स्म गिरिशेश्वरम् । दृष्ट्वा तत्र महाज्वालां प्रविष्टाश्च वयं च ताम् ॥ ५
मामेकं तु तिरस्कृत्य ह्यदहद्देवतामुनीन् । मां ददाह ततः पश्चाद्भस्मभूता वयं शुभे ॥ ६
अस्मानेतादृशान्दृष्ट्वा वीरभद्रः प्रतापवान् । केनापि कारणेनासौ गतवान्पर्वतं त्वमुम् ॥ ७
भस्मोद्धूलितसर्वाङ्गो मस्तकस्थशिवः शुचिः । एकाकी निस्पृहः शान्तो हाहाशब्दमथाशृणोत् ॥ ८
अथ चिन्तापरश्चाऽऽसीन्म्रियमाणशवध्वनिः । शवानामिव गन्धश्च दृश्यते तन्निरीक्षणे ॥ ९
इति निश्चित्य मनसा जगामाग्निमतिप्रभम् । स वह्निर्वीरभद्रं तु दग्धुमारब्धवानथ ॥ १०
तृणाग्निरिव शान्तोऽभूज्जलमासाद्य तं च सः । ततोऽपरां महाज्वालां वीरभद्रस्तु दृष्टवान् ॥ ११

---

१ ख. ङ. च. छ. ट. ढ. शौकटं । २ ख. ङ. 'श्रमं र' ।

एवं गच्छन्तीं महाकालो ज्वालां निपतितामपि। मनसाऽचिन्तयच्चापि वीरभद्रः प्रतापवान् ॥ १२
सर्वेषां नाशिनी ज्वाला प्राणिनां शतकोटिशः । तत्सर्वरक्षणार्थं हि पिपासुश्चाप्यहं त्विमाम् १३
प्राश्नामि महतीं ज्वालां जलं तु तृषितो यथा । एतस्मिन्नन्तरे वीरं वागाह चाशरीरिणी ॥ १४

भारत्युवाच—

वीर मा साहसं कार्षीः क्व तृषा क्वाऽऽशुशुक्षणिः । तृषितानां जलेनार्थो विपरीतेन नाग्निना॥१५
निकामं योजनशिराः प्रनष्टो राक्षसेश्वरः । शतयोजनवक्त्रश्च शतबाहुस्तथाऽपरः ॥ १६
अगस्त्यश्च महाभागो निःशेषं पीतसागरः । एतानन्यानसंख्याताञ्ज्वालेयं तानमारयत् ॥ १७

वीरभद्र उवाच—

भीषिकेयं महाज्वाला त्वदुक्ता न हि जायते । सरस्वति भवत्यां च मम रोषश्च जायते ।
सर्वदेवार्चितपदं वीरभद्रमवेहि माम् ॥ १८

भारत्युवाच—

मयोक्तं हितभावेन न दोषाच्चान्यतो मुने । कोपमुत्सृज्य वीर त्वमात्मनो हितमाचर ॥ १९
इत्युक्त्वाऽन्तर्दधे देवी भारती वीरभीतितः । अथ वीरो महाज्वालामपासील्लीलयैव तु ॥ २०
क्षणेन महती ज्वाला शतयोजनविस्तृता । एकेन वीरभद्रेण पीता परमदुःसहा ॥ २१
अथ चेन्द्रमुखानां च मुनीनां भस्मराशयः । दृष्ट्वा वै वीरभद्रेण आहूताश्च महात्मना ॥ २२
न चाब्रुवन्प्रतिवचो मृतत्वाद्दपिदेवताः । वीरभद्रस्तु तं ज्ञात्वा नाशं मुनिदिवौकसाम् ॥ २३
दध्यावमून्कथं सर्वाञ्जीवयाम्यद्य कोविदः । ध्यानेन दृष्टवांश्चापि जीवनं भस्म देहिनाम् ॥ २४
अथाऽऽचम्य मृतानां तु भस्मान्यथ च भस्मना । मृत्युंजयेन मन्त्रेण मन्त्रितेन ह्यमन्त्रयत् ॥ २५
अथोत्थिता मुनिवराः स्वं स्वं रूपमुपाश्रिताः । अथ ते गतवन्तश्च गिरेः पार्श्वं महाप्रभम् ॥२६
तत्रापि भक्षिताः सर्वे सर्पेणातिशरीरिणा । अथ वीरो महासर्पसमीपमगमत्प्रभुः ॥ २७
वीरमागतमालोक्य भुजगो योद्धुमारभत् । युयुधे वर्षमेकं तु नानारूपधरः फणी ॥ २८
अथ वीरः प्रगृह्योष्ठयुग्मं करयुगेन तु । द्विधा चक्रे समस्ताङ्ग देवांस्तत्र गतायुषः ॥ २९
दृष्ट्वाऽथ भस्मनैवैताञ्जीवयामास शंकरः । अथ देवाः समुनयो वीरभद्रं प्रणम्य तु ॥ ३०
गतवन्तो यथामार्गं ददृशू रक्ष आगतम् । पञ्चमेढ्रं महाकायं दोर्भिश्च दशभिर्युतम् ॥ ३१
पञ्चपादसमोपेतं शिरोभिश्चाष्टभिर्युतम् । काङ्क्षमाणं महाहारं युध्यमानो हि वालिना ॥ ३२
महावराहवपुषो वासुदेवस्य यद्बलम् । तादृशं द्विगुणीभूतं कपौ वालिनि निश्चितम् ॥ ३३
तादृशं वानरश्रेष्ठं ससुग्रीवं स राक्षसः । मुष्टियुद्धे पञ्चपादैः सहसाऽऽहत्य वालिनम् ॥ ३४
सुग्रीवं च कराभ्यां स हन्तुमेवं प्रचक्रमे । आस्ये निक्षिप्य सुग्रीवमग्रसीत्कवलं यथा ॥ ३५
वाली सुग्रीवगमनं दृष्ट्वा चिन्तामवाप ह । कथमेनं हनिष्यामि रक्षयिष्ये कथं कपिम् ॥ ३६
एवं हि चिन्तयानं तं वानरं राक्षसेश्वरः । अग्रसीदेकयत्नेन तथाभूतं च राक्षसम् ॥ ३७
दृष्ट्वा देवर्षयः सर्वे पलायनपरास्तथा । पलायमानांस्तान्दृष्ट्वा पञ्चमेढ्रस्तु राक्षसः ॥ ३८
हस्तैः समस्तैस्तान्सर्वानादायाभक्षयत्तदा । वीरभद्रस्ततो दृष्ट्वा वानरर्षिसुरादनम् ॥ ३९
पञ्चाशद्योजनशिलां करेणाऽऽदाय तं रुषा । निजघान शिरोमध्ये पतितं मध्यमं शिरः ॥ ४०
तत आदाय शैलस्य शृङ्गं तच्छतयोजनम् । स्थापयित्वा दृढतरं राक्षसेन्द्रं तथाऽहरत् ॥ ४१

---

१ ट. ड. महाकालीं ।

राक्षसोऽथ बभाषेदं वीरभद्रं त्रिलोचनम् । मम बाहुबलं पश्य वीक्षितं त्वद्बलं मया ॥ ४२
असिद्वयमिदं धौतं पञ्चाशद्योजनोन्नतम् । एकयोजनविस्तारं सुदृढं लक्षणान्वितम् ॥ ४३
एकं गृहाणाभिमतं *वशिष्टं तन्मम प्रियम् । वीरभद्रस्तथेत्युक्त्वा गृहीत्वाऽसिं महाबलः ॥ ४४
करेणाचालयत्तीक्ष्णं क्ष्वेलां चक्रे ततः क्रुधा । गृहीतासिस्तथा क्ष्वेलां चक्रे राक्षसपुंगवः ॥ ४५
वीरभद्रं समभ्येत्य कण्ठं प्रति समर्पयत् । तद्गात्रं भिन्नमभवच्छोणितं निर्गतं बहु ॥ ४६
राक्षसस्त्वेकहस्तेन पपौ तच्छोणितं ततः । वीरभद्रः कण्ठदेशे राक्षसं प्राहरद्रुषा ॥ ४७
शिरोद्वयं तथा छिन्नं पतमानं ततोऽग्रहीत् । न्यभक्षयदमेयात्मा सिंहनादं चकार ह ॥ ४८
तेन नादेन महता क्षुब्धमासीज्जगत्त्रयम् । अन्योन्यमसिघातेन भिन्नगात्रौ विकस्वरम्(रौ) ॥ ४९
किंशुकाविव दृश्येते पुष्पितौ रुधिरोक्षितौ । वर्षमेकं तु संयुध्य सासी देवासुरौ तदा ॥ ५०
अतश्च वर्षमेकं तु गदायुद्धमभूत्तदा । असिपुत्रिकया पश्चाद्वर्षमेकं ततः परम् ॥ ५१
पुनर्गृहीत्वाऽसियुगं युयुधाते परस्परम् । शं ब्रुवाणो महाखड्ग(ड्ग)दंष्ट्राकारो गणेश्वरः ॥ ५२
सरोषरक्तनयनश्चालयित्वाऽसिमग्रतः । तस्य कण्ठवनं सर्वं चिच्छेद कदलीयथा ॥ ५३
शिरांसि सर्वाण्यादाय बभक्ष भगनेत्रहा । तस्य गात्रं कररुहैर्विदार्याऽऽहृत्य देवताः ॥ ५४
कपीन्द्रौ च तथा चान्या अ(न)द्राक्षीत्परमेश्वरीम् । एतद्युद्धं महाघोरं नारदो वीक्ष्य चाभ्यगात् ॥
ब्रह्मणे वासुदेवाय शंकराय व्यजिज्ञपत् । मुनयो रक्षिता देवा वालिसुग्रीववानरौ ॥ ५६
एतौ संजीवयामास ब्रह्मविष्णुशिवात्मकः । रक्षसे शंभुना दत्तो वरः परमदारुणः ॥ ५७
हिरण्यकशिपो राज्ये बलवानेकराक्षसः । देवैः सार्धं तु युयुधे वर्षाणां शतमद्भुतम् ॥ ५८
पलायिताश्च बहुधा मृताश्च शतशोऽसुराः । शुक्रेण रक्षितः सोऽथ गुरुणाऽचिन्तयत्त्विदम् ॥ ५९
मृतोऽस्मि शतशः शुक्र जीवितोऽस्मि त्वयैव हि । अमृत्यवे त्वमेतस्मादुदरस्थमृताय च ॥ ६०
अन्यथा मरणं मह्यं भविष्यति न संशयः । गुरो यमेन सार्कं मे युद्धमासीत्सुदारुणम् ॥ ६१
मयाऽसौ ग्रसितो युद्धे यमराजः प्रतापवान् । ममोदरं प्रविश्यासौ बिभेद च ननाद च ॥ ६२
अहं मृतस्तदा चाऽऽसं त्वया संजीवितः पुनः । तस्मादुदरसंस्थानां मरणाय तपे तपः ॥ ६३

शुक्र उवाच—

एवमेतन्न संदेहो यथावत्त्वं समाचर । स्यमन्तपञ्चकं तीर्थं तत्र त्वं तप्तुमर्हसि ॥ ६४

राक्षस उवाच—

तपे महत्तपो घोरं यत्र चीर्णं सुरासुरैः । गुल्फप्रदेशे पादान्ते त्वयःपाशैः प्रबध्य च ॥ ६५
अयस्तम्भयुगं कृत्वा ह्ययःपट्टिकयाऽन्वितम् । पट्टिकायां पादबन्धं कृत्वाऽधःशीर्षतां तथा ६६
विवृतास्यं तथा कल्पं कृत्वाऽधो मुखमुत्कैः । स्तम्भोत्तरेण ज्वालाया(यां) वह्निकायामितस्ततः
अधःशिरास्तथा तिष्ठन्नुन्मील्यैव विलोचने । एवं तपश्चरिष्यामि वरदः कोऽपि मे भवेत् ॥ ६८
ब्रह्मा वा वरदः सोऽस्तु शंकरो विष्णुरेव च । वरदेन तु मे भाव्यं यो वा को वा वरप्रदः ॥ ६९
इत्यमाभाष्य मुनिना गुरुणा भार्गवेण सः । तथाऽतपच्च षण्मासं पुनरन्यच्चकार ह ॥ ७०
नखाभ्यां स्वशिरश्छित्त्वा जुहावाग्नौ समन्त्रकम् । नमो भद्रायमन्त्रेण चत्वारि च शिरांसि सः ७१

* अवाकारस्य भागुरिमतेन लोपः ।

१ छ. ड. अथ स्तं ।

पञ्चमं च शिरो होतुं यतमाने च राक्षसे । वह्निमध्ये समुत्तस्थौ भगवानम्बिकापतिः ॥ ७२
शुद्धस्फटिकसंकाशो भालचन्द्रविभूषणः । अधःशिरस्कं तद्रक्ष इदमाह महेश्वरः ॥ ७३
मा साहसं कृथा रक्षो वरदोऽस्मि वरं वृणु ॥ ७४

राक्षस उवाच—

बहूनां च वराणां तु दाता नूनं महेश्वरः । हतशीर्षसमुत्पत्तिं ग्रस्तजीवमृतिस्तथा ॥ ७५
वराहवपुषो विष्णोरस्तु शक्तिश्चतुर्गुणा । मयि ते न हि रोषः स्यात्संनिधिस्तु सदा मम ॥ ७६
त्वज्जटोत्पाटनेनैकपुरुषः संभविष्यति । तेनैव मरणं नान्यैरिदं मेऽस्तु वृतं शिव ॥ ७७
भविष्यत्येवमेवैतदित्युक्त्वाऽन्तरधीयत । एवं लब्धवरः पापी राक्षसो निहतस्त्वया ॥ ७८
अथाऽऽलिङ्ग्य हरिर्वीरं शंकरश्च पितामहः । यथागतमथो जग्मुरथ देवादियोषितः ॥ ७९
निपत्य दण्डवद्भूमौ वीरभद्रमथाब्रुवन् । नमस्ते देवदेवेश नमस्ते करुणाकर ॥
नमस्ते शाश्वतानन्त नमस्ते वरदो भव ॥ ८०

वीरभद्र उवाच—

भस्मना जीवयिष्यामि सुरान्समुनिवानरान् । भवतीभिः प्रतोष्टव्यं शोकः कार्यो न चाधुना ८१
इत्युक्त्वा वीरभद्रस्तु भस्मनाऽजीवयत्स तान् । उत्थिता मुनिदेवाश्च वानरौ प्रभवत्सुत ॥ ८२
इदमूचुर्वचो हृष्टाः शिरस्थाञ्जलयोऽनमन् । त्वयाऽत्र जीविताऽस्तात पिता त्वं धर्मतो हि नः ८३
अस्माकं शरणं नित्यं भव शंकरसंभव । शिशूनां दुष्टचरितं दृष्ट्वा शिक्षेत्तथा च तान् ॥ ८४
रक्षेत्परकृताबाधाव्याधिभि(भ्य)श्च यथौरसान् । दक्षाध्वरे कृतागस्काः शिक्षिता भवताऽनघ ८५
इदानीं रक्षितास्तात वयं शिशुवदेव ते ॥ ८६

वीरभद्र उवाच—

सत्यमेतन्न संदेहो यत्र बाधा भवेत्तु वः । तत्र मां स्मरत क्षिप्रं बाधा नाशं गमिष्यति ॥ ८७
वीरभद्रपदं येऽपि पठन्त्यष्टशतं ततः । प्रणवादि नमोन्तं च चतुर्थीसहितं तथा ॥ ८८
तेषां राक्षसपीडाया नाशनं च भविष्यति । ब्रह्मराक्षसपीडासु पिशाचादिभयेषु च ॥
नामानुस्मरणात्सर्वबाधानां तु विनाशनम् ॥ ८९
विद्युत्प्रभालोचनमुग्रमीशं बालेन्दुदंष्ट्रारुणशोभिताधरम् ॥
सुनीलगात्रं च जटाकृतस्रजं पञ्चावशाङ्गे भसितं(?)त्रिपुण्ड्रकम् ॥ ९०
ब्रह्मराक्षसमुक्त्यर्थं स्मरणं त्विदमीरितम् । मन्त्रे च वीरभद्रस्य सर्वमेतदुदीरितम् ॥ ९१

दधीच उवाच—

अथैवं विदधे वीरो मुनिदेवास्तथा गताः । एतन्निरायुषं प्रोक्तं भस्ममाहात्म्यमुत्तमम् ॥ ९२
पठतः शृण्वतो वाऽपि स्मरतोऽघविनाशनम् । शिवभक्तिप्रदं पुण्यमायुरारोग्यवर्धनम् ॥ ९३

शुचिस्मितोवाच—

[*अहं कृतार्था धन्या च नारीणामुत्तमाऽस्म्यहम् । हतपापा तथा चास्मि नमस्ते मुनिपुंगव]९४

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१७९९९

---

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. झ. ट. ड. पुस्तकस्थः।

अथ चतुरधिकशततमोऽध्यायः ।

श्रीराम उवाच—

भस्मोत्पत्तिं महाभाग भस्ममाहात्म्यमेव च । भस्मसंधारणे पुण्यं भस्मादाने च तद्वद ॥ १

शंभुरुवाच—

भस्मोत्पत्तिं प्रवक्ष्यामि सर्वपापप्रणाशिनीम् । स्मरणात्कीर्तनाद्राम तां शृणुष्व नराधिप ॥ २
य एकः शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः । त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः ३
सिसृक्षा तस्य जाताऽथ वीक्ष्याऽऽत्मस्थं गुणत्रयम् । वेदत्रयमिदं [1]ज्ञेयं गुणत्रयमिदं हि यत् ॥४
पृथक्कृत्वाऽऽत्मनस्तात तत्र स्थानं विभज्य च । दक्षिणाङ्गेऽसृजत्पुत्रं ब्रह्माणं वामतो हरिम् ॥५
पृष्ठदेशे महेशानं त्रीन्पुत्रानसृजद्विभुः । जातमात्रास्तु ते पुत्रा ब्रह्मविष्णुमहेश्वराः ॥ ६
इदमूचुर्वचः स्पष्टं को भवान्के वयं त्विति । तानाह च शिवः पुत्रान्यूयं पुत्रा अहं पिता ॥ ७
इदं गुणत्रयं पुत्रा भजध्वं कर्महेतुकम् ॥ ८

पुत्रा ऊचुः—

कं वा गुणं को भजते कियन्तं कालमीश्वर । कथं गुणनिवृत्तिश्च भवेदेतद्वदस्व नः ॥ ९

शिव उवाच—

यावज्ज्ञानं हि भवतां यावदायुरथापि वा । धारणं तावदेव स्यादेकैकस्य गुणस्य च ॥ १०
सत्त्वं ब्रह्मा रजो विष्णुर्भजेन्माहेश्वरस्तमः । इत्युक्तमात्रे देवेशे ब्रह्मा सत्त्वमथाग्रहीत् ॥ ११
न च चालयितुं शक्तो धारणे किमु शक्तिमान् । तं गुणं तु तिरस्कृत्य रजोगुणमथाग्रहीत् ॥ १२
न च चालयितुं शक्तो जग्राहाथ तमोगुणम् । न च चालयितुं शक्तो निपपात रुरोद च ॥ १३
विष्णुश्च वामहस्तेन रजोगुणमधारयत् । अङ्गुलीभ्यां महेशोऽपि तमोगुणमधारयत् ॥ १४
सत्त्वमेकोऽङ्गुलीभ्यां च सत्त्वं विष्णुमथादधात् । ब्रह्माणं पादपीठे च दधार च ननर्त च ॥१५
नृत्यन्तमत्यन्तविलासरूपं गोक्षीररूपं तरुणं त्रिनेत्रम् ।
सर्वं दधानं कृतकौतुकं शिवं समीक्ष्य पुत्रान्व(त्रं व)रदो बभाषे ॥ १६

शिव उवाच—

प्रीतोऽस्मि तव पुत्राहं वरं वृणु यथेच्छि(प्सि)तम् । अथाऽऽह पितरं पुत्रो वरमेतं ददस्व मे १७
मामुद्दिश्य कृता पूजा तव पूजा भवेच्छिव । तिष्ठेर्मयि सदा त्वं च त्वमेवाहं च वाऽव्यय ॥१८

शिव उवाच—

एवमेव महाभाग भविष्यति न संशयः । रक्तगौराविमौ पुत्रौ ब्रह्मविष्णू ममैव तु ॥ १९
बाहुमूलैस्थरोम्यौ च ममाकारौ तथाऽनघ । अथ ब्रह्माणमाहेदं भजत्वेकं गुणं भवान् ॥ २०

ब्रह्मोवाच—

त्वन्निर्दिष्टं गुणमहं धर्तुं शक्तो न हीश्वर । धारयिष्ये रजो देव सत्त्वं भजतु वै हरिः ॥ २१
अवशिष्टं गुणं चायमीश्वरो धारयिष्यति ॥ २२

शंभुरुवाच—

गुणानादाय ते देवा न शेकुर्नित्यधारणम् । कर्तुं भरणशक्त्यर्थं शिवमित्यवदन्युताः ॥ २३

१ ग्र. भ. गेहं । २ अ. °नस्तत्र तत्र । ३ क °ल्मियौ रम्यौ म° ।

गुणत्रयं सर्वकालं न च धारयितुं क्षमाः । दीयतां भगवञ्शक्ति यदि भोस्त्वं वरप्रदः ॥ २४
अथ तद्वचनं श्रुत्वा शिवो वाक्यमभाषत । विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते ॥ २५
गुणत्रयाश्रया विद्या त्वविद्या च तदाश्रया । गुणत्रयं च दग्ध्वैव तत्सारं धर्तुमर्हथ ॥ २६
यच्च किंचिद्भवेत्तत्र भवद्भिर्ध्रियतां हि तत् । अथाऽऽहुस्तत्सुता वाक्यं न दाहो ज्वलनं विना ॥
शिवः प्राह महेशस्य लोचने वह्निरस्ति वै । गुणत्रयमिदं धेनुर्विद्या स्याद्गोमयं शुभम् ॥ २८
मूत्रं चोपनिषत्प्रोक्तं कुर्याद्भस्म ततः परम् । वत्सास्तु स्मृतयो यस्यास्तत्संभूतं सुगोमयम् ॥२९
आ गाव इति मन्त्रेण धेनुं तत्राभिमन्त्रयेत् । गावो भगो गाव इति प्राशयेत्तु तृणं जलम् ॥ ३०
उपोष्य च चतुर्दश्यां शुक्ले कृष्णेऽथवा व्रती । परेद्युः प्रातरुत्थाय शुचिर्भूत्वा समाहितः ॥ ३१
कृतस्नानो धौतवस्त्रो गोमयार्थं व्रजेत्तु गाम् । उत्थाप्य तां प्रयत्नेन गायत्र्या मूत्रमाहरेत् ॥ ३२
सौवर्णे राजते ताम्रे धारयेन्मृन्मये घटे । पौष्करे वा पलाशे वा पात्रे गोशृङ्ग एव वा ॥ ३३
आदधीत हि गोमूत्रं गन्धद्वारेहि(ति) गोमयम् । अभूमिपातं गृह्णीयात्पात्रे पूर्वोदितेऽधिके ॥ ३४
गोमयं शोधयेद्विद्वाञ्श्रीर्मे भजतु मन्त्रतः । अलक्ष्मीर्मयीति मन्त्रेण गोमयस्यापमार्जनम् ॥ ३५
सं त्वा सिञ्चामिमन्त्रेण गोमूत्रं गोमये क्षिपेत् । पञ्चानां त्वेति मन्त्रेण पिण्डांश्चैव चतुर्दश ॥ ३६
कुर्यात्संशोष्य किरणैस्तरणेराहरेत्तु तान् । निदध्यादथ पूर्वोक्तपात्रे गोमयपिण्डकान् ॥ ३७
स्वगृह्योक्तविधानेन प्रतिष्ठाप्याग्निमिन्धयेत् । पिण्डान्विनिक्षिपेत्तत्तदर्णदेवाय पिण्डकान् ॥ ३८
आघारावाज्यभागौ च प्रक्षिप्य द्वौ हुनेत्सुधीः । ततो निधनपतये त्रयोदश जयार्वदः(दयः) ३९
होतव्याः पञ्च ब्रह्माणि नमो हिरण्यबाहवे । इति सर्वाहुतीर्हुत्वा चतुर्थ्यन्तैस्तु मन्त्रकैः ॥ ४०
रुतसर्वः कद्रुद्राय यस्य चैकंकतीति च । एतैस्तु जुहुयाद्विद्वाननाज्ञातत्रयं तथा ॥ ४१
व्याहृतीरथ हुत्वा तु ततः स्विष्टकृतं हुनेत् । इध्मशेषं तु निर्वृत्य पूर्णपात्रोदकं ततः ॥ ४२
पूर्णमासान्तयजुषा जलेनान्येन बृंहयेत् । ब्राह्मणेष्वमृतमिति तज्जलं शिरसि क्षिपेत् ॥ ४३
प्राच्यामिति दिशां लिङ्गैर्दिक्षु तोयं विनिक्षिपेत् । ब्रह्मणे दक्षिणां दत्त्वा शान्ते पुलकमाहरेत् ४४
आहरिष्यामि देवानां सर्वेषां कर्मगुप्तये । जातवेदसमेने(नं) त्वां पुलकछा(कैश्छा)द्यपाद्यमे ( कै-
श्छादयाम्यहम्) ॥ ४५
मन्त्रेणानेन तं वह्निं पुलके छा(कैश्छा)दयेदतः । त्रिदिनं ज्वलमा(ना)स्थित्यै छादनं पुलकैः स्मृतम्
ब्राह्मणान्भोजयेद्भक्त्या स्वयं भुञ्जीय(त) वाग्यतः । भस्माधिकमभीप्संस्तु ह्यधिकं गोमयं हरेत्॥
दिनत्रयेण यदि वा एकस्मिन्दिवसे बहु । तृतीये वा चतुर्थे वा प्रातः स्नात्वा सिताम्बरः॥ ४८
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः । शुक्लदन्तो भस्मदिग्धो मन्त्रेणानेन मन्त्रवित् ॥ ४९
तद्व्रेतिचोच्चारयित्वा कंभस्मसत्यं न संत्यजेत्(?) । तत आवाहनमुखा उपचारास्तु षोडश॥५०
कर्तव्याहुतिदानेन ततोऽग्निमुपसंहरेत् । अग्नेर्भस्मेतिमन्त्रेण गृह्णीयाद्भस्म चोद्धवम् ॥ ५१
अग्निरस्मीतिमन्त्रेण प्रमृज्य च ततः परम् । संयोज्य गङ्गासलिलैः कपिलांपयसाऽथवा ॥ ५२
चन्द्रकुङ्कुमकाश्मीरमुशीरं चन्दनं तथा । अगुरुद्वितयं चैव चूर्णयित्वा तु सूक्ष्मतः ॥ ५३
क्षिपेद्भस्मनि तच्चूर्णमोमिति ब्रह्ममन्त्रतः । ततः पयःसेचने च गादितः कपिलामनुः ॥ ५४

१ ख. ङ. च. छ. ट. ड. °तं तु गो° । २ अ. °च्छे तथा व्र° । ३ ख. ङ. च. छ. ट. ड. °ञ्श्रीर्मा भ° । ४ अ. °वदे । हुत° । ५ अ. दिव्यानि । ६ क. °श्चैकाहश्चाति द्विजः । ए° । ७ ख. अ. पूर्वपा° । ८ ख. अ. पुलाक° । ९ ख. अ. °म्रे भस्मे° । १० ट. °लामूत्रेणाथ° ।

अमृतं देवि ते क्षीरं पवित्रमिह बुद्धिदम् । तव प्रसादान्मुच्यन्ते मनुजाः सर्वपाप्मनः ॥ ५५
प्रणवेनाऽऽवहेद्विद्वान्बहवो वटनाकथ(न्भस्मनो वटकानथ) (?) । अणोरणीयानिति हि मन्त्रेण तु विचक्षणः ॥ ५६

श्रीशिव उवाच—

इत्थं तु भस्म संपाद्य शुष्कमादाय मन्त्रवित् । प्रणवेन विमृज्याथ सप्तप्रणवमन्त्रितम् ॥ ५७
ईशानेन शिरोदेशं मुखं तत्पुरुषेण च । उरोदेशमघोरेण गुह्यं वामेन मन्त्रयेत् ॥ ५८
सद्योजातेन वै पादौ सर्वाङ्गं प्रणवेन तु । तत उद्धूल्य सर्वाङ्गमापादतलमस्तकम् ॥ ५९
तत आचम्य वसनं धौतं श्वेतं प्रधारयेत् । पुनराचम्य कर्म स्वं कर्तुमर्हति सर्वतः ॥ ६०
ततो भस्म समादाय प्रमृज्य प्रणवेन तु । त्रिनेत्रं त्रिगुणाधारं त्रयाणां जनकं विभुम् ॥ ६१
स्मरन्नमः शिवायेति ललाटे तु त्रिपुण्ड्रकम् । नमः शिवाभ्यामित्युक्त्वा बाह्वोर्वाऽपि त्रिपुण्ड्रकम्
अघोराय नम इति उभाभ्यां च प्रकोष्ठयोः । भीमायेति ततः पृष्ठे शिरोधिपश्चिमे तथा ॥ ६३
नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः । प्रक्षाल्याथ ततो हस्तौ कर्मानुष्ठानमाचरेत् ॥ ६४

शिव उवाच—

यूयमेवंप्रकारेण भस्म कृत्वा प्रघृष्य च । गुणान्धारयितुं शक्तास्ततः स्रक्ष्यथ वै प्रजाः ॥ ६५

शंभुरुवाच—

इत्थं शिवोदिता देवा ब्रह्मविष्णुमहेश्वराः । तथा कृत्वा च विधिनाऽहमहमिकया तदा ॥ ६६
अन्योन्यबोधनार(श)क्ताः प्रणम्य शिवमूचिरे । कं गुणं धारयेत्को वा शिवः प्राह सुतानथ॥६७
कर्मशक्ति (?) तथा ज्ञानं मुखरेण्वैव नश्यति । अल्पायुर्दृश्यते ब्रह्मा मनुभिश्चास्य जीवितम् ॥६८
योऽहं ब्रह्माण्डमालाभिर्भूषितो ब्रह्मगोपनम् । रजोगुणमवष्टभ्य न च जानासि मां तदा ॥ ६९
ब्रह्माधिकबलो विष्णुरायुषि ब्रह्मणोऽधिकः । ब्रह्माण्डमालाभरणे महेशस्य ममैव तु ॥ ७०
चतुर्निश्वासमात्रेण विष्णोरायुरुदाहृतम् । ब्रह्मा त्व(ह्मणोऽ)धिकसत्त्वत्वात्सत्त्वमालम्बती(ते) हरिः
जानाति सर्वकालं मां कचिदेव न विस्मरेत् । सात्त्विकैकैव पूजाऽस्य राजसी तामसी न तु॥७२
शान्तं शिवं सत्त्वगुणं रजवत्ताऽनुमानतः । तमो नीलं तथा चैव गुणं शंभुस्तथाऽभजत् ॥ ७३
सत्त्वं रजस्तमश्चापि दधार च पुरा किल । अतश्च त्रिविधा पूजा शंकरस्य विधीयते ॥ ७४
रजश्च तमसा युक्तं दारुणं परिकीर्तितम् । दारुणाऽपि ततः पूजा शंकरे गतिदा मता ॥ ७५
रजश्च तमसा युक्तमलं शास्त्रप्रवर्तकम् । विच्छिन्नाऽपि ततः पूजा शंकरे फलदा मता ॥ ७६
तमश्च सत्त्वसंयुक्तं मिश्रकं च प्रवर्तकम् । मिश्रपूजा वि(जाऽपि)फलदा शंकरे लोकशंकरे ॥ ७७
यादृशं तादृशं वाऽपि नियमेनार्चनं विभोः । शंकरस्याऽऽशुफलदं यादृशस्यापि देहिनः ॥ ७८

शंभुरुवाच—

एतत्संक्षेपतः प्रोक्तं विधानं भस्मनोऽनघ । वक्तृश्रोतृजनानां च समस्ताघविनाशनम् ॥ ७९

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे भस्मोत्पत्तिविधानं नाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८०३४

---

१ ख. ङ. च. छ. ट. ड. मदा ।

अथ पञ्चाधिकशततमोऽध्यायः ।

शंभुरुवाच—

अत्र ते कीर्तयिष्यामि कथां पापप्रणाशिनीम् । श्रुत्वा यामाप धर्मात्मा शिवभक्तिमनुत्तमाम् १
इक्ष्वाकुर्नाम विप्रेन्द्रो महाविद्यो महामतिः । बहुशास्त्रप्रवीणश्च नीतिशास्त्रविशारदः ॥ २
न यष्टा न च दाता च न देवानां च पूजकः । न चाध्यापयिता वेदं न चाऽऽख्याता श्रुतस्य च
न पुराणेतिहासानां श्रुतीनामागमस्य वा । यत्नाद्गोक्ता तथा देहसंस्कारैकप्रवर्तकः ॥ ४
तादृशस्य द्विजस्याथ समालक्ष्या(क्षा)गुरत्यगात् । लक्षान्तरे तथैकस्मिन्वत्सरे मासि पञ्चमे ॥ ५
तृतीयदिवसे राज्यां पुराणं श्रुतवानिदम् । स्वसंपादितवित्तस्य येन दानं न वै कृतम् ॥ ६
दिने दिने भुज्यमानं निःसारं स्यात्क्रमेण हि । वर्षाण्येव च तावन्ति नरके पच्यते ध्रुवम् ॥ ७
कृमियोनिसहस्रं च ह्यनुभूय ततः परम् । दरिद्रो व्याधितोऽबन्धुर्दुष्टभार्यो बहुप्रजः ॥ ८
दिने दिने भक्षितेन याचितेन च जीवनम् । यत्र क्वापि च बीजानां मग्नानामथ मार्गणात् ॥ ९
लब्धे जीर्नाचनं कर्म(?) भृत्यानामथ जीवनम् । मध्ये श्रोत्रविहीनश्च नेत्रहीनः स्खलन्मलः १०
एवं पुराणं श्रुत्वाऽसाविक्ष्वाकुर्भृशदुःखितः । मनसाऽचिन्तयच्चेदं स्मारं स्मारं द्विजाधमः ॥ ११
रूपपुष्पैर्माहिष्मयी(?) दुर्गाऽपि फलवर्जिता । तथा पुराणरहिता विद्या नो गतिदर्शिनी ॥ १२
बहुशास्त्रं समभ्यस्य बहून्वेदान्सविस्तरान् । पुंसोऽश्रुतपुराणस्य न सम्यग्याति दर्शनम् ॥ १३

शंभुरुवाच—

एवं चिन्तयतस्तस्य ह्यकालमरणं त्वभूत् । यमलोकं गतश्चायं यमेन परिभाषितः ॥ १४

यम उवाच—

अनेकपापयुक्तोऽसि पुण्यं नैव महत्तव । नवेदाध्यापनात्प्राप्तं पापं च विदितं तव ॥ १५
कोटिवर्षाणि नरके तव स्थितिरिति द्विज । आयुरस्ति तत्रात्यल्पं गम्यतां पौर्विकी तनुः ॥ १६
कुरु पुण्यं हितं दानं देवतापूजनं जपम् । साङ्गमध्यापनं विप्रभोजनं भस्मधारणम् ॥ १७
भज विश्वेश्वरं देवं देवदेवमुमापतिम् । तस्य प्रयत्नमात्रेण मम लोकं न गच्छसि ॥ १८
यत्किंचित्प्रत्यहं पापिन्पुराणं शृणु सादरम् । ततस्तच्छ्रवणादेव नेक्षसे मम यातनाः ॥ १९
यमस्य वचनं श्रुत्वा ब्राह्मणः स्वां ययौ तनुम् । अथेशपूजनकृते यत्नमास्थाय स द्विजः ॥ २०
आगमन्मुनिवर्यं तु जाबालिं शिवपूजकम् । तपःस्वाध्यायसंपन्नं श्रुतिस्मृतिविवेचकम् ॥ २१
पुराणतत्त्ववेत्तारं लक्षशिष्यसमावृतम् । जराशिथिलसर्वाङ्गं वेदवेदाङ्गपारगम् ॥ २२
द्रष्टुकामो ययौ शैलं मन्दरं चारुकन्दरम् । नानाविहंगसंपूर्णं नानापुष्पलतावृतम् ॥ २३
सर्वर्तुकुसुमोपेतं नानागन्धोपशोभितम् । किंनराणां च मिथुनैर्गीतपूर्णमहागुहम् ॥ २४
अनेकरूपलावण्यवनितोषितपादपम् । लम्बमानविचित्राभिः स्रग्भिः शोभितपादपम् ॥ २५
रतिश्रमप्रसुप्तानां बोधनादितषट्पदम् । कूजन्ति च पिकाः कामं वियुक्तानां युजे किल ॥ २६
नानामुनिगणाकीर्णं प्रशान्तमृगचारिणम् । अप्सरोगणसंकीर्णं गन्धर्वगणसेवितम् ॥ २७
नानासिद्धमुखोद्भूतगीतपूर्णवनान्तरम् । विचित्रफलसंपूर्णं नानादेवालयान्वितम् ॥ २८

---

१ ख. ङ. च. छ. ट. °नावनं । २ क. °कामम° । ३ ख. अ. °वनतो° ।

प्रासादशतसंबाधं नानागृहसमन्वितम् । सिंहाननैर्गजमुखैरुलूकवदनैरथ ॥
अमुखैर्विमुखैरुग्रैरर्धवक्त्रैर्मृगीमुखैः ॥ २९
रुरुजम्बुकगोधाहिवानरर्क्षमुखैरपि । व्याघ्रवृश्चिकभल्लूकश्वानगर्दभतुण्डकैः ॥ ३०
समस्तजीववदनैः सहस्रास्यैर्गणेश्वरैः । वल्लीमुखैर्वृक्षमुखैः शिलावक्त्रैरयोमुखैः ॥ ३१
शङ्खमुक्तादिजलजवदनैरुपशोभितम् । अधिकाङ्गैरनङ्गैश्च जटिलैः शिखिमुण्डितैः ॥ ३२
पत्रिवक्त्रैर्विषवक्त्रैस्तिमिग्राहमुखैरपि । घटास्यैः शूर्पवदनैः कर्णपादमुखैरपि ॥ ३३
घण्टामुखैर्वेणुमुखैः किङ्किणीवदनैरपि । यादृग्वस्तु जगत्यस्मिंस्तादृशास्यैरधोमुखैः ॥ ३४
कैश्चिन्निभृतकंदर्परूपलावण्यकोमलैः । कोटिसूर्यप्रतीकाशैश्चन्द्रकोटिसमप्रभैः ॥ ३५
नानावर्णैर्विश्वमुखैर्विश्वरूपैश्चतुर्मुखैः । द्विमुखैः पञ्चवक्त्रैश्च त्रिमुखैः षण्मुखैरपि ॥ ३६
एकानेकमुखैः शान्तैः सर्वदा सुखिभिर्युतम् । नानाभोगसमृद्धैश्च रतिकामसमैरपि ॥ ३७
लक्ष्मीनारायणप्रख्यैरुमेशसमविग्रहैः । नानारूपधरैश्चान्यैः सेवितं मन्दराचलम् ॥ ३८
धेनवो यत्र वेदाश्च मीमांसावत्ससंयुताः । धर्मादयः सवर्ष्माणः पुराणानि च कर्मणा ॥ ३९
स्मृतीतिहासजातानि आगमाश्च शरीरिणः । स्थिताश्च मन्दरे[१] यत्र स शैलः पापनाशनः ॥ ४०
तस्य मध्ये महापुण्यं पुरं परमशोभितम् । वापीतडागोपवनप्रासादशतशोभितम् ॥ ४१
सप्तप्राकारपरिखं रत्नाट्टालकसंयुतम् । गोपुरैर्नवभिर्युक्तं विचित्रगृहसंयुतम् ॥ ४२
यस्य चाप्रतिमं तेज उष्णशीतादिवर्जितम् । तन्मध्ये नगरी पुण्या तन्मध्ये च सभा शुभा ॥ ४३
तस्यां भद्रासनं मध्ये वेदपादं विचित्रितम् । सर्वोपनिषदाकृतं पादपीठं सुशोभनम् ॥ ४४
पुराणान्यागमास्तस्य स्वस्तीति शिवपादयोः । तत्राऽऽसीनो महायोगी गोक्षीरसदृशाकृतिः ॥ ४५
मन्दस्मितसुचार्वास्यो ह्यष्टवर्षवयाः प्रभुः । दधार उरसा मालां मणिरुद्राक्षकल्पिताम् ॥ ४६
बिभ्राण उपवीतं च कर्णिकारसमद्युतिः । सुरत्नकुण्डलो देवः किरीटकनकाम्बरः ॥ ४७
नानाभूषणसंयुक्तो नानागन्धविलेपनः । वामाङ्कारूढगिरिजो वीक्षमाणस्तदाननम् ॥ ४८
मुग्धां नम्रमुखीं बालां नवयौवनशोभितां । भूषितां चारुसर्वाङ्गीं बिभ्रतीं कनकाम्बुजम् ॥ ४९

आलिङ्ग्य वामेन करेण देवीं दक्षेण तस्या मुखमुन्नमय्य ।
स्पृष्ट्वा शिरो वामकरेण तस्या दक्षेण कुर्वंस्तिलकं च देवः ॥ ५०

भक्तिर्वीजयते देवं प्रणवव्यजनेन च । पूजा कान्ताऽपि कुसुमैर्माला देवाय बिभ्रती ॥ ५१
शान्तिर्विरक्तिर्वनिते बिभ्रत्यौ योगचामरे । समाधिः कार्यकर्ताऽस्य धारणा योषिदस्य च ॥ ५२
यमाश्च नियमाश्चैव किंकरास्तस्य कीर्तिताः । प्राणायामः पुरोधास्तु प्रत्याहारः सुवर्णधृत् ॥ ५३
ध्यानं च द्रविणाध्यक्षः सत्यं सेनापतिस्तथा । ब्रह्मप्रभृतिकीटान्ताः पशवस्तत्पतिः शिवः ॥ ५४
पशूनां पालको धर्मः स्यादधर्मश्च तस्करः । मायापाशेन ते बद्धा मोचनी काशिकापुरिः ॥ ५५
नानाविधाश्च प्रमदा देवदेवमुमापतिम् । एतादृशमुमानाथं कोटिजन्तुरनुस्मरेत् ॥ ५६
इष्टान्भोगानवाप्याथ शिवलोके महीयते । ब्रह्मविष्णुमहेन्द्राद्यास्तत्पुरद्वारपालकाः ॥ ५७
लक्ष्मीसरस्वतीदेव्यौ देहल्यर्चनं उक्षितौ । नियुक्ते देवदेवस्य देवाश्च सुरयोषितः ॥ ५८
दास्यो देवाः समस्ताश्च दासा यस्य महात्मनः । एतादृशं महाशैलमिक्ष्वाकुः संददर्श ह ॥ ५९
मुनिं प्रणम्य जाबालिमिदमाह वचस्तदा । गन्तुकामो महाशैलं न शक्तोऽस्मि न वा मुने ॥ ६०

१ झ. ञ. मन्दिरे । २ क. °हशोभित° ।

ममाऽऽयुरल्पं कथितं यमेन ज्ञानिना पुरा । नरकश्च बहुः प्रोक्तः कथं श्रेयो भविष्यति ॥ ६१

जाबालिरुवाच—

मयाऽपि सर्वमेतत्ते ज्ञातं दिव्येन चक्षुषा । आयुर्दशदिनं ब्रह्मन्विद्वानपि न धर्मकृत् ॥ ६२

न तपस्ते ज्ञानभ्यासाच्च च योगोऽल्पकालतः । न दानं द्रविणाभावादसामर्थ्यात्तथाऽर्हणा॥ ६३

न यज्ञो न व्रतं पूर्तं न च पुण्यमनाश्रयः । न चाध्यापनतीर्थादिसेवा कालविरोधतः ॥ ६४

तस्मात्त्वत्पापनाशाय प्रायश्चित्तं न विद्यते । गतिप्रदं तथा धर्मं गच्छ वा तिष्ठ वा मुने ॥ ६५

इक्ष्वाकुरुवाच—

यावज्जीवं प्रतिज्ञाय क्रियते यो वृषो द्विज । तेन पापपरीहारो भविष्यति सुनिश्चितम् ॥ ६६

तद्येन धर्मचर्येण मम पापं प्रणश्यति । केन वा पुण्ययोगेन स्वर्गतिश्च भविष्यति ॥ ६७

शरणं भव विप्रर्षे नरकादिति बिभ्यतः । सर्वधर्मफलं प्राहुः शरणागतपालनम् ॥ ६८

जाबालिरुवाच—

सत्यं स्वल्पेन कालेन न तादृग्लभ्यते वृषः । अमृते त्वनृते शक्यं वक्तुं स्वप्नान्तरेष्वपि ॥

रहस्यमेकं किंचित्तु यस्य कस्यापि नोच्यते ॥ ६९

इक्ष्वाकुरुवाच—

शरणं पालय मुने कालो मे निर्गमिष्यति ॥ ७०

जाबालिरुवाच—

मम प्राणाधिकं विप्र रहस्यं श्रुतिचोदितम् । शिवलिङ्गार्चनं नाम ब्रह्मादिभिरनुष्ठितम् ॥ ७१

समस्तपापशमनं सर्वोपद्रवनाशनम् । भुक्तिमुक्तिप्रदं तस्माच्छिवपूजां समाचर ॥ ७२

नातिक्रामेद्यदि मुने शिवलिङ्गार्चनं शुभम् । यः शंभुपूजां विच्छिन्द्यात्तेन च्छिन्नं हि मे शिरः ७३

वरं शूलविनिक्षेपो वरं शाल्मलिकर्षणम् । वरं प्राणपरित्यागो नैव पूजाव्यतिक्रमः ॥ ७४

वरं वह्निप्रपतनं वरं चाधः शिरः कृतम् । वरं स्वमलभुक्तिर्वा नेशपूजाव्यतिक्रमः ॥ ७५

अपूजयित्वा चेशानं यो हि भुङ्क्ते नराधमः । पापानामन्नरूपाणां तस्य भोजनमुच्यते ॥ ७६

अनुच्चार्य पदं शंभोर्भुङ्क्ते यदि च खादति । शिवेति मङ्गलं नाम यस्य वाचि प्रवर्तते ॥ ७७

भस्मी भवन्ति तस्याऽऽशु महापातककोटयः । शिवं प्रदक्षिणीकृत्य यो नमस्यति मानवः ॥ ७८

भूमेः प्रदक्षिणं कृत्वा यत्तत्पुण्यमवाप्नुयात् । प्रदक्षिणत्रयं कृत्वा नमस्कारं च पञ्चधा ॥ ७९

पुनः प्रदक्षिणं कृत्वा नत्वा मुच्येत पातकैः । सर्ववाद्यानि यः कुर्यात्कारयेद्वा शिवालये ॥ ८०

बलेन महता युक्तो वेदसेव्यत्र जायते । श्रावयेद्यः पुराणानि देवदेवं त्रिलोचनम् ॥ ८१

सर्वपापविनिर्मुक्तो वसेच्छिववशे कृती । तं नित्यमादरेणेशो वक्ति वाक्यं प्रियं सदा ॥ ८२

[*जाबालिरुवाच]—

एतत्संक्षेपतः प्रोक्तमीशपूजनमुत्तमम् । अल्पायुश्च भवान्विप्र शिवपूजनमाचर ॥ ८३

त्रिकालं वा द्विकालं वा एककालमथापि वा । यामं यामार्धमथवा शिवपूजनमाचर ॥ ८४

वानप्रस्थाश्रमो भूत्वा वानप्रस्थकृताश्रयः । वानप्रस्थप्रसूनैश्च प्रातः पूजय शंकरम् ॥ ८५

श्रीफलैः शतपत्रैश्च पद्मसौगन्धिकैरपि । नीपैर्जपाभिः पुन्नागैः करवीरैश्च पाटलैः ॥ ८६

---

* इदमधिकम् ।

---

१ क. °ध्ययन° । २ ट. °वपुरे कृ° ।

तुलस्या च रविदलैरपराजितया तथा । अपामार्गदलै रुद्रजटाधमनकेन च ॥ ८७
सर्वैरेभिः समफलैर्बिल्वपत्रैश्च धूर्तकैः । द्रोणैः शिरीषैः शक्तै(क्रै)श्च दूर्वया कोरकैरपि ॥ ८८
नन्द्यावर्तैरक्षतैश्च तिलमिश्रैश्च केवलैः । अन्यैरपि यथाशक्ति मातः संपूजयेच्छिवम् ॥ ८९
कर्णिकारैश्च सौवर्णैर्दूर्वयाऽपि शिवार्चनम् । मुकुलैर्नार्चयेदेवं चम्पकैर्जलजं विना ॥ ९०
जलजानां च सर्वेषां पत्राणामक्षतस्य च । कुशपुष्पस्य रजतसुवर्णकृतयोरपि ॥ ९१
अन्यत्कृत्वा यथा यत्तु तैलपक्कं भवेन्नृप । न तत्पर्युषितं प्रोक्तमपूपादि गमिष्यति ॥ ९२
उक्षितं यत्फलायुक्तं तैलक्षाराम्लजीरकैः । जलेतत्प्रो(न प्रो)क्षितं मूलफलशाकादिकं नृप ॥ ९३
न च पर्युषितं प्रोक्तं गङ्गातोयं च सागरम् । महानदीजलं सर्वं केदारजलमेव च ॥ ९४
ह्रदरूपेण यत्तीर्थं कूपतीर्थेन राघव । तडागवापीसरसां कूपेनापां च यद्भवेत् ॥ ९५
तत्तीर्थतोयं सर्वं च न च पर्युषितं भवेत् । न रात्रौ जलमाहार्यं दिवा संपादयेज्जलम् ॥ ९६
शैस्तैकतं तथा धार्यं न च पर्युषितं हि तत् । एवं विदित्वा पूजां त्वं शिवलिङ्गे समाचर ॥ ९७

शंभुरुवाच—

एवमुक्तोऽथ मुनिना इक्ष्वाकुर्ब्राह्मणप्रियः । शिवपूजापरो भूत्वा दिनाष्टकमतिष्ठत ॥ ९८
नवमेऽथ दिने प्राप्ते प्रातः काले कृतार्चनः । मरणावसरे प्राप्ते शिवपूजां विधाय सः ॥ ९९
स्वान्प्राणानुपहाराय तत्याजैव महेशितुः । मृतं तमथ विज्ञाय यमदूताः समागताः ॥ १००
यमलोकप्रापका ये यत्नमास्थाय तस्थिरे । शैवाश्चापि समायाता दूता वह्निमुखादयः ॥ १०१
तेषामन्योन्यवादोऽभून्मामको मामकस्त्विति । अथत्रा मोक्षपार्णि च शिवदूतमथार्दयन् ॥ १०२
अथ वह्निमुखः क्रुद्धो यमदूतशतं तमः । महाकायस्तथा भूत्वा गृहीत्वा च करेण तत् ॥ १०३
शिरांसि च तथैकेनाऽऽपीड्य चिच्छेद शष्पवत् । मारयित्वा ततो दूतानादायेक्ष्वाकुमभ्यगात् ॥
निवेदयामास च तं वीरभद्राय धीमते । स चापि शंकरायाथ तं प्राह च महेश्वरः ॥ १०५
त्वयाऽष्टदिनपूजैव कृता कृष्णा दिने दिने । त्वमनिन्दः पुरा मां च लिङ्गं शिश्नाग्रमित्युत १०६
तेनैव पापयोगेन शिश्नेचक्रो भविष्यासि । शिश्नाग्रे विवरं चक्रं जिह्वानासादिवर्जितः ॥ १०७
पूर्वं मन्नामवक्तृत्वाद्वक्ता चापि भविष्यासि । अथेशवचनात्सोऽपि तथाभूतोऽभवत्क्षणात् ॥ १०८

शंभुरुवाच—

य इदं शृणुयान्नित्यं पुराणाख्यानमुत्तमम् । विमुक्तपापबन्धश्च शिवभक्तो भविष्यति ॥ १०९
स याति च शिवस्थाने वक्ता चापि तथा भवेत् । यश्च वक्ति कथामेनां हरेण सदृशो भुवि ११०
उक्त्वा कथामिमां पूर्वमधीरो नाम भूमिपः । स्वर्गं स गतवान्राजा कृतपापोऽथ भार्यया १११

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे विभूतिमाहात्म्ये पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८१४५

---

अथ षडधिकशततमोऽध्यायः ।

---

श्रीराम उवाच—

अयमग्निशिखो नाम वह्निः शिवगणः शुचिः । स कथं तादृशो भूतस्तन्मे वद नमस्तव ॥ १

---

१ क. छ. म. ट. ढ. °ऽदम° । २ ख. ज. शक्तश्च । ३ ढ. ससैकतं । ४ छ. ढ. °श्नवक्त्रो भ° । ५ ज. °र्जितम् । पू° ।

शंभुरुवाच—

अयमासीत्पुरा कश्चित्क्षत्रियः क्रोधनः सदा । नष्टभार्यो नष्टसेनो नष्टराष्ट्रोऽतिदुःखितः ॥ २
लब्ध्वा लुलायद्वितयं कृषिं चक्रे सहाऽऽत्मजैः । ऋणेन महता युक्तः पुनश्चातीव दुःखितः ॥ ३
पुनश्च दुःखितो राजा सर्पेण सुतनाशनात् । तथाभूतो महीपालस्तत्याज कृषिमप्युत ॥ ४
परित्यज्य सुतौ चापि त्यक्ताहारो रुरोद ह । सुतावथ समागम्य प्राहतुः पितरं त्विदम् ॥ ५

पुत्रावूचतुः—

किमर्थं रुद्यते तात नष्टो नाऽऽयाति रोदनात् । शरीरशोषणायाथ शोकस्तेऽद्य भविष्यति ॥ ६
शोकेन चक्षुषी नष्टे कण्ठो नष्टस्तथा तव । अनुष्ठानं तथा नष्टं किमर्थं परितप्यसे ॥ ७
एको नष्टो न चाऽऽयाति रक्ष पश्च स्थितानमून् । बहूनां रक्षणं पुण्यमाश्रितानां विशेषतः ॥
अन्याश्रितममुं शत्रुं कथं शोचितुमर्हसि ॥ ८

पितोवाच—

पुत्रः शत्रुः कथं पुत्रौ युवां शत्रू तथा च मे । अत्यन्तसुखिनं पुत्रं कथं शत्रुमभाषतम् ॥ ९

सुतावूचतुः—

जायमानो हरेद्भार्यां वर्धमानो हरेद्धनम् । म्रियमाणस्तथा प्राणाञ्शत्रुस्त्वं किमतः परम् ॥ १०
यत्सुखं च त्वया प्रोक्तं स्पर्शनालिङ्गनादिभिः । दुःखोदर्कमिदं राजन्सर्वमेतद्वदामि ते ॥ ११
प्रसूतिकाले पुत्रस्य भार्यानाशविचारणा । जीवितायामथो पत्न्यामात्मनः सुखनाशनम् ॥ १२
योन्यशुद्धौ तु जातायां संयोगो नोपपद्यते । आलिङ्गनपरे गाढं स्तन्येनाङ्गं *परिप्लुते ॥ १३
तथाऽपि यदि संयोगः शिशुरोदनता स्त्रियाः । इदं शिशुगतं चित्तं ततो वैरस्यमेव च ॥ १४
अथ चेत्पतितो डिम्भो मध्येमैथुनमुद्रतिः । रतिमध्ये तु विच्छेदे दुःखं किंचिदसंनिभम् ॥ १५
सर्वकाले परिमिते कदाचिद्रतिसंभवः । तत्काले भोजनं नास्ति स्वापो नास्ति च भार्यया ॥ १६
शिशूनां रक्षणे दुःखं व्याधिसर्पग्रहादिभिः । तन्मतं यत्सुखं चित्रं यथाऽङ्गारोहणं पितुः ॥ १७
आलिङ्गनकृतं तात चुम्बनादिकृतं तथा । अव्यक्तमधुरोक्त्यादि यत्सुखानि नरेश्वर ॥ १८
रतिमध्ये विरामस्य कलां नार्हन्ति षोडशीम् । अन्यान्यपि च दुःखानि सन्ति पुत्रे सहस्रशः ॥ १९
अनेन किं त्वं क्रियसे इहामुत्र विरोधिना । त्यज शोकमिमं तस्मादावां पुत्रौ स्थिताविह ॥ २०

राजोवाच—

त्यजामि शोकं दुर्वारं सर्वकार्यविरोधिनम् । आत्मनश्च हितं कार्यमिहामुत्र सुतौ मम ॥ २१
पुरोधसं तु गच्छामि मम पूर्वं महागुरुम् । वसिष्ठं मुनिवर्यं च स दास्यति गतिं मम ॥ २२
एवमुक्त्वा गतो विप्रं वाराणस्यां स्थितं गुरुम् । दण्डवत्प्रणनामाथ मुनिना परिपूजितः ॥ २३
आलिङ्गितः शिरोघ्रातो दत्तासनपरिग्रहः । उक्तश्चाऽऽगमनं किं ते किं कार्यं करवाणि वै ॥ २४

राजोवाच—

गतिं प्रयच्छ मे विप्र संसारतारणाय हि । खिन्नोऽहं कर्मणा शश्वद्भवन्तं शरणं गतः ॥ २५

वसिष्ठ उवाच—

गतिं पश्य महालिङ्गं विश्वेश्वरमिति स्थितम् । एनं पूजय राजेन्द्र देवदेवं पिनाकिनम् ॥ २६

---

* विकरणाभाव आर्षः ।

---

१ ट. प्रब्रूहि मे ब्रह्मन्परलोकभयप्रदम् । इह राज्यप्रदं पश्चादेतन्मनसि वर्तते । वसि° । २ ठ. इदं । ३ ट. श्रुतम् ।

यमाराध्य पुरा शक्तिररुन्धत्याः सुतो मुनिः। रक्षसा भक्षितश्चापि यमलोकं गतो न सः ॥ २७
किंचित्कालं गतः स्वर्गं ब्रह्मलोकमगादतः। ब्रह्मलोकाद्विष्णुलोके क्रीडकास्ते सुतो मम ॥ २८
अमुं पश्य महाराज लुब्धकं वनचारिणम्। पूजयन्तं हि विश्वेशं पत्रमात्रैः स्वसंभृतैः ॥ २९
शमीवृक्षस्य संभूतैस्तथा पूगप्रसूनकैः। कदम्बकुसुमैरर्ककुसुमैर्यूथिकाभवैः ॥ ३०
एतैरन्यैर्महेशानं पूजयन्तं विलोकय। इतोऽर्धयाममात्रेण मरिष्यति तदद्भुतम् ॥ ३१
अन्तकाले समायाते लुब्धकोऽपि शिवाय वै। उपहारप्रदानाय दृष्टवान्पार्श्वतो घटम् ॥ ३२
तं चूतफलसंपूर्णं शुना स्पृष्टं विगर्हितम्। संकल्पितोपहारस्य ह्यभावाल्लुब्धकस्तथा ॥ ३३
इदं जगौ शुभं वाक्यं लोकानां भक्तिसूचकम्। पुष्पाभावे हरिर्नेत्रं फलाभावेऽङ्गुलं रविः ॥ ३४
लिङ्गविस्रंसने कं च जमदग्निऋषिस्तथा। लिङ्गपीठं भवेदेव गात्रं निर्भिद्य दत्तवान् ॥ ३५
अन्यैर्माहेश्वरैरन्यत्साहसं परमं कृतम्। ममापि तत्तथा कार्यमन्यथा दोषभागहम् ॥ ३६
एतस्मिन्नन्तरे कश्चिदुन्मत्तः शिवमभ्यगात्। अथ लुब्धकृतां पूजामाहृत्याभक्षयत्क्षणात् ॥ ३७
वमनं च तदा चक्रे शिवपीठेऽथ लुब्धकः। शिवापकारिणं चैनं हन्मि नो वेत्यचिन्तयत् ॥ ३८
अथ स्वात्मवधायैव यत्नमास्थाय शंकरः। उन्मत्तेन यथोऽद्भुक्ता शिवपूजा मया कृता ॥ ३९
लिङ्गावरणे ह्येषा तदहं मम देहिनः। प्रावृतिस्त्वप्रियां त्वद्य निर्मोक्तव्या मया द्रुतम् ॥ ४०
पूजाविमोचनायैतत्फलहानेर्गलं त्यजेत्। इत्थं संकल्प्य स तदा तीक्ष्णस्वधितिनाऽद्भुतम् ॥ ४१
चक्रे त्वचं दक्षपादं त्वचं छित्त्वा कटेरधः। वामपादं तथा चक्रे कटिपर्यन्तमाशु च ॥ ४२
हृष्टश्चावेपितश्चैव तत ऊर्ध्वमथाच्छिनत्। करांसोदरहृत्कण्ठत्वचं निर्भिद्य लुब्धकः ॥ ४३
मस्तकस्य त्वचं चापि निर्बिभेद प्रहृष्टवान्। तयोरन्तरतस्तस्माद्गात्रं निर्भिद्य वर्तुलम् ॥ ४४
छित्त्वाऽङ्गुलीं समादाय देवायार्पितवांस्त्वचम्। आरादेव तथा दिव्यरूपः स्वक्षश्चतुर्भुजः ॥ ४५
नानाभूषणसंयुक्तः स्थितो वियति शांकरः। अथ शैवाः समायाता वृताः शतसहस्रशः ॥ ४६
विचित्रमुकुटाकाराः सर्वाभरणभूषिताः। त्रिशूलपाणयः सर्वे शुद्धस्फटिकसंनिभाः ॥ ४७
चतुर्भुजाः सुरूपाश्च विमानवरसंस्थिताः। सर्वे सूर्यसमाः शान्ता रम्भावत्प्रियया युताः ॥ ४८
सूनुपत्नीबलोत्साहविलासस्त्रीशतान्विताः। तेजसा सूर्यसदृशाः पुष्पवृष्टिमवाकिरन् ॥ ४९
तैराहूतो लुब्धकश्च नागच्छदवदच्च तान्। भार्याबन्धुजनोपेतो गच्छेऽहमथवा न वा ॥ ५०
शैवास्तद्वचनं श्रुत्वा वाक्यमेतदथोचिरे। येन पुण्यं कृतं पापं तेन भोग्यं हि तत्फलम् ॥ ५१

लुब्धक उवाच—

अशैवानां च सर्वेषां धर्माणामेककर्तृकम्। माहेश्वराणां धर्माणां फलं च द्विबहुष्वपि ॥ ५२
एतस्मिन्नन्तरे प्राप्तो वीरभद्रः शतार्कभः। नानाकोटिगणोपेत एहि लुब्धक बन्धुयुक् ॥ ५३
सर्वं त्वयोक्तं च तथा सभार्यो ज्ञातिबन्धुयुक्। आरुह्येदं विमानं च शिवं गच्छ शिवं तु वः ॥
अथ तद्वचनात्प्राप्तः शिवलोकं विमानगः ॥ ५४

वसिष्ठ उवाच—

दृष्टवानसि सर्वं त्वमीशपूजां समाचर। विमुक्तपापबन्धस्त्वं शिवलोकं गमिष्यसि ॥ ५५
यदि राज्यं त्वया प्रार्थ्यं मार्जयेशाङ्गणं नृप। गोमयोदकलेपं च नित्यमेव समाचर ॥ ५६
एतावता भूमिराज्यं ध्रुवं तव भविष्यति। यावदायुश्च ते राज्यमन्ते शिवपदं भवेत् ॥ ५७
नैतस्मिंस्तु भवे राज्यसंसिद्धिरनुमृत्युतः। अतो देहान्तरं प्राप्य शिवसेवाप्रभावतः ॥ ५८

भविष्यति च ते राज्यं शिवभक्तिः स्थिरा तथा ॥ ५९

शंभुरुवाच—

अथ कृत्वा तथा पूजां मृतः स्वर्गं गतस्ततः । राजजन्म पुनः प्राप्य राज्यं चक्रे शिवे रतः ६०
कदाचिदथ देवस्य गृहमभ्यगमन्नृपः । नानादीपसमोपेतं मणिभिर्नागराडिव ॥ ६१
भटानामथ संमर्दे एको दीपोऽपतन्नृपे । तदाऽसौ कुपितो राजा दीपमादाय सत्वरम् ॥ ६२
देवालयपुरे वीर न्यक्षिपत्कोपसंयुतः । दग्धं देवगृहं तेन एनश्च समपद्यत ॥ ६३
अथ देवपुरस्तत्र दग्धवेश्मादिकं गृहम् । निर्मापयामास नृपो महेशानमथोजपत् ॥ ६४
अथ मृत्युदिने प्राप्ते राजाऽऽराधितशंकरः । भस्मस्नायी भस्मशायी जपन्रुद्रं ममार ह ॥ ६५
शिवलोकं गतः सोऽयं वीरभद्रेण भाषितः । भव त्वं गणशार्दूलो मम वै परिचारकः ॥ ६६
शंकरान्ममनिर्देशादानयस्व ममान्तिकम् । शिरोहीनो भवांश्चापि ज्वालावक्त्रो भविष्यति ॥ ६७
स उवाच महात्मानं वीरभद्रं गणेश्वरम् । चक्षुः श्रोत्रं तथा जिह्वा नासिकाऽऽस्यं शिरो गणः ॥
एतैर्विना व्यवहृतिः कथं मे संभविष्यति । अभावे शिरसः किं वा मया पापं कृतं विभो ६९

वीरभद्र उवाच—

त्वयैव स्वीकृता पूर्वं देवी परमसुन्दरी । महेशभवने नित्यं चातुर्वर्णकरङ्ककैः ॥
स्वस्तिकं सर्वतोभद्रं नन्द्यावर्तादिकं शुभम् ॥ ७०
पद्ममुत्पलमान्दोलपादौ व्यजनचामरे । त्रिशूलं शङ्खचक्रे च गदा धनुरथैव च ॥ ७१
त्रिशूलं डमरुं खड्गं वृषं भृङ्गीरिटिं शिवम् । तथाऽष्टपत्रं कमलमन्यद्यन्त्रादिकं तथा ॥ ७२
कल्पयन्ती प्रतिदिनं सेवते वृषभध्वजम् । कदाचिदथ सा वेश्या देवसद्मन्युपस्थिता ॥ ७३
राजा काराङ्किकः कश्चिद्देववेश्म समाविशत् । अथ तां दृष्टवांस्तत्र स इदं वाक्यमुक्तवान् ॥ ७४

काराङ्किक उवाच—

एकान्तसंस्थिता वेश्या युवाऽहं स्थविरो न च । स्थविरं व्याधितं षण्ढमशक्तं धनवर्जितम् ७५
अदीर्घमेहनं दीनं पुरुषं योषिदुत्सृजेत् । अश्मशूलं मलच्छिन्नं जडं दुर्गन्धदूषितम् ॥ ७६
स्वल्पमव्यसनं नारी दूरतः परिवर्जयेत् । तस्मान्मे दीयतां वेश्ये मैथुनं जीवयाऽऽशु माम् ॥ ७७

वेश्योवाच—

नियतः सर्वजातीनामिहामुत्र सुखप्रदः । पातिव्रत्यं परो धर्मः स्त्रीणामिति हि शुश्रुम ॥ ७८
यदधीना यदा वेश्या तदा नान्येन संगता । पतिव्रतेति विख्याता तस्मात्त्वं परिपालये ॥ ७९

काराङ्किक उवाच—

यदि चैवं मृतिः शीघ्रं भविष्यति न संशयः । अथ राजान्तिकं गत्वा राजानमिदमुक्तवान् ८०
वेश्या वेश्यैव नो भार्या नेति वक्तुं च नोचितम् । इत्थं राजानमुक्त्वाऽथ मण्डं चैवाऽऽरनालजम्॥
किंचिदादाय तस्यास्तु मन्दिरं गतवानयम् । निद्रावसरमालोक्य प्रसृज्य च करं ततः ॥ ८२
वस्त्रस्य विवरे तत्र मण्डं चिक्षेप दुष्टधीः । एवं कृत्वा ततो गत्वा राजानमिदमुक्तवान् ॥ ८३
राजन्निर्गत्य गत्वाऽथ वेश्याग्र्यां तव योषितम् । उत्थापयित्वा वेश्यां तां सर्वाङ्गं द्रष्टुमर्हसि ८४
उन्मुक्तबन्धमथवा वसनं पश्य यत्नतः । वेश्यावेश्माथ गतवान्राजा काराङ्किकं वचः ॥ ८५
इदमाह सनिद्रेयं पश्येमां यामि पश्यसि । स उवाच नृपं तत्र न मे युक्तमिदं नृप ॥ ८६

१ म. 'भिर्गजरा' । २ ख. ङ. छ. ड. 'थायजत् । ३ क. 'मुलसमा' । ४ झ ञ. मनच्छि' ।

तन्मातरं वा पितरं दर्शनाय नियोजय । तद्दृष्टौ सर्वमेवेदं व्यक्तमाशु भविष्यति ॥ ८७
आनीता ह्यथ राज्ञा तु माता वीक्षितुमुद्यता । वचनात्तु नृपस्यैव वस्त्रं शोधयतीव सा ॥ ८८
तत्र स्थितं मण्डमथ विज्ञायाम्बा ह्यमर्दयत् । मर्दनाद्वसनं क्लिन्नं किं तदित्याह पार्थिवः ॥ ८९
न किंचिदेव नो किंचिदिति वेश्याप्रसूरपि । बहुवाक्येन राजाऽथ वसनं वीक्ष्य शङ्कया ॥ ९०
शुक्रक्लिन्नमिदं वासः माहैतत्पश्यतामिति । अथ दृष्ट्वा समीपस्थास्तथेत्यूचुर्वचो नृपम् ॥ ९१
राजाऽथ स्वगृहं गत्वा दण्डाध्यक्षमभाषत । इदानीमेव वेश्यायाः शिरश्छिन्ध्यविचारयन् ॥ ९२
दर्शनीयं शिरस्तस्या घटिकाभ्यन्तरे मम । दण्डकश्च नृपोक्त्याऽस्यास्तथा कृत्वा ह्यदर्शयत् ॥ ९३

वीरभद्र उवाच—

एवं कृतं त्वया पूर्वं प्राप्तं च फलमद्य ते । ज्वालयैव हि वक्ता त्वं श्रोता द्रष्टा च जिघ्रसि ॥
रसं जानासि मतिमानतिक्रोधी भविष्यसि । ९४

शंभुरुवाच—

एवं ज्वालामुखो जातो राजा माहेश्वरोऽक्षमी । तस्मात्तु क्षमया(मिणा) भाव्यं परत्रेह सुखेप्सुना
य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम् । विमुक्तपापबन्धश्च शिवलोके भविष्यति ॥ ९६

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे पूजामाहात्म्यकथनं नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८२४१

---

अथ सप्ताधिकशततमोऽध्यायः ।

---

श्रीराम उवाच—

महेशनाममाहात्म्यं पूजामाहात्म्यमेव च । नमस्कारस्य माहात्म्यं दृष्टमाहात्म्यमेव च ॥ १
जलदानस्य माहात्म्यं धूपदानस्य सत्तम । दीपगन्धादिदानस्य माहात्म्यं वद मे गुरो ॥ २

शंभुरुवाच—

एकैकानाम(नां तु) माहात्म्यं विस्तरान्न हि शक्यते । संक्षेपेण च ते वच्मि शृणु राघव सादरम्
पुरा त्रेतायुगे राजा विधृतो नाम वीर्यवान् । मृते पितरि बालोऽसौ भूमिराज्येऽभिषेचितः ॥ ४
समानवयसः सर्वान्समीपस्थांश्चकार सः । ये वृद्धा ये च विद्वांसस्ते च तस्य न संमताः ॥ ५
युवानः संमता दुष्टा अकार्यकरणास्तथा । सुस्त्र्यानयनदक्षाश्च चोरकर्मविशारदाः ॥ ६
भाण्डवार्तारता लास्यनिपुणास्तस्य संमताः । वशीकरणमन्त्रज्ञा वस्त्रौषधविदस्तथा ॥ ७
गीतनर्तनशीलाश्च धूर्ता द्यूतविदः प्रियाः । पितृसंमतकर्तॄणां त्यागं चक्रे स पार्थिवः ॥ ८
विचार्य स च तैः सार्धं दुष्टैः कार्यमकारयत् । एतादृशांस्तथा चान्यान्दुष्टान्स ह युयोज ह ॥ ९
एतदुक्तमथाऽऽलम्ब्य शिष्टं सुहृदमत्यजत् । उरोमुष्टिं च फेत्कारं ये कुर्युस्तस्य ते प्रियाः ॥ १०
भगलक्षणतत्त्वज्ञा रतितन्त्रविशारदाः । राजनीतिविहीनं तद्राज्यं समभवत्तदा ॥ ११
गजाश्वरथमुष्ट्राजं गोमहिष्यादिकं च यत् । तत्सर्वं नाशमापन्नमपहारा यतस्ततः ॥ १२
रत्नानि वसु धान्यानि न दृश्यन्ते पुरे तदा । अथ भूपान्तरेणासौ निर्जितः प्रपलायितः ॥ १३

---

१ क. °ष्ट्वा महाभागस्त° । २ क. °श्छिन्धि ममाऽऽज्ञया । द° । ३ म. दृष्ट्वा मा° । ४ ङ्क. म. °न्यान्पुष्टा° । ५ ङ्क. ज. °याः । प्रमल° । ६ क. °तिमग्न° ।

महारण्यमथो गत्वा गिरिदुर्गमकल्पयत् । तत्र चाल्पपरीवारश्चोरवृत्तिं समाश्रितः ॥ १४
सुवर्णवस्त्रधान्यादि रत्नगन्धादिकं तथा । तत्र तत्र विनिर्दिश्य चोरानायान(नीय) वञ्चकान् ॥ १५
बन्धाद्यकारयत्तैस्तु द्रव्याहरणकर्माणि । यदाहारो न विद्येत तदाऽऽहारमकल्पयत् ॥ १६
गोमहिष्यादिमांसेन यद्यन्नं नोपलभ्यते । अश्वीयनरमांसेन भोजनं पर्यकल्पयत् ॥ १७
एतादृशमभूद्वृत्तं संध्योपास्त्यादिवर्जितम् । एकस्तु सचिवस्तस्य सुरापो नाम राक्षसः ॥ १८
नियुङ्क्ते सर्वकालं तमाहर प्रहरेति च । एवं रक्षोमते स्थित्वा नानादेशगताञ्नरान् ॥ १९
नृसहस्रपरीवारो ह्यादद्या(दा)दकूपालयः । स्वस्याभिमतयोषास्तु तत्र तत्र समाहरत् ॥ २०
किंचित्कालं च ता भुक्त्वा ताश्चापि समभक्षयत् । एवं हत्वा नराञ्नारी राज्यं चक्रे सुदुःसहम्
एवं वर्षसहस्रं तु राज्यं कृत्वा नराधमः । जराशिथिलसर्वाङ्गो वलीपलितदूषितः ॥ २२
निर्जीवमभवत्स्थानं समन्ताद्दशयोजनम् । अथ मृत्युदिनं प्राप्तं राज्ञस्तस्य(स्या) महात्मनः ॥ २३
मृत्युकालेऽथ संप्राप्ते स्नातं भूमिगतं नृपम् । तस्य चानुचराः सर्वे परिवार्योपतस्थिरे ॥ २४
सुरापः सचिवः प्राह किं कार्यं मम चाऽऽदिश । अथ राजा तथाऽशक्तो निर्गतायुस्तदाऽर्दितः॥
नाभेरधस्तु क्षीणासुः कथंचिद्वाक्यमुक्तवान् । त्वं सर्वकालं दैत्येन्द्र प्राहर प्रहराऽऽहर ॥ २६
इत्यथोक्त्वा ममारासौ यमदूताः समाययुः । विचित्रं बन्धने यत्नं चक्रुस्ताडनतत्पराः ॥ २७
चूर्णिता बन्धपाशाश्च हेतिदण्डाश्च चूर्णिताः । तद्गात्रस्पर्शमात्रेण तदद्भुतमिवाभवत् ॥ २८
अथाऽऽयातः स्वयं मृत्युः पाशेनैनमयोजयत् । मृत्युपाशमपि च्छिन्नं वीक्ष्य मृत्युरचिन्तयत् २९
सर्वमर्त्यमृतिर्दृष्टा दृष्टा नैतादृशी क्वचित् । इतिचिन्तापरे मृत्यौ ज्वालवक्त्रः प्रतापवान् ॥ ३०
वीरभद्रेण निर्दिष्टः सहसाऽऽयाच्च शूलभृत् । ज्वालावक्त्रमथाऽऽलोक्य मृत्युस्तूर्णं पलाययौ ३१
पलायमानं तं दृष्ट्वा मृत्युं वह्निमुखस्तदा । अरे रे चोर चोर त्वं तिष्ठ तिष्ठ क्व यास्यसि ॥ ३२
एनसो मुच्यसे चोर शूलारोपणमात्रतः । एवमाभाष्य मृत्युं तं शूलप्रोतमकल्पयत् ॥ ३३
शूलस्कन्धगतं कृत्वा दूतान्संग्रथ्य रज्जुना । पादशृङ्खलविन्यस्तानादाय नृपमध्यगात् ॥ ३४
विमानवरमारोप्य गीतवाद्यसुशोभितम् । वीरान्तिकमथो गत्वा सर्वमस्मै न्यवेदयत् ॥ ३५
वीरभद्रोऽपि तत्सर्वं शंकरायामितात्मने । नानामुनिगणैर्देवैर्ब्रह्मविष्णुपुरःसरैः ॥ ३६
सेव्यमानाय देवाय पार्वतीसहिताय च । प्रणिपत्य निवेद्याथ शूलस्थं मृत्युमेव च ॥
तूर्णीं बभूव विश्वात्मा वीरभद्रः प्रतापवान् ॥ ३७

अग्न्याननं वीक्ष्य शिवो विगर्हयन्कथं त्वयैतद्रण साहसं कृतम् ।
बिभेषि मृत्योर्न कथं यमाधिकाद्वदस्व सर्वं परमार्थतो मे ॥ ३८
प्रणम्य तं वह्निमुखोऽतिरोषान्मृत्युं समालोक्य ननर्त हर्षात् ।
उवाच चौर्यं कृतमेव मृत्युना तदेष शूलेऽपि मया प्ररोहितः ॥ ३९
विमोचयामास शिवोऽपि मृत्युं दूतानशेषाभिरुजश्चकार ।
मृत्युं समालोक्य शिवो बभाषे मन्नाम येषां मरणे समास्ते ॥ ४०
मच्चेतसामन्यधियां च नाम हीनाक्षरं वाऽधिकवर्णयुक्तम् ।
ममैव लोकं प्रददामि सत्यं ह्यनेन नाम प्रहरेति भाषितम् ॥ ४१

---

१ ख. °तदुःखितः ।

प्रशब्दमात्रं त्वधिकं हरेति पदप्रदं च पदमीरयन्ति ।
आरादर्यूंस्त्वं जपतो नमस्व मदीयवाक्यं च यमं वदस्व ॥ ४२
नतिं यजिं कीर्तिमुपास्तिमाश्रिता दास्यं च कैंकर्यमथ श्रुतिंवदाः ।
पञ्चाक्षरोक्तिं शतरुद्रियोक्तिं शिवस्य कुर्वन्ति न ते विचार्याः ॥ ४३
भस्मामरुद्राक्षविभूतिधारणो ममाग्रतो यस्तु पुराणवक्ता ।
सर्वेषु पापेष्वपि तेषु सत्सु प्रशास्म्यहं नैव यमाधिकारः ॥ ४४
ये चापि पापान्वितमायिनो नराः पराभवस्त्रादिवधूभुजश्च ।
वाराणसीमृत्युपराश्च ये वै श्रीशैलमर्त्याश्च न ते विचार्याः ॥ ४५
यूकाश्च दंशा अपि मत्कुणाश्च मृगादयः कीटपिपीलिकाश्च ।
सरीसृपा वृश्चिकशूकराश्च काशीमृताः शंकरमाप्नुवन्ति ॥ ४६

इदं नाम गृणन्ध्यायेद्यो वै हृत्पद्ममन्दिरे । त्रियम्बकं विरूपाक्षं सोमसोमार्धभूषणम् ॥ ४७
त्रिनेत्रकं त्रयीनेत्रं सोमसूर्याग्निलोचनम् । तं नमस्कृत्य दूरस्थो भव मृत्यो ममाऽऽज्ञया ॥ ४८
अथाऽऽकर्ण्य शिवप्रोक्तं मृत्युस्तुष्टाव शंकरम् । नमस्ते देवतानाथ नमस्ते देवमूर्तये ॥ ४९
सर्वज्ञाय नमस्तुभ्यं पशूनां पतये नमः । अथ देवो महादेवो मृत्युं प्राह वरं वृणु ॥ ५०
स्तोत्रेणानेन तुष्टोऽस्मि मृत्युर्वरमयाचत । त्वदीयं पालय विभो मां च शंकर पापिनम् ॥ ५१
तथेत्युक्त्वा मृत्युमीशो गच्छ वत्सेति चाब्रवीत् । यमलोकं गतः सोऽथ यमायाशेषमुक्तवान् ५२

शंभुरुवाच—

य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम् । विमुक्तः सर्वपापेभ्यो याति शंकरसंनिधिम् ॥ ५३

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८२९४

---

अथाष्टाधिकशततमोऽध्यायः ।

---

शंभुरुवाच—

अथान्यदपि निर्वच्मि प्रमदाख्यानमुत्तमम् । सुतया देवरातस्य यत्प्राप्तं नामकीर्तनात् ॥ १
देवरातसुता बाला कला नामातिरूपिणी । धनंजयसुतस्याऽऽसीद्भार्या शोणस्य धीमतः ॥ २
तावुभौ नियतौ नित्यं धर्मैकप्रवणौ शुभौ । लब्धवन्तौ निधिमथो गङ्गास्नानाय तौ गतौ ॥ ३
प्रवाहपतिते कूले मृत्तिकानयनाय तौ । कूलादादाय मृल्लोष्टं दृष्टवन्तौ महाघटम् ॥ ४
राजतं चोर्ध्वपाषाणमथ शोणः प्रियां वचः । इदमाह कथं कार्यं किं कर्तव्यं हि नो हितम् ॥ ५

भार्योवाच—

न नारीमतमालम्ब्य किंचित्कार्यं समाचरेत् । न च नार्या वदेद्गुह्यमप्रियं वा कथंचन ॥ ६
यदि नारीसमक्षं तु द्रविणं दृष्टिमापतेत् । वञ्चयीत तथा नारीमीदृशैर्वाक्यसंचयैः ॥ ७
अस्माभिर्न हि संप्रेक्ष्यं किं वा तत्र हि तिष्ठति । द्रविणं चेत्त संप्रेक्ष्यं बाधोदर्कं भविष्यति ॥ ८
अन्याज्ञातं तु यदि चेत्कुतो ज्ञानविनिश्चयः । अप्रदृष्टास्त्विदानीं चेत्प्रभृतः कोऽपि तिष्ठति ॥ ९
तिरोधानं न किंचिच्चेन्मायया कोऽपि तिष्ठति । न चेन्माया मनुष्याणां क्षेत्रपालस्तु तिष्ठति॥१०

न हि चेच्छैरवश्चेह तिष्ठति ब्रह्मराक्षसः । न सोऽपि चेन्महाबाधा राज्ञां तत्र भविष्यति ॥ ११
न च जानाति चेद्राजा व्यवहारादिसंभवः । स चेद्दुष्टमकारेण चोरबाधा भविष्यति ॥ १२
अप्रमत्तस्य भवतो महानर्थो भविष्यति । प्रायेणार्थवतां नृणां भोगलिप्सोपजायते ॥ १३
भोगाद्भोगान्तरेच्छा च सर्वानुष्ठाननाशिनी । जानाति यदि नारी स्वं भावयोगगतं तथा ॥ १४
नारी स्वतन्त्रतामेति रोषाल्लब्धप्रकाशिनी । रोषेऽविश्वासतां याति तदा दोषः पुरोदितः ॥ १५
विश्वासिनि च विश्रम्भः प्रवासे चान्यचित्तता । विश्रम्भाज्जायते स्त्रीणां नानाविधविचेष्टता १६
यं कंचित्पुरुषं दृष्ट्वा युवानं प्रीतिरापतेत् । प्रीत्या संजायते योगो योगान्मैथुनसंगतिः ॥ १७
सततं मैथुने जाते विश्रम्भान्तरमापतेत् । भवता वा तथा पूर्वं भुक्तेदानीं च भुज्यते ॥ १८
कां प्रतीच्छा तवेदानीं प्रीतिः कस्यामथापि वा । का विदग्धा सुसंस्निग्धा पुरुषादन्यतश्चरेत् १९
योऽब्रवीदथ वाक्यं तां यदि ब्रूयात्त्वमध्यसे(ध्य मे) । सर्वमेव तथा वच्मि नान्यथा वाक्यमुच्यते ॥
इत्थं प्रहृष्टतां याता तथा रूपान्तरेण च । द्रव्यमादाय यत्किंचिदनुवर्तेत्स्वतन्त्रतः ॥ २१
स मारयित्वा तां द्रव्यं गृहीत्वा पातयिष्यति । अथ पूर्वपतिमृतौ प्रविशेत्साऽऽशुशुक्षणिम् ॥ २२
वैधव्ये द्रविणं सर्वं भुक्तेदानीं च भुज्यते । इति निश्चित्य मनसा वैधव्ये समुपस्थिते ॥ २३
योनिकण्डूं समासाद्य दिवा वा यदि वा निशि । एकान्तस्थानमभ्येत्य विवृत्य वसनं भगम् २४
इदमूचे वचो दुःखादुपस्थस्थकरा सती । किं त्वया वै कृतं योने किं वा पापमुपाश्रिता ॥ २५
शिश्नस्य वाऽथवा पापं यस्त्वदन्तरवेशनात् । यच्चं कर्तृकृतं पापं मादृक्सेवाविवर्जनात् ॥ २६
अतोऽपि कण्डूसंभूतौ प्रवेशयेदथाङ्गुलीम् । विचित्रचेष्टां कृत्वा तु कण्डूबुद्धेरतः परम् ॥ २७
मर्दयित्वा कराभ्यां तत्संताड्य च विवृत्य च । असकृच्चुम्बती पादौ विवृतास्याऽतिदुःखिता २८
खट्वाकाष्ठमथाऽऽलिङ्ग्य स्तनपीडं यथाप्रियम् । अथो विचित्रचित्तत्वं ततः मैथुष्टता(?)भवेत् ॥२९
अथ वाऽह्नि पुरे स्थित्वा शाकं व्यवहृतं च यत् । आलम्ब्य वेश्मनि निशि संध्यायां विशिखासु च
कृत्वाऽन्यवेश्ममात्मानं यैः कैरप्युपभुज्यते । यथावाच्यप्रभावेन शङ्किता योग्यमाहरेत् ॥ ३१
अज्ञातं च गृहं गत्वा रमयेदेव निश्चितम् । नारी समक्षं लब्धे तु द्रविणे ह्येतदिष्यते ॥
तस्मान्ममापि भवतो न विचारप्रयोजनम् ॥ ३२

शोणक उवाच—

एवमेतन्न संदेहो गच्छ त्वं तिष्ठ दूरतः । मलमूत्रविसर्गार्थं स्थित्वा गच्छाम्यतः परम् ॥ ३३
तस्यां गतायां शोणोऽपि वस्त्रखण्डं त्वकल्पयत् । एकैकस्मिंस्तथा खण्डे त्वग्रहीद्द्रविणं बहु ॥ ३४
सैकते त्ववरं(टं) जानुदघ्नं कृत्वा ततस्ततः । क्षिप्त्वा धनं पूरयित्वा विष्ठां चक्रे ततोपरि* ॥ ३५
वस्त्राधारं घटं तं च प्रतिचिक्षेप कुत्रचित् । सर्वमज्ञातवत्कृत्वा स्नानाय प्रययौ मुनिः ॥ ३६
तस्य भार्या ततः स्नानं कृत्वा संपूज्य पार्वतीम् । गच्छेति भर्त्रा सा प्रोक्ता स्ववेश्माभ्यगमत्सती ॥
एतामेकाकिनीं ज्ञात्वा मारीचो नाम राक्षसः । भर्तृरूपमथाऽऽस्थाय कलामेतदुवाच ह ॥ ३८

मारीच उवाच—

सप्तगोदावरीतीरे पवित्रं पापनाशनम् । द्राक्षाराममिति प्रोक्तं यत्र भीमः स्वयं स्थितः ॥ ३९

* संधिरार्षः ।

१ अ. °योगं ग° । २ ख. ङ. च. छ. ट. ढ. °वं धर्मार्थं मे भविष्यति । इ° । ३ ख. अ. °निकुण्डं स° । ४ ट. °म भर्तृ° । ५ अ. प्रद्युष्टती । ६ क. च. छ. ड. साकं । ७ अ. °ते । अथा° । ८ च. °नुरन्ध्रं कृ° ।

भुक्तिमुक्तिप्रदो नृणां स्मरणात्पापनाशनः । तत्र गच्छावहे शीघ्रं त्वं तु निर्गच्छ सुन्दरि ॥ ४०
कलोवाच—
इदानीमभिषेकाय प्रवृत्तो नाभिषिक्तवान् । कथमेतादृशं त्वं हि पूर्वानुक्तं वदिष्यसि ॥ ४१
प्रकृतेरन्यथाभावमुत्पातं विदुरुत्तमाः ॥ ४२
मारीच उवाच—
भर्तुरप्रतिकूलत्वं नारीणां धर्म उच्यते । प्रतिकूलाऽनुकूला वा मम शीघ्रं वदस्व तत् ॥ ४३
तूष्णीं भूत्वाऽथ सा साध्वी भर्तेत्येव विचार्य तम् । निर्ययौ तेन सा बाला वनमध्ये गता सती॥
अथ मध्याह्नकालोऽसौ क्रियतामाह्निकक्रिया । राक्षसोऽथ वचः श्रुत्वा नानुष्ठानस्थलं त्विह ४५
यत्र तत्रास्ति गन्तव्यमितो गच्छावहे ततः । किंचित्प्रदेशं गत्वा तु गुहां वीक्ष्य सरस्तथा ॥ ४६
इह स्थानं हि मे स्थातुं कार्यं स्नानमथावदे(द)त् । इत्युक्त्वा सरसि स्नात्वा फलाहारं प्रकल्प्य च
भोजनावसरे प्राप्ते कला दध्यावुमां शिवम् । अयं धवो मम न वा इतिध्यानपराऽभवत् ॥ ४८
अथ ध्यानेन तं चोरं निश्चित्य च पतिव्रता । भीताऽतिनम्रवदना त्वश्रुपूर्णमुखी तदा ॥ ४९
कष्टमापतितं पापमित्युक्त्वा निपपात च । रुदतीं तामथो दृष्ट्वा राक्षसः पापनिश्चयः ॥ ५०
धर्षितुं तामथाऽऽरेभे न चैतद्धर्षणं प्रति । बलात्कारमथो कर्तुं पतमाने तु राक्षसे ॥ ५१
आजानुनाभिपर्यन्तं शैलं स्थानमकल्पयत् । शिलात्वमभ(गम)द्वक्त्रं राक्षसो वीक्ष्य तामथ ॥ ५२
इत्येवं तां हनिष्यामि खादयिष्याम्यतः परम् । इत्युक्त्वा भ्रामयित्वाऽसिं शिरश्छेत्तुं प्रचक्रमे॥
कलाऽहं मत्पतिर्ज्ञात्वा शापं दास्यति मा हर । इत्युक्तमात्रे वचसि शिरश्चिच्छेद राक्षसः ॥ ५४
प्राप्तायां दुर्मृतिं तस्यामथ शैवाः समागताः । दूता विचित्राभरणाः सर्वायुधधराः शुभाः ॥ ५५
एनां विमानमारोप्य शिवलोकमुपागमन् । तामागतां गिरिसुता हर्षेण [*प्रतिपूज्य च ॥ ५६
स्वपादप्रणतां शुद्धामुमा वाक्यमभाषत । पातिव्रत्येन ते तुष्टा त्वभीष्टं प्रददामि ते ॥ ५७
कलोवाच—
दासीभावं प्रयच्छ त्वं त्वत्पादाब्जं] मम प्रियम् । प्रार्थ्यैः किमन्यैर्बहुभिस्तथाऽस्त्विति शिवाऽब्रवीत्
[+इन्द्रादिवनिताभिः सा पूजिताऽथ कलानिधिः । एतस्मिन्नन्तरे प्राप्तः शोणो मुनिरथो गृहम्
न तत्र दृष्ट्वा तां भार्यां ध्यानयोगपरोऽभवत् । ]रक्षोहृतां मृतां प्राप्तां शिवालोकमुमां प्रति ॥६०
उमादत्तवरा चापि दृष्टवाञ्ज्ञानचक्षुषा । किंचिद्दुःखमुखश्चित्तं परावृत्य मुनिस्तदा ॥ ६१
श्वशुरं गतवान्सोऽथ देवरातं मुनीश्वरः । निवेद्य सर्वं सहितो विश्वामित्रमगान्मुनिम् ॥ ६२
निवेद्य तद्वसिष्ठस्य वसिष्ठोऽप्याह तान्मुनीन् । गत्वा कैलासमादौ तु दृष्ट्वा देवं महेश्वरम् ॥ ६३
अनुज्ञां शिवतो लब्ध्वा पार्वतीमन्दिरं गतः । देव्यै विज्ञाप्य तत्सर्वं यथार्थं प्रवदामि तत् ॥६४
तथेत्युक्त्वा मुनिवराः कैलासं शंकरालयम् । गत्वा प्रणम्य देवेशं वीरभद्रेण पूजिताः ॥ ६५
विज्ञापयामासुरिदं शोणभार्या हृतेति च । शिवः प्राह मुनीन्द्रांस्ताञ्ज्ञातमेव मया त्विदम् ॥ ६६
अकालमरणं तस्या आयुर्वर्षशतं स्थितम् । अकालमृत्युयुक्तानां पुनर्जीवनमस्ति च ॥ ६७
दशपुत्रप्रसवित्री रूपसौभाग्यवत्यपि । भवद्भिरिति निश्चित्य समागतमिह द्विजाः ॥ ६८

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ढ पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च छ. ट. ढ पुस्तकस्थः ।

१ ङ. अ. °थादये । इ° । २ ग. °तद्धर्षे° । ३ अ. °ममभद्व° । ४ ख. ङ. च. छ. ट. ढ. मुनीश्वरम् । ५ °म् । निवेद्य सर्वं सहितो ।

यमलोकगतानां तु सर्वमेतद्विनिश्चितम् । मम लोकगतानां च गतिरन्या न विद्यते ॥ ६९
अनया कीर्तितं नाम प्राणनिर्गमने पुरा । निष्ठा (नष्टा) यमलिपिः स्पष्टा कथमायुष्यनिर्णयः ७०
अथवा गिरिजायै च निवेदयत कृत्स्नशः । अथ ते पार्वतीपाददर्शनाय गता द्विजाः ॥ ७१
प्रणम्य मातरं सर्वे विश्वामित्रोऽब्रवीदिदम् । दीनानाथकृशाभार्यप्रनष्टपितृकाङ्शिशून् ॥ ७२
रञ्जयित्वा पुरा मातरिष्टदा त्वं सदा ह्यभूः । कला पात्री ममैवेयं[1] त्वामाराध्य पतिं त्वमुम् ॥ ७३
शोणं लब्धवती मातस्त्वत्पूजायाः फलं त्विदम् । तपसा लभ्यतेऽपर्णे दानेन यदि वाऽपि च ॥
व्रतोपवासैरथवा कला सा लभ्यते मया । एतया परिविष्टान्नं भोक्तुमिच्छामि तत्कथम् ॥ ७५

पार्वत्युवाच—

यादृशी चैव ते भार्या तादृशी दीयते मया । नैनां त्यक्तुमहं शक्ता किं वा त्वं मन्यसे मुने ॥ ७६

विश्वामित्र उवाच—

माता त्वमित्येव मया ह्यविशङ्कितमीरितम् । शोणो मुनिरयं मातस्तव विज्ञापयिष्यति ॥ ७७

शोण उवाच—

तामेव भार्यां प्रति मे प्रीतिरत्युत्कटा सति । सैव मे दीयतां भार्या चान्यथा मरणं भवेत् ॥ ७८

पार्वत्युवाच—

भार्यापती समावेव विषमौ तु विगर्हितौ । तव चासदृशी चेयं सदृशीं प्रवदाम्यहम् ॥
न च मन्मन्दिरं प्राप्तां त्यक्ष्ये देहविवर्जिताम् ॥ ७९

शोण उवाच—

यदि नो दीयते चेयं भार्यामन्यां मम प्रियाम् । राज्यं महेश्वरे भक्तिं प्रयच्छ वरमुत्तमम् ॥ ८०
भविष्यत्येवमेवैतदित्युक्त्वा चाब्रवीन्मुनीन् । भोक्तव्यमिह युष्माभिर्ममास्मिन्दिवसत्रयम् ॥ ८१
प्रतीन्दुवारे देवस्य महेशस्यैव तुष्टये । भोजनीयाः सदाकालमष्टौ विप्रा मुनीश्वर ॥ ८२
इच्छया यत्र कुत्रापि व्रतमेतदुपक्रमेत् । वत्सरे परिपूर्णे तु महाराजतमीश्वरम् ॥ ८३
चतुर्निष्कप्रमाणेन तदर्धेनैव कारयेत् । [*श्वेतवस्त्रयुगं सूक्ष्मं चामरे व्यजने तथा ॥ ८४
पादुकोपानहं छत्रं सर्वं विप्रे नियोजयेत्] । स्वशक्त्या दक्षिणां दत्त्वा ब्राह्मणांश्च विसर्जयेत् ८५
एतदुद्यापने कुर्यादादौ मध्ये तथा सुधीः । दिने दिने तथा पूजा सोमस्य परमात्मनः ॥ ८६
†तत्पुरुषस्य विद्महे महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ इति पूजामन्त्रः । ८७
स्थण्डिले पूजयेद्देवं प्रतिमायामथापि वा । एकभक्तं स्वयं कुर्याद्ब्रह्मचर्यसमन्वितम् ॥ ८८
एतत्सोमव्रतं प्रोक्तं शिवतुष्टिप्रदं शुभम् । य एवं कुरुते भक्त्या नारी वा पुरुषोऽपि वा ॥ ८९
छायेव शंकरस्यासौ नित्यमेवानुवर्तते । अद्य सोमदिनं प्राप्तं मध्याह्नात्परतो भुजिः ॥ ९०
यूयं च सर्वे मुनयः कृतपौर्वाह्णिकक्रियाः । माध्याह्निकीं क्रियां कृत्वा भोक्तुमहर्थ सत्तमाः ॥ ९१
मातुर्वचनमाकर्ण्य तथेत्युक्त्वा नमस्य च । अनुष्ठानाय ते सर्वे गता भागीरथीं नदीम् ॥ ९२
संगमे मध्यतो द्रुचे कृत्वा माध्याह्निकीं क्रियाम् । विश्वेशपूजां कृत्वा च षोडशैरुपचारकैः ॥ ९३
अथ ते पार्वतीगेहं गत्वा देवीं प्रणम्य च । लोकमातुर्नियोगेन शालङ्कायनकात्मजः ॥ ९४

---

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ड., पुस्तकस्थः । † " तत्पुरुषाय " इति चतुर्थ्यन्तः प्रसिद्धः पाठस्तथाऽपि सर्वपुस्तकेषु षष्ठ्यन्तः पाठो वर्तते । चतुर्थ्यन्तपाठस्तु युक्ततरः ।

---

1 ट. °ते चेदं दा° ।

पादप्रक्षालनमुखानुपचारानकल्पयत् । पञ्चगन्धकमादाय तान्मुनीनभ्यलेपयत् ॥ ९६
राज्यं च महदाप्नोति यो दद्यात्पञ्चगन्धकम् । पञ्चबाणसमो भूत्वा स्त्रीणां वल्लभतामियात्॥९७
विष्णवे यो हि दद्यात्तु सोऽपि मारसतो(मो) भवेत् । कामी त्वकामी यः कुर्यात्कैलासे पञ्च वत्सरान्
सर्वगन्धसमोपेतो भोगी चेष्टार्थसंयुतः । यथेष्टवर्तनो भूत्वा ततो जायेत भूमिपः ॥ ९८
कस्तूरी चन्दनं चन्द्रमगरुद्वितयं तथा । पञ्चगन्धकमाख्यातं सर्वकार्येषु शोभनम् ॥ ९९
विलिप्तपञ्चगन्धेषु ब्राह्मणेषु महात्मसु । आसीनेषु तदा प्रायाद्ब्राह्मणः स्थविरः कृशः ॥ १०० 
उन्मत्तवेषो दिग्वासा जराजर्जरितस्त्वरी । खल्वाटः श्वासकासी च बहुहिक्की क्षुधाऽन्वितः ॥
लालाप्लुतः श्मश्रुकूर्चश्लेष्मा नग्नः स्खलत्पदः । अष्टवर्षा तदा नारी सर्वाभरणभूषिता ॥ १०२
रूपलावण्यसंयुक्ता लोकोत्कृष्टस्वरूपिणी । पुरुषाग्र्यपसंयुक्तान्वीक्षन्ती च ततस्ततः ॥ १०३
गायन्ती त्वथ नृत्यन्ती तं दृष्ट्वा हसती पतिम् । प्रबाधते वृद्धधव शीघ्रमेहि क्षुधा मम ॥ १०४
आलम्ब्य त्वत्करं वृद्ध दुःखिता नित्यमस्म्यहम् । भूषणं वसनं घ्राणं स्रग्विलेपनमेव च ॥१०५
हासो गीतिस्तथा पानं मण्डनं शोभनं गृहम् । सर्वमृतुसमृद्धिश्च कामस्यैवाभिवृद्धये ॥ १०६
सर्वेषामेव कामानां रतिरेका प्रयोजनम् । सुखानि सर्वाण्येकत्र रतिरेकत्र च स्थिता ॥ १०७
तुलया तुलितं सर्वं रतिः शतगुणाधिका । तन्मादृशी समासाद्य भवन्तं किं करिष्यति ॥ १०८
इति चान्यानि वाक्यानि ब्रुवाणाऽऽगृह्य वै करे । तदुत्तरमुवाचेदं किं कुर्मो भाग्यमीदृशम् १०९
म(न) मारय वुरुक्त्या त्वं मां विज्ञायाथ चेदृशम् । एतादृशो द्विजः प्रायात्पार्वतीमन्दिरं तदा ॥
अविज्ञायैव गिरिजामिदं वचनमब्रवीत् ॥ ११०

द्विज उवाच—

अन्नार्थिनमिह प्राप्तं विद्धि मामतिथिं मुने । भोजनावसरे प्राप्तं ब्राह्मणोऽत्र हि भोजय ॥ १११
तद्भार्या वचनं प्राह क मुनिर्योषिदत्र हि । अन्धस्य वचनं सर्वमेवमेतादृशं दृढम् ॥ ११२

पार्वत्युवाच—

प्रक्षाल्य चरणावेतमासने उपवेशय । जाम्बूनदकृतेऽतीव भोजनात्तर्पय द्विजम् ॥ ११३
सुरत्नचषकोपेतममृतं ब्रह्मवादिनीम् । अरुन्धतीमथाऽऽहूय पर्यवेषयदम्बिका ॥ ११४
कला चारुन्धती चैव त्वनसूया पतिव्रता । परिवेषं पदार्थानां स्रग्गन्धाक्षतभूषणाः ॥ ११५
अकुर्वन्नम्बिकावाक्यात्षड्रसानां पृथक्पृथक् । भुञ्जानेषु तु विप्रेषु दिग्वासा ब्राह्मणाकृतिः ११६
क्षणेन बुभुजे सर्वं दातुं नो शेकुरङ्गनाः । अथ सा गिरिजा देवी स्वयं दातुं प्रचक्रमे ॥ ११७
यथादत्तमशेषं च क्षणेनाश्नाति स द्विजः । भाण्डस्थितमशेषं च भोक्तुमैच्छत्प्रियासह ॥ ११८
तथाऽम्बिका समादाय प्रादादक्षय्यमस्त्विति । अथ वामकरेणासौ भोक्तुमैच्छत्ततः सती ॥ ११९
तत्राप्यक्षय्यमेवास्तु तवान्नमिति चार्पयत् । करान्तरमथोत्पाद्य भोक्तुमैच्छद्द्विजोत्तमः ॥ १२०
एवं करसहस्रं च कृत्वैच्छद्भोजनं द्विजः । दत्त्वा दत्त्वा पुनर्देवी संतुष्टा न च कोपना ॥ १२१
न चित्तमन्यथा कर्तुं शक्यमस्या इति द्विजः । प्रक्षाल्य हस्तौ चरणौ हस्तार्पितसुगन्धवान् ॥
पार्वतीं वाक्यमाहेदं तोषितोऽहं वरं वृणु ॥ १२२

---

१ झ. म. च देहमाप्नो°। २ ट. चार्म्ने। ३ ख. ङ. च. छ. ट. ड °र्वमृतुस°। ४ ख. ङ. च. छ. ट. ड. पूर्व। ५ झ. म. °णानां हि। ६ क. °नं श्रुत्वा एव°।

पार्वत्युवाच—

मम दातुं वरं शक्तो यदि त्वं ब्राह्मणोत्तम । वरेण मम किं कार्यं शंकरो मे यतः पतिः ॥ १२३
तदाऽऽह ब्राह्मणो देवीं शंकरः कीदृशास्त्विति । सदृशोऽसौ त्वया नो वा त्वद्योग्यो नान्यथा भवेत्
स्त्रीवल्लभत्वं मय्येवं रूपदाक्ष्यं शुभाङ्गता । नो चेदेतादृशी भार्या मदधीना कथं भवेत् ॥ १२५

पार्वत्युवाच—

त्वद्भार्यावचनं श्रुत्वा तव वाक्यं तथा द्विज । अपलापस्त्वयं ब्रह्मञ्श्रुतं किं वा तथा वि(मि)षम्

ब्राह्मण उवाच—

धम्मिल्लं ते करिष्यामि ममाङ्कं त्वं समारुह । प्रचलेद्यदि ते चित्तं पातिव्रत्यं कुतस्तव ॥ १२७

पार्वत्युवाच—

मम व्रतं द्विजश्रेष्ठ शंकराङ्केकरोहणम् । अथ तच्चित्तमाज्ञाय भवान्याः परमेश्वरः ॥ १२८
अष्टवर्षवया भूत्वा सुस्निग्धकचबन्धनः । सुस्निग्धचारुनयनो गोक्षीरसमविग्रहः ॥ १२९
कोटिकंदर्पलावण्यः सर्वाभरणभूषितः । स्वपार्श्वस्थितनार्यंसे प्रसारितभुजद्वयम् ॥ १३०
गायन्मन्दं तया साकमुमया पटया(?) यथा । अथ तां पार्वतीं शंभुः करेणाऽऽकृष्य च स्मयन् ॥

विन्यस्य हस्तौ वनिताद्वयांसे गायन्समस्ताभरणः प्रसन्नदृक् ।
ननर्त चाऽऽनन्दसमृद्धगात्रो मुनीन्द्रगीतश्च सकालवेलम् ॥ १३२

एतादृशं शिवं ध्यात्वा जन्मकोटिशतेष्वपि । न दुःखं जायते तस्य सदा हर्षश्च जायते ॥ १३३
अथ स्तुतो मुनिवरैर्नारीं कृत्वा हरिं ततः । अथ सा पार्वती हृष्टा देवं प्राह पिनाकिनम् ॥ १३४

पार्वत्युवाच—

किमित्येतादृशं भावमास्थाय त्वमिहाऽऽगतः । नारीं कृत्वा तथा विष्णुं किं प्रकृत्या न चाऽऽगतौ ॥
शिवः प्राह व्रते चात्र ह्यतिथेर्भोजनं शुभम् । जाने सिद्धिमथो येषां विषादो नाभिजायते ॥ १३६
जाते विषादे तु व्रतमसम्यगिति निश्चयः । सोमवाराः समायान्ति यावन्तोऽब्दशतानि तु ॥ १३७
तावन्ति मत्पुरे देवि सर्वभोगसमन्वितः । सभार्यापुत्रबन्धुश्च वेदोक्तायुष्यजीवनः ॥ १३८
पश्चाद्वाराणसीं गत्वा मृतो मुक्तिमवाप्स्यसि(ति) ॥ १३९

शंभुरुवाच—

अथ देवे स्थिते तत्र मुनयस्त्रिः प्रदक्षिणम् । कृत्वा पञ्च नमस्कारान्पुनः कृत्वा प्रदक्षिणम् १४०
पुनश्च दण्डवत्कृत्वा विसृष्टा निर्ययुस्ततः । अथ शोणः स्वाभिमतां भार्यामाप ह्यनिन्दिताम् १४१
राज्यं च भारते वर्षे धर्मेणापालयद्द्विजः । मानुषानखिलान्भोगानवाप शिवभक्तिमान् ॥ १४२
नित्यं देवार्चनपरो नित्यं ब्राह्मणपूजकः । नित्यदाता नित्ययाजी नित्यश्रोता पुराणकम् ॥
मृतः स गतवाँल्लोकं शंकरस्य विभोः शुभम् ॥ १४३

शंभुरुवाच—

नामकीर्तनमाहात्म्यं प्रसङ्गात्परिकीर्तितम् । शृण्वतां सर्वपापघ्नं भक्तानां च तथा नृप ॥ १४४
सर्वकल्याणदं नित्यं सुभार्याराज्यदं शिवम् । शिवभक्तिप्रदं गोप्यं यस्य कस्यापि नेरयेत् ॥ १४५

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे नाममाहात्म्यकथनं नामाष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८४३९

१ झ. ञ. ब्रह्मंस्त्वयं किं । २ छ. ड. भुतम् ।

अथ नवाधिकशततमोऽध्यायः ।

श्रीराम उवाच—

खे दृश्यन्ते विमानस्था नानारूपधराः शुभाः । सर्वकामफलोपेताः सुभार्याः शतयोषितः ॥ १
सहस्रनरनारीभिः पूज्यमानाः पदे पदे । गायन्ति विंशतिर्योषा रूपलावण्यकोमलाः ॥ २
करङ्कवाहिनी चैका चामरासक्तबाहवः । तालवृन्तद्वयं नार्यो वीजयन्ति प्रगृह्य वै ॥ ३
स चक्रे चाङ्कमध्येऽस्या उपधानं तथाऽपरः । एकस्याः करयोर्हस्तं स्तावकानेकसंयुतः ॥ ४
नानाविधपरीहासकृतोत्फुल्लमुखाम्बुजः । एकैकत्र विमाने तु दृश्यते चन्द्रदीधितिः ॥ ५
[1]त्रीशतेषु विमानेषु दृश्यते ईश्वरः शुभः । एते किं पुण्यकर्तारो विष्णुमायाऽथवा मुने ॥ ६

शंभुरुवाच—

एते हि ब्राह्मणाः पुण्या गृहस्थाश्रमवासिनः । एषामेव च स ग्रामो दत्तो दशरथेन ते ॥ ७
तेषां तु ममचित्तानां कदाचिदभवन्मतिः । यथेह सुखिनः सर्वे वयं चान्योपजीविनः ॥ ८
अस्मानेवानु जीवन्ति शतशो मनुजा इह । येन पुण्येन च वयं सर्वे कामानुमोदिनः ॥ ९
सुखीकृतोपचाराश्च सर्वे राज्यसुखान्विताः । जरामरणहीनाश्च युवानः सर्वदैव हि ॥ १०
विचार्यैवं द्विजाः सर्वे वसिष्ठस्याऽऽश्रमं ययुः । आगतानथ संपूज्य वसिष्ठो वाक्यमुक्तवान् ॥
किमर्थमागता यूयं शीघ्रं ब्रूत द्विजोत्तमाः ॥ ११

द्विजा ऊचुः—

वयमिच्छामहे सर्वे सर्वसंपत्समन्विते । विमाने कामगे रोढुं तत्संपादय नो गुरो ॥ १२
तत्तेषां चिन्तितं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् । पुराणं सर्वदा विप्राः श्रोतव्यं पापनाशनम् ॥ १३
धर्मश्चार्थश्च कामश्च मोक्षस्तत्रैव दृश्यते । तथेत्युक्त्वाऽथ मुनयः पुराणकुशलं मुनिम् ॥ १४
जग्मुरङ्गिरसं श्रेष्ठं सर्वशास्त्रविशारदम् । सर्वागमपुराणज्ञं सदासत्कर्मचारिणम् ॥ १५
इदमूचुर्नमस्कृत्य वयं सफलजीविनः । कृतकृत्या वयं ब्रह्मन्साक्षाद्दृष्टोऽसि सन्मुने ॥ १६

अङ्गिरा उवाच—

यत्कार्यमागता यूयं तत्कार्यं करवाण्यहम् । पुराणं श्रोतुकामास्तु यूयमत्र समागताः ॥ १७
कीर्तयिष्ये विधाने वः समस्ताघविनाशनम् । सर्वज्ञानप्रदं देवं तत्त्वविज्ञानसंभवम् ॥ १८
शिवभक्तिप्रदं हृद्यं विष्णुभक्तिप्रदं शुभम् । विचित्रस्य गतिप्राप्तिज्ञानदं रमणीप्रदम् ॥ १९
नानाविधशुभज्ञानरतितत्त्वप्रकाशकम् । मुक्तिमुक्तिप्रधानं च विधिदर्शनदीपकम् ॥ २०
विचित्रभक्तिकथनं भक्तिसाहस्रकीर्तनम् । व्रतप्रतिष्ठादानादिभस्मपूजाविधिप्रदम् ॥ २१
पुराणं पाद्ममुदितं ब्रह्मपद्मोपनिर्वृतम् । महेश्वरेण कथितं प्रमथाकृतिवर्णनम् ॥ २२
एतदन्यत्र कथितं पुराणे पाद्म एव तु । दिलीपेन पुरा पृष्टो वसिष्ठः प्रोक्तवानिदम् ॥ २३
तच्छृणुध्वं मुनिवरा ज्ञानं सर्वं भविष्यति । अथ तद्वचनाद्विप्राः पुराणश्रवणे रताः ॥ २४
कथं श्रोतव्यमधुना किं कृत्वेत्यब्रव(ब्रवी)न्मुनिम् । सोऽपि सर्वं समाचष्टे शृणु धर्मं सनातनम् ॥
नमस्कृत्य पुराणज्ञं दद्याद्वार्घासनं ततः । निषीद तत्र चेत्युक्त्वा गन्धपुष्पैः समर्चयेत् ॥ २६

---

१ ङ. त्रिशतेषु । २ अ. च संप्रा° । ३ छ. ड. °शोऽथ सहस्रशः । ये° । ४ ख. ङ. ड. °प्रदाने । ५ अ. भक्तसाहस्री° । ६ क. ख. ङ. च. छ. ट. ड. °निर्मितं° । ७ अ. रताः ।

आत्मयोग्यं च ताम्बूलमधिकं वा समर्चयेत् । ब्रूहि पुण्यकथां ब्रह्मन्पौराणिकीमितीरयेत् ॥ २७
न खट्वासनमारुह्य नोच्चासनमथापि वा । नीचासनो वै शृणुयाद्धर्मकामार्थसिद्धये ॥ २८
शृण्वित्युक्त्वा पुराणज्ञ इमं मन्त्रमुदीरयेत् । नमो हरिं हरमथो गणेशं भारतीमतः ॥ २९
इष्टदेवं नमस्कृत्वा पुराणं वक्तुमर्हति । अर्धयामं प्रतिदिनं यदि वाऽपीच्छया भवेत् ॥ ३०
एवं दिनसमाप्तिं च श्रुत्वा कृत्यं समाचरेत् । श्रोतुश्च तूष्णीं मननं तूष्णीं श्रवणमेव वा ॥ ३१
अन्यथा भारती क्रुध्येत्तत्क्रोधान्मूकता भवेत् । तस्मात्पुराणश्रोता(त्रा) च ताम्बूलादिसमर्पणम्
वक्तुश्च जीविका कार्या स्वसामर्थ्यानुसारतः । पुराणप्रक्रमे देयं सचेलोद्गमनीयकम् ॥ ३३
सूक्ष्माम्बरमथो वाऽपि वस्त्रद्वितयमर्पयेत् । आसनं तु महच्चित्रं रम्यमूर्जस्वलं मृदु ॥ ३४
सुवर्णं वा तथा दद्याद्गोभूगेहादिकं तथा । एतत्समस्तं विप्रेन्द्रा दक्षिणामूर्तिना पुरा ॥ ३५
शंकरेण मुनीनां हि भाषितं च दिवौकसाम् । अथ ते मुनयः सर्वे तं प्रणम्याऽऽसनास्थितम् ३६
पृथक्पृथक्च ताम्बूलं दत्त्वा शुश्रूषवः स्थिताः । तेनापि कथितं सर्वं पुराणं सर्वसंपदम् ॥ ३७
उपान्ताध्यायपर्यन्तं श्रुतवन्तो द्विजोत्तमाः ॥ ३८

दिलीप उवाच—

कामगेन विमानेन सर्वसंपत्समृद्धिना । सर्वतःसुखयुक्तेन पुण्यस्थानमुपस्थितम् ॥ ३९

वसिष्ठ उवाच—

नालं पृष्टं त्वया राजंश्चितोऽप्यतिशयान्तरैः । क्रीडमाना भविष्यन्ति येन तत्पुण्यमुच्यते ॥ ४०
सुधाधवलितं कृत्वा शिववेश्म समन्ततः । स्त्रियो रूपविलासाढ्याः सर्वालंकारभूषिताः ॥ ४१
नानासुगीतकुशला नानानृत्यविशारदाः । चतस्रोऽष्टौ षडथवा मर्दलध्वनिकाः स्त्रियः ॥ ४२
वासिन्यौ द्वे आवजिक्यौ कोणिकाधमने उभे । लासिक्यस्तु चतस्रः स्युः संतुष्टैकाऽथ गायिका
एका द्वे वा सुगीतज्ञे मुखरे हि प्रकीर्तिते । कोणवाद्यकृते द्वे तु तूष्णींभूताः षडष्ट वा ॥ ४४
सर्वा रूपविलासिन्यः सर्वाश्चापतितस्तनाः । रतितन्त्राब्धिकुशलास्तत एव विशङ्किताः ॥ ४५
सुसूक्ष्मवस्त्रवेषाश्च विद्युच्चञ्चलदृष्टयः । एतादृशीभिर्योषाभिर्येन नृत्यं हि कारितम् ॥ ४६
एकस्मिन्दिवसे राजन्वत्सरात्स विमानगः । शतस्त्रीवीक्षितमुखो युवा बहुभिरार्चितः ॥ ४७
आनन्द एष संपूर्णः क्रोधेर्ष्यादिविवर्जितः । पञ्चगन्धविलिप्ताङ्गः सचन्द्राह्रिदलाननः ॥ ४८
सूर्यो यमस्तु योषाश्च सर्वास्तादृशभान्विताः । सद्योविकसितामोदिपारिजातकृतस्रजः ॥ ४९
सर्वा विकसितारोहिरक्तसंध्याकृतस्रजः । धम्मिल्ले वक्षसि तथा बिभ्रत्यः सुस्मिताधराः ॥ ५०
चरत्येतादृशीभिस्तु नृत्यगीतानुमोदितः । एवं विमानगो भूत्वा उषित्वा कालमक्षयम् ॥ ५१
पश्चाज्जायेत नृपतिरेवं कृत्वा पुनस्तथा । राज्यं स्वर्गफलं भुक्त्वा शिवभक्तो भविष्यति ॥ ५२

शंभुरुवाच—

दिलीपाय वसिष्ठोक्तं मुनीनामङ्गिरोऽब्रवीत्* । ते तथा कृतवन्तश्च तौर्यत्रिकमुमापतेः ॥ ५३
श्रुत्वा पुराणं पद्मं च समग्रं सुखिनोऽभवन् । त एते ब्राह्मणा राम विमानवरमास्थिताः ॥ ५४

---

* आर्षोऽयं संधिः ।

---

१ अ. °त् । एवं दिनसमाप्तौ° । २ क. अ. °सादरः । पु° । ३ ख ङ. सूक्ष्मं नर । ४ अ. °जप्नतो यान्ति शनैरपि ।

दृश्यन्ते खे च सुखिनः सदा मुदितमानसाः । एतत्ते सर्वमाख्यातं पुराणेषु विनिश्चितम् ॥
इतः परं च किं भूयः श्रोतुमिच्छसि राघव ॥ ६६

इति श्रीमहापुराणे पाद्मे पातालखण्डे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८४९४

अथ दशाधिकशततमोऽध्यायः ।

राम उवाच—

क एष दृश्यते व्योम्नि सर्वाभरणभूषितः । विमानस्थो महादीप्तमध्याह्नार्क इवापरः ॥ १
दुष्प्रेक्ष्यः सर्वमर्त्यानां तस्याङ्के चारुहासिनी । अपरा श्रीरिव ब्रह्मंस्तथा पञ्च सुयोषितः ॥ २
गायन्ति मधुरां गीतिं सभ्रूभङ्गनिरीक्षणैः । मन्दस्मितैः करतलशब्दास्फोटिकया तथा ॥ ३
क्वचिद्वलकृतैर्गीतैरन्योन्यकरताडनैः । अन्योन्यमुखमालोक्य प्रलोभैर्गीतपूर्वकैः ॥ ४
क्रीडन्नास्ते महायोगी पद्मकिञ्जल्कसंनिभः । एवं चरितपुण्येन केन वा तद्वदस्व मे ॥ ५

शंभुरुवाच—

एष विप्रः पुरा राम सर्वसंपत्समन्वितः । नानाविधसुखोपेतो भार्यापोषणतत्परः ॥ ६
अपुत्रो दानहीनश्च देवतार्चनवर्जितः । पञ्चयज्ञविहीनश्च स्वाध्यायपरिवर्जितः ॥ ७
प्रातर्मध्याह्नसायाह्नभोजनप्रवणोऽशुचिः । कदाचिदगमद्गेहं गौतमस्य महात्मनः ॥ ८
त्र्यम्बकस्य गिरौ पुण्ये नानामुनिगणाश्रिते । तत्रातिशोभितगृहं स्फटिकस्तम्भकल्पितम् ॥ ९
अगुरुद्रवकस्तूरीचन्द्रकुङ्कुमचर्चिता । भित्तिर्यस्य च संतानकुसुमामोदसौष्ठवम् ॥ १०
कस्तूरिकापुष्परससमुत्सेचितभूतलम् । सूक्ष्मसुश्वेतविविधवितानोपरिशोभितम् ॥ ११
[*अङ्गणं शोभितमहाकदलीपूगशोभितम् ] । समीपसरसीजातमञ्जुकुञ्जन्मधुव्रतम् ॥ १२
पटीरतरुसंभूतगन्धपूरितदिङ्मुखम् । शिक्षागतकृताह्लादगीतपूरितदिङ्मुखम् ॥ १३
निदाघजनितातापनाशनाय विनिर्मितम् । कदलीदलसंछादि पावकाकल्पितच्छदम् ॥ १४
पटीरतरुसुस्निग्धसान्द्रद्वारकपाटकम् । सौगन्धिकमहामोदिकल्पितान्तरभित्तिकम् ॥ १५
ईशानभोगसुभगरतिकल्पितवेदिकम् । हाटकाकल्पितपदं विचित्रवनिकायुतम् ॥ १६
सुस्निग्धनिबिडच्छायवटमूलोपकल्पितम् । प्रसूनकदलीखण्डसरोभिप्रान्तशोभितम् ॥ १७
महावटाग्रसंलग्नतुषारितपयोधरम् । नाकोपवनसंपन्नविचित्रारामशोभितम् ॥ १८
वापीकूपतडागाढ्यमनेकगृहशोभितम् । मन्दं मन्दं ववौ वायुर्यत्र गेहे सुखप्रदः ॥ १९
वादिन्यश्चारुसर्वाङ्ग्यो वाद्यानि स्मरसंपदः । वीणावेणुत्रिवेणुं च वादयन्ति वराङ्गनाः ॥ २०
तौर्यत्रिककृतो नार्यश्चतुर्दिक्षु तथोर्ध्वतः । सुवर्णादिकपात्रेषु वटका भस्मनः शुभाः ॥ २१
वासिताः सर्वगन्धैश्च सुधूपैरपि धूपिताः । कुशग्रथितसंघाश्च त्वक्षमालाश्च कोटिशः ॥ २२
कृष्णाजिनसहस्राणि बहिष्प्रान्ते स्थितानि च । एतादृशे गृहवरे देववन्द्यो मुनीश्वरः ॥ २३
कर्पूरादींश्च संस्थाप्य चतुर्दिक्षु मुनीश्वरः । पटीरपीठे कर्पूरसिंहासनमकल्पयत् ॥ २४

* धनुश्चिह्नान्तर्गतः पाठः, छ. ट. ड. पुस्तकस्थः ।

१ म. 'चिद्वलकृतैर्गीतैर' ।

सूक्ष्मं श्वेतं च सुस्निग्धमावृतं घनसारकैः । सुगन्धिवासितजलैः स्नाप्य क्षीरेण शंकरम् ॥ २५
अन्यैश्च वैदिकैर्मन्त्रैः स्नापयित्वा सदाशिवम् । दारुचन्द्रोपपीठे तु वस्त्रपीठं निधाय च ॥ २६
पात्रिकामग्रतः स्थाप्य स्थापयित्वा दलेष्वमून् । एकस्मिन्नक्षताः पात्रे ह्यन्यस्मिन्सलिलाक्षताः २७
पञ्चगन्धकमेकस्मिन्नेकस्मिन्नष्टगन्धकम् । काश्मीरं मृगनाभीं तु कर्पूरं चन्दनं तथा ॥ २८
पात्रेष्वन्येषु विन्यस्य पूजास्थाने प्रकल्प्य च । नानावरणमार्गेण पूजा तत्र विधीयते ॥ २९
लिङ्गमध्ये स्थितो देवः पञ्चवक्त्रः सदाशिवः । तस्य प्रावरणं लिङ्गशक्तिस्तस्य विधीयते ॥ ३०
शक्तेरावरणं विष्णुर्विष्णोरावरणं विधिः । ब्रह्मप्रावरणं चन्द्रस्तस्य सूर्यस्ततः श्रुतिः ॥ ३१
दिग्देवतास्तु तन्मूर्तिस्तासामावरणं दिशः । दिशामावरणं शंभुस्तस्य चाऽऽवरणं गुणाः ॥ ३२
दशप्रावरणं ह्येतच्छिवलिङ्गार्चनं शुभम् । केषांचिन्मतमेतत्स्यादथ प्रावरणान्तरम् ॥ ३३
विद्यावरणमाख्यातं तदुमावरणं स्मृतम् । विष्णुरावरणं तस्या विष्णोश्चाऽऽवरणं विधिः ॥ ३४
ब्रह्मप्रावरणं चन्द्रस्तस्य भानुरथाऽऽवृतिः । भानोरावरणं चेश इति षोढाऽऽवृतिः स्मृता ॥ ३५
विधिं विना समाख्यातं पञ्चावरणमुत्तमम् । शशाङ्कविष्णुशक्तीनामेतदावरणत्रयम् ॥ ३६
अम्बिकावरणं प्रोक्तमेकावरणमुत्तमम् । अथवा लोकपालाः स्युरावृतिः सोमपूजने ॥ ३७
अनावरणमथवा पूजनं शस्यते शिवे । पत्रिकाष्टदलेष्वेव स्थितद्रव्यैर्यजेच्छिवम् ॥ ३८
पत्रिकालक्षणं वक्ष्ये सर्वकर्मोपयोगितम् । स्वर्णेन राजतेनाथ ताम्रेणाथ प्रकल्पितम् ॥ ३९
मुक्ताशुक्तिनिभं कुर्यात्पत्रिकाष्टदलं शुभम् । पद्मपत्रसमानेन(?) पत्राकारं प्रकल्पयेत् ॥ ४०
पलमात्रं ततः शस्तं निर्वृतं विस्तृतं पदम् । अस्थूलमध्यमुपरि पद्माकृतिदलाष्टकम् ॥ ४१
अथवा शक्तिमार्गेण पञ्चपत्रं प्रकल्पयेत् । त्रिपत्रमथवा कुर्याच्छक्तिभावेन तेन च ॥ ४२
यथा स्याच्छोभनं पत्रं तथा कुर्याद्विचक्षणः । शक्त्याऽन्तरितरुद्राक्षैः कल्पिताष्टशतैः शुभा ॥ ४३
मालोपवीतं त्रिंशत्या त्वष्टकेन प्रकल्पिता(?) । प्रगण्डयोरथैकैकं बद्ध्वा तु द्वे प्रकोष्ठयोः ॥ ४४
शिरस्येका छ(धृ)ता तेन कण्ठे च परमार्थिना । रुद्राक्षैः स्फटिकै रत्नैः कल्पिता ह्यक्षमालिका ४५
व्याघ्रचर्मासनं कृत्वा पद्मासनगतो मुनिः । आवाहं चाऽऽसनं चार्घ्यं पाद्यं चाऽऽचमनीयकम् ॥
निर्वर्त्य गङ्गासलिलैः स्नापयामास शंकरम् । अष्टगन्धकसंयुक्तैर्युक्तैर्बकुलपाटलैः ॥ ४७
स्वर्णभाण्डस्थितैर्वस्त्रशोधितैर्वासितैर्दृढम् । द्वारे ताम्रकटाहश्च प्रबन्धद्रोणिना शुभम् ॥ ४८
गोशृङ्गेण विषाणेन गवयस्य तथा क्वचित् । दक्षिणावर्तशङ्खेन रत्नपात्रैरथापि वा ॥ ४९
स्वर्णैर्वा राजतैर्वाऽपि ताम्रैः कांस्यैरथापि वा । स्वर्णैश्च सूक्ष्मकलशैः स्नापयामास चेच्छया॥५०
अथवा मृन्मयैः कुर्यात्पद्मपत्रैरथापि वा । पलाशैश्चूतजम्ब्वाद्यैः पात्रैः संस्नापयेद्विभुम् ॥ ५१
स्नानानामथ सर्वेषां धारास्नानं विशिष्यते । नमस्तेत्यादिमन्त्रेण शतरुद्रीयसंज्ञिना ॥ ५२
शं चेत्याद्यनुवाकेन शान्तिरूपेण चेश्वरम् । आवृत्य च यथाशक्ति पश्चाद्गन्धादि विन्यसेत् ॥५३
ततश्च शोभनैः पुष्पैः पत्रैर्बिल्वैः समर्चयेत् । तुलसीमारुवदलैः कह्लारैश्च महोत्पलैः ॥ ५४
नीलोत्पलैरुत्पलैश्च शेषैश्च करवीरकैः । कर्णिकारैः सिताम्भोजैरपराजितया तथा ॥ ५५
तिलाक्षतैरक्षतैश्च श्रीपत्रैस्तिलमिश्रकैः । एवं महेशमीशानं पूजयामास गौतमः ॥ ५६
कर्पूरागरुकस्तूरीसर्जागरुकचन्दनैः । अन्यैश्च धूपयामास षोडशाथ प्रदीपिकाः ॥ ५७

१ ङ. °रतैः । सु° । २ म. च । पात्रि° । ३ म. °त्वा जले° । ४ ख. गणाः । ५ ज. °ल्पिताम् । ६ ज. पात्रं । ७ क. त्रिशक्त्या अष्ट° ।

कर्पूरवर्तिसंयुक्ता दीपयष्ट्योपरि स्थिताः । निवेदितं(ता) महेशाय अथ नैवेद्यमुत्तमम् ॥ ५८
सुपक्वशालिपिष्टान्नं भक्ष्यं लेह्यं च चोषकम् । मधुरादिसमोपेतं पञ्चभक्ष्यसमन्वितम् ॥ ५९
अनेकपक्वशाकाढ्यमनेकपक्वमिश्रितम् । पानं विंशतिसंयुक्तं द्राक्षारम्भाफलान्वितम् ॥ ६०
सहकारफलैश्चान्यैर्नागरङ्गफलाक्षतैः । शर्करागुडसंयुक्तैराज्यपात्रसमन्वितम् ॥ ६१
सूपाष्टकादिसंयुक्तं युक्तं मूलफलादिना । यथासंभवसंयुक्तैरन्यैरप्युपकल्पितम् ॥ ६२
अग्रपुष्पसमोपेतं नैवेद्यं प्रददौ मुनिः । सौवर्णपात्रिकान्यस्तनीराजनसहस्रकम् ॥ ६३
सोपहाराय देवाय दत्त्वा चैव नमस्य च । पूगखण्डानथो घृष्टान्पत्राणि क्षालितानि च ॥ ६४
अपृष्ठाग्राणि सुश्वेतच्छदप्रावृत्तिकानि च । घनसारकचूर्णं च न्यस्तपत्रत्रयं शुभम् ॥ ६५
सौवर्णपात्रविन्यस्तमिदं ताम्बूलमीश्वरे । अथ प्रदक्षिणं कृत्वा नमस्काराननन्तरम् ॥ ६६
अष्ट योषास्ततः प्राप्तास्तन्त्रीवेण्वादिधारिताः । विचित्रवाद्यवादिन्यः संप्राप्ता मुनिसंनिधिम् ॥ ६७
क्षुद्रतालयुगं गृह्य स्वयं गातुं प्रचक्रमे । गौतमे गातुमुद्युक्ते तानं कुर्युरथाङ्गनाः ॥ ६८
मन्दं मन्दं च वाद्यानि वादयन्ति तथाऽपराः । मधुरं गायति मुनौ स्वरा मूर्तिभृतस्तथा ॥ ६९
प्रनृत्यन्तं महेशाग्रे तदद्भुतमिवाभवत् । एतस्मिन्नन्तरे प्राप्तो भगवान्नारदो मुनिः ॥ ७०
तमागतं गौतमोऽपि संपूज्य प्रणिपत्य च । आह चैनं कृतार्थोऽस्मि न च कश्चिन्मया समः ॥
तत्राऽऽगमनकृत्यं किं कुत आगमनं तथा ॥ ७१

नारद उवाच—

पातालादागतोऽस्मीह भुक्त्वा वै बाणमन्दिरे । आयास्यन्ति महात्मानो बाणशुक्रादयो गृहम् ॥
अथ क्षणादभ्यगमद्बाणः परपुरंजयः । विंशत्यक्षौहिणीयुक्तो गजमारुह्य सोऽसुरः ॥ ७३
अपरं हि गजं शुक्रः प्रह्लादो रथमुत्तमम् । वृषपर्वा रथवरं बलिस्तुरगमुत्तमम् ॥ ७४
आगतानथ तान्सर्वानाज्ञाय स तु गौतमः । सशिष्यो निर्जगामार्थं ह्यादायार्घ्यादिकं तथा ॥ ७५
गौतमं चापि ते वीक्ष्य ह्यवरुह्य गजादिकात् । नमश्चक्रुरथो दैत्यास्तं नमस्कृत्य भार्गवम् ॥ ७६
आलिङ्ग्य राक्षसान्सर्वान्पूजयित्वा यथाविधि । सेनायाः संनिवेशं च चकार मुनिपुङ्गवः ॥ ७७
पादौ प्रक्षाल्य शुक्रस्य तोयं मूर्ध्नि धृतं यथा । विचित्रफलसंयुक्तं दत्तवानर्हणं मुनिः ॥ ७८
वापीतडागसरसि स्नानपूर्वकृतक्रियाः । संगमे वर्तमाने तु गौतमस्याऽऽश्रमे शुभे ॥ ७९
तद्गेहं तु प्रविश्याथ राक्षसाः सपुरोहिताः । देवपूजाप्रयत्नं च चक्रुः सर्वे द्विजालये ॥ ८०
सद्यः प्रकल्पितायां च वेद्यां शुक्रोऽयजच्छिवम् । तस्यैव वामभागे तु प्रह्लादोऽयजदच्युतम् ८१
सोमं च बलिरप्येवमन्ये चासुरपुङ्गवाः । अथ बाणोऽयजद्देवमेकमेव त्रियम्बकम् ॥ ८२
शुक्रोऽपि भगवन्तं तमुमानाथमपूजयत् । गौतमोऽप्यथ मध्याह्ने पूजयामास शंकरम् ॥ ८३
सर्वे शुक्लाम्बरधरा भस्मोद्धूलितविग्रहाः । सितेन भस्मना कृत्वा सर्वस्थाने त्रिपुण्ड्रकम् ॥ ८४
नत्वा तु भार्गवं सर्वे भूतशुद्धिं प्रचक्रमुः । हृत्पद्ममध्ये सुषिरं तत्रैव भूतपञ्चकम् ॥ ८५
तेषां मध्ये महाकाशमाकाशे निर्मलासनम् । तन्मध्ये च महेशानं ध्यायेद्दीप्तिमयं शुभम् ॥ ८६
अज्ञानसंयुतं भूतं शमलं सर्वसंगतम् । तद्देहमाकाशदीपे प्रदहेज्ज्ञानवह्निना ॥ ८७
आकाशस्याऽऽवृतिं चाहं दग्ध्वाऽऽकाशमथो दहेत् । दग्ध्वाऽऽकाशमथो वायुमग्निभूतं तथा दहेत् ॥

---

१ क. °थ महाव्रतधरो मुनिः । गौ° । २ ख. च. छ. ट. ड. °लानलम् । ३ ख. ङ. च. छ. ट. ड. °लं कर्मसं° ।

अब्भूतं च ततो दग्ध्वा पृथिवीभूतमेव च । तदाश्रितान्गुणान्दग्ध्वा ततो देहं प्रदाहयेत् ॥ ८९
एवं दहित्वा भूतादिं देहे तज्ज्ञानवह्निना । शिखामध्यस्थितं विष्णुमानन्दरसनिर्भरम् ॥ ९०
निष्पन्नचन्द्रकिरणसंकाशकिरणं शिवम् । शिवाङ्गोत्पन्नकिरणैरमृतद्रवसंयुतैः ॥ ९१
सुशीतला ततो ज्वाला प्रशान्ता चन्द्ररश्मिवत् । प्रसारितसुधा रुग्भिः सान्द्रीभूतश्च संप्लवः
क्रमेण प्लावितं भूतग्रामं संचिन्तयेत्परम् ॥
इत्थं कृत्वा भूतशुद्धिं क्रियार्हो मर्त्यः शुद्धो जायते एव शुद्धः ॥ ९२
पूजां कर्तुं जाप्यकर्मापि पश्चाद्देवे ध्यानं ब्रह्महत्यादिहानिः ॥ ९३
एवं ध्यात्वा चन्द्रदीप्तिप्रकाशं ध्यानेनाऽऽरोप्याऽऽशु लिङ्गे शिवस्य ।
सदाशिवं दीपमध्ये विचिन्त्य पञ्चाक्षरेणार्चनमव्ययं तु ॥ ९४
आवाहनादीनुपचारांस्तथाऽपि कृत्वा स्नानं पूर्ववच्छंकरस्य ।
उदुम्बरं राजतं स्वर्णपीठं वस्त्रादिच्छन्नं सर्वमेवेह पीठम् ॥ ९५
अन्ते कृत्वा बुद्बुदानां च वृष्टिं पीठे पीठे नागमेकं पुरस्तात् ।
कुर्यात्पीठे चोर्ध्वके नागयुग्मं देवाभ्याशे दक्षिणे वामतश्च ॥ ९६
जपापुष्पं नागमध्ये निधाय मध्येवस्त्रं द्वादशमातिगुण्ये ।
सुश्वेतेन तस्य मध्ये महेशं लिङ्गाकारं पीठयुक्तं प्रपूज्यम् ॥ ९७
एवं कृत्वा बाणमुख्या दितीशा दत्त्वा दत्त्वा पञ्चगन्धाष्टगन्धम् ।
पुष्पैः पत्रैः श्रीतिलैरक्षतैश्च तिलोन्मिश्रैः केवलैश्च प्रपूज्य ॥ ९८
धूपं दत्त्वा विधिवत्संप्रयुक्तं दीपं दत्त्वा चोक्तमेवोपहारम् ।
पूजाशेषं ते समाप्याथ सर्वे गीतं नृत्यं तत्र तत्रापि चक्रुः ॥
अथास्मिन्नन्तरे गौतमस्य प्राप्तः शिष्यः शंकरात्मेति नाम्ना ॥ ९९
उन्मत्तवेषो दिग्वासा अनेकां वृत्तिमाश्रितः । क्वचिद्द्विजातिप्रवरः क्वचिच्चण्डालसंनिभः ॥ १००
क्वचिच्छूद्रसमो योगी तापसः क्वचिदप्युत । गर्जत्युत्पतते चैव नृत्यति स्तौति गायति ॥ १०१
रोदिति शृणुते व्यक्तं पतत्युत्तिष्ठति क्वचित् । शिवज्ञानैकसंपन्नः परमानन्दनिर्भरः ॥ १०२
संप्राप्तो भोज्यवेलायां गौतमस्यान्तिकं ययौ । बुभुजे गुरुणा सार्कं क्वचिदुच्छिष्टमेव च ॥ १०३
क्वचिल्लेहति तत्पात्रं तूष्णीमेवाभ्यगात्क्वचित् । हस्तं गृहीत्वैव गुरोः स्वयमेवाभुनक्क्वचित् ॥ १०४
क्वचिद्गृहान्तरे मूत्रं क्वचित्कर्दमलेपनम् । सर्वदा तं गुरुर्दृष्ट्वा करमालम्ब्य मन्दिरम् ॥ १०५
प्रविश्य स्वीयपीठे तमुपवेश्याभ्यभोजयत् । स्वयं तदस्य पात्रेण बुभुजे गौतमो मुनिः ॥ १०६
तस्य चित्तं परिज्ञातुं कदाचिदथ सुन्दरी । अहल्या शिष्यमाहूय भुङ्क्ष्वेत्युक्त्वाऽथ सा शुभा ॥
सौवर्णे भाजने चान्नं निधाय चैषकान्तरे । पानादिकमथो दत्त्वा एकस्मिन्यावकं पुनः ॥ १०८
निधायाङ्गारनिचयं कण्टकानां चयं परे । निधाय भुङ्क्ष्व भुङ्क्ष्वेति स चापि बुभुजे मुनिः १०९
यथा पपौ हि पानीयं तथा वह्निमपि द्विजः । कण्टकान्नं तु तद्भुक्त्वा यथापूर्वमतिष्ठत ॥ ११०
पुरा हि मुनिकन्याभिराहूतो भोजनाय च । दिने दिने तत्प्रदत्तं लोष्टमम्बु च गोमयम् ॥ १११
कर्दमं काष्ठदण्डं च भुक्त्वा प्रीत्याऽथ हर्षितः । एतादृशो मुनिरसौ चण्डालसदृशाकृतिः ११२
सुजीर्णोपानहौ हस्ते गृहीत्वा तु तथा करे । अन्त्यजोचितभाषाभिर्वृषपर्वाणमभ्यगात् ॥ ११३

१ ट. °दिं देहान्तर्ज्ञानव° । २ ख. च कथान्त° । झ. ञ च कषान्त° ।

वृषपर्वेशयोर्मध्ये दिग्वासाः समतिष्ठत । वृषपर्वा तमज्ञात्वा पीडयित्वा शिरोऽच्छिनत् ॥ ११४
हते तस्मिन्द्विजश्रेष्ठे जगदेतच्चराचरम् । अतीव कलुषमभवत्तत्रस्था मुनयस्तथा ॥ ११५
गौतमस्य महाशोकः संजातः सुमहात्मनः । निर्ययौ चक्षुषो वारि शोकं संदर्शयन्निव ॥ ११६
गौतमः सर्वदैत्यानां संनिधौ वाक्यमुक्तवान् । किमनेन कृतं पापं येन च्छिन्नमिदं शिरः ॥ ११७
मम प्राणाधिकस्येह सर्वदा शिवयोगिनः । ममापि मरणं सत्यं शिष्यच्छद्मा यतो गुरुः ॥ ११८
शैवानां धर्मयुक्तानां सर्वदा शिववर्तिनाम् । मरणं यत्र दृष्टं स्यात्तत्र नो मरणं ध्रुवम् ॥ ११९

शुक्र उवाच—

एनं संजीवयिष्यामि मम गोत्रं शिवप्रियम् । किमर्थं म्रियते ब्रह्मन्पश्य मे तपसो बलम् ॥ १२०
इति वादिनि विप्रेन्द्रे गौतमोऽपि ममार ह । तस्मिन्मृतेऽथ शुक्रोऽपि प्राणांस्तत्याज योगतः १२१
तस्यापि हतमाज्ञाय प्रह्लादाद्या दितीश्वराः । सर्वे मृताः क्षणेनैव तदद्भुतमिवाभवत् ॥ १२२
मृतमासीदथ बलं तस्य बाणस्य धीमतः । अहल्या शोकसंतप्ता रुरोदोच्चैः पुनः पुनः ॥ १२३
गौतमेन महेशस्य पूजया पूजितो विभुः । वीरभद्रो महायोगी सर्वं दृष्ट्वा चुकोप ह ॥ १२४
अहो कष्टमहो कष्टं माहेशा बहवो मृताः । शिवं विज्ञापयिष्यामि तेनोक्तं करवाण्यहम् ॥ १२५
इति निश्चित्य गतवान्मन्दराचलमव्ययम् । नमस्कृत्वा विरूपाक्षमिदं सर्वमथोक्तवान् ॥ १२६
ब्रह्मा हरिः स्थितौ तत्र दृष्ट्वा प्राह शिवो वचः । मद्भक्तैः साहसं कर्म कृतं दृष्ट्वा वरप्रदः १२७
गत्वा पश्यामहे विष्णो युवामप्यागमिष्यथ । अथेशो वृषमारुह्य वायुना धूतचामरः ॥ १२८
नन्दिकेन[1] सुवेषेण धृते छत्रेऽतिशोभने । सुश्वेते हेमदण्डे च नान्ययोग्ये धृते विभोः ॥ १२९
महेशानुमतिं लब्ध्वा हरिर्नागान्तके स्थितः । आरक्तनीलच्छत्राभ्यां शुशुभे लक्ष्मकौस्तुभः १३०
शिवानुमत्या ब्रह्माऽपि हंसारूढोऽभवत्तदा । इन्द्रगोपप्रभाकारच्छत्राभ्यां शुशुभे विधिः ॥ १३१
इन्द्रादिसर्वदेवाश्च स्वस्ववाहनसंयुताः । अथ ते निर्ययुः सर्वे नानावाद्यानुमोदिताः ॥ १३२
कोटिकोटिगणाकीर्णा गौतमस्याऽऽश्रमं गताः । ब्रह्मविष्णुमहेशाना दृष्ट्वा तत्परमाद्भुतम् ॥ १३३
स्वभक्तं जीवयामास वामकोणनिरीक्षणात् । शंकरो गौतमं प्राह तुष्टोऽहं ते वरं वृणु ॥ १३४

गौतम उवाच—

यदि प्रसन्नो देवेश यदि देयो वरो मम । त्वल्लिङ्गार्चनसामर्थ्यं नित्यमस्तु महेश्वर ॥ १३५
श्रुतमेतन्मया देव शृणुष्वैतत्त्रिलोचन । मम शिष्यो महाभागो[2] हेयाहेयादिवर्जितः ॥ १३६
प्रेक्षणीयं ममत्वेन न च पश्यति चक्षुषा । न घ्राणेन च घ्रातव्यं न दातव्यं न चेतरत् ॥ १३७
इति बुद्ध्वा तथा कुर्वन्स हि योगी महायशाः । उन्मत्तविकृताकारः शंकरात्मेति कीर्तितः १३८
न कश्चित्तं प्रति द्विष्यान्न च तं हिंसयेदिति । एतन्मे दीयतां देव एतेषाममृतिस्तथा ॥ १३९

श्रीभगवानुवाच—

आकल्पमेते जीवन्तु ततो मुक्तिं भजन्तु च । त्वया कृतमिदं वेश्म विस्तृतं विकृतं शुभम् ॥
तिष्ठामः क्षणमात्रं तु ततो यास्यामि मन्दिरम् ॥ १४०

गौतम उवाच—

अयोग्यं प्रार्थयामीश ह्यर्थी दोषं न पश्यति । ब्रह्माद्यलभ्यं[3] देवेश दीयतां यदि रोचते ॥ १४१
अथेशो विष्णुमालोक्य गृहीत्वा तु करं हरेः । प्रहसन्नम्बुजाभासमित्युवाच सदाशिवः ॥ १४२

---

१ झ. ञ. नन्दकेन । २ झ. ञ. मुनिः । ३ क. 'नाविया' ।

श्रीशिव उवाच—

म्लानोदरोऽसि गोविन्द देयं ते भोजनं किमु । स्वयं प्रविश्य यदि वा स्वयं भुङ्क्ष्व स्वगेहवत्
गच्छ वा पार्वतीगेहं या कुक्षिं पूरयिष्यति । इत्युक्त्वा तत्करालम्बी एकान्तमगमद्विभुः ॥१४४
आदिश्य नन्दिनं देवो द्वाराध्यक्षं यथोक्तवत् । गौतमं च उवाचाथ उत्तरं विष्णुभाषणम् १४५

श्रीशिव उवाच—

संपादयान्नं सर्वेषां भोक्तुकामा वयं मुने । इत्युक्त्वैकान्तमगमद्वासुदेवेन शंकरः ॥ १४६
मृदुशय्यां समारुह्य शयितौ देवतोत्तमौ । अन्योन्यं भाषणं कृत्वा प्रोत्तस्थतुरुभावपि ॥ १४७
गत्वा तटाकं गम्भीरं स्नास्यन्तौ देवसत्तमौ । कराम्बुपातमन्योन्यं पृथक्कृत्वोभयत्र च ८ १४८
मुनयो राक्षसाश्चैव जलक्रीडां प्रचक्रिरे । अथ विष्णुर्महेशश्च जलपातानि शीघ्रतः ॥ १४९
चक्रतुः शंकरः पद्मकिञ्जल्काञ्जलिना हरेः । अवाकिरन्मुखे तस्य पद्मोत्फुल्लविलोचने ॥ १५०
नेत्रे केसरसंपाताज्न्यमीलयत केशवः । अत्रान्तरे हरेः स्कन्धमारुरोह महेश्वरः ॥ १५१
हर्युत्तमाङ्गं बाहुभ्यां गृहीत्वा स न्यमज्जयत् । उन्मज्जयित्वा च पुनः पुनश्चापि पुनः पुनः १५२
पीडितः स हरिः सूक्ष्मं पातयामास शंकरम् । अथ पादौ गृहीत्वा तमाचकर्ष चाभ्रामयत् ॥
अताडयद्धरेर्वक्षः पातयामास चाच्युतम् ॥ १५३
अथोत्थितो हरिस्तोयमादायाञ्जलिना ततः । अवाकिरदथो शंभुरथ विष्णुरथो हरिः(रः)॥१५४
जलक्रीडैवमभवदथ चर्षिगणान्तरे । जलक्रीडासंभ्रमेण विस्रस्तजटबन्धनाः ॥ १५५
अथ संभ्रमतस्ते(तां ते)षामन्योन्यं जटबन्धनम् । इतरेतरबद्धासु जटासु च मुनीश्वराः ॥ १५६
शक्तिमन्तोऽशक्तिमत आकर्षन्ति च सव्यथम् । पातयन्तोऽन्यतश्चापि क्रोशन्तो रुदतस्तथा१५७
एवं प्रवृत्ते तुमुले संभूते तोयकर्मणि । आकाशे नारदो हृष्टो ननर्त च ननाद च ॥ १५८
विपञ्चीं नादयन्वाद्यं ललितां गीतिमुज्जगौ । सुगीत्या ललितायास्तु ह्यगायत विधा दश ॥१५९
शुश्राव गीतिं मधुरां शंकरो लोकभावनः । स्वयं गातुं हि ललितं मन्दं मन्दं प्रचक्रमे ॥ १६०
स्वयं गायति देवेशे मिश्रा मङ्गलकैशिकी । नारदे नृत्यमाने तु गायति स्वरभेदिनि ॥ १६१
स्वरं ध्रुवं समादाय सर्वलक्षणसंयुतम् । स्वधारामृतसंयुक्तं गानेनैवमयोजयत् ॥ १६२
वासुदेवो मर्दलं च कराभ्यामृतमाहनत् । आवेगाहश्चतुर्वक्त्रस्तुम्बुरुर्धुस्वरो बभौ ॥ १६३
तानका गौतमाद्यास्तु तूष्णीं गातुं च वायुजः । गायके मधुरं गीतं हनूमति कपीश्वरे ॥ १६४
म्लानमम्लानमभवत्कृशाः पुष्टास्तदाऽभवन् । स्वां स्वां गीतिमतः सर्वे तिरस्कृत्यैव मूर्छिताः ॥
तूष्णीं भूतं समभवद्देवर्षिगणदानवम् । एकः स हनुमान्गाता श्रोतारः सर्व एव ते ॥ १६६
मध्याह्नकाले वितते भोजनावसरे सति । दुकूलयुग्ममाधत्त शृण्वन्गीतिं महेश्वरः ॥ १६७
पीतवस्त्रद्वयं विष्णुरारक्तं चतुराननः । स्वस्वाहार्ण्यथ सर्वेऽपि कृत्यं कृत्वाऽपि कालिकम्॥ १६८
स्वं स्वं वाहनमारुह्य निर्गताः सर्वदेवताः । गानप्रियो महेशस्तु जगाद प्लवगेश्वरम् ॥ १६९

श्रीशिव उवाच—

प्लवग त्वं मयाऽऽज्ञप्तो निःशङ्कं वृषमारुह । मम चाभिमुखो भूत्वा गायस्वाशेषगायनम् ॥ १७०

---

१ झ. ञ. °लकौशि° । २ झ. ञ. गायन्ति । ३ झ. ञ. ध्रुवं । ४ ख. ङ. च. छ. ट. ढ. °भ्गा.मिरमा° । ५ ख. ङ. च. छ. ढ. °वजाद्यश्च° ।

अथाऽऽह कपिशार्दूलो भगवन्तं महेश्वरम् । वृषभारोहसामर्थ्यं तव नान्यस्य विद्यते ॥ १७१
तव वाहनमारुह्य पातकी स्यामहं प्रभो । मामेवाऽऽरुह देवेश विहंगः शिवधारणः ॥ १७२
तव चाभिमुखं गानं करिष्यामि विलोकय । अथेश्वरो हनूमन्तमारुरोह वृषं यथा ॥ १७३
आरूढे शंकरे देवे हनूमान्कंधराशिरः । छित्त्वा त्वचं परावृत्य मुखं गायति पूर्ववत् ॥ १७४
शृण्वन्गीतिसुधां शंभुर्गौतमस्य गृहं ततः । सर्वे चाप्यागतास्तत्र देवर्षिगणदानवाः ॥ १७५
पूजिता गौतमेनाथ भोजनावसरे सति । यच्छुष्कदारुसंभूतं गृहोपस्करणादिकम् ॥ १७६
प्ररूढमभवत्सर्वं गायमाने हनूमति । तस्मिन्गाने समस्तानां चित्रदृष्टिरतिष्ठत ॥ १७७

द्विबाहुरीशस्य पदाभिवन्दनः समस्तगात्राभरणोपपन्नः ।
प्रसन्नमूर्तिस्तरुणः सुमध्ये विन्यस्तमूर्धाञ्जलिभिः सुरेभिः(?) ॥ १७८
शिरः कराभ्यां परिगृह्य शंकरो हनूमतः पूर्वमुखं चकार ।
पद्मासनासीनहनूमतोऽञ्जलौ निधाय पादं त्वपरं मुखे च ॥ १७९
पादाङ्गुलीभ्यामथ नासिकां विभुः स्नेहेन जग्राह च मन्दमन्दम् ।
स्कन्धे मुखे त्वंसतले च कण्ठे वक्षःस्थले च स्तनमध्यमे हृदि ॥ १८०
ततश्च कुक्षावथ नाभिमण्डले ततो द्वितीयं न्यदधात्तु चाञ्जलौ ।
शिरो गृहीत्वाऽवनमप्यशंकरः(?)पस्पर्श पृष्ठं चुबुकेन सध्वनिः ॥
हारं च मुक्तापरिकल्पितं शिवो हनूमतः कण्ठगतं चकार ॥ १८१

अथ विष्णुर्महेशानमिदं वचनमुक्तवान् । हनूमता समो नास्ति कृत्स्नब्रह्माण्डमण्डले ॥ १८२
श्रुतिदेवाद्यगम्यं हि पदं तव कपिस्थितम् । सर्वोपनिषदव्यक्तं त्वत्पदं कपिसर्वयुक् ॥ १८३
यमादिसाधनैर्योगैर्न क्षणं ते पदं स्थितम् । महायोगिहृदम्भोजे बलं स्वच्छं हनूमति ॥ १८४
वर्षकोटिसहस्रेषु तपः कृत्वा तु दुष्करम् । त्वद्रूपं नाभिजानन्ति कुतः पादं मुनीश्वराः ॥ १८५
अहो भाग्यं विचित्रं हि चपलो वानरो मृगः । धत्ते पादयुगं चाङ्गे योगिहृद्यपि न क्षमम् १८६
मया वर्षसहस्रं तु सहस्राब्जैस्तथाऽन्वहम् । भक्त्या संपूजितोऽपीश पादो नो दर्शितस्त्वया १८७
लोके वादो हि सुमहाञ्शंभुर्नारायणप्रियः । हरिः प्रियस्तथा शंभोर्न तादृग्भाग्यमस्ति मे १८८

सदाशिव उवाच—

न त्वया सदृशो मह्यं प्रियोऽस्ति भगवन्हरे । पार्वती वा त्वया तुल्या न चान्यो विद्यते मम १८९
अथ देवाय महते गौतमः प्रणिपत्य च । व्यज्ञापयदमेयात्मन्देवेहि करुणानिधे ॥ १९०
मध्याह्नोऽयं व्यतिक्रान्तो भुक्तिवेलाऽखिलस्य च । अथाऽऽचम्य महादेवो विष्णुना सहितो विभुः॥
प्रविश्य गौतमगृहं भोजनायोपचक्रमे ॥ १९१

रत्नाङ्गुलीयैरथ नूपुराभ्यां दुकूलबन्धेन तडित्प्रकाश्या।
हारैरनेकैरथ कण्ठनिष्कयज्ञोपवीतोत्तरवाससी च ॥ १९२
विलम्बिचञ्चन्मणिकुण्डलेन सुपुष्पधम्मिल्लवरेण देवः ।
पञ्चाङ्गगन्धस्य विलेपनेन बाहङ्गदैः कङ्कणकाङ्गुलीयैः ॥ १९३

---

१ छ. ट. ड. गतः । २ ख. स्वरेभिः । ३ झ. म. 'रवा मन' ।

इत्थं विभूषितः शिवो निविष्ट उत्तमासने
स्वसंमुखं हरिं तथा न्यवेशयद्वरासने ॥
अन्योन्यसंमुखस्थितौ हरीशौ देवसत्तमौ
सुवर्णभाजनान्यथो ददौ स चापि गौतमः ॥ १९४
त्रिशत्प्रभेदभक्षकान्सुपायसं चतुर्विधं
सुपक्वपाकजातकं शतद्वयं प्रकल्पितम् ॥
अपक्वमिश्रकं तथा शतत्रयं प्रकल्पितं
शतं शतं तथा सुकन्दशाककं तथा मुनिः ॥ १९५
शाकादि सर्षपान्वितं ददौ च पञ्चविंशतिं
सुशर्करादिकं तथा सुचूतदाडिमादिकम् ॥
मोचाफलं तु गोस्तनीं सुखर्जुनागरङ्गकं
जम्बूफलं प्रियालुकं विकङ्कतं फलं तथा ॥ १९६
एवमादीनि चान्यानि द्रव्याण्यर्प्य यथाविधि । दत्त्वाऽऽपोशनं च विप्रो भुंजध्वमिति चाब्रवीत् १९७
भुञ्जानेषु च सर्वेषु व्यजनं सूक्ष्मविस्तृतम् । गौतमः स्वयमादाय शिवविष्णू ह्यवीजयत् ॥ १९८
परिहासमथो कर्तुमियेष परमेश्वरः । पश्य विष्णो हनूमन्तं कथं भुङ्क्ते स वानरः ॥ १९९
वानरं पश्यति हरौ मण्डकं विष्णुभाजने । चिक्षेप मुनिसंघेषु पश्यत्स्वपि महेश्वरः ॥ २००
हनूमते दत्तवांश्च स्वोच्छिष्टं पायसादिकम् । त्वदुच्छिष्टमभोज्यं तु तवैव वचनाद्विभो ॥ २०१
अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं तथा । मह्यं निवेद्य सकलं कूप एव विनिक्षिपेत् ।
अभुक्ते त्वद्वचो नूनं भुक्ते चापि कृपा तव ॥ २०२

सदाशिव उवाच—

बाणलिङ्गे स्वयंभूते चन्द्रकान्ते हृदि स्थिते । चान्द्रायणसमं ज्ञेयं शंभोर्नैवेद्यभक्षणम् ॥ २०३
भुक्तिवेलेयमधुना तद्वैरस्यं कथान्तरात् । भुक्त्वा तु कथयिष्यामि निर्विशङ्कं विभुङ्क्ष्व तत् ।
अथासौ जलसंस्कारं कृतवान्गौतमो मुनिः ॥ २०४
आरक्तसुस्निग्धसुसूक्ष्मगात्राननेकधा धौतसुशोषिताङ्गान् ।
तडागतोयैः कतबीजघर्षितैर्विशोधितैस्तैः करकानपूरयत् ॥ २०५
नद्याः सैकतवेदिकां नवतरां संछाद्य सूक्ष्माम्बरैः
शुद्धैः श्वेततरैरथोपरि घटांस्तोयेन पूर्णान्क्षिपेत् ।
क्षिप्त्वा नालकजातिमास्तपुटकं तत्कौलकस्तूरिका-
चूर्णं चन्दनचन्द्ररश्मिविशदां मालां पुटान्तां क्षिपेत् ॥ २०६
यामस्यापि पुनश्च वारि वसनेनाऽऽशोध्य कुम्भे क्षिपे-
च्चन्द्रग्रन्थिमथो निधाय बकुलं क्षिप्त्वा तथा पाटलम् ॥ २०७
शेफालिस्तबकमथो जलं च तत्र विन्यस्य प्रथमत एव तोयशुद्धिम् ।
कृत्वाऽथो मृदुतरसूक्ष्मवस्त्रखण्डेनाऽऽवेष्टेत्स्तणिकमुखं च सूक्ष्मचन्द्रम् ॥ २०८
अनातपप्रदेशे तु निधाय करकानथ । मन्दवातसमोपेते सूक्ष्मव्यजनवीजिते ॥ २०९

१ अ. भुञ्जध्व° ।

अथ उर्वीश(र्वी सु)सलिलैः सिञ्चयेत्स्थणिकामपि । संस्कृताः स्वायतास्तत्र नरा नार्योऽथवा नृप
तत्कन्या वा क्षालिताङ्गा धौतमन्दाश्च वाससः (?) । मधुपिङ्गमनिर्यासमसान्द्रमगरुद्रवम् ॥ २११
बाहुमूले च कण्ठे च विलिप्य सान्द्रमेव च । मस्तके जोपकं न्यस्य पञ्चगन्धविलेपनम् ॥ २१२
पुष्पनद्धसुकेशास्तु ताः शुभाः स्युः सुनिर्मलाः । एवमेवार्चिता नार्य आत्तकुङ्कुमविग्रहाः ॥ २१३
युवत्यश्चारुसर्वाङ्ग्यो नितरां भूषणैरपि । एतादृग्वनिताभिर्वा नरैर्वा दापयेज्जलम् ॥ २१४
तेऽपि प्रदानसमये सूक्ष्मवस्त्राल्पवेष्टनम् । अथ वामकरे न्यस्य करकं पश्य तत्र हि ॥ २१५
दारिकान्यस्तमुन्मुच्य ततस्तोयं प्रदापयेत् । एवं सत्कारयामास गौतमो भगवान्मुनिः ॥ २१६
महेशादिषु सर्वेषु भुक्तवत्सु महात्मसु । प्रक्षालिताङ्घ्रिहस्तेषु गन्धोद्वर्तितपाणिषु ॥ २१७
तदाऽऽसनसमासीने देवदेवे महेश्वरे । अथ नीचसमासीना देवाः सर्षिगणास्तथा ॥ २१८
मणिपात्रेषु संवेष्ट्य पूगखण्डान्सुधूपितान् । [१]अकोणवर्तुलान्स्थूलानसूक्ष्मानकृशानपि ॥ २१९
श्वेतपात्राणि संशोध्य क्षिप्त्वा कर्पूरखण्डकम् । चूर्णं च शंकरायाथ निवेदयति गौतमे ॥ २२०
गृहाण देव ताम्बूलमित्युक्तवचने मुनौ । कपे गृहाण ताम्बूलं प्रयच्छ मम खण्डकान् ॥ २२१
उवाच वानरो नास्ति मम शुद्धिर्महेश्वर । अनेकफलभक्तत्वाद्वानरस्तु शुचिः कथम् ॥ २२२

सदाशिव उवाच—

मद्वाक्यादखिलं शुध्येन्मद्वाक्यादमृतं विषम् । मद्वाक्यादखिला वेदा मद्वाक्याद्देवतादयः ॥ २२३
मद्वाक्याद्धर्मविज्ञानं मद्वाक्यान्मोक्ष उच्यते । पुराणान्यागमाश्चैव स्मृतयो मम वाक्यतः ॥ २२४
अतो गृहाण ताम्बूलं मम दद्याः सुखण्डकान् । हरिर्वामकरेणादात्ताम्बूलं पूगखण्डकम् ॥ २२५
ततः पत्राणि संगृह्य ततः खण्डान्समार्पयत् । कर्पूरमग्रतो दत्तं गृहीत्वाऽभक्षयच्छिवः ॥ २२६
देवे तु कृतताम्बूले पार्वती मन्दि(न्द)राचलात् । जयाविजययोर्हस्तं गृहीत्वाऽयान्मुनेर्गृहम् २२७
देवपादौ ततो नत्वा विनम्रम(व)दनाऽभवत् । उन्नमय्य मुखं तस्या इदमाह त्रिलोचनः ॥२२८
त्वदर्थं देवदेवेशि ह्यपराधः कृतो मया । यत्त्वां विहाय भुक्तं हि तथाऽन्यच्छृणु सुन्दरि ॥२२९
अथ स्वमन्दिरे स्थाप्य देवदेवविवर्जिते । सर्वबन्धविमुक्ते च महदेनो मया कृतम् ॥ २३०
क्षन्तुमर्हसि देवेशि त्यक्तकोपा विलोकय । न बभाषेवमुक्ता सा अरुन्धत्या हि निर्ययौ ॥ २३१
निर्गच्छन्तीं मुनिर्ज्ञात्वा दण्डवत्प्रणनाम च । तदारभ्य महेशाय दण्डप्रणतिसंस्तुतिम् ॥
कुर्वन्नुवाच च शिवा गौतम त्वं किमिच्छसि ॥ २३२

गौतम उवाच—

कृतकृत्योऽस्मि देवेशि यदि देयो वरो मम । मन्मन्दिरे महाभागे भोक्तुमर्हसि सांप्रतम् ॥ २३३

देव्युवाच—

भोक्ष्यामि तव गेहेऽहं शंकरानुमता मुने । गत्वेशं गौतमो विप्रो लब्धानुज्ञः पुनर्गतिः ॥ २३४
भोजयामास गिरिजां देवीं चारुन्धतीं तथा । भुक्त्वाऽथ पार्वती सर्वे गन्धपुष्पसुभूषणा ॥ २३५
सहानुचरकन्याभिः सहस्राभिर्हरं ययौ । अथाऽऽह शंकरो देवीं गच्छ गौतममन्दिरम् ॥ २३६
संध्योपास्तिमहं कृत्वा ह्यागच्छामि पुनर्गृहम् । इत्युक्ता प्रययौ देवी गौतमस्यैव मन्दिरम् ॥२३७
संध्यावन्दनकामाश्च सर्वे एव विनिर्गताः । कृतसंध्यास्तटाके तु महेशाद्यास्तु कृत्स्नशः ॥ २३८
अथोत्तरमुखः शंभुर्न्यासं कृत्वा जजाप ह । अथ विष्णुर्महातेजा महेशमिदमब्रवीत् ॥ २३९

१ म. अयकं । २ म. अनेकव° । ३ म. °न्मोद उ° । ४ झ. ढ. °बन्धुवि° ।

विष्णुरुवाच—

सर्वैर्नमस्यते यस्तु सर्वैरेव समर्च्यते । हूयते सर्वयज्ञेषु स भवान्किं जपिष्यति ॥ २४०
रचिताञ्जलयः सर्वे त्वामेवैकमुपासते । स भवान्देवदेवेश कस्मै वा रचिताञ्जलिः ॥ २४१
नमस्कारादिपुण्यानां फलदस्त्वं महेश्वरः । तव कः फलदो वन्द्यः को वा त्वत्तोऽधिको वद २४२

शंकर उवाच—

ध्याये न किंचिद्गोविन्द न नमस्ये ह किंचन । नोपास्ये कंचन हरे न जपिष्ये ह किंचन ॥ २४३
किं तु नास्तिकजन्तूनां प्रवृत्त्यर्थमिदं मया । दर्शनीयं हरे ते स्युरन्यथा पापकारिणः ॥ २४४
तस्माल्लोकोपकारार्थमिदं सर्वं कृतं मया । ओमित्युक्त्वा हरिरथ तं नत्वा समतिष्ठत ॥ २४५
अथ ते गौतमगृहं प्राप्ता देवगणर्षयः । सर्वे पूजामथो चक्रुर्देवाय शूलिने सदा ॥ २४६
देवो हनूमता सार्धं गायन्नास्ते रघूत्तम । पञ्चाक्षरीं महाविद्यां सर्व एव तदाऽजपन् ॥ २४७
हनूमत्करमालम्ब्य देव्यभ्याशं गतो हरः । एकशय्यासमासीनौ तावुभौ देवदंपती ॥ २४८
गायन्नास्ते स हनुमांस्तुम्बरुर्नारदस्तथा । नानाविधविलासांश्च चकार परमेश्वरः ॥
आहूय पार्वतीमीश इदं वाक्यमुवाच ह ॥ २४९

श्रीशिव उवाच—

रचयिष्यामि धम्मिल्लमेहि मत्पुरतः शुभे ॥ २५०
देव्याह न च युक्तं तद्भर्त्रा शुश्रूषणं स्त्रियाः । केशप्रसाधनकृतावनर्थान्तरमापतेत् ॥ २५१
केशप्रसाधने देवे(व) तत्त्वं सर्वं न चेप्सितम् । अथ बन्धे कृते पश्चादंसप्रान्तप्रमार्जनम् ॥ २५२
ततोऽम्बरमसंलग्नं केशपुष्पादिमार्जनम् । एतस्मिन्वर्तमाने तु महात्मानो यथाऽऽगमन् ॥ २५३
तदा किमुत्तरं वाच्यं तव देवादिवन्दिनः । नाऽऽयान्ति चेदथ विभो भीतिर्नाशमुपैष्यति ॥२५४
एवं हि भाषमाणां तां करेणाऽऽकृष्य शंकरः । स्वोर्वोस्तां स्थापयित्वैव विस्रस्य कचबन्धनम् ॥
विभज्य च कराभ्यां स प्रससार नखैरपि । विष्णुदत्तां पारिजातस्रजं कचगतामपि ॥ २५६
कृत्वा धम्मिल्लमकरोदथ मालां करागताम् । मल्लिकास्रजमादाय बबन्ध कचबन्धने ॥ २५७
कल्पप्रसूनमालां च ब्रह्मदत्तां महेश्वरः । पार्वतीवसने गूढगन्धाढ्ये च समाददात् ॥ २५८
अथांसपृष्ठसंलग्नमार्जनं कृतवान्विभुः । श्लथनीवेरधो देव्या वस्त्रवेष्टेरधो गतः ॥ २५९
देवः किमिदमित्युक्त्वा नीवीबन्धं चकार ह । नासाभूषणमेतत्ते पश्यामि समदा ततः ॥ २६०
इत्युक्त्वा स्वयमादाय विच्छायं मौक्तिकं सति । हरिद्रायाः समायोगे मुक्ताफलमदीप्तिमत् ॥
इदं न ध्रियतां मुक्ताफलं मम तव प्रियम् ॥ २६१

पार्वत्युवाच—

अहो त्वन्मन्दिरे शंभो सर्ववस्तु समृद्धिमत् । पूर्वमेव मया सर्वं वस्तु ज्ञातं विभूषणैः ॥ २६२
अहो द्रविणसंपत्तिर्भूषणैरवगम्यते । शिरो विभूषितं देव ब्रह्मशीर्षस्य मालया ॥ २६३
नेरकस्य तथा मौला वक्षःस्थलविभूषणम् । शेषश्च वासुकिश्चैव सविषौ तव कङ्कणे ॥ २६४
दिशोऽम्बरे जटा केशा भसितं चाङ्गरागकम् । महोक्षो वाहनं गोत्रं कुलं चाज्ञातमेव च ॥ २६५
ज्ञायेते पितरौ नैव विरूपाक्षं तथा वपुः । एवं वदन्तीं गिरिजां विष्णुः प्राहातिकोपनः ॥ २६६

१ ञ °ह्मदत्तां महेश्वर । न° । २ ख. नरस्य । ३ झ. ञ. बाला ।

विष्णुरुवाच—

किमर्थं निन्दसे देवि देवदेवं जगत्पतिम् । वुष्माणा न प्रिया भद्रे तव नूनमसंयमम् ॥ २६७

यत्रेशनिन्दनं भद्रे तत्र नो मरणं व्रतम् । इत्युक्त्वाऽथ नखाभ्यां हि हरिश्छेत्तुं शिरो गतः २६८

महेशस्तत्करं गृह्य प्राह मा साहसं कृथाः । पार्वतीवचनं सर्वं प्रियं मम न चाप्रियम् ॥ २६९

ममाप्रियं हृषीकेश कर्तुं यत्किंचिदिष्यते । ओमित्युक्त्वाऽथ भगवांस्तूष्णींभूतोऽभवद्धरिः २७०

हनूमानथ देवाय व्यज्ञापयदिदं वचः । अर्थयामि विनिष्कामं मम पूजाव्रतं तथा ॥ २७१

पूजार्थमप्यहं गच्छे ममानुज्ञातुमर्हसि ॥ २७२

शंकर उवाच—

कस्य पूजा क्व वा पूजा किं पुष्पं किं दलं वद । को गुरुः कश्च मन्त्रस्ते कीदृशं पूजनं तथा २७३

एवं वदति देवेशे हनूमान्भीतिकम्पितः । वेपमानसमस्ताङ्गः स्तोतुमेव प्रचक्रमे ॥ २७४

हनूमानुवाच—

नमो देवाय महते शंकरायामितात्मने । योगिने योगधात्रे च योगिनां गुरवे नमः ॥ २७५

योगिगम्याय देवाय ज्ञानिनां पतये नमः । वेदानां पतये तुभ्यं देवानां पतये नमः ॥ २७६

ध्यानाय ध्यानगम्याय ध्यातॄणां गुरवे नमः । शिष्टाय शिष्टगम्याय भूम्यादिपतये नमः ॥ २७७

अम्भस्येत्यादीनां वेदवाक्यानां पतये नमः । आतनुष्वेतिवाक्यैश्च प्रतिपाद्याय ते नमः ॥ २७८

अष्टमूर्ते नमस्तुभ्यं पशूनां पतये नमः । त्र्यम्बकाय त्रिनेत्राय सोमसूर्याग्निलोचन ॥ २७९

सुभृङ्गराजधत्तूरद्रोणपुष्पप्रियस्य ते । बृहतीपूगपुंनागचम्पकादिप्रियाय च ॥ २८०

नमस्तेऽस्तु नमस्तेऽस्तु भूय एव नमो नमः । शिवो हरिमथ प्राह मा भैषीर्वद मेऽखिलम् ॥ २८१

हनूमानुवाच—

शिवलिङ्गार्चनं कार्यं भस्मोद्धूलितदेहिना । दिवासंपादितैस्तोयैः पुष्पाद्यैरपि तादृशैः ॥ २८२

देव विज्ञापयिष्यामि शिवपूजाविधिं शुभम् । सायंकाले तु संप्राप्ते ह्यशिरःस्नानमाचरेत् ॥ २८३

क्षालितं वसनं शुष्कं धृत्वाऽऽचम्य द्विरग्रधीः । अथ भस्म समादाय त्वाग्नेयं स्नानमाचरेत्

प्रणवेन समामन्त्र्याप्यष्टवारमथापि वा । पञ्चाक्षरेण मन्त्रेण नाम्ना वा येन केनचित् ॥ २८५

सप्ताभिमन्त्रितं भस्म दर्भपाणिः समाहरेत् । ईशानः सर्वविद्यानामुक्त्वा शिरसि पातयेत् ॥ २८६

तत्पुरुषाय विद्महे मुखे भस्म प्रसेचयेत् । अघोरेभ्योऽथ घोरेभ्यो भस्म वक्षसि निक्षिपेत् २८७

वामदेवाय नम इति गुह्यस्थाने विनिक्षिपेत् । सद्योजातं प्रपद्यामि निक्षिपेदथ पादयोः ॥ २८८

उद्धूलयेत्समस्ताङ्गं प्रणवेन विचक्षणः । त्रैवर्णिकानामुदितः स्नानादिर्विधिरुत्तमः ॥ २८९

शूद्रादीनां प्रवक्ष्यामि यदुक्तं [*गुरुणा तथा । शिवेति पदमुच्चार्य भस्म संमन्त्रयेत्सुधीः ॥ २९०

सप्तवारमथाऽऽदाय शिवायेति शिरः क्षिपेत् । शंकराय मुखे प्रोक्तं] सर्वज्ञाय हृदि क्षिपेत् २९१

स्थाणवे नम इत्युक्त्वा गुह्ये चापि स्वयंभुवे । उच्चार्य पादयोः क्षिप्त्वा भस्म शुद्धमतः परम् ॥

नमः शिवायेत्युच्चार्य सर्वाङ्गोद्धूलनं स्मृतम् । प्रक्षाल्य हस्तावाचम्य दर्भपाणिः समाहितः २९३

दर्भाभावे सुवर्णं स्यात्तदभावे गवालकः । तन्ना(दभा)वे न (तु) दूर्वाः स्युस्तदभावे तु राजतम्

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ङ. च. छ. ञ. ट. ड. पुस्तकस्थः ।

---

१ ख. ङ. च. छ. ट. ड. योगग° । २ ञ. °वे ततद्° ।

संध्योपास्तिं जपं देव्याः कृत्वा देवगृहं व्रजेत् । देववेदिमथो वाऽपि कल्पितं स्थण्डिलं तु वा ॥
मृन्मयं कलितं शुद्धं पद्मादिरचनायुतम् । चातुर्वर्णकरङ्गैश्च श्वेतेनैकेन वा पुनः ॥ २९६
विचित्राणि च पद्मानि स्वस्तिकादि तथैव च । उत्पलादिगदाशङ्खत्रिशूलडमरुं त(रूंस्त)था २९७
सरोक्त(?)पञ्चमासादं शिवलिङ्गमथैव च । सर्वकामफलं वृक्षं कुलकं कोलकं तथा ॥ २९८
षट्कोणं चित्रकोणं च नवकोणमथापि वा । कोणद्वादशकां दोलां पादुकाव्यजनानि च ॥ २९९
चामरच्छत्रयुगलं विष्णुब्रह्मादिकं तथा । चूर्णैर्विरचयेद्देव्यां धीमान्देवालयेऽपि वा ॥ ३००
यत्रापि देवपूजा स्यात्तत्रैवं कल्पयेद्बुधः । स्वहस्तरचितं मुख्यं क्रीतं चैव तु मध्यमम् ॥ ३०१
याचितं तु कनिष्ठं स्याद्बलात्कारमथाधमम् । अर्हेषु यत्त्वनर्हेषु बलात्कारात्तु निष्फलम् ॥ ३०२
रक्तशालिजपास्था(?)ण(णु)कलमासितरक्तकैः । तण्डुलैर्व्रीहिमात्रोत्थैः कणैश्चैव यथाक्रमम् ३०३
उत्तमैर्मध्यमैश्चैव कथितैरधमैस्तथा । पद्मादिस्थापनैरेव तत्सम्यग्यागमाचरेत् ॥ ३०४
प्रागुत्तरमुखो वाऽपि यदि वा प्राङ्मुखो भवेत् । आसनं च प्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ३०५
कौशं चार्म चैलतल्पे दारवं तालपत्रकम् । काम्बलं काञ्चनं चैव राजतं ताम्रमेव च ॥ ३०६
गोकरीषार्कजैर्वाऽपि त्वासनं परिकल्पयेत् । वैयाघ्रं रौरवं चैव हारिणं मार्गमेव च ॥ ३०७
चार्मं चतुर्विधं ज्ञेयमथ बन्धुकमेव च । यथासंभवमेतेषु ह्यासनं परिकल्पयेत् ॥ ३०८
कृतपद्मासनो वाऽपि स्वस्तिकासन एव च । दर्भभस्मसमासीनः प्राणानायम्य वाग्यतः ॥ ३०९
तावत्स देवतारूपो ध्यानं चान्तः समाचरेत् । शिखान्ते द्वादशाङ्गुल्ये स्थितं सूक्ष्मां तनूं(क्ष्मतनूं) शिवम्
अन्तश्चरन्तं भूतेषु गुहायां विश्वमूर्तिषु । सर्वाभरणसंयुक्तमणिमादिगुणान्वितम् ॥ ३११
ध्यात्वा तं धारयेच्चित्ते तद्व्याप्त्या पूरयेत्तनुम् । तया दीप्त्या शरीरस्थं पापं नाशमुपागतम् ३१२
[*स्वर्णपारदसंपर्काद्रक्तं श्वेतं यथा भवेत् । तद्वाद्दशदलावृत्तमष्ट पञ्च त्रिरेव वा ॥ ३१३
परिकल्प्याऽऽसनं शुद्धं तत्र लिङ्गं निधाय च । गुहास्थितं] महेशानं लिङ्गे संचिन्तयेत्तथा ॥ ३१४
शोधिते कलशे तोयं शोधितं गन्धवासितम् । सुगन्धपुष्पं निक्षिप्य प्रणवेनाभिमन्त्रितम् ॥ ३१५
प्राणायामश्च प्रणवः शूद्रेषु न विधीयते । प्राणायामपदे ध्यानं शिवेत्योंकारमन्त्रणम् ॥ ३१६
गन्धपुष्पाक्षतादीनि पूजाद्रव्याणि यानि च । तानि स्थाप्य समीपे तु ततः संकल्प इष्यते ३१७
शिवपूजां करिष्यामि शिवतुष्ट्यर्थमेव च । इति संकल्पयित्वा तु तत आवाहनादिकम् ॥ ३१८
कृत्वा तु स्नानपर्यन्तं ततः स्नानं प्रकल्पयेत् । नमस्तेत्यादिमन्त्रेण शतरुद्रियविधानतः ॥ ३१९
अविच्छिन्ना तु या धारा मुक्तिधारेति कीर्तिता । तया यः स्नापयेन्मासं जपन्रुद्रमुपांशु वा ३२०
एकवारं त्रिवारं च पञ्च सप्त नवापि वा । एकादशमथो वारमथैकादश चा(थ त्रयोदशा)न्वितम्
मुक्तिस्नानमिदं ज्ञेयं मासं मोक्षप्रदायकम् । शैवया विद्यया स्नानं केवलप्रणवेन वा ॥ ३२२
मृन्मयैर्नालिकेरस्य शकलैश्चोर्मिभिस्तथा । कांस्येन मुक्ताशुक्त्या च पुष्पादिकसरेण वा ॥ ३२३
स्नापयेद्देवदेवेशं यथासंभवमीरितैः । शृङ्गस्य च विधिं वक्ष्ये स्नानयोग्यं यथा भवेत् ॥ ३२४
पूर्वमन्तस्तु संशोध्य बहिरन्तस्तु शोधयेत् । सुस्निग्धं लघु कृत्वाऽथ नागं छिन्द्यात्कथंचन ॥ ३२५
नीचैकदेशविन्यस्तद्वारद्रोण्या सुवृत्तयोः(या) । कुशानुयुतया स्नानं देवाय परिकल्पयेत् ॥ ३२६
एवं गवयशृङ्गस्य जलपूर्तिरथोच्यते । द्वारे निषिद्धलोहार्थं संधिद्वारासमन्विते(?) ॥ ३२७

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ड. पुस्तकस्थः ।

१ ज. कैशं । २ झ. ञ. °मू । महे° ।

योगवक्रं नागदण्डं नागाकारं प्रकल्पयेत् । फलस्थाने तु चषकं दण्डेन समरन्ध्रकम् ॥ ३२८
तत्रैव पातयेत्तोयं मूर्ध्न्यग्रघटे स्थितम् । पातयेदथ चान्येन वामेनैव करेण वा ॥ ३२९
मुक्तिधारा कृता तेन पवित्रं पापनाशनम् । एवं संस्थाप्य देवेशं पञ्चगव्यैस्तथैव च ॥ ३३०
पञ्चामृतैरथ स्नाप्य मधुरत्रितयेन च । विभूष्य भूषकैर्देवं पुनः स्नाप्य महेश्वरम् ॥ ३३१
शीतोपचारं कृत्वाऽथ तत आचमनादिकम् । वस्त्रं तथोपवीतं च पञ्चगन्धकमेव च ॥ ३३२
कर्पूरमरुवं चापि पटीरमथवा भवेत् । उभयं मिश्रितं वाऽपि शिवलिङ्गं प्रपूजयेत् ॥ ३३३
कृत्स्नं पीठं गन्धपूर्णं यद्वा विभवसारतः । तूष्णीमथोपचारं वा कालियं पुष्पमर्पयेत् ॥ ३३४
श्रीपत्रं मरुचित्याजं(?) यथाशक्त्याऽखिलं यथा । अनेकधूपद्रव्यं च गुग्गुलुं केवलं तथा ॥ ३३५
कपिलाघृतसंयुक्तं शर्वधूपाय शस्यते । धूपं दत्त्वा यथाशक्ति कपिलाघृतदीपकान् ॥ ३३६
अथवा पू(आ)ज्यमात्रेण दीपान्दत्त्वोपहारकम् । यथाशक्त्युपपन्नं च दत्त्वा पुष्पसमन्वितम् ३३७
मुखशुद्धिं ततो गत्वा दत्त्वा ताम्बूलमादरात् । प्रदक्षिणनमस्कारौ पूजैवं हि समाप्यते ॥ ३३८
गीत्यङ्गपञ्चकं पश्चात्तानि विज्ञापयामि ते । गीतिर्वाद्यं पुराणं च नृत्यं हासोक्तिरेव च ॥ ३३९
नीराजनं च पुष्पाणामञ्जलिश्चाखिलार्पणम् । क्षमा चोद्वासनं चैव कीर्तिपञ्चोपचारकम् ॥ ३४०
भूषणं च तथा छत्रं चामरं व्यजनं तथा । शिवोपवीतं कैंकर्यं षडीशानोपचारकम् ॥ ३४१
द्वात्रिंशदुपचारैस्तु यः समाराधयेच्छिवम् । एकेनाह्ना समस्तानां पापानां नाशनं ध्रुवम् ॥
द्वात्रिंशदुपचारं स्यात्पूजनं तूत्तमोत्तमम् ॥ ३४२

सदाशिव उवाच—

एवमेतत्कपिश्रेष्ठ तव पूजां वदाम्यहम् । मत्पादयुगुलं पूज्य सर्वपूजाकरो भव ॥ ३४३
आराध्येत्थं यथा लिङ्गे तन्ममाऽऽराधनं कुरु ॥ ३४४

हनूमानुवाच—

गुरुणा लिङ्गपूजैव नियता परिकल्पिता । तां करोमि पुरा देव पश्चात्त्वत्पादपूजनम् ॥ ३४५
इत्युक्त्वैव नमस्येशं शिवलिङ्गार्चनेऽभवत् । सरस्तीरमथो गत्वा कृत्वा सैकतवेदिकाम् ॥ ३४६
तालपत्रैर्विरचितमासनं पर्यकल्पयत् । प्रक्षाल्य पादहस्तौ तु समाचम्य समाहितः ३४७
भस्मस्नानमथो चक्रे पुनराचम्य वाग्यतः । देववेश्मामथो चक्रे पद्मानि सुमनोहरम् ॥ ३४८
अनन्तरं तालपत्रं पद्मासनगतः कपिः । प्राणानायम्य सन्यासं शुक्लध्यानसमन्वितः ॥ ३४९
प्रणम्य गुरुमीशानं जपन्नासीदतः परम् । अथ देवार्चनं कर्तुं यत्नमास्थितवानपि ॥ ३५०
पलाशपत्रपुटकद्वयानीतजलं शुचि । शिरःकमण्डलुगतं निधायाग्नित्रिमन्त्रितम् ॥ ३५१
आवाहनादि कृत्वाऽथ स्नानपर्यन्तमेव च । अथ स्नापयितुं देवमादाय करसंपुटे ॥ ३५२
कृत्वा निरीक्षणं देवं(व)पीठं नो दृष्टवान्कपिः । लिङ्गमात्रं करगतं दृष्ट्वा भीतिसमन्वितः ॥ ३५३
इदमाह महायोगी किं वा पापं मया कृतम् । यदेतत्पीठरहितं शिवलिङ्गं करस्थितम् ॥ ३५४
ममाद्य मरणं सिद्धं न पीठं चाऽऽगमिष्यति । अथ रुद्रं जपिष्यामि तदाऽऽयाति महेश्वरः ३५५
इति निश्चित्य मनसा जजाप शतरुद्रियम् । अथापि न समायातो महेशोऽथ कपीश्वरः ॥ ३५६
रुद्रं न्यपातयद्भूम्यां वीरभद्रः समागतः । किमर्थं रुद्यते भक्त रुदिहेतुं वदस्व मे ॥
पीठहीनमिदं लिङ्गं पश्य मे पापसंचयम् ॥ ३५७

१ झ. ञ. °न्धपूर्णं ।

वीरभद्र उवाच—

यदि नाऽऽयाति पीठं ते लिङ्गं मा साहसं कृथाः । दाहयिष्याम्यहं लोकं यदि नाऽऽयाति पीठकम्
पश्य दर्शय मे लिङ्गं पीठं यद्यागतं न वा । अथ दृष्ट्वा वीरभद्रो लिङ्गं पीठमनागतम् ॥ ३५९
दग्धुकामोऽखिलाँल्लोकान्वीरभद्रः प्रतापवान् । अनलं भुवि चिक्षेप क्षणाद्दग्धा मही तदा॥ ३६०
अथ सप्त तलान्दग्ध्वा पुनरूर्ध्वमवर्तत । पञ्चोर्ध्वलोकानदहज्जनलोकनिवासिनः ॥ ३६१
ललाटनेत्रसंभूतं नखेनाऽऽदाय चानलम् । जम्बीरफलसंकाशं कृत्वा करतले विभुः ॥ ३६२
यदि नाऽऽयाति पीठं ते दग्धा लोका न संशयः । अनायातमथो दृष्ट्वा वीरभद्रः प्रतापवान् ३६३
सनकादयो महात्मानो ज्ञात्वा योगेन चाऽऽगतान् । गौतमस्याऽऽश्रमवरं समागम्य महेश्वरम् ॥
न दृष्टवन्तो देवादिसेव्यमानमपि द्विजाः । अस्तुवन्नथ च स्तोत्रैः सर्ववेदसमुद्भवैः ॥ ३६५

ॐनमो देवदेवाय तस्मै शुद्धप्रभाचिन्त्यरूपाय तस्मै ।
नमः सुराणामधीशाय तस्मै नमो नमो वेदगुह्याय तस्मै ॥ ३६६
नमः शिवायाऽऽदिदेवाय तस्मै नमो व्यालयज्ञोपवीताय तस्मै ।
नमः सुराबिन्दुसंदोहवर्षत्रयीबिन्दुविश्वंभराय तस्मै ॥ ३६७
पृथिव्यथो वायुराकाशतोयं पुनः शशी वह्निसूर्यौ तथाऽऽत्मा ।
यस्याष्टैता मूर्तयः शंकरस्य तस्मै नमो ज्ञानगम्याय शश्वत् ॥ ३६८

एतां स्तुतिमथाऽऽकर्ण्य भगनेत्रप्रदः शिवः । विष्णुमाह च गच्छ त्वं समानय च तान्द्विजान् ३६९
आनीतास्तेन हरिणा देवाय प्रणतास्तु ते । तानाह शंकरो वाक्यं किमर्थं यूयमागताः ॥ ३७०

मुनय ऊचुः—

देव द्वादशलोकानां दृश्यन्ते भस्मराशयः । स्थितमेकं वनमिदं पश्य तल्लोकसंक्षयम् ॥ ३७१

सदाशिव उवाच—

ऊर्ध्वस्थपञ्चलोकानां दाहे संदेह एव नः । कथमङ्गारवृष्टिश्च कथं नो वा महाध्वनिः ॥ ३७२

मुनय ऊचुः—

भीतिरस्माकमधुना वर्तते वीरभद्रतः । स एवाङ्गारवृष्टिं च पिपासुरिव तामपात् ॥ ३७३
देवोऽथ वीरमाहूय किं वीरेत्यब्रवीद्भवः । वीरो हनूमतो लिङ्गपीठाभावादिदं कृतम् ॥ ३७४
कपेश्चित्तं परिज्ञातुं मया कृतमिदं बृहत् । कृपानिधिरथो देवो यथापूर्वमकल्पयत् ॥ ३७५
दग्धानप्यखिलाँल्लोकान्पूर्वतः शोभनान्विभुः । कल्पयामास विश्वात्मा वीरभद्रमथाब्रवीत् ॥३७६
आलिङ्ग्याऽऽघ्राय शिरसि ताम्बूलं दत्तवान्हरः । अथासौ हनुमानीशपूजनं कृतवानथ ॥ ३७७
एकं वनचरं तत्र गन्धर्वं सविपञ्चिकम् । इदमाह महावीणा मम वै दीयतामिति ॥ ३७८
गन्धर्वो न मया त्याज्या वीणा प्राणसमा मम । ममापि प्राणसदृशी वीणेत्याह कपीश्वरः ॥ ३७९
अथ मुष्टिनिपातेन गन्धर्वे पतिते कपिः । आदाय वीणां महतीं स्वरतन्तुसमान्विताम् ॥ ३८०
अलाबुसंयुतां कृत्वा राजवृक्षफलाकृतिम् । तस्योरसि विनिक्षिप्य गायन्नागाच्छिवान्तिकम्॥ ३८१
बृहतीकुसुमैः शुद्धैर्देवपादावपूजयत् । तस्मै वरमथ प्रादादाकल्पं जीवितं पुनः ॥
समुद्रलङ्घने शक्तिं वरं प्रादादथापरम् ॥ ३८२

१ छ. ड. परिज्ञातं ।

समस्तभूषासुविभूषिताङ्गः स्वदीप्तिमन्दीकृतदेवदीप्तिः ।
प्रसन्नमूर्तिस्तरुणः शिवाङ्कः संभावयामास समस्तदेवान् ॥ ३८३
पीतमुद्गमनीयं च समादाय महेश्वरः । पीतवस्त्रमिदं देव त्वं गृहाण हरे शुभम् ॥ ३८४
ब्रह्मणे रक्तवसनं सर्वेषां वस्त्रदस्तथा । देवर्षिदानवादीनां दत्तवान्वस्त्रयुग्मकम् ॥ ३८५
रामोऽपि चैतदाकर्ण्य शंभवे युग्मम(मा)र्पयत् । सुसूक्ष्मं बहुमूल्यं च स्वर्णभूषणमेव च ॥ ३८६
अथ भुक्त्वा सुखासीनः सामात्यः सपुरोहितः । नानामुनिगणैर्भूपैर्वानरैर्गौतमीतटे ॥ ३८७
शंभुं पुराणतत्त्वज्ञं राघवो वाक्यमब्रवीत् । त्वमेव सर्वं जानीषे सर्वधर्मगुहाशतम् ॥ ३८८
कस्मिन्कस्मिन्युगे ब्रह्मन्किं विशिष्टं वदस्व मे ॥ ३८९

शंभुरुवाच—

ध्यानमेव कृते श्रेष्ठं त्रेतायां यज्ञमे(ए)व च । द्वापरे चार्चनं तिष्ये दानं च हरिकीर्तनम् ॥ ३९०
सर्वं च शस्तं सर्वत्र ध्यानं नैव कलौ युगे । नराणां मुग्धचित्तत्वात्कालिस्थानां विशां पते ॥ ३९१
न धर्मे नियता बुद्धिर्न वेदे नैव च स्मृतौ । न क्रतौ न स्वभाकारे पुराणानां च न श्रुतौ ॥ ३९२
न जपे न च तीर्थेषु न च शुश्रूषणे सताम् । नेज्यायां देवतानां च न स्वजातीयकर्मणि ॥ ३९३
न देवस्मरणे चापि न च क्वापि वृषे नृप । अतश्च दीर्घकालानां पुण्यानामक्षमा नराः ॥ ३९४
दानं तु स्वल्पकालत्वात्कर्तुं शक्नोति मानवः । अतश्च कलिदुष्टानां प्रायश्चित्तं न विद्यते ॥ ३९५
केषांचित्पापनाशः स्यात्प्रायश्चित्तैस्तु नान्यथा । ब्रह्मघ्नो न गयाश्राद्धं काशीगन्ता श्रुतौ रतः(?) ॥
पुराणज्ञावमाश्रैते श्रोता तस्य न वाचकः(?) । युगानामनुसारेण तथाऽर्थस्य विवेचनात् ॥ ३९७
स्वपरप्रत्ययोत्पादात्परब्रह्मप्रकाशनात् । पुराणवक्ता सर्वस्माद्ब्राह्मणस्तु विशिष्यते ॥ ३९८
तेनापि च कृतं पापं न सज्येत्किमुतान्यतः । अन्येषामपि केषांचित्पुराणं पापनाशनम् ॥ ३९९
यः पुराणेषु विश्वासी वक्तारं मन्यते गुरुम् । ब्रह्मविद्याप्रदातारं विशेषं ज्ञातिबन्धुतः ॥ ४००
तस्य पापानि सर्वाणि विलयं यान्त्यसंशयम् । अथ श्रीशैलगमनं पूजकस्य महोशितुः ॥ ४०१
अतः कलौ मनुष्याणां पुराणं पापनाशनम् । पुरा कलियुगे राम वृत्तं संकीर्तये शृणु ॥ ४०२
आसीत्तु गौतमो नाम ब्राह्मणो वेदवर्जितः । तस्य पुष्टिः पशुश्चाऽऽस्तां भ्रातरौ वेदवर्जितौ ॥ ४०३
ताभ्यां सह कृषिं चक्रे तत्र वृद्धिमवाप च । धनधान्यादिकं किंचिद्राजानं दत्तवानथ ॥ ४०४
उवाच वचनं किंचिदधिकारं निरूप्य । अर्थं न गमयिष्यामि तौ शक्तौ भ्रातरौ मम ॥ ४०५

राजोवाच—

ब्राह्मणस्याधिकारो हि वैदिके धर्मकर्मणि । तदन्यत्र नियुक्तस्य ब्राह्मण्यं विप्रणश्यति ॥ ४०६

गौतम उवाच—

युगेष्वन्येषु धर्मोऽयं कलिधर्मो न तादृशः । भूपतित्वं हि भूपाल नृपाणां धर्म उच्यते ॥ ४०७
ब्राह्मणश्च परिक्षीणस्तं कुर्वन्नैव दुष्यति । शूद्राणां च कृषिर्धर्मो नाऽऽपद्यप्यग्रजन्मनः ॥ ४०८
तस्मात्क्षत्रेण वर्तिष्ये ग्रामान्मम समादिश । अन्यत्र चात्र क्षत्रेण वर्तनं मम रोचते ॥ ४०९
अन्यत्र तु तथेत्युक्तो ददौ ग्रामान्द्विजस्य तु । ग्रामाधिकारतुष्टस्य वर्तनं त्वन्यथाऽभवत् ॥ ४१०
अभक्षि मांसं चापायि सुरा चाभाषि दुर्वचः । परयोषा तथाऽगामि परस्वं प्रत्यहारि च ४११
अक्रीडि द्यूतमसकृत्कलञ्जं चाऽऽदि दुर्भुजा । नापूजि जगतामीशः शिवो वा विष्णुरेव वा ४१२

१ झ. म. तस्मानुवा° । २ क. °गे नामव्रतं सं° ।

एवं कालेन दुर्वृत्तं राजा वाक्यमभाषत । विप्र विप्रत्वमुत्सृज्य शूद्रत्वं प्राप्तवानसि ॥ ४१३
तस्माभियोगधर्मेण भवन्तं भ्रंशयामि च । माऽस्तु विप्रत्वमद्यैव शूद्रतैव वरं मम ॥ ४१४
तद्वते यदि विप्रास्ते न भोक्ष्यन्ति वरं मम । न हि सर्वमिदं युक्तं शक्तोऽहं पृथिवीपते ॥ ४१५

शंभुरुवाच—

एवं वदति दुर्विप्रे राजा तूष्णीमतिष्ठत । स तु वै शूद्रतुल्यश्च बुभुजेऽन्नं सहामिषम् ॥ ४१६
कदाचिदथ दुर्वृत्तः प्रतोलीमण्डपास्थितः । द्विजेन पठ्यमानं तु पद्यं तु श्रुतवानिदम् ॥ ४१७
हृदये पद्यमेतत्तु द्विजेरितमतिष्ठत । परात्परतरं यान्ति नारायणपरायणाः ॥
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥ ४१८
व्याख्यानमपि च श्रुत्वा पौराणिकमभाषत । कीदृङ्नारायणः प्रोक्तः कीदृशोऽपि महेश्वरः ४१९
किं परं त्वयनं प्रोक्तं द्वेषः कीदृगुदाहृतः । किं तत्परमिति ख्यातं ततः परतरं च किम् ॥ ४२०

पौराणिक उवाच—

परं तद्ब्रह्मणः स्थानं सुखव्यक्तैकलक्षणम् । ततः परतरं विष्णोर्धाम तद्ब्रह्मणोऽधिकम् ॥ ४२१
अविनाशितया तत्तु कीर्तितं परमं पदम् । तन्मध्ये पुरुषो विष्णुस्तदक्षरपरमं +विभुः ॥ ४२२
आपो हि नरजन्मत्वान्नाराः प्रोक्ता मनीषिभिः । नाराश्चास्यायनं यस्मात्तेन नारायणः स्मृतः ॥
तत्परं वर्तनं येषां ते प्रोक्तास्तत्परायणाः । महदादीनि तत्त्वानि यानि तेषां य ईश्वरः ॥ ४२४
सूर्याग्निशशिनेत्रोऽसौ महेशः स्यादुमापतिः । द्वेषो हि वैरं विज्ञेयमीश्वरे परमात्मनि ॥ ४२५

शंभुरुवाच—

एवं पुराणभेदेन समीरितमिदं वचः । चिन्तयन्पुनरप्याह मादृशस्य कथं गतिः ॥ ४२६
पौराणिकोऽथ तं प्राह शृणु वक्ष्यामि ते गतिम् । कुरु सर्वेण यत्नेन प्रायश्चित्तं यथाविधि ४२७
धर्मं चापि यथाशक्ति यथाकालं यथाविधि । विमुक्तपापः पश्चात्त्वमुत्तमां गतिमेष्यसि ॥ ४२८
पुराणमथवा नित्यं शृणुष्वावहितश्च सन् । निराशो वा महेशानं पूजयस्व पिनाकिनम् ॥ ४२९
देवं वा पुण्डरीकाक्षं केशवं क्लेशनाशनम् । संन्यासमथवा नित्यं ब्रह्मज्ञानपरो भव ॥ ४३०
अथवा गच्छ काशीशं मुक्त्यैवामृतिमाप्नुहि । गयां वा गच्छ तत्र त्वं श्राद्धं कर्तुं प्रयत्नतः ४३१
अथवा सर्वदेवानां सारं पातकनाशनम् । रुद्रं रुद्रप्रियकरं जपन्प्रत्यहमादरात् ॥ ४३२
श्रीशैलमथवा गच्छ केदारमथ चेच्छया । अथवा प्रतिवर्षं तु माघस्नानं प्रवर्तय ॥ ४३३
किमत्र बहुनोक्तेन धर्मभक्तः सदा भव । नैवं नरकवासस्ते भविता तु द्विजाधम ॥ ४३४

गौतम उवाच—

श्रुत्वा सर्वं करिष्यामि पुराणं भवतो मुखात् । शास्त्रं विश्वासहेतुं च वर्ज्यं चापि वदस्व मे ४३५

पौराणिक उवाच—

वर्ज्यं मांसं सुराऽन्यस्त्रीभोगो द्यूतं विकत्थनम् । पारुष्यमनृतं माया देवदेवविनिन्दनम् ॥ ४३६
गुरूणां पितृवृद्धानां पुराणस्मृतिभाषिणाम् । निन्दितं श्वेतवृन्ताकं कतकालाबुवर्तनम् ॥ ४३७
बीजपूरं कुसुम्भं च लोहितं शृङ्गमेव च । अररुं नालिकेरं च कूष्माण्डकं तथैव च ॥ ४३८
कोविदारफलं तैलपक्वं मानवजं पयः । वाघ्री(ध्रीं)णसखरीदुग्धं सूतकाक्षीरमाविकम् ॥ ४३९

---

+विभ्विति क्वचित्पाठः ।

औष्ट्रमेकशफक्षीरं [1]मार्गमाजं नृसंभवम् । विवत्सासंधिनीक्षीरं लवणं चैव योगि यत् ॥ ४४०
[2]नालिकेररसं कांस्ये ताम्रे मधु च सीसके । काचे तक्रं करम्भांश्च घृताक्तांश्चैव कारयेत् ॥ ४४१
होमं तु मृन्मये पात्रे पुरोडाशं तु राजते । न सेवेत परे लोके शुभार्थी तु विचक्षणः ॥ ४४२
पात्रान्तश्चूर्णलेपोऽपि तत्र भक्षणमेव च । क्रमुकस्य तथा भक्षश्चूर्णपत्रस्य चैव हि ॥ ४४३
क्रमुकस्यापि पक्वस्य भक्षणं क्रमियोगिनः । पायसे लवणं चैव केवलं च करार्पितम् ॥ ४४४
सिन्धुसौराष्ट्रकाम्बोजमागधेषु च सिंहले । न दोषाय भवेत्तत्र क्षीरं च लवणान्वितम् ॥ ४४५
क्षीराणि च समस्तानि लवणानि च योगि(ग)तः । देशेष्वन्येषु दोषाय पतत्येवेह संशयः ॥
किमत्र बहुनोक्तेन सद्भिर्निन्द्यं विवर्जयेत् ॥ ४४६

शंभुरुवाच—

एवं तस्य वचः श्रुत्वा ब्राह्मणस्य महात्मनः । स्वमेव भवनं गत्वा चिन्तयामास दुःखितः ४४७
रात्रौ मृत्युर्दिवा वेति न जानाति महानपि । परलोके सुखं दुःखमिह भोगविबोधितम् ॥ ४४८
क्रिमिकीटमनुष्याद्यैः सुखदुःखैः पृथक्पृथक् । प्रतिजीवं तु हेतूनां भेदो हि सुविनिश्चयः ॥४४९
एकस्यापि हि जीवस्य नास्ति चैकविधा स्थितिः । जन्मकाले महज्ज्ञानं शैशवेऽस्त्यल्पबोधनम् ॥
स्खलत्पदेऽल्पविज्ञानं बाल्ये चाल्पं तथैव च । कौमारे क्रीडनासक्तं यौवने विषयोषितम् ॥४५१
यौवने विनिवृत्ते तु द्रव्यसंपादनेषणा । वार्धके भोगलिप्सा च न च भोक्तुं क्षमोऽपि च ॥४५२
दूषिकाश्लेष्मलालाभिर्वलीपलितकम्पनैः । श्वासकासवि(सानि)लाक्षिप्तो हृषीकैर्विकलैर्युतः ४५३
[3]किंचिद्वर्तुं न शक्नोति न च जानाति किंचन । तिष्ठन्तीषु परस्त्रीषु गुह्यस्थानं प्रदर्शयन् ॥ ४५४
कोशकण्डूयनपरः क्रूरो [4]जीवितलक्षणैः । कण्डूयते स्फिचौ वस्त्रमुद्धृत्य च विचालयन् ॥ ४५५
भुञ्जानः श्लेष्मणा ग्रासं ग्रसितुं न च शक्नुयात् । यदा कासस्तदा जज्ञे पायुवायुश्च शब्दवान् ॥
निःसृतिश्च मलस्यापि श्लेष्मनिर्गम एव च । स्नुषादिभर्त्सनं बालतालहास्यनिदर्शनम् ॥ ४५७
गुरुनिर्गमनादीनि संचिन्त्य च पुनः पुनः । आहूतो भोजनाद्यर्थं भोज्याभावादि विनिन्दयन् ॥
चिरमुष्णं च निर्भर्त्स्य पुनश्चिन्तामवाप्य सः । अतिदुष्कृतकर्माऽहं कथं भोक्ष्ये कथं स्वपे ४५९
कथं तिष्ठे कथं गच्छे परलोकः कथं भवेत् । इतिचिन्ताकुलो नित्यं न नमत्यपरान्वितः ॥ ४६०
द्विजस्य सदनं गत्वा पुराणज्ञस्य राघव । लज्जावाकृतवक्त्रश्च किं करोमीत्यभाषत ॥ ४६१
न किंचिदप्युवाचासौ द्विजः पौराणिकस्तदा । पापोऽयमिति विज्ञाय शिष्येण +निरगामयत् ॥
गौतमोऽपि विनिर्गत्य द्वार्येव च बहिः स्थितः । भुव्यासीनं तु विज्ञाय पुराणार्थविचारकम् ॥
कथं कथमपि प्राप्य पीठं दत्तं च नाभजत् । निषण्णो भूतले राम पुराणज्ञमभाषत ॥ ४६४
प्रायश्चित्तं करिष्यामि तदत्रैव विधीयताम् ॥ ४६५

ब्राह्मण उवाच—

पापानि कीर्तयस्व त्वं सर्वथैव कृतानि तु । स चापि नाकृतं किंचिन्मया पापमितीरयत् ॥४६६
रुदन्पपात भूम्यां च कथं तातेति पीडितः । ब्राह्मणस्तमथ प्राह प्रायश्चित्तं न विद्यते ॥
महापापे त्रिरावृत्ते पुनश्च यदि चेत्कृतम् ॥ ४६७

+ आर्षत्वाद्ध्रस्वाभावः ।

१ ङ. य. °गैमाजनसं° । २ क. नालिकेरोदकं । ३ ङ. च. छ. ट. ढ. °द्वन्तुं न । ४ ङ. जीवति ल° ।

गौतम उवाच—

पौराणिक महाभाग प्राप्यापि त्वामहं कथम् । पापयुक्तो द्विजश्रेष्ठ संगतिर्विफला भवेत् ॥ ४६८

पौराणिक उवाच—

शास्त्रं प्रमाणं सर्वेषां प्रायश्चित्तविनिर्णये । तद्विना यो हि तद्ब्रूयात्प्रायश्चित्तं न तद्भवेत् ॥ ४६९
सकृत्कृते सकृत्प्रोक्तं द्वितीये द्विगुणं भवेत् । तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः ४७०
त्वया कृतं तु बहुधा चतुर्विधमपीच्छया । कथं वक्तुमहं शक्तः प्रायश्चित्तं भवादृशे ॥ ४७१
गौतमोऽपि पुनः प्राह क्व गन्तव्यं मयेति च । पौराणिको द्विजो राम तूष्णीमेव बभूव ह ॥४७२
गौतमोऽपि महाशैलं श्रिया एव जगाम ह । अथ तत्र नदीं स्नात्वा दृष्ट्वेशं मल्लिकार्जुनम् ॥४७३
उपवासत्रयं कृत्वा शिवरात्रिमविन्दत । चतुर्थमुपवासं च चकारातीव दुःखितः ॥ ४७४
पारणं चाप्यमायां स कृतवान्फलवल्कलैः । अथ प्रदक्षिणं चक्रे श्रीशैलस्य च स द्विजः ॥ ४७५
गतवान्मन्दिरं पश्चाच्चिन्तयाऽतिकृशः श्वसन् । कथं पापनिवृत्तिर्मे तूष्णींभूतस्य सेत्स्यति ॥ ४७६
अनन्तमविचार्यं किं मत्पापं सुमहत्तरम् । श्रुत्वा न कोऽपि मे ब्रूयात्प्रायश्चित्तं विधीयताम् ॥
किं तु कस्मिन्पुराणे तु श्रुते ज्ञातं भविष्यति । इति कृत्वा मतिं सोऽथ पुराणज्ञमभाषत ॥ ४७८
पुराणमेकं मे तात व्याख्यातु भगवानिति । जातकर्मादिसंस्कारान्कारयस्व ममाऽऽशु वै ॥ ४७९
द्विजो भूत्वा शृणोम्यद्य प्रायश्चित्तं करोम्यतः । विधाय किं पुराणं मे भविष्यति चिकीर्षितम् ॥
अतः शक्यं करिष्यामि पुराणार्थं विनिश्चयन् ॥ ४८०

पौराणिक उवाच—

यथा तत्कीर्तयिष्यामि पुराणं पापनाशनम् । यथाज्ञानं[1] यथाशक्ति यथाशुद्धं यथाविधि ॥
किंवा रुचिपुराणं ते कीर्तयिष्ये तदेव तु ॥ ४८१

गौतम उवाच—

सर्वं रुचिपुराणं मे वक्तव्यं किं हितं वद । श्रुते यस्मिन्भिदा नैव जायते तु हरीशयोः ॥ ४८२

पौराणिक उवाच—

कौर्मोक्तं यत्पुराणं तद्देवयोरभिदाभिधम्[2] । शृणोति यस्तत्प्रथमं तस्य पापं विनश्यति ॥ ४८३
तस्य वक्ता तु यो विप्रस्तस्य विघ्नान्तरं भवेत् । श्रोतव्यं मन्यते प्रायो यदि भार्या विनश्यति ४८४
किं चैकं दुष्करं वक्ष्ये श्रोतुर्वक्तुरनिन्दकम् । व्याख्यातरि यदि प्रीतिर्धर्मदेवप्रकाशिनी ॥ ४८५
आचारदर्शके पुण्ये कर्ममोक्षादिदर्शके । तदा तुष्टो महेशः स्याद्विष्णुरिष्टफलप्रदः ।
पितरस्तारितास्तेन यान्ति ते परमां गतिम् ॥ ४८६

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे दशाधिकशततमोऽध्यायः ॥ ११० ॥

आदितः श्लोकानां समष्ट्यङ्काः—१८९८०

---

अथैकादशाधिकशततमोऽध्यायः ।

---

श्रीराम उवाच—

कथं पातकसंघातसंक्रमे ब्राह्मणाधमे । पुराणज्ञः कथं व्याख्यां चकार द्विजसत्तम ॥ १

---

१ ख ज्ञानं । २ ख. ग. °रविधाविधम् ।

शंभुरुवाच—

अध्यापने चाध्ययने जायते चाथ संगमः । संगतौ वत्सरं राम याति पातकिपातकम् ॥ २
पुराणज्ञे तु काकुत्स्थ सर्वतत्त्वार्थवेदिनि । अपि पातकसंदोहचीर्णपापं प्रणश्यति ॥ ३
प्रभूतवह्निनाशो(शे) हि द्रुमराशिर्यथैव हि । शलभो दीपनाशाय वह्निनाशाय न प्रभुः ॥ ४
कृत्तुं (तं ?) पापं तथाऽन्येषां नाशनाय *पुराणिकः । भूतादिग्रस्तमर्त्यानां भूतादिभयमोचकः ५
समन्त्रवानपनयेद्यथा न स्वयमातुरः । पौराणिकस्तथा पापं न किंचित्प्राप्तुमर्हति ॥ ६
आत्मना च कृतं पापमन्यैरपि च यत्कृतम् । पुराणज्ञो नाशयति त्वतिदुष्टं स्वकर्म वा ॥ ७
भवानीशे हृषीकेशे समवृत्तिर्विवेकवान् । लोकवेदक्रियावेत्ता रुद्रजाप्यनतिस्पृहः ॥ ८
तुष्टः शान्तः क्रियादक्षः प्रभूतोद्योगकृद्वशी । यथैव ते पुराणज्ञो वसिष्ठो भगवानृषिः ॥ ९
नियोगात्तव भूपाल ह्ययोध्यायामधिष्ठितः । अपालयद्ध्रुवं कृत्स्नां त्वां च रक्षः समापतत् ॥ १०
स च शुक्रोपदेशेन राक्षसस्त्वामथाभ्यगात् । मृगासक्तं हनिष्यामि नान्यथाऽवसरास्त्विति ॥ ११
अथ विप्रो विदित्वैतद्वसिष्ठस्त्वद्धितप्रियः । सुप्तं प्रमत्तं काकुत्स्थं रक्षो हन्ति न संशयः ॥ १२
ब्रह्मावासवरं तद्धि मया कार्यं निवारणम् । इति संचिन्त्य विप्रर्षिः सेनामादाय निर्गतः ॥ १३
रक्षो हन्तुमशक्तस्तु मृत्युहीनं ततो मुनिः । स्वयं च राक्षसो भूत्वा वाक्यमाह महामुनिः ॥ १४
किमर्थमागतोऽसीह वनं मुनिनिषेवितम् । स आह राजा रक्षोग्रस्तमहं हन्तुमागतः ॥ १५
मुनिरप्याह किं तेन जीवितेन मृतेन वा । भुक्त्वाऽऽमिषं मदीयं तु युद्धं कृत्वा जयं व्रज ॥ १६

राक्षस उवाच—

कथं त्वं राक्षसो मह्यं भक्षणाय भविष्यसि । वसिष्ठोऽप्यथ मानुष्यमास्थाय वियति स्थितः १७
निष्ठीव्य मस्तके तस्य मुष्टिना तमताडयत् । ताडितो राक्षसस्तेन व्यद्रावयद्दाषिश्च तम् ॥ १८
पलायमानावन्योन्यं जलधिं तु गतावुभौ । तत्रस्थेन ग्रहेणासौ गृहीतो राक्षसस्तदा ॥ १९
मुनिः पुनरयोध्यायां पूर्ववत्समतिष्ठत ॥ २०

+शंभुरुवाच—

तस्मात्स्वाभिमतं कुर्यात्पुराणज्ञो विमत्सरः । श्रवणस्य विधानं च कथयामि शुभं शृणु ॥ २१
शुक्लपक्षे दिने शुद्धे वारनक्षत्रयोगतः । करणे चापि लग्ने च ग्रहताराबलान्विते ॥ २२
अमूढं न ग्रहे बाले न च वृद्धौ गुरौ स्थिते । न कृष्णपक्षे ग्रहणे न च नास्तिकसंनिधौ ॥ २३
पूर्वोक्तलक्षणोपेतं पुराणं शृणुयादिति । शुद्धगेहेऽथवा शुद्धवेदिकायां मठेऽथवा ॥ २४
नदीतीरे देवगृहे सभामण्डप एव च । रथ्यामठेऽथवा रम्ये पुण्यशालासु राघव ॥ २५
स्वयं नमस्य विप्रेन्द्रान्पुराणज्ञं विशेषतः । आसनं कल्पितं कुर्यादूर्ध्वं सर्वविशेषितम् ॥ २६
एहि धर्मासनमिति वक्तव्यं स्यादनिष्ठुरम् । पुराणप्रक्रमदिने यत्कार्यं तदुदीरये ॥ २७
व्याख्यातारं पुराणस्य वस्त्राद्यैः परिपूज्य च । शुभानि दत्त्वा वस्त्राणि सूक्ष्माणि च नवानि च
करकण्ठविभूषादि पात्रमासनमेव च । गन्धपुष्पाक्षतैः पूज्य ताम्बूलं विनिवेद्य च ॥ २९
शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ३०
सभासदश्च संपूज्य गणेशं प्रार्थयेत्ततः । ॐ नम इत्यादिमन्त्रेण पूजनं भारतीनुतिः ॥ ३१

* संज्ञापूर्वकत्वेनानित्यत्वान्न वृद्धिः । + इदमधिकमिति भाति ।

१ म. पुराणकः । २ झ. शुक्रोप॰ । ३ झ. हरिष्या॰ । ४ ड. प॰ण पठमं भारतीमुनिः । प्रा॰ ।

प्रातःकाले पुराणस्य प्रक्रमं प्रारभेदिति । उपक्रमदिने राम त्रिपञ्चदश वा शुभाः ॥ ३२
श्लोका द्वितीये दिवसे ततो द्विगुणतः शुभाः । तृतीयदिवसे राम ततश्चाधिकमिष्यते ॥ ३३
दिनानामव्यवच्छेदाद्व्याख्यानं श्रवणं तथा । व्यवस्थितिर्यदा जाता तदा पौराणिकं गुरुम् ॥ ३४
ताम्बूलादि प्रदायाथ परेद्युः शृणुयादपि । पुराणमेवं श्रोतव्यं दैनंदिनमिति श्रुतिः ॥ ३५
व्रतरूपेण यः कश्चित्पुराणं शृणुयान्नरः । येदेवं तत्पुराणं तु तत्र याति न संशयः ॥ ३६
पुराणं श्रोतुकामेन श्लोकश्चैकोऽपि चेच्छ्रुतः । तद्दिने तु कृतं पापं नाशयेत्तु न संशयः ॥ ३७

एवं पुराणं शृणुयाच्च यस्तु स ब्रह्महत्याकृतपापबन्धात् ।
सुरापीतिः स्वर्णहरश्च राम गुर्वङ्गनागश्च विमुक्तिमेति ॥ ३८
पापानि चान्यानि कृतानि पुंभिः सर्वाणि नश्यन्ति पुराकृतानि ।
इहापि यान्यब्दशतार्जितानि श्रोतुर्विनश्यन्ति तथा च वक्तुः ॥ ३९

कलौ समस्तविप्राणां सर्वज्ञत्वं न विद्यते । विगुणाऽपि ततो व्याख्या फलदा दानकर्मवत् ॥ ४०
पुराणानामभिप्रायं व्यासो वेद न चापरः । अहं वेद्मि विशेषेण व्यासादपि विधेरपि ॥ ४१
न स्वाध्यायस्तपो वाऽपि न मन्त्रो न जुहोतयः । फलन्ति न तथा तिष्ये पुराणश्रवणं यथा ॥ ४२
एकैकश्रवणादेव पातकं महदेव तु । नाशमाप्नोत्यसंदेहः श्रीशैलवर्तनादिव ॥ ४३
अतो गुरुः पुराणज्ञः श्रोतृवन्द्योऽघनाशनः । न तस्मादधिकः कश्चिद्गुरुरस्ति गतिप्रदः ॥ ४४
मन्त्रेषु गुरवो ये च वेदशास्त्रेषु ये मताः । नेशते सर्वविज्ञानं दातुं तस्मान्न बोधकाः ॥ ४५
पिशाचाः प्रायशो राम ब्रह्मराक्षसनामिनः । वेदमन्त्रस्य वेत्तारो दृश्यन्ते न पुराणवित् ॥ ४६
पुराणविमुखो नैव सर्वः सर्वं हि पश्यति । पुराणज्ञो हि तत्तस्मात्पापनाशकरः प्रभुः ॥ ४७
तत्पूजा सर्वपूजा स्यात्सर्वद्रोहोऽस्य पीडनम् । यथा समस्तदानानां विद्यादानं प्रशस्यते ॥ ४८
पौराणिकस्तथा राम तत्र दानं महत्फलम् ॥ ४९

श्रीराम उवाच—

किं वा पौराणिके देयं कियत्कीदृशमेव च । पुराणं कीदृशं वर्ज्यं वर्ज्यः कीदृक्पुराणवित् ॥ ५०

श्रीशंभुरुवाच—

षड्रसान्नपानानि स्नेहद्रव्याणि यानि च । गृहं सोपस्करं राम पुराणज्ञाय दापयेत् ॥ ५१
पर्याप्तान्येव सर्वाणि त्वधिकानि फलाधिकान्(कम्) ॥ ५२
दद्याद्द्रव्यमतो भूयः सचैलं शोभितं मृदु । भूषणानि यथार्हाणि स्वशक्त्या प्रतिपादयेत् ॥ ५३
गन्धपुष्पं प्रतिदिनं केवलं गन्धमेव वा । केवलं वा तथा पुष्पं फलकाले फलान्यपि ॥ ५४
ताम्बूलं च तथा दद्यान्नमस्कुर्याच्च भक्तितः । पुराणस्य समाप्तौ तु दद्याद्दानादिकं तथा ॥ ५५
अधिकं तु तथा देयं भूहिरण्यादिकं नृप । न च तूष्णीमुपक्रम्य श्रोतुमर्हति कश्चन ॥ ५६
सभासद्भिः कृता चैव या पूजैकेन वा कृता । देवस्थाने यथाशक्ति सर्वैः पूजनमिष्यते ॥ ५७
तीर्थेऽपि च यथा राम पुण्येष्वायतनेषु च । स्वशक्त्या पूजनं कुर्यात्पुराणज्ञाय राघव ॥ ५८
श्रोतुस्तु लक्षणं पूर्वं मयोक्तं भवते नृप । पौराणिकस्य सर्वस्य लक्षणं कथयामि ते ॥ ५९
कुलहीनो महाव्याधिर्महापापी तिरस्कृतः । शौचाचारविहीनश्च वेदस्मृतिविवर्जितः ॥ ६०
अन्यदेवः पूतिवक्त्रो व्यङ्गश्चाप्यधिकाङ्गवान् । परभार्यापतिः स्तेनः प्राणिहन्ता निराकृतिः ॥ ६१

---

१ म. प्रकृतं । २ ङ. यदैवं । ३ ट. प. शून्यदेवः ।

अथ वर्ज्यः पुराणं ते कथयामि नृपोत्तम । पूर्वज्ञैरुच्यमानं च मत्प्रोक्तं मुनिभिः परैः ॥ ६२
व्यासादयो मुनिवरा यत्प्रोचुस्तदुदीरयेत् । पुराणस्थं पठेद्ग्रन्थं व्याख्यास्येच्च(?)विचारयन् ॥ ६३
यया कयाऽपि वा राम भाषया देशभेदतः । न देशभाषारचितं ग्रन्थं श्रुत्वा फलं लभेत् ॥ ६४
व्याख्या या काऽपि काकुत्स्थ पुराणस्य हिता हि सा । तस्मात्त्वं देव याचस्व व्याख्यास्ये यत्पुराणकम्

*शंभुरुवाच—

एवं पौराणिकेनोक्तं श्रुतवानपि गौतमः । [†स्वयं वस्त्रत्रयं प्रादाद्ब्राह्मणाय महात्मने ॥ ६६
कौर्मं पुराणं प्रथमं श्रुतवानिति नः श्रुतम् । दत्तवान्स्वर्णमधिकं वस्त्राणि च शुभानि च ॥ ६७
अथ लैङ्गं च शुश्राव वैष्णवं वामनं तथा । पाद्मं च गारुडं चैव सौरं ब्राह्ममथैव च ॥ ६८
एवमष्ट स शुश्राव पुराणानि स गौतमः । ] अथ रामायणं चैव कौर्ममेव पुनश्च सः ॥ ६९
शिव नारायणेत्येवं जपं चक्रे सदैव हि । अवाप निधनं चापि स गतो ब्रह्मणः पदम् ॥ ७०
ब्रह्मा(ह्म) संपूजितं(तो) विप्रं(प्रो) विष्णुलोकमथागमत् । विष्णुना पूजितः सोऽथ जगाम शिवमन्दिरम्+ ॥ ७१
सर्वेषामेव वन्द्योऽसौ गौतमो मुनिसत्तमः । भारतश्रवणे चापि नियमा ये मयेरिताः ॥ ७२
पुरा व्यासेन मुनिना त्रिवर्षाद्यत्कृतं शुभम् । श्रवणात्तस्य कृत्स्नस्य व्याकर्ता भारतस्य यः ॥ ७३
न किंचित्प्रणमेद्विप्रं मुक्त्वा योगिनमुत्तमम् । सर्वेषामेव वन्द्योऽसौ भारतं व्याकरोति यः ॥ ७४
यो महाभारतं नित्यं व्याख्यास्यति पठेच्च वा । स सर्वेभ्योऽधिको विप्रस्तारयेच्चैव मानवान् ॥
व्याकरोति च पर्वैकं सर्वाणि कतिचित्तु वा । सर्वपापविनिर्मुक्तो हव्ये कव्ये विशिष्यते ॥ ७६
तमेव प्रणमेद्विप्रं तमेवार्हं च पूजयेत् । तमेव भोजयेन्नित्यं सर्वं तस्मै निवेदयेत् ॥ ७७
तस्य पूजाविधिः प्रोक्तो व्याख्यानसमये द्विज । प्रतिपूज्योऽथ वस्त्राद्यैः पूजयेद्विधिमार्गतः ॥ ७८
आदिपर्वसमाप्तौ तु सूक्ष्मवस्त्रत्रयं ददेत् । सुवर्णं च यथाशक्ति सभापर्वणि वाससी ॥ ७९
अनुशासनिकारण्यस्वर्गारोहेषु पर्वसु । आदिपर्वणि या पूजा सा पूजा [1]नृपपुंगव ॥ ८०
कर्णाश्वमेधवैराटशल्यद्रोणेषु पर्वसु । सूक्ष्मवस्त्रत्रयं शुद्धं निष्कद्वयमथापि वा ॥ ८१
क्षुद्रपर्वस्वथान्येषु निष्कावथ समानयेत् । हरिवंशे सनिष्कं तु वस्त्रत्रितयमेव तु ॥ ८२
भारतस्याखिलस्यैव समाप्तौ क्षेत्रदो भवेत् । रामायणस्य श्रवणे काण्डे काण्डे प्रपूजयेत् ॥ ८३
क्षेत्रं पर्याप्तमथवा सुवर्णमपि दापयेत् । व्याख्याता गुरुवाक्यस्य सर्वकल्मषनाशनः ॥ ८४
अर्थो धर्मश्च कामश्च मोक्षश्च [2]नृपसत्तम । व्याख्याश्रवणतः सर्वे सिध्यन्ति च सुबुद्धयः ॥ ८५
ब्रह्महत्यादिपापानां सर्वेषामपि नाशनम् । एकेन श्रवणेनास्य किं नरैर्न श्रुतं भुवि ॥ ८६
यानवस्त्रसुवर्णाद्यैर्नित्यमेनं प्रपूजयेत् । व्याख्यातारं यतः पापसंदोहस्य विनाशनम् ॥ ८७
अन्यान्यपि पुराणानि मुनिप्रोक्तानि तान्यपि । श्रोतॄणां पापनाशाय वक्तुश्चापि विशेषतः ॥ ८८
यश्च सर्वपुराणानि षड्विंशत्तु (?)प्रकीर्तयेत् । शृणोति वा न तस्यास्ति वित्तच्छेदः कदाचन ॥ ८९
ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते । तृतीयं वैष्णवं चैव चतुर्थं शैवमुच्यते ॥ ९०
अथ भागवतं प्रोक्तं पञ्चमं षष्ठमुच्यते । भविष्यं नारदीयं च सप्तमं परिकीर्तितम् ॥ ९१

* इदमधिकमिति भाति । † धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च छ. ट. ड. प. पुस्तकस्थः । + इतः परम् 'एवं शंभोः कथां श्रुत्वा राघवस्तोषमाप्तवान् । श्रीशंभुरुवाच' । इत्यधिकं ट. प. पुस्तकयोः ।

१ ट. प. मुनिपुंगव । २ ट. प मुनिसत्तम ।

मार्कण्डेयमिति प्रोक्तमष्टमं नवमं तथा । आग्नेयं ब्रह्मवैवर्तं दशमं परिकीर्तितम् ॥ ९२
लैङ्गं च वामनं चैव स्कान्दं मात्स्यमथैव च । कौर्मं वाराहमुदितं गारुडं चाथ कीर्तितम् ॥ ९३
ब्रह्माण्डमित्यष्टादश पुराणानि विदुर्बुधाः । तथा चोपपुराणानि कथयिष्याम्यतः परम् ॥ ९४
आद्यं सनत्कुमाराख्यं नारसिंहमतः परम् । [*तृतीयमाण्डमुद्दिष्टं दूर्वाससमथैव च ॥ ९५
नारदीयमथान्यं च(न्यच्च) कापिलं मानवं तथा । तद्वदौशनसप्रोक्तं ब्रह्माण्डं च तथाऽपरम् ]९६
वारुणं कालिकाह्वानं माहेशं साम्बमेव च । सौरं पाराशरं चैव मारीचं भार्गवाह्वयम् ॥ ९७
कौमारं च पुराणानि कीर्तितान्यष्ट वै दश । अष्टादशपुराणानां व्याकर्ता तु भवेन्मनुः ॥ ९८

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे पुराणमाहात्म्यकथनं नामैकादशाधिकशततमोऽध्यायः ॥ १११ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९०७८

---

अथ द्वादशाधिकशततमोऽध्यायः ।

---

सूत उवाच—

संध्यावन्दनकर्म क्रियतामिति रामो मुनिमाचष्टायम् ।
उष्णद्युतिरप्यस्तमुपैति द्विजकुलमेतत्क्रीडमुपैति ॥ १
स्वयमपि संध्यावन्दनकामोऽव्रजदुत्तरदिशमुज्झितयानः ।
हाहाहूहूकृतसंगीतिर्बन्दीप्रमुखप्रस्तुतकीर्तिः ॥ २
गौतमीतटमुपेत्य राघवो वायुनन्दनसुधौतपद्युगः ।
जाम्बवत्कृतकरावलम्बनः प्राप्तदुत्पथनदीं तु गौतमीम् ।
करद्वये धृतकुशः स राघवः प्रागमद्वरुणदिशामथोत्तमाम् ॥ ३
दत्त्वा ततोऽर्घत्रितयं तथाविधः प्रहृष्टरोमाऽथ जजाप सोऽन्तरे ।
+ संप्रार्थयित्वा वरुणं यथाक्रमं शंभुं वसिष्ठं प्रणनाम राघवः ॥ ४
ताभ्यां कृताशीरगमन्मनःपदं हनूमता क्षालितपादपङ्कजः ।
जुहाव वह्नीनथ बन्दिमागधैः संस्तूयमानोऽथ च निर्ययौ बहिः ॥ ५
महसश्चन्द्रकिरणैः सुधालिप्तमिवाम्बरम् । प्रसक्तताराकुसुमं वितानमिव सर्वतः ॥ ६
अथागच्छत्सौधतलं वृद्धामात्येन कल्पितम् । नानासनसमोपेतं सभास्थानं ययौ नृपः ॥ ७
अथ मुनिं ह्युपवेश्य स राघवः स्वयमपि प्रथमासनमाभजत् ।
कपिगणाः परितः पृथुविग्रहा रचनया स्थितिमाप्रतिपेदिरे ॥ ८
सुखस्थितं नृपमभिवीक्ष्य स द्विजो वचस्तदा समुचितमाह शंभुः ।
इहस्थितो भवति समस्तपूजितः कथं कथा नृपवर वर्तते गुहायाम् ॥ ९
आकर्ण्याथ रघूद्वहो द्विजवचः शुश्रूषुरासीत्कथां
तत्रस्थो निपुणं निवार्य वचनं सर्वैः श्रुतं तत्क्षणात् ॥
शुश्रावाथ कथां महाद्भुततया स्वात्माश्रयामन्यथा

---

* धनुश्चिह्नान्तर्गतः पाठः, ढ. प. पुस्तकस्थः । + ल्यबभाव आर्षः ।

---

१ ट. प. श्रीराम ।

रक्षोबाधनवादिनीमथ नृपः किं त्वेतदित्याह च ॥ १०
कुम्भश्रोत्रवधः पुरा समजनि प्राप्तो दशास्यो वधं
पश्चादित्ययमन्यथा विरचितं रामायणं भाषते ॥
कोऽयं विप्रवरः समस्तजनतानाखिलत्वसंपादको
राज्ञां स्थानमुपेत्य वक्ति स मया दण्ड्योऽथ पूज्योऽथ वा ॥ ११
अथाऽऽह जाम्बवानमुं रघूत्तमं कथां प्रति
रामायणं न तावकं त्विदं हि कल्पितं मतम् ॥
समस्तमत्र विस्तराद्वदामि देव तच्छृणु
पङ्केरुहस्य सूनुतो मया श्रुतं पुरा ह्यभूत् ॥ १२

जाम्बवन्तं विज्ञाप्य रामचन्द्रो वचनमाह । १

श्रीराम उवाच—

कीर्तय पुराणं मे शुश्रूषुः कुतूहलादहं प्रणीतं तत्केन च विज्ञातम् ॥ २
जाम्बवानथ बभाषे हि ॥ ३
विधात्रे नमस्तथैव विधुभूषणकेशवाभ्याम् ॥ ४
अथ पुरातनरामायणं कथयामि यस्य श्रवणेनाखिलजन्मसंपादितपापक्षयो जायते ॥ ५
अथ तथाऽपि दशरथो दशरथसमानरथी महीयसा बलेन सुमनसं नाम नगरं जिगमिषया पङ्केरुहसुतसुतं वसिष्ठमाहूय नमस्कृत्वा मुनिदत्तानुज्ञः शताक्षौहिणीसेनया सहाऽऽरुह्य तुरगमुख्यं चन्द्रसमानशरीरमि(म)तिरोषसमाविष्टो विप्रश्रवसमाराध्य दण्डयात्रां चकार ॥ ६
साध्यो नाम स्वीयया सेनया वृतो दशरथाभिमुखमाययौ योद्धुं युद्धं चान्योन्यमभूत् ॥ ७
मासमेकं युद्धं कृत्वा दशरथस्तं साध्यं जग्राह ॥ ८
अथ साध्यसूनुर्भूषणो नामाल्पपरिवारो युयुधे दशरथेन ॥ ९
दशरथोऽपि साध्यसूनुं भुवो भूषणमवलोक्य योद्धुमेव नैच्छत् ॥ १०
कथमेतादृशं हन्मि चास्मिन्हतेऽस्य कथं पिता भविष्यति कथं तन्माता कथमप्रौढयौवना प्रिया भार्याऽमुष्य हि देहे समालिङ्गनचुम्बनपरिवर्तिनवीनतरदलारविन्दपदानि कुसुमानीव दृश्यन्ते ११
एतत्समानवर्णवया एतादृशसुभगः परमप्रीतिवर्धनो नाम पुत्रो भल्लूकभक्षितो मृतः स्मृतिमयं प्राप्यापि मां रक्षयितुमिच्छतीव मम हृदयमन्यथा करोतीति मनसा वितर्क्यातिबालकं प्रहीतुमारभत ॥ १२
स च साध्योऽपि पराधीनो बभूव ॥ १३
स च कुमारेण सह पराजयखेदममत्वा सुखमध्युवास च ॥ १४
स दशरथोऽपि तत्र मासं स्थित्वा तत्पुत्रसंदर्शनसुखमवलोक्याचिन्तयत् ॥ १५
अहो सर्वदुःखापनोदनक्षममेतन्मुखावलोकनं पुत्रसंवर्धनं नाम ॥ १६
सर्वराष्ट्रिकोऽपि मम जयः पुत्रवियोगमनुस्मरतो दुःखाय केवलं भवति तदस्य पृच्छां करोमि कथमीदृशो जायते पुत्र इति वितर्क्य तमपृच्छत् ॥ १७
साध्योऽपि सकलमोक्षमार्गं क्षितीशायाऽऽदिशत् ॥ १८

---

१ क. °ति न राम तावकं त्विदं कदाऽपि कल्पितं मतं ।

हरीशानौ सहाऽऽराध्य सर्वैकादशीरुपोष्य द्वादशीषु ब्राह्मणानाराध्य तत्कालभवं फलपूर्वमभार्यं व्यञ्जनं पुष्पं वा न्यायेन संपाद्य कपिलाघृतेन केशवं स्नापयित्वा मुद्गचूर्णेन संलिप्य स्वादूदकेन स्नापयित्वा सुरभिपटीरं स्वयमुद्घृष्टं मृगनाभ्याऽगरुसारेण वा समेतं देवाङ्गे सर्वमुपलिप्य तुलसीदलैर्यूथिकाकरवीरनीलोत्पलकमलकोकनदद्रोणकुसुममरुबकदमनकगिरिकर्णिकाकेतकीदलपूर्वैर्यथासंभवमभ्यर्च्य द्वादशाक्षरेण पुरुषसूक्तेन वा नाम्ना वा षोडशोपचारेण वाऽऽराध्य प्रणम्य नृत्यं कृत्वा देवं क्षमापयेत् ॥ १९

तथा व्रतानि च विचित्राणि नारायणप्रीणनाय कुर्यात् ॥ २०

प्रसन्नो भगवान्मुनिरीप्सितं पुत्रं यच्छति तदमुमाराधयस्वेति दशरथमुक्तवान् ॥ २१

स चापि साध्यं ततः स्थाप्य गत्वाऽयोध्यां तथा सर्वं कृतवान् ॥ २२

अथ पुत्रकामेष्टौ समाप्तायामाहवनीयाद्यग्नो मूर्तिमान्भूतः शङ्खचक्रगदापाणिरुदतिष्ठत् ॥ २३

राजानं वरं वृणीष्वेत्युक्तवान् ॥ २४

स च राजा वव्रे पुत्राननतिधार्मिकान्दीर्घायुषश्चतुरो लोकोपकारकान्देहीति ॥ २५

अथ राजमहिष्यश्चतस्रः कौशल्या सुमित्रा सुरूपा सुवेषा चेति राजानमब्रुवन्देव प्रतियोषमेकेन पुत्रेण भवितव्यम् ॥ २६

अथ कौशल्योवाच—

एष यदि प्रसन्नो देवस्तदयमुत्पद्यतां मम ॥ २७

राजोवाच—

मम दिष्टं तदयं प्रार्थ्यते हरिः ॥ २८

विष्णो प्रसीद देवेश कमलापते शङ्खचक्रगदाधर विभीषणसृष्टिसमस्तलोकपालादिपूजितपादयुगुल शाश्वत हरे नमस्ते नमस्त एवं स्तुतो भगवानथ राजानमाह ॥ २९

माधव उवाच—

तव पुत्रो भविष्यामि कौशल्यायामथ चरुं प्रविवेश हरिस्तं चरुं हि चतुर्धा विभज्य भार्याभ्यो दत्तवान् ॥ ३०

अथ कौशल्यायां रामो लक्ष्मणः सुमित्रायां सुरूपायां भरतः सुवेषायां शत्रुघ्नो जज्ञे ॥ ३१

खात्पुष्पवृष्टिश्च पपात ॥ ३२

अथ चतुराननः स्वयमुपेत्य जातकर्मादिकाः क्रियाश्चक्रे ॥ ३३

त्रिभुवनाभिरामत [*या राम इति नाम चक्रे रूपशौर्यादिलक्ष्मीयोग्यतया लक्ष्मण इत्यपरस्य भुवं भाराद्धारयतीति भरतः] शत्रून्हन्तीति शत्रुघ्न इति नामानि कृत्वा ब्रह्मा स्वभवनं जगाम शिशवश्च वृद्धिमेव ॥ ३४

अथ पादसंचारिणं बालचन्द्रसंकाशदर्शं बिम्बाधरमुन्नततिलप्रसूननासं पुरभ्रूलिकालम्बमानरत्नपत्रकं श्रवणलोल[+लम्बमानकुण्डलं वक्षस्थलविचलितस्थूलमुक्ताहारं विलसत्कार्तस्वरबाहुव-

---

* धनुश्चिह्नान्तर्गतः पाठः, ख. ङ. च. छ. ट.ड. प. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ड. प. पुस्तकस्थः ।

---

१ ट. प. तत्र ।

लयं सिञ्जन्मणिकङ्कणरत्नाङ्गुलीय]हेममणिरचितश्रोणीसूत्रं सिञ्जन्नूपुरोपशोभितपादमङ्गुलीयोप-
शोभितपादमध्याङ्गुलिकं वज्राङ्कुशसरोजलाञ्छनशोभितोरुपादतलं तूणीरसदृशजङ्घं करिकरस-
दृशोरुं विस्तृतजघनं सूक्ष्ममध्यं वर्तुलावर्तकं गम्भीरनाभिमिन्द्रनीलशिलाविशालवक्षःस्थलं कम्बु-
ग्रीवं चन्द्रबिम्बसदृशवदनमर्धचन्द्रसदृशललाटं नीलकुटिलकुन्तलं क्रीडासक्तं धूलिभिरापाण्डुरं
फुल्लपद्मदलारक्तविलोललोचनं महेश्वरमिवोद्धूलितभूतिं महेश्वरमिव दिगम्बरं रामं कुमारं राजा
दशरथो दृष्ट्वा हर्षपरिपूर्णहृदयः पुत्रमालिङ्ग्य चुम्बित्वा वक्षस्यालिलिङ्ग दृढम् ॥ ३५

अथ कुमारोऽपि पार्श्वेनाङ्गमारोप्य कलकलितलोचनो यत्किंचिदुवाच याचमानमितस्ततो
वीक्षमाणस्तात गच्छे शये तात क्रीडामि तातेत्यादि पुत्रसुखमनुभूयानुभूय निर्वृतिं ययौ ३६

अथ कदाचिद्गोकुमागते राजनि रामचन्द्रो बालक्रीडासक्तहृदयो बहुक्रीडनककरकमल उत्प्लुत-
धावमानो नरपतिपुरःस्थितमणिखचितसुवर्णभाजनस्थमन्नं वामकरेण गृहीत्वा राजनि चिक्षेप ३७

इदमपि राजा सुखाय मेन एतादृशान्यन्यानि चकार रामचन्द्रः ॥ ३८

अथ कदाचित्क्रीडमाने रामे वात्या राममपातयद्रामश्च रुदन्नपतत् ॥ ३९

एतस्मिन्नन्तरे ब्रह्मराक्षसो राममगृह्णाद्रामश्च मूर्छामाप ह ॥ ४०

अथ सहचरो बाल इतस्ततो रोरूयमाणो रामं तथाविधं राज्ञे व्यज्ञापयत् ॥ ४१

अथ राजा राममादाय वसिष्ठमाह—

किमिदं रामस्येति पप्रच्छ ॥ ४२

अथ वसिष्ठो भस्माऽऽदायाभिमन्त्र्य ब्रह्मराक्षसं मोचयामास पप्रच्छ को भवानिति ॥ ४३

स चाऽऽहाहं वेदगर्वितो ब्राह्मणो बहुशः परधनमपहृत्य ब्रह्मराक्षसो जातो मे निष्कृतिं विचा-
रय ॥ ४४

वसिष्ठ उवाच—

इदमितःपरमेकवर्षशतोपभोग्यं राक्षसत्वं नरकं भागीरथीस्नानमेकं शिवाय बिल्वपत्रशतं समर्प्य
ततः स्नात्वा पापाद्विमुक्तो भवसीति ॥ ४५

कदाचित्तादृशं कृतपुण्यं तव पदं प्रयच्छामि तदुपरि शिष्टगतिं भजेति वसिष्ठवाक्यमाकर्ण्य
ब्रह्मराक्षसो वसिष्ठोपदिष्टपुण्यवशाद्दिव्यशरीरो भूत्वा नमस्कृत्वा स्वर्गं जगाम ॥ ४६

अथ रामं प्राप्ते काल उपनीय वसिष्ठो वेदानध्यापयामास षडङ्गानि मीमांसाद्वयं नीतिशास्त्रं
चाध्यापयामास ॥ ४७

अथ धनुर्वेदमायुर्वेदं भरतगान्धर्ववास्तुशाकुनविविधयुद्धशास्त्राणि च ॥ ४८

अथ विवाहं कर्तुकामेन राज्ञा दशरथेन नानादेशजनपतीन्प्रति दूताः प्रेरिताः ॥ ४९

अथ कश्चिच्छीघ्रमागत्य राजानमिदमब्रवीद्राजन्विदर्भदेशाधिपतिर्विदेहो नाम राजा तस्य
पुत्री वैदेही होमलब्धा रूपेण लक्ष्मीसमा सर्वलक्षणसंपन्ना रामयोग्या विद्यते स च तां दातुं
राजा रामायोद्युक्तस्तद्गम्यतां शीघ्रमिति ॥ ५०

अथ वसिष्ठादीन्प्रेषयामास ते च तत्र गत्वा तां च निरीक्ष्य लग्नं निश्चित्यायोध्यायामेत्य रा-
जानमुक्त्वा रामसहिताः पृथ्वीपतिसमेताः शीघ्रं विविधकरितुरगशकटशिबिकान्दोलिकाभिरति-
सुभगरूपभोगविलासक्रियानिपुणा हि(?) विदितविविधचेष्टा गन्धर्वकामशास्त्रकुशला मृदुकठि-
नपृथुपयोधरासन्नकण्ठाः स्थूलसूक्ष्मललाटबिम्बदशनच्छदमुखपङ्कजाः कुटिलकुन्तलदीर्घकेशध-

मिल्लाः कनकपत्रकर्णाः स्नानचेष्टयोत्थितरोमशोभिता जपारक्तदशना विशदविस्फुरच्छफरीलो-
चनाः शुक्तिकासदृशश्रवणा नक्षत्रसदृशस्थूलमुक्ताफलोपशोभितनासापुटा मुकुरसदृशकपोलास्तिल-
प्रसूननासिका आननमध्यप्रदेशचूचुका इन्द्रगोपप्रतीकाशाधरपुटदशनक्षताः समदीर्घकाङ्गप्रदर्शना-
स्थितसर्वप्रदेशवर्तुलानतिमांसलाः पिण्डकाग्रन्थिनीव्यो वलितबाहुमूला अनतिचिरकालोत्थितरो-
मतयाऽहरिद्रावर्णतया च कर्णिकारदलसदृशबाहुमूला मृदुस्निग्धवर्तुलसूक्ष्ममध्यप्रदेशाः कठिनस्थू-
लवर्तुलाग्रचूचुकपरस्परस्थानाक्रमणस्पर्धिपयोधरमध्यलब्धपदकपयोधरोपरिचञ्चलविविधमणिम-
यहारोपशोभितवक्षस्थलाः पयोधरपतितो लब्धपदतया तरुणदृष्टि[*परस्प(रंप)रयाऽसमानया
नाभिकूपोपरित(न)रोमराज्योपशोभितोदरप्रदेशा भज्यमानमध्यस्थलीकरण एव वली]त्रयोपशो-
भिता मुष्टिग्राह्यमध्याः करिकरोपमजघनप्रदेशा आरोमशमृदुस्निग्धा [†मलासमजान्व्यः कदली-
स्तम्भसंनिभोरुयुगुला आमग्नजानुकूशकुंश(?)वर्तुलपिण्डिकारहितजङ्घा आमग्नगुल्फा आसूक्ष्म-
स्निग्धा]दीर्घदीर्घाङ्गुलिपादा नूपुररवाह्व(ह्व)यमानमदना हंसमतंगजगमना दक्षिणाङ्गुष्ठस्पर्शिक-
च्छाग्रा उपरिकच्छं नीविं कृत्वा करद्वययुता वस्त्रप्रदेशकण्ठमप्रावृत्यापरवसनपरिभागा वृत्तस्त-
नवसनापरभागे वामांस एव दक्षिणपार्श्वागतेन दशाभागेन नाभिप्रान्तेन प्रवेशिनोपशोभितगा-
त्रयष्टयो योषितो विवाहमङ्गलकर्मकरणायानेकश आगच्छन् ॥ ५१

बालिकाश्च विद्युल्लतांशुशोभितगात्रयष्टय उद्भिन्नकुचकमलकुड्मलविविधहारोपशोभितवक्षसो
यत्किंचिद्भाषिण्योऽतिचपलमृदुगतयो वृद्धवनिताश्चाऽऽगच्छन् ॥ ५२

अथ विदेहपुरतः क्रोशमात्रे चूतवनिकायां विविधविटपविस्तारप्रदेशाविविध[+विहङ्गकूजिताकर्ण-
नदत्तकर्णवनहरिणशाववल्यां महारजतनिर्मितोच्चनीचप्रासादोपशोभितप्रदेशाविविध]विहङ्गायां
हेमवल्कलसंवीतभासितोच्छूलितशरीरजटिलमुनिगणध्यानोपासनोपशोभितवृक्षमालायां विविधवि-
द्याधरवधूपयोधरभाराभिभूतविचरिततरङ्गसरसीयुतायां सरस्तीरमिलितसैरन्ध्रीयुवतिभिराहूयमा-
नतरुणजनायां नानावर्णकुसुमसौरभवासिताशेषप्रदेशायामितस्ततो रिरंसया प्रदर्शितस्फारशफरी-
विलोचनतरलचक्षुषा प्रभाविलसितशरीरवेश्याजनायां विविधाश्चर्ययुतायां दशरथः सामात्यपुरो-
हिताभिरामरामादिपुत्रसहितः सुखमुवास ॥ ५३

अथ वैदेहोऽपि मिथिलां नानापताकोपशोभितां विविधप्रासादगोपुरां देवतायतनोपशोभिता-
मन्योन्यकेलिचतुरयुवतिजनानुकीर्णामुशीरविरचितमहाप्रपां सुकेलिजनोपशोभितविशिखां विवि-
धपण्योपशोभितरथ्यां तत्र ब्रह्मघोषशोभितमठां प्रतिमन्दिरं मीमांसादिव्याख्यानसंपादसी-
माध्ययनां सुपुण्यहविर्गन्धसामादिस्वरपदक्रमश्रुतिब्राह्मणवाटिकामनेकपरिवृढमन्दिरप्रवेशनिष्क्री-
तागुरुकुसुमामध्वर्युवेषां मृदुलवसनताम्बूलरक्तदन्तच्छदकामिनीं मृदुवचनकठिनवचनकरसंज्ञानि-
धा(वा)रितप्रतिवचनविविधोपायनाहरणकरजनोपशोभितां मृदुधवलजघनपरिवीतवस्त्रोपरिभागेन
स्निग्धवर्तुलपरस्परसंघर्षपयोधरमध्यप्रदेशोपशोभितवामांसकण्ठोपशोभितवनितां विविधमुक्ताहा-
रजपार्संकाशदशनच्छदमन्दहासमालाकारसहस्त्रोपशोभितां पुण्यासवसाधनमन्दिरां तत्र तत्र

*धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट ड. प. पुस्तकस्थः । †धनुश्चिह्नान्तर्गतः पाठः ख. छ ट. ड.प. पुस्तकस्थः ।
+ धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च छ. झ. ट. ड. प. पुस्तकस्थः ।

१ झ. 'रिद्व' ।

विचित्रतोरणां विशुद्धवीथिकां तत्र तत्र स्थापितकल्पपादपां रम्भाविभूषितद्वारां पुरीं शोभितां शोभयामास ॥ ५४

अथाभिकलनार्थं विलासिन्यो निशादूर्वाक्षतमत्रमङ्गलकज्जलितकौशिकधम्मिल्लुते(?)लग्रन्थितजटोपशोभितसीमन्तशीर्षशोभितनासामुखविचित्राभरणा हेमपात्रावस्थिताज्यगुग्गलुफलादिसौभाग्यद्रव्यमुद्वहन्तीभिः स्त्रीभिरन्यैरपि शोभितजनैः स राजा निर्जगाम ॥ ५५

तदानीं मङ्गलं(ल)तुर्यघोषा देवदुन्दुभिभेरीनिःसाणमर्दलशङ्खादिनादाः प्रादुर्बभूवुः ॥ ५६

गायकाश्च मङ्गलानि जगुः ॥ ५७

मङ्गलवेदवाक्यानुपाठेन वैदिका ब्राह्मणाः कुलपाठका भेरीघोषेण कृत्स्नमाकाशमपूरयन् ५८

अथान्योन्याक्षताः पूर्वमङ्गीकुर्वन्तः सूतबन्दिजनादिभिः स्तूयमानाः पुरं प्रविविशुः ॥ ५९

विदेहनगरात्पश्चिमभागे निर्मितं मन्दिरं दशरथः प्रविवेश ॥ ६०

अवशिष्टाश्च यथायोग्यं विभवनं विविशुः ॥ ६१

अथ नारदो मिथिलां तदानीमेवागच्छत् ॥ ६२

विदेहोऽपि देवर्षिमभिपूज्य स्वागतं पृष्ट्वा भोजनं च कारयित्वा सुखासीनाय मुनये सघनसारताम्बूलं दत्त्वा व्यज्ञापयत् ॥ ६३

श्वो विवाहे भवानिह स्थातुमर्हति कारयते(तां) विवाहम् ॥ ६४

नारद उवाच—

श्वो हि नक्षत्रं सूर्यनक्षत्रदर्शनं तत्र विवाहो न कर्तव्य इति ॥ ६५

अथ मौहूर्तिकं वृद्धगार्ग्यमाहूय राजा पप्रच्छ क्व विवाहमुहूर्तः । ६६

श्व इति गार्ग्य उवाच ॥ ६७

राजा च नारदं गार्ग्यं चोदीक्ष्य भो इदमित्थमिति पप्रच्छ ॥ ६८

अथ नारदो गार्ग्यमुवाच कथमुक्तलग्नं दास्यसि ॥ ६९

अथ गार्ग्यो विषघटिकाश्च विहाय लग्नं दास्यामीत्युवाच ॥ ७०

नारदोऽपि ब्रह्मवचनानि किं न जानासीत्युक्तवान्गार्ग्यम् ॥ ७१

गार्ग्येण पृष्टस्तान्दोषानपठत् ॥ ७२

उल्का च ब्रह्मदण्डश्च मोघः कम्पस्तथैव च । सर्वकार्यविनाशाय दृष्टा वै ब्रह्मणा पुरा ॥ १३
प्रतिष्ठासु विवाहेषु मौञ्जीबन्धाभिषेकतः । अन्येषु सर्वकार्येषु विषनाडीर्विवर्जयेत् ॥ १४
अतः परं तु कार्याणां करणे न च दोषभाक् । विवाहादिषु कार्येषु दोषमेव वदाम्यतः ॥ १५
उल्का दहेत्कुलं सर्वं ब्रह्मदण्डो विनाशयेत् । मोघस्तु मरणाय स्यात्कम्पः कम्पाय कर्मणः ॥ १६

इति नारदोक्तमाकर्ण्य गार्ग्यो मुनिर्मौनपरोऽभवत् ॥ ७३

दध्यौ रविं ग्रहपतिं विहाय विषनाडीर्विवाहः क्रियतामिति ॥ ७४

नारद उवाच—

कथं ब्रह्मवचनम् ॥ ७५

सूर्य उवाच—

देशभेदेन व्यवस्थोदिता तदस्मिन्देशे विवाहो विषघटिका विहाय कर्तव्य एव ॥ ७६
नारदोऽप्यनुमेने ॥ ७७

उवाच श्वः परह्ने(राह्णे) च क्षत्रविवाहश्च भवेदतः स्वयंवरार्थं नृपा आगच्छन्तु तन्नृपवृतान्प्रेषय ।

अथ राजा विदेहो दशरथानुमतेन सर्वानेव नृपानागमय्याचिन्तयत्कथं सर्वानेव तिरस्कृत्य वैदेही रामाय देयेति ॥ ७९

अथ रात्रौ मुहुर्मुहुर्निश्वस्य निद्रालुरपि न निद्रामाप ॥ ८०

अथ मध्येनिशं राजा शुचिर्भूत्वा त्र्यम्बकं साम्बिकं मङ्गलदुकूलधारिणा कमलभवपुरुषोत्तमशक्रप्रमुखनिखिलदेवैर्भृगुप्रमुखमुनिवरैर्हाहाप्रमुखगन्धर्वैस्तुम्बुरुप्रमुखैश्च श्रुतिस्मृतीतिहासपुराणैर्मूर्तिमद्भिश्च सिद्धविद्याधरादिमातृकागणैर्नन्दीप्रमुखगणैश्च सेव्यमानपादकमलं सर्वामङ्गलपरिमोचकमतिपुण्यसलिलया गङ्गया निष्कलङ्केन चन्द्रमसा सेव्यमानशिरोभागं वामाङ्कारूढया गिरिजया प्रदीयमानवीटिं सहासं सकामं सहावेक्षणमाददानं गोक्षीरसदृशं प्रतिकूलकस्तूरिकासदृशकण्ठं मृदुसूक्ष्मस्निग्धजटाभिर्विरचितकपर्दं विशुद्धकार्तस्वरकुण्डलोपशोभितगण्डभागं द्विरष्टवर्षवयसं गोक्षीरसदृशस्थूलमुक्ताफलकौसुम्भवर्णाञ्चलेनाऽऽवेष्टितशिरोभागं विविधरत्नविरचितकार्तस्वरभूषितवक्षःस्थलमतिधवलोपवीतेनोपशोभितशरीरमम्बिकानुलग्नकुङ्कुमारुणसुगन्धिशरमीक्षमाणं तर्ज्यमानमार्गणकोटिकंदर्पसदृशं मनसाऽचिन्तयत् ॥ ८१

जजाप शतरुद्रियं जुहाव च तेनैव कामाहुतिं प्रास्तुवच्च पुरुषसूक्तेन ॥ ८२

अथ तादृश एव महेश्वरस्तत्र प्रादुरभूत् ॥ ८३

अथ राजा नमस्कृत्यास्तुवीत ॥ ८४

राजोवाच—

क्षितिसलिलगगनपवनदहनरविशशियजमानमूर्तिभिरष्टमूर्ते विश्वमूर्ते लोकमूर्ते त्रिभुवनमूर्ते वेदपुराणमूर्ते यज्ञमूर्ते स्तोत्रमूर्ते शास्त्रमूर्ते स्वधामूर्ते नारायणमूर्ते सर्वदेवतामूर्ते त्रयीमय त्रयीप्रमाण त्रयीनेत्र सामप्रिय वसुधाराप्रिय भक्तिप्रिय भक्तसुलभाभक्तविदूर स्तुतिप्रिय धूपप्रिय दीपप्रिय घृतक्षीरप्रिय द्रोणकरवीरप्रिय श्रीपत्रप्रिय कमलकह्लारप्रिय नन्द्यावर्तप्रिय बकुलप्रिय यूथिकाप्रिय कोकनदप्रिय ग्रीष्मजलावासप्रिय यमनियमप्रिय नियतेन्द्रियप्रिय जपप्रिय श्राद्धप्रिय गानप्रिय गायत्रीप्रिय पञ्चब्रह्मप्रिय सदाचारप्रिय गोत्रोत्सादिकमलभवहरिहरनयनसमर्चितपादकमल जयप्रद हरिप्रार्थितजलोत्पाटितचक्रप्रदशंकृत्स्मृतियुक्तिप्रद स्मृतिमङ्गलप्रदं मह्यां जय नमस्ते नमस्ते ॥ ८५

इति स्तोत्रमाकर्ण्य भगवान्भवो राजानमुवाच वरदोऽहं वरं वृणु ॥ ८६

राजोवाच—

मम कन्या वैदेही रामाय दित्सिता स्वयंवरे कुलरूपबलोत्साहसंपन्नानेकभूपराक्षसविप्रादिसर्वप्राणिसमागमे रामाधिकबलो यदि ताम्†ग्रहीत्तदा वचनमनृतं मम पापं च भविष्यति प्रत्युत दशरथोऽपि सर्वानेवाऽऽगतान्विजेतुमलं क्षत्रकदनश्च रामो यद्यायास्यति तर्हि मम सुतां किं करिष्यति वा किं किं वा प्रेषयिष्यति कीदृशं कारयिष्यति मम किंवा करिष्यति सर्वथा हि प्रभूतबलवाहनो नरपतिरशेषमपि त्रिभुवनं हन्यात्किमुत मामल्पसत्त्वं किमुत बहुना भवानेव शरणं ममोपायं वद यथा विवाहे श्रेयो भविष्यति रामश्च जामाता भविष्यति ॥ ८७ ॥

† आर्षोऽत्र लकारव्यत्ययः ।

१ ट. प. °द मृत्युंज° ।

शंभुरपि तथा करोमीत्युवाच राम एव नाथः सीताया भविष्यति रामं च कृत्वा स्वस्त्यद्यैव करिष्यामि गृहाणाजगवं धनुरिदम् ॥ ८८

राजोवाच—

किमनेनाजगवेन धनुषा स्वयंवरे सीतां रामं प्रापय ॥ ८९

शंभुरुवाच—

इदं धनुरसज्यं मे यस्तु सज्यं करिष्यति । तस्मै देया मया सीता प्रतिज्ञामेवमाचर ॥ १७
इत्येवमुक्त्वा भगवान्गणैरन्तर्दधे हरः । अथाऽऽदातुं धनू राजा न शशाकातियत्नतः ॥ १८

अथोल्वलं शतसहस्रगजबलं समाहूय गृहाणेत्युवाच ॥ ९०

स चापि मातुलं नत्वाऽट्टहासं कृत्वोत्प्लुत्य धनुर्द्वाभ्यां कराभ्यामुद्दधार जानुपर्यन्तम् ॥ ९१

मातुलो मारीचः श्रुत्वैकाकी विप्रवेषं कृत्वा विदेहमयाचत वैश्वदेवान्ते प्राप्तमतिथिमामवेहि

राजोवाच—

स्वागतं भो इदं ब्रह्मन्नासनं निषीदेति ॥ ९३

स चातिथिस्तथेत्युक्त्वा निषसाद ॥ ९४

अथ राजा जलमादाय पादौ प्रक्षाल्य गन्धपुष्पाक्षतैरभ्यर्च्य महार्जं तस्मै निवेद्य भोजनाय प्रार्थयामास ॥ ९५

स चापि तदन्नं षड्रसोपेतं सौवर्णभाजनगतमीक्षमाण इवेतस्ततो विलोकयामास ॥ ९६

तस्मिन्नेवावसरे सीता पद्मकिञ्जल्कप्रभेषदा रुणवसनं बिभ्रती नीलकुटिलकुन्तलैश्चलद्भिर्यूनां मनांस्याकर्षयद्भिरिदं प्रेक्ष्यमाणदृष्टिभग्नकलैरिव स्त्रीणां चित्तमीदृशमिति दर्शयद्भिरिवोपशोभितललाटानङ्गचापसुभ्रूः पद्मपत्रारुणविलोचना तिलप्रसूननासा मृदुस्निग्ध(ग्धा)रोमशकपोलाऽनन्तरारक्तोष्ठा रक्तासनमणिकणिकानिभदाडिमीदशना जपा[*रुणाधराऽतिशोभितचुबुका शुक्तिवर्णा समदीर्घकण्ठाऽतिमांसलवक्षःपीनोद्भिन्नकुचकुड्मलाऽनेकहारो]पशोभिता सुभगाकाराऽनतिमांसलबाहुलता मुग्धायतसमानाङ्गुलिशिखा पद्मारुणपल्लवा विविधबहुरत्नाङ्गुलिभूषणा मुष्टिग्राह्यमध्या सुरोमराजिगम्भीरनाभिः पृथुजघना करिकरोरुस्तूणीरजङ्घा सुपादकमला नूपुरादिपादविभूषणा पादाङ्गुलिभूषिता विकसितसौगन्धिकं विदधती भुञ्जानमारीचस्य पुरतश्चाऽऽगता ॥ ९७

वीक्ष्यासावचिन्तयदेनां कथमपहरामि कथमालिङ्गामि कथमन्यद्यत्किंचित्करोमीत्येवमवसरमलभमानस्तूष्णीमेव विनिर्गतः ॥ ९८

अथ देवधनुःसज्जीकरणाय यतमानाऽहंपूर्विकया विद्यमाना(?) अन्योन्यतिरस्कारेण महेन्द्रः प्राप धनुरुत्तमं प्रान्तद्वयापारं नावनमयितुं शशाक ॥ ९९

अथ सूर्यो धनुरादाय नमयन्नेव निपपात ॥ १००

वायुर्बलवतां श्रेष्ठो जग्राहाजगवमथ स्वेनैव करेणोत्कर्षयन्नधः पपात ॥ १०१

धनुश्च वायोरुपरि पपात ॥ १०२

अहसंस्तदा सर्वे ॥ १०३

---

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. च. छ. ट. ड. प. पुस्तकस्थः ।

१ च. °द्भिरन्तं प्रे° । झ. °द्भिरितं प्रे° ।

एतस्मिन्नन्तरे तुरगवरमारुह्य बाणासुरः सहस्रबाहुरेकानेकशिरोभिर्दैत्यैः परिवृतः प्रह्लादस-
मेतो विदेहपुरीमाजगाम ॥ १०४

अथ स्वविभूषणोद्भासितां दिशां कुर्वन्स्वतेजसाऽपयशसो देवताः कुर्वन्नानाविधगीर्ति
शृण्वन्नङ्गुलमात्रेण शक्तो विरराम ॥ १०५

प्रह्लादो बलिश्चैव(द)धावाते अथ विरेमतुः ॥ १०६

अथ राक्षसेषु तूर्ष्णींभूतेषु राजानोऽतिबलिनः समागता ज्याबन्धाशक्ता अपसृत्य तस्थुः १०७

अथ ब्राह्मणाः समागताः ॥ १०८

अथ विश्वामित्रो धनुरादायैकाङ्गुलपर्यन्तं सज्जं कृत्वा विरराम निवृत्ताश्चापरे ॥ १०९

अथ दिनमात्रे धनुषि तूर्ष्णींभूते राघवः सहानुजैरागत्य धनुर्निरीक्ष्योपास्पृशत् ॥ ११०

अथ राजकुमाराः शतशः समागताः सर्वाभरणभूषिता धनुर्दृष्ट्वा पस्पृशुर्न च चालन-
क्षमाः ॥ १११

अथ दाशरथिप्रमुखाः कुमाराः समागताः ॥ ११२

अथ वेत्रझर्झरपाणयः समागमन्सर्वानेवापसारयामासुः ॥ ११३

अथ रामो लक्ष्मणहस्तं गृहीत्वा सर्वाभरणभूषितो धनुरासाद्य स्पृष्ट्वा नत्वा प्रदक्षिणीकृत्य
धनुरादायोद्दधार ॥ ११४

तदादानसमये सर्व एवैत्य सहासमूचुरत्र भग्ना महारथा इति ॥ ११५

अथ रामो धनुर्ज्यास्थानमवनमय्य धनुषि जानुं कृत्वा सज्यमेककरेणोत्पादयन्कोट्या
स्वादापयत् ॥ ११६

अथ सज्जीकृतं दृष्ट्वा सर्व एव नासाग्रन्यस्ताङ्गुलयोऽभवन् ॥ ११७

रामोऽपि ज्यामनुनादयंस्तेन नादेन सर्वेषां मनांसि क्षुभितान्यासन् (न्यकरोत्) ॥ ११८

रामेण सज्जितं धनुरिति सर्वत्र वादः संजातो जनकोऽपि सीतां रामाय ददौ ॥ ११९

राजभिश्च युद्धं कृत्वा निर्जित्य स्वपुरीमगात् ॥ १२०

अथ दशरथो रामं यौवराज्येऽभिषिच्य सुखी बभूव ॥ १२१

सर्वप्रजारञ्जनाच्च रामो राजाऽनुमत इति सर्वप्रजावादोऽभूत् ॥ १२२

अथ केकयदेशाधिपतितनया सुवेषा रामं राजानमसहमाना राजानमुवाच मम वरदानावसर
इति ॥ १२३

राजाऽचिन्तयत्किं देयमिति ॥ १२४

देव्युवाच—

चतुर्दश वर्षाणि रामो वनं विशतु पालयतु राज्यं भरतः॥ १२५

राजा चानृतवचनदोषभयात्कथं कथमपि स्वीचकार ॥ १२६

अथ वसिष्ठं भावितयाऽवोचत रामो वनाय निर्गच्छत्यस्य किं वा भवेदिति विचार्य शुभाशुभं
ब्रूहि ॥ १२७

वसिष्ठो विचार्य सहर्षं राजानमुवाच ॥ १२८

गत्वा वनं निखिलदानववीरहन्ता शंभोरनेकविधपूजनमातनोति ।
सीतावियोगरुषितः कपिसेनया च तीर्त्वोदधिं दशमुखं च निहन्ति रामः ॥ १९

आगम्य राज्यं रघुनन्दनोऽपि बहूनि वर्षाणि समातनोति ।
प्रशस्तकीर्तिर्निखिलेऽपि लोके शर्वेण देवेन चिरं न्यवात्सीत् ।
सुपुत्रयुक्तो बहुयज्ञयाजी परिवृढः सर्वगुणाधिकश्च ॥ २०

इति वसिष्ठवचनं श्रुत्वा दशरथो रामगुणाननुस्मरन्नित्युवाच श्रेयो मे मरणं रामस्य निर्गमनेति ॥

अथ रामो मातरं पितरं गुरुं च वसिष्ठं पितृपत्नीर्नमस्कृत्य वनाय जगाम ॥ १३०

अथोपवने दिनमेकं स्थित्वा जटाः कारयित्वा वल्कलं वाससं धृत्वैकोपवीती कृतदन्तशुद्धि-रेकेनोपवीतेन जटा बद्ध्वा भस्मोद्धूलितसर्वाङ्गो भसितनिष्ठुरकायो मुक्ताफलदामा मणिव्यत्यस्त-रुद्राक्षमालामुरसि दधानोऽल्पभूषणाधिभूषितसीतासहायो लक्ष्मणानुचरो विवेश वनान्तरम् १३१

अथानेकराक्षसांस्तस्मिन्निजघान भवानिव निखिलं चकार ॥ १३२

सीतापहरणादि निखिलमपि भवन्तो(तो) यथा तथाऽस्याथ सुग्रीवाश्रममृष्यमूकपर्वतं रामो जगाम ॥ १३३

निबिडच्छायाचूतवृक्षमासाद्य लक्ष्मणसहायः परिश्रयमकल्पयत् ॥ १३४

वृक्षे तु धनुषी आरोप्याऽऽसीनलक्ष्मणाङ्के शिरः कृत्वा हरिचर्मशय्याशयनो लक्षितां गीतिं शृण्वन्वृक्षफलं निरीक्षमाणो वानरमेकं मणिकुण्डलं हेमपिङ्गलं सुदृढबद्धमौञ्जीकौपीनमच्छोपवी-तिनमतिचञ्चलफलमादायाऽऽत्मनि विक्षिपन्तं पुष्पमञ्जरीश्च किरन्तं गानमनुकुर्वन्तं व्यजनेन रामं वीजयन्तमारुह्य शाखामपि तथा वीजयन्तमाबद्धचूतफलमात्रं रामो वीक्ष्य लक्ष्मणमभाषत लक्ष्मण कोऽयं कपिरिति ॥ १३५

लक्ष्मणोऽपि न जान इत्युवाच ॥ १३६

अथ रामः समाहूय कस्य त्वं किं नामेत्यपृच्छत् ॥ १३७

स च सुग्रीवस्य हनुमानित्युवाच रामं नत्वा सुग्रीवमेत्य नत्वा देव नारायण इवापरः पुरुषो युवा मेघश्यामो जङ्घाजानुबाहुरतीव यशस्वी सूर्यसंकाशेन सहापरेण त(क)रेणेवाऽऽस्तेऽध्व-रचूतच्छायाधःसंस्थितौ सर्वलक्षणसंपन्नौ राजपुत्रौ दृष्टावुक्तश्च ताभ्यां सुग्रीवाय निवेदयेति त्वयि निवेदितम् ॥ १३८

अथ सुग्रीवः सत्वरमुत्थाय पादसलिलार्चनादिद्रव्यमादाय पादप्रक्षालनादिकं कृत्वा फलानि समर्प्य व्यज्ञापयत्कौ युवां किमर्थमागतौ राजपुत्रौ तपस्विनाविति ॥ १३९

सुग्रीववचनमाकर्ण्य लक्ष्मणेनाभाषयद्रामः । दशरथतनयावावां रामलक्ष्मणौ दुष्टनिग्रहशिष्ट-परिपालनाय वनं गताविति ॥ १४०

अथ सुग्रीवो युवयोरुपकारमपका(रप)रं कार्यमस्तीति लक्ष्यते । अन्यथा सेनासमेतावागमिष्यतः

लक्ष्मणोऽस्ति कार्यान्तरम् । अमुष्य भार्या केनापहृता न ज्ञाता तामन्वेष्टुमागतौ तदेवाऽऽवयोः कार्यमन्यदानुषङ्गिकं तदर्थमपि जलधिं तरावः । अपि पातालं प्रविशावः । अपि नाकं साधयावः । अपि महेन्द्रं पातयावः । अपि बलिनं हनाव । किमपि कुर्वहे ॥ १४२

सुग्रीव उवाच—

(वो) रावणेनापहृतया कदाचिद्व्रियमाणागतया[1] विभूषणानि कानिचित्परित्यक्तानि गतानि मया संगृहीतानि तानि दर्शयामीत्याभाष्य रामं मन्दिरमागमय्य दर्शयामास ॥ १४३

१ ट. प. °त्विद्विमानमत° ।

रामोऽपि निरीक्ष्य निश्चित्य प्ररुह्य क गतोऽसौ रावण इति पप्रच्छ ॥ १४४
स च दक्षिणामाशां गत इति बभाषे ॥ १४५
अथ रामस्तेन सख्यमकरोदपृच्छच्च किमर्थमिह भार्याहीनः स्थित इति ॥ १४६

कपिरुवाच—

मम भ्राता वाली महाबलो मम भार्यां राज्यं चापहृत्य किष्किन्धायामास्ते युद्धेन चाहं पराजितः । तद्वधाय सर्वथा मम चिन्ता यथाऽसौ त्वया निहन्यते तथा मयाऽपि सागरं बद्ध्वा परतटे लङ्कायां स्थितां सीतां रावणेनापहृतां तव समर्पयामीत्याभाष्य शपथं कृत्वा सुग्रीवो वालिनाऽतिबलिना युद्धायाऽऽहूतेन युयुधे ॥ १४७
रामोऽप्यनन्तरमनिश्चयाद्वालिनं नाहरत् ॥ १४८
अथ सुग्रीवः पलायितो राममिदमभाषत तव चित्तमव(वि)ज्ञाय प्रवृत्तो मरणाय ॥ १४९
रामोऽपि युवयोर्विशेषाज्ञानान्मया तूष्णींभूतं चिह्नितं त्वां निरीक्ष्य तं हन्मि ॥ १५०
अथ सुग्रीवश्चिह्नं कृत्वा वालिनं युद्धायाऽऽहूय समतिष्ठत ॥ १५१

तारा बभाषे वालिनं सहायवानिव लक्ष्यते सुग्रीवो नो चेदेवं नाह्वयति ज्ञातं मया रामलक्ष्मणौ दशरथतनयौ नारायणांशौ भूभारावताराय समागतौ तावस्य सहायभूतौ ॥ १५२

वाल्युवाच—

नीतिमान्राम इति मया श्रुतो न हि बलवन्तं विहाय दुर्बलं भजते तादृशः समायातु वा रामः प्रतिबलमधिकं कृत्वा बिभेति वीर(रो) यदि रामः स्वयं युद्धाय यातस्तदा युद्धं कर्तव्यमित्याभाष्य तारां संभाव्य सुग्रीवयुद्धाय निर्यातः ॥ १५३
अथ मुष्टियुद्धमन्योन्यमभूत् ॥ १५४
रामोऽपि वालिनं जघान पपात च वाल्याह चाशस्त्रयुद्धे बाणघातोऽथ शोणितसर्वाङ्गो बभूव ॥
अथ तारा चाङ्गदश्च समागत्य व्यथितौ बभूवतुः ॥ १५६
अथ राघवं वानराः समायाता वाल्युरान्ते निपेतू रुरुदुश्च ॥ १५७

अथ तारा राममाबभाषे शास्त्रकुशलाः शूरा धार्मिका राघवाः पुरा चापि राम कथं पापमकार्षीः । न क्षत्रधर्मं जानीषे राजगणसेवितम् ॥ १५८
अन्योन्यं युध्यतोर्युद्धे जयो वा मरणं भवेत् । अन्यो यदि तयोर्हन्याद्ब्रह्महा स निगद्यते ॥ २१

किं वैरेण वालिनमाहनः किं वैरम् । यदि मांसार्थ्यभोज्यं वानरमांसम् । यद्यात्मनोऽप्रियात्सुखाभावादपरेषामपि तथाभावं मन्यसेऽहो विमोहाद्यदि मामादातुमिदं कृतमेकपत्नीव्रतं तव । यदि रावणहृतां सीतामानेतुं सुग्रीवसहायाय कृतमेवमतो महदन्तरं बलवृद्धेन महाबलेन वालिना सद्भावेन दिनकरावर्तितान्तरे सीतामानेतुं समर्थेन स्म(श)रणागतरावणदानसमर्थेन वानरराजेन पञ्चाशत्परार्धवानरभल्लूकसेनावताऽऽत्मकार्येण सिध्यत इति किं सुग्रीवेणाल्पवीर्येण सप्तपरार्धसेनापतिना कपिना किं सिध्यति कार्यं वचनवतः । अहो(अ)ज्ञानं सर्वं देव भद्रं यदुक्तोऽसि ॥

वक्ति च रामः पृथिवीपतिना मया दुष्टनिग्रहणं कार्यं शिष्टपरिपालनं च वालिना सुग्रीवमहिषीरुमाऽपहृता राज्यं च । अतश्च न तादृग्वधे दोषः ॥ १६०

तारोवाच—

सुग्रीवोऽपि तर्हि वध्यो दुन्दुभिना युध्यता वालिना बिलं प्रविष्टेन वत्सरं तत्रोषितं तदन्तरे

च मामपहृत्य राज्यं च कृतं सुग्रीवेण तं पूर्वमपि पश्चात्तं हन्तुम् ॥ १६१

राम उवाच—

कियत्कालपूर्वमिदं च वद ॥ १६२

तारोवाच—

षष्टिवर्षसहस्रादर्वागशीतितमे वर्षे रक्षोयुद्धे सुग्रीवेण राज्यमपहृतं पुनश्च वर्षान्तरे मासेन वालिना सुग्रीवः पलायितोऽपहृता तस्य भार्या राज्यं चापहृतं तस्मिन्नेव दिने भवतः पितुर्दशरथस्याभिषेकः ॥ १६३

राम उवाच—

मया पितुरनुशासनाद्राज्यगतदुष्टनिग्रहणं कृतं गुरुवचनस्यालङ्घनीयत्वात्तदपहरणवेलायां यो राजा स नाऽऽचरत् ॥ १६४

अथवा स्वतन्त्रौ मृगौ मृगयोर्हतश्च वाली मृगाणामन्योन्यदारणाद्यजुगुप्सा च सतो मम मृगयावत् अथ विमृगाणाम्—

चलितस्थितबद्धानां चलत्क्रान्तपरायिणाम् । अथावसृजतां सङ्गमुज्झिता मृगया तथा ॥ २२

मृगयाशास्त्रविधितो मृगयेयं मया कृता । दर्शनादर्शनाभ्यां च धावनाधावनात्तथा ॥ २३

अवरोहात्परं स्थानं सान्वयानां प्रभिद्यते । राज्ञां च मृगया धर्मो विना आमिषभोजनम् २४

अथ रामवचनमाकर्ण्य सर्व एव प्राकम्पयञ्शिरांसि ॥ १६५

वाली बभाषे राममञ्जलिं मस्तके निधाय नमस्ते राम शृणु वचनं मम ॥ १६६

शङ्खचक्रगदापाणिः पीतवासा जगद्गुरुः । नारायणः स्वयं साक्षाद्भवानिति मया श्रुतम् ॥ २५

त्वां योगिनश्चिन्तयन्ति त्वां यजन्ति च यज्विनः । हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृत् ॥ २६

मरणे चिन्तयानस्य त्वां विमुक्तिरदूरतः । स त्वं मे दर्शनं प्राप्तो राम मे पापसंक्षयः ॥

गृहाण बाणं काकुत्स्थ व्यथितो भृशमस्म्यहम् ॥ २७

अथ रामस्तथेति बाणमादाय वालिनमुवाच किमिष्टं दीयतां वद ॥ १६७

कपिरुवाच—

यदि प्रसन्नो भगवान्मम सद्गतिं देह्ययं सुग्रीवस्तथा रक्षणीयोऽङ्गदोऽथ तारा च मया पापिनाऽपराधः कृतस्तत्फलमनुभूतम् ॥ १६८

अथ रामं पश्यन्नेव वाली ममार स्वर्गं च गतः ॥ १६९

अथ सुग्रीवं राज्येऽभिषिच्य स्वयं वनं विवेश ॥ १७०

अथ तेन सहायेन जलधिसमीपं गत्वा क लङ्का क सीता क चारातिः सुग्रीवमाह रामः ॥ १७१

अथ हनूमानाह प्रविश्य लङ्कां विचित्य सीतां सर्वं तत्त्वमवगत्य युद्धं संधिर्वा कर्तव्यस्तदुदधिलङ्घनाय किंचित्समादिशतु भगवान् ॥ १७२

अथ सुग्रीवमाह रामः कथमेतद्धटत इति ॥ १७३

कपिरुवाच—

मम वानरा भल्लप्रमुखाः कोटिशः सन्त्येकं नियुज्य सर्वमाकलय्य यथा युक्तं तथा करणीयम् ॥ १७४

अथ जाम्बवानाह हनुमानेष गच्छतु बुध्यतु लङ्काम् ॥ १७५

अथ हनुमानगमल्लङ्कां पुरं विचित्य सीतामशोकवनिकायामासीनां तथा च संभाष्य विश्वासं कृत्वा वनं बभञ्ज वनरक्षकांश्च ॥ १७६

बद्धो रक्षसा लङ्कां दग्ध्वोत्तरकूलं गत्वा रामं दृष्ट्वा वृत्तान्तं कथयित्वा तूष्णीमतिष्ठत् ॥ १७७

अथ रामः सर्वैर्विचारयामास ॥ १७८

जाम्बवानुवाच रामेण लङ्का कपिभिर्विनश्यतीति नारदेन ममोक्तमथ सागरोत्तरणे यत्नतया स्थेयम् ॥ १७९

अथ रामः शंकरमाराध्य सर्वं निवेद्य तदुक्तं करोमीति वचनमुक्त्वा शिवमभ्यर्च्य प्रणतो भूत्वा व्यजिज्ञपत् ॥ १८०

देव महादेव महाभूतग्रास महाप्रलयकारण महाहिभूषण महारुद्र शंकर परमेश्वर विरूपाक्ष नागयज्ञोपवीत करिकृत्तिवसन ब्रह्मशिरःकपालमालाभरण नरकास्थिभूषण भसितपर नारायणप्रिय शुभचरित पञ्चब्रह्माऽऽदिदेव पञ्चानन चतुर्वदन वेदवेद्य भक्तसुलभाभक्तदुर्लभ परमानन्दविज्ञानपर पूषदन्तपातन दक्षशिरश्छेदन ब्रह्मपञ्चमशिरोहरण पार्वतीवल्लभ नारदोपगीयमान शुभचरित शर्व त्रिनेत्र त्रिशूलधर पिनाकपाणे कपर्दिन्ननेकरूप वृषवाहन शुद्धस्फटिकसंकाश चतुर्भुज नानायुध दक्षिणामूर्ते ईश्वर देवपते गङ्गाधर त्रिपुरहर श्रीशैलनिवास काशीनाथ केदारेश्वर भूषणसिद्धेश्वर पटहकर्णेश्वर कनखलेश्वर पर्वतेश्वर चक्रप्रद बाणचिन्तापादक मुरहरपूजितचरणकमल सोम सोमभूषण सर्वज्ञ ज्योतिर्मय जगन्मय नमस्ते नमस्ते ॥ १८१

एवं स्तुवतो रामस्य पुरतो लिङ्गमध्यकोपेतस्तेजोमयमूर्तिराविर्बभूव ॥ १८२

अभयवानथ पुनः पद्मासनासीनमुमाधिष्ठिताङ्कमीशमायुक्तसर्वाभरणं सुकान्तिकिरीटिनं हैमवतीकटीस्पर्शं करद्वयेनाभयवरप्रदं तरङ्गितानेकदिशाभिः पूर्णं तेजस्विनं हासमुखं प्रसन्नवदनं ददर्श रामः परमेशितारं ननाम बद्धाञ्जलिः पुनश्च दण्डवत्पपात ॥ १८३

अथ रामं परमेश्वरोऽपि वरं वृणु त्वं वरदोऽहमित्युक्तवान् ॥ १८४

लङ्कां गमिष्यामि समुद्रतरण उपायमेकं मम देहि शंभो ॥ १८५

शंभुरुवाच—

ममाजगवं धनुरस्ति तत्कालरूपमविकल्पं वा भवति तदारुह्य समुद्रं तीर्त्वा लङ्कामाप्नुहि १८६

रामोऽपि तथेति निश्चित्य स सस्माराजगवम् ॥ १८७

आगतं धनुस्ततश्च रामोऽपूजयत् ॥ १८८

अथ हरो धनुरादाय रामाय दत्तवान् ॥ १८९

रामोऽपि जलधावपातयत् ॥ १९०

आरुरुहुः सर्वे वानरा रामलक्ष्मणौ च षष्टिपरार्धं तेषाम[प्य]संख्येषु वानरेषु धनुरारूढेषु निकामं ययौ धनुस्तटं वानराश्च ततस्ततो गत्वा निरीक्षयामासुः ॥ १९१

अथातिकायो नाम रक्षः कपिबलमालोक्य रावणायोक्तवत् ॥ १९२

रावणोऽपि किं कपिभिः शाखामृगैः किं वा मानुषाभ्यां रामलक्ष्मणाभ्यां किमायातं दैवागतमस्माकं भोजनमित्युवाच ॥ १९३

---

१ ख. ङ. च. छ. ट. ड. प. °नेको ग° । २ झ. नमामि ।

अथ सुग्रीवः पश्चिमावलम्बिनि भास्वति हनुमज्जाम्बवदादिमहाबलैश्चातिकायैरसंख्यातैर्लङ्का-पार्श्वं गत्वोपवनं प्रविश्य नानाफलानि खादित्वा पयः पीत्वोपवनरक्षिराक्षसान्विद्राव्य सर्वविपिनमेकैकशो गृहीत्वा प्राद्रवल्लङ्कां गोपुरं च गत्वा समारुह्य प्रासादं च विशीर्यैकैकशः केचित्स्तम्भमादाय रक्षोभिर्युयुधुः ॥ १९४

एके च शालां बभञ्जुर्गृहाणि चूर्णयामासुर्बालवृद्धस्त्रीजनादिकं सर्वमेव निजघ्नुः ॥ १९५

अथैकं प्राकारं निर्जितमाज्ञाय रावण इन्द्रजितं संदिदेश ॥ १९६

इन्द्रजिता च युद्धं वानराः कृत्वा भीताः पलायिताश्च ॥ १९७

अथ हनुमानरिबलं निर्गतमाज्ञाय रावणं ज्ञात्वा वानरानाहूय निर्भर्त्स्य सेनां महतीं कारयित्वा दशमुखं कल्पयित्वा मोदयामास ॥ १९८

अथ स्वस्थ एवेन्द्रजिद्युयुधे न च वानरास्तं दृष्टवन्तः ॥ १९९

अथ हनुमज्जाम्बवन्तौ खमुत्प्लुत्य पर्वतशिखराभ्यामिन्द्रजितं निजघ्नतुः ॥ २००

अथ भुवि पपात तं लक्ष्मणश्च यमलोकगामिनं चकार ॥ २०१

अथातिकायमहाकायौ वानरसैन्यं बहुशो हत्वा लक्ष्मणं पीडयित्वा रामेण संयुध्य सुग्रीवं कृत्त्वा हनुमज्जाम्बवद्भ्यां युयुधाते पराजितौ गृहीत्वा तौ च योद्धारावादाय रामसमीपं गत्वा रामाय न्यवेदयताम् ॥ २०२

अतिकायमभाषत रामो रावणस्य मम ब्रूहि सचिवानामन्येषां महाभयानां च ॥ २०३

अतिकाय उवाच—

निश्चितमिदं पुराऽस्माभिः कार्यं सेनाविभागशः कृत्वा विद्युन्माली नाम राक्षसो महाबलो विचित्रयोधी दर्शनादर्शनयोधी वानरैः सर्वैरेक एव युध्यतेऽपरे च बलिनो महान्तः शिक्षितास्त्राश्चाऽऽवां युवाभ्यां युध्यावो रावणः पुष्पकमारुह्यापरभागेण [*त्वामेव निहनिष्यत्यन्ये च राक्षसाः कुम्भकर्णमुखाश्चात्मा(नु)रूपं कृत्वा त्वां परिवार्य गृहीत्वा सीतायै दर्शयि]त्वा तत्संनिधावेव हनिष्यन्ति ॥ २०४

रामः प्राहाहो बलवतां किमसाध्यमेवं भवति वो दैवगतिः कुटिला ॥ २०५

सुग्रीवोऽतिकोपनः सक्रोधं दृष्ट्वा राममुवाच वध्यावेतौ न मोचनीयौ ॥ २०६

रामः प्राहावध्यौ मोचनीयावेतौ वसनानि भूषणान्यानयेत्युक्तमात्रे हनुमता तान्यानीतानि रामस्ताभ्यां दत्तवान् ॥ २०७

नत्वा यदेतल्लङ्काद्वारे दृश्यते दारु पञ्चवक्रं शुक्रेणोक्तमेतेन च्छिन्नेन रावणो हन्यतेऽथ च दारुच्छेदनसमनन्तरं पातालं गन्तव्यमिति भार्गवभाषितं शासनं लिखितं तस्मात्त्वमिदं दार्वेकप्रयत्नेनैकबाणनिपातेन पञ्चधा छिन्धि ततस्तव शक्तिं ज्ञात्वा युद्धमतिदृढं कुर्वहे ॥ २०८

अथ भार्गववचो विज्ञाय रामः पूर्वकोट्यां स्पर्शमाने(त्रेण) सज्यं कृत्वा धनुषि बाणं संयोज्य रक्षोभ्यां हनुमता श्रावयन्नेव बाणं मुमोच ॥ २०९

बाणं धनुषश्चलितं तौ राक्षसौ बाणमार्गे निरीक्षमाणौ दारु बाणेन पञ्चधा छिन्नं निरीक्ष्य रामं व्यज्ञापयतामावयोः शिशवो रक्षणीयास्त्वयेति ॥ २१०

---

* धनुश्चिह्नान्तर्गतः पाठः ख. ङ. छ. ट. ड. प. पुस्तकस्थः ।

१ ख. चारु ।

तथेत्याह रामः ॥ २११

राक्षसौ लङ्कां प्रविष्टावथ प्राकारयुद्धं कर्तुं वानरा गत्वा सर्वतो वरणमात्रं पार्ष्णिभिः पादैर्जानुभिः करैः पृष्ठैश्च तलसमं कृत्वा द्वितीयप्राकारं गतास्तदा च रावणः समागत्य सर्वानेवेषुभिर्द्रावयित्वा तदनु गच्छन्राममगात् ॥ २१२

अथ राममपि पञ्चभिर्बाणैर्विव्याध ॥ २१३

अथ रामो दशभिर्बाणै रावणं सव्रणं चकार ॥ २१४

अनयोरतिदारुणमन्योन्यं युद्धं बभूव ॥ २१५

रावणो दशभिर्बाणैर्विव्याध ॥ २१६

अथ रामबाणैश्च क्षतजशरीरो राक्षसः पलायनपरोऽभवत् ॥ २१७

वानरा लक्ष्मणश्च कोटिकोटिराक्षसानघ्नन् ॥ २१८

अथ परस्मिन्नहनि विभीषणो रावणं विवार्येदमुवाच ॥ २१९

तृतीयोपायकालोऽयं चतुर्थं न विचारय । चतुर्थो विपरीतो न शस्तः शस्तापि(?)कारिणः ॥२८
परस्य चाऽऽत्मनः शक्तिं विदित्वा चाऽऽत्मनोऽधिकम् । तदा युद्धं प्रशस्तं स्याद्विपरीतं विनाशकम्
रामेण बलिना नैव युद्धं ते दुर्बलस्य च । एकेषुवालिहन्ताऽसौ वालिज्ञातस्त्वया पुरा ॥ ३०
मारीचमे(ए)कबाणेन भवानपि पलायितः । निहता राक्षसाः शूरा इन्द्रजिच्च सुतो हतः ॥ ३१
वैरेण्यत्रितयं भग्नं तेन युद्धं च नैव ते । दासभावमथो वाऽपि दत्त्वा सीतामथाऽऽमुहि ॥ ३२
गोपुरस्थं तथा दारु पञ्चवक्त्रमथेषुणा । चिच्छेद पञ्चधा तेन रामस्त्वां मारयिष्यति ॥ ३३
त्वदर्थं बहवो नष्टा नाशमेष्यन्ति चापरे । एको न्यायः सुखार्थाय न च मौढ्यं सहोदर ॥ ३४
मानुषीं मृत्युसंयुक्तामनिच्छन्तीं पतिव्रताम् । पत्नीं बलवतश्चापि पूजयित्वा विसर्जय ॥ ३५
अनिच्छन्त्याः समायोगे भवेदुःखपरंपरा । दुर्गन्धमलसंयुक्तो नारीसङ्गो जुगुप्सितः ॥ ३६
विरक्तिरथ चेज्जाता दुःखायाकार्यवर्तनम् । अनुरागो यदि भवेन्मरणं नरकं ततः ॥ ३७
आत्मनो मरणं व्यर्थं तस्याश्चाद्य समागमे । त्यागो वा मरणं तात धर्मपत्न्यास्तथा भवेत् ॥ ३८
एवमादि तथाऽन्यच्च कश्मलं संभविष्यति । अन्यदाख्यामि ते वाक्यं सर्वेषां च प्रियं हितम् ३९
गत्वा रामान्तिकं नत्वा स्तुत्वा विज्ञाप्य राघवम् । क्षम राम महावीर शरणागतवत्सल ॥ ४०
तामसा राक्षसाः सर्वे वयमेते सुपापिनः । सीतापहारजं दोषं त्यक्त्वा पुत्रानवेहि नः ॥ ४१
त्वदधीना वयं राम रक्ष वा मारयेच्छया । इत्युदीर्य पुरस्तस्य राघवस्य स्थिता वयम् ॥ ४२
स्थिरायुषो भविष्यामः स्थिरराज्या दशानन । अथाऽऽह रावणो वाक्यमहो नो राक्षसो भवान्
न शूरो राज्यधर्मं च न च जानासि शाश्वतम् । परनारीपरद्रव्यपरराज्यनिषेवया ॥ ४४
शूराणामुत्तमो धर्मो न षण्डानां भवादृशाम् । शत्रुपक्षं समालिङ्ग्य निर्गच्छेच्छा हि चेन्नृपः(पम्)

अथ विभीषणो मन्दिरं गत्वा रामान्तिकं गत्वा तं शरणमभजत् ॥ २२०

अथ रावणः पुरान्निर्गत्य रामेण लक्ष्मणवानरै राक्षसा अपि युयुधे ॥ २२१

अथ रावणं महाबलं हन्तुमशक्तो रामो विभीषणमुखमवलोक्य तदुक्तचिह्नपदं बाणेन निर्भिद्यामारयत् ॥ २२२

१ प. 'तोद्धर'। २ झ. अपि ।

अथ कुम्भकर्णो महागदामादाय सर्वं निष्पात्य वानरानेको भक्षयित्वा रामोरसमाह गदयाऽहन् ॥ २२३

अथ रामो निशितबाणशतेन तमहन्ममार कुम्भकर्णः ॥ २२४

अथ विभीषणेन रावणादेः श्राद्धादिकं कारयित्वा शिवाज्ञयं तदाज्ञा कारयित्वा तमेव लङ्काराज्ये विभीषणमभिषिच्य सीतामग्निप्रवेशशुद्धामुमामहेश्वराभ्यां नमयित्वा पुरहरेण दत्ताखिलमृतबलायुष्यः सुपुष्पकमारुह्य जलधिमुत्तीर्य पारावारतटे सेनां समवस्थाप्य शिवप्रतिष्ठां तत्र कृत्वा मुनिभिर्देवैरभ्यर्चितोऽयोध्यामगमत् ॥ २२५

अथ भरतादिसमुपेतो नागरैर्वसिष्ठेन मुनिभिश्चाभ्यर्चितः स्वगृहमगमत् ॥ २२६

आत्मनाऽऽगतानिन्द्रादिदेवानासनादिनाऽभ्यर्च्य वानरान्संपूज्य मुक्तजटोऽभिषिक्तो राज्ये॥

रावणवधहर्षिता देवा राममूचुः ॥ २२८

त्वयाऽऽत्मराज्ये स्थापिता वयं नः सर्वदा परिपालय त्वमादिनारायणो देवो निखिलदुष्टनिग्रहार्थमवतीर्णो रावणं सबान्धवं हत्वा लोकत्रयरक्षकोऽसि श्रिया सह सुखी भवेत्युदीर्य स्वर्गं गताः ॥ २२९

अथायोध्यावासिनो रामं प्रहर्षिता ऊचुः[1] ॥ २३०

हत्वा शत्रून्समायातो दृष्ट्वा(दिष्ट्या) प्राप्तोऽसि वै शिवम् । दिष्ट्या त्वं राजसे राम दिष्ट्या पालयसे प्रजाः
त्वया यज्ञाः करिष्यन्ते त्वया धर्मो विवर्धते । इति पौरवचः श्रुत्वा रामो राजीवलोचनः ॥४७
वस्त्रादिभिरथो सर्वानागरान्समपूजयत् । मुनिरु(नीनु)वाच धर्मात्मा पूजयित्वाऽखिलैर्जनैः ॥ ४८
कच्चित्तपः समृद्धं वा(वः) कच्चिद्यज्ञः स्वनुष्ठितः । कच्चित्स्वदारनिरताः कच्चिदीशोऽभिपूज्यते
कच्चित्सप्रजसो भार्याः कच्चित्सर्वं सुखोत्तरम् ॥ ४९

मुनय ऊचुः—

त्वयि राजनि काकुत्स्थ सर्वं स्वस्थं तपस्विनाम् । गच्छामहे पदमितः किं वा त्वं मन्यसे नृप ५०

श्रीराम उवाच—

यस्य विप्राः प्रसीदन्ति तस्य शंभुः प्रसीदति । यस्य प्रसीदतीशानस्तस्य भद्रं भविष्यति ॥ ५१
तत्कृत्वा भोजनमिह गन्तुमर्हा अनन्तरम् । तथेत्युक्त्वा मुनिगणाः कृत्वा भोजनमुत्तमम् ॥ ५२
अभिवर्ध्य तमाशीर्भिर्हृष्टाः स्वं स्वं पदं ययुः । रामोऽपि परमप्रीतः सभार्यश्च सहानुजः ॥ ५३
अकण्टकं स कृतवान्राज्यं सर्वजनप्रियः । शृणोत्येतदुपाख्यानं यः कश्चिदपि पातकी ॥ ५४
सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति । न दुर्गतिर्भवेत्तस्य यश्चेदं स्मरते नरः ।
यश्चापि कीर्तयेत्तस्य श्रेयमेतदुदीरितम् ॥ ५५

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवादे पुराकल्पीयरामायणकथनं नाम द्वादशाधिकशततमोऽध्यायः ॥ ११२॥

आदितः श्लोकानां समष्ट्यङ्काः—१९३६३

---

१ ग. "नाभ्य" । २ ङ. वैविकाम । च. वैरथाम् । झ. वै विवाम् ।

अथ त्रयोदशाधिकशततमोऽध्यायः ।

---

सूत उवाच—

भारद्वाजगृहे भुक्त्वा रामचन्द्रः प्रसन्नधीः । मुनीन्द्रविष्णुसहितो वानरर्क्षसमन्वितः ॥ १
मेघच्छन्ने तथाऽऽकाशे मन्दं चरति मारुते । तद्वनाभ्यन्तरे क्वापि सुदेवगृहमुत्तमम् ॥ २
अष्टापदस्तम्भयुतं हेमपट्टिककल्पितम् । मणिमौक्तिकसंयुक्तं राजतैः कलशैर्युतम् ॥ ३
पटीरचन्द्रकस्तूरीकुङ्कुमैः सुरभीकृतम् । कर्दमैर्जालकयुतं शकलोपरिसंवृति ॥ ४
चन्द्रज्योत्स्नागमं सूर्यानिरीक्ष्या(?)मध्यभित्तिकम् । गृहान्तर्भूतलं कृत्स्नं चन्द्रपुष्परसोक्षितम् ॥ ५
दिगुदीची तथा कृत्स्ना भित्तिकल्पनवर्जिता । स्तम्भे स्तम्भे चित्रकारीस्वपादीपरिकल्पितम् ६
शतहस्ताङ्गणं तस्य स्फटिकोपरिकल्पितम् । गृहाङ्गणाधिकच्छायः पारिजातमहीरुहः ॥ ७
कृत्स्नमावृतिकं तत्र निबिडं कदलीवनम् । कदलीवनसंयुक्तं केतकीवनसंवृतम् ॥ ८
मयूरनादबहुलं मञ्जुकूजन्मधुव्रतम् । पारावतगणध्वानं नानोपवनशोभितम् ॥ ९
प्रासादशतसंबाधं मत्तकोकिलनादितम् । शाखालम्बमहारत्नशोभितानेकपादपम् ॥ १०
किंनरीवनितागीतनादपूरितदिङ्मुखम् । अनेकारामसुभगं गौतमीतटमुत्तमम् ॥ ११
भारद्वाजगृहं पुण्यमनन्तैर्गुणसेवितम् । रतिकंदर्पसंकाशदासीदासशतान्वितम् ॥ १२
नानोपकरणोपेतं भारद्वाजगृहं शुभम् । तस्य चान्तर्गतः सौधस्तत्रान्तर्गृहवाटिकाः ॥ १३
अष्टौ तन्मध्यतो ह्येकं गृहं परमशोभनम् । चतुर्दिक्षु महादेवगृहप्रासादशोभितम् ॥ १४
प्रतिदेवगृहं श्यामातौर्यत्रिकसुशोभितम् । स्वर्गस्थितवरस्त्रीणां विश्रामायैव कल्पितम् ॥ १५
भारद्वाजगृहाद्रामो निर्गत्याशेषसंयुतः । तस्यैव च महागेहं वनमध्यगतं त्वगात् ॥ १६

तदन्तराच्छादितकम्बलं तदा पृथक्स्थवस्त्रासनसंयुतं च ।
सिंहासनं मध्यगतं तथैकं मुन्यासनानेकगतं विवेश ॥ १७
पौराणिकस्यानुपमासनान्तरं भूपालहर्यक्षवरासनं च ।
पौराणिकं पूर्वमथोपवेश्य ततो वसिष्ठं मुनिपुङ्गवा(वां)श्च ॥ १८
नारायणं भूमियतीन्कपींश्च नीचासनं च स्वयमाससाद ।
मेघावृतं व्योम दिशः प्रसन्नाः सशिष्यमुर्वीतलमुप्तबीजम् ॥ १९
तदङ्गणं नोष्णमहो न शीतलं संतानपुष्पं दम(मद)पुष्पगन्धि ।
शंभुं विलोक्याथ वचो बभाषे रामः कथां कीर्तय शंकरस्य ॥ २०
तृप्तिर्न जाता मुनिवर्य शृण्वतो माहेशमाख्यानमघौघनाशनम् ।
चकार किं वा ननु गौतमाश्रमे महेश्वरो देवगणाधिसंवृतः ॥ २१

शिव उवाच—

महाविपश्चीमवलम्ब्य निष्ठितः स वायुसूनुः शिवमन्वपृच्छत ।
न्यायार्जितैरेव हि पूजने विभोः कीदृग्भवेच्चानयजैः फलं वद ॥ २२
चौर्यैरथो किं फलमर्पितार्पणे उपाहृतद्रव्यसमर्पणेन ।
एकैकशो मे भगवन्वदेश प्रश्नोत्तरं किं कथयाऽऽशु शंभो ॥ २३

---

१ प. सुरत्नप्र । २ ङ. ञ. 'तं सक' । ३ ट. 'न्तगण' ।

अथेश्वरो वामरमाबभाषे वदामि सर्वं तव ध्यानतः शृणु ।
न्यायार्जितैः पूज्य सदाशिवं त्वजं संप्राप चैश्वर्यमिदं हि गौतमः ॥ २४
पुरा द्विजो मङ्कणसूनुराकथः सुशोभनामाप सतीं द्विजात्मजाम् ।
दरिद्र एकः करुणासमन्वितः षष्ठाह्भोजी पितृवर्जितश्च ॥ २५
उपोष्य पञ्चाहमथापि भोक्तुं प्रवृत्त एवाथ समापतद्यतिः ।
यतिर्बभाषे मधुरं तदा कथं मासोपवासी तव भोक्तुमागतः ॥ २६
तिष्ठामि भुंक्षे(भोक्ष्ये) यदि वाऽस्ति ते मुने न वै बुभुक्षाऽन्यगृहाद्विभोक्तुम् २७

आकथ उवाच—

न मे भुजिः पञ्चदिनं द्विजेन्द्र षष्ठे दिने मे भुजिरागतश्च ।
तदा मया कार्यमचिन्तनीयं प्रक्षालयाम्येहि तवाद्य पादौ ॥ २८
ओमित्यथ क्षालितपादयुग्मः स भोजनं कर्तुमियेष योगी ।
रम्भादलांशे बुभुजे तदन्नं विपाच्य संपादितमाज्ययुक्तम् ॥ २९
वन्यैः सुसंयुक्तमथाऽऽदरेण न किंचिदुच्छेषितमन्नमस्य ।
अथाऽऽकथो वीक्ष्य मुनिं सुतुष्टं तुतोष भार्यासहितस्तपस्वी ॥ ३०
गतोऽथ भुक्त्वाऽपि यतिः स चाऽऽकथः सुतुष्टचित्तोऽथ जपं चकार ।
कपोतवृत्तिं स चकार पत्न्या तपोवितानाय स सज्जनो मुनिः ॥ ३१
पीठेऽथ कृत्वा तमुमापतिं शिवं लिङ्गे समाराध्य समन्वितं गणैः ।
लिङ्गं निधायाथ निरीक्षमाणो ददर्श चाज्ञातकृशाकृतिं द्विजम् ॥ ३२
दिगम्बरं पादविहीनमेतं काणं कुणिं कर्णविहीनकं प्रभुम् ।
सामोद्गिरन्तं बहुशास्त्रपारगं गृहं समायान्तमथो ददर्श ॥ ३३

अथाऽऽकथो भार्यां सुशोभनामिदमुवाचायं हि विकृतवेषो ब्राह्मणः समायाति । अर्घं देयमेतस्मै भोजनं रक्षार्थमन्नं चास्मिन्नपि दिने गते षष्ठेऽह्नि भोजनाभावात्तव जीवितं न तिष्ठतीति मम प्रतीयते किं तु त्वं मन्यसे वद ॥ १

सा शोभनोवाचाऽऽयुर्ललाटे लिखितं नान्तरा नश्यति ॥ २

आकथ आह यथा बह्वायुषोऽपि यक्ष(दक्ष)स्य वीरभद्रेण च्छिन्नं शिरोऽजस्रात्मनः किमुत मनुष्याणां पापात्मनामिति। तदेनं परिहृत्य त्वया भुज्यते यदि त्वेतस्मै मयाऽन्नं दीयते तवेच्छानुसारतो मम कर्तव्यम् ॥ ३

भार्या प्राह कथमहं भोक्ष्ये त्वय्यभुक्ते मया किं पूर्वं भुक्तमिदमपरं शृणु ॥ ४

अन्नं हि प्राणिनां प्राणाः प्रत्यक्षं सर्वदेहिनाम् । तस्मादन्नप्रदो यस्तु प्राणदः स निगद्यते॥ ३४
अन्नात्कृतानि जायन्ते वर्धन्ते तानि वै यतः । तस्मादन्नाधिकं किंचिन्नास्य दानं महाफलम् ३५
अश्वत्थचलपत्राग्रलीनतोयद्रवास्तिके । जीविते न हि यो दद्यात्तस्य जन्म निरर्थकम् ॥ ३६
परलोकसहायो हि धर्मो भार्या न बान्धवाः । भार्या वा पितरौ पुत्रा यावदायुर्न बान्धवाः॥ ३७
संपद्वयः सुहृदिह इहामुत्र हितं स्थितम् । धर्मं धर्मभृतां श्रेष्ठ भुक्ते चान्ने किमावयोः ॥ ३८
इति भार्यावचः श्रुत्वा आकथः करुणानिधिः । अविशङ्कितमेवास्मै दत्तवानन्नमूर्जितम् ॥ ३९

अयं स शंकरो देवो नानाकरणमागतः । इति निश्चित्य मनसा तस्याङ्गं पापनाशनम् ॥ ४०
आजानु पादं प्रक्षाल्य पराजङ्घमतः परम् । गुल्फं च तदधस्तस्य प्रक्षाल्याऽऽचमयद्द्विजम् ४१
अथाऽऽकथोऽपि पत्संधिं गृहाङ्गणमुपानयत् । उन्मुच्य पादसंधिं स निषसादार्पितासने ॥ ४२
समभ्यर्च्याऽऽकथः सम्यग्भोजयामास तं मुनिम् । एतस्मिन्नन्तरे कश्चिदुन्मत्तो गृहमागतः ॥ ४३
पादसंधिमथाऽऽदाय गृहबाह्यमपानयत् । अथादहच्च तद्गेहं दंपती चाप्यताडयत् ॥ ४४
अशक्तस्ताडितो विप्रो दह्यमानं गृहं तदा । विवेश देवमीशानमादातुं तूर्णमेव वा ॥ ४५
अथाऽऽदाय महेशानं दग्धपूजं द्विजोत्तमः । निर्गत्य च ततो दृष्ट्वा मुखसंतापमेव च ॥ ४६
दग्धपूजां तिरस्कृत्य वीक्ष्य दग्धाङ्गमच्युत । भार्यामुवाच धर्मात्मा यथा पूजा महेशितुः ॥
तथा मम समस्ताङ्गं कर्तव्यमविशङ्कितम् ॥ ४७

व्यङ्ग उवाच—

पश्चादपि कृता पूजा सफला ते भविष्यति । यथाऽन्यद्द्रव्यदहने तादृशं दीयते जनैः ॥ ४८
पूजाया दहने तद्वत्पूजाऽस्य क्रियतामिति ॥ ४९

आकथ उवाच—

चौर्येणाप्यर्जितैर्द्रव्यैः पूजया न हितं भवेत् । न चान्यायार्जितैर्विप्र शंभोः पूजा शुभप्रदा ॥ ५०
इत्युक्त्वा चाऽऽकथस्तूर्णं स्वाङ्गं दग्धुमुपाक्रमत् । दग्धं लिङ्गं तदोन्मत्तो गृहीत्वाऽन्तर्दधे क्षणात् ॥
अथ व्यङ्गो हरो भूत्वा वारयामास चाऽऽकथम् । किमर्थं खिद्यते विप्र वरदोऽहं वरं वृणु ॥
आकथोऽपि विभोः पादभक्तिं वव्रे सुनिश्चलाम् ॥ ५२

सूत उवाच—

एतां श्रुत्वा कथां रामः प्रहृष्टो मुनिभिर्वृतः । भारद्वाजं नमस्कृत्य प्रयाणाज्ञामयाचत ॥ ५३

अथो भारद्वाजमुनिः प्रसन्नं शंभुं वसिष्ठं मुनिपुंगवं च ।
नारायणं चर्षिगणांश्च नत्वा व्यसर्जयत्तेऽपि ययुः प्रणम्य ॥ ५४

नैमिषीया ऊचुः—

गत्वाऽयोध्यां महातेजाः समस्तमुनिसंयुतः । किं चकार ततो रामः स च शंभुर्महायशाः ॥ ५५

सूत उवाच—

कौसल्यामासिकश्राद्धमपरेऽहनि राघवः । विचिकीर्षुर्द्विजवरानृषिकल्पानकल्पयत् ॥ ५६
शंभुं समस्ततत्त्वज्ञं नारदं रोमशं भृगुम् । विश्वामित्रमथो राम एकभक्तव्रती ततः ॥ ५७
भूमौ सुखास्तृतायां च सुष्वापाव्याकुलेन्द्रियः । परेद्युरथ संप्राप्ते प्रातः स्नात्वा विधानवित् ॥ ५८
अन्नं शाकादिकं शुद्धं जनैरेव त्वकारयत् । नानान्नानि विचित्राणि चोष्याद्यानि तथैव च[2] ५९
च(व)टकादींस्तथा भक्ष्यानष्टात्रिंशदकल्पयत् । पायसं षड्विधं चैव पक्वशाकशतद्वयम् ॥ ६०
अपक्वामिश्रकाणां च शतत्रयमकल्पयत् । कालशाकादिकं शाकं फलानि विविधानि च ॥ ६१
मूलानि चैव कन्दानि बल्कलानि च राघवः । कारयित्वा नदीं गत्वा सहभ्रातृपुरोहितः ॥ ६२
सरयूसलिले स्नात्वा हुत्वाऽग्नींस्त्वागतान्द्विजान् । उक्त्वा तु स्वागतं तांस्तु कृतदेवार्चनो नृपः ॥
प्राणानायम्य संकल्प्य क्षणं चैव प्रदत्तवान् । रोमशं नारदं रामो वैश्वदेवे न्यमन्त्रयत् ॥ ६४
शंभुं भृगुं कौशिकं च मातृस्थाने न्यमन्त्रयत् । गोमयेन ततः कृत्वा मण्डलं पूज्य चार्हतः ॥ ६५

१ झ. ञ. °खमुपा° । २ छ. ट. ड. प. च ॥ ५९ ॥ भ्रण्टका° । ३ झ. ञ. गौतमेन ।

पादप्रक्षालनं चक्रे सीतादत्तोदकेन च । आचामयित्वा तान्विप्रान्गृहं गन्तुमथोद्यतः ॥ ६
अभ्यागतः समायातः स्थविरो विकृताकृतिः । कृशः संप्रचलद्गात्रो वेपिताङ्घ्रिशिरास्तथा ॥ ६
लम्बमानत्वगुत्कर्षश्च्छ्वासकासादिपीडितः । दूषिकाक्लिन्नगण्डश्च लालासंपृक्तकूर्चकः ॥ ६
उवाच रामं राजानमहमेको द्विजः स्थितः । ममापि भोजनं देयं स्थविरस्य कृशस्य च ॥ ६
रामोऽपि तद्वचः श्रुत्वा लक्ष्मणं वाक्यमुक्तवान् । पादौ प्रक्षालयास्य त्वमहमभ्यर्चये द्विजम् ॥ ७
अभ्यागतोऽपि वचनमाह राममथाऽऽकुलम् । त्वया प्रक्षालिते पादे मम भोजनमिष्यते ॥ ७
मत्तोऽधिका द्विजाः किं ते येन मामवमन्यसे । श्राद्धधर्मं न जानीषे महर्षिगणसेवितम् ॥ ७
ममावमानतः सर्वविप्राणामवमाननम् । श्राद्धं विहन्यते चापि नरकं च गमिष्यसि ॥ ७
अथ रामः स्वयं विप्रपादौ प्राक्षालयत्तदा । आचामयित्वा तं विप्रं गृहं प्रावेशयत्ततः ॥ ७
आचान्तश्च स्वयं रामो विष्टरं दत्तवानथ । आसीनेषु च विप्रेषु प्राणत्रायुं निरुध्य च ॥ ७
स्वकर्मकरणानुज्ञां लब्ध्वाऽथ सतिलं जलम् । अपहतेति मन्त्रेण द्वारदेशे विचि(नि)क्षिपेत् ॥ ७
उदीरतामिति तथा पितृपात्रस्थले क्षिपेत् । गायत्र्या चाक्षतजलं देवपात्रस्थले क्षिपेत् ।
पाकजातं तथाऽभ्युक्ष्य मन्त्रमेतदु(मु)दीरयेत् ॥
श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं जनार्दनम् । वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रवृत्त(र्त
विश्वेदेवार्चनं कुर्याद्यवैर्वा तण्डुलैरथ । मूलाग्रयोजितौ दर्भौ गृहीत्वा साक्षतावथ ॥
भूस्पृष्टदक्षजानुस्तु द्विजहस्ते जलार्पणम् । पुरूरवार्द्रवाणां वै देवानामिदमासनम् ॥
इति दत्त्वाऽऽसनं तेषां श्राद्धदः प्रार्थयेत्क्षणम् ॥
अर्घं कृत्वा ततः पश्चादुत्तराग्रकुशेष्वथ । न्युब्जं पात्रं ततः कृत्वा कुशग्रन्थिमथोपरि ॥
उत्तानं तु ततः कृत्वा जलैरभ्युक्ष्य रौक्मकैः । पवित्रान्तर्हिते पात्रे शं नो देव्या जलं क्षिपेत्
वैश्वदेव्याऽखिलं कर्म यावत्तद्विधिचोदितम् । यवोऽसि धान्यराजो वा इति पात्रे क्षिपेद्यवान्
मधुमिश्रांस्तु करकान्गन्धपुष्पैस्ततो ददेत् । द्विज तेऽस्त्वर्घ इत्युक्त्वा त्वस्त्वर्घोत्तरतस्ततः ॥
आवाहयिष्ये तान्देवानिति पृष्ट्वा तदुत्तरम् । विश्वेदेवास इत्युक्त्वा विप्रमूर्ध्नि कुशान्क्षिपेत् ॥
विश्वेदेवाः शृणुतेममागच्छन्त्विति संजपेत् । समागतो निषण्णोऽत्स्य(त्र) सदर्भं पात्रमाहरेत् ॥
दक्षिणे चरणे क्षिप्त्वा मुख्यपात्रोदकं ततः । विप्रस्य दक्षिणे हस्ते प्रागग्रेऽथ पवित्रके ॥
या दिव्या इति मन्त्रेण निक्षिपेत्पात्रवारि तत् । इदं भो अर्घ(र्घ्य)मित्युक्त्वा त्वस्त्वर्घो(र्घ्यो)त्तरतः
पात्रे धृत्वाऽर्घ(र्घ्य)तोयं च तत्पात्रं स्थापयेत्क्वचित् । अथ दत्त्वा करे तोयं यवैरेवानथार्चयेत्
अर्चतमार्चत इति पृष्ट्वा चोत्तरतस्ततः । पादादिमूर्धपर्यन्तमभ्यर्च्य जलदस्ततः ॥
गन्धद्वारेति मन्त्रेण तथेत्युक्तोत्तरस्ततः । पितॄणामर्चनं कुर्यादेवमेवापसव्यकम् ॥
उपवीतं द्विजं(जे) कृत्वा कुशान्प्रग्रांस्तिलान्वितान् । वामजानुं भूमिगतं कृत्वा दद्यात्तदासनम्
दक्षिणाभिमुखो भूत्वा क्षणप्रश्नमथो वदेत् । दक्षिणाग्रेषु दर्भेषु न्युब्जं पात्रमथ न्यसेत् ॥
त्रिकुशग्रन्थिसंयुक्तमुत्तानमथ कल्पयेत् । ततः संप्रोक्ष्य पात्रेषु सपवित्रतिलेषु च ॥
शं नो देव्या जलं क्षिप्त्वा तिलोऽसीति तिलान्क्षिपेत् । गन्धपुष्पमथो दत्त्वा स्वधार्घ इति पृ
दत्तोत्तरोऽस्त्वर्घ इति पितॄनावाहयेत्ततः । तिलपुष्पकुशैस्तिलकल्पितार्घं करे दैवत् ॥
उशन्तस्त्वेति मन्त्रेण त्रिरर्घोदकमर्पयेत् । अर्चनं तु तदा तेषामपसव्यं तु पूर्ववत् ॥

१ क. सर्वं वि° । २ क. °सि धनरा° । ३ क. ख. दद्यात् ।

कांस्य भाजनं स्वर्णं देवानां परिकल्पयेत् । पितॄणां राजतं कुर्याद्यथासंभवमेव वा ॥ ९९
तदभावे तु कांस्यं स्यादनन्याशितमुत्तमम् । पात्राणि तदभावे स्युः पालाशानि न मध्यमम् १००
पद्माणि चूतपत्राणि जम्बूपुंनागकानि च । पराकान्यथ चाम्पानि मधूककुटजान्यपि ॥ १०१
मातुलुङ्गस्य पत्राणि श्राद्धे देयानि वै नृभिः । दर्व्यामन्नमथाऽऽदाय कराभ्यामाज्यमेव च १०२
निवेदनं ततः पृच्छेत्प्राचीनावीतवान्द्विजम् । करिष्येऽग्नौ करणमिति कुरुष्वेति तदुत्तरम् ॥ १०३
परिविष्योपवीती स्यादभिघार्य समाहरेत् । हुनेत्सोमाय पितृमते स्वधा नम इतीरयन् ॥ १०४
यमायाङ्गिरसे पितृमते स्वधा नम इति । द्वितीयामाहुतिं हुत्वा चाभिघार्योक्षतं ततः ॥ १०५
अग्नये कव्यवाहनाय स्वधा नमस्ततः परम् । हुत्वाऽपसव्यं कृत्वा तु परिविष्य द्विजान्व्रजेत् ॥
प्रोक्षणेन ततोऽभीक्ष्णं पातयेत्पितृपात्रके । पिण्डपात्रमतः शेषं दर्वीप्रक्षालनं ततः ॥ १०७
मेक्षणस्याग्निनिक्षेपं ततः पात्राण्युपस्तरेत् । पात्रदक्षिणभागे तु दद्यादन्नमनन्तरम् ॥ १०८
भक्ष्याणि भोज्यैश्शाकानि सर्वाण्येव स दत्तवान् । अथातिथिर्महावृद्धो वीक्षमाणस्ततस्ततः १०९
उवाच राघवं शान्तं शीघ्रमेव नमस्कुरु । बुभुक्षा वर्ततेऽस्माकं भोक्ष्येऽहं वा तवाऽऽज्ञया ॥ ११०
रामो बभाषे वचनं विलम्बय क्षणं मुने । देवताः पितरो मह्यं नमस्यन्तेऽधुना मया ॥ १११
उक्त्वा राघवः प्रादादन्नं पात्रगतं तदा । प्राक्सौम्याग्रान्कुशान्दैवे प्रतीचीदक्षिणाग्रकान् ११२
(त्र्ये) पवित्रे ये दर्भा यवानथ तिलानपि । अन्नप्रदानं कुर्वन्ति पृथिवी इति मन्त्रतः ॥ ११३
विष्णुरिति स्पृष्टमङ्गुष्ठेन द्विजस्य तु । देवेभ्यः प्रथमं दद्याद्ये देवा इति वै पठन् ॥ ११४
र्णां च ततो दद्याद्दद्यादतिथये ततः । देवताभ्य इतिमुखानुच्चार्याऽऽपोशनं ददेत् ॥ ११५
र्पयित्वा तु गायत्रीमुपवीती पुरोमुखः । प्राचीनावीतवान्ब्रूयान्मधुत्रयमतः परम् ॥ ११६
भुङ्क्ष्वमिति तानुक्त्वा भुञ्जानेषु द्विजातिषु । रक्षोघ्नमन्त्रपठनं भक्ष्यभोज्यादि दापयन् ॥ ११७
अस्मिन्नन्तरे विप्रो योऽतिथिस्तादिदं तथा । कृतवान्महदाश्चर्यं तद्वदामि समासतः ॥ ११८
प्रास्थितमशेषं च ग्रासेनैकेन चाग्रसत् । प्राणाहुतीनां पर्याप्तं दीयतामिति चाब्रवीत् ॥ ११९
तावदातुमशक्तः कथं श्राद्धक्रियोद्यतः । ममैकस्य प्रदाने त्वमशक्तो राम किं वृथा ॥ १२०
र्णां भोजनं दातुमुद्युक्तो राम किं वृथा । सहसा(सा) कृतकर्माणि न समाप्तिं प्रयान्ति च १२१
या कृतमशेषाणां नालं प्राणाहुतिर्मम । कथं मे दीयते भुक्तिः कथमेषां तथा वद ॥ १२२
मस्तमब्रवीद्वीरो भुङ्क्ष्व त्वं हि यथासुखम् । इत्युदीर्य निरीक्ष्यास्य कर्म तत्परमाद्भुतम् १२३
य शंभुं समाहूय प्राह त्वं परिवेषय । त्वं पिता पार्वती माता शिवा देवीति मे मतिः ॥ १२४
अन्नपूर्णेश्वरी देवी भवान्येवेति मे मतिः । सा शांभवी वचः प्राह तत्पर्याप्तं ददाम्यहम् ॥ १२५
सोमा कांस्यमादाय भिस्सापूर्णमलंकृतम् । स्वर्णदर्व्या समादाय पायसं गन्धकान्तिमत् १२६
न्याक्षयमिदं भूयादिति प्रादात्तु पायसम् । द्विजस्य दक्षिणे हस्ते साऽददात्सत्कृतं मुदा ॥ १२७
शिरः कम्पमानस्तु ऊर्ध्वदृष्टिरथाभवत् । प्रसारितकरश्चाऽऽसीद्गृहीत्वा पायसं करे ॥ १२८
पतां पायसं स्वादु सुष्ठु पक्वमिदं तु किम् । शंभुपत्नी बभाषे तं करे भुङ्क्ष्व ततो ददे ॥ १२९
१३०
मक्षयं ततो विप्रः पुनः करतले स्थितम् । तदक्षयमथ ज्ञात्वा प्रासारयदथेतरम् ॥ १३१
स्मिन्करतले देवी पायसं दत्तवत्युत । अन्येषामपि विप्राणां पक्वाक्षय्यमदात्सती ॥
पाणिद्वयगतं विज्ञायाक्षय्यपायसम् । द(दृ)ष्ट्वा करान्तरमथो प्रासारयत स द्विजः ॥ १३२

१ ङ. ञ. भोजनं । २ ङ. प्रोक्षणेन । ३ ञ. °ज्यकाशानि । ४ ख. छ. ङ. °नीद्धीगो । ५ ङ. करं ।

उवाचान्नं प्रदातव्यं ससूपघृतमुत्तमम् । शिवा देवी तथा प्रादादक्षय्यं शंभुवल्लभा ॥ १३३
यद्यत्प्रादात्तदा साध्वी सर्वमेव तदक्षयम् । करान्तरमथो सृष्टं परिपूर्णं पुनः पुनः ॥ १३४
एवं करसहस्रं तु कृत्वा स विरराम ह । उवाच वचनं विप्रो देहि गण्डूषवारि मे ॥
तर्पितोऽस्मि त्वया भद्रे न रामेण न सीतया ॥ १३५

शंभुरुवाच—

रामेण सीतया दत्तं मया दत्तं हि यत्र च । इतः परं हि किं देयं पूर्णं वा त्वं वदस्व मे ॥ १३६

द्विज उवाच—

तृप्तोऽस्मि न च मे देयमधिकं च करस्थितम् । विद्धमतः करगतं न पपात कथंचन ॥ १३७
निषण्णो हि चिरं दध्यौ कथं मे केवलः करः । भुक्त्यै कृतमिदं सर्वं नान्यस्मै कर्मणे मम ॥ १३८
तस्मादन्यकृतेरेतत्सर्वं रिक्तं भविष्यति । इति निश्चित्य मनसा लिप्ताङ्गोऽतिथिराभवत् ॥ १३९
पश्यत्सु सर्वदेवेषु तदद्भुतमिवाभवत् । तृप्तानथ द्विजाञ्ज्ञात्वा राघवः परमार्थवित् ॥ १४०
दर्वीकरोऽथ तृप्ताः स्थ इति पृष्ट्वा यथाविधि । तृप्ता स्म इति विप्रेन्द्रा विकीर्यान्नं समन्त्रकम् ॥ १४१
पात्रस्य याम्याभिमुखः संनिधौ पिण्डमर्पयेत् । गण्डूषमपि विप्राणां तत्रैव परिकल्पयेत् ॥ १४२
उच्छिष्टपर्णपात्रेषु ते गण्डूषमकुर्वत । गृहान्तरे च ते विप्रा विविशुस्त्वतिथिं विना ॥ १४३
आहातिथिर्बहिः कार्यं मयाऽऽचमनं विद्यते । उत्थातुं नैव शक्नोमि करं मे देहि राघव ॥ १४४
अथ रामः करं प्रादान्नोत्थितस्तु द्विजोत्तमः । हनुमानथ चाप्यस्य दत्तवान्बलवत्करम् ॥ १४५
इतरेण गृहीत्वा तु करेण द्विजपुंगवम् । आचकर्ष कपीन्द्रस्तु द्विजः साक्रोशमुक्तवान् ॥ १४६

द्विज उवाच—

छिद्यते मे करो व्यक्तमुत्थापय ततोऽन्यतः । लाङ्गूलेन सपीठं तमावृत्याऽऽमस्तकं बलात् ॥ १४७
अथाधावत्ततः पृथ्वीं द्विजस्तु न चचाल ह । अथ वानरवीरस्तु पद्भ्यां चक्रान्त तां महीम् ॥
पादौ विन्यस्य सुदृढौ द्विजमूर्धानमाक्षिपत् । विशीर्णमभवद्वेश्म द्विजाः सर्वे बहिस्तथा ॥ १४९
सहवृद्धद्विजः सोऽथ हनूमान्बहिरभ्यगात् । पीठे च स्थापयामास ब्राह्मणं स्थविरं कृशम् १५०
द्विजाय जलमादाय जाम्बवान्मृन्मये घटे । आह स्वच्छं जलं विप्र त्वयाऽऽदेयं सभाजनम् १५१
सीता प्रक्षालयेदङ्गं लक्ष्मणो जलदो भवेत् । जाम्बवानाह तं रामं ब्राह्मणोक्तमशेषतः ॥ १५२
द्विजप्रक्षालने रामो व्यादिदेशानुजं प्रियाम् । सौमित्रिर्जलमादाय द्विजाङ्गक्षालने तथा ॥ १५३
प्राक्षालयद(त्व)शेषाङ्गं प्रतिमामिव भूभुजः । अथ रामोपदेशेन चक्रतुस्तौ तथैव च ॥ १५४
अथातिथिः स्वगण्डूषं सीतावक्त्रे व्यमुञ्चत । सालंकाराऽम्बुभिर्योषा प्राक्षालयदथो सती १५५
श्लेष्मलालासुप्रचुरं मुखं विप्रस्य सा सती । प्रममार्ज पुनः क्षाल्य नासाश्लेष्माणमत्यजत् १५६
*आचामयित्वा सौमित्रिरुत्तिष्ठेत्यब्रवीद्द्विजम् । द्विजो न शक्यमित्याह हनुमानप्यथाऽऽगतः ॥
अतिथिः प्राह तं विप्रः पीडितोऽहं हनूमता । गृहीत्वोद्धरता पूर्वं व्यथितो वानरेण च ॥ १५८
जाम्बवानथ तं प्राह लोमाङ्गं मम वै मृदु । मयाऽथो ध्रियसे विप्र न च पीडा भविष्यति ॥ १५९
इत्युक्त्वा जाम्बवान्विप्रं दोर्भ्यामालम्ब्य चोद्धरन् । द्विजप्रान्तमथाऽऽदाय स्थापयामास तं मुनिम्
अथ रामो द्विजेन्द्राणां प्रदक्षिणमवर्तत । दत्ताशीरपि विप्रेन्द्रैर्दत्त्वा ताम्बूलमग्रतः ॥ १६१

* त्यबभाव आर्षः ।

१ ड. न विशुद्धस्त्व ।

पादावलम्बकृद्रामो भ्रातृभिः सह चाब्रवीत्। अयि सीतेऽतिथेरस्य त्वया न क्षालितं वपुः १६२
जङ्घायुगतिथेरस्य करं चास्य मलान्वितम्। सम्यक्प्रक्षालय मुखं द्विजो न सहते मलम्॥

सीतोवाच—

तथा प्रक्षालितं सम्यगिदानीं निर्गतं पुनः॥ १६३

राम उवाच—

पुनः प्रक्षालय मलं दोषः स्यादन्यथा मम। अथ सीता तथा कृत्वा तूष्णीमेव बभूव ह॥ १६४
आह रामं च सीतां च द्विजः परमकार्यवान्। पादौ यौ मम राजेन्द्र तौ सीताऽऽलम्बयेदिति १६५
भवान्करौ च भरतो मम बीजं प्रयच्छतु। लक्ष्मणः केशनिचयप्रसाधनकरो भवेत्।
शत्रुघ्नः श्लेष्मनिर्मुक्तं स्ववस्त्रेण करोतु माम्॥ १६६

सूत उवाच—

अथ ते चक्रुरतिथेरशेषमुदितं तथा। तथाऽऽपुर्विस्मयं विप्रा नरवानरराक्षसाः॥ १६७
शिवा देवी च शंभुश्च सभ्रूभङ्गमुदैक्षताम्। मनसा चाप्यभाषेतामतिथिः शंभुरेव च॥ १६८
अतिथिश्च प्रसन्नोऽभूच्छङ्खचक्रगदाधरः। पीताम्बरसमस्ताङ्गभूषितोऽतीव दीप्तिमान्॥ १६९
यः पुराऽऽराधितः शंभुः प्रसन्नोऽभूत्त्रिलोचनः। शुद्धस्फटिकसंकाशः सर्वाभरणभूषितः॥ १७०
कोटिसूर्यप्रतीकाशः किरीटी करुणानिधिः। आलम्ब्य चक्रिणः पाणिमतिष्ठत सदाशिवः॥ १७१
रामः परमधर्मात्मा पुलकाञ्चितविग्रहः। दण्डवन्निपपातोर्व्यामानन्दप्लावितेक्षणः॥ १७२
अनमन्भ्रातरस्तस्य दण्डवद्भूतले स्थिताः। शिव उत्थाप्य काकुत्स्थमालिङ्ग्याऽऽघ्राय मस्तकम्॥
उवाच मधुरं वाक्यं रामं राजीवलोचनम्॥ १७४

शिव उवाच—

वरं वृणु प्रसन्नोऽस्मि ब्रह्मादेरपि दुर्लभम्। तवादेयं न मे किंचिद्वृणु त्वं न चिराय वै॥ १७५

श्रीराम उवाच—

न याच्यं मे जगन्नाथ भूराज्यं मम सांप्रतम्। स्वर्गश्च कर्मभिः प्राप्तो[1] भक्तिस्त्वत्पाददर्शनात् १७६
आरोग्यं मे पश्य भुङ्क्ते सा सीता योषितां वरा। वशीकृताः सर्वनृपाः प्रजा धर्मसमन्विताः १७७
हर्ष एव ममाऽऽपन्नस्त्वदागमनतोऽच्युत। तथाऽपि वरये किंचिद्भक्तिरस्तु स्थिरा त्वयि॥ १७८
तथा मम गृहे देव त्रिवर्षं तिष्ठ हे प्रभो। ब्रुवन्समस्तधर्मांश्च रूपेणानेन शंकर॥ १७९

शिव उवाच—

एवमस्तु तथा राम सर्वं ते संभविष्यति। अथाऽऽह चक्री राजानं रामं राजीवलोचनम् १८०

विष्णुरुवाच—

वरं वृणु महाभाग प्रसन्नोऽहं यमिच्छसि। श्रीराम आह वचनं मम प्रार्थ्यं न चास्ति हि १८१
यत्प्राप्यं शंभुतः प्राप्तमन्यत्सर्वमुदीरितम्। किंचैकं वरये विष्णो प्रसन्नः सर्वदा भव॥ १८२
अथ सीतां हरिः प्राह प्रसन्नोऽहं तवाधुना। वरं वृणु प्रयच्छामि तथा सीताऽब्रवीदिदम्॥ १८३

सीतोवाच—

वरो वृतः पुरा भर्त्रा न चान्यो मे वरो वरः। यदि कामं प्रयच्छेथा मनश्च परपूरुषात्॥ १८४
संनिवृत्तश्च(त्तं च)भवता न(न्न)मस्तेऽस्तु द्विज प्रभो। अथ ते मुनयः सर्वे प्रणेमुर्देवतोत्तमौ॥ १८५

[1] ङ. प. 'प्तो मुक्ति'।

अथासौ राघवं प्राह भुङ्क्ष्व त्वं बन्धुभिः सह। एकान्तमन्दिरे चाहं देव्या सह वसामि ते१८६
विष्णुः समस्तकरणः समुद्रतनयान्वितः। एकस्मिन्मन्दिरे राम तिष्ठतां लोलुपो हि सः ॥ १८७
अथ शुद्धमहागारे पीठाढ्ये बहुभाजने। अग्रे वसिष्ठो भगवानुपविष्टस्तयोर्मुनिः ॥ १८८
अपरे ऋषयः सर्वे यथावृद्धा(द्धं) नृपास्तथा। तेषामभिमुखो रामो भ्रातृभिः सहितो नृपः१८९
तरुणे समभागे च ह्यासने तानवेशयत्। हनुमत्प्रमुखान्भृत्यानाह रामोऽनुसान्त्वयन् ॥ १९०

श्रीराम उवाच—

भवन्तः परितिष्ठन्तु पश्चाद्भुञ्जत नान्यथा। तथेति प्रददुः सर्वे पादार्घाननुपूर्वशः ॥ १९१
भूभुजश्चापि ते सर्वे ये रामस्योपसेविनः। तेषां दत्त्वाऽथ ताम्बूलं कपीन्द्रादीनभोजयत् ॥ १९२
भुक्तवत्सु समस्तेषु रामो राजीवलोचनः। दीनान्धकृपणादीनां पशुपक्षिमृगस्य च ॥ १९३
दत्त्वा हि भोजनं संध्यां वन्दितुं हि समारभत्। संध्याजपादिकं कृत्वा नत्वा तेषां नृपस्ततः ॥
सिंहासनगतो रामः पौरजानपदादिभिः। सेव्यमानः सभास्थानगतो रेजे स राघवः ॥ १९५
सर्वदेवपरीवारो यथा देवः शचीपतिः। राजकार्यमशेषं च कृतवान्भ्रातृभिः सह ॥ १९६
नाम्ना चैकैकशः सर्वान्विससर्ज स राघवः। भ्रातॄन्विसर्जयामास वानरादींस्तथाऽपरान् ॥१९७
अथ रामं महातेजा वसिष्ठो वाक्यमुक्तवान् ॥ १९८

वसिष्ठ उवाच—

तव प्रातर्हि यत्कार्यं न च विस्मर राघव ॥ १९९
आस्ते शंभुर्जगन्नाथो भगवानम्बिकापतिः। स्मर्तव्यो वन्दनीयश्च भगवानथ यत्नतः ॥ २००
तथेत्युक्त्वा गुरुं राजा नत्वा तं च व्यसर्जयत्। स्वयं च भार्यामभजद्देवदेवं विचिन्तयन् ॥२०१

ऋषय ऊचुः—

प्रातः समुत्थाय गुरो रामो मतिमतां वरः। किं चकार तदाख्याहि श्रोतुं कौतूहलं हि नः २०२

सूत उवाच—

शंभुं विलोक्याथ ततो बभाषे रामः कथां कीर्तय शंकरस्य।
तृप्तिर्न जाता मुनिवर्य शृण्वतो महेशमाहात्म्यमघौघनाशनम् ॥ २०३

शंभुरुवाच—

अथ प्रश्नशेषस्योत्तरमीश्वभाषितं ते कीर्तयिष्यामि। अन्यायार्जितद्रव्यैरीश्वरं य उपासते ते व्यग्रा जायन्ते ॥ १

तद्यथा कश्चिद्रूपको नाम राक्षसोऽन्यायार्जितेन द्रव्येण शंकरमाराध्य तेनैव द्रव्येण घण्टामीश्वप्रीतये कृतवान् ॥ २

तस्य पुत्रः संपातिरिति ख्यातश्चौर्यार्जितैः शंकरं पूजयामास ॥ ३

तावुभावेकस्मिन्दिवसे ममरतुः ॥ ४

गतौ शिवलोकं वीरभद्रेण भाषितौ च भो रूपकान्यायार्जितद्रव्येण पूजा कृता घण्टादिकं च तेन भावेन व्यग्रा भूत्वा चोरगणो भविष्यसि ॥ ५

शिवपदवचनाद्यक्तं (क्त)नामाश्रवणाच्छ्रोत्रं तस्य स्वनेन ध्वस्तं भवति नो दर्शनमेतावदेव त्वयेश्वरपूजा सम्यक्कृताऽतो भक्तिश्च भविष्यति वीरभद्रस्त्वनशनं नाम गणं कश्चिद्दिवरन्तमित्या-

१ म. °त्वा भरो गुणो ।

दिदेश ॥

तौ च तथाभूतौ शिवलोके तिष्ठतः ॥

शंभुरुवाच—

अथोपहतद्रव्यपूजाकथां हनुमते महेशभाषितां कथयिष्यामि । शृणु राघव प्रमथानां चरित एकैकस्य कर्मविपाकं कथयिष्यामि ॥

उपहताङ्गगणव्याख्या क्रियतामिति हनुमत्पृष्टः शिव उवाच ॥ १

तदुपहतद्रव्यं ज्ञानतो य ईश्वरेऽर्पयिष्यति । एतदुक्तं ज्ञानिनोऽतः शृणु ॥ १

एष सर्वाङ्गस्वेदिलः सर्वकालं सर्वाङ्गस्वेदिलः स्वेदार्द्रवसनः स्वेदसंपादितात्पप्रवाहशरी नासाग्रनिपतितस्वेदबिन्दुः स्पर्शायोग्यो दृश्यते स पुरा स्वेदकरणेश्वरार्चनं कृतवान् ॥ १

अत्रेतिहासं कीर्तयिष्यामि ॥ १

चेकितानिरिति ख्यातो ब्राह्मणः कर्षकोऽभवत् । स नित्यं कृषिमुत्पाद्य प्रातः स्नात्वा च नित्यश

मध्याह्नकाले संप्राप्ते (सं)जपन्ब्राह्मणस्त्वसौ । अन्नमानय मे क्षिप्रमिति भार्यामभाषत ॥ २०

तयाऽऽनीते च दानानि(न चान्नेन) वेगेन शिवपूजनम् । कृतवानर्कसंतप्तः स्वेदिलः सर्वदैव तु ।

गन्धपुष्पाक्षताद्यैश्च स्वेदबिन्दुसमन्वितैः । अथ सायंदिने प्राप्ते क्षालिताङ्गसुशोभनः ॥ २०

पूजयामास देवेशं कालसंभवसाधनैः । ममाराध महाबुद्धिः शिवलोकं गतश्च सः ॥ २०

वीरभद्रेण चाप्युक्तो भव त्वं स्वेदिलो गणः । स्वेदस्पृष्टपदार्थैश्च पुरा शंभुः प्रपूजितः ।

नित्यं स्वेदसमायुक्तस्तेन स्वेदिगणो भव ॥ २०९

शंभुरुवाच—

वीरेणाथ समादिष्टः प्राप्तो राम गणः स्वयम् ॥ २१०

अमुं घण्टामुखं पश्यायं पुरा वैश्यो विभावसो ना(सुर्नो)म धार्मिको महादानकर्ता नित्यं ब्राह्मणभोजनं कारयित्वा कृतानुष्ठानः प्रातःकाले शिवं नमस्कृत्य कुसुमैः संपूज्य किंचित्प्रदेशं गोमयेनोपलिप्य पद्मादिकं रचयित्वा देवाय समर्प्योपहतघण्टानादं कृतवान् ॥ १४

राम उवाच—

कथमुपहतघण्टा ॥ १५

शंभुरुवाच—

आसीत्पुरा बलः कश्चित्सोम इत्यभिविश्रुतः । तस्य पुत्रश्च मन्दाख्यो दशवर्षवया अभूत् ॥२११

स चाग्निपक्वकुल्माषान्घण्टायां प्राक्षिपन्नृप । तानभक्षयदाशेषं तेन चोपहताऽभवत् ॥ २१२

ग्रहीतुंमथ तं वैश्यं यतमानोऽब्रवीदिदम् । अथ वैश्यः स्वयं तत्र निश्चित्य द्रव्यशोधनम् ॥२१३

लौकिके कृतवाँल्लोके व्यवहारपदश्च ताम् । एतेन पापयोगेन गणो घण्टामुखोऽभवत् ॥ २१४

राम उवाच—

द्रव्यशुद्धेर्विशुद्धा सा कथं पापस्य कारणम् । सम्यगुक्तं द्रव्यशुद्धौ कथं न द्रव्यशोधिनी ॥२१५

शंभुरुवाच—

+न लौकिकव्यवहृतौ तव भक्तो भविष्यति । स याति च शिवस्थानं वक्ता चापि तथा भवेत् ॥

+ पूर्वापरसंगतेरभावादत्र किंचित्त्रुटितमिति प्रतिभाति ।

१ झ. °तुमुत्थिलं । २ झ. °शुद्धौ क° ।

सूत उवाच—

यश्च वक्ति कथामेतां स तेन सदृशो भुवि । गुह्याद्गुह्यतमं विप्राः शिवज्ञानप्रदं भवेत् ॥ २१
एतद्वः कथितं विप्राः पुण्यात्पुण्यतमं महत् । य इदं शृणुयाद्भक्त्या शिवलोके महीयते ॥ २१
पुराणवक्त्रे दातव्यं वस्त्रं गोहेमभूषणम् । भूमिः सस्यफलोपेता देया शक्त्यनुसारतः ॥ २१
शिवराघवसंवादं सर्वाघौघनिकृन्तनम् । यः पठेच्छृणुयाद्वाऽपि स याति परमं पदम् ॥ २२

इति श्रीमहापुराणे पाद्मे पातालखण्डे शिवराघवसंवाद उपरिभागे राममोक्षो नाम त्रयोदशोत्तरशततमोऽध्यायः ॥११३॥

इति श्रीमहामुनिव्यासप्रणीते महापुराणे पाद्मे चतुर्थं पातालखण्डं समाप्तम् ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—१९९९७

अध्यायानामादितः समष्ट्यङ्काः—२६४

---